श्रीभगवानुवाच ॥ स्वायंभुवं ब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥ श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ तत्र ह्ययमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥ १० ॥ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ ११ ॥

ब्रह्मसत्रमिति । यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वंति तत्कर्मसत्रं प्रसिद्धम् । तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसते तद्ब्रह्मसत्रम् ॥ ९ ॥ अहो तर्हि मया कथं तन्न ज्ञातमित्यत आह । श्वेतद्वीपमिति । तदीश्वरं तत्रस्थं मामेवानिरुद्धमूर्तिम् ॥ १० ॥ ननु सर्वज्ञास्ते कस्तत्र वक्ता प्रष्टा वा तत्राह । तुल्यश्रुतेति । श्रुतादिभिरविशेषा अरिमित्रोदासीनहीनत्वेन निरुपमकरुणा अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वाऽन्ये पप्रच्छुरित्यर्थः ॥ ११ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—स्वायंभुव स्वयंभुवोऽपत्यं स्वायंभुवस्तत्संबुद्धौ । गुणाभावश्चार्षः । पुरा कल्पादौ । तत्रस्थानां जनलोकस्थानाम् । मानसाना ब्रह्मणो मनसो जातानाम् सनकादीनाम् ॥ * ॥ **श्रीधरानुयायिनी**—श्रीभगवानुवाच । हे नारद श्वेतद्वीपपतिमनिरुद्धमूर्तिं मां द्रष्टुं त्वयि श्वेतद्वीपं गतवति सति श्रुतिसमाजवंति जनलोके पुरा कल्पादौ सनकादीनां वेदतपःशीलैः सर्वत्र समदृष्ट्या च तुल्यानामपि भगवच्चरित्रास्वादनार्थमेकं सनंदनं वक्तारं परिकल्प्य त्वत्पृष्टप्रश्नपूर्वकमेव ब्रह्मविचारः प्रावर्तत । यत्र समा एव सर्वे ब्रह्म वेदं वा मीमांसते तद्ब्रह्मसत्रम् ॥ * ॥ **विश्वनाथी**—हे स्वायंभुवेति । ब्रह्मसत्रे तवापि योग्यतास्तीति तत्समानत्वादिति भावः ॥ ९ ॥

**नीलकण्ठी**—॥ ९ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—तद्ब्रह्मसत्रम् । तदीश्वरं श्वेतद्वीपाधीशम् । तत्र जनलोके । अयं कः यं प्रश्नं त्वं मामिति । ततश्चायं प्रश्नस्त्वां विना न केनापि कृत इति श्लाघा सूचिता । श्रुतयः शेरते निवृत्तव्यापाराः वक्तुमशक्ता अभवन्निति यावत् । क्वचित्पुस्तके "ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते" इत्यर्धश्लोको नास्ति ॥ * ॥ **श्रीधरानुयायिनी**—॥ * ॥ **विश्वनाथी**—अनु तेभ्यः पश्चात्पृच्छसीति तत्पश्चादयं प्रश्नो न केनापि कृतोऽस्तीति श्लाघा सूचिता । अत्र पद्यार्धमधिकमपि क्वचिदस्तीति तदनुपयुक्तमेव । शेरते समन्विता भवन्तीत्यर्थः ॥ १० ॥

**नीलकण्ठी**—॥ १० ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—अत्र शंकते—नन्विति । तुल्यानि श्रुतानि शास्त्राणि तपांसि शीलानि च येषां ते तथा । यतः सर्वथा समाना अतो हेतोः केनापि कौतुकेन श्रौतविचारकुतूहलं । इत्यर्थ इति—एवंभूताः सनंदनमेकं वक्तारं विना श्रोतृजनाह्लादो न भवतीति भावः ॥ * ॥ **श्रीधरानुयायिनी**—॥ * ॥ **विश्वनाथी**—॥ ११ ॥

**नीलकण्ठी**—प्रवचनं प्रकृष्टं वचनं यस्येति प्रवक्तारम् । शेषं स्पष्टम् ॥ ११ ॥

**सनंदन उवाच ॥ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ॥ तदंते बोधयांचक्रुस्तल्लिंगैः श्रुतयः परम् ॥ १२ ॥**

**स्वसृष्टमिति । स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्राणमिव वर्तमानं तदंते प्रलयांते तल्लिंगैस्तत्प्रतिपादकैर्वाक्यैःपरमीश्वरं सृष्टिसमये प्रथम निश्वासभूताः श्रतयः प्रबोधयामासुः ॥ १२ ॥**

**भावार्थदीपिकाप्रकाशः वंशीधरी**—तत्रेतिहासपीठिकां बध्नाति—स्वसृष्टमिति । तत्प्रतिपादकैरीशप्रतिपादकैः । श्रुतय इति । श्रूयन्त एव शिष्याचार्यपरंपरया न तु भारतादिवत्केनचित्प्रणीयन्त इति श्रुतयो वेदाः।अपौरुषेयतया स्वतः प्रमाणभावा इत्यर्थः । यदि''अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः''इति वेदानां ब्रह्मप्रभवत्वं सिद्धं तथापि'वाचा विरूपनित्यये'ति तन्नित्यत्वबोधकश्रुत्यन्तरादीश्वरोऽपि पूर्वपूर्वकल्पीयामेवानुपूर्वीं रचयति न त्वभिनवामित्यपौरुषेयत्वं ज्ञेयम् । एवमादिमत्तमाख्यायिका देवताविग्रहभुवनकोशानां प्रतिपादिका श्रुतिरादिमतीति प्रत्याख्यातव्यम् ''सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत्'' इति प्रतिकल्पसृष्टेः समाननामरूपश्रवणेन व्रीह्यादिवदेषामपि संसारानादितया जातिशब्दतुल्यत्वादिति ॥ * ॥ **श्रीधरानुयायिनी**—तत्र ब्रह्मणि श्रुतीनां समन्वयं श्रुतिमुखेनैव प्रतिपादयन् सनंदन उवाच—यथानुजीविनो बंदिजनाः प्रातरागत्य शयानं चक्रवर्तिनं तद्यशोयुक्तदिग्विजयादिपराक्रमोक्तिभिर्बोधयन्ति तथा स्वसृष्टमिदं विश्वं प्रलयकाले संहृत्य लक्ष्म्यादिशक्तिभिः सह योगेन निद्राणामिव वर्तमानं परमेश्वरं सृष्ट्यादावीश्वरप्रथमश्वासप्रसूताः श्रुतयस्तत्स्वरूपगुणयशःपराक्रमादिसूचकशब्दैः सत्यज्ञानानंतादिजगत्कर्तृत्वादिलक्षणैः प्रबोधयामासुः ॥*॥ **विश्वनाथी**—पूर्वं यथा न निर्विशेषं ब्रह्म सर्ववेदाभिधेयं सविशेषत्वेऽपि तन्न मायाविभूत्यासक्तमिति व्यञ्जितम् । तथैव 'योऽस्योत्प्रेक्षक आदिमध्यनिधने' इत्यादिकमुपसंहरिष्यति तथैवोपक्रमते—स्वसृष्टमिति । स्वशब्देन विश्वस्य तदुपादानकत्वं तदधीनत्वं चोक्तम् । महदादिपृथिव्यन्तमिदं विश्वम् आ सम्यक् तत्कारणेन प्रकृत्या तद्भोक्त्रा जीववृन्देन च संयुक्तं यथा स्यात्तथा पीत्वा सूर्यो रसानिवाविनाश्य शक्तिभिस्तत्तच्छक्तिमयपुरुषाद्यवतारैः सह मिलित्वैकीभूय ''अनंतानि तथोक्तानि यान्यंडानि मया पुरा । सर्वाणि तानि संहृत्य समकालं जगत्पतिः ॥ प्रकृतौ तिष्ठति तदा सा रात्रिस्तस्य कीर्तिता॥'' इति विष्णुधर्मोत्तरादौ महापुरुषस्य स्वप्रकृतौ श्रीभगवति प्रवेशश्रवणात् शयानं जगत्कार्यं प्रति निद्राणमिव कृतानवधानं सन्तं परम् 'आद्योऽवतारः पुरुषः परस्य' इति द्वितीयोक्तेः स्वयं भगवंतं श्रीकृष्णं स्वलोकवासिनं तदन्ते तादृशशयनान्ते बहिरावरणगताः श्रुतयस्तदधिष्ठातृदेवतास्तल्लिंगैः साक्षात्परंपरया वा स्वयं भगवत्ताबोधकैर्वाक्यैर्बोधयांचक्रुः पुनर्विश्वसृष्ट्यामवधापयाञ्चक्रुः । सर्वज्ञमपि तं स्वीयस्तुत्यर्थेषूत्साहवशादेवाधापयामासुरिति विश्वनाथः । अयं भावः—यद्यपि तस्य बोधनं नाम मायावैभवं प्रत्यवधापनमेव तच्च तदीयस्वरूपवैभवमात्रतत्परेभ्यः स्वेभ्यो न रोचते तथापि बोधनस्य स्वाधिकारप्राप्तत्वेनावश्यकर्तव्यत्वात् तत्तिरस्कारपूर्वकस्वरूपवैभवपुरस्कारेणैव तच्चक्रुरिति तथैव जयजयेत्यादौ व्यक्तं भावि तादर्थ्यं, प्राकृतप्रलयेऽपि तदधिष्ठानवैकुंठस्यानश्वरत्वमेव तैः संमतम् यत्रासौ शेते । यदुक्तं द्वितीये—''प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वञ्च मिश्रं न च कालविक्रमः । न यत्र माया किमुताऽपरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥'' इति ॥ १२ ॥

**नीलकण्ठी**—तत्र श्रुतीनां जीवबोधनप्रकारमवतारयन्सनंदन उवाच—स्वसृष्टमित्यादि । इदं नामरूपात्मकस्य जगत एकदेशभूतं देहपुत्रादि स्वसृष्टं अनाद्यविद्यावशादात्मत्वेनात्मीयत्वेन च कल्पितम् आपीय अमुष्य पुत्रोऽहं ममेदं पुत्रादीत्यभिनिवेशपूर्वकमवेत्य शयानं विस्मृतात्मयाथात्म्यम् । अत्र हेतुः—सह शक्तिभिरिति । रागद्वेषादिवासनाभिः तद्वता चित्तेन सहाभेदाध्यासादित्यर्थः । उक्तञ्च—''मायामये वासनया शयाने'' इति । तदन्ते वासनानां तानवे सति तल्लिङ्गैरात्मस्वरूपावगमकैः श्रुतियुक्त्यादिभिः परंपरमेव संतम् अबुद्धात्मतत्त्वमेनं श्रुतयः श्रूयन्त एव शिष्याचार्यपरंपरया न तु भारतादिवत्केनचिद्रच्यन्त इति श्रुतयो वेदाः अपौरुषेयतया स्वतःसिद्धप्रमाणभावा इत्यर्थः । यद्यपि ''अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः'' इति वेदानां ब्रह्मप्रभवत्वं सिद्धं तथापि 'वाचा विरूपनित्यया' इति तन्नित्यत्वबोधकश्रुत्यन्तरादीश्वरोऽपि पूर्वपूर्वकल्पीयामेवानुपूर्वीं रचयति न त्वभिनवामित्यपौरुषेयत्वं ज्ञेयम् । एवमादिमतमाख्यायिकादेवताविग्रहभुवनकोशानां प्रतिपादिका श्रुतिरादिमतीति प्रत्याख्यातव्यम् । ''सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत्'' इति प्रतिकल्पसृष्टेः समाननामरूपश्रवणेन व्रीह्यादिवदेषामपि संसारानादितया जातिशब्दतुल्यत्वात् बोधयाञ्चक्रुः ॥ १२ ॥

यथा शयानं सम्राजं बंदिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयंत्यनुजीविनः ॥ १३ ॥
श्रुतय ऊचुः ॥ जयजय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ॥
अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥ १ ॥ १४ ॥

**सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु तैः पराक्रमैः ॥ १३ ॥ जयजयेति । भो अजित जयजय उत्कर्षमाविष्कुरु । आदरे वीप्सा । केन व्यापारेण । अगजगदोकसाम् अगानि स्थावराणि जगंति जंगमानि च ओकांसि शरीराणि येषां जीवानां तेषामजामविद्यां जहि नाशय । किमिति गुणवती हंतव्येत्यत आह ।**

**भावार्थदीपिकाप्रकाशः वंशीधरी**—अत्र दृष्टान्तमाह—सम्राजं चक्रवार्तिनम् । बंदिनः स्तावकाः । तत्पराक्रमैः पराक्रमा दिग्विजयादयो जगत्कर्तृत्वादयश्च क्रमेण दृष्टान्तदार्ष्टान्तिकयोर्ज्ञेयाः । प्रत्यूषेऽहर्मुखे 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः ॥ * ॥ **श्रीधरानुयायिनी**—॥*॥ **विश्वनाथी**—तच्च प्रबोधनं तासां सर्वपरावरगुरूणां सहजतद्दास्यैनैवेति दृष्टान्तेन प्राचीनसिद्धान्तमेव द्रढयति—यथेति । सुश्लोकैः श्रेष्ठपद्यैः । तस्य पराक्रमः प्रभावो यत्र तैः सर्वैश्वर्यं सर्ववैलक्षण्यञ्च सूचयित्वाऽन्येन साम्यमपि नास्मिन्संदर्भे विवक्षितं किं पुनरैक्यमिति पूर्व एव सिद्धान्तः स्थापितः एवं सर्ववेदसंमतार्थत्वेन स्वयं भगवत्येव स्वभावतया लब्धे श्रीकृष्ण एव स इति लभ्यते । 'कृष्णस्तु भगवान्स्वयम्' इति निर्णीतत्वात्तस्यास्य तल्लीलामहाप्रकरणान्तःपातात् 'निभृतमरुन्मनोक्ष' इत्यादितल्लिंगात् 'कृष्णञ्च तत्र छंदोभिः स्तूयमानं सुविस्मिता' इत्यादिसाक्षिकत्वात् 'योऽसौ सर्वेषु वेदेषु तिष्ठति' 'योऽसौ सर्वैर्वेदैर्गीयते' इति गोपालतापनीश्रुतेः 'नमस्तस्मै' इत्यादिना एतच्छ्रवणानंतरं नारदेन तस्यैव नमस्कृतत्वाच्च अत एव सर्वत्रैव पद्ये साक्षाच्छ्रीकृष्णताव्यञ्जकमर्थान्तरं ग्रंथांते लिखितमस्ति कौतुकश्चेदं द्रष्टव्यम् ॥ १३ ॥

**नीलकण्ठी**—अत्र दृष्टान्तमाह—यथेत्यादि । शोभनाः श्लोकाः यशांसि पद्यानि च पराक्रमा दिग्विजयादयः जगत्कर्तृत्वादयश्च क्रमेण दृष्टान्तदार्ष्टान्तिकयोर्ज्ञेयाः । अयं भावः—यथा शयानः सम्राट् प्रबुद्धमात्र एव दुःस्वप्नदुःखमसदपि सदिवाभातं जहाति सदप्यसद्वदनवभातं साम्राज्यसुखमाप्नोति एवं जीवस्यापि प्रत्यक्तत्त्वज्ञानमात्राद्वद्वदुःखक्षयस्वरूपानंदावाप्ती भवतः "ज्ञानादेव तु कैवल्यम्" इति श्रुतेः । "सुप्तनरवच्छ्रुत्या बोध्यंते प्रेर्यते न तु" इति वार्तिकोक्तेश्च विनाप्यनुष्ठानं कृत्स्नपुरुषार्थहेतुज्ञानाय शास्त्रमारंभणीयमिति ॥ १३ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—अथ यद्यपि श्रुतयस्त्रिकाण्डविषयत्वात्त्रिविधा एव तथापि तत्तदवान्तरफलसाधनपरत्वेन बहुधा भवन्ति । तत्राप्यष्टाविंशतिभेदास्ताः सपरिकराः पृथक्पृथक् स्तुवन्तीति तत्तत्प्रसंगे दर्शयिष्यामः । तासां नामानि लक्षणाशरणान्तर्यामिभेदाभेदज्ञानानिंदोपदेशोपासनाभक्त्यनुक्रोशदुर्विज्ञेयत्वानिर्वचनीयत्वासद्वादादिखण्डनस्तवैकात्म्यसृष्टिबंधमोक्षातर्क्यशक्तित्वसर्वेश्वरत्वसोपाधिलयनिरुपाधिलयवैराग्यगुरूपसदनब्रह्मानंदातन्निरसनानंतत्वप्रतिपादनक्रमेण ज्ञेयाः । अत्र तावत्सर्वाः श्रुतयः सगुणं गुणैरनाभिभूतं श्रीनारायणमवलंब्य निर्गुणं परं ब्रह्म श्रीकृष्णाख्यं स्तुवन्तीति तात्पर्यम् । तथाहि श्रीगोपालतापन्याम्—'योऽसौ सर्वेषु वेदेषु तिष्ठति' योऽसौ सर्वैर्वेदैर्गीयतेऽसौ श्रीकृष्णः पूर्वतोऽनुवर्तते । दशमे—"कृष्णं च तत्र च्छन्दोभिःस्तूयमानं सुविस्मिताः" इति । एकादशस्कंधे एकविंशाध्याये—"किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् । इत्यस्या हृदयं लोक नान्यो मद्वेद कश्चन ॥ मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् । एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥ मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति ।" इति । व्याख्यातं स्वामिचरणैः । इयं बृहती श्रुतिः कर्मकाण्डे मंत्रवाक्यैः किमाचष्टे किं प्रकाशयति, ज्ञानकांडे किमनूद्य निषेधार्थं विकल्पयेत् इत्यस्याः श्रुतेर्हृदयं तात्पर्यं मत्तोऽन्यः कश्चिदपि न वेद।स्वयमेव कथयति। मां विधत्ते मामेव यज्ञरूपं

दोषगृभीतगुणां दोषायानंदाद्यावरणाय गृहीता गुणा यया ताम्। हृग्रहोर्भश्छंदसीति भकारः। इयं हि स्वैरिणीव परप्रतारणाय गुणान् गृह्णात्यतो हंतव्येति। तर्हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादत आह। त्वमिति। यद्यस्मात्त्वमात्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽसि। वशीकृत मायत्वादिति भावः। ननु स्वयमेते ज्ञानवैराग्यादिना किं न हन्युरित्यत आह। अखिलशक्त्यवबोधकेति। तेषां त्वमेवांतर्यामी सर्वशक्त्युद्बोधकः। अतो न ते ज्ञानादौ स्वतंत्रा इति भावः। नन्वहमकुंठज्ञानैश्वर्यादिगुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्याहंतेत्यत्र किं प्रमाणमिति चेदहमेव प्रमाणमित्याह। निगमो वेदः। नन्वेवंभूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह। क्वचिदिति। कदाचित्सृष्ट्यादिसमयेऽजया मायया चरतः क्रीडतो नित्यं चालुप्तभगतया सत्यज्ञानानंतानंदैकरसेनात्मना च चरतो वर्तमानस्य निगमोऽनुचरेत्प्रतिपादयेत्। कर्मणि षष्ठ्यौ। "यतो वा इमानि भूतानि जायंते॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै॥ तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥ य आत्मनि तिष्ठन्॥ सत्यं ज्ञानमनंतं ब्रह्म॥ यः सर्वज्ञः सर्ववित्" इत्यादिनिगमकदंबस्त्वामेवंभतं प्रतिपादयतीत्यर्थः॥

जयजयाजित जह्यगजंगमावृतिमजामुपनीतमृषागुणाम्॥ नहि भवंतमृते प्रभवंत्यमी निगमगीतगुणार्णवता तव॥ १॥ १४॥

विधत्ते मामेव तत्तद्देवतारूपेणाभिधत्ते न मत्तः पृथक् यच्चाकाशादिप्रपञ्चजातम्—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिना विकल्प्यापोह्यते निषिध्यते तदप्यहमेव न मत्तः पृथगस्ति। एतावानिति। शब्दो वेदः मां परमार्थरूपमाश्रित्य भिदां भेदं मायामात्रमित्यनूद्य नेह नानास्ति किञ्चन इति प्रतिषिध्य प्रसीदति निर्वृत्तव्यापारो भवतीति एतावान्सर्ववेदार्थः। श्रीगीतासु च—"वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्" इति। तस्मात्सर्वाः श्रुतयः श्रीकृष्णमाहात्म्यमुदीर्य तमेव स्तुवन्तीति। ग्रन्थविस्तरभियात्राधिकं न लिखितम्। अथ प्रकृतमनुसरामः। प्रथमं स्वमनोरथं निवेदयन्त्यः श्रुत्यभिमानिदेवता आहुः। नर्कुटकं नाम छंदः 'हयदशभिर्नजौ भजजला गुरु नर्कुटकम्' इति तल्लक्षणात्। सप्तभिर्दशभिश्च यतिरत्रेत्यर्थः। हृग्रहोरिति—हृग्रहोर्धात्वोर्हस्य भादेशो वेद इत्यर्थः। यतो दोषाय गुणान्गृह्णात्यतो हेतोः। तत्र तद्धननादौ। इति भाव इति—मायापरतंत्रत्वाज्जीवेष्वेव तत्सामर्थ्यं न त्वयीति 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया' इत्युक्तेः। "नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च" इत्युक्तेश्चेत्याशयः। ते जीवाः। अतस्त्वदधीनप्रवृत्तित्वात्! इति भाव इति—"केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" इत्युक्तेः। एवंभूतेऽकुण्ठज्ञानैश्वर्ये क्रीडतः पुरुषरूपेण नित्यं चात्मना ज्ञानानंदैकरसेन भगवदादिरूपेण स्वयोगमायया चिच्छक्त्यांतर्याम्यवतारादिशुद्धलीलायां चरतः निगमो वेदसमूहः प्रनुचरेत्त्वां प्रतिपादयेत्। अत्र श्रुतयो भृगुणा ब्रह्मणः किं लक्षणमिति पृष्टो वरुणः प्राह—यतो वा इति। वै प्रसिद्धौ यतो यस्मात् इमानि ब्रह्मादिस्तंबपर्यन्तानि जायन्ते जीवन्ति प्राणान्धारयन्ति वर्धन्ते च नाशकाले यत्प्रति प्रयन्ति गच्छन्त्याभिविशान्ति तादात्म्यमेत्र प्रतिपद्यन्ते तत्त्वं ब्रह्मेति विशेषेण ज्ञातुमिच्छेति उत्पत्तिस्थितिनाशकाले यदात्मतां न जहति भूतानि तद्ब्रह्मणो लक्षणमित्यर्थः। तटस्थलक्षणपरेयं श्रुतिः। यः परमेश्वरः। पूर्वं सर्गादौ। विदधाति ससर्ज। तस्मै ब्रह्मणे। प्रहिणोति प्रददौ। तं देवं द्योतमानमात्मबुद्धिप्रकाशं स्वविषयां बुद्धिं प्रकाशयन्तं मुमुक्षुरहं शरणं प्रपद्ये मोक्षसिद्ध्यर्थमाश्रयं प्राप्नोमि। शरणपरेयं श्रुतिः। इत्युभे श्रुती, 'अजया चरतः' इत्यस्योदाहरणम्। 'अगजगदोकसाम्' इत्यस्योदाहरणं दर्शयति—य आत्मनीति। "य आत्मनि तिष्ठन्नात्मनोंतरोयमात्मा न वेद यस्यात्मा शरीरमात्मानमंतरोयमयत्येष त आत्मांतर्याम्यमृतः" इति। अंतर्यामिणं ब्रूहीत्युद्दालकेन मुनिना पृष्टः प्राह याज्ञवल्क्यः—आत्मपदेन जीवात्मा गृह्यते य आत्मनि जीवात्मनि तिष्ठन्नात्मनः सकाशादंतरः दूरस्थः आत्मा यं न वेद न जानाति कुतः यस्य शरीरमात्मा भवति य आत्मानमंतरोऽभ्यंतरः सन् यमयति नियमयति एष ते तवांतर्याम्यात्माऽमृत इत्यर्थः।

तथा "यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योंतरः यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरम् यः सर्वाणि भूतान्यंतरो यमयत्येष त आत्मान्तर्याम्यमृतः" इति । नियमनलीलापरेयं श्रुतिरपि ज्ञेया । 'आत्मना चरतः' इत्यस्योदाहरणमाह–सत्यमिति । व्याख्यातचरम् । स्वरूपलक्षणपरेयं श्रुतिः । निगमकदंबः श्रुतिसमूहः । स्वामिश्लोकार्थः । अगजंगमानामावृतिमावरकाम् । निगमैर्गीतो गुणानामर्णवो यस्य स तथा तान् जीवान् अव रक्ष ॥ * ॥ **श्रीधरानुयायिनी**–ॐनमो विघ्नहर्त्रे । हे अजित कारुण्यात्स्वप्रभावमाविष्कुरु । आदरे हर्षे वा वीप्सा । यतस्त्वं वशीकृतमायोऽसि अजितत्वे हेतुः । तथा स्वरूपेणैव संप्राप्तसमस्तैश्वर्यः सर्वेषामंतर्यामी अत एव सर्वशक्त्युद्बोधकोऽसि । नन्वज्ञाननाशेऽपि 'भक्त्याहमेकया ग्राह्यः' इत्युक्त्या भक्तिं विना कथं मत्प्राप्तिरित्याशंक्याह–सर्वशक्त्युद्बोधकोऽसीति । यथा बुद्ध्यादीन्सृष्ट्वा जीवानां भोगादिशक्तीरुद्बोधयसि तथा ज्ञानयोगभक्तीरपि त्वमेव कृपयोद्बोधयसीत्यर्थः । यद्वा–अगस्थिरजगदोकसां जगदाश्रयभूतानां ब्रह्मादीनामपि सृष्ट्याद्यखिलशक्त्यवबोधकेति । अतः स्वतोऽस्वतंत्राणां स्थावरजंगमजीवानामानंदाद्यावरणार्थमंगीकृतगुणां वेश्यावद्भोगिजीवजातवंचनचतुराम् । यद्वा–दोषैरज्ञानदुःखादिभिर्गृहीताः संवृता जीवगुणः सत्य ज्ञानानंदा यया तां त्वत्प्राप्तिप्रतिकूलामविद्यां नाशय, अतो गुणवत्या अपि हननमावश्यकमेवेत्याशयः।किञ्च–सृष्ट्यादौ मायया क्रीडन्तमपि वर्णयन् वस्तुतस्तु तात्पर्येण सत्यज्ञानानंदैकरसस्वरूपमेव त्वां जहदजहल्लक्षणया वेदः प्रतिपादयति सेवते वा । यथा–'गामानय' 'घटो भग्नः' इत्यादौ गोघटशब्दयोर्व्यक्ताविव गोत्वघटत्वजात्योरपि शक्तत्वेन गोत्वे आनयनस्य घटत्वे भग्नत्वस्यासंभवाद्व्यक्तावेव तात्पर्यावसानं तथा तत्त्वमस्यादिवाक्येषु श्रूयमाणस्य जीवेशयोरभेदस्यासंभवेनोपाधिभागत्यागेन शुद्धचिदानंद एव पर्यवसानम् । एवं मायोपहित एव प्रवृत्तस्य 'सत्यं ज्ञानमनंतम्' इत्यादेश्चासत्यजडसांतोपाधौ सत्यत्वज्ञानत्वानंतत्वासंभवेनोपाधिमपहाय शुद्ध एव पर्यवसानमिति भावः । यद्वा–क्वचित्सृष्ट्यादावजया प्रकृत्या आत्मना पुरुषरूपेण जीवेन च चरतो वर्तमानस्य तव वेदः अनुचरेत् त्वच्चित्तानुवर्तित्वेन विधिनिषेधरूपेण प्रवर्तेत प्रलयकाले तु स्तुतिरूपेणेत्यर्थः । तदा विधिनिषेधप्रयोजनाभावात् । तथा च, यस्माद्विधिनिषेधविषयो जीवस्तस्मात्सृष्टिं विधाय वेदैर्जीवान्बोधयित्वा तदुक्तानुष्ठानं संपाद्य स्वज्ञानमुत्पाद्य त्वं प्रसन्नः सन् जीवेषु पिशाचीवदाविष्टामजां जहीति प्रार्थना । अत्राचार्याः–"सर्वश्रुत्यर्थसंपन्नाञ्छ्लोकान्सत्यवतीसुतः । एकैकशाखाश्रुत्यर्थाज्ञगौ सर्वोपलक्षणान् ॥ बबंध तान्भागवते प्रतिश्लोकं प्रतिश्रुति ।" इति ॥

॥ * ॥ **विश्वनाथी**–पूर्वं बुद्धीन्द्रियेत्यादिना प्रणवस्य साक्षाद्भगवद्वाचित्वं दर्शयित्वा तद्विवृतिरूपाः श्रुतयश्चाष्टाविंशतिधा तत्र च याः सर्वाध्यक्षा महोपनिषदः सर्वश्रुतिसमन्वयार्थं श्रुत्यंतरानुदितातन्निरसनपूर्वकस्वरूपगुणनिर्देशेन तत्र चरन्ति प्रथमं ता एव बंदिजनोचितपरिहासपूर्वकं प्रथमं स्वमनोरथं निवेदयन्ति–जयजयेति । हे अजित मायाद्यनभिभूत । जयजय निजोत्कर्षमवश्यमाविष्कुरु । कथं वा न करोषीति वीप्सार्थः । केन प्रकारेण तमाहुः–अजां मायां जहि नाशय यथा पुनरेषा सृष्ट्यादौ प्रवृत्ता जीवान्न दुनुयादिति भावः । ननु–"विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । बंधमोक्षकरी आद्ये मायया मे विनिर्मिते ॥" इत्येकादशस्थमदुक्त्यनुसारेण विद्यालक्षणगुणांशेन कृपाविषयापि भवत्येषा तत्राहुः–दोष एव विषये गृहीतो गुणो यया ताम् । स्ववृत्तिरूपयैवाविद्यया जीवान्बद्ध्वा तद्रूपयैव विद्यया मोचयतीति गुणोप्यस्या दोष एव पर्यवस्यतीति । ननु मम जगद्वैभवहेतुभूताया अस्या हनने ममैव हानिः स्यात्तत्राहुः–त्वमसीति । आत्मना स्वरूपभूतेन परमानंदेनैव तदभिन्नयैव शक्त्येत्यर्थः । सम्यग्निरवशेषं प्राप्तपूर्वैश्वर्यादिरसि किं तुच्छया तयेति भावः । तथा च वक्ष्यते स्वामिभिः–नहि निरन्तराल्हादिसंवित्कामधेनुवृन्दपतेरजया कृत्यमस्तीति । भगवता देवर्षिणा चोक्तम्–'विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थम्' इत्यादि । ननु–मम तादृशस्वरूपशक्तेरस्तित्वे किं प्रमाणं तत्राहुः–अगेति । अगानि सर्वदा स्थिराणि वैकुण्ठादीनि जगन्ति चास्थिराणि ब्रह्माण्डानि ओकांसि येषां तेषां जीवानां या अखिला अप्राकृत्यः प्राकृत्यो वा शक्तयः सन्ति हे तदवबोधक तच्छक्तीनामपि शक्तित्वदायक तत्र प्रकृतेर्जडत्वात्तद्वृत्तीनां तत्तच्छक्तीनामपि तादृशत्वादुद्बोधे तत्र स्वरूपशक्तिश्चिद्रूपैव कारणं लभ्येतेति स्पष्टमेव । अप्राकृतीनां चिच्छक्तिवृत्तीनामप्युद्बोधस्तस्या एव स्यात्सर्वाश्रयत्वादिति च गम्यत एव चेति भावः । ननु–युक्तिमात्रज्ञातार्थाः साक्षिणो न भवन्ति किन्तु साक्षाद्द्रष्टार एव किञ्च–मन्निकटस्था अपि मत्तत्त्वं न जानन्ति किन्तु मत्सेवका एवेति नैतावता युष्मद्वचसि प्रामाण्यं तत्राहुः–ते क्वचिदिति ।

सृष्टिलीलायां पूर्वोक्तयाऽजया मायया पुरुषरूपेण चरन्तं क्वचिद्विशुद्धानंदलीलायामात्मना पूर्वोक्तया स्वरूपानंदशक्त्या स्वयं भगवदादिरूपेण चरन्तं त्वां निगमांऽस्मल्लक्षणो वेदकदम्बः अनुचरेत्सेवेत इति तस्मादेनां जहि । तदेवं वस्तुतो श्रुतयो गुणवृत्तय एव नं भवन्ति किन्तु तन्निषेधार्थं तदनुवादिन्यः स्वरूपैश्वर्यादिमति भगवति तत्तदालम्बनेनैव साक्षाच्चरेयुः । तत्रापि अजितसंबोधनेन चरेयुरित्येव किं वक्तव्यं यासां श्रुतीनामत्यन्तान्तरंगभूतेन तत्तन्नामरूपेण शब्दविशेषेण सोऽप्यभिमुखीक्रियत इति । अत्रानुचरेदिति । तत्रतत्र मूलं कारणं भक्तिरेवेति सिद्धान्तोपक्रमः । श्रुतयस्तु—"सत्यं ज्ञानमनंतं ब्रह्म" "विज्ञानमानंदं ब्रह्म" "न तस्य कार्यं करणञ्च विद्यते" इत्यादि "तमेव भान्तमनुभाति सर्वम्" इत्यादिकाः । "सर्वे वेदा यत्पदमामनन्ति" "यस्य देवे परा भक्तिः" इत्यादिकाश्च ज्ञेयाः ( १ ) ॥ १४ ॥

**नीलकण्ठी**—तत्र तावत्प्रथमे श्लोके कृत्स्नशास्त्रार्थप्रदर्शनेन श्रुतयः शिष्यं संमुखयंतीत्याह—जयजयेत्यादि । जयत्यविद्यां शास्त्राचार्योपदेशादिति हे जय हे जीव त्वं जय उत्कर्षमाविष्कुरु । कथम्, अविद्यां जहि अनात्मनि देहादावात्मबुद्धिरूपामविद्यां नाशय । एतेन स्वाज्ञानाद्बंधः स्वज्ञानान्मोक्ष इत्युक्तम् । अत्र 'सैषा ह्युपनिषद्ब्राह्मी' 'श्रुतयो बोधयाञ्चक्रुः' 'आश्रुत्यात्मानुशासनम्' इत्युपक्रमपरामर्शोपसंहारेषु विद्यावतारदर्शनादविद्यावाञ्जीव एव संबोध्यः न तु तद्रहित ईश्वरः स्तव्यः स्तुतिफलस्य प्रार्थितवरदानादेरत्रादर्शनात् । तेन अगजगदोकसामजां जहीति व्यवहितान्वयकल्पनाक्लेशोऽपार्थ इति दिक् । नन्वैहिकामुष्मिकसुखहेतुरजा कुतो निहंतव्येत्याशंक्याह—अजितदोषगृभीतगुणाम् अनिर्जितरागादिदोषैरेव गृभीतो रमणीयतालक्षणो गुणो यस्यां सा तथा । वारवनितावद्रागिजनवञ्चनचतुरैषा हंतव्यैव नीरागैरिति भावः । गृभीतः कल्पितः छान्दसं हस्य भत्वम् । नन्वजयैवाहं जितः कथं तां नाशयेयमत आह—त्वमिति । यद्यस्माद्धेतोस्त्वमात्मना स्वरूपेणैव प्राप्तकृत्स्नैश्वर्यादिषट्कोऽसि, अतस्तव तन्नाशनमीषत्करमित्यर्थः । "ऐश्वर्यस्य समग्रस्य ज्ञानस्य यशसः श्रियः वैराग्यस्य च धर्मस्य षण्णां भग इतींगना ॥" इति ऐश्वर्यादिषट्कम् । एवं तत्त्वमसीति शास्त्रान्नेश्वरादन्यस्त्वामित्युक्तं शुक्तेरिव रजतम् । सांख्यास्तु—जीव एव सत्त्वोत्कर्षवशात्समवरुद्धसमस्तभगो भवतीत्याहुस्तन्निरासायात्मनेत्युक्तम् । ऐश्वर्यस्य परायत्तत्वे स्वतःसिद्धैश्वर्यप्रतिपादकं 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्यादिवाक्यं व्याकुप्येतैवेति भावः।यत्पुनः सांख्यो ब्रवीति 'पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्' इति 'जडं प्रधानं पुरुषस्य भोगापवर्गौ साधयितुं स्वत एव प्रवर्तते' इति तन्न । चेतनानधिष्ठिते जडे प्रवृत्त्यदर्शनादित्याह—अगजगतां स्थावरजंगमानाम् ओकसां क्षेत्राणाम् 'इदं शरीरं कौन्तेय क्षेत्रम्' इत्यादि "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥ इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रम्" इत्युक्तरूपाणाम् अखिलाः प्राणनादिशक्तयः तासामवबोधक एतच्च "येन प्राणः प्राणीयते" "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनंदो न स्यात्" इत्यादिश्रुतिप्रसिद्धम् । अत्रापि 'योंऽतः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयति' इत्युक्तम् । यदा तु अगजगदोकसामखिलशक्त्यवबोधक जयजयेति संबंधः क्रियते,तदा जयजयेति द्विरुक्तिरादरार्था।ननु यद्यहमीश्वरस्तर्हि कथं ब्राह्मणो यजेतेति मम नियोज्यत्वमित्याशंक्य शुद्धचिदात्मनस्तव द्वयमपि तन्मृषेत्याह—त इति । ते चरत इति कर्मणि षष्ठ्यौ । त्वं क्वचित्काले सुप्तिप्रलयादेरन्यत्राजया मायया जीवेशावाभासेन करोषि माया चाविद्या च स्वयमेव भवतीति सिद्धरूपद्वयेन शुद्धाशुद्धसत्त्वप्रधानेन त्वदुपाधितां गत्वा तवेश्वरत्वं जीवत्वं चापादयन्त्या सह चरन्तं शास्तृशास्यत्वादिधर्ममनुसरन्तं निगमः निश्चितं यथाभूतमर्थं गमयन्कर्मोपास्तिपरो वेदोऽनुचरति । मायिकाविद्यके तवैश्वर्यब्राह्मण्यादिके अनुवदत्येव न प्रतिपादयतीत्यर्थः । आत्मना चानुपाधिरूपेणानुचरन्तं कारणप्रपञ्चं ग्रसन्तं रज्जुमिव सर्पं "सत्यं ज्ञानमनंतं ब्रह्म" इत्यादिनिगमः अनृतजडपरिच्छिन्नत्वादिव्यावर्तनेनानुचरेत् लक्षणया आवेदयेन्न साक्षात् । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । अत्र क्वचिदिति जीवेशयोः स्वप्नेंद्रजालादिवत्कादाचित्कजीवितव्येशितव्यसापेक्षत्वेन मृषात्वं तदनुवादिवेदस्य च स्वप्नादिदृष्टार्थानुवादिवाक्यस्येव नाप्रामाण्यमतो न निगमत्वव्याहतिः । एवं जीवेशोपाध्योर्बाधे यच्छिष्टमनुपाधि तज्ज्ञानादजानाश इति च दर्शितम् ( १ ) ॥ १४ ॥

बृहदुपलब्धमेतदवयंत्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदिवाऽविकृतात् ॥
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवंति भुवि दत्तपदानि नृणाम् ॥ २ ॥ १५ ॥

ननु कथं मामेवं प्रतिपादयंति यतः "इंद्रो यातोऽवसितस्य राजा" इत्यादिभिः इंद्रो यातो जंगमस्यावसितस्य स्थावरस्य च राजेति प्रतिपाद्यते तथा "अग्निर्मूर्धा दिवः" इत्यादिभिश्चैवंभूतत्वेनाग्न्यादयः प्रतिपाद्यंते तत्राह । बृहदुपलब्धमेतदिति । अयमर्थः । एतदुपलब्धं दृष्टमिंद्रादि सर्वं बृहद्ब्रह्म त्वमित्येवावयंति जानंति। कथम् । बृहत एवावशेषतयाऽवशिष्यमाणत्वेन।कुतः।यतो बृहतः सर्वस्योदयास्तमयावुत्पत्तिलयौ सर्वोपादानत्वात् तर्हि किं विकारित्वं बृहतः।न।अविकृतात्।विवर्ताधिष्ठानत्वेनाविकारादित्यर्थः।वाशब्द उपमार्थः। यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत् । " वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ सर्वं खल्विदं ब्रह्म" इत्यादिभिस्तथा प्रतिपादनादित्यर्थः । अतः कारणादृषयो मंत्रास्तद्द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः मनसा आचरितं तात्पर्यं वचनाचरितमभिधानं च धृतवंतः । न पृथग्विकारेष्वित्यर्थः । अत्र निदर्शनं कथमयथेति । नृणां भूचराणां यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवंत्यदत्तानि भवंति । अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्यभि

भावार्थदीपिकाप्रकाशः वंशीधरी—सर्वश्रुतिप्रतिपाद्यत्वमाक्षिपति—नन्विति । अत्र श्रुतयः यातो जंगमस्य, 'या—प्रापणे' इत्यस्य शतृप्रत्ययान्तं रूपम् । अवसितस्य स्थावरस्य, अवपूर्व 'षिञ्—बन्धने' अस्य निष्ठान्तं रूपम् । तथा—"अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्।अपाꣳरेताꣳसि जिन्वति" इति अयं परावररूपेणावस्थितोऽग्निर्दिवो मूर्धा, अहश्च सूर्यात्मना द्युलोकस्य मूर्धा भवति,ककुभां दिशां पतिः पालकः। भस्य तच्छांदसः । तथा पृथिव्याः पतिः अपां पयसां रेतांसि वीर्याणि जृण्वति उद्रिक्तभावं नयति " अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः " इति स्मृतेः । जिन्वतीति पाठस्तु शाखाभेदेन । तथा " सूर्य आत्मा जगतस्तस्थुषश्च " इति " सोमोऽस्माकं ब्राह्मणानाꣳराजा" इत्यादिभिश्चैवंभूतत्वेनेश्वरत्वेन । भेदप्रतिपादनपरेयं श्रुतिः । अत्राशयमाह—अयमर्थ इति। कथं जानंति। बृहतो। ब्रह्मणः अत्र हेतुमाशकते—कुत इति । तर्हि सर्वोपादानत्वेनेत्याह—इत्यर्थ इति—अतात्त्विकान्यथाभावो विवर्तस्तदधिष्ठानत्वेन यथा रज्जुविवर्तो भुजंगस्तदधिष्ठानभूता रज्जुर्निर्विकारा तथा ब्रह्मविवर्तजगतोऽधिष्ठानं ब्रह्मापि निर्विकारमेव जगत्प्रतीतेस्तत्राताात्त्विकत्वादिति भावः । घटादेरिहादिना शरावादिग्रहः । वाचारंभणं वचनालंबनम् । वस्तुतस्तु सर्वं नामधेयमेव केवलं न विकारो नाम वस्त्वन्तरमस्ति परमार्थतस्तु मृत्तिकेत्येव सत्यं तत्रोत्पत्तिप्रलयत्वात् । तथा कार्यस्य प्रपञ्चस्य परमकारणब्रह्ममात्रत्वं बोधयति—सर्वं खल्विति । इदं सर्वं जगत् नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्मैव भवति कथं तज्जलान् तस्माद्ब्रह्मणो जातं तज्जम्, तास्मिन्ब्रह्मणि लीयत इति तल्लम्, तस्मिन्नेव स्थितिकालेऽनिति प्राणिति चेष्टत इति तदन् तज्जलानिति जगदित्यस्य विशेषणम् । यस्मात्त्रिष्वपि कालेषु ब्रह्मतयाऽविशिष्टं तद्व्यतिरिक्तं किञ्चिन्नास्ति, तस्मात्सर्वमिदं ब्रह्मातः शान्तः रागद्वेषादिरहितः उपासीत वाचारंभणं नरदेवतिर्यगादिनामधेयं परमकारणं ब्रह्म सत्यामिति ज्ञात्वोपासनां कुर्वीत अभेदोपासनपरेयं श्रुतिरित्यादिना गृहीताः । तथा प्रतिपादनात्सर्वोपादानत्वेन कथनात् । इत्यर्थ इति—परमकारणप्रतिपादन एव वाचारंभणादीनां तात्पर्यं दृष्टान्ततयेति भावः । यतस्त्वमेव सर्वकारणमतो हेतोः । तद्द्रष्टारो मंत्रद्रष्टारः । इत्यर्थ इति—'सर्वे पदा हास्तिपदे निमग्नाः' इति न्यायेन पृथक्पृथग्न ध्यायन्तीति भावः । अत्र सर्वाधिष्ठानत्वे निदर्शनं दृष्टान्तः

**चरंति । तथा यत्किमपि विकारजातं वदंतो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयंतीत्यर्थः द्रुहिणवह्निरवींद्रमुखामरं जगदिदं न भवेत्पृथगुत्थितम् ॥ बहुमुखै रपि मंत्रगणैरजस्त्वमुरुमूर्तिरतो विनिगद्यसे ॥ २ ॥ १५ ॥**

यतोऽदत्तानि स्युरतो हेतोः । इत्यर्थ इति—परमकारणाभिन्नत्वात्सर्वस्येति भावः । द्रुहिणो ब्रह्मा द्रुहिणाद्यमरा एवेदं जगत् पृथग्नोत्थितं भवेत् । किन्तु त्वत्त एव उद्देश्यविधेयभावत्वादेकवचनम् । अत एककारण कत्वात् बहुमुखैरग्नींद्रादिवर्णनरूपैरजोऽपि बहुमूर्तिः ब्रह्मेन्द्रादिरूपेण प्रतिपाद्यस इत्यर्थः ॥ * ॥ **श्रीधरानुयायिनी**—इन्द्रादीनामपि वेदप्रतिपाद्यत्वादीश्वरत्वमाशंक्याहुः घटादेर्मृत्तिकायामिवेन्द्रादिरूपप्रपञ्चस्य त्वयि विवर्ता धिष्ठान एवोत्पत्तिप्रलयौ भवतः । "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । " इति श्रीगीतोक्तेः इत्यत ईश्वरत्वेन प्रतीयमाना अपि इंद्रादयो ब्रह्म त्वमेवेति तत्त्वविदो जानन्ति यतोऽधिकृताद्ब्रह्मणः सकाशात्सर्वस्योदयास्तमयौ भवतः । वाकार इवार्थे । मृदि विकृतेर्घटादेरिवेत्यन्वयः । यद्वा—मृद इवेति च्छेदः । आर्षत्वात्पञ्चम्यर्थे प्रथमा । यद्वा—बृहदिति इत इदमधिकमितोऽपीदमधिकामित्यान्विष्य विचार्य सर्वाधिक्येनावशेषतया त्वामेव बृहत्सर्वतोऽधिकं जानन्ति विज्ञा इत्यर्थः । ज्ञानेनेंद्रादिरूपप्रपञ्चे बाधिते ब्रह्मणस्तवैव घटादिनाशे मृत्तिकाया इवावशिष्यमाणत्वात् । यद्वा—यन्म नोवाचामगोचरस्यापि तव वर्णनं सेवनं वा तदेतदतिदुर्लभं बृहत् महत्फलमद्यास्माभिरुपलब्धम्, तत्र हेतुः—अवयन्तीति । अत्र यतस्त्वामित्यादिरर्थस्तुल्य एव यतो वेदवचनानामासमन्ताच्चरितं तात्पर्येण पर्यवसानं त्वय्येव । अतः, ऋषयस्त्वयि मनो धृतवन्तः । अत्र दृष्टान्तमाहुः—कथमिति । नृणां पाषाणेष्टिकादिरूपायां भुवि दत्तानि पदानि कथं भुव्यदत्तानि भवन्ति, पाषाणादीनामपि भूविकारत्वात् । एवं यत्किमपींद्रादि विकारजातमपि वदतां वेदानां तात्पर्यं त्वय्येवेत्यर्थः ॥*॥ **तोषिणी**—तदेवमस्वरूपगुणानिरसनपूर्वकसाक्षात्स्वरूपगुणनिर्देशेनान्यश्रुतिश्रव्यपक्षपातशून्यासु श्रुतिषु स्तुवतीषु तत्तत्पक्षपातिन्यः काश्चिदन्यास्तदविवेकेन तन्निर्देशिकाः श्रुतयः सलज्जा इव स्वेषां स्वापेक्षणीयानाञ्च तत्रैव लक्षणामयमपि चरणं साक्षादेव घटयितुं स्तुवन्ति—बृहदिति । उपलक्षकं दृष्टान्तमिदं यत्किञ्चिदेतज्जगत्सर्वं बृहद्ब्रह्मस्वरूपस्त्वमेवेत्यर्थः । तद्व्यतिरिक्तस्याप्यस्तित्वे बृहत्त्वहानेरिति भावः । ननु बृहज्जगतोर्वैलक्षण्यं महदेव सत्यं तथाप्येवं घटेतेत्याहुः—अवशेषतया प्रलये तस्यैवावशिष्यमाणत्वेन तदनतिरिक्तत्वप्राप्तेः । तत्र दृष्टान्तः । विकृतेर्घटादेः कारणं मृदेवेति । ननु घटादेरूप स्यादिकं मृदो दृश्यते न तु जगतो बृहतः, तत्राहुः—बृहतः सकाशात्, उदयास्तमयौ जगतो वदन्ति श्रुतिविशेषाः । कथम्, तर्हि तस्या इव तस्यापि विकारित्वं नहिनहीत्याहुः—अविकृताद्विकारशून्यादेव तस्माच्चौ वदन्ति । श्रुतेस्तु शब्दमूलत्वादिति न्यायेन चिंतामण्यादिदृष्टान्तेन च श्रुतिभिस्तथैवाचिन्त्यशक्तितया तत्प्रतिपादनादिति भावः । विवक्षितमाहुः—अत इति । अस्मादेव हेतोर्ऋषयो वेदाः केचिदस्मदनुवर्तिनस्तज्जगदकेदेशस्तावक इवापि तथास्मद्विधास्तच्छुद्धस्वरूपगुणाविवेकिन इवापि त्वय्येव बृहति मनोवचनाचरितं तात्पर्याभिधारूपं धृतवन्तः । तत्र तात्पर्यं सर्वस्य कार्यस्य कारणपर्यवसायित्वे स्थिते तन्निर्देशस्यापि तत्पर्यवसानात् । अभिधा च परमकारणं त्वां विना तेषामत्यंताभावादिति भावः । तदेव स्पष्टयितुमर्थान्तरन्यासमाहुः—कथमिति । पदानि पदार्था घटादिवस्तूनि तस्मात्त्वामेकमुद्दिश्य प्रवृत्तास्वस्मास्वज्ञानामेवान्यचारित्वं भाति न तु विज्ञानामिति भावः । अत्र मुख्याः श्रुतयः सर्वं खल्विदं ब्रह्मेत्यादिकाः । अथ तत्पक्षदृष्ट्या " इंद्रो यातोऽवसितस्य राजा " इत्यादिकास्तास्त्वेव दृष्टान्तदार्ष्टीकाः, " वाचारंभणं विकारः " इत्यादिकाः, अत्रेतिशब्देन सर्वमेव वाक्यं परामृश्यते न तु मृत्तिकैव तस्यैव मुख्यत्वात् । विनापीति विवक्षितार्थसिद्धेः । तस्माद्वाचारभ्यते प्राकृतेन्द्रियैर्यत्किंचिद्घटादिकं व्यवहारास्पदीक्रियते तत्सर्वं विकारसंज्ञं मृत्तिका तदनन्यभूतमित्यर्थः । इत्येव सत्यं न तु गौतममतादिवत्ततोभिन्नमित्यर्थः । 'तदनन्यत्वमारंभणशब्दादिभ्यः' इति न्यायात् ॥*॥ **विश्वनाथस्तु**—सत्यशब्देन कारणमेव व्याख्यातम् । तदुक्तं भगवता—"यदुपादाय पूर्वस्तु भावो विकुरुते परम् । आदिरन्तो यदा यस्य तत्सत्यमभिधीयते ॥ " इति । ततश्चास्याः श्रुतेरयमर्थः—आरंभणं विकारः कार्यं भवति वाचा यस्य नामधेयं घटादिकं भवति मृत्तिकेत्येव सत्यं कारणं भवतीति ( २ )॥ १६ ॥

**नीलकण्ठी**—यद्ज्ञानादज्ञानाशस्तस्य ब्रह्मणो लक्षणमाह—बृहदिति । ऋषय इत्युत्तरार्धादपकृष्यते । ऋषयो मंत्रद्रष्टारः स्वदृष्टमंत्रेभ्यः " पुरुष एवेदꣳसर्वम् " इत्यादिभ्यः एतदुपलब्धं प्रत्यक्षाद्यवगतम्, नामरूपात्मकं सर्वं बृहद्ब्रह्मैवेत्यवयन्ति जानन्ति । किं प्रपञ्च एव ब्रह्म नेत्याह—अवशेषतयेति । रजतं शुक्तिरितिवदिदं ब्रह्मेति सामानाधिकरण्यमध्यस्तप्रपञ्चबाधावधिभूतं ब्रह्मावशेषयन्ति । यथोक्तम्—" योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव । ब्रह्मास्मीतिधियाशेषा त्वंबुद्धिर्विनिवर्तते ॥ " इति । एवं जगद्विवर्ताधिष्ठानत्वं ब्रह्मणो लक्षणं दार्शितम् । कुत एतदित्याशंक्योभयविधश्रुतिदर्शनादित्याह—यत इति । " यतो वा इमानि भूतानि जायन्ते, येन

इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथाऽमृताब्धिमवगाह्य तपांसि जहुः ॥
किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजंति ये पदमजस्रसुखानुभवम् ॥ ३ ॥ १६ ॥

**त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति । इति तवेति । त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा भोः त्र्यधिपते त्रिगुणमायामृगीनर्तक सूरयो**

जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति, यथोर्णनाभिः सृजते गृह्णते च, यथा पृथिव्यामोषधयः संभवन्ति, यथा सतः पुरुषात्केशलोमानि, तथाक्षरात्संभवतीह विश्वम्" इत्याद्याः श्रुतयस्तूर्णनाभिदृष्टान्तेन ब्रह्मैव स्वप्राधान्येन चोपाधिभूतमायाप्राधान्येन च क्रमाज्जगतो निमित्तमुपादानं चेत्याहुः । तत्रोपादानांशे दृष्टान्तः—मृदिवेति । यथा मृद्विकृताः घटशरावो दंचनाद्याः लोष्टपांसुपिंडाद्याश्च मृदित्येवावयन्ति । एवं जगदपि ब्रह्मेत्यवयन्ति । किं मृद्वद्विक्रियते ब्रह्म नेत्याह—अविकृतादिति । " अजायमानो बहुधा विजायते " इत्यविक्रियमाणस्यैव बहुभवनश्रवणान्न विक्रियत इत्यर्थः । एवं ब्रह्मण उपादानत्वाविक्रियत्वश्रुतिभ्यां सिद्धं जगद्विवर्ताधिष्ठानत्वम्, अन्यथा श्रुतिद्वयविरोधपरिहारासंभवात् । 'जगतश्च ज्ञाने द्वैतं न विद्यते' इति ज्ञाननिवर्त्यत्वश्रुत्यर्थापत्त्या सिद्धं मिथ्यात्वम् । नन्वेवं मृदिवेति विषमो दृष्टान्तः, नहि मृद्विकाराणां रज्जुभुजङ्गवद्बाध्यतास्ति । न । "वाचारंभणं विकारो नामधेयम्" इति तेषामप्यनित्यत्वश्रवणात् । अयं भावः—पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणामः, स च नित्यपरिणामिनि प्रधाने पाकजरूपाद्याश्रये पार्थिवपरमाणौ चास्ति, अतस्तावपि विकारत्वादनृतौ तेन परमाण्वादिप्रासादान्तेषु मिथो व्यावर्तमानेषु मृद्विकारेषु यत्कुसुमसूत्रवदनुस्यूतं मृत्सामान्यं तदेव सत्यं "मृत्तिकेत्येव सत्यम्" इति श्रुतेः । तदेव चास्माकमात्मा । यथाहुः शाब्दिकाः—"संबंधिभेदात्सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥ सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ।" इति । व्यावहारिकत्वेन बाधाभावेऽपि श्रुतियुक्तिभ्यां मृद्विकाराणामपि मिथ्यात्वं सिद्धमिति न दृष्टान्तवैषम्यमिति । ननु—"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥" इति मंत्रवर्णात्सांख्याः सुखदुःखमोहात्मकस्य जगतस्तादृशीप्रकृतिरुपादानं बंधमोक्षादिव्यवस्थार्थं पुरुषाश्च बहव इत्याहुस्तत्कथं ब्रह्मण उपादानत्वं जगतश्च मिथ्यात्वमित्यत आह—अत इति । यतो वचनाचरितं त्वयि अतः ऋषयस्त्वयि मनो दधुरिति योजना । वचनानां वेदान्तानाम् आसमन्ताच्चारितं तात्पर्येण पर्यवसानं त्वयि, अतो न प्रधानादेरुपादानत्वम् 'ईक्षतेर्नाशब्दम्' इति न्यायादित्यर्थः । तथाहि छान्दोग्येतावत्—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा श्वेतकेतो" इत्युपक्रमोपसंहारयोरैकरूप्यम् ऐतदात्म्यमित्यादेर्नवकृत्वः—श्रवणमभ्यासः मानान्तरानवगतत्वमपूर्वता उत्तमादेशम प्राक्षमः, येनाश्रुतं श्रुतं भवतीत्यादिना एकविज्ञानात्सर्वविज्ञानं फलं न्यग्रोधफलमत आहरेति बीजे वटस्येव सूक्ष्मे स्थूलस्य सद्भावः लवणमेतदुदकेवधायेति लवणोदकवत्कारणे कार्यलयश्च न्यग्रोभफलाहरणाद्यर्थवादैर्दर्शितः । यथा—"सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्येकविज्ञानात्सर्वविज्ञाने उपपत्तिश्चेति षड्विधतात्पर्यलिंगैरद्वैतं ब्रह्म प्रतिपाद्यते । " तथा आथर्वणे—"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्युपक्रम्य ब्रह्मैवेदममृतं पुरस्तादित्युपसंहृतम् । एवमजामंत्रेऽपितेजोबन्नरूपैवाजा प्रतिपत्तव्या । छांदोग्ये यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति श्रूयमाणानामेव रोहितादीनां तत्रापि प्रत्यभिज्ञानात् । न च सुखदुःखमोहात्मत्वं घटादेर्घटते सुखादीनामन्तःकरणधर्मत्वात् । बंधमोक्षव्यवस्थाया अपि वक्ष्यमाणविधया सिद्धेर्न चेतनबहुत्वमभ्युपेतव्यमिति दिक् । ननु ब्रह्मण्यध्यस्तप्रपञ्चस्यान्यत्र सत्त्वं वाच्यम् अत्यंतासतो गगनकुसुमादेरनध्यासादित्याशंक्य दृष्टान्तमुखेनैव परिहरति—कथमिति । भुवीत्यलुक्समासः । नृणां भुवि दत्तानि पदानि कथमयथा भुव्यदत्तानि भवन्ति न कथंचित् । एवं ब्रह्मण्यध्यस्तस्य प्रपञ्चस्य "नेह नानास्ति किञ्चन " इति ब्रह्मण्येव निषिद्धस्यान्यत्र सत्त्वं कथं स्यादित्यर्थः । एवं चानादिभ्रमतत्संस्कारपरंपरयाऽध्यासोपपत्तिरिति भावः ( २ ) ॥ १९ ॥

विवेकिनस्तवाखिललोकमलक्षपणकथामृताब्धिं सकलजनवृंजिननिरसनहेतुं कीर्तिसुधासिंधुमवगाह्य निषेव्य तपांसि तपंतीति तपांसि पापानि दुःखानि वा जहुस्त्यक्तवंतः। त्वदीयकथामात्रेण यदा पापत्यागस्तदा किमु वक्तव्यं ये पुनः स्वधामविधुताशयकालगुणाः । स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अंतःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते तथा हे परम तवाजस्रसुखानुभवमखंडानंदानुभवं पदं स्वरूपं भजंति सेवंते तथाभूता दुःखानि त्यजंतीति । " तद्यथा पुष्करपलाश आपो न श्लिष्यंते एवमेवंविदि पापं कर्म न श्लिष्यते ॥ न कर्मणा लिप्यते पापकेन । तत्सुकृतदुष्कृते विधुनुते ॥ एतꣳह वाव न तपति॥ किमहꣳसाधु नाकरवम् । किमहं पापमकरवम् " इत्यादिश्रुतेरित्यर्थः ॥ सकलवेदगणेरितसद्गुणस्त्वमिति सर्वमनीषिजना रताः ॥ त्वयि सुभद्रगुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः ॥ ३ ॥ १६ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—त्वमेव सर्ववेदप्रतिपाद्य इति । तद्यथा दर्शयति । अत्र श्रुतिः—"श्रृणु तस्य ब्रह्मणो माहात्म्यम्" इत्युपकोशलं प्रति जाबालस्य बचनम्।यथा पुष्करपलाश इति । यथा पुष्करपलाशे पद्मपत्रे आपो जलानि न श्लिष्यन्ति न लगन्ति एवमेवंविदि यथोक्तब्रह्मविदि पापं कर्म न श्लिष्यते । तन्महिमानमाह—पापेन धर्माधर्मलक्षणेन कर्मणा न लिप्यते संबध्यते संसारहेतुत्वादुभयमेव पापपुण्ययोः परिपाकं ज्ञानेन परित्यजतीत्यर्थः । ह—वाव—शब्दाववधारणे । आसन्नमरणकालेऽविदुषां नरकपातादिभयं भवति तद्भयमेनं यथोक्तमात्मविदं न तपते नोद्वेजयति।। किं तद्भयं तदाह—किं कस्मात्साधु शोभनं कर्म अहं नाकरवं न कृतवानस्मि, किं कस्मात्पापं निषिद्धं कर्माकरवमित्यादिभयम् एनं न तपतीति । भक्तिस्त्रिधा कर्ममयी ज्ञानमयी प्रेममयीति । ज्ञानमयीभक्तिपरेयं श्रुतिः । स्मृतिश्च—"समस्ततत्त्वांतरसंगतोऽपि सच्चिन्मयश्रेष्ठयिता विशुद्धः । षडूर्मिभावैर्गुणजैर्विकारैर्न भिद्यते वार्भिरिवाब्जपत्रम् ॥ " इति स्वामिचरणाः । सकलेति । सकलवेदगणैरीरिता उक्ताः सद्गुणा यस्य स त्वम् इति हेतोर्हे सुभद्र सर्वे च ते मनीषिजना विवेकिनः रता अनुरागयुक्ता भवन्ति तवेति गुणश्रवणादिभिः पदस्मरणेनोभयत्र संबध्यते । क्लमो दुःखम् ॥ * ॥ **श्रीधरानुयायिनी**—त्वमेव सर्ववेदगोचर इति सतां प्रवृत्तिं द्रढयति—इतीति । हे त्रिगुणमायामृगीनर्तक सर्वकारणत्वेन परमार्थसत्यस्य तव या सर्वजीवपापनाशिकाऽमृतसमुद्रात्मककीर्तिरूपा कथा तच्छ्रवणमात्रेणैव यदा सामान्यविवेकिनां परोक्षज्ञानवतां संतापकपापदुःखहानिस्तदा त्वदीयस्वरूपस्फुरणेन हेतुना रागद्वेषादिभिरन्तःकरणधर्मैर्जरामरणादिभिः कालधर्मैश्च रहितानां त्वदीयाखंडानन्दानुभववतामपरोक्षज्ञानवतामनन्यभक्तानां सर्वपापदुःखहानिरिति किमाश्चर्यम् । यद्वा—पदं त्वच्चरणारविंदं तद्विशेषणमजस्रसुखस्यानुभवो यस्मादिति ॥ * ॥**विश्वनाथी**—अथ शुद्धलीलातात्पर्यं तेन तत्रैव केवलं चरन्त्यः श्रुतयस्तदेवमासां सर्वासां तत्रैव तात्पर्यं श्रुत्वा लब्धसमयाः स्तुवन्ति—इतीति । हे त्र्यधिपते ऊर्ध्वाधोमध्यवर्तमानानां सर्वेषामधीश्वर यत एवं सर्वासामेव श्रुतीनां त्वामेव प्रतिपादयितुं तत्तद्विचारप्रयास इति हेतोस्तं परित्यज्य सूरयो विवेकिनः आखिलमलस्य वासनापर्यन्तकर्मदोषस्य निरसनीया कथा सैवामृताब्धिः अपारपरमानंदः तव तमवगाह्याविश्य तपांसि सर्वसांसारिकदुःखानि जहुः । तदेवं सति हे परम हे सर्वोत्कृष्ट किमुत वक्तव्यं ये पुनः स्वधामविधुताशयकालगुणा आत्मारामतया जीवन्मुक्ता अपि अजस्रसुखानुभवं प्रतिक्षणं सुखानुभवोल्लासरूपपदं त्वच्चरणारविन्दं भजन्ति ते तमवगाह्य तानि जहुरिति । अपि तु तत्सुखेनात्मारामतासुखावेशमपि जहुरित्यर्थः । तदेवं स्वाभाविक एवातिशयित एव च लीलाप्रतिपादितानां श्रुतीनां भगवत्संबंधो विवक्षितः । अन्यथा तत्तन्नस्यादिति । अत्र मुख्याः श्रुतयः " नैवाभ्यसेद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् " " यस्य नाम महद्यशः " " विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांꣳसि " इत्यादिकाः । कमिति क इत्यर्थः । प्रवोचमित्यडागमाभावश्छान्दसः, प्रकर्षेण वदेदित्यर्थः । अथ तत्पक्षस्थाः " यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च " इत्याद्या ज्ञेयाः । नानाश्रुतीनां सर्वोत्तमत्वञ्च " यस्यां न मे पावनमंग कर्म सृष्टिस्थितिप्राणनिरोधमस्य । लीलावतारेप्सितजन्म वा स्याद्ध्र्यां गिरं तां बिभृयान्न धीरः ॥ " इत्येकादशात् । सृष्ट्याद्यर्थं कर्म, साक्षादीक्षणादिलीलेत्यर्थः ( ३ ) ॥ १६ ॥

**दृतय इव श्वसंत्यसुभृतो यदि तेऽनुविधा महदहमादयोंऽडमसृजन्यदनुग्रहतः ॥
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेत्र्ष्ववशेषमृतम् ॥ ४ ॥ १७ ॥**

" असुर्या नाम ते लोका अंधेन तमसा वृताः ॥ तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः" तथा " न चेदवेदीन्महती विनष्टिः ॥ ये तद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवोपयंति " इत्याद्याः श्रुतयः पूर्वश्लोकोक्तोभयविधभजनहीनान्निंदंति । दृतय इवेति । असुभृतो नरा यदि ते अनुविधा अनु विदधतीत्यनुविधा अनुवर्तिनो भक्ता इति यावत् । तर्हि श्वसंति जीवंति सफलजीवना भवंति । इतरथा दृतय इव भस्त्रा इव । वृथाश्वासा इत्यर्थः । नन्वभक्तानामपि कामादि

**नीलकंठी**—ऋषयस्त्वयि मनो दधुरित्युक्तं तत्र मनःप्रणिधानस्याविक्षेपेण सिद्ध्यर्थम् "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" "वेदान्तान्विधिवच्छ्रुत्वा सन्न्यसेदनृणो द्विजः" इति श्रुतिस्मृतिप्रसिद्धं विविदिषासंन्या समाह—इति तव सूरय इति । हे त्र्यधिपते इति । इत्थमुक्तप्रकारेण तव कथा वेदान्तश्रवणं सैवामृतसाधनत्वा दुरवगाहत्वाच्चामृताब्धिस्तम् अवगाह्य उपक्रमादितात्पर्यलिंगैः पर्यालोच्य सूरयः पंडिता भूत्वा, तपांसि तपन्तीति तपांसि एषणा जहुस्त्यक्तवन्तः " तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः " वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेदित्यादिवचनेभ्यः हे त्र्यधिपते हे अखिललोकमलक्षपणेति संबोधनद्वयेन त्रयाणामाश्रमाणां कर्मफलप्रदातृत्वेनाधिपतिः अत एवाखिललोकमलक्षपणः । "त्रयो धर्मस्कंधा यज्ञोऽध्ययनं दानमिति । प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः, सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति " इति श्रुतेः । आश्रमत्रयोचितकर्मणा शुद्धसत्त्वः संपन्नात्मविविदिषः संन्यासेऽधिक्रियते इति दर्शितम् । विविदिषव: संन्यस्यन्तीत्युक्त्वा विदुषां संन्यसनं कैमुतिकन्यायसिद्धमित्याह—किमुतेति । स्वधाम्ना स्वरूपप्रकाशेन विधुता रज्जुभुजंगवद्बाधिता आशयो हृदयग्रंथिः, कालो मृत्युः, गुणाः सुखदुःखमोक्षात्मकाः सत्त्वरजस्तमःसंज्ञास्तन्मयी मूलाविद्या च यैस्ते । तथा—" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते । " इत्यादिश्रुतिभ्यः कृतकृत्याः पुरुषधौरेयाः याज्ञवल्क्यादयः । हे परम अजस्रसुखानुभवम् अखंडानंदसंविद्रूपं पदं पदनीयं तत्त्वं ये भजन्ति समाधिना ते संन्यस्यन्तीति किमु वक्तव्यम् । सोऽयं विद्वत्संन्यासः " एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति " इत्यादि श्रुतिसिद्धः । तत्र पूर्वार्धे साधनभूतो विविदिषासंन्यास उक्तः उत्तरार्धे फलभूतो विद्वत्संन्यास इति विवेकः ( ३ ) ॥ १६ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—उभयविधभजनं सगुणनिर्गुणभजनं तद्धीनान् श्रुतयो निंदन्ति । तथाहि—जनकं याज्ञवल्क्यः । असुर्या इति । भगवद्विमुखाः सर्वे एवासुराः ते हि श्रीमुखेनैवोक्ताः—" अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥ कर्शयन्तः शरीरस्थं भूतग्राममचेतसः । मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥" इति श्रीगीतासु । आग्नेयेऽपि— " द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च । विष्णुभक्तिपरो दैव आसुरस्तद्विपर्ययः ॥" इति । असुर्या नाम लोकाः कर्मफलानि अंधेन तमसा परमात्माज्ञानेनावृताः ये केच आत्महनो भगवद्विमुखाः प्रेत्य मृत्वा ताँल्लोकानभिगच्छन्ति । अभक्तनिंदापरेयं श्रुतिः । आदिनास्या अन्यासाञ्च ग्रहणम् । " इहैव सन्तोऽथ विद्मस्तद्वयं, न चेदवेदीर्महती विनष्टिः, यत्तद्विदुरमृतास्ते भवन्त्यपरे दुःखमेव यन्ति " इति । वयमिहैव सन्तस्तद्विजानीमः त्वं चेद्यदि नावेदीः तत्परमात्मतत्त्वं न विदितवान् तर्हि तव महती विनष्टिर्जन्ममरणादिरूपा महत्यनंता संसृतिः स्यात्कुतः ये तद्विदुस्तेऽमृता जन्ममरणादिदुःखाद्विमुक्ताः परमानंदरूपा भवन्ति । इतरेऽज्ञाः दुःखमेव यन्ति प्राप्नुवन्ति, इति । उपदेशपरेयं श्रुतिः । असून्प्राणेंद्रियादीन्बिभ्रतीत्यसुभृतः। अनुविदधति अनुसरान्ति। इतरथा भक्त्यभावे । इत्यर्थ इति—"धिक्तेषां धिक्तेषां येषां भक्तिर्न केशवे राजन्" इत्यादिपुराणात् ।

फलमस्त्येव न कार्यकारणानुग्राहकत्वेन जीवनहेतोः तवाभजने कृतघ्नानां तदपि न सिध्येदित्याशयेनाह । महदहमादय इति । महानहंकारश्चादिर्येषां ते यदनुग्रहतो यस्यानुप्रवेशेन लब्धसामर्थ्याः संतोऽडं देहं समष्टिव्यष्टिरूपं सृष्टवंतः । तत्र च पंचापि कोशानन्नमयादीनाविश्य तत्तदाकारः सन्यश्चेतयते स त्वं तदाह । पुरुषविध इति । पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा । नन चिदेकरसस्य कथं तत्तदाकारताऽत आह । अन्वयोऽत्रेति । अत्र एष्वन्नमयादिष्वन्वेती त्यन्वयः अतस्तत्तदाकारतेति । एवं तर्हि सत्यत्वमसंगत्वं च कथं तत्राह । चरमोऽन्नमयादिषु य इति अन्नमयादिषूपदिश्यमानेषु यश्चरमो ब्रह्मपुच्छं प्रतिष्ठेति पुच्छत्वेनोक्तः स त्वमिति संबंधः । ननु तथाप्यन्नमयादिष्वन्वितत्वेऽसंगत्वव्याहतिरेव तत्राह । सदसतः परं त्वमथ यदेष्ववशेषमृतमिति । सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम् । अवशेषमवशिष्यतः इत्यवशेषमबाध्यम्।अथात एव ऋतं सत्यम्।तर्हि किमर्थं तेष्वन्वय उक्तः । शाखाचंद्रवच्छुद्धस्वरूपलक्षणार्थम् । तथाहि । “स वा एष

“ श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः । न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥” इति । “ सफलं जीवितं तेषां येषां भक्तिर्जनार्दने ” इत्युक्तेरितरेषां वृथैवेति मुखत एवोक्तमिति भावः । अत्राक्षिपति—नन्विति । कामादीहादिनाऽर्थावाप्त्यादिग्रहः । नेत्याह—कार्यं देहादि कारणं महदादि तयोरनुग्राहकत्वेन निजचिच्छक्त्यावेशप्रदानेन जीवनहेतोः स्वस्वसामर्थ्यदातुः “ देहेंद्रियप्राणमनोधियोऽमी यदंशबद्धाः प्रचरन्ति कर्मसु । नैवान्यदा लोहमिवाप्रतप्तं स्थानेषु तद्द्रष्ट्रपदेशमेति ॥” इत्युक्तेः । कृतघ्नानां तत्कृतमुपकारमजानतां तदपि कामादिसुखमपि तत्रांडे तत्तदाकारः अन्नमयाद्याकारः तदन्नमयाद्याकारत्वं विधेव प्रकार इव । अत्र पुनराशंकते—नन्विति । अतोऽन्वयात् । एवं तर्हि तत्तदाकारत्वे । तत्राक्षेपे । पुनराशंकते— नन्विति । तथापि पुच्छत्वेनोक्तेऽपि तत्साक्षिभूतमन्नमयादेः साक्षिभूतम् । अत एवाबाध्यत्वादेव । पुनराक्षिपति—तर्हीति, शाखाचन्द्रेति । यथा—द्वितीयायां चन्द्रनिरीक्षणार्थं बालं बोधयति प्रथमं वृक्षमेव चन्द्रमाह—यदा स वृक्षं पश्यति तदा नायं चन्द्रो वृक्षोऽयमिति पुनर्दर्शयितास्य दक्षिणशाखां चंद्रं वदति तां दृष्ट्वा शाखेयं न चंद्र इत्थं वदति स च पुनराहास्याः शाखायाः शिरसि चंद्रोऽस्ति तं पश्येत्युक्तः स चन्द्रमेव पश्यति शुद्धमेवमत्रापि तथा दर्शयति— स वा इत्यादिना । अथ पञ्चविधा अन्नमयादिषु यथा तैत्तिरीयोपनिषदि तथात्र लिखामः “ ब्रह्मविदाप्नोति परम् ” इत्यधिकृत्याम्नायांते प्रथममन्नरसमयपुरुषविधामाह— “ स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठा” इति । अस्यार्थः—अन्नाद्वै प्रजाः प्रजायन्ते, अन्नाद्वै पुरुषः संभूतः इत्याद्युक्तः अन्नरसविकारः एष पुरुषो देहः स वै अन्नरसमयः अन्नरसविकारः तस्येदं प्रसिद्धं शिरः न तु प्राणमयादिष्विव कल्पनामयम् एवं पक्षादिषु योजना । अयं दक्षिणो बाहुर्दक्षिणः पक्षः, अयं वामो बाहुरुत्तरः पक्षः, अयं मध्यमो देहभाग आत्मा “अंगानां मध्ये ह्येष आत्मा” इति श्रुतेः । इदं नाभेरधस्ताद्यदंगं तत्पुच्छमिव पुच्छमधो लंबनसाम्यात् तदेव प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठाऽऽश्रय इति ( १ ) अथ प्राणमयं पुरुषमाह—“तस्माद्वा एतस्मादन्नरसमयादन्योंतर आत्मा प्राणमयस्तेनैष पूर्णः स वा एष पुरुषविधस्तस्य पुरुषविधतामन्वयं पुरुषविधस्तस्य प्राणमेव शिरः व्यानो दक्षिणः पक्षः अपान उत्तरः पक्षः आकाश आत्मा पृथिवी पुच्छं प्रतिष्ठा तस्यैष शारीर आत्मा यः पूर्वस्य” इति । अर्थः—तस्मादन्नरसमयात्पुरुषादन्य अंतरस्तदभ्यंतरस्थ आत्मा प्राणमयो वर्तते प्राणो वायुस्तन्मयस्तेन प्राणमयेन एषोऽन्नरसमयः पूर्णः वायुना दृतिरिव ( दृतिश्चर्मयंत्रम् ) स वै एष प्राणमय आत्मा पुरुषविधः पुरुषाकारः कुतः तस्यान्नरसमयस्यात्मनः पुरुषविधतामनुलक्ष्यीकृत्यायं प्राणमयोऽपि पुरुषविधो भवति तदन्तर्वर्तित्वात् । मूषायंत्रनिषिक्तधातुप्रतिमावत् तस्य प्राणमयस्य वायुविकारस्य मुखनासिकादिनिःसरणशीलो वायुवृत्तिविशेषः प्राणः शिरः, व्यानो वायुवृत्तिविशेषः दक्षिणः पक्षः, अपानोऽधोवायुः उत्तरः पक्षः, आकाश आत्मा आकाशस्थो वायुवृत्तिविशेषः समानाख्यो यः स आत्मा मध्यभागः, पृथिवी तदभिमानिनी देवता तस्य पुच्छं प्रतिष्ठा आध्यात्मिकप्राणस्य धारयित्री स्थितिहेतुत्वात् । “सैषा पुरुषस्यापानमवष्टभ्य” इति श्रुतेः । अन्यथोदानवृत्त्योर्ध्वगमनं गुरुत्वात्पतनं वा स्याच्छरीरस्य तस्मात्पृथिवी पुच्छं प्रतिष्ठेति । तस्येति शरीरेऽन्नमये भवः शारीरः यएष प्राणमयः स तस्यान्नमयस्य शारीर आत्मा भवति अन्नमयात्प्राण

**पुरुषोऽन्नरसमयस्तस्येदमेव शिरः" इत्यादिना स्थूलसूक्ष्मक्रमेण पंचकोशानुपदिश्य "तस्य पुरुषविधतामन्वयं पुरुषविध" इति पुनःपुनस्तदन्वितत्वेनालक्ष्य "ब्रह्मपुच्छं प्रतिष्ठा"**

मयः श्रेष्ठश्च "प्राणं देवा अनुप्राणन्ति" इति श्रुतेः। प्राणबलेन सेन्द्रियस्य देहस्य बलमिति ( २ ) अथ मनोमयं पुरुषमाह—"तस्माद्वा एतस्मात्प्राणमयादन्योन्तर आत्मा मनोमयस्तेनैष पूर्णः स वा एष पुरुषविधस्तस्य
पुरुषविधतामन्वयं पुरुषविधः तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरः पक्षः आदेश आत्मा अथर्वांगिरसः पुच्छं प्रतिष्ठा तस्यैष शारीर आत्मा यः पूर्वस्य" इति । अर्थः—तस्मात्प्राणमयादेतस्मादन्यः अंतर
आत्मा मनोमयः मनः संकल्पविकल्पात्मकमंतःकरणं तन्मयः मनोमयः सोऽयं प्राणमयस्याभ्यंतर आत्मा तेन मनोमयेन प्राणमयः पूर्णः स एव पुरुषविधो भवति तस्य प्राणमयस्य पुरुषविधतामनुलक्ष्यीकृत्यायमपि पुरुष
विधः तस्य मनोमयस्य यजुरेव शिरः यजुर्वेदमंत्रविशेषः शिरः तस्य शिरःप्रधानत्वात् यजुषा हि हविर्दीयते स्वाहाकारादिना । तथा ऋग्वेदमंत्रविशेषः तस्य दक्षिणः पक्षः, सामवेदमंत्रविशेष उत्तरो वामपक्षः, आदे
शोऽत्र ब्राह्मणमंत्रविशेषः आत्मा, अथर्वणांगिरसा दृष्टा मंत्रविशेषाः ब्राह्मणं पुच्छं शांतिपौष्टिकादिप्रतिष्ठाहेतुकर्मप्रधानत्वात्प्रतिष्ठा । य एष मनोमयस्तस्य पूर्वस्य प्राणमयस्य शारीर आत्मा भवति प्राणमयादस्य श्रेष्ठत्वं ज्ञान
संबंधात् । "मनसा पश्यति मनसा शृणोति" इत्यादिश्रुतेः ( ३ ) अथ विज्ञानमयं पुरुषमाह—"तस्माद्वा एतस्मान्मनोमयादन्योन्तर आत्मा विज्ञानमयस्तेनैव पूर्णः स वा एष पुरुषविधः तस्य पुरुषविधतामन्वयं पुरुष
विधः तस्य श्रद्धैव शिरः ऋतं दक्षिणः पक्षः सत्यमुत्तरः पक्षः योग आत्मा महः पुच्छं प्रतिष्ठा तस्यैष शारीर आत्मा यः पूर्वस्य" इति । अर्थः—तस्मान्मनोमयादन्योन्तरस्थ आत्मा विज्ञानमयो भवति निश्चयात्मिका
बुद्धिर्विज्ञानं तन्मयः । 'बुद्धिर्विज्ञानरूपिणी' इत्युक्तेः । एष मनोमयस्तेन विज्ञानमयेन पूर्णःस एष विज्ञानमयः पुरुषविधः तस्य मनोमयस्य पुरुषविधतामनुलक्ष्यीकृत्यायमपि पुरुषविधो भवति । तस्य विज्ञानमयस्य श्रद्धैव
शिरः । ऋतं सूनृता वाणी दक्षिणः पक्षः, सत्यं यथार्थभाषणमुत्तरःपक्षः, योगो युक्तिसमाधानं तस्यात्मा, महः महत्तत्वं पुच्छं प्रतिष्ठा सर्वेषां कारणत्वात् कारणं हि कार्याणां प्रतिष्ठेत्युक्तेः । य एष विज्ञानमयः स प्राणमया
च्छ्रेष्ठः सूक्ष्मश्च मनोमयो हि वेदात्मक उक्तः वेदार्थनिश्चयात्मिका बुद्धिर्विज्ञानं तन्मय आत्मा विज्ञानमयः प्रमाणविज्ञानपूर्वको हि यज्ञादिर्वितन्यते "विज्ञानं यज्ञं तनुते" इति श्रुतेः । निश्चयविज्ञानवतो हि पुंसः कर्तव्यार्थे
ष्वपूर्वश्रद्धोत्पद्यते सा श्रद्धा सर्वकर्तव्यानां प्राथम्यात्तस्य शिर इति ( ४ ) आनंदमयं पुरुषमाह—"तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मा आनंदमयस्तेनैष पूर्णः स वा एष पुरुषविधस्तस्य पुरुषविधतामन्वयं पुरु
षविधः तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनंद आत्मा ब्रह्म पुच्छं प्रतिष्ठा तस्यैष शारीर आत्मा यः पूर्वस्य" इति । अर्थः—तस्माद्विज्ञानमयादन्योंतरोऽभ्यन्तर आत्माऽऽनंदमयः अन्न
मयादीनां कार्यात्मनामधिकारात् मयट्प्रत्ययाच्चानंदमयः कार्यात्मा वेदितव्यः आनंदस्य विकारः आनंदमयः शुद्धजीवस्तेनानंदमयेन एष विज्ञानमयः पूर्णः स वै आनंदमयः पुरुषविधः पुरुषाकारः कुतस्तस्य विज्ञानमयस्य
पुरुषविधतामनुलक्ष्यीकृत्य पुरुषविधस्तस्यानंदमयस्य प्रियमेव शिरः प्रियमिष्टस्त्रीपुत्रादिसंदर्शनं प्राधान्याच्छिर इव शिरः, मोदः प्रियवस्तुलाभनिमित्तो हर्षः मुखप्रसादरूपः दक्षिणः पक्षः, प्रमोदः स एव प्रकृष्टो हर्षप्रहा
स्ययुक्तः उत्तरः पक्षः, आनंदः सुखसामान्यं तस्यात्मा प्रियादीनां सुखावयवानां तेषु तस्यानंदस्यानुस्यूतत्वात् आनंद आत्मा एवं चोत्कृष्यमाणस्यानन्दमयस्यात्मनः ब्रह्म पुच्छं प्रतिष्ठा आश्रयः यस्य शाखाचन्द्रवदं
तरतमत्वज्ञानार्थमन्नमयादिपञ्चकोशा उपन्यस्तास्तद्ब्रह्म सर्वेषामाश्रयः । इति पञ्चकोशाः ( ५ ) अत्रान्तर्यामिब्राह्मणं यः सर्वेषु भूतेषु तिष्ठन्निति प्रागेव लिखितम् " यः प्राणे वै तिष्ठन्प्राणादंतरो यं प्राणो न वेद यस्य प्राणः
शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः यो मनसि तिष्ठन्मनसोंतरो यं मनो न वेद यस्य मनः शरीरं यो मनोंऽतरो यमयत्येष त आत्मांतर्याम्यमृतः यो विज्ञाने तिष्ठन्विज्ञानादंतरो यं विज्ञानं न वेद यस्य विज्ञानं
शरीरं यो विज्ञानमंतरो यमयत्येष त आत्मान्तर्याम्यमृतः य आत्मनि तिष्ठन्नात्मनोंतरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" इति । अर्थस्तु प्राग्लिखितप्रायः ।अत्र तु अन्नमयादिषु
यश्चरमः स त्वामित्यनेन श्रीकृष्ण एवोक्तः योंतर्यामी स कृष्ण एव । तदुक्तं ब्रह्मस्तुतौ श्रीशुकेन—"कृष्णमेनमवैहि त्वमात्मानमखिलात्मनाम् । जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥ सर्वेषामपि भूतानां भावार्थो
भवति स्थितः । तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम् ॥ " इति । रासक्रीडायां च—"गोपीनां तत्पतीनाञ्च सर्वेषामपि देहिनाम् । योंतश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥ " इति । तस्मात्तद्गुणकी
र्तनादिभिर्निर्दग्धपञ्चकोशस्य भक्तस्य सुखेन तत्प्राप्तिः सर्वत्रोक्ता—"पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये । त्वामेव धीराः पुरुषा विशन्ति" इत्याद्युक्तेः । "अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।

इति सर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यम्॥नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः॥नरहरे न भजंति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः॥४॥१७॥

जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ” इत्याद्युक्तेश्च । अथ ज्ञानेन तत्प्राप्तिमाह–जीवात्मा द्विविधो विद्यायुक्ताविद्यायुक्तभेदात् । यस्तु विद्यायुक्तः स तु नित्यमुक्त आनंदमयः शुद्धः, यस्त्वविद्यायुक्तः शुद्धस्य प्रतिबिम्बरूपः स तु नित्यबद्धोऽशुद्धश्चेति । अयमेवान्नमयादिपञ्चकोशात्मकः संस्तत्तत्कोशोत्थसुखदुःखरागद्वेषजराक्षुत्पिपासाशोकमोहादिकमनुभवति यच्चानंदमयत्वमस्याविर्भवति तदपि स्वाभीष्टस्त्रीपुत्रार्थदर्शनलाभाद्युपाधिनैव न त्वात्मलाभेन “सर्वेषामानंदानामुपस्थमेकं परमायतनम् ” इति श्रुतेः । अत एवात्मज्ञानाभावात्संसरतोऽस्य प्रबोधस्तत्त्वमसीत्यादिवाक्यैः क्रियते यदा दैवादहं ब्रह्मास्मीति प्रबुद्धस्तर्हि शुद्धात्मना सहैकीभूयानंदमयो भूत्वा पञ्चकोशादविद्याकार्यादसंगः सन्विद्योपाधितोऽपि निर्मुक्तः सन्ब्रह्मैव भवतीति एतदर्थं पञ्चकोशोपन्यासोऽत्रेति दिक् । स्वामिचरणाः । नरेति । ततस्तर्हि तेषां नृणामुच्छ्वसितं जीवितं दृतिवद्विफलमित्यर्थः । न भजन्ति नृणामिति पाठो लेखकप्रमादस्तथापि अस्य योजनिकेयम् त्वयि त्वां न भजन्ति किंतु सप्तम्यां द्वितीयाकरणमगौरवेयत्वादयो वेत्यपपाठ एव नरहरे न रमन्ति नृणामिदमिति यथा विपूर्वस्य रमेः परस्मैपदित्वं तथा नञ्पूर्वादपि ज्ञेयमर्थसाम्यात् अधर्माद्विरमतीत्यधर्मं न करोतीत्यर्थः।तद्वदत्रापीति ॥*॥ **श्रीधराऽनुयायिनी**–उक्तोभयविधभजनहीनान्निन्दन्ति–दृतय इति । हे हरे प्राणिनो यदि ते भक्तास्तदैव सफलजीवनाः अभक्ताश्चेत्तदा ते भस्त्रा इव वृथाश्वासा जीवन्तोऽपि मृता एव । ननु भभक्तानामभक्तानामपि कामादिसुखमस्त्येवेत्याशंक्याहुः–महदिति । महत्तत्त्वाहंकारादयः स्वयमसमर्थाः पुनस्त्वदनुप्रवेशेन लब्धसामर्थ्यास्ततोऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्यपञ्चकोशसमुदायात्मकं समष्टिव्यष्टिदेहसमूहमुत्पादितवन्तः, ततश्च तत्तत्कोशान्वयेन तत्तत्कोशविधः सन्नानंदमयकोशपुच्छत्वेनोक्तस्त्वमेव साक्षिरूपोऽसि एतेन त्वत्कृतप्रकाशादिरूपानुग्रहं विना जीवानां कामसुखादिकमपि न सिद्ध्यतीत्युक्तम् । तत्तत्कोशान्वयित्वेऽप्यसंगित्वमाह–स्थूलसूक्ष्मस्वरूपान्नमयादेः परं तत्साक्षिरूपमबाध्यं सत्यं त्वमेवासीति ॥*॥ **विश्वनाथी**–तदेवं सामान्याकारेण सर्वश्रुतीनां समन्वयस्तच्छुद्धभक्तिप्रतिपादनपर्यन्तो दर्शितः । अथ तद्विशेषाणामपि दर्श्यते तत्र काश्चित्पूर्वोक्तशुद्धभक्तिप्रतिपादकश्रुत्यनुगामिन्यः श्रुतयोऽन्वयव्यतिरेकाभ्यां तद्वाक्यं पुष्णन्त्यस्तेनैव तत्र चरन्त्यः काश्चित्स्वानुगतश्रुतीश्चान्यास्तत्पर्यवसानत्वेन स्तुवन्ति–दृतय इति । ते जना दृतय इव श्वसन्ति त्वद्भक्तिहीनत्वेन मृतकसाधर्म्यान्निष्प्राणत्वेऽपि भस्त्रा इव वृथाश्वासा इत्यर्थः । यदि तु ते तवानुविधा अनुविदधत्यानुकूल्यं कुर्वन्तीत्यनुचरा भक्ता इति यावत् । तदैवासुभृतः प्राणधारिणो जीवन्तो नरा उच्यन्ते । नन्वभजतामपि सूक्ष्मः स्थूलश्च देहो जीवन्नेव दृश्यते न तु म्रियमाणस्तत्राहुः–महदहमादयश्चित्ताहंकारबुद्धिमनःश्रोत्रचक्षुरादयो देहद्वयारंभका यदनुग्रहतो यद्भजनप्राप्तानुग्रहादेव अंडं समष्टिव्यष्टिशरीरमसृजन् “नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ” इत्यादितृतीयोक्तेश्चित्ताहंकारादयो भजने प्रवृत्ता एव दृष्टा अतो येषां चित्तश्रोत्रादयो नैव भजने प्रवर्तन्ते ते देहा नैव चित्तश्रोत्रादिमन्तः अतो देहाभासा एव मृता एवेति भावः । नन्वहं कीदृशाकारः यं मां ते भजेरन्नित्यत आहुः–अन्नमयादिषु अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाः स्थूलदेहप्राणान्तःकरणजीवपरमात्मानः क्रमेण बास्तिपुच्छपृथिवीपुच्छाथर्वांगिरःपुच्छमहःपुच्छब्रह्मपुच्छा एव ये पञ्चपुरुषाः श्रुतावुक्तास्तेषु मध्ये यश्चरम आनंदमयः स त्वमिति संबंधः । ननु तर्ह्यन्नमयाद्याः किमहं न भवामि तत्र विशिंषन्ति–अत्रान्नमयादिषु अन्वेति अनुप्रविशतीत्यन्वयः । स त्वं तव कारणत्वात् । अन्नमयादीनां तत्कार्यत्वादेतेऽपि त्वमेव भवसि किंतु न स्वरूपेण, तु त्वमानंदमय एव सर्वकारणं परमात्मेत्यर्थः । किन्त्वेषु सर्वेष्वपि मध्ये यदवशेषं परमचरमं ‘रसो वै सः ’ इति श्रुत्या रसत्वेन प्रतिपादितम् ‘स्त्रीणां स्मरो मूर्तिमान् ’ इति भागवतविवृतं सदसतः परमन्नमयादिस्थूलसूक्ष्मसर्वविलक्षणं सर्वश्रेष्ठात्सत आनंदमयादसतस्ततो निकृष्टाद्विज्ञानमयादेश्च परमन्यत् योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्यातीतो गोपाल इति । श्रीगोपालतापनीश्रुत्युक्तम् ‘ब्रह्मणो हि प्रतिष्ठाहम्’ इति गीतास्पष्टीकृतं सर्वोत्कृष्टं श्रीकृष्णस्वरूपं वस्तु तदपि ऋतमस्माभिः श्रुतिभिस्तपःप्राप्तस्वरूपाभिः प्राप्तमनुभूतं वा । अर्तेर्गत्यर्थत्वाद्गत्यर्थानाञ्च प्राप्त्यर्थत्वाज्ज्ञानार्थत्वाच्च । अत्र “असुर्या नाम ते लोका अंधेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ” इत्याद्या भक्त्यभावे दोषप्रतिपादिकाः । असुर्याः “द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च । विष्णुभक्तिपरो दैव आसुरस्त

द्विपर्ययः ॥ " इत्याग्नेयविष्णुधर्मोत्तरोक्तेरसुराणां विष्णुभक्तिहीनानां प्राप्य इत्यर्थः । "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कान् तं पीठगं ये तु यजन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् " इत्याद्या भक्तिसत्त्वे गुणप्रतिपादिकाः श्रुतयः । " स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठा " इत्येवमन्नमयादिचतुःपुरुषनिरूपणोत्तरं पञ्चम आनंदमयो निरूपितो यथा– " तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानंदमयस्तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनंद आत्मा ब्रह्म पुच्छं प्रतिष्ठा " इति तैत्तिरीयकश्रुतिर्जीवात्मपरमात्मब्रह्मप्रतिपादिका । अत्र यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यस्य विज्ञानं शरीरमिति जीवांतर्यामिप्रतिपादकश्रुतेरात्मनि तिष्ठन् इति श्रुत्यन्तरवाच्यविज्ञानमयो जीवात्मैवोक्तस्तदनंतरोक्त आनंदमयः सर्वान्तर्यामी परमात्मैव परमोपास्य इति वैष्णवमते व्याख्या । अतोऽत्र पुत्रदर्शनजानंदादिकं प्रियादिशब्दैर्न व्याख्येयम् किन्त्वेकस्यैव परमानंदरूपस्य परमात्मन आनंदोदयोत्कर्षतारत म्यादेव प्रियादीनां चतुर्णां तत्तन्नामभेदः । ब्रह्मणस्तु सर्वतोऽपि बृहत्तमानन्दत्वादानंदप्रतिष्ठात्वम् । प्रतिष्ठीयतेऽस्यामिति प्रतिष्ठा आश्रयः ' ब्रह्मणो हि प्रतिष्ठाहम् ' इत्युक्तेः रसो वै स इति सर्वान्तिमश्रुत्युक्तेश्च तस्यापि प्रतिष्ठा कृष्णः सर्वबृहत्तमानंदस्तदवधिरूपो गोपालतापनीश्रुत्या तुरीयादपि विलक्षणत्वेन प्रतिपादितः प्रेमरसमयवपुरुपास्येषु परमावधिरुक्तः " विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् " इत्युक्तेरन्तर्याम्यानंदमयः खलु यस्यैक एवांशः अत एव प्रेक्षावच्छिरोमणीनां श्रुतीनां कृष्णस्यैवोपासना बृहद्वामने दृष्टा । प्राप्तिश्च गोपीत्वेन ' स्त्रिय उरगेन्द्रभोगभुजदंड ' इति पद्येन वक्ष्यते । अतो भगवत्स्वरूपेष्वपि मध्ये कृष्णमेव सर्वोत्कृष्टतया श्रुतिभिः प्रतिपादितमवधार्य नारदः श्रीनारायणस्यापि पुरःस्थितो "नमस्तस्मै भगवते कृष्णायामलकीर्तये " इत्युच्चारयन्कृष्णमेव नमस्करिष्यते ( ४ ) ॥ १७ ॥

**नीलकण्ठी**–एवं स्वधर्मानुष्ठानाच्चित्तशुद्धिस्ततो वेदान्तश्रवणं ततः संन्यासस्ततो निदिध्यासनं तेनात्मानुभव इत्येवं क्रमानभिज्ञान्निंदति–दृतय इति । हे भगवन्महदहमादयस्ते तवानुग्रहतो यदंडमसृजन् तदनुविधा यदि असुभृतः तर्हि दृतय इव श्वसन्तीति संबंधः । अयमत्राण्डसृष्टिक्रमः–" तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी " इति श्रुतेरविद्याशबलाद्ब्रह्मणः शब्द वानाकाश उत्पन्नः, ततः शब्दस्पर्शवान्वायुः, ततः शब्दस्पर्शरूपवत्तेजः, ततः शब्दस्पर्शरूपरसवत्य आपः, ताभ्यः शब्दस्पर्शरूपरसगंधवती पृथिवी इति पञ्च सूक्ष्मभूतानि स्वकारणमायागुणात्रिकयुक्तानि संभूतानि तेष्वाकाशादिसात्त्विकांशेभ्यो व्यस्तेभ्यः क्रमेण श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि जातानि दिग्वातार्कप्रचेतोऽश्व्यनुगृहीतानि शब्दस्पर्शरूपरसगंधान्गृह्णन्ति तथा तेषामेव राजसांशेभ्यो व्यस्तेभ्यः क्रमाद्वाक्पा णिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि जातानि, वह्नीन्द्रविष्णुमित्रप्रजापतिभिरनुगृहीतानि वचनादानगतिविसर्गानंदान्निर्वर्तयन्ति तेषामेव मिलितेभ्यः सात्त्विकांशेभ्योंतःकरणं जायते तच्च सर्वाणि ज्ञानेन्द्रियाण्यनुगृह्णाति तस्य मनोबुद्ध्यहंकारचित्ताख्याश्चतस्रो वृत्तयश्चंद्रबृहस्पतिरुद्रक्षेत्रज्ञाधिष्ठिताः संशयनिश्चयगर्वस्मरणानि विषयीकुर्वन्ति, तथा तेषामेव राजसांशेभ्यो मिलितेभ्यः प्राणो जायते स कर्मेन्द्रियाण्यनुगृह्णाति तस्य प्राणाद्याः पञ्च वृत्तयः तासु प्राणः श्वासप्रश्वासौ करोति, अपानोऽशितपीतादेरधोनयनं, व्यानो बलसाध्यं भारोद्यमनादि, उदानो देहादुत्क्रमणं, समानोऽशितपीतादिसमीकरणं तदेतल्लिङ्गशरीरम् । तदुक्तम्–" पञ्चप्राणमनोबुद्धिदशेन्द्रि यसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥" इति । अत्र मनस्यहंकारस्यान्तर्भावः बुद्धौ चित्तस्य । तथा तेषामेवाकाशादीनां तामसांशेभ्यः पञ्चीकृतपञ्चमहाभूतानि जायन्ते । पञ्चीकरणञ्च–आकाशादीन्प्रत्येकं द्विधा विभज्य तेष्वेकैकमर्धं चतुर्धा कृत्वा स्वेतरेषु भूतचतुष्टयार्धेषु योजनमिति तेभ्यः पञ्चीकृतपञ्चमहाभूतेभ्यः इदं ब्रह्माण्डं स्थूलं परमात्मनः शरीरमुत्पन्नं तदेतदस्य समष्टिशरीरं तदन्तर्गतमस्मदादिशरीरं व्यष्टिः वनवृक्ष वज्जलाशयतत्तरंगप्रातिबिंबितचंद्रवच्च एवं लिङ्गमपि समष्टिव्यष्टिभेदेन द्विविधमेवं कारणमपि । अत्र स्थूलसूक्ष्मकारणव्यष्टयः क्रमाद्विश्वतैजसप्राज्ञसंज्ञाः स्थूलसूक्ष्मकारणसमष्टयस्तु वैश्वानरहिरण्यगर्भेश्वरापरपर्यायाः विराट्सू त्रान्तर्यामिसंज्ञाः । तत्र हैरण्यगर्भे बुद्धिमनसी महदहंकारौ तत्प्रभृतयो महदहमादयस्ते तवानुग्रहतस्त्वदनुप्रवेशेन लब्धात्मकाः सन्तः तादृशमेव त्वदनुप्रविष्टं कार्यमसृजन्ब्रह्मांडं सृष्टवन्तः वटधानेव भूम्याद्यनुप्रवेशेन महान्त वटविटपिनम् । तदिति द्वितीयान्तं यच्छब्दाभिसंबंधादध्याहार्यं तत् अंडम् अनुविदधति तदभेदाध्यासेन तद्धर्माननुकुर्वन्ति ते अनुविधाः देहादिधर्मेणासंगमात्मानं विशिंषन्तो यदि स्युः तर्हि दृतिश्चर्मकोशो यथा वृथा श्वसिति तथा ते असुभृतः प्राणिनो व्यष्टिदेहाभिमानिनो व्यर्थं जीवन्तीत्यर्थः । असुभृत इति बहुवचनाद्व्यष्टयभिमानिनामेव व्यर्थं जीवनं न समष्ट्यभिमानिनामुपासकानामिति गम्यते । देहाद्यनुविधानञ्चासुभृतामुमुष्य

पुत्रोऽहं ब्राह्मणोऽहमंधोऽहमित्याद्यनुभवात्स्पष्टम् । अत एवात्मविवादिनां विप्रतिपत्तिः । तथाहि—लोकायतेषु तावत्केचित्स्थूलोऽहं कृशोऽहमित्याद्यनुभवाद्भूतयोगजचैतन्यवान्स्थूलो देह एवात्मेत्याहुः । देहस्य स्वप्नसुषुप्त्योरभोक्तृत्वादंधोऽहं बधिरोऽहं पश्यामि शृणोमीत्यनुभवादिंद्रियाण्यात्मेत्यन्ये तेषां संहतानामात्मत्वे एकविनाशेऽप्यात्मनाशापत्तेः । प्रत्येकमात्मत्वे विरुद्धदिक्क्रियया शरीरमुन्मथ्येताक्रियं वा स्यादतोऽशितपीतादिभोक्ता प्राण आत्मेत्यन्ये । प्राणेऽपि सुप्तौ भोक्तृत्वादर्शनात्सुख्यहं दुःख्यहमित्यनुभवात्सुखादिधर्मकं मन आत्मेत्यपरे । तथा बौद्धेष्वपि सर्वेन्द्रियानुग्राहकतया मनसः करणत्वानुभवात्कर्तृरूपविज्ञानमात्मा । तच्च क्षणिकं प्रदीपकलिकावदिति योगाचारादयः । विज्ञानस्यापि सुप्तौ लयदर्शनाच्छून्यमात्मेति माध्यमिकाः । “ योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरे प्रणप्तॄननुभवामि ” इति बाल्यस्थाविरयोरात्मैक्यप्रत्यभिज्ञानान्न क्षणविनाशी नापि शून्यं निरधिष्ठानकभ्रमासंभवात् स्तनपानादिप्रवर्तकजन्मान्तरीयसंस्काराऽनुवृत्तिदर्शनाच्च नित्यः, स च न व्यापकः प्रमाणाभावात् एकस्मिन्देहे सर्वात्मसान्निध्याविशेषेण भोगसाङ्कर्यप्रसंगाच्च । नाप्यणुः गंगाह्रदनिमग्नस्य युगपत्सर्वाङ्गीणशैत्योपलंभाभावप्रसङ्गात् देहपरिमित इत्यार्हताः । एकस्यात्मनः क्रमेण मशकमतङ्गजमनुजशरीरप्राप्तावयवोपचयापचयस्यावश्यवक्तव्यत्वात्तथात्वे चानित्यत्वप्रसङ्गादणुत्वे चोक्तदोषाद्विभुत्वेऽपि तत्तदात्ममनसामनादिस्वस्वामिभावसंबंधवशेन तत्तदात्मनि तत्तन्मनःसंयोगजसुखादिव्यवस्थोपपत्तेश्च नित्यो विभुः स्वतो जडोऽपि बुद्ध्यादिगुणानामाश्रयः कर्ता भोक्तेति तार्किकवैशेषिकप्राभाकराः । अहमनुभवस्योभयात्मत्वदर्शनाज्जडबोधरूप इति भाट्टाः । मध्यमत्वे उक्तदोषाद्विभुत्वेऽपि भोगवैचित्र्यादात्ममनसां स्वस्वामिभावनियमकल्पना ततश्च भोगवैचित्र्यमित्यन्योन्याश्रयतापत्तेर्भोगसांकर्यानिवारणाच्चंदनबिन्दुवदेकदेशस्थत्वेऽपि सर्वाङ्गीणशैत्योपलंभदर्शनादणुरनागंतुकदुःखादिमानित्येकदेशिनः । सति घटे यावद्रूपनाशादर्शनात्सत्यात्मनि यावद्दुःखनाशलक्षणस्य मोक्षस्यासंभवः मोक्षाभ्युपगमे वा दुःखादेरात्मधर्मत्वासंभवः वह्न्यौष्ण्यवत्स्वाभाविकस्य धर्मस्य धर्मिनाशमन्तरेण निवृत्त्यसंभवादनिर्मोक्षापत्तेः । नाप्यणुः चंदनबिन्दुशैत्यवत्स्वाश्रयांशप्रसर्पणद्वारा निरंश एवात्मोपलब्धेः सर्वाङ्गसंगित्वासंभवेनोक्तदोषतादवस्थ्यात् “ बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ” “ अणोरणीयान्महतो महीयान् ” इत्यादिश्रुतिस्त्वानंत्यादिवाक्यशेषादात्मनो दुर्लक्ष्यत्वमात्रपरा । नापि मध्यमः उक्तदोषात् । नाप्येकः अहमदोऽद्राक्षम् अदोऽश्रौषमितीन्द्रियान्तर इव देहान्तरेऽप्यात्मैक्यप्रत्यभिज्ञापत्तेः । अतो विभुं दुःखाद्यसंस्पृष्टमकर्तारं शुद्धचिन्मात्ररूपम् “अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः” इति बंधमोक्षव्यवस्थापकश्रुत्यर्थापत्त्या जन्ममरणादिप्रतिनियमदर्शनाच्च भोगसाङ्कर्यानुमानस्य दुर्बलत्वाच्चानेकमात्मानं सांख्याः पातंजलाश्चाहुः । अस्माकं तूक्तप्रक्रियया स्थूलदेहोऽन्नमयः कोशः कर्मेन्द्रियैः सह प्राणः प्राणमयः ज्ञानेन्द्रियैः सह ते मनोविज्ञाने मनोमयाविज्ञानमयौ एते त्रयोऽपि क्रमेण क्रियाकरणकर्तृरूपाः । कारणशरीरमानंदमयः एतैरुपहितं चैतन्यं जीवोनुपहितमीश्वर इति । शुद्धचिन्मात्रस्योपाधिभेदमंतरेण भेदस्यासंभवात् । तर्कमते श्रोत्रैक्येऽपि तत्तत्कर्णशष्कुल्युपाधिभेदेन शब्दग्रहव्यवस्थावदात्मैक्येऽप्यन्तःकरणभेदादेव बंधादिव्यवस्थोपपत्तेरेक एवात्मेति । तत्र चार्वाका बौद्धाश्च एकैकं कोशमात्मानमाहुः । तार्किकादीनां त्वानंदमय आत्मा विज्ञानमयस्तद्गुणाः उभयेऽपि क्षेत्रमेवात्मानं वदन्तो मूढा एव । नग्नभट्टवेदान्त्येकदेशिनस्तु क्षेत्रक्षेत्रज्ञवैशिष्ट्यस्यात्मतां वदन्तो मध्यमाः । त एते उपाध्यनुविधाना दृतय इव श्वसन्ति । इदं श्लोकार्धं पाठक्रममनादृत्यार्थक्रमेण व्याख्यातम् । कुतोऽनुविधानमित्यत आह—पुरुषेति । तइत्यनुषज्यते यतस्ते तवात्र अण्डे महदादिसृष्टे द्विविधे शरीरेऽन्वयोऽनुगमोऽस्ति कीदृशोऽनुगमः पुरुषविधः स्थूलशरीरप्रकारानुकारी तस्य पुरुषविधतामन्वयं पुरुषविध इत्यन्नमयादिषु पूर्वपूर्वधर्मानुकारित्वमुत्तरोत्तरस्य श्रूयते । कोऽसौ यस्यान्वयोऽत्रास्ति तमाह—चरमोऽन्नमयादिषु य इति । आनंदमय इत्यर्थः । अस्य हि कारणीभूतमायाशबलस्य कार्यशबलता युक्ता । एवं देहाद्यनुविधानादीश्वरस्यापि संसार इत्युक्त्वा तन्नाशोपायमाह—सदिति । सत्कार्यम् असत्कारणम् अतः परं पदेषु कोशेषु रज्जुभुजंगवद्बाध्यमानेष्ववशेषं बाधावधिभूतमत एव ऋतं सत्यं पुच्छं ब्रह्म तदसि त्वमिति शेषः। तज्ज्ञानान्मुक्तिरित्याशयः। पाठान्तरे तु अथशब्दोऽतःशब्दार्थः। शेषं पूर्ववत् । सदसतः परं त्वमथेति पाठो वृत्तभंगादुपेक्षितः ( ४ ) ॥ १७ ॥

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम् ॥
तत उदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतंति कृतांतमुखे ॥ ५ ॥ १८ ॥

एवं तावत्सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सद्भजनीयत्वमुक्त्वाऽभक्तनिंदया च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि प्रथमं तावद् " उपाध्यालंबनमुपासनमुदरं ब्रह्म इति शार्कराक्षा उपासते । हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता इत ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत " इत्याद्याः श्रुतयो विदधतीत्याह । उदरमुपासत इति । ऋषिवर्त्मसु ऋषीणां संप्रदायमार्गेषु ये कूर्पदृशस्ते उदरालंबनं मणिपूरकस्थं ब्रह्मोपासते ध्यायंति । शार्कराक्षा इति श्रुतिपदस्य प्रतिपदं कूर्पदृश इति कूर्पं शर्करारजो विद्यते दृक्ष्वक्षिषु येषां ते तथा रजःपिहितदृष्टयः स्थूलदृष्टय इति यावत् । उदरस्य हृदयापेक्षया स्थूलत्वात् । यद्वा कूर्पं सूक्ष्मं सूक्ष्मदृश इत्यर्थः । तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः । आरुणयस्तु साक्षाद्धृदयस्थं दहरं सूक्ष्ममेवोपासते । हृदयविशेषणं परिसरपद्धतिमिति । परितः सरंति प्रसर्पंतीति परिसरा नाड्यस्तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः । विशेषणस्य फलमाह । तत इति । ततो हृदयात् । भो अनंत तव धामोपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्धानं प्रत्युदगादुदसर्पत । मूलधारादारभ्य हृदयमध्याद्ब्रह्मरंध्रं प्रत्युद्गतमित्यर्थः । कथंभूतं धाम । यत्समेत्य प्राप्य पुनरिह कृतांतमुखे मृत्युमुखे संसारे न पतंति । तथा च श्रुतिः । " शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंति" इति ॥ उदरादिषु यः पुंसां चिंतितो मुनिवर्त्मभिः ॥ हंति मृत्युभयं देवो हृद्गतं तमुपास्महे ॥ ५ ॥ १८ ॥

भावार्थदीपिकाप्रकाशः वंशीधरी—एवमुक्तरीत्या सर्वश्रुतीनां समन्वयेन गतार्थत्वेन सतां शास्त्रनिष्ठानां भजनीयत्वं तदेव सद्भजनीयत्वमेव अवगाह्यो दुर्ज्ञेयो महिमा यस्य तस्मिन् । प्रथममादौ तावदधुना उपाधिरालंबनं यस्य तत् । उदरमिति वैश्वानराग्निरूपेण जाठरानलभूतेन ब्रह्मणाधिष्ठितत्वादुदरं ब्रह्मेति । शर्कराक्षस्यापत्यानि शार्कराक्षा ऋषय उपासते । आरुणेरपत्यानि आरुणय ऋषयः हृदयमुदरादूर्ध्वप्रदेशं परब्रह्मोपलब्धिस्थानत्वात् ब्रह्मेत्युपासते । ब्रह्मा हैव ता ह स्फुटं ता ते उदरोरसी ब्रह्मा ब्रह्मणी उपास्ते उदरोरसी ब्रह्मणी एव भवत इत्यर्थः । ब्रह्मा ता इति प्रथमाद्विवचनांते पदे छान्दसत्वादाकारः । तद्ब्रह्म ऊर्ध्वत्वे चोदसर्पत् ऊर्द्धमुत्क्रम्यागच्छत् शिरोऽश्रयत आश्रितवत् शिरसि चक्षुःश्रोत्रादीनि करणानि स्वस्वस्थाने पृथङ्निक्षिप्य दर्शनादिव्यापारं कारयित्वा चास्त इत्यर्थः । स्थूलदृष्टीनां तूदरस्थोपासनापि दुर्घटेत्याह—यद्वेति । इत्यर्थ इति—"कूर्पं मृत्कणिकासूक्ष्महिंसाविक्षेपणेषु च" इति निरुक्तिः । तदोदरस्थोपासनकालेऽपि तत्प्रवेशाय हृदयस्थसूक्ष्मप्रवेशाय । इति भाव इति—स्थूलमार्गं विना सूक्ष्ममार्गस्य दुर्ज्ञेयत्वमिति तात्पर्यम् । इत्यर्थ इति—मार्गादेव प्रसरणमस्तीति भावः । इत्यर्थ इति—सुषुम्ना हि नाडी मूलाऽऽधाराख्यश्चक्रविशेषश्च पायुदेशेऽस्ति ततो निःसृत्य हृदयमध्यात् ह्रन्मध्यं प्राप्य ब्रह्मरंध्रं दशमद्वारं ब्रह्मलोकं गच्छतस्तद्विवृतं भवति, योगबलेन 'सुषुम्नया ब्रह्मपथेन शोचिषा ' इत्युक्तेरुद्गतोर्ध्वमितास्तीति भावः । अत्र प्रमाणमाह—तथा चेति । एकोत्तरशतं नाड्यो हृदयस्य संबंधिन्यः सन्ति तासां मध्ये एका नाडी मूर्धानमभि मूर्ध्नो बहिरूर्ध्वमभिनिस्सृता सुषुम्नाख्या तयाऽऽसमन्तादयन् गच्छन्नुपासकोऽमृतत्वं मोक्षमेति । अन्या नाड्यो विष्वङ् नानागतयस्तिर्यक्सार्पिण्यः उत्क्रमणे संसारभ्रमणद्वारे भवन्ति वर्तन्त इति । स्वामिश्लोकस्तु सुगमत्वान्न व्याख्यातः ॥ * ॥ श्रीधराऽन

**यायिनी**—तव भजनमावश्यकमित्युक्तं तत्र सुंदरसूक्ष्माक्षरालिखनचातुर्येच्छोः प्रथमस्थूलाक्षराभ्यास इव परब्रह्मप्राप्तीच्छोश्चित्तस्थैर्यार्थं तावदुपाध्यालम्बनं स्थूलोपासनं विधेयमित्याहुः—उदरमिति । हे अनंत तवोपासनमार्गेषु ये स्थूलदृष्टयस्ते उदरालंबनं मणिपूरकचक्रे वैश्वानरांतर्यामिणं त्वाम् अन्नरसादिप्रवर्तनया क्रियाशक्तिदायकं ध्यायन्ति । "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ " इति गीतोक्तेः । तथा स्वप्राप्त्या संसारनिवार्तिका भगवदुपलब्धिस्थानरूपा या ज्योतिर्मयी सुषुम्नाख्या नाडी सा मूलाधारादारम्य हृदयमध्यतः शिरोगतं ब्रह्मरंध्रं प्रत्युद्गतेत्यतः सुषुम्नासंबंधिनि सकलनाडीप्रसरणमार्गे त्वन्नैक व्यप्रापके हृदये तव सूक्ष्मं रूपं जीवान्तर्यामिणं बुद्ध्यादिप्रवर्तनया ज्ञानशक्तिप्रदायकं "अंगुष्ठमात्रः पुरुषोंतरात्मा सदा जनानां हृदये सन्निविष्टः " इति श्रुतेः । सूक्ष्मदृष्टयो ध्यायन्ति, उदरापेक्षया हृदयस्य सूक्ष्मत्वात्सूक्ष्मरूप ध्यानास्पदं हृदयमेव, अनेन दूरदेशगमनाद्यभावेनानायाससेव्यत्वं दार्शितम् । यद्वा—उद्गतोऽरः परिच्छेदो यस्मात्स उदरस्तम् । यद्वा—हे अनंत ततः अनुपदोक्तत्वदुपासनतः तव परमं सर्वोत्कृष्टमत एव धाम शिरः ब्रह्मलोका न्तानां चतुर्दशधाम्नां शिरो मौलिभूतं वैकुण्ठाख्यमुदगात् उदयं प्रापेत्यर्थः । अग्रे पुनरिहेत्यादि वैकुण्ठविशेषणमेव ॥ * ॥ **विश्वनाथी**—तदेवं तासु श्रुतिषु तत्र समन्वितासु ताभिः स्पष्टमप्रस्तुताः काश्चिदन्याः श्रुतयोऽपि स्वेषां तदनुगतिमेव दर्शयन्ति । तत्र च प्रथमं क्रमसोपानतया पञ्चात्मवर्णनमयं पूर्वोक्तश्रुतिसाम्याल्लब्धावसराः क्रममुक्तिवर्त्मदर्शकयोगोपदेष्टृश्रुतयः स्तुवन्ति—उदरमिति । उदरं तत्स्थितवैश्वानरान्तर्यामिणमन्नरसादिप्रवर्तनया क्रियाशक्तिदायकम् "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ " इति श्रीगीतोपनिषद्वचः । हृदयं तत्स्थितजीवान्तर्यामिणं बुद्ध्यादिप्रवर्तनया ज्ञानशक्तिदायकं "महान्प्रभुर्वै पुरुषः सत्त्वस्यैव प्रवर्तकः । अंगुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदि सन्निविष्टः " इति श्रुतेः । क्रमस्तु द्वितीयस्कंधोक्तो ज्ञेयः । एवं व्यष्टिमारभ्य व्याख्यातम् । समष्टिमारभ्य त्वेवं ज्ञेयम् । उदरं नभस्तलं वैराजस्य नाभिविशिष्टोदरं 'नभस्तलं नाभिसरो गृणन्ति' इति द्वितीयोक्तेः । हृदयं स्वर्गरूपं वैराजस्य ' उरःस्थलं ज्योतिरनीकमस्य' इति तत्रैवोक्तेः । किंभूतं पारिसरपद्धार्तिं त्वन्निकटप्रापकमित्यर्थः । दहरं दुर्गमम् । ततस्तस्मादुपा सनद्वयात्तव धाम सुषुम्नाख्यं कर्तृभूतं 'सुषुम्नया ब्रह्मपथेन शोचिषा' इति द्वितीयोक्तेराधिदैविकी च सुषुम्ना ज्योतिर्मयी वर्तते शिरः परमं कर्मभूतमुदसर्पत् । शिरो ब्रह्मलोकः 'सत्यं च शीर्षाणि सहस्रशीर्ष्णः ' इति तत्रैवोक्तेः । ततोऽपि परमं श्रेष्ठं वैकुण्ठपुरं प्रविशतीत्यर्थः । तया सुषुम्नयोपासका वैकुण्ठं व्रजन्तीत्यर्थः । यद्वा—वैकुण्ठपुरं समेत्य "नावर्तन्त उपासकाः" इति श्रुतयस्तु दार्शिता एव ( ९ ) ॥ १८ ॥

**नीलकंठी**—सदसतः परं यद्दतं तदसीत्युक्त्वा तत्प्राप्त्युपायमाह—उदरमुपासते य इति । अत्र यथा—भूमौ बीजांकुरद्रुमाः द्रुमे च फलशलाटवस्तथा शुद्धचैतन्ये ईशसूत्रविराजः विराजि च कृष्णादयोऽस्मदादयश्च । यथा—फलान्तर्गते बीजे द्रुमप्रसवसामर्थ्यमस्ति न शलाट्वन्तर्गते; एवं कृष्णादिषु जगत्सृष्टिसामर्थ्यमस्ति नास्मदादिषु । यथा—बीजादयो भूमात्राः सन्तः विशिष्टशक्तियोगाद्भुवाऽऽपूरिता अंकुरादिभावं प्रतिपद्यन्ते एवमीशा दयोऽपि चिन्मात्रा एव सन्तो मायाशक्तियोगाच्चिदाऽऽपूरिताः सूत्रादिभावम् । तत्रास्मदादीनां कृष्णादिभावः कीटभृंगन्यायेन भावनाजन्यः विराडादिभावस्तु लवणोदकन्यायेन मनःप्रणिधानप्राप्यः उपादानोपादेयभावस्याभाव सद्भावाभ्यां तथावगमात् । यथा हि—घटोदरगता दीपप्रभा तन्मात्रं व्याप्नोति घटच्छिद्रद्वारा बहिर्गता सती भवनोदरगतं विषयं सर्वात्मना घटाद्बहिर्गता सती कृत्स्नं भवनोदरं व्याप्नोति प्रबलाभिः सौरीभिर्भाभिरभि हता दीपकलिकामात्रीभवति कलिकोपरमेऽनुपाख्यं भावमेति एवं चित्प्रतिबिम्बगर्भमन्तःकरणसत्त्वं देहेनावच्छिन्नं तन्मात्रं प्रकाशयति । यदा इन्द्रियद्वारा वृत्तिरूपेण बहिर्गतं सत् घटादि सदाचार्यप्रसादलब्धयुक्त्या देहात्समुत्थितं सत्कृत्स्नब्रह्माण्डाकारं भवति, तदा सर्वात्म्यात्सार्वज्ञं सर्वकामावाप्तिश्च योगिनो भवति, पुनश्च ब्रह्माकारचरमान्तःकरणवृत्तिरूपया विद्ययोपसंहृतं सद्बीजमात्रं भवति । दग्धेंधनानलवद्वृत्त्युपशमे तु केवलाधि ष्ठानप्रकाशादनुपाख्यं भावमेति । सोऽयं प्रत्यक्प्रवणचित्तानामात्मप्राप्त्युपायोऽनेन श्लोकेन विधीयते, अन्येषां तु प्रत्यक्प्रावण्यसंपादनाय कृष्णमूर्तिध्यानं तत्राशक्तानां कृष्णे स्वधर्मार्पणं तत्राप्यशक्तानां कृष्णगुणगानञ्च क्रमादुत्तरैस्त्रिभिर्विधास्यते । तत्र तावदुदरं ब्रह्मेति शार्कराक्षा उपासते, हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता इत ऊर्ध्वत्वे चोदसर्पत्तच्छिरोऽश्रयत इति श्रुत्युक्तमाह तत्र शर्कराभिर्निर्वृत्तं शार्करं ब्रह्माण्डम् अदंहथाः शर्करा भिस्त्रिविष्टपीति मंत्रलिंगात्, अत्रापि छान्दसो द्वितीयालोपः । तत्राक्षिदृष्टिर्येषां ते शार्कराक्षाः अस्य प्रतिपदं कूर्पदृशः ऋषिवर्त्मसु आर्षोपासनामार्गेषु ये कूर्पदृशः समष्टिकार्योपासकास्ते उदरमल्पमुपासते कारणापरि ज्ञानात् उदरशब्दस्याल्पवाचित्वम् उदरमंतरं कुरुत इत्यत्र दृष्टम् । आरुणयः अरुणवदकृत्स्नप्रकाशस्य मुनेः पुत्रास्ततोऽपि सूक्ष्मदृश इत्यर्थः, ते दहरं सूक्ष्मं हृदयं हृदयायतने ब्रह्मोपासत इत्यनुषंगः । "अथ यदिदम

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्स्यऽनलवत्स्वकृतानुकृतिः ॥
अथ वितथास्वऽमूष्वऽवितथं तव धाम समं विरजधियोऽन्वयंत्यभिविपण्यव एकरसम् ॥ ६ ॥ १९ ॥

नन्वीश्वरस्यापि तर्हि जीववदुदरादिसंबंधे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमितीमामाशंकां परिहरंत्यः''एको देवःसर्वभूतेषु गूढःसर्वव्यापी सर्वभूतांतरात्मा ।

स्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्'' इत्युपक्रम्य '' तस्यैतदेव निरुक्तं हृदयम् '' इति श्रुतेः । दहरं विशिनष्टि—परिसरपद्धतिमिति । परितः सर्वतः सरणं गमनं कामचारः सर्वकामावाप्तिः पद्धतिर्मोक्षमार्गस्तयोः प्रापकत्वात्परिसरपद्धतिर्दहरस्तम् । ''तेषां सर्वेषु लोकेषु कामचारो भवति'' ''शतञ्चैका च हृदयस्य नाडयस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति'' इति दहरोपास्तिफलश्रुतेः । ननु 'अग्निर्ज्योतिरहः शुक्लः ' इति भगवद्गीतासु योगिनाममृतस्य कालविशेषाधीनत्वोक्तेः पाक्षिकमस्य पद्धतित्वमिति चेन्न अहरादिशब्देनातिवाहिकतत्तत्कालाभिमानिदेवतापरत्वेन कालवाचित्वाभावात् । तत्तल्लोकप्रापकनाडीरश्मिसंबंधस्य नित्यत्वेन कालस्याकिञ्चित्करत्वात् । अन्यथा :'' कर्मणा पितृलोको विद्यया देवलोकः '' इति श्रुतेर्मरणकालभेदेन फलभेदेऽसत्यप्रामाण्यं प्रसज्येत, तस्मान्नित्यमेव दहरस्य पद्धतित्वम् । तत इति ल्यब्लोपे पञ्चमी । उदरहृदये सोपाधिके ब्रह्मणी प्राप्येत्यर्थः । '' तयोर्ब्रह्मा हैव ता '' इति श्रुतेर्ब्रह्मावाप्तिद्वारत्वावगमात् । हे अनंत त्रिविधपरिच्छेदशून्य । तव धाम स्वरूपप्रकाशः । राहोः शिर इतिवदभेदेऽपि भेदोपचारः । उदगात् उद्गतवत् निरुपाधिकस्य सोपाधिकादधिकत्वादित्यर्थः । अत्र तैत्तिरीयके '' सर्वं वैते माप्नुवन्ति'' '' सर्वमेव ते आयुर्यन्ति'' '' न बिभेति कदाचन '' इति '' सर्वान्कामान्समश्नुते '' इति '' न बिभेति कुतश्चन '' इति क्रमेणान्नमयप्राणमयमनोमयविज्ञानमयानंदमयाख्यानां पञ्चानां कोशानां पृथगुपास्तिफलान्युक्तानि । माण्डूक्ये तु—'' जागरितस्थानो वैश्वानरोकारः स्वप्नस्थानस्तैजस उकारः सुषुप्तिस्थानः प्राज्ञो मकारः '' इत्यादिना त्रयाणां पादानामयमेव संन्यासिनामनुष्ठानक्रमश्चतुष्पदो ब्रह्मणः पूर्वपूर्वपादस्योत्तरोत्तरमास्मिन्प्रविलापनरूपः सर्वत्र दृश्यते । तत्र तैत्तिरीयोक्तमध्यमकोशत्रयात्मा माण्डूक्योक्तस्तैजसः । अत्र तु कार्यत्वसामान्याद्विराट्सूत्रयोरैक्यविवक्षया कार्यकारणोपास्तिद्वयमेवोक्तम् । अन्यत्र तु सोपाधिकत्वसामान्यादीशसूत्रविराजामैक्यं विवक्षित्वा तस्यैव पुनर्जीवत्वमीश्वरत्वञ्चोक्तं विवक्षाभेदेन । यथोक्तम्— '' सोपाधिकविवक्षायां जीव एव विराड्भवेत् ।: निरुपाधिविवक्षाय परमात्मैव नेतरः '' इति । '' हिरण्यगर्भंपश्यत जायमानम् '' '' हिरण्यगर्भः समवर्तताग्रे '' इति मंत्रलिंगात्तस्य कार्यत्वं कारणत्वञ्च संगच्छते । श्रुतिश्च— '' स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् '' इति । ऐतरेयके—देहाभिमानाद्युत्थितस्य विदुषः स्वर्गलोकाख्यसोपाधिकब्रह्मभावाप्तिद्वाराऽमृताख्यं निरुपाधिभावमाह— '' एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते '' इति । छांदोग्येऽप्येतदेवोक्तम्—'' अत्रोपसंपद्य स्वेन रूपेण परं ज्योतिरभिनिष्पद्यते '' इति । '' संबंधः स्वरूपं य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः '' इति । श्रुतगुणाष्टकयुक्तं परं ज्योतिर्निष्कलं ब्रह्म सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते । '' सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिकः ॥ '' इत्यादिना वार्तिकसारेऽपि स्पष्टीकृतम् । कीदृशं धाम शिरः परमं शीर्यते नश्यतीति शिर उपाधिः ततः परममनुपाधीत्यर्थः । शिरसि वेदान्ते तात्पर्येण प्रतिपाद्यं वा इहास्मिन्नेव देहे यद्धाम समेत्य प्राप्य कृतान्तमुखे मृत्युमुखरूपसंसारे पुनः न पतन्ति कर्तृत्वादिमदन्तःकरणस्य विविक्तत्वेनात्मनि त्रैकालिककर्तृत्वबाधात्।''तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानःप्रदूयन्ते तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते''इति भूतभव्यकर्मणोर्दाहाश्लेषश्रुतेः।प्रारब्धस्य च भोगेनोपक्षयान्न संसारे पतन्ति हेत्वभावादित्यर्थः।प्राञ्चस्तु—उदरहृदयशिरःशब्दैस्तत्स्थानि मणिपूरानाहतसहस्राराणि ब्रह्मोपास्तिस्थानानि लक्ष्यन्त इत्याहुः (९) ॥१८॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—अत्राशंकते—नन्विति । तदनुप्रविष्टस्योदरादिष्वनुप्रविष्टस्य देहानां योनिभेदात्तारतम्ये न्यूनाधिकभावे सति परिहरन्त्यः श्रुतयः स्तुवन्तीत्याह—तथाहि । एको देव इति । एक

कर्माध्यक्षःसर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इत्याद्याःश्रुतयःस्तुवंतीत्याह।स्वकृतविचित्रयोनिष्विति।स्वयं कृतासूच्चनीचमध्यमासु योनिष्वभिव्यक्तिस्थानेषु कार्येषु देहादिषु हेतुतयोपादानतया प्रागेव विद्यमानत्वेन मुख्यप्रवेशासंभवाद्विशन्निव वर्तमानस्तरतमतो न्यूनाधिकभावेन चकास्सि अवभाससे।स्वकृता योनीरनुकरोतीति स्वकृतानुकृतिरनलवत्।अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण तथा तथा प्रकाशते तद्वत्। अथातो वितथासु मिथ्याभूतास्वमूषु योनिष्ववितथं सत्यं यतः सममविशेषमतः सत्यं तव धाम स्वरूपं विरजधियो निर्मलमतयोऽन्वयंति जानंति। नु इति पृथक्पदं वा। अत्र हेतुः। अभिविपण्यव इति। अभितो विगतव्यवहाराः। पण व्यवहार इत्यस्य रूपं पण्युरिति। ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः। अविशेषत्वादेवैकरसं सन्मात्रमतस्तवोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमिति भावः ॥ स्वनिर्मितेषु कार्येषु तारतम्यविवर्जितम् ॥ सर्वानुस्यूतसन्मात्रं भगवंतं भजामहे ॥ ६ ॥ १९ ॥

इति मूर्तिभेदाभावमाह। देव इति ज्ञानघनत्वेनाजड इत्याह। सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु। तर्हि किमिति न प्रतीयते गूढोऽनादिमायया छन्नः। तत्तद्भूतावच्छिन्नत्वेन परिच्छिन्नत्वाभावमाह—सर्वव्यापीति। नभोवत्ताटस्थ्यं वारयति—सर्वभूतान्तरात्मेति। सर्वभूतेष्वन्तस्त्वेऽपि तत्तत्क्रियाकर्तृत्वाभावमाह—कर्माध्यक्षः सर्वकर्मसाक्ष्येव न तु कर्तेति। सर्वभूतेष्वित्यादिना भूतानां पृथगुक्तेः। सद्वितीयत्वमाशंक्याह— सर्वभूतानामधिष्ठानं न च कल्पितमधिष्ठानादर्थान्तरमित्यर्थः। न केवलं कर्मणामेवाध्यक्षोऽपि तु तत्कर्तॄणामपीत्याह—साक्षीति। साक्षित्वे हेतुः—चेता इति। चित्स्वभाव इत्यर्थः। केवलो दृश्यवर्जितोऽद्वितीयो निर्गुणो ज्ञानादिगुणवर्जित इति तद्वत्त्वमपि स्थूलसूक्ष्मशरीरेषु तथातथा भासीत्यर्थः। अन्वयन्तीति अनुपूर्वादयतेः परस्मैपदाविधानादार्षत्वाश्रयेण तन्निष्पत्तिर्भवेत्तच्चागातिकगतिरूपमित्याह—नु इति पृथक्पदं यन्तीति 'इण्—गतौ' लटो रूपम्। नु निश्चयेन जानन्ति। अत्र ज्ञाने। इत्यर्थ इति। कर्मफलेप्सूनां ज्ञानं दुर्लभमिति भावः। अविशेषत्वाद्विशेषाभाववत्त्वादेव। अत एकरसत्वात्। इति भाव इति—अप्रच्युतैश्वर्यः प्रच्युतैश्वर्येणोपास्यत एवेति तात्पर्यम्। स्वामिश्लोकः—कार्येषु देहेषु तारतम्यं न्यूनाधिकभावः ॥ * ॥ **श्रीधरानुयायिनी**— ईश्वरस्यापि जीववद्देहादौ प्रवेशेऽनुपास्यत्वमाशंक्याहुः—स्वकृतेति। स्वतोऽसंगस्य निर्विकारस्यापीश्वरस्य स्वमायारचितेषूत्तममध्यमाधमदेहेषु ब्रह्मादिस्थावरान्तेषु कुण्डलादौ सुवर्णस्येवाग्र एवोपादानतया स्थितस्य पुनः "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेस्तत्तद्देहप्रवेशो न्यूनाधिकभावेन तत्तद्देहानुकारिता च प्रतीयमानापि स्वतस्तारतम्यरहितस्य वह्नेः काष्ठानुसारेणेव मिथ्यैव अतस्त्यक्तसर्वविश्वविश्वव्यवहारास्तत्त्वविदो मिथ्याभूततत्तद्देहेष्वविशेषं सत्यं सन्मात्रमेव तव स्वरूपं जानन्ति। तथा चोपाधिकृततारतम्यरहितत्वात्तवोपासना योग्यैवेत्याशयः ॥ * ॥ **विश्वनाथी**— ननु—परमात्मनः प्रतिदेहगतत्वेन बहुत्वाद्देहतारतम्येन तारतम्याच्च जीवसाम्ये सति कथमुपास्यत्वमत आहुः—स्वकृतासु स्वेनैवाचिन्त्यशक्त्या निष्पादितासु ब्रह्मादिस्थावरान्तासु योनिषु स्वाभिव्यक्तिभूमिषु हेतुतया प्रयोजकतयांतर्यामितया "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादिश्रुतेः। इवेन मुख्यप्रवेशासंभवो दर्शितः। तरतमतस्तारतम्येन चकास्सि स्वशक्तिं तत्रतत्र प्रकाशयसि। तत्र हेतुः—स्वकृतासु देवादियोनिषु अनुकृतिस्तदनुकरणशक्तिप्रकाशो यस्य सः। यावत्कार्यमुपादत्से तावतीमेव तत्र शक्तिं प्रकाशयसीत्यर्थः। अनलवत् अनलो यथा यावत्स्फुलिंगादिकमुपादत्ते तावतीमेव तत्र शक्तिं प्रकाशयति तद्वत्स्वतस्तु तत्राप्यनंतशक्तितास्त्येवेति भावः। विकारावर्त्ति च तथाहि दर्शयतीति न्यायात्। श्रुतयस्तु दर्शिता एव (६) ॥ १९ ॥

**नीलकंठी**—उक्ता संगतिः । स्वकृतविचित्रयोनिष्विति । संकल्पमात्रेण कृता विचित्रा मत्स्यकूर्मादियोनयोऽभिव्यक्तिस्थानानि । योनिशब्दस्य स्थानवाचित्वं "योनिष्ट इन्द्र निषदे अकारि" इति मंत्रे दृष्टम् । तासु योनिषु विशन्निव घटाकाशवद्व्यापकत्वेन मुख्यप्रवेशायोगात् हेतुतया "परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥ " इति स्वोक्तहेतोरित्यर्थः । "ऐतदात्म्यमिदं सर्वम् " इतिवत् स्वार्थे भावप्रत्ययः । हेतुतया योनिकल्पनाधिष्ठानतया वा तासु योनिषु प्रविष्टश्च त्वं तरतमतश्चकास्सि तारतम्येन दीप्यसे कथम्, अनलवत् यथाऽनलोऽग्निरल्पे उपाधौ अल्पप्रकाशो महति महाप्रकाशस्तद्वत् । अत्र हेतुमाह-स्वकृतानुकृतिः । स्वेन कृता या मर्यादा तामनुकरोतीति स तथा । तथाहि—दाशरथेर्भार्यावियोगजं दुःखं भृगुशापनिमित्तं, बाणासुरसंग्रामे शंकरस्य कृष्णात्पराजय इति परमेश्वरस्यापि स्वकृतमर्यादापरिपालनं दृश्यते । नन्वैश्वर्यतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वाद्घटादितारतम्यवत् इत्यनुमानात् "य एष सर्वोत्तमः स एवोपास्यः" इत्याशंक्य अथ वितथास्विति । अथेत्युपास्त्यंतरारंभार्थः । अमूषु योनिषु वितथासु मिथ्याभूतासु प्रविष्टम् अवितथं सत्यं तव धाम स्वरूपप्रकाशः समं तुल्यमुपादानत्वात् । तथाहि योनीनां वितथत्वं गम्यते । शिवविष्णुब्रह्मणां मिथः पितृपुत्रादिभावस्मृतिभ्यः श्रुतिष्वपि "विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभियाति तृतीयम्" इति । "विष्णोः सोमतत्त्वज्ञानादर्चिरादिमार्गेणोपासकप्राप्यब्राह्मलौकिकैश्वर्याद्धूमादिमार्गेण कर्मिप्राप्यचंद्रलोकैश्वर्याच्चान्यस्य तृतीयस्य योगैश्वर्यस्यागस्त्यादेरिव प्राप्तिः "न ते विष्णो जायमानो न जातो देवमहिम्नः परं मतमा उ" इति । विष्णोरनंतमहिमत्वञ्च श्रूयते न चैतयोः श्रुत्योर्भूतार्थत्वं सर्वोत्तमदयायोगात्, नाप्यन्यतरश्रैष्ठ्यनिश्चायकत्वं तुल्यबलत्वात्, नापीशे विकल्पार्थत्वं वस्तुनि तदयोगात्, तस्मादुदितानुदितहोमवद्योनीनां निन्दास्तुतिभ्यां हानमुपादानं वा न विवक्षितं किंतु विधित्सितस्तुतिमात्रम् , अन्यथा हाने विधिद्वयवैयर्थ्यम् उपादाने त्वन्यतरवैयर्थ्यम् एकेनैव तत्त्वसाक्षात्कारोपयोगिचित्तैकाग्र्यासिद्धेः । तथा च—पारमर्षं सूत्रम् 'विकल्पो विशिष्टफलत्वात्'इति । उपास्तीनां विकल्पस्तुल्यफलत्वादिति सूत्रार्थः । तस्मान्नटवत्सौभर्यादिवच्च पर्यायेण युगपद्वा रामकृष्णहरिहरमैरालादिमूर्तीरधितिष्ठन्नेक एव शिवविष्ण्वादिशब्दैः प्रतिपाद्यते "सर्वशास्त्रपुराणेषु यो देवानां नामधा एक एव" इति श्रुतेः, परविद्याधिकारेषु शिवविष्ण्वोर्विष्णुशिवयोर्वा निंदास्तुती क्रमात्सगुणनिर्गुणब्रह्मापेक्षे । तत्र निंद्यभजनान्नरकं व्रजन्तीत्यपि कार्यब्रह्मलोकं व्रजन्तीत्येव । परं शास्त्रीयस्य भजनस्य रागतः प्राप्तब्रह्मवधादिवन्नरकहेतुत्वासंभवात् । शौनकीयप्रणवपटलव्याख्याने हेमाद्रिरप्येवमेव व्याचख्यौ नरकं ब्रह्मलोकमिति । तस्माद्भगवन्मूर्तिषूत्कर्षापकर्षचिन्ता पाखण्डापसदयोग्या स्वामिद्रोहहेतुः, अत एव तासु भेददृष्टिर्निंद्यते । स्कांदे—"ब्रह्माणं केशवं रुद्रं भेदभावेन मोहिताः। पश्यन्त्येकं न जानन्ति पाखण्डोपहता जनाः ॥" इति । योनीनां प्रतिपाद्यत्वे तु कृत्स्नं शास्त्रं परस्परविरोधादप्रमाणं स्यादतो युक्तमुक्तं वितथास्वमूष्विति । यद्वा—अथेति हेतौ । यतः स्वकृतानुकृतिःस्वकर्मार्जितदेहप्रतिकृतिः अनल इव दुष्पूरत्वात् । जाठरानलसंबंधादनस्य प्राणस्य लानादादानाद्वाऽनलो जीवदेहः लुप्तोपमा, पक्षे अनलवान्यो जीवदेहः तद्वद्भोगदा भवंति अतो वितथास्विति योज्यम् । अयं भावः—यथा चैत्रः स्वकर्मार्जिते देहे कौलिकप्रसिद्ध्या शत्रुनिर्मितायां वा देहप्रतिकृतौ कंटकेन तुद्यमानायां व्यथते एवमीश्वरोऽपि स्वमायाकल्पिते जीवाविद्याकल्पिते वा कृष्णादिविग्रहे द्रुग्धे पूजिते वा द्रुग्धः पूजितश्च भवति । यथा—चैत्रस्य देहप्रतिकृत्येव देहेनापि संबंधो मिथ्या तादृशेनापि भोगनिर्वाहे तत्सत्यकल्पनाया अयोगात् "असंगो ह्ययं पुरुषः" इत्यादिश्रुत्या बाधाच्च ततश्च सर्वास्ववस्थास्वनुवर्तमाने प्रत्यगात्मनि कदाचिदभेदेन पर्यायेण च प्रतीयमानं देहत्रयं मिथ्या शुक्ताविव रंगरजतादिकं "नेह नानास्ति किञ्चन " इति श्रुत्या बाधितत्वाच्च । एवमीश्वरेऽपि विग्रहादिर्मिथ्येति । तदेवं वितथासु हरिहरादिषु मूर्तिषु यत्समं कारणम् एकरसं शुद्धं तव धाम तद्विरजधियो वीतरागमतयोऽन्वयंति मूर्त्युपास्तिमनुप्रःभुवन्ति के अभिविपण्यवः सर्वतो विगतव्यवहाराः एकान्ते ध्यातार इत्यर्थः । एतेनैकादशोक्तोऽर्थो दर्शितः यथा—"तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् । नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम् ॥ तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् । तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥" इति । एकत्रांगे अन्यान्यंगानि न चिन्तयेत् । एकत्रेति यदुक्तं तदेवांगं दर्शयति—सुस्मितमिति । व्योम्नि सर्वकारणरूपे तच्च कारणत्वमपि त्यक्त्वा मयि शुद्ध ब्रह्मण्यारूढः सन्न किंचित् ध्यातृध्येयविभागमपि न चिन्तयेदिति श्रीधराचार्यव्याख्या ( ६ ) ॥ १९ ॥

स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणं तव पुरुषं वदंत्यखिलशक्तिधृतोंशकृतम् ॥
इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेंऽघ्रिमभवं भुवि विश्वसिताः ॥ ७ ॥ २० ॥

अपि च कुतो न्वियमाशंका स्याद्भगवतो देहाद्युपाधिकृतदोषप्रसंग इति यतोऽविद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्भावं लक्षणया बोधयंत्यस्तं दोषं निषेधयंति "स यश्चायं पुरुषे ॥ यश्चासावादित्ये ॥ स एकः ॥ तत्त्वमसि" इत्याद्याः श्रुतयः । ननु क्रत्वर्थस्यात्मनः स्तुतिरियमीश्वरत्वेन क्रियते न तु तस्येश्वरत्वं बोध्यते । नैतद्युज्यते यतस्तत्र "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इत्याद्याः श्रुतयः कृतावतारस्य भगवतश्चरणभजनमुपायं वदंतीत्याह । स्वकृतपुरेष्विति । स्वकर्मोपार्जितेषु पुरेषु देहेष्वमीषु नरादिषु भोक्तृत्वेन वर्तमानं पुरुषमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तवांशकृतं वदंति । अंश इवांशः कृत इव कृतः । त्वद्रूपं वदंतीत्यर्थः । ननु कार्यकारणसंवृतस्य कुत एवंभूतत्वं तत्राह । अबहिरंतरसंवरणमिति । बहिः कार्यमंतरं कारणं तत्संवरणं तदावरणम् । वस्तुतस्तदावरणशून्यम् । तयोरसत्त्वादित्यर्थः । इत्येवं नृगतिं नुर्जीवस्य गतिं तत्त्वं विविच्य विशोध्य कवयोऽन्यथेदं न प्राप्यत इति जानंतो निगमावपनं निगमोक्तकर्मणामावपनमासमंताद्युप्यतेऽस्मि

भावार्थदीपिकाप्रकाशः वंशीधरी—अत्र पूर्वोक्तार्थासंभवमाह—अपि चेति । यतो हेतोरविद्याकामकर्मभिः देहादावात्मबुद्धिरविद्या तद्वशेन विषयेच्छा कामस्तन्निष्पत्तये कर्माणि क्रियन्त इति तेन च संसार इति संसरतो जीवस्य लक्षणया भागत्यागरूपया भगवद्भावमीश्वरतां बोधयन्त्यः श्रुतयस्तद्दोषं देहाद्युपाधिकृतसंगदोषं निषेधयन्ति ततो हेतोर्भगवतोर्भगवतोऽप्रच्युतज्ञानैश्वर्यस्येयमाशंका देहाद्युपाधिकृततारतम्यादिरूपा शंका नु वितर्के कुतः स्यात्कथं संभवेन्न कथमपीति भावः । श्रुतीराह—"स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः" ":अरे अयमात्माऽनंतरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति "तत्त्वमसि" इत्याद्या इहादिनाऽयमात्मा ब्रह्मेत्यादिग्रहः । अर्थः—परमे व्योम्नि आकाशाद्यन्नमयान्तं कार्यं सृष्ट्वा तदेवानुप्रविष्टो यः स एवायं पुरुषः । अयं कः यश्चासावादित्ये वर्तते । स एक एव भवति । अयमात्माऽनंतरः अंतरशून्यः अबाह्यो बाह्यशून्यः कृत्स्नः पूर्णः ज्ञानघनो ज्ञानस्वरूप इति । तत्त्वमसीति व्याख्यातचरम् । पुनराक्षिपत्यत्र—नन्विति । क्रतुर्यज्ञोऽर्थः प्रयोजनं यस्य स तथा यज्ञकर्तेत्यर्थः । आत्मनः पुरुषस्य तत्त्वमसीत्यादि वाक्यैः स्तुतिरियं न तु तस्य यज्ञकर्तुः । परिहरति—नैतदिति । एतद्यज्ञकर्तुः स्तवनं न युज्यते युक्तं यतो हेतोः भगवद्भक्तियुक्तस्यैव कथितार्थाः श्रुतितात्पर्यविषयीभूतार्था अतस्तत्रात्मज्ञाने यस्येत्याद्याः कृतावतारस्य रामकृष्णादिविग्रहस्य चरणभजनमुपायं तत्प्राप्तिकारणं वदन्तीति योज्यम् । श्रुतीराह—"यस्य देवे" इति । श्वेताश्वतरेण कथिता अर्थाः पदार्थास्तस्यैव महात्मनः प्रकाशन्ते यथावत्स्फुरन्ति नान्यस्येत्यर्थः । कस्येत्याकांक्षायामाह—यस्य पुरुषस्य देवे परमेश्वरे परा फलाभिसंधानशून्या भक्तिरनुरागो भवति, यथा देवे तथैव चेद्गुरौ सदर्थोपदेष्टरि भक्तिर्भवेत्तस्येत्यर्थः । तस्मादेवं ब्रह्मविद्यार्थिभिर्देवतागुरुविषया निरुपाधिर्भक्तिः कार्येति दर्शितम् । इत्यर्थ इति—"निष्फलं निष्क्रियं शान्तम्" इत्यादिश्रुत्या निरंशत्वबोधनादिति भावः । अत्राशंकते—नन्विति । कार्यं देहादि कारणमज्ञानं ताभ्यां संवृतस्याच्छन्नस्य । एवंभूतत्वं भगवद्रूपत्वम् । इत्यर्थ इति—न ह्यसद्भ्यां कार्यकारणाभ्यां स्वाभाविकी सद्रूपताऽपाकर्तुं शक्येति भावः । तत्त्वं स्वरूपम् । अन्यथा भक्तिं विना इदं ज्ञानं नाप्यते "श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते"

**न्नित्यावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यत्रार्पितानि कर्माणि मुक्तिफलं फलंति तं भवतोंघ्रिमभवं भवनिवर्तकं विश्वसिताः कृतविश्वासा उपासतेऽर्चनवंदनादिभिः सेवंते । भुवीति मर्त्यलोके इदमेवोचितमिति दर्शयंति ॥ त्वदंशस्य ममेशान त्वन्मायाकृतबंधनम् ॥ त्वदंघ्रिसेवामादिश्य परानंद निवर्तय ॥ ७ ॥ २० ॥**

इत्याद्युक्तेः । इत्यर्थ इति—सुक्षेत्रार्पितं बीजं शुभफलाय भवतीति भावः । अंशकृतामिति । गोपालतापनीय—"ब्रह्मणोंशभूतस्तथेतरो भोक्ता" इति । नारदपञ्चरात्रे—प्राधानिकसर्गमुक्त्वा शुद्धसर्गकथने "यत्तटस्थं तु चिद्रूपं स्वसंवेद्याद्विनिर्गतम् । रञ्जितं गुणरागेण स जीव इति कथ्यते ॥" इति । श्रीगीतासु च—"ममैवांशो जीवलोके जीवभूतः सनातनः" इति । अंघ्र्युपासनमाह श्रुतिः—"चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन शुद्धेन पवित्रेण पूतेनातिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिष्मद्भ्राजमानं महस्वदमृतस्य धारा बहुधा दोहमानं चरणं लोके सुधितां ददातु" इति । अर्थः—श्रीकृष्णस्य कृतत्रिविक्रमरूपस्य चरणं याचमाना आहुः—येन पातक्यपि पूतः पवित्रः सन्दुष्कृतानि पापानि तरति तच्चरणं पवित्रकरं विततं विस्तीर्णं भूर्भुवःस्वरतिक्रम्य वर्तमानं पुराणं सनातनं तेन चरणेनारातिं वैरिणं पाप्मानं वयमतिशयेन तरेम, किंभूतेन शुद्धेन स्वयंभूदत्तार्घजलधौतेन । पुनश्च पवित्रेण पवित्रकारकेण पूतेन निर्मलेन । तच्चरणं लोके सुधितां सुधाधारां ददातु तारकादित्वादितच् । किंभूतम् लोकस्य वैकुण्ठस्यार्चिष्मद्दीपवत् द्वारं भ्राजमानं दंदीप्यमानं न केवलमेतावदपि तु महस्वत् महः ब्रह्मतेजोमंडलं तद्युक्तम् । अत एव लोके बहुधा बहुप्रकारा अमृतस्य धारा धर्मार्थकाममोक्षभक्तिरूपाः कामधेनुरिव भक्तेभ्यो दोहमानमत एवंभूतं चरणं भजामेत्यर्थः । भक्तिपरेयं श्रुतिः । स्वामिनां त्वदंशस्येति सुगमम् ॥ * ॥ **श्रीधरानुयायिनी**—एवं परमात्मानमुपास्यंनिरूप्य जीवात्मानं तदंशतुल्यत्वेन निरूपयन्कैमुत्यन्यायेन प्रागुक्तमेव द्रढयन्ति—स्वकृतेति । यतः स्वप्रारब्धोपार्जितेषु मनुष्यादिदेहेषु भोक्तृत्वेन वर्तमानमपि जीवं 'जातावेकत्वम्' सर्वशक्तेस्तव स्वरूपम्—"ममैवांशो जीवलोके जीवभूतः सनातनः" इति श्रीगीतोक्तेर्वस्तुतो देहाद्यनावृतं च विवेकिनो वदन्ति भेदकोपाधेः शरीरादेर्मिथ्यात्वात् । अत एवं जीवतत्त्वं विवेकिनो विशोध्य यत्रार्पितानि वैदिकानि कर्माणि "मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि" इति भगवदुक्तेर्मोक्षदायकानि भवन्ति । तं गर्भवासादिदुःखहरं कल्पपादपं तव पादपद्मं भारतखण्डे "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादि भगवद्वाक्ये कृतविश्वासा भजन्ति । यद्वाऽखिलशक्तिधृतस्तवांशोऽयमतस्तत्कृतमभक्तदण्डनार्थं स्वरचितेषु पुरेषु रौरवादिनरकेषु पुरुषं देहादिलंपटं जीवमुद्दिश्याबहिरंतरसंवरणम् अबहिर्यथा स्यात्तथा चौरमुद्दिश्य कारागार इवांतरेव संवरणं बंधनं वदन्ति तथा नरकभोगानंतरममीषु ऐहिकेषु स्वप्रारब्धरचितेषु पशुपक्ष्यादिविचित्रशरीरेषु संवरणमित्येवं जीवगतिं विविच्य विचार्य कवयः शास्त्रतात्पर्यज्ञास्त्वत्कृपयैव बंधनान्मुक्तिरिति विश्वसिताः सन्तो भुवि भारतखण्डे निगमानां वेदोक्तकर्मणामावपनं क्षेत्रमत एवाभवं भवनिवर्तकं भवतोंऽघ्रिमुपासत इत्यर्थः॥*॥ **विश्वनाथी**—तदेवमन्तर्यामित्वांशेऽपि भगवतः शुद्धत्ववर्णनेन तत्पराणां श्रुतीनां वचनं श्रुत्वा स्वानुगृहीतानां जीवतत्त्वानुवादिनीनां श्रुतीनामपि तत्रैव तात्पर्यं काश्चिदन्याः श्रुतयो वर्णयन्ति—स्वकृतपुरेषु पूर्वोक्तेष्वेव वर्तमानं पुरुषं जीवसमूहं त्वत्तो भिन्नत्वेनाभिन्नत्वेन वा या वदन्ति तास्तवांशेनैव कृतं सिद्धं वदन्ति, तथाभिप्रायेणैव वर्णयन्ति नान्यथेत्यर्थः । ब्रह्मणोंशभूतस्तथेतरो भोक्ता भवतीति श्रीगोपालतापनीश्रुतेः । ननु—कथमपरिच्छेद्यस्यांशत्वं तथा "ममैवांशो जीवलोके जीवभूतः सनातनः" इति गीतोपनिषदुक्तम् । "द्वासुपर्णा सयुजा सखाया" इत्यादिश्रुत्युक्तश्च नित्यत्वं स्यात् । अत्राहुः—अखिलशक्तिधृत इति । "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥" इति विष्णुपुराणोक्त्यनुसारेण "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मेपराम् । जविभूतां महाबाहो ययेदं धार्यते जगत् ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥" इति श्रीभगवतः प्रकृतिद्वयतत्कार्यसाधकत्वसूचनया दार्शितस्वरूपशक्तिपर्यन्तश्रीगीतोपनिषदनुसारेण च या अखिलास्त्रिविधाः शक्तयः कार्यमात्रगम्याचिन्त्यप्रभावास्ता धरसि यस्त्वं तस्य तावत्तादृश्यः शक्तय एव तत्तद्दोषं विनैव तत्तद्दुर्घटं संपादयन्त्यो नित्यमेव वर्तन्त इति स्थिते तव तादृशशक्त्याद्यात्मकजीववृंदरूपांशो नित्यमेव वर्तत इत्यर्थः । ननु—तर्हि मत्स्यदेवादिवदैश्वर्यमेवास्य युज्यते तदभावे महदादिवन्मायिकत्वमेव वा तत्राहुः—अबहिरंतरसंवरणामिति । न विद्यते बहिर्मायिकत्वे अंतस्तवांतरंगस्वरूपत्वेऽसंवरणं व्याप्तिर्यस्य तथाभूतमित्यर्थः । श्रीविष्णुपुराणादावांतरालपाठान्मार्तण्डमण्डलच्छाययोरन्तरालवर्तिमयूखपरमाणुवृन्दमिवेति भावः । अतो मण्डलस्थानीयस्य भगवत एव स्वल्पशक्तिव्यक्तिमयाविर्भावविशेषत्वात्स्वांशत्वं

**दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥
न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः ॥ ८ ॥ २१ ॥**

**भक्तिरल्पसाधनमिति वचनमनुचितमिव मन्वानो भक्तिं गुरूकरोति । दुरवगमेति । भो ईश्वर दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय तवात्ततनो** श्रीमत्स्यदेवादीनां रश्मिस्थानीयत्वाद्विभिन्नांशत्वं जीवानामिति तत्त्ववादिनः । अत्र तदुदाहृतं महावाराहवचनञ्च "स्वांशश्चाथ विभिन्नांश इति द्वेधांश इष्यते । अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः ॥ तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् । विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्सामर्थ्यमात्रयुक् ॥" इति । अत इदमेवं व्याचक्षते न विद्यते बहिः क्रियाशक्तिरंतर्ज्ञानशक्तिर्वा असंवरणमसंक्षिप्तत्वसर्वव्यापकत्वं यस्य तमिति अतच्छायया सूर्यमण्डलमिव भगवत्स्वांशश्रीमत्स्यदेवादिर्मायया नाव्रियते रश्मिस्थानीयो विभिन्नांशो जीवस्त्वाव्रियते । यथोक्तं विष्णुपुराणे—शक्तित्रयकथनानंतरमेव "यया क्षेत्रज्ञशक्तिः सा तारतम्येन वर्तते" इति । यया पूर्वोक्ताविद्याकर्मसंज्ञया अविद्याकर्मवृत्तिर्यस्याः साऽविद्याकर्मा तन्नाम्नी मायेत्यर्थः । यथोक्तं नारदपञ्चरात्रे—प्राधानिकसर्गमुक्त्वा शुद्धसर्गकथने "यत्तटस्थं तु चिद्रूपं स्वसंवेद्याद्विनिर्गतम् । रञ्जितं गुणरागेण स जीव इति कथ्यते ॥" इति । अत एवांशकृतामिति । अंशश्चासौ कृतो मायोपाधितया संपादितश्चेति तमित्ययमेवार्थः । विवक्षितमेवाहुः—इतीति । पूर्वोक्तप्रकारान्तरेण जीवस्य गतिं त्वदंशत्वलक्षणं तत्त्वं विविच्य विश्वसिता जातविश्वासा ये कवयो विवेकिनस्ते भगवतोंऽशिस्वरूपस्यांघ्रिमुपासते, विनांशिभजनमंशस्य तुच्छतापत्तेः । नन्वन्येऽपि सन्ति केषाञ्चित्केऽप्यंशिनस्तेऽप्युपासन्ताम् तत्राहुः निगमाः सर्वे वेदाः आसमन्तादुप्यन्ते समान्विताः क्रियन्ते यस्मिंस्तादृशत्वात्सर्ववेदार्थत्वात्त्वमेव सर्वोत्तमभजनीयः सर्वोत्तमपुरुषार्थश्चेत्यर्थः । ननु—सावयवत्वेनान्यतुल्यत्वात्कथं तादृशत्वं तत्राहुः—निगमावपनत्वादेव न विद्यते भवो जन्म यस्य तं नित्यमित्यर्थः । न विद्यते भवो यस्मादिति विग्रहेऽपि कैमुत्येन तत्सिध्यति । भुवीति—पृथिव्यां तादृशसाधकप्राचुर्यविवक्षयोक्तम् । अत्र मुख्याः श्रुतयः "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्यावयवभूतैश्च व्याप्तं सर्वमिदं जगत् ॥ यो योनिमधितिष्ठत्येको यस्मिन्निदं सञ्चरीचार्ति सर्वम् । तमीशानं वरदं देवमीड्यं विचार्येमां शान्तिमत्यन्तमेति ॥" इत्याद्याः तदनुगताश्च "सर्वे वेदा यत्पदमामनन्ति" इत्याद्याः "चरणं पवित्रं विततं पुराणम्" इत्याद्याश्च ( ७ ) ॥ २० ॥

**नीलकण्ठी**—संगतिः पूर्वोक्ता । स्वकृतपुरेष्विति । स्वाज्ञानकल्पितेषु सुरनरतिर्यगादिशरीरेषु अमीषु दृश्यमानेषु प्रविष्टं पुरुषं पुरि शयं जीवमखिलशक्तिधृतस्तव "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः सर्वशक्तिमतस्तवांशकृतमविद्ययांशमिव कृतं घटाकाशवन्निरंशस्य वास्तवांशांशिभावायोगात् वदन्ति श्रुतयः स्मृतयश्च "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षीभूत्वा पुरः पुरुष आविशत्" इति । "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्याद्याः । अस्य जीवस्य पूर्वश्लोकोक्तैकरसब्रह्मभावस्योपपादनाय तात्त्विकं रूपमाह—अबहिरन्तरसंवरणम । न सन्ति बहिः अन्तरं संवरणञ्च यस्य तम् अस्य बहिर्नास्ति महत्तरत्वात्, नान्तरमणुतरत्वात्, संवृणोति व्याप्नोति संव्रियते व्याप्यते इति कर्तृकर्मव्युत्पत्तिभ्यां संवरणमुपादानमुपादेयञ्च तदुभयमस्य नास्तीत्यर्थः । तथा च श्रुतयः "अणोरणीयान्महतो महीयान्" "न तदश्नोति कश्चन" "न तदश्नोति कश्चन" इति शास्त्रानुभवाभ्यां नृणां जीवानां गतिं निःसंगित्वदुःखित्वरूपां विविच्य कवयः शास्त्रज्ञाः भवतो विष्णोरंघ्रिमुपासते । अंघ्रिं विशिंषन्नेवोपासनायाः स्वरूपं फलञ्चाह—निगमावपनम् । अभवं वेदोक्तकर्मणां समर्पणस्थानं "मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि" इति स्मृतेः । तत्त्वजिज्ञासुना भगवत्प्रीत्यर्थं कर्माणि कर्तव्यानीत्यर्थः । अभवं भवानिवर्तकं मूर्तिध्यानादिक्रमेण विश्वसिताः श्रद्धालवः 'श्रद्धावाँल्लभते ज्ञानम्' इति स्मृतेः, इदं मुख्यमधिकारिविशेषणम् । "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीर्महती विनष्टिः" इति श्रुतेर्मर्त्यलोक एव साधनानुष्ठानं घटते नान्यत्रेति दर्शयितुं भुवीत्युक्तम् ( ७ ) ॥ २० ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—"तमेतं वेदानुवचनेन यज्ञेन दानेन तपसानाशकेन"इत्यादिषु ज्ञानसाधनेषु भक्तेरनुक्तत्वात्साऽल्पेति वचनमनुचितमिति मत्वाह—भक्तिरित्यादिना । इत्यर्थ इति—व्याख्या । अन्यत्स्वर्गादि ।

राविष्कृतमूर्तेश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः चरितमेव महामृताब्धिस्तस्मिन्परिवर्तो विगाहस्तेन परिश्रमणाः । परिवर्जनार्थः । श्रमगं श्रमः । गतश्रमा इत्यर्थः । अपवर्ग मपि केचिन्न परिलषंति नेच्छंति कुतोऽन्यदिंद्रपदादि । केचिदित्येवंभूता भक्तिरसिका विरला इति दर्शयंति । न केवलमन्यन्नेच्छंति किंतु तेनैव सुखेन पूर्णाः संतः पूर्वसिद्धं गृहादिसुखमप्युपेक्षंत इत्याह । तव चरणसरोजहंसकुलसंगविसृष्टगृहा इति । तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं तेन संगस्तेन विसृष्टा गृहा यैस्ते तथा । अनेन श्रवणकीर्तने दर्शिते । श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति । यथाऽऽह " यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्च " इति । व्याख्यातं च सर्वज्ञैर्भाष्यकृद्भिः । " मुक्ता अपि लीलया विग्रहं कृत्वा भजंते" इति ॥ त्वत्कथामृतपाथोधौ विहरंतो महामुदः ॥ कर्वंति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥ ८ ॥ २१ ॥

तेनैव भक्तिसुखेन । श्रुत्यर्थस्तु—सर्वे देवा यं परमेश्वरं नमन्ति तथा मुमुक्षवो ब्रह्मवादिनश्च यं नमन्ति । अत्र देवाः पृथिव्यन्तरिक्षनाकब्रह्मलोकनिवासिनो ये भगवद्भक्तास्ते सर्वे देवाः संसारविजिगीषुत्वान्मोदशालित्वाच्च । तेषां मध्ये द्विविधा उपासकाः मुमुक्षवः संसारान्मुक्तिकामाः ब्रह्मवदनशीला ब्रह्मवादिनो मुक्ता एते सर्वे यं नमान्ति भजन्त इति व्याख्यातं सर्वज्ञैर्भाष्यकृद्भिर्भगवत्पूज्यपादैर्नृसिंहतापन्याम् । मुक्ता अपि श्रीशुका दयो लीलया विग्रहं धृत्वा भजन्ति " आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिम् " इत्याद्युक्तेः । स्वामिनां त्वदिति । तव कथैवामृतपाथोधिरमृतसमुद्रस्तत्र ॥ * ॥ **श्रीधरानुयायिनी**— सर्वसाधनेभ्यो भक्तेराधिक्यं वदन्ति— दुरवगमेति । भो ईश्वर केचित्त्वदीयानन्यभक्तसमूहसंगलब्धत्वत्कीर्तिश्रवणकीर्तनहेतुकसुखेन परिपूर्णा अत एव प्राक्सिद्धमपि गृहपुत्रस्त्र्यादिसुखं परित्यज्य ते दुर्ज्ञेयात्मतत्त्वज्ञाप नाय प्रकटीकृतश्रीमूर्तेस्तव चारित्रामृतसमुद्रावगाहनेन दूरीकृतसंसारश्रमसंतापास्त्वया दीयमानमपि मोक्षमपि नेच्छन्ति कुतोऽन्यदिन्द्रादिपदमिति । विरला एव ते । यद्वा—तव चारितान्येव महामृताब्धयस्तेषु ये परिवर्तास्तरंगभ्रमिपुञ्जास्तेषु निमज्जनोन्मज्जनोत्थं परिश्रमणमतिश्रमो येषां त इत्यर्थः । ननु—मोक्षमपि त्यक्त्वा पुनरीदृशपरिश्रमस्वीकारः किमर्थमिति चेच्छृणु— यथा विषयलंपटाः परमसुकुमाराः परिश्रमासहना अपि भोगसुखाद्युपयोगिनं युद्धव्यवहारादिपरिश्रममेव सर्वसुखाधिकं सुखं मन्यन्ते, तथा त्वद्भक्तास्त्वल्लीलाकथामाधुर्यपानोत्थं नर्तनकीर्तनादिपरिश्रममेव परमानंदसाधनत्वेन परमसुखं मन्यमाना ब्रह्मास्वादसुखं पशूनां तृणचर्वणसुखमिव मन्यन्तेऽत एवोक्तं भाष्यकारैः— मुक्ता अपि लीलया विग्रहं धृत्वा भगवन्तं भजन्ते, इति । त्वत्कथेत्याद्या श्रीधरकारिकाप्येतदभिप्रायिकैव ॥ * ॥ **तोषिणी**— तच्छ्रुत्वा लब्धनिजभावोद्दीप नाश्चरणोपनिषदाद्याः साक्षादेव तन्माधुरीं वर्णयन्ति—दुरवगमेति । हे ईश्वर सर्वोपरि विराजमानवैभव केचिद्विरलप्रचारा अपवर्गमपि परि सर्वतो भावेन एकांशेनापि न लषन्ति किमुतान्यत् । कथंभूतास्ते तत्राहुः— दुरवगमम् । सर्वागोचरपरमगोलोकादिवैकुण्ठविहारित्वेन दुर्बोधं यदात्मनस्तव तत्त्वं स्वरूपगुणलीलादियाथार्थ्यं तस्य निगमायानुभावनाय आत्ततनोः प्रपञ्चे समानीतनिजविग्रहस्य तव चरितरूपे महामृ ताब्धौ यदि महामृताब्धिः कश्चिद्भवति तदा साधारणजनबोधनाय तेन रूप्ये श्लेषात्स्वतस्त्वमृतानां सालोक्यादिमोक्षानंदानां तदन्तर्भावित्वात् त्वदीयमहासमुद्रतुल्ये यः परिवर्तो मुहुरवगाहाऽनुभवस्तेनानु षंगिकतयैव गतसंसारश्रमाय इत्यर्थः । ननु—बहवोऽपि तच्चरितं शृण्वन्ति तथापि न तादृशत्वमिति केषाञ्चित्तादृशत्वे किं कारणमित्याशंक्य परमरहस्यतया सर्वान्त एव तद्व्यञ्जयन्ति—चरणेति । हंसाः परम तत्त्वानुभाविनस्तेष्वपि चरणसंबंधिनः 'मुक्तानामपि सिद्धानाम्' इत्यादिशास्त्रे तच्चरणसंबंधेन लोकेऽपि सरोजसंबंधेन हंसानामुत्कर्षो वर्ण्यत इति परमोत्कृष्टा ये तन्माधुरीसमास्वादतिरस्कृतमोक्षानंदास्तेषां कुलं शिष्योपशिष्यादिरूपं तदेकस्यापि प्रसंगेन विसृष्टं त्यक्तमात्रं गृहं यैस्तेऽपि किमुत तत्र चिरं प्रवृत्ताः किमुततरां तादृशहंसानां शिष्यादयः किमुततमां स्वयमेव तादृशहंसा इत्यर्थः । अत्र मुख्याः श्रुतयः—

**त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ॥**
**न बत रमंत्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमंत्युरुभये कुशरीरभृतः ॥ ९ ॥ २२ ॥**

**" आराममस्य पश्यंति न तं पश्यति कश्चन ॥ न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव ॥ नीहारेण प्रावृता जल्प्याश्चासुतृप उक्थशासश्चरंति " इत्याद्याः**

" चरणं पवित्रं विततं पुराणं तेन पूतास्तरन्ति दुष्कृतानि । तेन शुद्धेन पवित्रेण पूतेनाऽतिपाप्मानमरातिं तरेम " " लोकस्य द्वारमर्चिष्मद्भ्राजमानं महस्वदमृतस्य धारा बहुधा दोहमानं चरणं लोके सुधितां दधातु ॐतत्सत् " इत्याद्याः, " अमृतस्य धारा बहुधा दोहमानम् " इति चरितमहामृताब्धिमत्त्वमुक्तम् भक्त्या चरणवर्णनं तदुपलक्षणत्वेन श्रीभगवन्तमेव बोधयन्तीति श्रुत्यैकार्थम् तदनुगताः श्रुतयस्तु "यं सर्वे देवा नमन्ति " इत्याद्याः । अत्र देवा विषयिणः ततश्च मुमुक्षव इत्यत उत्तरपाठाद्ब्रह्मवादिशब्देन क्रमोत्कृष्टदृष्ट्या तदुपदेष्टारो मुक्ता एव लभ्यन्ते ब्रह्माणि वदन्ति प्रकाशन्ते इति । अत्र मध्वाचार्यधृताः श्रुतयः— " मुक्ता ह्येनमुपासते मुक्तानामपि भक्तिर्हि परमानंदरूपिणी " इत्याद्याः । तथा च ब्रह्मसूत्रम्— 'मुक्तोपसृप्यव्यपदेशात्' इति ॥*॥ अत्र **विश्वनाथाः**—भगवद्विषयकभक्तियोगस्य सर्वोत्कर्षं स्वाभिधेयञ्च द्योतयितुं तमेव पुनरप्यभ्यस्यन्ति—दुरवगमेति चतुर्भिः । हे ईश्वर सर्वनियन्तः दुरवगमं जीवैर्ज्ञातुमशक्यं यदात्मतत्त्वं स्वीयलीलारूपगुणरूपैश्वर्यमाधुर्यं तस्य निगमाय ज्ञापनायात्ततनोराविष्कृतश्रीमूर्तेस्तव चरितान्येव महामृताब्धयस्तेषु ये परिवर्तास्तरंगभ्रमिपुञ्जास्तेषु निमज्जनोन्मज्जनोत्थं परिश्रमगमतिश्रमो येषां ते । कतिचिद्विरलप्रचारा भक्ता अपवर्गं मोक्षसुखमपि नेच्छन्ति किमुत त्रिवर्गसुखम् । किन्तु—तदेव त्वच्चरितमहामृताब्धितरंगेषु निमज्जनोन्मज्जनपरिश्रमसुखमेवेति भावः । यथा विषयलंपटपरमसुकुमाराः श्रमलेशासहना अपि सांप्रयोगिकं परिश्रममेव सर्वसुखाधिकं सुखं मन्यन्ते तथैव त्वद्भक्तास्त्वल्लीलाकथामाधुर्यपानोत्थं नर्तनकीर्तनक्रोशनमिथःपादतलप्रपतनमूर्च्छनप्रबोधनहाहाकरणरोदनद्रावणादिपरिश्रममेव परमं सुखं मानयन्तो ब्रह्मास्वादसुखं पशूनां तृणचर्वणसुखमिव मन्यन्ते । तदुक्तं श्रीस्वामिचरणैरपि—" त्वत्कथामृतपाथोधौ विहरन्तो महामुदः । कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥ " इति । त्वत्सुखप्राप्तिकारणं वदन्तो विशिनष्टि ते तव चरणसरोजमाधुर्यास्वादिनो हंसा येः परमभागवतास्तेषां कुलस्य संगेन विसृष्टं गृहं स्त्रीपुत्रादिसंगसुखं यैस्तेऽन्यत्पूर्ववत् ( ८ ) ॥ २१ ॥

**नीलकण्ठी**—संगतिरुक्ता । दुरवगमात्मतत्त्वेति । दुरवगमं दुर्बोधम् आत्मनस्तत्त्वं याथात्म्यं तस्य निगमायापरोक्षज्ञानाय तत्र ब्रह्मणः आत्ततनोः स्वीकृतमत्स्यादिमूर्तेश्चरितं वेदोद्धारादि तदेव महान्निरतिशयफलहेतुत्वात् अमृतवन्मधुरत्वात् अब्धिवदनंतत्वाच्च महामृताब्धिः तत्र परिवर्तो नित्यं वर्तनं तेन हेतुना 'परिविर्जनार्थः' परित्यक्तं श्रमणं शोकमोहायासो यैस्ते तथाभूताः केचिद्विरलाः ईश्वर ते तव चरणसरोजे रममाणाः हंसा इव हंसाः संन्यासिनः तेषां कुलं समूहस्तेषां संगेन विसृष्टा गृहा यैस्ते तथाभूता यतय इत्यर्थः । ते अपवर्गं मोक्षमपि न परिलषन्ति नेच्छन्ति । पूर्वश्लोकोक्तकर्मयोगापेक्षया भक्तियोगो महीयानित्यर्थः । यत्तु भक्तेर्मोक्षाद्गरीयस्त्वमुक्तं "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनः" इति श्रुत्या मुक्ता अपि लीलया विग्रहं कृत्वा सेवन्त इति तद्भाष्येण च दृढीकृतं तद्भक्तिस्तुत्यर्थम् कार्यब्रह्मलोकैकदेशभूतवैकुण्ठकैलासादिप्राप्तौ मुक्त्युपचारात् इति ध्येयम् । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदिति विद्यायां भेददर्शनाभावश्रुतेः यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यविद्याविषयत्वात् भक्तेस्तद्वतां मुक्तत्वायोगाच्च प्रजापतिशिष्यस्यापि विरोचनस्य मोहवत्त्वश्रुतेर्जयविजययोर्वैकुण्ठात्पतनस्मृतेश्च न कार्यप्राप्तेः क्रममुक्तिहेतुतापि संभाव्यते अतो भक्तिस्तुत्यर्थमेव । तच्छ्रुतेस्तु जीवन्मुक्तविषयत्वमपि संभवतीति दिक् ( ८ ) ॥ २१ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—विषयिणो बहिर्मुखान्प्रत्यनुक्रोशन्त्यो जुगुप्सन्त्य "आराममस्य" इत्याद्याः श्रुतयः ता यथा--आराममिति । अस्यात्मन आराममारमंगं ग्रामं नगरं स्त्रियं पुत्रमन्नाद्यामित्यादिवासनारूपमाक्रीडस्थानं सर्वे पश्यन्ति तमात्मानं कश्चन कश्चिदपि न पश्यति अहो भाग्यहीनता लोकस्येति लोकं प्रत्यनुक्रोशं दर्शितम् । अत्यन्तविविक्तः स्वयञ्ज्योतिरात्मा स्वप्नादौ भवतीत्यर्थः। अनुक्रोशपरेयम् । विश्वकर्मा मनुष्याणां

श्रुतयोऽनुक्रोशंत्यो जगदात्मनीश्वरे रतिमुपदिशंतीत्याह । त्वदनुपथमिति । त्वदनुवर्तित्वात्त्वत्सेवौपयिकमिदं कलायं कौ पृथिव्यां लीयत इति कुलायं शरीरम् । आत्मसुहृत्प्रियवत् आत्मा च सुहृच्च प्रियश्च तद्वच्चरति स्वाधीनतया वर्तत इत्यर्थः । तथाऽपि त्वयि उन्मुखे हिते प्रिये आत्मनि च । अप्यर्थे चकारः । एवंभूते सुसेव्येऽपि त्वयि बताहो कष्टं न रमंति न सख्यादिना भजंति । असदुपासनया देहाद्युपलालनेनात्महनः प्रमादिनः । कुतः । यदनुशयाः यस्यामसदुपासनायामनुशयो वासना येषां ते कुशरीरभृतः संत उरुभये संसारे भ्रमंति परिवर्तंते । अत आत्महन इति भावः । त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह ॥ कदा ममेदृशं जन्म मानुषं संभविष्यति ॥ ९ ॥ २२ ॥

हितमुपदिशाति—न तमिति । तं यूयं न विदाथ न जानीथ य इमा इमानि भूतानि जजान जनयामास अतो युष्माकं तस्य चान्यन्महदंतरं बभूव स पुरुषो जनको यूयं जन्याः यदि ज्ञात्वात्मतत्त्वं सत्येनोपासिष्यध्वे तदा न संसृतिः स्यादित्यभिप्रायः। उपदेशपरेयं श्रुतिः। एवं प्रत्यक्षमुक्त्वा परोक्षमभिनयेन दर्शयन्नाह—नीहारेण ये च जल्प्या जल्पप्रवृत्तास्तार्किकाः, ये चासुतृपः असूनेव तर्पयन्तीत्यसुतृपो विषयिणः, ये चोक्थानां कर्मफलानामाशासितारो यज्वानः एते नीहारेणाविद्ययावृताः सन्तश्चरन्ति संसारे भ्रमन्तीति सनिन्दोपदेशपरेयम् । आदिनाऽसुर्यानामेत्यादिग्रहः । त्वामनु पंथा यस्य तत्तथा । उपयिकमुपयोगः । इत्यर्थ इति—यथात्मादयः स्वाधीना भवन्ति तथेदमपीति भावः । यद्वा—पंथानमनुगतमनुपथं स्वाधीनत्वं देहस्याह—आत्मवदहंकारास्पदत्वात् सुहृद्वद्विषयसमर्पकत्वात् प्रियवत्सर्वतः प्रीतिविषयत्वाद्देहस्त्वेवमाचरति तथापि तदापि । उन्मुखे भजनमात्रात्संसारादुद्धर्तुमुद्यते । हिते पितृवद्धितकरे । प्रिये मनोनुकूले सख्यौ । एवंभूते उन्मुखत्वादिरूपे सुखसेव्ये । यतो देहाद्युपासका अतो हेतोः । इति भाव इति—देहादिलालनपरा आत्महन एवानात्मप्रवृत्तत्वान्मोक्षमार्गमुग्धत्वादिति रहस्यं स्वामिनाम् । त्वयीति । ईदृशं त्वद्रमणशीलम् ॥ *॥ **श्रीवरानुयायिनी**—अतः सर्वथा परमेश्वरे रतिमेव व्यतिरेकमुखेनोपदिशन्ति—त्वदन्विति । समर्थमात्मवत् अहंकारास्पदत्वादात्मतुल्यत्वम्, सुहृद्वद्विषयसमर्पणलक्षणहितकारित्वात् सुहृत्तुल्यत्वं प्रियवच्च सर्वतः प्रीतिविषयत्वात्प्रियतुल्यत्वम् स्वाधीनं त्वत्सेवायोग्यं ब्राह्मणादिदेहं लब्ध्वापि तथा सदा प्रसादोन्मुखं परमदयालुमात्मत्वेन प्रियं सुसेव्यञ्च स्वामिनमपि त्वां लब्ध्वा ये मिथ्याभूतदेहाद्युपलालनपरा भोगलंपटा महाप्रमादिनस्त्वां बताहो कष्टं सख्यादिनापि न भजन्ति ते व्यर्थीकृतजन्मानः श्वशृगालादियोनिगता महाभये संसार एव भ्रमन्ति, अत आत्मघातिनस्ते । रमन्तीत्यार्षम् ॥ * ॥ **विश्वनाथी**—तदेवं पूर्ववत्तदीयशुद्धरतेरेवं सर्वतः प्रकर्षं ताभ्यां श्रुत्वापरास्तदनुगताः श्रुतयो व्यतिरेकेण पुष्यन्त्यः स्तुवन्ति—त्वदिति । पंथानमनुगतमनुपथं जीवरूपत्वदंशसंबंधपरंपरायामनुगतमित्यर्थः । तथाभूतमेव सदिति परमात्मनस्तव संबंधपरंपरयैवं इदं जडं कुलायं नश्वरशरीरमात्मादिवच्चरति भाति तत्तद्रूपतया स्फुरणेन रतिविषयतया प्रतीयत इत्यर्थः । मृतशरीरे तत्तद्भानाभावादिति भावः । अत्रात्मवत्त्वमहंकारास्पदत्वात्, सुहृद्वत्त्वं तस्मिन्विषयसमर्पणलक्षणहितकारित्वात्, प्रियवत्त्वं ततस्ततः प्रीतिविषयत्वात्, किंवात्मवत्त्वादेव तद्युगलवत्त्वमिति ज्ञेयम् । एवं यत्संबंधपरंपरयैव तस्मिंस्तत्तद्भानाद्रतिविषयत्वं तस्मिन्परमात्मत्वात्साक्षात्स्वयमेव तत्तद्रूपे विशेषत उन्मुखे स्वप्रकाशत्वात्स्वत एव तत्तदनुसंधानस्य कर्तरि कारयितरि च न तु जडत्वाद्देहवत्तदभाववति त्वयि तथा तुल्यतया न रमन्ति रतिं न कुर्वन्ति इत्यहो आश्चर्यं बत कष्टञ्चेत्यर्थः । नाप्याश्चर्यमिदमिति स्वयं हेतुञ्च विन्यस्यन्ति । असतस्तस्य कुलायस्य तत्संबंधिनां चासतामुपासनया शुश्रूषयेति तस्माद्युक्तमेवैतदित्याह—यदिति । तैर्व्याख्यातं श्रुतयोऽप्यत्र तद्दर्शिता एव ज्ञेयाः । अन्याश्च "असुर्या नाम" इत्याद्याः ( ९ ) ॥ २२ ॥

**निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥**
**स्त्रिय उरगेंद्रभोगभुजदंडविषक्तधियो वयमपि ते समाः समदृशोंऽघ्रिसरोजसुधाः ॥ १० ॥ २३ ॥**

इदानीम् " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इत्याद्याः श्रुतयो ध्यानमंगत्वेनोपदिशंतीत्याह । निभृतमरुन्मनोऽक्षदृढयोगयुज इति । मरुत्प्राणो मनश्चाक्षाणींद्रियाणि च निभृतानि संयमितानि यैस्ते च ते दृढं योगं युंजंति ते दृढयोगयुजस्ते तथाभता मुनयो हृदि यत्तत्त्वमुपासते तदेवारयोऽपि तव स्मरणाद्ययुः प्रापुः । स्त्रियोऽपि कामत उरगेंद्रभोगभुजदंडविषक्तधियः अहींद्रदेहसदृशयोर्भुजदं र्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नं त्वां पश्यंत्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समा एव कृपाविषयतया । अंघ्रिसरोजसुधाः अंघ्रिसरोजं सुष्ठु धारयंत्यः । अयं भावः । इत्थंभूतस्तव स्मरणानुभावो ये योगिनस्त्वां हृद्यालंबनमुपासते याश्च

**नीलकण्ठी**—एवमीशसूत्रविराड्विष्णूनां बीजांकुरद्रुमफलाभानामुपास्त्या प्रत्यक्तत्त्वावगम उक्तः, अशक्तानां विष्णौ कर्मार्पणं तन्नामकीर्तनादिकञ्च चित्तशुद्ध्यर्थमुक्तं, तदुभयभ्रष्टं निन्दति—त्वदनुपथं कुलायमिति । इदं कुलायं कौ पृथिव्यां लीयत इति कुलायं नीडं शरीरं त्वदनुपथं त्वत्सेवानुकूलम् आत्मसुहृत्प्रियवत् आत्मवत्स्वायत्तत्वात्, सुहृत्प्रत्युपकारमनपेक्ष्योपकर्ता प्रियः प्रत्युपकारमनपेक्ष्योपक्रियमाणः पुत्रादिस्तद्वत्, स्वाधीनतयाऽनुवर्तते श्रवणकीर्तनध्यानादिना त्वद्भजनं कर्तुं योग्यं शरीरमस्तीत्यर्थः । तथा त्वयि उन्मुखे भक्ताननुग्रहीतुम् अत एव हिते मित्रे प्रिये च निरुपाधिप्रेमगोचरत्वात्, प्रियत्वादेव आत्मनि प्रतीचि सुसेव्ये सतीत्यर्थः । अहो आश्चर्ये । बत खेदे । न रमन्ति त्वय्येव त्वद्गुणगानादिना न रमन्ते, कुतः असदुपासनया मृषाकल्पितहृद्याद्यमंगलवस्तुप्रावण्यादित्यर्थः । अत एवात्महनः आत्मानं नानादुःखेषु पातनात् घ्नन्ति हिंसन्तीति तथा । यदनुशयाः यस्यामसदुपासनायाम् अनुशयो वासना येषां ते भोगलंपटाः, उरुभये महाभयवति संसारे भ्रमन्ति । अत एव कुशरीरभृतः कापुरुषास्ते कुत्सितं शरीरं बिभ्रतीति वा । श्रूयते च—देवपितृमार्गभ्रष्टानां क्लिष्टा गतिः । " अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं शूकरयोनिं वा चंडालयोनिं वा अथैतयोः पथयोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम् " इति । " असुर्या नाम ते लोका अंधेन तमसा वृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥" इति च ( ९ ) ॥ २२ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—अधुना ध्यानमात्मप्राप्तावंगत्वेनाहुः—" आत्मा वा " इत्याद्याःश्रुतयस्ता आह । स्वभार्यां मैत्रेयीं प्रत्याह—याज्ञवल्क्यः । " न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद ँ सर्वं विदितम् " इति । अरे इति निकृष्टसंबुद्धौ भार्यात्वात् । मैत्रेयि, सर्वस्य पतिस्त्रीपुत्रधनादिवसुमात्रस्य कामाय सर्वं प्रियं न भवति किन्त्वात्मनः कामाय सर्वं प्रियं भवति स आत्मा त्वया द्रष्टव्यः साक्षात्कर्तव्यः, श्रोतव्यः पूर्वमाचार्यत आगमतश्च पश्चान्मन्तव्यः तर्कादितः, ततो निदिध्यासितव्यो निश्चयेन ध्यातव्यः एवमात्मनो दर्शनं भवति मत्या मननेन विज्ञानेन निदिध्यासनेन । इयमप्युपदेशपरा । एतदभिप्रेत्यैव श्रीशुकेनोक्तम्—" तस्माद्भारत सर्वात्मा भगवान्हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥ " इति द्वितीये । तथा पाद्मेऽपि—शिवः—"स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ॥ " इति । तदेव तत्त्वमत्र निर्गलितार्थमाह—अयं भाव इति—

**वयं त्वां समं पश्यामो याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायंति ये च द्वेषेण सर्वानपि तांस्त्वामेव प्रापयतीति ॥ चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम् ॥ यथा कथंचिन्नृहरे मम भूयादहर्निशम् ॥ १० ॥ २३ ॥**

वयं श्रुत्यभिमानिन्यो देवताः । ये च द्वेषेण शिशुपालादयः भवांस्तान्योगिप्रभृतीन् त्वामात्मानमेव प्रापयतीति । अत्रेदमवधेयम्–यद्यपि भगवत्प्रसादो गोपीनामसाधारणोऽस्ति " नायं श्रियोङ्ग उ नितांतरतेः प्रसादः स्वर्योषितां नलिनगंधरुचां कुतोऽन्याः । रासोत्सवेऽस्य भुजदण्डगृहीतकंठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥ " इत्यादिभिरुक्तस्तथाप्यत्र ' तन्मध्यपातितस्तद्ग्रहणेन गृह्यते ' इतिन्यायात् मुन्यादीनां मध्ये कथितानां गोपीनामपि श्रीकृष्णस्मरणजन्यब्रह्मानंदसुखसाम्यं भवतु नाम किन्तु भजनानन्दसुखाधिक्यमस्त्येव निदर्शनञ्च–" अहल्या द्रौपदी सीता तारा मंदोदरी तथा । पञ्च कन्याः स्मरेन्नित्यं सुप्रभातं दिनेदिने ॥ " एताः पञ्च कन्या नित्यं दिनेदिने स्मरेत्तर्हि तद्दिनं सुप्रभातं भवतीत्यर्थः । अहल्यादीनां मध्ये श्रीसीतापि पठिता एतावता ताभिः सह सीतायाः साक्षाल्लक्ष्म्याः किं साम्यं भवति किन्तु कन्यास्मरणफलदातृत्वेन साम्यमुक्तं सीता तु साक्षाल्लक्ष्मीरहल्याद्यास्तदंशांशा एवेति तथा कर्मादौ पञ्चदेवतापूजाविधौ गणेशादीनां मध्ये विष्णुरप्येको देव उक्तः एतावता विष्णुना तेषां किं साम्यं मंतव्यं किन्तु कर्मफलदातृत्वेन कर्माङ्गत्वात्समत्वम् , अन्यदा तु विष्णुरीश्वरो गणेशाद्यास्तदंशांशा एवेति दिक् । स्वामिनां चरणेति सुबोधः ॥ * ॥ **श्रीधरानुयायिनी**–इदानीमीश्वरभजने ध्यानमंगत्वेनापादिशंत्यस्त्वां स्मरता सर्वेषां तुल्यैव त्वत्प्राप्तिरित्याहुः–निभृतेति । ये वशीकृत प्राणेन्द्रियमनसो दृढयोगिनो हृद्युपासते, ये च कंसचैद्यादयो द्वेषेण त्वां स्मरन्ति, याश्च भवदीयशेषशरीरानुकारिभुजदंडद्वयासक्तधियो गोप्यस्त्वां परिच्छिन्नं कामोपभोगाय ध्यायन्ति, याश्च त्वत्पादपद्माराधनपरा वयं श्रुतय स्त्वामपरिच्छिन्नं ध्यायाम इति ते सर्वेऽपि समदृशस्तव समा एव । अहो अपूर्वस्तव स्मरणानुभावो यः सर्वानपि त्वामेव प्रापयतीति कीटभृङ्गन्यायेन ध्यानमात्रस्यैव ध्येयसारूप्यापादकत्वं न भक्तेरेवेत्याशयः ॥ * ॥ **विश्वनाथी**–भगवत्स्वरूपेष्वपि मध्ये श्रीकृष्णस्य तद्विषयकसर्वविलक्षणभक्तियोगस्य च सर्वोत्कर्षं वक्तुं प्रथमं ब्रह्मविषयकं ज्ञानयोगमपकर्षकक्षायां निक्षिपन्त्य आहुः–निभृतैः संयमितैर्मरुन्मनोक्षैर्यो दृढो निश्चलो योगस्तं युञ्जन्ति, ये तथाभूता मुनयो हृदि परमशुद्धे ब्रह्माकारीभूते यद्ब्रह्मस्वरूपमुपासते, तदरयः कृष्णावतारसमयगता असुरा अप्यरिभावनयादपि स्मरणाद्ययुः अहो कृष्णाकारस्य माहात्म्यं तादृशा अपि मुनयोऽपरिच्छिन्न दृष्टयोऽपि यावद्ब्रह्मकेवलमुपासीना एव तिष्ठन्ति, तन्मध्य एव कंसादयोऽसुराः परिच्छिन्नदार्शिनः पापात्मत्वादशुद्धचित्ता अपि अरिभावत्वात्कृष्णांगसंगमाधुर्यस्यापरोक्षानुभवरहिता अपि केवलतदाकारमात्रस्मरणात्तदेव ब्रह्म प्राप्यैव स्थिताः । मुनयस्तु न जानीमः कियता कालेन तं प्राप्स्यंतीति भावः । एवञ्च तच्छत्रुगणप्राप्तं ब्रह्मरसास्वादं मुनयो यत्नेन प्राप्नुवन्तीति पूर्वार्धेनोक्त्वा तन्मित्रगणप्राप्तं प्रेमरसास्वादं वयं श्रुतयो यत्नेन प्राप्नुम इत्याहुः–स्त्रियो व्रजदेव्यः उरगेन्द्रदेहसदृशयोस्तद्भुजदंडयोरतिरागेणैव विषक्ता सँलग्ना धीर्यासां ता हृदि स्ववक्षःस्थले ' यत्ते सुजातचरणाम्बुरुहं स्तनेषु ' इत्युक्तिरीत्या अंघ्रिसरोजयोर्याः सुधा उपासते सेवन्तेऽनुभव न्तीति यावत्, ता एव वयं श्रुतयोऽपि यथिम समास्तपसा गोपीत्वप्राप्त्या तत्तुल्यरूपाः सत्यः । कथं यथिथ तत्राहुः–समदृशः समदृष्टयः तासां यस्मिन्वर्त्मनि तदनुगत्या दृष्टिं ददाना इत्यर्थः । अत्र चत्वारो गणा वर्णि तास्तत्र पूर्वार्धगतौ मुनिगणदैत्यगणौ यथा समप्राप्यौ तथैवोत्तरार्धगतौ गोपीगणश्रुतिगणौ समप्राप्यौ पृथक्पृथगपि शब्दाभ्यां गम्येते । अत्र स्त्रियोऽपीत्यपिरध्याह्रियतेऽत्र पूर्वोऽपिरयोग्यतायामुत्तरो योग्यतायामिति गम्यते । पूर्वासामयोग्यताव्यञ्जनार्थमेवापिरध्याहृतः । यद्यपि स्त्रियो न योग्या वय तु योग्यास्तथापि भगवदाकारस्य तव स्मरणप्रभावेणास्माकं परमयोग्यानां साम्यं प्राप्ता इत्यर्थः । श्रुत्यभिमानिनां ब्रह्मणा लयाद्ययुरिति इह पूर्वार्ध परार्धयोर्वाक्यतया विभेदनं स्वसिद्धान्तानुसारेण दोषत्वेऽपि मीमांसकनये सोढव्यम् । इतिहासश्चात्र बृहद्वामन उत्तरस्थाने खिले–"ब्रह्मानंदमयो लोको व्यापी वैकुण्ठसंज्ञितः । तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥ चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान्गिरा । तुष्टोऽस्मि ब्रूत भोः प्राज्ञा वरं यन्मनसीप्सितम् ॥ श्रुतय ऊचुः–यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षाजनि नस्तथा ॥ श्रीभग वानुवाच–दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः । मयानुमोदितः सम्यक्सत्यो भवितुमर्हति ॥ आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते । कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । वृन्दावने भविष्यामि प्रेयान्वो रासमण्डले ॥ जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम् । मयि संप्राप्य सर्वेऽपि कृतकृत्या भविष्यथ ॥ ब्रह्मोवाच–श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवताश्चिरम् । उक्तकालं समासाद्य

**क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये ॥**
**तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ ११ ॥ २४ ॥**

" यतो वाचो निवर्तंते । अप्राप्य मनसा सह ॥ को अद्धा वेद क इह प्रवोचत् ॥ कुत आजाता कुत इयं विसृष्टिः ॥ अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत गोप्यो भूत्वा हरिं गताः ॥ " इति । अत्र " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति । अर्थश्च–द्रष्टव्यः साक्षात्कर्तव्यः । अस्य साधनान्याह–श्रोतव्यः श्रीगुरोर्मुखादुपक्रमादिभिस्तात्पर्येणावधारयितव्यः, मन्तव्यः असंभावनाविपरीतभावनानिवारणाय स्वयं पुनर्विचारणीयः, निदिध्यासितव्यो निश्चयेन ध्यातव्य इति । अत्र ज्ञानिनां मते सविशेषानिर्विशेषभेदेऽपि निर्विशेष एव तात्पर्यम् । वैष्णवानां मते तु अप्राकृतविचित्राविशेषवति श्रीभगवदाकार एव " यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् " इति श्रुतेः कल्याणगुणमयतनुमानात्मा श्रीभगवान् द्रष्टव्यस्तत्साधनान्याह--श्रोतव्य इति । श्रीगुरोर्मुखात्तन्मंत्रश्रवणं " मंत्रमयवपुषः " इति क्रमदीपिकाद्युक्तेस्तन्मंत्रस्य तत्स्वरूपत्वोक्तेः । मन्तव्य इति । मंत्रशब्दार्थयोः सम्यङ्मननलक्षणं स्मरणम् । निदिध्यासितव्य इति " निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् " इत्यमरोक्तेर्निध्यानं दर्शनं तस्येच्छा निदिध्यासनं मंत्रार्थसम्यङ्मननपूर्वकभजनाभ्यासात्स्वेष्टदेवः स दिदृक्षितव्य इत्यर्थः । दिदृक्षाभ्यासाद्द्रष्टव्य इति । अत्र निनिरोरेकार्थत्वमिष्टम् । वेदानां कामभावेच्छायां तु " यं मां स्मृत्वा निष्कामः सकामो भवति " इति । श्रीकृष्णोक्तिरूपगोपालतापनी श्रुतिः " व्रजस्त्रीजनसंभूतश्रुतिभ्यो ब्रह्मसंगतः " इति । अर्थश्च–व्रजस्त्रीजनेषु संभूता बृहद्वामनदृष्टतपोभिरुत्पन्ना याः श्रुतयस्ताभ्यो हेतुभ्यः ताः प्राप्योति वा कृष्णो वा ब्रह्मसंगतः प्राप्तवे दसंगोभूदिति ( १० ) ॥ २३ ॥

**नीलकण्ठी**–एवमभक्ताननुक्रोश्य भक्तिं स्तौति–निभृतेति । निभृता निगृहीताः मरुत्प्राणः मनः प्रसिद्धम्, अक्षा इंद्रियाणि यैस्ते निभृतमरुन्मनोक्षाः ते च दृढयोगयुजश्च निभृता मरुन्मनोक्षा यस्मिन्दृढयोगे तद्युजो वा मुनयो यद्धृदि तत्त्वम् उपासते, तत् तदेव तत्त्वम् द्वेषपूर्वकं नित्यं चिन्तयन्तः अरयः कंसशिशुपालादयो ययुः प्रापुः कुतः स्मरणात् कीटभृंगन्यायेन ध्यानमात्रं ध्येयसारूप्यप्रापकं न भक्तिरेवेत्यर्थः । यथोक्तं सप्तमे–" गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबंधाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं प्रभो ॥" इति । त्वां प्राप्ता इति शेषः । अत एव स्त्रियो गोप्यादय उरगेन्द्रभोगः फणीन्द्रशरीरं तत्सदृशौ यौ भुजदंडौ तत्राश्लेषसुखलिप्सया विषक्ता संलग्ना धीर्यासां तास्तथा । ता अपि यन्मुनय उपासते तद्ययुरिति संबंधः । ननु " यमेवैषे[1] वृणुते तेन लभ्यः " " एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते " इतीश्वरप्रसादप्रकोपापत्तेरूर्ध्वाधोगती श्रूयेते तत्कथं तदरयोऽपि ययुरित्युच्यते इत्याशंक्याह–वयमपीति । वयं वेदवाचोऽपि ते त्वत्संबंधिन्यः समाः तदरयोऽपि ययुरित्यस्य प्रतिपादने समाः । अयं भावः–तं यथायथोपासते तथैतः प्रेत्य भवति " यं यं चापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ " इत्यंत्यप्रत्ययवशात्स्मर्यमाणसारूप्यं प्राप्यते अंत्यप्रत्ययश्च यथाकथञ्चित्तीव्रध्यानायत्तो न केवलं भक्त्यायत्तः, एष ह्येवेति श्रुतिस्तु कर्मगोचरगातिविषया न ध्यानविषया । एवं ध्यानेन भगवत्सारूप्यं प्राप्योपाधिविशेषमहिम्ना पूर्वं द्वेषादिमन्तोऽपि भगवल्लोके दिव्यज्ञानादिमन्तो भूत्वा मुच्यन्त इति कुत एतत् यतः समदृशः ब्रह्मदर्शिन्यः ब्रह्मदर्शनमपि तासां कुतः यतस्ते तवांघ्रिसरोजं पादपद्मं सुधेवामृतमिवातिवल्लभं यासां ताः । अंघ्रिसरोजं सुष्ठु धारयतीति वांघ्रिसरोजसुधा ( १० ) ॥ २३ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–यतो ध्यानज्ञानद्वेषभयकामसंबंधस्नेहभक्तिपराणां विषमस्वभावकर्मणां सर्वेषां त्वत्सायुज्यमेकमेव फलं स्यादतस्तव तत्त्वं दुर्ज्ञेयं वदन्त्यो "यतो वाचः " इत्याद्याः श्रुतयः उररीकुर्वत्यंगीकुर्वन्ति ता आह–यत इति । ब्रह्मप्रकाशनाय प्रयोक्तृभिः सर्वथा प्रयुज्यमाना अपि वाचः मनसा सह यदप्राप्य यतो यस्मान्निर्विकल्पादद्वयानंदात्मनो निवर्तन्ते तद्ब्रह्मण आनंदं विद्वाञ्जानन् कुतश्चिन्निमित्तान्न बिभे

---

१ एष भक्त्या तुष्ट ईशः यमेव भक्तं वृणुते मामयं साक्षात्करोत्विति वाञ्छति तेन लभ्य इत्यर्थः ।

आबभूव ॥ अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति " इत्याद्याः श्रुतयो भगवत्तत्त्वं दुर्ज्ञेयं वदंत्यो भक्तिमेवोररीकृत्य स्तुवंतीत्याह । क इह नु वेदेति । बत अहो भगवन्निह जगत्यग्रसरं पूर्वसिद्धं त्वामवरजन्मलयोऽर्वाचीनोत्पत्तिनाशवान्को नु पुमान्वेद जानाति । ईश्वरस्य पूर्वसिद्धावन्यस्य चार्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह।यत उदगादिति।यतस्त्वत्त ऋषिर्ब्रह्मा उत्पन्नो यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविका देवगणा उत्पन्नास्ततोऽप्यर्वाचीनाःसर्वे।यदा तु भवान्सर्वमवकृष्योपसंहृत्य शयीत तर्हि तदा अनुशायिनां जीवानां ज्ञानसाधनं नास्ति । यतस्तदा न सत्स्थूलमाकाशादि।न चासत् सूक्ष्मं महदादि। न चोभयं सदसद्भ्यामारब्धं शरीरम् । न च कालजवस्तन्निमित्तभूतं कालवैषम्यम् । एवं सति तत्र तदा न किमपींद्रियप्राणाद्यपि न च ज्ञापकं शास्त्रमपि । अयमभिप्रायः । अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतांतराणां कालवशेन च मलिनसत्त्वानां न तावद्भगवज्ज्ञानसामर्थ्यम् । तथा च श्रुतिः "न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव" इत्याद्या । यदा तु प्रलयसमये न बह्वंतरमस्ति तदापि साधनाभावान्न भगवज्ज्ञानसामर्थ्यम् । अतस्त्वदेकशरणतया श्रवणकीर्तनादिभक्तिरेव सुकरेति ॥ क्वाहं बुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव ॥ दीनबंधो दयासिंधो भक्तिं मे नृहरे दिश ॥ ११ ॥ २४ ॥

तीति अलभ्यलाभमाहात्म्यपरेयम् । परमात्मनो दुर्विज्ञेयत्वे श्रुत्यंतरमुदाहरति—क इति । तं परमात्मानमद्धा साक्षात्को वेद जानाति । इह कः प्रवोचत्प्रावोचद्वदति, इयं विसृष्टिर्विविधा सृष्टिः कुतो जाता कुतः कस्मादायाता । ननु हिरण्यगर्भादेः सकाशात्सृष्टिरुत्पद्यते नेत्याह—अर्वाग्देवा अर्वाचीना ब्रह्मादिदेवा अस्य जगतो विसर्जने न समर्था इत्यर्थः । अथा इत्याकारान्तो निपातोऽथेत्यर्थे अथा तं को वेद यत एतत्सर्वमाबभूवेति दुर्विज्ञेयत्वप्रतिपादनपरेयम् । ननु यदि कोऽपि न वेद कथं तर्हि संसारनिवृत्तिः तदर्थं तत्स्वरूपमनिर्वचनीयत्वेनाह—अनेजदिति । तत्परमात्मतत्त्वमनेजत्स्वरूपाच्चलनरहितमेकमद्वितीयं मनसो जवीयः मनसोऽपि वेगवत्तमं यत्र मनो धावति तत्र तस्य पूर्वमेव तद्वर्तत इत्यर्थः । एतत्परमात्मतत्त्वं देवाश्चक्षुरादीनीन्द्रियाणि तदधिष्ठातारो वा नाप्नुवन् न प्राप्ताः । तत्र हेतुः यस्मान्मनसोऽपि पूर्वमर्शत् पूर्वमेवागच्छत् तत्तिष्ठत्स्थिरतरमपि धावतोऽन्यान्वागिंद्रियादीनत्येति अतिक्रम्य गच्छति । मातरिश्वा वायुः तस्मिन्नपः प्राणिनां चेष्टालक्षणानि कर्माणि दधाति धारयतीति यः सर्वप्राणभृत् क्रियात्मकः यदाश्रयाणि कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि च यः सूत्रसंज्ञः वायुर्वै गौतम सूत्रमित्यादिभिरुक्तः सर्वस्य जगतो विधारयिता स मातरिश्वा वायुरिति ज्ञातव्यम् अनिर्वचनपरेयम् । ब्रह्माणमनु पश्चात् आध्यात्मिका देवगणा वाग्विन्द्रादयोऽधिकारिणो देवा आधिदैविकास्तान्देवानधिकृत्य तत्तन्नामान इन्द्रियाद्यधिष्ठातारश्च "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" एत इत्यर्थः । अधिकारिदेवानां ब्रह्मणः पश्चाद्भावित्वेन तत्समाननामत्वादाधिदैविकेष्वग्रभाविष्वपि पाश्चात्यकथनं ज्ञेयमिति । ततो देवगणेभ्योऽपि सर्वे मनुष्यादयः । निर्गलितार्थमाह—अयमभिप्राय इति । न तमित्यादिश्रुतिस्तु व्याख्यातार्था । साधनाभावाद्गुरुशास्त्रादिरूपसाधनस्याभावात् । यतः सर्वथा तव ज्ञानं दुर्घटमतो हेतोः स्वामिनां क्वाहमिति । अत्यन्ताघटनायां द्वौ क्वौ । हे भूमन्नपरिच्छिन्नव्यापक बुद्ध्यादिसंरुद्धो बुद्ध्यादिरहितः महःस्वरूपं वागाद्यगोचरं क्व अत्यन्तासंभावनाऽतो भक्तिं देहीति ॥ * ॥

**श्रीधराऽनुयायिनी**—पुनरपि भक्तेरेवावश्यकत्वं द्रढयितुं तदभावे तव ज्ञानमशक्यमित्याहुः—क इति । यतस्त्वत्तः सकाशात्तावत्तव किञ्चिन्मात्रतत्त्वज्ञापको वेदो ब्रह्मा वा जातस्तत उभये उभयेन्द्रियाधिष्ठातारो देवाः पश्चादर्वाचीनाः सर्व इत्यतः सर्वेभ्यः पूर्वसिद्धं त्वामाधुनिको जन्ममरणभागी कः पुमान् जगति ज्ञातुं समर्थः स्यात् । प्रलयकालेप्याकाशादीनां महदादीनां तदारब्धशरीराणां तन्निमित्तभूतकालवैषम्यस्येन्द्रियप्राणादेस्तत्त्वज्ञापकस्य शास्त्रस्य च लीनत्वान्न त्वां ज्ञातुं कोऽपि समर्थः । अयं भावः—सृष्टिकाले देहाद्युपाधिकृतबहुव्यवधाने सत्यपि ज्ञापकस्य शास्त्रस्य साधनसमूहस्य च संभवाद्यत्किञ्चित्तत्त्वज्ञानं कदाचित्कस्यचिद्भवेदपि प्रलय

काले तु बहुतरव्यवधानाभावेऽपि शास्त्रस्य साधनसमूहस्य चाभावान्न किञ्चिन्मात्रमपि तत्त्वज्ञानं संभवेदतो ज्ञानाग्रहं त्यक्त्वा त्वद्भक्तिरेव कर्तुं युज्यत इति ॥ * ॥ **विश्वनाथी—**अथ काश्चिच्छ्रुतयस्तदेवानुमोदमानास्तदज्ञाने स्वदोषं परिहरन्ति—क इति । इह जगतीति तदानीं तदभावेऽपीदंशब्देनोक्तिः पूर्वसंस्कारात् । ता एव तदधिकृता एव । श्रुतय इति । नु सभ्रूभंगं वितर्के न कोऽपि वेदेत्यर्थः । तत्र हेतुः—अग्रसरम् सर्वेषां जन्मादेर्ज्ञानादेश्चागोचर एव वर्तमानम् । तत्र च हेतुः—यत ऋषिर्निःश्वासेन सर्ववेदप्रवर्तकः कारणार्णवशायी उदगात् 'आद्योऽवतारः पुरुषः परस्य' इति द्वितीयात् "यस्यांशांशांशभागेन विश्वस्थित्यप्ययोदयाः" इति श्रीकृष्णं लक्ष्यीकृत्य दशमात् । यमृषिमनु उभयेन्द्रियाधिष्ठातारो ब्रह्मलोकाद्यधिष्ठातारश्च दिग्वातार्कादयोऽध्यात्मसंज्ञा ब्रह्मादयश्चाधिदैवसंज्ञा देवगणा जाता इति "एको ह वै नारायण आसीन्न ब्रह्मा नेशानस्तस्मा देवैते व्यजायंत" इति श्रुतेः । तस्मात्ततोऽप्यवरजन्मलयस्तु को वेद सुतरामेव कश्चन न वेदेत्यर्थः । एवं स्थितिसमये शास्त्रे प्रवर्तमानेऽप्यश्रवणशक्तिभ्यां तत्त्वदज्ञानं यदा तु प्रलयसमये स्वस्तावकं शास्त्रं स्वलोक एव नीत्वा भवाञ्जगत्कार्यं प्रयत्नवधानं करोति ज्ञानमात्राभावात्सुतरामेव तेषां त्वदज्ञानमित्याह—तर्हीति । कालजवस्तद्व्यापारः सृष्ट्यादिरूपः । अत्र श्रुतयस्तैरेव दर्शिताः ( ११ ) ॥ २४ ॥

**नीलकण्ठी—**ननु तत्त्वज्ञानेनैव मुच्येमहि किं सगुणभक्त्येत्याशंक्य ज्ञानदौर्लभ्यमाह त्रिभिः—क इह नु वेदेति । इह लोके कः अवरजन्मलयः आन्तरालिकजन्ममरणः तौ जन्मलयौ समासान्तःस्थावपि बुद्धिस्थतया गृह्येते । ताविति । तौ जन्मलयौ तं चाग्रसरं पूर्वसिद्धं कर्तारं च को वेद न कोऽपीत्यर्थः । 'वेद तावत्तरजन्म' इति पाठे इदं व्याख्यानम् । वेद तावत्तरजन्मलयेति पाठस्तु वर्णव्यत्यासभ्रमनिबन्धनो वृत्तभंगादुपेक्षितः । अयं भावः—क्षणिकाः स्थिरा वा खरस्नेहोष्णेरणस्वभावाः पार्थिवाप्यतैजसवायवीयाः परमाणवः पुञ्जात्पुञ्जक्रमेण घटाद्याकारेण संहन्यन्ते त एव नित्या निरधिष्ठातृकाः साधिष्ठातृका वा द्व्यणुकादिक्रमेण कार्यमारभन्त इति सौगतलोकायततार्किकाः । अधिष्ठातुर्विकरणत्वात्कुलालवत्क्रियया वा योगिवत्संकल्पेन वा स्रष्टृत्वायोगादसहायं त्रिगुणात्मकं प्रधानं क्षीरादिवत्स्वयमेव महदाद्याकारेण परिणमत इति सांख्याः । तदस्मिन्मतत्रयेऽपि पुञ्जात्पुञ्जक्रमेण द्व्यणुकादिक्रमेण वा महदादिक्रमेण वा उत्पन्नैर्देहेन्द्रियादिभिरवच्छेदलाभे सत्यात्मनो बुद्ध्याद्युदयः । तथा तेषां नाशात्प्रागेव बुद्ध्यादेर्नाशः । एवं सत्यांतरालिकया बुद्ध्या पार्यन्तिकौ प्रथमचरमकार्योत्पादविनाशौ तत्कर्ता च न केनचित्परिच्छेत्तुं शक्य इति । यतः अग्रेसरादृषिर्ब्रह्मा उदगात् उत्पन्नः "यो ब्रह्माणं विदधाति पूर्वम् " इति श्रुतेः । यं ब्रह्माणमनु पश्चात् उभये देवगणाः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चोदगुः पश्चाद्भावित्वादेनमग्रसरं तत्कर्तव्यौ जगज्जन्मलयौ च ऋषिर्देवाश्च न विदुरित्यर्थः । तथा च श्रुतिः—"को अद्धा वेद क इह प्रवोचत् । कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ।" इति सृष्टेर्दुर्ज्ञेयत्वमाह सृष्टेः प्राक्कोऽपि तामीशं च ज्ञातुं नासीदित्याह—तर्हीति । यदा भवान्सर्वं प्रपञ्चं अनुकृष्य संहृत्य शयीतस्वरूपमात्रेणास्ते तर्हि तदा न सत् प्रधानपरमाण्वादिकं नासीत् न असत् शून्यमपि नासीत् उभयञ्च सदसदात्मकम् अव्याकृतमपि नासीत् चकारान्नेत्यनुकृष्यते कालजवोऽपि संवत्सरत्वयनमासादिपारिवर्तः नासीत् सूर्याद्यभावात् । "न रात्र्या अह्न आसीत्प्रकेतः" इति श्रुतेः । न च किमपि शास्त्रं शास्तृशास्ययोरभावात् तत्र स्वरूपे किमपि नासीदित्यर्थः। श्रुतिश्च—"नासदासीन्नो सदासीत्तदानीं । नासीद्रजो नो व्योमापरो यत् ।" इति असदिति शून्यस्य सदिति प्रधानस्य रज इति परमाणूनां व्योमेत्यव्याकृतस्य परमात्मनो हिरण्यगर्भस्य चाभावं प्राक् सृष्टेराह । अतस्तत्त्वज्ञानस्य दुर्लभत्वात्सगुणेश्वरभक्तिरेव श्रेयस्करीति भावः । यद्वा—ऋषिस्तैजसः स्वप्नाभिमानी देवगणो विश्वो जाग्रदभिमानी तावर्वाचीनत्वात्त्वां न वित्तः नापि प्राज्ञः तत्र सर्वाभावात् अतो भक्तिमार्गेणैवावस्थात्रयातीतं तव स्वरूपं विज्ञातुं शक्यमिति भावः । ननु "यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन्प्राण एवैकधा भवति तदेनं वाक्सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वैः रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति, स यदा प्रतिबुद्ध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशः विस्फुलिंगाः प्रतिष्ठन्ते एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति जीवस्यैव नामरूपप्रपञ्चलयोदयाधिष्ठानत्वं श्रूयते नान्योऽतोऽस्ति द्रष्टेति द्रष्ट्रन्तरप्रतिषेधाच्च कस्येदं प्रतीचोन्यस्योपास्यत्वमुच्यते यद्येवं प्रतिबुद्धोऽसि नास्ति कश्चित्त्वदन्य इत्यवेहि । तर्हीत्यत्र 'रेफात्स्वरोपहिताद्व्यञ्जनोदयादृकारवर्णा स्वरभक्तिरुत्तरा' इति प्रातिशाख्ये स्वरव्यञ्जनयोर्मध्यः स्याद्रेफात्परतः स्वरभक्तिः ऋकाररूपाऽस्ति तस्याश्च 'द्राघीयसी तूष्मपरा' इति दीर्घत्वं विहितम् । तथा च तकारः दीर्घस्वरभक्त्या सहितो रेफः हिकार इति वर्णत्रयं वैदिकरीत्या सिद्धं 'वेदवद्वेदविदां वचनम्' इति न्यायेन च नात्र वृत्तभङ्गशंकावकाशः ( ११ ) ॥ २४ ॥

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरंत्युपदिशंति त आरुपितैः ॥
त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥ १२ ॥ २९ ॥

इतोऽपि ज्ञानं न सुशकम् उपदिशतामपि भ्रमबाहुल्यादित्याह । जनिमसत इति । असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो वदंति । असत एव ब्रह्मत्वस्योत्पत्तिं ये च पातंजलादयः । सत एवैकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदंति ये नैयायिकाः । उतापि ये च सांख्यादय आत्मनि भिदां भेदं च । ये मीमांसका विपणं कर्म फलव्यवहारमृतं सत्यं स्मरंति वदंति ते सर्वे आरुपितैरारोपितैर्भ्रमैरेवोपदिशंति न तत्त्वदृष्ट्या । "सदेव सोम्येदमग्र आसीत् ॥ ब्रह्मैव सन् ब्रह्माप्येति ॥ अनीशया

भावार्थदीपिकाप्रकाशः वंशीधरी— इतोऽस्मादपि हेतोः कुतः यत उपदिशतामुपदेष्टॄणामाचार्याणां भ्रमाधिक्यमस्ति इत इत्यन्वयः । ननु भक्त्या ब्रह्मात्मबोधेन मोक्ष इति कथं तत्र वादिनां विप्रतिपत्तिस्तत्राह—जनिमिति । असतः जगतः कार्यस्योत्पत्तिं पुनस्तस्यैव सत एकविंशतिप्रकारदुःखस्य मृतिं नाशं ध्वंसं मोक्षं ये तार्किकास्तत्र "सदेव सोम्येदमग्र आसीत्" "नासतो विद्यते भावो नाभावो विद्यते सतः" इत्यादिश्रुतिस्मृतीविरोधस्तथा स्वकारणे समवायः स्वस्मिन्सत्तासमवायो वाजनिः असतः समवायनिरूपकत्वाधारत्वयोरसंभवेन जन्यनुपपत्तिरसति सत्तासमवाये व्याघातः स्वभावपरित्यागश्च । एकविंशति दुःखानि—शरीरं षडिन्द्रियाणि षड्विषयाः षडूर्मयः सुखं दुःखञ्चेति । तत्र श्रोत्रं चक्षुर्घ्राणं त्वग्रसना मन एतानीन्द्रियाणि, शब्दो रूपं गंधः स्पर्शो रसः संकल्पादिरेते विषयाः, "बुभुक्षा च पिपासा च प्राणस्य मनसस्तथा । शोकमोहौ शरीरस्य जरामृत्यू षडूर्मयः ॥" नन्वेकविंशतिदुःखान्तर्गतयोर्मनःश्रवणयोर्नित्यत्वात्कथं तन्नाश इति चेन्न, यद्रूपविशिष्टस्य श्रवणस्य ज्ञानद्वारा दुःखहेतुतया दुःखं तद्रूपस्य कर्णशष्कुल्या नाशेन तद्विशिष्टश्रवणेन्द्रियरूपदुःखस्य नाशात् । एवमात्मसंयोगरूपव्यापारविशिष्टस्यैव मनसो ज्ञानद्वारा दुःखरूपतया व्यापारनाशेन तद्विशिष्टमनोरूपदुःखस्य नाशसंभवादिति विशेषणाभावे विशिष्टाभावात् । एतच्च मतं विरुद्धं सदेवेति श्रुत्योक्तं तदर्थश्च—हे सोम्य श्वेतकेतो इदं नामरूपं विकृतं जगत् अग्रे सृष्टेः पूर्वं सदेवासीत् सद्वस्तु निर्विशेषं निरञ्जनं नित्यं निरवयवं यद्वेदान्तेषूपपाद्यं तद्रूपमासीत् । अनेन असद्वादः परिहृतः । सतो मृतिमिह श्रुतिमाह— "अथ योऽकामो निष्काम आप्तकाम आत्मकामो ब्रह्मैव सन्ब्रह्माप्येति" "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" इति । अर्थः—सकामस्य गतिमुक्त्वा निष्कामस्य गतिमाह—यस्तु अकामो नास्ति कामोऽभिलाषो यस्य स तथा निष्कामो निर्गतसर्वकामः आप्तकामः पूर्णकामः आत्मैव कामो यस्य स एवंभूतः आत्मानं निर्विशेषमद्वैतं चिद्रूपं ज्योतिःस्वरूपं पश्यति, स यद्यपि देहवानिव लक्ष्यते तथापीह ब्रह्मैव सन् शरीरपातोत्तरकालं ब्रह्माप्येति प्राप्नोति एतदर्थद्योतकमेव "यदा सर्वे" इति श्रुतिपद्यं स्पष्टमेव अनेनैकविंशतिदुःखध्वंसो मोक्ष इत्यपास्तम् । ये चासतो ब्रह्मत्वस्य योगाज्जनिं ये पातञ्जला योगज्ञास्तत्रापि ब्रह्मैव सन्निति श्रुतिविरोधो जन्यब्रह्मत्वस्य नश्वरत्वापत्तिश्च, ये सांख्यादयः आदिना तार्किकादिग्रहः एकमेवेत्यादिश्रुतिविरोधो नीरूपस्यात्मनः प्रत्यक्षाभावाद्व्याप्त्यभावेनानुमानाप्रवृत्तेरन्यात्माग्रहणेन तद्भेदग्रहानुपपत्तिश्चेति श्रुत्यर्थः । एकं सजातीयचेतनवस्त्वंतररहितम् । अद्वितीयं विजातीयाचेतनद्रव्यान्तररहितम् । इह जगति किञ्चन नाना वस्तु नास्ति एकं ब्रह्मैव । नन्वनेकत्वं प्रतीयत इति चेदाह—एक एव परमेश्वरः भूतेभूते सर्वेषु भूतेषु व्यवस्थितः तत्रोपाधेरेकत्वे एकधा भानं तदनेकत्वे चानेकधा भानम् । तत्र दृष्टान्तः—जलचन्द्रवदिति । यथा बहुयोजनव्यापके जलह्रदे प्रतिबिम्बितश्चंद्र एकधैव दृश्यते घटशरावादिषु प्रतिबिम्बितश्चानेकधेति तद्वदिति एतावता सांख्यादिमतं स्पष्टमेव निराकृतम्, अद्वैतप्रतिपादनपरेयम् । ये च मीमांसका इति । कर्मफलं सत्यमिति निराकरोति श्रुतिः "समानवृक्षे पुरुषो निमग्नो ह्यनीशया शोचति मुह्यमानः" इत्यादि । अर्थः—समाने वृक्षे देहे निमग्नो निरूढाभिमानः पुरुषः अनीशा माया तया मुह्यमानः शोचति अनेकैरपि प्रकारैश्चिन्तामा

शोचति मुह्यमानः ॥ अविद्यायामंतरे वर्तमानाः ॥ स्वयं धीराः पंडितंमन्यमानाः ॥ जंघन्यमानाः परियंति मूढा अंधेनैव नीयमाना यथांऽधाः ॥ एकमेवाद्वितीयं ब्रह्म ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचंद्रवत्" इत्यादिश्रुतिविरोधात् । किंच वस्तुतः पुरुषस्य त्रिगुणमयत्वे सर्वमिदं संगच्छेत न तु तदस्तीत्याह । त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयीति । त्रिगुणमयः पुमानित्यनेन हेतुना या भिदा । उपलक्षणमेतद्भिदादि । सा यस्मात्त्वयि विषये अबोधकृता त्वद्विषयाज्ञानविजृंभिता । तर्हि किमज्ञानमस्ति वस्तुतः पुंसि नैवेत्याह । ततः अबोधात्परत्र परेऽसंगेऽवबोधरसे ज्ञानघने स अबोधो न भवेन्न संभवतीत्यर्थः ॥ मिथ्यातर्कसुकर्कशेरितमहावादांधकारांतरभ्राम्यन्मंदमतेरमंदमहिमंस्त्वज्ज्ञानवर्त्माऽस्फुटम् ॥ श्रीमन्माधव वामन त्रिनयन श्रीशंकर श्रीपते गोविंदेति मुदा वदन्मधुपते मुक्तः कदा स्यामहम् ॥ १२ ॥ २५ ॥

प्नोतीत्यर्थः, । किञ्चाविद्यायामन्तरे मध्ये वर्तमाना अविवेकप्रायाः स्वयं वयमेव धीरा धीमन्त इति मन्यमाना जरारोगाद्यनेकानर्थैर्जंघन्यमाना अत्यर्थं हन्यमानाः परियन्ति भ्रमन्ति । स्वयं मूढा मूढैरेवोपदिष्टा भ्रमन्तीत्यत्र दृष्टान्तमाह—अंधेनेति । कर्मफलनिंदापरेयम् । अथैतदपि स्यादेव पुरुष आत्मा यदि त्रिगुणात्मको भवेदित्याह—किञ्चेति । इदं पूर्वोक्तमसतो जनिः सतो मृतिः कर्मफलसत्यत्वात्मभेदादि तत्पुरुषस्य त्रिगुणात्मकत्वम् । स्वामिनाम्—मिथ्यातर्केण सुकर्कशं यथा स्यात्तथेति । यो महावादांधकारस्तस्यान्तरे भ्राम्यतो मन्दमन्तेः हे अमन्दमहिमन्नतीवोत्कृष्टकीर्ते त्वज्ज्ञानस्य वर्त्माऽस्फुटं भवति अतः श्रीमन्माधवेत्यादीनि नामानि वदन्संसारात्कदाऽहं मुक्तः स्यां भवेयम् । शिवनामान्यपि विष्णोर्नामानि भवन्तीति ज्ञापयितुमत्र त्रिनयनादि नामोक्तम् । नामापराधश्रवणाच्च यथोक्तं श्रीसनत्कुमारेण—" सतां निन्दा नाम्नः प्रथममपराधं वितनुते यतः ख्यातिं यातं कथमुत्सहेत्तद्विगर्हाम् । शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः ॥ " इत्यादिकं वर्णाश्रमाचारधर्मपराणामयमपराधः भगवदेकपराणां नामपराणां तु नास्तीति तेनैवोक्तं " नामापराधांस्तरति नाम्न एव सदा जपात् " इति । श्रीगोविंदपदारविंदशरणाःशुद्धा भवन्तीति दिक् ॥ * ॥ **श्रीधरानुयायिनी**—उपदिशतामपि भ्रमबाहुल्यात्तत्व ज्ञानं दुष्करमेवेत्याहुः— जनिमिति । वैशेषिकाः—परमाण्वादिष्वसत एव द्व्यणुकादेरुत्पत्तिं वदन्ति । अत्र मते " सदेव सोम्येदमग्र आसीत् " इति श्रुतिविरोधः ( १ ) पातञ्जलाश्च यथा—ताम्रादिकमसुवर्णमपि रसायनप्रभावात्सुवर्णं संपद्यते तथैवाब्रह्मभूतोऽपि जीवो योगप्रभावाद्ब्रह्म संपद्यतेऽत्र मते " ब्रह्मैव सन्ब्रह्माप्येति " इत्यादिश्रुतिविरोधः ( २ ) नैयायिकाश्च—षडिन्द्रियाणि षडिन्द्रियविषयाः षडिन्द्रियजन्यज्ञानषट्कं शरीरं वैषयिकसुखं दुःखञ्चेत्येकविंशतिदुःखानां सत्यानामेव ज्ञानान्नाशो मोक्ष इति वदन्ति, अत्र मते " नासतो विद्यते भावो नाभावो विद्यते सतः " इति गीताविरोधः ( ३ ) सांख्यादयश्च—आत्मनि वास्तवं नानात्वं वदन्ति, अत्र मते " एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतिविरोधः ( ४ ) मीमांसकाश्च—' न कदाचिदनीदृशं जगत् ' इत्युक्तेर्यज्ञादिफलं स्वर्गादिकमनाश्यं परमपुरुषार्थञ्च वदन्ति, अत्र मते " नेह नानास्ति किञ्चन" अतोऽन्यदार्तं " तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते " इत्यादिश्रुतिविरोधः ( ५ ) एवमिमे पञ्चापि मतप्रवर्तका अंधपरंपरया भ्रमेणैवोपदिशन्ति शिष्यादीन्न तु तत्त्वदृष्ट्या " अविद्यायामन्तरे वर्तमाना अंधेनैव नीयमाना यथांधाः " इत्यादिश्रुतेः " अंधस्येवांधलग्नस्य विनिपातः पदेपदे " इति न्यायेनैते स्वयं नष्टाः परानप्युपदेशेन नाशयन्तीत्याशयः । किञ्च—यदि पुरुषे त्रिगुणमयत्वं वास्तवं स्यात्तदाऽनेन हेतुना तत्र भेदादिकमपि वास्तवं स्यात् तच्चासंभवि यतो भेदादिकं त्वदीयाविद्याशक्त्यैव कल्पितं न वस्तुतः सा च जीवात्मन्येव प्रभवति न तु त्वय्यपीत्याहुः— सोऽबोधस्त्वयि न कुतः ततः

परत्र " आदित्यवर्णं तमसः परस्तात् " इति श्रुतेः तद्विषयत्वाश्रयत्वयोरयोग्ये । तव मायातीतत्वादविद्यायाश्च मायावृत्तित्वात्त्वन्नियम्यत्वाच्चेति भावः । तदपि कुतः अवबोधरसे संपूर्णचिदेकरसे यथांधकारस्ते जोंशीभूतस्वर्णाद्यावरकोऽपि तेजःपुंजं सूर्यमावरीतुमसमर्थ एवेत्याशयः । यद्वा–" तमद्भुतं बालकमंबुजेक्षणं चतुर्भुजं शंखगदायुदायुधम् " इत्येवंरूपेण तव वसुदेवगृहे दर्शनमभूत् । तथा च प्राक् तेन रूपेणासत एव तत्र जनिं तवोत्पत्तिं ततस्तेनैव रूपेण सतो वर्तमानस्य तव पुनर्मृतिं यादववंशावसाने प्रभासे मरणं तथात्मनि त्वयि सच्चिदानंदविग्रहे भिदां देहात्मभेदं तथा विपणं तव पितृमातृगुर्वादिव्यवहार मृतं सत्यं ये वदन्ति, तथा पुराणपुरुषोऽपि श्रीकृष्णस्त्रिगुणमयो जीवविशेषं एवेति ये वदन्ति पुनः शिष्येभ्यस्तथैव सर्वमिदमुपदिशन्ति त आरुपितैर्भ्रमैर्मौढयादेव न वस्तुत इत्यर्थः । श्रुतिस्मृतियुक्त्यनुभव विरोधात् । तत्फलमनिष्टमेवेत्याहुः–यद्यतः अवबोधरसे त्वयि अबोधकृता अबोधमज्ञानं करोतीत्यबोधकृत् प्रागुक्तो वादिसमूहस्तेन तत्संगेन स्फुरितेन भिदा भेदादिना हेतुना ततः जन्मांतरेऽपि परत्र पर लोकेऽपि स बोधो मोक्षो वा न भवेदेव तेषामित्यर्थः । किन्तु तेन पापेन जन्ममरणनरकवासादिदुःखमेवानिशमनुभवन्तीति यावत् । अत्रत्यस्वामिश्लोकपदार्थमाह–मिथ्यातर्केण सुकर्कशं यथा स्यात्तथेरितो यो महावादः स एवांधकारस्तस्यान्तरे भ्राम्यतो मंदमतेरित्यन्वयः । त्रिनयनेति संबुद्धिद्वयं हरिहरयोरभेदबोधनाय । यद्वा–त्रयाणां लोकानां नेत्ररूपो नायको वा । तथा श्रिया प्रेमसंपन्न्या वा भक्तानां शं सुखं करोतीत्यर्थः । गोविन्द गोकुलादौ विहारशील मुक्तः मुक्त्युत्तरकालमपि मुदा मोक्षतोऽधिकानंदेन वदन् कदा स्यामित्यन्वयः ॥ * ॥ **विश्वनाथी**–अथ तदेवानुमोदमानाः काश्चित्पारिशेष्यप्रमाणे नैव तत्र चरन्त्यः सर्वगुरुमन्यानामपि तदज्ञानं दर्शयन्ति–जनिमिति । आत्मनि सर्वस्मिञ्जीवे स्थितिं परमात्मन एकस्यामननात् । किञ्च त्वयि परमात्मनि येनावबोधेन त्वय्यन्यथाज्ञानेन कृता त्रिगुणमयः पुमान् जीव इति भिदा भेदः केनचिन्मन्यते स एव स्वयमवबोधरसवयि न संभवति किमुत तद्भिदेत्यर्थः । यस्मात्ततः परत्र प्रत्यग्रूपे तद्विषयत्वाश्रयत्वयोरयोग्य इत्यर्थः । तत्र हेतुः–अवबोधरसे । स खलु बोधस्त्वं पुनरवबोधैकरसः कथमिव यस्त्वां तिमिरमिव तेजोमालिनं विषयमाश्रयं करोत्वित्यर्थः । तस्मात्तवाचिन्त्यशक्तिवैभवस्याज्ञानादेव ते तथोत्प्रेक्षन्त इति भावः । शेषं टीकाभिप्रायम् । अत्र जनिमसत इत्यस्य परिहाराय " सदेव सोम्येदमग्र आसीत् " इति सतो मृतिरित्यस्य " यत्प्रयन्त्यभिविशन्ति ":इति यथोदके शुद्धमुदकमासिक्तं तादृगेव भवति । एवं " मुनेर्विज्ञानत आत्मा भवति गौतम इति, " समाने वृक्षे पुरुषो निमग्नोऽनी शया शोचति मुह्यमानः " इति च आत्मनि भिदामित्यस्य " एको देवः " इत्यादौ । " सर्वभूतान्तरात्मा " इति । " एकधा बहुधा चैव दृश्यते जलचन्द्रवत् " इति च । विपणमृतं स्मरन्तीत्यस्य " यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते " इति :। त्रिगुणमय इत्यादेः " आदित्यवर्णं तमसः परस्तात् " इति । अचिन्त्यशक्तित्वस्य " परास्य शक्तिर्विविधैव श्रूयते " " मायां तु प्रकृतिं विद्यात् " इत्यादिश्रुतीरवलंब्य श्रुतयोऽप्येताः " नैषा तर्केण मतिरापनेया " " प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ " " अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पंडितंमन्यमानाः । जंघन्यमानाः परियन्ति मूढा अंधेनैव नीयमाना यथांधाः " इत्याद्याः । जलचन्द्रवादित्यनेकत्वमात्रे प्रतिबिम्बतुल्यत्वान्न तु प्रतिबिंबत्वादेव ' अंबुवदग्रहणात्तु न तथात्वम् " " वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्या देवम् " इति न्यायात् ( १२ ) ॥ २९ ॥

**नीलकण्ठी**–एवं स्वमते जगदुत्पत्त्यादेर्दुर्ज्ञेयत्वमुक्त्वा परोक्तान्सृष्ट्युपपादनप्रकारान्दूषयति–जनिमसत इति । अत्रासतः सत इति पदद्वयं पञ्चम्यन्तं कार्यस्येति षष्ठ्यन्तं पदं जनिमृतिसंबंधवाचकमध्याहार्यम् । ततश्चा सतः कारणात् सतोऽसतो वा कार्यस्योत्पत्तिप्रलयाविति शून्यवादिनां द्वौ पक्षावुक्तौ तौ चात्यन्तहेयौ न ह्यसतः सतः शशशृंगस्य विकारो विवर्तो वा धनुः क्वचिद्दृष्टम्, अप्रकृतिकविकारासंभवान्निरधिष्ठानकभ्रमासंभवाच्च कथमसतः सज्जायेतेत्यसद्धेतुककार्यासंभवश्रुतेश्च । अतः सत एव कारणादसतः सतो वा कार्यस्य जनिमृती वक्तव्ये । तत्र वैशेषिकास्तार्किकाश्च कारकव्यापारात्प्रागसदेव कार्यं तदूर्ध्वमुत्पद्यते ध्वस्तञ्च निरन्वयनाशमेति ।

ईदृशावेव जीवोत्पत्तिविनाशाविच्छन्तः पाञ्चरात्राः कृतहानाकृताभ्यागमदोषं न पश्यन्ति । एवं सर्वेऽपि तैर्थिकाः सतो बंधस्य निरन्वयनाशमसतो मोक्षस्य जनिं चेच्छान्ति । सांख्यपातञ्जलास्तु असत उत्पत्तौ निदर्शनाभावा त्कूर्मावयववत्सिंधुसैंधववद्वा सत एव कार्यस्याविर्भावतिरोभावावेव जनिमृती इत्याहुः । अत्यन्तासतो जन्मायोगादत्यन्तसतो निरन्वयनाशायोगाच्च एकस्य सतो विवर्तः कार्यमिति वृद्धाः । तद्व्याख्यातं बृहदुपलब्धमित्यत्र । एवं जनिमसतः सतो मृतिं ये स्मरन्ति उत अपि च आत्मनि भिदां भेदञ्च ये स्मरन्ति सांख्यादयः यथा जन्ममरणकरणानां प्रति नियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं ।सिद्धं त्रैगुण्याविपर्ययाच्चैवेति । तार्किकास्तु परसमवेतानां जन्मादीनामात्मनि घटानामिव व्योम्नि भेदकत्वासिद्धेरात्मसमवेतमेव दुःखं स्वाश्रयभेदसिद्धिहेतुर्वाच्यं नान्यसमवेतमित्याहुः । ये च मीमांसका विपणं व्यवहारम् ऋतं प्रवाहनित्यं 'न कदाचिदनीदृशं जगत्' इति स्मरन्ति ते सर्वे आरुपितैरारोपैः क्षेत्रधर्मं क्षेत्रज्ञे दतय इवेत्यत्रोक्तदिशा स्फटिके जपाकुसुमलौहित्यवदारोप्यात्मानं दुःखादिमन्तमुपदिशन्ति स्वशिष्यान्प्रति बोधयन्ति । अत्रेदं विवक्षितं यावद्दुःखनाशो हि तेषां मोक्षः स च घटे यावद्रूपनाशवदात्मनि धार्मिनाशमन्तरेण न संभवति वक्ष्यमाणरीत्या जगतः सत्यत्वं प्रधानाद्युपादानत्वं च न संभवतीति ते 'अंधस्येवांधलग्नस्य विनिपातः पदेपदे' इति न्यायेन स्वयं नष्टाः परानपि नाशयन्तीति तदिदमाह श्रुतिः—"अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । जंघन्यमानाः परियन्ति मूढा अंधेनैव नीयमाना यथांधाः " इति । त्रिगुणमयः पुमानित्यत्रेतिशब्दः प्रकारार्थः । तेनैवंप्रकारकम् आकाशकालदिङ्मनसां पार्थिवाप्यतैजसवायवीयपरमाणूनाञ्च नित्यत्वमपि तेषु सत्त्वं निरवयवत्वञ्चारोप्य स्वोत्प्रेक्षितमारंभप्रकारमपश्यन्तः उपदिशन्तीत्यपि संग्राह्यम् । नन्वारुपितैरुपदिशन्तीत्येतदेव कुत इत्याशंक्याह—भिदा यदबोधकृतेति । भिदा भेदो यत् यस्मादबोधेन भावरूपेणाज्ञानेन अमित्रादिपदवदबोधपदस्यात्र भाववाचित्वं न त्वभावपरत्वं तेनाबोधेन कृता । इदमत्राकूतं स्वप्नद्रष्टरीव स्वरूपाबोधकृतैवेयं ब्रह्मणि जगत्कल्पना न च स्वप्नादिकं निःस्वरूपाज्ज्ञाना भावाद्भवितुमर्हति तस्य सर्वत्र सुलभत्वेन सर्वस्मात्सर्वोद्भवापत्तेः । दृश्यते हि निद्रारूपमज्ञानं व्यावहारिकौ जगज्जीवावावृत्य स्वाप्नौ जगज्जीवौ विक्षिपतीति तस्मादावरणविक्षेपशक्तियोगादज्ञानं भावरूपं त्रिगुणात्मकं प्रकृतिर विद्या माया प्रधानं देवात्मशक्तिरव्यक्तमव्याकृतामित्यादिशब्दैर्वेदान्तेषूच्यते "न तं विदाथ " इति मंत्रेऽपि जगज्जनयितृज्ञानाभावमुक्त्वा नीहारेण प्रावृता इति तन्निमित्तं भावरूपमज्ञानमुक्तम् । 'अज्ञानेनावृतं ज्ञानम् ' इति गीतास्वपि न ह्यभावस्य स्वप्रतियोग्यावरकत्वं खड्गकोशवत्संभवत्यतो भावरूपमेवाज्ञानं न च तेन द्वैतापत्तिः शक्तिशक्तिमतोरभेदात्, भेदे हि गौरश्व इतिवदग्निरुष्ण इति सामानाधिकरण्यं न स्यात् । न च वह्नावौष्ण्यं समवायसंबंधेनास्तीति तत्र सामानाधिकरण्यं युज्यते । अन्यत्र तदभावान्नेति वाच्यं वह्निसमवाययोरपि भिन्नत्वाविशेषात्संबंधांतरापेक्षावश्यंभावेनाऽनवस्थापातात्, अनुपेक्षायाञ्च समवायवदेवौष्ण्यमपि वह्नौ संबंधान्तरमनपेक्षैवा स्तु किं समवायकल्पनेन तस्माद्द्रव्यमेव तत्तदवस्थाविशेषापन्नम्, उष्णो लोहितः प्रकाशते बालो युवा वृद्धो भूर्बीजमंकुरो वृक्षः, कनकं कटकं कुण्डलमिति भेदेन ।विकल्प्यते न त्वौष्ण्यादिकं भावान्तरं स्वतंत्रमिति श्लिष्टम् । न चैवं ब्रह्मणो विचित्रशक्तियोगादैकरस्यहानिः शक्तिमद्विनाशमन्तरेण शक्त्यनाशापात्तिश्चेति वाच्यम् "तम आसीत्तमसा गूढमग्रे प्रकेतं सालिलं सर्वमाइदं तुच्छेनाभ्वपिहितं यदासीत् तपसस्तन्महिनाजायतैकम् " इति । तमःशाब्दितायाः शक्तेस्तुच्छत्वश्रवणात् न ह्यध्यस्तेनाधिष्ठानस्य सद्वितीयत्वमस्ति तमसोऽध्यस्तत्वञ्चोपरिष्टात्सत इदामित्यत्रोपपादयिष्यते । तस्मान्मामहं जानामीत्यनुभवसिद्धमात्माश्रयाविषयं वा जीवाश्रयं ब्रह्मविषयं वाऽज्ञानं जगत्कारणमस्तीति सुष्ठूक्तम् । भिदा यदबोधकृतेति । आरुपितैरुपादिशंतीति च । ननु स्वप्नदृष्टवन्ममापि कारणीभूताज्ञानाधीनतयानीश्वरत्वं स्यादत आह—त्वयि नेति । स अबोधः त्वयि आश्रये न भवेन्न संभवति कुतः ततः परत्र अबोधात्परस्मिन् "आदित्यवर्णं तमसः परस्तात् " इति श्रुतेः । अत एवावबोधरसे शुद्धचिन्मात्रे । तथा च श्रुतिः—"स यथा सैंधवघनोनंतरोबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मानंतरोबाह्यः कृत्स्नप्रज्ञानघनः " इति । अकार्यकारणे त्वय्यज्ञानसंबंधसंभावनापि नास्ति मायाशबलस्यापि तवैंद्रजालिकवन्मायाप्रयोक्तुर्न मायाधीनत्वम् " अस्मान्मायी सृजते ।विश्वमेतत्तस्मिँश्चान्यो मायया सन्निरुद्धः " इति । मायानियामकात्त्वत्तो मायानियम्यस्य श्वेताश्वतरैः पृथगाम्नानात् ( १२ ) ॥ २९ ॥

सदिव मनस्त्रिवृत्त्वयि विभात्यसदा मनुजात्सदभिमृशंत्यशेषमिदमात्मतयात्मविदः ॥
नहि विकृतिं त्यजंति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम ॥ १३ ॥ २६ ॥

ननु यद्यसन्नोत्पद्यते यदि च त्रिगुणमयः पुरुषो न भवति तर्हीदं प्रपंचजातं पुरुषश्च पृथङ् नास्तीत्युक्तं स्यात् कथं तर्हि तयोः सत्त्वेन प्रतीतिरत आह। सदिव मन इति। मनोमात्रविलसितमिदं त्रिवृत्रिगुणात्मकं प्रपंचजातमसदेव सदिव विभाति। कथमिति चेत्तत्राह। त्वयीति। त्वय्यधिष्ठाने। अधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः। न केवलमिदंकारास्पदं किंत्वा मनुजात्। मनुजः पुरुषः। अभिविधावाकारः। पुरुषमभिव्याप्येति। पुरुषस्यापि पृथक्सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः। तथाच श्रुतिः। "असतोऽधिमनोऽसृज्यत ॥ मनः प्रजापतिमसृजत ॥ प्रजापतिः प्रजा असृजत ॥ तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किंच" इति। नन्वात्मविदामपि विश्वं सदेव स्फुरत्यतः कथमसत्स्यादत आह। सदभिमृशंतीति। आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव सदभिमृशंति सदिति जानंति। आत्मकार्यत्वान्न पृथगित्यर्थः। तथाहि। यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयति। नहि विकृतिमिति। कनकस्य विकृतिं कुंडलादिकं कनकार्थिनो न त्यजंति। अत्र हेतुः। तदात्मतया कनकरूपत्वेनेत्यर्थः। अतः स्वकृतमिदं विश्वमनुप्रविष्टं च पुरुषरूपमात्मतयैवावसितं निश्चितम्॥ यत्सत्त्वतः सदाभाति जगदेतदसत्स्वतः ॥ सदाभासमसत्यस्मिन्भगवंतं भजाम तम् ॥ १३ ॥ २६ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—अत्राशंकते—नन्विति। पृथङ्नास्ति किन्त्वेक एवेत्येवं स्यात् भवत्विति चेदाह—कथमिति। तयोः प्रपञ्चपुरुषयोः। नन्वसतः प्रतीतिः कथमिति चेदाह—त्वयीति। इत्यर्थ इति। रज्जुसत्तयाऽहिरसन्नपि यथा सद्वत्प्रतीयते इति भावः। इदंकारास्पदं घटादि पुरुष आत्मा। इत्यर्थ इति—पृथक्सत्त्वप्रतीतिर्न वास्तवी स्वप्नादिवन्मनस्येवेति भावः। विश्वस्य मानसत्वे प्रमाणमाह—तथा चेति। असतः अव्याकृतात्परमेश्वरादधि अधिकं समष्टिरूपं मनोऽसृज्यताभूदित्यर्थः। कर्मकर्तरि प्रयोगः अनायासेन सृज्यमानत्वात्स्वयमभूदित्यर्थः। पच्यते ओदनः स्वयमेवेत्यादिवत्। तच्च मनः प्रजापतिं ब्रह्माणमसृजत्स च प्रजा असृजत् तत्तस्मादिदं दृश्यमानं किञ्च किञ्चन वस्तु तन्मनस्येव मनोभावापन्नेऽव्याकृते एव परमं यथा भवति तथा प्रतिष्ठितं प्रकर्षेण स्थितमित्यर्थः, सृष्टिपरेयम्। पुनराशंकते—नन्विति। यतो ज्ञानिनामपि सत्त्वेन प्रतीयतेऽतो हेतोः। इत्यर्थ इति—कार्यस्य कारणात्मकत्वादिति भावः। अत्रात्यागे। इत्यर्थ इति—कुण्डलादिरूपत्वेन स्वर्णमेव प्रतीयते न तस्य पृथक्सत्त्वं दृष्टमिति भावः। यतः कारणमेव कार्यरूपेण प्रतीयतेऽतो हेतोः। आत्मतया परमात्मरूपतया। स्वामिनाम्—यदिति। एतज्जगत् असत्स्वतः स्वरूपेण यत्सत्त्वतः यतस्त्वत्तः सत्तां प्राप्य तत्सत्यमाभाति। अस्मिन्नसति संसारे सदाभासं सर्वदा प्रकाशमानम् ॥ * ॥ **श्रीधरानुयायिनी**—ननु कथं भिदाया मिथ्यात्वं सत्यत्वेन प्रतीतेरित्याशंक्याहुः—सदिवेति। जलचन्द्रवद्ध्यस्तेन प्रमात्रा सहितं त्रिगुणात्मकमिदं प्रपञ्चजातं यतो मनोमात्रविलसितमतोऽसदेव तदप्यधिष्ठानस्य तव सत्तयैव त्वयि सदिव रज्जुसर्पादिवद्विभाति। आत्मविदस्तु भोक्तृभोग्यात्मकमिदं विश्वं न शिष्यत इत्यशेषं यथा स्यात्तथाऽऽत्मतयैव सदिति जानन्ति न तु प्रमातृप्रमेयादिविभक्तरूपेणापि यदुपादानात्मकं यत्कार्यं तत्तेनैव रूपेण प्रतीयते उपादीयते चेति प्रसिद्धेः। यथा सुवर्णविकारं कुण्डलादिकं सुवर्णार्थिनो न त्यजन्ति किंतु सुवर्णत्वेन तद्गृह्णन्त्येव तथात्रापि। अतः स्वकृतमिदं

विश्वं तदनुप्रविष्टं पुरुषस्वरूपञ्चात्मतयैव निश्चितम् । यद्वा—अवसितमवसानं बाधं प्रापितमित्यर्थः । एतदेवापरोक्षज्ञानं संसारबंधमोचकम् । एवञ्चाज्ञानां :सत्यत्वेन प्रतीयमानापि भिदा ज्ञानोदये मिथ्यैव ! ज्ञानञ्च भक्तिं विना नैवोदेतीत्याशयः । यद्वा—आमनुजात् मनुजमविद्याद्युपहितं जीवमभिव्याप्य त्रिवृत्त्रिगुणात्मकमशेषमिदं विश्वं मनोविलसितमतः सदिव शोभनमिव वर्तमानमप्यसत् अशोभनमेव । पुनरेवंभूतमपि यदि त्वयि त्वत्सेवानिमित्तं समर्पितं स्यात्तदा सच्छोभनमेव विभाति । नन्विदमज्ञानामेव किमित्याशंक्याहुः—आत्मविदस्त्यक्तदेहमात्रैषणा अपि त्वयि समर्पितमिदमात्मतया वल्लभतयाऽभिमृशन्ति स्पृशन्ति अङ्गीकुर्वन्ति नान्यवत्त्यजन्तीत्यर्थः । अत्यागे दृष्टान्तमाहुः—नहीति । यथा सुवर्णस्य विकृतिं स्वसंबंधाद्विकारकारकमपि रौप्यताम्रादिकं तदात्मया सुवर्णप्राप्तिहेतुत्वेन तत्स्वरूपतया नहि त्यजन्ति तद्वत् । किञ्च—स्वकृतं त्वया स्वयं निर्मितं पुनरात्मतयांतर्यामितया त्वयाऽनुप्रविष्टं विश्वमतस्त्वदावासस्थानमित्यपि निश्चित्य न त्यजन्तीत्यर्थः ॥ * ॥ **विश्वनाथी—**अत्रासतोऽधि मनोऽसृज्यतेत्यादिश्रुतिरपि अत्रासच्छब्देन सच्छब्दप्रसिद्धकार्यपरंपरातिरिक्तं सर्वकारणं श्रीभगवानुच्यते "असद्व्यपदेशान्नेति चेन्न, धर्मान्तरेण वाक्यशेषात्" इति न्यायात् । अधिमनःशब्देन सर्वाधिकारि तदयमेव मनः ततश्चासत इत्यसता तेनासृज्यतेति तदर्थं व्यापारयामासेत्यर्थः । अथ पुनरेव नारायणः—" सोऽन्यं कामं मनसा ध्यायेत्तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् ता इमाः प्रथमापः तासु तेजो हिरण्मयमण्डं तत्र ब्रह्मा चतुर्मुखोऽजायत " इति श्रुतेः । एतमर्थमज्ञातुः कस्यचित्पूर्वपक्षमाशंक्य समादधते—तत्राशंका, ननु—श्रुत्या शून्यमेव प्रथममुपदिष्टं तदनंतरं मनोविज्ञानपरंपरा ततोऽसत एव पर्यवसानेऽपि स्थितिः स्यात् तथा मनसः प्रधानत्वात्तर्क एव सर्वत्र ज्ञाने हेतुः श्रुतेस्तु तत्कल्पितत्वात्तदनंतरमेव कथं पुनः श्रुत्या तत्तद्दूष्यत इति । समाधानं तु—सदिवेति । त्रिवृत् उत्पत्तितो गुणत्रये वर्तमानं मनस्त्वयि असत् प्रवर्तमानं चेत्तदा सदिव यथार्थदर्शीव प्रतीयते वस्तुविचारे त्वयथार्थदर्श्येवेत्यर्थः । "तर्काप्रतिष्ठानात्" इति भावः । यत एवात्मविदः सर्वमूलस्वरूपस्य तव वेत्तारो ये ते तु जीवमभिव्याप्याशेषमिदं सद्रूपत्वेनानुगतं त्वामेव पश्यन्ति तच्चात्मतया सर्वमूलस्वरूपतया । यथा पाद्मे—"चेतना तु द्विधा प्रोक्ता जीव आत्मा च सा प्रभो । जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥ इतरेष्वात्मशब्दस्तु सोपचारोऽभिधीयते ।" इति । तदेवार्थान्तरन्यायेन बोधयन्ति—नहीति । कनकस्य विकृतिं कटककुण्डलादिकं कनकवणिजो हि न त्यजन्ति । तत्र हेतुः—तदात्मतया तदनुगततन्मात्रदृष्ट्येति । उभयत्र साम्यं योजयन्ति—स्वकृतमिति । स्वेन कृतं स्वेनाप्यनुगतञ्चेति । उपसंहरन्ति । तस्मादात्मतया तत्स्वरूपतयैव निश्चितमिति । तस्मान्न शून्यस्य कारणत्वं न वा मनसः प्राधान्यं किन्तु तवैव तत्तदिति त्वद्वचनरूपायाः श्रुतेरेव मुख्यं प्राधान्यमिति भावः । अत्र श्रुतयः—"यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ यस्तु विज्ञानवान्भवति समनस्कः सदाशुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥" इत्याद्या "औपनिषदः पुरुषः" इत्याद्याश्च ( १३ ) ॥ २६ ॥

**नीलकंठी—**ननु भेदस्याबोधकृतत्वे शुक्तिरजतवन्मिथ्यात्वं स्यात्तथा च कथं लौकिकवैदिकव्यवहार इत्यत आह—सदिव मन इति । आमनुजात्त्रिवृन्मनः असदपि सदिव त्वयि विभातीति संबंधः । आ इत्यभिविधावाङ् । मनुजः प्रमाता जलचन्द्रवत्प्रमातुरप्यध्यस्तत्वेन तत्सहितं मनोमयं सर्वं मन एव स्वरूपेणासदपि सदिव त्वयि अधिष्ठाने स्वप्नदर्शीव विविधं भाति भेदस्य मिथ्यात्वेऽपि स्वप्नवद्व्यवहारोपपत्तिरिति भावः । मनो विशिनष्टि—त्रिवृदिति । त्रिभिर्मातृमानमेयैः सत्त्वरजस्तमोभिस्तेजोऽबन्नैर्वा सह वर्तते इति त्रिवृत् । तत्र तेजोऽबन्नात्मत्वे मनसस्तत्त्वान्तरत्वनिरासो लभ्यते । "तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति तेजोऽबन्नानां त्रिवृत्करणश्रुतेः । तच्चैषामेकैकस्मिन्नर्धे स्वांशः अर्धमितरयोरंशः समत्वेनेति तदेतत्त्रिवृत्करणं पञ्चीकरणोपलक्षणार्थं सृष्टिविदित्येके । अन्ये तु संप्रदायागतमपि पञ्चीकरणं नाद्रियन्ते त्रिवृत्करणमेव श्रौतं विवक्षितमित्याहुः । ननु स्वप्नवद्व्यवहारश्चेद्बुद्धानां तद्वदेव स लुप्येतेत्याशंक्याह—सदिति । आत्मविद इदं सत् अशेषं न शिष्यते इत्यशेषं यथा स्यात्तथा आत्मतयाभिमृशन्ति तत्त्वज्ञाः परिदृश्यमानं कार्यं द्विचन्द्रवत्सहैव बाधेनात्मतया

तव परि ये चरंत्यखिलसत्त्वनिकेततया त उत पदाऽऽक्रमंत्यविगणय्य शिरो निर्ऋतेः ॥
परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखाः ॥ १४ ॥ २७ ॥

**ननु "सत्यं ज्ञानमनंतं ब्रह्म ॥ नेह नानाऽस्ति किंचन ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति " इत्यादिश्रुतिभिरेवंभूतस्य भगवतः प्रतिपादनात्तज्ज्ञानं सुकरमेवेति**
जानन्ति समाधौ भेददर्शनाभावेऽपि व्युत्थाने दग्धपटवदविद्यासंस्कारादनुवर्तमानमनःकल्पितं भेदं प्रत्याख्यातुं समर्थास्ते इत्यतो न तेषां व्यवहारलोप इति भावः । ननु, स्वरूपानंदतृप्तास्ते मातृमानमेयात्मकं मनोव्यवहारं कुतो न त्यजन्तीत्यत आह–नहीति । अत्र मनस इति षष्ठ्यन्तं विपरिणामेनानुषञ्जनीयम् । कनकस्येति दृष्टान्तार्थमुक्तम् । तदात्मतयेति हेतुः । यथा कनकार्थिनः कनकस्य विकृतिं कुण्डलादिरूपां कनकात्मतया न त्यजन्ति एवमात्मविदोऽपि प्रारब्धकर्मावष्टब्धमनःकल्पितदेहेन्द्रियादिनिर्वाहार्थिनः मनोविकृतिं मात्रादिरूपां व्यवहृतिं चक्रभ्रमिवदनुवर्तमानमनस्तादात्म्यमत्तया न त्यजन्तीत्यर्थः । मनस्तादात्म्ये बीजमाह–स्वकृतमनुप्रविष्टमिति । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः । स्वकृतं स्वस्मिन्कल्पितमनुप्रविष्टं स्वेनैव सदात्मतानुविद्धं शुक्तिसत्तयेव तत्र कल्पितं रजतं प्रतीच्यध्यस्तत्वात्तत्त्वविदामपि व्यवहारेऽस्त्येव मनस्तादात्म्यमित्यर्थः । मनसोऽध्यस्तत्वेऽनुमानमाह–इदमात्मतयावसितमिति । इदमर्थास्पदत्वेन दृश्यत्वेन हेतुनेति यावत् । अवसितमवसानं बाधं प्रापितम् । तथा चायं प्रयोगः सूचितः । अहमादिर्बाधयोग्यः दृश्यत्वात्स्वप्नमायादिवदिति । न च पुष्कलार्थक्रियाकारित्वेन बाधायोग्यत्वमपि सिद्ध्यतीति वाच्यम्–गरुडोऽस्मीति भावनायाः सत्यविषनिवर्तकत्वेऽपि बाधदर्शनात् । एवं च तुच्छादज्ञानान्मनस उत्पत्तिः ततः प्रमात्रादिविकल्प इति सिद्धम् । तथा च श्रुतिः–"असतोऽधि मनोऽसृज्यत मनः प्रजापतिमसृजत प्रजापतिः प्रजा असृजत तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किञ्च" इति ( १३ ) ॥ २६ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–ज्ञानस्य सुलभत्वेनातीव कठिनायां भक्तौ प्रयासो न कार्यो ज्ञानैकावाप्तव्यत्वेन मोक्षस्येत्याशंकते–नन्विति । एवंभूतस्य सत्यज्ञानादिरूपस्य तद्ज्ञानं भगवज्ज्ञानमिति श्रुत्यर्थः पूर्वमुक्तः । इत्यर्थ इति–"एक एव हि भूतात्मा " इत्यादिश्रुतिभिः सर्वभूतावासत्वेनोक्तत्वादिति भावः । इत्यर्थ इति–" ये मां सर्वेषु भूतेषु भगवंतमुपासते । ऐहिकामुष्मिकं त्यक्त्वा

---

१–एक एव हीत्यादेरर्थः । जगतो ब्रह्मादिभेदेन प्राप्तमीश्वरानेकत्वं निरस्यति–एक इति । "एक एव हि रुद्रो न द्वितीयाय तस्थुः" इति । रुद्रः परमात्मा "एष एव रुद्र एष एवेन्द्रः" इत्यादिश्रुतेः । एतेषामैश्वर्यं प्राकृतमनित्यञ्चाभासिकञ्चेति एवकारेणासूचि । तत एकत्वं कारणत्वञ्चाव्याकृते पर्यवसितं निरस्यति–देव इति । कालत्रयेऽपीतराऽनपेक्षयाऽखण्डचिदात्मना स्वयमेव दीप्यते प्रकाशत इति देवः । अव्याकृतस्य जडत्वेन देवत्वासंभवात् स्वतः कारणत्वानुपपत्तेः देवत्वैकत्वसंपत्त्या रवेः प्राप्तमीश्वरत्वं निरस्यन्नाह–सर्वेति । सर्वेषु भूतेषु चिदेकरसात्मना स्थित इत्यर्थः । एतेन रवेर्देवत्वे एकत्वेऽपि चिदात्मना भूतेष्ववस्थितेरसत्त्वादीश्वरत्वाभावः । सर्वभूतेषु सर्वदैकरूपेण चित्प्रकाशात्मना स्थितत्वेन ब्रह्मणः प्राप्तं सर्ववेद्यत्वं निरस्यति–गूढ इति । सर्वभूतेषु प्रकाशात्मना विद्यमानत्वेऽपि मेघैः सूर्यवदविद्यातत्कार्यैस्तिरोहितत्वात्परमात्मा न सर्वेषां वेद्योऽस्तीत्यर्थः । भूतेषु गूढत्वे सति ब्रह्मणा प्राप्तं बुद्ध्यादिवत्परिच्छिन्नत्वं निरस्यति–सर्वव्यापीति । घटादिकं मृदिव जगद्बहिरंतश्च सर्वतः स्वसत्तया व्याप्नोतीति सर्वव्यापी बहिरन्तःपूर्णत्वाद्ब्रह्मणः परिच्छित्त्यभावः । गूढात्मना सर्वव्यापकत्वमाकाशेऽस्ति तत्राह–सर्वभूतांतरात्मेति । सर्वेषां भूतानामन्तर्बुद्धिगुहायामात्मरूपेण तिष्ठतीत्यर्थः । सर्वव्यापकत्वेऽप्याकाशस्य जडत्वेन सर्वभूतात्मत्वासंभवान्न ब्रह्मत्वम् सर्वभूतात्मत्वे ब्रह्मणः कर्मकर्तृत्वतत्फलभोक्तृत्वसंसारित्वञ्च प्राप्तं तत्राह–कर्माध्यक्ष इति । उपाधिमधिष्ठाय तद्धर्मानीक्षत इत्यध्यक्षः, भूतानां तत्कर्मणां तत्फलभोगानाञ्च साक्ष्येवात्मा निरवयवत्वान्निष्क्रियत्वाच्च स्वयं कर्म न किञ्चित्करोति नापि भुंक्त इत्यर्थः । ब्रह्मणः सर्वभूतान्तरत्वे भूताश्रयत्वं तदधीनत्वं चाप्तं निरस्यति–सर्वभूताधिवास इति । वसत्यस्मिन्सर्वमिति वासः अधिकतमश्चासौ वासश्चेत्यधिवासः शुक्तौ रजतवद्दर्पणे पुरवत्स्वस्मिन्कल्पितानां भूतानां परमात्माऽधिवासोऽधिष्ठानमेवाऽस्ति न तु स्वयं तदधिकरण इत्यर्थः । न केवलं कर्मणामेव ज्ञाताऽयमात्मा किन्तु भूतानां तद्धर्माणां तत्कर्मणां तत्फलानुभूतीनां तदवस्थानाञ्च द्रष्टेत्याह–साक्षीति । बुद्धितद्विकाराणां सर्वेषां साक्षीत्यर्थः । साक्षादीक्षत इति साक्षीत्यात्मन ईक्षणक्रियाकर्तृत्वे प्राप्ते सत्याह–चेतेति । चेतयितृत्वमविक्रियत्वं स्वयमविक्रियात्मना सर्वं पश्यतीत्यर्थः । अविक्रियत्वे हेतुः–केवल इति । केवलो निरवयवः निरवयवत्वादविक्रियः स्वयमविक्रियः सन्नेव सर्वं पश्यतीत्यर्थः । शब्दगुणमाकाशमिति निरवयवस्याप्याकाशस्य यथा गुणवत्त्वं तथा ब्रह्मणो निरवयवस्यापि सत्त्वचित्त्वादिगुणवत्त्वे प्राप्ते परिहरति श्रुतिः–निर्गुण इति । "आत्मन आकाशः संभूतः " इत्याकाशस्य जनिश्रुतेस्तस्य जनिमत्त्वेन सावयवत्वादाकाशस्य गुणवत्त्वं युक्तम् । निष्कलमिति श्रुतेर्ब्रह्मणो निरवयवत्वाद्गुणवत्त्वमनुपपन्नमेव ततः सत्त्वचित्त्वादिस्वरूपमेव भवति न तु गुण इति परस्य ब्रह्मणोऽखिलविशेषाभावप्रतिपादनाय चकार इति शंकरानंदो गीतायां व्याचख्यौ ॥

**नीलकंठी**—एवं क इहेत्यादिश्लोकत्रयेण जगत्कारणस्य दुर्ज्ञेयत्वं तमसो जगत्कारणत्वं जगतो मनोमात्रत्वञ्चोक्तम् अर्थाच्च तत्त्वज्ञानेनाज्ञाननाशे तत्कार्यस्य मनसो नाशः तस्मिन्सति संसारोच्छेद इति श्रौतयौक्तिकाविचारः सांख्यनामोक्तः अत्यन्तबुद्धिमान्द्याद्वा विशिष्टगुर्वाद्यलाभाद्वा ये तत्राशक्तास्ते निर्गुणब्रह्मोपास्तिलक्षणयोगेनापि मुच्यन्त इत्याह—तव पारि ये चरन्तीति । येन ये विमुखा अखिलसत्त्वनिकेततया तव परिचरन्ति ते उत निर्ऋतेः शिरः पदाक्रमन्तीत्यन्वयः । ये पुरुषा नये श्रवणमननात्मकन्यायविचारे विमुखा अयोग्याः संतः अखिलसत्त्वनिकेततया सर्वभूताधिवासतया "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति श्रुत्युक्त्या । तव त्वां कर्मणि षष्ठी । परिचरंति "ईश्वरो जीवकलया प्रविष्टो भगवानिति । प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥" इति स्मृत्युक्तप्रकारेणोपासते व्युत्थानकाले । समाधिकाले तु—उपास्यंशमनंतर्भाव्य केवलं निर्गुणमुपासते ते उत तेऽपि विमुच्यंत इति शेषप्रंथार्थः । यद्वा—अखिलं रजस्तमोबोधशून्यत्वेन कृत्स्नं शुद्धं सत्त्वमंतःकरणसत्त्वं तदेव निकेत उपलब्धिस्थानं ज्ञापकं वा यस्य तस्य भावस्तत्ता तया । "विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति श्रुतेः । तत्र शुद्धसत्त्वे प्रकाशमानतया हेतुना ये त्वामात्मानं सर्वप्रत्यग्भूतं परिचरंति तत्तदुपाध्याकारतां परित्यज्य प्राप्नुवंति त उत तेऽपि निर्ऋतेः शिरः अविगणय्य हेलया पदा आक्रमंति मुच्यंत इत्यर्थः । विनापि श्रवणादिप्रनाडीं केवलोपास्त्यापि मुच्यंत इति गीतास्वपि दृष्टम् । "अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते । तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः ॥" ( १ ) । ध्यानदीपे—"अत्यंतबुद्धिमांद्याद्वा सामग्र्या वाप्यसंभवात् । यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥ " ( १ ) । वासिष्ठे—"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानञ्च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ १ ॥ असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिर्णयः । प्रकारौ द्वौ ततो देवो जगाद परमः शिवः ॥ २ ॥ " इति । ननु—"ज्ञानादेव तु कैवल्यं " "नान्यः पंथा विद्यतेऽयनाय " इति प्रकारान्तरव्यावृत्तेः कथमुपास्त्यापि मुच्यन्त इति उच्यते उपास्तेरपि साक्षात्कारार्थत्वान्न कोऽपि दोषः । यथोक्तं भगवता—"यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं सांख्यञ्च योगं च यः पश्यति स पश्यति ॥ " ननु—कुतो मत्परिचर्याया ईदृशो महिमेत्याशंक्य तत्र सर्वेश्वरत्वादित्याह—परीति । विबुधान्सूर्यादीन्गिरा आज्ञावचनेन पशूनिव पारिवयसे काल्यसे । "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ " इति । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः " इत्यादिश्रुतिभ्यः अत्यल्पमिदमित्याह—अपि तानिति । तानपि विबुधानपि त्वयि कृतसौहृदाः नारदादयः खलु निश्चितं पुनन्ति दर्शनादिना । अयमर्थः—द्विविधमुपास्त्यपरपर्यायं ध्यानं "योषितमग्निं ध्यायीत" इत्यादि प्रभूतविषयं भावनारूपमेकम्, परोक्तस्य स्त्यादिगतसूक्ष्मविशेषस्य ग्रहणाय चक्षुष इव श्रुत्युक्तस्य प्रतीचोऽवस्थात्रयातीतनिर्विशेषत्वस्य ग्रहणाय मनसः प्रणिधानरूपं द्वितीयम्, आद्यं मानसक्रियारूपत्वादनित्यफलं द्वितीयं धर्ममेघसमाधिरूपं वस्तुतत्त्वविषयत्वान्मुक्तिहेतुरपि " क्षणमेकं क्रतुशतस्य चतुःसप्तत्या " इति श्रुतेर्धर्मर्द्धिहेतुरपि ध्यानजधर्माधिक्याच्च नारदादयोऽन्यान्पुनन्ति स्वयञ्च जीवन्मुक्तिसुखं पुष्कलमनुभवन्ति । श्रवणादिप्रनाडप्राप्तज्ञानास्तु स्वयं कृतार्था अपि पुष्कलतपोवृद्ध्यभावान्नान्यं पातुं क्षमा इति ध्यानयोगस्य श्रेष्ठत्वमिति । अत्रायं योगानुष्ठानक्रमः— शमदमादिसंपन्नो मनोऽनुकूले शुचौ देशे स्थिरसुखमध्यासीनः उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशान्तं " य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुंडरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः । अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमन्तः पुरुषे ज्योतिः " इत्याद्याध्यात्मविद्यानां " सैषा दहरविद्याऽत्र द्विधा ते परिकीर्तिता । आध्यात्मिकी भवेदेका तथाऽन्या त्वाधिभौतिकी ॥" इति शैवे चिदंबरमाहात्म्यादौ आधिभौतिकीकरणात् । " ध्यानमन्तः परे तत्त्वे लक्ष्येषु च निवेशयेत् " इति बाह्यलक्ष्यश्रुतेश्च उमामहेश्वरप्रतिमायां सूर्यमण्डले वा निबिडतरशुक्लभास्वरांधकारकल्पसततांदितानस्तमितरूपांतरदर्शनापलापिषु सूर्यरश्मिषु वा गुरूक्तयुक्त्या दत्तदृष्टिरुमासहायादिशब्दान्संज्ञासांज्ञिसंकेतग्राहकानुमानस्मृतिपूर्वकं तदर्थांश्चानुसंदधानोऽयमहमस्मि सांबशिव इत्याद्याकारं प्रत्ययांतरानंतरितां सवितर्काख्यां भावनां कुर्यात् । इयमेवोक्तविधानुसंधानाकारशून्या देहाहंधीवदर्थमात्रनिर्भासाकारा निर्वितर्केत्युच्यते । तथा च श्रुतिः— " अतो विशेषविज्ञानं विशेषमुपगच्छति " इति । अतो विशेषेषु

ध्याननिवेशनाद्विशेषः स्थूलभौतिकः तत्र विविधं शब्दादिविकल्पोपेतं ज्ञानं विज्ञानं विशेषं विगलितः शेषो ज्ञानादन्यो विकल्पो यस्मात्तत्तथेति श्रुत्यर्थः । इदमेव प्रतिमादिकं यदा विषयेभ्यः प्रत्याहृतकरणः

स्वप्न इव विगलितस्थूलदेहाभिमानः पूर्ववदेव शब्दाद्युल्लेखसहितं च समापद्यते तदा ते सविचारनिर्विचारसमापत्ती उच्येते । एतद्द्वयं मानसम् । एताश्चतस्रः समापत्तयः सूत्रिता भगवता पतञ्जलिना । तत्र

शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता । अतिपारिशुद्ध्विर्वर्जनं स्वरूपशून्याहमिदं भावयामी

त्याकारशून्या, उत्तरत्र सूक्ष्मविषयेति विशेषणात्पूर्वयोः स्थूलविषयत्वं सिद्धम्, तेन स्थूले आत्ममनःशरीरविषयाणां सांनिध्यमस्ति सूक्ष्मे आत्ममनसोरेव । स्थूलेऽपि यदा देहासंगाद्वृत्तिलाभस्तदाऽसौ

महाविदेहा नाम धारणा । अत्रेदमुक्तम्—“ बहिरकल्पिता वृत्तिर्महाविदेहा तत्संयमात्प्रकाशावरणक्षयः ” इति । अस्यां चावश्यं ध्येयस्यातिवाहिकत्वं व्यक्तीभवति । तथाहि वितर्कालम्बने प्रतिमादौ यद्यपि

लोकदृष्ट्या देवतादृष्टिरध्यस्यते तथाप्यातिवाहिकी देवतैवाधिभौतिक्याः प्रतिमायास्तत्त्वं शुक्तिरिव रूप्यस्य तत्र भातस्य । यथोक्तं वासिष्ठे—“ आतिवाहिक एवायं त्वादृशैश्चित्तदेहकः । आधिभौतिकया बुद्ध्या

गृहीतश्चिरभावनात् ॥ ” इति । अयं प्रपञ्चः अतिक्रम्य शिलोदरादिकमपि वहत्यभिमानिनमित्यतिवाहि अप्रतिमं भूतसूक्ष्मं तेन निर्वृत्त आतिवाहिकः । अस्यापि तत्त्वं चित्तदेहकः चित्तमेव देहो यस्य स तथा ।

एवं च यथा तीव्राभियोगेन निरीक्ष्यमाणे शुक्तिरजते रजतं तिरोधीयते शुक्तिश्च प्रकाशते, एवं देवताभावनादार्ढ्ये प्रतिमाया अचेतनत्वं तिरोधीयते शास्त्रीयं चेतनं देवतारूपमाविर्भवति । अत एव दृढभक्ता

बाणादयः स्वाराध्यैः शंकरादिभिः सह व्यवहरन्तीति बहुलमुपाख्यायते । एवं परिच्छिन्नाविग्रहवत्या देवताया अपि तत्त्वमनंतत्वमेव । तद्भावनया तत्परिच्छेदातिरोधानेऽनंतं सर्वतःपाणिपादं तदित्याद्युक्तलक्षणं

विश्वरूपमपि प्रकाशते, यदपश्यद्यशोदा कृष्णमुखे । विश्वरूपाध्यायोऽप्येतमर्थमुपबृंहयति । तदेतदेव निर्वितर्कजं प्रत्यक्षं प्रकृत्योक्तं योगभाष्ये तत्परं प्रत्यक्षं तच्च श्रुतानुमानयोर्बीजमिति विश्वरूपस्यापि तत्त्वं

निर्विशेषसन्मात्रम् । तदेव चक्षुरादीनां प्रमेयामित्युक्तम् ‘ बुद्धीन्द्रियमनःप्राणान् ’ इत्यत्र । उपपद्यते चैतत् । यथा गोपुराकारे मुकुरे दत्तदृगपि तमतिस्वच्छत्वादजानंस्तत्र प्रतिबिम्बितं पुरमेव पश्यति यथा वा

हिंगुलारूढं स्फटिकं पश्यन्नेव चन्द्रिकायां नीलमणिमिव सौरालोके पद्मरागमिव च मन्यते । एवं चक्षुःसौक्ष्म्यतारतम्यात्प्रतिमादौ चेतनत्वमनंतत्वं सन्मात्रत्वं चास्मितापरपर्यायं गृहीत्वा विलीयते तदेतत्स

म्यग्दर्शनं श्रुत्याप्युक्तम्—“ मानसे च विलीने तु यत्सुखं स्वात्मसाक्षिकम् । तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोकः एव सः ॥ ” इति । सोऽवितर्कक्रमोऽनलवत्स्वकृतानुकृतिरित्यस्य द्वितीयव्याख्यानरीत्या कौलिकन्या

येन बहुतरमहामुनिमहीकृतायां श्रीकण्ठश्रीनाथादिप्रतिमायां प्रयुक्तः क्षिप्रं प्रसिद्ध्यति निबिडतरार्करश्म्यालम्बनस्त्वव्यवधानेन विश्वरूपमेव गोचरयन्नाशुतर इति विवेकः । निर्विचारवैशारद्यफलं सार्वज्ञ्यं पातञ्जले

प्रोक्तम् । तत्सर्वस्य कल्पितत्वं विना न संगच्छते इत्युक्तं वेदान्तकतके—“ अतीतानागतं वस्तु वीक्षते करबिल्ववत् । योगी संकल्पमात्रोत्थमिति शास्त्रेषु डिंडिमः ( १ ) मायायां सर्वदा सर्वं सर्वावस्थमिदं जगत् ।

अस्तीति तदुपाधिश्चित्सार्वात्म्यात्सर्वमीक्षते ( २ ) आरंभपरिणामाभ्यां स्वेन रूपेण यन्न सत् । अतीतानागतं वस्तु योगी तद्वीक्षतां कथम् ( ३ ) संकल्पमात्रभातं वस्त्वतीतादि यदीष्यते । नष्टस्त्रीदर्शनाभं

तत्स्याद्योगिज्ञानमप्रमा ( ४ ) योगिसंकल्पमात्रेण तस्योत्पत्तिर्यदीष्यते । ईशसंकल्पमात्रेण सर्वोत्पत्तिस्तदेष्यताम् ( ५ ) नारंभे परिणामे वा दृष्टः कालाद्यतिक्रमः । कल्पनायां तु स स्पष्टः

स्वप्नमायाभ्रमादिषु ( ६ ) तस्मान्नाणुभिरारब्धं भित्तिवन्नापि गव्यवत् । प्रकृतेः परिणामो वा जगत्किं त्विन्द्रजालवत् ( ७ ) ” इति । उक्ता ग्राह्यसमापत्तिरीश्वरप्रणिधानरूपाऽस्याः फलं व्याधिदुःखाद्यन्तरायाभाव

पूर्विका आशुसमाधिसिद्धिः । यतो भगवान्पतञ्जलिः—अधिमात्रश्रद्धाद्युपायोपेतानामधिमात्रवैराग्यादासन्नतमं समाधिलाभमुक्त्वाऽसूत्रयत्—“ईश्वरप्रणिधानाद्वा”इति । “ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च” इति च ।

अंतराया व्याधिदुःखादयः निर्विचारग्राह्यं षष्ठश्लोकोक्तरीत्या विलाप्य मनोमये समष्टौ चित्तं धारयतो मनोमयः प्राणशरीरो भारूपः “सत्यसंकल्पः सर्वकामः सर्वगंधः सर्वरसः ” इत्यादिश्रुत्युक्तसार्वात्म्यं सार्वज्ञ्यं सत्यसंकल्पत्वं

चाविर्भवति तत्र कुतूहलितया मनसो विषयविकल्पाभिमुख्ये सानंदस्तदभावे सास्मितः संप्रज्ञातो भवति । त एते ग्रहणगृहीतृसमापत्ती पूर्ववच्छब्दादिविकल्पसंकीर्णत्वासंकीर्णत्वाभ्यां प्रत्येकं द्विविधे । मनो महान्मतिर्ब्रह्मा

पूर्बुद्धिः ख्यातिरीश्वर इत्यनयोरेव नामद्वंद्वानि । सोऽयमवान्तरभेदादष्टविधश्चतुर्विधः सूत्रितः । “ वितर्कविचारानंदास्मितारूपानुगमात्संप्रज्ञातः ” इति । अस्मितासमापत्तिरेव शास्त्रसंस्कृतधियां तत्त्वमस्यादिवाक्योत्था

ब्रह्मविद्याख्या चेतोवृत्तिः । अस्याः फलम्—"भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इति । परो हिरण्यगर्भः अवरो यस्मात्स परावर ईश्वरः । उपबृंहितश्चायमन्त्यः पाद एकादशे 'दृष्ट एवात्मनीश्वरे' इति । हृदयग्रंथिभेदः सत्त्वपुरुषान्यताख्यातिरित्यनर्थान्तरम् । विवेकख्यातेरपि परवैराग्यबलान्निरोधे दग्धेंधनानलवदुपशमे वा सति असंप्रज्ञातो धर्ममेधाख्यः समाधिर्भवति । यमपेक्ष्य श्रूयते "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यन्मनुते नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यच्छृणोति अन्यन्मनुते अन्यद्विजानाति तदल्पं यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" इति "तावन्मनो निरोद्धव्यं हृदि यावत्क्षयं गतम् । एतद्ज्ञानं च ध्यानञ्च शेषोऽन्यो ग्रंथविस्तरः ॥" स्मर्यते च वसिष्ठेन—"निर्विकल्पसमाधिर्हि सिद्धान्तः सर्ववाङ्मये" इति । यं चासूत्रयत् "प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः" प्रसंख्यानेऽस्मितान्तध्यानफले ऋतंभरप्रत्यक्षादावभिलाषशून्यस्य सर्वथा विवेकख्यातिरेव भवति । तत्फलेऽपि सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्चेति सूत्रिते विरक्तस्य धर्ममेघो भवतीत्यर्थः । तत्त्वं चास्य "क्षणमेकं क्रतुशतस्य चतुःसप्तत्या यत्फलं तदवाप्नोति" इति श्रुतेः एतत्समाप्तिपंचकम् । "यच्छेद्वाङ्मनसी" इति श्रुत्या वाङ्मनोज्ञानमहच्छान्तशब्दैरुपात्तं वाचं बाह्येन्द्रियं स्वविषये निरुध्य जित्वा स्वकारणे मनसि प्रविलापयेदिति यच्छेदित्यस्यार्थः । एवमुत्तरत्र शान्तावधि यच्छेत् । अत्रापि विशेषाविशेषलिंगमात्रालिंगानि गुणपर्वाणि । तत्र वितर्कालम्बनाद्विशेषाद्विचारानंदालम्बनम् अविशेषं प्रतिविविक्षतो योगिनो दैनंदिनलयाभ्यासान्मनो लीयते प्रविष्टमात्रं वा रजःप्राबल्यात्पूर्वां भूमिमुत्सर्पति सर्वे क्षेपः तावेतौ लयविक्षेपौ हेयतया श्रूयेते "लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् । यदा यात्यमनीभावं तदा तत्परमं पदम् ॥" इति एवमविशेषादस्मितालम्बनं लिंगमात्रं प्रविविक्षतस्ततः पुरुषञ्च प्रविविक्षतो लयविक्षेपौ स्तः । तेष्वाद्यो लीनो मूढ एव । द्वितीयतृतीयौ क्रमाद्विदेहप्रकृतिलयावन्वर्थसंज्ञौ क्रममुक्तिभाजौ । एतयोरवान्तरभेदकल्पनया फलभेदः स्मर्यते वायुपुराणे—"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥ बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः । पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥ पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते ।" इति । सूत्रं च—"भवप्रत्ययो विदेहप्रकृतिलयानाम्" इति । एषामसंप्रज्ञातो लयरूपत्वाद्भवप्रत्ययो जन्महेतुरिति सूत्रार्थः । असंप्रज्ञातावस्थायां योगी जीवन्मुक्त इत्युच्यते । यं प्रकृत्योक्तं योगभाष्ये अस्यामवस्थायामीश्वरस्यानीश्वरस्य विवेकज्ञानवतोऽन्यस्य वा कैवल्यं सिद्धमिति । सोऽयं योगी त्र्यवस्थः । यः स्वतो व्युत्तिष्ठति स विद्वद्वरः, यः परतः स विद्वद्वरीयान्, यो नोभयतः स विद्वद्वरिष्ठः । इमं प्रकृत्योक्तं "देहं विनश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम्" इति । वासिष्ठे सप्त योगभूमय उक्ताः—"ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता । विचारणा द्वितीया तु तृतीया तनुमानसा ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका । पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥" इति । आस्वाऽऽद्या शास्त्रोक्ता साधनसंपत्, द्वितीया श्रवणमनने, यस्यां क्रमेण मीमांसातर्कावुपक्षीणौ । तृतीया निदिध्यासनं, यस्यां पातञ्जलं योगशास्त्रं चरितार्थम् । चतुर्थी साक्षात्कारो, यस्यां ध्यायी विद्वानित्युच्यते । शेषा जीवन्मुक्तेरवान्तरभेदाः । यासु योगी क्रमेण विद्वद्वरादिसंज्ञां लभते । आसु विचारणादार्ढ्ये क्षणिकसत्त्वापत्त्यापि कृतार्थतास्तीति श्रवणादिप्रणाली नेदीयसी इतरापि नित्यंयुक्तस्य शीघ्रमेव सिद्ध्यति नान्यस्येति श्रूयते—"षड्भिर्मासैस्तु युक्तस्य नित्ययुक्तस्य देहिनः । आनंदः परमो गुह्यः सम्यग्योगः प्रवर्तते ( १ ) रजस्तमोभ्यां विद्धस्य सुसमिद्धस्य देहिनः । पुत्रदारकुटुम्बेषु सक्तस्य न कदाचन ( २ )" "अथेदानीं ज्ञानोपसर्गाः राजन्" इत्युपक्रम्य "अथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रवासिता नित्ययाजनका नित्यशिल्पोपजीविनोऽथ ये चान्ये ह पुरयाचका अजाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वांसोऽथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थे पुरस्कृत्य श्रमयाम इत्येवं ब्रुवाणा अथ ये चान्ये चाटजटनटभटप्रव्रजितरंगावतारिणो राजकर्मणि पतितादयोऽथ ये चान्ये ह वृथातर्कदृष्टांतकुहकेन्द्रजालैर्वैदिकेषु परिष्ठातुमिच्छंति तैः सह न संवसेत् बृहस्पतिर्हि शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्यः क्षयायेमामविद्यामसृजत् तया शिवमशिवमित्युपादिशंत्यशिवामिति वेदादिशास्त्रं हिंसाधर्माभिधानं मास्त्विति वदंतः" इत्यादि । एवं चात्र नये विमुखा इत्यशास्त्रज्ञानां पुनंतीति गुर्वनुग्रह उक्तः । त्वयि कृतसौहृदा इति । ग्राह्यसमापत्तिः परिवयसे पशूनिति ग्राह्यैश्वर्यम् । अखिलसत्त्वनिकेततयेति । ग्रहणगृहीतृसमापत्ती । निर्ऋतेरिति । "द्वितीयाद्वै भयं भवति" इति श्रुतेर्भयहेतुर्द्वैतम् । अविगणय्येति । ब्रह्मलोकांते यत्र वैराग्यम् आक्रमंतीति । तदतिक्रमेण भूमब्रह्मस्थितिः।इत्येते अर्था दर्शिताः । विस्तरभयात्तु नातिप्रपञ्चिताः (१४) ॥२७॥

त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहंति समदंत्यजयाऽनिमिषाः ॥
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधाति यत्र य त्वधिकृता भवतश्चकिताः ॥ १५ ॥ २८ ॥

ननु यद्यखिलसत्त्वनिकेतत्वेन भवतः सेव्यत्वमुच्यते तर्हि तत्करणसंबंधात्कर्तृत्वभोक्तृत्वे प्रसज्ज्येयातां न वस्तुतस्तथात्वमिति चेत्तर्हि जीवानामपि तत्तुल्यत्वमिति केन विशेषेण पुनः सेव्यसेवकत्वमितीमामाशंकां परिहरंत्यः“अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षः स शृणोत्यकर्णः॥स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्”इत्याद्याः श्रुतयः स्तुवंतीत्याह । त्वमकरण इति । करणसंबंधरहित एवाखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणींद्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथा । कुतः स्वराट् यतः स्वेनैव राजसे दीप्यसे नहि स्वतःसिद्धज्ञानशक्तेरिंद्रियापेक्षेत्यर्थः । अतस्तव बलिमुद्वहंति पूजां कर्वंति । अजयाऽविद्यया सहितास्तया वृता इत्यर्थः । अनिमिषा देवा इंद्रादयस्तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि । यथा सस्त्रीका एव किंकराः स्वामिनं सेवंते तथाऽविद्यायुक्ता देवादयस्त्वामिति लोकोक्तिः । समदंति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं बलिं भक्षयंति । अत्र दृष्टांतः । वर्षभुजोऽखिलक्षितिपतेरिवेति । यथा वर्षभुजः खंडमंडलपतयोऽखिलक्षितिपतेर्महामंडलेश्वरस्य स्वप्रजादत्तबलिभुजो बलिमुद्वहंति तद्वदिति । कथं बलिं वहंति तदाह । विदधति यत्र ये त्वधिकृता भवतश्चकिता इति । त्वत्तो भीताः संतो यस्मिन्कर्मणि नियुक्तास्ते तत्कुर्वंतीति । त्वदाज्ञापालनमेव बल्युद्वहनमित्यर्थः । तथा च श्रुतिः । “ भीषाऽस्माद्वातः पवते ॥ भीषोदेति सर्यः ॥ भीषाऽस्मादग्निश्चेंद्रश्च ॥ मत्युर्धावति पंचमः ” इति ॥

अनिंद्रियोऽपि यो देवः सर्वकारकशक्तिधृक् ॥ सर्वज्ञः सर्वकर्ता च सर्वसेव्यं नमाम तम् ॥ १५ ॥ २८ ॥

भावार्थदीपिकाप्रकाशः वंशीधरी—अत्राक्षिपति—नन्विति । तत्तत्करणसंबंधात्तत्तद्देहेन्द्रियसंयोगात् ब्राह्मणोऽहं पश्यामि तीर्थमित्यादिप्रतीतेस्तीर्थदर्शने कर्तृत्वं तज्जन्यफलभोक्तृत्वञ्च प्रसक्तमेवात्मनीति चेदाह—न वस्तुत इति । तथात्वं तत्तत्करणसंबंधत्वमात्मनः “असंगो ह्ययं पुरुषः ” इत्यात्मनोऽसंगत्वादेवं चेज्जीवस्यात्मत्वाविशेषात्परमात्मसाम्यतैवेत्येवंरूपामाशंकां परिहरन्त्यः “अपाणिपादः” इत्याद्याः । तासामर्थस्तु सुगमः । अकरणेऽपाणिपाद इत्याद्याः । अखिलकारकशक्तिधरत्वे तु “प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुस्ते निर्विचिक्युर्ब्रह्म पुराणमग्र्यम् ” इति । पुरुषस्यातर्क्यशक्तिपरेयम् । करणसंबंध इन्द्रियसंबंधस्तेन रहितः । इन्द्रियाणि श्रोत्रादीनि । तेषां शक्तीः शब्दग्रहाद्याः । अत्र हेतुमाशंकते—कुत इति । इत्यर्थ इति—स्वप्रकाशस्य प्रकाशकान्तरापेक्षणे स्वप्रकाशत्वमेव न स्यादिति भावः । “करणं कारकञ्चेमे इन्द्रियेऽपि स्मृते पदे ” इति निरुक्तिः । यतः स्वराडतो हेतोः । इत्यर्थ इति—अविद्वदधिकारित्वात्कर्ममार्गस्येति भावः । अत्र साविद्यदेवकर्तृकभगवत्संप्रदानकबलौ तद्वत्त्वामनिमिषा इत्यर्थः । इत्यर्थ इति—“एतावत्यात्मजैर्वीर कार्या ह्यपचितिर्गुरौ । यदादरेण ग्रहणमाज्ञायाः ” इत्याद्युक्तन्यायेन मुख्यसेवनमाज्ञाधारणमेवेति भावः । अत्र प्रमाणम्—तथा चेति । “ भीषा ” इति । अस्मादीश्वराद्भीषा भीत्या पवते वातीत्यर्थः । धावति स्वकालवशं प्राप्तानेव प्राणिनो नयन्सर्वत्र चरतीत्यर्थः । यद्यपीह पञ्चानां ग्रहणं तथापि तदादिन्यायेन ब्रह्मादीनामपि ग्रहणं ज्ञेयम् । सर्वेश्वरत्वकथनपरेयम् । स्वामिश्लोकः स्पष्टार्थः ॥ * ॥ **श्रीधरानुयायिनी**—ननु सर्वान्तर्यामित्वे तत्तज्जीवेन्द्रियसंबंधेनेश्वरे कर्तृत्वभोक्तृत्वापत्त्या तस्यावास्तवत्वे जीवेऽपि तथात्वमेवेति जीवसाम्यादसेव्यत्वमाशंक्याहुः—त्वमिति । यस्मात्त्व

प्रकाशत्वेनेन्द्रियानपेक्षतयेन्द्रियसंबंधरहितोऽपि सर्वजीवेन्द्रियप्रवर्तकोऽसि तस्मादविद्यया वृता इन्द्राद्या देवास्तत्पूज्या ब्रह्मादयश्च त्वां सश्रीकाः सेवकाः स्वामिनमिव सेवन्ते । यथा खण्डमण्डलेश्वराः स्वस्व प्रजादत्तं बलिं चक्रवर्तिने निवेद्यैव तदाज्ञया यत्किञ्चित्स्वयमपि गृह्णन्ति तथा यस्मिन्कर्मणीन्द्रादयस्त्वया यथा नियुक्तास्ते त्वत्तो भीताः सन्तस्तथैव तत्कुर्वन्तीति त्वदाज्ञां पालयन्तो यज्ञादौ मनुष्यैर्दत्तं हव्य कव्यादिरूपं बलिं त्वयि निवेद्यैव स्वयमपि भक्षयन्ति । यद्वा–त्वमकरणः असाधारणं कारणं करणम्, यथा च–घटादौ दंडचक्रादि । सृष्ट्यादौ करणानपेक्षोऽसीत्यर्थः । न तु सर्वसौन्दर्यहानिकारककरनेत्रा द्यभाववानित्यर्थः । अन्यथा परमसुन्दरश्रीकृष्णमूर्तिध्यानमसंगतं स्यात् । करणानपेक्षत्वे हेतुमाह–अखिलेत्यादि । अखिलानां कारकाणां ब्रह्मादीनां शक्तीर्धारयसीत्यर्थः । अनेन ब्रह्मादिभिर्विनापि तदीयसर्व व्यापारसाधनसामर्थ्यमेकस्मिन्नेव त्वयीति सूचितम् । सृष्ट्यादौ तेषां प्रवृत्तिश्च केवलं त्वत्कृपयैवेत्याशयः । अत एवाजया श्रीराधया श्रीरुक्मिण्या वा सह सिंहासने स्थितस्य तवाग्रे महिष्या सह सार्वभौमस्याग्रे मंडलेश्वरा इव ब्रह्मादयो भीताः सन्तो बलिमुद्वहन्ति स्वयञ्च तद्दत्तमदन्तीत्यर्थः । अथवा नन्वेवं मम माहात्म्यं व्यर्थं कथमुच्यते यतोऽहं नंदात्मजः कंसकरप्रदोऽस्मीति चेत्तत्राहुः–हे अखिलकारक ।: अखिलं विश्वं ब्रह्मादिद्वारा कारयसीति तथा तत्संबोधनमिदम् । अत एव त्वमकरणः स्वयं सृष्ट्यादिश्रमं न करोषि, यतस्त्वं शक्तिधरः शक्तिं सामर्थ्यमव्याहताज्ञां वा धारयसि । अत एव स्वराट् सकलचक्रवर्तिशिरोमणिस्त्वमेवासि । अत ए ७ यत्र कर्मणि ये यथा कृतास्ते विश्वसृजो ब्रह्मादयोऽपि त्वदाज्ञप्तकार्यान्यथाभावभयान्निमेषरहिताश्चकिताश्च सन्तोऽजया स्वाविद्यया पत्न्या सहितास्तथैव त्वदाज्ञां पालयन्तश्चक्रवर्तिनोऽग्रे वर्षभुज इव तवाग्रे बलिमुद्वहन्ति । उत ऊर्द्ध्वं शिरसि कृत्वा वहन्ति प्रापयन्ति विष्टिं कुर्वन्तीति यावत् । ते च त्वद्दत्तं विष्टिवेतनरूपं समदन्ति । लोके विष्टिकर्तृभ्यो भोजनं दीयत एवेत्यर्थः । तथा च यस्य ब्रह्मादयो विष्टिकर्तारस्तस्य कंसाय करदानमत्यन्तासंभावित मेवेत्याशयः ॥ * **तोषिणी**–अन्यास्तदेव पुष्णन्त्य आहुः–त्वमिति । अकरणः सृष्ट्यादौ कुलालादिवत्पृथक्साधनरहितोऽत एव क्रियारहितश्च । ब्रह्मादिजीवेन्द्रियप्रवर्तनलीलायां तत्तदिन्द्रियसंबंधरहितः स्वतः स्थितौ तद्वत्पृथगिन्द्रियरहितोऽपि त्वं स्वरूपतस्तत्तत्करणपरार्धातिक्रमिपरमातिपरमशक्तितया प्रादुर्भावभेदेन, संख्यातश्चानंततयाऽखिलानि यानि कारकाणि करणानि तानि तथा "सर्वतःपाणिपादं तत्" इति न्यायेन कदाचित्तत्रतत्र तादृशनिजकरणप्राकट्यरहितोऽपि तत्तदर्थं तत्तच्छक्तीर्धरसि बिभर्षि तथा यथायोगं तत्तदंशाभासांस्तत्रतत्र प्रापयसि चेति तथाभूत इत्यर्थः । कथम्, स्वराट् अचिन्त्यशक्तिमयेन स्वेनैव तथातथा राजस इति । अतो जीवकरणानामिव तव करणानां तदधीनप्रकाशत्वाभावात् प्रत्युत तत्करणानां त्वदधीनत्वात् । अनिमिषा ब्रह्मादयस्तव बलिमुद्वहन्ति । संतु च ते तेषामधिकारिणी माया च तथेत्याहुः–अजयेति । सहार्थे तृतीया । शेषं तैर्व्याख्यातम् । अतः साधूक्तं पूर्वाभिस्तव ये परिचरन्तीति । श्रुतयश्चात्र "न तस्य कार्यम्" इत्याद्यनुगता एव "अपाणिपादः" इत्याद्याः ॥ * ॥ **विश्वनाथी**–तस्मादस्वतन्त्रैरी शितव्यैः जीवैस्त्वमेव स्वतंत्र ईश्वरः सेव्य इति चेन्मैवम्, नेत्रश्रोत्रभुजादिमत्त्वादहमपि जीव इव करणपरतंत्र इत्यतः कुतो मे स्वातंत्र्यमैश्वर्यं वेत्यत आहुः–त्वमकरणः । आहंकारिकमनोनेत्रश्रोत्रादिरहितस्तर्हीमानि मन्नेत्रादीनि कुतस्त्यानि तत्राहुः–स्वराट् । स्वैः स्वरूपभूतैरेव नेत्रश्रोत्रादीन्द्रियै राजस इति स्वराट् । अत एव खिलानि तुच्छानि प्राकृतानीत्यर्थः । अखिलानि खिलभिन्नानि चिदानंदमयत्वत्स्वरूपभूतानींद्रियाणि शक्तीः "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इति श्रुतेः । प्राकृतेन्द्रियशक्तीश्च धरतीति तथा सः । न त्वं प्राकृतेन्द्रियो नाप्यनिन्द्रियः किन्तु पराख्यस्वरूपशक्तिमयेन्द्रियः प्रत्युत प्राकृतेन्द्रियेष्वपि श्रवणादिशक्त्याधायक इत्यर्थः । "न तस्य कार्यं करणम्" इत्यादिश्रुतेः महैश्वर्यमाहुः–तव बलिं पूजोपहारम् अनिमिषा ब्रह्माद्याः प्रापयन्ति तुभ्यं समर्पयन्ति । अजया सहेति । या तेषामधिकारिणी खल्वजा माया सापि ते बलिहारिणीत्यर्थः । समदन्ति त्वत्प्रसादान्नरैर्दत्तं हव्यादिकं भक्षयन्ति । तत्र दृष्टान्तः–वर्षभुजो मंडलेशा अखिलक्षितिभुजः सम्राज इवेति सुगमम् । कीदृशा भूत्वा तत्राहुः–यत्र कर्मणि ये त्वया नियुक्तास्तत्कर्मणि त्वत्तश्चकिता भीता एव विदधति । अत्र "भीषाऽस्मात्" इत्याद्याः श्रुतयः ( १९ ) ॥ २८ ॥

स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥
न हि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवाऽपदस्य तव शून्यतुलां दधतः ॥ १६ ॥ २९ ॥

तदेवं करणप्रवर्तकमीश्वरं करणपरतंत्रा नरा भजंतीत्युक्तम् । न केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतंत्रत्वादिति वदंति " यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरं त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरंति " इत्याद्याः श्रुतय इत्याह । स्थिरचरजातय इति । हे विमुक्त नित्यमुक्त यदि तवाजया मायया विहरो विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयो जात्यालिंगिता देहा येषां ते जीवाः स्युर्भवेयुः । कथं

**नीलकंठी**–एवं सांख्ययोगाभ्यां शोधितौ तत्त्वंपदार्थावनूद्य तयोरभेदमभिधत्ते द्वाभ्याम्–त्वमकरण इति । हे भगवन् त्वमकरणः अनिंद्रियोऽपि स्वराट् स्वेनैव राजसे प्रकाशसे, अनिन्द्रियोऽपि स्वरूपप्रकाशेनैव सर्वमवभासयसीत्यर्थः । " तस्य भासा सर्वमिदं विभाति " " अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् " इति श्रुतिभ्याम् । यद्वा–न सन्ति करणानि सृष्टिक्रियायां साधकतमानि मृद्दण्डादिस्थानीयानि यस्य सोऽकरणः । अत एव प्राक्सृष्टेः स्वेनैव एकाद्वितीयेन स्वरूपेण राजत इति स्वराट् " आत्मा वा इदमेक एवाग्र आसीत् " इत्यादिश्रुतिभ्यः । एवंविधोऽप्यखिलकारकशक्तिधरः सर्वेषां कर्तृकरणादिकारकाणां शक्तयः कार्यजननसामर्थ्यानि धारयतीति स तथा " न तस्य कार्यं करणं च विद्यते न तत्सम श्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च " इति श्रुतेः । केवलात्त्वत्त एव सर्वमुत्थितमिति भावः । एवं तत्पदार्थमुक्त्वा त्वंपदार्थमनुवदति–तवेति । अनिमिषाः प्राणाद्यभिमानिदेवताः । अजया आत्मनस्त्वदभेदाज्ञानाच्च तत्तत्करणात्मताभिमानेन तव देहेन्द्रियादिसंघातापन्नस्य तुभ्यं बलिमन्नाद्युपहारम् उद्वहन्ति प्रापयन्ति समदन्ति स्वयं च भुञ्जते । " सर्वेऽस्मै देवा बलिमावहन्ति प्राणे तृप्यति सति चक्षुस्तृप्याति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्चिद्द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति " इति श्रुतेः प्राणादयः स्वयं तृप्यन्ति स्वाधिष्ठातारं त्वामपि तर्पयन्तीति भावः । अत्र दृष्टान्तः–वर्षेति । अत्रापि तर्हीतिवत्स्वरभक्त्या अक्षरपूरणम् । यथा वर्षभुजो मण्डलाधिपतयः स्वयं प्रजाभ्यो बलिमाददानाः सन्तः अखिल क्षितिपतेः सार्वभौमस्य तस्मै बलिमुद्वहन्ति तद्वत् । किञ्च–तेषामनिमिषाणां मध्ये ये चक्षुःश्रोत्रादयो यत्र रूपशब्दादिग्रहणे अधिकृताः ते तत्स्वग्राह्यविषयाश्रयभूतं तेजोवियदादि विदधते निर्मिमते अत एव ते विश्वसृजः एतेन "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति" इत्यारभ्य "स यथा प्रतिबुद्ध्यते यथाग्नेर्ज्वलतः" इत्यग्निविस्फुलिंगदृष्टान्तेन जीवस्यैव सुप्तिप्रबोधयोर्जगल्लयो दयाम्नानाद्दोषनिमित्तं रूपादयो विषयाः संकल्पकृता इत्यक्षपादसूत्राच्च सिद्धा दृष्टि–सम–समयैव सृष्टिरिति शास्त्ररहस्यं दर्शितम् । "आत्मन आकाशः संभूतः" इत्यादिश्रुतीनामद्वैतप्रतिपत्तावेव तात्पर्यं न सृष्टौ वियत्प्राणपादयोरपि सृष्टिश्रुतिविरोधपरिहारोऽप्यभ्युपेत्य वाद एव । वक्ष्यते चैतन्न यदिदमित्यस्मिञ्छ्लोके । भवतश्चकिता इति । सर्वलयाधिष्ठानात्त्वत्तः स्वनाशभीत्या त्रस्ताः।श्रुतिश्चैषां प्राक्प्रावण्यं प्रत्यगवृत्तिमाह–"पराञ्चि खानि व्यतृणत्स्वयंभूस्त स्मात्पराङ् पश्यन्ति नान्तरात्मन्" इति । व्यतृणद्धिंसितवान् ( १९ ) ॥ २८ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–तदेवं तदित्थम् । इयदेव इयन्मात्रमेव । तद्भजने कारणं किंतु तत ईश्वरात् । "यथाग्नेः" इत्याद्याः श्रुतयो वदंतीति योज्यम् । तदर्थः पूर्वमात्मव्यतिरिक्तं वस्त्वंतरं नास्ती त्युक्तं तदुत्पन्नत्वात्सर्वस्य । तत्र दृष्टांतः–यथैकरूपादेकस्मादग्नेः सकाशात् क्षुद्रा अल्पप्रमाणा विस्फुलिंगा वह्निकणा विविधा उच्चरंति उत्तिष्ठंते एवमस्मादात्मनः विज्ञानमयस्य प्राक्प्रबोधाद्यत्स्वरूपं तस्मात् एत

भूतस्य । ततोऽजातः परस्य दूरे वर्तमानस्यासंगस्येत्यर्थः । कथं विहारः । उदीक्षया ईक्षणलेशेन । ननु मयि लीनानां जीवानां कथं जन्म स्यात्तत्राह । उत्थनिमित्तयुज इति । ईक्षयैवोत्थान्युत्थितान्याविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिंगशरीराणि वा तैर्युज्यंत इति तथा । ननु किं निमित्तोत्थानेन मदिच्छयैव भवंतु । न । त्वयि वैषम्याभावाद्विषमसृष्टेरयोगादित्याह । परमस्येति । तव परमस्योत्तमस्य परमकारुणिकस्य वियत इवाकाशसदृशस्य । समस्येत्यर्थः । कश्चिदपरः स्वीयः परोऽस्वीयश्च न भवेत् न संभवतीत्यर्थः । "असद्वा इदमग्र आसीत् ॥ ततो वै सदजायत" इत्यादिश्रुत्या शून्यपूर्वकत्वमिव प्रतीयते तदर्थं पुनर्विशिनष्टि । शून्यतुलां दधतः । शून्यसाम्यं भजतः । तदेव दर्शयितुं पुनर्विशिनष्टि । अपदस्येति । न पद्यत इत्यपदस्तस्य वाङ्मनसयोरगोचरस्येत्यर्थः ॥ त्वदीक्षणवशक्षोभमायाबोधितकर्मभिः॥ जातान्संसरतः खिन्नान्नृहरे पाहि नः पितः ॥ १६ ॥ २९ ॥

आत्मानो जीवा व्युच्चरंति उपाधिसंपर्कजनितविशेषप्रतिबुद्ध्यमाना आत्मान इत्यर्थः । तत्र प्राणा इन्द्रियाणि, लोकाः कर्मफलानि, देवा इंद्रियाणां लोकानाञ्चाधिष्ठातारोऽग्न्यादयो, भूतानि ब्रह्मादिस्थावरांतानि एते आत्मान इति । केवलात्मसृष्टिपरेयम् । 'यद्गत्वा न निवर्तंते' "न स पुनरावर्तते"इत्यादिस्मृतिश्रुत्योरर्थं मनस्याधायाक्षिपति—नन्विति।तत्राक्षेपे । केवलकर्मणा विना शरीराणामकिञ्चित्करत्वादाह—तद्युक्तानीति । कर्मयुक्तानीत्यर्थः । लिंगशरीरसंबंध एव तेषां जन्म न तूत्पत्तिलक्षणम् 'सर्गेऽपि नोपजायंते' इत्याद्युक्तेः । पुनराक्षिपति—नन्विति । नेत्याह—त्वयीति । इत्यर्थ इति—असंगस्येति भावः । इत्यर्थ इति—अविषमत्वेन सर्वत्र समत्वादिति भावः । श्रुत्यवष्टंभेनाशंकते—असदिति । इदं सर्वमग्रे जगदुत्पत्तेः पूर्वमसदेवाविद्यमानमेवासीत् । ततः सृष्ट्यवसरे सदजायत सद्रूपत्वेनाविर्बभूव इत्यादिश्रुतेः । तदर्थं तन्निवृत्त्यर्थम् । तदेव शून्यसाम्यम् । इत्यर्थ इति—अविषयत्वाच्छून्यमिव प्रतीयत इति भावः । स्वामिनां त्वदीक्षणवशेन क्षोभो यस्यां मायायां तया बोधितैः कर्मभिर्जातान् ॥ * ॥ **श्रीधरानुयायिनी**—स्वजनकत्वादपि त्वद्भजनमावश्यकमित्याहुः—स्थिरेति । हे नित्यमुक्त त्वमसंगो मायासंगरहितोऽपि यदा वक्षिणमात्रेण मायया क्रीडसि "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः " इति पाद्मात् । तदा तव वीक्षणेन कार्योत्पत्त्यनुकूलेक्षणेनैवोत्थितैराविर्भूतैः प्रारब्धकर्मभिस्तद्युक्तलिंगशरीरैर्वा निमित्तभूतैर्युक्ताः स्थावरजंगमस्थूलशरीरोपाधयो जीवा घटाकाशवदुपाधिसृष्टिसमकालमेव भवेयुः । ननु मदिच्छयैवाविर्भवन्तु किन्निमित्तोत्थापनेनेत्याशंकायामाहुः—नहीति । परमदयालोर्वाङ्मनसयोरगोचरत्वेन शून्यवत्प्रतीयमानस्य महादुरात्मनामपि मूढानां नास्तिकानां शून्यतुलामविद्यमानसादृश्यं दधतोऽप्याकाशवत्समस्य तव कोऽप्येकोऽपि स्वीयः परकीयो वा न संभवति । एवं च त्वयि "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः" इत्यादिगीतोक्तेर्वैषम्याभावात्तवेच्छया कथमियं विषमा सृष्टिरुपपद्यत इति भावः । यद्वा—तव श्रीकृष्णस्य शून्यतुलां खपुष्पतुल्यामसतीमेव तुलामहमेवेश्वर इतीश्वरतुल्यतां दधतोंगीकुर्वतोऽत एवापदस्य त्वामपदस्य त्वामनादृत्य क्वाप्यलब्धशरणस्य वेनादेरिवाभाग्यस्य साहंकारस्य पापिनः पुरुषस्य फलमेकैकस्थावरजंगमयोनावनेकजन्मानि स्युः । ननु "कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः" "मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं हि वः" इत्यादिश्रीकृष्णसादृश्यं भजतीनां गोपीनामपि किमियमेव गतिरित्याशंक्य नहिनहीत्याहुः—अजयेति । अजया व्रतैराराधितया श्रीकात्यायन्या कर्त्र्या उत्थितमुद्बोधितं यन्निमित्तं श्रीकृष्णविहारप्राप्तिकारणमदृष्टं तद्वत्यो गोप्यस्तु विहरे श्रीरासविहारे इपरस्य इः कामसुखं तत्परस्य तव उदीक्षया प्रेमामृतदृष्ट्या स्थावरजंगमजन्मभागिन्यो हि निश्चयेन न स्युः किन्तु परं सर्वोत्कृष्टं श्रीकृष्णप्राप्तिरूपमेव तासां फलं भवेदित्यर्थः । नन्वेवं मयि वैषम्यमागतमित्याशंक्याहुः—वियत इवेति । आकाशवत्समस्येत्यर्थः । साम्यमेवाहुः—अस्य तु कश्चिदनपरः स्वजनोऽपि परो भवति, यथा कंसो रुक्मी वा । कश्चित्परोऽपि अनपरः स्वीयो भवति, यथा रावणानुजो बिभीषणः । एवं च सर्वशुभाशुभफलप्रदस्य जडस्य प्रारब्धस्योद्बोधनमात्रमेव त्वया क्रियत इत्याशयः । अत एव ततो वैषम्याद्विमुक्तेति संबुद्धिः ॥ * ॥ **विश्वनाथी**—तदेवं करणप्रवर्तकः परमोत्कृष्टगुणः श्रीभगवाँ

स्तदधीनकरणपरतंत्रैः स्वल्पगुणैर्जीवैर्भजनीय इति पूर्वाचारेण पूर्वाभिर्दृढीकृतम् । तत्र परा शक्तिश्च दर्शिता । तथैवान्याः श्रुतयोऽभिप्रयान्ति । यतो न केवलमियदेव कारणं तत उत्पन्नत्वमपीत्याहुः—स्थिरेति । हे विमुक्त प्रकृत्यादिसंगातीत यदि तव विहरः प्रपञ्चगतभक्तवृन्दसुखार्थं प्रपञ्चे तत्तदवतारैर्विहारो दृष्टः स्यात्ततस्तदनंतरम् उदीक्षया प्रकृतिलीलासिद्धभक्तोद्देशत्वेनोत्कृष्टया त्वदुदीक्षया उत्थानि प्रकृतिक्षोभेणोत्थितानि यानि निमित्तानि कर्मादीनि तैर्युक्ताः स्थिरचरजातय उद्बुद्धतत्तज्जातिसंस्कारसूक्ष्मदेहाः सर्व एव जीवा उद्भवन्ति स्वाविर्भावमाप्नुवन्ति । कीदृश्येक्षया अजया प्रकृतिक्षोभात्प्राचीनत्वात्स्वभावसिद्धयैवेत्यर्थः । तथैव व्याख्यातं भाष्यकृद्भिः "ईक्षतेर्नाशब्दम्" इत्यत्र । कथंभूतस्य तव परस्य सर्वविलक्षणस्वरूपतच्छक्तिकस्य । ननु यैः सह विहरेच्छा तेषामेवोद्बोधो यथा स्यात्तथैव कुतो नेक्षते तत्राहुः—नहीति । परमस्येति—परमत्वात्प्राकृतधर्मेभ्वादररहितस्येत्यर्थः । अत एव न कश्चिदपरः परश्च भवेत्, अन्यत्र रागद्वेषाभावेन तदसंकोचनादित्यर्थः । "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥" इति श्रीगीतोक्तेः "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः" इति पाद्मोक्तेश्च । तर्हि कथं तेऽपि न भजन्ति येन तव विहारहेतवः स्युस्तत्राह—शून्यतुलां दधतः । वियत इवापदस्येति सर्वागोचरस्येत्यर्थः । अयं भावः—यद्यपि वियत् खलु वस्त्वेव तथापि न केनचिद्ग्रहीतुं शक्यते तद्ग्रहणशक्त्यभावात् । एवं सर्वागोचरस्वभावगुणो भवानपि भक्त्यभावादिति । तस्माद्भक्तेभ्यो भक्तिर्ग्राह्येति च श्रुतयश्च "स ऐक्षत" इति । "यथाऽग्नेः क्षुद्राः" इत्यादि । "अक्षरात्परतः परः" इति । "असद्वा इदमग्र आसीत्" "न संदृशे तिष्ठति रूपमस्य" इत्यादि । "सद्रूपमद्वयं ब्रह्म मध्याद्यन्तविवर्जितम् । सुप्रभं सच्चिदानंदं भक्त्या जानाति चाव्ययम् ॥" इत्याद्याः ( १६ ) ॥ २९ ॥

**नीलकण्ठी—**पूर्वश्लोके जीवकर्तृका जीवसृष्टिरुक्ता । तत्रैव प्रथमे पादे ईशकर्तृकापि सृष्टिः शक्तिधर इति सूत्रिता, तां प्रपञ्चयति—स्थिरचरजातय इति । हे ततो विमुक्त अजातो नित्यमुक्त यदि तव विहरः विहारः भोगः क्रीडा वा इष्टा भवति "भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे" इति श्रवणात् तर्हि तव उदीक्षया ईक्षणेन स्थिरचरजातयः स्थावरजंगमशरीराणि तदुपाधयो जीवाश्च घटाकाशवदुपाधिसृष्टिसमकालमेव स्युः प्रादुः स्युः "स ऐक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्त्येवमेतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि च भूतानि सर्व एते आत्मानो व्युच्चरन्ति" इति श्रुतिभ्याम् । नन्वेवं सृष्टेराकस्मिकत्वे ईश्वरस्योच्चनीचस्रष्टुर्नैर्घृण्यवैषम्ये जीवानाञ्च कृतनाशादिप्रसक्तिरत आह—अजयोत्थनिमित्तयुजः । माययोत्थितं यन्निमित्तं कालादृष्टादि तेन युज्यन्ते इति तथा । ईक्षा पर्जन्यवत् साधारणं कारणं जीवजातीनामदृष्टन्तु बीजवदसाधारणं फलभेदहेतुरतो नोक्तदोषप्रसक्तिः । ननु कुलालवद्विहरत उदीक्षितुरप्यदृष्टादि युक्तं स्यादित्याशंक्याह—परस्येति । अदृष्टादिभ्यो हि वर्जितस्य 'हिरुग्वर्जने' इत्यव्ययपाठात् रुग्भूतस्येत्यर्थः । अत एव संबोधनं—ततो विमुक्तेति । अयं भावः—"देवस्य हि स्वभावोऽयमात्मकामस्य का स्पृहा" इति श्रुते रज्ज्वा भुजङ्गस्रष्टृत्वमिव तव जगत्स्रष्टृत्वं न स्वादृष्टनिमित्तं किन्त्वज्ञानाश्रयजीवादृष्टनिमित्तेन विवर्तमानत्वरूपम् । एवमीश्वरसृष्टिमुक्त्वा पूर्वश्लोके त्वमकरणः तव बलिमित्येकपदोपादानेन सूचितं जीवेशयोरभेदमुपाधिप्रहाणसिद्धमाह—नहीति । परमस्य मायातत्कार्यबहिर्भूतस्य तव कश्चिन्नापरः पूर्वभाविकारणं भवेदस्ति नापि परः पश्चाद्भाविकार्यमस्ति । अत्र परमतसिद्धो दृष्टान्तः—वियत इवेति । यथा निरवयवत्वाद्वियतः कारणं कार्यं वा नास्ति तथा तवापीति । अत एवापदस्य पद्यते गम्यतेऽनेनेति पदं गमकं नास्त्येत्यपदस्तस्य "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेर्वाङ्मनसातीतस्येत्यर्थः । अत एव शून्यतुलां शून्यत्वान्निर्गुणत्वमनुपाख्यत्वं च दधतो न तु शून्यतां तत्साक्षित्वात् । अयं भावः—"न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्त्वा ॥ न रूपमस्य नांतोऽस्य छित्त्वैनमिति चेशगीः । युक्ता भवतरोरिन्द्रजालत्वे सति नान्यथा ॥ सम्यग्दृशा वीक्ष्यमाणं रूपं नास्योपलभ्यते । उपादानस्य नित्यत्वादयमाद्यन्तवर्जितः ॥ दुःस्वप्न इव संसारः संगमात्रेण दुःखदः । तमसंगासिना छित्त्वा प्रयाति परमं पदम् ॥" इति वेदान्तकतकोक्तदिशा ईश्वरोऽस्त्येव सर्वदा इन्द्रजालतुल्यः प्रपञ्चः इति तस्य तत्स्रष्टृत्वं युक्तम् । तथा सत्येव विषये द्वौ स्तो घटौ मृन्मयधीमयावित्युक्तेरसति विषये धीमय एव घटोऽस्ति नान्यः अत एव स्वप्ने "न तत्र रथा न रथयोगा न पंथानो भवंत्यथ रथान्रथयोगान्पथः सृजते" इति श्रुतिर्भौतिकान्रथादीन्निषिध्य धीमयानां सृष्टिमाह—उक्तविधः प्रपञ्चोऽपि धीमय एव तेन तत्स्रष्टा बुद्ध्युपाधिर्जीव इत्यपि युक्तम् । तथा च—"गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रति

**अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ॥**
**अजनि च यन्मयं तदविमुच्य नियंतृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥ १७ ॥ ३० ॥**

**एवं तावत्परमात्मनः सकाशादविद्याकृतकार्योपाधयस्तदंशा एव जीवा जाताः संसरंतो भजंतीत्युक्तम् । तत्र यद्येकाऽविद्या तदा जीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्तिप्रसंगः । अथ नानाविद्यास्तर्हि तस्यैवांशांतरेण संसारानपगमादनिर्मोक्ष इत्यादितर्कबलेन वस्तुत एव नानात्मानस्तत्र च तेषामणुत्वे देहव्यापि चैतन्यं न स्यात् । देहपरिमाणत्वे च मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात् । अतः सर्वगता नित्याश्चेति केचन मन्यंते। तत्र न तावदुक्तदोषप्रसंगः।अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासंभवात्।ईश्वरस्य तु न केनाप्यंशेन संसारशंकेत्युक्तमेव । प्रसिद्धं चात्मैक्यं सर्वश्रुतिषु । किंच इमं पक्षमंतर्यामिब्राह्मणमपि न सहत इत्याह । अपरिमिता इति । वस्तुत एवानंता ध्रुवा**

देवतासु'' इति । '' एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति '' इति च श्रुतिद्वयोक्तो विदुषो विदेहकैवल्यकाले प्राणमनःप्रभृतीनां कलानां प्रलयः परदृष्ट्या स्वकारणेषु विद्वद्दृष्ट्या स्वरूपे चेत्युपपद्यते । यथा धर्मियमपींद्रजालं बुद्धानां नास्त्येवाबुद्धानामस्त्येव तद्वत् । अत्र सार्द्धश्लोकेन जीवेशयोः सोपाधिके रूपे भूतमयधीमयजगत्कर्तृत्वेनानूद्यार्धेन घटमठाकाशवत्तयोरनुपाध्योरभेद उक्त इति ध्येयम् ( १६ ) ॥ २९ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी—**एवमित्थम् । तत्र पक्षे । अस्यार्थः—अत्र तार्किका दूषयन्ति यद्येकाविद्या जीवोऽप्येकविधस्तया बद्धोऽस्ति तर्हि जीवस्याप्येकत्वादेकस्य मुक्तौ सर्वजीवमुक्तिप्रसंगः स्यात् । अथैकविधो जीवो नानाविधा अविद्यास्ताभिर्बद्धश्चेत्तर्हि तस्यैवेश्वरस्यैवांशान्तरेण जीवरूपांशेन कृत्वा संसारानपगमात्संसारानिवृत्त्यभावादनिर्मोक्षः स्यात् । एकयाऽविद्यया मुक्तो जीवः पुनरन्यया बद्धः पुनरन्यया मुक्तः पुनरन्यया बद्ध इत्यनिर्मोक्षः । एवं च सति चतुर्थपुरुषार्थाभावः स्यादित्यादितर्कबलेन नानात्मानः स्थाप्यन्ते । तत्र च नानात्वेऽपि सर्वगतत्वमाह—तेषामात्मनामणुत्वे सूक्ष्मत्वे देहस्य स्थूलत्वे सर्वव्यापि चैतन्यं न स्यादिति जीवपरिमाणमुक्तं श्रुत्या ''आराग्रमात्रो ह्यपरो हि दृष्टः'' इति । श्रुत्यन्तरं च ''वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः सुखदुःखफलैकभुक् ॥ '' इति । 'सूक्ष्माणामप्यहं जीवः' इत्येकादशे भगवदुक्तेः । एवंभूतसूक्ष्मस्य स्थूलदेहैकप्रदेशे पिपीलिकादिस्पर्शजं चैतन्यं कथं स्यात्, तस्मात् सर्वगता इति नित्यत्वं साधयति—देह इति । देहपरिमाणत्वे च देहस्य मध्यमं हृदयं दशांगुलिपरिमाणम् ''अत्यतिष्ठद्दशांगुलम्'' इति श्रुतेः । हृदयपरिमाणानामात्मनां सावयवत्वादनित्यत्वं स्यात्तस्मात्परिमाणाभावान्नित्या अत एवात्मानो नाना सर्वगता जीवरूपेणैव नित्याश्चेति केचन तार्किका मन्यन्ते, एतन्मतं निराकुर्वन्सिद्धान्तयति—तत्र न तावदित्यादिना । तत्र बंधमोक्षप्रसंगे उक्तदोषः एकस्मिन्बद्धे मुक्ते च सर्वबन्धमोक्षरूपो दोषो नास्ति कुतः अविद्याभेदेन अविद्यया बंधो विद्यया च मोक्षः ''अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते''इति श्रुतेः । एकादशे च—''विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबंधकरी आद्ये मायया मे विनिर्मिते ॥ '' इत्युक्तः शक्तिभेदो भगवतापि । अविद्यायाः क्रियाशक्त्या बंधो विद्यायाः ज्ञानशक्त्या मोक्षः । श्रुतिश्च—'' काममयोऽयं पुरुषः स यत्कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म करोति यत्कर्म कुरुते तदभिसंपद्यते '' इति, ''तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय '' इति च । ईश्वरांशस्य जीवस्य बंधमोक्षव्यवस्थां प्रदर्श्योशिनस्तु बंधशंकां निराकरोति—ईश्वरस्येति । समष्ट्युपाधेरखंडितत्वस्येश्वरत्वात् तस्य विद्याशक्तिप्रधानत्वात् केनाप्यशेन संसारशंका नेत्यर्थः । '' एक एव हि भूतात्मा '' इत्यादिश्रुतिष्वात्मैक्यं प्रसिद्धमस्त्येव कुतो नानात्वं किञ्च जीवस्य कुतः स्वातन्त्र्यमन्तर्यामिसंभवात् अत इमं तार्किकपक्षं नाना जीवाः स्वतंत्रा नित्याः सर्वगता इति मतमंतर्यामिब्राह्मणाख्यो वेदो न सहते इत्याह—अपरिमिता इति । ध्रुवाः स्थिराः । तेनैव रूपेण ध्रुव

स्तेनैव रूपेण नित्याः सर्वगताश्च तनुभृतो जीवा यदि स्युस्तर्हि तेषां समत्वाच्छास्यता न घटत इति कृत्वा हे ध्रुव नियमो नियमनं त्वया न स्यादितरथा तु घटेत । कथम्। यन्मयमुपाधितो यद्विकारप्रायं यज्जीवाख्यमजनि जातं तत्तस्य स्वविकारस्य नियंतृ नियामकं भवेत् । अविमुच्य कारणतयाऽपरित्यज्य । किं तत् । सममनुस्यूतम् । ननु किं यत्तच्छब्दैर्ज्ञायते चेदुच्यतामिदं तदित्यत आह । अनुजानतां यदमतमिति । जानीम इति वदतां यदमतमविज्ञातप्रायम् अविषयत्वात् । तथा च श्रुतिः । "यस्यामतं तस्य मतं मतं यस्य न वेद सः ॥ अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ अवचनेनैव प्रोवाच स ह तूष्णीं बभूव" इत्यादि । किंच मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात् । तथाच श्रुतिः । "यदि मन्यसे सुवेदेति दहमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु " इत्यादि । तस्माद्यत्तच्छब्दावद्योत्यमतर्क्यं किमपि सर्वानुस्यूतत्वेना समं नियंतृ भवेदित्यर्थः ॥ अंतर्यता सर्वलोकस्य गीतः श्रुत्या युक्त्या चैवमेवावसेयः ॥ यः सर्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमंतं तं चेतसैवावलंबे ॥ १७ ॥ ३० ॥

त्वरूपेणैव । तेषां जीवानाम् । समत्वात्तुल्यत्वात् । शास्यता शासनगोचरता इति कृत्वा व्यापकानेकात्मवादे भोगसांकर्यप्रसंगोऽपि दुर्वारस्तथाहि नह्येकत्रान्तःकरणे सुखादिरूपेण परिणते तत्प्रतिसंवेदी एक एव चेतन इति नियन्तुं शक्यं सर्वेषां सान्निध्याविशेषेण प्रतिसंवेदनापत्तेरवर्जनीयत्वात् । श्रोत्रस्यैकस्यापि कर्णशष्कुलीरूपोपाधिभेदादिवान्तःकरणरूपोपाधिभेदादेकस्याप्यात्मनः शब्दग्रहव्यवस्थावज्जन्मादि व्यवस्थापि सेत्स्यतीति न पुरुषबहुत्वं वक्तव्यमिति नीलकण्ठः । शास्यता गोचराभावत्वेन नियमनं नियोगत्वम् । इतरथा समत्वाभावे कथं तदाह—यदग्निमयं विस्फुलिंगं जातं तदग्नित्वं कर्तृ विस्फुलिंगं स्वकार्य मपरित्यज्य स्वरूपांशेन सत्यांशेन च सर्वांशं व्याप्यैव नियंतृ प्रवर्तकं भवेत् । कार्याभावे कारणस्य प्रवृत्त्यभावात्तद्वत् । किं तदिति प्रश्ने तद्दर्शयति—सममनुस्यूतं मणिषु सूत्रमिव प्रोतम् । अत्राक्षिपति—नन्विति । तद्ब्रह्मेदमिदमाकारकमिति समपदमावृत्त्या योज्यम् । समं क्वचिदप्यंशेन तुल्यं वस्त्वंतरं ज्ञात्वा तद्ब्रह्म यदन्तर्याम्याख्यं तद्रूपं परमकारणम् अमतम् । अत्र प्रमाणमाह—तथा चेति । यस्य ब्रह्मविद अमतमविज्ञातमविदितं ब्रह्मेति मतम् तस्य मतं ब्रह्म सम्यग्ज्ञातमिति यस्य पुनर्मतं मया ब्रह्म ज्ञातमिति स न वेदैव । अत एव विजानतां जानीम इति वदतामविज्ञातमज्ञातमेव । अविजानतां न जानीम इति वदतां विज्ञातमिति निदर्शनम् । अवचनेनेति । वेदान्तशास्त्रमधीत्य गुरुकुलादागतं पुत्रं पिता पृष्टवान् प्रत्यग्ब्रह्म त्वं ज्ञातवान्न वेति । अविशेषे प्रत्यग्ब्रह्मणि शब्दप्रवृत्तिहेतुजातिगुणादेरभावाद्ब्रह्मवित्त्वप्रद्योतकमुखकान्त्यादिना तदभिनयं कृत्वाऽवचनेनैव कथनाभावेनैव प्रोवाच प्रत्यग्ब्रह्म मयानुभूतमिति सूचितवान् स पिता तूष्णीं बभूव ब्रह्मात्मतत्त्वमयं ज्ञातवानिति निश्चयं जगामेत्यर्थः । अन्यदाह—किञ्चेति । मतस्य दुष्टत्वे श्रुतिः—यदीति । यदि कदाचिदस्य ब्रह्मणो यद्रूपमहं सुवेदेति मन्यसे तर्हि दहं दभ्रं स्वल्पमेवापि त्वं न वेत्थ न जानीषे न केवलमेतावदपि तु अध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो वेदेषु यद्रूपं गीतं तदपि त्वं दभ्रमेव वेत्थेति मन्येऽहं यत्तु निरुपाधिभूमाख्यं ब्रह्म न तत्सुवेद्यमित्यभिप्रायः । मतखंडनपरेयं श्रुतिः । अन्तर्यामिब्राह्मणम् " यः पृथिव्यां तिष्ठन् " इत्यादिकं प्रागेव लिखितम् । स्वामिनाम्—अन्तारेति । अन्तर्यन्तान्तर्यामी श्रुत्या गीतो युक्त्या चैवमेवावसेयो निश्चितस्तम् ॥ * ॥ **श्रीधरानुयायिनी**—ननु किमिति लिंगाद्युपहितत्वेनैकस्यैव परमस्य पुंसो बहुत्वमुक्तम् । यतः सांख्यादयस्तार्किकाश्च वस्तुत एव बहवो नित्या विभव आत्मान इति मन्यन्ते तत्राहुः—अपरिमिता इति । हे ध्रुव जीवा यदि वस्तुत एवानन्तास्तेनैवोपहितरूपेणैव नित्याः सर्वगताः स्वतन्त्राश्चेश्वरवत्स्युस्तदा सर्वेषां तेषां त्वत्तुल्यत्वापत्त्या न शास्यता । सर्वैः सर्वदाऽनुभूयमानापि त्वच्छासनयोग्यता न स्यादित्यर्थः । तत्रेष्टापत्तौ त्वाह—इति नियमो नेतरथेति । इतीत्यनेन सर्वैः शिष्टैः प्रमाणीकृतः " शास्ता विष्णुरशेषस्य " इति नियमोऽभिनीय दर्शितः, स च नेतरथा कदाप्यन्यथा न भवतीत्यर्थः । " य आत्मानमन्तरो यमयति " इति श्रुतेः " न त्वत्समश्चाभ्यधिकश्च दृश्यते " " स्वतंत्रो नापरः कश्चिद्विष्णोः प्राणपतेः परः " इत्याद्युक्तेश्च । तदेव सयुक्तिकमाह—अजनीति । मुखादिव बिम्बरूपाद्ब्रह्मणः सकाशाद्दर्पणादौ प्रतिमुखमिवाविद्यान्तःकरणादौ प्रतिबिम्बरूपं यज्जीवाख्यं यन्मयमुपाधिप्राधान्येनाजनि उपाधिजन्मना

तदध्यासेन जातं तदिदं जीवाख्यं कार्यमत्यजन्नेवोपाधावपि समत्वेनानुस्यूतं कारणीभूतं बिम्बरूपं ब्रह्म सर्वेषां जीवानां स्वतो मिथो व्यावृत्तत्वेन परस्परमनियम्यानां प्रतिमुखानां मुखमिव नियंतृ भवेत् । तच्च मनोवाचामगोचरमतर्क्यं किमपि सर्वत्रानुस्यूतं साक्षिभूतमित्येव तस्य ज्ञानं नान्यत् अविषयत्वात् " यस्यामतं तस्य मतं मतं यस्य न वेद सः " इत्यादिश्रुतेर्ज्ञातस्य दोषश्रवणाच्च जानीम इति वदतामविज्ञातप्रायम् ॥ * ॥ **विश्वनाथी**–तदेवं भगवद्भक्तिप्रतिपादनोपयोगार्थमेव वयमप्येवं जीवस्वरूपं निरूपयाम इत्यन्या आहुः–अपरीति । अत्रैके वदन्ति–एकमेव सर्वव्यापि चैतन्यमेकस्या एवाविद्याया रजस्तमःप्रधानवृत्तिभेदोपाधित्वेनानंतजीवायते । सत्त्वप्रधानमूलाविद्योपाधित्वेन तु परमेश्वरायते इति । अपरे तु वदन्ति तदसत् अविद्यायाः शुद्धचैतन्याश्रयत्वात् । तन्मूलपक्षांतराणां च तत एव निरस्तत्वात् तस्मादेवं मन्तव्यम् ईश्वरवत् स्वत एव सिद्धा अनन्ता नित्या विभवश्च जीवा इति । तत्राग्रे स्वतःसिद्धत्वं खंडयिष्याम इति मनसिकृत्वाऽनंतत्वं नित्यत्वञ्च यदिशब्दात्पूर्वपाठेन स्वीकुर्वत्यस्तदुत्तरपाठेन विभुत्वं परिहरन्ति–हे ध्रुव सर्वाश्रय उभयसंमतावनंता नित्याश्च जीवा यदि सर्वगंता विभवो भवन्ति तर्हि जीवानां त्वच्छास्यतेति यो नियमः शास्त्रे निर्णयः स न स्यात्, व्याप्यत्वाभावात् । इतरथा विभुत्वाभावे तु त्वन्नियमो न स्यादिति न किन्तु स्यादेवेत्यर्थः व्याप्यत्वात् । किञ्च–त्वत्तो न कश्चित्पदार्थः स्वतन्त्रोऽस्ति सर्वेषामन्वयैरैकात्म्यश्रवणात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च । विशेषतो जीवानां त्वत्तो जन्मापि श्रूयते तत एव त्वद्व्याप्यत्वात्त्वच्छास्यत्वं तेषामित्याहुः–अजनि चेति । यदग्न्यादिमयं स्फुलिंगादिकमजनि जातं तदग्न्यादिकमेव कर्तृ स्फुलिंगादिस्वकार्यमविमुच्य स्वरूपांशेन शक्त्यांशेनैव वा सर्वांशं व्याप्यैव नियंतृ भवेत्प्रवर्तकं भवेत् तदभावे तत्प्रवृत्त्यभावात् । किञ्च समं क्वचिदंशे तुल्यं वस्त्वन्तरमनुजानतां यत्किञ्चित्तथा वदन्ति तत्रानुज्ञामापि ददतां यदन्तर्याम्याख्यं त्वद्रूपं परमकारणं वस्तु अमतमज्ञातम् । तत्र हेतुः–मतस्य तस्य दुष्टतया दर्शयिष्यमाणश्रुतित्यक्ततयेति । तस्माद्रवितद्रश्मिपरमाणुवृन्दवत्तदुद्भूतनित्यतटस्थांशरूपाश्रितपरमाणवोऽप्ययस्कान्तादिवत्स्वप्रभावविशेषरूपेण गुणेन गुणाद्वेति न्यायसिद्धेन स्वशरीरमखण्डमपि चेतयन्ति तस्य महानज आत्मेति महद्व्यपदेशश्च प्राज्ञस्येव यत्किञ्चिद्गुणसारत्वादेव लोके महारत्नादिशब्दप्रयोगवत् । तदेवमेव शास्यशासकत्वे सिद्धे सेव्यसेवकत्वमपि सिद्ध्यतीति पूर्वापरदार्शिता भक्तिः सिद्ध्यतीति भावः । अत्र श्रीगीतोपनिषदः–" यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ " इति । भगवदुद्धवसंवादश्च–' महतां च महानहम् ' इति महत्त्वस्य स्वरूपपरिमाणानंतर्येणोक्तत्वात्तथैव जीवस्य परिमाणोक्तौ ' सूक्ष्माणामप्यहं जीवः ' इति । अत एव विष्णुधर्मोत्तरं " वालाग्रशतशो भागः कल्पितो यः सहस्रधा । तस्यापि शतशो भागो जीव इत्यभिधीयते ॥ " श्रुतयश्च–" वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः " इत्याद्याः । " एको देवः सर्वभूतेषु गूढः " इत्याद्याः । " न तत्समश्चाभ्यधिकश्च दृश्यते " इत्याद्याश्च । अत्र विशेषविचारश्च भगवत्संदर्भे परमात्मसन्दर्भतट्टीकयोश्च दृश्यः ( १७ ) ॥ ३० ॥

**नीलकण्ठी**–एवं द्वैतस्य मिथ्याभूतमनोमात्रत्वेन जीवस्य ब्रह्माभिन्नत्वेन च ब्रह्माद्वैतं साधितम् । परे तु जीवबहुत्वं जीवेश्वरयोर्भेदं चाहुस्तन्निरस्यति–अपरिमिता इति । हे ध्रुव यदि अपरिमिता असंख्याता ध्रुवा अबाध्याः तनुभृतो जीवाः सर्वे सर्वगता व्यापकाः स्युस्तर्हि तेषां न शास्यता स्यात् । पृथिव्यादिवाद्विभूनां व्योमादीनां परस्पराधीनत्वादर्शनेन त्वत्तुल्यत्वादित्यर्थः । न चैषामदृष्टाद्यचेतनशास्यता युज्यते दृष्टान्ताभावात् ! नहि चेतनस्याचेतनः शास्ता क्वचिद्दृष्टोऽस्ति नापि स्वस्य स्वशास्यता धीपूर्वकारिणश्चेतनस्य निषिद्धे प्रवृत्त्यनुपपत्तेः । "यो विज्ञाने तिष्ठन्विज्ञानादंतरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं विज्ञानमंतरो यमयति य आत्मनि तिष्ठन्नात्मनोन्तरः " इति विज्ञानात्मशब्दवाच्याज्जीवात्तच्छास्तुः पृथगाम्नानात् । तस्मात्त्वच्छास्यानां जीवानां त्वत्तौल्यत्वं वाच्यम् । तच्च मध्यमत्वाणुत्वयोरुक्तदोषात् " घटसंवृतमाकाशं नीयमाने यथा घटे । घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ एक एव तु भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ " इति श्रुत्यनुसारेण घटाकाशवज्जलचन्द्रवद्वौपाधिकं बोध्यम् । ननु, शास्यतैव मास्त्वित्याशंक्याह–इतीति । इतरथा जीवानां शास्यत्वाभावेन प्रवृत्तेर्यादृच्छिकत्वाभ्युपगमे इति नियमो न स्यात् । इतिशब्देन दृश्यमानं नियममभिनीय दर्शयति दृश्यन्ते हि दुर्बलैरपि बलवन्तो बाध्यन्ते आनिरुद्धा अपि व्याघ्रादयः स्वभक्ष्यैर्नृपशुभिः परिपूर्णेऽपि भुवने क्षुधा पीडयमाना मितमेवाहारं लभन्ते न यथेष्टम् सोऽयं नियमः शास्यत्वाभावे न स्यादित्यर्थः। ननु देहेन्द्रियावच्छेदेन जीवानां शास्यत्वं न विभुत्वेन रूपेणेति चेत्तर्हि–"कार्योपाधिरयं

न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ॥
त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ १८ ॥ ३१ ॥

ननु यदि च परमात्मनो जीवा जायंते इति नियंतृनियम्यभाव उच्यते तथा सति जीवानामनित्यत्वप्रसंगेन प्रतिदिनं कृतनाशाकृताभ्यागमप्रसंगः स्यात् । किंच तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् न चैतद्युक्तम् । स्वप्रकाशानंदात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशंक्योपाधिजन्मनैव जीवानां जन्मोच्यते न स्वतः अघटनादित्याह । न घटत इति । तत्र किं प्रकृतेर्जीवरूपेणोद्भवः स्यात्पुरुषस्य वा उभयोर्वा । आद्ये जीवानां जडत्वापत्तिः । द्वितीये पुरुषस्य विकारित्वप्रसंगः । अत एव न तृतीय इत्याशयेनोक्तं प्रकृतिपूरुषयोरुद्भवो न घटत इति श्रुत्याऽजत्वप्रतिपादनादपीत्याह । अजयोरिति । तथाच श्रुतिः । " अजामेकां लोहितशुक्लकृष्णा बह्वीं

जीवः कारणोपाधिरीश्वरः " इति श्रुतेरौपाधिके जीवेश्वरयोर्जीवानां च परस्परं भेदे सिद्धे किमन्तर्गडुना तेषां विभुत्वेन बहुत्वेन वा । तर्कमते श्रोत्रैक्येऽपि कर्णशष्कुलीरूपोपाधिभेदेन शब्दग्रहव्यवस्थावदात्मैक्येऽप्युपाधिभेदादेव शास्यशासितृविभागस्य बंधमोक्षव्यवस्थायाश्च सिद्धेरित्याशयवानाह—अजनि च यन्मयं तदविमुच्य नियंतृ भवेदिति । अत्र द्वयी प्रक्रिया—उदाहृतश्रुतेर्मायाप्रतिबिम्बितं चैतन्यमीश्वरः, मायाकार्यान्तःकरणप्रतिबिंबितं जीवः, बिंबस्थानीयं शुद्धं चैतन्यं तृतीयमित्येका । "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा " इति श्रुतेः प्रतिबिंबो जीवः, बिंबभूत ईश्वरः, इति चिद्द्वैविध्यरूपाऽपरा । तत्राद्यायामुभावप्यध्यस्तौ परस्यां जीव एव । तथा च कार्यकारणोपाधिकयोरध्यस्ताधिष्ठानस्वरूपयोर्वा जीवेशयोर्मिथो वियोगाभावेन नियम्यनियामकत्वं संभवति । परेषां तु तटस्थस्येश्वरस्य नांतर्यामित्वं संभवतीत्याशयः । अक्षरार्थस्तु—यन्मयं यस्य कारणस्याधिष्ठानस्य वा विकारो विवर्तो वा यत् कार्यं घटादि रजतादि वा तस्य कार्यस्य तन्मृच्छुक्त्यादिरूपं नियंतृ भवेत् । कथं तत् अविमुच्य अपरित्यज्य । कार्यमिति । यन्मयं कार्यं तत्किंविधमित्यपेक्षायामाह—सममनुजानतां यदमतं मतदुष्टतयेति । "समं सर्वं नभन्तामन्यके समे " " माभूवन्नन्यके सर्वे " इति मंत्रतन्निरुक्ताभ्यां समशब्दस्य सर्वपर्यायत्वावधारणात् । तेन समं कारणं ब्रह्मेत्यर्थः । अस्य तात्त्विकं रूपमाह—यदनुजानताम् । शास्त्राचार्योपदेशमनु साक्षात्कुर्वताम् अमतमज्ञातं प्रत्यक्त्वेनाविषयत्वात् । " अदृष्टं द्रष्टृ अमतं मंतृ अज्ञातं विज्ञातृ " इति श्रुतेः । अमतत्वे हेतुः—मतदुष्टतयेति । मतस्य ज्ञातस्य घटादिवदनात्मत्वेन " अतोऽन्यदार्तम् " इति श्रुतेर्मिथ्यात्वापत्तिदोषग्रस्ततया यत् ज्ञातं तन्न ब्रह्मेत्यर्थः । तथा च श्रुतिः—" यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ यदि मन्यसे सुवेदेति दह्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् " इति ( १७ ) ॥ ३० ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—पुनराक्षिपति—तथा सति जीवानामुत्पत्त्यङ्गीकारे सति । "यज्जन्यं तद्विनाशि" इति व्याप्तेरनित्यप्रसंगेन । तथा च कृतानां कर्मणां विनैव फलभोगं नाशोऽकृतानां पूर्वमसंपादितानामेव फलदानायाभ्यागमः प्राप्तिः स्यादिति । न केवलमेतावानेव दोषः किन्त्वन्योऽपीत्याह—किञ्चेति । तदोत्पत्तिस्वीकारे स्वरूपहानिः स्वरूपनाशः । भवत्विति चेदाह—न चेति । एतज्जविस्वरूपनाशलक्षणमुक्त्युपादानं न च युक्तं स्वप्रकाशानंदात्मनः स्वयंज्योतिःसुखस्वरूपस्यात्मनोऽविद्याकृतानर्थस्य कर्तृत्वभोक्तृत्वादिधर्माणां निवृत्तिमात्रस्य । तत्रोत्पत्तिस्वीकारे । उभयोः प्रकृतिपुरुषयोः । आद्ये प्रकृतेर्जीवरूपेणोद्भवे । द्वितीये पुरुषस्य जीवरूपेणोद्भवे । अत एव पूर्वोक्तोभयदोषत्रासादेव तृतीयः उभयोर्जीवरूपेणोद्भवपक्षोऽपि नेत्यभिप्रायेणाह—प्रकृतिपूरुषयोरिति । श्रुतिमाह—तथा चेति । न जायत इत्यजा मूलप्रकृतित्वात् । मूलप्रकृतिरविकृतिरिति सप्तत्यामुक्तेः ।

---

१ द्वितीयायाम् ।

प्रजां जनयंती सरूपाम् ॥ अजो ह्येको जुषमाणोऽनु शेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । उभययुजां तु भवंति उभयं च तद्युज्यत इति युक् संबद्धं परस्पराध्यस्तमिति यावत् । तेनासुभृतः प्राणाद्युपाधयो जीवा जायंत इत्यर्थः । जलबुद्बुदवदिति । यथा केवलेन जलेनानिलेन वा जलबुद्बुदा न भवंति किंतु मिलिताभ्यां तद्वत् । तत्र यथाऽनिलो निमित्तं जलमुपादानमेवमत्रापि प्रकृतिर्निमित्तं पुरुष उपादानम् । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः । सोऽकामयत बहुस्यां प्रजायेय" इति । "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरंति" इत्यादिश्रुतिषु चेतनाचेतनप्रपंचस्य परमात्मोपादानत्वश्रवणात् । न च विकारित्वं परिणामानंगीकारात् । केचित्पुनः परिणाममंगीकृत्यात्मनो विकारभिया विपरीतं निमित्तोपादानभावमिच्छंति । सर्वथा तावत्प्रकृतिपुरुषैक्याद्भवतीति सिद्धम् । तत् "एकमेवाद्वितीयं ब्रह्म । अजामेकाम् । अविनाशी वा अरेऽयमात्मा" इत्यादिश्रुतिबलादुत्पत्तिश्रवणाच्च जीवानामौपाधिकमेव जन्म न वस्तुत इत्युक्तम् । उपाधिलयेन परमात्मनि पुनर्लयश्रवणादपि न वास्तवं जन्मेत्याह । त्वयि त इति । त्वयि कारणात्मनि त इमे जीवाः । तत इति । यतो न वास्तवं जन्म तस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिः सह निलिल्युर्लीना बभूवुः । तत्र सुषुप्तिप्रलययोर्मधुन्यशेषरसा इव लीयंते । यथा मधुनि सकलकुसुमरसा विशेषतोऽनुपलक्ष्यमाणा अपि सामान्येनोपलक्ष्यंते एवं स्वापादौ विशेषमात्रलयात्कारणस्य विद्यमानत्वात्सामान्यतो वर्तंते । मुक्तौ तु कारणस्यापि लयात्त्वयि परमे निरुपाधौ सरित

तां लोहितशुक्लकृष्णां रजःसत्त्वतमोवर्णाम् । सरूपां राजसीसात्त्विकीतामसीरूपां नरसुरनारकीमित्यर्थः । अजः पुरुषः एकोऽजः क्षेत्रज्ञो जीवः अजां जुषमाणः सेवमानः अनुशेते निरंतरं भुङ्क्ते । अन्योऽजः परमात्मा एनामजां जहाति । किंभूतां पुरुषरूपेण भुक्तो भोगो यस्यास्ताम् । सृष्टेः पूर्वं प्रकृतौ पुरुषस्तु वीर्यं निहितवान् । तद्वीर्यं प्रकृतेर्गर्भान्महत्तत्वं जातमित्यत आह—भुक्तभोगाम् । बंधमोक्षनिदर्शनपरेयम् । उभयं प्रकृतिपुरुषं तेन परस्पराध्यासेन । इत्यर्थ इति—तात्पर्यम् । दृष्टान्तेनोक्तमर्थं स्फुटयति—जलबुद्बुदेति । दृष्टान्तं स्फुटयति मिलिताभ्यां जलानिलाभ्यां तद्वदत्रापीति । तत्र च दृष्टान्ते । अत्रापि प्रकृतेऽपि । पुरुषोपादानत्वे श्रुतिमाह— "तस्माद्वा" इति । "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तं यत्तस्मादात्मशब्दवाच्यात् । स्पष्टमन्यत् । सृष्टिपरेयम् । श्रुत्यंतरे च व्याख्याते । "यथाग्नेः" इत्यादिश्रुतौ चेतनाचेतनात्मकप्रपञ्चस्य परमात्मोपादानकत्वमेव श्रूयते । तथा च परमात्मन उपादानत्वे विकारित्वं स्यादिति चेदाह—न चेति । केचित्तु परिणामे वस्तुस्वरूपास्थितेः कुण्डलादिरूपेण परिणामेऽपि स्वर्णस्वरूपानाशदर्शनात्तमंगीकृत्यापि त्रिकारभियाऽऽत्मन उपादानत्वं नांगीकुर्वन्ति किन्तु निमित्तत्वं स्वीकुर्वंति । एवं कृतेऽप्यस्मत्पंथा एवांगीकृतो भवेदित्याह—सर्वथेति । तदित्थम् "अजमेकम्" इत्यादिश्रुतेरजत्वस्मरणात् "यथाग्नेः" इत्यादिश्रुतेरुत्पत्तिश्रवणान्न वास्तवं किन्त्वौपाधिकं देहाद्युपाधिकृतमेवेत्याह—न वस्तुत इति । लयो हि नित्यनैमित्तिकात्यन्तिकभेदात्त्रिधा । तत्र तेषु सुषुप्तिर्नित्यलयः प्रलयः प्राकृतिकनैमित्तिकरूपो ज्ञेयः । सुषुप्तिप्रलययोर्दृष्टान्तमाह—मधुनीति । विशेषोऽनेकभेदभिन्नः प्रपञ्चः कारणस्याज्ञानस्य विद्यमानत्वात् "न किञ्चिदवेदिषम्" इति तत्स्मृतेः । आत्यन्तिकलये त्वहं ब्रह्मास्मीति स्वरूपसाक्षात्कारेणाज्ञानं निवर्तत एवेत्याह—मुक्तौ त्विति । मधुनि लिल्युरित्यत्र प्रमाणमाह—तथा चेति । यथेति । यत्पृच्छसि अहन्यहनि संपद्य न विदुः सत्संपन्नाः स्म इति । शृणु तत्र दृष्टान्तम्—हे सोम्य श्वेतकेतो यथा लोके मधुकृतो मधुमक्षिका मधु निस्तिष्ठन्ति धूत्कृत्य निष्पादयन्ति । तत्प्रकारमाह—नानात्ययानाम् । नानाशब्द उभयत्र संबध्यते । नानाभवा नानात्या, नाना यान्तीति नानायाः । ततश्च नानात्यानां नानास्थानोद्भवानां नानायानां नानाजातिं प्राप्तानां वृक्षाणां रसान् समवहारं समवहृत्य एकतां गमयन्ति मधुत्वमापादयन्ति तथा ते रसास्तत्र मधुनि विवेकं न लभन्तेऽमुष्य वृक्षस्याहं रसोऽस्मीति । एवमेवेमाः सर्वाः प्रजाः सति श्रीनारायणे संपद्य न विदुः सुषुप्तिकाले मरणप्रलययोश्च । अत एव "तस्मिन्सति संपद्यामहे" इति । सोपाधिलय

इवार्णवे लीयंत इति विवेकः । तथा च श्रुतयः । "यथा सोम्य मधु मधुकृतो निस्तिष्ठंति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां संगमयंति ॥ ते यथा तत्र न विवेकं लभंते अमुष्याहं वृक्षस्य रसोस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति । यथा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् " इत्याद्याः ॥ यस्मिन्नुद्यद्विलयमपि यद्भाति विश्वं लयादौ जीवोपेतं गुरुकरुणया केवलात्मावबोधे ॥ अत्यंतांतं व्रजंति सहसा सिंधुवत्सिंधुमध्ये मध्येचित्तं त्रिभुवनगुरुं भावये तं नृसिंहम् ॥ १८ ॥ ३१ ॥

परेयम् । सरित इवार्णव इत्यत्र श्रुतिमाह—यथेति । यथा स्यंदमाना गच्छन्त्यो नद्यः नामरूपे विहाय समुद्रेऽस्तं गच्छन्ति अदर्शनं यान्ति एवं विद्वान् ज्ञानी नामरूपे त्यक्त्वा परात्परं सूक्ष्मात्प्रकृतिपुरुषादपि परं दिव्यं यथोक्तलक्षणं पुरुषमुपैति । निरुपाधिलयपरेयम् । श्रुत्यन्तरं चात्र टीकाकारैर्गृहीतं "यथोदके शुद्धमुदकमासिक्तं तादृगेव भवत्येवं मुनेर्विजानत आत्मा भवति गौतम" इति । यथा नद्यादिजले घटादिष्ठं शुद्धं निर्मलं जलमासिक्तं तादृगेव भवति हे गौतम एवं विजानतो ज्ञानवतो मुनेरात्मा देहान्ते शुद्धो लिंगनिर्मुक्तः सन्ब्रह्मणि युक्तो ब्रह्मैव भवतीति । अथ स्वामिनाम्—यस्मिन्निति । तं नृसिंहं मध्येचित्तं चित्तस्य मध्ये "पारे मध्ये षष्ठ्या वा" इति समासः । भावये चिन्तयामि । 'भू—मिश्रीकरणचिन्तनयोः' । तं कम्, यस्मिञ्जीवोपेतं जीवसमेतं विश्वम् उद्यत् उद्भवत्, यस्मिन्विलयमपि यत् गच्छत्, यस्मिन्भासते प्रकाशते तम् । लयादौ सुषुप्तिप्रलया दिषु भाति । गुरुकरुणया केवलात्मावबोधे सति यस्मिन्नत्यन्तमपुनरावृत्तिं व्रजति तम् । तत्र दृष्टान्तः—सिंधुवन्नदीवत् । सिंधुमध्ये समुद्रमध्ये यथा सिंधुर्गंगा समुद्रेऽत्यंतांतं व्रजति तद्वत्सर्वा नद्यो गंगायां निपतन्ति सैव समुद्रे प्रवि शतीति । यद्वा—सिंधुभिस्तुल्यं सिंधुवत् यथा नद्यः समुद्रे इति ॥ * ॥ **श्रीधरानुयायिनी—**बिंबाद्ब्रह्मणो जातानां प्रतिबिंबरूपाणां जीवानां कारणत्वेन ब्रह्मैव नियामकमित्युक्तम् । तथा च जीवानामनित्यत्वापत्त्या कृतनाशा कृताभ्यागमादिदोषापत्तिरित्याशंक्यान्तःकरणरूपोपाधिजन्मनैव जीवानां जन्म न स्वतः । यथाऽनवच्छिन्नमाकाशमेव घटोपाधिना घटाकाशं भवति घटभंगे तु पुनस्तदेव महाकाशम् एवमविद्योपाधिनान्तःकरणोपा धिना वा जीवानां जन्म तद्भंगे मोक्षः । अतः स्वरूपतो जीवोऽपि ब्रह्मैवेत्याहुः—नेति । प्रकृतेर्जीवरूपेणोत्पत्तौ जीवानां जडत्वापत्तिः पुरुषस्य जीवरूपेणोत्पत्तौ तस्य विकारित्वप्रसंगः उभयोः प्रकृतिपुरुषयोर्द्वयोर्मिलि त्वापि जीवरूपेणोत्पत्तिर्न संगच्छते । "अजामेकामजो ह्येकः" इत्यादिश्रुतौ "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि " इति श्रीगीतायाञ्च द्वयोरप्यजत्वेन प्रसिद्धेः । अत उभयोः परस्पराध्यासरूपसंबंधेनैव प्राणा द्युपाधयो जीवा जलवायुसंबंधेन बुद्बुदा इव जायन्ते । यथा केवलेन जलेन वायुना वा बुद्बुदा नोत्पद्यन्ते किन्तूपादानकारणीभूते जले निमित्तकारणीभूतेन वायुनेति मिलितयोस्तयोः संबंधेनैव त उत्पद्यन्ते, तथात्राप्युपादा नकारणभूते पुरुषे निमित्तकारणीभूतया प्रकृत्या विवर्तरूपा बुद्बुदा इव जीवा जायन्ते । यद्वा—प्रकृतिरूपोपादानकारणे निमित्तकारणीभूतेन पुरुषेण परिणामरूपा जीवा जायन्ते । उभयथापि प्रकृतिपुरुषयोरैक्यादेवा विद्यया परस्पराध्यासादेवेत्यर्थः । परमात्मनि प्रकृतिः स्वरूपेणाध्यस्ता प्रकृतौ च परमात्मापि सत्तास्फूर्तिरूपेण संसर्गेऽध्यस्तः । यथाऽधिष्ठानस्य शुक्त्यादेः संसर्गमात्रं रजतेऽध्यस्यते रजतं तु स्वरूपेण शुक्तावध्यस्यते परमात्मनोऽपि स्वरूपेणाध्यासे बाधापत्त्या शून्यवादप्रसंगादिति । एवं चौपाधिकमेव जीवानां जन्म न वास्तवमित्युक्तम् । उपाधिलयेन जीवानां ब्रह्मणि लयश्रवणादपि न वास्तवं जन्मे त्याहुः—त्वय्यीति । सर्वे जीवाः स्वोपाधिसहिता यतस्त्वत्त उत्पन्ना अतस्त्वय्येव कारणे लीना बभूवुः । लयश्च सुषुप्तिप्रलययोर्मुक्तौ चेति द्विधा । आद्यो यथा—मधुमक्षिकाभिर्नीता अने कपुष्परसा मधुनि लीनाः सन्तोऽमुकस्य पुष्पस्याहं रस इति विशेषतोऽनुपलक्ष्यमाणा अपि सामान्यत उपलक्ष्यन्त एव, तथा प्रारब्धकर्मनीता अन्तःकरणाद्युपाधिसहिता जीवा स्त्वयि लीनाः सन्तो मनुष्यपशुपक्ष्यादिरूपेण विशेषतोऽनुपलक्ष्यमाणा अपि सामान्यतोऽवशिष्टसंस्कारा लक्ष्यन्त एव, तदानीं संसारकारणीभूताविद्यायाः विद्यमानत्वात् । अत एव जीवानां पुनर्जन्म । द्वितीयो यथा—मुक्तौ च ज्ञानेनाविद्याया अपि विलयात्तदा त्वयि निरुपाधिब्रह्मणि सर्वे जीवाः समुद्रे श्रीगंगादिनद्य इव सामान्यविशेषाभ्यामनुपलक्ष्यमाणा अनवशिष्टसंस्कारा एव लीयन्ते ।

अत एव न तेषां पुनर्जन्मेत्यर्थः । एवञ्चाविद्योपहितानामप्यनादित्वाज्जीवानां वास्तवजन्ममरणराहित्यान्न कृतनाशाकृताभ्यागमादिदोषापत्तिरिति ध्येयम् । यद्वा—ननु, स्वप्रियया सह लोकवद्विदेहवृषभानुभीष्मकदशरथनंदवसुदेवादिगृहे वारंवारमुत्पद्यमानस्य कथं मम महती स्तुतिरित्याशंक्य सर्ववैलक्षण्यं वदन्त्यः स्तुवन्ति—नेति । हे प्रभो प्रकृतिपुरुषयोर्जगज्जननीजनकयोः श्रीसीतारामयोः श्रीराधाकृष्णयोः श्रीरुक्मिणीवासुदेवयोर्वोद्भवो जन्म न घटते । यतः अजयोर्नित्यसिद्धत्वेन जन्मरहितयोः । इमे जीवास्तु ततः त्वत्तो नियन्तुरीश्वराद्धेतुभूतात् उभययुजा मातृपितृसंयोगेन जलवायुसंयोगजन्यजलबुद्बुदवत् असुभृतः क्षणविनाशिदेहधरा भवन्ति । एवंभूता अपि ते केचित्कृतपुण्यपुञ्जास्तव विविधनामगुणैः कृत्वा त्वदीयनानाविधनामगुणकीर्तनश्रवणादिना परमे मधुनि परमामृतरूपे त्वयि लिल्युर्लयं प्रापुः त्वत्पादपद्मच्छायायां लीना बभूवुः । ननु, नानाभेदाः प्राणिनः कथं समफलभाज इत्याकांक्षायां दृष्टान्तमाहुः—यथाऽशेषरसाः मधुरक्षारादिविविधजलाः सरितो नद्योऽर्णवे समुद्रे लीना बभूवुस्तद्वदित्यर्थः । अभीष्टप्राप्तौ मार्गे निरोधकाभावेऽप्ययं दृष्टान्तो बोद्धव्यः । यद्वा—हे उभय युगुलमूर्ते श्रीराधाकृष्ण असुभृतो देवमनुष्याद्या जीवाः अजयोः आद्वासुदेवास्त्वत्तो जातयोराविर्भूतयोः प्रकृतिपुरुषयोर्युजा संयोगेन जलवायुसंयोगेन बुद्बुदा इव जायन्ते । ततस्तदनंतरं त इमे जीवाः अशेषरसाः न शेषो रसः पुनरुत्पत्तिहेतुरदृष्टादिर्येषां ते तथाभूताः सन्तो मधुनि अमृतादपि मिष्टतमे परमे परा मा यस्येति । युगुलमूर्तावेव त्वयि समुद्रे नद्य इव विविधनामगुणैः सह लीना भवेयुः । एवं च त्वयि लीनानां तेषां पुनरुद्भवो जन्म न घटत इत्यर्थः । स्वामिश्लोकपदार्थः—लयादौ प्रलये सुषुप्तिकाले च सर्वजीवसहितं लिङ्गदेहादिरूपं विश्वं यस्मिंस्त्वय्यधिष्ठाने विलयं यदपि प्राप्नुवदपि भाति संस्काररूपेण सूक्ष्मतया तिष्ठति । 'इण्—गतौ' अतः शतरि यदिति रूपम् । ततः सृष्टिकाले जाग्रति चोत्पन्नं भवतीत्यर्थः । गुरूपदेशेन कूटस्थात्मसाक्षात्कारे सति अत्यन्तान्तं निरवशेषप्रलयम् समुद्रमध्ये श्रीगंगावत् चित्तस्य मध्ये ॥ * ॥

**विश्वनाथी**—अथ पूर्वोक्तमजनि च यन्मयमिति व्याचक्षाणा जीवानां तद्व्याप्यत्वमेव स्थापयन्तस्तदनुगताः काश्चिदन्याश्च श्रुतयस्तत्तात्पर्येणैव स्वतात्पर्यं ज्ञापयन्ति—न घटत इति । अयमर्थः—कार्यलक्षणं द्विविधम्, अन्यथासिद्धीनियतपश्चाद्भावित्वं परान्वयव्यतिरेकानुकारित्वञ्चेति । तत्र पूर्वं रसादावव्याप्तमाश्रयसमानकालत्वेन प्रतीयमानत्वात् । भवतु वा स्वादौ वस्तुनि रसादेरुत्तरभावित्वम्, अण्वादौ तु न संभवत्येव । अथोत्तरं च परमपुरुषस्य व्यतिरेकाभावान्नेष्टम् । अतो जीवस्य तादृशत्वात्स्वरूपतो जन्मासंभवेनोपाधित एव जन्मन्यपि तद्व्याप्यत्वं सिद्ध्यति । यथा प्रकृतेस्त्रिगुणात्मशक्तेरिव जीवस्योद्भवो न घटते, कुतः अजयोः "अजामेकाम्" इत्यादिश्रुतौ द्वयोरप्यजत्वेन सिद्धयोरीश्वरवदनाद्यन्तयोरित्यर्थः " प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि " इति तद्वाक्यादौ ततश्चाजनि च यन्मयमिति यदुक्तं तत्तु परमेश्वरव्याप्यत्वेनोपाधिजन्मनि तत्तादात्म्यापेक्षयैवेत्याहुः—उभययुगिति । उभयं प्रकृतिपुरुषरूपं युनाक्ति व्याप्नोतीत्युभययुक् । त्वदंशः परमपुरुषः तेन तच्छक्तिद्वयविशिष्टेन हेतुनाऽसुभृतः सोपाधिकावस्थतया ते जीवा जायन्ते । यथा जलवायुविशिष्टेनाकाशेन बुद्बुदा इत्यर्थः । तथापि त्वदुपादानत्वं " प्रकृतिर्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ " इत्येकादशस्थश्रीभगवदुक्तन्यायेन लब्धशक्तिमतः सकाशाच्छक्तेरनन्यत्वेन एव स्वरूपतोऽपि त्वद्व्याप्यत्वमेव तेषां स्थितमिति । तथा च श्रीविष्णुपुराणे—"प्रधानञ्च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महाबुद्धे वृतौ संश्रय धर्मिणौ ॥ " इति । यत एवं तत आत्यन्तिकाख्येऽपि किमुत प्राकृताख्ये प्रलये तेषां त्वयि प्रवेश एवेत्याहुः—त्वयीति । अत्र यथा सरितामशेषरसानाञ्च तत्तद्गुणनाम्नामेव नाशः न तु तत्तत्स्वरूपस्य नाप्यभेदवत्त्वं पृथक्तत्तदंशसंभवात् तथा मयि त्वयीत्यपि ज्ञापितम् । अत्र पूर्वार्धे श्रुतयः "हंतेमास्तिस्रो देवता अनेनात्मनानुप्रविश्य नामरूपे विहाय व्याकरवाणि " इत्याद्याः । उत्तरार्धे च "यथा सोम्य मधुकृतः " इत्याद्याः ( १८ ) ॥ ३१ ॥

**नीलकंठी**—एवं जीवेश्वरयोर्जीवानां च परस्परं भेदो निराकृतः । इदानीं कार्योपाधीनां जीवानामुपाधिजन्मना जन्मवतां कृतनाशाकृताभ्यागमप्रसंगः स्यादित्याशंक्य न हि वयं कार्यस्य प्रागत्यन्तासत उत्पत्तिं ब्रूमः 'नासतो विद्यते भावः' इत्यसदुत्पत्तिनिषेधात् । किन्तु कारणे सत एव तिलतैलवदाविर्भावं जन्मेति मत्वा किं प्रकृत्युत्पत्त्या पुरुषोत्पत्त्या वा जीवानां जन्माशंक्यत इति विकल्प्य दूषयति—न घटत इति । प्रकृतिपुरुषयोरुभयोरपि उत्पत्तिर्न घटते । अत्र हेतुगर्भं विशेषणम् अजयोरिति । "अजामेकामजो ह्येकः " इति श्रुत्या, "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि " इति स्मृत्या च तयोरजत्वावगमादित्यर्थः । कथं तर्हि, एते आत्मानो व्युच्चरन्ति इत्यग्निविस्फुलिंगन्यायेन ब्रह्मणः सकाशाज्जीवोत्पत्तिराम्नायतेऽत आह—उभययुजेति । जलबुद्बुदे यथा जलं नोत्पद्यते नापि तदवच्छिन्न आकाशः अथापि केनचिन्निमित्तेन जलक्षोभे सत्युभयात्मको बुद्बुद

नृषु तव मायया भ्रममभीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ॥
कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ १९ ॥ ३२ ॥

नन्वेवं तावत्परमेश्वराज्जीवा जायंते तद्वशेन च कर्माणि कुर्वंति पुनस्तत्र लीयंत इति संसारचक्रे परिभ्रमणमुक्तमिदानीं तन्निवृत्तये "परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च ॥ उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश" इत्याद्या भगवदनुवृत्तिं विदधतीत्याह। नृषु तव माययेति। नृषु जीवेष्वमीष तव मायया भ्रममुक्तलक्षणमवगत्य ज्ञात्वा सुधियो भृशं त्वय्यभवे भवनिवर्तके भावं स्वभावमनुवृत्तिं दधति कुर्वंति । कीदृशं भ्रमम् । अनुप्रभवम् अन्वनुप्रभवो यस्मिंस्तं भ्रमम् । ततः किमत आह । कथमिति । अनुवर्तताम् अनुवर्तमानानां त्वामेव शरणं भजतां भवभयं संसारभयं कथं भवेत न कथंचिदपीत्यर्थः । कुतः यद्यस्मात्तव भ्रुकुटिर्भ्रूभंगरूपस्त्रिणेमिस्तिस्रो नेमय इवावच्छेदाः शीतोष्णवर्षाकाला यस्य संवत्सरात्मकस्य कालस्य सः । अभवच्छरणेषु न भवान् शरण रक्षिता येषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति । अत एवंभतं संसारमा कलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति ॥ संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभवतापतप्तम् ॥ कथंचिदापन्नमिह प्रपन्न त्वमुद्धर श्रीनृहरे नृलोकम् ॥ १९ ॥ ३२ ॥

आविर्भवति । एवं जीवेऽपि नान्तःकरणमुत्पद्यते नापि तदवच्छिन्नं चैतन्यम्। अथापि अनादिकालप्रवृत्तजीवादृष्टादिना मायाक्षोभे सत्युभयात्मा जीव आविर्भवतीति युज्यते । एवं व्युच्चरणश्रुतिः कृतहानाद्यभावश्चेति भावः । यत एवं ततोहेतोः त इमे जीवाः जले बुद्बुदा इव त्वयि परमे विविधैर्नामभिर्गुणैश्चोपलक्षिताः सन्तोऽर्णवे सरित इव मधुनि अशेषरसा इव च पूर्वकल्पान्ते लिल्युः लीनाः । अस्मिन्कल्पेऽपि त्वत्त एवोत्पन्नास्त्वय्येव वसन्तीत्यर्थः । तथा च श्रुती भवतः—"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां रसं गमयन्ति ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामहे" इति। यद्वा—त्वयि मधुनीति संबंधः "इदं वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच" इति ब्रह्मण्यपि मधुशब्दप्रयोगदर्शनात् । स च "एतद्वै मधु दैव्यं यदाज्यम्" इति श्रुतेर्घृतापरपर्यायः सन्ब्रह्मणि घृतकाठिन्यवत्प्रपञ्चप्रलयोदयौ, इति दर्शयति— अस्मिन्पक्षे रसा विषयानंदाः "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः सर्वेऽपि विषयानंदा ब्रह्मानंदांभोधेरेव विप्रुष इति दर्शितम्। पूर्वस्मिन्व्याख्याने रसाः कटुतिक्तकषायादयस्तत्तद्वृक्षोद्भवाः (१८)॥ ३१॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—एवमुक्तरीत्या तद्वशेनेश्वरप्रेरणया पुनः सृष्ट्यन्ते तत्रेश्वरे तन्निवृत्तये संसारभ्रमणनिवृत्त्यर्थम् । "परीत्य" इत्याद्याः श्रुतयो भगवदनुवृत्तिं भगवद्भक्तिं विदधतीति श्रुत्यर्थः । स मुनिः भूतानि प्राणिनः परीत्य संसारचक्रे भ्रमन्तीति ज्ञात्वा लोकान्स्वर्गादीन्क्षयिष्णुत्वेन परीत्य ज्ञात्वा सर्वा दिशः प्राच्याद्या विदिश आग्नेय्याद्याश्च दुःखमयत्वेन दिगादिशब्दस्तत्रत्यपरो ज्ञेयः । ऋतस्य सदा सत्यस्य श्रीविष्णोः प्रथमजां वाचं त्रयीलक्षणामुपस्थाय त्रय्युक्तनैष्कर्म्यमासेव्यात्मना सर्वतो विरक्तेन मनसात्मानं परमात्मानं भगवंतं शरणमभिसंविवेश गतवान् । व्याख्यांतरं पूर्वैः कृतम् सर्वेषु भूतेषु अहमस्मि सर्वाणि भूतानि मयि संतीति ज्ञात्वा ऋतस्य प्रथमजां वाचमुपस्थाय यावज्ज्ञानोत्पत्तिःतावत् आत्मना शुद्धेन त्वंपदार्थेनात्मानं तत्पदार्थं परमात्मानमभिसंविवेशैक्यं गतवानिति ततस्त्वदनुवृत्तेः । इत्यर्थ इति व्याख्या । अत्र हेतुमाशंकते—कुत इति । यतस्त्वद्विहीनानां संसारोऽतो हेतोः एवंभूतं पौनःपुन्येन भवनशीलमाकलय्य विचार्य तस्य संसारस्य निवृत्तये सुधियो विवेकिनः । स्वामिनाम्—संसारेति । संसारचक्रमेव क्रकचं

करपत्रं काष्ठविदारणास्त्रविशेषस्तेन विदीर्णम् । बहुलं संसारचक्रदुःखानंत्यपरम् । उदीर्णा उत्कटा नानाध्यात्मादिरूपा भवतापाः संसारतापास्तैस्तप्तम् अत आपन्नमापद्ग्रस्तम् इह संसारे कथञ्चित्केनापि भाग्योदयेन त्वां प्रपन्नं शरणागतं त्वमुद्धर ॥ * ॥ **श्रीधरानुयायिनी**—एवं नानामतान्यनूद्य वैष्णवमतमेव स्थापयन्ति—नृष्विति । नृषु विद्वन्मानिषु अमीषु जनिमसत इत्यादिश्रुतिकदंबोक्तनानावादिषु तव मायया भृशं भ्रमं भ्रान्त्यैव नानामतकल्पनं ज्ञात्वा भवनिवर्तके त्वयि अनु प्रतिजन्म सुधियः श्रीनारदाद्या भक्तिं कुर्वन्ति "नानायोनिसहस्रेषु येषुयेषु भ्रमाम्यहम् । तत्रतत्राच्युता भक्तिरच्युतास्तु दृढं त्वयि ॥" इति विष्णुपुराणात् । एवं सर्वमताशिरोमाणिं वैष्णवमतमेव ते स्थापयन्तीत्याशयः । एवमेषां वैष्णवानां संसारभयं कथमनुवर्ततामनुवृत्तं भवतु न कथमपीति त्वद्भजनारंभदशायामेव तेषां तस्यापगमात् । अतस्त्वद्भ्रूभंगरूपः कालस्तवाभक्तेष्वेव जन्ममरणादिभयं मुहुः सृजति न तु भक्तेष्वपीत्यर्थः । यद्वा—अन्यसर्वसाधनसंपन्नानामपि त्वद्भजनं विना संसारभयं न निवर्तत इत्याहुः—नृष्विति । अमीषु वेदविज्ञेष्वपि नृषु दीक्षितविप्रादिषु तव मायया भ्रममिन्द्रादिभ्योऽन्नमदत्त्वा प्रागेव गोपालजातये श्रीकृष्णाय न देयमिति भ्रमं भगवद्याचनाभंगेन तेषां भाविजन्ममरणभ्रमणानवस्थां वा निश्चित्य सुधियो यज्ञपत्न्यादयस्त्वयि भवनिवर्तके अनुप्रभवम् अन्वनु प्रति क्षणं प्रभव उल्लासो यस्य तं तादृशं भावं भक्तिं भृशमत्यन्तं कुर्वन्ति एवं त्वामनुवर्ततां भजतां संसारभयं कथं न कथमपीत्यर्थः । "सकृदेव प्रपन्नो यस्तवास्मीति च याचते । अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम ॥" इति श्रीभगवदुक्तेः । अयं भावः—संसारदशायां त्वन्माधुर्यरसावेशेन भयानवधानमेव भयहेतूनामकिञ्चित्करत्वं वा । संसारातीतदशायां तु भयहेतव एव न सन्ति । अत एव त्रयो गुणा नेमयश्चक्रधारावदावरका यस्यां सा तव भ्रुकुटिरभक्तेषु जन्ममरणादिदुःखं मुहुः सृजति । अथवाऽमीषु भगवदाराधनपरेष्वपि नृषु पञ्चायतनमध्ये को देवः पूज्यः सेव्यश्चेति भ्रमं मनोभ्रमणात्मकं संशयमवगत्य तेषां निश्चयार्थं सुधियः श्रीनारदाद्यास्तव मायया कृपया 'माया दंभे कृपायां च' इति विश्वः । अभवे भवनिवर्तके त्वय्येव सर्वदेवेभ्यो मुख्यतया भावं सख्यदास्यादिकं प्रतिजन्म प्रतिक्षणं कुर्वन्तीत्यर्थः । स्वामिश्लोकपदार्थस्तु—चक्रवदूर्द्ध्वाधोभावेन भ्रमणवति संसारे क्रकचवद्दुःखप्रदै रोगादिभिर्विदीर्णमुदीर्णैरुत्कटैर्नानाविधाध्यात्मिकादिसंसारतापैस्तप्तमत आपन्नमापद्ग्रस्तमिह संसारे कथञ्चिदार्ततया जिज्ञासुतया कामनया दंभादिना वा केनापि भाग्योदयेन त्वां शरणागतं नृलोकमुद्धरेत्यर्थः ॥ **तोषिणी**—तदेवं पूर्वोक्तानुसारेण लब्धावसरा भवभयनिवर्तकतालक्षणे तस्मिन्भक्तितात्पर्यकाः काश्चिदन्याः श्रुतयः स्तुवन्ति—नृष्विति । साधारणजीवानां यया मायया भ्रमो भवति सैव त्वद्भक्तसंगजातसद्बुद्धीनां भक्तिमाधुर्यानुभावेन तां त्यक्तुं न शक्नुवन्तीत्यर्थः । हेतुर्भवति भ्रममध्यां तस्यां भयहेतुत्वं त्वयि तु तन्निवर्तकत्वं बुद्ध्वेति भावः । तत्रापि तु अनुक्षणं प्रभव उल्लासो यस्य तादृशं भावम् । यद्वा—प्रतिजन्मैव तं दधाति पक्षद्वयेऽपि परममाधुर्यानुभावेन तां त्यक्तुं न शक्नुवन्तीत्यर्थः । तदुक्तं वैष्णवे—'सा हानिस्तन्महच्छिद्रम्' इत्यादि 'नाथ योनिसहस्रेषु' इत्यादिना 'न वै जनः' इत्यादि 'विहातुमिच्छेन्न रसग्रहो यतः' इति श्रीभागवते च । तर्हि किं तस्माद्भक्तिर्जाता तदपि नेच्छेत् नहीत्याहुः—संसारिदशायां तन्माधुर्यावेशेन तदनवधानात् भयहेतूनां किंचित्कर्तुमशक्तत्वाद्वा । तदतीतदशायां तु भयकारणानामपि नाशादिति भावः । तत्र कैमुत्येनाहुः—तवेति । "सकृदेव प्रपन्नो यस्तवास्मीति च याचते । अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥" इति रामायणे श्रीराघवेन्द्रप्रतिज्ञानुसारेण च 'ददात्येतद्व्रतं हरेः' इत्यत्र तादृशगरुडपुराणोक्तानुसारेण च शरणागतमात्रेष्वपि भयाभावादित्यर्थः । त्रिणेमिरिति । भूतभविष्यद्वर्तमानार्थकत्वेनेति । अत्र श्रुतयः परीत्येत्याद्या एव । तत्र प्रथमजाम्—"कालेन नष्टा वाणीयं प्रलये वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥" इत्येकादशानुसारेण भक्तिप्रतिपादिका ऋतस्य स्वयं भगवतो वाणीति व्याख्येयम् । यद्वा—तादृशमोक्षप्रस्तावमसहिष्णवः काश्चिदन्या आहुः । नृषु अमीषु पूर्वोक्तेषु मुक्तिसाधकेषु त्वद्भक्तिसुखानवधानरूपं त्वन्मायाहेतुकभ्रममवगत्येति व्याख्येयम् । श्रुतयस्तु पूर्वपूर्वानुसारेणान्वेषणीयाः । अत्र **विश्वनाथः**—एवं नानामतान्यनूद्य दूषयन्त्यो वैष्णवमतमेव स्थापयन्ति । नृषु विद्वन्मानिषु अमीषु पूर्वपद्यद्वयार्थावगमितेषु नानावादिषु भ्रममवगत्य भ्रान्त्यैव नानामतकल्पनं ज्ञात्वा त्वयि अभवे भवनिवर्तके भावं दास्यसख्यादिकमेव केवलम्

अनु प्रतिक्षणं प्रभव उल्लासो यस्य तम् । यद्वा—प्रतिजन्मैव दधाति कुर्वन्ति । यथोक्तं वैष्णवे—" नाथ योनिसहस्रेषु येषुयेषु भ्रमाम्यहम् । तत्रतत्राच्युता भक्तिरच्युतास्तु दृढा त्वयि ॥ " इति । ननु, तर्हि त्वंपदार्थतत्पदार्थयोर्ज्ञानाभावात्संसारद्वेषाभावाच्च तेषां संसारस्तु नैव निवर्तते तत्राहुः—कथमिति । भवभयं तेषां कथमनुवर्ततामनुवृत्तं भवेत् त्वदास्यारंभदशायामेव तस्यापगमात् । किन्तु—निष्कामत्वातिशयाद्व जनोत्थदैन्याच्च स्वेषु तेषां संसारित्वाभिमानः यद्यस्मात्तव भ्रुकुटिर्भ्रूभंगरूपस्त्रिणेमिस्त्रिगुणः तीक्ष्णधारः कालः अभवच्छरणेषु त्वच्छरणापत्तिरहितेष्वेव भवभयं जन्ममरणादिलक्षणं सृजति । तदुक्तं त्वयैव—'सकृदेव प्रपन्नाय' इत्यादिना "दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥" इति । अयं भावः—अन्येषां वादिनामिव परमतखण्डने स्वमतस्थापने च नात्याग्रहः, अत्याग्रहस्तु त्वद्भजन एव वैष्णवानां तत्र च न केषामपि वादिनां विप्रतिपत्तिरिति तन्मतमेव सर्वशास्त्रार्थसारम् । विचित्ररूपगुणलीलामहोदधौ त्वयि कृष्णरामादिस्वरूपे उपास्यबुद्धिः स्वेषूपासकबुद्धिरित्येव तेषां तत्पदार्थत्वंपदार्थयोर्ज्ञानं सूर्योपमस्य भगवतो बाह्यप्रभोपमा जीवा अत एव ततो भिन्नत्वेनाभिन्नत्वेनापि व्यपदिश्यन्ते 'सूक्ष्माणामप्यहं जीवः' इति भगवदुक्तेः "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश" इति । "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः " इति । "आराग्रमात्रो ह्यवरो हि दृष्टः " इत्यादिश्रुतिभ्यश्च तेषां परमाणुपरिमाणत्वमेव तदपि संपूर्णदेहव्यापि शक्तिमत्त्वं जतुजाटितस्य महामणेर्महौषधखण्डस्य च शिरस्युरसि वा धृतस्य संपूर्णदेहपुष्टिकरिष्णुशक्तिमत्त्वमिव नासमञ्जसम् । स्वर्गनरकनानायोनिषु गमनञ्च तेषामुपाधिपारवश्यादेव । यदुक्तं प्राणमधिकृत्य दत्तात्रेयेण—'येन संसरते पुमान्' इति । तेषां बहुत्वं नित्यत्वञ्च—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इति श्रुत्या प्रतिपादितम् । समुदितानां तेषां भगवतस्तटस्थशक्तित्वेनैकत्वञ्च ज्ञेयम् । ते च मेघोपमयाऽविद्ययाऽऽवृता बद्धजीवा एके, अन्ये भक्तिमज्ज्ञानेन तदावरणोन्मुक्ता मुक्तजीवाः, अन्ये केवलया प्रधानीभूतया वा भक्त्या तदावरणोन्मोचितप्रापितचिदानंदमयभजनोपयोगिशरीराः सिद्धभक्ताः, अन्येऽविद्यायोगरहिता एव नित्यपार्षदा इति चतुर्विधाः । तल्लक्षणञ्च नारदपञ्चरात्रे—"यत्तटस्थं तु विज्ञेयं स्वसंवेद्याद्विनिर्गतम् । रञ्जितं गुणरागेण स जीव इति कथ्यते ॥" अस्यार्थः—यत्तटस्थं विशेषतो ज्ञेयं चिद्वस्तु स जीवः "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति" इति श्रुतेः । स्वसंवेद्याचित्पुञ्जाद्भगवतः सकाशाद्विनिर्गतं चेत्तदा गुणरागेण रञ्जितं बहिरंगया मायाशक्त्या स्वीयानां गुणानां रागेण रञ्जितं मायिकाकारं स्यादित्यर्थः । यदा तु केवलया प्रधानीभूतया वा भक्त्या मायोत्तीर्णं स्यात्तदाऽन्तरंगया चिच्छक्त्या स्वयिकल्याणगुणेन रञ्जितं भगवत्यनुरक्तीकृतं चिन्मयाकारयुक्तं स्यादित्यर्थः । एवञ्च, मायाचिच्छक्त्योस्तटस्थवार्तित्वात्तटस्थमिति तन्नाम कृतम् । यदा तु भक्तिमज्ज्ञानेन मुक्तं स्यात्तदा ब्रह्मण्यपृथग्भूय स्थितं नैव गुणरागेण रञ्जितमित्युपासकनिरूपणम् । अत एव राजकीयपुरुषोऽपि राजपुरुष इति तत्पदार्थसंबंधी त्वंपदार्थ इति तत्त्वमसीतिमहावाक्यार्थं केचित्तु तस्य त्वमिति षष्ठीतत्पुरुषेणापि वदंति । अथोपास्यनिरूपणम्—सूर्योपमस्य भगवतः प्रसृमरसान्द्रज्योतिःपुञ्जोपमं ब्रह्म "ब्रह्मसंज्ञमभूदेकं ज्योतिर्यत्सर्वकारणम्" इति नारसिंहोक्तेः "ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत" इति हरिवंशोक्तेश्च । तस्यान्तर्मण्डलोपमः परमात्मा रथसारथ्यादिपरिकरविशिष्टवदननयनपाणिपादादिसुंदरसूर्योपमः सपरिकरः श्रीभगवान् यथा—नगरस्यातिदूरस्था जना विशेषमनुपलभमाना इदमग्रे स्थितं कान्तिमयं वस्तुमात्रमिति तदेव तदेव नगरं पश्यन्ति, अनतिदूरस्था ध्वजपताकादिविशिष्टं वृक्षखण्डमिति, अतिसमीपस्थास्तु पुरगोपुरनिष्कुटरथ्याप्रासादादियुक्तं नगरमिति, तथैवातिदूरस्था भगवन्तमेव ज्योतिर्मयं ब्रह्मेति, अनतिदूरस्था अतिचिद्विशेषमयः परमात्मेति, अतिसमीपस्था नानानंतचिद्विशेषमयो भगवानिति तत्राप्यन्तःप्रविष्टा अपारमाधुर्यानुभविनः कृष्ण इति वदन्ति । यथाहुः प्राञ्चोऽपि—"चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभावितकृतिम् । विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥" इत्येवमेतावन्मात्रमपि स्वमतं वैष्णवाः केऽपि ज्ञातुमपेक्षन्ते च केऽपि नापेक्षन्ते सदैवापेक्षन्ते भजनप्रकारमेवेति । अत्र श्रुतयः—"एतद्विष्णोः परमं पदं ये नित्योद्युक्ताः संयजन्ते न कामात् । तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदैव । " इत्याद्याः ( १९ ) ॥ ३२ ॥

**नीलकण्ठी**—एवं ब्रह्माद्वैतं प्रसाध्य तदज्ञानाद्बंधस्तज्ज्ञानान्मुक्तिरित्याह—नृषु तवेति । अमीषु नृषु पुरुषेषु न तु मनुष्यमात्रेषु " तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् " इति देवादीनां ब्रह्मविद्यायां तुल्यवदधिकारश्रवणात्तव मायया कर्तैवाहं पुत्रादिरेव हितः अर्थकामावेव पुरुषार्थावित्येवंरूपया अविद्या भ्रममूर्द्ध्वाधोगमनेनानेकयोनिसञ्चरणं

विजितहृषीकवायुभिरदांतमनस्तुरगं य इह यतंति यंतुमतिलोलमुपायखिदः ॥
व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज संत्यक्तकर्णधरा जलधौ ॥ २० ॥ ३३ ॥

स च भगवति भावो मनोनियमे सति भवति सोऽपि गुरूपसदनादिति गुरूपसदनं विदधति "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ आचार्यवान्पुरुषो वेद ॥ नैषा तर्केण मतिरापनेया ॥ प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ" इत्याद्याः श्रुतय इत्याह । विजितहृषीकवायुभिरिति । विजितानि हृषीकाणींद्रियाणि

भृशमत्यन्तमवगत्य "न सांपरायः प्रतिभाति बलं प्रमाद्यंतं वित्तलोभेन मूढम् । अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे" इति श्रुतेर्ज्ञात्वा सुधियः सूक्ष्मधियः "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुतेः शोभनधियो वा त्वयि अभवे न भवत्ययमिति न भवत्यस्मादिति व्युत्पत्तिभ्यामकार्यकारणे ब्रह्मणि भावं जीवात्मानं मनो वा 'आत्माभावो मनोभावः' इत्यनेकार्थपदमञ्जरी । दधत्यभेदेन स्थापयन्ति । "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि" इति श्रुत्युक्तप्रकारेण "यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते अथ तस्य भयं भवति " इति भेददर्शनस्य निंदितत्वात् । " यच्छेत् " इति श्रुतिस्तु भाष्ये व्याख्याता—वाचं मनसि नियच्छेत् वागादिबाह्येन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत्, मनोऽपि विषयविकल्पाभिमुखं विषयदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धौ अध्यवसायस्वभावायां धारयेत्, तामपि बुद्धिं महत्यात्मनि भोक्तारि अग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत्, तं महान्तमात्मानं शान्त आत्मनि प्रकरणवति परस्मिन्पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेदिति । ये त्वयि भावं विदधति तेषां भवभयं संसारदुःखं कथमनुवर्तताम् न कथमपीति यत्तच्छब्दाध्याहारेण योज्यम् । भयाननुवृत्तौ हेतुः—अनुप्रभवम् । प्रभव उपाध्यभिव्यक्तिः तामनुसृत्य वर्तत इत्यनुप्रभवम् " न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वा व संतं न प्रियाप्रिये स्पृशतः " इति श्रुतेः उपाधिनिरसनेन त्वयि भावं विदधतां नास्ति भवभयमित्यर्थः । ननु कुतो मय्येव भावो विधेयो नान्यत्र धर्मादावित्यत आह तत्र—यदिति । यत् यस्माद्धेतोस्तव भ्रुकुटिस्तल्लक्ष्यीं इक्षा " तदैक्षत बहु स्यां प्रजायेय " इति श्रुत्या अभवच्छरणेषु न भवान् शरणं रक्षिता येषां तेषु भयं जन्ममरणादिदुःखं मुहुः सृजति । भ्रुकुटिं विशिनष्टि—त्रिणेमिरिति । त्रयो गुणा नेमिश्चक्रधारा तद्वत् आवरका यस्यां सा तथा । " न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ " इति स्मृतेः । त्वद्विमुखाः त्वदीक्षाकृते त्रिगुणमये संसारचक्रेऽनवरतं भ्रमन्तीति भावः ( १९ ) ॥ ३२ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—स च भक्तिलक्षणो भावः प्रेमा मनसो नियमे निरोधे, सोऽपि मनोनियमोऽपि गुरूपसदनं गुरुसमीपगमनम् श्रुतयो विधानं कुर्वन्ति । ताश्च तद्विज्ञानार्थमित्याद्याः । " परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः " इत्यादि । अर्थः—ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः कर्मचितान्संसारगतिभूतान् लोकान् परीक्ष्य प्रत्यक्षानुमानागमैः सर्वतो याथात्म्येनावधार्य निर्वेदं वैराग्यमायात् कुर्यात् । ब्राह्मणग्रहणं ब्रह्मविद्याधिकारिषु प्राधान्यात् । वैराग्यप्रकारं दर्शयति—इह संसारे कश्चिदपि पदार्थः अकृतो नास्ति किं कृतेन कर्मणायासबहुलेन इत्येवं निर्विण्णो विद्वज्जनप्राप्यं नित्यं पदं यत्तद्विज्ञानार्थं स ब्राह्मणः समित्पाणिः गृहीतकाष्ठभारहस्तो गुरुमेवाभिगच्छेत्प्राप्नुयात् । समित्पदं रिक्तपाणिर्न गच्छेदितिपरम् वस्त्वन्तराभावे काष्ठमेव गृहीत्वा गच्छेदिति । श्रोत्रियमध्ययनश्रुतार्थसंपन्नं ब्रह्मनिष्ठं सर्वाणि कर्माणि हित्वा केवले ब्रह्मणि निष्ठा यस्य तम् । ननु, विद्वान्स्वयमेव जानातु नेत्याह—आचार्यवान् गुरुमानेव पुरुष आत्मानं वेद जानाति नान्य इति । यदा तु आत्मन्युत्पन्नागमप्रतिपाद्यात्ममतिः एषा तर्केण स्वबुद्ध्याभ्यूहनमात्रेण नापनेया न हंतव्या किन्तु सेयं मतिरन्येनैवागमाभिज्ञेनाचार्येण प्रोक्ता सती सुज्ञानाय भवति । हे प्रेष्ठ प्रियतम नाचिकेत संप्रति यमस्य संबुद्धिः । यद्वा—एषा ब्रह्मात्मविषया

वायुश्च प्राणो यैस्तैरप्यदांतमनस्तुरगमदांतमदंमितं मन एव तुरगो दुर्दमत्वसाम्यात्तं ये यंतुं नियंतुं यतंति प्रयतंते । अतिलोलमतिचंचलम् । गुरोश्वरणं समवहायाना श्रित्य ते उपायेषु खिद्यंते क्लिश्यंतीत्युपायखिदः संतो व्यसनशतान्विता बहुव्यसनाकुला इह संसारसमुद्रे संति तिष्ठंति दुःखमेव प्राप्नुवंतीत्यर्थः । हे अज अकृतकर्णधरा अस्वीकृतनाविका वणिजो यथा तद्वत् । गुरुणोपदर्शितभगवद्भजनसुखानुभूतौ तु स्वत एव मनो निश्चलं भवति नान्यथेति भावः ॥ यदा परानं दगुरो भवत्पदे पदं मनो मे भगवँल्लभेत ॥ तदा निरस्ताखिलसाधनश्रमः श्रयेय सौख्यं भवतः कृपातः ॥ २० ॥ ३३ ॥

मतिस्तर्केणोहापोहरूपेण नापनेया न प्राप्या किन्त्वन्येन गुरुणा प्रोक्तैव सुज्ञानाय सुबोधायेति । गुरूपसदनपरेयम् । नवोऽश्वो यथा दुर्दमो भवति तथा मनोऽपीति,साम्यात् । इत्यर्थ इति—दुःखतरणज्ञानाभावा त्तदनुभवन्तीति भावः । ‘ कर्णधारस्तु नाविकः ’ इत्यमरः । छन्दोभङ्गभयात्कर्णधरा इति । यो मनुष्यदेहं प्राप्य गुरुं नाश्रयते सोऽतिपापीयान्भवतीत्यभिप्रायेणोक्तं श्रीकृष्णेनैकादशे—‘ नृदेहमाद्यम् ’ इति। नृदेहं प्लवं संसारतरणसाधनं सुलभमधुना विना यत्नं प्राप्तं सुदुर्लभं पुनर्यत्नेनापि प्राप्तुं दुर्लभं सुकल्पं रोगादिरहितमाद्यं पुरुषार्थचतुष्टयहेतुम् । यद्वा—आद्यं द्विजोत्तमरूपं नृदेहं प्राप्येति शेषः । मयाऽनुकूलेन पवनेन पवनवत्पारं नेतुं चालयित्रेत्यर्थः । ईरितं प्रेरितम् । गुरुरेव कर्णधारो यस्मिंस्तम् । यो भवाब्धिं संसाराब्धिम् । स आत्महा आत्मघातीत्यर्थः । अभियुक्तोक्तं गुरुलक्षणमाह—प्राकृतैर्नरनागपैशाचादिभाषाभिः संस्कृतैर्देवभाषाभिर्गद्यैश्छन्दोबंधहीनवाक्यैः पद्यैश्छन्दोबंधयुक्तैर्वाक्यैरक्षरैर्देशभेदभिन्नैर्वर्णैः देशभाषा तत्तद्देशभाषादिना संकेतैः परंपरावाप्तैः बोधयेत् विद्वांसं कुर्यात्स गुरुरिति । इति भाव इति—गुरुभक्तिलब्धोपायं विना संसारतरणं भवतीति तात्पर्यम् । स्वामिनां यदेति—पदं स्थानम् । निरस्तोऽखिलसाधनश्रमो येन स तथा ॥ * ॥ **श्रीधरानुयायिनी**—सा च भगवति भक्तिर्गुरूपदेशसाध्यं मनोनिग्रहं विना दुर्लभेत्याहुः—विजितेति । हे अजित जितब हिरिन्द्रियप्राणैर्योगिभिरप्यशक्यवशीकारमतिचञ्चलं दुर्दमतुरगतुल्यं मनो वशीकर्तुं गुरूपदेशं विना कर्णधारस्य गुरोस्तव परिचरणं विना वा ये प्रयतन्ते तेऽनेकविधभक्तिभिन्नोपायक्लेशेन दुःखिता एव “ युञ्जानानाम भक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन्दृश्यते क्वचिदुत्थितम् ॥ ” इत्युक्तेर्मनोनिरोधरूपफलालाभाद्व्यसनशतान्विता असंख्यविपदाकुलाः सत्स्वपि ज्ञानसाधनेषु संसारसमुद्रे कर्णधारं विना नाव्यारूढा वणिजः सत्यपि पोते समुद्र एव निमज्जन्ति एवञ्च गुरूपदिष्टसत्साधनानुष्ठानेनानायासेन स्थिरीकृते मनसि स्वत एव भगवन्मूर्तिस्फूर्तीरिति सुलभा भक्तिरिति भावः ॥ **विश्वनाथी**—तच्छ्रुत्वान्याः श्रुतय आहुः—वयमित एव श्रीगुरु चरणाश्रयं प्रशंसामः, सर्वगुरुत्वस्य त्वदुपदेष्टृगुरुत्व एव विश्रान्तेः, तत्प्रभावं विना त्वद्भावासिद्धेश्च । साप्यस्तु संसारध्वंसनिदानम् केवलमनोनिरोधोऽपि न स्यात्— “ युञ्जानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीण वासनं राजन्दृश्यते क्वचिदुत्थितम् ॥ ” इति न्यायेन त्वद्भक्त्यभावात्तदसिद्धेः । यतो विजितेति—हे अज जीववज्जन्ममात्रेण सुकरं यत्प्रत्यक्षत्वं तदतीतेत्यर्थः । ये तादृशस्य गुरोश्चरणं समवहाय ईषदप्यनाश्रित्य यतः स्वत एवातिलोलं तदनाश्रयेणादान्तं दमनाशक्यं च मनस्तदेव तुरगस्तं विजितहृषीकवायुभिः प्राणैरिन्द्रियैश्च विजितैः क्रियमाणैर्नियन्तुं प्रयतन्ते ते तु तद्विजयाद्युपायेषु खिद्यमाना एव भवन्ति यतस्तत्प्रभावं विना व्यसनशतान्विता भवन्ति । अतः साधनबाहुल्ये सत्यपि वणिजः सांयात्रिका जलधावकर्णधरा इव संसारजलधावेव तिष्ठन्ति न तु तत्पराः परमानंदद्वीपायमानं त्वां प्राप्नुवन्तीत्यर्थः । श्रुतयः “तद्विज्ञानार्थम् ” इत्याद्याः, “आचार्यवान्पुरुषो वेद ” इत्याद्याः, “ सर्वं ह्येतद्गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ” इत्याद्याः स्मृतयश्च ( २० ) ॥ ३३ ॥

**नीलकंठी**—एवं ज्ञानान्मुक्तिरन्यथा बंध इत्युक्तम् । तत्र ज्ञानावाप्तये “ परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्सामित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ” “ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ” इति श्रुतिभ्यामुक्तं निर्वेदपूर्वकं गुरुभजनमाह—विजितहृषीकवायुभिरिति । हे अज ये नरा गुरोश्चरणं समवहाय परित्यज्य विजितानि हृषीकाणि इन्द्रियाणि वायवश्च प्राणा यैस्ते तैः अदान्तंप्रतिपत्त्ययोग्यं मनस्तुरगं चित्तहयम् अतिलोलं स्वभावतः तं नियन्तुं निग्रहीतुं यतान्ति यतन्ते यत्नं कुर्वन्ति ते इह संसारे जलधौ अकृतकर्णधराः वणिज इवावसन्नाः

स्वजनसुतात्मदारधनधामधराऽसुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ॥
इति सदजानतां मिथुनतो रतये चरतां सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥ २१ ॥ ३४ ॥

"परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन" ॥ तथा "यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इत्याद्या वैराग्यमंगं विदधतीत्याह । स्वजनसुतेति । आत्मा देहः । धाम गृहम् । असुः प्राणः । स्वजनादिभिः किम् । सर्वरसे सर्वे रसाः सुखानि विद्यंते यस्मिंस्त स्मिंस्त्वयि परमानंदे "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति" इति श्रुतेः । श्रयतस्त्वां सेवमानस्य पुंस आत्मनि सति नृणां तुच्छैरेतैः किं क उपयोग इति सत् सत्यं परमार्थसुखमजानतामत एव मिथुनतः स्त्रिया मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम् । कर्मणि षष्ठ्यौ । अजानतश्चरतः पुरुषान् को न्वर्थः सुखयत्यानं दयति न कोपीत्यर्थः । इह संसारे । कथंभूते । स्वविहते स्वत एव नश्वरे । स्वनिरस्तभगे स्वत एव गतसारे । पाठांतरे तु को न्वित्यस्यैतद्विशेषणद्वयम् । अतस्त्वद्भजनमेवो चितमित्यर्थः ॥ भजतो हि भवान्साक्षात्परमानंदचिद्घनः ॥ आत्मैव किमतः कृत्यं तुच्छदारसुतादिभिः ॥ २१ ॥ ३४ ॥

सन्ति न बहिर्निर्गन्तुं शक्नुवन्तीत्यर्थः । अत एव ते उपायाखिदः आसनबंधाद्यैरुपायैः खिद्यन्ते व्यर्थश्रमा इत्यर्थः । व्यसनशतान्विताश्च ते भवन्ति व्यसनानि नानौषधिमन्त्रयन्त्रादिशक्तिपातादिसाधनानि प्राकृतानिदावभा रद्वाजादिवदर्थानुष्ठानपाठाग्रहरूपाणि तेषां शतैरन्विताः । गुरूपयुक्तिं विना नानोपायैरपि मनोजयो न भवति तदभावादभवे भावनिधानासंभवः ततो भवभयं न निवर्तते । इति मुमुक्षुणा गुरुभक्तिपूर्वकं श्रवणादि कर्तव्यमित्यर्थः ( २० ) ॥ ३३ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–इदानीं भक्तेरङ्गं वैराग्यमाहुः परीक्ष्येत्याद्याः श्रुतयः–यदेति । व्याख्यातापि पुनरत्र व्याख्यानं सुखबोधाय । अस्य विदुषो ज्ञानात्प्राक् ये कामा वासनारूपेण हृदि मनसि स्थिताः ते सर्वे यदा प्रमुच्यन्तेऽथाऽनंतरं मर्त्योऽमृतो भवति तदाऽत्रैव दीपनिर्वाणवत्सर्वबंधनोपशमात् ब्रह्म समश्नुते ब्रह्मैव भवतीति । कामास्तु मनस्येव स्थिता न त्वात्मनि । तथा च श्रुतिः–"कामः संकल्पो विचिकित्सा श्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मनएवेति" किंकिं प्रयोजनं न किमपीत्यर्थः । 'रसः स्यात्पारदे सुखे' इति धरणिः । परमानन्दत्वे पूर्णां श्रुतिमाह, यथा–"स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानु ष्यकैर्भोग्यैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानंदाः स एकः पितृलोक आनन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोकानामानन्दाः स एकः कर्मदेवानामानन्दोऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मण आनन्दो ऽथैष एव परम आनन्द एषोऽस्य परमानन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति । आजानदेवा अधिकारिण इन्द्राद्याः । कर्मदेवाः कर्मणा देवभात्रं प्राप्ताः । मात्रा अंशः । स्पष्टमन्यत् । आत्मनि त्वयि अत एव ज्ञानाभावादेव । पाठान्तरे स्वविहितः स्वनिरस्तभग इति पाठे यतोऽज्ञानां सुखाभावोऽतो हेतोः । इत्यर्थ इति–तत्र ज्ञानार्थं तव भजनमेव योग्यम् 'अयुज्यमानया भक्त्या' इत्याद्युक्तेरिति भावः । स्वाभिनाम्–भजत इति । हि यतो भजतो जनस्य साक्षादात्मैव भवान्भवति अतस्तुच्छैर्दारादिभिः किं कृत्यं न किमपि अवाप्तावाप्तव्यत्वात् ॥ * ॥ **श्रीधरानुयायिनी**–इदानीं भक्तौ वैराग्यमङ्गमाहुः–स्वजनेति । नृणां भारतखण्डवासिनां

मनुष्याणां मध्ये श्रयतः अनेकजन्मसाधितपुण्यपुञ्जस्य कस्यापि विरलस्य गोप्यादेरिव यज्ञपत्न्यादेरिव वा त्वामनन्यभक्त्या सेवमानस्य सर्वरसे सर्वसुखस्वरूपे सर्वेषां सुखानां बिम्बभूते ''एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'' इति श्रुतेरात्मनि जीवननिदाने च त्वयि सति सन्निहिते सति वा तुच्छैः स्वजनसुतशरीरप्राणपत्नीपतिधनधामादिभिश्चिन्तामणौ लब्धे काचादिभिरिव किमपि तु न किमपि प्रयोजनमिति यत्तत्सत्यमेव अत एव स्वाम्यादिभिर्निरोधिता अपि श्रीरासलीलादिविलासार्थे गोप्यस्त्वद्दर्शनार्थं यज्ञपत्न्यो वा त्वामेवाभिययुः । किञ्चाजानतां चरतामिति कर्मणि षष्ठ्यौ अजानतः प्रागुक्तमिदं सत्यतया ये न जानन्ति तान्स्वत एव नश्वरे गतसारे च इह देहादिसंसारे मिथ्याभूताय मिथुनीभूय कामसुखलेशलवाय कृतव्यर्थश्रमान् त्वद्यां विना कोऽर्थः स्वजनादिः सुखयत्यपि तु न कोऽपि कचिच्चक्रवर्तिनामप्याधिव्याध्यादिना स्वजनसुतविरोधादिना वा सुखलेशादर्शनात् । यद्वा—भगवद्भजनमेव सदित्यजानतो दीक्षितविप्रादीन् मिथुनतो रतये स्वर्गादावुर्वश्यादिभिर्मिथुनीभूय रतये कामसुखाय चरतो यज्ञादिकर्म कुर्वतः स्वत एव नश्वरे गतसारे च इह ऐहिकविषयतुल्ये यज्ञादिफलीभूते स्वर्गादौ कः पदार्थः सुखयति अपि तु न कोऽपि स्वर्गादिपतीनामपीन्द्रादीनां विपत्सहस्रश्रवणात्तत्रापि तवानुग्रहं विना न किमपि सुखमतस्त्वद्भजनमेवोचितमित्याशयः ॥ * ॥ **विश्वनाथी**—अत एव वयमन्यासक्तिं निन्दामः किन्तु केवला भक्तिरेव कार्येति वदामः । नृणां श्रयतां मध्ये श्रयतः सेवमानस्य त्वय्यात्मनि परमात्मनि प्राप्तव्ये सति स्वजनाः स्वीयसेवकजनाः सुता गुणवन्तः पुत्रा आत्मा सुंदरं शरीरं दाराः सुन्दर्यः कामिन्यः धनानि स्वर्णादिरत्नादिसम्पदः धामानि दिव्या गृहा धरा भूयसी पृथ्वी असवः शारीरबलानि रथास्तदुपलक्षिता हस्त्यश्वादय एतैः कामितैः किं फलमित्यर्थः । अन्यत्सर्वं स्वामिचरणोक्तिवत् । ''आत्मनस्तु कामाय सर्वं प्रियं भवति'' इति ब्राह्मणमत्रानुसन्धेयम् ( २१ ) ॥ ३४ ॥

**नीलकंठी**—तत्र ''अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते'' इति स्मृतेर्गुरुर्मनोजयाभ्यासवैराग्ये उपदिशति तत्र वैराग्येण विषयस्रोतः खिलीक्रियते अभ्यासेन कल्याणस्रोत उद्घाटयते तद्द्वयं क्रमेण द्वाभ्यामाह—स्वजनसुतेति । नृणां त्वयि सति स्वजनादिभिः किमित्यन्वयः । आत्मा देहः, स च द्विविधो विदितो मैत्रायणीये—''भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिञ्छरीरे किं कामोपभोगैः कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसम्प्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्छरीरे किं कामोपभोगैः'' इति । अथान्यत्राप्युक्तम्—''शरीरमिदं मैथुनादेवोद्भूतं संवृद्ध्युपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावनद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्चामयैर्बहुभिः परिपूर्णं कोश इव सुनेति'' इति च । कोशो जरठकोशातकी सुना तन्तुजालेन धाम गृहम् असुः प्राणः रथो गजादेरुपलक्षणम् । कीदृशे त्वयि श्रयत आत्मनि त्वां ध्यायतः प्रत्यग्भूते अत एव सर्वरसे''सद्वैतत्सुकृतं रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवति'' इति श्रुतेः ''यथा कृताय विजितायाधरे याः संयन्त्येवमेवैनं सर्वं तदभिसमैति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद'' इत्यात्मविद्यायां सर्वसाधुक्रियाफलान्तर्भावश्रुतेश्च निरुपाधिप्रेमगोचरत्वलिंगाच्च सर्वसुखस्वरूपे अत एव त्वयि लब्धे स्वजनादिभिः किमपि प्रयोजनं नास्ति इत्येवंप्रकारेण सत्प्रत्यगात्मैव परं ब्रह्मेत्यजानतामत एव मिथुनतो विषयसंबंधेन रतये सुखाय चरतामितस्ततो धावतां कर्माणि षष्ठ्यौ तानिह संसारे कोनु स्वजनादिष्वन्यतमः स्वविहते स्वतो नश्वरे ''सर्वं चेदं क्षयिष्णु यथेमे दंशमशकादयः'' इत्युपक्रम्य ''शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य प्रचलनं व्रश्चनं वातरज्जूनां निमज्जनं पृथिव्याः स्थानादपसरणं सुराणाम्'' इति मैत्रायणीये सर्वस्य क्षयिष्णुत्वोपपादनात् ''आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन'' इति ब्रह्मलोकसहितानां लोकानामसकृदावृत्तिश्रवणाच्च । स्वनिरस्तभगे निरस्तैश्वर्ये । एतदपि । तत्रैव श्रूयते—''महानदीषूर्मय इवानिवर्तकमस्य यत्पुरा कृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं सदसत्फलमयैः पाशैः पंगुमिव बद्धबन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्वरूपस्येव बहुभयावस्थं मदिरोन्मत्त इव मोहमदिरोन्मत्तं पाप्मना गृहीत इव भ्राम्यमाणं महोरगदष्टमिव विषयाविष्टं महान्धकारमिव रागान्धमिन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरमम् ।'' इति । एवं बाह्यविषयसंगेन सुखप्रेप्सून्नरापसदानिह संसारे

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदांबुजहृदोऽघभिदंघ्रिजलाः ॥
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥ २२ ॥ ३५ ॥

एवं गुरूपदेशेन तत्त्वमवगम्य सारासारविवेकेन च सर्वतो निर्विद्य तदेव महत्संगेनोपपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि मुनयः पर्यटंतीति " श्रोतव्यो मंतव्यः " इत्यादिश्रुत्यर्थमाह । भुवि पुरुपुण्यतीर्थसदनानीति । ते उक्तलक्षणा ऋषयो विमदा निरहंकारा यतो भवत्पदांबुजहृदः भवतः पदांबुजं हृदि येषां तेऽतःस्वयमेवाघभिदंघ्रिजलं येषां ते उत अपि तथाविधा अपि पुरूणि बहूनि पुण्यानि तीर्थानि सदनानि च क्षेत्राणि तान्येवोपासते सेवंते प्रायस्तत्रैव महत्संगो भवतीति । अथवा पुरु अधिकं भगवद्भजनलक्षणं येषां तानि च तानि तीर्थानि च गुरवो महांत इत्यर्थः । तेषां सदनान्याश्रमान् । यथाहामरसिंहः । "निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ" इति। न पुनः पुरुषसारहरावसथानुपासते पुरुषाणां सारं विवेकस्थैर्यधैर्यक्षमाशांतिप्रमुखं हरंतीति तथा ते च ते आवसथा गृहास्तान् । न च तेषां गृहादिभवकुत्सितसुखापेक्षेत्याह । दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुख इति । सकृदपि त्वयि ये मनो दधति तेऽपि गृहाद्यासक्ता न भवंति किं पुनरेवंभूता इत्यर्थः ॥ मुंचन्नंग तदंगसंगमनिशं त्वामेव संचिंतयन्संतः संति यतोयतो गतमदास्तानाश्रमानावसन् ॥ नित्यं तन्मुखपंकजाद्विगलितत्वत्पुण्यगाथामृतस्रोतःसंप्लवसंप्लुतो नरहरे न स्यामहं देहभृत् ॥ २२ ॥ ३५ ॥

स्वविहते स्वनिरस्तभगे च स्वजनादिष्वन्यतमः को नु सुखयति न कोऽपीत्यर्थः । तस्मादात्मैव सर्वरस इत्यन्वेष्टव्यः । तथा च श्रुतिः–" तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा " इति । अन्यत्रापि–"न वा अरे पत्युः कामाय पतिः प्रियो भवति" इत्युपक्रम्य "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इति ( २१ ) ॥ ३४ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–इत्थं तदेव गुरूपदेशाप्ततत्त्वम् उपपत्तिभिरुपपादनयुक्तिभिः । श्रुतिस्तु " श्रोतव्यः " इत्यादि । तथा–" तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति " इत्यादि । अर्थस्तु–हे गार्गि तदेतदक्षरं ब्रह्मान्यैरदृष्टं स्वयं सर्वेषां द्रष्टृ तथाऽश्रुतं श्रोतृ अमतं मननाविषयं स्वयं मन्तृ अन्यैरविज्ञातं स्वयं विज्ञातृ अतोऽन्यत्किञ्चिदपि वस्तु द्रष्टृश्रोत्रादि नास्तीति एतन्मननार्थं पर्यटन्तीत्युक्तम् । उक्तलक्षणा गुरूपदेशावाप्तविद्याः तथाविधा निजाङ्घ्रिजलस्पर्शिपापनाशका अपि प्रायो बाहुल्येन तत्रैव तीर्थक्षेत्रेष्वेव । प्रायःपदेनास्वरसादाह–अथवेति । इत्यर्थ इति–तीर्यते संसारो यैरित्यर्थसाम्यान्महान्तोऽपि तीर्थान्येवेति भावः । तीर्थपदस्य गुरुवाचकत्वे प्रमाणमाह–यथेति । एवंभूताः सदा भक्ताः । इत्यर्थ इति–सदा हरिभक्तिपराणां तु गृहाद्यासक्तिः कदापि न संभवतीति । स्वामिनाम्–मुञ्चन्निति । अंगेन स्वांगेन तेषां पुरुषसारहरावसथानां जायापत्यादीनां संगं मुञ्चन् तन्मुखपंकजात्सतां मुखकमलात् विगलिते त्वत्पुण्यगाथामृतस्रोतसि यः सम्प्लवः स्नानं तेन सम्प्लुतो युतः, पुनरहं देहभृन्न स्यां भजेयम् ॥ * ॥

**श्रीधरानुयायिनी**–गुरूपदिष्टतत्त्वनिश्चायकसत्संगार्थं तीर्थसेवामुपदिशन्ति–भुवीति । हृद्गतभवत्पादप्रभावेण स्वत एव पापापनोदकपादोदका अपि निरहंकाराः प्रागुक्ताः भगवद्भक्ताः सत्संगार्थं बहूनि बहुपुण्यजनकानि श्रीगंगादितीर्थानि श्रीवृन्दावनादिक्षेत्राणि च सेवन्ते । यद्वा–भगवद्भजनाभिधबहुपुण्यशालिनां महतामाश्रमान्सेवन्ते न पुनः पुरुषसाररूपविवेकधैर्यादिहरान् गृहान् यतो ये त्वय्यात्मनि नित्यसुखे सकृदपि मनो धारयन्ति तेऽपि

गृहाद्यासक्ता न भवन्ति किं पुनः प्रागुक्ता मुक्ता भगवद्भक्ताः । यद्वा—तदेवं याज्ञिकविप्रप्रसंगेनाभक्ता योगिनोऽर्थपराश्च निन्दिताः । अथ परमनिर्भयश्रीकृष्णचन्द्रदर्शनार्थं कुतोऽपि मिषात् क्रोशचतुष्टयमात्रव्यवहितत द्विहारभूमौ वासमसाधितवतस्तानेव पुनर्निन्दन्ति—एतेन प्रकटीभूय श्रीकृष्णदर्शनार्थमस्मद्गमने कंसस्तत्र श्रीकृष्णं निश्चित्यापकारं कारिष्यतीति भगवति कंसकृतानिष्टभयं कंसदत्तजीविकोच्छेदादिभयञ्च निरस्तम् । भुवीति—ये त्वयि स्वस्वरूपे नित्यसुखस्वरूपे च सकृदपि मनो धारयन्ति तेन ते स्वमनसि त्वत्पदाम्बुजं दधाना अत एव स्वयमवभिदंघ्रिजलाश्च भूत्वाऽत एव ऋषयः परमपूज्या निरहंकाराश्च भूत्वा भुवि सर्वतोऽपि पुरुपुण्यानां सार्धं विजह्रुः । कृतपुण्यपुञ्जा इत्युक्तमहिम्नां श्रीगोपानां तीर्थरूपाणि सदनानि गृहान् तथा श्रीकृष्णविहारमहिष्ठानि श्रीवृन्दावनस्थानानि चोपासते न पुनः पुरुषसारहराणां कंसादिदुष्टानामावसथान् तत्पालितनगरगृहादीनित्यर्थः । अतस्तत्पराङ्मुखा याज्ञिकविप्रादयो मन्दभाग्या एवेत्युपसंहारः । यद्वा—पुरुषसार हे पुरुषोत्तम ये एकवारमपि त्वयि मनो धारयन्ति ते पुनर्जन्मान्तरे हरस्य श्रीरुद्रस्यावसथान् श्मशानभूमिर्न सेवन्ते जन्ममरणशून्या भवन्तीत्यर्थः । "महाभाग्यन्तु कैवल्यमज्ञानां कः प्रदास्यति । अतः सन्तो विजानंति हरिन्ते त्वनहंकृताः ॥ " इति विमदपदार्थः । अंगं शरीरं तदंगानि सुतदारधनादीनि तेषु संगमासक्तिं मुञ्चन्तीति स्वामिश्लोकपदार्थः ॥ * ॥ **तोषिणी**—तदन्याः सदाचारेण द्रढयन्ति—भुवीति । ऋषयः सर्ववेदतत्त्वज्ञा ये सकृदपि मनो दधति ते पुनः स्वजनादिमयान्पुरुषसारहरावसथान्नोपासते इत्यादि तैर्व्याख्यातम् । ॥ * ॥ **विश्वनाथी**—स्वजनादींस्त्यक्त्वा साधवो भजनानुकूलेषु तीर्थेषु वसंतीत्याहुः—भुवि पुरुपुण्यानि तीर्थानि गंगादीनि सदनानि वृंदावनादिक्षेत्राणि भगवद्धामानि ऋषयो भक्ता अधिवसंतीति शेषः । विमदा विगतगर्वाः । उत यतस्ततः भवत्पदाम्बुजहृदः मनसि त्वत्पदाम्बुजं दधानाः अत एवाघं भिन्दंति अङ्घ्रिजलानि येषां ते तादृशाः कदापि स्वजनसुतात्मदारगृहान्नोपासते इति किं वक्तव्यम् । ये जनाः सकृदपि त्वयि नित्यसुखमय स्वरूपे मनो दधति तेऽपि पुनः पुरुषाणां सारं विवेकधैर्यक्षांत्यादिकं हरंतीति तथाभूतानावसथान् गृहान्नोपासते । अत्र श्रुतयः—"सकाम्या मेरोः शृंगे यथा सप्तपुर्यो भवंति तथा सकाम्या निष्काम्याश्च भूगोल चक्रे सप्तपुर्यो भवंति तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी हि" इति "मथुरायां स्थितिर्ब्रह्मन्सर्वदा मे भविष्यति । चित्स्वरूपं परं ज्योतिःस्वरूपं रूपवर्जितम् ॥ हृदि मां संस्मरन्ब्रह्मन्मत्पदं याति निश्चितम् । " इति श्रीगोपाल तापन्याम् ( २२ ) ॥ ३९ ॥

**नीलकण्ठी**—एवं वैराग्यमुक्त्वा यान्येव विद्वल्लक्षणानि तान्येव ज्ञानसाधनानीति मत्वा विद्वदाचारप्रदर्शनेनाभ्यासं विधत्ते—भुवीति । ये त्वयि नित्यसुखे आत्मनि प्रतीचि सकृन्मनो दधति त एव भुवि कर्मभूमौ पुरुपुण्यादिमन्तः सन्तः पुनः ज्ञानोत्पत्त्यनन्तरं पुरुषसारहरावसथान् पुरुषाणां सारं बुद्धिवैभवं हरन्ति तादृशान्गृहान् न एवोपासते " दृष्टाऽऽनुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् " " तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् " इति योगोक्तदिशा साधकदशायामेव विरक्तस्य सिद्धदशायां ज्ञातविषयवैरस्यस्य सुतरां तेषु वैतृष्ण्यं भवतीति भावः । अत्र पुरूणि पुष्कलानि पुण्यानि इष्टापूर्तव्रतजपादीनि चित्तशुद्धिद्वारा आत्मविविदिषोत्पादकानि " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन " इत्यादिश्रुतेः तीर्थसदनं गुरूपसदनं तेन तद्वारके श्रवणमनने लक्ष्येते । " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः " इत्यात्मदर्शनार्थत्वेन वेदान्तश्रवणादिविधानात् पुरुपुण्यतीर्थसदनानि कृतवन्तः इत्यध्याहारः । अत एव ऋषयः ऋषन्ति प्राप्नुवन्त्यात्मानमिति ऋषयः पारोक्ष्येण ज्ञातात्मतत्त्वा भूत्वा विमदाः, अत्र मदाभावेन शमादिषट्कमुच्यते । तथा च श्रुतिः—" तस्मादेवंविच्छान्तो दान्त उपरतास्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत् " इति । " श्रद्धान्वितो भूत्वा " इति शाखान्तरम् । श्रवणादिप्रणाड्या परोक्षज्ञानवत आत्मापरोक्षार्थं शमादीन्विधत्ते । प्रणाड्यन्तरमाह—उतापि च भगवतो विष्णोः पदं पदनीयं " सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् " इति श्रुत्युक्तं कृष्णादिमूर्तेः पदं वा अम्बुजवदभिरामं तत्रैव हृन्मनो येषां ते निर्गुणस्य सगुणस्य ब्रह्मण उपासका इत्यर्थः । तेऽप्यावसथान्नोपासत इत्यावर्तते उभयेऽपि अघभिदङ्घ्रिजलाः शुद्धयादिकामैराराधनीया इत्यर्थः । "यंयं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् तंतं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः " इति श्रुतेः ( २२ ) ॥ ३९ ॥

सत इदमुत्थितं सदिति चेन्नतु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ॥
व्यवहृतये विकल्प इषितोंधपरंपरया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ २३ ॥ ३६ ॥

नन्नु 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ।' 'तद्भूतानां क्रियार्थेन समन्वयः' इति तत्रतत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिषदामपि तदेव युक्तम् । यथोक्तं तंत्रवार्तिककृता । एतेन क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यं व्याख्यातमिति न " एकमेवाद्वितीयं ब्रह्म । विज्ञानमानंदं ब्रह्म । अचक्षुरश्रोत्रम्" इत्येवं तद्विपरीतात्मप्रतिपादनात् । नह्यद्वितीयपरमानंदरूपस्य कर्मांगत्वं युज्यते । अननुमतं चैतद्वार्तिककृतः । कथम् । " सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ॥ परांगं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्" इति तेनैवोक्तत्वात् । एतदर्थमेव मननाय मुनयः पर्यटंतीत्युक्तम् । तत्र तावद्द्वैतस्य सत्यत्वे भवेदप्येवं

**भावार्थदीपिकाप्रकाशः वंशीधरी**—मीमांसका हि कर्मण एव स्वर्गादिरूपपुरुषार्थहेतुत्वं निश्चित्य सर्वस्य वेदस्य क्रियापरत्वं यज्ञादिकर्तुर्यजमानस्य कर्माङ्गस्य स्तावकत्वेनोपनिषदामपि क्रियापरत्वं वर्णयन्तीति तन्मताभिप्रायेणाक्षिपति—नन्विति ।"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" इति पूर्वपक्षसूत्रम् । अस्यार्थः—"चोदनालक्षणोऽर्थो धर्मः" इत्युपक्रमात् "तस्य ज्ञानमुपदेशः" इति मध्ये परामर्शात् "तद्भूतानां क्रियार्थेन समन्वयः" इत्युपसंहाराच्चाम्नायस्य क्रियार्थत्वमवगतम् । ततश्चायमर्थः—आम्नायस्य वेदस्य क्रियार्थत्वात् यज्ञादिक्रियापरत्वात् अतदर्थानामक्रियार्थानां वेदानामानर्थक्यमनर्थता "सोऽरोदीत्तद्रुद्रस्य रुद्रत्वं प्रजापतिरात्मनो वपामुदखिदद्देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् " इत्येवमादीनामानर्थक्यं धर्माधर्मरूपार्थप्रतिपादकत्वराहित्यं तस्मादेवञ्जातीयकं वाक्यजातमनित्यमुच्यतेऽनित्यमिव नं पुनरनित्यमेव अपौरुषेयत्वेन तन्निरासात् । एवमादिवाक्यानामक्रियार्थत्वं तु रोदनवपोत्खातादिगज्ञानादिरूपसिद्धार्थबोधकत्वेनेति बोद्धव्यम् । अथ सिद्धान्तसूत्रमाह—"तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् " इति सूत्रम् । अस्यार्थः—तेषु पदार्थेषु रोदनवपोत्खातदिगज्ञानादिषु भूतानां वर्तमानानां पदानां सोऽरोदीदित्यादीनां क्रियार्थेन पदेन यजेतेत्यादिना समाम्नायः समुच्चारणं सम्बन्ध इत्यर्थः । कुतः, अर्थस्य पदार्थस्य तन्निमित्तत्वात् तस्य वाक्यार्थप्रत्ययस्य निमित्तत्वात् पदानि तावत्स्वार्थानभिदधति पश्चात्ते पदार्था आकांक्षायोग्यतासन्निधिमत्त्वाद्वाक्यार्थमवगमयंति अत आकांक्षादिमहिम्ना रोदनादिवाक्यानां कथञ्चिद्विध्येकवाक्यता कल्पनीयेति तस्माद्यथाशक्ति आवेशेन क्रिया कर्तव्येत्यर्थः । "कल्प्यते—" इत्यादिसूत्रैर्मीमांसायां तत्रतत्र जैमिनिना वेदस्य क्रियापरस्याभिधानादुपनिषदामपि क्रियापरत्वमेव युक्तं यथोक्तमिति क्रत्वर्थः यज्ञांगभूतो यः कर्ता यजमानस्तस्य प्रतिपादनं तत्त्वमसीत्यादिवाक्यैरीश्वराभेदेन स्तुत्यत्वेन निरूपणम् । एतेनोपनिषदां नैराकांक्ष्यं सार्थकत्वं ब्रह्मप्रतिपादनरूपं प्रत्याख्यातमपास्तम् । उपनिषद्भिर्यजमानः स्तूयते न तु निर्विशेषं ब्रह्म प्रतिपाद्यत इति भावः । तदेवं वेदस्य क्रियापरत्वाभिधानमुपनिषदां नैराकांक्ष्यमीश्वरस्य कर्मांगत्वं न भवतीत्याह—नेति । एकमेवाद्वितीयमित्यादिश्रुतिभिस्तदुक्ताद्विपरीतस्यात्मनः प्रतिपादनात् न ह्यद्वितीयपरमानन्दरूपात्मनः कर्मांगत्वं युज्यतेऽतो न भवति कर्तुः स्तुतिरियमित्यर्थः । कथं तर्हि वार्तिककृता तथा व्याख्यातं, सत्यम्, एतद्व्याख्यानं तस्य वार्तिककृतोऽप्यननुमतमसंमतमास्ति कथमिति चेदाह—सर्वत्रेति । असंसार्यात्मज्ञानं विना हि सर्वत्र विज्ञानं यत्किञ्चिद्विविधज्ञानजातं संस्कारत्वेन गम्यते ज्ञायते परेषां कर्मणामंगं परांगं ज्ञानञ्च प्राक्कृतस्यानुप्रवर्तकः संस्कारः जातमात्रस्य स्तनपानादिज्ञानं संस्कारवशादेव जायते औपनिषदं परमात्मज्ञानन्तु गुरूपदेशं विना न भवतीति तात्पर्यम् । तेनैव वार्तिककृतैव एतदर्थमेवात्मज्ञानार्थमेव पूर्वोक्तश्रुतिसमूहविरोधनिवृत्त्यर्थं मननस्योपयोगोऽस्तीत्युक्तमेतदर्थं मननायेति । तत्र तावत्तव मतेऽपि द्वैतस्य स्वर्गादिविश्वस्य सत्यत्वे भवेदेवम्, उपनिषदां यजमानस्तुतिपरत्वं स्यात् । तदेव, उपनि

तदेव तु न संभवतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह । सत इदमुत्थितं सदिति चेदिति । इदं विश्वं धर्मि । सदिति साध्यो धर्मः । सत उत्पन्नत्वाद्धेतुः । यद्यत उत्पन्नं तत्तदात्मकमेव दृष्टम् । यथा कनकादुत्पन्नं कुंडलादि तदात्मकं तद्वदिति । तत्र यदि सदभेदः साध्यते तदाऽपादानत्वनिर्देशेनैव भेदप्रतीतेर्विरुद्धो हेतुरित्याह । ननु तर्कहतमिति । ननु नाभेदं साधयामः किंतु तदुत्पन्नत्वेन कुंडलादिवद्भेदं प्रतिषेधयामः । तत्राभेद एव स्यादित्याशंक्यानैकांतिकत्वेन दूषयति । व्यभिचरति क्व चेति । पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु च तथादर्शनादिति भावः । ननु तदुत्पन्नत्वं नाम तदुपादानत्वं न तु तन्निमित्तत्वमतो नानैकांतिकत्वमित्याशंक्य दूषयति । क्वच मृषेति । गुणोपादानस्यापि फणिनो न गुणत्वं किंतु मिथ्यात्वम् । अन्यथा कुंडलादिवदबाधप्रसंगात् । अतः पुनरप्यनैकांतिकत्वमेवेति भावः । ननु न तत्र केवलं गुणमात्रं फणिन उपादानं किंत्वविद्यायुक्तम् । तथाभूतस्यावस्तुत्वाद्युक्तं फणिनो मिथ्यात्वमित्याशंक्य तत्तुल्यमत्रापीति दूषयति । न तथोभययुगिति । अयमर्थः । अत्राप्यविद्यायुक्तस्यैव

षदां यजमानस्तुतिपरत्वमेव न संभवतीति प्रश्नोत्तराभ्यां मननेन विचारेण तत्त्वावधारणस्य परमार्थनिश्चयस्य प्रकारं रीतिमाह—सत इति । धर्मिपक्षः, सतः परमेश्वरात् इदमनुमानं मीमांसकानाम् तत्र विश्वस्मिन् सदभेदः साध्यते चेत्तदा दोषमाह वेदान्ती—तर्कहतमिति । भेदसाधकेन हेतुनाऽभेदसाधनं युक्तिविरुद्धं हेतौ सत इति पञ्चम्या अपादानार्थकाया भेदप्रतीतेर्विरुद्धो हेतुरित्यर्थः । साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा—शब्दो नित्यः कृतकत्वादित्यत्र कृतकत्वहेतुः साध्याभावेनानित्यत्वेन व्याप्तस्तथात्रापि सत उत्पन्नत्वरूपो हेतुरभेदरूपसाध्यस्याभावेन भेदेन व्याप्तः, वृक्षात्पत्रं पततीत्यादाविव यत्रापादाननिर्देशस्तत्र भेद इति नियमात् न । नन्वत्राभेदं पुनर्भङ्ग्यन्तरेणाक्षिपति—नन्विति । साधयामः किन्तु तदुत्पन्नत्वेन कुण्डलादिवद्भेदं प्रतिषेधामः तद्भेदनिषेधे च जगति सत्यत्वमेव सिद्ध्येत् एवं चापादाननिर्देशेन जातापि भेदप्रतीतिर्न भेदनिषेधस्य विरोधिनी, यथा—कनकात्कुण्डलमुत्पन्नमिति पञ्चम्या जातापि भेदप्रतीतिः कारणकार्ययोः कनककुण्डलयोः सुवर्णत्वेन भेदनिषेधसाधने विरुद्धा न, तथा—सत उत्पन्नत्वादित्यपादानपञ्चम्या जातापि भेदप्रतीतिर्ब्रह्मजगतोः सत्यत्वेन भेदनिषेधसाधने विरुद्धा नेति । तथा चेदमनुमानं विश्वं सद्भिन्नं न सत उत्पन्नत्वात्, यत् यत उत्पन्नं तत्ततो भिन्नं न, यथा—कनकादुत्पन्नं कुण्डलं कनकान्न भिन्नम् अत्र हेतोः साध्याभावव्याप्तत्वाभावान्न विरुद्धो हेतुरित्यभिप्रेत्याहुः स्वामिचरणाः—तत्राभेद एवेत्यादि । तत्र भेदनिषेधे अनैकान्तिकत्वेन व्यभिचारित्वेनेति व्यभिचरति—क्व चेति । हेतुमति साध्याभावो व्यभिचारः । यथा—पर्वतो वह्निमान्द्रव्यत्वादित्यत्र जलादौ द्रव्यत्वरूपहेतोः सत्त्वेऽपि वह्निरूपसाध्यस्यासत्त्वाद्व्यभिचारस्तथात्रापि पितुरुत्पन्ने पुत्रे मुद्गरप्रहारादुत्पन्ने घटध्वंसे च तत उत्पन्नत्वरूपहेतोः सत्त्वेपि तद्भेदाभावरूपसाध्यस्यासत्त्वाद्व्यभिचारः । पुत्रे पितृभेदस्याभावरूपे घटध्वंसे भावरूपमुद्गरप्रहारभेदस्य च प्रसिद्धत्वात् । आदिना चक्रघटादिग्रहः । तथादर्शनाद्भेददर्शनात् । इति भाव इति—भावादभावस्याभावाद्भावस्योत्पत्तिदर्शनान्न नियतं कार्यकारणाभेदमभावादप्यविद्यानाशाद्भावरूपस्य ज्ञानस्योत्पत्तेरिति तात्पर्यम् । पुनराक्षिपति—नन्विति । तदुत्पन्नत्वं तदुपादानकत्वं तथा चेत्थमनुमानं विश्वं सतो भिन्नं न सदुपादानकत्वात्, यद्यदुपादानकं तत्तत्ततो न भिन्नमिति, अतो नात्र व्यभिचारः । पुत्रे पितृभेदाभावरूपस्य घटध्वंसे च मुद्गरभेदाभावरूपस्य साध्यस्यासत्त्वे तदुपादानकत्वरूपहेतोरप्यसत्त्वात् । न हि पुत्रस्य पिता घटध्वंसस्य मुद्गरो वोपादानकारणं किन्तु पिता मुद्गरश्च । तत्र निमित्तकारणमेव पुत्रोपादानं वीर्यं घटध्वंसोपादानं कपालादीत्याशंक्याह—क्व च मृषेति । क्वचिदुपादानकार्यं मिथ्या भवतीत्यर्थः । तथा च रज्जूपादानके सर्पे पुनरपि व्यभिचारः, अत्र सर्पे रज्जूपादानकत्वरूपहेतोः सत्त्वेऽपि रज्जोर्भिन्ने सर्पे रज्जुभेदाभावरूपसाध्यस्यासत्त्वात्, रज्जोर्व्यावहारिकसत्यत्वात्सर्पस्य च प्रातीतिकत्वात् तत्र सर्पे रज्जुतो भेदो निराबाध एव, अन्यथा रज्जुज्ञाने जाते सर्पस्य बाधो न स्यात् । ननु सन्मात्रोपादानकत्वं हेतुः, तथा च विश्वं सतो भिन्नं न सन्मात्रोपादानकत्वात् यत्तन्मात्रोपादानकं तत्ततो न भिन्नमित्यनुमानम् । तथा च न रज्जुसर्पे व्यभिचारः, रज्जुभेदाभावस्तदसाध्याभाववति मिथ्याभूते रज्जुसर्पेऽज्ञानयुक्तरज्जूपादानके रज्जुमात्रोपादानकत्वरूपहेतोरभावादित्याशंक्य तत्तुल्यमत्रापीत्याह—न तथेति । उभाभ्यां सदविद्याभ्यां युनक्तीति उभययुक् उभययुगपीदं जगन्न तथा न सदित्यर्थः । अविद्यासंवलितस्यैव ब्रह्मणो जगदुपादानत्वं न सन्मात्रस्येति

सत उपादानत्वम्। एवंभूतस्य च न वस्तुसत्त्वम्। अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्त्वं प्रपंचस्येति । ननु माभूदनेन हेतुना प्रपंचस्य सत्त्वं हेत्वंतरेण तु साधयामः। तथाहि सदिदमर्थक्रियाकारित्वात्। न यदेवं न तदेवं यथा शुक्तिरजतमिति तत्राह। व्यवहृतये विकल्प इषित इति। व्यवहारायार्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव। कूटकार्षापणादिनाऽपि क्वचिद्व्यवहारदर्शनात्। नन्वेकत्र सतोऽन्यत्रारोपो भ्रमः प्रसिद्धोऽत्यंतासत्त्वे कथं प्रपंचो भ्रमः स्यात् सत्त्वे वा नाद्वैतसिद्धिः। उक्तं च भट्टैः। "अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि ॥ प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा" इति नेत्याह । अंधपरंपरयेति। अंधपरंपरया यो विकल्प इत्यन्वयः। अयं भावः। संस्कारजन्यो भ्रमः। संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते न वस्तुसत्त्वम् । प्रतीतौ सत्यां वस्तुसत्त्वाभावेन ब्रह्मव्यतिरेकादर्शनात् । अतोऽनादित्वात्पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तर आरोपो भविष्यति। अंधपरंपरान्यायेन व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुरिति। ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ॥ अपाम सोमममृता अभूम" इत्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनादसत्त्वं न घटते न हि नित्यवस्त्वसद्भवति। तस्माद्वेदप्रतिपादितत्वाद्द्वैतं सदेवेत्याशंक्याह। भ्रमयतीति। हेभगवंस्ते भारती वेदलक्षणा उरुवृत्ति

सन्मात्रोपादानकत्वरूपो हेतुर्विश्वस्मिन्पक्षे नास्तीति स्वरूपासिद्धो हेतुः, पक्षे हेत्वभावः स्वरूपासिद्धः। एवं च रज्जुसर्पादेरिव विश्वस्यापि कल्पनमध्यासमूलकमेव। अध्यस्तस्य च मिथ्यात्वाद्विश्वं मिथ्यैवेति सिद्धम्। अयमेवार्थोऽयमर्थ इत्यारभ्य न वस्तुसत्त्वं प्रपञ्चस्येत्यन्तेनोक्तं स्वामिचरणैः। पुनरत्राशंकते—नन्वित्यादिना। अनेन हेतुना सत उत्पन्नत्वा दित्यनेन हेतुना हेत्वन्तरेणान्यहेतुना। तथाहि—विश्वं सत्, अर्थक्रियाकारित्वात्। न यदेवं न तदेवम् यथा शुक्तिरजतमित्यनुमानेन विश्वसत्यत्वं साधयाम इत्याशंक्यात्रापि व्यभिचारमाह—व्यवहृतय इति। व्यवहृतयेऽर्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव कूटकार्षापणादिनेति। मिथ्याभूतकृत्रिमरजतसुवर्णादेरप्यर्थक्रियाकारित्वात्, आदिना मिथ्यागजागमने सत्यस्य भयांगकम्पादेः स्वाप्नांगमसंगमसर्पादिनाऽसत्येन सुखभयादेर्भाविशुभाशुभस्य च ग्रहणम्, एवं चात्र सर्वत्र मिथ्याभूते सत्यत्वरूपसाध्यस्यानधिकरणेऽर्थक्रियाकारित्वरूपहेतोः सत्त्वाद्व्यभिचार इत्याशयः। पुनरत्राक्षिपति—नन्विति। एकत्र सत्यत्वेन प्रमाविषयीभूतस्यान्यत्रारोपो भ्रमः। यथा—हट्टपत्तनादौ बिलादौ च सत्यत्वेन प्रमाविषयीभूतस्य रजतसर्पादेरन्यत्र शुक्तिरज्ज्वादावारोपो भ्रमः, स चात्र न संगच्छते ब्रह्मणोऽन्यत्रा धिष्ठाने प्रपञ्चस्य सत्त्वे तव द्वैतापत्तिः असत्त्वे च क्वाप्यदृष्टत्वेनाकाशपुष्पतुल्यस्य विश्वस्य ब्रह्मणि कथमारोपः तस्माद्विश्वं सत्यमेव न तु मिथ्येत्यभिप्रेत्यैवोक्तं भट्टैर्मीमांसकैः खपुष्पत्वमसत् अवस्तु तस्मिन्कथमध्यस्यतेऽध्यासः क्रियते सुगन्धादेः प्रज्ञाता गुणसत्ता यस्य रजतादेस्तत्प्रज्ञातगुणसत्ताकं शुक्त्यादावध्यारोप्येत भ्रमादि स्याच्चेत्तदभावेनाध्यारोपो भवतीत्यर्थः। तथा च विश्वस्मिन्पक्षे सत्यत्वरूपसाध्यवत्येवार्थक्रियाकारित्वरूपहेतुरस्तीति न व्यभिचार इत्याशङ्क्य व्यभिचारतादवस्थ्यमेव वदन् हेतोः साध्यासाधकत्वरूपमप्रयोजकत्वमप्याह—अन्धेति। अन्धपरम्परया विकल्प इत्यन्वयः। अथाशयमाह—अयं भाव इति—संस्कारजन्यो भ्रमः स्वजनकसंस्कारसिद्धये पूर्वकालिकं ज्ञानमात्रमपेक्षते न तु यथार्थज्ञानं विषयसत्यत्वं वा भ्रान्तिज्ञानेनापि संस्कारासिद्धेः, तादृशसंस्कारमात्रेण चोत्तरत्र भ्रमसिद्धिः। यथा—यक्षशून्ये एव वटे ततोऽन्यत्र तत्प्रमायामजातायामपि इह वटे यक्षो दृष्ट इति केनचिदन्धेनान्ध उपदिष्टस्तेनान्यस्तेनान्य इत्यन्धपरम्पराभ्रमसिद्धस्य मिथ्यारोपितस्यापि यक्षस्य मूर्च्छामरणाद्यर्थक्रियाकारित्वं दृष्टमेव तत्र, तथात्रापि। एवं च विश्वस्मिन्पक्षे सत्यत्वरूपसाध्यासाधकतयाऽर्थक्रियाकारित्व रूपो हेतुरप्रयोजकः, पक्षे हेतुरस्तु साध्यं मास्त्वित्युक्तेऽनुकूलतर्काभावात् तथा च प्रागुक्तव्यभिचारोऽपि तदवस्थ एव। पुनराशङ्कते—ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपाम सोमममृता अभूम" इत्यादि श्रुत्यनुगृहीतस्य विश्वस्मिन्यदि सत्यत्वं न स्यात्तदा सर्वेषामर्थक्रियाकारित्वं न स्यादित्यनुकूलतर्कस्य सत्त्वाद्विश्वं सत्यमेव तथा चात्र कूटकार्षापणमिथ्यायक्षादिनार्थक्रिया च महामूढानामेव न तु विज्ञानामपि विश्वस्मिञ्छरावा दिना जलाहरणजलपानाद्यर्थक्रिया तु महामूढानामिव नारददत्तात्रेयादीनां ज्ञानिना मपि समानैव ज्ञानिनामपि यदर्थक्रियाकारि तत्सत्यमेवेति नियमाद्विश्वं सत्यमेवेति हेतोरप्रयोजकत्वं व्यभिचारो वा नैवेत्याशङ्क्याह—भ्रमयतीति।

भिर्वह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थजडान्कर्मश्रद्धाभराक्रांतमंदमतीन् भ्रमयति मोहयति । अयं भावः । नहि वेदः कर्मफलं नित्यमभिप्रैति किं तु लक्षणया प्राशस्त्यमात्रं विध्येकवाक्यत्वात् । अन्यथा वाक्यभेदप्रसंगात् । "तद्यथेह कर्मचितो लोकः क्षीयते ॥ एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति न्यायोपबृंहितश्रुत्यंतरविरोधाच्च । अतः कर्मजडानामिदं भ्रममात्रमिति । एतेनैव " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादीनामन्यपरत्वं दर्शितं भवति ॥ उद्भूतं भवतः सतोऽपि भुवनं सन्नैव सर्पः स्रजः कुर्वत्कार्यमपीह कूटकनकं वेदोऽपि नैवंपरः ॥ अद्वैतं तव सत्परं तु परमानंदं पदं तन्मुदा वंदे सुंदरमिंदिरानुत हरे मा मुंच मामानतम् ॥ २३ ॥ ३६ ॥

हे हरे तव वेदलक्षणा भारती उरुवृत्तिभिर्मुख्यालक्षणागौण्यादिवृत्तिभिः आदिनाऽऽसां भेदग्रहः।उत्तिष्ठति स्वर्गादिफलं यस्मात्तदुक्थं कर्म तत्र जडान्कर्मश्रद्धाभराक्रान्तमतीन् वेदतात्पर्यानभिज्ञान्भ्रमयति मोहयति।अत्राशयमाह–अयं भाव इत्यादि । तथाहि प्रागुक्तार्थवादवाक्यस्थाक्षय्यामृतपदयोर्यागप्राशस्त्ये जहल्लक्षणा यतश्चातुर्मास्ययागः प्रशस्तस्तस्माच्चातुर्मास्ययागेनेष्टं भावयेदित्येवमक्षय्यमित्याद्युक्तार्थवादयोश्चातुर्मास्येन यजेतेति विधिनैकवाक्यत्वात् । यतो मीमांसकमतेऽर्थवादानां प्राशस्त्ये लक्षणा तेषां स्वार्थपरित्यागेनैव विधिवाक्येऽन्वयश्च अन्यथा वाक्यभेदप्रसंगात् । एकोद्देशेनानेकविधानं वाक्यभेदः । चातुर्मास्ययागजनितस्वर्गादिफलमुद्दिश्य चातुर्मास्यनामा यागो विधीयते, इत्येकं स्वर्गादिफलस्य नित्यत्वं चेति द्वितीयमित्युभयविधाने स्पष्टतरो वाक्यभेदः। स च वाक्यगतत्वान्महादोषः । लक्षणा चामृतादिपदगतत्वादल्पदोषरूपा।तस्मादक्षय्यामृतपदयोः प्राशस्त्यमात्रलक्षणया प्रशस्तयागमात्रमेव कर्म स्वर्गादिफलोद्देशेन विधीयते इत्येकस्यैव विधानान्न वाक्यभेद इत्यर्थः । ननु वेदान्तसिद्धान्ते "इन्द्रो वृत्राय वज्रमुदयच्छत् " इत्याद्यर्थवादानामपि स्वार्थे प्रामाण्यमंगीकृतं तद्वदक्षय्यादिवाक्येष्वप्यस्त्विति चेन्न स्वर्गादिः क्षयिष्णुः यागादिकर्मसम्पादितत्वात् कृष्यादि कर्मसम्पादितसस्यादिवदित्यनुमानगर्भितेन "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुत्यन्तरेण विरोधात् दृष्टान्तदार्ष्टान्तिकयोरुक्तार्थवादयोर्महावैषम्याच्च । तथा चोक्तम्–"विरोधे गुणवादः स्यादणुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ " अयमर्थः–प्रमाणान्तरविरोधे सत्यर्थवादो गुणवादः यत्राक्षय्यमिति "अमृता अभूम" इत्यादि च कर्मजन्यस्वर्गादेः सत्यत्वस्य तद्यथेहेत्यादिश्रुतिभिर्युक्तिभिश्च बाधितत्वात् । ऐहिकापेक्षया चिरकालसत्त्वपरत्वेनैव तद्वाक्यानां निर्वाहात् । प्रमाणान्तरावगतार्थबोधकोऽनुवादः यथा–अग्निर्हिमस्य भेषजमित्यादि हिमविरोधित्वस्याग्नौ प्रत्यक्षावगतत्वात् । प्रमाणान्तराविरुद्धार्थबोधको भूतार्थवादः। यथा–"इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादि स्वर्गादिकं तथा च कर्मफलं यतः प्राशस्त्यपरत्वश्रुत्यन्तरविरोधवतो हेतोरित्यभिप्रेत्याह–नित्यमिति । कर्मजडानां भ्रममात्रम् एतेन जगतोऽनित्यत्वसाधनेनान्यपरत्वमद्वैतपरत्वमित्यन्तस्य तात्पर्यमाह तथा "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः " इत्यादि श्रुतयोऽपि " नेह नानास्ति किञ्चन" इत्यादिनिषेधकश्रुत्यपेक्षितनिषेध्यसमर्पिका ब्रह्मोपादानकत्वोक्त्या जगतो ब्रह्मण्येवोत्पत्तिप्रलयावित्यद्वैतसाधिका वा न तु नानाविधद्वैतप्रतिपादनपराः । एवं च कूटकार्षापणादावुक्तदोषेऽप्यादिपदोपात्तमिथ्याभूतस्यापि स्वप्नांगनादेः स्वप्नाध्यायवाक्यैर्मूढ इव ज्ञानिन्यपि यावच्छरीरं भाविशुभाशुभफलोत्पादकत्वात् वीर्यपातादिजनकत्वाच्चार्थक्रियाकारित्वं दृश्यत एव । तथा च ज्ञानिनामपि यदर्थक्रिया तत्सत्यमेवेति नियमो भग्न एव तस्मादर्थक्रियाकारित्वरूपहेतावप्रयोजकत्वं व्यभिचारश्च तदवस्थ एवेति नानेनानुमानेन विश्वस्मिन्पक्षे सत्यत्वरूपं साध्यं सिद्ध्यति प्रत्युतानुमानगर्भितप्रागुक्तश्रुतिभिर्मिथ्यात्वमेवेति निश्चितं विश्वस्येति संक्षेपः । किञ्च कर्मिणां गतागतप्रकारस्य श्रुत्या वर्णितत्वेनानित्यत्वमेव कर्मफलस्य । तथा च श्रुतिः–"अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रलोकं प्राप्यान्नं भवन्ति तांस्तत्रैव देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममाकाशमभिनिष्पद्यंते आकाशाद्वायुर्वायोर्वृष्टिर्वृष्टेः पृथिवीं प्राप्यान्नं भवति एवमेवानुपरिवर्तन्ते" इति । स्फुटोऽप्यर्थः कथ्यते–धूममभिसम्भवन्ति प्रथमं धूमाभिमानिनीं देवतां प्राप्नुवन्ति एवमुत्तरोत्तरं ज्ञेयम् । अपक्षीयमाणपक्षं कृष्णपक्षं यान् दक्षिणादित्य एति तान्षण्मासान् कर्कादिचापान्तानित्यर्थः । अन्नं देवानामन्नं तत्रस्था देवा यथा चन्द्रं चन्द्रादमृतं पिबन्ति तथा तान्भक्षयन्ति तेभ्यः पुण्यफलमन्नं भक्षयन्तीत्यर्थः । तेषां तत्पुण्यं यदा पर्यवैति नाशं गच्छति तदा सोमलोकादिममाकाशमभिनिष्पद्यन्ते प्राप्नुवन्ति । पृथिवीं प्राप्य मनुष्यादीनामन्नं भवति, इति अन्नाद्वीर्यरूपेण परिणतात्पुनर्जायन्ते इति । प्रवृत्तिमार्गपरेयं श्रुतिः । स्वामिनां तु–उद्भूतमिति । सतोऽपि भवतः सकाशात् उद्भूतं भुवनं न सत् यथा स्रजो मालातः उद्भूतः सर्पो न सत् तद्वत् कार्य

व्यवहारं कुर्वदपि न सत् कूटकनकमिव, वेदोऽप्येवम्परः कर्मफलप्रतिपादनपरो न भवति किन्तु परमानन्दाद्वैतपर एवेत्याह तवाद्वैतं मद्वैतापादकं परमानन्दं सत्पदं तत्ततोऽहं वन्दे हे इन्दिरानुत । स्पष्टमन्यत् । केचिदिदं पद्यं माथुरविप्रस्तुतिं पुरस्कृत्य कृष्णभक्तपरत्वेन योजयन्ति । तथाहि ननु "माथुरा मम पूज्या हि माथुरा मम वल्लभाः । माथुरे परितुष्टे हि तुष्टोऽहं नात्र संशयः ॥ " इति वाराहोक्त्या माथुराणां मद्भक्तत्वात्तत्कुलोत्पन्ना इमेऽपि विप्राः सन्त एवेति कुतो निन्दन्त इत्याशङ्क्याहुः—सत् इति। इदं दीक्षितविप्रवृन्दं सत् सतो दीक्षितकुलादुत्थितमुत्पन्नमिति चेन्न। नु इति वितर्के। यत इदं तर्कहतं युक्तिबाधितं तदेवाहुः—व्यभिचरति क्व चेति । त्रयीमया त्वत्प्रियमुनाजनकात्सतः सूर्यादुत्पन्नस्यापि कर्णस्य दुष्टत्वदर्शनाद्व्यभिचार इत्यर्थः । किञ्च क्व च मृषेति—यथा श्रीवेदव्यासादुत्पन्नेऽप्यन्तर्निगूढदुष्टभावे धृतराष्ट्रे दृश्यमानापि बहिःसाधुता मिथ्यैवेत्यर्थः । ननु "ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान्" इत्युक्त्या धृतराष्ट्रस्य श्रीकृष्णेच्छावशवार्तित्वान्न दुष्टत्वमित्याशंक्याहुः—न तथेति । तथापि यथा विदुरादयस्त्वयि भक्तास्तथा नायमन्तर्निगूढधूर्तभावत्वात् । ननु कर्णस्य सूर्योत्पन्नत्वेऽपि सहस्रकवचाख्यदैत्यावतारत्वाद्युक्तमेव दुष्टत्वं दीक्षितानां विप्रत्वात्कथं दौष्टयमित्याकांक्षायामाहुः—उभययुगिति । दीक्षितवृन्दमुभाभ्यां खलत्वब्राह्मणत्वाभ्यां युक्तं ब्राह्मणत्वेऽपि कंसस्याहिताशंसनात्तदन्नवृत्तिभोगाच्च खलत्वम् । ननु तर्हि तथाविधास्ते कथं मद्भक्तैर्गोपैः प्रणतास्तत्राहुः—व्यवहृतये इति । दुष्टेष्वपि विप्रेष्वन्धपरम्परया विकल्पो विविधो नमस्कारादिकल्पनारूपो व्यवहार इष्ट एव खलेष्वपि तेषु ब्राह्मणत्वेन गोपैस्तथा व्यवहृतमित्यर्थः । ननु सर्ववेदवेद्ये मयि वेदविदोऽपि ते कथमभक्तास्तत्राहुः—भ्रमयतीति । अत्रापि पूर्व एवार्थः । एवं च दीक्षितब्राह्मणनिन्दायां न तात्पर्यं किन्तु यदीदृशा वेदविदो विप्रा अपि श्रीकृष्णानुरागरहिता निन्द्या एव तदा किमु वक्तव्यम् तथाविधा इतर इति श्रेयोऽर्थिभिः सर्वथा श्रीकृष्णानुराग एव कार्य इत्यत्रैव तदित्याशयः ॥ * ॥ **श्रीधरानुयायिनी**—सत इदमित्यादेर्दीक्षितविप्रपक्षे प्रसिद्धपक्षे च व्याख्यानं पूर्वव्याख्यानेषु लिखितमतस्तत्रैव द्रष्टव्यम् ॥ **विश्वनाथी**—समाम्नायस्येति पूर्वपक्षसूत्रं तद्भूतानामिति सिद्धान्तसूत्रम् तत्र प्रथमसूत्रस्य तस्मादनित्यमुच्यत इति शेषः । "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं प्रजापतिरात्मनो वपामुदखिदत् देवा वै देवयजनमध्यवसाय दिशो न प्रजानन् " इत्येवमादीनामतदर्थानां न सांशयत्रयवती भावनाऽर्था येषां पुरुषास्वाधीनत्वेन विधौ पर्यवसाययितुमशक्यानामानर्थक्यं स्यात् । सोऽरोदीदिति यद्व्यशीर्यत तद्रजतमभूत् प्रजापतिरात्मनो वपामुदखिददिति इत्यादेरर्थस्तु तेषु रोदनवपोत्खातदिगज्ञानादिषु भूतानां सिद्धार्थप्रतिपादकत्वेन वर्तमानानां विधिप्रत्ययशून्यानां क्रियार्थेन क्रियाप्रतिपादकेन "बर्हिषि रजतं न देयं पशुना यजेत वायव्यं श्वेतमालभेत " इत्यादिना समाम्नायसमुच्चारण सम्बंध इत्यर्थः । कर्मपरवाक्येन संबंधेऽयं प्रकारः—यतो रोदनरूपामंगलजन्यं तद्रजतमतो बर्हिषि यागे न देयमिति । यतो वायुः क्षिप्रकार्यकारी देवोऽतो वायव्यं वायुसंप्रदानकं श्वेतमजमालभेत यतो ब्रह्मणा निजवपया मेदसा पशुर्निर्मितो विशिष्टफलत्वात्पशुना यजेत, यतो देवानामपि देवयजनाधिष्ठाने दिगज्ञानमतोऽन्यत्रानासत्त्या यतेतेत्येवं विधिनिषेधवाक्योपक्षितप्राशस्त्यनिन्दान्यतरपूरणेनान्वये कृते सर्ववेदस्य क्रियापरत्वासिद्ध्या निरर्थकत्वनिरासेन प्रामाण्यं सिद्धम् । "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविध्युपात्ते सर्वस्मिन्वेदे न कस्यापि वाक्यस्यानर्थक्यासम्भवान्निरर्थकाध्ययनविध्यनुपपत्तेरित्यर्थः । कथितसिद्धान्तसूत्रशेषस्यार्थमाह—अर्थस्य रोदनादेस्तन्निमित्तत्वात् क्रिययैवार्थः फलं यस्य तस्य भावस्तत्त्वं तस्माद्यतः स रोदनादिरूपोऽर्थो निन्दाप्राशस्त्यद्वारा क्रियायामेवान्वितो बभूव तस्मादन्यैरपि यथाशक्त्यावेशेन क्रियैव कर्तव्येति यत्रयत्र वेदस्य क्रियापरत्वं न दृश्यते तत्रतत्रेत्यर्थः । उपनिषदां तत्त्वमस्यादिवाक्यानामपि एतेन विधित्वैकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति द्वितीयपादोक्तसूत्रसिद्धान्तेनोपनिषदां नैराकांक्ष्यं वयं कर्मपराः कथं स्याम इत्याकांक्ष्याराहित्यं क्रियापरत्वेन सार्थकत्वमिति यावत् । केन प्रकारेण व्याख्यातमित्यपेक्षायामाह—क्रत्वर्थो यज्ञांगरूपो यः कर्तायजमानस्तस्येश्वराभेदेन स्तुत्या वर्णनम् यथादित्यो यूपः, इह स्तुत्या यूपः पशुनियोजनक्रियायामन्वेति यजमानः प्रस्तरः, प्रस्तरः कुशपुत्तल इति स्तुत्या क्रियानिष्पत्तावन्वेति तत्त्वमस्यादीनां तद्वैपरीत्यान्न क्रियापरत्वं यदुक्तमानर्थक्यमतदर्थानां तन्न विधिना स्वस्य प्रयोजनवदर्थपर्यवसायित्वं गमयता सहैकवाक्यत्वादर्थवादवाक्यानि स्तुत्यर्थेन स्तुत्यंगत्वेन विधीनां स्युर्विधिशेषाणि भवन्तीति संक्षेपः । वैपरीत्यं स्फुटयति—एकं सजातीयभेदशून्यं यजमानसजातीया बहवो यजमानास्तिष्ठन्ति, अद्वितीयं विजातीयभेदशून्यं तस्य विजातीयाः शूद्राद्या बहवः संति ब्रह्म व्यापकं यजमानो हि परिच्छिन्नः कोष्ठैकदेशस्थत्वात् विज्ञानं चिन्मात्रं यजमानो हि चिज्जडग्रन्थ्यहंकारवत्त्वेन न ज्ञानमात्रं ब्रह्म हि आनन्दमात्रं यजमानो हि दुःखात्मककर्मकरणाद्दुःखी ब्रह्म हि चक्षुःश्रोत्रादिशून्यं तस्य तादृक्त्वेंधबधिरादिदोषवत्त्वाद्यज्ञानधिकाराद्यजमानत्वमेव हर्येत—"अर्थी समर्थी विद्वान्यजेत" इत्यादिश्रुतेः । इत्थं सुखस्वरूपस्यात्मनः क्षुद्रस्वर्गादिसुखार्थं प्रवृत्त्यसम्भवात् न हि सम्राट् तुच्छधनोद्धर्तुराधिकारिणोऽधि

कारं स्वप्नेऽपि नेच्छति यथा तद्वत् । ननु भवतु वेदान्तमत इत्थं परन्त्वस्माभिर्निजाचार्यवार्तिककृत आज्ञा मनःकर्मांगतालक्षणा पाल्यैवेत्याशंक्याह—अननुमतमिति । तदाह एतदात्मनः कर्मांगत्वं सर्वत्रैव हीति सर्वस्मि न्नेव वेदे विविधं द्रव्यदेवतावघातादिविषयं ज्ञानं 'व्रीहिभिर्यजेत' 'वैश्वदेव्यामिक्षा' 'व्रीहीनवहन्यात्' इत्यादिवाक्यजन्यं संस्कारत्वेन संस्कारस्वरूपत्वेन गम्यते ज्ञायते यथा प्रोक्षणादिसंस्कारादेवापूर्वोत्पत्तिस्तथा वेदवा क्यजन्य एव व्रीहिज्ञाने कश्चन फलप्रापको भवति न तु पौरुषवाक्यजन्ये तदेव संस्काररूपं विज्ञानं परस्य यागादिकर्मणोंगं च संस्कारस्य स्वतः फलत्वाभावात्, किन्त्वात्मज्ञानादन्यत्र उपनिषज्जन्यात्मज्ञानं विना आत्मज्ञानं च न संस्काररूपं न कस्यापि कर्मणोंगं तस्य स्वयंप्रकाशत्वात् परमानन्दरूपत्वेन परमांगित्वात् । पराभिमतोपनिषद्वाक्यानां क्रियापरत्वं तन्निवृत्तये यन्मननं विधिनिषेधप्रत्ययरहितानामेवोपनिषद्वा क्यानां युक्तिभिः सिद्धे ब्रह्मणि तात्पर्यावधारणं तदर्थं तत्र मीमांसकमत एवं भवेदात्मना कर्मांगत्वं भवेद् द्वैतस्य सत्यत्वं चेति प्रश्नोत्तराभ्यां मीमांसकस्य प्रश्नो वेदान्तिनामुत्तरं ताभ्यां यन्मननं श्रुत्यर्थस्य युक्तिभिर्म नस्यवस्थापनं तेनेत्यर्थः ॥ ( २३ ) ॥ ३६ ॥

**नीलकण्ठी**—एवं गुरुमुपासीनः श्रुतोपनिषत्कः शास्त्रात्प्रपञ्चस्य ब्रह्मविवर्तत्वमज्ञानपरिणामत्वमज्ञानस्य च तुच्छत्वमित्यवगच्छति अत्रापि 'यत उदयास्तमयौ विकृतेर्मृदि वा विकृतात्' 'भिदा यदबोधकृता' 'असदा मनुजात्' इति तत्त्रयमुक्तं तत्राशंकते—सत इदामिति । इदं सत् सदुत्थत्वात् यद्यदुत्थं तत्तदात्मकं यथा कनकोत्थं कुण्डलं कनकात्मकम् । यद्वा—इदं सदुत्थम् अनात्मत्वे सति सत्त्वात् यद्यदात्मकं तत्तदुत्थं यथा कनकात्मकं कुण्डलं कनकोत्थमिति । अत्र कारणस्य श्रुतिसिद्धं सत्यत्वमाश्रित्य प्रपञ्चस्य सत्यत्वं साध्यत इत्येकः पूर्वपक्षः । प्रपञ्चस्य रज्जुभुजंगादिवद्बाधादर्शनात्तत्सत्यत्वमाश्रित्य तत्कारणस्य प्रधानादेः सत्यत्वं साध्यत इत्यन्यः । तदे तद्द्वयं तन्त्रेण निरस्यति—ननु तर्कहतमिति । सर्वथापि निर्युक्तिकमेतादित्यर्थः । तथाहि—सदुत्थत्वं सद्विवर्तत्वं सत्पारिणामत्वं वा आद्ये इष्टापत्तिः द्वितीये परिणामिनः सतः क्षीरादिवदनित्यत्वेन कारणत्वासिद्धिरित्याह—व्यभिचरति क चेति । ननु दध्यादावपि प्रधानगतं सुखदुःखमोहात्मत्वमस्त्येव कुण्डलादाविव कनकात्मत्वमतः कनकवदस्य नित्यत्वं स्यादत आह—क च मृषेति । सुखाद्यात्मकस्यापि स्वप्नांगनादेः कार्यस्य मृषात्वात्तत्का रणस्यापि मृषात्वं दुर्वारमित्यर्थः । अस्तु तर्हि कार्यस्यासत्यत्वमत आह—न तथोभययुगिति । स्वप्नांगना हि न स्वघटादिवदबाध्या अनुभवविरोधात् । नाप्यत्यन्तमसती शशशृंगवत् चरमधातुविसर्गान्तार्थक्रियाकारि त्यादिसुखहेतुत्वात्, न च तादृशपरस्परविरुद्धधर्मद्वययोगि एकं वस्त्विति वक्तुं शक्यमतो न सत्या किन्त्वनिर्वाच्या । यच्चास्या उपादानं निद्रादिरूपमज्ञानं पराभिमतं प्रधानं वा तदप्यनिर्वाच्यं वाच्यं कार्यकारणयोः साजात्यनियमात् । एवं द्वितीयानुमानेऽप्येतैरेव श्लोकपदैर्हेत्वसिद्धिर्वक्तव्या । तथाहि—कार्यस्य सत्त्वात्कारणमपि सदितिचेत् ननु, तर्कहतं सत्यस्यापिभयकम्पादेर्हेतौ रज्जुसर्पे मृषात्वदर्शनात् । न चायं सन् सत्त्वे ह्यस्य विज्ञानमात्रं देशान्तरस्थत्वं स्मर्यमाणत्वं वा वाच्यम्, नायं सर्प इति स्वाधिष्ठाने बाधितत्वात् । किञ्चिद्विज्ञानं सद्विषयं किञ्चिदसद्विषयम् इन्द्रियाणि कञ्चित्सन्निकृष्टमर्थं गृह्णन्ति कञ्चिदसन्निकृष्टं स्मर्यमाणं किञ्चिदिदन्तया गृह्यते किञ्चिदनिदन्तयेति पक्षत्रयेऽपि व्यभिचार इत्याह—व्यभिचरति क्वचेति । तस्मान्न रज्जुसर्पः सत्यः नापि शशशृंगवदत्यन्तमसन्नित्याह—क च मृषा नेति । असत्त्वपक्षे अलीकमपि नेत्यर्थः । शशशृंगरज्जुसर्पयोर्निःस्वरूपत्वे समानेऽपि, अन्यो दृश्य त्वाद्भयादिकार्यजनकत्वाच्च नात्यन्तमसन् शशशृंगं तद्विपरीतत्वादत्यन्तमसदित्यर्थः । नन्वत्यन्तसत्त्वे अत्यन्तासत्त्वे चासिद्धे अस्तूभयात्मेत्याशंक्याह—तथोभययुगिति । यथा मृषा न तथा सदसदात्मापि न विरोधादित्यर्थः । तस्मा त्सत्त्वेनासत्त्वेन सदसदात्मत्वेन वा निर्वक्तुमशक्यत्वेनानिर्वाच्यत्वात् मिथ्याभूतमपि रज्जुसर्पशंकाविषादिकं व्यवहारकालाबाध्यभयमरणाद्यर्थक्रियाकारि दृष्टम्, तथा वियदाद्यपि स्वरूपेणेन्द्रजालवन्मिथ्याभूतमपि स्वर्गनरकब न्धमोक्षगुरुशिष्यादिव्यवहारकालाबाध्यव्यवस्थाहेतुर्भविष्यतीति स्वप्नांगनासंगमवदबाधितार्थक्रियाकारित्वेऽप्यनिर्वाच्यं वियदादि तादृशाज्ञानोपादानकमिति सिद्धं प्रधानादेरनिर्वाच्यत्वम् । नन्विदं सत्यमिदं मिथ्येति सत्यसर्प रज्जुसर्पयोः कथं विविधाकारेण कल्पनं सर्वस्य तुल्यवन्मिथ्यात्वे तदनुपपत्तेरित्याशंक्याह—व्यवहृतये विकल्प इति । स्वप्नदृष्टरज्जुरज्जुभुजंगयोर्मिथ्यात्वाविशेषेऽपि रज्जुः सत्या रज्जुभुजंगो मिथ्येति स्वाप्नव्यवहारमात्राल म्बनो विकल्पो न वस्तुतत्त्वावलम्बनः । एवं जाग्रत्यपि भविष्यति नहि गरुडभात्रनाशंकाविषादेरसत्याज्जातो विषदेहवियोगस्तत्प्रतियोगी वर्तमानो वा विषदेहसँय्योगः परमार्थसत्य इति वक्तुं शक्यं शून्यभावनयापि पारमा

र्थिकं नैरात्म्यं सेत्स्यतीति जितं माध्यमिकेनेति भावः । ननु जाग्रद्दृष्टौ रज्जुरज्जुभुजंगमौ सत्यमिथ्यारूपौ स्वप्नेऽपि सँस्कारवशात्तेन रूपेण भात इति युक्तं तत्र द्वयोरपि मिथ्यात्वम् । तर्हि जाग्रत्यपि प्राग्भवी यभ्रमसँस्कारवशादेतद्युज्यते अनादित्वाच्च भ्रमतत्संस्कारपरम्परायाः न क्वचिद्दृश्येषु सत्यासत्याविभागोऽस्तीत्याह—इषितोन्धपरम्परयेति । आरोपे हि पूर्वप्रतीतिमात्रमुपयुज्यते । ननु प्रतीतस्य स्वरूपसत्त्व मपि तेन विनापि संस्कारमात्रादुत्तरभ्रमसम्भवात् मूर्खपरम्परयायं सत्यासत्यविकल्प इषितोऽभ्युपगतो न शास्त्रदृग्भिरित्यर्थः । नन्वेतदेवं शास्त्रतत्त्वं सर्वेऽपि कुतो न जानन्तीत्याशंक्याह—भ्रमयतीति । ते तव भारती निःश्वासरूपा वेदवाणी—“ अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ” इति । “ अपाम सोमममृता अभूम ” “ प्रजामनु प्रजायसे तदु ते मर्त्यामृतं नापुत्रस्य लोकोऽस्ति ” इत्यादिका उक्थजडान् उत्तिष्ठति स्वर्गादिफलं यस्मात्तदुक्थं कर्म प्रतीकोपास्तिश्च तत्र विषये श्रद्धाजडान् उरुवृत्तिभिः बह्वीभिर्गौणलक्षणादिशब्दवृत्तिभिः भ्रमयति मोहयति यस्मादतस्ते शास्त्रतत्त्वं न जानन्तीत्यर्थः । अत्र शब्दवृत्तिस्तावत्त्रिधा—मुख्या गौणी लक्षणा च । आद्या—जातिसङ्केतयोगैस्त्रिधा । तत्र जातिशब्दाः—गौः घटः अश्वकर्ण इत्यादयः । सङ्केतशब्दाः—डित्थ डवित्थ इत्याद्याः । योगस्त्रेधा—कृत्तद्धितसमासभेदात् । आद्यौ प्रकृतिप्रत्यययोगौ द्वौ, अन्त्यः पदद्वययोगः, पाठकः औपगवः पङ्कजम् । गौणी तु—लक्ष्यमाणगुणयोगात्परशब्दस्य परत्र प्रवृत्तिः, यथा यजमानः प्रस्तरः सिंहो देवदत्तः । अत्र हि यजमानशब्देन यजमानगतं क्रतुनिर्वर्तकत्वं तत्प्रस्तरेऽप्यस्ति एवं सिंहवत्क्रौर्यं देवदत्ते सेयं लक्षितलक्षणेत्युच्यते । लक्षणापि शब्दस्य स्वशक्यसम्बन्धे वृत्तिः । सा त्रिधा—जहत्स्वार्था अजहत्स्वार्था जहदजहत्स्वार्था च । गङ्गायां घोष इत्याद्या अत्र गंगापदशक्यस्य प्रवाहस्य घोषाधारत्वासम्भवात्तत्सम्बद्धे तीरे गङ्गापदस्य वृत्तिः । द्वितीया तु शोणो धावतीति, अत्रामूर्त्तस्य शोणगुणस्य धावनासम्भवाच्छोणपदं स्वार्थमजहत्तद्वति वर्तते, एवं काकेभ्यो दधि रक्ष्यतामि त्यत्रापि काकपदं स्वार्थमजहदपि स्वस्वेतरदध्युपघातकमात्रे वर्तते । सोऽयं देवदत्त इति तृतीया—अत्र हि तद्देशकालविशिष्टो देवदत्तस्तच्छब्दार्थः, एतद्देशकालविशिष्ट इदम् शब्दार्थः । तत्र विशिष्टयोरभेदासम्भवादुभयत्र विशेषणांशं त्यक्त्वा विशिष्ये देवदत्तस्वरूपमात्रे तदिदंशब्दयोर्वृत्तिः । एवं तत्त्वमस्ययमात्मा ब्रह्मेत्यादावप्येषैव लक्षणेति वक्ष्यते । क्वचिद्वाक्येऽपि लक्षणा भवति । यथा विषं भुंक्ष्वेति । अत्र हि विषभोजनरूपस्वार्थपरि त्यागेन शत्रुगृहे न भोक्तव्यमित्यस्मिन्नर्थे वाक्यं वर्तते । एवं सति ये कर्मजडाः ते “अक्षय्यं ह वै अमृता अभूम” इत्यादावक्षय्यादिशब्दानां यत्कृतकं तदनित्यमिति न्यायेन तदनुगृहीतया “तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते ” इति श्रुत्या च गम्यमानं कर्मफलस्यानित्यत्वं स्वयमप्रतिपद्यमानाः “ आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते ” इति स्मृत्या व्याख्यातमपि चिरकालतामात्रपरत्वं न पश्यन्ति तान्कर्मफलस्य नित्यत्वंमन्यमानान्भारती भ्रमयति । एवं ये उपासनाजडाः । “ अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेव स देवानां तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति सर्वं परादाद्योन्यत्रात्मनः सर्वं वेद ” इत्यादिभेददर्शननिन्दायां सत्यामपि एष ह्येव साधुकर्मेत्यादिशास्तृशास्यभेदश्रुतेरौपाधिकभेदपरत्वं सत्स्वपि नान्योऽतोऽस्ति द्रष्टा तत्त्व मस्यहं ब्रह्मास्मीति जीवब्रह्माभेदपरवाक्येषु अप्रतिपद्यमानाः भेदं सत्यं मन्वते तानपि भ्रमयति भारती । तथा च श्रुतिः—“न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्याचासुतृप उक्थ शासश्चरन्ति ” इति । स्मृतिरपि—“यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ” इति । ये तु हार्दादिविद्याविदोऽहंग्रहेण ब्रह्मोपासते ते भेददृष्टयभावान्मूर्द्धन्यनाड्यार्चिरा दिमार्गेण ब्रह्मलोकं गत्वा तत्रैव लब्धात्मबोधा ब्रह्मणा सहैव मुच्यन्ते । तथा च श्रुतिः—“ शतं चैका च हृदयस्य नाड्यः ” इति । “ ते ब्रह्मलोके तु परान्तकाले ” इति । एवं च कर्मप्रजास्तुतिपरो वेदः कर्मणामक्षय्य फलत्वं प्रजायाश्चामृतत्वं ब्रवीति न तात्पर्येणेति भावः ( २३ ) ॥ ३६ ॥

न यदिदमग्र आस न भविष्यदतो निधनादनुमितमंतरा त्वयि विभाति मृषैकरसे ॥
अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयंत्यबुधाः ॥ २४ ॥ ३७ ॥

तदेवं प्रपंचस्य सत्त्वे साधकं नास्तीत्युक्तम् इदानीमसत्त्वे सृष्टिप्रलयश्रुतयः "यतो वा इमानि भतानि जायंते" इत्याद्यास्तन्मूलं चानुमानं प्रमाणमित्याह । न यदिदमिति । यद्यस्मादिदं विश्वमग्रे सृष्टेः पूर्वं न आस नासीत् ॥ "सदेव सोम्येदमग्र आसीत् ॥ आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिश्रुतेः । न च निधनात्प्रलयादनु अनंतरं भविष्यद्भविष्यति । "नासदासीन्नो सदासीत्तदानीम्" इत्यादिश्रुतेः । अतः कारणादंतरा मध्येऽप्येकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति मितं निश्चितम् । यत एवमतः श्रुत्या द्रविणजातिविकल्पपथैर्द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पा भेदा घटकुंडलादयस्तेषां पंथानो मार्गाः प्रकारास्तैरुपमीयते सदृशतया निरूप्यते । यथा तत्र कार्याकाराणां नामधेयमात्रताकारणं मृदाद्येव तु सत्यं तथाऽत्राप्याकाशादीनां नाममात्रता ब्रह्मैव सत्यम् । तथाच श्रुतिः "यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं भवति ॥ वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् ॥ यथा एकेन नखनिकृंतनेन सर्वं कार्ष्णायसम्" इत्यादि । तस्मादस्य सत्त्वे प्रमाणाभावादसत्त्वे प्रमाणस्य विद्यमानत्वाद्वितथमनोविलासमृतं सत्यमिति ये अवयंति जानंति तेऽबुधाः अज्ञा इत्यर्थः । अत्रैवं प्रयोगः । विवादाध्यासितं न सत् । आद्यंतयोरविद्यमानत्वाद्विकारित्वाद्दृश्यत्वाच्च शुक्तिरजतादिवत् । इत्यन्वये दृष्टांतः । आत्मवच्चेति व्यतिरेके

भावार्थदीपिकाप्रकाशः वंशीधरी—तदेवमुक्तरीत्या सत्त्वे सत्यत्वे सृष्टिप्रलययोः प्रतिपादकाः श्रुतयः सृष्टिप्रलयश्रुतयः । आदिना "नेह नानास्ति किञ्चन" इत्यादिग्रहः । तन्मूलं श्रुतिमूलकं चानुमानमत्रैवंप्रयोग इत्यादिनात्रैव वक्ष्यमाणं प्रमाणं मानम् । सदेवेत्याद्याः श्रुतयस्तु सुगमा एव । नासदिति । इदं जगत् अग्रे सृष्टेः पूर्वमात्मैवासीत् अखण्डैकरसो जगदधिष्ठानत्वेन वास्तवस्वरूपभूतः पदार्थ एवासीत् । न तु तत्कार्यभूतं नामरूपात्मकं जगदासीदित्यर्थः । तदानीं प्रलयानन्तरं सृष्टेः पूर्वमसत्कारणं नासीत् सत्कार्यं नो आसीदित्यर्थः । यत आद्यन्तयोर्नैवास्ति अतो हेतोः । यतो हेतोरेवं मिथ्याऽतो हेतोः । तत्र द्रविणविकल्पपथिषु अत्रापि ब्रह्मण्यपि अत्र प्रमाण तथा चेति श्रुतीराह "यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं तथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यं तथैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं काष्णार्यसम्" इत्येव सत्यमिति । अर्थस्तु—हे सोम्य यथैकेन घटादिकारणभूतेन मृत्पिण्डेन विज्ञातेन सर्वमन्यत्कुम्भशरावादिकं विज्ञातं स्यात् कारणानन्यत्वात्कार्यस्य । कथं तर्हि लोके इदं कारणमिदं कार्यमिति वदन्ति व्यवहरन्ति चेति तत्राह—वाचारम्भणमिति । वाचारम्भणं यावद्वस्तु तत्सर्वं नामधेयमेव केवलं न तु विकारो नाम वस्त्वन्तरमस्ति परमार्थतो मृत्तिकेत्येव सत्यम् । एवमुत्तरत्रापि योज्यम् । तथा लोहमणिना मणिकारणभूतेन सुवर्णपिण्डेन लोहमयं स्वर्णमयम् नखनिकृन्तनेन नखनिकृन्तनकारणभूतेन कार्ष्णायसपिण्डेन कार्ष्णायसं छुरिकादात्रादिकम् । यथा विकारो न सत् कारणं सत्यं तथा विकारस्य प्रपञ्चस्य परमकारणं ब्रह्ममात्रत्वं सत्यमिति यतो मृन्मयादितुल्यत्वं तस्माद्धेतोः । इत्यर्थ इति—असतः सत्यत्वेन मननमज्ञधर्म एवेति भावः । श्रुतिमूलकमनुमानमाह—अत्रायमिति । अत्र जगदसत्यत्वे विवादाध्यासितं विवादास्पदीभूतं जगत्, अन्वये दृष्टान्तः—यदाद्यन्तयोरविद्यमानं दृश्यं विकारि च तदसत्, यथा शुक्तिर

**दृष्टांतः ॥ मुकुटकुंडलकंकणकिंकिणीपरिणतं कनकं परमार्थतः ॥ महदहंकृतिखप्रमुखं तथा नरहरेर्न परं परमार्थतः ॥ २४ ॥ ३७ ॥**

जतमिति । व्यतिरेके दृष्टान्तमाह—यदाद्यन्तयोरविद्यमानं न दृश्यं विकारि च न तदसदपि न यथात्मेति । स्वामिनाम्—मुकुटेति । मुकुटादिरूपेण परिणतं परमार्थतः कनकमेव तथा महदादिप्रमुखं जगन्न किन्तु परमार्थतः परमेव ब्रह्मैवेति ॥ * ॥ **श्रीधरानुयायिनी**—तदेवं विश्वस्य सत्यत्वे वाद्युक्तजगत्सत्यत्वानुमानादिकं किमपि साधकं नास्ति, तथा च—गौतमस्स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः मायागन्धर्वनगर मृगतृष्णावद्वेति । साङ्ख्यवृद्धा अपि—" गुणानां परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम् ॥ " तथा "आरम्भपरिणामाभ्यां पूर्वं सम्भावितं जगत् । पश्चाद्गौतमसांख्याभ्यां युक्त्या मिथ्येति निश्चितम् ॥ " इति । इदानीं विश्वस्यासत्यत्वे साधकं श्रुत्यनुमानादिकं प्रमाणमस्तीत्याह—नेति । यस्माद्विश्वं सृष्टेः पूर्वं नासीत्प्रलयानन्तरं च न भविष्यति तस्मादादावन्ते च यन्नास्ति वर्तमाने तत्तथेत्युक्तेर्मध्ये केवले त्वय्यधिष्ठाने मृत्सुवर्णादौ घटकुण्डलादिवत्प्रतीयमानमप्याकाशादि नाममात्रं मिथ्यैव मृदादिवद्ब्रह्मैव सत्यमिति निश्चितम् । ये तु " मिथ्याभूतं सद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किञ्च " इति श्रुतेर्मनोविलास मात्रं विश्वं सत्यमिति जानन्ति ते मूढाः । अत्र प्रमाणं श्रुतयः—" यतो वा इमानि भूतानि जायन्ते " " वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् " इत्याद्याः तन्मूलकमनुमानं च विवादास्पदं विश्वं मिथ्या द्यन्तयोरसत्त्वाद्विकारित्वाद्दृश्यत्वाद्वा शुक्तिरजतादिवद्व्यतिरेके आत्मवद्वा । यद्वा—ननु दीक्षितविप्रादय एव मुद्धार्नैन्द्यन्ते कथं कलभाषणमारभ्य मन्निन्दातत्परौ दुरात्मानौ शिशुपालदन्तवक्त्रावपि नेत्याशंक्य तयोर्दौरात्म्यं वास्तवं नेत्याहुः—न यदिदमिति । यद्यस्मादिदं दौरात्म्यमग्रे तयोर्जयविजयभावे नासीत् तथा निधनात् एतत्क्षत्रदेहनाशादनु च न भविष्यति तदा तयोः पुनः पार्षदत्वप्राप्तेः । अतोन्तरा मध्ये एव शिशुपालदन्तवक्त्राख्यक्षत्रियजन्म न्येव त्वयि विषये तयोर्यद्दौरात्म्यं विभाति तन्मृषैवेति मितं निश्चितं अत्यन्तापराधिनोरपि तयोः पुनः पार्षदीकरणे हेतुमाहुः—एकरस इति । सर्वदा प्रेमभक्तविषयकपरमानुग्रहैकरस इत्यर्थः । यथा पूर्वं पश्चाच्च तयोस्तवानुग्रहस्त थैवान्तरापीति यावत्, अन्यथा तदनुपपत्तेः । आद्यन्तयोरसत्त्वेऽपि मध्ये प्रतीतौ दृष्टान्तमाहुः—उपमीयत इति । द्रविणजातयो मृत्सुवर्णाद्यास्तेषां विकल्पा भेदा विकारा वा घटकुण्डलादयस्तेषां पन्थानः प्रकारास्तैरुपमीयते तत्सदृशतया निरूप्यते, यथा—घटकुण्डलादयो मृत्सुवर्णादावाद्यन्तयोरसन्तोऽपि मध्ये प्रतीयन्ते तद्वदेवेदं दौरात्म्यं तयोरित्यर्थः । अतो ये शाल्वादय इदं वैरानुबन्धादिकम्, ऋतं सत्यमेवेत्यवयन्ति जानन्ति ते मूर्खा एव । ईदृशानन्यभक्तयोरपिस्वामिनि वैरानुबन्धे हेतुमाहुः—वितथमनोविलासमिति । विशिष्टं तथा तथ्यं यस्मिन्निति वितथः सत्यवादी वैकुण्ठवासी श्रीविष्णुस्तस्य मनोविलासं जानन्ति न तु कंसादिवत्तयोः स्वमनोविलासरूपमिदं दौरात्म्यं किन्तु तव युयुत्सायां सत्यां मत्तुल्यबलावेतावेव नान्यः कश्चनेति विचार्य त्वयान्तर्यामिणा प्रेरिताभ्यामेव ताभ्यां निरुद्धैः सनकादिभिर्दत्तं शापं निमित्तीकृत्य सर्वमिदं त्वयैव सम्पादितम्, अन्यथा वैकुण्ठस्थयोः पुना राक्षस जन्मानुपपत्तेरित्याशयः । तथा च—'शापोमयैव निर्मितस्तदवैत विप्राः' इति तृतीयोक्तिः समञ्जसा "ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे" इति च । यथा मुकुटादिरूपेण तं विकारभावं प्राप्तं सर्वं परमार्थतः स्वर्णमेव । तथामहदादिकं कार्यजातं परमार्थतो वस्तुतो नरहरेः परमकारणात्परं भिन्नं नास्तीति स्वामिश्लोकार्थः ॥ **तोषिणी**—ननु तर्हि कथं नहि विकृतिं त्यजन्तीत्युक्तं तत्रान्याः सिद्धान्तयन्त्यः पूर्वार्थमेव द्रढयन्ति—नेति । यत् यदि इदं विश्वं निधनात्प्रलयं प्राप्याग्रे सृष्ट्यादौ नासीत् तदा न भविष्यत् त्वत्तो नाभविष्यदेव सिकताभ्य इव तैलम् अतः सत्तादात्म्येन इदंशब्दवाच्यस्य विश्वस्य सूक्ष्मरूपेण तदानीं स्थितिः श्रूयते—"सदेव सोम्येदमग्र आसीत्" इत्यादौ "नासदासीत् " इत्यादिश्रुतिस्तु प्राकट्यमेव निषेधति अतोऽनुमितं किम् अन्तरास्थितिसमयेऽपि त्वय्येव विभातीति "यद्भूतं भवच्च भविष्यच्च " इति श्रुतेः एकरसे शुद्धे त्वयि विभातीति यत्तन्मृषैवाविवेकादेवे त्यर्थः । "अयमात्माऽपहतपाप्मा " इति श्रुतेः । अयं भावः—विश्वं यज्जायते त्वच्छक्तित्वेन त्वदनन्यस्मात्त्वदुपहितात्प्रधानादेव तदा स्थितिप्रलयावपि तत्रैव अतस्त्वद्व्यतिरेकेण तद्व्यतिरेकादेव हि त्वय्युच्यते, स्वतस्तु त्वम न्तरंगया चिच्छक्त्या बहिरंगतदस्पृष्ट एवेति । तदुक्तं प्रथमे श्रीमदर्जुनेन—"त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः । मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥" इति । अतस्तदविवेकादेवेदं द्रविणजातिविक ल्पपथैरुपमीयते न तु तद्विवेकात् । ततश्च तदात्मतयेति तन्मात्रदृष्ट्यैव नहि विकृतिं त्यजन्तीत्युक्तं न तु विकृतिदृष्ट्येति । तस्मादिदं वितथं मनोविलासं मनःसंकल्पमात्रासिद्धं ये वदन्ति ये च ऋतं त्वदत्यन्ताभिन्नमपि वदन्ति ते उभयेऽपि मूर्खा एव मनसोऽपि कार्यान्तःपातात् अनिर्मोक्षप्रसंगाच्च । श्रुतयो दर्शिता एव ( २४ ) ॥ ३७ ॥

**नीलकण्ठी**—जगतः सत्यत्वे युक्त्यभावमुक्त्वा मिथ्यात्वे युक्तिमाह—न यदिदमग्र इति। इदमन्तरामितं मृषेति सम्बन्धः। तथा चायं प्रयोगः। इदं प्रत्यक्षादिसिद्धं जगन्मृषा अन्तरा मितत्वात् स्वप्नवदिति हेतुं साधयति—
न यदिति। यत् यतः इदं दृश्यमग्रे सृष्टेः प्राक् नाभूत् तथा निधनादनु विनाशादूर्ध्वं न भविष्यदभावं गमिष्यत् "तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" इति सर्वेषां भावानामुत्पत्तिप्रलययोः श्रवणाद्वृद्ध
वादिसम्मतत्वाच्चेदमन्तरामितमतो मृषेत्यर्थः। यदाहुः सम्प्रदायप्रवर्तकाचार्याः—"आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा" इति। ये तु स्वरूपेणाद्यन्तयोरसन्नपि घटः सन्निति तार्किकाः प्राहुः, सांख्याश्च स्थूलरूपेण
सूक्ष्मरूपेण वा घटादिः सन्नेव सर्वदेत्याहुस्तान्प्रत्याह—त्वयि एकरसे विभातीति। स्यादेतत् एवं यदि घटादिर्द्व्यणुकादिक्रमेणारभ्येत सूक्ष्मरूपेण सन्वा कारकव्यापारेणाविःक्रियेत। न त्वेतदस्ति किन्तु स्वप्नदृशीव स्वरूपमा
त्रेण केवले एकरसे भासमाने त्वयि विविधमनेकरसमिदं भातीति। यद्धि यत्रैकस्मिन्नविकृतेनेकं रूपं भाति तन्मृषा रज्ज्वां सर्पदण्डादिवत् तस्मात्स्वप्नवत्सर्वव्यवहारोपपत्तौ जगतः सत्यत्वं कल्प्यम् "मायामात्रमिदं द्वैतमद्वैतं
परमार्थतः" इति श्रुत्या सत्यत्वकल्पनाबाधात्। नापि प्रत्यक्षासिद्धं तत् रज्जुभुजंगादौ अनैकान्तत्वात्प्रत्यक्षस्य यत एकरसे इदं विभाति अतः द्रविणजातिविकल्पपथैरुपमीयते द्रविणं मृल्लोहादिस्तद्दृष्टान्तमार्गेण तथा जातिः
ज्ञापयत्यर्थमिति जातिर्लिंगं युक्तिमार्गेण तथा विकल्पः शब्दज्ञानानुपाती वस्तुशून्यस्तन्मार्गेण चेदं जगद्वेदे उपमीयते। तत्र छान्दोग्ये तावत् "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्येकविज्ञानात्सर्वविज्ञानमुपक्षिप्य
"कथं नु भगवः स आदेशो भवति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्" इत्याक्षेपपूर्वकं दृष्टान्तमुखेन समर्थितं सोऽयं द्रविणपथो द्वैतप्रतिपत्त्यु
पायः। यथोक्तं—"मृल्लोहविस्फुलिंगैस्तु सृष्टिर्या चोदिता पुरा। उपायः सोऽवताराय नास्ति भेदः कथंचन॥" इति। अस्मिन्मार्गे मृद्घटवत्कनककुण्डलवच्च ब्रह्मजगतोरुपादानोपादेयभावः सगुणोपास्त्यर्थं बन्धमोक्षा
दिव्यवस्थार्थमिष्टः। तथा "जात एव न जायते कोन्वेनं जनयेत्पुनः" इति श्रुतिः लोकदृष्ट्या जातो घटादिरेव नोत्पद्यते किन्तु "अजायमानो बहुधा विजायते" इति जन्माख्यं विकारमनश्नुवान एव परमात्मा
बहुधा विजायत इति श्रुतेरध्यस्यत एव रज्जुभुजंगमवत् उपादानाभावात्। न च प्रधानं परमाणवो वास्त्युपादानमिति वाच्यम्। आद्यस्य पूर्वश्लोके निरस्तत्वात् अणोरपि दिग्दशकावच्छेद्यप्रदेशभेदवत्त्वाभ्युपगमेणुत्वव्याघातः,
अन्यथा परमाणुव्योम्नोर्निःप्रदेशत्वाविशेषात्तुल्यपरिमाणतापत्तिः। संयुक्तयोरण्वोरणुमात्रत्ववत्तयोरप्यन्यतरमात्रत्वापत्त्यवश्यम्भावात्। तथा च व्योम्नोणुत्वमणोर्विभुत्वं चापद्येत निःप्रदेशस्यापि कल्पितैः प्रदेशैरवच्छेदकल्पने
स्वप्नदृष्टेष्टकानिचयेनापि सत्यं गृहमारभ्येत करणवच्चेतनानधिष्ठितेषु तेष्वचेतनेषु प्रथमचरमसंयोगाविभागासम्भवात्, द्व्यणुकोत्पत्तिनाशाद्ययोगेनारम्भवादासम्भवः क्षीरपरमाणोर्दधिपरमाणूत्पत्तौ अवयवसंयोगरूपस्यासमवायिकारणस्या
भावेन केवलव्यावृत्तत्वेन केवलसमवायिकारणादेव कार्योत्पत्तेरवश्यवक्तव्यतया परिणामवादस्यैव ततो लघुत्वात्। एतेन निरवयवतया समवाय्यसमवायिकारणासम्भवाद्व्योमादीनामणूनां चानुत्पत्तिः परास्ता दधिपरमाणुवत्केवला
याः स्वप्रकृतेरेव तदुत्पत्त्युपपत्तेः शब्दाद्यनित्यगुणाश्रयत्वेन च तेषां घटादिवत् कार्यत्वोपपत्तेश्च। एतेन सगुणद्वैतात्मवादोऽपि परास्तः। निर्गुणाद्वैतात्मवादिनस्तु नैते दोषाः प्रादुःष्युः। तस्मान्न वियदादि सत्यं नापि तत्कारणं प्रधानं
सत्यं पूर्वश्लोके तन्मिथ्यात्वस्योपपादितत्वात्, व्यावृत्तत्वादेव कार्यत्वात्। "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति स्मृतेश्च सोऽयमसत्यस्योपादानस्यासम्भवोऽनूद्यते श्रुत्या—कोन्वेनमिति। सोऽयं जातिपथो ब्रह्मप्रपञ्चयोर्गुण
भुजगयोरिवोपादानोपादेयंभावं प्रख्यापयति ब्रह्मणः कौटस्थ्यसाधकः। तथा सः "यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति। यथा कनककुण्डलयोरज्जुभुजं
गमयोर्वा उपादानस्वरूपमन्तरमुपादेयस्वरूपं बाह्यं नैवं ब्रह्मजगतोरन्तर्बहिर्भावोऽस्ति यथा सैन्धवघनो बहिरन्तश्चैकरस एवमयमात्मा व्युत्थानसमाध्योः प्रज्ञानघन एव। तत्र या कार्यकारणभावकल्पना सा वन्ध्यायाः सुतः पुरुषस्य
चैतन्यमितिवद्विकल्पमात्रम्। अत एव छान्दोग्ये मृदादिदृष्टान्तान्ते—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति विकाराणां वागालम्बनत्वापरपर्यायं विकल्पमात्रत्वं श्रुतं सोऽयं विकल्पपथः त एते द्रविणजा
तिविकल्पपथास्तापनीयेऽप्युक्ताः 'ओतानुज्ञात्रनुज्ञाविकल्पैः' इति—"ओतत्वं कारणव्याप्तिः कार्ये यद्वन्मृदो घटे। सर्वं ब्रह्मेति तन्निष्ठा जानते परिणामतः (१)। कार्यस्यासमसत्त्वं यत्कारणे समुदीरितम्। तदनु
ज्ञातृशब्दार्थो मरौ वारिविवर्तनम् (२)। एतन्निष्ठास्ततो भूत्वा जगन्मिथ्येति जानते। अनुज्ञायां जगत्तुच्छं शशशृङ्गादिवन्मतम् (३) तत्स्थास्त्वन्तर्बहिर्ब्रह्म सत्ता सामान्यमात्रकम्। दिक्कालाद्यनवच्छिन्नमेकमस्तीति जानते
(४) एवं सोपानरीत्यैव भूमित्रितयलङ्घनात्। अविकल्पं परं यत्तदहं ब्रह्मास्मि निर्भयम् (५) विवृतं चैतत्सर्वज्ञात्मगुरुभिरारोपदृष्टिरित्यादिना। यत एकरसे कनकशुक्तिशशस्थानीये त्वयि कुण्डलरजतशृङ्गस्थानीयमिदं परिणामारो

स यदजया त्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनु मृत्युमपेतभगः ॥
त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ २९ ॥ ३८ ॥

ननु यदि प्रपंचोनाम नास्त्येव तदाऽसता तेन न चैतन्यस्य संबंधगंधोऽपि तर्हि किमपराद्धं जीवेन यतोऽयं संसरति किंवा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः किंविषयं च तदा कर्मकांडमित्यपेक्षायां जीवेश्वरविशेषम् "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ॥ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ अजामेकां लोहितशुक्लकृष्णाम्" इत्याद्या वदंतीत्याह । स यदजयेति । स तु यद्यस्मादजया मायया अजामविद्यामनुशयीतालिंगेत्ततो गुणांश्च देहेंद्रियादीन् जुषन्सेवमान आत्मतयाऽध्यस्यंस्तदनु तदनंतरं सरूपतां तद्धर्मयोगं च जुषन्नपेतभगः पिहितानंदादिगुणः सन् मृत्युं संसारं भजति प्राप्नोति । तद्विषयमेव च कर्मकांडमिति भावः । त्वमुत त्वं तु जहासि तामजां मायाम् । ननु सा मय्येवास्ति कथं त्यागस्तत्राह। अहिरिव त्वचमिति। अयं भावः। यथा भुजंगःस्वगतमपि कंचुकं गुणबुद्ध्या नाभिमन्यते तथा त्वमजां नहि निरंतराह्ला

पविकल्पैर्विविधं यथा स्यात्तथा विभाति, अतः द्रविणजातिविकल्पपथैर्मन्दमध्यमोत्तमाधिकारिणां क्रमेणाद्वैतप्रतिपत्तये उपमीयते इति निष्कर्षः । ततश्च—" न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ " इति श्रुत्युक्तमर्थं फलितमाह—वितथमनोविलसितामिति । " असतोऽधि मनोऽजायत मनः प्रजापतिमसृजत " इति श्रुतेर्मिथ्याज्ञानोपादानकमनोमात्रं जगदित्यर्थः । यतो द्रविणादिपथै रुपमीयतेऽतो वितथमनोविलासमात्रमिदम् । तथा च गौतमः—" स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः मायागन्धर्वनगरमृगतृष्णावद्वा " इति । साङ्ख्यवृद्धा अपि—" गुणानां परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छम् ॥ " इति । " आरम्भपरिणामाभ्यां पूर्वं सम्भावितं जगत् । पश्चाद्द्वैतमसांख्याभ्यां युक्त्या मिथ्येति निश्चितम् ॥ " इति । एवंविधबोधशून्याननुक्रोशति—। ऋतमित्यवयन्त्यबुधा इति । असदप्येतन्मूढाः सत्यमिति जानन्ति यथेन्द्रजालिकानिर्मिते नगरे व्यवहरतो वणिग्जनान् निरालम्बनव्यवहारतया पुरतत्त्वविदव्यहरन्नुपहसति तेऽप्येनं लाभद्वारानभिज्ञोऽयं निर्व्यापार इत्युपहसन्ति एवं बुद्धाबुद्धौ परस्परमुपहसतः । तथोक्तं वार्तिके—" बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् । बुद्धतत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत् ॥ " इति । गीतास्वपि—'या निशा सर्वभूतानाम्' इति " परिणामविवर्तविकल्पपथैर्जडमध्यमसत्तमपुंविषयैः । शिवमेकरसं प्रतिपद्य पुमानभयं पदमद्वयमेति सुखम् ॥ " ( २४ ) ॥ ३७ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—पुनराशंकते—नन्विति । असताऽसत्येन तेन प्रपञ्चेन सम्बन्धस्य गन्धो लेशः सम्बन्धगन्धः । अपराद्धमपकृतम्, अयं जीवः किंविषयः कोऽधिकारी जीवेश्वरयोर्विशेषं भेदं "द्वा सुपर्णा" इत्याद्या वदन्ति । तदर्थः—द्वौ सुपर्णा सुपर्णौ 'प्रथमाद्विवचनस्याकारादेशः छन्दसि' एवमग्रेऽपि । शोभनगमनौ । सयुजौ बिम्बप्रतिबिम्बभावेन सदा संयुक्तौ सखायौ नित्योपकारकोपकार्यत्वेन वर्तमानौ समानमेकमेव वृक्षं देहं परिषस्वजाते परिष्वक्तवन्तौ नियामकनियम्याद्युपाधिमत्त्वेन परिगृह्य वर्तेते तयोर्द्वयोर्मध्येऽन्यः प्रतिबिम्बभूतो जीवः पिप्पलं कर्मफलं स्वादु विविधविषयास्वादनं यथा भवति तथा उपभुंक्ते, तस्मादन्यो बिम्बभूतः परमात्मेश्वरः पिप्पलमनश्नन्नभिचाकशीति स्वप्रकाशाखण्डवृत्तिमात्ररूपेणास्त इत्यर्थः । अत्र सुपर्णत्वं पाक्षित्वं तयोर्नानाधिष्ठानस्वीकारपरित्यागसाम्यात् । "अजामेकां" इति पूर्वव्याख्याता । अजया तव मायया मोहित इति शेषः । ततस्तस्मात् गुणान् गुणपरिणामान् अध्यस्यन्मन्यमानः तद्धर्मयोगं देहेन्द्रियधर्माणां कार्श्यबाधिर्यशोकादिरूपाणां योगं सम्बन्धं तद्विषयमविद्यावाद्विषयम् । इति भाव इति—अविद्यया देहाद्यध्यासेन च तत्तत्फलेच्छया कर्ममार्गप्रसक्तो भवतीति तात्पर्यम् । स्वगतस्य परित्यागोऽसम्भव इत्याक्षिपति—नन्विति । तत्त्यागो मायात्यागः । निर्गलितार्थमाह—अयं भाव इति—निरन्तराह्लादिन्यो याः संवित्काम

दिसंवित्कामधेनुवृंदपतेरजया कृत्यमिति तामुपेक्षस इति। कुत एतत्तदाह। आत्तभगो नित्यप्राप्तैश्वर्यः महसि परमैश्वर्येऽष्टगुणितेऽणिमाद्यष्टविभूतिमति महीयसे पूज्यसे विराजसे। कथंभूतः। अपरिमेयभगोऽपरिमितैश्वर्यः। नह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्यमपि तु परिपूर्णस्वरूपानुबंधित्वादपरिमितमित्यर्थः॥ नृत्यंती तव वीक्षणांगणगता कालस्वभावादिभिर्भावान्सत्त्वरजस्तमोगुणमयानुन्मीलयंती बहून्॥ मामाक्रम्य पदा शिरस्यतिभरं संमर्दयंत्यातुरं माया ते शरणं गतोऽस्मि नृहरे त्वामेव तां वारय॥ २५॥ ३८॥

धेनवः स्वस्वरूपविद्याकामधेनवस्तासां वृन्दस्य संघस्य पतेः। बहुत्वं वृत्त्यभिप्रायम्। अजया छागीसमया यथाऽपरिमितदुग्धप्रदधेनुवृन्दपतेः छाग्या कृत्यं न, तथा परमानन्दस्वरूपावस्थितस्य मायाया निवृत्तत्वात्तया सह कृत्यं कथं संगच्छेतेति भावः। एतन्मायोपेक्षणं कुतः तदाह—आत्तभग इति। अन्येषामिन्द्रादीनामिव। इत्यर्थ इति—अपरिमितैश्वर्यस्य तव परिमितैश्वर्याज्जीवान्महान्विशेष इति भावः। स्वामिनाम्—नृत्यन्तीति। भो नृहरे त्वामेव शरणं गतोऽस्मि तां मायां वारय। का सा माया, त्वां किं करोतीत्यत आह—ते तव माया तव वीक्षणमेवांगणं तत्र गता नृत्यन्ती तव दृष्टिलब्धसामर्थ्या नानाविधभावं कुर्वन्ती गुणमयान्भावान् शान्तघोरमूढलक्षणान् उन्मीलयन्ती प्रकाशयन्ती सती मां शिरसि पदा पादेनाक्रम्यातिभारं यथा स्यात्तथा संमर्दयन्ती तवैव माया त्वमेव तां वारय नान्यस्य तद्वारणे सामर्थ्यमस्ति—“दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥” इति श्रीमुखोक्तेः॥ * ॥ **श्रीधरानुयायिनी**—नन्वविद्यातत्कार्यरूपसंसारस्यासत्त्वे तेनासता सम्बन्धाभावात् किंन्निमित्तको[1] जीवस्य संसारः कथं वा नित्यमुक्तत्वमीश्वरस्य कर्मकाण्डं च किंविषयमित्याकांक्षायां संसारे निमित्तं जीवेश्वरविशेषं चाह—स इति। स च जीवो यस्मान्मायया मोहितः स्थूलसूक्ष्मदेहाकारेण परिणतामविद्यामालिंग्य देहेन्द्रियादीनात्मतयाध्यस्य तदनन्तरमेव तत्तद्धर्मानात्मन्यध्यस्य भोग्यविषयान्प्रीत्या सेवमानस्तेनैव हेतुना मनसा भोग्याकारतां सम्प्राप्याविद्यया पिहितानन्दादिगुणः सन्संसरति एतद्विषयकमेव कर्मकाण्डम्। किञ्च—यथा सर्पः स्वगतमपि कञ्चुकं गुणबुद्ध्या नाभिमन्यते किन्तु स्वेच्छया तं दूरतस्त्यजत्येव तथैव नित्यप्राप्तापरिमितैश्वर्यस्त्वं तामविद्यां मायां वा दूरतस्त्यक्त्वाऽणिमाद्यष्टविभूतिमति परमैश्वर्ये सदा विराजसे। नहि कोटिकामधेनुपतेश्छाग्या कृत्यं किमपीति प्रसिद्धतरम्। अयमाशयः—तेजोंशं सुवर्णादिकं तम इव त्वदंशं जीवमविद्यावृणोत्येव तेजःपुञ्जं भास्करमिव चिद्घनं त्वां तमोरूपाविद्या कदापि नावृणोति चिद्रूपत्वाविशेषेऽपि न त्वय्यविद्यासम्बन्धगन्धोऽपि, अत एव न मायासम्बन्धगन्धोऽपीति ध्येयम्। यद्वा—चैद्यादिप्रसंगेन स्मारितस्य कंसस्य व्यवस्थामाहुः—स यदिति। स प्रसिद्धो महावैरी कंसः यद्यस्मात् इतगुणान् इतान् देवक्यामागतान्गुणान् त्वदवतारसूचकप्रभावान् जुषंश्च अनुभवन्नपि सरूपतां तदवस्थामेव दुष्टतां भजति स्म। ‘इतः कर्बुर आगते’ इति मेदिनी। अतस्तवाजया माययाऽजामविद्यां मोहमनुशयी त्वदवतारावसरे सपरिजनः कंसो निद्रामवाप त्वमुत त्वं तु श्रीगोकुलमागत्य तां मायां जहासि भगिनीत्वेनांगीकृतामपि कंसं प्रत्येव प्रस्थापयसि। तत्रानासक्तौ दृष्टान्तमाहुः—अहिरिवेति। तदनु तदनन्तरं स कंसो मृत्युं भजति स्म यतः स कंसः अपेतभगः हतभाग्यः त्वं तु आत्तभगः नित्यप्राप्तपरिपूर्णैश्वर्योऽसि तत्राप्यष्टभिः श्रीराधादिप्रियाभिर्महालक्ष्म्यवतारनिजकान्ताभिः श्रीरुक्मिण्यादिभिर्वा गुणिते शोभिते महसि वनविहारजलविहाररासविहारान्तःपुरविहारादिमहोत्सवे महीयसे विराजसे वैमानिकादिभिः कुसुमवर्षणादिभिः पूज्यसे वा तत्राप्यपरिमेयभगोऽसि॥ * ॥ **विश्वनाथी**—अथ श्रीमदीश्वरस्य प्रधानास्पृष्टत्वमेव जीववैलक्षण्येन दर्शयन्त्यः काश्चित्तदनुगताः स्तुवन्ति किञ्च ननु भवतु जगतो मद्वैलक्षण्यं तादृशजाड्यादितः जीवस्य तु अनाशचिद्रूपत्वात्सालक्षण्यमेव तर्हि कथं ममैव भजनीयत्वं पूर्वाभिर्दर्शितामित्याशंक्य तदर्थमेव जीवेश्वरस्वरूपवैलक्षण्यं प्रतिपादयन्त्यः स्तुवन्ति—स इति। तैर्व्याख्यातम्। पिहितानन्दादिगुणत्वेन स्वतोऽपि जीवस्य सविशेषत्वं प्राप्तं तच्च युक्तमेवेश्वरांशत्वात्, एतद्विवरणं श्रीभागवतसन्दर्भतट्टीकयोर्द्रष्टव्यम्। यद्वा—स जीवो यद्यस्मादजया माययाऽजां स्वरूपाज्ञानमनुलक्ष्यीकृत्य शयीत मुह्यति तत्तस्मादपेतस्वरूपसामर्थ्यः सन्सरूपतां मायाकार्योपाधिसामर्थ्यं भजन्गुणांश्च विषयाञ्जुषन् अनुमृत्युं संसारं भजतीति। तत्रैकेनोपाधिना स्वस्मिन्स्थितेन कस्यचित्स्पर्शः कस्यचिन्नेति सामर्थ्यवैलक्षण्यात्स्वरूपवैलक्षण्यमवगम्यते तच्च ब्रह्मस्तवे दर्शितम्। अत्र श्रुतयो ‘द्वा सुपर्णा’ इत्याद्याः (२९)॥ ३८॥

---

१ केनापराधेन। २ कन पुण्यौघेन।

यदि न समुद्धरंति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदि गतोऽस्मृतकंठमणिः ॥
असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतांतकादनधिरूढपदाद्भवतः ॥ २६ ॥ ३९ ॥

एवं तावदुक्तसाधनकदंबेन ये भगवंतं भजंति ते मृत्युं तरंति इतरे संसरंतीत्युक्तम् इदानीं ये बहिःसंगं परित्यज्य भगवन्मार्गे प्रवृत्ता अपि कथंचिदंतर्वांताशिनः कामान्न मुंचंति ते न भगवंतं प्राप्नुवंति न चेह सुखं लभंते केवलं कुयोनीरेव प्राप्नुवंति। तान् शोचन् " कामान्यः कामयते मन्यमानः स कर्मभिर्जायते तत्रतत्र" इत्यादिश्रुत्यर्थमाह ।

**नीलकंठी**–एवं परिणामविवर्तविकल्पमार्गा अद्वैतप्रतिपत्तिसोपानरूपा मन्दमध्यमोत्तमाधिकारिगम्या उक्ताः । तत्र द्वितीये जीवैक्यं स्वप्नवद्व्यवहारः एकमुक्तौ सर्वमुक्तिरिति न बन्धमोक्षव्यवस्थास्ति । नतरां तृतीये सर्वापवादरूपत्वात् । प्रथमे तु तत्सर्वं सम्भवतीत्यभिप्रेत्य "तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इति श्रुत्युक्तां बन्धमोक्षव्यवस्थामाह–स यदजयेति । यदिति क्लीबत्वमार्षम् यः त्वम जयाऽजामनुशयीत स त्वम् उत अपरिमेयभगोऽसीति सम्बन्धः । यस्त्वं पूर्वमजया मूलाविद्ययाऽजां स्थूलसूक्ष्मदेहद्वयाकारेण परिणतां मायामनुशयीत तद्धर्मानात्मन्यध्यस्यासीत च ततोऽध्यासानन्तरं गुणान्भोग्यजातं जुषन्प्रीत्या सेवमानः। हेतौ शतृप्रत्ययः। सेवनाद्धेतोः सरूपतां भोग्याकारतां मनसा भजति तदनु भोग्यसारूप्यमनु मृत्युं संसारं भजतीत्यनुषज्यते । कुत एवं यतोऽपेतभगः अविद्यया तिरस्कृतैश्वर्यः य एवंविधः संसारी स त्वमुत त्वमेव कथम् आत्तभगः उपात्तवैराग्यादिसाधनसम्पत्तिः सन् तामुक्तविधामविद्यां शास्त्राचार्यप्रसादलब्धसन्मार्गो भूत्वा जहासि त्यजसि । क्षीरसर्पिर्न्यायेनाविद्यातः सकृत्पृथग्भूय न पूर्ववत्तदैक्यमनुकरोषि । अत्र दृष्टान्तः–अहिरिव त्वचमिति । यथा सर्पः पूर्वमात्मतयोपात्तां त्वचं त्यक्त्वा पुनर्वल्मीकबिले शयानायां तस्यां सञ्चरन्नपि न तामात्मत्वेनाभिमन्यते, एवं त्वमपि देहादावभिमानमिति । तथा च श्रुतिः–"तद्यथाहिनिर्ल्वयिनीं वल्मीके मृता प्रत्यस्तां शयीत एवमेवेदं शरीरं शेतेऽथायमशरीरो मृतः प्राणो ब्रह्मैव तेज एव चक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव" इति । अयं भावः–रज्ज्वादीनामकेनतूलाज्ञानविषयत्वात्तत्र निवृत्तोऽपि सर्पभ्रमः पुनरुदेति न त्वेकमूलाज्ञानविषये प्रतीचि सकृन्निवृत्तस्य देहात्मभ्रमस्य पुनः सम्भवोऽस्ति कारणाभावात् । तत्त्वपक्षपातित्वाच्च बुद्धेः । यदाहुर्बाह्या अपि–"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥" इति । तस्मात्सुष्ठूक्तमहिरिव त्वचमिति । एवमनर्थनिवृत्तिं विद्याफलमुक्त्वानन्दावाप्तिमप्याह–महसि महीयस इति । अजां हित्वा स्वे महिम्नि प्रतिष्ठिते चित्प्रकाशे स्वरूपभूते विद्योतस इत्यर्थः । कीदृशे महसि, अष्टगुणिते । "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति श्रुत्युक्तैः अणिमामहिमालघिमागारिमाप्राप्तिप्राकाम्येशित्ववशित्वाख्यैर्वाऽष्टभिर्गुणैर्युक्ते । अत एव त्वमपरिमेयभगः अनन्तैश्वर्यः । अत्र "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति श्रुतेरजानुशयी बद्धः तत्त्यागी मुक्त इत्युक्तम् । तत्र–"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेरनेकतरंगप्रतिबिम्बचन्द्राभा अनेके जीवाः । जलाशयप्रतिबिम्बाभ एक ईश्वरः । तत्र यस्तरंगो जलाशये लीनस्तत्प्रतिबिम्बो जलाशयप्रतिबिम्बत्वमेति नान्यः । एवं यदन्तःकरणं विद्यया जीवोपाधिभूतं स्वकारणे मायायां लीयते तदुपहिता चितिरीशत्वमेति नान्योपहिता । ततो मायाया अपि बाधे शुद्धचिन्मात्रत्वमिति युज्यते–"लवणं सलिलद्वारा तेजोऽभ्येति न तु स्वतः । एवं जीवशिवद्वारा याति विष्णोः परं पदम्" ( २९ ) ॥ ३८ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–इतरे भक्तिविमुखाः । बहिःसंगं विषयसंगम् । अन्तर्वान्ताशिनश्चेतासि वान्ताशनवत्त्यक्तविषयध्यानं कुर्वन्तो ये तान् । श्रुतिं पूर्णां पठति "कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्रतत्र । पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः" इति मुमुक्षोः कामत्याग एव प्रधानसाधनमिति दर्शयति–कामान्दृष्टादृष्टविषयान् यः कामयते मन्यमानस्तद्गुणांश्चिन्तयानः सः तैः कामभिः कामैः सह जायते यत्रयत्र विषयप्राप्तिनिमित्तकामाः कर्मसु पुरुषं नियोजयन्ति तत्रतत्रेष्टविषयेषु तैरेव कामैर्वेष्टितो जायते, इत्यर्थः । कृतात्मनः परमात्मनि कृत आत्मा येन तस्य प्राप्तात्मतत्त्वस्य तु इहैव

यदि न समुद्धरंतीति । हे भगवन्ये यतयो हृदि स्थिताः कामजटाः कामस्य मूलानि वासना यदि न समुद्धरंति नोत्पाटयंति तेषामसतां भवान् हृदि गतोऽपि दुरधिगमो दुष्प्रापः । कथम् । अस्मृतकंठमणिर्विस्मृतो यः कंठमणिस्तत्तुल्यः स यथा कंठे वर्तमानोऽप्यस्मृतश्चेदप्राप्त इव भवति तद्वदिति । न केवलमेतावत्किंत्वसुतृपयोगिनामिंद्रियतर्पणपराणां योगच्छद्मनामुभयतोऽप्यसुखमिहामुत्र च दुःखमेव । तदाह । अनपगतांतकादनिवृत्तान्मृत्योः । लोकाराधनधनार्जनादिक्लेशाद्भोगवैभवप्राकट्यभयाच्चेह तावद्दुःखं भवत ईश्वरादपि दुःखम् । कथंभूतात् । अनधिरूढपदात् अनधिरूढं पदं स्वरूपं यस्य तस्मात् । त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमनिबंधनत्वद्दंडरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः ॥ दंभन्यासमिषेण वंचितजनं भोगैकचिंतातुरं संमुह्यंतमहर्निशं विरचितोद्योगक्लमैराकुलम् ॥ आज्ञालंघिनमज्ञमज्ञजनतासंमाननासम्मदं दीनानाथदयानिधान परमानंद प्रभो पाहि माम् ॥ २६ ॥ ३९ ॥

सर्वे कामाः प्रविलीयन्ति विलयं गच्छन्ति । किंभूतस्य—परमार्थतत्त्वविज्ञानात्पारि समन्ततः प्राप्ताः कामा येन तस्य पर्याप्तकामस्येति । तदुक्तं गीतासु—"आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्वे स शांतिमाप्नोति न कामकामी ॥" इति । नन्वयमात्मज्ञः कृतात्माऽयं कामीति कथं ज्ञायते तज्ज्ञानमाह श्रुतिः—"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनु सञ्ज्वरेत् ॥" इति । अर्थश्च—सच्चिदानन्दरूपः परमात्मा देहादिव्यतिरिक्तोऽयमहमस्मीति आत्मानं यः पुरुषश्चेति यदि जानीयात्तर्हि स किमिच्छन् किमात्मातिरिक्तं वस्त्वन्तरमस्ति तदिच्छन् कस्य कामाय आत्मनो व्यतिरिक्तस्य कस्य वस्तुनः कामाय प्राप्तये शरीरमनुसञ्ज्वरेत् शरीरोपाधिकृतसुखदुःखरागद्वेषभयमानापमानादिभिः सन्ततो भवेत्स्वार्थाद्भ्रश्येत् तस्मादात्माज्ञानविमूढानां विषयासक्तचित्तानां कुयोगिनामुभयतोऽप्यसुखमित्युक्तम् । प्रकृतमनुसरामः—अस्मृतकण्ठमणिरिह लुप्तोपमा बोध्या, एतावत् अप्राप्तवदेव त्वं भवसीत्येतावन्मात्रमेव । तदाह उभयतो दुःखमाह । निजधर्मस्यातिक्रम उल्लंघनमेव निबन्धनं कारणं यस्यास्त्वद्दण्डरूपनरकप्राप्तेः । अमुत्रापि परलोकेऽपि । इत्यर्थ इति—"कालिका भिक्षवो दृष्टा उभाभ्यां मार्गतो गताः । दुग्धश्रीफललोभेन हंसोद्दिष्टबको यथा ॥" इति न्यायेनेह भोगाप्राप्तेः परत्र सुखाप्राप्तेश्च दुःखमेवेति भावः । न्यायार्थस्तु—मत्स्याखिन्नन्तं सुरूपं बकं दृष्ट्वा हंसस्तं सुभोगेन लोभयित्वा निष्पापं कर्तुमिच्छन्नुवाच—अहो किमर्थं हिंसया जीविकां करोषि मया सार्द्धं गच्छ त्वामतिस्वादुतरं भोजनं पेयञ्च दास्यामि । स च भोगलोभेन तेन साकं गच्छंस्तत्तुल्यमुड्डयितुमशक्नुवन्नाह त्वया साकं गन्तुं न शक्तोऽस्मीति । ततो हंसस्तं स्वपृष्ठमारोप्य ययौ । स चोवाच मां क्षुधार्तं भोजनं देहीत्युक्तः सन् नारिकेलफलं चञ्च्वा निर्भिद्य तद्गतं दुग्धं बकाय पाययामास, स च तदेवातिस्वादु मत्वात्रैवाहं प्रतिदिनमिदं क्षीरं पीत्वा स्थास्यामीति विचार्य हंसमाह—नाहमितोऽग्रे यास्ये त्वं याहीति । एवं सत्संगमिषेण स्वगृहं त्यक्त्वा भोगेष्वासक्तो हरिभजनमकुर्वाणोऽप्युभयभ्रष्टो भवतीत्यर्थः । स्वामिनाम्—दम्भेति । अत्रैतज्ज्ञातव्यं स्वयं परमहंसर्षभो निवृत्तसमस्तमायागुणेन्द्रियव्यापारोऽनवरतभगवद्गुणस्मरणकीर्तनादिभिर्निदिध्यासितपरमात्मतत्त्वोऽपि स्वस्य संन्यासित्वात्कुसंन्यासिनां दोषानात्मन्यारोप्य परमानन्दं श्रीकृष्णं प्रार्थयन्नाह—दंभेन यो न्यासस्तस्य मिषेण छलेन । वञ्चिता जना येन तम् । दम्भन्यासत्वात् भोगेषु एका केवला या चिंता तयाऽऽतुरं दुःखितम् । अत एवाहर्निशं मुह्यन्तं मोहं प्राप्नुवंतम् । विरचितो य उद्योगो मठनिर्माणादिव्यापारस्तत्र यः क्लम इतस्ततो धनाद्यर्थपरिश्रमस्तेनाकुलमवशम् अतोऽज्ञमतस्तवाज्ञालंघिनम् । "यावज्जीवमग्निहोत्रं जुहुयाच्छान्तो दांतः" इत्याज्ञां विलंघ्य कृतसंन्यासम् । तत्रापि संन्यासधर्मं परित्यज्य भोगाद्याकुलत्वादाज्ञालंघिनमिति । तत्कुतः यतः अज्ञानां जनतानां समूहानां सम्माननाभिः सत्कारैः सम्यग्मदोऽभिमानोऽहो एते मां सर्वोत्कृष्टं ज्ञात्वाऽर्चयंतीत्येवंलक्षणो यस्य तम् एवंभूतं माम् । हे दीनैरासमंतान्नाथ्यते प्रार्थ्यते इति तथाभूत, दयैव निधानं धनं यस्य हे तथाभूत । एतेनैवंभूतं कुमार्गगामिनं समुद्धर्तुं श्रीकृष्ण एव प्रभुर्नान्य इति दर्शितं स्वामिचरणैः ॥ * ॥ **श्रीधरानुयायिनी**—ये तु कपटभक्तास्तेषां न तव प्राप्तिर्न वा किमपीहामुत्र सुखमित्याहुः—यदीति । हे भगवन् ये च बहिर्बकाकारा मिथ्यासंन्यासिनो वासनासहस्राक्रान्तान्तःकरणा देहेंद्रियलालनपरा रहसि रात्रौ परस्त्रीबालभोगादिसुखभोक्तारस्तेषां त्वं हृदि स्थितोऽपि

गुरूपदेशान्मनसि प्राप्तोऽपि वा विस्मृतकण्ठमणिरिव यथावदनुभवितुमशक्य एवासि प्रत्युत तेषां लोकाराधनधनार्जनादिक्लेशाद्योगवैभवप्राकट्यभयाचैहिकं दुःखमेव, तथा तवेश्वरस्याज्ञानादज्ञत्वेनावश्यकर्तव्यसन्ध्योपासनादिनिजनित्यधर्मपरित्यागाच्च त्वत्तो दण्डरूपनरकप्राप्त्या पारलौकिकमपि दुःखमेव, यदि योगिनामप्येवं तदा किमु वक्तव्यमसतामित्याशयः ॥ * ॥ **विश्वनाथी**—तदेव तत्सन्ततभक्त्यर्थमेवान्यपरत्वमीषदपि वयं न सहामह इत्यन्या ज्ञानयोगमिश्रभक्तिप्रतिपादकश्रुतय आहुः—यदीति । यतयो निर्जितबहिरिन्द्रियाः संन्यासिनोऽपि यदि हृदि कामवासनाः समस्ता एव नोन्मूलयन्ति तर्हि तेषामसतामुत्तमावस्थानप्राप्तानां हृदि गतो ज्ञानसिद्ध्यर्थं मनस्याश्रितोऽपि भवान् दुरधिगमो यथाकथञ्चिदेव स्मृतिविषयः स्यात् ताभिरावृताचित्तत्वात् । ननु, परमदुर्लभोऽपि भाग्येन लब्धश्श्लेक इव तादृशः स्यात् । अस्मृतेति । कण्ठे परिहितोऽपि महामणिः कामाद्यासक्तिसमये विस्मृतो दृश्यत इत्यर्थः । ये त्विन्द्रियतर्पणतत्परास्तेषां योगिनां योगसिद्ध्यर्थं त्वदुपासनाप्रवृत्तानामप्युभयतोऽप्यसुखम् तत्रानपगतान्तकान्मृत्युपरम्परामयसंसारादाध्यात्मिकादिदुःखं न अधिगतं नात्मोन्मुखीकृतं पदं चरणारविन्दं यस्य तस्माद्भवतस्तूपेक्ष्यरूपमिति । श्रुतयस्तद्दर्शिता एव ( २६ ) ॥ ३९ ॥

**नीलकण्ठी**—पूर्वस्मिन् श्लोके सत्त्वमित्यपेतभगस्य जीवस्यापरिमेयभगत्वलक्षणमीश्वरत्वमुक्तं तस्य शशशृङ्गवद्विकल्पमात्रत्वे शुक्तिरजतवत्प्रातिभासिकत्वे मनोरथवनितावत्प्रतिभामात्रत्वे वा मिथ्यात्वापत्त्या "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म" इति वाक्यजातमनर्थकं स्यात् । कीटभ्रमरवदुत्पाद्यत्वे दधिवद्विकारत्वे जन्यतया तस्यानित्यत्वापत्तिः, नदीसिन्धुवदवाप्यत्वमपि न नरागारवद्भेदेन घटाकाशमहाकाशवद्भेदेन आद्ये वाक्यानर्थक्यम्, अन्त्ये जीवब्रह्मणोर्वास्तवांशांशिभावापत्तेः "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इति निरवयवत्वश्रुतिव्याकोपः काञ्चनशुद्धिवद्भावकत्वे निरञ्जनत्वश्रुतिव्याकोपः 'असंगो ह्ययं पुरुषः" इति श्रुतेः, इत्यभिसन्धाय कण्ठमणिवन्नित्यप्राप्तमप्यावरणापगममात्रलभ्यं जीवस्येश्वरत्वमित्याह—यदि न समुद्धरन्तीति । हृदि गत इत्युपलब्धिस्थानमुक्तम्, शेषग्रन्थेन वासनाक्षय उपलब्धिहेतुरुक्तः एवं श्रुतियुक्तिभ्यां निश्चितेऽप्यात्मैक्ये भेदवासनाप्राबल्याद्विपरीतवासना न निवर्ततेऽतस्तन्निवृत्त्यर्थं निदिध्यासनमत्र श्लोके विधीयते इति तात्पर्यार्थः । अक्षरार्थस्तु—हे भगवन् यतयः संन्यासिनो यदि हृदि स्थिताः कामजटाः काममूलवासनाः न समुद्धरन्ति समूलं नोन्मूलयन्ति तर्हि त्वं तेषामसतां दुरधिगमो दुष्प्रापः, कामोन्मूलनकृतां तु हृदिगतः स्मृतकण्ठमणिरिव सुखलभ्यः । "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" "प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्" इति श्रुतिस्मृतिभ्याम् । ननु—"अपि वृन्दावने शून्ये शृगालत्वं स इच्छति । न तु निर्विषयं मोक्षं कदाचिदपि गौतम ॥" इति रागिगीतावचनात्कामोऽपि रागिणां सुखहेतुरेवातः कथं तस्य हेयत्वमुच्यत इत्याशङ्क्याह—असुतृपेति । इन्द्रियतृप्तिकामानां योगिनां परिव्राडपसदानाम् उभयतोऽप्यसुखं भवति । अयं भावः—वैराग्यपूर्वकं यमनियमाद्यष्टाङ्गोपेतमनुतिष्ठतां पुरस्तादणिमादिसिद्धिषूपस्थितासु योगैश्वर्यासक्तास्तेऽसुतृपयोगिनः तेषां न सिद्धिजं सुखमन्तवत्त्वात् नापि मोक्षसुखमवैराग्यात् किन्तु संसार एव । यदाह भगवान्पतञ्जलिः—"स्थान्युपनिमन्त्रणोसङ्गस्मयाकरणपुनरनिष्टप्रसंगात्" इति । स्थानिनो देवाः । किं तदुभयं यस्मादसुखं तदाह—अनपगतेति । अनपगतोऽनतिक्रान्तोऽन्तको बन्धको मृत्युरूपी कामः विषयाभिलाषः "अशनाया हि मृत्युः" इति श्रुतेः । अवैराग्यादेकं भयं यदाह भगवान्—"बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः । अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥" इति । तथा भवतः श्रीविष्णोः अनधिरूढान्निदिध्यासनबलेनानधिगतात्पदात्पदनीयात्स्थानात् "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति श्रुतिप्रसिद्धात् अज्ञातादात्मनो जन्ममरणप्रवाहपाताख्यं द्वितीयं भयमित्यर्थः । तस्माद्वैराग्यबलेन कामवासनानां समूलमुन्मूलने यतमानस्य योगिश्रेष्ठस्य स्वरूपानन्दलाभः कण्ठमणिवद्भवति नान्यस्येति तात्पर्यम् ( २६ ) ॥ ३९ ॥

१ संस्कार्यत्वे ।

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ॥
अनुयुगमन्वहं सगुणगीतपरंपरया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ २७ ॥ ४० ॥

ननु यतेर्न किमपि कृत्यमस्ति प्रारब्धमेव सुखोपभोगेनापक्षय्यते अतः किमिति वृथा शप्यते उभयतोऽप्यसुखमिति, श्रूयते च "एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्" इत्यादि तत्राह । त्वदवगमीति । हे सगुण षड्गुणैश्वर्ययुक्त त्वदवगमी त्वज्ज्ञानवान्भवदुत्थशुभाशुभयोर्भवतः कर्मफलदातुरीश्वराद्धेतोरुत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यापुण्यकर्मणोः फलभूतान् गुणविगुणान्वयान्सुखदुःखसंबंधान्न वेत्ति नानुसंधत्ते तर्हि तदानीं च देहभृतां देहाभिमानिनां प्रवृत्तिनिवृत्तिकरीर्गिरो विधिनिषेधलक्षणा न वेत्ति। विगतदेहाभिमानतया कार्याकार्यबोधाभावान्न नियुज्यत इत्यर्थः । युक्तं चैतत् । यतः कारणान्मनुजैरन्वहं श्रवणभृतः अनुदिनं श्रवणेन चेतसि धृतस्त्वं तेषामपवर्गगतिरपवर्गरूपा गतिर्भवासि । कथम् । श्रवणभृतः । अनुयुगं प्रतियुगं या गीतपरंपरा उपदेशसंततिस्तया सत्संप्रदायानुसारेणेत्यर्थः । एतदुक्तं भवति । ये तावत्तत्त्वज्ञानिनो न तेषां कर्माधिकारशंकाऽपि । ये चानवरतं त्वत्कथाश्रवणादिनिष्ठास्तेषामप्यासन्नभवत्पदानां विधिनिषेधबाधः इतरेषां तु योगच्छद्मनेंद्रियलालसानामुभयतोऽप्यसुखमिति ॥ अवगमं तव मे दिश माधव स्फुरति यन्न सुखासुखसंगमः ॥ श्रवणवर्णनभावमथापि वा नहि भवामि यथा विधिकिंकरः ॥ २७॥ ४० ॥

भावार्थदीपिकाप्रकाशः वंशीधरी–अत्राक्षिपति–नन्विति । यतेः संन्यासिनः । कृत्यं कर्तव्यम् । सुखोपभोगेन विषयसुखास्वादनेन । अपक्षय्यतेऽपाक्रियते । यतोऽतो हेतोः स यतिः शप्यते उपालभ्यते उभयतोऽप्यसुखम् इत्येवंरूपेण । श्रुत्यापि तथैव प्रोक्तमित्याह–श्रूयते चेति–" एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयान् तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजो विचिकित्सो ब्राह्मणो भवति " इति । अर्थः–ब्राह्मणस्य ब्रह्मविदः एष महिमा माहात्म्यं नित्यमतः कर्मणा शुभेन न वर्द्धते वृद्धिं न याति, तथाऽशुभेन कर्मणा नो कनीयान् क्षीयते अन्ये तु महिमानः कर्मकृता अनित्याः अतस्तं महिमानं विदित्वा यस्यैष महिमा तस्यैव परमात्मनः पदवित्स्वरूपवित् स्यात् स पापकेन शुभाशुभलक्षणेन कर्मणा ज्ञानाज्ञानकृतेन न लिप्यते इति । ततः किमत आह श्रुतिः–एनं ब्रह्मविदं पाप्मा पापं न तरति नातिक्रामति स तु सर्वं भूतं भवद्भविष्यत्पापं तरति अतिक्रम्य वर्तते एवं योज्यं न तपति न तापयति स तु सर्वं तपति भस्मसात्करोति इति । तदानीं त्वदवगमावसरे । इत्यर्थ इति–देहाभिमानिनामेव विधिनिषेधे प्रवृत्तिरस्ति तद्धीनानां न सास्तीति भावः । एतद्विधिनिषेधराहित्यं युक्तमुचितम् । इत्यर्थ इति–एतेन काल्पनिकासत्सम्प्रदायप्रवृत्तानां तु स्वप्नेऽपि भगवत्प्राप्तिर्न सम्भवतीति भावः । फलितमाह–एतदुक्तं भवतीत्यादिना । इतरेषां त्वदवगमत्वद्भक्तिरहितानाम् । स्वामिनाम्–अवगममिति । अवगमं ज्ञानम् । यद्येन त्वदवगमेन । सुखासुखयोः संगमो न स्फुरति भासते । अथापि यद्वा । यथा येन । विधिकिङ्करः प्रवृत्तिमार्गानुयायी ॥ * ॥ **श्रीधरानुयायिनी**–इदमेव स्पष्टीकरोति–त्वदिति । यतस्तव यथार्थसाक्षात्कारवानत एव देहाभिमानशून्यः, अत एव स कर्मफलप्रदपरमेश्वरप्रेरितप्राचीनधर्माधर्मकर्मफलीभूतसुखदुःखसम्बन्धान् देहाद्यासप्रयुक्तकर्मादिकर्तव्यताबोधकवेदवाचश्च नानुसन्धत्ते।ये वा परम्परागतसनातनसत्सम्प्रदायानुरोधेनानुक्षणप्रवर्तमानत्वत्कथाश्रवणादिनिष्ठया त्वां चित्ते धारयन्ति तेषामपि त्वत्पादपद्मासन्नतया मिथ्यासंन्यासिनामिव न विधिनिषेधाधिकारो दुःखं वा किन्तु तस्य तेषां च मोक्षाख्या तुल्यैव गतिस्त्वमेव भवसि।यद्वा–युगेयुगे प्रतिदिनं मनुजैः कृता या सगुणस्याप्राकृतगुणाढ्यस्य तव या गीतपरम्परा त्वन्नामकीर्तनादिप्रवाहरूपा तया त्वं श्रवणभृतस्तत्कर्णयोः परिपूर्णः सन्नपवर्गगतिर्भवसि।अपकृष्टा वर्गा धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्था यतस्तथाभूता गतिर्भवसि प्रेमभक्तिप्रद इति

यावत्—"कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्" इत्याद्युक्तेः॥*॥ **तोषिणी**—तच्छ्रुत्वा तदेकपरायणाः सोल्लासमभिस्पष्टयन्ति—त्वदिति । त्वद्याथार्थ्यानुभवी तु भवदुत्थयोर्भवद्भक्तिप्रभावेण स्थातुमसमर्थयोरपि साधनबाहुल्याय तद्देहं रिरक्षूणां भवतैव तदाभासत्वेन स्थापितयोः शुभाशुभयोः प्रारब्धरूपयोर्गुणविगुणौ सुखदुःखे तयोरन्वया अनुवृत्तयस्तान्न वेत्ति ते सन्ति न वेति न जानात्यपि, यदा तान्न वेत्ति तदा देहभृतां देहाभिमानिनां विधिनिषेधरूपा गिरः सुतरां न वेत्ति । यद्वा—गिर स्तुतिनिन्दारूपाश्च न वेत्तीति । अथवा भवत् उद्भवत् उत्थमुत्थितं च देहभृतां तयोर्जायमानोत्थितयोः देहभृद्भिः क्रियमाणयोः कृतयोरिति यावत्, तयोः शुभाशुभयोः पुण्यपापयोर्गुणविगुणान्वयान् गुणदोषसम्बन्धान्न वेत्ति कः किं करोति कृतवान्वा । ततो वा भद्राभद्रं किं जातं तत्सर्वं न जानातीत्यर्थः । तर्हि तेषां स्तुतिनिन्दारूपाः स्वविषयिका गिरश्च न वेत्ति, त्वदनुभवानन्दाविष्टत्वादेवेत्यर्थः । तर्हि किं करोतीत्यपेक्षायां तत्सम्प्रदायप्रवर्तकमहाजनदृष्टान्तेन दर्शयति—अन्विति । यतोऽनुगमाद्धेतोः स्वभक्त्येकवशत्वं मनुजैः श्रीस्वायम्भुवमनुतुल्यैः प्राणिभिरनुयुगं तत्राप्यन्वहं गुणगीतपरम्परया श्रवणद्वारा चेतसि धृतो भवसि । तदुक्तं तृतीये श्रीमनुमुद्दिश्य—" अयातयामास्तस्यासन्यामाः स्वान्तरयापनाः । शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ " इति । तत्र हेतुः—अपवर्गस्यापि गतिराश्रयो दशमपदार्थस्त्वं परमपुरुषार्थत्वादेवेति भावः । तदेवं " यावत्त्वच्छ्रवणादेरेवंभूतं महिमानं न जानन्ति तावदेव साधनान्तरे प्रवर्तन्ते " इति च ' तावत्कर्माणि कुर्वीत ' " मत्कथाश्रवणादौ च श्रद्धा यावन्न जायते " इत्यादेः ॥ * ॥ **विश्वनाथस्तु**—अपवर्गगतिः पञ्चमस्कन्धगद्यदृष्ट्या प्रेमभक्तिप्रदः । अपकृष्टा वर्गाश्चत्वारोऽपि यतस्तथाभूतो वा गतिर्भवसीत्याह—अत्र श्रुतयः—" तैरहं पूजनीयो वै भद्र कृष्णनिवासिभिः । तद्धर्मगतिहीना ये तस्यां मयि परायणाः । कलिना ग्रसिता ये वै तेषां तस्यामवस्थितिः । यथा त्वं सह पुत्रैश्च यथा रुद्रो गणैः सह । यथा श्रियाभियुक्तोऽहं तथा भक्तो मम प्रियः ॥ " गोपालतापन्यः ॥ तद्धर्मगतिहीना इति कलिना ग्रसिता इति च दुराचारत्वव्यञ्जकम् । तस्यां मथुरायां तदेवं दुराचारे सति द्वयोरुपासकयोर्मध्ये " यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः । ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ सुरानात्मानमात्मस्थं निन्हुते मां च धर्महा । अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ " इति भगवतायतिर्निन्दितः । "अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ " इति स्वभक्तोऽभिनन्दितो यथा तथैव स्वस्तवान्ते श्रुतिभिरपि त्वदनुवर्तिनीभिः समवादीति ज्ञेयम् ( २७ ) ॥ ४० ॥

**नीलकंठी**—एवं श्रवणमनननिदिध्यासनाभ्यासेन साक्षात्कृतात्मतत्त्वस्य स्थितप्रज्ञस्य द्वे अवस्थे समाधिर्व्युत्थानं च क्रमेण पूर्वोत्तरार्धाभ्यामाह—त्वदवगमीति । त्वदवगमी त्वां साक्षाद्विद्वान् भवतो विदुषः सकाशादुत्थे उत्थिते दूरीभूते " तत्सुकृतदुष्कृते विधुनुते " " तदा विद्वान्पुण्यपापे विधूय " इत्यादिश्रुतिभ्यः त्वत्तो दूरीभूतयोः शुभाशुभयोः सुखदुःखयोः । कर्मणि षष्ठी । न वेत्ति न जानाति । समूलमुन्मूलितवासनो विद्वान्समाधौ दुःखं न वेत्ति " यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते " इति स्मृतेः । अत्र हेतुः, यस्मात्तर्हि समाधिकाले देहभृतां प्राणिनां गुणविगुणान्वयानुत्तमत्वाधमत्वसम्बन्धान्न वेत्तीत्यनुषज्यते । तथा गिरः शब्दादीन्विषयाँश्च न वेत्ति । " अत्र पिताऽपिता भवति माताऽमाता—लोका अलोका वेदा अवेदाः " इत्यादि—श्रुतेः । " यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ " इत्यादि च । उत्तमाधमजात्यादिव्यवस्था वेदशास्त्रादिप्रामाण्यं च प्रबोधात्प्रागेव न तदूर्ध्वमिति भावः । एवं स्थितप्रज्ञस्य समाध्यवस्थामुक्त्वा व्युत्थानावस्थामाह—अनुयुगमिति । युगं मिथुनं चिज्जडैक्यं प्रमातृत्वमनुसृत्येत्यर्थः । अन्वहम् अहंकारममकारावनुसृत्येति । अनुयुगमन्वहं सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः तं दग्धपटवदनुवर्तमानमनुसृत्य स्थितो योगी सगुणस्य श्रीकृष्णादेर्गीतं यशोवर्णनं तस्य परम्परया सातत्येन पूर्वोक्तं सर्वं न वेत्तीत्यनुवर्तते । समाहितो योगी ज्ञेयाभानात्सुखदुःखादिकं न वेत्तीति । " यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् " इति श्रुतेः । व्युत्थितश्च भगवद्गुणगानानन्दनिमग्नो न द्वैतातपसन्तापकणिकामनुभवति—" स चक्षुरचक्षुरिव " इत्यादिश्रुतेः । " देहं विनश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् । दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ " इति स्मृतेश्च । अयं भावः—" उभे उ हैवैष एते तरति " इति विदुषः पूर्वपुण्यपापतरणस्य " तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम् " इत्यागामिपुण्यपापासम्बन्धस्य च श्रवणान्न तदुत्थसुखादिप्रसक्तिरस्ति, अस्ति तु प्रारब्धकर्मोत्थयोस्तयोः " विमुक्तश्च विमुच्यते " " भूयश्चान्ते विश्वमायानिवृत्तिः " इति द्विर्विमुक्तिश्रवणेन

द्युपतय एव ते न ययुरंतमनंततया त्वमपि यदंतरांऽडनिचया ननु सावरणाः ॥
ख इव रजांसि वांति वयसा सह यच्छ्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधनाः ॥ २८ ॥ ४१ ॥

त्वदवगमी न वेत्ति सुखदुःखे न च विधिनिषेधावित्युक्तं तत्र ननु कथमवगंतुं शक्यते दुरधिगमत्वस्योक्तत्वादित्येवमाशंक्य सत्यमेवमनवगाह्यमहिम्नो वाङ्मनसगोचरत्वाद विषयत्वेनैव ज्ञानमिति दर्शयन् "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं भवच्च भविष्यच्च" इत्यादिश्रुतिप्रतिपादितमपरिमितं महिमानमाह । द्युपतय एवेति । हे भगवंस्ते अंतं द्युपतयः स्वर्गादिलोकपतयो ब्रह्मादयो न ययुर्न प्रापुः । तत्कुतः । यदंतवद्वस्तु तत्किमपि त्वं न भवति । आस्तां द्युपतयो न ययुरिति यद्यस्मात्त्वमप्यात्मनोऽंतं न यासि । कुतस्तर्हि सर्वज्ञता सर्वशक्तिता वाऽत आह । अनंततया अंताभावेन । नहि शशविषाणाज्ञानं सार्वज्ञ्यं तदप्राप्तिर्वा शक्तिवैभवं विहंति । अनंतत्वमेवाह । यदंतरेति । यस्य तवांतरा मध्ये ननु अहो सावरणा उत्तरोत्तरं दशगुणसप्तावरणयुक्ता अंडनिचया ब्रह्माण्डसमूहा वांति परिभ्रमंति । वयसा कालचक्रेण खे रजांसीव सह एकदैव न तु पर्यायेण । हि यस्मादेवमतः श्रुतयस्त्वयि फलंति तात्पर्यवृत्त्या पर्यवस्यंति न तु साक्षाद्वदंत्ययमेतावानिति । सगुणस्य गुणानंत्यान्निर्गुणस्य चागोचरत्वात् । कथं तर्ह्यपदार्थे तात्पर्यमिति । तत्र विधिमुखवाक्ये भवेदयं नियमः पदार्थस्यैव वाक्यार्थत्वमिति निषेधमुखे तु नायं नियम इत्याह । अतन्निरसनेति । "अन्यदेव तद्विदितादथो अविदितादधि । अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अस्थूलमनणु" इत्यादिप्रकारेण लक्षणया च तत्त्वमसीत्यादयः पर्यवस्यंति । प्रारब्धकर्मणामनष्टत्वावगमात् । तथाप्युक्तविधो योगी नान्यवत्सुखदुःखे विन्दतीति । ननु विद्वदविदुषोर्व्यवहारः समानः " पश्वादिभिश्चाविशेषात् " इति न्यायात् । तथा च व्युत्थितो योगी कर्म वा देहपुत्राद्यभिमानं वा कुतो नानुसरतीत्यत आह–श्रवणेति । यतो हेतोरपवर्गगतिस्त्वं मोक्षलक्षणः प्राप्यात्मा त्वं मनुजैरधिकारिभिः श्रवणेन भगवत्कथाश्रवणादिप्रणाड्या भृतो धृतः साधकदशायामतः सिद्धदशायामपि तदेव तेऽव्यवहि तपूर्वसंस्कारदार्ढ्यादनुतिष्ठन्ति न कर्मादीत्यर्थः । अन्यदपि जीवन्मुक्तलक्षणम्–" अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च । निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ " इत्यादि शास्त्रादवगन्तव्यम् ( २७ ) ॥ ४० ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**–पुनराक्षिपत्यत्र–त्वदवगमीति । पूर्वोक्तपद्ये त्वदवगमीत्यादि यदुक्तं तत्राशंकते–नन्विति । अवगन्तुं ज्ञातुम् । दुरधिगमत्वस्य दुर्ज्ञेयत्वस्य अनवगाह्यमहिम्नो दुर्ज्ञेयमाहात्म्यस्य । तथाह श्रुतिः–" स होवाच यदूर्ध्वं गार्गि यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाशे तदोतं प्रोतं च " इति । अर्थः–स ह याज्ञवल्क्य उवाच–हे गार्गि त्वयोक्तं यत् ऊर्द्ध्वम् उपरि दिवः अण्डकपालात् यच्चार्वागधः पृथिव्या अधोऽण्डकपालात् यच्चान्तर्मध्ये द्यावापृथिवी द्यावापृथिव्योरण्डकपालयोरिमे द्यावापृथिवी यद्भूतमतीतं भवच्च वर्तमानं भविष्यच्च भवितव्यं तच्च यत्सूत्रमाचक्षते तत्सूत्रमाकाशे ओतं प्रोतं च, यद्वै व्याकृतं सूत्रात्मकं जगत् अव्याकृताकाशे ब्रह्मरूपे वस्तुमात्रं त्रिष्वपि लोकेषु वर्तत इत्यर्थः । अनन्तत्वपरे यदप्रापणे हेतुं पृच्छति–तत्कुत इति । अन्ताज्ञाने सर्वज्ञता तव कथं स्यादित्याशयेनाह–कुतस्तर्हीति । विद्यमानवस्तुनो ज्ञानाग्रहणे हि सार्वज्ञं शक्तिवैभवं च विहन्ति न त्वविद्यमानस्यापीति भावः । हि यस्मादेवमनन्तोऽसि अतो हेतोः । पुनराशंकते–कथमिति । अपदार्थे पदाशक्ये । तत्र तात्पर्यनिर्णये । विधिमुखे वाक्ये तत्त्वमसीत्यादिके । अयं क इति चेदाह–पदार्थस्यैवेति । अतन्निरसनेन आरोपितापवादेनेति । तदाह श्रुत्या–" अन्यदेव तद्विदितादथो अविदितादधि । अन्यत्र धर्मादन्यत्राधर्मादन्यस्मात्कृताकृतात् । अन्यत्र भूताद्भव्याच्च यत्पश्यासि तद्वद " इति । अर्थः–तद्वस्तु विदितात् ज्ञानात् वस्तुनोऽन्यत् पृथगेव भवति । तर्हि, अवच्छिन्नमज्ञातं

**न च वाच्यं निषेधैः शून्यमेव ज्ञाप्यत इति।यतो भवन्निधनाः।भवति त्वयि निधनं समाप्तिर्यासां तास्तथा नहि निरवधिर्निषेधः संभवत्यतोऽवधिभूते त्वयि फलंतीत्यर्थः॥ द्युपतयो विदुरंतमनंत न ते न च भवान्न गिरः श्रुतिमौलयः ॥ त्वयि फलंति यतो नम इत्यतो जयजयेति भजे तव तत्पदम् ॥ २८ ॥ ४१ ॥**

प्राप्तमत आह–अथो अविदितादधि अथो अप्यर्थे अविदितात् अज्ञातादपि वस्तुनो अधि उपरि तद्वर्तते उपर्यर्थलक्षणयाऽन्यदित्यर्थः । यद्धि यस्मादुपरि भवति तद्धि तस्मादन्यदिति प्रसिद्धम् । धर्माच्छास्त्रीयादन्यत्र तथाऽधर्मादन्यत्र तथा कृतं कार्यमकृतं कारणं तस्मादन्यत्र भूतादतिक्रान्तात्कालाद्भाव्याद्भविष्यतश्चकाराद्वर्तमानाच्चान्यत्र यदीदृशं सर्वव्यवहारगोचरातीतं पश्यसि जानासि तदेति यमं प्रति नचिकेतसः प्रश्नः । अत्रैवं श्रुत्यन्तरम्–"यस्मिन्नाकाशे सर्वमोतं प्रोतं स कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इति गार्गिप्रश्ने याज्ञवल्क्यो वदतीत्याह–"स होवाचैतद्वै तदक्षरं परमं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमलाञ्छमतमोऽवाय्वनाकाशमसंगमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नोति कश्चन" इति "यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः" इति । सुगमत्वात्किञ्चिद्व्याख्यायते–हे गार्गि यदेतत्कथितं तदक्षरं परमं परं ब्रह्म ब्राह्मणा ब्रह्मविदोऽभिवदन्ति तदाह–अस्थूलमित्यादि । अलोहितम् अग्नेर्गुणो लोहितः अपां स्नेहस्ताभ्यामन्यत् सर्वथाप्यनिर्देश्यम् । लाञ्छः छाया तद्रहितमच्छायम् । तर्हि तमः, न अतमः । अमुखमदूरम् । मीयन्ते येन तन्मात्रं रूपं तदस्य नास्तीत्यमात्रम् । छिद्रवदन्तरं नास्तीत्यनन्तरम् । तर्हि बाह्यम्, न अबाह्यम् । इति । अतन्निरसनेन ब्राह्मणास्तदक्षरं वदन्ति–तदक्षरं किञ्चन वस्तु नाश्नाति नोपभुंक्ते कश्चन कोऽपि पुमाँस्तन्नाश्नोति नानुभवतीति पर्यवस्यन्ति प्रतिपादयन्ति । इत्यर्थ इति–निरवधिकनिषेधादर्शनात्तदवधिभूतं त्वामेव प्रतिपादयन्तीति भावः । स्वामिनाम्–द्युपतय इति । हे अनन्त ते तवान्तं द्युपतयो न विदुर्भवाँश्च न वेत्ति । श्रुतीनां वेदानां मौलयो मुकुटीभूता गिरो वेदान्तवाक्यानि न विदुः किन्तु–यतस्ता गिरस्त्वयि नमो जय जयेतीत्युक्त्वा फलन्ति निवृत्तव्यापारा भवन्ति अतोऽहं त्वत्पदं नमो जयजयेति ब्रुवन्भजे ॥ * ॥ **श्रीधरानुयायिनी**–निर्विषयत्वेन ब्रह्मणः साक्षात्कारासम्भवमाशङ्क्य वागाद्यगोचरं ब्रह्मेति ज्ञानमेव ब्रह्मसाक्षात्कार इत्याहुः–द्युपतय इति । उत्तरोत्तरदशगुणभूम्यादिसप्तावरणसंयुता ब्रह्माण्डकोटयोऽपि त्वय्याकाशे रजांसीवैकदैव न तु क्रमेण कालचक्रेण परिभ्रमन्तीति । यद्वा–सृष्ट्यादौ लब्धप्राकट्या निष्क्रामन्ति प्रलयादौ लब्धाप्राकट्याः प्रविशन्तीत्यर्थः । तवान्ताभावात् स्वयमपि स्वस्यान्तं त्वं न यदि यासि तदा ब्रह्मादयस्तवान्तं न ययुरिति किमाश्चर्यम्, तत्रापि वयं काः, तस्माच्छ्रुतयः कल्पितप्रपञ्चबाधावधिभूते त्वय्येव तात्पर्यवृत्त्या पर्यवस्यन्तीत्यतो जयजयेत्यर्थः । यद्वा–अहो कियदस्माकं वाग्वैभवं येन त्वदीयवैभवं विषयीकृत्य स्तोष्याम इत्युपसंहरन्ति–द्युपतय इति । यदन्तरा यस्य तवैकैकरोमकूपमध्ये कालचक्रेण सहैव सावरणासंख्यब्रह्माण्डानि द्युपतयो ब्रह्मादयो देवताश्च गवाक्षेषु परमाणव इव परिभ्रमन्ति, अत एव ते ब्रह्मादयस्तवान्तं न ययुरेव । तथा तवान्ताभावात्त्वमपि स्वस्यान्तं न यासि यत् यद्यप्येवं तथापि त्वयि विषयेऽस्मदाद्याः श्रुतयः फलन्त्येव त्वां विषयीकृत्य सफला भवन्त्येव, त्वदीयवास्तवस्वरूपनिरूपणासामर्थ्येऽपि श्रुतयः खलु भगवद्विषयिण्य इति प्रथयैवास्माकं साफल्यमिति भावः । अथ कथमेवं विषण्णा भवथेति चेत्तत्राहुः–अतन्निरसनेनेति । अतत् मिथ्याभूतं विश्वं तस्य "नेह नानास्ति किञ्चन" "अस्थूलमनणु" इत्यादिना निरसनेन बाधेनैव भवतीति भवद्वर्तमानं प्राप्तं निधनं मरणं यासां ता वयमित्यर्थः, आसन्नमरणा इति यावत् । अयं भावः–यथा सुवर्णवज्रादिक्षेत्रे मृत्पाषाणजलादिषु महता यत्नेन दूरीकृतेष्वेव सुवर्णवज्रादिकं लभ्यते तथात्रापि मिथ्याभूतप्रपञ्चान्तर्गतानन्तवस्तूनां निरासे कृत एव तत्पदलक्ष्यार्थप्राप्तिर्नान्यथा । एवं च सृष्ट्यारम्भकालमारभ्य प्रलयकालपर्यन्तमप्यतद्वस्तूनां गणनमप्यशक्यं किं वक्तव्यं तन्निरसनमशक्यमिति । तन्निरसनं विना च तव ज्ञानमशक्यं तद्विना तु सुतरां त्वद्वर्णनमशक्यमिति कृत्वाऽत्यन्तासाध्ये कार्ये प्रवृत्तानामस्माकमन्ततो मरणमेव प्राप्तमित्याशयः । यद्वा–नन्वेवं दुर्गमश्चेदहं तदा भवतीभिर्वृत्त्यन्तरमेवांगीकार्यमिति चेत्तत्राहुः–भवन्निधना इति । भवानेव नितरां धनं यासां ता वयमित्यर्थः । त्वां विना क्षणमप्यस्माकं न निर्वाहस्तस्मात्तव जागरणलक्षणप्रकाश एवास्माकं जीवनमतो जागृहीत्याशयः । तस्माद्यदा तवानुकम्पां वयं लभेमहि अन्यो वा कश्चन लभेत तदैव दुष्प्रापमपि तव तत्त्वं सुगमं भवेदिति–अखिलशक्त्यवबोधकेति । प्रथमश्रुत्युक्तमेवात्राप्यनुसन्धेयमिति संक्षेपः ॥ * ॥ **विश्वनाथी**–तदेवं स्तुतौ संक्षेपदर्शितनिजनिजार्थाः सर्वविधश्रुतीर्मुख्यया लक्षणया च वृत्त्या तत्स्वरूपानिरूपणद्वारा तत्स्वरूपवैभवनिरूपणद्वारा च तत्र चरन्तीरपि पर्याप्तिमनाप्तवतीर्दृष्ट्वा लब्धसमयास्तथैव स्वेषां तत्र चरणं युक्तमित्युपसंहरन्त्यः काश्चिदुपक्रमश्रुतीनां संवादे

नाहुः—द्युपतय इति । अनादिकालपरम्परासम्बन्धिनोऽनन्तब्रह्माण्डसम्बन्धिनश्च नानाब्रह्मरुद्रादयोऽपि त्वं सर्वकालदेशव्यापकोऽपि अनन्ततयेति द्युपतय इत्यस्य च तत्त्वाप्राप्तौ हेतुः । इदमेव टीकायां यदन्तरेत्यादिना पूर्वत्रापि योजितम् । यस्य तवांशेनाविर्भूतस्य कारणार्णवशायिरूपस्याप्यन्तरा एकैकरोमकूपमध्ये ब्रह्माण्डनिचया असंख्येया वान्ति सृष्ट्यादौ लब्धप्राकट्य[illegible]निष्क्रामन्ति प्रलयादौ लब्धाप्राकट्याः प्रविशान्ति चेत्यर्थः । गवाक्षे परमाणव इवेति भावः । वयसा तेषां परिच्छेदकेन कालचक्रेण सह इति देशकालानन्त्यं दर्शितम् । तस्य स्वरूपवैभवाभ्यामेव तत्तदीयतत्त[illegible]त् । यद्यस्मादानन्त्याद्धेतोः श्रुतयोऽप्यतन्निरसनेन अनन्तादनन्तवैभवाच्च त्वत्तोऽन्येषां सान्तानां सान्तवैभवानां चानुवादपूर्वकत्यागेन भवत्येवानन्तेऽनन्तवैभवे पाराप्राप्त्या निधनं समाप्तिर्यासां तथाभूताः सत्यः स[illegible]श्रुतयः फलन्ति सफला भवन्ति, अनन्तपुरुषार्थप्राप्त्या सार्थका जायन्ते । एतदुक्तं भवति—यस्माच्छ्रुतयः सर्ववाक्यान्वयेन त्वय्येव सार्थका जायन्ते, तस्मात्तासामेकदेशवाक्यरूपस्तत्तदनुवादोऽपि तत्तन्निरसनपूर्वकत्वदुपदेशवाक्यार्थपर्यवसान एव । अतन्निरसनवाक्यमपि त्वदवधिकमेव साक्षात्त्वदुपदेशवाक्यमपि तथैवातन्निरसनपूर्वकमेवेति लक्ष्यो वाच्यो वा भवसि । अस्मदेकप्रामाण्येन सर्वथैवाप्राकृतानन्तस्वरूपवैभवतया निर्णीयमानस्त्वमस्माकं परमपुरुषार्थोऽसि । एतदेवोक्तमुपक्रमवाक्येऽपि—जयजय जह्यजामित्यादीति । तत्रानन्ततया प्रतिपादिकाः श्रुतयोऽपि "यतो वाचो निवर्तन्ते" इत्याद्याः सर्वब्रह्माण्डाद्याश्रयत्वस्य, "यदूर्ध्वं गार्गि दिवः" इत्याद्याः सर्वकालाश्रयत्वस्य, "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इत्याद्याः सर्वश्रुत्यर्थरूपस्य, "सर्वे वेदा यत्पदमामनन्ति" इत्याद्या अतन्निरसनपूर्वकश्रुत्यर्थत्वस्य, "न तस्य कार्यम्" इत्याद्याः । अतन्निरसनं तु तावद्द्विविधम्—साक्षाद्वृत्त्या तात्पर्यवृत्त्या चेति । यथा—"न तस्य कार्यम्" इत्यादिषु, "इन्द्रो यातोऽवसितस्य राजा" "सर्वं खल्विदं ब्रह्म" इत्यादिषु । तत्पुनश्चतुर्विधम्—शान्तस्वरूपनिरसनं स्वाभाविकानन्तगुणत्वेन प्राकृतनियतसान्तवैभवनिरसनं सान्तफलसाधनसाध्यत्वनिरसनं सान्तसंबन्धेनानृजुमार्गमयतत्प्रतिपादननिरसनं चेति । तत्राद्यम्—"अन्यदेव तद्विदितात्" इत्यादौ, द्वितीयम्—"अस्थूलमनणु" इत्यादौ "न तस्य कार्यम्" इत्यादौ च, तृतीयम्—"अन्यत्र धर्मादन्यत्राधर्मात्" इत्यादौ, चतुर्थम्—"नैषा तर्केणमतिरापनेया" "नैवाभ्यसेद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्" इत्यादाविति ( २८ ) ॥ ४१ ॥

**नीलकंठी**—एवं ब्रह्मविदः "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति ब्रह्मैव सन्ब्रह्माप्येति" इत्यादिश्रुतेः प्राप्तब्रह्मभावस्य "य एवं वेद" "अहं ब्रह्मास्मि" इति "स इदं सर्वं भवति" "सलिल एको द्रष्टाद्वैतो भवति" "तत्केन कं पश्येत्" इत्यादिश्रुतिसिद्धौ सार्वात्म्यनिर्विशेषभावौ तयोराद्यो विशेषानन्त्यात्परो निर्विशेषत्वाच्च वाङ्मनसातीत इत्यस्य विदुषोऽनन्तत्वमाह—द्युपतय इति । ते तव ज्ञातात्मतत्त्वस्य "स एकधा भवति त्रिधा भवति" इत्यादिश्रुतेः "आत्मनां तु सहस्राणि बहूनि भरतर्षभ । योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् । संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥" इत्यादिस्मृतेश्च । 'प्रदीपवदावेशस्तथाहि दर्शयति' इति न्यायाच्च योगबलेन प्रदीपवदनेकधा भावं गतस्य अन्तमवसानं द्युपतय एव ये सर्वज्ञत्वेन प्रसिद्धाः ब्रह्मेन्द्रादयस्त एव न ययुर्न प्रापुः किमुतान्येऽल्पज्ञाः । किञ्च त्वमपि ते अन्तं न यासीति विपरिणामेनानुषञ्जनीयम् अतः अनन्ततया यथा एकस्मिन्बीजे कृत्स्नो वटस्तत्रानन्तानि बीजानि तेषु प्रत्येकं वटा इत्येवं सन्तानपरम्परया तवाप्यानन्त्यमस्तीत्यर्थः । कुतोऽनन्तत्वमत आह—यदिति । यद्यस्माद्धेतोः ते इत्यनुकृष्यते ते तवान्तरा मध्ये हार्दाकाशे अण्डनिचयाः प्रत्येकं परितः पञ्चाशत्कोटियोजनप्रमिताः ब्रह्माण्डसमूहाः सावरणाः स्वापेक्षयोत्तरोत्तरदशगुणैः पृथिव्यप्तेजोवाय्वाकाशमनोबुद्धिप्रकृत्यावरणैः सहिताः खे आकाशे रजांसीव धूलिकणा इव वयसा भूतभविष्यद्वर्तमानकालेन सह वान्ति भ्रमन्ति । तथा च श्रुतिः—"यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशः" इत्युक्त्वा "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम्" इति हार्दाकाशे सर्वसद्भावं दर्शयति । स्मृतिरपि—"अनागतमतीतं च भविष्यत्स्थूलमण्वपि । तथा दूरमदूरं च निमेषःकल्प इत्यपि ॥ चिदात्मनि स्थितान्येव पश्य मायाविजृम्भितम् ।" इति । ननु, माया तु काचिन्मरुमरीचिमहाह्रदतरङ्गतुल्यानां विशेषाणामन्तं भूतुल्यस्याधिष्ठानभूतस्य सत्यस्य त्वन्तं यास्यत्येवेत्याशंक्याह—यच्छ्रुतय इति । यत् यस्मिन् त्वयि विषये हि यस्मात् श्रुतयः "सत्यं ज्ञानमनन्तं ब्रह्म" "तत्त्वमसि" "अस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादयः अतन्निरसनेन अनृतत्वजडत्वपरिच्छिन्नत्वादीनां पारोक्ष्यसद्वितीयत्वयोर्वा उपाधिभूतयोर्मायाविद्ययोर्वा स्थूलत्वाणुत्वादीनां चानात्मभूतानां क्रमेण व्यावर्तनेन फलन्ति ब्रह्म ज्ञापयन्ति न विधिमुखेन, अतस्तव वाचामगोचरत्वादनन्तत्वमिति भावः । एवं सर्वनिषेधे शून्यतापात्तिं वारयति—भवन्निधना इति । भातीति भवान् चिज्ज्योतिःस्वरूपः तत्र त्वयि निधनं तात्पर्येण पर्यवसानं यासां तास्तथा निरवधिकनिषेधासम्भवात्सर्वनिषेधेन त्वामेव चिन्मात्रं सत्यादिश्रुतयोऽवशेषयन्तीत्यर्थः । अयं भावः—यद्यपि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशान्ति तद्विजिज्ञासस्व तद्ब्रह्मेति" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यानि विधिमुखेन ब्रह्म प्रतिपादयन्तीव भान्ति तथाप्यतन्निरस

भगवानुवाच ॥ इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् ॥ सनंदनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४२ ॥
इत्यशेषसमाम्नायपुराणोपनिषद्रसः ॥ समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४३ ॥

॥ ४२ ॥ इत्यशेषसमाम्नायपुराणोपनिषद्रस इति । सर्वश्रुतिपुराणरहस्यतात्पर्यमित्यर्थः ॥ ४३ ॥

नेनैव तान्यपि पर्यवस्यन्ति । तथाहि तत्त्वमसीत्यन्तःकरणोपाधेर्जीवस्य मायोपाधिना ईश्वरेणाभेदः श्रूयते स च विशिष्टयोर्न सम्भवतीति उभयत्राप्युपाध्यंशप्रहाणेन शुद्धं चैतन्यं लक्षणया प्रतिपाद्यते वाक्येन तत्त्वमिति सामानाधिकरण्यात् सोऽयं देवदत्त इतिवत् । अत्र पदद्वयेऽपि लक्षणा एकपदलक्षितानिष्कृष्टस्येतरपदोक्तविशिष्टेनाभेदायोगात् । अंशांशिभावेनाभेदोपगमे तु "त्वमहमस्मि भगवो देव ते अहं वै त्वमसि" इति श्रुतिव्यतिहारसंकोचापत्तेः कनककुण्डलतुल्ययोः श्रुतिरजततुल्ययोर्वा जीवेशयोरंशांशिभावायोगात्, अन्यथा कण्ठमणिदृष्टांतबाधः स्यात् । तथा च—तत्त्वमसिवाक्येन एकवाक्यतामापादितं यतो वेत्यादिवाक्यं कारणत्वनिरसनेनैव ब्रह्मणि पर्यवस्यति, राधेयः कौन्तेय इतिवद्वा राधेयत्वबाधेन च कौन्तेयत्व इव जीवत्वबाधेन ब्रह्मणि पर्यवस्यति । एवं सत्यादिवाक्यमपि प्रकृष्टप्रकाशादिवाक्यवत् । अत्र हि असतोऽज्ञानस्य शून्यतापत्तेरचितः सतो भानायोगाच्च सत्त्वे सति चित्त्वमज्ञातब्रह्मज्ञापकं प्रकृष्टत्वे सति प्रकाशत्वमिव चन्द्रस्य । न च चंद्रमसीव ब्रह्मणि वैशिष्ट्यं प्रत्यक्षं नापि शाब्दं शब्दस्याज्ञातज्ञापनार्थस्य वैशिष्ट्याप्रतिपादकत्वात् । नापि लक्षणवैशिष्ट्यादनुमेयम् अनंतमिति विशेषणेनानुमानबाधात् । एवं च सत्यं ज्ञानमित्यपर्यायपदाभ्यामप्यखण्डं वस्तु सिद्धं तच्च परमप्रेमास्पदत्वादानंदरूपम् अर्थाच्चानृतजडदुःखादेर्व्यावृत्तिः । एवं च यथा तरंगचंद्रघटाकाशानुगताभ्यां चन्द्रत्वाकाशत्वाभ्यां लक्ष्यमाणौ मुख्यचंद्राकाशौ चंद्रत्वाकाशत्वे न त्यजतः । एवं ब्रह्माध्यस्तघटाद्यनुगतसत्त्वेन चित्तवृत्त्युपाधिभेदभिन्नचिद्व्यत्यनुगतचित्त्वेन च लक्ष्यमाणं ब्रह्मापि सत्त्वचित्त्वे न त्यजति नाप्यखण्डत्वं सत्ताजातिवत्, सा हि स्वतो व्यावृत्तैरपि गोत्वादिभिर्न विशेष्टुं शक्या नीलत्वादिनेवोत्पलम् । अथ च तदात्मिका एवं ब्रह्मापीत्यत्र विस्तरः । तथा च—सत्यादिपदानां विशिष्टाप्रतिपादकत्वादनृतादिव्यावर्तनेनैव ब्रह्मप्रमापकत्वं पर्यवस्यति । नेतिनेत्यस्थूलादिवाक्यानां तु स्पष्टमेव मूर्तप्रपञ्चतद्गतस्थौल्यादिनिषेधेनाखण्डे ब्रह्मणि पर्यवसानं ततश्च ब्रह्मणो जन्मादिहेतुत्वं जन्मादिसापेक्षत्वादौपाधिकं सत्तटस्थतया शुद्धं लक्षयति शाखाग्रमिव चंद्रम् । एवं परापरविद्याधिकारस्थानां सविशेषवाक्यानां तत्त्वप्रपत्त्युपास्तिविधिशेषतया देवताधिकरणन्यायेनावांतरतात्पर्यवत्त्वेऽपि न परमतात्पर्यविषयत्वमुभयत्र तत्कल्पने वाक्यभेदापत्तेः। ये तु कृत्स्नं शास्त्रं सविशेषपरमित्याहुः तेषां सर्वविशेषवति तस्मिन्नस्थूलमित्यादिनिषेधवाक्यानामत्यंतानर्थक्यं तस्मान्नित्यशुद्धबुद्धमुक्तस्वभावं निरस्ताशेषविशेषमेकरसं प्रत्यगभिन्नं ब्रह्माशेषविशेषनिषेधमुखेन श्रुतयः प्रतिपादयंतीति सिद्धम् (२८) ॥४१॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—इत्यनेन प्रकारेणोक्तमेतदात्मनोर्जीवब्रह्मणोरैक्यरूपस्यानुशासनम् । अथ श्रवणोत्तरमानर्चुः । आत्मनो गतिं स्वरूपम् ॥ * ॥ **श्रीधरानुयायिनी**—श्रीभगवानुवाच—एवं श्रुतिकृतं ब्रह्मोपदेश श्रुत्वा ब्रह्मस्वरूपं ज्ञात्वा कृतकृत्याः सन्तः सनकादयः सनन्दनमानर्चुः ॥*॥ **विश्वनाथी**—इत्येवमष्टाविंशतिवेदस्तवपद्यैर्बुद्धीन्द्रियमनःप्राणानिति ब्रह्मोपनिषद्विवरणमयमात्मानुशासनं जीवहितोपदेशं सर्वमूलस्वरूपस्वयंभगवत्सम्बन्ध्युपदेशं वा आ सम्यक् श्रुत्वा अथ अत एवात्मनो जीवस्य गतिं गम्यं तादृशभगवतो ज्ञानप्रकारं वा ज्ञात्वा भगवद्वैभववर्णनस्य तादृशस्वभावत्वादपूर्ववदनुभूय सिद्धा अपि किं वा पूर्णमनोरथाः सन्तः ॥ ४२ ॥

**नीलकण्ठी**—आख्यायिकामनुसरति श्रीभगवानुवाचेत्यादिना—इत्येतदिति ॥ ४२ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—इतीत्थम् । पूर्वजातैः सनकादिभिः । व्योम्नाऽऽकाशेन यानं येषां तैः ॥ * ॥ **श्रीधरानुयायिनी**—हे ब्रह्मणो मानसपत्र नारद तव ज्येष्ठभ्रातृभिः व्योमयानैः "खं ब्रह्म" इति श्रुतेर्ब्रह्मानन्दविहारैः ब्रह्मपारगैर्वा समुद्धृतं नृणां सर्वकामवासनाबाधकं यदिदमशेषवेदोपनिषत्पुराणरहस्यतात्पर्यं तच्छ्रद्धया मनसि [illegible] यथेच्छं भुवि चरेति ॥ * ॥ **विश्वनाथी**—इत्येवं समाम्नायादिरसः । पूर्वजातैः सर्वादौ ब्रह्मणः प्रादुर्भूतत्वात्सर्वतः श्रेष्ठैरित्यर्थः । अतो व्योमयानैः सर्वत्रानासक्त्या चरद्भिरत एव महा[illegible]दारमतिभिस्तैः सम्यगुद्धृतः गुरुकृताभ्यस्ताभ्य एव श्रुतिभ्य इति शेषः, इति योग्यता दर्शिता । अत्र समाम्नायः सामान्यत उक्तः, पुराणं च तदुपलक्षत्वेनेतिहासश्च । तत्रयं च वक्ष्यमाणाविशिष्टत्वेन कर्मोपासनारूपं द्विविधमेव ग्राह्यम् । उपनिषत्तु—तत्रतत्र च्छान्दोग्यादिरूपो भगवद्गीतादिरूपो वा ज्ञानभागः । पुराणस्य मध्ये पाठस्तदभेदविवक्षया । "यद्ब्राह्मणानीतिहासान्पुराणानि" इति स्वाध्यायोपदेशश्रुतेः । एवम् —"वा अरे अस्य महतो भूतस्य निःश्वसितमे

**त्वं चैतद्ब्रह्मदायाद श्रद्धयात्मानुशासनम् ॥ धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥ ४४ ॥ श्रीशुक उवाच ॥ एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयात्मवान् ॥ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥ ४५ ॥ नारद उवाच ॥ नमस्तस्मै भगवते कृष्णायाऽमलकीर्तये ॥ यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ४६ ॥**

ब्रह्मदायादेति । ब्रह्मैव दायमिवायत्नप्राप्यमत्ति सेवत इति तथा । ब्रह्मपुत्रेति वा ॥४४॥ पूर्णः कृतकृत्यः । श्रुतधरः श्रुत[illegible] धारयन् । वीरव्रतो नैष्ठिकः ॥४५॥ नम इति । श्रीकृष्णावतारतया नारायणं नमस्यति । उक्तं हि "एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्" इति ॥ ४६

तद्दग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासपुराणम्" इत्यादितः सोदरत्वश्रुतेः । "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वणं चतुर्थमितिहासपुराणं पञ्चमं [illegible]नां वेदम्" इति छान्दोग्योपनिषदि । एतदेवानूद्यते पुराणेषु—"इतिहासपुराणानि पञ्चमो वेद उच्यते" इत्यादिना । तथाप्यत्र सूताधिकारो भगवन्नामादिवद्विधिबलादेव लभ्यते—"वर्षासु रथकारोऽग्नीनादधीत" इत्यादिवत् तेषां रसः 'पिबत भागवतं रसम्' इत्यादिदृष्ट्या भगवद्भक्तिरसमयं तात्पर्यम् । तच्च त्रिविधम्—प्रत्येकवाक्यगतमवान्तरवाक्यगतं महाप्रकरणगतं च । तत्राद्ययोः पूर्वपूर्वदर्शितम्, अन्यस्य तु—"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ॥" इत्यनुसारेण षड्भिः । तच्च सर्ववेदाद्यन्तास्थितस्य सृष्ट्याद्यनुवादेन दर्शितप्रणवार्थस्य प्रकाशकेनाप्रसिद्धानां प्रसिद्धानामपि श्रुतीनामैक्यार्थेन मूलपद्यैरेवोदाहियते । यथा—जयजयेति । 'द्युपतयः' इत्युपसंहारोपक्रमयोरैक्येन 'स यदजया त्वजाम्' इत्यादिभिरभ्यासेन । 'अनुचरेन्निगमः' 'श्रुतयस्त्वयि हि फलन्ति' इत्याद्या अपूर्वतया । 'न परिलषन्ति केचित्' इत्यादिभिः फलेन । 'त्वमकरणः स्वराट्' इत्यादिभिरर्थवादेन । 'दृतय इव श्वसन्त्यसुभृतः' इत्यादिभिरुपपत्त्या यथोक्तलक्षणः श्रीभगवानेव विवक्षित इति । अस्य श्रीकृष्णत्वं तु पूर्वोक्तयुक्त्या ज्ञेयम् ॥ ४३ ॥

**नीलकंठी—**॥ ० ॥ ४३ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी—**एतत् आत्मानुशासनम् । कामानां कर्मवासनानाम् । भर्जनं दाहकम् । यथा सनकादयो ब्रह्मदायादा ब्रह्मपुत्रास्तथा त्वमपीत्याह—ब्रह्मपुत्रेति । यथा त एतद्गृहीत्वा चरन्ति तथा त्वमप्येतद्गृहीत्वैव चरेति भावः ॥ * ॥ **श्रीधरानुयायिनी—**॥ ० ॥ * ॥ **विश्वनाथी—**ब्रह्मदायादेति योग्यतोक्ता । धारयन् हृदि मुखे च । 'वर्जनम्' 'भर्जनम्' इति पाठद्वयस्यैक एवार्थः । एतच्छ्रवणेन श्रीभगवद्भक्त्युत्पत्त्या नृणां कामा विनश्यन्त्वेतदर्थमपीत्यर्थः ॥ ४४ ॥

**नीलकण्ठी—**ब्रह्मदायादः ब्रह्मणो मानसः पुत्रः ॥ ४४ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी—**स मुनिर्नारदः । ऋषिणा नारायणेन । एवमादिष्टम् इत्थं प्रोक्तं तत्त्वम् । श्रद्धया गृहीत्वाऽऽह ॥ * ॥ **श्रीधरानुयायिनी—**श्रीशुक एवं नारायणोपदिष्टं श्रद्धया श्रुत्वा मनसि धारयन्नविस्मरन् कृतकृत्यो भूत्वा नैष्ठिको नारद उवाच ॥*॥ **विश्वनाथी—**यतो वीरव्रतो नैष्ठिकत्वादविक्षिप्तचित्तोऽतः श्रुतधरः सकृच्छ्रवणमात्रेण शब्दतस्तद्धरः । यतश्च मुनिर्मननशील आत्मवान्भगवन्निष्ठश्चातस्तत्क्षणा दर्थतोऽपि श्रद्धया निश्चयात्मिकया बुद्ध्या गुरुणा नारायणेनादिष्टं गृहीत्वा पूर्णः प्राप्तस्वमनोरथपूर्तिः सन्नाह—राजन्निति । एतदुत्तरश्रवणेन स्वाराज्याप्त्या त्वं सर्वतो दीप्तिमान् जातोऽसीति भावः ॥ ४५ ॥

**नीलकण्ठी—**श्रुतधरः श्रुतमात्रं धारयति न बहुकृत्व उपदेशमपेक्षते । श्वेतकेतुवद्वीरव्रतो नैष्ठिकः ॥ ४५ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी—**सर्वाः श्रुतयस्तावच्छ्रीकृष्णमेव स्तुवन्तीति ज्ञात्वा सप्रेमश्रीकृष्णस्यावतारतया नारायणं प्रणमति—नम इति । कोऽसौ कृष्णः यः अभवाय संसारनिवृत्तये उशतीः कमनीयाः कला अवतारान् । तच्चोक्तं प्रथमे—'एते चांशकलाः' इत्यादिना "रक्षाभूमिकृपामूर्तिषोडशांशो कला मता" इति वारतान्तविः । "वंशैश्वर्ये धने लेशे सम्भूतौ खत्रिभागके । मेषादीनां तथा वीर्ये सतालव्योंऽश ईरितः ॥" इति च ॥ * ॥ **श्रीधरानुयायिनी—**भक्तानां संसारनिवृत्त्यर्थं गृहीतनानाकमनीयावताराय विमलकीर्तये श्रीकृष्णरूपाय नारायणाय तुभ्यं नमः ॥ * ॥ **विश्वनाथी—**सर्वश्रुतितात्पर्यं श्रीकृष्ण एवावधार्य तस्मै

**इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ॥ ततोगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ४७॥ सभाजितो भगवता कृतासनपरिग्रहः ॥ तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥ इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया ॥ यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि श्रुतिश्चरेत् ॥ ४९ ॥**

साक्षात्पितुरिति योनिव्यवधानं विना जनकस्य । अग्निमथनावसरे कथंचिदरणौ रेतः पतितं ममंथ व्यासस्तदैव तत उत्पन्नः शुक इति हि वदंति ॥ ४७ ॥ ४८॥ ४९॥

बोत्कर्षं व्यञ्जयति—नमस्तस्मा इति । अत्र मार्गेषु ज्ञानयोगभक्तिषु मध्ये भक्तिरेव श्रेष्ठा । उपासकेषु ज्ञानिप्रभृतिषु भक्त एव श्रेष्ठः। उपास्येषु ब्रह्मस्वरूपादिषु भगवानेव श्रेष्ठ इति सकलश्रुतिवाक्यैरेव निर्धारितम् । भगवत्यपि 'सदसतः परं त्वमथ यदेष्ववशेषम्' इति' स्त्रिय उरगेन्द्रभोग' इति वाक्याभ्यां कृष्ण एव श्रेष्ठो निश्चित इत्यभिज्ञायैव साक्षादपरोक्षस्य श्रीनारायणस्याग्रेऽपि नमस्तुभ्यं नारायणायेत्यप्रयुज्य नमस्तस्मै कृष्णायेत्युच्चैरुच्चारयामास । अमला असुरेभ्योऽपि मोक्षप्रदत्वादविद्यामालिन्यनिवर्तिका कीर्तिरेव यस्य तस्मै । ननु, किं पुरः सन्तं मां स्वगुरुं हित्वा तमेव प्रणमसि तत्राह—य इति।अभवाय भवनिवृत्तये उशतीः कमनीयाः कला भवद्विधानवतारान्धत्ते इति तन्नमस्कारेणैव त्वन्नमस्कारोप्यभूदिति भावः। वर्तमाननिर्देशेन तस्य नित्यत्वमपि स्पष्टीकृतम् । तथा च श्रुतिः—"तस्मात्कृष्ण एव परो देवस्तं धारयेत्तं रसयेत्तं भजेत्तं यजेत् ॐ तत्सत्" इति गोपालतापनी ॥ ४६ ॥

**नीलकण्ठी**—अभवाय मोक्षाय । उशतीः कमनीयाः । कलाः अवतारान् ॥ ४६ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—इत्यनेन श्लोकेनर्षिं नारायणं तच्छिष्यांश्चानम्य ॥ * ॥ **श्रीधरानुयायिनी**—एवं श्रीकृष्णं सशिष्यं नारायणं च । नारदस्तदाश्रमात्साक्षाद्योनिव्यवधानमन्तरेण पितुर्व्यासस्याश्रममगात् ॥ * ॥ **विश्वनाथी**—ब्रह्मवैवर्ते तु श्रीशुकजन्मकथा प्रकारान्तरेणोक्ता । सा च नवमस्कन्धे वर्णिता । परं त्वत्र साक्षात्पितुरित्युक्तेररणिसम्भूतशुकेनैव श्रीपरीक्षिते श्रीमद्भागवतं श्रावितमित्यवसीयते ॥ ४७ ॥

**नीलकंठी**—आद्यमृषिं नारायणम् । साक्षात् पितुः योनिव्यवधानं विना जनकस्य । अग्निमथनावसरे कथञ्चिदरणौ रेतः पतितं ममन्थ व्यासस्तदेव तत उत्पन्नः शुक इति हि वदन्तीति श्रीधराचार्याः ॥ ४७ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—सभाजितोऽर्चितः । तस्मै मत्पित्रे ॥ * ॥ **श्रीधरानुयायिनी**—स च व्यासेनातिथ्यरीत्याद्दतो व्यासाय नारायणाच्छ्रुतं सर्वं वर्णयामास । अनेन श्रीनारायणान्नारदस्ततो व्यासस्तस्मादहं मत्तश्च त्वं प्राप्तवानसीति गुरूपदेशपरम्परा सूचिता ॥ * ॥ **विश्वनाथी**—भगवतेति । भगवच्छब्दनिर्देशात्सनकादिवत्तस्यापि तद्विज्ञानादिसामर्थ्येऽपि तच्छ्रवणम् । "आचार्यवान्पुरुषो वेद" इति श्रुतिसामञ्जस्याय लोकसंग्रहणाय चेति ज्ञेयम् ॥ ४८ ॥

**नीलकण्ठी**—सभाजितः पूजितः ॥ ४८ ॥

**भावार्थदीपिकाप्रकाशः वंशीधरी**—यथा मनःश्रुतिः तथाहि—" प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः " इत्यादिश्रुतेर्वाक्प्रबंधरूपायाः श्रुतेर्मनोरूपत्वान्मन इत्युक्तम् । "मनः पूर्वरूपं वागुत्तररूपम्" इति श्रुतेर्वा । ब्रह्मणि यथा चरेत्प्रविशति तथा वर्णितम् ॥ * ॥ **श्रीधरानुयायिनी**—हे राजंस्त्वया कृतस्य प्रश्नस्य सर्वमिदमुत्तरं मया दत्तम् । तत्किमित्यपेक्षायामाह-[illegible]नेन प्रकारेण चरन्तीनां श्रुतीनां द्वारा निर्गुणे ब्रह्मणि मनोऽपि प्रचरेत् किमुत श्रुतयः ॥ * ॥ **विश्वनाथी**—उपसंहरति—इतीति । नोऽस्मान्प्रति यः प्रश्नः कृत इत्यत्रैतद्वर्णितम् । 'तदेतत्' इ[illegible] किम्, इत्यपेक्षायामाह—यथेति । यथा भगवत्त्वाद्यवलम्बनेन भगवत्प्रसादोत्थभक्तिप्रकारेण वा चरन्तीनां श्रुतीनां द्वारा मनोऽपि चरेत्प्रविशेत् किमुत श्रुतय इत्यर्थः । एता हि "तत्तु समन्वयात्"[illegible]ायन तदेकपर्यवसानतया पूर्वं दर्शिताः । "शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू" इति न्यायेन तदेकरूपत्वात्तादृशशक्तयश्च । यथोक्तं स्वयं भगवति श्रीकृष्णे श्रुतीर्विनापि शक्तिप्रागल्भ्यं 'निभृतमरुन्मनोक्ष[illegible]' 'तदरयोऽपि ययुः स्मरणात्' इत्यत्र ॥ ४९ ॥

**नीलकण्ठी**—तदेवमनिर्देश्ये ब्रह्मणि श्रुतयः कथं चरन्तीत्याक्षेपस्य 'बुद्धीन्द्रियमनःप्राणान्' इति श्लोकेन बुद्ध्यादीनां वस्तुतत्त्वावधारणाद्यर्थत्वोक्त्या तासां शब्दादिप्रमाणजन्यत्वेनास्ति ब्रह्मण्यपि शब्दप्रवृत्तिरिति संक्षेपेणोत्तरं दत्तम् । तदेव पुनः श्रीभगवन्नारदसंवादरूपाख्यायिकामुखेन विस्तरतः प्रतिपाद्याख्यायिकां च समाप्योपसंहरति—इत्येतदिति । मन इति बुद्ध्यादिचतुष्टयोपलक्षणम् । "मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति दर्शनादिकरणानामिन्द्रियाणां धीशब्दिताया बुद्धेश्च मनोऽनतिरिक्तत्वश्रवणात् । प्राणस्याप्यत्रैवान्तर्भावः । "स एष इह प्रविष्ट आनखाग्रेभ्यः"

योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः॥यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम्॥५०॥इति श्रीमद्भा०म०दशमस्कधोत्त०नारायणनारदसंवादे वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः॥८७॥

समस्तवेदस्तुत्यर्थं संगृह्यानुस्मारयति।योऽस्योत्प्रेक्षक इति।योऽस्य विश्वस्योत्प्रेक्षकः।एवमनुशायिनां समस्तपुरुषार्थसिद्धये मी[illegible]यादिप्रापणीयमित्यालोचक इत्यर्थः।अनेन निमित्तत्वमुक्तम्।एवमालोच्यास्यादिमध्यनिधने आदिर्जन्म मध्यः पालनं निधनमंत एतेषु कर्मसु यो वर्तते।अनेनोपादानत्वमु[illegible]नु प्रकृतिपुरुषयोरुपादाननिमित्तत्वे प्रसिद्धे। सत्यम्।तयोरपि तत एवोद्भूतत्वान्मूलकारणं स एवेत्याह।योऽव्यक्तजीवेश्वर इति।प्रवेशनियमने दर्शयति।य इति।पूर्वोक्तप्रकारेणेदं सृष्ट्वा[illegible]तत्सृष्ट[illegible]न ऋषिणा सृष्टे कार्येऽहमिति दर्शनात् ऋषिर्जीवस्तेन सहानुप्रविष्टः पुरः शरीराणि तस्य भोगायतनानि चक्रे ताः पुरः शास्ति तस्य भोगं ददत्परिपालयति।उपासकस्य[illegible]कैवल्यरूपो भवतीत्याह।यं संपद्ये ति।यं संपद्य प्राप्यानुशयी अन्वनु दंडवत्प्रणामैश्वरणमूले शेते इति तथा स जीवोऽजां कार्यकारणरूपामविद्यां त्यजति।ननु ब्रह्मसंपन्नस्यापि जीवस्य तत्संबन्धो दृश्यतेऽत आह। सुप्तः कुलायं यथेति।अयं भावः।यथा सुप्तं शरीरवंतमन्ये पश्यंति स तु नात्मानं तथा पश्यति एवं जीवन्मुक्तमप्यन्ये देहवंतं पश्यंति स तु न किंचित्पश्यतीति तं हरिमजस्रमन वरतं ध्यायेत्।किमित्यत आह।अभयं न भयं यस्माद्भयनिवर्तकमित्यर्थः।कुत एतत्।कैवल्यनिरस्तयोनिं कैवल्येनाप्रच्युतस्वरूपावस्थानेन निरस्ता तिरस्कृता योनिर्मूलकारणं माया येन तम्।सर्वश्रुतिशिरोरत्ननीराजितपदांबुजम्॥ भोगयोगप्रदं वंदे माधवं कर्मिनम्रयोः॥५०॥इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री०टीकायां सप्ताशीतितमोऽध्यायः॥८७॥

इति पूर्वप्रकृतस्य बुद्ध्यादिसंघातप्रविष्टस्य "स प्राणन्नेव प्राणो नाम भवति वदन् वाक्पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः तान्यस्यैतानि कर्मनामान्येव" इति प्राणाद्यात्मत्वश्रुतेः। तत्रापि बुद्धेरेव प्राणाद्यात्मत्वं युक्तं न चित इति युक्तोऽत्र मनसैवेतरसंग्रहः। एवं च निर्मृष्टनिखिलानर्थव्रातनिरतिशयानन्दप्रत्यगात्मज्योतिःस्वरूपे ब्रह्मणि प्रमातृत्वाद्यनर्थमूलस्तम्भभूताज्ञानध्वान्तविध्वंसिनी तत्त्वमस्यादिवाक्यकरणिका मनोवृत्तिः सम्भवतीति युज्यत एवानिर्देश्येऽपि ब्रह्मणि वाचः सञ्चार इति सिद्धम् ॥ ४९ ॥

भावार्थदीपिकाप्रकाशः वंशीधरी—इदं विश्वम्। इत्यर्थ इति—भगवदिच्छापूर्वकत्वात्सृष्ट्यादेः "स ऐक्षत" इत्यादिश्रुतेरिति भावः।अनेनालोचकत्वकथनेन।अनेनादिमध्यान्तेषु वर्तनेन तथा चाभिन्ननिमित्तोपादानत्वमुक्तं भगवतः सृष्ट्यादेः। पुनराशंकते—नन्विति। सत्यमित्यर्द्धांगीकारे। तयोः प्रकृतिपुरुषयोः।ततो भगवत एव।स भगवानेव।अव्यक्तं प्रकृतिः जीवः पुरुषस्तयोरीश्वरः शक्त्यंशरूपेणाश्रयः। यदर्थं यस्य भोगाद्यर्थम्। एतद्विश्वम्। अहमितिदर्शनात् सोऽहमिति ज्ञानात्। यमीशम्। तत्सम्बन्धोऽविद्यासंबंधः।अतोऽत्र।अत्राशयमाह—अयं भाव इति। किं तद्ध्यानेनेति चेदाह—अभयमिति।इत्यर्थ इति—"पुंसां नो मम सेवाया ऋते दुःखं निवर्तते"इत्याद्युक्तेरि ति भावः। अत्र हेतुमाशंकते—कुत एतदिति।योऽस्योत्प्रेक्षक इत्याद्यर्थे श्रुतिमाह—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।तमीश्वराणां परमं महेश्वरं तद्देवानां परमं तु दैवतं।तमात्मस्थं ये तु पश्यन्ति धीरास्तेषां शांतिः शाश्वती नेतरेषाम्"इति। सर्वेश्वरपरेयम् सुगमत्वान्न व्याख्याता। यः सृष्ट्वेत्यत्र सृष्टे कार्ये सोऽहमिति दर्शनादृषिर्जीवः। तथाच श्रुतिः—"आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनु वीक्ष्य नान्यदात्मनोऽपश्यत्सो हमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूत" इति।अर्थः—अग्रे सृष्टेः कार्ये प्रथमं पुरुषविधःपुरुषाकारो जीवात्मा एवासीत्। स अनु अनंतरं सर्वतो वीक्ष्यात्मनः स्वस्माद न्यन्नापश्यत्सोऽहमस्मीति व्याहरत् प्रथममुक्तवान्, ततः कारणादहंनामाभवत् तस्मात्कारणादेतर्हीदानीमपि केनाप्यामंत्रितः सन्नग्रे प्रथमं अहमयमित्येवमुक्त्वाऽथानन्तरमन्यन्नाम ब्रूते कस्त्वमित्युक्तः अहममुकोऽस्मीति। सुप्तः कुलायमित्यत्र श्रुतिः तद्यथा—"प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"इति। सम्भोगकाले मरणकाले वा प्रिययाऽऽलिङ्गितः प्राज्ञेन सुषु प्तिसाक्षिणा विशुद्धात्मना सम्परिष्वक्त एकीभूत इति श्रुतिपदार्थः।स्वामिनाम्—सर्वेति।सर्वश्रुतीनां शिरोरत्नैरुपनिषद्भिर्दीपस्थानीयैर्नीराजितं निर्मंछनीकृतं पदाम्बुजं यस्य तम्। "सुदीपैर्विविधैर्विष्णोश्चालनेन यतस्ततः। प्रोक्तं निर्मंछनं तद्धि नीराजनमिति स्मृतम्॥"इति संहितोक्तेः।पुनश्च कर्मिणां भोगप्रदं नम्राणां भक्तानां भक्तियोगप्रदम्।यद्वा—योगः सायुज्यं तत्प्रदमित्यर्थः॥इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे वेदस्तुतिर्नामसप्ताशी

तितमोऽध्यायः॥८७॥*॥**श्रीधरानुयायिनी**—समस्तवेदश्रुत्यर्थं स्मारयन्भोगमोक्षप्रदत्वेन हरिरेव भजनीय इत्याह—योऽस्येति।जीवानां सर्वपुरुषार्थसिद्धय एवमिदं सृष्ट्यादिकं करिष्यामीत्यालोच्य तथैव तत्र प्रवृत्तः सन् यो हरिः प्रकृतिपुरुषयोः प्रवर्तकोऽपि वियदादि विराडन्तं विश्वं तदन्तर्गतानि जीवभोगायतनानि देवमनुष्यतिर्यगादिशरीराणि च सृष्ट्वा तेषु शरीराभिमानिना सह साक्षिरूपेण प्रविश्य तानीन्द्रियादिरूपशरीराणि तत्तदिन्द्रियगोलकाधिष्ठातृदेवतारूपेण शास्ति स्वस्वविषयग्रहणे प्रवर्तयति जीवं च नानाभोगसुखदानेन पालयति।तथा येन हरिणा पालितोऽविद्याश्लिष्टो जीवो यं सम्प्राप्यानुक्षणं यच्चरणमूले दण्डवत्पतितश्चेत्तदानाद्यविद्यां तथा परैर्दृश्यमानेऽप्याविद्यके शरीरे सुप्त इवाभिमानं च यदनुकम्पया त्यजति तं भक्तभयहरं नित्यानन्दस्वरूपमहिम्ना दूरतोऽपास्तमायं च हरिं ध्यानोत्तरभाविनोपाधित्वाविशेषेण स्वस्वेतरोपाधिविरोधिना चरमसाक्षात्कारेण सत्कार्यमज्ञानं हरतीत्येकः परमात्मैव हरिस्तं प्रतिक्षणं ध्यायेत्।अनात्मप्रत्ययतिरस्कारपूर्वकात्मैकाकारप्रत्ययप्रवाहात्मकं तद्ध्यानं कुर्यादिति वेदस्तुतिसारम्।।“पुत्रस्यानन्वितालापैः पितराविव तुष्यतः।मम श्रीराधिकाकृष्णौ वेदगोलार्थभाषया।।”इति श्रीमद्भागवते श्रीधराऽनुयायिन्यां टीकायां वेदस्तुतौ सप्ताशीतितमोऽध्यायः॥८७॥*॥**विश्वनाथी**—उक्तं सर्वं संगृह्यानुस्मारयति—य एवास्य विश्वस्योत्प्रेक्षकः मयाऽनुशायिनां जीवानां कर्मिणां कर्म प्रोद्बोध्य कर्मफलस्य साधनार्थं भोगार्थं च तथा ज्ञानिनां ज्ञानफलस्य सायुज्यस्य साधनार्थं तथा भक्तानां भक्तिफलस्य प्रेमवत्पारिषदत्वस्य साधनार्थं बुद्धीन्द्रियादिकं सृष्ट्वा एवमेवं तत्रतत्र प्रेरयिष्यामीत्यालोचक इत्यर्थः । त्रैकालिकीं सत्तामाह—अस्य विश्वस्यादिमध्यनिधनेषु य एव वर्तत इति । विश्वसृष्टेः पूर्वं विश्वमध्ये विश्वनाशेऽपि । यदुक्तं भगवतैव—“अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥” इति । सर्वकारणत्वं सर्वनियन्तृत्वं चाह—योऽव्यक्तेति । सर्वं जगदिदं यन्मयं तयोः मायाजीवयोरपि य एवेश्वरः कारणं नियन्ता च तयोस्तच्छक्तित्वाच्छक्तीनां च शक्तिमतोऽनन्यत्वादव्यक्तजीवावपि स एवेत्यतस्तस्यैवोपादानत्वं निमित्तत्वं नियन्तृत्वं च सिद्धम् । प्रवेशविसर्गावपि करोतीत्याह—य एवेदं सृष्ट्वानुप्रविश्य ऋषिणा ब्रह्मणा पुरः देवमनुष्यतिर्यगादिशरीराणि चक्रे । तथा ऋषिणेति । ऋषिवन्निर्लेपत्वाद्दृष्टिरन्तर्यामी तेन स्वस्वरूपभूतांशेन ताः पुरः शास्ति । यद्भक्त्यैव जीवः संसारं तरतीत्याह—यं सम्पद्यानुशयी अविद्याश्लिष्टो जीवः अन्वनु दण्डवत्प्रणामैश्चरणमूले शेत इति तैर्व्याख्यातम् । अजां कार्यकारणरूपां मायां त्यजति । ननु, भगवत्प्रपन्नस्यापि मायिकं शरीरं दृश्यत एव तत्राह—सुप्ते जनः कुलायं स्वशरीरं जहाति यथा वर्तमानमपि तन्नानुसन्धत्ते तद्वत् भगवत्प्रपन्नानां शरीराभिमानत्याग एवाविद्यात्याग उच्यत इत्यर्थः । क्वचित्तदत्यागस्तु सम्यक्प्रपत्त्यभावमूलक एव ज्ञेयः । किञ्च—साधननिरपेक्षमपि तस्य क्वचित्संसारनिस्तारकत्वमाह—केवलस्य भावः कैवल्यमेकाकित्वं तेन जीवानुष्ठितमोक्षसाधनविनाभूतेनापि निरस्ता दूरीकृता योनिर्जीवाविद्या येन तम्। ‘यमिह निरीक्ष्य हता गताः स्वरूपम’ इति भीष्मोक्तेरघबककेश्यादीनामन्येषां बहूनां मोक्षसाधनं विनापि मोक्षदर्शनादिति भावः । विशेषणेनानेन स्वयं भगवाञ्छ्रीकृष्ण एव द्योतितः । हरिं स्वमाधुर्येण प्रेमवतां मनोहारकस्तम् । अभयं यथा स्यात्तथा स्वीयकर्मकालकूटविविधवादिभ्यो भयं परित्यज्यैव निरंतरं ध्यायेदिति विधिरुक्तः । यद्वा—शस्त्रास्त्रादिपरित्यागेन परिगृहीतवेणुत्वात्सर्वतो निर्भयं सर्वेश्वरत्वादिति भावः ॥९०॥ इति श्रीमद्भागवते दशमस्कन्धोत्तरार्धे विश्वनाथीटीकायां वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः॥८७॥

**नीलकंठी**—तमिमं सर्वोपनिषदर्थं संगृह्य स्मारयति—योऽस्योत्प्रेक्षक इति । यो हरिः समूलसंसारदुःखसंहर्ता अस्य चेतनाचेतनस्य जगतः आदिमध्यनिधने सर्गस्थित्यन्तविषये उत्प्रेक्षकः कल्पकः रज्जुरिव भुजङ्गस्य तेन जगद्विवर्ताधिष्ठानत्वरूपमुपादानत्वमुक्तम् । अत्र हेतुः—योऽव्यक्तजीवेश्वरः अव्यक्तं माया जीवश्चिदाभासस्तयोरीश्वरः प्रवर्तकः “प्रधानक्षेत्रज्ञपतिर्गुणेशः ” इति श्रुतेः । अज्ञानविषयीकृता शुक्तिर्यथा रजताभासस्य रजतज्ञानाभासस्य च प्रवर्तिका एवं ब्रह्माप्यनादौ जीवेश्वरविभागे जीवाश्रिताज्ञानविषयीकृतं सत्सदाभासस्य कार्यकारणस्य चिदाभासस्य प्रवर्तकमितो युक्तमस्योपादानत्वमित्यर्थः । अज्ञा[illegible]श्रयविषयभेदाच्चेतनभेदः प्राप्तः स्रष्टृप्रवेष्ट्रोरैक्यादौपाधिक इत्याशयवानाह—यः सृष्ट्वेदमनुप्रविश्येति । इदं वियदादिविराडन्तं सृष्ट्वाऽनुप्रविश्य च ऋषिणा । इत्थंभावे तृतीया । ब्रह्मरूपेण पुरः जरायुजाण्डजस्वेदजोद्भिज्जा[illegible]धानि [illegible]पि चक्रे निर्ममे । ताः पुरः तत्तदिन्द्रियगोलकाधिष्ठातृदेवतारूपेण शास्ति प्रवर्तयति । स्वस्वविषयग्रहणे यं हरिं सम्पद्याभेदेन प्राप्य समाधौ अनुशयी कर्मबद्धो जीवः अजां कर्ममूलभूतामविद्यां [illegible] त्यजति [illegible] तत्र दृष्टान्तः—सुप्तः कुलायं यथेति । यथा—सुषुप्तः स्थूलसूक्ष्मदेहौ त्यजति एवं समाहितः कारणदेहमपीत्यर्थः । “द्वैतस्याग्रहणे तुल्यमुभयोः प्राज्ञतुल्ययोः । बीजनिद्रायुतः प्राज्ञः सा तु तुर्ये [illegible]” इति श्रुतिसिद्धोऽयं दृष्टान्तः । अत एव तं हरिं कैवल्येन निरुपाधिकत्वेन निरस्तं योनिर्मूलाज्ञानं येन स तथा । एतेन ब्रह्मैव संसरति ब्रह्मैव मुच्यत इत्यपि दर्शितम् । अत एवाभयं संसारभयशून्यं [illegible]द्वितीयाद्वै भयं भवति ” इति श्रुतेः । अजस्रं सन्ततं ध्यायेत् अनात्मप्रत्ययतिरस्कारेणात्मैकाकारं प्रत्ययप्रवाहं कुर्यात् आत्मनो । वृत्तिव्याप्यत्वाद्ध्यायेदित्युक्तं न तु पश्येदिति प्रत्ययब्रह्मप्रकाशस्य स्वरूपत्वादि[illegible]वः ॥ ९० ॥ व्याचक्रतुः श्रीधररामचंद्रौ वेदस्तुतिं गामिव सूर्यचन्द्रौ । व्याचक्र चान्यः कवितारकाभः सुलोचनानां पदवीप्रसिद्ध्यै ॥ १ ॥ पारावाराश्रितकचकविर्ज्येष्ठगंगाप्रतीची सेव्या चातुर्धरकुलभृतां कूर्परग्रामवासात् । काश्यां तेषां हरिहरपरः कोऽपि गोविंदसूनुः फुल्लांबाजः श्रुतिनुतिमसौ व्याकरोन्नीलकण्ठः ॥ २ ॥ इति श्रीमन्नीलकण्ठीये वेदान्तकतके वेदस्तुतितात्पर्यपरिशुद्धिर्नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

॥ समाप्तेयं वेदस्तुतिः ॥

कर्मण्यकोविदाः स्तब्धा मूर्खाः पंडितमानिनः ॥ वदंति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ॥६॥ रजसा घोरसंकल्पाः कामुका अहिमन्यवः ॥ दांभिका मानिनः पापा विहसंत्यच्युतप्रियान् ॥ ७ ॥ वदंति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ॥ यजंत्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नंति पशूनतद्विदः ॥ ८ ॥

वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥" इत्यादिना ॥ ५ ॥ भक्तिमार्गदार्ढ्याय तेषां मोहं प्रपंचयन्निंदति कर्माणीत्यादिना । अकोविदा यथा बंधकं न भवति तथा कर्तुमज्ञाः । न चाभिज्ञान्पृच्छंति । यतः स्तब्धा अनम्राः । स्तब्धत्वे हेतुः । यतो मूर्खा अपि पंडिता वयमिति मानवंतः । अतः " अपाम सोमममृता अभूम ॥ अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ॥ यत्र नोष्णं न शीतं स्यान्न ग्लानिर्नाप्यरातयः " इत्यादिकया यया माध्व्या गिरोत्सुकाः संतो मूढास्तया चाटुकानप्सरोभिः सह विहरिष्याम इत्यादिप्रियान् शब्दान्वदंति ॥ ६ ॥ किं च तेषां कर्माभिनिवेशात्कामक्रोधदंभादयो वर्धंत इत्याह त्रयेण । रजसेति । घोरोऽभिचारादिः संकल्पो येषां ते । अहिवन्मन्युर्येषां ते ॥ ७ ॥ कामुकत्वं प्रपंचयति । वदंतीति । उपासिताः स्त्रियो यैर्न तु वृद्धास्ते मैथुन्यं मिथुनसुखमेव परं न त्वातिथ्यादि येषु गृहेषु तेष्वाशिषो वदंति । " इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् । इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ " इत्याकाराः । दांभिकतां प्रपंचयति । यजंतीति ।

आम्नायवादिनो जैमिनीयाः, आम्नायः कर्मकाण्डम्, ते हि तन्मात्रवदनशीलास्तस्य सुतरां ब्रह्मकांडस्य याथार्थ्यवेदिनोऽनीश्वरवादिनः ॥ ५ ॥ ननु वेदोक्तकर्मणस्तत्त्वज्ञानहेतुत्वात्कथं ते मुह्यन्ति "कर्मणा ज्ञानमातनोति " इति श्रुतेरिति चेत्तेषां तदुदितकर्मयाथार्थ्यानवबोधादित्याह—अकोविदा इति । कुतो न पृच्छन्ति यतो हेतोः, अतो पंडितंमन्यत्वादेव । यत्र स्वर्गे । अरातयः शत्रवः ॥ * ॥ ' निन्दा निन्दितुं न प्रवर्तते किन्तु विधेयंस्तोतुम्' इति न्यायेन विधेयस्य: भक्तिमार्गस्य दृढीकरणाय तेषां कामकर्मिणां मीमांसकानाम् । अतः पंडितमानितत्वात् । सोमममृतमपाम पास्यामः अमृता मरणशून्या अभूम भविष्यामः । चातुर्मास्यसंज्ञयागेन यष्टुं शीलस्य सुकृतमपूर्वमक्षय्यमनश्वरम् । यत्र स्वर्गे ग्लानिर्बलक्षयः। माध्व्या मादकया । चाटुकान्—हंहो अप्सरोभिः सह विहरिष्याम इत्यादिप्रियान्॥६॥अन्यदनिष्टमाह—किं चेति । तेषां वेदतात्पर्यानभिज्ञानाम् । मन्युः क्रोधः 'मन्युः क्रोधे क्रतौ युधि' इति कोशात्। विहसंति तेषु दोषानारोप्य निंदंति, कामुका विषयलोलुपाः॥*॥अभिनिवेशः स्वीकृतस्य पुनस्त्यागासहिष्णुत्वम् । अभिचार्यते मार्यतेऽनेनेत्यभिचारो मारणप्रयोगः,आदिना परस्त्रीवशीकारादिः॥*॥अत्र **संदर्भः**— भ्रंशाधिपातौ च क्रमेण दर्शयति—रजसेति त्रिभिः । तत्र प्रथमेन सर्वेषामेव तेषां निन्दा, द्वितीयेन विप्राणां,तृतीयेन राजन्यवैश्यानामिति ज्ञेयम् । एते काष्ठमालाभृतो भिक्षुका उदरंभरा विष्णुमाराध्य दुःखमेव प्राप्स्यंतीति अच्युतप्रियान्विहसन्ति ॥ ७ ॥ परं केवलम् । आशिषोऽभिलषितान् । अन्नविधानं पाकप्रक्रियोदितान्नसंपादनम्, दक्षिणा चाचार्यर्त्विग्भोक्तृभ्यो हिरण्यादिरूपद्रव्यदानं तच्च सा च यत्र न संपादिते केवलायासव्यर्थव्ययरूपम् ' हतं यज्ञमदक्षिणम् ' इत्याद्युक्तं तामसं कर्म कुर्वन्ति तदा यजनावसरे घ्नन्ति हिंसन्ति न त्वालभंत इत्यर्थः ॥ * ॥ उपासिताः पादपतनादिभिः सेविताः । आतिथ्यादि आतिथ्यमतिथियोग्यसत्कारः, आदिना चनपुराणश्रवणादिग्रहः । मूले चोऽवधारणे, आशिष एव न तु ज्ञानवैराग्यादिवार्ताः । अन्नानां यथोदितरीत्या पाकादिकरणम् , दक्षिणा च ' हतं यज्ञमदक्षिणम् ' इत्युक्तेर्दक्षिणाप्यवश्यं देया । यद्वा—अन्नञ्च विधानं

श्रिया विभूत्याभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ॥ जातस्मयेनांधधियः सहेश्वरान्सतोऽवमन्यंति हरिप्रियान्खलाः ॥ ९ ॥ सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ॥ वेदोपगीतं च न शृण्वतेऽबुधा मनोरथानां प्रवदंति वार्तया ॥ १० ॥ लोके व्यवायाऽमिषमद्यसेवा नित्यास्तु जंतोर्न हि तत्र चोदना ॥ व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ ११ ॥

असृष्टान्नविधानदक्षिणं न सृष्टा न संपादिता अन्नविधानदक्षिणा यथा तथा यजंति । तदा च वृत्त्यै जीविकार्थं परं केवलं पशून् घ्नंति । अतद्विदो हिंसादोषानभिज्ञाः ॥ ८ ॥ मानिवां प्रपंचयति । श्रियेति । श्रिया धनादिसंपदा । विभूत्या ऐश्वर्येण । श्यादिना जातो यः स्मयो गर्वस्तेनांधा धीर्येषां ते ईश्वरसहितान्सतोऽवमन्यंते ॥ ९ ॥ किंच एवं वर्तमानास्ते वेदतत्त्वार्थं स्फुटमपि न जानंतीत्याह । सर्वेष्विति । केन रूपेणावस्थितं तदाह । आत्मानमीश्वरमात्मतया ईश्वरतया चावस्थितम् । एवमप्यसंगतामाह । यथा खम् आकाशम् । पुरुषार्थतामाह । अभीष्टम् । स्फुटत्वमाह । वेदोपगीतं चेति । तत्कुतः । यतो मनोरथानां व्यवायामिषमद्यसेवाविषयाणां वार्तया प्रवदंति । निवृत्तिपरं संतं वेदं प्रवृत्तिपरं वर्णयंति ॥ १० ॥ ननु व्यवायादीनामपि "ऋतौ भार्यामुपेयात् । हुतशेषं भक्षयेत्" इत्यादिना विहितत्वात्किमेवं निंद्यतेऽत

यथाश्रुति होमादिकरणं च दक्षिणा चान्नविधानदक्षिणम् । तदा च अन्नविधानाद्यभावे ॥ ८ ॥ अभिजनः परिवारमदः । सतो भागवतान् ॥ * ॥ श्रीविभूत्योरेकार्थत्वेन पौनरुक्त्यमाशंक्य धनादिसंपदेति व्याख्यातम् । अभिजनेन सत्कुलेन, विद्ययाऽध्ययनेन, त्यागेन दानेन, रूपेण सौंदर्येण, बलेन देहपाटवेन, कर्मणा यागादिना ॥ ९ ॥ तेषां हरिभक्तावज्ञानेन हरिप्रसादाभावाद्वेदतात्पर्यमप्यन्यथैव प्रतीयत इत्याह–किं चेति । तदवस्थानम् । एवमपि आत्मत्वेश्वरत्वे अपि उभे चैते संगावहे, विषयसंसर्गप्रेरणरूपधर्मेणेति ज्ञेयम् । तद्वेदतात्पर्याज्ञानं कुत इति ॥ * ॥ एवं कामुकत्वमानित्वादिप्रकारेण वर्तमानास्ते कर्मठाः वेदस्य तत्त्वार्थं वास्तवार्थं श्रीहरिम् "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतेः। स्फुटं प्रव्यक्तम् । आत्मतया रश्मीनां सूर्यवन्मूलरूपत्वेन ईश्वरतयांतर्यामितया । एवमपि द्वैविध्यत्वेनावस्थितत्वेपि । पुरुषार्थताम् परमानन्दरूपताम् । वेदोपगीतं वेदांतैकवेद्यम् 'नमो वेदांतवेद्याय' "नावेदविन्मनुते तं बृहन्तम्" इति श्रुतेः । तत्कुतः–स्फुटत्वेप्यश्रवणे को हेतुरित्यर्थः। अग्रिमपद्यसंगतिलाभाय मनोरथपदं तद्विषयप्रदर्शनेन व्याचष्टे–व्यवायेत्यादि॥*॥**संदर्भस्तु**–तेषां मोहजं प्रमादं दर्शयति–सर्वेष्विति । तत्र शश्वदिति विद्वदनुभवसिद्धत्वं वेदेति वेदासिद्धत्वं चेश्वरस्य दर्शितम् ॥ * ॥ **विश्वनाथस्तु**–दृढतरं प्रबोध्यमाना अपि ते नैव प्रबोध्यन्त इत्याह–सर्वेष्विति । यथा खमाकाशमित्यसंगत्वम्, अभीष्टमित्यसंगत्वम्, ईश्वरमित्यनाराधने दंडदातृत्वं वेदोपगीतं चेति सर्वथा विख्यातत्वं चोक्तम् । न शृण्वत इति–केन प्रकारेणेत्यत आह–मनोरथानां व्यवायामिषादिविषयाणां वार्तयेति भगवत्कथायां सद्भिः प्रवर्तितायामपि तत्र विषयभोगवार्तां बलात्पातयन्तीत्यर्थः । प्रवदंतीति तदा स्वयमेव प्रकर्षेण वक्तारा भवन्तीत्यर्थः ॥ १० ॥ अत्र आक्षेपं करोति–नन्विति । आदिना आमिषमद्ययोग्रहः । ज्योतिष्टोमादौ पश्वंगानां होमे हुतशेषं मांसम्, सौत्रामण्यां सुराग्रहैर्मद्यहोमे हुतशेषं मद्यम्, इष्टौ च पुरोडाशं च भक्षयेत् । विवाहविधिपरिगृहीतां पत्नीं षोडशादिनेष्वनिषिद्धदिने गच्छेदित्यादिविधिप्राप्ताः स्त्रीसंगादयो विरागिणाऽप्यवश्यानुष्ठेयत्वान्निन्दार्हा नेत्यर्थः । विधिर्नास्तीति अपूर्वविधिर्नास्तीत्यर्थः । तथाहि–"विधिरत्यंतमप्राप्तौ नियमः पाक्षिके सति । उभयोर्नित्यतः प्राप्ते परिसंख्येति गीयते ॥" इति । तत्रापूर्वविधिर्यथा–" व्रीहीन्प्रोक्षेद्दहरहः संध्यामुपासीत " इति । अत्र

राजोवाच ॥ देवासुरमनुष्येषु ये भजंत्याशिवं शिवम् ॥ प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम् ॥ १ ॥ एतद्वेदितुमिच्छामः संदेहोऽत्र महान्हि नः ॥ विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः ॥ २ ॥ श्रीशुक उवाच ॥ शिवः शक्तियुतः शश्वत्त्रिलिंगो गुणसंवृतः ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥

अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते ॥ ततोऽर्वाग्देवभक्तस्तु विभूतिमिति वर्ण्यते ॥ १ ॥ हरिर्भजतां मुक्तिद इत्युक्तमभयं ध्यायेदजस्रं हरिमिति तत्र शंकते । देवासुरेति । अशिवमवधीरितभोगम् । भोजा भोगिनः । लक्ष्म्याः पतिं सर्वभोगयुक्तम् ॥ १ ॥ २ ॥ अन्योन्योपमर्देन तमसस्त्रैविध्यात्त्रिलिंगः । त्रिलिंगत्वमाह । वैकारिक इति ।

ततो विष्णोरर्वाचामर्वाचीनानां देवानां भक्तो विभूतिमैश्वर्यमेव न तु कैवल्यम् ( १ ) । तत्र हरिदत्तमुक्तौ । प्रायःशब्देन न केवलं धनप्रदत्वमेव शिवस्य किंतु सर्वाभीष्टप्रदत्वमपीति ध्वनितम् । एवं विष्णावपि न केवलमोक्षप्रदत्वमेव विष्णोर्भक्तेच्छानुसारेण सर्वार्थदत्वमेवेति बोध्यम् । हरिं ये भजन्ति ते धनिनो नेति योज्यम् ॥ * ॥ **तोषिणी**—एवं सर्वथा सर्वतः श्रीकृष्णस्योत्कर्षमाकर्ण्यापि कांश्चिदसंतुष्टान् केवलत्रिदेवीमात्रदृष्टीनैहिककामिनः शैवान्कटाक्षविषयीकुर्वन्नेव कृपया शिक्षयन्पृच्छति—देवेति द्वाभ्याम् । प्राय इति । प्रायिकत्वात्तयोः कदाचिद्व्यभिचारश्चेन्न तेन संदेहापगम इति भावः ॥ अत्र **विश्वनाथः**—"निर्गुणौ विष्णुतद्भक्तौ मिथोऽवाप्तमदौ सदा । सगुणेषु मिथः क्लेशो महेशतत्कयोरिव ॥" ब्रह्मपरमात्मभगवत्स्वरूपेषु भगवत्स्वरूपस्यैव तदुपासकस्य च श्रुतिवाक्यैरेव सर्वोत्कर्षमुक्त्वा इदानीं सार्धाध्यायेन ब्रह्मविष्णुरुद्रेष्वपि विष्णोरेव सर्वोत्कर्षात्सेव्यत्वमाह—ननु, 'ध्यायेदजस्रं हरिम्' इति त्वं हरिभजनमेव विदधासि तदपि हरिभजने दारिद्र्यमाशंक्य किमिति सर्वे हरमेव भजंतीति पृच्छति—देवेति । अशिवं चिताभस्मकपालपात्रादियोगाद्बहिर्दर्शिजनैरमंगलत्वेन प्रतीयमानम् । लक्ष्म्याः पतिं तु भजंतो न धनिनो नापि भोगवंतो भवंति कुत इत्यर्थः ॥ १ ॥ एतद्विरुद्धफलदातृत्वम् । अत्र विरुद्धफलदाने । विरुद्धशीलयोः श्मशानाटनभूतगणपरीतत्वादि रुद्रस्य, देवगणपरीतत्वेन शुद्धभूम्यटनादि सुशीलं विष्णोः । यद्वा—सविभूतिकत्वानिर्विभूतिकत्वस्वभावयोः विरुद्धा गतिर्लक्ष्मीपतिभक्तानां धनराहित्यं निर्धनभक्तानां धनिकत्वं चेत्यर्थः ॥ * ॥ **तोषिणी**—एतदिति । अत्र किं कारणं तदित्यर्थः । इच्छामइति बहुत्वं तत्र वर्तमानानां तेषां सकटाक्षसंग्रहात् । अत्र पूर्वोक्ताविरोधे तमेवाह—विरुद्धं शीलं पूर्वोक्तस्वभावो ययोस्तयोः । प्रभ्वोरिति कर्मणि षष्ठी । भजतां विरुद्धा तत्स्वभावविपरीता क्रमाद्धनभोगप्राप्तितन्नाशलक्षणा । गतिः फलम् । अतः श्रीशिवभक्तानां साक्षाद्धनादिविभूतिदर्शनाद्धरेः पत्न्यपि लक्ष्मीः श्रीशिवस्याधीनेति तस्यैवोत्कर्षो घटेतेति भावः । साक्षात्तथानुक्तिस्तु संकोचादेवेति भावः ॥ अत्र **विश्वनाथः**—विरुद्धेति । भिक्षुकं शिवं भजंतः सम्पन्नाः स्युः लक्ष्मीपतिं विष्णुं भजंतस्तु भिक्षवो भवंतीति वैपरीत्यमनुचितमिति भावः ॥ २ ॥ अत्रोत्तरं तु सत्त्वादिगुणतारतम्यसंबद्धदेवसेवनेन तदनुकूलैव फलावाप्तिरित्याह—शिवः शक्त्याहंकाररूपया युक्तः । शश्वत्सदैव । स चाहंकारः—अन्योन्योपमर्देनान्योन्यगुणसंबंधेन च तमसः—" तमःप्रधानस्त्वभवद्योऽहङ्कारः प्रमोहनः " इत्युक्तेः । तमोगुणप्रधानस्याहङ्कारस्यैव शुद्धतमोरजोमिश्रतमस्सत्त्वमिश्रतमोरूपभेदत्रयवत्त्वात्, त्रिलिङ्गत्वम् । तदेवाह—वैकारिक इति ॥ * ॥ तत्र—" सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥ " इत्यादिकस्य द्वितीयादौ ब्रह्माद्युक्तस्यानुसारेण शास्त्रान्तरविलक्षणं सर्ववेदेतिहासवेदान्तसारं श्रीभागवतं सिद्धान्तं वदँस्तत्र चास्तां तावत्स्वयं भगवच्छ्रीकृष्णमाहात्म्यं तदंशांशस्यापि कृतगुणाधिष्ठातृत्वलीलस्य श्रीविष्णोर्वैलक्षण्यं श्रूयतामिति बोधयंस्तच्चाभेदश्रवणेऽपि शिवविष्ण्वोरुपाधिधर्मयुक्तत्वायुक्तत्वे निर्दिश्य प्रतिबिम्बबिम्बवन्न्यूनाधिकशक्तिव्यञ्जनया स्थापयँस्तदुत्प्रोक्षिते गुण एव दोषत्वं दोषं एव

ततो विकारा अभवन्षोडशामीषु कंचन ॥ उपाधावन्विभूतीनां सर्वासामश्नुते गतिम् ॥ ४ ॥
हरिर्हि निर्गुणःसाक्षात्पुरुषःप्रकृतेःपरः ॥ स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ५ ॥

अहमहंकार इति ॥ ३ ॥ विकारा मनइंद्रियभूतरूपाः । षोडशातींद्रियदेवानामभेदविवक्षया । कंचन यत्किंचिद्विकारोपाधिकं भजन्नुपाध्यनुरूपाणां विभूतीनां प्राप्नोतीति ॥ ४ ॥ उपद्रष्टा साक्षी सन् । यतः सर्वदृक् सर्वं पश्यति । अतः प्रकृतेः पर इति । अत्रेदं तत्त्वम् । "वस्तुनो गुणसंबंधे रूपद्वयमिहेष्यते ॥ तद्धर्मायोगयोगाभ्यां बिंबवत्प्रतिबिंबवत् ॥ गुणाः सत्त्वादयः शांतघोरमूढाः स्वभावतः ॥ विष्णुब्रह्मशिवानां च गुणयंतृस्वरूपिणाम् ॥ नातिभेदो भवेद्भेदो गुणधर्मैरिहांशतः ॥ सत्त्वस्य शांत्या नो जातु विष्णोर्विक्षेपमूढते ॥ रजस्तमोगुणाभ्यां तु भवेतां ब्रह्मरुद्रयोः ॥ गुणोपमर्दतो भूयस्तदंशानां च भिन्नता ॥ अतः समग्रसत्त्वस्य विष्णोर्मोक्षकरी मतिः ॥ अंशतो भूतिहे

गुणत्वं च प्रतिपादयँस्तद्विधानामतिमूर्खत्वं व्यञ्जयति—शिव इति यावदध्यायसमाप्ति—तत्रैव शिवस्योपाधिधर्मयुक्तत्वं दर्शयंस्तादृशविभूतिहेतुत्वं बोधयति द्वाभ्याम् । शश्वच्छक्तियुतक्रमेणाविर्भवन् प्रथमतस्तावन्नित्यमेव शक्त्या गुणसाम्यावस्थप्रकृतिरूपोपाधिना युक्तः गुणक्षोभे सति त्रिलिङ्गो गुणत्रयोपाधिः प्रकटैश्च सद्भिस्तैर्गुणैः संवृतश्च । ननु, तमउपाधित्वमेव तस्य श्रूयते कथं तत्तदुपाधित्वं तत्राह—वैकारिक इति । अहमहंत्वं हि तत्तद्रूपेण त्रिधा—स च तदधिष्ठातेत्यर्थः मुख्यं यस्तत्रस्थगुणद्वयमप्युपाधत्ते तस्य त्रिगुणत्वादित्यर्थः ॥ **विश्वनाथस्तु**—शक्त्या युतः संसृष्टः तिलतण्डुलवन्मिश्रित एव न तु तादृप्यं प्राप्तः । गुणैः संवृतः अस्मान्कृपया स्वीकुर्विति वृतत्वात्त्रिलिङ्गस्त्रिगुणमयः न तु जीव इव तैर्बद्ध इति भावः । त्रिगुणमयत्वं विवृणोति—अहं त्रिधेति । अहङ्कारात्मकः स एव त्रिविधो भवत्येवेति ॥ ३ ॥ ततस्त्रिविधाहङ्कारात् । नन्विन्द्रियाधिष्ठातृदेवानामपि सात्त्विकाहङ्कारकार्यत्वेनाधिकानां दिग्वातादीनां सत्त्वात्कथं षोडशेति चेदत्राह—अतीन्द्रियदेवानामिति । अमीषु षोडशसु आकाशादिष्वधिष्ठानप्रकारेषु कञ्चनाकाशाद्युपाधिकं "भवायाकाशमूर्तये नमः" इत्यादिमन्त्रोक्तमूर्तिकं शिवमुपाधावन् भजन् विभूतीनामुपाध्यनुरूपाणां सर्वासां गतिं स्वरूपं प्राप्नोति । आकाशोपाधिकसेवनात्सर्वशब्दज्ञानं विषयेष्वसंगं च, जलोपाधिकसेवनेन वृष्ट्यादिसामर्थ्यं रसपरावर्तनसामर्थ्यं च, तेजउपाधिकसेवने नाग्न्याद्यवगाहनतत्स्तम्भनादिसामर्थ्यं च लभते । एवं यथायथं योज्यम् ॥ * ॥ ननु भवत्वेवं सोपाधिरसौ प्रकृते किमागतं तत्राह—तत इति । ततस्तेन भगवत्प्रतिनिधिभूतेनाधिष्ठितादहन्तत्त्वात् षोडशविकारा येऽभवन्, अमीषु विकारेषु मध्ये सर्वासां विभूतीनां सम्बन्धे किञ्चनोपाधावन् तदुपाधिकत्वेन तमुपासीनो गतिं प्राप्यं फलं लभत इति इन्द्रियाणां देवानाञ्चाभेदात्तानि दश, मन एकम्, भूतानि पञ्चेति षोडश । किञ्चन जैह्व्यमौपस्थ्यं मानसं वा सुखमुद्दिश्य शिवं भजन्सर्वासां विभूतीनां सम्पत्तीनां गतिं स्वरूपं प्राप्नोति तेषां परस्परसापेक्षत्वादेकप्राप्तावपि सर्वविषयसुखानि प्राप्नोति तत्सुख एव सर्वसम्पत्तीनां पर्याप्तेर्भजनतारतम्यात्तत्तारतम्यं प्राप्नोति । अतः शिवस्य त्रिगुणमयत्वात्सम्पदामपि त्रिगुणमयत्वात्तद्भजने तत्प्राप्तिरिति । न त्वदुक्तो विरोध इति भावः । शिवविष्ण्वादिभेदाभेदविचारस्तु प्रथमस्कन्धे—'सत्त्वं रजस्तमः' इति पद्यव्याख्याने कृतः स तत्रैव दृश्यः ॥ ४ ॥ अत्र उपाख्याने । इदं तत्त्वं तात्पर्यम् । वस्तुनः चितः । गुणसम्बन्धे सति एकस्यैव रूपद्वयं भवति । तद्धर्माणां गुणधर्माणाम् । योगेन सगुणत्वमन्यथा निर्गुणत्वमिति । निर्गुणं बिंबसमं सगुणं तु प्रतिबिम्बसममिति । स्वभावतः स्वभावेन स्वरूपेणेति यावत् । गुणनियन्तृत्वं स्वरूपं येषां तेषां गुणनियन्त्रिति भावप्रधानो निर्देशः । वस्तुतो भेदो ब्रह्मादीनां भेदो नास्ति । गुणधर्मकृतो भेदोऽपि न सर्वथा किन्त्वंशत एवेत्याह—नाति भेदइत्यादि । ब्रह्मरुद्रयो रजस्तमोगुणकृते विक्षेपमूढते भवेतां स्तः । सत्त्वगुणसम्बन्धेनांशतो ब्रह्मापि विष्णुरेव । तथा रुद्रोऽपि । तमआदिगुणसम्बन्धेन विष्णो रुद्रता ब्रह्मतापि च भवत्येवेत्याह—गुणोपम

निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ॥ शृण्वन्भगवतो धर्मानपृच्छदिदमच्युतम् ॥ ६ ॥

तुश्च तथाऽऽनंदमयी स्वतः ॥ अंशतस्तारतम्येन ब्रह्मरुद्रादिसेविनाम् ॥ विभतयो भवंत्येव शनैर्मोक्षोऽप्यनंशतः ॥ " इदमेवाभिप्रेत्य तत्रतत्रोच्यते ' श्रेयांसि तत्र खलु

र्दत इत्यादि । समग्रसत्त्वस्य विष्णोः सम्बन्धिनी मतिर्बुद्धिरुपासनारूपा मोक्षकरी, अंशतो रजआदिसम्बंधेन तदुपासा विभूत्यादिहेतुरपि । स्वतः स्वभावतः । सात्त्विकीत्वेनानन्दमय्येवेति । एवं ब्रह्मरुद्रभक्ता अपि रजस्तमउपाधितया ये तावुपासते ते विभूत्यादि लभंते । ये शुद्धसत्त्वरूपत्वेन तावुपासते ते मोक्षमपीत्यभिप्रेत्योक्तं स्वामिनांशतस्तारतम्येनेत्यादि । इदमभिप्रेत्य समग्रसत्त्वरूपत्वं विचार्य । तत्रतत्राख्याने । एवं च सति त्रयाणां वास्तवाभेदे सति । न किञ्चिदसमञ्जसम् । न त्रयाणामन्यतमस्य न्यूनतेति तत्तद्भक्तानां विष्णुशिवादिभक्तानां कलह एकस्य वैशिष्ट्यापादनमन्यस्य हीनतापादनं च मोहमात्रमज्ञानमेवेत्यर्थः । अथ चात्र प्रकृतोपयोगिविशेषोऽपि शास्त्रान्तरविचारितो लिख्यते । तथाहि—ब्रह्मादीनामेकरूपत्वं चेत्तर्हि तत्तन्माहात्म्यपरपुराणादिष्वितरनिन्दा न स्यात्, दृश्यते च सा, तथा च—तदन्यथानुपपत्त्या साम्यमपि दुर्लभमैक्यस्य तु का कथा । तथा च ' पतन्तमनु धावतो बद्धोऽपि गतः ' इति न्यायापात इति चेदत्राहुः—श्यालशुनकन्यायेन भेदवादिनः कोपोत्पादनाय तदिष्टदेवस्यान्यपरपुराणेष्वपकर्षवर्णनामिति । परे तु कल्पभेदमाश्रित्य स्वेच्छया परस्पर स्माजन्मानिमित्तकं क्वचिदुत्कर्षापकर्षवर्णनमित्याहुः—'नहि निन्दानिन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुम्' इति न्यायाद्विधेयं हि स्तूयते वस्तु, इतिन्यायप्राप्ततत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्ने शापकर्षवर्णनम् । तच्च 'यत्परः शब्दः' इतिन्यायात्स्तुतिपरमेव । योऽर्थः परस्तात्पर्यविषयो यस्य स यत्परः इति । न त्वन्यनिन्दापरमपि फलाभावात् उभयपरत्वे वाक्यभेदापत्तेश्च । अन्यत्रापि ह्येवं दृश्यते । तद्यथा—'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायान्नानाशाखाविहितमप्यग्निहोत्रं न भिद्यते इति स्थिते, केचित् "उदिते जुहोति" इति श्रुतिमाश्रित्योदितेऽर्के होमं कुर्वन्ति, केचित् "अनुदिते जुहोति" इति श्रुतिमवलम्ब्यानुदिते जुह्वति । तत्र ये शाखिन उदये जुह्वति ते "उदयन्न खलु वा आदित्य आहवनीये तु रश्मीन्संदधाति" इत्युपक्रम्य "प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रं दिवाकीर्त्यमदिवः कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्" इत्यनुदितहोमं निन्दन्ति । ये त्वनुदये जुह्वति ते "आदित्यो वा अस्तं यन्नग्निमनु प्रविशति" इति श्रुतिमुपजीव्य "यदुदिते सूर्ये प्रातर्जुहुयाद्यथातिथये प्रद्रुताय शून्यायावसथाहार्यं हरति तादृगेव तत्" इत्युदितहोमं निंदंति । अनयोः स्वार्थतात्पर्यकल्पने रागप्राप्तसुरापानादिवत् कालद्वये त्याज्यस्य शेषिणो होमस्यैव बाधः । तथा च—"यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादयश्चोदना उपरुध्येरन् । एवं च कालभेदेनाग्निहोत्रमिव गुणभेदेन विग्रहभेदेन वा नेशो भिद्यते ततश्चैकस्मिन्नीशे यो गुणादिभेदेन भेदं प्रकल्प्यैकविग्रहावच्छिन्नमुपासीनोऽन्यं निन्दति स ईशविमुखः स्वामिद्रोहान्नरकमेतीति ज्ञेयम् । तस्मान्नैतावता सर्वविग्रहावच्छिन्नेशैक्य विघातः शंक्य इत्यलं प्रपञ्चेन प्रकृतमनुसरामः ॥ * ॥ अथ श्रीविष्णोरुपाधिराहित्यं दर्शयंस्तादृशपरमपुमर्थहेतुत्वं स्थापयति—हरिर्हीति । हि प्रसिद्धौ हेतौ वा । प्रकृतेरुपाधितः परः तद्धर्मैरस्पष्टः, अत एव निर्गुणोऽपि कुतस्त्रिलिंगत्वादिकमिति भावः । अत्र हेतुः—साक्षादेव पुरुष ईश्वरः न तु प्रतिबिम्बवद्व्यवधानेनेत्यर्थः । अतो—'विद्याविद्ये मम तनू' इतिवत् तनुशब्दोपादानात्कुत्रचित्सत्त्वशक्तित्वश्रवणमपि प्रेक्षादिमात्रेणोपकारित्वादिति भावः । अत एव सर्वेषां शिवब्रह्मादीनां दृक् ज्ञानं यस्मात्तथाभूतः सन् उपद्रष्टा तदादिसाक्षी भवति । अतस्तं भजन्निर्गुणो भवेत् गुणातीतफलभाग्भवति । अतो यस्या लक्ष्म्याः पतिरसौ सापि स्वरूपभूतैव शक्तिर्न तु शिवाद्यधीना प्रतीता । प्राकृतविभूतिं खण्डयत्येव । यथा वक्ष्यते च—'यतः शान्तिर्यतोऽभयम्' "धर्मः साक्षाद्यतो ज्ञानं विज्ञानं च तदन्वितम् । ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥" इति । अतो गुणो वा दोषो वा विचार्यतामिति भावः ॥ **विश्वनाथस्तु**—कुतो निर्गुणः यतः प्रकृतेः परः स्वत एव गुणानतिक्रम्य स्थितः । अतो गुणातीतस्य भजनात्कथं गुणमयीं सम्पदं प्राप्नुयुरिति भावः । सर्वेषां शिवादीनामपि ज्ञानं यतः स इति तं भजन् ज्ञानचक्षुः प्राप्नोति न तु सम्पदुद्भूतमज्ञानान्ध्यमिति भावः । उपद्रष्टा गुणलेपाभावादौदासीन्येन केवलं साक्षीति तं भजन्नपि गुणलेपरहितो निर्गुणो भवेत् अत एव 'यतः शांतिः' इत्याद्यग्रे वक्ष्यते ॥ ५ ॥ अश्वमेधेष्विति । दक्षिणाभेदेनैकाश्वमेधस्य त्रिरूपत्वाद्बहुत्वमविरुद्धम् । युष्मत्पितामहो युधिष्ठिरः । इदं लक्ष्मीशोपासकनैर्धन्यतद्भीनरुद्राद्युपासकधनिकत्वलक्षणवैपरीत्यम् ॥ * ॥ न केवलं तस्य स्वभावोऽयं किन्तु विचा

स आह भगवाँस्तस्मै प्रीतःशुश्रूषवे प्रभुः॥ नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोःकुले ॥ ७ ॥
श्रीभगवानुवाच ॥ यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ॥ ततोऽधनं त्यजंत्यस्य स्वजना दुःखदुःखितम् ॥ ८ ॥

सत्त्वतनोर्नृणां स्युः ' इति । तथा ' सत्त्वं यस्य प्रिया मूर्तिः ' इति तथा 'सत्त्वं तत्तीर्थसाधनम् ' इति। तथा ' त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ' इति । तथा ' न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ' इत्यादि । एवं च सति न किंचिदसमंजसम् । तद्भक्तानां तु कलहो मोहमात्रमिति ॥ ५ ॥ ६ ॥ ७ ॥ यस्याहमनुगृह्णामीति । अयमर्थः । यो विषयान्परिजिहीर्षुरपि कथंचिद्विद्यमानेषु विषयेषु सज्जते क्लिश्यति च तस्य विषयापहार एवानुग्रह इति । यथाश्रुतत्वे ध्रुवादीनामैश्वर्यविरोधात् । अथवा प्रथमं विभूतीः कामानुरूपा दत्त्वा शनैर्विषयभोगावसाने तस्य निर्वेदमुत्पाद्य हरिष्यामि परमानुग्रहं कर्तुमिति । तदुक्तं भगवतैव । " न मय्यावेशितधियां कामः कामाय

रश्चेति । तद्योग्यं तद्वाक्यमयमितिहासमुपक्षिपति—समा[1]प्तेष्विति । नानामतमुनिसभायां श्रीभगवतैव निर्णीतमस्तीति भावः । तदेवं शास्त्रांतरविरोधस्य दौर्बल्यं दर्शितम् । राजा युधिष्ठिरः । युष्मत्पितामह इति । तादृशभगवदात्मीयपौत्रत्वेन तस्य प्रोत्साहनार्थम् अत्र प्रश्ने योग्यताव्यञ्जनार्थं च । अत एव गौरवाद्युष्मदित्युक्तम् । भगवतस्तस्मादेव भागवतधर्माञ्छृण्वन् इदं त्वत्पृष्टमेव, तदेवं द्वयोर्माहात्म्यमुक्तम् । अच्युतमिति । सर्वैश्वर्येण भक्तवश्यतादिसद्गुणैरपि परिपूर्णं किं वा तस्य गृहे सदा वर्तमानमिति भावः ॥ ६ ॥ स कृष्णः । निःश्रेयसायेत्युक्तेर्न केवलं भूभारहरणमेवावतारप्रयोजनमपि तु लोकनिःश्रेयसकरणमपीत्यपि ज्ञेयम् ॥ * ॥ प्राहेत्यत्र हेतुः—प्रीतः स्वभावत एव तत्रापि शुश्रूषवे श्रोतुमिच्छवे । नुन तु तथापि निजोत्कर्षं तादृशविनयादिगुणगणार्णवो वक्तुं नार्हति तत्राहुः—प्रभुः यः स्वतन्त्र एव सन् नृणामित्यादिलक्षणं निजोत्कर्षप्रकाशनं विना स्वभक्त्यसम्पत्त्या लोकानां मंगलासिद्धेरित्यर्थः । तदेवमपि यस्तादृशमुपदेशं न गृह्णीते तस्यैव दौर्भाग्यमिति भावः ॥ ७ ॥ अनुगृह्णामि अनुग्रहं कर्तुमिच्छामि । ननु धनहरणं कोऽयमनुग्रह इतिचेदत्राशयमाह—अयमर्थ इति । विद्यमानेषु विषयेषु । दत्तापहारित्वदोषमाशंक्याह—अथवेति । प्रथमं भोगेच्छावसरे । तस्य निजभक्तस्य । परमानुग्रहं स्वावाप्तिलक्षणम् । एतच्च चीरहरणोपाख्याने श्रीकृष्णेनैवोक्तमित्याह—तदुक्तमित्यादि । ततो मत्कृतधननाशोत्तरम् । अधनं निर्धनम् । अस्य निर्धनस्य । स्वजनाः पुत्रादयः । त्यजन्त्यनादरं कुर्वन्ति । इत्यर्थ इति—धनहान्यातीवदुःखितमिति भावः ॥ * ॥ अथ किमाहेत्यपेक्षायां स तु तेन देवासुरेत्यादिना पृष्टस्योत्तरं सस्मितं तदभिप्रायविपरीतमेवेत्याह—श्रीभगवानुवाचेति । यमुपासकमनुगृह्णामि यं तु कामयमानं नानुगृह्णामि किन्तु तदभिरुचिमात्रमापाततः सम्पादयामि तस्मा एव धनं ददामीति भावः । हरिष्य इति लृट्प्रयोगोऽक्षमायाम् "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि " इति स्मरणात् । तद्धनदर्शनाक्षमापूर्वकं हरामीत्यर्थः । शनैरिति । सहसा हरणे तस्य सर्वाच्छादकः क्षोभ एव स्याच्छनैर्हरणे तु क्रमेण धनादुदासीनीभूतः सत्संगे रतिः स्यादित्यभिप्रेत्येति भावः । ततः किं तत्राह—तत इति । शनैरित्यस्य त्यजन्तीत्यनेनाप्यन्वयः । अत एव दुःखे वीप्सा । क्रमाद्दारिद्र्यातिशयं प्राप्तमित्यर्थः ॥ * ॥ अत्र **विश्वनाथः**—दुःखाद्धनविगमजन्यादपि पुनर्दुःखितं स्वजनकर्तृक

[1] निवृत्तेष्वित्यस्य स्थाने समाप्तेष्विति पाठान्तरम् ।

**स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया ॥ मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥ ९ ॥**

**कल्पते " इति । दुःखदुःखितमिति । दुःखादनु पुनर्दुःखितमिव प्रतीयमानमित्यर्थः ॥ ८ ॥ स पुनर्बंधूनामाग्रहेण धनेहया प्रवृत्तोऽपि मदनुग्रहेण यदा निष्फलोद्यमो**

त्यागात् । दुःखमिदं भगवद्दत्तत्वात्तस्य न कर्मफलं सुखमपि भगवद्भक्तानां न कर्मफलं किन्तु भक्तेरननुसंहितं फलमिति प्रथमस्कन्धे 'धर्मस्य ह्यापवर्गस्य' इत्यत्र भीष्मोक्तावपि प्रतिपादितम् । भक्तानां भक्तिमात्रे प्रवृत्त एवाप्रारब्धकूटबीजप्रारब्धकर्मणां क्रमेण नाशः 'उत्पलसहस्रदलभेदवत्' इति भक्तिशास्त्रमतम् । तथा च श्रुतिर्गोपालतापनी—" भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यम् " इति । अर्थश्च—उपाधिनैराश्येन कामनाराहित्येन मनःकल्पनं कृष्णे मनआदिसर्वेन्द्रियविनियोगो यस्तदेव भजनमेव नैष्कर्म्यमिति । भवति हि तात्पर्यात्ताच्छद्व्यमतः सामानाधिकरण्याद्भजने प्रवृत्ते एव भक्तानां नैष्कर्म्यं सर्वकर्मध्वंसो भवति । देहस्थितिस्तु—भजनाधिक्यतत्फलप्रतिपादकभगवदचिन्त्यशक्तेरेवेति । ये तु प्रारब्धफल इव सुखदुःखे दृश्येते ते भगवद्दत्ते एव । यदुक्तं श्रुतिभिः—'भवदुत्थशुभाशुभयोः' इति । भक्तवत्सलो भगवान्भक्तेभ्यः कथं दुःखं ददातीति चेत्सत्यं पुत्रवत्सलोऽपि पिता पुत्रेभ्यो भोगदूरीकरणेनाध्ययनादि कृच्छ्रं यद्ददाति तद्वात्सल्यं स एव जानाति न तु तदानीं तत्पुत्रोऽपीति । न च प्रह्लादध्रुवादिभ्यो भोगसम्पत्तिसुखमात्रदानात्साधकेभ्य एव हितार्थिना भगवता दुःखं दीयत इति वाच्यम्, सिद्धशिरोमणीनां युधिष्ठिरादीनामपि 'यत्र धर्मसुतो राजा' इत्यत्र 'सुहृत्कृष्णस्ततो विपत्' इति भीष्मोक्तौ दुःखश्रवणात् । तस्मात्—" न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् " इति भीष्मोक्तेस्तस्य विधित्सितं स एव भक्तवत्सलो वेद नान्य इति सिद्धान्तः । किञ्चित्तत्र समाहितं तदपि तत्रैव दृश्यम् । ननु च—स्वकर्मोत्थयोर्भगवदुत्थयोश्च सुखदुःखयोर्भोग्यत्वेन तुल्यत्वात्को विशेषः, उच्यते, कर्मोत्थानां सुखदुःखानां भोगेनापि तद्बीजं तिष्ठत्येव तद्वतां नरकपातश्च कर्मतारतम्यवतां सुखदुःखतारतम्यं चेति त्रितयं भवेत् । भगवदुत्थानां तु भगवदिच्छयैव बीजं सौं च प्रयोजनपर्यन्तैव न तदुत्तरा 'जिह्वा न वक्ति भगवद्गुणनामधेयम्' इत्यादियमोक्तेस्तद्वतां न नरकपातः भगवतः स्नेहपात्रत्वान्न दुःखातिशयश्चेति । कर्मोत्थभगवदुत्थयोः शत्रुकृतमातृकृतताडनोत्थयोरिव दुःखयोर्विषामृतयोरिव कुतस्तुल्यतेति विवेचनीयम् । ननु च, सर्वसमर्थस्य भगवतो भक्तदुःखदानं विना किं तत्प्रयोजनं न सिद्ध्येत्, सत्यं लीलानिधेस्तस्य न सिद्ध्येदेव । भक्तियोगस्य रहस्यत्वरक्षार्थं नानान्यमतानामुत्थानाभावार्थं भक्त्यौत्कण्ठ्यादिवर्धनार्थं च काचित्प्रियेभ्यो दुःखदानमपि तत्सुखोदर्कमेव, यथा नयनाभ्यां कटुतराञ्जनदानमिति । तथाहि—यदि भक्ताः सदा सुखिन एव कृताः स्युस्तदा " परित्राणाय साधूनां विनाशाय च दुष्कृताम् " इति गीतोक्तनिमित्ताभावे सति कृष्णरामाद्यवतारा अपि न स्युस्तदा रासादिलीलामृतासिन्धौ भक्तानां खेलनं कथं स्यादिति । ननु च, साधुदुःखत्राणात्मकं निमित्तं विनापि तस्यावतारे को दोषः स्यात्, सत्यं भो भ्रातस्त्वं न रसाभिज्ञोऽसि श्रूयताम्, यामिन्यां सत्यामेव सूर्यादयः शोभन्ते, ग्रीष्मे सत्येव शीतलाम्भः सुखदम्, शीते सत्येवोष्णाम्भः, तमस्येव दीपः शोभते न तु प्रकाशे, क्षुत्पीडायां सत्यामेवान्नमतिस्वादु भवतीत्यलमतिविस्तरेण ॥ ८ ॥ मत्परैर्मत्परायणैः सह । कृतमैत्रस्य कृतप्रीतेः । असाधारणं मुक्तिलक्षणमनुग्रहम् ॥ * ॥ 'करिष्ये मदनुग्रहम्' इति द्वितीयोऽयमनुग्रहोऽसाधारणो भक्तिरसामृतवर्षी यदर्थमेव मे प्रथमोऽनुग्रहो दुःखसन्तापफलोऽभूदिति भावः । अत एवानुग्रहं करिष्य इत्यप्रयुज्य मदनुग्रहमिति मामिवानुग्रहं करिष्य

---

१ इच्छा । २ चन्द्रादय इति पा० ।

तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनंतकम् ॥ अतो मां सुदुराराध्यं हित्वान्यान्भजते जनः ॥ १० ॥ ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ॥ मत्ताः प्रमत्ता वरदान्विस्मरंत्यवजानते ॥ ११ ॥ श्रीशुक उवाच ॥ शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ॥ सद्यःशापप्रसादोंग शिवो ब्रह्मा न चाच्युतः ॥ १२ ॥ अत्र चोदाहरंतीममितिहासं पुरातनम् ॥ वृकासुराय गिरिशो वरं दत्त्वाऽऽप संकटम् ॥ १३ ॥ वृको नामासुरः पुत्रः शकुनेः पथि नारदम् ॥ दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥

निर्विण्णः स्यात्तदा मदनुग्रहमिति ममासाधारणमनुग्रहम् ॥ ९ ॥ तमेवाह । तद्ब्रह्मेति । अतः पश्चादपि मोक्षमरोचयन् । अत्यासक्तो जन इत्यर्थः ॥ ॥ १० ॥ ११ ॥ एतदेवेतिहासेन स्फुटयितुमाह । शापप्रसादयोरिति । ब्रह्मा चेत्यन्वयः ॥ १२ ॥ १३ ॥ शकुनेः पुत्रः ॥ १४ ॥

इत्यर्थः ॥ ९ ॥ तमेवानुग्रहमेव यत्सूक्ष्मं परमं ब्रह्म तन्मां हित्वा । अतः पश्चाद्धननाशोत्तरकालेऽन्यं भजते । इत्यर्थ इति–धनादिनाशेऽपि तद्वासनानाशाभावाद्देवतान्तरमेवं ‘ वसुकामो वसून्रुद्रान् ’ इत्यादि वाक्यैर्धनादिप्रदं मत्वाऽऽराधयतीति भावः ॥ * ॥ अत एवानुग्रहं स्वतुल्यत्वेन विशिनष्टि–तद्ब्रह्मेति । बृहत्तमत्वाद्बहिरंगलोकदुर्लक्ष्यत्वाच्च ब्रह्मतुल्यं परमं सर्वोत्कृष्टम् । अनुग्राह्यस्य भक्तस्याप्यगम्यत्वात्सूक्ष्मं प्रेमर सानुभावकत्वाच्चिन्मात्रम् । प्राकृतसुखराहित्यान्मात्रपदप्रयोगः । सत्सर्वकालसत्ताकम् । अनन्तकं नास्त्यन्तकभयं यत इत्यननुसंहितफलरूपः संसारक्षयश्चोक्तः । क्वचिदत्र विज्ञाय इत्यर्धकमस्ति तदसाम्प्रदायिक मिति । अत इत्यर्धकम् । अतो धनाप्राप्तेर्हेतोः । जनः साधारणः । ‘ यस्याहमनुगृह्णामि ’ इत्युक्ताभिप्रायेण ‘ अकामः सर्वकामो वा ’ इत्युक्तरीत्या च त्वमपि धनं ददासि तर्हि कथमन्यान्भजन्ते तत्राह– सुदुराराध्यमिति । तस्याराधनतत्त्वाज्ञानात् श्रीभगवतश्च सुविचार्यैव फलदातृत्वादिति भावः । तथोक्तं तृतीये–“ तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः । कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥ ” इति । अथवा तदज्ञानस्य हेतुत्वमेव व्यञ्जयन्स्वविशेषणत्वेन तद्ब्रह्मेत्याद्यर्धमुक्तम् । तस्माद्ब्रह्मतोऽपि परमं ‘ ब्रह्मणो हि प्रतिष्ठाहम् ’ इत्यादि प्रसिद्धम् अतः सूक्ष्मं दुर्ज्ञेयम् यतश्चित्स्वरूपं ब्रह्म च मात्रा अंशो यस्य, यद्वा–चिद्रूपा मात्रा शक्तिर्यस्य तम् । सच्चानन्तश्च यत्कं परमानन्दस्तत्स्वरूपमिति ॥ १० ॥ यतो मां विहायान्यामुपासते ततो हेतोस्ते तान्वरदातॄनेवावजानते तेषामेव देवानामवज्ञां कुर्वत इत्यर्थः । तत्र हेतुः– लब्धराज्येत्यादि । मत्ता मद्यादिना । प्रमत्तास्तामसादिदेवाराधनादिना ॥ * ॥ तच्च तेषां भजनं प्राप्ते फले वैपरीत्यायैव स्यादित्याह–तत इति । आशुतोषेभ्यो विचारं विनैव तुष्यद्भ्योऽन्येभ्यः । उद्धता अतिक्रान्त मर्यादाः मत्ता गर्विताः प्रमत्ताश्च अनवहिताः सन्तः वरदानपि तान्कालेन विस्मरन्त्येव, कथंचित्स्मरणेऽप्यवजानते च अवज्ञाविषयीकुर्वते च ॥ ११ ॥ आदिनेन्द्रादिग्रहः । सद्यो झटित्येवेषदप्यपराधे शापस्तथे षदप्यर्चने प्रसादो यस्य स तथा शिवो ब्रह्मा चेति द्वावेतादृशौ नाच्युत इत्यर्थः ॥ * ॥ श्रीभगवदुक्तरीत्या तेषामाशुतोषप्राप्ताविचारत्वम् । तथापि–श्रीभगवदाश्रयबलेन सर्वसिद्धिम् । श्रीभगवतस्तु दुराराध्यता प्राप्तसुविचारत्वं तेषां भगवदाश्रयमूलानां सदांगीकारश्चेतिहासेन दर्शयितुमुपन्यस्यति–शापेति । शापे प्रसादे च वरदाने ईशाः समर्थाः । आदिनेन्द्रादयः । अंग भो राजन्निति । सत्यमेवेदमिति भावः । अच्युत इति निजतत्तद्गुणच्युतिराहित्यात् ॥ १२ ॥ अत्र शिवस्य सद्यःप्रसादत्वे ॥ * ॥ पुराविदः पूर्ववृत्तान्तज्ञाः पौराणिका इत्यर्थः । पुरातनमिति क्वाचित्कः ॥ १३ ॥ ० ॥ * ॥ पथि दृष्ट्वेति काकतालीयेनैव

१ परामर्शशून्याः ।

स आह देवं गिरिशमुपाधावाशु सिध्यसि ॥ योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ १५ ॥ दशास्यबाणयोस्तुष्टः स्तुवतोर्बंदिनोरिव ॥ ऐश्वर्यमतुलं दत्त्वा तत आप सुसंकटम् ॥ १६ ॥ इत्यादिष्टस्तमसुर उपाधावत्स्वगात्रतः ॥ केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम् ॥ १७ ॥ देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि ॥ शिरोऽवृश्चत्स्वधितिना तत्तीर्थक्लिन्नमूर्धजम् ॥ १८ ॥ तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवो त्थितोऽनलात् ॥ निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥ १९ ॥ तमाह चांगाऽलमलं वृणीष्व मे यथाभिकामं वितरामि ते वरम् ॥ प्रीये यतो येन नृणां प्रपद्यतामहो त्वयात्मा भृशमर्द्यते वृथा ॥ २० ॥ देवं स वव्रे पापीयान्वरं भूतभयावहम् ॥ यस्ययस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥ २१ ॥ तच्छ्रुत्वा भगवान्रुद्रो दुर्मना इव भारत ॥ ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥ २२ ॥

॥ १५ ॥ सुसंकटमाप कैलासोत्पाटनं पुरपालनं च ॥ १६ ॥ स्वगात्रत उपाधावत् । कथम् । आत्मक्रव्येण स्वमांसेन जुह्वान इति ॥ १७ ॥ अवृश्चच्छे त्तुमुद्यतः ॥ १८ ॥ मूर्तिमानग्निरिव देदीप्यमानः वयमधुनातना यथा किंचिद्दुःखेन मर्तुकामं वारयामस्तद्वदिति । स च उपस्कृताकृतिः परिपूर्णदेहोऽभवत् । तं न्यवारयदेवमाह च ॥ १९ ॥ तोयेनापि भजतां प्रीतः स्यां त्वया तु देहो वृथा पीड्यत इति ॥ २० ॥ २१ ॥ दातुमनर्हमपि दत्तवान् । सर्पाय क्षीरमिव ॥ २२ ॥

संगमेन तस्य दुष्टत्वं तत्रैवापृच्छादिति सद्व्यवसायानभिज्ञत्वं दर्शितम् । त्रिषु ब्रह्मादिषु ; आशुतोषं शीघ्रप्रसादम् । दुर्मतित्वं च अग्रे प्रकटीभविष्यति ॥ १४ ॥ स नारदः सिद्ध्यति कृतार्थो भविष्यति । वर्तमानसमीपे भविष्यति लट् । यो गिरिशः ॥ आशु उपाधाव सेवस्व । ततश्च सिद्ध्यसि समीप एव सेत्स्यसि सिद्धस्पष्टार्थो भविष्यसीत्यर्थः । अल्पाभ्यामिति अल्पेन गुणेन तुष्यति, अल्पेन दोषेण कुप्यति चेत्यर्थः ॥ १५ ॥ दशास्यबाणयो रावणबाणासुरयोः । ततस्तदुपरि तोषात् ॥ * ॥ नन्वेवं चेत्तर्हि बिभेमि चेति नाशङ्क्यं यतो हरात् लब्धवरस्य तवासौ न किमपि कर्तुं शक्ष्यतीत्याह दृष्टान्तद्वारा—दशेति । सकामत्वाद्बन्दिनोरिव स्तुवतोस्तुष्टः सन् सुसङ्कटं बहुसङ्कटं क्रमेण कैलासोत्पाटनं पुरपालनरूपं चापेति तैर्व्याख्यातम् ॥ १६ ॥ इतीत्थम् । तं रुद्रम् । अग्निर्मुखं यस्य तम् । केदारे तन्नामकक्षेत्रे । स्वगात्रतो निजशरीरेण । उपाधावदसेवत ॥ * ॥ केदारे तदाख्यशिवक्षेत्रे । अग्निर्मुखं यस्य तं सर्वदेवानामग्निमुखत्वात्तमुद्दिश्याग्नौ होमं कुर्वन्नित्यर्थः । स्वगात्रतः सकाशात् । आत्मना छिन्नं क्रव्यं मांसमात्मक्रव्यमिति मध्यपदलोपी समासः, तेन ॥ १७ ॥ स्वधितिना छुरिकया । 'स्वधितिश्छुरिका मता' इति कोशात् । तत्तीर्थेन केदारपादोदकेन क्लिन्नान्यार्द्राणि मूर्द्धजानि शिरोरुहाणि यस्य तच्छिरः ॥ ॥*॥ देवस्य निजाराध्यस्य शिवस्योपलब्धिं दर्शनम् । निर्वेदाद्दुःखात् । स्वधितिना खड्गेन परश्वधेन वा । 'स्वधितिश्छेदनार्हशस्त्रे' इति कोशकाराः । नित्यं त्रिषवणपरत्वात्क्लिन्नकेशं छेदनार्थं सद्यः स्नानाद्वा ॥ १८ ॥ तदा शिरश्छेदनावसरे । योऽर्चितः स धूर्जटिः रुद्रः । तमिति शेषः ॥ * ॥ त्रिलिङ्गत्वात्सत्त्वगुणोदयमप्याह—तदेति । तदा सद्य एव महाकारुणिकः विना विचारं करुणोदयात् । यथा वयमिति अजहल्लक्षणया साधारणजनप्राप्तिः । दृष्टान्तत्वं च महाकारुणिकतयेश्वरत्वत्यागेन लौकिकसादृश्यप्राप्तेः । अन्यथान्तःप्रेरणयैव तद्वारणसम्भवात् ॥ १९ ॥ तं वृकासुरम् । यथा निकामं नितरां काममनतिक्रम्य यथाभीष्टमित्यर्थः । प्रीयेय प्रीतो भवेयम् ॥ * ॥ अंगेति सलालनं सम्बोधनम् । अलं स्वशिरश्छेदनेन प्रयोजनं नास्तीत्यर्थः । वीप्सा तु वैयग्र्यात् । मे मत्तः । यथा निकामं स्वाखिलेच्छानुसारेण । अभिकाममित्यपि पाठः । वयमि त्युभयत्रान्वेति । अहो खेदे । देवात्सर्वसद्वरप्रदादपि श्रीशिवात् । देवमिति वा पाठः ॥ २० ॥ स वृको देवं देवादित्यर्थः ॥ * ॥ तादृशवरणे हेतुः—पापीयानिति । चतुर्थकोटिकेनेयसुना तस्यातीवपापित्वं ध्वनितम् । यस्ययस्येति वीप्सया तस्य सक्रत्त्वं च वारयति । देवादिकं च सर्वं परामृशति॥२१॥तद्वचः । दुर्मना अपि प्रहसन्निव स्वदौर्मनस्यमप्रकाशयन्निव । तस्मै वृकाय । ओमित्युक्त्वा ददे । अपात्रायादेयदाने दृष्टान्तः—अहेरहयेऽ

इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः ॥ स तद्वरपरीक्षार्थं शंभोर्मूर्ध्नि किलासुरः ॥२३॥ स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः ॥ तेनोपसृष्टः संत्रस्तः पराधावत्सवेपथुः ॥यावदंतं दिवो भूमेः काष्ठानामुदगादुदक्॥२४॥अजानंतः प्रतिविधिं तूष्णीमासन्सुरेश्वराः॥ ततो वैकुंठमगमद्भास्वरं तमसः परम्॥२५॥यत्र नारायणः साक्षान्न्यासिनां परमा गतिः॥शांतानां न्यस्तदण्डानां यतो नावर्तते गतः॥२६॥तं तथाव्यसनं दृष्ट्वा भगवान्वृजिनार्दनः॥ दूरात्प्रत्युदियाद्भूत्वा बटुको योगमायया ॥ २७ ॥ मेखलाजिनदंडाक्षैस्तेजसाग्निरिव ज्वलन् ॥ अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥ २८ ॥ श्रीभगवानुवाच ॥ शाकुनेय भवान्व्यक्तं श्रांतः किं दूरमागतः ॥ क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् ॥ २९ ॥

॥२३॥उपसृष्टोऽनुगतः । उदगादधावत् । उदगुत्तरतः ॥ २४ ॥ वैकुंठं श्वेतद्वीपम्॥२५॥२६॥तं वृकासुरम् । तथाव्यसनं तादृग्व्यसनं यस्य तम् । वृजिनार्दनो दुःखहंता। दूरत एव दृष्ट्वा मेखलादिभिरुपलक्षितः प्रत्युदियात्संमुखमागतः ॥२७॥२८॥ व्यक्तं निश्चितम् । किं किमर्थम् । आत्मा देहः सर्वपुरुषार्थहेतुः । अतो मा पीडयेति॥२९॥

मृतं दुग्धमिव । 'घृतक्षीरजलेऽमृतम्' इति व्याडिः ॥ * ॥ तच्छ्रवणाद्दुर्मना दुःखितचित्तः । इवेति श्रीविष्णोस्तत्प्रतीकारसम्भावनया दौर्मनस्यह्रासात् । तत्र हेतुः—भगवानिति । सर्वज्ञ इत्यर्थः । तस्य दुर्मतित्वेन प्रहसन् । अमृतत्वसाम्यं वरमात्रांशे । हे भारतेति भरतवंशबीजभूतो भवान्, यथा श्रीभगवता रक्षितस्तथा तद्भयाज्जगद्रक्षिष्यत इति भवता कापि चिन्ता न कार्येति भावः ॥ २२ ॥ इत्थमुक्तः स वृको गौरीहरणलालसोऽभूदिति । ततश्च तस्य वरस्य परीक्षार्थं विश्वासार्थम् ॥ * ॥ किल वार्तायाम् ॥ २३ ॥ स शिवः । स्वकृताद्वरादबिभ्यत् अबिभेत् । तेन असुरेण । यावद्दिवः आद्यन्तं तावत् ॥ * ॥ स्वकृतात्स्वयं दत्तवरात् अबिभेत् भयं प्राप्तः । अबिभ्यदिति पाठस्त्वार्षः । ततश्च पराङ्मुखोऽधावदिति ज्ञेयम् । शिव आत्मनोऽन्येषां च मंगलेप्सुरितिभावः । द्युप्रभृतीनामन्तमवधिं यावत् पराधावन्पलायमानः सन् । पराधावदिति पाठे उदगिति श्वेतद्वीपजिगमिषया ॥ २४ ॥ प्रतिविधिं प्रतिक्रियाम् । ततः सर्वदेवलोकगमनोत्तरम् । तमसस्तत्कार्याद्ब्रह्माण्डात्परम् । यद्वा—वैकुण्ठं श्वेतद्वीपम् । तमसः परं तेजोरूपम्, अत एव भास्वरम् ॥ * ॥ प्रतिविधिं तत्प्रतीकारम् । सुरेश्वरा ब्रह्मादयः । अगमच्छ्रीशिवः । भास्वरं सदा स्वयमेव प्रकाशमानम्, कुतस्तमसः प्रकृतेः परम् । महावैकुण्ठावतारस्य श्वेतद्वीपाख्यस्यास्य पृथ्वीगतत्वेऽपि ततः परत्वम् । श्रीभगवानिविकारावर्ति च । 'तथाहि दर्शयति' इति न्यायेन ॥ २५ ॥ यत्र वैकुण्ठे । यतो यत्र ॥ * ॥ तत्रैव हेतुमाह—यत्रेति । साक्षाद्वर्तते न्यासिनां भगवदर्थे त्यक्ताशेषाणाम् । अतः शान्तानां रागद्वेषादिरहितानाम् भगवन्निष्ठचेतसां वाऽत एव न्यस्तदण्डानां हिंसारहितानाम् । परमा सर्वोत्तमा गतिः प्राप्यः । अत एव यतो यत्र गतो नावर्तते पुनः संसारे न पतति । "अनावृत्तिः शब्दात्" इति न्यायात् ॥ २६ ॥ बटुको ब्रह्मचारी ॥ * ॥ तामिति सार्द्धकम् । व्यसनं क्रोधजदोषोऽभिनिवेशो वा । भगवानिति । तत्तत्सर्ववृत्तान्तज्ञत्वस्य वक्ष्यमाणतत्तच्छक्तिमत्त्वस्य च । वृजिनार्दन इति । श्रीशिवस्यापि दुःखमोचनाभिप्रायेण । दूरादिति । श्रीवैकुण्ठाद्बहिरित्यर्थः । प्रति तदभिमुखतः । उदियादाविर्भूत इत्यर्थः । योगमायया स्वशक्तिविशेषेण । बटुको बालब्रह्मचारी भूत्वा ॥ २७ ॥ अभिवादयामास कथयामास । तम् असुरम् । वतिना वस्तुतो विनीतत्वाभावो द्योतितो वञ्चनप्रवृत्तत्वात् ॥ * ॥ अक्षम् अक्षमाला । अत्र बटुकत्वमादरस्नेहयोरुदयार्थम् । तत्र च तेजसेति दृष्टिमात्रेणैव तद्बुद्ध्याद्यभिभव उक्तः । अभीत्यर्द्धकम् । तं वृकासुरमभिवादयामास आशिषं ब्रुवँस्तमात्मानमभिवादयामास स्वं नमस्कारयामास । यद्वा—अस्माकं ब्रह्मदार्शीनां सर्वभूतान्येवाभिवाद्यानि भवांस्तु शकुनेः पुत्रो ज्ञानी तपस्वी मम बटोरभिवाद्य एवेति द्योतयामास । वतिना वास्तवविनयाभावो दर्शितोऽत्र ॥ २८ ॥ यतः सर्वपुरुषार्थहेतुः, अतो हेतोर्मा पीडयेति शेषः । विश्वासोत्पादनार्थं पितृनाम्ना सम्बोधयति—शाकुनेयेति ॥ * ॥ हे शाकुनेय शकुनिनन्दनेति पितृतः परिचयतया विश्वासार्थं

यदि नः श्रवणायालं युष्मद्व्यवसितं विभो ॥ भण्यतां प्रायशः पुंभिर्धृतैः स्वार्थान्समीहते ॥ ३० ॥ श्रीशुक उवाच ॥ एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ॥ गतक्लमोऽब्रवीत्तस्मै यथापूर्वमनुष्ठितम्॥३१॥ श्रीभगवानुवाच ॥ एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि ॥ यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट्॥३२॥यदि वस्तत्र विश्रंभो दानवेंद्र जगद्गुरौ ॥ तर्ह्यंगाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥ ३३॥ यद्यऽसत्यं वचः शंभोः कथंचिद्दानवर्षभ ॥ तदैनं जह्यऽसद्वाचं न यद्वक्ताऽनृतं पुनः॥३४॥इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः॥भिन्नधीर्विस्मितः शीर्ष्णि स्वहस्तं कुमतिर्न्यधात्॥३५॥

प्रायशः पुंभिर्धृतैर्भवान् स्वार्थान्समीहते साधयितुमिच्छति । अथवा जनः पुंभिः सहायैः स्वकार्याणि साधयत्यतो नः कथ्यतामिति ॥ ३० ॥ ३१ ॥ पैशाच्यं पिशाचानामिव वृत्तिम् ॥ ३२ ॥ ३३ ॥ यद्यथा वक्ता वदिष्यति ॥ ३४ ॥ चित्रैर्भ्रामकैः । सुपेशलैरतिरम्यैः । भिन्नधीर्भ्रंशितमतिः ॥ ३५ ॥

तत्सन्तोषार्थं च । भवानित्यादरार्थम् । ननु, न विश्रामसमयोऽयं तत्राह–पुंस इति । यस्य कस्यापि पुरुषस्यायं देहो निजभाग्यप्राप्तः किं पुनर्महापुरुषस्य तवेत्यर्थः । यद्वा–पुंसस्तवायं सर्वसद्गुणवान्देहः सर्वेषामन्येषामपि कामधुक् मनोरथपूरकः ॥ २९ ॥ विरिव भाति झटिति गमनेनेति विभुः तत्सम्बुद्धौ तथा । धृतैर्निजत्वेन स्वीकृतैः । अहमेवैतादृश इति चेदर्थान्तरमाह–अथवेति । जनः सर्वः प्राणिजातः यतः सहायैः कार्याणि साधयति अतो हेतोः नोऽस्मभ्यं तव पितृपितामहादिसंगिभ्यस्त्वया कथ्यतामिति भावः ॥ * ॥ विश्रान्तं प्रत्याह–यदीति । अलं योग्यम् । युष्मदित्यादरात् । न इति तद्विश्वासार्थमात्मनो गौरवाय । विभो हे सर्वं कर्तुं समर्थेति । त्वद्व्यवसितं सेत्स्यत्येवेति भावः । धृतैर्वशीकृतैः । हे पुरुषव्याघ्रेति महापुरुषमान्यपुरुषद्वारा स्वार्थसाधनं किल योग्यमिति भावः । टीकायां धृतैः सहायैः । प्रायश इति पदत्रयमध्याहृतमेव । धृतैरिति पाठे तु टीका पतिता ज्ञेया तेन मां प्रति स्वव्यवसितमुच्यताम् यथा मयापि ब्रह्मतेजोबलेनापि तत्र साहाय्यं कर्तुं शक्यं स्यादिति भावः ॥ ३० ॥ एवमुक्तरीत्या वचसामृतेति वाच्येव मृदुत्वं नान्तरित्याह । तस्मै भगवते ॥ * ॥ अमृतमिव वर्षितुं शीलं यस्य । तात्पर्यतोऽन्यथोक्तत्वेऽपि स्वरूपगुणो न हीयत इति भावः ॥ ३१ ॥ एवं चेत् शिवेन त्वां प्रति वरं दत्तं यदि । तद्वाक्यं शिवोक्तिम् । यः शिवः पैशाच्यवृत्तित्वाद्वक्तव्यावक्तव्यं नानुसन्धत्ते । तत्र हेतुः–दक्षशापादिति । तत्साहित्याद्वेत्याह–प्रेतेत्यादि ॥ * ॥ एवं चेत् महादेवेन यदि तुभ्यं वरं दत्तं चेत् । पैशाच्यम् अनवमृश्य वक्तृत्वम् ॥ ३२ ॥ तत्र शिवे । जगत्सर्वं गृणातीति जगद्गुरुः । अपरिमितवक्तारि दैत्यमोहके । दानवेन्द्रेति तद्बुद्धिमत्ताम्, अंगेति निजतां च द्योतयितुं सम्बुद्धिद्वयं तद्व्यामोहार्थमेव ॥ * ॥ जगद्गुराविति । तत्तया भवद्भिः प्रतीते इत्यर्थः । प्रतीयतां तद्वाक्यस्यामिथ्यात्वं त्वयैव ज्ञायताम् । दानवेन्द्रेति । दानवा अपि देवानां नैसर्गिकशत्रुत्वेन तद्वाक्येषु श्रद्धां न कुर्वन्ति त्वं तु दानवेन्द्रः सन्कथं तत्र श्रद्धां कुरुष इति भावः ॥ ३३ ॥ यदीति । सर्वथा शिवस्य सत्यवक्तृतां सूचयति । कथञ्चिच्च एनं शिवम् । दानवर्षभ तद्धननसामर्थ्यं द्योतयति ॥ * ॥ शम्भोरिति । तदद्यपर्यन्तं सुखेन युक्तस्याप्यधुना सुखं न भविष्यतीति बोधनाय कथञ्चिदपीति तदेकांशस्यापि विघातेनेत्यर्थः । यद्वा–कथञ्चिदप्येनं जहि इति योज्यम् । तदन्ते तत्पश्चात् स्वरूपार्थो वान्तशब्दः तदानीमेवेत्यर्थः । क्वचित्तदेनामिति पाठः । नयदिति । वधात्पश्चाद्वचनाभावात् । यद्वा–योगबलेन कुत्रचिदुत्पद्यापि न वदिष्यति । हे दानवर्षभेति सर्वं कर्तुं समर्थोऽसीति भावः ॥ ३४ ॥ भ्रामकैर्भ्रमोत्पादकैः । सोऽसुरः । विगता स्मृतिर्योग्यायोग्यविचारो यस्य स विस्मृतः । कुमतिर्वरदात्रवहेलकत्वात् । न्यधात् स्थापितवान् ॥ * ॥ चित्रैश्चातुरीयोगतो मोहनमन्त्रस्वरूपतश्च विस्माप्य भ्रामकैरित्यर्थः । विनयादिना सुपेशलैर्मनोहरैः भिन्नाऽन्यथात्वं नीता धीर्यस्य सः । विस्मितो भिन्नधीत्वादेवानुसन्धानरहितः सन् । सर्वत्र हेतुः–दुर्मतिरिति । दुर्मतीनां न

अथापतद्भिन्नशिरा वज्राहत इव क्षणात् ॥ जयशब्दो नमःशब्दः साधुशब्दोऽभवद्दिवि ॥ ३६ ॥ मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ॥ देवर्षिपितृगंधर्वा मोचितः संकटाच्छिवः ॥ ३७ ॥ मुक्तं गिरिशमभ्याह भगवान्पुरुषोत्तमः ॥ अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥ ३८ ॥ हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः ॥ क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ ॥ ३९ ॥ य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः ॥ गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः ॥ ४० ॥ इति श्रीमद्भा० म० दशमस्कंधोत्तरार्धे रुद्रमोक्षणंनामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ किमु वक्तव्यं विश्वेशे त्वयि कृतागस्कः कृतापराध इति ॥ ३९ ॥ अव्याकृतशक्त्युदन्वतो वाङ्मनसागोचरशक्तिसमुद्रस्य । गिरित्रमोक्षं शिवमोचनरूपं चरितम् । संसृतिभिर्नानायोनिसंचारैः ॥ ४० ॥ भक्तसंकटमालोक्य कृपापूर्णहृदंबुजः ॥ गिरित्रं चित्रवाक्यात्तु मोक्षयामास केशवः ॥ १ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्री० टीकायामष्टाशीतितमोऽध्यायः ॥ ८८ ॥

किमपि हिताहितज्ञानं भवतीत्यर्थः ॥ ३५ ॥ अथ शिरसि हस्तस्थापनोत्तरमेव ॥ * ॥ अथानन्तरम् । क्षणात्तत्क्षणमतिक्रम्येत्यर्थः । तस्मात्सदा भीतैर्देवैस्तन्मरणनिर्धारणार्थम् । जयशब्दादौ क्षणविलम्बात् जयशब्दोऽत्युल्लासस्य नम इति भक्तेः साध्विति विस्मयस्य व्यञ्जनार्थः ॥ ३६ ॥ सङ्कटाच्छिवे मोचिते सति । सप्तम्यर्थे प्रथमे । यद्वा—इत्थंपदशेषेणान्वयः कार्यः ॥ * ॥ ० ॥ ३७ ॥ ० ॥ * ॥ अहो देवेत्यर्द्धकम् । देव जगत्पूज्य । तत्र हेतुः—हे महादेव सर्वदेवश्रेष्ठ । स्वेनैव पाप्मना न तु मयेत्यर्थः । हे ईशेति । तं स्वयं हन्तुं शक्तोऽपि केवलं निजाराधनापेक्षयोपेक्षितवानित्यर्थः ॥ * ॥ **विश्वनाथस्तु**—पुरुषोत्तमो विनयादिगुणैस्तेभ्यः सर्वेभ्य उत्तमः । अहो देवेति । भो अपरिणामदर्शिन् ऋजुबुद्धे दुष्टेभ्य एवं वरो न देयः यत्स्वमृत्युहेतुवरमपि न परामृशसि अद्य तु त्वामरक्षम् अपरस्मिन्दिने किं भविष्यतीत्युपालम्भोऽपि मया महादेवत्वादेव न दत्त इति ॥ ३८ ॥ हत इति पूर्वान्वयि । महत्सु साधुषु । जगद्गुरौ सर्वपूज्ये शास्तरि वा ॥ * ॥ ० ॥ ३९ ॥ चरितकथनादिफलमाह—य इति । संसृतिभिः संसरणहेतुभिः कामादिभिः ॥ * ॥ श्रीशिवस्य संकटान्मोचनेन साक्षाच्छ्रीभगवन्माहात्म्यमिदं नासम्भवं यतस्तस्यैतच्चरितकथनेनापि सर्वेषां सर्वसंसारदुःखाद्विमुक्तिर्भवतीत्याह—य इति । अधिकारापेक्षा निरस्ता यः कश्चिदित्यर्थः । एवमीदृशम् । अव्याकृतानां प्रपञ्चातीतानाम् । शक्तीनां स्वरूपशक्तिवृत्तीनां नदीरूपाणाम् । समुद्रस्य सर्वसमावेशाश्रयस्य साक्षात्परस्य निरुपाधिकतया स्वयं परमेश्वरस्य न तु शिवादिवत्सोपाधिकतया । तत्प्रतिरूपत्वेनैव तद्रूपस्येत्यर्थः । यतः परमात्मनस्तेषामपि मूलस्वरूपतया सर्वशक्तिप्रवर्तकस्येत्यर्थः । अत एव हरेस्तत्तत्सर्वाकर्षकतया तन्नाम्न इत्यर्थः । एवं निष्कामस्य कथनादिफलमुक्त्वा सकामस्याप्याह—तथेति समुच्चये । कथं संसृतिभिर्विमुच्यते तदाह—षड्वर्ग

॥ श्रीशुक उवाच ॥ सरस्वत्यास्तटे राजन्नृषयः सत्रमासत ॥ वितकः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ १ ॥ तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ॥ तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणः सभाम् ॥ २ ॥ न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया ॥ तस्मै चुक्रोध भगवान्प्रज्वलन्स्वेन तेजसा ॥ ३ ॥ स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः ॥ अशीशमद्यथा वह्निं स्वयोन्या वारिणात्मनः ॥ ४ ॥ ततः कैलासमगमत्स तं देवो महेश्वरः ॥ परिरब्धुं समारेभ उत्थाय भ्रातरं मुदा ॥ ५ ॥ नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ॥ शूलमुद्यम्य तं हंतुमारेभे तिग्मलोचनः ॥ ६ ॥

नवाशीतितमे देवः को महानिति संशये ॥ परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद्भृगुः ॥ १ ॥ इतिहासांतरमाह । सरस्वत्या इति ॥ १ ॥ २ ॥ ३ ॥ स्वयोन्या स्वस्यैव रूपांतरेणाभिव्यक्तिस्थानेन स्वकार्येणेत्यर्थः । तेन यथा कश्चिद्वह्निं शमयति तथा स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामासेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥

रूपारिभिर्विशेषेण समूलतया मुच्यते ॥ ४० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धेऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥ उत्कर्षं महत्त्वम् ( १ ) । वितर्कः संशयः । ''तर्काभावे वितर्कः स्यात्संचये च विचारणे'' इति निरुक्तिः । त्रिषु ब्रह्मविष्णुरुद्रेषु । महानुत्तमः ॥ * ॥ तदेवम् सोपाधिरूपादाशुतोषादाशुकोपाच्च शिवात् शुद्धसत्त्वस्वरूपतयोदर्कशुद्धांगीकारमयपरमार्थदातृविचारतया च श्रीविष्णोरुत्कर्षमुक्त्वा परमापराधेऽपि विनयपूर्वकपरमांगीकारमयकरुणया च वदंस्तत्प्रसंगे ब्रह्मणोऽपि दर्शयन्ति—सरस्वत्येति । आसत इति लटा सदा सत्रपरत्वेनाद्याप्यस्त्येव सत्रमिति बोध्यते । तेषां कर्माविष्टत्वमेवानिर्णये हेतुरुक्तः । वितर्को विचारः ॥ १ ॥ तस्य महत्त्वस्य । स्वयं जिज्ञासया लोकेषु तज्ज्ञप्त्यै आधिक्यज्ञापनाय । स भृगुः ॥ * ॥ तस्य महत्त्वस्य । 'महर्षीणां भृगुरहम्' इति तस्यैव तत्र योग्यत्वादिति भावः । ब्रह्मणि लाल्यत्वस्य शिवे भ्रातृत्वस्य ब्रह्मण्यदेवे श्रीविष्णौ तु ब्राह्मणत्वस्यातिशयस्फूर्तेः । सोऽपि भृगुरपि । तस्य महत्त्वस्य ज्ञापनाय अभि निर्भयमाभिमुख्येन वा ॥ २ ॥ तस्मै ब्रह्मणे । प्रह्वणं नमनम् । सत्त्वस्य महत्त्वहेतुत्वात्कार्ये कारणप्रयोगः । तस्मै भृगवे ॥ * ॥ सत्त्वं महत्त्वं तद्धेतुः सत्त्वगुणो वा । तस्य परीक्षया हेतोः । प्रह्वणं प्रणामं स्तोत्रं च न चक्रे एवमुत्तरत्रापि । भगवान् सर्वपूज्यः ॥ ३ ॥ स ब्रह्मा । आत्मजायात्मजमुद्दिश्य । इत्यर्थ इति—''अग्नेरापः'' इति श्रुतेर्वारिणो वह्निकार्यत्वावगमादिति भावः । तेन वारिणा । इत्यर्थ इति—पुत्रोऽयमिति मत्वा शान्तिं ययाविति भावः ॥ * ॥ आत्मनि मनसि । स्वयमेव क्षमापणं विनैव यतः प्रभुर्विचारसमर्थः । तत्र हेतुः—आत्मनः शुद्धसत्त्वमयहरेः सकाशाद्भवतीत्यात्मभूः । विचारमेवाह—स्वयोन्येति । स्वं वह्निरेव योनिरुत्पत्तिस्थानं यस्य तेन वारिणा ''अग्नेरापः'' इति श्रुतेः । यथा वह्निकार्येण वारिणा वह्निं शमयति । यद्वा—स्वस्य वह्नेर्योन्या कारणेन वारिणेव, क्रोधस्य कारणेनात्मनैव क्रोधं शमयामास । 'कृपीटयोनिर्ज्वलनः' इत्यमरात् । जलादपि वह्निर्जायत इति प्रसिद्धेः ॥ ४ ॥ ततो ब्रह्मलोकगमनोत्तरम् । स भृगुः । तं भ्रातरम् । रुद्रस्यापि ब्रह्मललाटोद्भूतत्वेन भ्रातृतेति । महः पूज्यश्चासावीश्वरश्चेति महेश्वरः । परिरब्धुमालिंगितुम् ॥ * ॥ एवं ब्रह्मण्यवज्ञारूपं मानसमपराधं कृत्वा तत्र रजोगुणं दृष्ट्वा ततोऽपि श्रेष्ठे शिवे मानसादधिकं वाचिमकपराधं कृतवानित्याह—तत इति । केलतः क्रीडत इति केलौ पार्वतीशिवौ । 'किल—श्वैत्यक्रीडनयोः' इतः पचाद्यच् । तावासाते अत्रेति केलासः स एव कैलासः स्वार्थिकोऽण् । ब्रह्मणः सत्त्वबाध्यं रजो दृष्ट्वा शिवस्य तमोबाध्यं सत्त्वं पार्वत्यां तदर्द्धांगीभूतायां सत्त्वबाध्यं तमश्च दर्शयति । देवो जगत्पूज्यः यतो महेश्वरः सर्वाहंकाराधिष्ठातृत्वात् । तथापि परिरब्धुं बाहुप्रसारणादिनाऽऽरेभे । यतः भ्रातरं ब्रह्मपुत्रत्वेन भ्रातृभावेनांगीकृतम् ॥५॥ आलिंगितुं नैच्छत् । श्मशानवासित्वादिनोत्पथगो लोकविरुद्धमार्गगाम्यशुभाचारोऽस्यतो मा मां स्पृशेति भावः । इति इत्युक्तः । तं भृगुम् । तिग्मलोचनो रक्तनेत्रस्त्रिलोचनो वह्निनेत्रो

पतित्वा पादयोर्देवी सांत्वयामास तं गिरा ॥ अथो जगाम वैकुंठं यत्र देवो जनार्दनः ॥ ७ ॥ शयानं श्रिय उत्संगे पदा वक्षस्यताडयत् ॥ तत उत्थाय भगवान्सह लक्ष्म्या सतां गतिः ॥८॥ स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् ॥ आह ते स्वागतं ब्रह्मन्निषीदात्रासने क्षणम् ॥९॥ अजानतामागतान्वः क्षंतुमर्हथ नः प्रभो ॥ अतीव कोमलौ तात चरणौ ते महामुने ॥ इत्युक्त्वा विप्रचरणौ मर्दयन्स्वेन पाणिना ॥१०॥ पुनीहि सहलोकं मां लोकपालांश्च मद्गतान् ॥ पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥११॥ अद्याहं भगवँल्लक्ष्म्या आसमेकांतभाजनम् ॥ वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥१२॥

७ ॥ ८ ॥ ९ ॥ १० ॥ तीर्थकारिणा तीर्थत्वनिमित्तेन ॥ ११ ॥ १२ ॥

वा । "तिग्मं तीक्ष्णत्रिरक्ताग्नितमोव्याप्तजनेषु च" इति निरुक्तिः । तं शिवम् ॥*॥ उत्पथगोऽसि स्मशानभस्मादिधारणेन पाखण्डमार्गे प्राप्तोऽसीति परिवदँस्तत्परिरंभं नैच्छदिति।तिग्मलोचनः क्रोधान्नेत्राग्निप्रसर्पणात् ॥६॥ अथो रुद्रपरीक्षणोत्तरम् । यत्र वैकुण्ठे ॥*॥ सान्त्वयामास गिरा सामपूर्वकन्यायोक्त्या । रुद्रादप्यतिश्रेष्ठे विष्णौ वाचिकादप्यधिकं कायिकमपराधमाह—अथो इति । वैकुण्ठं प्रपञ्चान्तर्गतविकुण्ठासुतानिर्मितं विष्णुलोकविशेषम् । 'एवं ब्रुवति वैकुण्ठे' इति वक्ष्यमाणत्वात् । "पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः । तयोस्तु कलया जज्ञे वैकुण्ठो भगवान्स्वयम् ॥ वैकुण्ठो निर्मितो येन लोको लोकनमस्कृतः ।" इत्यष्टमस्कन्धाच्च ॥७॥ ततः पादप्रहारोत्तरम् ॥ * ॥ श्रिय उत्संगे शयानमिति तयोस्तदागमनाज्ञाने हेतुः मिथःप्रेमावृतज्ञानत्वात् । तदेवं तदानीं तादृशदारुणकर्मणोऽत्यन्तायोग्यत्वमुत्तरोत्तरमाविनयाधिक्यं च तस्योक्तम् । वैष्णवत्वं त्वेतदुत्तरकाले तादृशभगवद्गुणदर्शनेनैव जातमिति ज्ञेयम् । ततस्तस्मात्ताडनादनन्तरं तं दृष्ट्वेत्यर्थः।सहसा सम्भ्रमेण लक्ष्म्या सहोत्थाय । लक्ष्म्या अपि तादृशसमयेऽपि तादृशविविक्तेऽप्यागन्तारि स्वांगावलोकनसम्भविष्णावपि तस्मिन्मुनौ न कोपगन्धोऽपीति शुद्धसत्त्वगुणधर्मः प्रियतमचित्ताभिज्ञत्वेन तत्तिरस्कारदर्शनेऽपि नान्तःकोप इति शुद्धसत्त्वधर्मः श्रियि इष्टः । उत्थानादौ हेतुः सतां सन्मार्गप्रवर्तकानां गतिराश्रयः तत्रैव हेतुगर्भवान्सर्वसद्गुणयुक्तः परमेश्वरो वा ॥ ८ ॥ ० ॥ * ॥ स्वशब्देन तल्पस्य परमधिष्ण्यत्वमुक्तम् । ते त्वया सुखेनागतम् । यद्वा—तव स्वागतं शोभनमागमनम् । हे ब्रह्मन् वेदस्वरूपेति परमपूज्यत्वमुक्तम् । अत्र मत्तल्परूपे किं वा विप्रार्थं पृथक्स्थापिते किं वा मयार्पितेऽस्मिन्नासने । एवं च स्वयमेव सत्वरमासनमानीतमिति ज्ञेयम् ॥ ९ ॥ अजानतां नः । तात पूज्य । अहो अतीवकठोरदैत्यप्रेषितगदादीनामपि निजस्पर्शेन विदारकस्य मद्उरसो व्याघातेनातीवकोमलौ ते चरणौ भग्नावित्युक्त्वा ॥ * ॥ ननु, त्वयाऽभिगमनाभ्युत्थानादिना मत्संमाननाकरणादहं तवेदमासनं न स्वीकरोमीति चेत्सत्यं मन्महापराधः खल्वभूदेव तत्र त्वत्कृपैव मे गतिरित्याह—अजानतामिति । वो युष्मान्बहुत्वं गौरवात् । नोऽस्माकमिति लक्ष्म्याद्यपेक्षया ॥ १० ॥ तीर्थत्वनिमित्तेन पावकेन । 'तीर्थं शास्त्राम्बुपावने' इति यादवः ॥ * ॥ रक्षणोपदेशे प्रयोजनं च मम सुखमेवमित्येवमतिस्तुत्या प्रतिपादयति—पुनीहीति द्वाभ्याम् । सहलोकं श्रीवैकुण्ठलोकेन चतुर्दशभुवन्या च सहितम् । लोकपालान्ब्रह्मरुद्रादीन् मद्गतान्मयि वर्तमानान् । तस्य विश्वोदरत्वात्तेषां तदंशत्वाद्वा । भगवन् हे परमपूज्य । ब्रह्मण्यदेवत्वान्मम पूज्यत्वेन त्वमेव भगवान्नाहं भगवान् मय्यपि तत्त्वत्प्रसादजमिति भावः । अतः क्षणं प्रविष्टस्य पादौ प्रक्षाल्य तज्जलं धारयामीति भावः ॥ * ॥ अत्र **विश्वनाथः**—यदि चेमं महापराधं क्षांतवानसि तर्हि देहि पादोदकमित्याह—पुनीहीति । तीर्थानां गंगादीनामपि तीर्थकारिणेति एतत्प्राप्त्यैव गंगादीनि तीर्थान्यभूवन्नित्यर्थः । पापिजनमलिनीकृततीर्थानां भवादृशमहानुभावसंसर्गादेव पुनः पावकत्वप्राप्तेः "साधवो न्यासिनः शांता ब्रह्मिष्ठा लोकपावनाः । हरन्त्यघं तेऽङ्गसंगात्" इति श्रीगंगां प्रति भगीरथोक्तेः । अत्र भृगुकृत एतावत्यपराधे क्षमैव सत्त्वगुणधर्मः । प्रत्युत स्वस्यापराधित्वमननेन तत्प्रसादनं यदेतच्छुद्धसत्त्वधर्मो ज्ञेयः ॥ ११ ॥ " नित्यं मे वसतिर्देव विप्रपादांकि

श्रीशुक उवाच ॥ एवं ब्रुवाणे वैकुंठे भृगुस्तन्मंद्रया गिरा ॥ निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कंठोऽश्रुलोचनः ॥१३॥ पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ॥ स्वानुभूतमशेषेण राजन्भृगुरवर्णयत् ॥ १४ ॥ तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ॥ भूयांसं श्रद्दधुर्विष्णुं यतः शांतिर्यतोऽभयम् ॥ ॥ १५ ॥ धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च तदन्वितम् ॥ ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ १६ ॥

गिरा निर्वृतस्तूष्णीं बभूवेति शेषः ॥ १३ ॥ १४ ॥ विस्मिता अपराधातिरेकेऽपि निर्विकारित्वेन । भूयांसं श्रद्दधुः । महत्तमं निश्चितवंतः । यतो यस्मिन् ॥ १५ ॥ वैराग्यं च चतुर्विधमिति पाठे तच्चातुर्विध्यमेवं द्रष्टव्यम् । विषयांस्त्यक्तुमशक्नुवतोऽपि संमानेच्छात्याग आद्यं वैराग्यम् । विषयाणां मध्ये लवणादिव्यतिरेकेणापि वृत्तिर्द्वितीयम् । तथा वृत्तावपि मनसि रागशैथिल्येन बाह्येंद्रियैरिव विषयसेवनं तृतीयम् । तत्राप्यौदासीन्यं चतुर्थम् । यथाऽऽहुः । " वैराग्यमाद्यं यतमानसंज्ञं क्वचिद्विरागो व्यतिरेकसंज्ञः ॥ एकेंद्रियाख्यं हृदि रागसौक्ष्म्यं तस्याप्यभावस्तु वशीकृताख्यम् " ॥ १६ ॥

तस्थले'' इति लक्ष्मीवाक्यादधुना मां लक्ष्मीर्न हास्यतीत्याह–अद्येति । भवति सर्वदा तिष्ठतीति भवन्स चासौ पादस्तेन हतांहसो नष्टकिल्बिषस्य । लोकसंग्रहार्थेयमुक्तिः । एतेनैतद्भवत्पादचिह्नं सर्वदा श्रीस्थैर्यायाहं न त्यक्ष्य इति ध्वनितम् । एतदेव श्रीवत्सपदेनापि वर्ण्यते कैश्चिदिति ''श्रीवत्समिति नामापि जायतां पादलक्षणम्'' इति । एतच्च तृतीयस्कन्धे बहुधा वर्णितम् । 'भूतिः श्रीजन्मभस्मसु' इति यादवः ॥ * ॥ ननु मनोदुःखभरेण मया महापराधः कृतोऽतो लज्जया कुतोऽत्रोपवेष्टव्यमित्याशङ्क्य महाननुग्रह एव भवता कृत इत्याह–अद्येति । एकान्तं परमं भाजनमाश्रयः । तत्र च त्वमेव समर्थोऽसीत्याह–हे भगवन् सर्वशक्तियुक्त अतो भूतिर्लक्ष्मीः सदा वत्स्यतीत्यर्थः । तत्र हेतुमाह–भवदिति । विकुण्ठासुते लक्ष्म्या आत्यन्तिको वक्षसि वासः श्रीभृगुपादस्पर्शानंतरमेव जात इति गम्यते ॥ * ॥ अत्र **विश्वनाथः**–ननु, च–तुभ्यं त्वत्प्रियायै प्रेमवत्यै लक्ष्म्यै च दुःखं ददानस्य ममाकल्पं नरकवासो भविष्यति यद्य पामरविप्रस्य महापापिनो ममापवित्रपादस्त्वद्वक्षसि लग्न इत्यनुतापजर्जरे सति तस्मिन् भो मुने कृपासिन्धो आवयोस्त्वं परममुत्सवमेव कृतवानसीत्याह–अद्येति । ''यत्सेवया चरणपद्मपवित्ररेणुं न श्रीर्विरक्तमपि मां विजहाति यस्याः । प्रेक्षालवार्थमितरे नियमान्वहन्ति'' इति तृतीयोक्तेः ॥ १२ ॥ एवमुक्तविवया । तस्य विष्णोः । मन्द्रया गंभीरया । 'मन्द्रस्तु गम्भीरे' इत्यमरः । तर्पितस्तृप्तिं प्रापितः ॥ * ॥ तूष्णीमित्यश्रुरुद्धकण्ठत्वेन स्तुत्यसामर्थ्यात् । अत्र भगवल्लीलाविनोदसूत्रधारनार्तितस्य भृगोरेतत्कर्मणि नापराधो वाच्य इति प्राञ्चः ॥ १३ ॥ ० ॥ * ॥ ० ॥ १४ ॥ तद्भृगूक्तम् । अथ श्रवणोत्तरम् । अतिरेक आधिक्यम् । अभयं भयनिवर्तकता ॥ * ॥ विष्णुं स्वमाहात्म्येन विश्वव्यापकम् । भूयांसं त्रिष्वप्यधीशेषु अतिशयेन महान्तं न तु महन्मात्रम् । तच्च युक्तमेवेति तेषां वाक्यमनुवदति–यत इत्यादिना तत्तीर्थसाधनादित्यन्तेन । यतो हेतोरन्येषामपि भृगोरिव शांतिरक्षोभो भवति किमुत स्वस्यैव तस्येत्यर्थः । स्वल्पे प्रदीपादावेव क्षोभो दृश्यते न तु महति सूर्यादाविति, तेन महत्तमत्वमनुमितमिति भावः । अतः सापराधानामप्युपसन्नानां यतो भृगोरिव भयाभावोऽपि भवति ॥ १५ ॥ भगवच्छब्दार्थतां वर्णयंस्तत्राह–धर्म इति । साक्षात्पूर्णः । तदन्वितं ज्ञानान्वितम् । आद्यं यतमानाख्यम् । तत आद्यावासेरनन्तरम् । लवणादीत्यत्रादिना घृतादिग्रहः । द्वितीयं व्यतिरेकाख्यम् । तथा वृत्तावपि कस्यचिद्विषयत्यागे सत्यपि तृतीयमकेन्द्रियाख्यम् । तत्रापि बाह्येन्द्रियविषयसेवनेऽपि । औदासीन्यमिच्छाराहित्यं चतुर्थं वशीकाराख्यम् । अत्रार्थे सांख्यवृद्धसंमतिमाह–तत्राहुरिति । तस्यापि हृदि रागमोक्षस्यापि । यस्माद्यस्य ॥ * ॥ तदेव महत्तमत्वस्य चिह्नमुक्तम् । हेतुमपि तथैव कैमुत्येन दर्शयंस्ततोऽप्राकृतमहासम्पत्तिमपि दर्शयति–धर्म इति त्रिभिः ।

मुनीनां न्यस्तदंडानां शांतानां समचेतसाम् ॥ अकिंचनानां साधूनां यमाहुः परमां गतिम् ॥१७॥ सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः॥ भजंत्यनाशिषः शांता यं वा निपुणबुद्धयः ॥१८॥ विविधाकृतयस्तस्य राक्षसा असुराः सुराः ॥ गुणिन्या मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम् ॥ १९ ॥ श्रीशुक उवाच ॥ एवं सारस्वता विप्रा नृणां संशयनुत्तये ॥ पुरुषस्य पदांभोजसेवया तद्गतिं गताः ॥ २० ॥

॥१७॥१८ ॥ तस्य भगवत एव यद्यपि त्रिविधा आकृतयः । तत्तासु सत्त्वमेव तीर्थसाधनं पुरुषार्थहेतुः ॥ १९ ॥ इत्थं निश्चित्य सरस्वतीतीरवासिनो विप्रा हरिसेवया मुक्तिं प्रापुरिति ॥ २० ॥

साक्षाद्धर्मो भगवद्धर्मः श्रवणकीर्तनादिरूपः । यतः साक्षात्पदस्य सर्वैरप्यन्वयः । तेन साक्षाज्ज्ञानं श्रीभगवदनुभवस्तदन्वितम् “ चैष त्रिक एककाल:’ ‘ भक्तिर्विरक्तिर्भगवत्प्रबोधः’ इत्येकादशोक्तरीत्या सप्रेमतदनुभवान्वितमेव ‘न तु शुष्कं चतुर्विधम्’ इति पाठस्तैर्व्याख्यातः । तत्र यतमानसंज्ञामिति । यतः संयतो मानः संमाननेच्छा यत्रेत्यर्थः । क्वचिदिति लवणादौ विरागो नाम व्यतिरेकसंज्ञं वैराग्यम्, इत्यन्वयः । एकेति । एकानि एकमुखीकृतानीन्द्रियाणि यस्मिंस्तत् रागसौक्ष्म्यं रागस्याल्पतयाऽवसानमिति ज्ञेयम् । यद्वा—भक्त्येकरागतश्चतुर्वर्गत्यागेन चतुर्विधम् । ततश्चाष्टधाऽणिमादिभेदैश्वर्यमप्राकृतं तदप्रार्थितमपीति भावः । यथा तृतीये—‘भक्तिरानिच्छतो गतिमण्वीं प्रयुंक्ते’’ इत्युक्त्वा श्रीकपिलदेवोऽप्याह—“अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टांगमनुप्रवृत्तम् । श्रियं भागवतीं वाऽस्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते हि लोके’’ इति । यत इति मुहुर्निर्देशः शान्त्यादीनां तदेकनिष्ठतां बोधयति । यस्माचात्मनः सर्वेषां मनसो मलं चाञ्चल्यादिदोषं श्रवणादिनाऽपहन्ति दूरादेव नाशयतीति तथा तत् ॥ * ॥ **विश्वनाथोऽप**—तदन्वितमित्यस्य ज्ञानेऽप्यन्वयात् ‘ भक्तिः परेशानुभवो विरक्तिः ’ इति त्रिकस्य यौगपद्यमेकादशोक्तमिवात्रापि द्रष्टव्यम् ॥ १६ ॥ मुनीनामित्यादिना शमादिषट्कोपेतानामित्यर्थः ॥ * ॥ तदेवमैश्वर्यप्रदत्वेऽप्यनुपद्रवहेतुत्वान्मुनीनामित्यादि । प्रथमतो मननशीलानां ततो भगवच्चिन्तनार्थं परित्यक्तमहादोषात्मकभूतद्वेषाणां ततो भगवच्चित्ततया यदृच्छालाभतुष्टानां ततो भगवदेकस्पृहत्वेनान्यत्र स्वर्गापवर्गनरकेषु तुल्यदर्शिनामत एव भगवन्तं विनान्यत्र ममताशून्यानामत एव प्रोज्झितकैतवानामिति क्रमेणार्थः ॥ * ॥ **विश्वनाथस्तु**—मुनिशान्तसाधुशब्दैरेकैकविशेषणयुक्तैर्मुमुक्षुमुक्तभक्ता उक्ता इत्याह ॥ १७ ॥ तुरवधारणे । यं विष्णुम् । अनाशिष इति यस्येत्यस्य विशेषणम् ब्राह्मणानां वा ॥ * ॥ एवमप्राकृतशुद्धसत्त्वात्मकवैभवत्वेऽपि प्राकृतसत्त्वे यस्यानुग्रहदृष्टिरिति तत्रैव गुणाविशेषं दर्शयति मूर्तिरिव मूर्तिरधिष्ठानम् । प्रिया कृपादृष्टियोग्या । तन्मयेष्वपि विशेषतो ब्राह्मणा इष्टदेवतावदाराध्यमानाः तादृशगुणाकृष्टत्वादेव यं च निपुणबुद्धयः सत्संगशोधितचित्ताः यद्यप्यनाशिषः शान्ताः सर्वत्र रागद्वेषरहिताः । वा चार्थे एवार्थे वा ॥ १८ ॥ तस्य विष्णोः । यद्वा—तीर्थस्य हरेः साधनं प्राप्त्युपायम् ॥ * ॥ सत्त्वं प्रियामूर्तिरित्युक्तं तत्रान्या वा का मूर्तय इत्यपेक्षायां विविच्याह—त्रिविधा इति । तत्र राक्षसास्तामस्योऽसुरा राजस्यः सुराः सात्त्विक्यः । तत्तदुपलक्षणत्वेनान्येऽपि तत्तद्रूपा ज्ञेयाः । ननु, मायानासक्तस्य तस्य मायिकसत्त्वगुणे कथं रतिस्तत्राह—सत्त्वं खलु तस्य भगवतो यत्तीर्थमागमस्तद्भक्तिप्रतिपादकं शास्त्रं तस्य साधनमवगमद्वारभूतं भवति परम्परया तद्भक्तिसम्बन्धादेवेति भावः ॥ * ॥ **विश्वनाथस्तु**—जगत्पालकस्य कृपालोस्तस्य जीवहितदृष्ट्यैव सत्त्वं प्रियवद्भासमानत्वात्प्रियं न तु वस्तुत इति गुणेष्वौदासीन्यमेव ॥ १९ ॥ सारस्वताः सरस्वतीतीरवासिनः ॥ * ॥ नृणां संशयनुत्तये इत्थं निश्चित्येति शेषः । तदेवं शास्त्रद्वारा तु ते स्वयं निश्चितवन्त एवेति गम्यते । तद्गतिं गतास्तमुपलब्धवन्तः । यद्वा—तत्रान्येषां नृणां त्रिदेव्यां महत्त्वसंशयस्य नुत्तये जातमिति भावः ॥ २० ॥

**सूत उवाच ॥ इत्येतन्मुनितनयास्यपद्मगंधपीयूषं भवभयभित्परस्य पुंसः ॥ सुश्लोक्यं श्रवणपुटैः पिबत्यभीक्ष्णं पांथोऽध्वभ्रमणपरिश्रमं जहाति॥२१॥**
**व्यासनंदनस्य मुखपंकजादुद्गतं गंधयुक्तपीयूषतुल्यं हरेः प्रशस्तं यशो यः संसारी सेवते स मुक्तो भवतीति ॥ २१ ॥**

इत्येतत् पूर्वोक्तरीत्या वर्णितं विष्णुमहत्त्वोपाख्यानम् । गन्धपीयूषं सुगन्धिवन्मनोहरम् पीयूषवत्स्वादु भवभयं भिनत्तीति तथा । सुश्लोकैराकलितं सुश्लोक्यमाख्यानं यशो वा । अभीक्ष्णं पौनःपुन्येन । पथि संसार मार्गे वर्तमानः पान्थः ' पथि–गतौ ' अतोऽच् पुनः स्वार्थिकोऽण् । अध्वभ्रमणपरिश्रमम् इदं श्रेयोऽदो वेति भ्रमणेनेतस्ततः पर्यटनेन प्राप्तं परिश्रमम् ॥ * ॥ तदेतच्छास्त्रविदामपि महासंशयापनोदनं श्रीगुरुचरणोपदेशं परमसन्तुष्टः श्लाघते तेनान्यानप्यतीव श्रद्धापयति–इतीति । पूर्वप्रकारकमेतत्पूर्वोक्तम् । मुनितनयेति साक्षादुभयनामाग्रहणं भक्त्युद्रेकात् " आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेय स्कामो न गृह्णीयाज्ज्येष्ठपुत्रकलत्रयोः ॥ " इति निषेधाच्छ्रेयस्काम्यया वा । तदास्यपद्मस्य गन्धः सौरभ्यमित्यनुभवनीय आमोदविशेषो यत्र तादृशं पीयूषतुल्यञ्च तदेतत्स्वतः पुरुषार्थत्वं तत आनुषंगिकतया जरामरणाद्यात्मिकभवभयच्छेदकं च । सुश्लोकामिति । समृद्ध्यर्थेऽव्ययीभावः । सुशोभनः श्लोकः कीर्तिर्यत्र तदेतच्चरितं वा । श्रवणपुटैरिति तद्बहुत्वं तच्छ्रवणाय बहुलीकृतत्वादिव । पान्थः संसारपथिकः । अध्वपरिश्रमं जहाति तदानन्देन प्राचीनदुःखविस्मृतेः ततः परं श्रवणाभावाच्चेति । तदेवं श्रीभागवतेन श्रीविष्णोरेव सर्वोत्कर्षे स्पष्टे शास्त्रान्तरेषु श्रीविष्णुशिवयोर्भेदमनने दोषो यः श्रूयते सोऽनैकान्तिकवैष्णव विषय एव । वैष्णवशास्त्रे हि तद्विपरीतं श्रूयते । यथा पाद्मादौ–" यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वेनैव जानाति स पारंकी भवेद्ध्रुवम् ॥ " इत्यादि । तथा च विष्णुधर्मोत्तरान्ते लिंगस्फोटननृ सिंहोपाख्यानम्–विष्वक्सेननामा विप्रः कश्चिदेकान्तविष्णुभक्त आसीत्तस्य पृथ्वीं भ्रमतो दैवात्केनचिद्ग्रामाध्यक्षपुत्रेण मेलनमभूत् तयोः संकथा चेयम्–"देवकर्मण्यशक्तिर्मे त्वतः पूजय शंकरम् । देवतायतनं गत्वा यत्र तात प्रतिष्ठितम् ॥ लिंगमस्ति सुरेशस्य महादेवस्य निर्मलम् । एवमुक्तः प्रत्युवाच वयमेकान्तिनः श्रुताः ॥ चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोऽथवा । पूजयामश्च नैवान्यं तस्मात्त्वं गच्छ मा चिरम् ॥ " इत्यादिका । ततो ग्रामाध्यक्षपुत्रे तस्य विष्वक्सेनस्य शिरश्छेत्तुमुद्यते तद्धस्तेन मृत्युमनभीप्सन्स इदं विचारयामास, भवतु तत्रैव गच्छाम इति । ततो लिंगसमीपं गत्वा तस्मिन्नधिष्ठाने नृसिंहाय नम इति पुष्पाञ्जलौ विक्षिप्ते तच्छ्रुत्वा पुनः शिरश्छेत्तुमुद्यते तल्लिंगं स्फोटयित्वा निर्गतेन श्रीनृसिंहेन सपरिवारस्य ग्रामाध्यक्षपुत्रस्य शिरांसि छिन्नानीति । तदेतदुक्तं स्कान्दे श्रीशिवेन–" शिवशास्त्रेषु तद्ग्राह्यं भगवच्छास्त्रयोगि यत् " इति । श्रीहरिवंशेऽपि–" हरिरेव सदाराध्यो भवद्भिः सत्त्वसंश्रयैः । विष्णुमन्त्रान्सदा विप्राः पठध्वं ध्यात केशवम् ॥ " इति । यत्तु श्रीभागवतमेव–" त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मनां ब्रह्मन्स शान्तिमधिगच्छति ॥" इत्यादि, तत्खलु विष्णोः सकाशादन्यास्वातन्त्र्यापेक्षयैव । तदुक्तं श्रीब्रह्मणा–" सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥ " इति । अत्रैवोक्तं श्रीसंकर्षणेन–' ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः ' इति । " यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्धनि कृतेन शिवः शिवोऽभूत् " इति । एतदभिप्रेत्यैवोक्तं पाद्मेऽपि– " शिवस्य श्रीविष्णोर्य इह गुणनामादिसकलं धियाभिन्नं पश्येत्स खलु हरिनामाहितकरः ॥ " इति । तत्र श्रीविष्णुनेति तृतीयाया अनिर्देशादत्रैव श्रीशब्ददानाच्च श्रीमतः सर्वशक्तियुताद्विष्णोः सर्वव्यापकत्वेन तन्नाम्न स्तस्माद्यः शिवस्य गुणनामादि सकलं धिया भिन्नं स्वतन्त्रं पश्येदित्यर्थः । अतो मार्कण्डेयं प्रति श्रीशिवस्य वाक्यं चेदमेव–" न ते मय्यच्युते ये च भिदामण्वपि चक्षते । नात्मनश्च जनस्यापि तद्युष्मान्वय मीमहि ॥ " इति । तत्तेभ्योऽपि सर्वसमदृष्टिभ्यो वयं युष्मानेव ईमहि प्रियत्वेन जानीम इति । " अथ भागवता यूयं प्रियाः स्थ भगवान्यथा । न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥" इति चतुर्थे तस्यैवोक्तेः । अत एवापि तत्पूर्वं " नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत । भक्तिं परां भगवति लब्धवान्पुरुषेऽव्यये ॥ " इति श्रीशिवोक्तमहिमभक्त्या भगवति समाधिस्थस्य देव्यै महिमप्रदर्शनार्थं हृदि छलेन स्वयं शिवे प्रविष्टे विरतिर्जाता । यथोक्तम्–" किमिदं कुत एवेति समाधेर्विरतो मुनिः " इति । तच्चान्यथा न सम्भवतीति । अतः श्रीविष्णोरेव सर्वोत्कर्षे सिद्धे श्रीविष्वक्सेनमार्कण्डेयादिवत्तदीयत्वे

श्रीशुक उवाच ॥ एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः ॥ जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥ २२ ॥ विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः ॥ इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥ २३ ॥ ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः ॥ क्षत्रबंधोः कर्मदोषात्पंचत्वं मे गतोऽर्भकः ॥ २४ ॥ हिंसाविहारं नृपतिं दुःशीलमजितेंद्रियम् ॥ प्रजा भजंत्यः सीदंति दरिद्रा नित्यदुःखिताः ॥ २५ ॥ एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च ॥ विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥ तामर्जुन उपश्रुत्य कर्हिचित्केशवांतिके ॥ परेते नवमे बाले ब्राह्मणं समभाषत ॥ ॥ २७ ॥ किंस्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः ॥ राजन्यबंधुरेते वै ब्राह्मणाः सत्रमासते ॥ २८ ॥

स चोक्तलक्षणो भगवान् कृष्ण एवेति दर्शयितुमाख्यानांतरमाह । एकदेति ॥२२॥२३॥२४ ॥ २५ ॥ ब्रह्मद्विष इत्यादिकां तां गाथां वाक्यम् । मयि न कश्चिद्दोषोऽतो राजदोषेणैव मत्पुत्रा म्रियंत इति वारंवारं चुक्रोशेत्यर्थः ॥२६॥२७॥ ब्रह्मन् किंस्विदिति । किमर्थं वृथा रोदिषि । यतस्त्वन्निवासे धनुर्धरमात्रोऽपि राजन्यबंधुरपि नास्ति ब्रह्मण्यस्य तु का वार्ता एते तु सत्रे याग इव ब्राह्मणा मिलिता भवितुमर्हंतीत्यर्थः ॥ २८ ॥

नैव वैष्णवैः स आदरणीयः ‘ वैष्णवानां यथा शंभुः ’ इति द्वादशान्तवचनात्परमवैष्णवत्वेन तु सुतराम् । यत एवोक्तमादिवाराहे—“ जन्मान्तरशतेनाऽपि समाराध्य वृषध्वजम् । वैष्णवत्वं लभेद्धीमान्सर्वपापक्षये सति ॥ ” इति । निन्दादिकं तु सर्वथा परिहर्तव्यम् “ यो मां समर्चयेन्नित्यमेकान्तं भावमाश्रितः । विनिन्दन्देवमीशानं स याति नरकं ध्रुवम् ॥ ” इत्यादिश्रीभगवद्वाक्यादिभ्यः । अत्र श्रुतयः—“ यं कामये तमुग्रं कृणोमि तं ब्रह्माणं तं सुमेधाम् ॥ मम योनिरप्स्वन्तः समुद्रे ”इति महाशक्तिवचने । “मध्येवामनमीशानं विश्वेदेवा उपासते” इति तैत्तिरीयोपनिषदि । “रुद्रजापकशतमेकमथर्वाङ्गिरसशिखाध्यापकेन तत्सममथर्वाङ्गिरसशिखाध्यापकशतमेकं मंत्रराजाध्यापकेन तत्समम्” इति श्रीनृसिंहतापन्याम्।तदेतच्छ्रीभागवतसंदर्भपरमात्मभक्तिसंदर्भयोर्विस्तृतमस्तीत्यलमतिविस्तरेण॥२१॥स च भृगुपरीक्षित उक्तलक्षणो नित्यधर्मज्ञानादिरूपः श्रीकृष्ण एवेत्याह—एकदा श्रीकृष्णस्य यज्ञकाले॥*॥ इत्थमुक्तः श्रीविष्णोरुत्कर्षः स्वयं भगवति श्रीकृष्ण एव पर्यवस्यतीत्याशयेन साक्षात्तन्माहात्म्यमेव विशेषतो निरूपयितुं प्रसंगान्तरमारभते—एकदेति।तुशब्दःपूर्वोक्ताविशेषापेक्षया।किल प्रसिद्धौ प्रसिद्धमेवैतादित्यर्थः । हे भारतेति । यथा नष्टो भरतवंशस्त्वज्जीवनेन भगवतोद्धृतस्तथास्य विप्रस्य वंशमप्येतत्पुत्रजीवनेनोद्धरिष्यतीति भावः । यद्वा—भरतवंशयशोवृद्ध्यर्थमेव भगवता तदा जीवित इति भावः ॥ २२ ॥ इदं वक्ष्यमाणम् ॥ * ॥ यस्य सा पत्नी स विप्रः राज्ञ उग्रसेनस्य द्वारि प्रोवाच सकाकु चुक्रोशेत्यर्थः ॥ २३ ॥ ब्रह्मद्विषः वेदविष्णुविप्रविरोद्धुः । शठधियो वञ्चनापरस्य ॥ * ॥ ब्रह्म वेदो ब्राह्मणजातिर्वा तद्द्वेष्टीति तथा तस्य । ब्राह्मणमरणेऽप्यौदासीन्यादिति भावः । यतः शठा धर्मरहिता धीर्यस्य तस्य । तत्र हेतुर्विषयेष्वात्मा बुद्धिर्यस्य । तत्रापि हेतुः क्षत्रबन्धोरिति क्षत्रियाधमस्य ॥ २४ ॥ दुःशीलं धर्मद्वेष्टारम् । सीदन्ति क्लिश्यन्ति ॥ * ॥ राजदोषेण स्वबालमरणे शास्त्रं प्रमाणयाति—हिंसेति । हिंसाविहारे हेतुः—दुःशीलं दुष्टस्वभावम् । तत्र च हेतुः—अजितेन्द्रियम् । सीदन्ति विषण्णा भवन्ति ॥ २५ ॥ इत्यर्थ इति—अधर्मवर्तिनां राज्ञां विषये कुतः प्रजानां सुखमिति भावः ॥ * ॥ विप्रार्षिरिति । तस्य स्वतो दोषेऽभावे आदरणीये च योग्यता दर्शितेति ॥ २६ ॥ परेते मृते ॥ * ॥ केशवान्तिक इति पार्थस्याधार्ष्ट्यबोधनार्थम् । केशौ जगत्स्रष्टृसंहर्तारावपि यस्य वशे तस्य तद्रक्षणं किं दुर्घटमित्यविचारात् ॥ २७ ॥ एते यदवस्तु । इत्यर्थ इति—यागे यथा भोजनाद्यर्थमितस्ततो ब्राह्मणा आगत्य तिष्ठन्ति एवं यादवा अपि विषयसुखलम्पटत्वारक्षणाद्ब्राह्मण

धनदारात्मजापृक्ता यत्र शोचंति ब्राह्मणाः ॥ ते वै राजन्यवेषेण नटा जीवंत्यसुंभराः ॥ २९ ॥ अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ॥ अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥ ३० ॥ ब्राह्मण उवाच ॥ संकर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ॥ अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवंति यत् ॥ ३१ ॥ तत्कथं नु भवाकर्म्म दुष्करं जगदीश्वरैः ॥ चिकीर्षसि त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥ ३२ ॥ अर्जुन उवाच ॥ नाहं संकर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च ॥ अहं वा अर्जुनो नाम गांडीवं यस्य वै धनुः ॥ ३३ ॥ माऽऽवमंस्था मम ब्रह्मन्वीर्यं त्र्यंबकतोषणम् ॥ मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ॥ ३४ ॥ एवं विश्रंभितो विप्र फाल्गुनेन परंतप ॥ जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ ३५ ॥ प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ॥ पाहिपाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥

तदेवाह । धनदारात्मजापृक्ता यत्रेति । धनादिभिर्वियुक्ताः संतो यत्र येषु जीवत्सु राजन्येषु शोचंति ते जीवंति केवलं जीविकां संपादयंति ॥ २९ ॥ हतकल्मष इति । अग्निप्रवेशेन ब्राह्मणविलापश्रवणपातकात्पूतो भवेयमित्यर्थः । अहतकल्मष इति वा ॥ ३० ॥ ३१ ॥ न श्रद्दध्महे न संप्रतीमः ॥ ३२ ॥ ३३ ॥ ३४ ॥ एवं प्रौढिवादैर्विश्रंभितो विश्वासं प्रापितः । निशामयन् शृण्वन् ॥ ३५ ॥ ३६ ॥

दिकं नानुसन्दधत इति भावः ॥ * ॥ ब्रह्मन्निति सगौरवसम्बोधनं तत्सान्त्वनार्थं विश्वासार्थं तत्रत्यानां तदुपेक्षादोषव्यञ्जनार्थं च । वै उत्प्रेक्षायाम् ॥ २८ ॥ तदेव ब्राह्मणारक्षणमेव । येषु क्षत्रियेषु । ते क्षत्रियविडम्बना एव नटा इव प्राणादिधारणार्थं शस्त्रादि बिभ्रतीत्यर्थः ॥ * ॥ परमनीचत्वेनैव वितर्क्या इत्याह—धनेति ॥ २९ ॥ इह द्वारकायाम् । वां युवयोः स्त्रीपुंसयोः । इत्यर्थ इति—ब्राह्मणदुःखं समर्थेनापाकार्यमन्यथा पातकी स्यादिति भावः । अहतकल्मषश्चेत्तर्हि मिथ्याप्रतिज्ञत्वादग्निं प्रवेक्ष्य इत्यर्थः ॥ * ॥ वां युवयोरिति महाशोकेन ब्राह्मण्यात् अपि तत्रागमनात् । प्रतिज्ञाभङ्गदोषरहितः स्यामित्याह—हतकल्मष इति ॥ ३० ॥ ॥ ० ॥ * ॥ सङ्कर्षेति युग्मकम् । तत्र सङ्कर्षणादिचतुर्णां नामव्युत्पत्त्यैव स्पष्टमहिमतया साम्येऽपि उत्तरयोर्विशेषणदानेन सामान्यमभिप्रैति । यत् मदपत्यरक्षणरूपं कर्म । त्रातुं निर्विघ्नीकर्तुं न शक्नुवन्ति ॥ नो सहन्ते ॥ ३१ ॥ बालिश्यान्मौर्ख्यात् । ‘ बालिशो बालमूर्खयोः ’ इति हलधरः ॥ * ॥ ० ॥ ३२ ॥ ० ॥ * ॥ सङ्कर्षण इति गर्भसङ्कर्षणस्य । कृष्णश्चेति सुश्यामत्वमात्रस्याभिप्रायेण । नञः पुनः प्रयोगो निषेधदार्ढ्याय । कार्ष्णिरेव प्रद्युम्नोऽपि । अत्यन्तावज्ञयानिरुद्धस्य नामापि न प्रस्तुतम् ॥ ३३ ॥ मृत्युं यमराजम् । प्रधने युद्धे ॥ * ॥ त्र्यम्बकस्य किरातच्छन्नवेषस्य तोषणं तत्तुल्यतया प्रीतिकरं तथा भारताख्यानात् । अथ विप्राश्वासनार्थं प्रतिजानीते—मृत्युमिति । प्रधने रणे विशेषेण मारणादिनापि जित्वा प्रजाः सर्वानपि न केवलमेतामेव । प्रजामिति पाठो बहुत्र । श्रीमदर्जुनस्यापि ईदृशी गर्वोक्तिर्ब्रह्मण्यदेवस्य विप्रोपेक्षया सख्येन क्रोधभवमनोदुःखविशेषोत्पत्तेः तेन तदुपेक्षा च ‘ विप्रात्मजा मे युवयोर्दिदृक्षुणा ’ इति श्रीमहाकालपुराधिपवक्ष्यमाणानुसारेण तदुत्कण्ठाप्रतिपालनाय न तव भयमपि समञ्जसम् ॥ ३४ ॥ एवमुक्तरीत्या । प्रौढिवादैः साहङ्कारवाक्यैः ॥ * ॥ ० ॥ ३५ ॥ ० ॥ * ॥ हे परन्तपेति । हे शत्रुनाशन त्वदेतादृशत्वकरणस्य त्वत्पितामहस्योक्तौ वीर्ये वा विप्रस्य विश्वासो युक्त एवेति भावः । प्रसूतिकाल इत्यनेन तदर्थं द्वारकायामर्जुनस्यैकाब्दं वासो ज्ञेयः । स्वपुराद्वा गर्भपूर्तिं ज्ञात्वा पुनरागतः । आतुरो भयपीडितः सन्नाह—भार्यावचनादानयार्जुनमिति । रात्रावर्जुनान्तिकमागत्येति शेषः । एवमग्रेऽपि तद्विप्रगृहं गतः सन्निति शेषः । तथा च हरिवंशेऽर्जुनवाक्ये—“ गतेऽर्धरात्रसमये ब्राह्मणो भयविह्वलः । उपागम्य भयादस्मानिदं वचनमब्रवीत् ॥ ” इत्यादि । “ मुहूर्तेन वयं ग्रामं तं प्राप्य भरतर्षभ । विश्रान्तवाहनाः सर्वे निवासायोपसंस्थिताः ॥ ”

स उपस्पृश्य शुच्यंभो नमस्कृत्य महेश्वरम् ॥ दिव्यान्यस्त्राणि संस्मृत्य सज्यं गांडीवममाददे ॥ ३७ ॥ न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः ॥ तिर्यगूर्ध्वमधः पार्थश्चकार शरपंजरम् ॥ ३८ ॥ ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ॥ सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥ तदाह विप्रो विजयं विनिंदन्कृष्णसंनिधौ ॥ मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥ ४० ॥ न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ॥ यस्य शेकुः परित्रातुं कोन्यस्तदवितेश्वरः ॥ ४१ ॥ धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ॥ दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः ॥ ४२ ॥ एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ॥ ययौ संयमिनीमाशु यत्रास्ते भगवान्यमः ॥ ४३ ॥ विप्रापत्यमचक्षाणस्तत ऐंद्रीमगात्पुरीम् ॥ आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ॥ रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥ ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥ अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥ ४५ ॥

ब्राह्मणोपेक्षकत्वेन कृष्णावज्ञया महेश्वरं नमस्कृत्य ॥ ३७ ॥ न्यरुणदावृतवान् । तदेवाह । तिर्यगूर्ध्वमिति ॥ ३८ ॥ अदर्शनमापेदे देहोऽपि नावशिष्ट इत्यर्थः ॥ ३९ ॥ ४० ॥ यस्य प्रजाः तत्तत्र ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ प्रत्युक्तो वारितः । उपपत्तिभिः प्रतिषेधं कुर्वता ॥ ४५ ॥

इति च ॥ ३६ ॥ सोऽर्जुनः । दिव्यानि देवेभ्यो लब्धानि ॥ * ॥ सोऽर्जुनः । महेश्वरं न तु कृष्णं तत्र सख्यादेव ब्राह्मणोपेक्षकत्वेन दोषदर्शनात् । परन्तु भगवदवज्ञया शिवभजनमकिञ्चित्करमिति द्योतितम् ॥ ३७ ॥ ० ॥ * ॥ नानास्त्रैर्ब्रह्मास्त्रादिविधानेन योजितैः प्रयुक्तैः ॥ ३८ ॥ ततः शरपञ्जरकरणानन्तरम् । इत्यर्थ इति– " हठाद्यत्क्रियते कर्म तन्न सिद्ध्यति कर्हिचित् " इत्युक्तेश्वरावज्ञया प्रवृत्तत्वा दतीव वैषम्यं जातमिति भावः ॥ * ॥ विहायसाऽऽकाशमार्गेणादर्शनमापेदे । तदुक्तं तत्रैव–" अथाकाशे पुनर्वाचमश्रौषं बालकस्य वै । हं हेति क्रियमाणस्य न चापश्याम राक्षसम् ॥ " इति । कृष्णेच्छया विना दिव्यास्त्राणि स महेश्वरश्च बालकस्य शरीरमपि रक्षितुं नाशकान्निति भावः ॥ ३९ ॥ तदा बालशरीरदर्शनाभावकाले ॥ * ॥ तदा ततः । विजयमिति । सर्वविजयशीलस्य निन्दा त्वतिदुःसहेति भावः । कृष्ण सन्निधाविति । स्वगृहान्तिके रहसि तन्निन्दने रसालाभादिति भावः ॥ ४० ॥ यस्य मम प्रजा इति शेषः ॥ * ॥ यस्य यम् । तत्तस्मादन्यः क ईश्वरोऽस्ति तेषां चतुर्णामेकात्मकत्वाद्द्वितीयेश्वराभावादन्यो नास्ती त्यर्थः ॥ ४१ ॥ दैवेनोपसृष्टं नाशितम् । आनिनीषत्यानेतुमिच्छति ॥ * ॥ दैवेन प्रारब्धकर्मणा ईश्वरेच्छया वा । उपसृष्टं हतम् । न केवलं मूर्ख एव दुर्मतिर्दुष्टबुद्धिरपीत्यर्थः । नाहं सङ्कर्षण इत्याद्युक्तेः ॥ ४२ ॥ शपति आक्रोशति सति । संयमनीं यमपुरीम् । विद्यां मनुष्यागम्यगमनसामर्थ्यकरीम् ॥ * ॥ भगवान् भूतानां प्रवृत्तिनिवृत्त्यादिवेत्ता तद्बालकनयनेऽतियोग्य इत्यर्थः । अत आदौ तत्रैव गमनमिति भावः ॥ ४३ ॥ ततो यमपुरान्वेषणोत्तरम् । अन्यानि धिष्ण्यानि यक्षकिंपुरुषादिस्थानानि ॥ * ॥ विप्रेति सार्द्धकम् । अचक्षाणः अपश्यन् । विद्याबलादेवावगतस्य तस्य तद्रूपस्यादृष्टेः । सौम्यामुत्तरदिग्वर्तिनीं सोमपुरीम् । वारुण वायव्यपुरीद्वयातिक्रमेण तस्यां गमनं सर्वद्रष्टुः सर्वदेशभ्रमणशीलस्य तस्य निजादिपुरुषस्य पृष्टेच्छया । ततश्च मया न दृष्टं तथाप्यन्विष्यतामित्युक्तः । पश्चाच्चोत्क्रमेण । वायव्यां वारुणीमपि । ऐशान्यामगमनञ्च स्वगु रुणा शिवेन तन्नयनारम्भवात् । धिष्ण्यानि ब्रह्मादिस्थानानि । उदायुधो युद्धोत्साहेनोद्यतास्त्रशस्त्र इत्यस्य पूर्वैरप्यन्वयः ॥ ४४ ॥ ततः सर्वत्र गमनोत्तरम् । न लब्धो द्विजसुतो येन स तथा । न निस्तीर्णं

दर्शये द्विजसूनूंस्ते मावज्ञात्मानमात्मना ॥ ये ते नः कीर्तिं विमलां मनुष्याः स्थापयिष्यंति ॥४६॥ इति संभाष्य भगवानर्जुनेन सहेश्वरः ॥ दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥ सप्त द्वीपान्सप्त सिंधून्सप्तसप्त गिरीनथ ॥ लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४८ ॥ तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥४९॥ तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः ॥ सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत्पुरः ॥ ५० ॥ तमः सुघोरं गहनं कृतं महद्विदारयद्भूरितरेण रोचिषा ॥ मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥ द्वारेण चक्रानुपथेन तत्तमःपरं परं ज्योतिरनंतपारम् ॥ समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे ॥ ॥ ५२ ॥ ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभूषणम् ॥ तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तंभसहस्रशोभितम् ॥ ५३ ॥

मावज्ञ माऽवजानीहि। ये निंदंति त एव मनुष्या नः कीर्तिं स्थापयिष्यंति निश्चलां करिष्यंति। पाठांतरं तु छन्दोभंगभयादागंतुकमिति ॥ ४६॥४७॥ सप्तसप्तसंख्या गिरयो येषु द्वीपेषु तान् ॥ ४८ ॥ ४९ ॥ ५० ॥ कृतमिति प्रकृतिपरिणामरूपं नालोकाभावमात्रम् ॥ ५१ ॥ चक्रानुपथेन चक्रमनुगतेन द्वारेण । तत्तमःपरं तस्मात्तमसः परं दूरे वर्तमानं परं श्रेष्ठं भागवतं ज्योतिः समश्नुवानं व्याप्नुवत्प्रसमीक्ष्य प्रताडिताक्षो नेत्रे न्यमीलयदिति ॥ ५२ ॥ एजंत उच्चलंतो बृहंतो महांत ऊर्मयो भूषणं यस्य तत्। तत्र सलिले भवनं महाकालपुरम्। द्युमत्तमं द्युतिमत्सु श्रेष्ठम् ॥ ५३ ॥

प्रतिश्रुतं ब्राह्मणाऽपत्यानयनलक्षणं येन स तथा ॥ * ॥ ततस्तेष्वलब्धद्विजपुत्रः सन् । हि निश्चितम् । प्रत्युक्तस्तन्मुमूर्षाप्रातिकूल्येन मा विशाऽग्निं प्राप्स्यसि द्विजापत्यमित्येवंरूपेणोक्तः ॥ ४५ ॥ ते तुभ्यम् । आत्मना स्वयमात्मानम् । पाठान्तरं तु स्थापयिष्यन्तीति पाठस्तु आगन्तुकम् आयास्यत्येव । स्थापयिष्यन्तीति बहुत्वं तु अन्वययोजनायां वाच्यमेवेत्यर्थः । “ कीर्तिं त एते विपुलां स्थापयिष्यन्ति मानवाः ” इति पाठस्तु सुगम एव । यद्वा—स्थापयिष्यतींत्येकत्वमार्षम् ॥ * ॥ ० ॥ ४६ ॥ इति इत्थम् ॥ * ॥ ० ॥ ४७ ॥ तथा सप्तद्वीपलंघनरीत्या । अथ लोकालोकलंघनोत्तरम् ॥ * ॥ ० ॥ ४८ ॥ तत्र तमसि ॥ * ॥ ० ॥ ४९ ॥ तान श्वान्भ्रष्टगतीन् ॥ * ॥ ० ॥ ५० ॥ गुणाज्ज्यायाश्च्युतम् । आलोकाभावमात्रं तम इत्येवं वदन्तस्तार्किकाः कृतमित्युक्त्या परास्ताः ॥ * ॥ गहनं निबिडं महत् विततं च यथा स्यात्तथा कृतं परमेश्वरेणैव सम्पादितं तमो भूमिगतमित्यर्थः । तदुक्तं हरिवंशे—“ पञ्चभूतं हि तिमिरं स्पर्शाद्विज्ञायते न तु ” इत्यादि ॥५१॥ अनन्तपारमन्तपाररहितम् ॥ * ॥ चक्रानुपथेन द्वारेण चक्रेणैव तदा सप्तावरणभेदो ज्ञेयः । यत् तदनन्तरं गच्छन् फाल्गुनः तमसः प्रकृतेः परं प्रकृत्यावरणादष्टमात्परं पारभूतं तद्वेदान्तादिप्रसिद्धं परं ब्रह्मभूतं भागवतं ज्योतिः प्रसमीक्ष्य चिच्छक्तिमयतया साक्षाच्चक्षुषा दृष्ट्वा तेन प्रताडिताक्षः चकितेक्षणः नेत्रे न्यमीलयत् । परत्वमाह—अनन्तेति । तत्रैव हेतुः—समश्नुवानं सदा सर्वव्यापकम् । तत्र पुनर्मायावृतदृष्टित्वादेवादर्शनमभूदिति । तथा हरिवंशेऽर्जुनवाक्यम्—“ततस्तेजः प्रज्वलितमपश्यं तत्तदम्बरे । सर्वलोकं समाविश्य स्थितं पुरुषम्” इत्यादि।तच्चरितसमाप्तौ श्रीकृष्णोपदेशश्च—“ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसि । अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ॥ प्रकृतिः सा मम परा व्यक्ताव्यक्ता सनातनी । तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः ॥ सा सांख्यानां गतिः पार्थ योगिनां च तपस्विनाम् । तत्परं परमं ब्रह्म सर्वं विभजते जगत् ॥ ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत ।” इति । अत्र मत्तेज इति तद्ब्रह्म मत्तेजोऽपि । अहं स इति सोऽहमेवेति तेजस्तेजस्विनोरभेदात् । प्रकृतिः सा मम परेति । तच्चिन्मयं ब्रह्म ममैव स्वरूपशक्तिः । परेति मायातीतत्वात् । व्यक्ता चिन्मयनेत्रग्राह्यत्वात्, अन्यथाऽव्यक्तेत्यर्थः । ममैवेत्येवकारस्तन्मध्यस्थेनाष्टभुजेन स्वाभेदापेक्षयेति ज्ञेयम् ॥ ५२ ॥ ततो ज्योतिषो

तस्मिन्महाभीममनंतमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः ॥ विभ्राजमानं द्विगुणोल्बणेक्षणं सिताचलाभं शितिकंठजिह्वम्॥५४॥ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ॥ सांद्रांबुदाभं सुपिशंगवाससं प्रसन्नवक्रं रुचिरायतेक्षणम् ॥ ५५॥ महामणिव्रातकिरीटकुंडलप्रभापरिक्षिप्तसहस्रकुंतलम् ॥ प्रलंबचार्वष्टभुजं सकौस्तुभं श्रीवत्सलक्ष्म्या वनमालया वृतम् ॥ ५६ ॥ सुनंदनंदप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ॥ पुष्ट्या श्रिया कीर्त्यजयाऽखिलर्द्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ५७ ॥ ववंद आत्मानमनंतमच्युतो जिष्णुश्च तद्दर्शनमात्तसाध्वसः ॥ तावाह भूमा परमेष्ठिनां प्रभुर्बद्धांजलि सस्मितमूर्जया गिरा ॥ ५८ ॥

सहस्रं मूर्ध्नि भवाः फणास्तासु मणयस्तेषां द्युतिभिः । द्विसहस्रनेत्रैरूर्जितं स्फटिकगिरिसंकाशम्। शितिकंठजिह्वं कंठाश्च जिह्वाश्च कंठजिह्वाः शितयो नीलाः कंठजिह्वा यस्य तम् ॥५४॥तद्भोगसुखासनं तस्यानंतस्य भोगो देहः सुखकरमासनं यस्य तम्॥५५॥महांतो मणिव्राता येषु तेषां किरीटकुंडलानां प्रभा तया परिक्षिप्ताः सर्वतः स्फुरंतःसहस्रमपरिमिताः कुंतला यस्य तम् ॥ ५६ ॥ कीर्त्यजया कीर्तिसहितया अजया । अखिलर्द्धिभिरणिमादिविभूतिभिर्मूर्तिधराभिः ॥ ५७ ॥ ऊर्जया ऊर्जितया गिरा ॥ ५८ ॥

दर्शनोत्तरम् । रथेन सलिलं प्रविष्टं जले रथः प्रविष्ट इत्यर्थः ॥ * ॥ ततस्तत्रैव वर्तमानं सलिलं विरजानदीरूपं "प्रधानपरमव्योम्नोरन्तरे विरजा नदी" इति पाद्मोत्तरखण्डात् । कारणार्णवोदकमिति **विश्वनाथः** ॥ नभस्वता हेतुना । अद्भुतं सर्वलोकातीतम् । वै प्रसिद्धौ । द्युमत्तमं पूर्वोक्ततेजसोऽप्याधिक्यमभिप्रेतम् । तत्रैव हेतुः—भ्राजन्तम् । सदा स्वयमेव प्रकाशमानानां मणिमयस्तम्भानां सहस्रेण द्योतितम् । एवं भवनस्यातिविस्तारश्चोक्तः । तैरुद्दिष्टं महाकालपुरं चेदं मृत्युञ्जयतन्त्राल्लभ्यते "ब्रह्माण्डस्योर्द्ध्वतो देवि ब्रह्मणः सदनं महत् । तदूर्द्ध्वे देवि विष्णूनां तदूर्ध्वे रुद्ररूपिणाम् ॥ तदूर्द्ध्वे च महाविष्णोर्महादेव्यास्तदूर्द्ध्वगम् । कालातिकाल्योश्चाथ परमानन्दयोस्ततः ॥ परिपूर्णमहावेगः कालः सर्वभयावहः । ततः श्रीरत्नपीयूषवारिधिर्नित्यनूतनः ॥ तस्य तीरे महाकालः सर्वग्राहकरूपधृक् । तस्यांतिके समुद्रोस्ति रत्नद्वीपः शिवाह्वयः ॥" इत्यादि । "ध्यायेत्तत्र परानन्दं रामोपास्यं परं महत् । स्मरेद्वृन्दावने रम्ये मोहयन्तमनारतम् ॥ बल्लवीवल्लभं कृष्णं गोपकन्याः सहस्रशः ।" इत्येवमंतं बहुविस्तृतमस्ति । तत्र ब्रह्मणः सदनं सत्यलोकः । विष्णूनां विकुण्ठासुतानां वैकुण्ठः । रुद्ररूपिणामिति अहंकारावरणस्थो रुद्रलोकः । महाविष्णोरिति महत्तत्त्वावरणस्थो महाविष्णुलोकः । महादेव्या इति प्रकृत्यावरणस्थो महादेवीलोकः । ब्रह्मपीयूषवारिधिः कारणार्णवः । महाकालः परमव्योमस्थो महावैकुण्ठनाथः । तस्यैव कारणार्णवजलान्तर्गतं भवनं महाकालपुरम् फाल्गुनो ददर्शेति पूर्वस्योत्तरस्य चानुषंगः ॥ ५३ ॥ तस्मिन्भवनेऽनन्तं ददर्श । तथा तद्भोगसुखासनं विभुं च ददर्श । नोत्तरेणान्वयः । महाभीममतिभयंकरम् ॥ * ॥ तस्मिन्निति चतुष्कम् । महान्फणादिभिरपरिच्छिन्नो भोगो देहो यस्य तम् । 'शिती धवलमेचकौ' इत्यमरः ॥ ५४ ॥ ० ॥ * ॥ पुरुषेषु त्रिषु उत्तमो विष्णुस्तेभ्य उत्तमो गर्भोदशायी आदिपुरुषो वा तस्मादप्युत्तमम् ॥ ५५ ॥ ० ॥ * ॥ ० ॥ ५६ ॥ परमेष्ठिनां ब्रह्मादिदेवानाम् । छत्रिणो यांतीतिवद्बहुत्वम् ॥ * ॥ स्वैरसाधारणैः पार्षदैर्मूर्तिधरैः स्वमस्तकोपरि तत्तच्चिह्नशोभितदेहैर्निजैः स्वाभाविकायुधैः आदिना शंखगदाखड्गचर्मशरचापपाशाः अष्टभुजत्वात् । श्रीर्महिषी । पुष्ट्याद्याः शक्तयो मूर्तिमत्य एव । परमेष्ठिनां द्विपरार्द्धान्ते मुक्तानां ब्रह्मणां तत्र कूटीभूतानां पतिं मुक्तिप्रदत्वात् । तस्य पदस्य ॥ ५७ ॥ तमात्मानं स्वस्वरूपमेवाच्युतो जिष्णुश्च ववन्दे "अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् । ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसि ॥" इति हरिवंशाच्छ्रीकृष्णेनात्मैवार्जुनाय मायया दर्शित इति । तद्दर्शनेन महाकालपुरेशेक्षणेन जातं साध्वसं संभ्रमो यस्येति तथा द्वयोर्विशेषणमिदम् । भूमा सर्वेश्वरः । तौ कृष्णार्जुनौ । ऊर्जितया प्रगल्भया ॥ * ॥ आत्मानमिति । गोवर्धनपूजायां " तस्मै

**द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये ॥ कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरयेतमंति मे ॥ ५९ ॥ पूर्णकामावपि युवां नरनारायणावृषी ॥ धर्ममाचरतां स्थित्यै ऋषभौ लोकसंग्रहम् ॥ ६० ॥**

मे कलावतीर्णाविति संबोधनम् । शीघ्रं मे अंति सकाशमितमागच्छतम् ॥ ५९ ॥ आचरतामाचरतम् । इदं भारतयुद्धात्पूर्वमेव कृतमपि श्रैष्ठ्यकथनप्रस्तावेनात्रोक्तम् ॥ ६० ॥

नमो व्रजजनैः सह चक्रेऽऽत्मनाऽऽत्मने " इतिवल्लीलाकौतुकमात्रार्थं तत्तदिति ज्ञापितम् । अनन्तामिति आत्मनोऽसंख्यस्वरूपेणानन्त्यात् सोऽष्टभुजोऽप्येक आत्मेत्यर्थः । अच्युत इति स्वयं भगवत्त्वेन तत्रापि व्यापकत्वादिच्युतिरहितः स्वीयनरलीलाच्युतिराहितोऽपीत्यर्थः । अयं वन्दने हेतुर्ज्ञेयः । विष्णुश्च तादृशोऽपि तस्य दर्शनाज्जातसाध्वसः सन्ववन्दे । तावंगीकृतात्मनरलीलौ । श्रीकृष्णोऽसौ ब्रह्माक्रूरादीन्प्रति तादृशवैभवानि कदाचिदेव प्रकाशयति गोवर्धनपूजनलीलायामिव सदा कौतुकेन नरलील एव तदनुसारेणार्जुनाद्या अपीति भावः । स तु भूमा श्रीगोवर्धनबलिभुग्वत्ततोऽपि दर्शितात्ममहत्त्वः । तत्सहायाश्च तादृशा इत्याह—परमेष्ठिनां प्रभुरिति । अत ऊर्जया श्रीकृष्णानुसारेणैवार्जुनस्य स्ववाक्यादराद्युत्पत्तये उर्जितया संप्रगल्भयेत्यर्थः । सास्मितामिति स्वप्रसादव्यंजनार्थम् ॥ * ॥ **विश्वनाथस्तु**—श्रीकृष्णस्य नरलीलत्वरक्षणार्थमेव सोऽष्टभुज ईश्वरलील एतदंशोऽपि तं वन्दितवानिति भावः[1] । जातसाध्वसः प्राप्तसंभ्रम इति कृष्णादप्ययमधिकैश्वर्यवानिति लब्धप्रतीतिक इत्यर्थः । ऊर्जयेति तयैवार्जुनं मोहयितुं प्रगल्भयेत्यर्थः । सस्मितमिति त्वदभिप्रायेणैव त्वदंशोऽप्यहं स्वाधिक्यं प्रकटीकरोमि वस्तुतस्तु तस्मिन्नेव वाक्ये तवैव रूपगुणैश्वर्याधिक्यं मदंशित्वं च द्योतयामि पश्य मे चातुर्यं त्वयापि पश्चादर्जुनाय स्वतत्त्वमवश्यं ज्ञाप्यमिति स्मितेन प्रार्थना च द्योतिता ॥ ५८ ॥ मे कलावतीर्णाविति द्वयोः सम्बोधनमर्जुनाभिप्रायकमेव लिंगसमवायन्यायेन । यद्वा—कं सुखं लाति ददातीति कला रक्षा तदर्थमवतीर्णौ मे ममावनेर्भूमेर्भरासुरान्हत्वा इहात्र मे ममान्ति समीपं युवामितमागच्छतमिति योज्यम् । अन्यथा ' कृष्णस्तु भगवान्स्वयम्' इति 'ववन्द आत्मानमजं तमच्युतः ' इति पूर्वश्लोकोक्तं च कथं संगच्छेतेति ॥ * ॥ तथापि तस्य मुखात्तयोः स्वतोऽप्यधिकं माहात्म्यमुद्गतमिति तादृशं तद्वाक्यमेवाह— द्विजेति ! हे धर्मगुप्तये कलावतीर्णौ धर्मस्य ब्रह्मण्यत्वादेर्गुप्तये रक्षणाय कलाभिः सर्वाभिः शक्तिभिर्युक्ताववतीर्णौ सर्वांशसंवलिततया प्रकटौ । मध्यमपदलोपी समासः । युवयोर्युवां दिदृक्षया । मे मया । मे मम भुवि धाम्नि द्विजात्मजा उपनीता आनीताः एवमेव वक्ष्यतेऽर्जुनेन तत्तत्त्वे पृष्टे श्रीकृष्णेनापि श्रीहरिवंशे—" मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना । विप्रार्थमेष्यते कृष्णो मत्समीपं न चान्यथा ॥" इति । तदेतच्च नापूर्वम्—"यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् । विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणांगम् ॥" इति तृतीयेऽपि श्रीमदुद्धवोक्तेः । तदेवं यद्यपि तत्र तस्य स्पृहयालुत्वं तथा सर्वत्रापि करतलमणिवत्सर्वदर्शित्वं सर्वाकर्षित्वं च । तथापि तेन स्वेच्छया निकटमागत्य दर्शनदानं विना स तं द्रष्टुं न शक्नोति कष्टकल्पनयैव तत्सम्पादितमिति च शक्त्याधिक्यमप्यायातं किमुत सौन्दर्यादिगुणाधिक्यमिति स्थितम् । हरिवंशादत्र त्वयं विशेषः—यः खल्वर्जुनं प्रत्यपि तथा तस्य दिदृक्षेति । युक्तं च तत्—"ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः । तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥" इति न्यायेन । तदुक्तं विष्णुधर्मे श्रीकृष्णेनैव तं प्रति—"यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु । अभेदेनात्मनो वेद्मि त्वामहं पांडुनन्दन ॥" इति । प्रस्तुतपद्यावशेषो व्याख्यायते—नन्वेवमपि जातमधुना तु किं कर्तव्यं तत्राह—भूयः पुनरपि अवशिष्टानवनेर्भरासुरान्हत्वा मे मम अन्ति अन्तिकाय समीपमागन्तुं त्वरयेतं शीघ्रं प्रस्थापयेतं मोचयतमित्यर्थः । अत्रागत्य ते मुक्ता भवन्त्विति द्वितीयस्कन्धे क्रममुक्तिसृतावष्टावरणभेदानन्तरमेव मोक्षश्रवणात् तद्धाम्नो मुक्तगम्यत्वेन हरिवंशोक्तत्वात् । अन्तीत्यव्ययाच्चतुर्थ्या लुक् । चतुर्थी च " क्रियार्थोपपदस्य च कर्मणि स्थानिनः " इति स्मरणात् एधोभ्यो व्रजतीतिवत् । त्वरयेतमिति हेतुमण्णिजन्तस्य त्वरेर्लिङि रूपम् । क्त्वाऽऽख्यान्ताक्रिययोरेककर्मत्वं च कटं कृत्वा प्रस्थापयेतिवत् । अर्थान्तरे मे कलावतीर्णाविति व्यवहितान्वयः। त्वरयेतमिति सोपसर्गमेव प्रयुज्येत स्वनिकटप्रापणादेशे तथा व्यवहारात् । आस्तां तावदस्मन्मतं श्रीकृष्णस्य स्वयं भगवत्त्वं नित्यलीलत्वञ्चेति ॥ ५९ ॥ पूर्णकामावपि लोकसंग्रहार्थं धर्ममाचरतं युवाम् । इदं ब्राह्मणपुत्रानयनादि । श्रैष्ठ्यं प्राशस्त्यम् ।

[1] अत्राऽऽकारलोपसंधिरार्षः ।

इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ॥ ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ ६१ ॥ न्यवर्ततां स्वकं धाम संप्रहृष्टौ यथागतम् ॥ विप्राय ददतुः पुत्रान्यथारूपं यथावयः ॥ ६२ ॥ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ॥ यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकंपितम् ॥ ६३ ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥

प्रस्तावः प्रसङ्गः ॥ * ॥ नन्वावां सर्वतः परिपूर्णौ कथं ब्रह्मण्यत्वादिधर्मपरौ स्याव इत्याशंक्य केवलकरुणया धर्मसंस्थापनार्थमेवेति सिद्धान्तयन्नुदाहरणं दर्शयति–पूर्णेति । युवामृषभौ सर्वाविर्भावश्रेष्ठावपि तत एव पूर्णकामावपि स्थित्यै सर्वपालनाय लोकसंग्रहं धर्ममाचरताम् मध्ये नरनारायणौ ऋषी तौ युवयोर्विभूतिरूपावंशावित्यर्थः । वक्ष्यते हि श्रीकृष्णेनोद्धवं प्रति विभूतिप्रसंगे ' नारायणो मुनीनां च ' इति । अतस्तावपि यदि तादृशौ तदा किमुत साक्षाद्भवन्ताविति भावः । अत्र चाचरतामित्यर्थ एव खल्वाचरतामिति न प्रसिद्धमित्यादि तथा न व्याख्यातमित्यपि ज्ञेयम् । किञ्च–मदन्तिकमागच्छतमिति नरनारायणौ भूत्वा धर्ममाचरतमिति पारस्परिकविरोधश्च ज्ञेयः ॥ ६० ॥ इतीत्थम् । आदिष्टावाज्ञप्तौ । द्विजपुत्रानादाय स्वकं धाम न्यवर्ततामिति द्वयोः सम्बन्धः ॥ * ॥ इतीत्यर्द्धकम् । इति पूर्वोक्तप्रकारेण गोवर्धनमखवल्लीला विशेषसंपादनाभिप्रायेण आदिष्टावादेशमुद्रयोक्तौ । तत्र भगवच्छब्दः स्पष्टैश्वर्यादिव्यपेक्षया । कृष्णशब्दश्च स्वयं भगवति ' कृषिर्भूवाचकः शब्दः ' इत्यादिप्रामाण्येन परब्रह्मत्वापेक्षया । श्रीमदर्जुनेऽपि तत्सना मत्वेन निर्देशः पूर्ववत्समशीलत्वापेक्षया उभयत्र तादृशत्वेऽपि नराकृतिपरब्रह्मेत्यादिप्रसिद्ध्या नरलीलावित्यर्थः ॥ ६१ ॥ इत्यादिष्टावित्यारभ्य यथावय इत्यन्ते द्वे पद्ये सन्तत्यर्थं सपादनियुते जप्ये तेनावश्यं सन्तीतलाभ इति, लिखित्वा धारणादपीति मंत्रशास्त्रादवसेयम् । अस्य श्लोकद्वयात्मकमंत्रस्य व्यासऋषिः कृष्णो देवताऽनुष्टुप् छन्दः सन्तत्यवाप्तये जपे विनियोगः । ध्यानं तु–" विजयेन युतो रथास्थितः प्रसमानीय समुद्रमध्यतः । अददत्तनयान्द्विजन्मने स्मरणीयो वसुदेवनन्दनः ॥ " जपश्च स्मरबीजसम्पुटितः कार्यः जीवपुत्रकमालया । "जीवपुत्रस्य बीजैश्च दशांशं होममाचरेत् । अस्य धारणमपि स्त्रिया कार्यं वामभुजे इति ॥ * ॥ स्वकं धामेति । यथा तस्य तन्नित्यं धाम तथास्य च द्वारकाख्यमिति भावः । वक्ष्यते ह्येकादशे–" नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः " इति । संप्रहृष्टावित्यर्जुनाभीष्टसिद्धेः । श्रीभगवतस्तत एवेति । यथागतमिति पूर्वव्यातिक्रमेण ज्योतिरादिभेदक्रमादित्यर्थः । विप्रायेत्यर्द्धकम् । यथारूपं तत्पित्रादिदृष्टरूपानतिक्रमादित्यर्थः । तत्र योग्यतामाह–प्रभू दुर्घटघटनासमर्थावित्यर्जुनस्यापि तादृशत्वं व्यक्तम् ॥ ६२ ॥ ० ॥ * ॥ एतच्चरितस्य फलितमाह–वैष्णवं धाम महाकालपुराख्यं तदीयपुरं तदीयप्रभावं वा निशाम्य[1] निशम्य दृष्ट्वा परमविस्मितोऽपि पुंसां सर्वेषामेव जीवानाम् ईश्वरः प्रादुर्भावानां च यत्किञ्चित्पौरुषं शक्तिस्तत्कृष्णस्यैव अनुकम्पितं कृपासम्पादितं मेने । तादृशेनापि तेन तस्यावसरप्रार्थनात् स्वस्य च ' द्विजात्मजा मे युवयोर्दिदृक्षुणा ' इत्यादिद्वयेन तादृशतयोक्तेः । यद्वा–पूर्वोक्तप्रकारेण तत्पर्यन्तव्यापकतया विष्णुः कृष्णस्तस्य धाम प्रभावं तद्गतं स्वगतं च निशम्य " द्विजात्मजा मे युवयोर्दिदृक्षुणा " इत्यादिना तन्मुखाच्छ्रुत्वेत्यादि हरिवंशेऽप्यर्जुने तत्तत्त्वं पृष्टवति श्रीकृष्णः सर्वं तन्महापुरुषपर्यन्तं स्वस्यैव वैभवतया ज्ञापितवानिति तत्रैव दृश्यम्, तदेतद्व्याख्याकारणं मूलम् "एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् " इत्येव प्रथमस्कन्धतृतीयाध्याये सर्वभगवदाविर्भावसूत्ररूपे तत्परिभाषारूपत्वात् सूत्र्यते । विवरणीयार्थः संक्षेपेण दर्श्यते येन तद्धि सूत्रं तत्र चानियमे नियम कारिणी परिभाषा शास्त्रारंभे सकृदेव पठ्यमाना सर्वमेव व्याप्नोति । तस्मात्तदधीनान्येतदाख्यानवाक्यान्यपि यथा श्रीभागवतस्य सर्ववेदेतिहाससारभूतत्वादन्यशास्त्रवृन्दान्यपि प्रतिज्ञावाक्यमात्रस्यान्यत्रापि सर्वोपमर्दकत्वं दृश्यते । यथा–आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीत्यादिवाक्यमाकाशादीनामनुत्पत्तिवाक्यमन्यथयति किञ्च–" श्रुतिलिंगवाक्यस्थानप्रकरणसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात् " इति पूर्वमीमांसानिर्णयः " श्रुत्या दिबलीयस्त्वाच्च न बाधः " इत्युत्तरमीमांसासंमतिश्च तत्र साक्षाच्छब्देनोपदेशः । श्रुतिर्यथा–" एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् " इति । अन्यानि तु कृष्णसन्दर्भे विवृतानि । तेषां परंपरं दुर्बलम् अर्थस्य दूरदूरप्रतीतेः, इति स्थिते सर्वश्रीभागवतोपदेशप्रवृत्तस्य श्रीसूतस्य सर्वनिर्णयार्थं साक्षात्स्वयं भगवच्छब्देनोपदेशाय सर्वतो बलवानेवेति । इत्थमेव सर्वत्रैव तैस्तैरिदमेव वाक्यं प्रमाणीक्रियते लीलायाश्च नानाकौतुकिनः

१ निशाम्येतिपाठः प्राचीनः ।

इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ॥ बुभुजे विषयान्ग्राम्यानीजे चात्यूर्जितैर्मखैः ॥ ६४ ॥
प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ॥ यथाकालं यथैवेंद्रो भगवाञ्छ्रैष्ठ्यमास्थितः ॥ ६५ ॥

॥ ६४ ॥ ६५ ॥

श्रीभगवतो लाघवदर्शनं न तत्प्रमापकं गोवर्धनबलिभुग्रूपेऽपि नारदादावपि लघुतया व्यवहारादिति च स्थिते साध्वेवोपन्यस्तम् । इत्थमुक्तः श्रीविष्णोरुत्कर्षः स्वयं भगवति श्रीकृष्ण एव पर्यवस्यतीति । तथैव हि तेषामप्युपन्यासः संगच्छते स चोक्तलक्षणो भगवान् श्रीकृष्ण एवेति दिक् ॥*॥ अत्र **विश्वनाथः**—परमविस्मित इति । प्रथममात्यन्तिकमहैश्वर्यदर्शनेनाहो तावदहं पाण्डुपुत्रो मर्त्योऽपि कृष्णप्रसादादेव सर्वमूलभूतं परमेश्वरमिममपश्यमिति विस्मितः । ततः क्षणं परिमृश्याहो तेन कथं ‘ युवयोर्दिदृक्षुणा ’ इत्युक्तं सर्वादिपरमेश्वरस्य तस्य स्वांशे कृष्णे दिदृक्षा कथं सम्भवेत्संभवतु वा सा कादाचित्की किन्तु दिदृक्षतेत्यनुक्त्वा दिदृक्षुणेति ताच्छील्यप्रत्ययेन दिदृक्षायां सार्वदिकत्वं बुध्यते । भवतु वा सार्वदिकी दिदृक्षा द्वारकायां कृष्णविभुत्वात्स्वसृज्याविश्वस्य करामलकतुल्यत्वाच्च तत्र स्थित्यैव कथं न पश्यति नास्तु वा विभुत्वं विप्रापत्यहरणार्थं प्रतिवर्षं द्वारकां गच्छत्येव तत्रत्यतैलिकताम्बूलिकादिभिरपि दृश्यमानं कृष्णं कथं न पश्यति कृष्णस्येच्छां विना कृष्णदर्शनं न भवेदिति चेन्नास्तु कृष्णदर्शनं ब्रह्मण्यदेवो भूत्वापि ब्राह्मणं प्रतिवर्षं कथं दुःखयति तन्मन्ये कृष्णदर्शनौत्कण्ठ्यं त्यक्तुमपि न शक्नोति यदर्थमकृत्यमपि कुरुते करोत्वनर्थं तदर्थं किन्तु विप्रापत्याहरणार्थं कमपि सेवकं किं न प्रहिणोति स्वयं कथं याति तन्मन्ये द्वारकातस्तदाहरणं तदन्यैर्दुःशकं तस्मात्कृष्णनगरस्थं विप्रं तथा दुःखयामि यथा तद्दुःखं सोढुमसमर्थः कृष्णो मह्यं दर्शनं दास्यतीति तदभिप्रायोऽवगम्यते । अत एवान्तर्यामिस्वरूपेण तेनैव प्रेरितो मुखरो विप्रः कृष्णसान्निधावेवागत्य प्रतिबालकनाशान्ते तां गाथां गायति । तस्मात्ततोऽप्यस्य कृष्णस्यैव पारमैश्वर्यमाधिकमनुमीयते इति विभाव्य परमविस्मितः । ततश्च कृष्णमेव पृष्ट्वा तत्त्वमवधारयामीति विमृश्यार्जुनेन पृष्टे सति कृष्णेनोक्तम् :। यथा हरिवंशे—“ मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना । विप्रार्थमेष्यते कृष्णो मत्समीपं न चान्यथा ॥ ” इति । मया तु विप्रार्थमपि न गतं तत्समीपं किन्तु सख्युस्तव प्राणरक्षार्थमेवं । यदि विप्रार्थमहमगमिष्यं तदा :प्रथमबालकहरणानन्तरमेव खल्वगमिष्यम् । नवमे बाले हृते सत्येव यस्मादगमं तस्मान्न तस्यानुरोधात् , किन्तु त्वदनुरोधादेवेति सर्वं तत्त्वं कृष्णमुखाच्छ्रुत्वाऽर्जुनो यत्किञ्चित्पौरुषं पुंसां परमव्योमनाथपर्यन्तानामपि पुरुषाणां तत्सर्वं कृष्णानुकम्पासम्पादितमेव मेने । इत्येवं वेदस्तवमारभ्यैव तत्कथापर्यन्तमत्र दशमस्कन्धान्ते दशमस्याश्रयतत्त्वस्य कृष्णस्यैव सर्वोत्कर्षविवरणमभूदिति ज्ञेयम् ॥ ६३ ॥ अथ :श्रीकृष्णकर्मणामानन्त्यमाह—इतीति । नरलोकविडम्बनमाह—बुभुज इति । अत्यूर्जितैरन्येन कर्तुमशक्यैर्मखैरश्वमेधादिभिः ॥ * ॥ तथैतत्प्रसङ्गेनान्यान्यपि तच्चरितानि स्मृत्वा सास्रगद्गदमाह—तानि च सर्वाणि विवक्षन्नपि श्रीपरीक्षिदायुःस्वल्पतासङ्कोचेन सदुःखमुपसंहरन्नेव चाह—इतीति । इति पूर्वोक्तप्रकारेण । ईदृशानि पूर्वोक्ततुल्यानि वीर्याण्यद्भुतकर्माणि । इह लोके । प्रकर्षेण दर्शयन्नपि लीलया ग्राम्याँल्लौकिकानपि सर्वान् विषयान्बुभुजे । ईजे च अत्यूर्जितैर्महासंविधानसम्पन्नैः ॥ ६४ ॥ श्रैष्ठ्यं गृहस्थधर्मोत्कृष्टयम् ॥ * ॥ प्रववर्ष अविच्छेदेन पूरयामास । कामान्दृष्टार्थान् । आदिना अन्त्यजादिग्रहः । भगवान्परिपूर्णैश्वर्यः । श्रैष्ठ्यं सर्वावतारावतारिभ्य आधिक्यमास्थितो नित्यमेव प्राप्तः भारतयुद्धादित्यादि स्वामिचरणैर्युक्तमेवोक्तम् । ‘वीर्यं त्र्यम्बकतोषणम्’ इत्यर्जुनेनोक्तत्वात् यद्यप्यज्ञातवासानन्तरमेवार्जुनस्य तदिदं चरितं लभ्यते तथापि तदन्तराभिमन्युविवाहपरीक्षिदाधानयोरन्तराले कालबाहुल्यमुप

हत्वा नृपानधर्मिष्ठान्घातयित्वार्जुनादिभिः ॥ अंजसा वर्तयामास धर्मं धर्मसुतादिभिः ॥ ६६ ॥ इति श्रीमद्भा॰म॰दशमस्कन्धोत्त॰ द्विज [illegible] नयनं नामैकोननवतितमोऽध्यायः ॥ ८९॥ श्रीशुक उवाच ॥ सुखं स्वपुर्यां निवसन्द्वारकायां श्रियः पतिः ॥ सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुंगवैः ॥१॥ स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकांतिभिः ॥ कंदुकादिभिर्हर्म्येषु क्रीडंतीभिस्तडिद्द्युभिः ॥ २ ॥ नित्यं संकुलमार्गायां मदच्युद्भिर्मतंगजैः ॥ स्वलंकृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥ उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ॥ निर्विशद्भृंगविहगैर्नादितायां समंततः ॥ ४ ॥ रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ॥ तावद्विचित्ररूपोऽसौ तद्गृहेषु महर्द्धिषु ॥ ५ ॥

॥ ६६ ॥ इति श्रीमद्भागवते दशमस्कंधोत्त॰ श्री॰ टीकायामेकोननवतितमोऽध्यायः ॥८९॥ चरमे तु पुनः प्रोक्ता कृष्णलीला समासतः ॥ यदुवंशप्रसूतानामानंत्यं च सकारणम् ॥ १ ॥ श्रीकृष्णविभूतिं समासेन दर्शयति । सुखं स्वपुर्यामिति । सर्वसंपदादिविशिष्टायाम् । श्रियःपतिः । षोडशसहस्रपत्नीनामेकवल्लभःसंस्तासां गेहेषु रेमे इत्यन्वयः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

लभ्यते । तदन्तरान्तरा चार्जुनस्य द्वारकागमनं सम्भाव्यत इति ॥ ६५ ॥ स्वयं कंसादीन् । अर्जुनस्यादिः प्रथमो भीमसेनोऽर्जुनादिः । तैरिति बहुत्वं धनञ्जयादिग्रहार्थम् । दुर्योधनादीन्घातयित्वा । यद्वा–अर्जुनसदृशैर्वीरैः। धर्मसुतादीत्यत्रोक्तादिना जारासन्धिसहदेवादिग्रहः ॥ * ॥ ॥ ६६ ॥ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्ध उत्तरार्ध एकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ चरमे नवतितमे । स्कन्धसमाप्त्यपेक्ष चरमपदम् । सकारणम्–कारणं चात्र भगवत्प्रसादो दैतेयनिग्रहश्च ‘ देवासुराहवहता ’ इत्यादिश्लोकद्वयेनात्रैव तथोक्तेः (१) स्वपुर्यां स्वत्वेन स्वीकृतायाम् ॥ * ॥ ततश्च चित्तसमाधानाय समातौ परमसुखमयं लीला विशेषं स्मरन्नाह–सुखमित्यादिना स्त्रिय इत्यन्तेन । तत्राद्यं षट्कम् । स्वस्य स्वयं भगवतः पुर्याम् इति स्वाभाविकता स्वलीलासुखनिवासयोग्यता चोक्ता । अत एव नितरां वसन्निति वैकुण्ठादिभ्योप्याधिक्यम् । अतस्तदीया साधारणलक्ष्म्या रुक्मिणीरूपाया अपि तथैव तत्र वास इत्याह–श्रियः पतिरिति । अत एव सर्वाभिस्तल्लीलायोग्याभिः सम्पद्भिः समृद्धायां सम्यग्वृद्धायाम् । एवमुत्तरोत्तरत्रापि वैशिष्ट्यमेवोह्यम् ॥१॥ आदिना लीलान्तरग्रहः । हर्म्येषु धनिनां योग्येषु समुन्नतगृहेषु ॥ * ॥ नवं नित्यमेव पूर्वपूर्वतो विलक्षणं यौवनं कान्तिश्च यासां ताभिः । एवं वेषवयःकान्तीरुक्त्वा वैदग्ध्यादिकमाह–कन्दुकेति । आदिना गीतनृत्यादयः । तत्र च इतस्ततः कन्दुकादिक्रीडया चलन्तीनां तडितामिव द्यौश्शोभा यासां ताभिः ॥ २ ॥ ० ॥ * ॥ एवमन्तरीणां सम्पदमुक्त्वा बाह्यां वदन्सदा चतुरङ्गसेनासेवितत्वमाह–नित्यमतिसङ्कुलाः सङ्कीर्णा मार्गा यस्यास्तस्याम् । अलंकृतैरित्यस्य मतंगजादिभिरप्यन्वयः । तत्रापि रथैः सौवर्णचित्रमयैः ॥ ३ ॥ निर्विशद्भिर्मध्वादि भुञ्जानैर्भृंगैर्विहगैश्च घोषवत्कृतायाम् ॥ * ॥ अधुना तद्वाह्यमप्याह–उद्यानेति । नादितायामधिकरणे निष्ठा । भृंगादिभिर्हेतुभिः सुजातनादितायामित्यर्थः ॥ ४ ॥ श्रियः पतिरिति कर्तृपदमाद्यपद्यगतमत्र सम्बध्यते । तावन्ति स्त्रीसमसंख्यानि विचित्राणि रूपाणि यस्यासौ । महत्य ऋद्धयो येषु तेषु ॥ * ॥ रेमे बहुधा चिक्रीड । कथं तत्राह–षोडशेति । एकोऽपि वल्लभः सन्युगपत्प्रीतिदानपूर्वकमिति भावः । न च तदसम्भाव्यं तस्य सर्वशक्तिविशेषादित्याह–तावन्तीति–रूपाण्येकस्यैव विग्रहस्य सर्वत्र स्फुरणानि, ‘चित्रं बतैतदेकेन वपुषा’ इत्यादिश्रीनारदोक्तेः । अत एवोक्तं श्रीहरिवंशे जलक्रीडाप्रसंगे–“अहमिष्टा मया सार्द्धं जले वसति केशवः । इति ता मेनिरे सर्वा मुदा नारायणस्त्रियः ॥ सर्वाः सुरतचिह्नान्ताः सर्वाः सुरतदर्पिताः । मानमूहुश्च ताः सर्वा गोविन्दे बहुमानजम् ॥ अहमिष्टाऽहमिष्टेति स्निग्धे परिजने तदा । नारायणस्त्रियः सर्वा मुदा संस्थाविरे शुभाः॥” किञ्च–“एकार्पितमनोदृष्ट्या नेर्ष्यां ताश्चक्रुरंगनाः । नारायणेन देवेन तर्प्यमाणमनोरथाः ॥ शिरांसि गर्वितान्यूहुः सर्वा निरवशेषतः । बाल्लव्यं

प्रोत्फुल्लोत्पलकह्लारकुमुदांभोजरेणुभिः ॥ वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ ६ ॥ विजहार विगाह्यांभो ह्रदिनीषु महोदयः ॥ कुचकुंकुमलिप्तांगः परिरब्धश्च योषिताम् ॥ ७ ॥ उपगीयमानो गंधर्वैर्मृदंगपणवानकान् ॥ वादयद्भिर्मुदा वीणां सूतमागधवंदिभिः ॥ ८ ॥ सिच्यमानोऽच्युतस्ताभिर्हसंतीभिः स्म रेचकैः ॥ प्रतिसिंचन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९ ॥ ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिंचंत्य उद्धतबृहत्कबरप्रसूनाः ॥ कांतं स्म रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥ १० ॥ कृष्णस्तु तत्स्तनविषज्जितकुंकुमस्रक् क्रीडाभिषंगधुतकुंतलवृंदबंधः ॥ सिंचन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥ ११ ॥

गेहविशेषणं प्रोत्फुल्लेत्यादिश्लोकेन ॥ ६ ॥ तथा ह्रदिनीषु चांभो विगाह्य विजहार । महानुदयो वैभवं यस्य सः । योषितां कुचकुंकुमैर्लिप्तांगः यतस्ताभिः परिरब्धः ॥ ७ ॥ सूतमागधवंदिभिश्चोपगीयमानः ॥ ८ ॥ ९ ॥ ताः क्लिन्नवस्त्रा अत एव विवृतोरुकुचप्रदेशाः । उद्धतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ताः । जातेन स्मरेण य उत्सवस्तेन लसंति वदनानि यासां ताः ॥ १० ॥ तासां स्तनेभ्यो विषज्जितकुंकुमा स्रग्यस्य । क्रीडाया अभिषंगेणाभिनिवेशेन धुतः कंपितः कुंतलवृंदबंधो यस्य सः॥ ११ ॥

केशवमयं वहन्त्यश्चारुदर्शनाः ॥" इति । महत्यस्तादृश्यामुत्कृष्टा ऋद्धयो येषु ॥५॥ वासितानि परिमलीकृतानि तोयानि येषु गृहेषु ॥*॥ कह्लारं सौगन्धिकम् । उत्पलकुमुदयोः श्वेतरक्तत्वेन भेदः ॥*॥ अत्र विश्वनाथः—अथ 'मधुरेण समापयेत्' इति न्यायेन कृष्णस्य जलविहारं वर्णयन्प्रथममुद्दीपनत्वेन नगररामणीयकमाह—सुखमित्यादिना । तद्गेहेष्विति गृहेषु रमणमुक्त्वा जलेषु तदाह—प्रोत्फुल्लेति । वासितानि सुगन्धिद्रव्यैरमलानि तोयानि येषु । यद्वा—सुखमित्यादिकमेव प्रोत्फुल्लेति युग्मकम् ॥ ६ ॥ ह्रदिनीषु नदीषु । 'ह्रादिनी तटिनी नदी' इत्युत्पलोक्तेः । ताभिर्योषिद्भिः ॥ * ॥ जलविहारप्रकारमाह—विगाह्येति । ह्रदिनीष्वित्युपलक्षणम् , हरिवंशानुसारेण सागरेऽपि ज्ञेयम् । महोदय इति—जलक्रीडोपकरणसम्पत्तिरपि महती सूचिता । सा चोक्ता तत्रैव—"काश्चित्काष्ठमयैस्तेरुः प्लवैः सर्वांगशोभनाः । क्रौञ्चबर्हिणनागानामाकारसदृशैः स्त्रियः ॥ मकराकृतिभिश्चान्या मीनाभैरपि चापराः । बहुरूपाकृतिधरैः पुप्लुवुश्चापराः स्त्रियः ॥" किञ्च—"नौभिर्गृहप्रकाशाभिश्चिक्रीडुरपराः स्त्रियः । स्नातानुलिप्तमुदिताः सायाह्नेऽन्धकवृष्णयः ॥ आयताश्चतुरस्राश्च वृत्ताश्च स्वस्तिकास्तथा । प्रासादा नौषु कौरव्य विहिता विश्वकर्मणा ॥" किञ्च—"भक्ष्य भोज्यानि पेयानि चोष्यं लेह्यं तथैव च । बहुप्रकारं मनसा ध्यातं तेषां भवत्युत ॥" किञ्च—"नारायणाज्ञया वृक्षाः पुष्पाणि मुमुचुर्भृशम् । ऋतवश्चानुरूपाणि विहायसि गतास्तथा ॥ ववौ मनोहरो वातो रतिस्वेदहरः सुखः । रजोभिश्चापि पुष्पाणां युक्तश्चन्दनशैत्यभृत् ॥ शीतोष्णमिच्छतां तत्र बभूव वसुधापते । वासुदेवप्रसादेन भौमानां क्रीडतां तदा ॥" किञ्च—"उवाह सर्वगन्धाढ्यं स्वच्छं वीर महोदधिः । तोयं चालवणं वीरं वासुदेवस्य शासनात् ॥ गुल्फदघ्नं जानुदघ्नमूरुदघ्नं तथैव च । नारीणां स्तनदघ्नं च जलं समभिकांक्षितम् ॥" इत्यादि ॥ ७ ॥ ० ॥ *॥ उपेति युग्मकम् । गीतगानोपकरणत्वेन गन्धर्वैर्मृदंगादीन्वादयद्भिः सूतादिभिश्च पुराणगानाद्युपकरणत्वेन वीणामिति ज्ञेयम् । एते च जलं परितः पटप्राकाराद्बहिर्ज्ञेयाः ॥ ८ ॥ रेचकैः चर्मादिनिर्मितसेचनयन्त्रैः । "यन्त्रे चर्मादिरचिते सेचनार्थे तथौषधे । द्रावके रेचकः शिश्ने" इति धरणिः । विचिक्रीडे स्म । यक्षराट् कुबेरः । यक्षाणामतीवकामित्वेन तत्साम्यमुक्तम् ॥ * ॥ रेचकैर्जलक्षेपणयन्त्रविशेषैर्विविधं चिक्रीडे चिक्रीड । अच्युत इति प्रत्येकं पार्श्वस्थित्यभिप्रायेण । तत्र धाष्टर्यार्थे दृष्टान्तः यक्षीभिरिति । यक्षराट् कुबेरः ॥ ९ ॥ ताः स्त्रियो विरेजुः स्मेति संबंधः । अत एव क्लिन्नवस्त्रत्वादेव विवृताः प्रत्यक्षीभूता ऊरुप्रदेशाः कटिप्रदेशाश्च यासां ताः ॥ * ॥ ततश्च ता अधिकमशोभन्तेत्याह—ता इति । स्मेति विस्मये । जिहीर्षया तन्निमेषेण । उत्स्मयेतिपाठे उत्स्मयः कमप्युत्कर्षं प्राप्तवत्स्मितम् ॥ १० ॥ विषज्जितकुंकुमा लग्नकाश्मीररागास्रक् माला ॥ * ॥ भगवांस्तु परमानन्दं प्रापेत्याह—कृष्णस्त्विति ।

नटानां नर्तकीनां च गीतवाद्योपजीविनाम् ॥ क्रीडालंकारवासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥ १२ ॥ कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः ॥ नर्मक्ष्वेलिपरिष्वंगैः स्त्रीणां किल हृता धियः ॥ १३ ॥ ऊचुर्मुकुंदैकधियो गिर उन्मत्तवज्जडम् ॥ चिंतयंत्योऽरविंदाक्षं तानि मे गदतः शृणु ॥ १४ ॥ महिष्य ऊचुः ॥ कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति राज्यामीश्वरो गुप्तबोधः ॥ वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १५ ॥

॥ १२ ॥ १३ ॥ मुकुंदैकधियः समाहिता इव क्षणमगिरः सत्यः पुनस्तमेवेशं चिंतयंत्यो जडं यथा भवति तथा यानि वाक्यानि ऊचुस्तानि मे मत्तो गदतः शृण्वित्यर्थः ॥१४॥ ईश्वरः श्रीकृष्णः स्वपिति । त्वं तु निद्राभंगं कुर्वती विलपसि न शेषे न स्वपिषि तदनुचितमित्यर्थः।अथवा नापराधस्तवापीत्याशयेनाऽऽहुः। नलिननयनस्य भगवतो हासेन सहितमुदारं यल्लीलेक्षितं तेन कच्चिद्गाढं निर्विद्धचेतास्त्वमिति ॥ १५ ॥

तुशब्दो विशेषे, तदेव दर्शयति—तदित्यादिविशेषणैः । जलक्रीडायां स्तनकुंकुमलोपेऽपि तद्विषज्जितस्रक्त्वं प्रागेव स्रजि लग्नत्वेन तदानीमपि तस्यानपगमात् । सिञ्चन्त्यस्तु मुहुरित्यस्योभयतोऽप्यन्वयः । परीतो युवतिभिरेव वेष्टितः । स्वच्छन्दतया जलक्रीडासुखे दृष्टान्तः—करेणुभिरिति ॥ ११ ॥ क्रीडासमकालिकानि वस्त्रादीनि । तस्य श्रीकृष्णस्य ॥ * ॥ अतो नर्तकादीनप्यनन्दयदित्याह—नटानामिति । षष्ठ्यश्चतुर्थ्यर्थे । स्त्रियश्चाहुः ॥ १२ ॥ 'क्ष्वेलिर्हास्योक्तिरुच्यते' इति ॥ * ॥ तत्रैवाश्चर्यविशेषं वक्तुमाह—कृष्णस्येति द्वाभ्याम् । एवम् पूर्वोक्तप्रकारेण । विहरतः कदाचिद्गृहे कदाचिज्जले क्रीडतः कृष्णस्य गत्यादिभिः स्त्रीणां स्वभावत एवोल्लंघितविचारप्रेम्णां धियो हृताः स्ववशीकृताः नर्मक्ष्वेलिस्तनालभनादीनां धीहरणे यथोत्तरं श्रैष्ठ्यम् । नर्म प्रियोक्तियुतं हास्यवचनम्, क्ष्वेलिर्धाष्ट्र्ययुतं तत् । किल वार्तायाम् । इदमाश्चर्यवृत्तं श्रूयतामित्यर्थः ॥ १३ ॥ इत्यर्थ इति—या गिर इति बहुवचनेन पदसमूहात्मकवाक्यानि लक्ष्यन्त इति भावः ॥ * ॥ तत्र च कदाचिदुन्मत्तवत् धत्तूरादिविक्षिप्तचित्ता इव तत्रैवागिरः मोहप्राप्त्या क्षणं निद्राणा इव तूष्णीं स्थिताः सत्यः अरविन्दाक्षमपि परोक्षतयाऽपरोक्षतया वा स्थितं भावयन्त्यः जडं विचारशून्यं यथा स्यात्तथा यान्यूचुः स्वप्न इव प्रलेपुस्तानि मत्तः शृणु । उन्मादेऽपि तच्चिन्तने हेतुः—मुकुन्दे निजसर्वदुःखमोचके तस्मिन्नेवैकाऽव्यभिचारिणी धीर्यासाम् । तत्रापरोक्षत्वपक्षे श्रीभगवांस्तु तच्छ्रवणकौतुकाय तूष्णीं तत्र स्थित इति ज्ञेयम् । वैचित्र्यविप्रलम्भोत्थो हि भावोऽयं बोपदेवादिभिर्मुक्ताफलादौ स्वीकृतः, वर्णितश्च हर्षमिश्रादिभिरिति ॥ * ॥ **विश्वनाथस्तु**—इयं प्रेम्णः षष्ठी भूमिकाऽनुरागभेदः प्रेमवैचित्त्यात्थस्तल्लक्षणमुज्ज्वलनीलमणावुक्तम् यथा—''प्रियस्य सन्निकर्षेऽपि प्रेमोत्कर्षस्वभावतः । या विश्लेषधियार्तिस्तत्प्रेमवैचित्त्यमुच्यते ॥'' इति ॥ १४ ॥ 'उत्क्रोशकुररौ समौ' इत्यमरः । हे कुररि उत्क्रोशपक्षिभार्ये । इत्यर्थ इति—''निद्राभंगः कथाच्छेदो दम्पत्योः प्रीतिभेदनम् । शिशुमातृविभेदश्च ब्रह्महत्यासमः स्मृतः ॥'' इति स्मृतेरनुचितं करोषीति भावः । किं त्वमप्यस्मत्सदृशत्वान्न स्वपिष्याकुलत्वादित्याहुः—अथवेत्यादिना । कच्चिदिष्टप्रश्ने । नयननलिनस्य कमलनेत्रस्य । आर्तानां निद्रा न भवतीति भावः ॥ * ॥ ततश्चात्मनो भावमुन्मादवशात् प्रायः सर्वत्र पश्यन्त्यः कुर्यादीनाहुर्दशभिः । हे कुररि यस्य विरहेण त्वं विलपसि, वीतनिद्रा गतनिद्रा सती स तु त्वयि प्रेमशून्य ईश्वरोऽस्माकं पतिः स्वपिति, अतस्त्वद्विलापं न शृणोति अत एव त्वद्विलापश्रवणोत्था कृपाप्यस्य न सम्भवेत् यतस्त्वत्संगं कुर्यात् । किं युष्माभिः सह स्वपिति, नहिनहि गुप्तबोधः अस्माभिरज्ञाततत्त्व एव जगत्यस्मिन्क्वापि राज्यां तदन्वेषणविरोधिन्यां शेते, अतस्त्वं वा किं करिष्यसि वयं वा किं कुर्म इति भावः । शिवशिव त्वं पक्षिजातिरपि हे सखि सादृश्यात्सख्यं वयमिव गाढनिर्विण्णचेता अभूः, अवश्यमेव मे तत्संगो भवत्विति :निर्बन्धं त्यक्तुमपि न शक्नोषीति भावः । निर्बंधे हेतुः—नलिनेति । तवोच्चैर्विलापोऽ

नेत्रे निमीलयसि नक्तमदृष्टबंधुस्त्वं रोरवीषि करुणं बत चक्रवाकि॥दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम्॥१६॥ भोभोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोधिगतप्रजागरः ॥ किंवा मुकुंदापहृतात्मलांछनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥ १७॥ त्वं यक्ष्मणा बलवताऽसि गृहीत इंदो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ॥ कच्चिन्मुकुंदगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ १८ ॥

नक्तं रात्रावदृष्टबंधुः सती रोरवीषि । किंवा नैतावदपि तु वयमिव स्पृहयसे ॥१६॥ अलब्धनिद्रः सदा निष्टनसे क्रोशसि । किं वा अस्माभिः प्राप्तां दशां त्वमपि गतोऽसि अहो कष्टं यथा वयं संभोगेन मुकुंदापहृतकुचकुंकुमादिलांछनास्तथा त्वमपि । यतोऽपहृतश्रीकौस्तुभादिलांछनो लक्ष्यसे ॥ १७ ॥ मुकुंदगदितानि रहस्यानि विस्मृत्य

यमस्माकमपि साचिव्याय स्यादिति भावः ॥ १९ ॥ एतावत् बन्धुवियोगमात्रमेवस्पृहयसे इच्छसि । कबरेण केशविन्यासेन ॥ * ॥ तस्या अप्यधिकमार्तनादं चक्रवाक्याः श्रुत्वा तथैवाहुः—नेत्रे इति । बन्धुः प्रियतमः । करुणं यथा स्यात्तथा रोरवीषि भृशमार्तनादं तनोषि । बत खेदे । अस्मत्समैव त्वमपीति भावः । अहो बतेदृश आर्तनादः स्वपत्यदर्शनमात्रेण न स्यात् किं तु श्रीभगवति भावविशेषेणैवेति । पक्षान्तरमाहुः—दास्यमिति। वयमिव दास्यं गता दासी सती अच्युतस्य सदा सर्वगुणरूपादिपरिपूर्णस्य भगवतः पादाभ्यां जुष्टामुपभुक्तां चरणोपधानीकृतां वोढुं स्पृहयसे स्पृहयसि,भावविशेषेण परम्परयाऽपि तच्चरणस्पर्शं कामयस इत्यर्थः । पादशब्दोऽत्र पातिव्रत्योचितभक्त्या । श्रीभगवत्स्पृष्टतामात्रे तु तात्पर्यम् । यद्वा—वयमिव दास्यं गता सती तां तथा वोढुं स्पृहयसीति कान्ता भूत्वा तदुचितसौभाग्यमिच्छसीत्यर्थः । स्पष्टानुक्तिस्तु शालीन्यात् । यथोक्तं यज्ञपत्नीभिः—'प्राप्ता वयं तुलसिदाम पदावसृष्टं कैशैर्निवोढुम्' इति ॥ १६ ॥ निष्टनसे 'ष्टन—शब्दे' निपूर्वः । दुरत्ययां दुर्लंघ्याम् ॥ * ॥ तस्या अप्यधिकतरमाक्रोशन्तं समुद्रं तथैवाहुः—भो इति । 'समुद्रः सरसामहम्' इति भगवद्विभूतित्वेन सादरं सम्बोधनम् । वीप्सा अतिखेदात् । अलब्धनिद्रत्वादेवाधिगतोऽधिकं प्राप्तः प्रकृष्टो जागरो येन तथाभूतः सन् किं निष्टनसे, अस्माकं केनापि दुःखेन भवतु नाम तत्तत्, भवतः तद्विनापि कथमिति भावः । क्षणं विमृश्याहुः—किं वेति । मुकुन्देनापि सर्वदुःखविमोचकेनाप्यपहृतमात्मलाञ्छनं स्वभावस्थैर्यगाम्भीर्यादिरूपं लक्षणं यस्य तथाभूतः सन् तच्च अस्मद्विधवत् त्वमपि दुरत्ययामनतिक्रम्यां दशां तदप्राप्तिदुरवस्थां गतोऽसि हा कष्टमिति भावः ॥*॥ **विश्वनाथस्तु—**भो उदन्वन् गाम्भीर्यं परित्यज्यातितरललोक इव निष्टनसे शब्दायसे निर्निद्रः सन्नुच्चैः फूत्कृत्य रोदिषि अत्र कारणं वद । अथवा अलं कारणकथनेन ज्ञातमस्माभिरित्याहुः—किं येति । यथा सम्भोगमिषेणापहृतास्मत्कुंकुमहारमालाकः स चोरः तथैव त्वमपि तेनैवापहृतश्रीकौस्तुभादिलाञ्छनः ॥ १७ ॥ यक्ष्मणा क्षयरोगेण "यक्ष्मा तु क्षयरोगे स्याद्ग्रहे च बालवृद्धयोः" इति नाममाला । दीधितिः घृणिः । तदेकचिन्तया मुकुन्दैकचिन्तया स्थगिताऽऽच्छादिता गीर्यस्य स तथा । 'स्थगे—आच्छादने' ततः क्ते स्थगितेति सिद्धेः । नोऽस्माभिः । तथैवास्मत्तुल्य एव ॥ * ॥ नन्वहो यद्यप्येते तिर्यगाद्याः समुद्रान्तास्तद्भावादुत्तरोत्तराधिक्येन क्रोशन्ति तर्ह्येवं सर्वसद्गुणचन्द्रमाः कथं मौनी वर्तते ज्ञातं चेदमपीति भंगीपूर्वकमाहुः—भो इन्दो त्वं बलवता सुधामूर्तेरपि पराभवात् प्रशस्तबलेन यक्ष्मणा निगृहीतोसि, यतः क्षीणो हीनः सन् निजा यावत्यो दीधितयस्ताभिः पूर्णिमायामपि तमो न क्षिणोषि सूर्यवत्क्षयं प्रापयितुं न शक्नोषि, यथा वयं मुकुन्दविरहेण क्षीणा निजदुःखहरणेऽप्यसमर्थास्तथा त्वमपीत्यहो त्वय्यधिककष्टमेवेति भावः । क्षणं परामृश्यैवाहुः—कच्चिदिति । किं वा मुकुन्दस्य गदितानि विश्लेषारम्भे समयबन्धादीनि विस्मृत्य तद्विरहप्रागल्भ्येनापस्मृत्य तदनिश्चयेनैव क्षीणः संस्तमो न क्षिणोषि, यतो वयमिव त्वं स्थगितगीश्च नोऽस्माभिरुपलक्ष्यसे कुर्यादिवदाक्रोशनादेतत्प्रश्नेऽप्युत्तरादानादिति भावः । वयमपि तद्विश्लेषात्तथा तद्वचनविस्मरणोत्थानुतापात्स्थमितागिरो विशीर्याम

**किं वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ॥ गोविंदापांगनिर्भिन्ने हृदीरयसि नः स्मरम् ॥१९॥ मेघ श्रीमंस्त्वमासि दयितो यादवेंद्रस्य नूनं श्रीवत्सांकं वयमिव भवान्ध्यायति प्रेमबद्धः ॥ अत्युत्कंठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वास्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसंगः ॥ २० ॥**

तदेकचिंतया कच्चित्त्वं क्षीणोऽसि वयमिव स्थगितगीस्तनुवाक् । हे इंदो नस्तथैवोपलक्ष्यसे ॥ १८ ॥ अप्रियाचरणं विना स्मरोदीरणेन व्यथाजननं मलयानिल तवानुचितमित्यर्थः ॥ १९ ॥ मेघेति । आतपार्तिहरणादिसाम्यात्त्वं यादवेंद्रस्य नूनं दयितः सखाऽसि अतो भवांस्तं ध्यायति । ध्याने लिंगान्याहुः । अत्युत्कंठइत्यादि । अहो किमिति

इति भावः ॥ १८ ॥ इत्यर्थ इति–कृष्णकटाक्षपातेषु निर्भिन्नचेतसामार्तानामस्माकमकृतत्वदपराधानां पुनरन्यत्कामव्यथोत्पादनं न योग्यमिति भावः ॥ * ॥ रात्रिशेषे मृदु वहन्तं स्मरोद्दीपनं मलयवातं स्तुतिव्याजेन निन्दन्त्य आहुः–किं वेति । तत्र स्तुतिर्यथा–हे मलयानिल मलयस्य परमार्थतः श्रीमदगस्त्यादिनिवासस्य व्यवहारतश्चन्दनाकरस्यानिल ते तव अप्रियमस्माभिर्नु अहो किमाचरितं यतो गोविन्दस्य भारहरणाय पृथिव्यामवतीर्णस्य परमवीरस्येत्यर्थः । तस्यापाङ्गेन निर्भेदकत्वाद्बाणरूपेण निःशेषेण भिन्ने हृदि जीवाधारकोशे स्मरं स्मृतिं चैतन्यमीरयसि पुनः प्रवेशयसि । यद्वा–स्मरं काममीरयसि किमुत चैतन्यामिति भावः । यद्वा–अनिलेन त्वयेरणान्निजानुभवाच्च स्मरस्य वह्नित्वमवगम्यते । ततस्तान्निर्भिन्नत्वान्मृतकत्वं प्राप्ते हृदि यदन्तिमक्रियोचितं तद्रूपं वह्निमीरयसि ददासि तस्मात्किं वाऽऽचरितमित्यादि । अथ निन्दा यथा–हे तादृश अस्माभिरेव तवाप्रियं किमाचारितं तद्वदेत्यर्थः । नु वितर्के । विचारेणापि नास्मद्बुद्धिगोचरं तदित्यर्थः । कथं तदाह–तादृशगोविन्दापांगनिर्भिन्नेऽप्यस्माकं तादृशे हृदि तादृशं स्मरमीरयसि तत्तु विनाप्यप्रियाचरणमन्यहतस्य तत्रापि म्रियमाणस्य दाहनं तादृशस्य तव नोचितम्, तथा क्षणविलम्बासहत्वात्परमचापल्यं चेति भावः । यद्वा–तादृशेऽपि हृदि स्मरं काममीरयसि अहो तव मूर्खत्वं वृथा विडम्बनकर्तृत्वं चेति भावः ॥ १९ ॥ किञ्च–मेघ जलसेक्तृत्वेन सर्वतापापनोदक श्रीमन् विद्युद्युक्तत्वात् अतः सखित्वात् । तं यादवेन्द्रम् । लिंगानि ज्ञापकानि । अत्युत्कण्ठस्तद्द्रष्टुमतीवेच्छावान् । शबलहृदयो विह्वलः । यथा वयं ध्यायामस्तथा भवानप्यस्मद्विधोऽस्मत्तुल्य एवार्तः । बाष्पधारा अश्रुप्रवाहान् । तत्प्रसंगः श्रीकृष्णप्रसंगः । वस्तुतस्तु त्वं प्रेमभक्तोऽसि प्रह्लादादिवत्तद्धर्माणाम् 'वाग्गद्गदा द्रवते यस्य चित्तम्' इत्यादीनां त्वयि दर्शनात् । तथा च श्रीकृष्णसंगः दुःखानां सांसारिकतापानां दुश्छेदक एवात एव सर्वस्वत्यागपुरःसरं तद्यशःश्रवणमात्रेण महान्तोऽरण्यमाप्य तद्ध्यायन्तस्तामिताः । तदुक्तम्–"कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् । सत्संगान्मुक्तदुःसंगो हातुं नोत्सहते बुधः ॥" इति ॥ * ॥ अथ समुद्रान्तिके वर्षन्तं मेघं श्रीभगवद्विरहार्त्या रुदन्तं मत्वा तत्सारूप्यदर्शनजातेनाकृत्रिमसौहृद्येनाहुः–मेघेति । नूनं वितर्के, इति सर्वत्र वाक्ये योज्यम् । हे मेघ त्वं यादवेन्द्रस्य नूनं दयितोऽसि प्रियसखोऽसि, यतः हे श्रीमन् प्राप्ततत्सारूप्यलक्ष्मीक । ततः किं तत्राहुः–प्राप्तसारूप्यादपि भवद्विधाद्विलक्षणलक्ष्मीकममुं भवान्नूनं ध्यायति । ननु, प्राप्ते पर्यन्तफले फलस्य वा न्यूनत्वे किं तद्ध्यानेन तत्राहुः–प्रेमबद्ध इति । तच्छ्रीमूर्तेस्तथा स्वभावो यथा तत्र प्रेमैव जायते नौदासीन्यं न चेर्ष्येति भावः । तत्रोभयत्र दृष्टान्तः–वयमिवेति । यस्मादेवं प्रेमबद्धस्तस्मान्नूनमत्युत्कण्ठस्तेन निर्वेदादिनानाभावशबलचित्तोऽप्यसि । तत्रापि हेतुः–अस्मद्विध इति । प्रेमबद्धतासादृश्यात्स्वानुभावेन ज्ञायस इत्यर्थः । यद्वा–अत्युत्कण्ठत्वेन लक्षणं शबलहृदयः शबलं वैवर्ण्येन नानावर्णं हृदयं मध्यभागो यस्य तथाभूतोऽसीति । तच्च युक्तमित्याहुः–अस्मद्विध इति । अहो नूनमत एव त्वं स्मृत्वास्मृत्वा वृष्टिरूपा बाष्पधारा मुहुः सृजसि सर्वत्र विकिरसि । युक्तं च तत्तदित्याहुः–दुःखद इति । प्रसंग आसक्तिः प्रस्तावमात्रं वा ॥*॥ **विश्वनाथोऽपि**–दयितः सखा त्वमसि प्रेमबद्धः प्रेम्णा प्राप्तबन्धनः संस्तं ध्यायसि । श्रीवत्साङ्कमिति–वर्णेन साम्येऽपि तस्य श्रीवत्सांकोऽधिक इति तत्रासक्तिकारणमवगतमिति भावः । शबलहृदयः विषादमलिनचेता वृष्टिमिषेण रोदिषि । अहो किमिति तत्रासक्तिः कृता

प्रियरावपदानि भाषसे मृतसंजीविकयाऽनया गिरा ॥ करवाणि किमद्य ते प्रियं वद मे वल्गितकंठ कोकिल ॥ २१ ॥ न चलसि न वदस्युदारबुद्धे क्षितिधर चिंतयसे महांतमर्थम् ॥ अपि बत वसुदेवनंदनांघ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २२ ॥ शुष्यद्ध्रदाः करशिता बत सिंधुपत्न्यः संप्रत्यपास्तकमलश्रिय इष्टभर्तुः ॥ यद्वद्वयं यदुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकार्शिताः स्म ॥ २३ ॥

त्वया तेन सख्यं कृतं यतो दुःखदस्तत्प्रसंग इति ॥ २० ॥ हे कोकिल मे प्रियरावस्य प्रियंवदस्य श्रीकृष्णस्य पदानीव पदानि शब्दांस्त्वं भाषसे । मृतान्संजीवयतीति तथा तयाऽनया कोमलया गिरा वल्गितकंठः रमणीयकंठः मे कथय किं तव प्रियं करवाणीति ॥२१॥ हे क्षितिधर त्वं न वदसि न चलसि अतो नूनं महांतमर्थं चिंतयसे । बत तर्हि अपि किं यथा स्तनैर्विधर्तुं वयं कामयामहे तथा त्वं स्तनतुल्यैः शृंगैर्वोढुं कामयसे । ओमिति चेत्तर्हि तवाप्यस्मदवस्था भविष्यतीति भावः ॥ २२ ॥ भोः सिंधुपत्न्यो नद्यः संप्रति ग्रीष्मे सिंधुर्मेघद्वारा अमृतवृष्ट्या युष्मान्नानंदयति । बत अहो कष्टम् । अतः शुष्यंतो ह्रदा यासां ताः अपगतकमलशोभाः कृशाश्च वयं यथा प्रियतमस्य

यतस्तत्प्रसंगोऽपि दुःखद एव ॥ २० ॥ प्रियं रौति वदतीति प्रियरावस्तस्य । 'वल्गितं प्लुतरम्ययोः' इति ॥ * ॥ रात्र्यवसाने कूजन्तं कोकिलं पूर्ववत्स्तुतिनिन्दाभ्यामाहुः । तत्र स्तुतिः—हे कोकिल पञ्चमगानप्रसिद्ध । तत्रापि वल्गितः प्रियेणैव शिक्षाविशेषाद्वल्गूकृतः कण्ठो यस्य । हे तथाविध प्रियस्य राव इव रावः पञ्चमस्वरो यत्र तादृशानि पदानि गीतनिबद्धानि भाषसे । यद्वा—प्रियस्य रावः शिक्षावचनं येषु तादृशानि दूत्यानुरूपाञ्छब्दान्भाषसे, ततस्तन्नैकव्यबोधनेन तद्विरहमृतान् सम्यग्जीवयतीति तया गिरा हेतुना किं प्रियं तन्मे मह्यं वद कृपया ज्ञापय । अत्रैकवचनं प्रत्येकमपि तत्क्षमताविवक्षया पृथगुक्तेः । अथ निन्दा—हे चञ्चलकण्ठ कोकिल मृतसञ्जीविकया तया गिरा हेतुना प्रियस्य रावः शिक्षा यत्र तादृशानि पदानि भाषसे मया तद्विरहासहिष्णुत्वाज्जीवनान्मरणमेव वरं मन्यते तत्तु स इव त्वमप्यापाततोऽमृतायमानवचनेन मध्येमध्ये विघातयन्दुःखद एवासीति भावः । तस्मात्तवाप्रियं तुण्डत्रोटनादिकमत्रापराधे किं करवाणि त्वमेव वदस्व दण्डविशेषं स्वयमेवानुमन्यस्व अन्यथाऽपराधक्षयो न भवेदिति भावः ॥*॥ अत्र **विश्वनाथः**—हे प्रियराव कोकिल अनया गिरा पदानि अस्मद्विरहदुःखदान्येव भाषसे "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः । वल्गितः वल्गूकृतः कण्ठो येन, हे तादृश । अत्र विरहे कोकिलशब्दस्य दुःखदत्वात् प्रियरावेत्याद्याः सर्वा एव विपरीतलक्षणया वक्रोक्तय एव, तेन स्वशब्देन मां ज्वालयतस्तव किं प्रियं करवाणि तुण्डमेव धक्ष्यामीति भावः ॥ २१ ॥ स्तनतुल्यैस्तीक्ष्णाग्रैः । ओमिति चेत्सत्यं तं धर्तुमिच्छामीति यदि वदसि । इति भाव इति—यथा वयं निरस्तसमस्तैहिकामुष्मिकाः सत्यस्तदेकतानास्तथा त्वमपि कृतार्थो भविष्यसीत्याशयः ॥ * ॥ महास्थिररात्रौ प्रायः शयितसर्वजनत्वात्तूष्णीं स्थितं चारुणोदये श्रीरैवत दृष्ट्वाहुः—नेति । हे क्षितिधर यद्यपि पञ्चाशत्कोटियोजनविस्तीर्णां पृथ्वीं धरसि तथापि न चलसि, न वदसि, तस्मादेव हे उदारबुद्धे महाचित्त । तदेव दर्शयन्ति—कमपि महान्तमर्थं चिन्तयसि कामयसे । तत्रापि सशंकमाहुः । अपि प्रश्ने । बत खेदे । स च महार्थो मतभेदान्नानाविध इति । तत्र देवस्यास्मत्पूज्यस्य श्वशुरस्य यो नन्दनः प्रधानपुत्रोऽस्मत्पतिरित्यर्थः । आर्यपुत्र इतिवत् स्पष्टतयाऽनुक्तिर्लज्जया । तस्य वसु परमधनरूपमंघ्रिं स्तनैर्विधर्तुं किं कामयसे, यदि कामयसे तदाऽस्माकमिव बुद्धिहीनत्वं स्वत्राणमात्रेऽपि धारणासामर्थ्यं भविष्यतीत्यर्थः । स्तनानां बहुत्वनिर्देशस्तु तस्य लोभातिशयं द्योतयति । अत्र वसुदेवपदयोर्भिन्नक्रमतया प्रयुक्तयोरप्येकत्र सम्पातेन श्वशुरनामोच्चारणप्रमाद उन्मादोक्त्या न दोषायेति भावः । टीकायां न वदति न चलतीति व्युत्क्रमनिर्देशः प्रायो लेखकभ्रमादिति ॥ २२ ॥ कृशानि तटानि कूलानि यासां ताः । क्वचित् 'करशिता' इति पाठे तु गुणादेशस्त्वार्ष एव । अत आनन्दाभावात् । शुष्यत्तोया विगतजला ह्रदाः स्नानाद्यर्थं जनावतरणस्थानानि । मधुपतेर्यदुपतेः मुष्टहृदयाः हृतचेतसः । पुरु अधिकम् "पुरुः पुरोगे प्रचुरे स्वर्लोकनृपभेदयोः"

हंस स्वागतमास्यतां पिब पयो ब्रूह्यंग शौरेः कथां दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ॥ किं वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥ २४ ॥ इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ॥ क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥ २५ ॥

भर्तुर्यदुपतेः स्म प्रसिद्धम् ॥ २३ ॥ तदैव दैवादागतं हंसं दूतं कल्पयित्वाऽऽहुः । हंसेति । नोऽस्मान्प्रति पुरा रहस्युक्तं किं वा चलसौहृदः स्मरति । स्मृत्वैव मां प्रस्थापितवानिति चेदत आहुः । हे क्षौद्र क्षुद्रस्य दूत कस्मात्तं वयं भजामः । कामार्थमाह्वयति युष्मानिति चेदत आहुः । अहो तर्हि तमालापयाकारय । ओमिति गच्छंतमिव तं पुनराहुः । याऽस्मान्वंचयित्वा एकाकिनी सेवते तां श्रियमृते तमेवालापय । सा तदेकनिष्ठा कथं परिहर्तुं शक्यत इति चेदत आहुः । स्त्रियां जातावेकवचनम् । अस्मासु स्त्रीषु मध्ये किं सैवैकनिष्ठा न तु वयमित्यर्थः । पाठांतरे तु क्षौद्रं मधु तद्वन्मधुरालापमात्रं यस्य तमकामदमरतिप्रदं श्रियमृते वयं कस्माद्भजामः । किं त्वनादृताऽपि सती पुनःपुनः

इति हैमः ॥ * ॥ अथ निदाघक्षुद्रा नदीर्दूरतो दृष्ट्वा ताश्च मूर्छिता मत्वा पूर्ववत्सम्बोध्याहुः—सिन्धोरपि पत्न्य एताः सम्प्रति बताहो अपेतकमलमिव मुखश्रियो जाताः तथा कार्शिताश्च तथा शुष्यन्तो ह्रदास्तद्रूपहृदयानि यासां तथाभूताश्च जाताः, किं कृत्वा इष्टभर्ता च यः सिन्धुस्तस्य प्रणयावलोकं विरहात्मना निदाघेनैव विच्छेदं प्राप्य तदहो अस्मत्सादृश्यमेता अपि गता इति म्लानमुखमाहुः—यद्वद्वयमिति पुरुकार्शिता इति । पुरुशब्देनापेतमुखश्रीत्वमप्यन्तर्भावितम् ॥ २३ ॥ स्वागतं सुष्ठ्वागमनं जातम्, आस्यतामुपविश्यताम् । पयः क्षीरम् । चलसौहृदः क्षणिकमैत्रीकः । युष्माकमाज्ञा केति शेषः । यद्वा—युष्मास्वाज्ञा युष्मदाज्ञेति इहापि तस्येति, पदशेषेणैव शोभनं भातीति । अतोऽत्राहुः—तं शौरिम् । इत्यर्थ इति—वयमपि तदेकनिष्ठा एवेति । तस्येहागमनमुचितमेव भक्तवात्सल्यादिति भावः । पाठान्तरे ‘ क्षौद्रालापमकामदम् ’ इति पाठे तु क्षुद्रा मधुमक्षिकास्ताभिर्निष्पादितं क्षौद्रम् ॥ * ॥ प्रातरागतं कमपि हंसं दूतं प्रकल्प्याहुः—हंसेति । सदवसरे यत्स्वयमागतस्तच्छोभनमित्यर्थः । ततश्चास्यतामुपविश्यताम् । पयः क्षीरं पिब । एवमातिथ्येन सम्भाव्य प्रार्थयन्ते—ब्रूहीति । अङ्गेति । अस्माकमंगतुल्य हे परमात्मीयेत्यर्थः । शौरेः शूरस्य वंशे केनापि सर्वेषां भाग्येन जातस्यास्मद्भर्तुः कथां समुदाचारं ब्रूहि । तच्च युक्तमेवेत्याहुः—नु निश्चितं त्वा त्वां दूतं विदामः विद्मः । तत्रादौ कुशलं पृच्छन्ति—कच्चिदिति । स्वस्ति सुखम् । अजितः प्रेम्णा न केनचिदपि वशीकृत इत्यर्थः । इत्यन्तरीर्ष्याभिव्यक्तिः । ननु, देव्यो भवतीनां विरहेणासौ कथं सुखमास्तामिति चेत्तर्हि, पुरा पूर्वमनुनयादिना च प्रयुक्तं ।किं वा स्मरति । किञ्चेत्येकपदमेव वा, सभ्रूभंगप्रश्ने किं वेत्यादिवत् । यद्वा—पुरोक्तम् , नोऽस्मान्वा स्मरति । ननु, तदेकसेवापरा युष्मान्कृतज्ञोऽसौ स्मरत्येवेति चेत्तत्र न विश्वसिम इत्याहुः—चलसौहृदोऽस्थिरप्रेमेति । ननु, तत्तत्प्रियतमाः स्थिरसौहृदोऽसौ युष्मान्किल कामयते तत्रासहमानमाहुः—तमिति । ननु, त्वद्विरहार्तः कामदोऽसौ भजनीय एवेति चेत्तर्हि, तमत्रैवालापय । अत्र तद्धितान्तत्वेनान्यथाप्राप्तत्वात् , न साक्षाच्छ्वशुरपितुर्नामग्रहणं शङ्क्यम् । टीकायामेकनिष्ठेति—एकस्मिन्नेव निष्ठा दृढा स्थिरता यस्याः सेति काकूक्तिः । युष्मदाज्ञेति—अत्र यथा युष्माकमाज्ञा स्यादित्यर्थः । यद्वा—युष्मान् इति लेखो लेखकभ्रम इति ॥ * ॥ **विश्वनाथस्तु**—हंसेति । ननु भवतीर्विना स कथं स्वस्त्यास्तामिति चेत्—उक्तं पुरेति । ‘ न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि ’ इत्यादि स्वप्रेमवाक्यं स्मरति । ननु, स्मृत्वैव मां प्रस्थापितवानतस्तदन्तिकं चलत तं भजतेति तत्राहुः—कस्मादिति । स चेदस्मान्न भजते नाप्यागच्छति तर्हि वयं कस्माद्भजामः कस्माद्वा यामः । भोः करुणासिन्धवस्तर्हि कामपीडितस्य कथं निस्तारस्तत्राहुः—हे क्षौद्र क्षुद्रस्य दूत आलापय अत्रैव तं कामदं कामपीडितमपि दर्शनमात्रेणैव कामपीडाप्रदमाकारय स एवास्मानायातु न तु गर्ववत्यो वयं तं याम इति भावः । तमिति—गच्छन्तं तं मत्वा पुनराहुः—या ह्यस्मान्वञ्चयित्वैकाकिनी रमते तां श्रियमृते तमेव केवलमाकारय । ननु, सा तदेकनिष्ठा कथं परिहर्तुं शक्याऽत आहुः—स्त्रियामिति । जातावेकत्वम् । स्त्रीष्वस्मासु मध्ये सैवैकनिष्ठा न तु वयमित्यर्थः । अन्यत्तैः ॥ २४ ॥ इति इत्थम् । भावेन प्रेम्णा । माधव्यो माधवभार्याः । अतीवप्रेमवशविवशानां क्षणिकवियोगेऽपि चित्तविभ्रमो भवत्येवेति भावः ॥ * ॥ इत्थं भणितम् । तादृश

**श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः ॥ उरुगायोरुगीतो वा पश्यंतीनां कुतः पुनः ॥ २६ ॥ याः संपर्यचरन्प्रेम्णा पादसंवाहनादिभिः ॥ जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥ २७॥ एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः ॥ गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥ २८ ॥ आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ॥ आसन्षोडशसाहस्रं महिष्योऽष्टशताधिकम् ॥ २९ ॥**

सैव भजतु यतोऽस्मादृश्यो मानिन्यः स्त्रिय एकनिष्ठा एकत्रैव स्वसंमानसिद्धौ निष्ठा यासामिति ॥ २४ ॥ २५ ॥ तासां कृष्णे एवंभूतो भावो नातिचित्रमित्याह । श्रुतमात्रोऽपीति । उरुभिर्गायैर्गीतैः उरुधा गीतो वा यैः कैश्चिदपि गीतैः कथाभिः कथंचिदपि गीतो वेत्यर्थः ॥ २६ ॥ २७ ॥ पदं स्थानम् ॥ २८ ॥ २९ ॥

प्रेमवतीनां तासां माहात्म्यमाह—इतीति । अनेनोक्तरीतिकेनेदृशेनान्यत्राविद्यमानेन । कृष्णे स्वयं भगवति अत एव योगेश्वरेश्वरे परमदुर्लभ इत्यर्थः । क्रियमाणेन सदा विधीयमानेनेति तास्मिंस्तासामतृप्तिर्भावानिवृत्तिश्च सूचिता । माधव्यः मधुवंशोद्भवस्य तस्य पत्न्यः । विष्णुः स्वयं भगवत्त्वात्सर्वव्यापकः श्रीकृष्ण एव तदीयां गतिं दशां लेभिरे । यादृश एवासौ साक्षात्ता अपि तादृश्य एव भवेयुरित्यर्थः । यद्वा—स यथा सर्वव्यापकस्तथा ता अपि तस्य व्यापका जाता इत्यर्थः । ' परमाम् ' इति पाठे त्वप्रकटरूपामलौकिकीमित्यर्थः । शाणप्रयोगेण व्यवधानावगत्या । कासांचिदर्जुनपराजयानन्तरगत्यन्तरं तु मायिकमात्रमित्यभ्युपगतं तच्च युक्तम्, विवाहप्रसंगे तासां तत्स्वरूपशक्तित्वेन दर्शितत्वात् ॥ * ॥ **विश्वनाथस्तु**—तासामेतादृशश्रीकृष्णविषयकभाववतीनां किं प्राप्यं वस्तु इत्यपेक्षायामाह—इतीति । वैष्णवीं वैष्णवप्राप्यां प्रेमभक्तिमेव तासामप्राकृतीनां भगवन्नित्यप्रेयसीनां सच्चिदानन्दवपुषां ब्रह्मरसास्वादाधिकभगवन्माधुर्यास्वादवतीनां पुनर्मोक्षादिफलप्राप्त्यसम्भवात्प्रेमाधिक्यमेवेत्यर्थः । यद्वा—वैष्णवीं[1] विष्णोस्तस्यैव कृष्णस्य भावोन्मादप्रौढिम्ना तादात्म्यमयीं गतिं रासान्तर्द्धाने व्रजसुन्दर्यो नानाप्रश्नाद्यनन्तरमुन्मादस्य प्रौढिम्ना यथा—' कृष्णोऽहं पश्यत गतिम् ' इति कृष्णतादात्म्यमयीं गतिं लेभिरे तथैवैता अपि कुर्यादिप्रश्नानन्तरं तामेवेत्यर्थः । प्रेमवैचित्त्यादि कृष्णतादात्म्यादिदशा अनुरागविलासा एव । पट्टमहिषीणामनुरागपर्यन्ता दशाः श्रीमदुज्ज्वलनीलमणौ व्याख्याता एव ॥ २९ ॥ एवंभूतश्चित्तविभ्रमकरः । भावः प्रेमा । उरुभिरनन्तैः । उरुधाऽनेकधा । इत्यर्थ इति—येन केनचित् संस्कृतेन प्राकृतेन वा गीतेन गीतोऽपि श्रीकृष्णश्चेचेतआकर्षणं करोति, तदा किमु वक्तव्यं पश्यतां चेतआकर्षणं वृत्तमिति कैमुत्यमुक्तम् ॥ * ॥ तत्र तस्यापि तादात्म्यमाह—श्रुतमात्र इति । यः स्त्रीणां मन आकर्षति गीतैः प्रबन्धैरुरु यथा स्यात्तथा गीतस्तद्विषयीकृतो वा किं पुनस्तत्र साक्षात्पश्यन्तीनां तु किं पुनर्वक्तव्यमित्यर्थः । ' कुतः पुनः ' इति पाठेऽपि स एवार्थः । अतस्तत्पत्नीनां स्वाभाविकमहाप्रेमवतीनां सदा तेन सह विचरन्तीनां तासां तादृश एव भावो युक्तः क्वचिदन्यथा श्रवणं तु मुनीनामपि मोहायैव । ' इत्यंगोपदिशन्त्येके ' इत्यादेः ॥ २६ ॥ या रुक्मिण्याद्याः । किंशब्दस्तपोमहत्त्वं वक्ति ॥ * ॥ अतस्ता एव धन्या न त्वन्ये केचनेति । भावविशेषोदयानाह—या इति । याः काश्चिदन्या अपि भर्तृबुद्ध्या भावनामात्रगम्यत्वेनापि भर्तृत्वेन न तु साक्षाद्भर्तृत्वेन यः प्रेमा तेन यानि पादसंवाहनादीनि मानसरूपाणि तैर्जगद्गुरुं परमपुरुषोत्तमं सम्यक् तदेकनिष्ठतया पर्यचरन्नसेवन्तेत्यर्थः । तासां तपस्तदुपासनाभाग्यं किं वर्ण्यतेऽपि तु वर्णयितुं न शक्यत इत्यर्थः । साक्षाद्भर्तृत्वेन नित्यमेव तथा सेवमानानां तासां वार्ता दूरत एवेति भावः ॥ २७ ॥ गृहं गृहस्थम् । पदं स्थानम् ॥ * ॥ तदेवं तस्य क्रीडात्वेनैव स्फुटं प्रतीयमानं चरितं वर्णयित्वा तादृशत्वमेव वैधकर्मण्यतिदिशन्सर्वेषामपि शर्मदत्वमाह—एवं सतां गतिस्तत्क्रीडैकपरभक्तानां गतिः सन्वेदोदितं धर्मं यज्ञादिकं च मुहुरनुतिष्ठन्गृहं खलु धर्मार्थकामानां पदमित्यप्यदर्शयत् अन्येभ्य उपादिशत् " यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ " इत्यादिश्रीमुखोक्तेः । यतः सतां तत्क्रीडैकजीविनां धर्मादिपराणाञ्च गतिराश्रयः ॥ २८ ॥ परम् आतिथिपूजनादिनोत्कृष्टम् ॥ * ॥ तथा तादृशगार्हस्थ्यांगभूतानां श्रीभगवत्पुत्रादीनां सर्वेषां यादवानामपि माहात्म्यमुक्तानुवादपूर्वकं

---

१ ' वैष्णवीं गतिम् ' इति पा० ।

तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ॥ रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्व्यशः ॥ ३० ॥ एकैकस्यां दशदश कृष्णोऽजीजनदात्मजान् ॥ यावत्य आत्मनो भार्या अमोघरतिरीश्वरः ॥ ३१ ॥ तेषामुद्दामवीर्याणामष्टादश महारथाः ॥ आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ ३२ ॥ प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान्भानुरेव च ॥ सांबो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥ ३३ ॥ पुष्करो वेदबाहुश्च श्रुतदेवः सुनंदनः ॥ चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥३४॥ एतेषामपि राजेंद्र तनुजानां मधुद्विषः ॥ प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ ३५ ॥ स रुक्मिणो दुहितरमुपयेमे महारथः ॥ तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ ३६ ॥ स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ॥ वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः ॥३७॥ प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः ॥ सुबाहोः शांतसेनोऽभूच्छतसेनस्तु तत्सुतः ॥३८॥ न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः ॥ अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ३९ ॥ यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ॥ संख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ ४० ॥

या रुक्मिणीप्रमुखा अष्टावुदाहृताः प्राक् ॥ ३० ॥ एवमष्टोत्तरशताधिकषोडशसहस्रमहिषीणां पुत्रा लक्षमेकमशीत्युत्तरैकषष्टिसहस्राणि च भवंति ॥ ३१ ॥ ३२ ॥ अनिरुद्धश्चेति । अतः पुत्राणां मध्ये सप्तदशैव महारथा ज्ञेयाः । अथवा अनिरुद्धनामाऽपि कश्चित्पुत्र एवेति ॥३३॥३४॥३५॥३६॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

वर्णयति—आस्थितस्येत्यादिना परममुत्कृष्टं प्रायः सर्वेषामप्याश्रमिणामाश्रयत्वात् । तदुक्तम्—“ भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः । तेप्यत्रैव प्रतिष्ठन्ते गार्हस्थ्यं तेन वै वरम् ॥ ” इति । यद्वा—परं मुख्यं मुख्यकल्पत्वेन कृतत्वात् । कृष्णस्याशेषैश्वर्यप्रकटनार्थमवतीर्णस्य स्वयं भगवतः । यद्वा—तद्धर्मानुष्ठानमाधुर्याणामपि सर्वचित्ताकर्षकस्य । तुशब्दो भेदे । महामहिष्यस्तावदष्टावासन्नेव षोडशसाहस्रं महिष्यश्च शताधिकं यथा स्यात्तथाऽऽसन् ॥ २९ ॥ तासां सर्वासां मध्ये तत्पुत्रा रुक्मिण्याद्यष्टमहिष्यात्मजाः ॥ * ॥ ० ॥ ३०॥ तासां सर्वासां पुत्रसंख्यां निगमयति—एवमिति । अमोघरतिरिति सर्वासामवन्ध्यात्वमाह ॥ * ॥ अमोघरतिरव्यर्थसुरतवृत्तान्तः अव्यर्थसंकल्पः ॥ ३१ ॥ तेषामेकलक्षाशीत्युत्तरषष्टिसहस्राणां मध्ये तेषामष्टादशानाम् ॥ * ॥ ० ॥ ३२ ॥ यतोऽनिरुद्धोऽपि महारथत्वेनोक्तोऽतो हेतोः । एवं चाष्टादशमहारथा एतदादौ तेषामुद्दामेत्यादीनां पुत्राणां प्रकृतत्वात्तत्र पौत्रस्वीकारेणास्वारस्यं प्रतीयते तन्निवृत्त्यर्थमाह—अथ चेति ॥ * ॥ ० ॥ ३३ ॥ ० ॥ * ॥ ० ॥ ३४ ॥ एतेषामुक्तानुक्तानां मध्ये प्रथमः सर्वज्येष्ठः पितृवत्सर्वकर्मणीति ॥ * ॥ हे राजेन्द्रेति । राजकुले सर्वत्र प्रसिद्ध्या त्वं जानास्येवेति भावः । यद्वा—अल्पराज्ञां स्वकृत्याविष्टचेतस्त्वाच्छ्रीकृष्णलीलाश्रवणावकाशो न भवति तव तु त एव किंकरत्वात्सर्वं कुर्वन्त्यतः श्रीकृष्णलीलालब्धावकाशत्वात्त्वं राजेन्द्रोऽसीति भावः । “ बालक्रीडनकैश्चापि कृष्णलीलां य आददे ” इत्याद्युक्तेः ॥ ३५ ॥ स प्रद्युम्नः । तस्मात्प्रद्युम्नात् ॥ * ॥ महारथ इति । राजवर्गनिर्जयपूर्वकरुक्मवतीहरणात् नागायुतबलेनान्वित इति लोकलीलानुकरणरीत्यैवोक्तम् । वस्तुतस्त्वीश्वर एवेति ॥ ३६ ॥ स चाप्यनिरुद्धोऽपि । ततस्तदनन्तरम् । तस्यानिरुद्धस्य यो वज्रः । मौसलान्मुसलकृतादुपप्लवात् ॥ * ॥ न केवलं प्रद्युम्न एव मातुलेयीमुपयेमे किन्त्वनिरुद्धोऽपीति चापिशब्दार्थः । देहलीदीपकन्यायेन दौहित्रपौत्रीशब्दाभ्यामुभाभ्यामेव रुक्मिण इत्यन्वेति ॥ ३७ ॥ तस्माद्वज्रात् । तस्य च प्रतिबाहोः । तत्सुतः शान्तसेनसुतः ॥ * ॥ भद्रसेनस्य पुत्रादीनामनुक्तिः प्रायः साङ्कर्यादेर्वंशलोपारम्भात् । श्रुतसेनस्त्विति क्वचित्पाठः ॥ ३८ ॥ एतस्मिन्कुले श्रीकृष्णकुले ॥ * ॥ अस्मिन्भगवत्कुले शुद्धक्षत्रियमातृपितृपर्यन्तमधनादयो नासन्निति ज्ञेयम् ॥ ३९ ॥ ० ॥ * ॥ विख्यातकर्मणामपि संख्या न शक्यते कर्तुं किं पुनरन्येषामित्यर्थः । अत एव माथुरेषु प्रसिद्धिरियम् । बद्धमुकुटा

तिस्रः कोटयः सहस्राणामष्टाशीतिशतानि च ॥ आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतम्॥४१॥ संख्यानं यादवानां कः करिष्यति महात्मनाम्॥ यत्रायुतानामयुतलक्षेणास्ते स आहुकः॥४२॥देवासुराहवहता दैतेया ये सुदारुणाः॥ ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे॥४३॥तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले॥ अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ ४४ ॥ तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः ॥ ये चानुवर्तिनस्तस्य ववृधुः सर्व यादवाः ॥४५॥ शय्यासनाटनालापक्रीडास्नानादिकर्मसु ॥ न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः ॥ ४६ ॥

सहस्राणामपरिमितानां कुमाराणामित्यन्वयः ॥ ४१ ॥ यदा प्रत्येकं बहूनध्यापयतामाचार्याणामियं संख्या तदपि श्रुतमात्रं न तु सम्यग् ज्ञायते तदा कुमाराणामेवं संख्यानं कर्तुं न शक्यते कुतः पुनः सर्वयादवानामिति ॥ ४२ ॥ ते चोत्पन्ना इति । प्रत्येकं बहुभी रूपैरिति ज्ञेयम् ॥ ४३ ॥ एवमेवं यदुकुलेऽपि देवा इति । तथा चोक्तम् "सहस्रशः समुद्भूता देवा यदुकुले पृथक्" इति ॥ ४४ ॥ ४५ ॥ ४६ ॥

राजान एव यादवाः षट्पञ्चाशत्कोटय इति ॥ ४० ॥ यदूनां संख्याया अभावेऽपि तद्बालाचार्याणां कामपि संख्यां श्रावयामीत्याह—तिस्र इति । यदुकुले सहस्राणामनन्तानां कुमाराणां तिस्रः कोट्योऽष्टाशीतिशतानि चाचार्या आसन्नित्यन्वयः । अत्र यदुकुले आचार्या इति च्छेदः यलोपस्यासिद्धत्वेऽपि सन्धिस्त्वार्षः । तीर्थस्तु—"आसन्यदुकुमाराणामाचार्या इति नः श्रुतम्" इति पाठमाह । इति श्रुतिरिति पाठे, इत्थं श्रूयत इत्यर्थः ॥ * ॥ संख्याऽशक्तौ हेतुमाह—तिस्र इति । एकम् एकम् सहस्रमेकैकस्याचार्यस्येत्याचार्यसंख्यैव । अस्य पद्यस्य योजना पूर्वमेवास्माभिरलेखि समञ्जसा ॥ ४१ ॥ यत्र येषां यदूनामयुतानामयुतलक्षेण पद्मपरिमितेन सैन्येन सदास्ते इति । आस्तां तावत्सर्वेषां संख्या नित्यराजसेवकानामपि सा किलाशक्येत्याह—संख्यानमिति । महात्मनां मुख्यानामपि । अयुतानामिति बहुत्वं कपिञ्जलाधिकरणन्यायेन त्रित्व विशिष्टायां संख्यायां पर्यवसायितम् । अयुतानामयुतलक्षेण बिंदुत्रयोदशयुक्तेनांकत्रयेण शंखत्रयेणेत्यर्थः । आसीदिति वक्तव्ये आस्त इति नित्यलीलास्फूर्त्योक्तम् । सा चाग्रे स्थापयिष्यते ॥ ४२ ॥ देवासुराहवे देवासुरसंग्रामे हता ये त एव मनुष्येषु राजसु प्रत्येकमिति एकैकस्यानेके देहा आसन्नित्यर्थः ॥ * ॥ ते च यादवा द्विविधाः—देवा नित्यपार्षदाश्च । तत्र देवानां यदुकुलावतीर्णत्वमसंख्यत्वञ्च सहेतुकमाह—देवेति द्वाभ्याम् । सुदारुणा अत्युग्राः, अत उत्तरजन्मन्यपि दृप्ताः सन्तः प्रजा बबाधिरे ॥ ४३ ॥ तन्निग्रहाय तेषां दण्डप्रदानाय । तेषां यदूनाम् । यदुकुले देवा अवतीर्णा इह प्रमाणमाह—पुराणान्तरवाक्यम्—तथा चेति । 'भवद्भिरंशैर्यदुषूपजन्यताम्' इति ब्रह्मणापि भूम्यार्तिनिवेदनोत्तरविष्णुवाक्यश्रवणान्ते उक्तत्वात् ॥ * ॥ अत एव तेषां निग्रहाय क्वचित्तद्द्वारा क्वचित्सहयोगेन च तद्वधकौतुकाय यदोः कुलेऽवतीर्णाः क्वचित्प्रवेशेन क्वचित्पार्थक्येन च जाताः । 'एकाधिकं कलशतम्' इति यदुवृष्णिमधुकुकुरान्धकादिनाम्नः कुलस्यैव संख्या कृता न तु व्यक्तीनामसंख्यत्वादिति भावः ॥ ४४ ॥ तेषामेकोत्तरशतकुलानां प्रभुत्वे नायमेवास्माकं प्रभुरित्येवंरूपेण ज्ञानेन हरिरेव प्रमाणं नान्य उग्रसेनादिः । यद्वा—भगवतो नारायणरूपत्वेन देवदेवत्वात् यादवानां देवत्वे तु श्रीकृष्णप्रभुत्वमेव प्रमाणमिति । तस्य श्रीकृष्णस्य ॥ * ॥ ये च ये तु तस्य भगवतोऽनुवर्तिनो नित्यपार्षदा ववृधुरुत्तरोत्तरसङ्ख्यातो वैभवतश्च वृद्धिं प्राप्तास्तेषां विभुत्वे चात्संख्यायां भगवान्हरिरेव प्रमाणं साक्षी बभूव न त्वन्यः ब्रह्माद्यबुद्धिगोचरत्वात् । ते च देवगणतो विभिन्नाः । यथोक्तं हरिवंशे श्रीमदक्रूरेण—" देवानाञ्च हितार्थाय वयं जाता मनुष्यताम् " इति । अत्र हरिर्बहिरन्तश्च सर्वसमाहरणशक्तः । यतो भगवान्पूर्णैश्वर्यादिषड्गुणसम्पन्नश्चेति नामद्वयतात्पर्यम् ॥ ४५ ॥ ० ॥ * ॥ तेषां वृष्णीनाम् परमेव माहात्म्यमित्याह—शय्यादिषु सन्तं जाग्रतमप्यात्मानं न विदुः श्रीभगवत्प्रेरणयैव सर्वे कुर्वन्ति न तु स्वयमनुसन्धातुं शक्नुवन्तीत्यर्थः । यतः कृष्णचेतसः । क्रीडा द्यूतादिः । आदिना सौरताद्य इति

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ॥ यन्नामाऽमंगलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः कृष्णस्यैतन्न चित्रं क्षितिभरहरणे कालचक्रायुधस्य ॥ ४७ ॥

तस्मात्कृष्णकीर्तेः सर्वतीर्थोत्तमत्वं कृष्णस्य च सर्वदेवोत्तमत्वं न चित्रमित्याह। तीर्थं चक्र इति। इतः पूर्वं स्वःसरिदेव सर्वतोऽधिकं तीर्थमित्यासीत्। इदानीं तु यदुषु यदजनि जाततीर्थं श्रीकृष्णकीर्तिरूपमेतत्स्वःसरिद्रूपं पादशौचं तीर्थमूनमल्पं चक्रे। स्वयमेव सर्वतीर्थोपरि विराजत इत्यर्थः। श्रीकृष्णस्य विद्विषः स्निग्धाश्च तत्सारूप्यं ययुरित्यपि नातिचित्रम् । तस्य परमकारुणिकत्वात्। तथेदं च न चित्रम्। किं तत्। अजितपरा अजिता कैश्चिदप्यप्राप्ता परा सर्वतः परिपूर्णा श्रीः कृष्णस्यैव नान्यस्येति तदेवाह। यदर्थेऽन्येषां ब्रह्मादीनां यत्न इति । ननु निरपेक्षं तमेव लक्ष्मीः श्रयत इति चित्रमेवेति चेन्नहि परममंगलनामधेयत्वात्तस्येत्याह। यन्नामेति। तदपि नार्थस्मरणापेक्षमित्याह। श्रुतमथ गदितमिति। सर्वधर्माश्रयत्वादपीत्याह। यत्कृतो गोत्रधर्म इति। गोत्रेषु तत्तदृषिवंशेषु धर्मो यत्कृतो येन प्रवर्तितः तस्य क्षितिभरहरणं नैव चित्रमित्याह। कृष्णस्यैतदिति। कालचक्रायुधस्येति। सर्वसंहारककालमूर्तेर्विशेषतो दुरंतप्रभावचक्रायुधस्य कियदेतदित्यर्थः ॥ ४७ ॥

'यद्यादवं कुलमहो अविषह्यमास्ते' इत्यादिकं तु नान्यादृशत्वख्यापकं किन्तु तद्विरहोन्मादभयाख्यापकमेव। वक्ष्यते च—"ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम्." इत्यादि ॥ ४६ ॥ यतो यादवा देवाः श्रीकृष्णश्च तेषामीश्वरस्तस्माद्धेतोः। इत्यर्थ इति—सूर्योदये दीपस्येव तुच्छत्वमेवेति भावः। तत्सारूप्यं कृष्णसारूप्यम्। तस्य कृष्णस्य। यथा विद्विट्स्निग्धानां सारूप्यदानं न चित्रं तथैवेदं वक्ष्यमाणमपि। तत्पृच्छति—किं तदिति। अन्यस्य कृष्णेतरस्य तदेव श्रियाः कृष्णपरत्वमेव यदर्थे यस्याः श्रियो निमित्तम्। अत्राशंकते—नन्विति। तमेव श्रीकृष्णमेव। शंकोद्धारमाह—नहीति। तस्य श्रीकृष्णस्य। यन्नाम यस्य श्रीकृष्णस्य नाम। तदपि नामापि। अर्थस्मरणं नापेक्षत इत्याह—श्रुतमथेति। यद्वा—नन्वन्येऽप्यग्निहोत्रादयो धर्माः सन्ति तान्विहाय कथं तत्र प्रवृत्तिः स्यादिति चेत्तत्राह—सर्वधर्मेति। धर्मोऽग्निहोत्रादिः। येन कृष्णेन तस्येत्यर्थः। इत्यर्थ इति—इच्छयैव सर्वसंहर्तुश्चक्रधारणे तु भूभारावतारणं न किञ्चिदिति भावः॥*॥ तदेवं यदुकुलरूपमधिष्ठानं प्रशस्य श्रीकृष्णरूपमधिष्ठातारं प्रशंसति—कृष्णस्य स्वयं भगवत एतत्पूर्ववर्णितं क्षितिभारहरणं न चित्रं विबुधहृदयविस्मयावहं न भवति यतः परमाण्वादिद्विपरार्द्धान्तरूपो यः कालः स एव चक्रं चक्रवद्विच्छिद्य परिवर्तमानत्वात् तदेव चायुधं सर्वसंहारसाधनं यस्य स्वतःसिद्धत्वात्तदर्थोद्यमेनालमिति भावः। तदचित्रताबोधनाय तमेव चित्रविशेषणैर्विशिनष्टि—यतस्तादृशोऽपि लोककृपया यदुष्वजनि जातः य एव स्वस्सरिदाख्यं श्रीवामनपादशौचरूपं तीर्थमूनं चक्रे निजचरणरजःसम्बन्धियमुनादिभिरिति भावः। "गंगाशतगुणा पुण्या माथुरे मम मण्डले। यमुना विश्रुता देवि नात्र कार्या विचारणा ॥" इत्यादिवाराहात्। "यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः। सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः। शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥" इति शौनकस्य तत्प्रश्नकरणाच्च। किञ्च—विभक्तिविपरिणामात्, यद्येन हेतुना स्निग्धा इव विद्विषः पूतनादयः। यद्वा—विद्विषः स्निग्धाः पितृभ्रात्रादयोऽपि स्वरूपं सर्वमूलभूतं श्रीभगवन्तमेव ययुः 'सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता' इत्यादेः। यत् यत्र श्रीः रूपादिसम्पत्तिः परा सर्वोत्कृष्टाऽजिताऽन्याऽस्पृष्टा चेत्यर्थः। यथोक्तम्—'यन्मर्त्यलीलौपयिकम्' इत्यादि। 'अदृष्ट्वान्यतमं लोके' इत्युपक्रम्य 'तृतीयेऽस्मिन्भवेऽहं वै' इत्यादि। यदर्थे यस्य दर्शनादिरूपेऽर्थेऽन्येषां महाकालपुराधिपादीनामपि यत्नः परमब्रह्मण्यदेवत्वेऽपि मुहुर्मुहुर्ब्राह्मणबालहरणब्राह्मणदुःखातिशयदानदोषानादरपूर्वकप्रयासः।

**जयति जननिवासो देवकीजन्मवादो यदुवरपर्षत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥ स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन्कामदेवम् ॥४८॥**

**यतं एवंभूतः श्रीकृष्णस्ततः स एव सर्वोत्तम इत्याह । जयतीति । जनानां जीवानां यो निवास आश्रयस्तेषु वा नित्यमंतर्यामितया तथां स कृष्णो जयति । देवक्यां**

यथोक्तम्—' द्विजात्मजा मे युवयोर्दिदृक्षुणा ' इत्यादि । अत एव यस्यैव नाम अथ कार्त्स्न्येन सर्वतोऽपि सामस्त्येन तदतिरिक्तसर्वपरित्याजनादिनाऽमंगलघ्नं तदुपलक्षणतया सर्वमंगलदातृ च । यथोक्तं ब्रह्माण्डपुराणे तन्नामाष्टोत्तरशतप्रसंगे—" सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम् । एकावृत्त्या तु कृष्णस्य नामैकं तत्प्रयच्छति ॥ " इति । तत्रापि विशेषः श्रुतं किमुत गदितामित्यर्थः । किञ्च—यत्कृतो येनैवोपदिष्टो गोत्रधर्मः अनाद्यृषिपरम्पराप्राप्तो भगवद्धर्मः । तदुक्तमेकादशे स्वयमेव—" कालेन नष्टा वाणीयं प्रलये वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ " इति । यद्वा—गोत्रधर्मो वैष्णवधर्मः, वैष्णवानां तद्गोत्रतया प्रसिद्धेः । "अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः" इति चतुर्थे । यद्वा—अगोत्रधर्मः सत्कुलाद्यपेक्षारहितः स एव धर्मः यत्कृतः—"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा । " इति गीतासु । यद्वा—अत्र जगति तादृशधर्मः सदा सर्वत्रागः स्थिरः । यथा द्वितीये—'न ह्यतोऽन्यः शिवः पन्थाः' इत्युपक्रम्य तदुपसंहारे "तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ॥ " इति । यद्वा—गां पृथिवीमपि त्रायत इति गोत्रः स चासौ धर्मश्च 'अपि चेत्सुदुराचारः ' इत्यादिकं श्रीगीतासु, 'मद्भक्तियुक्तो भुवनं पुनाति' इति एकादशे च । यद्वा—प्रसिद्ध्या योगवृत्त्या गोत्रस्य श्रीगोवर्धनस्य धर्मो मखरूपो येनैव कृतः भक्तवात्सल्यं दर्शयतेन्द्रमपि तुच्छीकृत्य प्रकाशितः । यद्वा—तदेव दर्शयता बलिमाददानेन गोत्रधर्मः शैलत्वमपि स्वस्मिन्येन प्रकाशितः । यद्वा—गोत्रधर्मः स्वदेहसंबन्धभावनारूपो धर्मो यस्मिन्कृतो विहितः 'न कर्हिचिन्मत्पराः ' इत्यादि "येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् " इत्यादि च । यद्वा—श्रीनन्दादौ श्रीवसुदेवादौ श्रीयुधिष्ठिरादौ च गोत्रधर्मः स्वस्वसम्बन्धपुरस्कृतप्रेमा येन यत्र वा तैः कृतः । यद्वा—गास्त्रायन्त इति गोत्राः श्रीगोपास्तेषां धर्मः स्वभावः असमोर्द्ध्वप्रेमा येन यत्र वा कृतः । यद्वा—गोत्रधर्मः सर्वस्वरूपातिक्रामि परमरूपं गोपत्वं येन प्रकाशितमिति । यद्वा—गा दिशः त्रायन्ते रक्षन्तीति गोत्रा दिक्पालास्तैर्धर्मः स्वस्वकर्म वर्षणदहनादिरूपं यतः कृतः " वर्षतीन्द्रो दहत्यग्निर्वातश्चरति यद्भयात् " इत्याद्युक्तेः "भीषास्माद्वातः पवते " इत्यादिश्रुतेश्च । गवा वाचा त्रायन्त इति गोत्रा विप्रास्तेषां धर्मः सन्ध्योपासनादिः येन 'वेदो नारायणः साक्षात् ' इतिन्यायेन वेदरूपेण भगवतैव कृतः "अहरहः सन्ध्यामुपासीत " इति श्रुतेः, "यावज्जीवमग्निहोत्रं जुहुयात् " इति श्रुतेश्च । यद्वा—यत्रं यस्मिन्कृतः समर्पितो धर्मोऽत्र जगति अगः कर्हिचिन्न गच्छति न केनाप्यपहर्तुं शक्यते 'धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र ' इति तृतीये ब्रह्मोक्तेः । यद्वा—गोत्रस्य यदुकुलस्य धर्मो राज्यासनाग्रहणरूपो येन कृतः अपाकृतः 'कृ—हिंसायाम् ' तच्चोग्रसेनाय राज्यदानलक्षणमिति । यद्वा—स एव येन स्वयं कृतः स्वीकृत इति दिक् ॥*॥ **विश्वनाथस्तु**—श्रीकृष्णनित्यलीलारत्नाकरं श्रीदशमस्कन्धमुपसंहरन् श्रीकृष्णस्यान्यावतारवैलक्षण्यपञ्चकमाह—तीर्थमिति । यद्यदुषु अजनि जातं तीर्थं कृष्णकीर्तिरूपं तत्कर्तृ स्वस्सारिद्रूपं पादशौचं तीर्थमूनं चक्रे । इदमेकं चित्रम् । तथा यत् यस्य विद्विषः कंसादयः स्निग्धा गोप्यादयश्च स्वरूपं क्रमेण सायुज्यं प्रापुस्तदीयश्रीविग्रहं च भोक्तुं प्रापुः । इदं द्वितीयं चित्रम् । यस्याः कृपालवाप्त्यर्थमन्येषां ब्रह्मादीनां यत्नः सा श्रीः आजितं जयाभावस्तत्परैवाभूत् बहुतपोभिरपि व्रजस्त्रीश्रेणिरिव यत् यं जेतुं वशीकृत्य रासादिभी रमयितुं न शशाकेत्यर्थः । इदं तृतीयं चित्रम् । यद्यस्य नाम कृष्णेति द्व्यक्षरं नारायणादिनिखिलतदंशनामोत्कृष्टम् अमंगलमविद्यापर्यन्तं हरतीति तत् । यद्वा—मुक्तप्रग्रहया वृत्त्या मंगलः सर्वोत्कर्षः अमङ्गलं तदभावस्तं हंतीति तत् । श्रुतान् अविशेषेण सर्वसाधनफलोत्कर्षान्मश्नाति स्वीयसर्वोत्कर्षत्वेन विलोडयतीति श्रुतिमथं गदितं यस्य तत्, नारायणादिनिखिलतदंशनामोत्कृष्टमित्यर्थः, 'सहस्रनाम्नां पुण्यानाम् ' इत्याद्युक्तेः । इदं चतुर्थं चित्रम् । गां सर्वामपि पृथ्वीं त्रायते चतुर्भिरेव पादैर्निरन्तरं सर्वत्रैवाभिद्रुत्य पालयति स चासौ धर्मश्चेति स तादृशो येनैव कृतः, द्वापरान्ते त्रिपादहीनोऽपि धर्मो येन चतुष्पादेव कृत इत्यर्थः । "चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः " इति पृथिव्युक्तेः । इदं पञ्चमं चित्रम् । विस्मयावहं वैलक्षण्यं तस्य कृष्णस्यैतत् क्षितिभारहरणं तु न चित्रं येनैव लोका विस्मिता भवन्तीति भावः ॥ ४७ ॥ एवंभूतः ' तीर्थं चक्रे ' इत्यादिपद्यप्रतिपादितवैभवैकदेशो यतस्ततो हेतोः । स एव श्रीकृष्ण एव आश्रयोऽधिष्ठानम् । अधिष्ठानत्वं तु पृथिव्यादेरप्यस्तीत्यत आह—

जन्मेति वादमात्रं यस्य सः । वस्तुतो अजन्मा । यदुवराः पर्षत्सभा सेवकरूपा यस्य । इच्छामात्रेण निरसनसमर्थोऽपि क्रीडार्थं दोर्भिरधर्ममस्यन् क्षिपन् । स्थिरचरवृजिनघ्नोऽधिकारिविशेषानपेक्षमेव वृंदावनगततरुतृणलतादीनां संसारदुःखहंता । तथा विलासवैदग्ध्यानपेक्षं व्रजवनितानां पुरवनितानां च सुस्मितेन शोभनहास्ययुतेन श्रीमता मुखेनैव कामदेवं वर्धयन् । कामश्चासौ दीव्यति विजिगीषति संसारमिति देवस्तम् । भोगद्वारा मोक्षप्रदमित्यर्थः ॥ ४८ ॥

तेषु जीवेषु । वादमात्रं न वस्तुतः 'न जायते म्रियते वा' इति स्मृतेः । यद्यपि वृक्षादियोनिमतः संसृतिनिवृत्तावधिकारो नास्ति तथापि परमदयालोः श्रीकृष्णस्य न तदपेक्षेत्याह–अधिकारिविशेषेति । तथैव विलासे वैदग्ध्यं दाक्षिण्यं नापेक्षते यत्र तत्तथेति । इत्यर्थ इति–वर्द्धयन्नतीवोद्दीपयन्निति–तथा च तासामतीव भोगान् सम्पादयंस्तेषु च विरक्तिद्वारा मोक्षं सम्पादयामास । "विरज्येत तथा चित्तं कामानामतिसेवया" "पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः" "न ह्यंगाजातनिर्वेदो देहबन्धं जिहासति" इत्याद्युक्तेरिति भावः ॥ * ॥ एवं तस्य सर्वोत्कृष्टत्वं श्रुत्वा सुखं प्राप्नुवतोऽपि श्रोतॄंस्तदवस्थत्वमतीतमिवाशङ्क्य म्लायतः स्वानुभवेन सान्त्वयन्नाह–जयतीति । देवक्यां जन्म जननलीलानुकरणेन प्रादुर्भावो वादस्तत्त्वबुभुत्सुकथा न तु च्छलजात्यादिरूपो यस्य । यद्वा–जन्मनो वादः ख्यातिः 'नन्दस्त्वात्मज उत्पन्ने' इत्यत्र व्याख्यातरीत्या तु श्रीयशोदायामपि तर्क्यं जन्म यस्येत्यर्थः । स प्रसिद्धः श्रीकृष्णो जयति सर्वदेवस्वरूपरूपगुणलीलापरिकरस्थानगतेन सर्वोत्कर्षेण विराजते । अत्र च लोडर्थत्वं न सम्भवति सदोत्कृष्टतापराकाष्ठामहिष्ठे श्रीभगवति तद्विज्ञानां तादृशानामाशीर्वादायोगात् । यदि वा तद्योगः कथञ्चित्कल्प्यस्तथाप्याशीर्वादविषयस्य सविशेषणस्य तस्य तदापि तदैवावस्थितिप्राप्ते विवक्षितार्थ एव लभ्यते, धार्मिकसम्यतादिसम्पन्नो विष्णुमित्रो वर्द्धतामितिवत् । अथ कथंभूतः सन् जयतीत्यपेक्षायां विशेषणानि वदन्परिकरविशिष्टतयाह–तेन च तादृशतान्नित्यजयेऽबिभ्यत् । प्रत्यक्षलक्षणं प्रमाणमप्याह–'जनेषु सालोक्य–' इत्यादिपद्ये जना इतिवत् तदीयेष्वन्तरंगेषु यादवगोप्यादिषु साक्षान्निवासोऽन्येषु तत्स्फूर्तिरूपो यस्य सः । तत्र चान्यार्थतां परिहरंस्तास्मिञ्जये विवृत्यैव तैर्जनैर्विशिष्टतामाह–यदुवरेत्यादिना । तत्रान्तरगैर्विशिनष्टि–यदुवराः क्षत्रिया गोपाश्च परिषत्सभारूपा यस्य सः । बहिरंगैर्विशिनष्टि–स्वभक्तजना एव दोषो भुजा इव भुजास्तैः । अधर्ममेतादृशार्थे नास्तिकादिकं जगति चास्यन्दूरीकुर्वन् अतस्तत्तत्सम्बन्धेन स्थिरचराणामन्तरंगानां संसारहन्तापि सन् । अथ तत्रापि परमान्तरंगैर्विशिनष्टि–सुस्मितेति । शोभनं स्मितं तदुपलक्षितं प्रसादविलासादिकं यत्र । तेन स्वभावत एव श्रीयुक्तेन मुखेनैव च प्राधान्यतः प्रथमोक्तानां व्रजवनितानां तदन्तरंगाणां पुरवनितानां च जनितात्यर्थानुरागाणां तासां योषितां यः कामः स एव दीव्यति परमप्रेमरूपत्वात्सर्वतोऽपि विराजत इति देवस्तं वर्द्धयन्सदैवोद्दीपयन्, इति स्वरूपरूपगुणलीलास्थानविशिष्टतापि दर्शिता । तदेवं सर्वस्यापि विशेषणस्य विधेयेन जयतीत्यर्थेनानुगतत्वात्तादृशोऽसौ स्वयमेव तादृशैः परिकरैः सह तादृशविलासादिविशिष्टो व्रजे पुरद्वये च सदा सर्वोत्कर्षेण विराजत एवेति स्थितं, युक्तमेव तत्स्वयंभगवत्त्वात् । आगन्तुकतादृशत्वे स्वयंभगवत्त्वहानेः, तस्मादविचारेणैवास्य कानिचिद्वचनानि प्रतिकूलायन्ते वस्तुतस्तु अनुकूलान्येव तत्र दशमस्कन्धस्य तत्रतत्र व्याख्यातान्येव । तत्स्वरूपनित्यत्वे, प्रथमस्कन्धस्य 'ययाऽहरद्भुवो भारम्' इत्यादिद्वयं तु यथा–तनुरूपकलेवरशब्दाभाववाचिन एव । यथा–तृतीयस्कन्धे विसर्गप्रसंगे ब्रह्मणि तत्पर्यायशब्दस्यैवार्थः स्वीकृतः अनुपपत्तेः । तत्र यदि सा तर्हि कथं स्वयं भगवति न स्यात् स च भावोऽत्र भूभारजिहीर्षालक्षणः मायाकार्यसम्बन्धित्वाद्भावाभास एव च ततः साम्ये कण्टकदृष्टान्तत्वं सुसंगतमेव । नटदृष्टान्तत्वं श्रव्यरूपकाभिनेतुर्नटस्य स्वरूपावेशाभासमेव स्थितस्य तत्तद्भावाभासस्वीकारपरित्यागमात्राभ्यामिति । एवमन्यत्राप्याकृतिदेहशब्दौ व्याख्येयौ । अथवा त्यागस्वीकारौ नामान्तर्द्धानाविर्भावने एव, यथा श्रीमध्वाचार्यधृतं तन्त्रभागवतवचनं पूर्वमुदाहृतम् "अहेयमनुपादेयं यद्रूपं नित्यमव्ययम् । स एवापेक्ष्य रूपाणां व्यक्तिमेव जनार्दनः ॥ अगृह्णाद्व्यसृजच्चेति कृष्णरामादिकां तनूम् । पठ्यते भगवानीशो मूढबुद्धिव्यपेक्षया॥" इति । एवं प्रथमस्य द्वादशे 'विधूय' इत्यादिपद्ये स्वामिभिरप्युक्तम्, यत्र दृष्टस्तत्रैवान्तर्हितो न त्वन्यत्र गतः यतो विभुः सर्वगत इति । अत एव तृतीये "प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् । आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥" इत्यत्राऽपि लोकलोचनरूपं स्वबिम्बं निजमूर्तिं प्रदर्श्य पुनरादायैव चान्तरधान्न तु

त्यक्त्वेत्युक्तम्, ‘यथा मत्स्यादिरूपाणि’ इत्यनन्तरमपि । तथोक्तम्—‘यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा’ इति । तथा पाद्मे निर्वाणखण्डे—“पश्य त्वं:दर्शयिष्यामि स्वरूपं वेदगोपितम्” इति । भगवद्वाक्या नन्तरं ब्रह्मवाक्यम्—“ततोऽपश्यमहं बालं कालाम्बुदसमप्रभम् । गोपकन्यावृतं गोपं हसन्तं गोपबालकैः ॥ कदम्बमूल आसीनं पीतवाससमद्भुतम् । वनं वृन्दावनं नाम नवपल्लवसस्मितम् ॥” इति । श्रीगोपालतापनी चैवम्—“तदुहोवाच ब्राह्मणोऽसावनवरतं मे ध्यातः स्वतः परार्द्धान्ते सोऽबुध्यत गोपालवेशो मे पुरस्तादाविर्बभूव” इति।सिद्धनिर्देशोऽपि श्रूयते बृहन्नारदीयमंगलाचरणे—“वन्दे वृंदावनासीनमिन्दिरानन्दमन्दिरम्” इति।स्कान्दे द्वारकामाहात्म्ये श्रीबलिं प्रति प्रह्लादवाक्ये—“गृहे संतिष्ठते यस्य माहात्म्यं दैत्यनायक । द्वारकायाः समुद्भूतं सान्निध्यं केशवस्य च ॥ रुक्मिणीसहितः कृष्णो नित्यं निवसते ततः ॥” इति । कार्तिकमाहात्म्ये तत्प्रातःस्नानार्घ्यमन्त्रे—“व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम । गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥” इति । एवं नाना मन्त्रा अपि साक्षात्तथैव तं निर्दिशन्ति । अत एव गोपालताप न्याम्—“गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं तोषयामि” इति । तदेवमभिप्रेत्य श्रीशुकदेवोऽपि निजाभीष्टदेवत्वेनाह—“पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां भो भगवान्सतां पतिः” इति । ‘प्रीयान्न इन्द्रो गवाम्’ इति च । श्रीमन्नराकृतित्वमेवाधिकृत्य नारायणवर्मण्यप्याह—“मां केशवो गदया प्रातरव्याद्गोविन्द आसंगवमात्तवेणुः” इति । एवं श्रीमन्नराकारे वा येषां या भ्रांतिः सा तेषामपि निरस्ता । यथोक्तम्—“यत्पादपांशुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यगम्यम्” इत्यादि । “स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमहो व्रजौकसाम्” इत्यादि । एवं ‘न चान्तर्न बहिर्यस्य’ इत्यादि । ‘नौमीड्य ते’ इत्यादि । ‘सकृद्यदंगप्रतिमा’ इत्यादि । ‘अहो भाग्यमहो भाग्यम्’ इत्यादिना । एवमेव ब्रह्माण्डे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रे श्रीमन्नराकृतित्वमेवाधिकृत्य “नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः । नवनीतविलिप्तांगो नवनीतनटोऽनघः ॥” इति । श्रीगोपालतापन्यामपि—“नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तं पीठगं ये तु यजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्” इति । विशेषश्चोक्तः—‘गोप्यस्तपः किमचरन्यदमुष्य’ इत्यादौ । तथा च पाद्मे निर्वाणखण्डे श्रीवेदव्यासवाक्यम्—“दृष्ट्वातिहृष्टो ह्यभवं सर्वभूषणभूषणम् । गोपालमबलासंगमुदितं वेणुवादिनम् ॥ ततो मामाह भगवान्वृन्दावनचरः स्वयम् । यदिदं मे त्वया दृष्टं रूपं दिव्यं सनातनम् ॥ निष्कलं निष्क्रियं शान्तं सच्चिदानन्दविग्रहम् । पूर्णं पद्मपलाशाक्षं नातः परतरं मतम् ॥ इदमेव वदन्त्येते वेदाः कारणकारणम् ।” इत्यादि । अथ तस्य मानसानां शरीराणां गुणानां स्वाभाविकत्वमव्यभिचारित्वं चोक्तं प्रथमे—‘ सत्यं शौचं दया क्षान्तिः ’ इत्यादिना “ एते चान्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥ ” इत्यन्तेन । अथ तत्तत्प रिकरनित्यत्वे प्रतिकूलायमानानि यथार्थं व्याख्यायन्ते । तत्र देवावतरणवाक्यमेकदेशप्रस्तावमयमिति पूर्वपूर्वदर्शितमस्ति मौसलादिकञ्च ब्रह्मशापमर्यादारक्षार्थं मायिकमेव । आह स्म च तदानीमेव दारुकं प्रति श्रीभ गवान्—“ त्वन्तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः । मन्मायारचितामेतां विज्ञायोपशमं व्रज ॥ ” इति । अस्यार्थः—त्वं तु दारुको ज्ञाननिष्ठो मदीयलीलातत्त्वज्ञः मद्धर्मं मम स्वभक्तपालयितृरूपं स्वतुल्यपारि करसंगित्वरूपञ्च स्वभावमास्थाय विश्रम्य एतामधुना प्रकाशितां सर्वामेव मौसलादिलीलां मम माययैव इन्द्रजालवद्रचितां विज्ञाय उपेक्षको बहिर्दृष्ट्या जातं शोकमुपेक्षमाण उपशमं चित्तक्षोभनिवृत्तिं व्रजेति । अत्र श्रीदारुकस्य स्वयमेव तल्लोकादवतीर्णत्वेन सिद्धत्वात् एतामित्यत्रातिसन्निहितार्थलाभाच्चान्यथा व्याख्यानमेव प्रथमप्रतीत्यविषये इति विवेक्तव्यम् । यथा चैकादशे पद्यत्रयम्, तत्र प्रथमं यथा—“राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य । सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिमोपरतः स आस्ते ॥” इति । अस्यार्थः—श्रीकृष्णस्य ये तनुभृतः पार्षदा यादवादयस्तेषां जननाप्ययरूपा ईहाश्चेष्टाः केवलं परस्यैव मायया विडम्बनमनुकरणमवेहि । यथेन्द्रजालवेत्ता नटः कश्चिज्जीवत एव मारयित्वेव दग्ध्वेव च पुनश्च तद्देह जन यित्वेव च दर्शयति, तस्यैव विश्वसर्गादिहेत्वविचिन्त्यमहाशक्तेस्तस्य तादृशशक्तित्वं न च चित्रमित्याह—सृष्ट्वेति । एवमेव दृश्यते चाद्याप्युपासकानामित्यादि तद्व्याख्यानं संगच्छते तत्तत्परिकरेणैव सार्द्धम् । तेषु तत्तत्साक्षात्कार इति । एवं सति सङ्कर्षणादौ मुग्धानामन्यथा हेतूदाहरणाभासः सुतरामेव मायिकः स्कान्दायोध्याखण्डे श्रीलक्ष्मणस्यापि तादृशत्वं न सम्प्रतिपन्नम् । तथाहि तदन्तिमदशानुकरणलीलायाम्—“ ततः शेषात्मतां यातं लक्ष्मणं सत्यसङ्गरम् । उवाच मधुरं शक्रः सर्वस्य च स पश्यतः ॥ इन्द्र उवाच—लक्ष्मणाऽतिष्ठ शीघ्रं त्वमारोहस्व स्वकं पदम् । देवकार्यं कृतं वीर त्वया रिपुनिषूदन ॥ वैष्णवं परमं स्थानं प्राप्नुहि

त्वं सनातनम् । भवन्मूर्तिः समायाता शेषोऽपि विलसत्फणा ॥ " इत्यादि । ततश्च " इत्युक्त्वा सुरराजेन्द्रो लक्ष्मणं सुरसङ्गतः । शेषं प्रस्थाप्य पाताले भूभारहरणक्षमम् ॥ लक्ष्मणं यानमारोप्य प्रतस्थे दिव्रमा
दरात् । " इति । अत एव जरासन्धवाक्ये ' तव राम यदि श्रद्धा ' इत्यत्र स्वामिभिरपीत्थं वास्तवार्थो व्यञ्जितः । अच्छेद्यदेहोऽसाविति स्वयमेव मत्वापरितोषात् पक्षान्तरमाह—यद्वा—मां जहीति । अथ द्वितीयम्—यथा
अप्राकृतानां तेषां तन्न सम्भवतीत्यास्ताम् । श्रीकृष्णपाल्यत्वेनैव न सम्भवतीत्याह—" मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् । जिग्येन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनय
न्मृगयुं सदेहम् ॥ " अस्यार्थः—यः श्रीकृष्णः यमलोकं गतमपि गुरुसुतं गुरोर्जातेन पञ्चजनभक्षितेन तेन मर्त्येन देहेनैवानयत् । न च ब्रह्मतेजसो बलवत्तन्मन्तव्यम् । त्वां च ब्रह्मास्त्रदग्धं यस्तस्माद्ब्रह्मास्त्रादानयत्
रक्षितवानित्यर्थः । किमन्यद्वक्तव्यं यश्चान्तकान्तकमपीशं श्रीरुद्रमपि बाणसंग्रामे जितवान् । अहो यश्च तं जराख्यं मृगयुमपि स्ववैकुण्ठविशेषं सशरीरमेव प्रापितवान्, स कथं स्वानां यदूनामवने ईशो न भवति ।
तस्मात्तेष्वन्यथा दर्शनं न तात्त्विकलीलानुगतं सशरीरं तु तेषां स्वलोकगमनमतीवयुक्तमित्यर्थः । अथ तृतीयं यथा—ननु गच्छन्तु तादृशशरीरा एव स्वधाम तत्रापि स्वयं भगवान् विराजत एवेति न तेषां तद्विरह
दुःखमपि । भगवांस्तु तथासामर्थ्यश्चेत्तर्हि कथमन्यांस्तादृशान्निर्माय तैः सह मर्त्यलोकानुग्रहार्थमपरमपि कियन्तं कालं मर्त्यलोकेऽपि प्रकटो नासीदित्यत्र सिद्धान्तयंस्तेषां भगवतश्च सौहार्दभरेणापि परस्परमव्यभिचा
रित्वमाह—" तथाप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् । नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् ॥ " इति । अस्यार्थः—यद्यप्युक्तप्रकारेणाशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यद्यस्मात्तदूर्ध्व
मप्यनन्ततादृशशक्तिधृक् तथापि यादवानन्तर्द्धाप्य निजं वपुरत्र शेषितं प्रणेतुं कञ्चित्कालं स्थापयितुं नैच्छत् किंतु स्वयमेव लोकमनयत् तत्र हेतुः तान्विना मर्त्येन लोकेन किं मम प्रयोजनमिति स्वस्थानां तद्धामगतानां
तेषां गतिमेव स्वस्याभिरुचितत्वेन प्रकृष्टां दर्शयन्निति । अतस्तेषां श्रीभगवद्वदन्तर्द्धानमेव न त्वन्यदस्तीति श्रीभगवदभिप्रायकथनेनापि श्रीमानुद्धव आह तृतीये—" मिथो यदैषां भविता विवादो मध्वामदाताम्र
विलोचनानाम् । नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेन्तर्दधते स्वयं स्म ॥ " इति । अस्यार्थः—एषां यदूनां यदा मिथो विवादस्तदाप्येषामुपायो भवेत् । अत्र पुनः परामृशति—अतो वधादन्य एव इयानेतावानेवोपायो
वर्तते । कोऽसौ मय्युद्यते ममेच्छाया एते स्वयमेवान्तर्दधते इति । यः स्मेति निश्चये । यद्वा वधस्योपायो न विद्यते इत्येव व्याख्या । यः अतो वधोपायादन्य इयान् वधोपायतुल्य उपायो विद्यत इति व्याख्येयम् । तेन
कूर्मपुराणोक्तसीताहरणवत् पुरस्त्रीहरणमपि मायिकं ज्ञेयम् । तथैवासां विवाहप्रसंगे स्वरूपशक्तित्वं प्रमाणितम् । किञ्च—तेषु यच्चान्यच्छस्त्राघातमूर्छातत्त्वबुभुत्सादिकं श्रूयते तद्भगवत इव नरलीलौपयिकतया प्रपञ्चित
मिति । क्वचित्प्रकटलीलायाः प्रापंचिकमिश्रत्वाद्यथार्थमेव च तत्तत्, यथा शतधन्ववधादौ—अन्तरङ्गाणाञ्च भगवत्साधारण्यमेव तत्तन्नित्यपरिकरत्वेन दार्शितत्वाद्युक्तम् । तदनुकूलानि चैतानि वाक्यानि । यथा पाद्मका
र्तिकमाहात्म्ये श्रीसत्यभामां प्रति भगवद्वाक्यम्—" एते हि यादवाः सर्वे मद्गणा एव भामिनि । सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिनः ॥ " इति । पाद्मोत्तरखण्डे—" यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः ।
तथा तेनैव जायन्ते निजलोकाद्यदृच्छया ॥ पुनस्तेनैव गच्छन्ति तत्पदं शाश्वतं परम् । न कर्मबन्धनं जन्म वैष्णवानां च विद्यते ॥ " इति । श्रीगोपालतापन्याम्—" जन्मजराभ्यां भिन्नः स्थाणुरच्छेद्योऽयं योऽसौ
सौर्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गोपान्पालयति योऽसौ गोपेषु तिष्ठति " इत्यादि । सौर्य्ये यमुनायास्तीरे श्रीवृन्दावने, सहस्रनाम्नि 'सुयामनः' इति तथा भाष्ये व्याख्यातम् । अथ प्रपञ्चे प्रकटाप्रकट
रूपेण प्रकाशभेदेन स्थितानि श्रीवृन्दावनादीन्येव नित्यस्थानानीति च पूर्वोदाहरणमेतेन व्यक्तमेवास्ति । यथोक्तं पाद्मनिर्वाणखण्डे श्रीभगवद्वाक्यम्—" नित्यां मे मथुरां विद्धि वनं वृन्दावनं तथा । ममावतारो नित्योयमत्र
मा संशयं कृथाः ॥ " इति । तथा च बृहद्गौतमीये श्रीकृष्ण उवाच—" इदं वृन्दावनं रम्यं मम धामैव केवलम् । अत्र ये पशवः पक्षिवृक्षकीटा नरामराः ॥ ये वसन्ति ममाधिष्ण्ये मृता यान्ति ममालयम् ।
अत्र या गोपकन्याश्च निवसन्ति ममालये ॥ योगिन्यस्ता मया नित्यं मम सेवापरायणाः । पञ्चयोजनमेवास्ति वनं मे देहरूपकम् ॥ कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी । अत्र देवाश्च
भूतानि वर्तन्ते सूक्ष्मरूपतः ॥ सर्वदेवमयश्चाहं न त्यक्ष्यामि वनं क्वचित् । आविर्भावस्तिरोभावो भवेन्मेऽत्र युगेयुगे ॥ तेजोमयमिदं रम्यमदृश्यं चर्मचक्षुषा । " इति । यथैकादशस्कन्धान्ते—
" द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् । वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ नित्यं सान्निहितस्तत्र भगवान्मधुसूदनः । स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ " इति । एवमेव विष्णुपुराणे—

इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्तलीलातनोस्तदनुरूपविडंबनानि ॥ कर्माणि कर्मकषणानि यदूत्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ॥ ४९ ॥ मर्त्यस्तयाऽनुसवमेधितया मुकुंदश्रीमत्कथाश्रवणकीर्तनचिंतयैति ॥ तद्धाम दुस्तरकृतांतजवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः॥ ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां श्रीकृष्णचरितानुवर्णनंनाम नवतितमोऽध्यायः ॥९०॥

## ॥ समाप्तोऽयं दशमः स्कन्धः ॥ १० ॥

तत्तत्कार्यविशेषैः स्वीकृतमत्स्यकूर्मादिनानामूर्तेर्विशेषतो यदूत्तमस्य सतः परस्य तदनुरूपानुकारीणि कर्मकषणानि कर्माणि चरितानि श्रूयात् शृणुयादित्यर्थः ॥ ४९ ॥ अनुवृत्तेः फलमाह । मर्त्य इति । श्रीमत्याः कथायाः श्रवणकीर्तनयुक्तया चिंतया संवर्धितयाऽनुवृत्त्या तया तन्निष्ठत्वेन तस्य धाम लोकमेति । लोकत्वेऽपि कालानाकलितत्वमित्याह । दुस्तरेति । दुर्लभपुरुषार्थताश्राह । ग्रामादिति ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे श्रीधरस्वामिविरचितायां भावार्थदीपिकाख्यायां टीकायां नवतितमोऽध्यायः ॥ ९० ॥ समाप्तोऽयं दशमः स्कन्धः ॥ १० ॥

" प्लावयामास तां शून्यां द्वारकां च महोदधिः । यदुदेवगृहं त्वेकं नाप्लावयत सागरः ॥ नात्यक्रामत्ततो ब्रह्मंस्तदद्यापि महोदधिः । नित्यं सन्निहितस्तत्र भगवान्केशवो यतः ॥ " इति दिक् ॥ ४८ ॥ इत्थं परस्य भूम्नः श्रीकृष्णस्य तदनुरूपानुकारीणि स्वीकृतलीलातनोरुचितानि कर्मकषणानि दुष्कर्महरणसमर्थानि मोक्षोपयोगीनि । वा अमुष्य बुद्धिष्ठस्य अनुवृत्तिं सन्ततप्रवाहम् । यद्वा—पदयोरैहिकामुष्मिकस्थानयोरनुवृत्तिं निवृत्तिम् । उपसर्गाणामनेकार्थत्वादनु निषेधेऽपि एतेनैहिकामुष्मिकभोगाविरक्तिरुक्ता भगवन्निष्ठावतः । इत्यर्थ इति—पुरुषेण निजकल्याणार्थं हरिकथैव सर्वधर्मान्परित्यज्य श्राव्या " ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उत यत्र गुणेष्वसंगः । कैवल्यसम्मतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ " इत्युक्तेरिति भावः ॥ * ॥ हन्तैतादृशपरमधाम्नस्तस्यानुगतिं कथं लभेत, उच्यते—नेदं मदुक्तं श्रीभगवल्लीलावर्णनशास्त्रं शास्त्रान्तरमिव स्वाभिहितानुष्ठानेनैव फलप्रदं िक तु श्रवणमात्रेणापीत्याह—इत्थमिति । यद्वा—तेषां तन्नित्यपार्षदानां नित्या तदेकधामस्थितिः किं वर्ण्यतां तैः सह या लीलास्ताः शृण्वतामपि सा नित्यैव स्यादित्याह—इत्थमिति । अनेन पूर्वोक्तप्रकारेण परस्य सर्वागोचरगतेरपि कृपया निजधर्मस्य स्वभक्तिरूपस्य रिरक्षिषया आत्ता प्रपञ्चं प्रत्यानीता प्रकटिता लीलाप्रधाना तनूर्निजविग्रहो येन तस्य कर्माण्यमुष्य पदयोरनुवृत्तिमनुगतिमिच्छन् जनः शृणुयात् । परस्येति विशिनष्टि—यदूत्तमस्य । पूर्वपूर्वप्रामाण्येन यदुषु पुरस्थेषु च व्रजस्थेषु उत्तमस्य तत्तदाश्रयतत्तयैव नित्यलीलस्येति यावत् । कर्माणि विशिनष्टि—तदनुरूपाणि लीलातनुयोग्यानि च तानि विडम्बनानि अन्यसादृश्यातिक्रमीणि च तानीति । यद्वा—तदनुरूपाणि तत्सदृशानि अवतारान्तरकर्माणि तान्यपि विडम्बयन्ति हीनोपमत्वं प्रापयन्ति यानि तानि असमोर्द्ध्ववैभवानीत्यर्थः । अत एवोक्तम् 'कर्माणि चात्ममहिमोपनिबन्धनानि ' इति । तथा कर्मरूपाण्यपि कर्मकषणानि जगतां कर्मविलोपकानीति ॥ ४९ ॥ तया पादयोरनुवृत्त्या । तन्निष्ठत्वेन भगवन्निष्ठत्वेन । लोकं वैकुण्ठादि स्वरूपं वा कालेनानाकलितमस्पृष्टम् । दुस्तरश्चासौ कृतान्तजवस्तस्यापवर्गस्त्यागो यस्मिंस्तत्तथा । यदर्थं यस्य हरेर्धामैवार्थो येषां ते क्षितिभुजो ग्रामाद्वनं ग्रामं विहाय वनं ययुः । एतेन राज्यादपि तत्र सुखाति

शयो व्यज्यत इति ध्वनितम् (९०) कचित्पुस्तकेषु चित्रं न चेत्यादिकोऽधिकः श्लोकोऽप्यस्ति तस्य चायमर्थः—गोप्यादिस्त्रीणां यदुरुगायस्य पवित्रलीलया विध्वस्तः कल्मषाणां कदम्बको यस्मिन्मुक्तिरूपे तद्यज्जातमेतच्चित्रं न चेत्यन्वयः । अन्यत्पूर्ववत् ॥ स्वाम्यभिप्रायदौर्बोध्याद्यन्मया साहसं कृतम् । तन्मे क्षाम्यंतु विद्वांसो ह्ययुक्तं शोधयंतु ते ॥ १ ॥ कलिंदजातीरविहारशालिनं गोपांगनाभिर्धृतवेणुवादिनम् । सदा नमस्ये निजचेतसा धृतं श्रनिंदसूनुं सुरराजवंद्यम् ॥ २ ॥ इति श्रीखरडपत्तनवास्तव्यपंडितवंशीधरशर्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कंधोत्तरार्धे नवतितमोऽध्यायः ॥ ९० ॥ * ॥ यथा तच्छ्रवणेन तदनुवृत्तिप्राप्तिः स्यात्तथा विवृणोति—ननु हे राजन् मर्त्यो मरणधर्मा यः कोऽपि तया पूर्वोक्तमाहात्म्यया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्तया मुकुन्दस्य सर्वदुःखविमोचकत्वेन महाकारुणिकस्य स्वयं भगवतो या श्रीमती सर्वसम्पदां धात्री विधात्री च कथा तस्याः श्रवणेन जातं यत्कीर्तनं स्वयमुल्लासतो गानं तत्र या चिन्ता तत्प्राप्त्युत्कण्ठामयी स्मृतिस्तया समेधितया नित्यमेव तेन गानेन वार्द्धितया सत्या पूर्वोक्तं श्रीवृन्दावनादिप्रकाशविशेषरूपं तद्धाम प्रति वासनानुसारेण तदेकतरं प्राप्नोति । तदेव विशिनष्टि—दुस्तरो ब्रह्मादिभिरपि स्वतोऽपरिहार्यो यः कृतान्तः कृतः सर्वस्यान्तो येन स कालस्तस्यापि जवस्य विक्रमस्यापवर्गः समाप्तिर्यत्र तत् । तदुक्तम्—'न यत्र माया न च कालविक्रमः' इति । "दर्शयामास गोपानां लोकं स्वं तमसः परम्" इति च । तच्च परमविषयान्धानामपि लोभनीयशोभं किमुत मुमुक्षुमुक्तभक्तानामुत्तरोत्तरपरमदस्यमित्याह—ग्रामादिति । क्षितिः सप्तद्वीपवती पृथिवी तां भुञ्जते ये प्रियव्रतादयो ब्रहवो यदेव परमपुरुषार्थो येषां तथाभूताः सन्तो ग्रामात् अन्यसर्वारोचकतया जनस्थानमात्रं त्यक्त्वा वनं जनमात्रशून्यं प्रदेशं भाग्यवशाद्द्वादशवनात्मकं श्रीमथुरामण्डलं वा ययुस्तत्र गत्वा नित्यमेवावसन् । श्रीमन्मथुरामण्डलस्यैव परमसाधनसाध्यरूपत्वात् । तथाह्यादिवाराहे—"न पापेभ्यो भयं यत्र न भयं यत्र वै यमात् । न गर्भवासभीर्यत्र तत्क्षेत्रं को न संश्रयेत् ॥ मथुरां च परित्यज्य योऽन्यत्र कुरुते रतिम् । मूढो भ्रमति संसारे मम मायाविमोहितः ॥" इति । किञ्च स्कान्दे—"तन्मण्डलं माथुरं हि विष्णोश्चक्रोपरि स्थितम् । पद्माकारं सदा तत्र वर्तते शाश्वतं नृप ॥" इति । किञ्च वाराहे—"लाभानां मथुरालाभो ज्ञानानां ज्ञानमुत्तमम् । प्रीतीनां परमा प्रीतिर्गतीनां गतिरुत्तमा ॥" इति । अत एवोक्तं पाद्मे पातालखण्डे—"अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी" इत्यादि ॥ ९० ॥ इति श्रीमद्भागवते दशमस्कन्धोत्तरार्धे विश्वनाथीटीकायां नवतितमोऽध्यायः ॥ ९० ॥ समाप्तश्चाऽयं दशमस्कन्धः ॥ १० ॥

अथास्य श्रवणमाहात्म्यं पाद्मे—॥ " हरिरुवाच ॥ शृणु ब्रह्मन्ममांगेषु दशमो ब्रह्मरन्ध्रकम् । तं श्रुत्वा च महापापान्मुच्यते नात्र संशयः ॥ १ ॥ चमत्कारपुरे विप्रो वामनाख्योऽभवत्पुरा । पठनार्थं स काश्यां हि जगाम बलवत्तरः ॥ २ ॥ श्रीकण्ठकाद्द्विजात्तत्र पपाठ निगमं द्विजः । गुरुपत्नीं रूपवतीं दृष्ट्वा रन्तुमियेष सः ॥ ३ ॥ बहुशः प्रार्थयामास रत्यर्थं कामपीडितः । तदप्रीतिं विचार्याशु मनसा चिन्तयंश्च सः ॥ ४ ॥ इत्थं पापं चकारासौ तच्छृणुष्व महामते । हत्वास्याः स्वामिनं पश्चादेषा यन्धुमिहार्हति ॥ ५ ॥ एकदा गुरुणा सार्द्धं गतो देशान्तरं द्विजः । मार्गे गुरुं नाशयित्वा पाशास्त्रादिभिरेव सः ॥ ६ ॥ गुरुगेहे रुरोदोच्चैर्हा गुरो क्व गतो भवान् । सा पप्रच्छ तदा शिष्यं कथं रोदिषि पुत्रक ॥ ७ ॥ प्रोवाच शृणु देवि त्वं सर्पदष्टो मृतो गुरुः । तद्दाहादिककर्माणि कृत्वा चात्र समागमम् ॥ ८ ॥ हर्षयुक्तो महापापी गुरुगेहेऽवसत्तदा । मद्यं पीत्वैकदा रात्रौ हेतुं स्मृत्वा गुरोर्वधे ॥ ९ ॥ सुरतं कृतवान्पापो हठाद्गृह्य गुरुस्त्रियम् । सुरतान्ते रुदित्वोच्चैर्नष्टसंज्ञा व्यजायत ॥ १० ॥ गृहीत्वा गेहगं द्रव्यं प्रदुद्राव स वामनः । चतुष्टयं पातकानां कृत्वा स्वगृहमाविशत् ॥ ११ ॥ स्वविवाहं चकाराशु वामनोऽथ प्रजाशया । पत्नीं प्राप्य वरारोहां नाम्ना राजीं खलस्तदा ॥ १२ ॥ तस्यामुत्पादयामास कन्यां कमललोचनाम् । षोडशाब्दा यदा कन्या तदा पत्नी मृता शुभा ॥ १३ ॥ स मद्यपो महापापी सुतया रतिमाचरत् । तदा ज्ञातं ज्ञातिजनैस्ततो निष्कासितः कुलात् ॥ १४ ॥ यदा सुता मृता तस्य तदा स वनमध्यगात् । हत्वा पक्षिगणांस्तत्र

१ चित्रं न चैतदुरुगायविचित्रलीलाविध्वस्तकल्मषकदम्बकमुक्तिरूपम् । स्त्रीणां सुदुस्त्यजकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥ १ ॥

कालक्षेपं चकार ह ॥ १५ ॥ कदाचिद्गोमतीतीरे स ययौ हिंसनाशया । तत्र शाशं[1] भक्षितवान्सर्पगर्भसमन्वितम् ॥ १६ ॥ स तेन मूर्छितो भूत्वा पपात दिनविंशतिम् । तत्र गाथा मुनिकृता दशमस्कन्धसम्भवा ॥ १७ ॥ किञ्चित्संज्ञेन तेनाथ श्रुता पञ्चदिनं विधे । ततो मरणकालेऽस्य चागता यमकिङ्कराः ॥ १८ ॥ विष्णुदूतास्तथायाता ब्रुवन्तो मुच्यतामिति । इति श्रुत्वा वचो याम्याः प्रत्यूचुर्वैष्णवान्प्रति ॥ १९ ॥ कथं समागता यूयं पापोऽयं खलु सर्वथा । अहो मूढतमा यूयं विष्णुना प्रेषिता वयम् ॥ २० ॥ दशमश्रुतिमात्रेण सन्तुष्टोऽस्य जनार्दनः । इत्युक्त्वा वैष्णवास्तं हि विमाने स्थाप्य वामनम् ॥ २१ ॥ वैकुण्ठमनयल्लोकं सुरेडंयं[2] ब्राह्मणाधमम् । सुरापं गुरुहन्तारं सुवर्णस्तेयकारिणम् ॥ २२ ॥ पुत्रीरतं गुरुस्त्रीषु संसक्तं सर्वगर्हितम् । निवृत्त्य यमदूतास्ते यमराज्ञे न्यवेदयन् ॥ २३ ॥ श्रुत्वा यमः प्रत्युवाच स्वदूताञ्छृणु तद्विधे । दशमाक्षराकर्णनेन मुक्तः स्यात्पापकोटिभिः । किं श्रुतं निखिलं येन कृष्णरूपमिदं यतः ॥ २४ ॥ इति दशमस्कन्धश्रवणमाहात्म्यं समाप्तम् ॥

---

१ मांसम्। २ लोकविशेषणम्।

---


**इदं पुस्तकं खेमराज श्रीकृष्णदासश्रेष्ठिना मुंबय्यां स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालये मुद्रयित्वा प्रकाशितम्।**

शके १८३० संवत् १९६५.

इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया चोपेते श्रीमद्भागवते दशमस्कन्धोत्तरार्द्धं समाप्तम् ॥

॥ अथ श्रीधरीयटीकया संदर्भ-विश्वनाथी-दीपिकादीपनादि-पर्यायोपेतवंशीधरीयतद्भावार्थ
दीपिकाप्रकाशटीकया चोपेते श्रीमद्भागवत एकादशस्कन्धप्रारंभः ॥

## एकादशस्कंधः


नारदः
वसुदेवः
जनकः
नवयोगिनः
उद्धवः
श्रीकृष्णः
यदुः
अवधूतदत्तः
ऐलः
उर्वशी
कदर्यः
जनाः
कदर्यः
सनकादयः
ब्रह्मा

ॐ नमो भगवते वासुदेवाय ॥ श्रीबादरायणिरुवाच ॥ कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ॥ भुवोऽवतारयद्भारं जविष्ठं जनयन्कलिम् ॥ १ ॥

॥ श्रीगणेशाय नमः ॥ श्रीकृष्णाय नमः ॥ ॥ ॐनमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनमानसनिवासाय श्रीरामचंद्राय ॥ विजयंते परानंदकृष्णपादरजःस्रजः ॥ या धृता मूर्ध्नि जायंते महेंद्रादिमहःस्रजः ॥ १ ॥ उक्तैकत्रिंशताऽध्यायैर्मुक्तिरेकादशे ततः ॥ जायंतेयेतिहासाद्यैः समासव्यासरूपतः ॥ २ ॥ नारदो वसुदेवाय समासेन न्यवर्णयत् ॥ भगवानुद्धवायाथ विस्तरेणोपपत्तिभिः ॥ ३ ॥ तत्र तु प्रथमेऽध्याये यदुवंशस्य संक्षयः ॥ उपक्षिप्तो विरागाय मौसलव्यपदेशतः ॥ ४ ॥ प्रवृत्तितः परानंदकृष्णक्रीडाऽनुवर्णिता ॥ तन्निवृत्त्या परानंदपदारोहोऽनुवर्ण्यते ॥ ५ ॥ एवं तावद्दशमस्कंधे भूभारावतारणाय निजविभूतिविभूषितयदुवंशस्य यदुवंशावतारितसकलसुरांशस्य भगवतः श्रीकृष्णस्य तदुचितप्रवृत्तिविडंबनेन तच्छ्रवणस्मरणादिपराणां परेषामानंदकारणं क्रीडा निरूपिता । अथेदानीमपरिमितयोगमायावैभवस्य भक्तानामात्मतत्त्वोपदेशपूर्वकं क्रीडार्थं भूतलेऽवतारितानां चाधिकारिणां सुरांशानां मौसलापदेशेन तत्तदधिकारपदप्रापणपूर्वकं च ब्रह्माद्यनुग्रहाय निजपदारोहो निरूप्यते । तत्र कुरुक्षेत्रयात्रायामविरक्तस्य वसुदेवस्य "कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम्" इत्येवं कर्मयोगं पृष्टवता नारदादिभिः कर्मयोगो निरूपितः । "कर्मणा कर्मनिर्हार एष साधु निरूपितः ॥ यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः" इत्यादिना । तेन च विशुद्धसत्त्वस्य श्रीकृष्णरामौ परमेश्वरत्वेन ज्ञातवतः षड्गर्भानयनाध्याये श्रीकृष्णेनात्मतत्त्वमुपदिष्टम् । "वचो वः समवेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः" इत्यादिना । तच्च विषयभोगातिशयेन पुनस्तिरोहितमिवासीत्तदेवेदानीं नारदमुखेन प्रथमं पंचाध्याय्या निरूप्यते । तत्र प्रथमेऽध्याये वैराग्योत्पादनायं यदुकुलस्य ब्रह्मशापापदेशेनात्युन्नतविषयसुखानामप्यनित्यता प्रतिपाद्यते । ततश्चतुर्भिर्निमिजायंतेयसंवादेन सपरिकरं परमतत्त्वनिरूपणम् । ततः षष्ठे भगवदुद्धवसंवादप्रस्तावः । ततस्त्रयोविंशत्या उद्धवं प्रति भगवतस्तत्त्वनिरूपणम् । ततो द्वाभ्यां मौसलक्रीडेत्येवमेकत्रिंशताऽध्यायैरेकादशस्कंधस्य प्रवृत्तिः । तस्य च यथामति व्याख्यानमारभ्यते । तत्र मौसलप्रसंगार्थं पूर्वस्कंधार्थमनुवदति श्लोकद्वयेन । कृत्वेति ।

ॐ स्वस्ति श्रीगणेशाय नमः ॥ श्रीकृष्णं राधिकानाथं गोपगोपीनिषेवितम् ॥ नत्वैकादशभावार्थदीपिकोद्योतिनीं ब्रुवे ॥ १ ॥ ॐ नमः श्रीपरमहंसेति पूर्वं व्याख्यातमेव ॥ परानन्दकृष्णपादयोर्या रजसां स्रजः पंक्तयः विजयन्ते सर्वोत्कर्षेण वर्तंते महेन्द्रादीनां महसस्तेजसः सृजंतीति स्रजो रचनाकर्त्र्यः । 'सृज—विसर्गे' क्विपि निपातनाद्गुणादेशेऽरोरादेशे स्रागिति रूपम् । यद्वा—या मूर्ध्नि स्रजो मालारूपा जायन्ते किंभूताः महेन्द्रादिभिर्महान्ते पूज्यंत इति महेंद्रादिमहः श्रीकृष्णांघ्रिरजोधारिणमिंद्रादयोऽप्यर्चन्तीति भावः ( १ ) । जयंत्या ऋषभदेवाय दत्ताया इन्द्रकन्याया अपत्यानि 'कविर्हरिरन्तरिक्षः' इत्यादिना वक्ष्यमाणानि तेषामितिहास आद्यो येषामितिहासानां तैस्तथा । समासः संक्षेपो व्यासो विस्तारः ( २ ) । अथ वसुदेवनारदसंवादानन्तरम् । उपपत्तिभिर्नानाप्रमाणैः "युक्तौ विश्वासदार्ढ्ये च प्रमाणेष्युपपादनम्" इति निरुक्तिः । उपपादनमुपपत्तिरित्येकार्थतैव ( ३ ) । तत्रैकत्रिंशदध्यायेषु मध्ये उपक्षिप्त उपन्यस्तः । अपदेशतः छद्मना ( ४ ) । प्रवृत्तितः प्रवृत्त्या प्रवृत्तिरूपा तृतीयार्थे । प्रथमार्थे वा तसिः । परानंदश्चासौ कृष्णस्तस्य क्रीडा । यद्वा—पर आनन्दः परेषां ब्रह्मादीनां

वाऽऽनन्दो यस्यां क्रीडायां सा परानंदा सा चासौ कृष्णक्रीडेति तथा । तन्निवृत्त्या प्रवृत्तिरूपक्रीडानिवृत्त्या (९)। एवं पूर्वोक्तरीत्या तावन्निश्चयेन निजविभूतिभिरपरिहार्यसंपद्भिर्विभूषितो यदुवंशो येन सः तस्य ।
यदुवंशेऽवतारिताः सकलसुराणामंशा येन स तथा तस्य श्रीकृष्णस्य । तदुचितप्रवृत्तिविडम्बनेन क्षत्रकुलोचितमार्गानुगमनेन । तच्छ्रवणस्मरणादिपराणां तस्याः प्रवृत्तिक्रीडायाः श्रवणादिपराणाम् । आदिना कीर्तनादि
ग्रहः । अथ प्रवृत्तिक्रीडानिरूपणोत्तरम् । तत्तदधिकारपदप्रापणपूर्वकम् यतो यः समागतस्तस्य तत्रैव प्राप्तिपुरःसरं तत्र निजपदारोहप्रसंगे तेन च कर्मयोगेन विशुद्धान्तःकरणस्य तच्च कृष्णोपदिष्टात्मतत्त्वं तदेव विषय
भोगतिरोहितात्मतत्त्वमेव । तत्र पञ्चाध्याय्याम् । ततस्तदनंतरम् । सपरिकरं ससाधनम् । ततस्तदनु । प्रस्तावः प्रसंगः । ततः षष्ठाध्यायोत्तरं त्रयोविंशत्या सप्तमत एकोनत्रिंशांतैरध्यायैः :तत्त्वनिरूपणम् स्वरूप
निरूपणम् । द्वाभ्यां त्रिंशैकत्रिंशाभ्याम् । तस्य चैकादशस्कंधस्य । तत्रादौ । सरामो बलेन सहितः । इत्यर्थ इति—वेगवति कलहे हिंसाया अवश्यंभावित्वादिति भावः ॥ * ॥ ॐ गणपतये नमः ॥ अथैकादशस
दर्भे संदर्भाणां समाहृतिः । क्रियते यन्निदेशेन स मेऽनन्यगतेर्गतिः (१)। अथैकादशस्कन्धस्य संदर्भः । तत्र प्रथमतस्तावदिदं विवेचनीयम् । पूर्वं श्रीमति दशमस्कन्धे श्रीकृष्णलीला वर्णिता तस्याश्च फलं साधार
णानामपि तद्भक्तिलाभपूर्विका तत्प्राप्तिरेवेत्यन्ते निर्दिष्टम् । "इत्थं परस्य निजधर्मरिरक्षयात्तलीलातनोस्तदनुरूपविडंबनानि । कर्माणि कर्मकषणानि यदूत्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ मर्त्यस्तया" इत्यारभ्य
'यदर्थाः' इत्यंतद्वयेन । तच्च तत्पदं भुवि प्रकाशमानानां द्वारकादीनां लौकिकत्वानुकरणेनान्यथा प्रतीतानामपि नित्यसिद्धालौकिकप्रकाशविशेष एव । यथास्य स्कंधस्यैवांते वक्ष्यते—'द्वारकां हरिणा त्यक्ताम्' इत्यादिद्वयेन ।
अतोऽत्र स्कंधे तज्ज्ञापनार्थं सपरिकरस्य भगवतस्तत्र प्रवेशो वर्ण्यते मौसलादिकं त्वनुकरणमेव । यथैव दर्शितं श्रीकृष्णसंदर्भे प्रथमतृतीयक्रमसंदर्भयोश्च । यच्चात्र श्रीवसुदेवनारदसंवादेन तत्त्वं निरूपयिष्यते तत्खलु तद्द्वारा
बहिर्मुखानामन्यावेशत्याजनेन तल्लीलाप्रवेशनार्थमेव । श्रीवसुदेवोद्धवादौ च तन्मतादरार्थं तत्रोपलक्षणावेव कृतौ न तूद्देश्यौ "शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः ॥" इत्यादि
सामान्यतः "वसुदेवं हरेः स्थानं वदंत्यानकदुंदुभिम्" इति "नोद्धवोण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्स तु तिष्ठतु ॥" इति विशेषतस्तत्तन्माहात्म्यात् ।
अतस्तादृशां तत्तत्पृच्छा तु लीलामात्रमन्येषामुपकाराय कल्पते यथैव भगवत इति तदेव तद्दर्शयितुमुपक्रमते—कृत्वेति ॥ * ॥ **विश्वनाथस्तु**—श्रीश्रीकृष्णचैतन्यचन्द्राय नमः । गोव
र्धनधराधारं श्रीमद्गोवर्धनप्रभुम् । गोवर्धनधराधारं श्रीगोवर्धनमाश्रये ॥ तदीयप्रियदासाय मां मदीयमहं ददे । एकेन मौसलारंभो जायंतेयकथा ततः ॥ चतुर्भिः स्तुतिरेकेन ब्रह्मेशादिदिवौकसाम् ।
श्रीकृष्णोद्धवसंवादो विंशत्या त्रियुजा ततः ॥ एकेन कुलसंहार एकेनांतर्द्धिरीशितुः । एवमेकोत्तरत्रिंशदध्यायैस्तत्त्वबोधकैः ॥ मुक्तिरेकादशस्कन्धे कीर्तिता पूर्वलक्षिता । तदेवं दशमस्कन्धे दशमाश्रयतत्त्वं विचित्र
चारित्रामृतवितरणविस्मापितप्रीणितस्वभक्तसुमनसं स्वयं भगवन्तं श्रीकृष्णं निरूप्य तच्चरणपरिचरणाश्रितां मुक्तिमेकादशेऽत्र स्कन्धे निरूपयन् किंचिदवशिष्टं तच्चरितं वक्तुं पूर्वोक्तानुवादेनोपक्रमते—कृत्वेति ॥ तैर्व्या
ख्यातम् ॥*॥ अत्र **दीपिकादीपनमपि**—अथ भगवद्वाक्यत्वेन परमप्रामाण्यापन्नमेकादशस्कन्धं व्याकुर्वच्छ्रीधरयतींद्र उपास्यचरं श्रीरघुनाथं प्रणतिरूपं मंगलं प्रत्यूहनिकरनिर्मूलकं निबध्नाति—नम इति ॥ श्रिया परमप्रेमसंपत्त्या
युक्ता ये भागवतपरमहंसास्तैरास्वादितश्चरणकमलयोश्चिद्रूपो मकरंदो यस्य तस्मै । चिदत्रानंदाऽपरपर्यायमनुकूलज्ञानमेव । भक्तजनानां मानसमेव निवासो गृहं यस्य तस्मै श्रीरामचंद्राय नमः ॥ अथ श्रीभागवते परम
प्रतिपाद्यश्रीकृष्णपादरजःसौभाग्यं वर्णयति—विजयंत इति ॥ "सच्चिदानंदरूपाय कृष्णाय" इति श्रुतेः । परानंदविग्रहरूपो यः श्रीकृष्णस्तस्य पादरजसां संबंधिन्यो याः स्रजो मालाः श्रेण्यो वा ता विजयंते
सर्वोत्कर्षेण वर्तन्ते । कीदृशः यास्तादृशास्स्रजो महेंद्रादिभिर्मूर्ध्नि धृताः सत्यस्तेषां महेंद्रादीनां महसामुत्सवानां स्रजः समूहा जायन्ते तेभ्यस्तत्तत्पादोत्सवान्ददतीत्यर्थः । 'मह उद्धव उत्सवः' इत्यमरः । "सर्वेऽ
संताश्च ये शब्दास्तेःदंता अपि संति हि" इति द्विरूपकोशाददंतोपि महशब्दो ज्ञेयः । पक्षे परानंदनामा स्वगुरुरेव कृष्णस्तस्य । अन्यत्सर्वं पूर्ववत् (१) । अथैकादशार्थं सामस्त्येनाह—उक्तेति ॥ ततः प्रायिकक्रममनु
सृत्य दशमे दृष्टे भूभृन्निरोधवर्णनानंतरमेकादश एकत्रिंशताध्यायैः श्रीशुकेन मुक्तिः संक्षेपविस्ताररूपेणोक्ता । जायंतेया जयंतींद्रात्मजा पुत्रा नवयोगेश्वराः कव्यादयस्तेषामितिहासः पुरावृत्तमाद्यो येषां

१ इतोऽग्रे यावदेकादशस्कंधं प्रतिपद्य (*) मेतच्चिह्नतोऽग्रे संदर्भ-विश्वनाथ-दीपिकादिसम्मतव्याख्यानं बोध्यम् ।

ये कोपिताः सुबहु पांडुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥ कृत्वा निमित्तमितरेतरतः समेतान्हत्वा नृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥
भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिंतयदप्रमेयः ॥ मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद्यादवं कुलमहो ह्यविषह्यमास्ते ॥ ३ ॥

अवतारयदवातारयदित्यडागमो द्रष्टव्यः । जविष्ठं वेगवत्तरमंतिशीघ्रम् । हिंसापर्यवसायिनमित्यर्थः । कलिं कलहम् ॥ १ ॥ एतद्विवृणोति । ये कोपिता इति । सपत्नैर्दुर्योधनादिभिः कोपिताः कोपं कारिताः । सुबहु यथा भवति तथा । बहुवारानित्यर्थः । तदेवाह । दुर्द्यूतहेलनकचग्रहणादिभिरिति । दुर्द्यूतं कपटद्यूतम् । हेलनमवज्ञा । कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणम् । एतान्यादिर्येषां गरदानजतुगृहदाहादीनां तैः कृत्वा ये कोपितास्तान्पांडुसुतान्निमित्तं कृत्वा इतरेतरत उभयोः पक्षयोः समेतान्मिलितान्नृपान्हत्वा क्षितेर्भारं निरहरज्जहार । यद्वा ये कोपिता यैश्च कोपितास्तानितरेतरतः परस्परं निमित्तं कृत्वेत्यन्वयः । ये तावत्प्रकटदैत्याः पूतनादयस्तान्स्वयमेव हतवान् । ये तु प्रलंबादयस्तान्बलेन घातितवान् । ये तु दैत्या बांधवच्छद्मना स्थितास्तान्परस्परं निमित्तं विधाय हत्वा भूभारमपाकृतवानित्यर्थः ॥ २ ॥ अपिच भूभारेत्यादि । अन्याश्च भुवो भारभूता राजपृतना राज्ञां पृतनाः सेनाः राज्ञस्तेषां पृतनाश्चेति वा । स्वबाहुभिर्गुप्तैः परिरक्षितैर्यदुभिर्विवाहादिच्छलेन निरस्य हत्वा । बाहुभिरिति बहुवचनं वस्तुतश्चतुर्भुजाभिप्रायेण । नन्वेवं कृष्णश्चिकीर्षतीति ज्ञात्वा कथं तस्मै यादवा न द्रुह्यंति स्म तत्राह । अप्रमेयः प्रमातुमशक्यः । चिंतामाह । मन्य इति । नन्विति वितर्के । अवनेर्भूमेर्भारो यद्यपि लोकप्रतीत्या गतस्तथाऽप्यहमगतमेव मन्ये । हि निश्चितम् । यद्यस्मादविषह्यं सोढुमशक्यम् । यादवं कुलमित्यनेनैव स्ववंशत्वात्स्वयं हनन

तैरितिहासैः ( २ ) । संग्रहवाक्यमुक्त्वा विवृत्तिवाक्यमाह—नारदः संक्षेपेण मुक्तिं न्यवर्णयत् । तदनु उपपत्तिभिर्युक्तिभिः ( ३ ) । उपक्षितो वर्णयितुमारब्धः विरागाय विरागं जनयितुम् ( ४ ) । प्रवृत्तिमार्गानुकारिणी लीला इदानीमेकादशस्कन्धे “कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः” इत्युक्तेस्तस्याः प्रवृत्तेः सकाशान्निवृत्त्या परानन्दपरे द्वारकायामप्रकटप्रकाशे कृष्णस्यारोहो निरूप्यते श्रीशुकेनेति शेषः ( ५ ) । इत्थं श्लोकैरुक्त्वा प्रवक्तेनापि तमेवार्थमाह—एवमिति ॥ निजविभूतिभिरैश्वर्यादिभिर्विभूषितोऽलंकृतो यदुवंशो येन तस्य । तत्र हेतुः—यदुवंशेऽवतारिताः सकलसुरांशा येन तस्य । एतेन सुरांशेभ्यो यदुवंशस्य पृथक्त्वमुक्तम् । तदुक्तं पाद्मे कृष्णेन सत्यभामां प्रति—“एते हि यादवाः सर्वे मद्गुणा एव भामिनि । मत्तुल्यगुणशीलाश्च मत्तुल्याचारवादिनः ॥” इति । तदुचितप्रवृत्तिविडंबनेन यदुवंशोचितप्रवृत्त्यनुकरणेन तस्याः क्रीडायाः श्रवणादिपराणां श्रीकृष्णस्य तदुचितप्रवृत्तिविडम्बनेन परेषां ब्रह्मादीनामानंदकारणं क्रीडा दशमस्कन्धे श्रीशुकेन निरूपितेत्यन्वयः । तदुक्तं “प्रपञ्चं निष्प्रपञ्चोऽपि विडंबयसि भूतले । प्रपन्नजनतानंदसंदोहं प्रथितुं प्रभो ॥” इति । उपरमितमंतर्धापितं योगमायाया अचिंत्यशक्तेर्वैभवं येन तस्य । निजपुरे द्वारकाख्याप्रकटप्रकाशे । आरोह आरोहणम् । प्रवृत्तिः प्रचारः ॥ १ ॥ एतद्भूभारहरणम् । इत्यर्थ इति—सुबह्वित्यत्र सुशब्देनावृत्तिरुक्तेति ज्ञेयम् । तदेव सुबहुत्वमेव । पांडुसुतान्युधिष्ठिरादीन् । उभयोः पक्षयोर्युधिष्ठिरदुर्योधनपक्षयोः । निरहरत् अपाकार्षीत् । पूर्वव्याख्याने उभयोस्तुल्यनिमित्तत्वे सत्यप्येकस्योपादानादस्वारस्यमत आह—यद्वेति । बांधवच्छद्मना स्थिताः शिशुपालादयः । इत्यर्थ इति—कपटान्कपटैरितरानितरथा यथाकथंचिद्धत्वा स्वावतारकृत्यं संपादयामासेति भावः ॥ * ॥ **संदर्भः**—निरहरत् प्रायः स्वकृतभारांते निःशेषेणाहरदित्यर्थः । तदेव टीकायाः प्रथमपक्षस्य संगतिः स्यात् । द्वितीयपक्षे तस्यां प्रायिकत्वं ज्ञेयं शिशुपालादौ व्यभिचारात् । तच्चिंतनप्रयान्यैरज्ञातत्वादप्रमेय इति **विश्वनाथः** ॥ २ ॥ न केवलमेतावदेव कृतवान्किंत्वन्यदपीत्याह—अपि चेति ।

नैवान्यतः परिभवोऽस्य भवेत्कथंचिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ॥ अंतःकलिं यदुकुलस्य विधाय वेणुस्तंबस्य वह्निमिव शांतिमुपैमि धाम ॥ ४ ॥ एवं व्यवसितो राजन्सत्यसंकल्प ईश्वरः ॥ शापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ॥ ५ ॥ स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ॥ गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥ ६ ॥

मनुचितमिति सूचितम् ॥ ३ ॥ तर्हीदमप्यन्यैर्घात्यतां तत्राह । नैवेति । अन्यतो देवादिभ्योऽपि यादवकुलस्य परिभवस्तिरस्कारो न भवेत् । कुतः । मत्संश्रयस्य मां संश्रयत इति मत्संश्रयं कुलं तस्य । किंच नित्यं विभवोन्नहनस्य विभवैर्गजतुरगादिभिरुच्छृंखलस्य । यद्वा । तर्हीदं किमिति संहर्तव्यं तत्राह । विभवोन्नहनस्येति । तस्मादेवं करिष्यामीत्याह । अंतःकलिमिति । शांतिमुपशममुपैमि । वर्तमानसामीप्ये वर्तमानवद्वा । उपैष्यामि । तदनंतरं धाम च वैकुंठाख्यमुपैष्यामीत्यर्थः ॥ ४ ॥ व्यवसितः कृतनिश्चयः । संजह्रे उपसंहृतवान् ॥ ५ ॥ तदेवमवतारप्रयोजनं सर्वं संपाद्य स्वं लोकं जगामेत्याह श्लोकद्वयेन । स्वमूर्त्येति । लोकानां लावण्यस्य निर्मुक्तिस्त्यागो यया यामपेक्ष्य लोकेषु लावण्यं नास्तीत्यर्थः । यद्वा लोकेभ्यो लावण्यस्य निर्मुक्तिर्दानं यतः । यत्संपर्केण लोका लावण्यवंतो भवंतीत्यर्थः । तया स्वमूर्त्या नृणां लोचनमाच्छिद्याकृष्य ततोऽन्यस्यावलोकने लोचनस्याप्रवृत्तेः । तथा स्वगीर्भिस्ता गिरः स्मरतां चित्तं चाच्छिद्य । तथा पदैस्तत्रतत्रांकितैस्तानि पदानीक्षतामीक्षमाणानामन्यतो गमनादिकाः क्रियाश्चा

न केवलं राजपुत्रनैव भूभारः किंतु तेऽपीत्याह—राज्ञस्तेषां पृतनाश्चेति वेति । अत्राक्षिपति—नन्विति । तस्मै कृष्णाय । प्रमातुं ज्ञातुम् ॥ * ॥ संदर्भः—भूभारेति । यादवानां नित्यपरिकरत्वात्तत्त्यागेन स्वयं भगवत एवांतर्धाने सति तद्वियोगक्षुभितैरुन्मत्तचेष्टैरुपमर्दिता पृथिव्येव नश्येदिति प्रथमं तेषामंतर्द्धापनं तदेवाह—स्वबाहुभिरिति । बहुत्वं तत्र चतुर्भुजत्वप्रकाशनाभिप्रायेण । नैतावानेव तस्याभिप्रायः किंत्वन्योपि भवेदिति भावः । अत्र तेषामधार्मिकतया तु पृथिवीभारत्वं न मंतव्यं 'ब्रह्मण्यानां वदान्यानाम्' इत्याद्युक्तेः । "शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः ॥" इत्युक्तेस्तेषां परमैकांतिकत्वप्रसिद्धेः पृथ्व्या भारश्च व्यक्तिबाहुल्यमात्रेणापि नेष्टः ससमुद्रपर्वतानंत्यसत्त्वेनापि भारत्वाप्रसिद्धेः । अतोन्तर्धापनोक्तिरेव भारत्वारोपणे हेतुः ॥ ३ ॥ अत्राक्षिपति—तर्हीति । इदं यादवकुलम् हेत्वाक्षेपे हेतुगर्भविशेषणमाह—मत्संश्रयस्येति । न केवलमेतावदेव किंत्वन्यदपीत्याह—किं चेति । ननु स्वकुलहननसंकल्पोप्ययुक्तः कुतस्तद्धननमिति चेदत्राह—यद्वेति । उच्छृंखलानां नाश एवोचित इति भावः । वेणुस्तंबस्यान्तःकलिर्मिथःसंघर्षणलक्षणस्तस्माज्जातं वह्निमिव 'शांती प्रशममंगले' इति यादवः । यद्वा—शांतिं धाम मंगलं धामेति उपैमि बहिर्लीलासंकोचेन नित्यलीलामुपैमि । इत्यर्थ इति—अतीवोच्छृंखलं यदुकुलमिहावशेषयित्वा ममांतर्धानं नोचितमिति भावः ॥ * ॥ नैवेति । अन्यतः परिभवोऽपि न भवेत् । किंतु स्वेभ्य एव नाशस्तु स्वतोपि न संभवेदित्यर्थः । तत्र हेतुः—नित्यं मत्संश्रयस्यैव स्वतो विभवोन्नहनस्य निरवधिवैभवस्य अतः परिभवोत्र भुवि प्रकाशाद्विमुखीकरणम् । धाम निजनित्यद्वारकाख्यम् । दृष्टांतश्च नाशानुकरणनाशयोः साम्यप्रतीतेः तथांतर्नाशानुकरणञ्च न स्यात् । कालांतरे बहिश्च प्राकट्यं भावीत्येतदंशेन चैक्यप्रायत्वाद्घटयामास विवर्तादिभिरपि लोहादिभिरपि लोहादिदृष्टान्तः—परिणामपरिहारायैकदेशेनैव मन्यन्ते परिणामवादिभिरपि मूलानुच्छेदेनैवाति वह्निं मिथःसंघट्टनोत्थापितमग्निम् ॥ ४ ॥ चिंताफलमाह—एवमिति । संजह्रे अंतर्हितवान् ॥ * ॥ विप्राणां शापव्याजेनेति । ब्राह्मणमाहात्म्यदर्शनमप्यत्र प्रयोजनमिति भावः । संजह्रे पूर्वोक्तस्वपदे सामस्त्येन नीतवान् प्रवेशितवानित्यर्थः ॥ ५ ॥ पुनः श्रीकृष्णकृत्यमाह—तदेवमित्यादिना । इत्यर्थ इति—निखिलसौंदर्याधिष्ठानभूतयेति भावः ।

१ यादवानां नित्यपरिकरत्वादित्याद्या प्रथमं तेषामन्तर्धापनमित्यन्ता ।

आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यंजसा नु कौ ॥ तमोऽनया तरिष्यंतीत्यगात्स्वं पदमीश्वरः ॥ ७ ॥ राजोवाच ॥ ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ॥ विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥ ८ ॥

च्छिद्य । तदानींतनानां सर्वेषां चक्षुरादिप्रवृत्तीः स्वैकनिष्ठाः कृत्वेत्यर्थः ॥ ६ ॥ किंच । इत उपरि जनिष्यमाणानां संसारतरणाय कौ पृथिव्यां शोभनाः श्लोकाः सुश्लोकाः कवीनां यस्यां तां स्वकीर्तिं वितत्य विस्तार्यानया कीर्त्या अंजसा सुखेनैव नु निश्चितं तमस्तरिष्यंतीत्यभिप्रेत्येश्वरः स्वं पदं स्थानमगादिति ॥ ७ ॥ तन्वब्रह्मण्ये भ्योऽदातृभ्यो वाऽसेवकेभ्यो वा विप्राः कुप्यंति वृष्णयस्तु न तथेत्याह ब्रह्मण्यानामित्यादिना । किंच कोपे जातेऽपि कृष्णचेतसां कथमभूत्कथं प्रादुरभूदित्यर्थः ॥ ८ ॥

एतेन लोके दृष्टचरस्यापि लावण्यस्योच्छेदप्रतीतेरर्थांतरमाह—यद्वेति । इत्यर्थ इति—परमकारणतया तत्संपर्केणांतर्यामितया वा श्रीकृष्णसंबंधेनैव लोके यदंशांशेन लावण्यमिति भावः । ततः श्रीकृष्णमूर्तेः । इत्यर्थ इति—स्वमूर्तिप्राकट्यसमकालीनसर्वजनेंद्रियवृत्तीः स्वस्मिन्नावेश्यार्थात्स्वसमकालीनजनान्निजपदाधिकारिणो विधायेति भावः ॥ * ॥ तदीदृशं यत्पदं तदेव श्रीदशमोक्तश्रीलीलामहाशक्तिप्राप्तिपूर्वकं फलमित्याह—स्वमूर्त्येति युग्मकेन । त्यागशब्दस्य मुख्यार्थासंभवाद्यपेक्षादिगौरवं मत्वाह—यद्वेति । यत्संपर्केण यन्मूर्त्यवलोकनादिसंबंधेन । तदुक्तम् “ तत्र प्रवयसोऽप्यासन्युवानोतिबलौजसः । पिबंतोक्षैर्मुकुन्दस्य मुखांबुजसुधां मुहुः ॥ ” इति । तमस्तदज्ञानमयं संसारं तरिष्यन्तीति तीर्त्वा तत्पदं प्राप्स्यन्तीत्यर्थः । तदेवं तटस्थानामप्येवमवस्था चेत्तर्हि सुतरां यादवानामभवादिति भूभारेत्यत्र दर्शित एव सिद्धान्तः स्थापितः । गिर इति कर्णेन्द्रियोपलक्षणं वागिंद्रियरहितानां कर्णेन्द्रियाभावदर्शनात् गीर्भिः कर्णेन्द्रियं वागिन्द्रियं चापहृत्येत्यर्थः । ननु कृष्णोऽवतीर्य नृणां चक्षुरादि सर्वस्वं हृत्वा तानंधमूकबधिरोन्मत्तजडानेवाकरोदित्यतः कस्तं दयालुं वदेन्महाचौर एव स इति व्याजस्तुतिः । वस्तुतस्तु दैत्येभ्योऽपि संहृत्य मुक्तिं ददौ तदन्येभ्यस्तु सौंदर्यादिलावण्यसिंधौ निमज्ज्य प्रेमाणमेव ददावित्येतावान् निरुपाधिदयालुर्नास्ति कोपीति भावः ॥ ६ ॥ तरिष्यंतीति । अतः परं जनिष्यमाणा जना अनया तरणसाधनीभूतया कीर्त्या सुखेन तरिष्यन्तीति भविष्यज्जनेष्वप्येतावती दयेति भावः । स्वं पदं स्वीयं व्यवसायमगात् । “ पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु ” इत्यमरः । सपादशतवर्षांते सर्वस्मिन्नेव स्वीयचिकीर्षिते निष्पन्ने सति सांप्रतं प्रापंचिकलोकादृश्यो भविष्यात्मीयुपस्थितो यः स्वव्यवसायस्तं प्रापेत्यर्थः । न तु सर्वांशेनैव स्वीयं पदं प्रसिद्धवैकुंठमगादिति व्याख्येयम् । तस्य द्वारकादिधामत्रये नित्यविहारित्वस्य पूर्वस्कंधान्ते व्याख्यातत्वादेतत्स्कंधान्ते च श्रुत्यादिप्रमाणतो व्याख्यास्यमानत्वाच्च । तृतीयादावुद्धवोक्तौ च ‘ कृष्णद्युमणिनिम्लोचे ’ इत्यत्र ‘ अजोपि जातो भगवान्यथाग्निः ’ इत्यत्र च द्युमण्यादिदृष्टान्तेन तस्य द्वारकादिस्वधामत्यागाभावस्य दृढीकृतत्वाच्च ॥ * ॥ न केवलं स्वसमकालीनोद्धर्त्तैवापि तु भविष्यतामपीत्याह—किंचेति । स्वं पदं व्यवसितं वा “ पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु ” इत्यमरः । सपादशतवर्षान्ते स तस्मिन्नेव स्वीय चिकीर्षिते निष्पन्ने सति सांप्रतं प्रापंचिकलोकादृश्यो भविष्यामीत्युपस्थितो यः स्वव्यवसायस्तं प्रापेत्यर्थः । “ निर्मुक्तिर्मोचने त्यागे मुक्तौ दानेपि बंधने ” इति निरुक्तिः “ तमो ध्वान्ते च संसारेऽज्ञाने ग्लानौ प्रकीर्तितम् ” इति च । तमोऽज्ञानं संसारं वा ॥ * ॥ ० ॥ ७ ॥ “ ग्रहा गावो नरेंद्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः प्रतिपूज्यन्ते निर्दहंत्यपमानिताः ॥ ” इति स्मृत्युपांभेनाशंकते—नैन्वब्रह्मण्येभ्य इति । न तथा, अब्रह्मण्यादयो नेत्यर्थः । असंभावनयाक्षिपति—किंचेति । इत्यर्थ इति—न हि कृष्णभक्तेषु शापः प्रभवितुमुचितः । “ कृष्णानुकूलेषु

यन्निमित्तः स वै शापो यादृशो द्विजसत्तम ॥ कथमेकात्मनां भेद एतत्सर्वं वदस्व मे ॥ ९ ॥ श्रीशुक उवाच ॥ बिभ्रद्वपुः सकलसुंदरसन्निवेशं कर्मा
ऽऽचरन्भुवि सुमंगलमाप्तकामः ॥ आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥ १० ॥ कर्माणि पुण्यनिवहानि सुमं
गलानि गायज्जगत्कलिमलापहराणि कृत्वा ॥ कालात्मना निवसता यदुदेवगेहे पिंडारकं समगमन्मुनयो निसृष्टाः ॥ ११ ॥

अतः स्पष्टस्य निमित्तस्याभावान्निमित्तांतरं पृच्छति । यन्निमित्त इति । एकात्मनामेकचित्तानां कथं भेदः कलहः ॥९॥ ईश्वरेच्छैवात्र निमित्तमिति परिहरति । बिभ्रदिति । सकलानां सुंदरवस्तूनां सन्निवेशो विन्यासविशेषो यस्मिंस्तद्वपुर्बिभ्रत् । तर्हि किमतिसौंदर्याद्विषयपरः । न । सुमंगलं कर्माचरन् । तत्किं कयाऽपि कामनया । न । आप्तकामः । तर्हि किमिति कर्माचरति । धाम द्वारवत्याख्यं गृहमास्थाय रममाणः । गृहे रममाणान्कर्म ग्राहयितुमित्यर्थः । ननु किमाप्तकामस्य गृहरत्या कर्मभिर्वा तत्राह । उदारकीर्तिः उदारा बहुफलप्रदा कीर्तिर्यस्य सः । कीर्तिवितानार्थमित्यर्थः । एवं परमैश्वर्येण वर्तमान एव कुलं संहर्तुमैच्छत् । तत्कस्य हेतोः । स्थितः कृत्ये भूभारहरणे तावन्मात्रः शेषो यस्य सः ॥ १० ॥ ईश्वरेच्छयोत्थितं ब्रह्मशापनिमित्तं वक्तुमाह । कर्माणीति । कर्मार्थमाहूताः कर्माणि कृत्वा निसृष्टाः प्रस्थापिताः

यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ” इत्युक्तन्यायेनेति भावः ॥ * ॥ **संदर्भः**—अथ यो विप्रशापव्याजः कृतः स एव न संभवति दोषासंभवादित्याह—ब्रह्मण्यानामिति । विप्राणां विदुषां तत्तया श्रीभगवदात्मीयजनपरिभवदोषमपि जानतां तेषां शापः कथमभूदित्यर्थः । तदात्मीयत्वमेवाह—वृष्णीनां कृष्णचेतसामिति । तच्छापाप्रभुत्वेऽपि हेतुरयम् ॥ ८ ॥ स्पष्टं निमित्तं भेदे यतो नास्त्यतो हेतोः । निमित्तां तरं कारणान्तरम् । यन्निमित्तो यत्कारणकः । यादृशो यत्प्रकारकः ॥ * ॥ **विश्वनाथः**—एकात्मनामेकमनसां तेषां भेदः संहारहेतुः कलहः । यद्वा—एकः कृष्ण एवात्मा परमेष्टः परमप्रवर्तकश्च येषाम् ॥ ९ ॥ अत्र भेदे । सुंदरवस्तूनामुपमानविशेषाणां मृगलोचनसिंहस्कंधादीनां विन्यासविशेषो रचनाविशेषो यस्मिंस्तत् । अत्राशंकते—तर्हीति । विषयेषु भोगेषु परस्तत्परः । नेत्याह—तत् सुमंगलकर्माचरणं कामनयाऽभि लाषेण । नेत्याह—आप्तकामस्य किं कर्मभिरित्याशंकते—तर्हीति । इत्यर्थ इति—“ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ” इति न्यायेन लोकशिक्षार्थं तथाचरतीति भावः । पुनस्तथैव शंकते—नन्विति । इत्यर्थ इति— मत्कीर्तिश्रवणादिना लोकं संसारं तारिष्यतीति भावः । तत्कुलसंहरणम् । अत्र हेतुगर्भं विशेषणं स्थितेत्यादि ॥ * ॥ अत्र विप्रशापे ईश्वरस्य कृष्णस्येच्छैव परंपरया निमित्तमिति परिहरति—परीक्षिदाक्षेपं समाधत्ते ॥ * ॥ **विश्वनाथः**—स्वीयान्रूपलीलाविलासान्सर्वोत्कृष्टान्दर्शयित्वा जनान्कृतार्थीकृतवता स्वचिकीर्षितनिष्पत्तिसमाप्तौ तैर्वृष्णिभिः सहांतर्द्धित्सता भगवतैव ब्रह्मशापः स्वेच्छया विप्रद्वारा कल्पित इत्याह— बिभ्रदिति । सन्निवेशो रचनाविशेषः इति रूपमुक्तम् । कर्मेति—लीला चोक्ता । धाम द्वारकादिकमास्थाय तत्र स्थित्वा रममाणः तत्रतत्रत्याभिः प्रियाभिर्विहरन्नित्यद्भुतो विलासश्चोक्तः । आप्तकामः सिद्धस्व चिकीर्षितः । उदारकीर्तिर्जनिष्यमाणलोकेभ्योऽप्युदारा प्रेमभक्तिदायिनी कीर्तिः स्वीयरूपलीलाविलासप्रथामयी यस्य सः । ब्रह्मशापद्वारैव कुलं सहर्तुमैच्छत् । स्थितः कृत्यशेषः किंचिन्मात्रावशिष्टं कृत्यं यस्य सः । तच्च यदुषु प्रवेशितानां देवानां दिवि प्रस्थापनं स्वांशानां वैकुंठश्वेतद्वीपबदर्याश्रमादिषु प्रस्थापनं नित्यपार्षदसहितस्य स्वस्य प्रापंचिकलोकचक्षुर्भ्योन्तर्द्धानञ्चेति त्रयम् ॥ * ॥ **संदर्भः**—बिभ्रत्प्रकटयन् । आप्तकामः तेनतेन निजभक्तजनानामभीष्टदानात्सिद्धमनोरथो जातः तदनंतरं च धाम प्रपञ्चातीतप्रकाशतत्तन्निजधाममैवास्थायाधिष्ठाय रमणहेतोः कुलं संहर्तु तत्रैव सम्यङ्नेतुमैच्छत् । नन्वाप्तकामश्चेत्पुनः किमन्यक्रीडेच्छया तत्राह—स्थितः सर्वदा स्थायीकृत्य शेषः स्वप्रेष्ठजनैस्सह लीलाविशेषो यस्य सः । अवतारगतलीलेच्छैव पूर्णा न तु सर्वेत्यर्थः । अत एवोदारा भक्तसुखदस्वभावमयी कीर्तिर्यस्य सः ॥ १० ॥ प्रश्नं परिहरञ्छापहेतुमाह—

विश्वामित्रोऽसितःकण्वो दुर्वासा भृगुरंगिराः ॥ कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥ १२ ॥ क्रीडंतस्तानुपव्रज्य कुमारा यदुनंदनाः ॥ उपसंगृह्य पप्रच्छुरविनीता विनीतवत् ॥१३॥ ते वेषयित्वा स्त्रीवेषैः सांबं जांबवतीसुतम् ॥ एषा पृच्छति वो विप्रा अंतर्वत्न्यसितेक्षणा ॥ १४ ॥ प्रष्टुं विलज्जती साक्षात्प्रब्रूतामोघदर्शनाः ॥ प्रसोष्यंती पुत्रकामा किंस्वित्संजनयिष्यति ॥ १५ ॥ एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप ॥ जनयिष्यति वो मंदा मुसलं कुलनाशनम् ॥ १६ ॥ तच्छ्रुत्वा तेऽतिसंत्रस्ता विमुच्य सहसोदरम् ॥ सांबस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयम् ॥ १७ ॥

मुनयः पिंडारकं नाम ततो नातिदूरे तीर्थविशेषं समगमन्नित्यन्वयः । पूर्वोक्तामुदारकीर्तितां विवृण्वन्कर्माणि विशिनष्टि पुण्यनिवहानीत्यादीत्रिभिः पदैः । कानिचिदश्वमेधादिकर्माणि पुण्यमेव जनयंति । पुत्रोपलालनादीनि तु तत्काले सुखमेव कुर्वंति । प्रायश्चित्तादीनि तु पापमेव हरंति । एतानि तु सर्वतोमुखानीत्याह । पुण्यनिवहानि कीर्तनादिना पुण्यानि निवहन्ति प्रापयंतीति । तथा सुमंगलान्यतिसुखात्मकानि । गायतो जगतः कलिमलापहराणि कृत्वा । मुनिप्रस्थापने हेतुः । कालात्मना संहारकरूपेण यदुदेवगेहे वसुदेवगृहे निवसता । स्वकुलं संजिहीर्षतेत्यर्थः ॥ ११ ॥ १२ ॥ उपसंगृह्य पादग्रहणं कृत्वा ॥ १३ ॥ प्रश्नप्रकारमाह ते वेषयित्वेति द्वयेन । हे अमोघदर्शना विप्राः । एषा अंतर्वत्नी गर्भिणी वो युष्मान् साक्षात्प्रष्टुं विलज्जती लज्जमानाऽस्मन्मुखेन पृच्छति । प्रसोष्यंती आसन्नप्रसवा । किंस्वित्संजनयिष्यति कन्यां वा पुत्रं वा तत्प्रब्रूत ॥ १४ ॥ १५ ॥ प्रलब्धा वंचिताः ॥ १६ ॥ तस्मिन्नुदरे । अयस्मयं लोहमयम् ॥ १७ ॥

ईश्वरेच्छयेत्यादि । कर्मार्थं किंचिदिष्ट्यादिरूपकर्म करणार्थमाहूताः आह्वानविषयीकृताः कलेर्युगस्य कलहस्य वा मलानां त्रिविधपापानामपहराणि नाशकानि अपवर्गबोधाय शोधकानीत्यर्थः । यदुषु दीव्यति द्योतते कृष्णपितृत्वेनेति यदुदेवो वसुदेवस्तस्य गेहे । यद्वा—यदुदेव उग्रसेनस्तस्य गेहे गेहमिव रक्ष्यमाणे द्वारकानगरे । इत्यर्थ इति—यदुकुलसंहारेतरसर्वावतारकार्यस्य कृतत्वात्कुलसंहारार्थमेव तत्र वास इति भावः । ततो द्वारकातः नातिदूरे समीपे ॥*॥ कालोंतर्यामी आत्मा रूपं यस्येति । सर्वस्य तदिच्छाधीनत्वं दार्शितम् । ततश्च प्रभुः प्रथमं ब्रह्मशापप्रकारं कापट्येन प्रश्नरूपं कर्माणि दर्शनस्पर्शनसंलापादिचारित्राणि तैर्विप्रैः सह कृत्वेति व्याख्येयम्, अन्यथा विशेषणासंगतिः स्यात् । वैदिककर्मभ्यो वैलक्षण्यं द्योतयितुं स्वैरचरित्रात्मकानि कर्माणि विशिनष्टि विशेषणैर्वर्णयति—कालात्मना यादवानामुपसंहारेऽयमेव प्रकार इति कालात्मनेत्युक्तम् ॥ ११ ॥ कांश्चिन्मुनीन्नामतो निर्दिशति—विश्वामित्र इति । आदिना गौतमादिग्रहः ॥*॥०॥१२ ॥ तान्मुनीन् । अविनीता अनम्राः ॥ * ॥ अविनीताः श्रीकृष्णेच्छयैव तदानीमेव तथाभूताः ॥ १३ ॥ ते यदुकुमाराः । असितेक्षणा नीलनेत्रा ॥*॥ स्त्रीवेषैः स्त्र्युचितवस्त्रालंकारतूलपिंडादिभिर्गर्भपौष्ट्यादिभिः सांबस्य वृद्धस्यापि बालानुमतिग्रहणेपि सैव हेतुरिति ज्ञेयम् ॥ १४ ॥ ० ॥ * ॥ ० ॥ १५ ॥ तान्कुमारान् । वो युष्माकम् ॥ * ॥ कुपिता इहापि सैव मुख्य हेतुरन्यथा श्रीकृष्णनंदनादिषु महाभागवतानां तेषां कोपासंभवात् । हे नृपेति—यथा तव परममहाभागवतस्य ब्रह्मण्यस्य शमीकार्षिसमाधिपरीक्षणार्थे तत्कंठे सर्पक्षेपादौ धीराविर्भूता तथा सांबादीनामपि तादृशी धीरिति भावः । प्रलब्धा उपहसिताः ॥ १६ ॥ तत् ऋषिवचः । ते बालाः ॥ * ॥ तत् शापात्मकं वाक्यम् । विमुच्य उच्छूनवस्त्रादिसंघातपृथक्कृत्वा सांबस्य सभारत्वेन संशयवचनत्वादिति भावः । तस्मिन्मुसलभाव

किं कृतं मंदभाग्यैर्नः किं वदिष्यंति नो जनाः ॥ इति विह्वलिता गेहानादाय मुसलं ययुः ॥१८॥ तच्चोपनीय सदसि परिम्लानमुखश्रियः ॥ राज्ञ आवेदयांचक्रुः सर्वयादवसन्निधौ ॥ १९ ॥ श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप ॥ विस्मिता भयसंत्रस्ता बभूवुर्द्वारकौकसः ॥ २० ॥ तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ॥ समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥ २१ ॥ कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ॥ उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः ॥ २२ ॥ मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ॥ तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥२३॥ भगवाञ्ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ॥ कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ २४ ॥ इति श्रीमद्भागवते म० एकादशस्कंधे यदुकुलस्य विप्रशापोनाम प्रथमोऽध्यायः ॥१॥ ॥ श्रीशुक उवाच ॥ गोविंदभुजगुप्तायां द्वारवत्यां कुरूद्वह ॥ अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥१॥

मंदभाग्यैर्नोऽस्माभिः किमेतत्कृतम् । नोऽस्मान् किं वदिष्यंतीति विह्वलिताः संतो मुसलमादाय गेहान्ययुः॥१८॥ राज्ञे उग्रसेनाय न तु श्रीकृष्णाय ॥१९॥२०॥ आहुक उग्रसेनः । सोऽपि श्रीकृष्णमपृष्ट्वैव प्रास्यत् चूर्णं प्रक्षिप्तवान् अस्य मुसलस्य चूर्णीक्रियमाणस्यावशेषितं लोहं च प्रास्यत्॥२१॥तरलैस्तरंगैः ॥२२॥ अन्यैर्मत्स्यैः सह । शल्ये शराग्रे ॥२३॥ ज्ञाताः सर्वेऽर्था येन स ईश्वरोऽपि समर्थोऽपि सन्नन्यथा कर्तुं नैच्छत् किंत्वन्वमोदत । यतः कालरूपी॥२४॥इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये निमिजायंतसंवादेनाह नारदः ॥ धर्मान्भागवतान्भक्त्या वसुदेवाय पृच्छते ॥१ ॥ अभीक्ष्णं प्रस्थापितोऽपि पुनःपुनरवात्सीदित्यर्थः । ननु नारदस्य दक्षादिशापान्नैकत्र वासः संभवतीत्याशंक्याह । गोविंदभुजगुप्तायामिति । न तस्यां शापादेः प्रभाव इत्यर्थः । कृष्णोपासने लालसा औत्कंठ्यं यस्य सः ॥ १ ॥

वत्युदरे शापशक्त्या लोहमयं तत्तदैव जातमिति भावः ॥ १७ ॥ विह्वलिता व्याकुलाः ॥ * ॥ ० ॥ १८ ॥ तन्मुसलम् । न तु श्रीकृष्णाय तत्प्रतीकारसमर्थाय । नैतत्कृष्णाय चाख्येयमिति तेषां मनसि श्रीकृष्णेच्छयैव जातमिति भावः ॥ * ॥ ० ॥ १९ ॥ ०॥ * ॥ ० ॥ २० ॥ तत्सांबोद्भूतम् । सोप्युग्रसेनोपि ॥ * ॥ कृष्णाग्रे कथनात्सांबस्य लज्जाभये मा भूतामित्यतो राजा कृष्णमपृष्ट्वैव तच्चूर्णयित्वाऽब्धौ प्राक्षिपत् अवशेषितं लोहमकिञ्चित्करमिति मत्वा सलिलेऽब्धावेव ॥ २१ ॥ ततस्तस्य समुद्रस्य वेलायां तटे एरका दीर्घसूचिमुखतृणविशेषाः ॥ * ॥ उह्यमानानि तरंगैरितस्ततश्चाल्यमानानि तत एव हेतोः वेलायां तटे लग्नानि एरकाः पटेरेतिख्यातास्तृणविशेषाः ॥ २२ ॥ तस्य मत्स्यस्य । स इति–येन मत्स्यो गृहीतो जरानामकेन स इत्यर्थः । लुब्धको व्याधः ॥ * ॥ २३ ॥ तादित्यव्ययं तामित्यर्थः ॥ * ॥ तत्तम् । अन्वमोदत सुष्ठु जातमित्यंगीचकार । कालरूपी संहारेच्छावत्त्वात् ॥ * ॥ ० ॥ २४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पं० वंशीधरविरचित एकादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ निमेरैक्ष्वाकवस्य जायंतेयानां च संवादेन । भागवतान् भगवत्प्रापकान ( १ ) । अधुनाध्यायचतुष्केण वसुदेवनारदसंवादमिषेण भगवत्तत्त्वं तत्प्राप्तिसाधनं तदधिकारिस्वरूपं च निरूपयति–इत्यर्थ इति–प्रस्थापितोऽपि मुहुर्मुहुरायातीति भावः । अत्राशंकते–नन्विति । इत्यर्थ इति–सर्वेश्वररक्षितद्वारकानगरे शापः प्रवेष्टुं न शक्नोतीति भावः । पुनःपुनरागमने को हेतुरिति चेदाह–कृष्णोपासनेति । कृष्णस्य उप समीपे आसनं स्थितिस्तत्र लालसा यस्येति स तथा ॥ * ॥ संदर्भः–अथ तदानंतर्यप्राप्तं श्रीवसुदेवनारदसंवादं वक्तुं भगवदिच्छया तादृशानर्थसहकारित्वेपि श्रीनारदस्य द्वारकायामेव वास आसीदिति सहेतुकमाह–गोविन्देति । यद्भुजेनात्यंतानर्थ

को नु राजन्निंद्रियवान्मुकुंदचरणांबुजम् ॥ न भजेत्सर्वतो मृत्युरुपास्यममरोत्तमैः ॥ २ ॥ तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ॥ अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥ ३ ॥ वसुदेव उवाच ॥ भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् ॥ कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ ४ ॥ भूतानां देवचरितं दुःखाय च सुखाय च ॥ सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥

यद्भजने मुक्तानामपीदृशमौत्सुक्यं तं को नाम न भजेदित्याह । को न्विति । इंद्रियवानिति । इंद्रियवत्त्वमात्रमेव यत्राधिकारिविशेषणमित्यर्थः । सर्वतः सर्वेष्वपि लोकेषु मृत्युर्यस्य सः ॥ २ ॥ ३ ॥ यथा पित्रोर्यात्रा आगमनमपत्यानां स्वस्तये मंगलाय यथा चोत्तमश्लोकस्य वर्त्मभूतानां महतां यात्रा कृपणानां स्वस्तये तथा हे भगवन् भगवद्रूपस्य भवतो यात्रा सर्वदेहिनां स्वस्तय इति ॥ ४ ॥ देवैरपि महतामुपमानमनुचितमित्याह । भूतानामिति । देवानां चरितमतिवृष्ट्यादिना भूतानां दुःखायापि भवति ।

कारींद्रकृतमहावृष्ट्यादितो व्रजोगोपि तस्य दक्षादिशॉपतः श्रीद्वारकाऽवने कः प्रयास इति गोविंदभुजपदेनासूचि । अभीक्ष्णं श्रीभगवता लोकवृत्तजिज्ञासालीलया मुहुस्तत्रतत्र प्रस्थापितोपि तत्रैवावात्सीत् कृष्णस्योप समीपे आसने स्थितौ लालसा यस्य तादृशः । तद्भुजगुप्तत्वेन स्थानसौख्यमपि दर्शितम् ॥ १ ॥ यस्य हरेर्भजने मुक्तानां जीवन्मुक्तानां नारदादीनाम् । तं हरिम् । इंद्रियत्वं सर्वेंद्रियसामर्थ्यवत्त्वम् । तेन मनुष्य आयातीत्यर्थः । अन्येषां सर्वेंद्रियकौशलहीनत्वात् । यत्र हरिभजने । इत्यर्थ इति—मनुष्यमात्रस्य हरिभजनेऽधिकार इति भावः । यद्वा—यश्च न भजेत्स क इंद्रियवानपि तु न कोपि इंद्रियफलासंपादनात् । ‘ बर्हायिते ते नयने नराणाम् ’ इत्याद्युक्तेः । सर्वतो मृत्युरित्यनेन ‘ यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ’ ‘ मृत्युरस्मादपैति ’ इति पूर्वोक्तं स्मारितम् । अमरोत्तमैर्ब्रह्मादिभिः । एतेन परमेशत्वमुक्तम् ॥ * ॥ अत्र तद्भासे कैमुत्यम्—को न्विति । अन्योऽपि क इंद्रियवानित्यनिन्द्रियवस्तु तरुगुल्मादिष्वपि तद्भजनसौख्यं वर्णितम् । ततः सेंद्रियो वा को न भजेदिति स्वभावत एव तद्योग्यं सर्वेषामित्यर्थः । विचारतः सर्वतो मृत्युरिति । न चैवं साधारणजनानामेव तद्भजनीयत्वमित्यायातम् , अपि तु मुक्तानामपीत्याह—उपास्यमिति । तदेवं विषयिमुमुक्षुमुक्तानामपि तद्भजनीयमितिस्थिते महाभक्तराजः श्रीनारदस्तत्कथं न भजेदिति भावः ॥*॥ **विश्वनाथस्तु—** श्रोत्रादींद्रियवत्त्व एव तद्भजनेधिकार इति भावः । न केवलमीशितव्या जीवा एवं तं भजन्ति किं त्वमरोत्तमै रुद्रादिभिरपि॥*॥ **दीपिका—**इन्द्रियवत्त्वमेवेति वर्णाश्रमाद्यपेक्षापि निरस्ता । अधिकारिविशेषणमिति । यथा—स्वाराज्यकामो राजा राजसूयेन यजेतेत्यत्र स्वाराज्यकामस्य राज्ञः सतो राजसूयेधिकारो नान्यस्य तथेंद्रियवतः सर्वस्यापि तद्भजनेधिकार इत्यर्थः । तदुक्तं पाद्मे माघमाहात्म्ये—“ सर्वेधिकारिणो ह्यत्र हरिभक्तौ यथा नृप ” इति । ‘ सर्वेषां मदुपासनम् ’ इत्यत्रैवोक्तेः ॥ २ ॥ अस्तूक्तं प्रकृते किमायातं तत्राह—तमिति । तं नारदम् । गृहागतत्वेनार्चितमपि प्रश्नांगतया पुनरभिवादनमित्याह—अभिवाद्येति ॥ * ॥ ० ॥ ३ ॥ स्वस्तय इति । अव्ययानां शब्दनिर्देशे विभक्तेर्लुग्नेत्युक्तं शब्दशास्त्रे । उद्गतं तमो यस्मात्स उत्तमो हरिस्तस्य श्लोक इव श्लोको येषां त उत्तमश्लोकाः महान्तस्तेषां वर्त्म येषां ते उत्तमश्लोकवर्त्मानस्तेषां भूतानुकम्पिनां यात्रा कृपणानां गृहव्यापारासक्तानाम् सर्वदेहिनां देहाध्यासवतां स्वस्तये देहाध्यासबाधेन ब्रह्मानंदलाभाय ॥ * ॥ सर्वदेहिनां साधारणानाम् कृपणानां सर्वनिकृष्टानाम् उत्तमश्लोकवर्त्मनां सर्वोत्कृष्टानां भक्तानामपि स्वस्तये । ‘ देवर्षित्वमुपेत्य सः ’ इति भगवदवतारांतर्गणितत्वेन भगवद्रूपत्वम् । यथा पित्रोरागमनं त्रिविधानामपि पुत्राणां स्वस्तये भवति तथा । एतेन श्रीनारदस्य सर्वभूतवात्सल्यमुक्तम् ॥ ४ ॥ उपमानं सादृश्येन वर्णनम् । सुखत्वे हेतुः—अच्युतात्मनामच्युताविष्टचेतसाम् । “ सुखाय लोकस्य चरन्ति नित्यं भूतानि भव्यानि जनार्दनस्य ” इत्युक्तेः । “ नेहाथ वामुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलम् ” इत्युक्तेश्च ॥ * ॥ ० ॥ ५ ॥

भजंति ये यथा देवान्देवा अपि तथैव तान् ॥ छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥६॥ ब्रह्मंस्तथापि पृच्छामो धर्मान्भागवतांस्तव ॥यान्छ्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥ ७ ॥ अहं किल पुरानंतं प्रजार्थो भुवि मुक्तिदम् ॥ अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥ यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ॥ मुच्येमह्यंजसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥ श्रीशुक उवाच ॥ राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ॥ प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

त्वादृशां त्वया सदृशानाम् । अच्युते आत्मा येषां तेषाम् ॥ ५ ॥ किंच सुखं कुर्वतोऽपि देवा भजनानुसारेण कुर्वंति न तथा साधव इत्याह भजंतीति । छायेव यथा पुरुषो यावत्करोति तावदेव तस्य च्छायापि तथा । कर्मसचिवाः कर्मसहाया देवाः ॥ ६ ॥ तदेवं यद्यपि भवत आगमनमात्रेणैव वयं कृतार्थास्तथापि पृच्छामः । तवेति । तव यैर्धर्मैः प्रसन्नो भगवांस्तानित्यर्थः ॥ ७ ॥ ननु त्वत्तोऽपि किमन्यो भगवत्प्रसादपात्रमस्ति तत्राह । अहं किलेति । भुवि प्रजार्थोऽपूजयं पुत्रलाभप्रयोजनः सन् पूजितवान् । किलेति सूतीगृहे भगवदुक्तमनुस्मरति ॥ ८ ॥ अतो यथा मुच्येमहि तथा नोऽस्मान् शाधि शिक्षय । विचित्राणि व्यसनानि यस्मिन्संसारे तस्मात्संसारात् । तथा विश्वतः सर्वतो भयं यस्मिंस्तस्मात् । भवद्भिर्हेतुभूतैः । अंजसाऽनायासेन । अद्धा साक्षात् ॥ ९ ॥ हरेर्गुणैर्वर्णनीयत्वेन प्रस्तुतैर्हरिः संस्मारित इत्यर्थः ॥ १० ॥

अन्यद्विशेषमाह—किं चेति । कर्मसहायाः यादृक्कर्म करोति तादृक्फलं देवा ददति नाधिकमिति । साधवस्तु कर्मानपेक्ष्यैव फलं ददतीति भावः ॥ * ॥ किञ्च—देवाः स्वार्थपरतयैव सुखयंति साधवस्तु न तथेत्याह—भजंतीति । साधवः कर्मणा भगवद्भजनेन सचिवाः सहायकाः संतो दीनेषु प्रत्युत तद्धीनेषु दयालव एव संतीति भावः ॥ ६ ॥ तदेवं तादित्थम् । इत्यर्थ इति—तवेति संबंधे षष्ठी, यैर्धर्मैस्त्वं कृतार्थोऽभूरिति भावः । यद्वा—तव त्वां पृच्छामः । यानित्यनेन यद्धर्मश्रवणमात्रं भयमोचकं किमुत तदनुष्ठानमिति । विश्वतो भयादिति पाठे संसारात् ॥ * ॥ तदेवं साधूनां दीनवत्सलत्वाभिधानप्रकारेण । ननु कृतार्थस्य तव किं सद्धर्मप्रश्नेन तत्राह—मत्प्रसंङ्गेन श्रुत्वा त्वद्दर्शनसंभावनारहितोपि मर्त्योपि किमुताचर्य ॥ ७ ॥ अत्राक्षिपति नारदः—नन्विति । भुवि मुक्तिदं न तु स्वर्गादौ मोक्षो भवतीति सूचनाय । सुवीति । स्वर्गेतु मोक्षसाधनीभूतभगवत्स्मृतेरभाव एव “ न यत्र नारायणपादपंकजस्मृतिः प्रमुष्टातिशयेंद्रियोत्सवात् ” इत्युक्तेः ॥ * ॥ अथ ब्रह्मशापश्रवणेन श्रीकृष्णांतरायभ्रमव्यग्रः स्वप्रयोजनमप्याह—अहमिति द्वाभ्याम् । देवस्य भगवतो मायया कृपया मोहितस्तन्माधुरीवशीभूतो मोक्षायापि नापूजयम् किमुतान्यस्मै किन्तु प्रजार्थे तद्रूपपुत्राप्तय एव ॥ ८ ॥ नन्वपुत्रस्य गतिर्नास्तीत्युक्तेः पुत्रस्यापि गतिहेतुत्वश्रुतेः कथं प्रजार्थ इति मन्निन्दा ध्वन्यत इति चेदाह—यथेति । विचित्राणि विविधानि व्यसनानि देहेंद्रियस्त्रीपुत्रादिष्वासक्तिलक्षणानि यस्मिंस्तस्मात् । पुत्रादेः स्वर्गादिरूपगतिहेतुत्वेऽपि नात्मसाक्षात्कारलक्षणमुक्तिहेतुत्वं किन्तु तल्लालनादिना तदासक्तेः प्रत्युत संसारहेतुत्वमिति । एतत्समर्थकविशेषणमाह—विश्वतः स्त्रीपुत्रधनमित्रादिभ्यः । सर्वेभ्यो भयं यस्मिंस्तस्मादिति ॥ * ॥ **दीपिका**—यतो मोक्षाय नापूजयम् अतस्तस्मात्संसारात्साक्षात् “ तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये ” इति श्रुतेर्विदेहमुक्तिं प्राप्नुयामेत्यर्थः ॥*॥ **संदर्भः**—विश्वतो भयात् सर्वतोपि भयहेतोर्ब्रह्मशापात् ॥ ९ ॥ एवमुक्तरीत्या । तं वसुदेवम् । संस्मारितः स्मरणं कारितः । इत्यर्थ इति—हरिगुणप्रश्नश्रवणमात्रेण तत्स्मरणानंदमग्नोऽभूदिति भावः ॥ * ॥ हरेर्गुणैस्तस्मिन्नवतीर्णत्वात्तद्दर्शनेन प्रकाशितैः ॥ * ॥ **विश्वनाथः**—हरेरिति “ अधीगर्थदयेशां कर्मणि ” इति षष्ठी । गुणैः सहितो हरिः सम्यक्स्मारितः स्मरण

नारद उवाच ॥ सम्यगेतद्व्यवसितं भवता सात्वतर्षभ ॥ यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥ श्रुतोनुपठितो ध्यात आदृतो वाऽ
नुमोदितः ॥ सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥ त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ॥ स्मारितो भगवानद्य देवो नारायणो
मम ॥ १३ ॥ अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥ प्रियव्रतोनाम सुतो मनोः स्वायं
भुवस्य यः ॥ तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतःस्मृतः ॥ १५ ॥ तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ॥ अवतीर्णं सुतशतं तस्यासीद्ब्रह्मपारगम् ॥
॥ १६ ॥ तेषां वै भरतो ज्येष्ठो नारायणपरायणः ॥ विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥

प्रीतिमाविष्करोति सम्यगितित्रिभिः । पृच्छसे पृच्छसि । विश्वभावनान्सर्वशोधकान् ॥ ११ ॥ आदृत आस्तिक्येन गृहीतः । अनुमोदितः परैः क्रियमाणः संस्तुतः ।
सद्धर्मो भागवतो धर्मः । देव हे वसुदेवेत्यर्थः । यद्वा देवेभ्यो विश्वस्मै च द्रुह्यंति ये तानपि ॥ १२ ॥ किंच त्वया महानुपकारः कृत इत्याह । त्वयेति । पुण्ये श्रवणकीर्तने
यस्य सः ॥ १३ ॥ अत्रापि भगवद्धर्मनिर्णयेऽपि । विदेहस्य जनकस्य ॥ १४ ॥ आर्षभाणामुत्पत्तिं सान्वयां विविच्य कथयति प्रियव्रत इति सप्तभिः ॥ १५ ॥
मोक्षधर्मविवक्षया मोक्षधर्माणां प्रवर्तनेच्छया अवतीर्णं वासुदेवांशमाहुः । तस्य च वेदपारगं सुतशतमासीत् ॥ १६ ॥ तेषामृषभसुतानां मध्ये नवयोगीश्वराणां चरितं
वक्तुमितरेषां चरितं ततो विविच्याह । तेषामिति । एतदजनाभंनाम वर्षं खंडं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् । एतेन तस्य धर्मातिरेको निरूपितः ॥ १७ ॥

विषयीकारित इत्यर्थः ॥ १० ॥ प्रष्टारं संश्लाघ्य तत्र निजप्रीतिं प्रकटयति–त्रिभिः श्लोकैः । सात्वतर्षभेति परमभागवतत्वं वसुदेवस्याह–एतात्किम् यत्पृच्छस इति । यद्वा–विश्वस्याभीष्टस्य भावनानुत्पादकान् " विश्वं
सर्वेष्टयोः स्मृतम् । चित्तोत्पत्त्योर्भावना स्यान्मिश्रणे भवनेपि च " इति निरुक्तिः ॥ * ॥ तत्र तदीयप्रयोजनस्योत्तरं सर्वान्ते दास्यति । भगवद्धर्मस्योत्तरमाह–सम्यगिति ॥ ११ ॥ इत्यर्थ
इति–एकदेशन्यायेन देवपदं वसुदेवपरमत्र ज्ञेयम् । एकदेशः पूर्वः परो वा न्यायेनोच्यतेऽत्र परस्य ग्राह्यत्वे विदमेव मानमिति भावः । ऋज्वीं गतिमुत्सृज्य वक्राश्रयणमनुचितं मत्वाह–यद्वेति ।
किञ्च–विश्वपदेनैव देवस्यापि गृहीतत्वात्पुनर्देवपदोपादानमनिवर्त्यदोषपरिहारसूचनार्थं हीति तद्दार्ढ्यमाह "ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथंचन । न पुनस्त्वदवज्ञाने कल्पकोटिशतैरपि ॥" इति पुराणांतरात् ॥ * ॥ ० ॥
॥ १२ ॥ ममाप्यनेन पुण्यवृद्धिर्भविष्यतीत्याह–किं चेति । स्मारितः नित्यं स्मृतोपीदानीं प्रश्नप्रसंगेन विशेषतः स्मारित इत्यर्थः ॥ * ॥ नारायणस्तादृशधर्मे मदीयो गुरुरूपो नारायणर्षिः स्मारित इति कृष्णावेशेन
तस्यापि स्मरणात् ॥ १३ ॥ इमं वक्ष्यमाणम् । आर्षभाणामृषभात्मजानां कन्यादीनाम् ॥ * ॥ अत्र श्रीनारायणोपदिष्टे धर्मेपि उदाहरंति स्मरंति तच्छिष्या इति माहात्म्यविशेषायोक्तम् ॥ १४ ॥ सान्वयां सवंशाम् ।
तस्य प्रियव्रतस्य । तत आग्नीध्रस्य । तत्सुतो नाभिसुतः ॥ * ॥ अत्रार्षभाणामित्युक्तं तत्रर्षभ एव क इत्यत आह–प्रियव्रत इति ॥ १५ ॥ तम् ऋषभम् । तस्य ऋषभस्य ॥ * ॥ ० ॥ १६ ॥ यस्य भरतस्य " ख्याते

स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ॥ उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥ तेषां नव नवद्वीपपतयोऽस्य समंततः ॥ कर्मतंत्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥ नवाभवन्महाभागा मुनयो ह्यर्थशंसिनः ॥ श्रमणा वातरसना आत्मविद्याविशारदाः ॥ २० ॥ कविर्हरिरंतरिक्षः प्रबुद्धः पिप्पलायनः ॥ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥२१॥ एते वै भगवद्रूपं विश्व सदसदात्मकम् ॥ आत्मनोऽव्यतिरेकेण पश्यंतो व्यचरन्महीम् ॥ २२ ॥

इमां पृथ्वीम् । गृहान्निर्गतः । हरिमुपासीनः सेवमानः सन् ॥ १८ ॥ नव सुताः अस्य भारतस्य वर्षस्य समंततः । नवद्वीपपतयो नवानां ब्रह्मावर्तादिभूखंडानां पतयः । एकाशीतिः सुताः कर्ममार्गप्रवर्तका ब्राह्मणा अभूवन् ॥ १९॥ अर्थशंसिनः परमार्थनिरूपकाः । श्रमणाः श्रमवंत आत्माभ्यासे कृतश्रमा इत्यर्थः । वातरसना दिगंबराः । आत्मविद्यायां विशारदा निष्णाताः ॥ २० ॥ २१ ॥ तेषां पारमहंस्यचरितमाह त एत इति द्वाभ्याम् । भगवद्रूपं विश्वं पश्यंतः । सदसदात्मकं स्थूलसूक्ष्मरूपम् । तच्च

चित्रे तथा भक्ष्ये भक्षितेप्यद्भुतं स्मृतम् '' एतेन वर्षनामांतरकरणेन । धर्मातिरेकः पुण्याधिक्यम् । 'यशः पुण्यैरवाप्यते' इत्याद्युक्तेः ॥*॥०॥१७॥ स भरतः । तत्पदवीं हरिमार्गं मोक्षमित्यर्थः । तत्पदाभ्यां वीयते प्राप्यत इति तत्पदवी भक्तिलभ्या मुक्तिरिति वा । त्रिभिः क्षत्रमृगविप्ररूपैः ॥ * ॥ तपसा ध्यानलक्षणेन 'तप–आलोचने' इत्यतोऽसुच् । " यस्य ज्ञानमयं तपः " इति श्रुतेः । मन आद्यैकाग्र्येण वा " मनसश्चेंद्रियाणाञ्च ऐकाग्र्यं परमं तपः'' इति स्मृतेः ॥ १८ ॥ ''द्वीपोंब्वंतरिते देशे भूभागमृगभेदयोः । पुलिने तारके सेतौ तथा जंब्वादिसप्तसु ॥'' इति निरुक्तिः ॥ * ॥ ''द्वीपोंबुस्थोन्नतस्थले । जंब्वादिसप्तसु द्वीपो रमणादिषु चाष्टसु ॥ ब्रह्मावर्तादिनवसु द्विरुक्ते विष्णुनामनि ।'' इति वारतांतविः ॥ १९ ॥ इत्यर्थ इति–' श्रमणो जिनभिक्षुके' इति कोशात्ते नात्र ग्राह्या इति भावः ॥ * ॥ वातवसना इति गौडीयः पाठः । 'श्यामो हिरण्यरसनोर्ककिरीटजुष्टः ' इत्यत्र चतुर्थस्कन्धे स्वामिचरणै रसनापदं वस्त्रपरतया लक्षणया व्याख्यातमतो 'वातरसनाः' इत्येव पाठस्तत्संमतः ॥ २० ॥ एतेषां नामनिरुक्त्यैव पूर्वश्लोकोक्तोर्थस्तेषु सिद्ध इत्यतो तन्नामानि निर्वक्ति–कौति मुमुक्षुभ्य उपदिशत्यात्मतत्त्वमिति कविः । हरत्युपदेशेनाज्ञानमिति, हं हर्षं राति श्रोतृभ्य इति वा हरिः । अंतश्चेतसक्षित आत्मानमित्यंतारिक्षः ईकारस्य ह्रस्वत्वमार्षम् । प्रकर्षेण बुद्धं ज्ञातमात्मतत्त्वं येन स प्रबुद्धः । पिप्पलो विष्णुः 'अश्वत्थः सर्ववृक्षाणाम् ' इति स्मृतेस्स चायनमाश्रयो यस्य स पिप्पलायनः । यद्वा–पिप्पलं जलमयनं तपश्चर्यास्थलं यस्य स तथा ''पिप्पलं सलिले वृक्षे विषये वस्त्रखंडके '' इति कोशात् । आविः प्रकटे होत्रं सर्वेषां कर्मणां होमो ज्ञानाग्निना दाहो यस्य स आविर्होत्रः । " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन " इत्युक्तेः । चमांति वेदतीर्थमिति चमा वैदिकास्तान्सरति मुख्यत्वेन प्राप्नोतीति चमसः वैदिकोत्तमः । " सरतेर्डः " । ' द्रुद्रुमौ वृक्षौ ' इति कोशात् द्रुषु वृक्षेषु वनेषु मिल्यते प्राप्यते दिदृक्षुभिरिति द्रुमिलः, यद्वा–द्रु द्रुतं मिलो वेदार्थानामेकीकरणं यस्येति । भां प्रकाशं जनयतीति भाजनं वेदार्थज्ञानं करे हस्ते भाजनं यस्य स करभाजनः, हस्तामलकवत्प्रतिभातवेदार्थ इत्यर्थः ॥ * ॥ ० ॥ २१ ॥ तेषां कव्यादीनां ये मुनित्वेनोक्तास्त एते महीं व्यचरन् । केचित्तु विश्वं पूर्णं सदसदात्मकं कार्यकारणव्यापि भगवद्रूपम् आत्मनो जीवाव्यतिरेकेण वैलक्षण्येन पश्यन्तः । यद्वा–सदसदात्मकं कार्यकारणात्मकं भगवद्रूपं भगवतो रूपं प्रतिमास्थानीयं विश्वं प्रपञ्चमात्मनो ऽव्यतिरेकेण पश्यन्त इति । यद्वा–विश्वमंतः प्रविश्य वर्तमानं सदसदात्मकं बहिश्च जगत् व्याप्य वर्तमानं भगवद्रूपं ब्रह्मसंज्ञमंतर्यामिणो हरेरव्यतिरेकेणाभेदेन पश्यन्तः । ''अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः '' इति श्रुत्यर्थरसमनुभवंत

अव्याहतेष्टगतयः सुरसिद्धसाध्यगंधर्वयक्षनरकिन्नरनागलोकान् ॥ मुक्ताश्चरंति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥ त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरजनाभे महात्मनः ॥ २४ ॥ तान्दृष्ट्वा सूर्यसंकाशान्महाभागवतान्नृप ॥ यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥ विदेहस्तानभिप्रेत्य नारायणपरायणान् ॥ प्रीतः संपूजयांचक्र आसनस्थान्यथार्हतः ॥ २६ ॥ तान्रो चमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव ॥ पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥ विदेह उवाच ॥ मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ॥ विष्णोर्भूतानि लोकानां पावनाय चरंति हि ॥ २८ ॥ दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः ॥ तत्रापि दुर्लभं मन्ये वैकुंठप्रियदर्शनम् ॥ २९ ॥

आत्मनोऽव्यतिरेकेण स्वाभेदेन पश्यंतः ॥ २२ ॥ अव्याहता अप्रतिहता इष्टा अभिप्रेता गतिर्येषां ते । मुक्ता अनासक्ताः ॥ २३ ॥ महात्मनो निमेः । वितायमानमनुष्ठीयमानम् । अजनाभे भारतवर्षे ॥ २४ ॥ यजमानो निमिः । अग्नय आहवनीयादयः । विप्रा ऋत्विगादयः ॥ २५ ॥ अभिप्रेत्य ज्ञात्वा ॥ २६ ॥ स्वरुचैव रोचमानान्स्वाभरणादिप्रकाशैः । ब्रह्मपुत्रोपमान्सनत्कुमारादिसदृशान् ॥ २७ ॥ परमप्रीत्या तद्दर्शनमभिनंदति द्वाभ्याम् । मन्य इति । ननु भगवतः पार्षदानां कथमत्रोपलब्धिस्तत्राह । विष्णोरिति । विष्णुभक्ता लोकपावनार्थं सर्वत्र पर्यटंतीत्यर्थः ॥२८॥ मया दुर्लभं लब्धमहो भाग्यमित्याह । दुर्लभ इति । बहवो देहा भवंति येषां ते देहिनो जीवास्त इत्याहुः ॥ * ॥ भगवान् परं ब्रह्मैवाधिष्ठानतया रूपं यस्य तां दृशं पश्यन्तः कल्पितस्याधिष्ठानरूपमंतरा स्वतोऽनिरूप्यत्वात् । तच्च ब्रह्मस्वरूपमपि स्वाव्यतिरेकेण त्वंपदार्थाभेदेन स्थूलसूक्ष्मरूपं महदाद्याकाशादिरूपम् ॥ * ॥ **संदर्भस्तु**—भगवतो रूपं स्फूर्तिर्यत्र तादृशं तत्सत्ताव्याप्तं पश्यंतः । तच्चात्मनोऽव्यतिरेकेण आत्मानमपि तदनुगतं पश्यन्त इत्यर्थमाह ॥ * ॥ **विश्वनाथस्तु**—आत्मनः परमात्मनः सकाशादव्यतिरेकेण विश्वस्य तच्छक्तिमयत्वादिति भावः ॥ २२ ॥ ननु महीसंचरणं सर्वेषां जंगमानामस्ति किं तेषामाधिक्यमित्यत आह—सुरादिलोकांस्ते चरंतीति । भूतानां नाथो भैरवः 'भैरवो भूतनाथश्च' इत्युक्तेः । द्विजा गरुडादयस्तेषामपि लोकः । गवां लोकस्तु प्रसिद्धः । किं कर्मवशाच्चरंति नेत्याह—मुक्ता जीवन्मुक्तास्संतः कामं स्वेच्छयैवेति । बलवता प्रतिषेधे कामतोऽपि संचरणं दुश्शकमित्यत अव्याहतेष्टगतय इति ॥*॥ कामं यथेच्छम् ॥ २३ ॥ प्रकृतमाह—ते मुनयः ॥ * ॥ यदृच्छया स्वैरतया ॥ २४ ॥ तान्मुनीन् ॥ * ॥ हे नृपेति । नृपाणामयमेव मुख्यो धर्मो यद्धरिभक्त्युपयोगिकर्मनिष्ठावत्त्वं तत्रैव हरिजनसंगो भवतीति संबुद्ध्यभिप्रायः । नारायणपरायणान् महाभागवतत्वेन परमदुर्लभान् "मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशांतात्मा कोटिष्वपि महामुने ॥" इति षष्ठस्कंधोक्तेः । यथार्हतः पूर्वमार्हितविप्रापेक्षया वैशिष्ट्येन ॥२५॥ ॥ ० ॥ * ॥ ० ॥ २६ ॥ नवसंख्याकान् ॥ * ॥ प्रश्रयेणांतःस्थविनयेन सह कायेनाप्यवनतो नम्रः ॥ २७ ॥ तद्दर्शनं मुनिदर्शनम् । पार्षदोपलब्धिमाक्षिपति—नन्विति । इत्यर्थ इति—परमदयालुत्वात्ते लोकहितार्थं चरंत्येवेति भावः ॥ * ॥ सर्वत्राव्याहतगतित्वेन रूपांतरेणापि हरिभक्तिशक्त्या सर्वत्र गन्तुं शक्यत्वेप्यत्र साक्षादित्युक्ते रूपांतरं विनैव मां पावयितुमागता इति भावः ॥ * ॥ **संदर्भस्तु**—विष्णोर्भूतानि पार्षदा एव रूपांतरेण चरंतीत्याह ॥ * ॥ **विश्वनाथस्तु**—ननु विष्णुपार्षदानां कथमन्यत्र गमनं संभाव्यते तत्राह—विष्णोरिति ॥ २८ ॥ तत्रापि मानुषत्वेऽपि ॥*॥ अद्य मया स्वभाग्यमेव प्रत्यक्षीकृतमित्याह—दुर्लभो मोक्षसाधनत्वात् । तत्रापि दुर्लभत्वेपि वैकुंठप्रियाणां मोक्षादप्यधिकस्य भक्तियोगस्य प्रदायकत्वात् । टीकायां परमपुरुषार्थपदेनापीदमेवोक्तं परमपुरुषार्थो भक्तियोग एव पंचमपुरुषार्थः, तच्च गौतमीये श्रीनारदेनोक्तम् "भद्रमुक्तं भवद्भिस्तु

अत आत्यंतिकं क्षेमं पृच्छामो भवतोऽनघाः ॥ संसारेऽस्मिन्क्षणार्धोऽपि सत्संगः शेवधिर्नृणाम्॥३०॥धर्मान्भागवतान्ब्रूत यदि नः श्रुतये क्षमम् ॥ यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः॥३१॥नारद उवाच ॥ एवं ते निमिना पृष्टा वसुदेव महत्तमाः॥ प्रतिपूज्याब्रुवन्प्रीत्या ससदस्यर्त्विजं नृपम्॥३२॥

षां क्षणभंगुरोऽपि मानुषो देहो दुर्लभः। परमपुरुषार्थसाधनत्वात् । वैकुंठः प्रियो येषां वैकुंठस्य वा प्रियास्तेषां दर्शनम् ॥ २९ ॥ हे अनघा निरवद्याः। भवतो युष्माना त्यंतिकं क्षेमं पृच्छामः। यतः क्षणार्धकालभवोऽपि सत्संगः शेवधिर्निधिः। निधिलाभे यथाऽऽनंदो भवति तथात्र परमानंद इत्यर्थः ॥ ३० ॥ तदर्थं च भागवतान्धर्मान्ब्रूत यदि नोऽस्माकं श्रुतये श्रवणाय क्षमं योग्यं भवति। कथंभूतान्। यैर्धर्मैः प्रपन्नाय भक्तायाजो हरिरात्मानमपि दास्यति तान् ॥ ३१ ॥ सह सदस्यैर्ऋत्विग्भिश्च वर्तमानम्। तेऽपि भगवद्धर्मश्रवणपरा बभूवुरित्यर्थः । भगवद्धर्म—तद्भक्त—माया—तत्तरणानि च ॥ ब्रह्म—कर्मा—वतारेहा—भक्तप्राप्य—युगक्रमान् ॥ १ ॥ ज्ञातुं क्रमेण कृतवान्नव

मुक्तिस्तुर्य्या परात्परा। निरहं यत्र चित्सत्ता तुर्या सा मुक्तिरुच्यते ॥ पूर्णाहंतामयी भक्तिस्तुर्यातीता निगद्यते। '' इति। श्रुतिश्च—''सर्वदैनमुपासीत'' ''मुक्तानामपि भक्तिर्हि परमानंदरूपिणी '' इत्यादिका ॥ २९ ॥ यतो भागवतदर्शनं दुर्लभमतो हेतोः। आत्यंतिकम्—येन विना निःश्रेयसं न स्यात्तदात्यंतिकं क्षेमं मंगलं मोक्षसाधनं पृच्छामः 'कार्येण कारणमुपलक्ष्यते' इति न्यायात् । इत्यर्थ इति—न ह्यात्यंतिकक्षेमादधिकोऽन्यो लाभोस्त्यतः परमानंदहेतुता तस्येति भावः ॥ * ॥ अत आत्यंतिकमित्यस्यायं भावः आतिथिष्वागतेषु कुशलप्रश्न आवश्यकः, स च तावदात्मारामेषु साक्षात् कुशलस्वरूपेष्वनुचितः स्वस्यापि व्यावहारिककुशलप्रश्नो भवत्सु व्यर्थः ,अत आत्यंतिकं पारमार्थिकमेव। हे अनघाः न विद्यन्ते अघानि यत इति दर्शनदानमात्रेणैव मदघानि दूरीकृतान्येव किंत्वभीष्टलाभो ऽस्मदपेक्षितो वर्तत एवेत्यतः पृच्छामः। ननु विलंब्य पृच्छ्यतां तत्राति शैघ्र्यं किमर्थमत आह—क्षणार्धोपि। क्षणार्धकालमितोऽपि शेवधिः सर्वाभीष्टदो निधिरत आकस्मिकं निधिं प्राप्य स्वाभीप्सितापादने विलंबं कः सहेतेति भावः। मम तु कुतस्तावान्भाग्यविशेषो येन भवंतोऽत्र चिरं स्थास्य न्तीति भावः ॥ ३० ॥ तदर्थमात्यंतिकक्षेमार्थम्। तान् धर्मान् ॥ * ॥ तादृशक्षेमपर्यवसानान्धर्मांश्च ब्रूत। ननु सर्व एव धर्माः क्रमेण तत्पर्यवसाना एव 'यथाद्रिप्रभवा नद्यः' इत्यादौ 'तद्वत्त्वां गतयोंततः' इत्युक्तेस्तत्राह—भागवतानेव किमन्यैर्व्यवहितैः। आत्यंतिकं क्षेममेव विशदयति—यैरिति। दास्यतीति वर्तमानसामीप्यप्रयोगात्। शीघ्रमेवात्मानमनवरतस्फूर्त्यादिवशं कुर्यादि त्यर्थ इति **विश्वनाथः** ॥ * ॥ तर्हि पृच्छ्यतां किं तवाभीष्टमत आह—धर्मानिति । श्रुतये श्रोतुं नोऽस्माकं कर्णेंद्रियमिति मन्यस इति च शेषः । क्षमं योग्यम् ''नित्यं कृष्णयशःश्रोतृ योग्यं श्रोत्रेंद्रियं मतम् '' इति शिष्टोक्तेः, '' बिले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य '' इत्युक्तचरत्वाच्च। ते च धर्माः सारभूता एव वाच्या इत्याह—यैरिति—इति **संदर्भः** ॥ ३१ ॥ ते मुनयः। इत्यर्थ इति—सर्वे तस्मिन्सदसि भगवद्धर्मश्रवणेप्सवोऽतः सर्वान्प्रतिपूज्येत्युक्त मिति भावः। भगवद्धर्मश्च तद्भक्तश्च माया च तत्तरणं चेति द्वंद्वश्चतुर्णाम्। ब्रह्म च कर्म चावतारेहा चाभक्तप्राप्यं च युगक्रमश्चेति पंचानां द्वंद्वः। अल्पश्रुतस्यैकस्य बहुभिर्विचक्षणैर्युगपदुच्यमानवचनार्थावधारणं दुःश कमिति हेतोः क्रमश एकैकस्य प्रश्नस्यैकैकः प्रत्युत्तरमुक्तवानित्यर्थः ॥ * ॥ हे वसुदेवेति—श्रीकृष्णपितृत्वेन स्वत एव त्वं वसुभ्योपि दीप्तिमानसि किं तव धर्मप्रश्नाद्यैः, यद्वा—अंतःकरणशुद्धय एव धर्मा अपेक्षिताः संति त्वं तु 'सत्त्वं विशुद्धं वसुदेवशब्दितम्' इत्युक्तेः स्वत एव शुद्धांतःकरणोसि साक्षात्तद्रूपेण वा, नित्ययोगार्थे मत्वर्थीयाजंतत्वेनेति भावः। यद्यपि राज्ञैव 'एवं ते निमिना पृष्टाः' इत्युक्ते राज्ञैव प्रष्टा तथापि ससदस्य र्त्विजं नृपमित्युक्त्वा सदस्यादयोप्यनुयोगानुमतिदानेन प्रष्टारो बोध्याः। नन्वत्र प्रथमप्रश्नस्य कविनैव किमुत्तरं दत्तं हर्यादिषु बहुषु सत्स्विति चेदत्रेदमवधेयम्, नवसु कवेरेव प्रथमत्वात् 'संख्यासाम्ये यथाक्रमम्' इति न्यायमाश्रित्य प्रश्नानां योगेश्वराणां च नवत्वेन प्रश्नानुक्रमेण वक्तारोऽप्यत्र नवैव जाताः। प्रश्नास्तु—भगवद्धर्मप्रश्नः प्रथमः १, तद्भक्तप्रश्नो द्वितीयः २, मायाप्रश्नस्तृतीयः ३, तत्तरणप्रश्नश्चतुर्थः ४, ब्रह्मप्रश्नः पञ्चमः ५,

कविरुवाच ॥ मन्येऽकुतश्चिद्भयमच्युतस्य पादांबुजोपासनमत्र नित्यम् ॥ उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ॥ अंजः पुंसामविदुषां विद्धि भागवतान्हि तान् ॥ ३४ ॥ यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् ॥ धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५ ॥

प्रश्नान्निमिर्नव ॥ एकैकस्योत्तरं प्रोचुः कविमुख्या मुनीश्वराः ॥ २ ॥ ३२ ॥ प्रथममात्यंतिकं क्षेमं कथयति । मन्य इति । न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयम् । अत्र संसारेऽसदात्मभावादसति देहादावात्मभावनातो नित्यं सर्वदोद्विग्नबुद्धेः । विश्वात्मना सर्वथा निःशेषं यत्र पादांबुजोपासने सति भीर्निवर्तते ः तत् ॥ ३३ ॥ भागवत धर्मलक्षणमाह । ये वा इति । मन्वादिमुखेन वर्णाश्रमादिधर्मानुक्त्वाऽतिरहस्यत्वात्स्वमुखेनैव भगवताऽविदुषामपि पुंसामंजः सुखेनैवात्मलब्धये ये वै उपायाः प्रोक्तास्तान्भाग वतान्धर्मान्विद्धि ॥ ३४ ॥ अंजःपदेनोक्तं सुकरत्वं विवृणोति । यानिति । यानास्थायाश्रित्य योगादिष्विव न प्रमाद्येत विघ्नैर्न विहन्येत । किंच निमील्य नेत्रे धावन्नपि इह एषु भागवतधर्मेषु न स्खलेत् । निमीलनं नामाज्ञानम् । यथाहुः "श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ॥ एकेन विकलः काणो द्वाभ्यामंधः प्रकीर्तितः ॥" इति । अज्ञात्वापीत्यर्थः । यथा पदन्यासस्थानमतिक्रम्य शीघ्रं परतः पदन्यासेन गतिर्धावनं तद्वदत्रापि किंचित्किंचिदतिक्रम्यातिशीघ्रानुष्ठानं धावनम् । तथाऽनुति

कर्मप्रश्नः षष्ठः ६, अवतारचेष्टाप्रश्नस्सप्तमः ७, अभक्तप्राप्यप्रश्नोष्टमः ८, युगक्रमेणार्चनादिप्रश्नो नवमः ९, वृत्तिवैविध्येन तु 'कविः कल्पो निपुणदृक्' इत्यत्र सप्तमे स्वामिचरणैः कविर्विद्वानिति व्याख्यातम् । विदुषश्चैतदेव वैदुष्यं यद्भागवतधर्मवर्णनेनात्यन्तिकक्षेमापादनम् "एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्" इति न्यायात्कविरेवैतत्प्रश्नोत्तरं दत्तवानिति । एवमग्रेपि ज्ञेयम् ॥ ३२ ॥ तत् उपासनम् ॥ * ॥ **संदर्भः**—न कुत इति—आत्यंतिकं क्षेमम् अच्युतस्य पादांबुजयोरुप समीप आसनं स्थितिस्तच्च तद्ध्यानमेव "दूरस्थोपि समीपस्थो यो यस्य हृदि वर्तते" इति न्यायेन । अत एवोक्तं तद्रूपलीलास्फूर्त्यादि । इह चरणपदं तस्यैव बोधकम् "पादपर्यायशब्दैस्तु महतां ग्रहणं भवेत्" इति । यद्वा—अवयवावयविनोरभेदोपचारात् । विश्वात्मनेति—तत्साधनावस्थायामपि क्रमशो भयनिवृत्तिमाह ॥ * ॥ **विश्वनाथस्तु**—भो राजन्सर्वे धर्माः सभया एव किञ्चिद्वैगुण्येपि फलानापादकत्वात् , भागवतधर्म एव निर्भयः । "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति श्रीमुखोक्तेरित्याह—मन्य इति । अत्र संसारे न कुतश्चिदपि कालकर्मविघ्नादिभ्यो भयं यतस्तत्पादांबुजोपासनम् । तत्र मुख्याधिकारिणमाह—असति असाधौ देहे गृहकुटुम्बादौ वाऽऽत्मा इति आत्मीय इति यो भावो भावना दुस्त्यजा तत एवोद्विग्ना त्रस्ता बुद्धि र्धीर्यस्य तस्य भक्तिः प्रतिकूलदेहादिष्वासक्तिं त्यक्तुकामस्येत्यर्थः ॥ ३३ ॥ हरि पदसेवनमेव मुख्यो भागवतो धर्म इति तदंगत्वेनान्येऽपि योगा भागवतधर्मा भवन्तीत्याह—अविदुषामज्ञानात्मदर्शनाम् । आत्मलब्धये हरेरेवात्मत्वेन प्राप्तये ॥ * ॥ भगवता स्वयं भगवता स्वमुखेनैव यथा—"काले तु प्रलये नष्टा वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥" इत्यनुसारेण "श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम्" इत्यादिवचनैः 'यत्करोषि यदश्नासि' इत्यादिवाक्यैश्च । अविदुषामिति कर्तरि षष्ठी । तन्माहात्म्यविद्वाद्भिरपि कर्तृभिः आत्मनो ब्रह्मपरमात्मभगवदादिशब्दबोध्यस्य स्वस्य कर्मभूतस्य अंजोऽव्यवधानेनैव लब्धये य उपायाः साधनानि प्रोक्तास्तानुपायान्भागवतान्धर्माञ्जानीहि । हि प्रसिद्धौ । तत्र साक्षाद्धक्तेरपि भागवतधर्माख्यत्वम् 'एतावानेव लोकेस्मिन्' इत्यादौ परमधर्मख्यापनाय दर्शितम् । तत्रात्मलब्धये प्रोक्ता इति तटस्थलक्षणम् अन्येन तदलाभादव्यभिचारि, आत्मलब्धये य उपाया इति तु स्वरूपलक्षणम् । तल्लाभोपायो हि तदनुमतिरेव ॥ ३४ ॥ यान्भागवतधर्मान् । यथा योगविचारादयो विघ्नैः संगादिरूपैर्नश्यन्ते तथा भागवतधर्मानिष्ठो न विहन्येतेति भावः । तत्रान्यत्सौकर्यमाह—किञ्चेति । एषु भागवतधर्मेषु

**कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात् ॥ करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत ॥ ३६ ॥**

**ध्वन्नपि न स्खलेन्न प्रत्यवायी स्यात्तथा न पतेत्फलान्न भ्रश्येत् ॥ ३५ ॥ ननु के ते भागवता धर्माः ईश्वरार्पितानि सर्वकर्माण्यपीत्याह । कायेनेति । आत्मना चित्तेनाहंकारेण वा । अनुसृतो यः स्वभावस्तस्मात् । अयमर्थः । न केवलं विधितः कृतमेवेति नियमः स्वभावानुसारिलौकिकमपीति । तथा च भगवद्गीतासु । "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्" इति । यद्वा । ननु कायादीनामेव कर्म नात्मन इत्याशंक्याह । अध्यासेनानुसृताद्ब्राह्मणत्वादिस्वभावा**

स्खलनं मार्गे नतोन्नतस्थलाघातेनाऽर्द्धपतनीभावः । निमीलनपदोक्ताज्ञानस्वरूपमाह—यथाहुः । एकेनोभयोरन्यतरेण । इत्यर्थ इति—श्रुतिस्मृतिविकलोपि भागवतः परमार्थान्न भ्रश्येदिति भावः । अत्रापि भागवतधर्मेपि । अत्र निर्गलितार्थमाह—ब्राह्मणादीनामित्यादिना । इत्यर्थ इति—"त्यक्त्वा स्वधर्मं चरणांबुजं हरेर्भजन्नपक्वोथ पतेत्ततो यदि " इत्यत्रैतदर्थस्य निर्णीतत्वादिति तात्पर्यम् ॥ * ॥ **विश्वनाथः**—आस्थाय[१] विश्वासविषयीकृत्वापि किं पुनराचर्येत्यर्थः । न प्रकर्षेण माद्येत मदो गर्वस्तद्वान्योगीव कर्मीव न भवेदित्यर्थः । यद्वा—प्रमादोऽनवधानताऽसावधानो न भवेदित्यर्थः । अतोत्र विघ्नानां न प्रभविष्णुतेति भावः । किञ्च—यानाश्रित्य भगवन्मार्गभूतानास्थाय नेत्रे निमील्योन्मील्य वा धावन्न स्खलेत् न वा पतेत् । यथा केनापि कश्चिदतिसमीचीनमतिसुगमं मार्गमानीतो जन उच्यते मदुपदिष्टेनानेन मार्गेण नेत्रे मुद्रयित्वा सुखेनाभिद्रवन्नेव याहि न कश्चिदपि ते संशय इति धावने बहुतरत्वे पतनमपि संभवेत्, अत्र भक्तिमार्गे भजनधर्मस्यांगिनो विहितानामंगानां स्वल्पतरातिक्रमे बहुतरातिक्रमे वा कर्ममार्ग इव न प्रत्यवायी भवेदतः फलादपि न भ्रश्येत् । तत्रापि नेत्रे निमील्येति वर्तमानेऽपि नेत्रे मुद्रयित्वेत्यनेन ज्ञात्वाप्यतिक्रमे न दोषः किमुताज्ञात्वेति ज्ञापितम् । यान् धर्मानास्थायेत्युक्तत्वादंगिनस्त्वतिक्रमो दोष एव तथा सति मार्गच्युत एव स्यात् भगवत्प्राप्त्यर्थं पृथङ्मार्गकरणं त्वतिदूषणावहमेव " श्रुतिस्मृतिपुराणादिपञ्चरात्रविधिं विना । ऐकांतिकी हरेर्भक्तिरुत्पातायैव कल्पते ॥" इत्युक्तम् । अत्र भागवतधर्मे प्रवर्तमानस्य वर्णाश्रमधर्मेऽधिकार एव नास्तीति तदनुष्ठानाननुष्ठानविचारो नात्र प्रवेशयितव्यः " तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥" इति भगवदुक्तेः । ' भक्त्यैकयेशं गुरुदेवतात्मा ' इत्यग्रिमवाक्ये भक्त्येत्यस्यैकयेति विशेषणोपन्यासात्कर्ममिश्रा भक्तिर्नात्र प्रस्तुतेत्यवसीयते ॥ * ॥ **दीपिका** तु—नर इति—नृमात्रस्यात्राधिकारितोक्ता । योगादिष्वित्यत्रादिना कर्मतपःसांख्यज्ञानवैराग्यादिग्रहः । तत्र योगे—सिद्धय एव विघ्ना " अंतरायान्वदंत्येता युंजतो योगमुत्तमम् " इत्युक्तेः, कर्मणि यज्ञादौ तु—यत्किंचित्संस्कारादिवैगुण्येपि फलानुत्पत्तेः, यथा—व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणरूपसंस्कारविस्मृतावपि, यथाऽऽहुतौ—तिर्यक्स्रुवादिनापि अग्नये स्वाहेत्यत्र वह्नये स्वाहेत्युक्तावपि, मंत्रादौ—स्वरादिवैगुण्येपि ' यथेंद्रशत्रुः स्वरतोपराधात् ' इत्युक्तेः, तपसि—गर्वे सति विघ्नः " अधर्मांशैस्त्रयो भग्नाः स्मयसंगमदैस्तव " इत्युक्तेः तपः शौचं दयेति त्रयः, सांख्ये—त्वीश्वरामननात्साहाय्याभाव एव विघ्नः " सर्वं वेदविरुद्धं च कपिलोऽन्यो जगाद ह " इत्युक्तेः, अन्योऽन्यवरः यथावदात्मानात्मविवेकासंपत्तेः, ज्ञाने तु—भगवदपराध एव विघ्नः " जीवन्मुक्ता अपि पुनर्बंधनं यान्ति कर्मभिः । यद्यचिंत्यमहाशक्तौ भगवत्यपराधिनः ॥ " इति वासनाभाष्योक्तेपि भगवत्परिशिष्टवचनात् " नानुव्रजति यो मोहाद्व्रजन्तं जगदीश्वरम् । ज्ञानाग्निदग्धकर्मापि स भवेद्ब्रह्मराक्षसः ॥ " इत्यादिमहाभारतादिस्मृतेश्च, वैराग्ये तु—प्रसादाद्यग्रहणमेव सः ' प्रसादाऽग्रहणं विष्णोः ' इति सेवापराधांतर्गतत्वात्, तदुक्तमभियुक्तैः " प्रापञ्चिकतया बुद्ध्या हरेः संबंधिवस्तुनः । मुमुक्षुभिः परित्यागे वैराग्यं फल्गु कथ्यते॥" ॥ ३९ ॥ भागवतधर्मान्पृच्छति—नन्वित्यादिना । मनसा संकल्पाद्यधिकरणेन, बुद्ध्या निश्चयज्ञानाधिकरणेन, चित्तेन मननलक्षणज्ञानाधिकरणेनाहंकारेणाहं हरिमर्चयामीत्यादिलक्षणेन, अनुसृतोऽनुगतः स्वभावोऽसाधारणसाधारणवृत्तिः । अत्र स्फुटार्थमाह—अयमर्थ इति ।

---

१ 'ब्राह्मणादीनामुक्तानपि धर्मान्कांश्चिदकुर्वाणो भागवतान्धर्मांञ्छ्रवणकीर्तनादीन्कुर्वाणस्तत्फलं प्राप्नुयादित्यर्थः' इति पाठः भ्रश्येदित्यतोग्रे श्रीधरीयटीकायां केनचित्प्रक्षिप्तः ।

भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ॥ तन्मायया ऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ ३७ ॥



द्यद्यत्करोतीत्यर्थः । तत्सकलं परस्मै परमेश्वराय नारायणायेति समर्पयेत् । तथा सति सकलमपि कर्म भागवतो धर्मो भवतीति भावः ॥ ३६ ॥ ननु किमेवं परमेश्वरभजनेन अज्ञानकल्पितभयस्य ज्ञानैकनिवर्त्यत्वादित्याशंक्याह । भयमिति । यतो भयं तन्मायया भवेदतो बुधो बुद्धिमांस्तमेवाभजेत् । ननु भयं देहाद्यभिनिवेशतो भवति स च देहाहंकारतः स च स्वरूपास्मरणात्किमत्र तस्य माया करोत्यत आह । ईशादपेतस्येति । ईशविमुखस्य तन्मायया ऽस्मृतिर्भगवतः स्वरूपास्फूर्तिस्ततो विपर्ययो देहोस्मीति ततो द्वितीयाभिनिवेशाद्भयं भवति । एवं हि प्रसिद्धं लौकिकीष्वपि मायासु । उक्तं च भगवता । "दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यंते मायामेतां तरंति ते॥" इति । एकया ऽव्यभिचारिण्या भक्त्या भजेत् । किंच गुरुदेवतात्मा गुरुरेव देवता ईश्वर आत्मा प्रेष्ठश्च यस्य । तथादृष्टिः सन्नित्यर्थः॥ ३७॥

यथा स्वभावकृतकर्मणो भागवतधर्मत्वं भगवत्यर्पणाद्भवतीति भगवतैवोक्तं तथा चेत्यादिना । यद्यपि कायादीनां जडत्वात्कर्मकरणेपि भोक्तृत्वं न संभवति "भोक्तृत्वे सुखदुःखानां कारणं पुरुषं विदुः" इत्युक्तेरतः कायादीनां कर्मफलभोक्तृत्वाभावेन बंधाभावात्तन्निवृत्त्यर्थं भगवति कर्मार्पणमनुचितमिव भातीति, तथापि चिदध्यस्तानामेव देहादीनां कर्मकर्तृत्वेन जडानां स्वतस्तदसम्भवाद्देहादिकृतमपि तदध्यासेनात्मन्येवाऽऽयातीत्यत आह—अध्यासेनेति । इत्यर्थ इति—तपोयुद्धकृष्यादिकं कर्मेति भावः । तथा सति भगवति समर्पिते सति । इति भाव इति—"नावमः कर्मकल्पोपि विफलायेश्वरार्पितः" इत्याद्युक्तेः । कर्माभासोपीश्वरार्पितो बंधनिवर्तको भवतीत्याशयः ॥ * ॥ आत्मनोऽकर्तृत्वेन कथं कायादिकृतकर्मार्पणं संगच्छेत परकृतस्य परेण समर्पणायोगादित्यरुच्या—यद्वेति । तथासति समर्पिते सति । इति भाव इति—वाच्योत्थव्यंग्योर्थः, तत्र पापकर्मसमर्पणं तु "मत्तुल्यो नास्ति पापात्मा नापराधी च कश्चन । व्याहारेपि च लज्जा मे किं ब्रुवे परमेश्वर॥" इति दैन्येन तन्निवेदनमेव ॥*॥ अत्र **संदर्भः—** एते च श्रीप्रबुद्धेनापि विविच्य वक्ष्यन्ते स्वयमपि संक्षेपेणेत्यभिप्रेत्य प्रथमतस्तत्राप्यलसानां तद्द्वारमाह—कायेनेति ॥ * ॥ **विश्वनाथस्तु—**'शृण्वन्सुभद्राणि' इत्युपरिष्टाद्वर्णयितव्येषु भागवतधर्मेषु प्रवर्तमानेन सुधिया जनेन कायिकादिव्यापारा अपि भगवद्धर्मांतरेव प्रवेशनीया इत्याह—कायेनेति । अयमर्थः—यथा विषयिणः प्रातरारभ्य मूत्रपुरीषोत्सर्गमुखप्रक्षालनदन्तधावनस्नानदर्शनश्रवणादिव्यापारा विषयसुखभोगार्थमेव, कर्मिणस्तु देवपित्रादिपूजार्थमेव क्रियन्ते तथैव भगवद्भक्तेन तेते व्यापारा भगवत्सेवार्थमेव कर्तव्या इति तेतेऽपि तेषां भक्त्यंगानि भवेयुरिति । अनुसृतस्वभावात्—अनादिना देहाध्यासेन योऽनुसृतोऽनुवृत्तः स्वभावस्तस्मात्कायादिभिर्यद्यत्करोति तत्सर्वं नारायणार्थमेव नारायणं सेवितुमिति वा समर्पयेद्विनियोजयेत् । तादर्थ्ये "क्रियार्थोपपद—"इत्यनेन वा चतुर्थी ॥ ३६ ॥ अत्राक्षिपति—नन्विति । यथा धीवरप्रसारितमहाजालान्तर्गतमत्स्यानां तत्पादयोरेव जालाभावेन निःसरणमार्गस्तथेशमायाजालान्तर्गतजीवानां तत्पादोपगमनमेवोद्धारपथमित्यभिप्रेत्य मुमुक्षोर्बोधमुद्दिश्य तत्संस्कारान्वितभक्तियोगमाह—भयमिति । तन्मायया भगवन्मायया । तमेव भगवंतमेव । पुनराक्षिपति—नन्विति । आदिनेन्द्रियग्रहः, स च देहाद्यभिनिवेशः देहेऽहंकारतो देह एवाहमस्मीत्येवंलक्षणतः, स च देहाहंकारोपि स्वरूपास्फुरणान्निजरूपानवबोधात् । अत्र भये । तस्य हरेः । तन्मायया ईशमायया भगवतो निजस्वरूपस्य अस्फूर्तिरज्ञानम् ततः स्वरूपास्फूर्तेः विपर्ययोऽन्यथा ज्ञानम् ततो विपर्ययात् देहादिरूपद्वितीयाभिनिवेशात् लौकिकीष्वपींद्रजालादिरूपासु चर्मखण्डकृतसर्पे चर्मखण्डस्वरूपाज्ञानात्तत्र सर्पोयमिति द्वितीयाभिनिवेशत एव तद्द्रष्टॄणां भयं भवतीति प्रसिद्धम् । मायातरणं मायिकाश्रयणे सत्येव भवतीत्यत्र श्रीमुखोक्तिं प्रमाणयति—उक्तं चेति । देवस्य मम शक्तिरूपा दैवी, एवपदमन्यव्यवच्छेदमाह । न गुरुभक्तिहीनानां मायातरणं भवतीत्याह—किंचेति । इत्यर्थ इति—गुरुं विना सेवाप्रकाराज्ञाना

**अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा॥तत्कर्मसंकल्पविकल्पकं मनो बुधो निरुंध्यादभयं ततः स्यात् ॥३८॥**

**ननु विषयविक्षिप्तचित्तस्य कुतोऽव्यभिचारिणी भक्तिः संभवति कुतस्तरामभयम् । तत्र न तावद्विषयो नाम वास्तवोऽस्ति किंतु मनोविलासमात्रमतो मनो नियमनेन भजनादभयं स्यादित्याह । अविद्यमानोऽपीति । द्वयः द्वैतप्रपंचः ध्यातुः पुंसो धिया मनसा स्वप्नश्च मनोरथश्च यथा तथेत्यर्थः । तत्तस्मात्कर्माणि संकल्पयति**

दिति भावः । यद्वा—एकयाऽऽत्मत्वानुसंधानरूपया ॥ * ॥ ज्ञानैकनिवर्त्यत्वात् रज्ज्वां भुजंगधिया जातभयस्य यथा रज्जुस्वरूपज्ञानेन निवृत्तिस्तथा स्वरूपाज्ञानकल्पितभयस्य स्वरूपज्ञानमात्रेण निरास्यत्वात् किमिहेशभ त्त्येत्याक्षेपः । तन्माया किं करोतीति भगवतो जगदधिकारिण्या यमवदभक्तदण्डकारिण्या कर्त्र्या स्वरूपास्फूर्तिर्जीवस्य स्वरूपविस्मृतिः कार्यते, ततः स्वरूपास्फूर्तेः भक्त्यैव ज्ञानं न तु वाक्यमात्रेण यथा भोजनेनैव क्षुन्निवृ त्तिर्न तु पायसापूपादिनाम्नेति "ज्ञानकारणसामग्र्यां भक्तिरेव गरीयसी" इति भगवत्पूज्यपादोक्तेः, "न युज्यमानया भक्त्या भगवत्यखिलात्मनि । सदृशोऽस्ति शिवः पंथा योगिनां ब्रह्मसिद्धये ॥" इति श्रीकपिलदेवोक्तेश्च, 'रहूगणैतत्तपसा न याति' इत्याद्युक्तेश्च, सर्वभयादिरोगवैमुख्यनिदानत्वाच्च भक्तिरेव कार्येति ॥ * ॥ **दीपिका—**'मन्ये ऽकुतश्चित्' इत्येव स्थापयन् क्रमेण निष्ठापयति—भयमिति । यतो भयं तन्मायया भवेदतो बुधस्तमे वाभजेत् प्रथमतः कायेनेत्याद्युक्तप्रकारेणेषदपि भजेत् ततो गुरुदेवतात्मा सन्भक्त्या साक्षाद्भागवतधर्मरूपया तत एकया नित्यपादांबुजोपासनरूपयेति विशेषतोऽर्थः ॥ * ॥ **संदर्भः—**किंच, भक्तैस्संसारान्न बिभेतव्यम् स हि भक्तौ प्रवृत्तस्य स्वत एवापयातीत्याह—भयमिति । द्वितीये देहेन्द्रियादावुपाधिभूतेऽभिनिवेशतोऽभिमानात् ईशविमुखजीवस्य न त्वीशोन्मुखस्य "तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् । तावन्मोहोऽङ्घ्रिनिगडो याव त्कृष्ण न ते जनाः ॥" इति ब्रह्मोक्तेः, 'तावद्भयं द्रविणदेहसुहृन्निमित्तम्' इत्यारभ्य 'यावन्न तेंऽघ्रिमभयं प्रवृणीत लोकः' इति तृतीयेऽपि तदुक्तेश्च । तच्च भयं द्विविधम्—विपर्ययोऽस्मृतिश्च विपर्ययरूपमस्मृतिरूपञ्चेत्यर्थः। विपर्ययस्त्वात्मभिन्ने देहादावात्मबुद्धिः, अस्मृतिरात्मनि स्मृतिभ्रंशः कोऽहं किं करोमि पूर्वं कीदृश आसमग्रे कीदृग्भविष्यामीति पूर्वापरानुसंधानराहित्यम् । एतदेव तस्य भगवतो मायया भयम् । तदुक्तम्—"स्मृतिभ्रंशाद्बु द्धिनाशो बुद्धिनाशात्प्रणश्यति" इति । अत एव हेतोर्बुधः श्रीगुरुचरणप्रसादाल्लुब्धविवेकस्तमेव आ सम्यक्कामनाराहित्येन एकया केवलया न तु ज्ञानकर्मादिमिश्रया भक्त्या भजेत् । अन्यत्स्पष्टम् ॥ ३७ ॥ पूर्वोक्तभक्तेर शक्यत्वमाशंकते—नन्विति । तत्र विषयविक्षेपाक्षेपे । इत्यर्थ इति—दृष्टांतवैषम्याभावाय समासं विदार्य व्याख्येयमिति भावः । संकल्पयति सामान्यतः विकल्पयति विशेषतः । ततश्च मनोनिरोधात् । इत्यर्थ इति—"मन एव मनुष्याणां कारणं बंधमोक्षयोः" इत्याद्युक्तेर्मनोनिरोध एवाभयहेतुरिति भावः । यद्वा—कर्मणः कार्यविश्वस्य सम्यक्सत्यत्वेन कल्पकं विविधतया च कल्पकं यन्मननात्मिकाऽविद्यापरिणामभूतं मनस्तद्बुधः श्रवणमननजबो धवान् विपर्ययाप्रतिबद्धं साक्षात्कारार्थं जातसाक्षात्कारश्चेज्जीवन्मुक्तौ निरुंध्यात् । ततो भयहेतुद्वितीयाभावादभयं स्यादिति भावः ॥ * ॥ **संदर्भः—**अथ साक्षात्तद्धर्मरूपामेव ग्राहयन्मनोनिरोधोक्त्या कायेनेत्याद्युक्तमतिक्र मयति—अविद्येति द्वाभ्याम् ॥ * ॥ **विश्वनाथः—**ननु स्रक्चन्दनवनितादिपरित्यागप्रपञ्चो यस्य नैव विद्यते विद्यमानमपि तं परित्यज्य यो वा वने वसति तस्य भयं न भवेदिति चेन्मैवं वादीरित्याह—अविद्यमान इति । द्वयोर्भोग्यप्रपञ्चो ह्यविद्यमानोऽपि ध्यातुः पुंसोऽवभाति मानसप्रत्यक्षो भवति धिया 'सर्वो द्वंद्वो विभाषयैकवद्भवति' इति न्यायात् "ऊकालोज्झ्रस्वदीर्घप्लुतः": इतिवदेकवचनपुंस्त्वे श्रीमद्भागवतस्य साक्षाद्वेदस्वरूपत्वात्साक्षात्तद्रूपपा णिनिसूत्रमेव दृष्टांतितमत्रेति मूले तत इत्युक्ते मनोनिरोध एव वाच्य एकयेत्यादिकं त्वार्थकमेवाकृष्टमत उक्तमित्यर्थ इति । स च मनोनिरोधो गुरुचरणभक्तिं विना प्रकारांतरेण न भवेत्तदुक्तं श्रुतिभिः—'विजितहृषीकवायुभिरदांतमनस्तु

शृण्वन्सुभद्राणि रथांगपाणेर्जन्मानि कर्माणि च यानि लोके ॥ गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसंगः ॥ ३९ ॥ एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ॥ हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥

विकल्पयति च यन्मनस्तन्निरुंध्यान्नियच्छेत् । ततश्चैकया भक्त्या भजनादभयं स्यादित्यर्थः ॥ ३८ ॥ एतदत्यंताशक्यमित्याशंक्य सुगमं मार्गमाह । शृण्वन्निति । तदर्थकानि तान्येव जन्मानि कर्माणि चार्थो येषां तानि । एतान्यपि साकल्येन ज्ञातुमशक्यानीत्याशंक्याह । यानि लोके गीतानि प्रसिद्धानि तानि शृण्वन्गायंश्च विचरेत्। असंगो निःस्पृहः ॥ ३९ ॥ एवं च भजतः संप्राप्तप्रेमलक्षणभक्तियोगस्य संसारधर्मातीतां गतिमाह । एवमिति । एवं व्रतं वृत्तं यस्य सः । स्वप्रियस्य हरेर्नामकीर्त्या जातोऽनुरागः प्रेमा यस्य सः । अत एव द्रुतचित्तः श्लथद्धृदयः । कदाचिद्भक्तपराजितं भगवंतमाकलय्योच्चैर्हसति । एतावंतं कालमुपेक्षितोऽस्मीति रोदिति । अत्यौत्सुक्याद्रौति क्रोशति हे हरे मामनुगृहाणेति अतिहर्षेण गायति । जितंजितमिति नृत्यति । किं दांभिकवत्परान्प्रति प्रकाशयितुम् । न । उन्मादवद्ग्रहगृहीतवत् । लोकबाह्यो

रगम्' इत्यत्र 'समवहाय गुरोश्चरणम्' इति । सप्तमेऽपि—''सर्वं चैतद्गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्'' इति । अत एवात्रापि गुरुदेवतात्मेत्युक्तम् ॥ ३८ ॥ एतन्मनोनुरोधलक्षणम् । एतानि जन्मकर्मार्थकानि यशोदानंदनपूतनार्यादीनि ॥*॥ दीपि०—एतन्मनोनिरोधेन भजनमत्यंताशक्यं दुष्कराष्टांगमयत्वात् । 'अंजः पुंसामविदुषाम्' इत्युक्तेस्सुगममार्गमाह—स्वत एव मनोनिरोधश्च परमोपयुक्तोयमिति एतत्पृथक्त्वे एवात्यंताशक्यतादि स्यादिति भावः । साक्षाद्भगवद्धर्ममेवाह—शृण्वान्निति । यानि शास्त्रद्वारा सत्परंपराद्वारा च लोके गीतानि अपभ्रंशभाषयापि निबद्धानि नामानि नानादेशभाषयापि तदर्थकान्येव स एवार्थो वाचो येषां तानि कान्हा इति कानड इति कान इति कनैया इत्येवमादीनि जन्मार्थकानि देवकीनंदनयशोदानंदनादीनि कर्मार्थकानि मुरारिमधुसूदनादीनि च गायन्विचरेदित्यन्वयः । असंगो वस्त्वंतरासक्तिशून्यः ॥ ३९ ॥ एवं नामश्रवणादिना । एवं पूर्वोक्तं वृत्तं वर्तनम् । अत एव जातानुरागत्वादेव । अत्यौत्सुक्यादत्यौत्कंठ्यात् ॥ * ॥ ततोऽजसा तृतीया फलरूपा भक्तिः स्यादित्याह—एवंव्रत इति । अत्र नामकीर्त्येति तृतीया श्रुत्याऽनुरागजनने साधकतमत्वव्यंजनात् । तत एवं शृण्वन्नित्यादिप्रकारं व्रतं नियमो यस्य तथाभूतोपि सन् स्वप्रियाणि तन्नामस्वसंख्येषु मध्ये यानि स्ववासनापोषकाणि तेषां कीर्त्या कीर्तनेन मुख्येन कारणेन जातानुराग आविर्भूतमहाप्रेमेत्यर्थः । हासादीनां कारणानि भक्तिभेदानामानंत्यादनंतान्येव ज्ञेयानि ॥ * ॥ **विश्वनाथस्तु**—भक्त्यंगेषु नामकीर्तेरेवोत्कर्षमाह—स्वप्रियस्य कृष्णस्य नामकीर्त्या स्वप्रियं वा यद्भगवन्नाम तस्य कीर्त्या कीर्तनेन जातोऽनुरागः प्रेमा यस्य स दर्शनोत्कंठाग्निद्रुतीकृतचित्तजांबूनदः अये हैयंगवीनं चोरयितुं यशोदासुतश्चौरो गृहं प्रविष्टस्तदयं ध्रियतामाध्रियतां वेति बहिर्जरतीगिरमाकर्ण्य पलायितुं प्रवृत्तं कृष्णं स्फूर्तिप्राप्तमालक्ष्य हसति । स्फूर्तिभंगे सत्यहो प्राप्तो महानिधिर्मे हस्तगतश्च्युत इति विषीदन् रोदिति, हे प्रभो क्वासि देहि मे प्रत्युत्तरमिति फूत्कृत्य रौति, भो भक्त त्वत्फूत्कारं श्रुत्वैवायातोस्मीति पुनः स्फूर्तिप्राप्तं तमालक्ष्य गायति, अद्याहं

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ॥ सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः ॥ ४१ ॥
भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः ॥ प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥

विवशः ॥ ४० ॥ किंच खमिति । सत्त्वानि भूतानि आकाशादि यत्किंचिद्भूतमात्रं हरेः शरीरमिति मत्वा प्रणमेत् । संभावनायां लिङ् ॥ ४१ ॥ नन्वियमारूढयोगानामपि बहुभिर्जन्मभिर्दुर्लभा गतिः कथं नामकीर्तनमात्रेणैकस्मिन्नेव जन्मनि भवेदित्याशंक्य सदृष्टांतमाह । भक्तिरिति । प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा । परेशानुभवः प्रेमास्पदभगवद्रूपस्फूर्तिः तया निर्वृतस्य ततोऽन्यत्र गृहादिषु विरक्तिरित्येष त्रिक एककालो भजनसमकाल एव स्यात् । यथाऽश्नतो भुंजानस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षन्निवृत्तिश्च प्रतिघासं स्युः । उपलक्षणमेतत् । प्रतिसिक्थमपि यथा स्युस्तद्वत् । एवमेकैकस्मिन् भजने किंचित्प्रेमादित्रिके जायमानेऽ

कृतार्थोस्मीत्यानंदेनोन्माद उन्मत्तवन्नृत्यति, लोकबाह्यः लोकानां हास्यप्रशंसासंमानावमानादिष्ववधानशून्यः ॥ ४० ॥ हरेः शरीरं " सर्वं खल्विदं ब्रह्म " " ब्रह्मैवेदं सर्वम् " इति श्रुतेः । सत्त्वानि जीवानि " सत्त्वं स्याद्गुणजीवयोः " । आदिना बल्यादिग्रहः । यद्वा—तत्पदार्थेशानिरूपकवाक्यैरीशव्याप्तिमवगत्य 'यच्च किंचिज्जगद्वस्तु' इत्यादिभिरिति महावाक्याद्वा प्रत्यक्षाभासावगतभेदविरोधेनानवगतब्रह्मात्मवस्तुः खादीनिहरेः शरीरमित्यवगत्य अनन्य ईशातिरिक्तममन्वानः प्रणमेत्तदा शुद्धो बाधितप्रत्यक्षाभासकृतासंभवोऽनन्य ईशाभिन्न एव स्यात् इति वार्थः "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योहमस्मीति न स वेद यथा पशुः" इति श्रुतेः ॥ * ॥ **संदर्भः**—ततः श्रीभगवतः सर्वत्र स्फूर्तेः खं वायुमिति सत्त्वानि भूतानि आकाशादिकं यत्पश्यति तत्त्वनुरागातिशयेन " जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम् " इति तद्धरेः शरीरं श्यामसुंदरपीतवसनादिरूपमेव पश्यन्प्रणमेत्, तत्रतत्र भक्त्या नम्रात्मा भवतीत्यर्थः । तत्र हेतुरनन्यः स्फूर्त्यन्तररहित इत्यर्थः । ' या निशा सर्वभूतानाम् ' इत्यादेः ॥ * ॥ **विश्वनाथोपि**—ततश्च " नारायणमयं धीराः पश्यन्ति परमार्थिनः । जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम् ॥ " इति पौराणिकवाक्यस्योदाहरणंभवतीत्याह—खमिति । प्रणमेदिति संभावनायां लिङ् । खवाय्वादिषु यत्रयत्र दृष्टिः पतेत्तत्रतत्र हरेः शरीरं श्यामसुंदराकारमेव स्फुरितं पश्यतीत्यर्थः । यद्वा—भक्तस्य फलप्राप्तिदशां निर्वर्ण्य पुनः साधनदशायां किंचिद्विदधाति—खमिति । हरेः शरीरमधिष्ठानं ज्ञात्वा प्रणमेत् प्रणम्रो भवेत् । न विद्यतेऽन्यः कृष्णं विना सेव्यो यस्य सः ॥ ४१ ॥ अत्र पुनराशंक्य भागवतधर्मफलमाह—नन्विति । एतत्प्रतिग्रासमित्येतत् । प्रतिसिक्थं प्रतिपुलाकं " सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् " इति मेदिनी । पुलाकस्तंडुलातिसूक्ष्मावयवविशेषः । एकैकस्मिन्नेकैकवारमित्यर्थः ॥ * ॥ **संदर्भः**—ननु पूर्वं पादांबुजोपासनमित्यादिना तादृशतत्स्फूर्तिमयं फलमुद्दिष्टम् एवंव्रत इत्यादिना तत्प्रेम लोकबाह्यमित्यनेन वैराग्यश्चेति क्रमो गम्यते स च न संभवति मिथः सापेक्षत्वात्, यौगपद्ये च परस्पराश्रयो दोषः स्यात्तदेतदाशंक्य यौगपद्यमेव दृष्टांतेन साधयति—भक्तिरिति । तत्र भक्तितुष्ट्योः सुखरूपत्वात् परेशानुभवपुष्ट्योरात्मभरणरूपत्वाद्विरक्तिक्षुदपाययोरन्यत्र वैतृष्ण्यरूपत्वात्साम्यम् इह भक्त्यादित्रयमुद्दिश्यैककालमात्रत्वं विधीयते ' अप्राप्तशास्त्रमर्थवत् ' इति न्यायात् । " प्राप्ते कर्मणि न त्वेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयंते बहवोप्येकयत्नतः ॥" इत्युक्तेश्च, तथा चेह भक्त्यादिकेऽप्राप्तमेव यौगपद्यं शास्त्रेण विधीयत इति भावः । यथाऽप्राप्त एवापगाप्रवाहे सेतुर्विधातुं शक्यते न तु प्राप्तेपि तस्मिन्सोतिप्रयत्नेनापि विधातुं शक्य इति ॥ * ॥ अत्र **विश्वनाथस्तु**—भक्तिमार्गेऽस्मिन्नतिसुखदे साधनदशायामपि फलप्राप्तिं सदृष्टान्तामाह—भक्तिः श्रवणकीर्तनादिः परेशस्येष्टदेवस्य श्रीकृष्णस्य यदा भवेत्तदैव तदनुभवो माधुर्यास्वादोपि तदनुरूपो भवेत्तदैवान्यत्र मायिकसुखे विरक्तिरपि तदनुरूपा भवेदिति त्रिकः त्रयोऽवयवा यस्य स त्रिकः । अत्रावयवार्थे कः । अत्रेदमवधेयम्—किञ्चिन्मात्रभोजिनः किञ्चिन्मात्रैव तुष्टिः पुष्टिः क्षुदपायोपि तदनुरूप एव बहुभुंजानस्य पूर्णास्तुष्टिपुष्टिक्षुदपाया एवं किञ्चिच्छ्रवणा

इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवंति वै भागवतस्य राजंस्ततः परां शांतिमुपैति साक्षात् ॥ ४३ ॥ राजोवाच ॥ अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ॥ यथाऽऽचरति यद्ब्रूते यैर्लिंगैर्भगवत्प्रियः ॥ ४४ ॥ हरिरुवाच ॥ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ॥ भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥

नुवृत्त्या भजतः परमप्रेमादि जायत एव । बहुग्रासभोजिन इव परमतुष्ट्यादि ॥ ४२ ॥ ततश्च भगवत्प्रसादेन कृतार्थो भवतीत्याह । इत्यच्युतांघ्रिमिति ॥ ४३ ॥ भागवतस्य भवंतीत्युक्ते तस्य लक्षणं पृच्छति । अथेति । यद्धर्मो यस्मिन्धर्मे परिनिष्ठितः । यादृशो यत्स्वभावः । यथाचरति वर्तते । यत् ब्रूते वदति । यैश्च लिंगैर्भगवतः प्रियो भवति ॥ ४४ ॥ यद्धर्म इत्यस्योत्तरमाह त्रयेण । सर्वभतेष्विति । आत्मनः स्वस्य सर्वभूतेषु ब्रह्मभावेन समन्वयं पश्येत् । तथा ब्रह्मरूपे आत्मन्यधिष्ठाने भूतानि च यः पश्येत् । यद्वा "आततत्वात्प्रमातृत्वादात्मा हि परमो हरिः" इति तंत्रोक्तेरात्मनो हरेः सर्वभतेषु मशकादिष्वपि नियंतृत्वेन वर्तमानस्य भगवद्भावं निरतिशयैश्वर्यमेव यः पश्येन्न तु तस्य तारतम्यं तथात्मनि हरावेव भूतानि च यः पश्येत् । कथंभते भगवति अप्रच्युतैश्वर्यादिरूपे । न पुनर्जडमलिनभूताश्रयत्वेन

दिभजने किञ्चिन्मात्रे परेशानुभवविरक्ती भवतः बहुभजतस्तु संपूर्णा एव भक्तिपरेशानुभवविरक्तयः स्युः । किं तु बहुभोजिनस्तु भोजनासामर्थ्यं भवति बहुभजतस्तु भजने सामर्थ्यातिशयो भवतीति विशेषो द्रष्टव्यः ॥ ४२ ॥ ततश्च भक्त्यादित्रिकाविर्भावात् इति । प्रीत्या भजतोऽनु भगवत्प्रबोधः । भगवदपरोक्षज्ञानमनंतरं पूर्वस्मादधिका संसारविरक्तिरनंतरं चाधिका भक्तिरित्येतानि भागवतस्य भवंतीति यस्मात्तस्मात्ततोनंतरं साक्षात्तुर्यावस्थालक्षणां परामुत्तमां शांतिसंयोग्यां मुक्तिमुपैतीत्यन्वयः । अत्र पूर्वाधिक्यविवक्षया प्रबोधादीनां हेतुहेतुमद्भावकथनं न विरुद्धमिति ॥ * ॥ ततश्च भक्त्यादित्रिकोत्पत्त्यनंतरं परां शांतिमात्यंतिकं क्षेमम् ॥ ४३ ॥ तस्य भागवतस्य ॥ * ॥ अथेति—अथानंतरं भागवतं ब्रूत तज्ज्ञानार्थं स च नृणां मध्ये यद्धर्मो यत्स्वभावस्तं स्वभावं ब्रूतेति मानसलिंगप्रश्नः । यादृश इति तस्यैव तारतम्यप्रश्नः । यथाऽऽचरतीति अनुतिष्ठतीति तदनुष्ठानं ब्रूत इति कायिकलिंगप्रश्नः । यं ब्रूते तद्वचनं ब्रूतेति वाचिकलिंगप्रश्नः । ननु पूर्वं 'शृण्वन्सुभद्राणि रथांगपाणेः' इत्यादिग्रंथेन तत्तल्लिंगं श्रीकविनैवोक्तम्, सत्यम्, तथापि पुनस्तत्तदनुवादेन तेषु लिंगेषु यैर्लिंगैः स भगवत्प्रियो यादृश उत्तममध्यमेत्यादिभेदो विविक्तो भवति तानि लिंगानि विविच्य ब्रूतेत्यर्थः ॥ ४४ ॥ समन्वयं व्याप्तिम् । एतत्त्वद्वैतनिष्ठानां भवति भक्तास्तु सगुणनिष्ठामेवाद्रियंत इत्यत आह— यद्वेति । आततत्वाद्व्याप्तत्वात् मातृत्वाज्ज्ञातृत्वात् । इत्यात्मशब्दनिरुक्तिं हरावेव मन्यन्ते तांत्रिका अन्वर्थामिति । मशकोऽतीव तुच्छो दंशनशीलो जीवविशेषः । आदिना कीटादिग्रहः । तस्य निरतिशयैश्वर्यस्य तथा यथा भूतेषु । इत्यर्थ इति—आब्रह्मकीटादिष्वेक एवाप्रच्युतैश्वर्यस्तिष्ठतीति भावनावान्भागवतो भवतीति भावः । यद्वा—भगवति आत्मनि स्वस्वरूपे भगवत्येव कल्पितानि भूतानीत्यतो मुख्यसमानाधिकरणेनात्मनो भगवद्भावं बाधसमानाधिकरणेन भूतेषु च यः पश्येदेष भागवतोत्तम इति ॥ * ॥ अत्र 'हरिर्हरति पापानि' इति स्मृतेर्हरिशब्दस्य परममुख्यावृत्तिर्भगवत्येवेति च भागवतलक्षणं भगवतैव वक्तव्यं न तु स्वमुखेन स्वलक्षणं भागवतेन वक्तव्यमन्यथात्मसंभावनाप्रसंग इति तन्नामत्वाद्धरिरेवोवाचेति ज्ञेयम् । तत्र मानसधर्मोत्तरमाह—स्वस्य त्वंपदार्थस्य ब्रह्मभावेन ब्रह्मास्मीति भावनया सर्वभूतेषु कल्पितेष्वधिष्ठानत्वेन समन्वयमनुस्यूतत्वमधिष्ठाने कल्पितानि नः तु वास्तवानीति यः पश्येत्स भागवतोत्तम इत्यर्थः । एतत्तु ब्रह्मज्ञानिलक्षणं न तु भागवतलक्षणमित्याम्रनिम्बोत्तरन्यायापत्तिरित्यरुच्याह—यद्वेति । आततत्वात्सर्वव्यापकत्वात् मातृत्वात्सर्वज्ञातृत्वाच्चेत्यक्षरसाम्यान्निरुक्तिः । तस्य भगवद्भावस्य हरावेव भूतानि चेत्रि 'मत्स्थानि सर्वभूतानि' इति भगवदुक्तेः । सर्वाश्रये भगवत्येवाश्रितानि यःभूतानि

**ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ॥ प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ ४६ ॥**

**जाड्यादिप्रसक्त्या ऐश्वर्यादिप्रच्युतिं पश्येत् । स सर्वत्र परिपूर्णं भगवत्तत्त्वं पश्यन् भागवतोत्तम इत्यर्थः ॥ ४५ ॥ प्रेम च मैत्री च कृपा च उपेक्षा च ता ईश्वरादिषु**

पश्येदिति सर्वस्य तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वान्न कस्यापि स्वातंत्र्येण सत्तां यः पश्येदित्यर्थः । जडानि मलिनानि च यानि भूतानि चराचरशरीराणि तान्याश्रयो यस्य तेषाञ्चाश्रयस्तस्य भावस्तत्ता तया वा जाड्यमालिन्यादिप्रसाक्तिस्तयैश्वर्यादीनां प्रच्युतिं न पश्येत् स्वाभाविकाचिच्छक्त्या मायाभिभावकत्वादिति भावः । "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुनोक्तेरिति **दीपिका** ॥ * ॥ **संदर्भस्तु**—तत्रोत्तरं तदनुभवद्वारा गम्येन मानसलिंगेन महाभागवतं लक्षयति—सर्वभूतेष्विति । 'एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागः' इति कविवाक्योक्तरीत्या यश्चित्तद्रवहासरोदनाद्यनुभावकानुरागवशात् 'खं वायुमग्निम्' इत्यादितदुक्तप्रकारेणैव चेतनाचेतनेषु सर्वभूतेषु आत्मनो भगवद्भावम् आत्माभीष्टो यो भगवदाविर्भावस्तमेवेत्यर्थः । पश्येदनुभवति अतस्तानि च भूतानि आत्मनि स्वचित्ते तथा स्फुरति यो भगवांस्तस्मिन्नेव तदाश्रितत्वेनैवानुभवति एष भागवतोत्तमो भवति । इत्थमेव श्रीव्रजदेवीभिरुक्तम्—"वनलतास्तरव आत्मनि विष्णुं व्यंजयंत्य इव पुष्पफलाढ्याः" इत्यादि । यद्वा—आत्मनो यो भगवति भावः प्रेमा तमेव चेतनाचेतनेषु भूतेषु पश्यति । शेषं पूर्ववत् । अत एव भक्तरूपतदधिष्ठानबुद्धिजातभक्त्या तानि नमस्करोतीति 'खं वायुम्' इत्यादौ पूर्वमिति भावः । तथैव चोक्तं ताभिरेव—"नद्यस्तदा तदुपधार्य मुकुंदगीतमावर्तलक्षितमनोभवभग्नवेगाः" इत्यादि । श्रीपट्टराज्ञीभिरपि—'कुररि विलपसि त्वम्' इत्यादि । अत एव न ब्रह्मज्ञानमभिधीयते भगवति तज्ज्ञानस्य तत्फलस्य च हेयत्वेन जीवभगवद्विभागाभावेन च भागवतत्वविरोधात् । "अहैतुक्य व्यवहिता या भक्तिः पुरुषोत्तमे" इत्यादिकात्यंतिकभक्तिलक्षणानुसारेण सुतरामुत्तमत्वविरोधाच्च न च निराकारेश्वरज्ञानं 'प्रणयरसनया धृतांघ्रिपद्मः' इत्युपसंहारगतपरमकाष्ठाविरोधादेवेति विवेचनीयम् ॥ * ॥ **विश्वनाथस्तु**—आत्मानं स्वस्योपास्यो यो भगवांस्तस्य भावं विद्यमानतां सर्वभूतेषु यः पश्येत, यथा—स क्वेति हिरण्यकशिपुना पृष्टः प्रह्लादः सर्वत्रैवेत्युक्त्वा स्तंभेपि मत्प्रभुर्दृश्यत इति स्वोपास्यं भगवन्तं दृष्टवानित्यर्थः । तथात्मन्यात्मीये आत्मोपास्ये भगवति च भूतानि पश्येत्, यथा श्रीयशोदा कृष्णस्य जठर एव सर्वभूतान्यपश्यत् । यद्वा—आत्मनि मनसि स्फुरति यो भगवांस्तस्मिन्नेव भूतानि तद्विषयकप्रेमवंति यः पश्येत्, यथा 'वनलतास्तरवः' इत्यादि 'नद्यस्तदा तत्' इत्यादिकं व्रजसुंदर्यः, 'कुररि विलपसि त्वम्' इति, 'क्षितिधर चिंतयसे स्तनैर्विधर्तुम्' इत्यादिकं पट्टराज्यश्चोक्तवत्य एव । अत एव "आत्मनो भगवद्भावं सर्वभूतेषु पश्यति । भाववंति च भूतानीत्यर्थो वै संमतः सताम् ॥" इति श्रीमत्सनातनगोस्वामिचरणानां कारिका प्रसिद्धा । अत्र पश्येदिति तथादर्शनयोग्यतैव विवक्षिता, न तु तथादर्शनस्य सार्वकालिकता । तथात्वे नारदव्यासशुकादावप्यव्याप्तिः स्यान्नहि ते सर्वदैव सर्वत्र भगवन्तं पश्यंति किंतु तद्दिदृक्षाधिक्य एवातस्तद्दर्शनौत्कंठ्यमत्याधिकं यदा वर्तेत तदैव 'कामुकाः कामिनीमयम्' इति न्यायेन सर्वजगदेव भगवन्मयं पश्येत्, तथैव 'आत्मवन्मन्यते जगत्' इति सर्वभूतान्येव प्रेमोत्कंठाव्याकुलान्येव पश्येदिति ज्ञेयम् । अत्र दृशोर्ज्ञानार्थत्वे व्याख्याते भगवतः सर्वभूताधेयत्वाधारत्वज्ञानवतः शास्त्रज्ञमात्रस्यैव भागवतोत्तमत्वं स्यादिति तन्न व्याख्यातम् ॥ ४९ ॥ मध्यमभागवतमाह—ईश्वरे प्रेम तदधीनेषु सत्सु मैत्रीं बालिशेष्वज्ञेषु कृपाम् द्विषत्सु द्वेषं कुर्वत्सूपेक्षा । एवंभूतस्येश्वरादिरूपस्य ॥ * ॥ **संदर्भः**—अथ मानसलिंगविशेषणैरेवं मध्यमभागवतं लक्षयति—ईश्वर इति । परमेश्वरे प्रेम करोति तस्मिन्भक्तियुक्तो भवतीत्यर्थः । तथा तदधीनेषु भक्तेषु च मैत्रीं बंधुभावम् 'वैष्णवं बंधुसत्कृत्या' इति वक्ष्यमाणत्वात्, बालिशेषु तद्भक्तिमजानत्सु उदासीनेषु कृपाम्, तथोक्तं श्रीप्रह्लादेन—"शोचे ततो विमुखचेतस इंद्रियार्थमायासुखाय भरमुद्वहतो विमूढान्" इति । आत्मनो द्विषत्सूपेक्षां तदीयद्वेषेण चित्ताक्षोभादौदासीन्यमित्यर्थः,तेष्वपि बालिशत्वेन कृपांशसद्भावात्, यथैव प्रह्लादो हिरण्यकशिपौ, भगवतो भागवतस्य वा द्विषत्सु तु सत्यपि चित्तक्षोभे तत्रानभिनिवेशमेव कुर्यात् अर्थात्तत्सामीप्यं त्यजेदन्यथा पुण्यहानेः । तदुक्तम्—"निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा । ततो नापैति यः सोपि यात्यधः सुकृताच्च्युतः ॥" इति । अस्य बालिशेषु कृपाया एव स्फुरणं द्विषत्सूपेक्षाया एव न तु पूर्ववत्सर्वत्र तस्य तत्प्रेम्णो वा स्फुरणं ततो मध्यमत्वम् ॥ * ॥ अत्र **विश्वनाथोपि**—ईश्वरे स्वोपास्ये तस्मिन्नासक्तो भवति सोऽधीनो येषाम् 'अहं भक्तपराधीनः'

अर्चायामेव हरये पूजां यः श्रद्धयेहते ॥ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥ गृहीत्वापींद्रियैरर्थान्यो न द्वेष्टि न हृष्यति ॥ विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः ॥ ४८ ॥ देहेंद्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ॥ संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥

चतुर्षु क्रमेण यः करोति स मध्यमो भागवतः । एवंभूतस्य भेदस्य दर्शनात् ॥ ४६ ॥ अर्चायां प्रतिमायां पूजामीहते करोति न तद्भक्तेष्वन्येषु च सुतरां न करोति । प्राकृतः प्रकृतप्रारंभः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः ॥ ४७ ॥ पुनरष्टभिः श्लोकैरभ्यर्हितत्वादुत्तमभागवतस्यैव लक्षणान्याह । गृहीत्वाऽपीति । श्रीवासुदेवाविष्टचेता न गृह्णाति तावदिंद्रियैरर्थान्गृहीत्वाऽपि न तत्र रागद्वेषवानित्यपिशब्दार्थः । यत इदं विश्वम् ॥ ४८ ॥ किंच । देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्यो हरेः स्मृत्याऽविमुह्यमानः स भागवतप्रधानः । तत्र देहस्य जन्माप्ययौ । प्राणस्य क्षुत्पिपासे । मनसो भयम् । बुद्धेस्तर्षस्तृष्णा ।

इति नवमे भगवदुक्तेस्ते तदधीना भक्तास्तेषु बंधुत्वं बालिशेषु येषु कृपा स्वयमुदेति तेष्वेव कृपामिति भरतव्यासशुकादीनामपि कृपाया असार्वत्रिकत्वात् । " गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् " इति गिरिदृष्टान्तेन वर्षर्तुवर्णने एतदुपपादनात् । भगवंतं द्विषत्सूपेक्षां तत्र कृपावैफल्यदर्शनादिति भावः । आत्मानं द्विषत्सु तु बालिशत्वमननादूरतः स्थित्वैव तच्छुभानुध्यानमात्रमिति सदाचारः । अत्र सर्वभूतेषु भगवद्दर्शनयोग्यता कदापि नेदृष्टा तस्यैवैतल्लक्षणचतुष्टयत्वे मध्यमत्वम्, यस्य तु सा दृष्टा तस्य तूत्तमत्वमेवेति विवेचनीयम् । अत एव भागवतोत्तमेषु नारदादिष्वपि प्रेममैत्रीकृपोपेक्षा दृश्यन्त एव ॥ ४६ ॥ अधमभागवतमाह—'अर्चा पूजाप्रतिमयोः ' इति धरणिः । एवपदेन प्रतिमातोऽन्यत्र स्थितविष्णुज्ञानव्यावृत्तिः क्रियते । हरये हरिमुद्दिश्य ईहते करोति तद्भक्तेषु हरिभक्तेषु अन्येषु भक्तेतरेषु "प्रारंभे गुणसाम्ये च स्वभावे प्रकृतिः कृतौ । मुख्ये बहुकृतौ मूले कारणे च निरुद्यमे ॥ " इति निरुक्तिः । इत्यर्थ इति—बद्धपरिकरो गंतव्यदेशमिव प्रारब्धभक्तिकोपि भागवतो भवतीति भावः ॥ * ॥ **संदर्भः**—अथ भागवतधर्माचरणरूपेण कायिकेन मानसेन च लिंगेन कनिष्ठं लक्षयति—अर्चायामेवेति । विशेष्यसंगतैवकारस्यान्ययोगव्यवच्छेदार्थमाह—न तद्भक्तेषु अन्येषु च सुतरान्न भगवत्प्रेमाभावाद्भक्तमाहात्म्यज्ञानाभावात्सर्वादरलक्षणभक्तगुणानुदयाच्च स प्राकृतः प्रकृतिप्रारंभस्तैर्व्याख्यातम् । इयं च श्रद्धा न शास्त्रावधारणजा । 'यस्यात्मबुद्धिः कुणपे ' इत्यादिशास्त्राज्ञानात् । तस्माल्लोकपरंपराप्राप्तैव "अर्चयित्वा तु गोविंदं तदीयान्नार्चयेत्तु यः । न स भागवतो ज्ञेयः केवलं दांभिकः स्मृतः ॥" इति शास्त्रज्ञानसत्त्वे तु भक्तपूजाया आवश्यकत्वमेव तस्माद्भक्ताभासो गौणः कनिष्ठोयम् । अतश्चाजातप्रेमा शास्त्रीयश्रद्धायुक्तः साधकस्तु मुख्यः कनिष्ठो ज्ञेयः, तदेवं त्रिभिः 'यद्धर्मो यादृशः ' इति प्रश्नयोरुत्तरमुक्तम् ॥ ४७ ॥ अभ्यर्हितत्वादुत्कृष्टत्वात् । 'उत्कृष्टेऽभ्यर्हितः पूज्यः ' इति निरुक्तिः । इंद्रियैः श्रोत्रादिभिरर्थान् शब्दादीन् । तथा च प्रियशब्दादिश्रवणादिना न हृष्यति अप्रियं तन्न द्वेष्टि, इदं विषयनिष्ठं प्रियत्वाप्रियत्वं मायैव न तु परमार्थत इति प्रवाहागतं सुखादि सेवमानोऽनासक्तो भगवदेकनिष्ठो भागवतोत्तम इत्यर्थः ॥ * ॥ अभ्यर्हितत्वात्परमपूज्यत्वात् ॥ * ॥ **संदर्भः**—पूर्वोक्तप्रकारेण मायां बहिरंगशक्तित्वाद्धेयमित्यर्थः । अत्रापि कायिकमानसयोः सांकर्यम् ॥ ४८ ॥ अन्यमाह—किंचेति—स्मृत्यात्मत्वनिश्चयेनेति वा ॥ * ॥ अथ केवलमानसलिंगेनाह—यावत्प्रकरणम् । यो हरेः स्मृत्या जन्माद्यैः संसारधर्मैरविमुह्यमानः स भागवतेषु मुख्यः—"येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् । ते

न कामकर्मबीजानां यस्य चेतसि संभवः ॥ वासुदेवैकनिलयः स वै भागवतोत्तमः॥५०॥न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः॥सज्जतेऽस्मिन्नहं भावो देहे वै स हरेः प्रियः॥५१॥न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ॥ सर्वभूतसमः शांतः स वै भागवतोत्तमः॥५२॥त्रिभुवनविभवहेतवेऽप्यकुंठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ॥ न चलति भगवत्पदारविंदाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥ ५३ ॥

इंद्रियाणां कृच्छ्रं श्रमस्तैः ॥ ४९ ॥ कामश्च कर्माणि च बीजानि च वासनास्तेषाम् । वासुदेव एवैकनिलय आश्रयो यस्य सः । एतेन गृहीत्वापीत्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति । यथा चरतीत्येतस्योत्तरमुक्तम् ॥ ५० ॥ यैर्लिंगैर्भगवत्प्रिय इत्यस्योत्तरमाह । न यस्येति । जन्म सत्कुलम् । कर्म तपआदि । जात योऽनुलोमप्रतिलोमजा मूर्धावसिक्तादयः । अस्मिन्देहे । अहंकाररहितैः सत्कुलजन्मकर्मादिलिंगैर्हरेः प्रियो भवतीत्यर्थः ॥ ५१ ॥ वित्तेषु स्वीयं परकीयमिति । आत्मनि स्वः पर इति भेदो नास्ति ॥ ५२ ॥ किंच त्रिभुवनविभवहेतवेऽपि त्रैलोक्यराज्यार्थमपि लवार्धमपि निमिषार्धमपि भगवत्पदारविंदभजनाद्यो न चलति स वैष्णवाग्र्यः । ननु लवार्धमात्रभजनोपरमे चेत्तावाँल्लाभो भवेत्तत्कुतो न चलेत्तत्राह । अकुंठस्मृतिः भगवत्पदतोऽन्यत्सारं नास्तीत्येवंरूपाऽकुंठाऽनपगता स्मृतिर्यस्य सः । भगवत्पदारविंदादन्यत्सारं नास्तीति कुतोऽत आह । अजिते हरावेवात्मा येषां तथाभूतैः सुरादिभिरपि दुर्लभात् किंतु केवलं विमृग्यात् । तदपेक्षया सर्वस्य तुच्छत्वं स्मरन्यो

द्वंद्वमोहनिर्मुक्ता भजंते मां दृढव्रताः ॥ '' इति श्रीगीतोक्तेः ॥ ४९ ॥ कामो भोगेच्छा । आश्रयश्चेतौऽवसानभूमिः । एतेन पूर्वोक्तेन ॥ * ॥ न कामेति । चेतस्यादौ बीजानि वासना उत्पद्यन्ते, ततः स्त्र्यादिविषयकः कामस्ततः कर्म इंद्रियद्वारा तत्तद्व्यापारः, एतत्त्रितयस्य यच्चेतसि न संभवः तदेवं 'गृहीत्वापि ' इत्यादित्रिभिर्हीनश्चरतीत्युत्तरितम् । अतःपरं यावदध्यायसमाप्ति यद्धर्म इत्युत्तरमेव प्रपंचयिष्यते ॥ ५० ॥ अनुलोमा उत्तमपुरुषेभ्योऽधमस्त्रीषु जाताः । विलोमा अधमपुरुषेभ्य उत्तमस्त्रीषु जाताः । मूर्द्धावसिक्तादयः एषां स्वरूपमग्रे प्रकटयिष्यामः । इत्यर्थ इति–नहि देहगेहाद्यभिमानिनां भागवतत्वं भवति "विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति यदन्यत्र" इत्याद्युक्तेरिति भावः ॥ * ॥ जन्म सत्कुलोद्भवत्वं कर्म जपध्यानादि जातयस्तु तैर्व्याख्याताः । किंतु भगवत्सेवोपयिके साध्ये देह एव सज्जत इत्यर्थः । स हरेः प्रियो भागवतोत्तम इति पूर्वेणैवान्वेति प्रकरणत्वात् ॥५१॥ एतदेव स्फुटयति–नेति । वित्तेषु स्त्र्यादिषु स्वत्वविषयेषु । आत्मनि प्रत्यगात्मनि ॥ * ॥ स्वः स्वपक्षः परो विपक्षः । वित्तेषु स्वस्यैवेदं न परस्येति आत्मनि स्वशरीर एव प्रीतिर्न परशरीर इति ॥ * ॥ **संदर्भस्तु**–वित्तेषु ममतास्पदमात्रेषु । अत्र वित्तवदात्मनि च स्वपक्षपातमात्रं निषिध्यते न व्यक्तिभेदः ॥ ५२ ॥ अपरलक्षणमाह–किञ्चेति । वैष्णवाग्र्यो भागवतमुख्यः । अत्राक्षिपति–नन्विति । तावान् त्रैलोक्यराज्यरूपः। तत्तर्हि । भगवत्पदारविंदादन्यत्र साराभावे हेतुमाशंकते–कुत इति । तथाभूतैर्भगवदर्पितचित्तैः । दौर्लभ्यमाह–किंत्विति । तदपेक्षया भगवत्पदारविंदापेक्षया । सर्वस्य प्रपञ्चस्य । इत्यर्थ इति–"सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथानुभजतः पुरुषार्थमूर्तेः '' इत्यौत्तानपाद्युक्तेरिति भावः ॥ * ॥ किंच–त्रिभुवनविभवाय त्रैलोक्यराज्यास्तयेपि किमुत तद्धेतव इत्यर्थः । 'सर्वोपि द्वन्द्वो विभाषयैकवद्भवति ' इति न्यायादेकवचनम् । कथं विचारात् किंत्वावेशादेवेत्याह–अकुंठा संकोचमात्ररहिता स्मृतिर्यस्य सः । तच्च तस्य युक्तमेवेत्याह–अजिते हराविति पूर्ववत् ॥ * ॥ **विश्वनाथस्तु**–न कुंठा प्रलोभयितुमशक्या स्मृतिर्यस्य सः 'न पारमेष्ठ्यं न महेंद्रधिष्ण्यम्' इत्यादौ ' वांछन्ति यत्पादरजः प्रपन्नाः ' इत्यादिवचनात् । अत एव निमिषार्धमपि भगवच्चरणारविंदादन्यत्र न चलति, कीदृशात्–अजितेत्यादि पूर्ववत् । यद्वा–अजितात्मानोऽजितेंद्रिया ये सुरादयस्तैस्तु त्रिभुवनराज्यार्थं

भगवतउरुविक्रमांघ्रिशाखानख मणिचंद्रिकया निरस्ततापे॥हृदि कथमुपसीदतां पुनः स प्रभवति चंद्र इवोदितेऽर्कतापः ॥ ५४ ॥ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ॥ प्रणयरसनया धृतांघ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥ ५५ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे नारदवसुदेवसंवादे जायंतेयोपाख्याने विदेहप्रश्नश्रवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥ राजोवाच ॥ परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ॥ मायां वेदितुमिच्छामि भगवंतो ब्रुवंतु नः ॥ १ ॥

न चलतीत्यर्थः ॥ ५३ ॥ अपिच विषयाभिसंधिना चलनं कामेनातिसंतापे सति भवेत्स तु भगवत्सेवानिर्वृतौ न संभवतीत्याह । भगवत इति । उरुविक्रमौ च तावंघ्री च तयोः शाखा अंगुलयस्तासु नखानि च तानि मणयश्च तेषां चंद्रिका शीतला दीप्तिस्तया निरस्तः कामादितापो यस्मिंस्तस्मिन्नुपसीदतां भजतां पुंसां हृदि कथं पुनः संतापः प्रभवति । चंद्रे उदिते सत्यर्कस्य ताप इव । 'न यस्य स्वः परः' इत्यादिना श्लोकत्रयेण यादृश इत्यस्योत्तरमुक्तं वेदितव्यम् । यद्ब्रूते इत्यस्य च हरिनामानीति अर्थात् ज्ञातव्यम् ॥ ५४ ॥ उक्तसमस्तलक्षणसारमाह । विसृजतीति । हरिरेव स्वयं साक्षाद्यस्य हृदयं न विसृजति न मुंचति । कथंभूतः । अवशेनाप्यभिहितमात्रोऽप्यघौघं नाशयति यः सः तत्किं न विसृजति । यतः प्रणयरसनया धृतं हृदये निबद्धमंघ्रिपद्मं यस्य स भागवतप्रधान उक्तो भवति ॥ ५५ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां द्वितीयोऽध्यायः ॥ २ ॥ मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये ॥ तृतीये तूत्तरं दत्तमार्षभैर्मुनिभिः पृथक् ॥ १ ॥ विष्णोर्मायामिदं

विमृश्यात् नो राज्यहानिः कदापि मा भवत्वेतदर्थं मनसि निधाय सेव्यादित्यर्थः ॥ ५३ ॥ भगवत्पदारविंदाच्चलनाभावे कारणमाह—अपि चेति । विषयाणामभिसंधिनाऽभिलाषेण कामेन हृदयस्थमनोरथेन । स तु कामनोद्भवसंतापस्तु । उरुविक्रमावन्यत्राविद्यमानौ पादन्यासौ ययोस्तथाभूतौ । वेदितव्यं ज्ञेयं ब्रूते इति कंठतो ज्ञातव्यमित्यर्थः ॥*॥ तदेव दृष्टांतमुपपादयति—चंद्रिका तापहारिणी दीप्तिः । यादृश इत्युत्तरं हि स्वतंत्रतया भेददर्शनाभावपूर्वका विरततत्पदारविंदनिमग्नत्वमेव तत्स्वभाव इत्यर्थः ॥ ५४ ॥ भागवतोत्तमोत्तमलक्षणमाह—'सर्वं वाक्यं सावधारणम्' इति न्यायेन हरिरेवेति यस्य पुंसः अवशेन स्खलनादिना अभिहितमात्रः श्रद्धादिराहित्येनोच्चारितमात्र एव "सकृदुच्चारयेद्यस्तु जगन्नाथेति हेलया । ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥" इत्याद्युक्तेरघौघं पापसमूहं नाशयति । हृदयात्यागमाशंकते—तत्किमिति । प्रणयरशनया प्रेमरज्ज्वा । यद्यपि विभुत्वेन न कस्यापि हृदयं विसृजति तथापि सर्वत्राव्यक्तोऽत्र तु व्यक्त इति विशेषः ॥ * ॥ **दीपि०**—भक्तो न विसृजतीति किं वक्तव्यं हरिरेव स्वयमित्येवकारार्थः । साक्षादिति । भक्तस्यानवरतस्फूर्तिविषयः सन् असाक्षात्तु न कस्यापि हृदयं विसृजति सर्वांतर्यामित्वादिति । साक्षात्पदमितरव्यावर्तकम् । अवशेनापि किं पुनः सावधानतया अभिहितमात्रोपि किं पुनर्द्ध्यातः सन् । तत् भक्तहृदयम् । किं कुतः भक्तो भवति—भागवतप्रधानशब्देन मुख्यतया वाच्यो भवति निरुक्तलक्षणानां सामस्त्येनात्र संभवादिति भावः ॥ * ॥ **संदर्भः**—अत्र हरिः स्वयं न विसृजति तेन धृतांघ्रिपद्मश्चेति परस्परपरमासक्तिर्दर्शिता । सर्वत्र तत्प्रेमस्फूर्तिपक्षे तु तादृशगुणे तत्र भगवति को न रज्येदिति तदभिप्राय इति भावः । अत्र विशेषजिज्ञासायां भक्तिसंदर्भोऽन्वेष्यः ॥ * ॥ **विश्वनाथस्तु**—हरिरेव तस्य हृदयं स्वयं न मुंचति तत्र कल्मषकुञ्जराणां कुतो वार्तेत्याह—यः खल्ववशेनापि कदाचिदभिहितमात्रोपीति तैर्व्याख्यातम्, किं पुनः सरसास्वादं येन प्रतिक्षणमभिभाषित इति भावः । एतेन यद्ब्रूत इत्यस्योत्तरमभिव्यञ्जितम् । ननु कथं तदीयहृदयमंदिरान्न निर्गच्छति तत्राह—प्रणयरसेनाति । तैर्व्याख्यातम् । यथा प्रेमवशीकृत्य यशोदयोदर उलूखले बद्धस्तथा सर्वजीवान्मायाशृंखलया निबध्नन्स भक्तजीवैः प्रेमशृंखलया निबध्यत इति भावः ॥ ५५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ माया च तत्तरणं मायातरणं च ब्रह्म च कर्म च ते प्रश्नास्तेषां चतुष्टयं यस्मिंतस्मिंस्तृतीयेऽध्याये ( १ ) । परस्य पूर्णस्य । मायिनां मानं माज्ञानं तद्यातुं शीलं येषां ते मायिनः । यद्वा—मातुं ज्ञातुं शीलं येषां ते, तेषां ज्ञानिनामित्यर्थः । नोऽस्मभ्यम् ॥ * ॥ **दीपि०**—ईशस्य मायानियंतुरत एव मायातः

नानुतृप्ये जुषन्युष्मद्वचो हरिकथामृतम् ॥ संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥२॥ अंतरिक्ष उवाच ॥ एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ॥ ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥ ३ ॥ एवं सृष्टानि भूतानि प्रविष्टः पंचधातुभिः ॥ एकधा दशधात्मानं विभजञ्जुषते गुणान् ॥ ४ ॥

पश्यन्नित्युक्तमतो मायां पृच्छति । परस्येति । हे भगवंतः भवंतोऽस्मान्ब्रुवंतु ॥ १ ॥ ननूक्तलक्षणो भागवतो भूत्वा कृतार्थः स्याः किं बहुप्रश्नैरत आह । नानुतृप्य इति । संसारतापैर्नितरां तप्तोऽहं तस्य तापस्य भेषजं हरिकथामृतरूपं युष्मद्वचो जुषञ्जुषमाणो नानुतृप्यामि ॥ २ ॥ मायायाः स्वरूपतो निरूपणासंभवात्सृष्ट्यादिकार्यद्वारेण निरूपयितुमाह । एभिरिति । आद्यः पुरुषो यया शक्त्या भूतानामात्मा कारणभूतः एभिः स्वसृष्टैर्महाभूतैरुच्चावचानि भूतानि ससर्ज । एषा माया भगवत इति चरमश्लोकपादस्य प्रतिश्लोकमनुषंगः । किमर्थं ससर्ज । स्वमात्रात्मप्रसिद्धये स्वं मिमीते प्रमिमीते उपास्ते यः स स्वमाता तस्यात्मनो जीवस्य प्रकृष्टायै सिद्धये । यद्वा स्वांशभूतानां जीवानां मात्राप्रसिद्धये विषयभोगाय आत्मप्रसिद्धये मोक्षाय चेत्यर्थः । तदुक्तं वेदस्तुतौ । "बुद्धींद्रियमनःप्राणाञ्जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च" इति ॥ ३ ॥ एवं जीवोपकरणार्थं पंचधातुभिर्महाभूतैः सृष्टानि भूतान्यंतर्यामिरूपेण प्रविष्ट एकधा मनसा दशधा

परस्य मायिनां मायया स्वशक्त्यान्यजीवमोहकानां ब्रह्मादीनामपि मोहिनीं बुद्ध्यावरकां किं पुनरन्येषां यूयं भगवन्तः 'उत्पत्तिं प्रलयं चैव' इत्याद्युक्तभगवल्लक्षणयुक्ता अतो ब्रुवंत्वित्यर्थः । व इति सभ्याद्यभिप्रायं बहुत्वम् ॥ १ ॥ अत्राक्षिपति—नन्विति ॥ * ॥ हरिकथामृतमिति । मायावर्णनेऽपि तत्स्वभावत्वात्तत्प्रधानमेव तव वचो भवेदिति भावः । इति **संदर्भः** ॥ * ॥ **विश्वनाथः**—युष्मत्संगार्थिनो मे युष्मद्वचोमृतपानलोभस्य दुर्वारत्वमेव प्रश्ने कारणमिति भावः ॥ २ ॥ मायायाः शक्तित्वेन कार्यैकगम्यतयाऽनिर्वचनीयत्वेन साक्षाद्वक्तुमशक्यत्वात्कार्यद्वारा तदवगमाय सर्गमाह—मायाया इति । स्वमात्मानं प्रमिमीते जानाति । प्रकृष्टायै मोक्षरूपायै । विना संसारानुभवं वैराग्यानुत्पत्तेर्मोक्षासंभवादित्यस्वारस्यादाह—यद्वेति । इत्यर्थ इति—विषयानुभवोत्तरं तत्तैक्ष्ण्यज्ञानाद्वैराग्योत्तरं विचारान्मोक्षो भवत्येवेति भावः । अत्रार्थे प्रमाणमाह—तदुक्तमिति । महाभुजेति क्षत्रधर्मपरत्वेन शुद्धान्तःकरणत्वेन प्रश्नौचित्यमाह ॥ * ॥ अंतरिक्ष इति । अंतरिक्षशब्दस्योर्द्ध्वाधोलोकमध्यवर्तिस्थानवाचित्वात् तथा मायांतःपतितस्य तदभिभाव्यत्वेन तद्वर्णनासंभवात् सिद्धस्यापि ब्रह्ममात्रानुभवित्वेन तदसंभवान्मध्यस्थस्यैव तन्निरूपणकर्तृत्वमित्यभिप्रायेणांतारिक्ष उवाचेत्युक्तम् । स्वरूपत इति—मायाया नीरूपत्वेन स्वरूपतो निरूपणं न संभवतीति सृष्ट्यादिलक्षणं यन्मायाकार्यं तद्वारेण तद्वारीकृत्य मायां निरूपयितुं सृष्ट्यादिमायाकार्यमाहेत्यर्थः । पूर्वार्थे स्वमातृशब्दस्य जीववाचकत्वाप्रसिद्धेः सृष्टेः—पुरुषार्थचतुष्टयार्थत्वाभावाच्च यद्वेत्याह स्वशब्देन जीवपरामर्शस्तस्य स्वीयत्वेन स्वांशत्वात् । आत्मप्रसिद्धिरात्मसाक्षात्कारः । द्वंद्वांते श्रूयमाणत्वात्प्रसिद्धिशब्दस्य प्रत्येकमभिसंबंध इति प्रतिपत्तिगौरवादित्यर्थ इत्युक्तमिति **दीपिका** ॥ * ॥ **संदर्भस्तु**—भक्तार्थ एव सृष्टौ मुख्यः प्रयत्न इति प्रथमार्थे दार्शितम्, एतदेव वास्तवं प्रयत्नांतरस्यानुषंगिकत्वात् ॥ * ॥ **विश्वनाथस्तु**—गुणकार्याणां सृष्टिस्थितिसंहाराणां निरूपणादेव गुणा निरूपितास्स्युः गुणैश्च निरूपितैः स्वत एव गुणमयी माया निरूपिता स्यादित्यभिप्रेत्याह—एभिरिति । भूतात्मा परमेश्वरः उच्चावचानि देवनृतिर्यगादीनि ससर्ज, किमर्थम्, स्वमात्रात्मप्रसिद्धये स्वीयानां जीवानां मात्राणां विषयप्राप्तीनामात्मनः स्वप्राप्तेश्च या प्रकृष्टा सिद्धिस्तदर्थम् । तदुक्तं वेदस्तुतौ "बुद्धींद्रियमनःप्राणाञ्जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥" इति ॥ ३ ॥ जीवकलया ब्रह्मैव भोगायतने शरीरे प्रविष्टः कर्मफलं भुंक्ते परमात्मरूपेण स्वांशभूतान्भोजयति चेत्याह—तत्तद्विषयान्मनआदिविषयान्संकल्पादीन् । इत्यर्थ इति—अंतर्भाविताणिजर्था

गुणैर्गुणान्स भुंजान आत्मप्रद्योतितैः प्रभुः ॥ मन्यमान इदं सृष्टमात्मानमिह सज्जते॥५॥कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत् ॥ तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरम्॥६॥इत्थं कर्मगतीर्गच्छन्बह्वभद्रवहाः पुमान्॥आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः॥७॥ धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ॥ ८ ॥ शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि ॥ तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति ॥ ९ ॥

बाह्येंद्रियरूपेणात्मानं विभजन्गुणांस्तत्तद्विषयाञ्जुषते जोषयतीत्यर्थः । यद्वा तमात्मानं प्रति गुणान्विभजन् जुषते प्रीयत इत्यर्थः ॥ ४ ॥ स च जीव आत्मनांतर्यामिणा प्रद्योतितैर्गुणैरिंद्रियैर्गुणान्विषयान्भुंजान इदं सृष्टं शरीरमात्मानं मन्यमान इह शरीरादौ सज्जते । अत एव संसरतीति भावः ॥ ५ ॥ ननु कर्माणि भुंजानः कथं सज्जते भुंजानो भोगसमाप्तौ मुच्यत इति चेत्तत्राह । कर्माणीति । कर्मभिः कर्मेन्द्रियैश्च सनिमित्तानि सवासनानि कर्माणि कुर्वंस्तत्तत्पूर्वकर्मफलं च गृह्णन्नयं देहभृद्भ्रमतीह संसारे न तु मुच्यते । कथंभूतं कर्मफलम् । सुखेतरं सुखदुःखात्मकम्॥६॥ननु कियंतं कालं भ्रमति तदाह । इत्थमिति । बहून्यभद्राणि बहंतीति तथा ताः। सर्गप्रलयावुत्पत्तिमरणे ॥ ७ ॥ एवं मायामयीं सृष्टिमुक्त्वा प्रलयं दर्शयितुमारभते । धातूनां महाभूतानामुपप्लवे नाशहेतावासन्ने व्यक्तं कार्यं द्रव्यं स्थूलं गुणः सूक्ष्मं तदात्मकमव्यक्तायाव्यक्तं प्रति नेतुमाकर्षति ॥ ८ ॥ नाशहेतूनाह । शतवर्षेति । तस्मिन्काले उपचितश्चासावुष्णश्चासावर्कश्च । यद्वा तेन कालेनोपचितमुष्णत्वं यस्य सः ॥ ९ ॥

श्रयणमत्र कार्यं, सेवयतीति भावः । प्रकारांतरेणार्थसिद्धावभूतनत्राश्रयणमनुचितमिति मत्वाह–यद्वेति । योंतर्यामिरूपेण प्रविष्टस्तमित्यर्थः । प्रतिगुणान् गुणंगुणं प्रति । इत्यर्थ इति–पृथक्पृथग्विषयमहं पश्याम्यहं शृणोमीत्येवं गृह्णन्प्रीतिमाप्नोतीति भावः ॥ * ॥ **दीपिकापि**–जीवोपकरणार्थं जीवभोगार्थं भूतानि शरीराणि । आत्मस्थं जीवं मनआदितादात्म्याध्यासेन तत्तद्रूपत्वेन विभजन्भेदविशिष्टं कुर्वंस्तत्तीद्वषयान्सुखदुःखशब्दस्पर्शादीञ्जोषयति भोजयति । तदुक्तं प्रथमे–" असौ गुणमयैर्भावैर्भूतसूक्ष्मेंद्रियात्मभिः " इत्यादिपूर्वार्थेन्तर्भावितणिजर्थकल्पनातो गौरवं मत्वाह–यद्वेति । तं मनोबाह्येंद्रियरूपेणैकधा दशधा संतमात्मानं जीवं प्रति गुणान्सुखादिशब्दादिविषयान् विभजन् ददत् प्रीयते प्रसन्नो भवतीत्यर्थः ॥ * ॥ **संदर्भः**–अत एव जुषते गुणानिति " गुणदोषदृशिर्दोषो गुणस्तूभयवार्जितः । न मय्येकांतभक्तानां गुणदोषोद्भवा गुणाः ॥" इत्यादिन्यायेन तादृशभक्तानां स्वप्रेमतद्विलासरूपाण्येव प्रीत्या सेवत इत्यर्थः ॥ * ॥ **विश्वनाथः**–सृष्टिमुक्त्वा स्थितिमाह–एवमिति त्रिभिः । अन्यत्तैः ॥ ४ ॥ यद्वा–गुणैर्गुणात्मकान्तःकरणवृत्तिभिः । स्वप्रतिबिंबव्याप्तेरिति । आदिनेंद्रियादिग्रहः ॥ * ॥ स च स तु जीवः प्रभुः प्रभ्वंशत्वाद्यत्किंचिज्ज्ञानादिशक्तियुक्तोपीत्यर्थः । तत्र कारणं तु ' भयं द्वितीयाभिनिवेशतः ' इत्यादावेव दर्शितम् । यद्वा–स आद्यः पुरुष आत्मना प्रकाशितैर्गुणैः कारुण्यादिभिर्हेतुभिरुदितान् गुणान्भक्तप्रेमतद्विलासान्भुंजान आस्वादयन् इदं सृष्टं भक्तशरीरमात्मानमात्मदेहमेव मन्यमान इह भक्तशरीरे सज्जते ' साधवो हृदयं मह्यम् ' इत्यादेः । इति **संदर्भः** ॥ * ॥ **विश्वनाथ**स्वामिनोरेकमेव व्याख्यानम् । प्रकर्षेण देवतिर्यगादिषु भवतीति प्रभुरियान्भेदः ॥ ५ ॥ पुनरप्याक्षिपति–नान्विति । इह संसारे । तत्तत्कर्मफलं तस्यतस्य कर्मणः फलम् ॥ * ॥ साधारणजीवानां गतिमाह–अत एवासक्तत्वादेव । संसरति जन्ममरणादिना भ्रमति । कर्माणीति–सुखं च तदितरच्चेति सुखेतरम् । विशेषणयोः कर्मधारयः । पुंस्त्वमार्षम् ॥ ६ ॥ भ्रमणकालावधिं पृच्छति–नन्विति । आभूतसंप्लवात् जगत्प्रलयपर्यंतम् । अवशः कर्माधीनः ॥ * ॥ आभूतसंप्लवाद्भूतसंप्लवमभिव्याप्य महाप्रलयपर्यंतामित्यर्थः । आङ्तेति पाठे भस्य ह्रश्छांदसः । अवशः प्रकृत्यधीनः ॥ ७ ॥ आसन्ने प्राप्ते । अव्यक्तं प्रति नेतुं कर्षति, प्रकृत्यवशेषं कर्तुमिच्छतीत्यर्थः ॥ * ॥ आसन्ने सविधमाप्ते सति द्रव्यं महाभूतानि गुणाः महदादयः अव्यक्तं प्रधानं प्रति ॥ ८ ॥ उल्बणा भयंकराः । अर्कवृद्धेरश्रवणादस्वारस्येनाह–यद्वेति । तेन

पातालतलमारभ्य संकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः ॥ १० ॥ सांवर्तको मेघगणो वर्षति स्म शतं समाः ॥ धाराभिर्ह
स्तिहस्ताभिर्लीयते सलिले विराट् ॥ ११ ॥ ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ॥ अव्यक्तं विशते सूक्ष्मं निरिंधन इवानलः ॥ १२ ॥ वायुना
हृतगंधा भूः सलिलत्वाय कल्पते ॥ सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते ॥ १३ ॥

ऊर्ध्वशिख ऊर्ध्वज्वालः । विष्वक्सर्वतः । ईरितः ॥ १० ॥ सांवर्तकः प्रलयकर्ता । धाराभिर्न तु बिंदुभिः । हस्तिहस्ताभिस्तत्प्रमाणाभिः ॥ ११ ॥ तत उपाधिलयाद्वै
राजः पुरुषोऽव्यक्तं कारणं प्रविशति । ननु "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशंति परं पदम्" इति स्मृतेः "यावदधिकारमवस्थितिरधि
कारिकाणाम्" इति न्यायाच्च वैराजशब्दाभिधेयस्य च ब्रह्मणः परमभागवतत्वान्मोक्ष एव संगच्छते नान्येषामिव कारणमात्रप्रवेशः । सत्यम् । अश्वमेधादिना सत्यलोकं गता
नामप्यभक्तानामावृत्तिश्रवणादभक्तत्वे च ब्रह्मणोऽपि प्रकृतौ लयः पुनरुत्पत्तिश्चेति मोक्षदौर्लभ्यसूचनायैवमुक्तम् । वस्तुतस्तु तस्य मोक्ष एवेत्यविरोधः । यद्वा केनापि
प्रमाणेन न व्यज्यत इत्यव्यक्तं ब्रह्मैव तत्प्रवेशेन च मोक्ष एवोक्त इति द्रष्टव्यम् ॥ १२ ॥ एवं विराजो लयमुक्त्वा तत्कारणानां महदादिपृथिव्यंतानां प्रातिलोम्येन

कालेन प्रलयसमयेन उष्णत्वमिति भावप्रधानो निर्देशः ॥ * ॥ **दीपिका**—नाशहेतूननावृष्ट्यादीन् । पूर्वार्थेन "कर्मभिर्वर्द्धते चासौ ह्रसते च यथा रवेः" इत्युक्तेरर्कस्योपाचितत्वासंभवादाह—यद्वा, उष्णमिति
भावप्रधानो निर्देशः । अत एवोष्णत्वमिति व्याख्यातम् ॥ * ॥ **संदर्भः**—उपचितः प्रवृद्ध उष्णोत्युष्ण इति कर्मधारयः ॥ ९ ॥ ० ॥ * ॥ ईरितः प्रेरितः ॥ १० ॥ स्मेति पादपूरणे । तत्प्रमाणाभिर्गजशुंडादंडतुल्याभिः ।
विराट् ब्रह्माण्डम् ॥ * ॥ संवर्तकः तदग्निधूमाभ्यां सूर्याकृष्टरसेन जातः, धूमज्योतिःसलिलमरुतां सन्निपातस्यैव मेघत्वात् ॥ ११ ॥ विराजि ब्रह्माण्डे वर्तत इति वैराजः पुरुषो ब्रह्मा । अत्राशंकते—नन्विति । आधिका
रिणां ब्रह्मादीनां यावदधिकारमधिष्ठितपदस्थित्यंतमवस्थितिः स्थितिस्ततो मोक्ष इति सूत्रार्थः । सत्यमर्द्धांगीकारे । नहि ब्रह्मणोऽभागवतत्वमज्ञानित्वं च यतस्तत्सेविनामपि "ये त्वनन्येन भावेन भावयन्त्यात्मभावनम् । तेषां
सुपक्वयोगानां न कुतश्चित्पराभवः ॥" इत्युक्तेः पराभवशब्दोदितः संसारो न भवति कुतस्साक्षात्तस्य स चेत्यरुच्याह—यद्वेति ॥ * ॥ **दीपिका**—व्यष्टिजीवैः सहोपाधिलयाद्व्यष्टिजीवानामपि लयो वैराज एव ज्ञेयः, वैराजः
समष्टिजीवः । अव्यक्तं प्रधानम् । ते ब्रह्मोपासकाः प्रलयपरस्य द्वितीयपरार्धस्य कृतात्मानः शुद्धचित्ताः । सूत्रार्थस्तु—अधिकारिकाणां लौकिकस्थितिहेतुषु वेदप्रवर्तनचराचरसृष्ट्याद्यधिकारेषु नियुक्तानां योजितानामवांत
रतमो ब्रह्मादीनां यावदधिकारं लोकव्यवस्थासु स्वामित्वमधिकारस्तमनतिक्रम्य तत्प्रापकं प्रारब्धं यावदस्ति तावत्कालं जीवन्मुक्तत्वेन स्थितिः, प्रारब्धक्षये तु प्रतिबंधकाभावाद्विदेहमुक्तिरित्यर्थः । अन्येषां कार्याणामिव ।
सत्यमित्यर्द्धांगीकारे एवमुक्तं ब्रह्मणोपि प्रकृतिप्रविष्टत्वमुक्तमित्यविरोधः । अन्तारिक्षवाक्यस्य श्रुतिसूत्रयोश्च विरोधो नास्तीत्यर्थः । पूर्वार्थे मोक्षदौर्लभ्यलक्षणस्य प्रयोजनस्य कल्पनागौरवादतो यद्वेत्युक्तम् । यदि
अव्यक्तशब्देन ब्रह्मैवोच्यते तदा तत्प्रवेशेन मोक्षस्यैवाभिहितत्वाच्छ्रुतिसूत्राभ्यां विरोध एव नास्तीति न कल्पनागौरवमपीति स्वारस्यम् ॥ * ॥ **संदर्भः**—तत इति । पूर्वं तु व्यष्टिजीवानामपि लयो ज्ञेयः । वैराजोऽत्र समष्टि
जीवः ॥ * ॥ **विश्वनाथः**—समष्टिजीवो ब्रह्मा । अव्यक्तं प्रकृतिम् । अत्र ब्रह्मणोऽपि कर्मिज्ञानिभक्तत्वेन त्रैविध्यात्कस्यचित्पुनरावृत्तिः कस्यचिन्मुक्तिः कस्यचित्प्रेमवत्पार्षदप्राप्तिश्चेति द्रष्टव्यम् । "आ ब्रह्मभुवनाल्लोकाः
पुनरावर्तिनोऽर्जुन" इति । "विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोः" इति । 'ब्रह्मणा सह ते सर्वे' इत्यादिभ्यः ॥ १२ ॥ एवमित्थम् । विराजो ब्रह्मांडस्य । तत्कारणानां विराट्कारणानाम् । प्रतिलोम्येनोत्प

हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ॥ हृतस्पर्शोवकाशेन वायुर्नभसि लीयते ॥ कालात्मना हृतगुणं नभ आत्मनि लीयते ॥ १४ ॥
इंद्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ प्रविशंति ह्यहंकारं स्वगुणैरहमात्मनि ॥ १५ ॥ एषा माया भगवतः सर्गस्थित्यंतकारिणी ॥ त्रिवर्णा
वर्णितास्माभिर्भूयः किं श्रोतुमिच्छसि॥१६॥राजोवाच॥ अथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ॥ तरंत्यंजः स्थूलधियो महर्ष इदमुच्यताम् ॥१७॥

लयमाह । वायुनेति । वायोर्हि गंधरसहारित्वं प्रसिद्धम् । सांवर्तकेन वायुना हृतगंधा अत एव गंधस्य व्यावर्तकस्य गतत्वात्सलिलत्वाय कल्पते सलिले लीयत इत्यर्थः । तद्धृतरसं तेन वायुनैव हृतो रसो यस्य तत् ॥ १३ ॥ तमसश्च रूपतिरस्कारित्वं प्रसिद्धम् । सांवर्तकेन तमसा अवकाशेनाकाशेन स्वकारणेन । कालात्मना शब्दस्य हि कालत एव नाशः प्रसिद्धस्तद्रूपेणात्मना ईश्वरेण । आत्मनि तामसाहंकारे ॥ १४ ॥ इंद्रियाणि बुद्धिश्च राजसाहंकारं प्रविशंति । मनो वैकारिकैर्देवैः सह सात्त्विकाहंकारम् । एवं त्रिविधैः स्वगुणैः स्वकार्यैः सहितोऽहमहंकार आत्मनि महति स च प्रकृताविति द्रष्टव्यम् ॥ १५ ॥ त्रिवर्णा त्रिगुणा । मायाश्रवणभीतं राजानं तन्निवृत्त्युपायश्रवणे स्वयं छंदयति । किं भूय इति ॥ १६ ॥ एवमनुकंपितस्तन्निवृत्त्युपायमेव पृच्छति । यथैतामिति । यद्यपि तन्माययाऽतो बुध आभजेत्तमिति भक्तिस्तत्तारकत्वेनोक्तैव तथापि किं भक्तिरेवान्योऽपि वा तत्रोपायोऽस्तीति ज्ञातुं पुनः प्रश्नः । अकृतात्मभिरवशीकृतांतःकरणैः । स्थूलधियः स्थूले

त्तिवैपरीत्येन । अत एव हृतगंधत्वादेव । व्यावर्तकस्य जलादेर्व्यावृत्तिजनकस्य । गतत्वान्नष्टत्वात् । इत्यर्थ इति—यद्धर्मव्यावृत्ता जलपार्थक्यमिता तद्धर्मलये तदेव भवतीति भावः । ज्योतिष्ट्वाय तेजस्त्वाय । पूर्ववद्व्यावर्तकधर्माभावादित्यवधेयमत्रापीति ॥ * ॥ **दीपिका**—सांवर्तकेन प्रलयकर्त्रा वायुना तद्बहिरावरणरूपेण । अत एव गन्धस्य हृतत्वादेव व्यावर्तकस्य जलादिभ्यो भेदकस्य । हृतगन्धेत्युपलक्षणम् हृतस्पर्शा च काठिन्यस्य स्पर्शविशेषरूपत्वेन वायुगुणत्वात्स्पर्शस्यापि वायोरेव प्रवेश इत्यर्थः ॥ * ॥ इत्थमेव **संदर्भविश्वनाथौ** ॥१३॥ नभसि आकाशे । तद्रूपेण कालरूपेण निमित्तभूतांतराभावेन शब्दांतरानुत्पत्तौ पूर्वशब्दानां कालेन नाशात्कालात्मनेति । हृतो गुणः शब्दो यस्य तत्तथा आत्मनि कारणे 'आत्मा कारणब्रह्मणोः' इति धरणिः । तथा च नभसः शब्दतन्मात्राद्वारा तामसाहंकार एव कारणमत उक्तं तामसाहंकार इति ॥ * ॥ **दीपिका**—प्रलयकर्त्रा तमसा वाय्वावरणमारभ्य प्रकृत्यावरणव्यापकेन 'चत्वारि स्पर्शवंति हि' इत्युक्तेराकाशेस्पर्शाभावात्तस्य स्पर्शहारित्वम् । कालात्मनेत्यर्द्धकम् ॥ १४ ॥ अहंकारं यथायथं राजसाहंकारं सात्त्विकाहङ्कारं च आत्मनि स्वकारणे महत्तत्वे स च महाननुक्तोपि प्रकरणाज्ज्ञेयः ॥ * ॥ हि यतः शब्दस्य क्षणत्रयरूपत्वात्कालत एव नाशः प्रसिद्धः, शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादिति न्यायात् । तद्रूपेण कालरूपेण । स्वकार्यै भूतेन्द्रियबुद्धिमनोरूपैः त्रिविधोहंकारः । महतोऽत्रात्मत्वं कारणत्वादेव ज्ञेयम् ॥ १५ ॥ एषोक्तविधा त्रयाणां गुणानां वर्णो वर्णनं यस्यां सा तथा । तन्निवृत्त्युपायश्रवणे मायानिवृत्त्युपायाकर्णने । स्वयंछंदयति नियोजयति ॥ * ॥ एषा ईदृशकार्यरूपा तस्या मायाया निवृत्तिस्तरणंतत्रोपायो भक्तियोगस्तच्छ्रवणे छन्दयति स्वयमंतरिक्षः छन्दयतीच्छां कारयति ॥ १६ ॥ एवं पूर्वोक्तरीत्याऽनुकम्पितः किं भूय इत्यादिनानुगृहीतः, तन्निवृत्त्युपायं मायानिवृत्त्योगम् । नन्वयमर्थ उक्तः पूर्वं पुनः कुतः प्रश्न इति चेदाह—यद्यपीत्यादिना । तत्तारकत्वेन मायातारकत्वेन । अन्योऽपि भक्तीतरोपि कश्चित्तत्र मायातरणे । इदं मत्पृष्टम् ॥ * ॥ एवं छंदनेनानुकपितोन्तारिक्षेण कृपाविषयीकृतः । ननु 'शृण्वन्सुभद्राणि' इत्यादिना तदुपायस्तूक्त एवेत्याशंक्याह—यद्यपीति । तत्तारकत्वेन मायातारकत्वेन । अंजस्तरतीति ज्ञानं व्यवच्छिद्यते "क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इत्यादेः ॥ * ॥

प्रबुद्ध उवाच ॥ कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ॥ पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥ नित्यार्तिदेन
वित्तेन दुर्लभेनात्ममृत्युना ॥ गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ १९ ॥ एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ॥ सतुल्यातिशय
ध्वंसं यथा मंडलवर्तिनाम् ॥ २० ॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ॥ शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २१ ॥

शरीरे अहंधीर्येषां ते ॥ १७ ॥ भक्तिव्यतिरेकेण नास्त्यन्य उपाय इत्यभिप्रेत्य भक्तिमेव ससाधनां निरूपयति । तत्र प्रथमं वैराग्यद्वारा गुरूपसत्तिमाह चतुर्भिः ।
कर्माणीति । दुःखहत्यै दुःखप्रतीकाराय । पाकविपर्यासं फलवैपरीत्यम् । मिथुनीचारिणां मिथुनीभूय प्रवर्तमानानाम् ॥ १८ ॥ कर्मभिः साधिता अपि वित्तादयो
न सुखहेतव इति च पश्येदित्याह । नित्यार्तिदेनेति । आत्मनः स्वस्य मृत्युरूपेण । चलैरनित्यैरपायिभिश्च ॥ १९ ॥ एवं लोकं परमिति । कर्मनिर्मितत्वान्नश्वरम् ।
तथा च श्रुतिः । " तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते " इति । किंच वर्तमानसमयेऽपि दुःखयुक्तं पश्येदित्याह । सतुल्याति
शयध्वंसं सह तुल्येनातिशयेन ध्वंसेन च वर्तमानम् । अतस्तुल्ये स्पर्द्धातिशयेऽसूया ध्वंसालोचने भयादिकं चापरिहार्यमित्यर्थः । यथा खंडमंडलवर्तिनां तत्पतीनां
मिथः स्पर्द्धादि तद्वत् ॥ २० ॥ उत्तमं श्रेयो ज्ञातुमिच्छुः । शाब्दे ब्रह्मणि वेदाख्ये न्यायतो निष्णातं तत्त्वज्ञम् । अन्यथा संशयनिरासकत्वायोगात् । परे च ब्रह्मण्यपरोक्षानु

**विश्वनाथः**—यद्यपि 'तन्मायातो बुधः' इत्याद्युक्तेर्भक्त्यैव मायां तरन्तीति राज्ञा निश्चितमेव तदपि तत्रत्यान्विद्वन्मानिनः कर्मिणो दृष्ट्वा पृच्छति—यथेति । अकृतात्मभिरिति 'युगपर्याप्तयोः कृतम् । पर्याप्तः परिपूर्णता'
इत्यमरोक्तेरपूर्णत्वं मंदत्वमतो मंदधीभिर्दुस्तरामपि स्थूलधियः कर्मिप्रभृतयोऽप्यंजः सुखेनैव यथा तरन्ति इदमुच्यतामिति । शुनःपुच्छमालंब्य दुस्तरमपि समुद्रं सुखेन यथा तरन्ति तदुच्यतामिति कश्चित्कमपि यथा पृच्छे
त्तथैव तत्रत्यान्कर्मिणः प्रति सकटाक्षभंगीकः प्रश्नोयं राज्ञो ज्ञेयः ॥ * ॥ **संदर्भस्तु**—वयं तावत् 'शृण्वन्सुभद्राणि' इत्यादिना तदुपायं ज्ञातवंत एव । स्थूलेऽश्वमेधादावेव कर्मणि धीः प्रतीतिर्येषां ते यथांजस्तरन्तीत्यर्थः
॥ १७ ॥ भक्तिरेव मुख्योपाय इत्यभिप्रेत्याह—भक्तीत्यादिना । गुरूपसत्तिं गुरुपार्श्वगमनम् ॥ * ॥ **दीपिका**—प्रबुद्धो हि मायाशयनादुद्बुद्ध इत्युच्यतेऽतो मायातरणोपायवर्णनं तस्यैव संभवतीति प्रबुद्ध एवोवाच । साध
नैर्गुरूपसत्त्यादिभिस्सहितां भक्तिं प्रेमलक्षणाम् । तत्र तेषु साधनेषु ॥ * ॥ **संदर्भस्तु**—अथ प्रथमतस्तेषां तत्र कर्मण्यनादरं जनयति कर्माणीति त्रिभिः । तत्र दृष्टान्तो द्वाभ्यां दार्ष्टांतिकमेकेन ॥ * ॥ **विश्वनाथस्तु**—
कर्मिणो नैव मायां तरन्तीति साक्षादेव विवेकेन पश्येदित्याह—कर्माणीति त्रिभिः ॥ १८ ॥ कर्मभिः कृषिपण्यादिरूपैः । नित्यमागमनकाले रक्षणकाले व्ययकाले चार्तिमतिपीडां ददतीति तथा ते । तथापि दुर्लभेन कृतेप्यनेक
धायासे प्राप्तुमशक्येन । तदुक्तं भर्तृहरिणा "उत्खातं निधिशंकया क्षितितलं ध्माता गिरेर्धातवो मंत्राराधनतत्परेण मनसा नीताः श्मशाने निशाः । त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला लब्धा काणवराट
कापि न मया तृष्णेऽधुना मुञ्च माम्" इति । मृत्युरूपेण धनिनमेव चौरादयो घ्नंतीति भावः । का प्रीतिः किं सुखम् ॥ * ॥ **दीपिका**—अनित्यैर्नश्वरैरपायिभिर्विश्लेषवद्भिः ॥ * ॥ **विश्वनाथस्तु**—वित्तेन का प्रीतिर्न कापी
त्यर्थः । तथैव तेन वित्तेनापि साधितैर्गृहादिभिश्च का प्रीतिर्यतश्चलैः ॥ १९ ॥ एवमेतल्लोकवत् । नश्वरत्वे प्रमाणमाह—तथा चेति । अन्यदाह—किञ्चेति । वर्तमानसमये स्वर्गभोगसमये । यतो दुःखयुक्तमतो हेतोः ।
स्पर्द्धा पराभवेच्छा । अतिशयेऽधिके । असूया दोषारोपणम् । इत्यर्थ इति—ध्वंसादिभयस्यानिवार्यत्वान्न परलोकः सुखहेतुरिति भावः । खण्डमण्डलपतीनामल्पदेशराज्ञाम् । तद्वत्स्पर्द्धादिकमित्यर्थः ॥ * ॥ एवमैहिकलोक
वत् । तथा च नश्वरत्वे प्रमाणम्, लोको भोगः । भयादिकमित्यादिना चिन्तादैन्यग्रहः ॥ २० ॥ यस्मादैहिकामुष्मिकसाधनयोः फलतः स्वरूपतश्च दुःखरूपत्वं तस्मात्तत्परित्यज्य । उत्तमं श्रेयः स्वात्मज्ञानम् । न्यायतस्ता

**तत्र भागवतान्धर्माञ्छिक्षेद्गुर्वात्मदैवतः ॥ अमायया ऽनुवृत्त्या यैस्तुष्येदात्माऽऽत्मदो हरिः ॥ २२ ॥ सर्वतो मनसोऽसंगमादौ संगं च साधुषु ॥ दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ॥ ब्रह्मचर्यमहिंसां च समत्वं द्वंद्वसंज्ञयोः ॥ २४ ॥**

भवेन निष्णातमन्यथा बोधसंचारायोगात् । परब्रह्मनिष्णातत्वद्योतकमाह । उपशमाश्रयमिति ॥२१॥ गुरुरेवात्मा दैवतं च यस्य सः । अनुवृत्त्या सेवया । यैर्धर्मैः । वस्तुत आत्मप्रदश्चोपासकानाम् । यथा बलिप्रभृतीनाम् ॥ २२ ॥ यथोचितमिति । हीनेषु दयां समेषु मैत्रीमुत्तमेषु प्रश्रयं च शिक्षेदित्यर्थः ॥२३॥ शौचं बाह्यं मृज्जलादिभिः । आभ्यंतरं चादंभामानादि शिक्षेत् । तपः स्वधर्माचरणम् । तितिक्षां क्षमाम् । मौनं वृथावाचामनुच्चारणम् । स्वाध्यायमधिकारानुरूपं वेदपाठादिकम् । आर्जवं स्वच्छताम् ।

त्पर्यज्ञानात् । अन्यथा शाब्दब्रह्मनिष्णातत्वाभावे संदेहापाकरणसामर्थ्यं न भवतीति भावः । अन्यथा अपरोक्षज्ञानाभावे संबोधस्य सम्यग्ज्ञानस्यायोगात् । स्वस्यापरोक्षज्ञानं विना शिष्यबुद्धेस्तत्र संचारणं सर्वथा दुष्करं भवति नहि घटाज्ञानवानन्यं प्रति घटं ज्ञापयितुं समर्थो भवतीत्याशयः । उपशमाश्रयं मनोविभ्रमशून्यम् ॥ * ॥ **दीपिका**—तस्माद्विषयभोगस्यासारत्वात्ततो विरज्य गुरुं प्रपद्येतेति वैराग्यद्वारा गुरूपसत्तिः प्रोक्ता । न्यायतो विचारतः । तत्त्वज्ञं यथार्थवेत्तारम् । अन्यथा शब्दब्रह्मणि निष्णातत्वाभावे पुनरन्यथा परब्रह्मणि निष्णातत्वाभावे बोधसंचारं शिष्ये उपदिष्टज्ञानसंक्रमणं शब्दब्रह्मणि निष्णातत्वद्योतकं व्याख्यानोपपत्त्यादिना संशयखण्डनमेवेत्यपि ज्ञेयम् ॥ * ॥ **संदर्भस्तु**—तस्मादेवमेव कुर्वीतेत्याह—तस्मादित्यादिना ॥ * ॥ **विश्वनाथस्तु**—अतः पूर्वप्रोक्ता भक्तिरेव संसारतारणी सैव वेत्रियते शृण्वित्याह—तस्मादिति । शाब्दे ब्रह्मणि वेदे तत्तात्पर्यज्ञापके पुराणादौ च निष्णातं कुशलम् अन्यथा शिष्यस्य संशयच्छेदाभावे वैमनस्ये च साति कस्यचिच्छ्रद्धाशैथिल्यमपि संभवेत् परे ब्रह्मणि निष्णातमपरोक्षानुभवसमर्थम् अन्यथा तत्कृपा सम्यक्फलवती न स्यात् । उपशमाश्रयं क्रोधलोभाद्यवशीभूतम् ॥ २१ ॥ तत्र ततो गुरोः । अमायया नैष्कापट्येनानुवृत्त्यानुकूलाचरणेन । यद्वा—विस्मृतात्मनां बोधेनावरणबाधेनात्मप्रदः । स्वात्मसाक्षात्कारप्रद इत्यर्थः ॥ * ॥ तत्र भागवतानित्यष्टकम् । आत्मा सर्वमूलस्वरूपत्वादसमोर्ध्वानन्दरूपम् । "आनन्दाद्धीमानि भूतानि जायन्ते" इति श्रुतेः । तस्यापि दाता भक्तसात्कर्ता काम्यकर्माधिकारविषयमिदं प्रकरणमित्यापाततोऽश्रद्धामाशंक्य श्रद्धा द्वारभूतानाह—सर्वत इत्यादिना । ततः शुद्धान्तःकरणतया जातश्रद्धांस्तान्प्रति साक्षाद्भक्तिरूपानाह—श्रवणमित्यादिना । तत्र श्रवणमित्यादिना युग्मकम् । ननु पूर्वं यद्यज्ञादिकर्म कृतं यच्च दारादिकं द्रव्यं संचितं तत्तत्किं कर्तव्यं तत्राह—इष्टमिति । एवंरीत्यावस्थायां स्थावरजंगमयोः परिचर्याम् तत उत्कर्षेण नृषु ततः साधुषु ततः श्रीभागवतमात्रेषु यथार्हं शिक्षेत् कृष्ण एवात्मा नाथः परप्रेमास्पदं येषां तेषु श्रीभागवतविशेषेषु तु सौहृदं शिक्षेत् तत्तद्विशेषानुसन्धानक्रमेण मनस्यानयेदित्यर्थः प्रकरणार्थः इति **संदर्भः** ॥ * ॥ तुष्येदित्यस्य द्योतकमाह—आत्मात्मदः आत्मनः स्वस्यात्मानं श्रीविग्रहं ददाति द्रष्टुं स्प्रष्टुं साक्षात्परिचरितुं चेति भाव इति **विश्वनाथः** ॥ २२ ॥ सर्वत ऐहिकामुष्मिकपदार्थेषु । असंगमनासक्तिम् । प्रश्रयं विनयम् । इत्यर्थ इति—न तु प्रमाद्येतेति भावः ॥ * ॥ ० ॥ ॥ २३ ॥ मृज्जलादिभिः "एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश" इत्यादिनोक्तं प्राक्, आदिना मन्त्रोच्चारणादिग्रहः । द्वितीयादिना क्रोधादिग्रहः । अधिकारानुरूपं यस्य वेदस्य तत्रापि यस्याः शाखायाः

सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ॥ विविक्तचीरवसनं संतोषं येन केनचित् ॥ २५ ॥ श्रद्धां भागवते शास्त्रेऽनिंदामन्यत्र चापि हि ॥ मनोवाक्कर्मदंडं च सत्यं शमदमावपि ॥ २६ ॥ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २७ ॥ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ॥ दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम् ॥ २८ ॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ॥ परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ २९ ॥

ब्रह्मचर्यं यस्य यादृगुचितमृतुकाले स्वदारनियमादि । अहिंसां भूतेष्वद्रोहम् । द्वंद्वसंज्ञयोः शीतोष्णसुखदुःखादिरूपयोः समत्वं हर्षविषादराहित्यम् ॥ २४ ॥ आत्मेश्वरान्वीक्षां सच्चिद्रूपेणात्मान्वीक्षां नियंतृरूपेणेश्वरान्वीक्षां च । कैवल्यमेकांतशीलत्वम् । अनिकेततां गृहाद्यभिमानराहित्यम् । विविक्तचीरवसनं विजनपतितानां वस्त्रखंडानां शुद्धानां वा वल्कलानां परिधानम् ॥ २५ ॥ भागवते भगवत्प्रतिपादके । अन्यत्र शास्त्रादौ या अनिंदा ताम् । मनसः प्राणायामैर्वाचो मौनेन कर्मणोऽनीहया दंडम् । सत्यं यथार्थभाषणम् । शमदमावंतःकरणबाह्येंद्रियनिग्रहौ ॥ २६ ॥ हरेर्जन्मकर्मगुणानां श्रवणादि तदर्थे हर्युद्देशेन न तु स्वर्गाद्युद्देशेन अखिलचेष्टितं सर्वं कर्म विशेषतश्च यजनादि यत्तदर्थे शिक्षेत् ॥ २७ ॥ इष्टं दत्तमित्यादयो भावे निष्ठाः । वृत्तं सदाचारः । आत्मनः प्रियं गंधपुष्पादि । दारादीनप्यालक्ष्य परस्मै परमेश्वराय निवेदनं तत्सेवकतया समर्पणं यत्तच्छिक्षेत ॥ २८ ॥ कृष्ण एवात्मा नाथश्च येषाम् । कृष्ण आत्मनो जीवस्य नाथो येषामिति वा तेषु । उभयत्र स्थावरे जंगमे

अधिकारस्तदनुरोधेन जपेदित्यर्थः । आदिना स्त्रीच्छया नियमाभावपरिग्रहः । अन्यस्य सर्वथा यथोक्तमेव कर्तव्यमिति भावः ॥ * ॥ ० ॥ २४ ॥ सर्वत्र ब्रह्मादिस्थावरांतेषु । विजन एकान्तदेशे पतितानामयत्नप्राप्ताना मित्यर्थः, वल्कलानां । भूर्जपत्रादीनाम् संतोषमलंबुद्धिं येन केनचिद्दैववशाऽऽप्तात्यल्पबहुसुसुष्ठ्वसुष्ठुवस्तुनेत्यर्थः ॥:* ॥ सच्चिद्रूपेणेति । “ अस्ति भाति प्रियं रूपं नाम चेत्यर्थपंचकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ ” इत्युक्तेर्वर्तेऽस्ति, अनुभूयते, इति सत्तानुभूतिरूपेणात्मेक्षां ब्रह्मविचारं शिक्षेत्, नियंतृरूपेण तु ईश्वरस्यांतर्यामिणोऽन्वीक्षां विचारं शिक्षेदित्यर्थः । विविक्तपदस्य शुद्धैकांतार्थद्वयवाचित्वाद्विजनपतितानामित्यादि व्याख्यातम् । वाससामिह वस्त्रखंडानामित्येव पाठः, चीरशब्दस्य तत्रैव शक्तेः । वल्कलानामिति तु लक्षणया व्याख्यातम् ॥ २९ ॥ अन्यत्र शास्त्रादौ तर्कमीमांसाज्योतिःकलाविद्यादिष्वित्यर्थः ॥ * ॥ अन्यत्र शिवादि प्रतिपादकशास्त्रादौ या अनिन्दा ताम् । तदुक्तम्—“ विष्णुरेव सदाराध्यः सर्वदेवेश्वरः पुमान् । इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचन ॥ ” इति । अनीहयाऽकामेन । तदुक्तम्—“ नाकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् । यद्यद्धि कुरुते जंतुस्तत्तत्कामस्य चेष्टितम् ॥ ” इति ॥ * ॥ **संदर्भस्तु**—मानसवाचिककायिकविकर्मराहित्यमेव मनआदीनां दण्डः ॥ २६ ॥ यजनादि दानतीर्थावगाहपाठादीनामादिना ग्रहः ॥ * ॥ चान्नाम्नामपि । तदर्थे तत्परिचर्यार्थमेवाखिलचेष्टितं दंतधावनादिराह्निकः सर्व एव व्यापारः ॥ २७ ॥ तत्सेवकतया यथाहं हरिसेवकस्तथा मत्पुत्रादयोऽपीत्यर्थः ॥ * ॥ इष्टं विष्णुसंप्रदानको यागः, दत्तं विष्णुवैष्णवसंप्रदानकदानम्, तप एकादश्यादिव्रतम्, जप्तं विष्णुमंत्रजपः, दारादीन् यत् व्याप्नुवत् । इणः शत्रंतस्य रूपम् । दारादीनां तत्सेवार्थमेव नियोजनं यत् तच्छिक्षेदित्यर्थः ॥ २८ ॥ पूर्वसमासे स्वस्य स्वनाथत्वमनुचितमिव मत्वा समासांतरमाह—आत्मनो जीवस्येति । भगवत्परायणेषु । यद्वोभयत्र भगवति भागवतेषु च तत्रापि नृष्वपि ततोपि स्वधर्मशीलेष्वपि । महत्त्वं च भागवतेषूक्तमेवाभियुक्तैः । “पृथ्वी शेषधृता स शंभुमुकुटे कैलासवासोप्यसौ

परस्परानुकथनं पावनं भगवद्यशः ॥ मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३० ॥ स्मरंतः स्मारयंतश्च मिथोऽघौघहरं हरिम् ॥ भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३१ ॥ क्वचिद्रुदंत्यच्युतचिंतया क्वचिद्धसंति नंदंति वदंत्यलौकिकाः ॥ नृत्यंति गायंत्यनुशीलयंत्यजं भवंति तूष्णीं परमेत्य निर्वृताः ॥३२॥ इति भागवतान्धर्मांञ्छिक्षन्भक्त्या तदुत्थया ॥ नारायणपरो मायामंजस्तरति दुस्तराम् ॥३३॥ राजोवाच ॥ नारायणाभिधानस्य ब्रह्मणः परमात्मनः ॥ निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥ ३४ ॥

च या परिचर्या ताम् । विशेषतो नृषु । तत्रापि साधुषु स्वधर्मशीलेषु । ततोऽपि महत्सु श्रीभागवतेषु ॥ २९ ॥ तैश्च सह संगम्य यत्पावनं भगवद्यशस्तस्य परस्परानुकथनं शिक्षेत् । यद्वा यशसः कथने संस्पर्धादिपरित्यागेनात्मनो मिथो या रतिः रमणं या च तुष्टिः सुखं या च निवृत्तिः समस्तदुःखनिवृत्तिस्तां च शिक्षेत् ॥ ३० ॥ एवं वर्तमानानां परमानंदप्राप्तिमाह स्मरंत इति द्वयेन । भक्त्या साधनभक्त्या संजातया प्रेमलक्षणया भक्त्या ॥ ३१ ॥ अजं हरिमनुशीलयंति तल्लीलामभिनयंति । एवं परं ब्रह्म एत्य प्राप्य निर्वृताः हृष्टाः संतस्तूष्णीं भवंति ॥ ३२ ॥ उपसंहरति । इतीति । भागवतधर्मोत्पन्नया भक्त्या ॥ ३३ ॥ नारायणपरो मायां तरतीत्युक्ते पृच्छति । नारायणाभिधानस्येति । निष्ठां स्वरूपम् । अयं भावः । ब्रह्मैव तावन्नारायण इति भगवानिति परमात्मेति चोच्यते । तदुक्तम् "वदंति तत्तत्त्वविदस्तत्त्वं यज्ज्ञा

कैलासोपि दशाननेन तुलितो बद्धोप्यसौ वालिना । वाली राघवविष्णुना युधि जितो विष्णुः सतां मानसे तस्माद्विष्णुपरायणाद्गुरुतरो नान्योस्ति लोकत्रये ॥ " इति ॥ * ॥ कृष्ण एवात्मनाथः प्राणनाथो येषां ते नृषु सौहृदं स्नेहविशेषम् उभयत्र श्रीभगवति तद्भक्तेषु च महत्सु स्वस्यादरणीयेषु साधुषु स्वतुल्येष्विति **विश्वनाथः** ॥ २९ ॥ तैश्च भागवतैश्च । यत्तदोरुभयोरध्याहारापेक्षत्वमुभयत्र समानमपि भिन्नान्वयापेक्षया सहान्वयस्य लघुत्वेन न्याय्यत्वादाह—यद्वेति । तत्र यशसि संस्पर्द्धा चायमधिकं वर्णयत्यहमतोप्यधिकं वर्णयामीत्येवंरूपा । आदिनाऽसूयादिग्रहः ॥ * ॥ मिथस्तुष्टिः परस्परसंगोत्थसुखम् । आत्मनो मिथो निवृत्तिरिति भक्तिप्रतिकूलविषयभोगात्स्वस्य स्त्रीसंभोगादिलक्षणात् त्वया चेन्निवृत्तं तर्हि मयाप्यद्यारभ्य निवृत्तमित्येव या भोगनिवृत्तिस्तां च शिक्षेत् । टीकायां भगवत्संबंधमंतरा मिथो रत्यादेर्भक्तित्वासंभवाद्यत्तच्छब्दयोरध्याहृतेश्चाह—यद्वेति ॥ ३० ॥ साधनभक्त्या श्रवणकीर्तनादिरूपया । प्रेमलक्षणया परानुरागरूपया । उत्पुलकामुद्गतरोमांचाम् ॥ * ॥ एवं साधनभक्त्या साध्यभक्तिप्राप्तिमाह—स्मरंत इति **विश्वनाथः** ॥ ३१ ॥ अलौकिकाः लोकैर्ज्ञातुमशक्याः वैदिकीर्वाचः लोकाचारविरुद्धा वा ॥ * ॥ अद्यापि कृष्णो न प्राप्तस्तर्हि किं करोमि क्व गच्छामि को मां तं प्रापयेदित्येवं चिंतया रुदंति, क्वचिच्च हसंतीति, गोपवधूचौर्यार्थं तामस्यां रात्रौ कस्यचिद्गोपस्य प्रांगणे कोणस्थतरुतले निह्नुत्य स्थितं कोऽसि त्वं कोसीति तस्या गुरुजनवाचा पलायितुं प्रवृत्तं कृष्णं स्फूर्तिमालक्ष्येत्यर्थः, नंदंति तदपरोक्षानुभवेनानंदं प्राप्नुवन्ति, हा प्रभो एतावद्भिर्दिनैस्त्वामहं प्राप्तोस्मीति वदंति, अलौकिका लोकातीताः, अजं श्रीकृष्णमनुशीलयंति स्वीयश्रोत्रादींद्रियविषयीकुर्वंति, तूष्णीं भवंतीति रसास्वादोद्देशः ॥ ३२ ॥ इत्युक्तरीत्या । तदुत्थया भागवतधर्माभ्यासोद्रेकजातया । अन्यैर्दुस्तराम् ॥ * ॥ आनुषंगिकं फलं कथयन्ससाध्यान्भागवतधर्मान्समापयतीत्युपसंहृतिपदार्थः । इतीति—धर्मान् शिक्षन्निति स्मारयंतश्चेत्येतदंतानामनुष्ठानस्य शिक्षणं तदुत्तरेषां पुलकितत्वरोदनादीनां त्वभिलाषस्य शिक्षणं कदाहमुत्पुलकिततनुर्भवेयमित्येतत्प्रकारकं तदुत्थया शिक्षितभक्तिजनितया उक्तलक्षणप्रेमभक्त्या मायां तरतीत्यानुषंगिकफलमुक्तम् ॥ ३३ ॥ "निष्ठोत्कर्षव्यवस्थास्वरूपांतव्रतपाचने" इति कोशः । उत्कर्षादीनामत्र समाहारद्वंद्वः । अत्राशयमाह—अयं भाव

**पिप्पलायन उवाच॥स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च॥देहेंद्रियासुहृदयानि चरंति येन संजीवितानि तदवेहि परं नरेंद्र॥३५॥**

नमद्वयम् ॥ ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥" इति । तथा । " नारायणे भगवति तदिदं विश्वमाहितम् ॥ गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥ "
इत्यादिषु । तत्र किमेभिः शब्दैर्निर्विशेषं तदेव वस्तूच्यते अस्ति वा कोपि विशेषांश इति ॥ ३४ ॥ अत्रोत्तरम् । स्थित्युद्भवेति । अयमर्थः । अस्य विश्वस्य स्थित्यु
द्भवप्रलयानां हेतुः स्वयं चाहेतुर्हेतुरहितः स नारायण इति परमेव तत्त्वमवेहि । स्वप्नजागरसुषुप्तिषु सदनुवर्तमानं यत् । वक्ष्यति च । 'तुरीयं त्रिषु संततम्' इति ।
बहिश्च समाध्यादौ यत्सत्तद्ब्रह्मेति परमेव तत्त्वमवेहि । देहेंद्रियप्राणमनांसि येन संजीवितानि संति चरंति प्रवर्तंते तत्परमात्मेति परमेव तत्त्वमवेहि । एवं लक्षणभेदैर्नाराय

इति । तत्र पूर्वोक्तेषु वदंतीत्यादिषु स्थलेष्वेभिर्भगवन्नारायणादिशब्दैः निर्विशेषं सदसद्विशेषशून्यं तदेव वेदान्तैकवेद्यं कोऽपि वक्तुं शक्यो विशेषो भेदकोंशो यत्र स विशेषांशः सविशेषः इत्यर्थः ॥ * ॥ **दीपिका**—नारायणा
द्याविर्भावस्य तद्विभूत्याश्रयणमंतरा निरूपकत्वायोगात्, ' अश्वत्थः सर्ववृक्षाणाम् ' इति भगवदुक्तेः । पिप्पलं भगवद्विभूतिरयनमाश्रयो यस्य स तथेति तत्स्वरूपवर्णने तस्यैवौचित्यात्स एवोवाचेत्युक्तम्, तन्नामग्रहणे किं
प्रयोजनमित्याशंक्य प्रयोजनीभूतं व्यंग्यार्थं विशदयति—अयं भाव इति । निर्विशेषणं ब्रह्मैव यावच्छक्तिविशिष्टं चेत्तर्हि पूर्णाविर्भावान्नारायण इतिनामा भगवानुच्यते तदेव तत्त्वं मायाद्यंतर्यामित्वमात्रशक्तिप्रकाशकं चेत्परमात्मेति
चोच्यते । तदुक्तम्—तत्त्वस्य त्रैविध्यमुक्तम् । भगवतो नारायणनामत्वे मानमाह—तत्रैकस्यैव तन्नामत्वे सति विशेषांशस्तत्तन्नामप्रवृत्तिरूपो भेदांशः । इति दीपिका ॥ * ॥ **संदर्भः**—नारायणाभिधानस्य भगवतो ' ब्रह्मेति
परमात्मेति ' इत्यादिप्रसिद्धतत्समुदायतृतीयतया पाठात् । "नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते" इत्यत्र स्पष्टभावित्वाच्च । निष्ठां तत्त्वम् ॥ * ॥ **विश्वनाथस्तु**—नारायणपर इति श्रुत्वा नारायणस्वरूपं पृच्छति—नाराय
णेति । " नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते " इत्युक्तेर्नारायणाभिधानो यो भगवांस्तस्य निष्ठा स्वरूपम् । ननु, स तवेष्टदेव एव गुरूपदेशमार्गेण तस्य स्वरूपं त्वं जानास्येव तत्राह—ब्रह्मण इति । स एव नारायणो
ब्रह्म स एव परमात्मा अत एकस्वरूपस्यैव तस्य त्रितयत्वेन कथने कः प्रकारस्तमहं जिज्ञास इति भावः ॥ ३४ ॥ अत्र पूर्वोक्तप्रश्ने । बुद्ध्यारोहाय स्फुटयति—अयमर्थ इति । हेतुः कारणम् । पुंस्त्वेन नारायणा
क्षेप इत्याह—स नारायण इतीति । सत्त्वस्यैवानुवृत्तिरस्ति नासत्त्वस्येत्यत्र प्रमाणं—वक्ष्यति चेति । सदनुवर्तमानं जाग्रदादीनां सर्वानुभवसिद्धत्वादांतरत्वं समाधेश्चातथात्वाद्बहिष्ट्वमित्यभिप्रायेणोक्तं बहिश्च । समाध्यादावित्यादिना
प्रलयग्रहः । संजीवितानि प्रकाशितानि । एवमित्थं लक्षणानां जगदुत्पादकत्वादिजाग्रदाद्यनुवृत्तत्वदेहेंद्रियादिसंजीवकत्वरूपाणां भेदैः ॥ * ॥ अत्र प्रश्नक्रमेणैवोत्तरं वस्तुतोऽभेदेपि " चयस्त्विपामित्यवधारितं
पुरा ततः शरीरीति विभाविताकृतिम् । विभुर्विभक्तावयवः पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥ " इति प्रवृत्तिनिमित्तरूपविशेषं स्फुटीकरोति । अयमर्थ इति—नारायण इति भगवानिति नारायणनामा भगवा
नित्यर्थः । परमेव पूर्णमेव तत्त्वमवेहि जानीहि । अवैहीति पाठस्त्वसभ्यो वृद्धेरसाधुत्वात् । अनुवर्तमानमनुगतम् । समाध्यादौ वृत्तिनिरोधः समाधिः । आदिना मुक्तावस्थाग्रहः । तत्तुरीयतत्त्वं ब्रह्मेत्युच्यते तदपि परं परमार्थ
स्वरूपमेकमेव तत्त्वमवेहि येन परमात्मना कर्त्रा संजीवितानि प्रवर्तितानि । एवमिति स्वरूपशक्त्यैकविलासमयत्वे सति स्वांशद्वारा सृष्ट्यादिशक्तिमत्त्वं भगवत्त्वं, निरुपाधिविशेष्यमात्रत्वं ब्रह्मत्वं, मायातत्कार्य
प्रेरकत्वलक्षणांतर्यामित्वं परमात्मत्वम्, इत्येवं लक्षणभेदैरित्यर्थः । इति **दीपिका** ॥ * ॥ **संदर्भस्तु**—प्रश्नक्रमेणैवोत्तरमाह—स्थितीति । यत्स्थित्यादिहेतुरहेतुश्च यच्च जागरादिषु सद्बहिश्च येन च संजीवितानि
देहादीनि संति चरंति तदेकमेव परं तत्त्वं स्वप्रश्नक्रमेण नारायणादिरूपं विद्धीति योजनीयम्, तथापि ब्रह्मत्वस्पष्टीकरणाय विपर्ययेण व्याख्यायते तत्रैकस्यैव विशेषणभेदेन तदवशिष्टत्वेन च प्रतिपादनात्, तथैव
तत्तदुपासकपुरुषानुभवभेदाच्चाविर्भावनाम्नोर्भेद इति तात्पर्यम् । एतदुक्तं भवति—स्वयमहेतुः स्वरूपशक्त्येकविलासमयत्वेन तत्रोदासीनमपि प्रकृतिर्जीवप्रवर्तिकावस्थपरमात्मापरपर्यायस्वांशलक्षणपुरुषद्वारा यदस्य सर्ग

**नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेंद्रियाणि च यथाऽनलमर्चिषः स्वाः॥शब्दोपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः३६॥**

णादिनामभिरुच्यमानमपि परमेकमेव तत्त्वं जानीहि ॥ ३५ ॥ अवेहीत्यनेन विषयत्वं प्राप्तं निषेधति । नैतदिति । एतत्परं तत्त्वं मनो न विशति न विषयीकरोति । वागुत वागपि चक्षुश्चात्मा बुद्धिश्च प्राणश्च क्रियाशक्त्या न प्राप्नोत्यन्यानि चेंद्रियाणि । यथाऽनलं स्वाः स्वांशभूता अर्चिषो विस्फुलिंगादयो न प्रकाशयन्ति न दहंति च तथा जडासु मनआदिवृत्तिष्वभिव्यज्यमानस्यात्मप्रकाशस्य च तत्तद्वृत्तिप्रकाशकस्य न तत्प्रकाशविषयत्वम् । "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति । तथा "यतो वाचो निवर्तंते अप्राप्य मनसा सह" इत्यादिश्रुतेः । ननु "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः शब्दगोचरत्वं प्रतीयते तत्राह । शब्दोऽपीति । शब्दोऽप्यात्ममूलमात्मनि प्रमाणं सदर्थोक्तमर्थादुक्तं यथा भवति तथा आह नं साक्षात् । कुतः । बोधकनिषेधतया स्वस्यैव बोधकस्य निषेधरूपत्वात् । "यतो वाचो निवर्तंते अप्राप्य मनसा सह ॥ यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि । यन्मनो न मनुते । न चक्षुषा पश्यति कश्चनैनम्" इत्यादिश्रुतेः । ननु तर्हि नैवाह श्रुतिः किंमिदमुच्यते अर्थोक्तमाहेति तत्राह । यदृत इति । "अथात आदेशो नेति नेति । अस्थूलमनणु । यतो वाचो निवर्तंते । यद्वाचानभ्युदितम्"

स्थित्यादिहेतुर्भवति तद्भगवद्रूपं विद्धि । पुनस्तेनैव येन हेतुकर्त्रात्मांशभूतजीवप्रवेशनद्वारा संजीवितानि संति, देहादीनि तदुपलक्षणानि प्रधानादीनि सर्वाण्येव तत्त्वानि येनैव प्रेरिततयैव चरंति स्वस्वकार्ये प्रवर्तंते, तत्परमात्मरूपं विद्धि । तथा च "तस्मै नमो भगवते ब्रह्मणे परमात्मने" इत्यत्र वरुणकृतश्रीकृष्णस्तुतौ टीका च—परमात्मने सर्वजीवनियंत्रे इत्येषा । जीवस्यात्मत्वं तदपेक्षया तस्य परमत्वमित्यतः परमात्मशब्देन तत्सहयोगी स एव व्यज्यत इति तत्तदविशिष्टत्वेन ब्रह्ममात्रत्वं चैवमुपतिष्ठतीत्याह—स्वप्नेति । यदेव तत्त्वं स्वप्नादौ यदन्वयेन यच्च बहिस्तद्बहिः शुद्धायां जीवाख्यशक्तौ तथा स्थितं ततः परत्रापि व्यतिरेकेण स्थितं स्वय मवशिष्टं तद्ब्रह्मस्वरूपं विद्धीति ॥ * ॥ **विश्वनाथस्तु**—प्रश्नक्रमेणैव प्रथमं नारायणं लक्षयति—स्थितीति । "जगृहे पौरुषं रूपं भगवान्महदादिभिः । संभूतं षोडशकलमादौ लोकसिसृक्षया ॥" इत्याद्युक्तेः । पुरुष एवास्य विश्वस्य स्थित्युद्भवप्रलयानां हेतुः स्वयं त्वहेतुर्हेतुशून्यः श्यामसुन्दराकारश्चतुर्भुजाष्टभुजसहस्रभुजसच्चिदानंदमूर्तिः परमव्योमनाथभूमवासुदेवमहाविष्णुक्षीरोदनाथनृसिंहरामकृष्णादिनामा नारायणो यो भगवच्छब्द वाच्यः स्वप्नादिष्वनुवर्तमानं सव्यापकं वस्तु तदेवं ब्रह्मशब्दवाच्यं येन परमात्मशब्दवाच्येन देहेन्द्रियाणि संजीवितानि तत्परं परमेकमेव तत्त्वमवेहि ॥ ३५ ॥ विषयत्वं ज्ञानविषयत्वं निषेधति तज्ज्ञानं त्वावरणनिवृत्तौ स्वप्रकाशतया न तु विषयतयेत्याह—नैतदिति । अन्येंद्रियाणि श्रोत्रादीनि च । अनलमग्निम् । तत्तत्प्रकाशविषयत्वं तत्तद्वृत्तिप्रकाश्यत्वं श्रुतिप्रमाणादित्याह—"प्राणस्य प्राणम्" इत्यादि । इन्द्रियाविषयत्वेपि न सर्वथाऽविषयत्वमिति शंकते—नन्विति । औपनिषदमुपनिषत्प्रतिपाद्यं तं त्वा त्वामित्यर्थः । शब्दगोचरत्वमुपनिषद्रूपवेदविषयत्वम् । तत्र शब्दगोचरत्वे । शब्दोऽपि वेदोऽपि । अर्थादुक्तं वेदस्यान्यकथने तात्पर्याभावात्तात्पर्येणाह—निषेधावधितयैव बोधेन तद्गतावरणविघटकतया प्राहेत्यर्थः । न साक्षादिदमित्थमेवेति नाहेत्यर्थः । अत्र हेतुमाशंकते—कुत इति । स्वस्यैव वेदस्यैव । अनभ्युदितमकथितम् । अत्राक्षिपति—नन्विति । सर्वनिषेधे किमपि नोक्तं भवतीति । "अथात आदेशः" इति श्रुतिर्वेदस्तुतौ व्याख्यातात्यधुना सौगम्यार्थं पुनराह—अथपदं पञ्चभूतोक्त्यानन्तर्यपरं तस्याः परब्रह्मधीहेतुत्वम्, अतःशब्दार्थ इतिशब्दः पूर्वोक्तपञ्चभूतपरामर्शी तन्निषेधावधि भूतः परमात्मेत्यादेश उपदेश इत्यर्थः ॥ * ॥ **दीपिका**—न विषयिकरोति संकल्पविकल्पविषयं न करोति, वागिंद्रियमपि न वचनविषयं करोति, बुद्धिरपि न निश्चयविषयं करोति, अन्यानि श्रोत्रत्वगादीनि मन आदिवृत्तिषु उपाधितयाभिव्यंजकासु अभिव्यज्यमानस्य यथा करतलोपाधिना रविरश्मयः प्रकटीक्रियन्ते तथा प्रकटीक्रियमाणस्येत्यर्थः । आत्मप्रकाशस्य प्रकाशात्मनो ब्रह्मण इत्यर्थः । तत्तद्वृत्तिप्रकाशकस्य यथा रविरश्मयः

सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदंति जीवम् ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥ ३७ ॥

इत्यादिनिषेधस्य यदवधिभूतं ब्रह्म ऋते विना सिद्धिर्नास्ति सर्वस्य निषेधस्य सावधित्वात् ॥ ३६ ॥ ननु तर्हि प्रमाणाविषयत्वान्नास्ति ब्रह्मेति प्रसज्जेतात आह

करतलाभिव्यंग्या अपि करतलं प्रकाशयंति तथा मनआद्यभिव्यंग्यत्वेपि मनोवागादिवृत्तिप्रकाशकस्येत्यर्थः । न तत्प्रकाशविषयत्वं यथा रविरश्मीनां प्रकाशैकशीलानामप्रकाशमानकरतलादिप्रकाशविषयत्वं न संगच्छते तथा जडीभूतमनआदिप्रकाशविषयत्वं ब्रह्मणो नास्तीत्यर्थः । तत्तद्वृत्तिप्रकाशकत्वे प्रमाणं श्रुतिः "प्राणस्य" इत्यादि । प्राणस्य प्राणं क्रियाशक्तिप्रकाशकम्, चक्षुषश्चक्षुः रूपदर्शनशक्तिप्रकाशकम्, अन्नस्यान्नशब्दवाच्यपृथिवीकार्यस्य घ्राणेन्द्रियस्येत्यर्थः, अन्नं गंधज्ञानवृत्तिप्रकाशकम्, मनसो मनः संकल्पविकल्पवृत्तिप्रकाशकं ब्रह्म ये विदुस्ते तत्त्वज्ञा इत्यर्थः । मनसा सह वाचो यमप्राप्य यतः सकाशान्निवर्तन्ते शंकते—नन्विति । तमिति । हे शाकल्य तं सकारणसूत्रस्याधिष्ठानमौपनिषदमुपनिषद्भिः प्रकाश्यं पुरुषं पूर्णं त्वा त्वां पृच्छामीत्यर्थः । शब्दगोचरत्वं शब्दप्रमाणविषयत्वं प्रतीयत इति कुतो वाग्न विशतीति पूरणीयम् । शब्दोपि उपनिषदाख्यवेदोपि आत्मनि परतत्त्वेऽर्थान्निषेधमुखेन तात्पर्यान्न साक्षादभिधावृत्त्या विधिमुखेनाह स्वस्यैव वेदस्यैव बोधकस्य तात्पर्यवृत्त्या निषेधमुखेन च ज्ञापकस्य निषेधरूपत्वाद्ब्रह्मणो वाग्विषयत्वे निषेधकत्वात् । निषेधात्मकं वेदं लिखति यत इत्यादि—यद्ब्रह्म वाचा नाभ्युदितं न प्रकाशितम्, अभ्युद्यते प्रकाश्यते, मनः कर्तृ यद्ब्रह्म न मनुते संकल्पादिविषयं न करोति, यर्हि वागाद्यविषयं तर्हि प्रमाणाभावात्खपुष्पादिवच्छुतिर्ब्रह्म नैवाहेत्यर्थः । तत्र तस्यामाशंकायां तात्पर्यवृत्त्या ब्रह्मणि वेदस्य पर्यवसानमाह—अथेति । अथ मूर्तामूर्तस्थूलसूक्ष्मपुरुषरूपवर्णनानंतरम् । अत आरोपस्य निषेधार्थत्वान्निषेधद्वारा आदेशो ब्रह्मकर्मक उपदेशो भवति, कीदृश इत्याशंकायामाह—नेतिनेतीति । 'नात्मा वपुः पार्थिवमिंद्रियाणि' इत्यादिवक्ष्यमाणवदिदं ब्रह्म न इदं ब्रह्म नेति । अस्थूलमिति स्थूलादिद्वैतशून्यमित्यर्थः । तथा च परमार्षसूत्रम्—"प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः" इति अस्यैव च विषयवाक्यमिदम् "अथात आदेशः"इति । प्रकृतं प्रकरणप्राप्तमेतावत्त्वमियत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपमभ्यस्तम्, अथात आदेश इत्यादिशब्दः प्रतिषेधति पुनः सर्वस्य निषेधस्य सावधिकत्वाच्छब्द एवार्थतो ब्रह्म ब्रवीति चेति सूत्रार्थः 'शब्दोपि बोधकानिषेधतयात्ममूलम्'इत्यर्द्धपद्येन सूचितो विज्ञेयः,'अर्थोयं ब्रह्मसूत्राणाम्' इति गारुडोक्तेः॥*॥**संदर्भस्तु**—परत्वमेवाह—नैतदिति । वाक् लौकिकी शब्दो वेदोपि अर्थैः स्वाभिधादिवृत्तिभिरुक्ततया यदाह तदपि बोधकानां मनआदीनां निषेधो यत्र तत्तया तेषामविषयतयैवेत्यर्थः । अप्राकृतानंतस्वरूपगुणत्वादिति भावः । न नु सर्वथैवं निःस्वरूपं निर्गुणं चेत्याह—आत्मनः स्वस्य मूलं कारणमिति यद्वत इति यदि च सर्वथैव वक्ति तदा निषेधं वा कुत्र कथं वा कुर्यादित्यर्थः ॥ * ॥ **विश्वनाथस्तु**—भगवत्तत्त्वं मयोपास्यं मदभ्यस्तमेवास्ति किं तु दुर्ज्ञेयं ब्रह्मतत्त्वं विस्तार्य कथयेत्यपेक्षायां ब्रह्मतत्त्वमाह—नैतदिति चतुर्भिः । एतद्ब्रह्म मनो न विशतीत्यादि तैर्व्याख्यातम्, शब्दोप्यात्मनः स्वस्य मूलं ब्रह्मबोधकानिषेधतयाह यस्य बोधकं किमपि नास्ति तद्ब्रह्मेत्येवं रीत्यैवार्थादुक्तमर्थत एवोक्तं न तु शब्दत इदं तदिति निर्देशेनाहेत्यर्थः । " यद्वाचा " इत्यादिश्रुतिभ्यः । ननु " तत्परं परमं ब्रह्म सर्वं विभजते जगत् । ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत ॥" इति हरिवंशोक्तेः, 'ब्रह्मज्योतिः सनातनम् ' इति दशमोक्तेः, " यस्य प्रभाप्रभवतो जगदंडकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम् । तद्ब्रह्म " इति ब्रह्मसंहितोक्तेः । भगवदंगज्योतीरूपं चेद्ब्रह्म तर्हि कथं न मनआदिकं विषयीकरोतीति उच्यते—भगवदंगज्योतिर्हि न मायिकं तृतीयं भूतं किंतु मायातीतं सच्चिदानंदरूपमेव वाङ्मनआदिकं तु मायिकं तत्कथं स्वविषयीकर्तुं शक्नोतु 'शाब्दं ब्रह्मवपुर्दधत् ' 'यन्मित्रं परमानंदं पूर्णं ब्रह्म ' इति " तत्र ब्रह्ममयेशस्य किमुतेक्षामि मर्षिणः " इति " सच्चिदानंदविग्रहः " इत्याद्युक्तेर्भगवद्वपुरपि ब्रह्मैव यद्यपि तदपि तत्कृपाशक्त्याऽतर्क्ययैव प्रापश्चिकलोकगोचरीकृतम् अत एव नीलोत्पलदलश्यामादिशब्दवर्णितं यत्तदप्यप्राकृतनीलोत्पलदलश्याममपि प्राकृतनीलोत्पलवर्णत्वेन भक्तैर्ध्यातमेतादृशमपि तद्वपुः केवलमतर्क्यया तत्करुणयैव भक्तनयनयोराविर्भवति । अतः प्रापश्चिकलोकैर्मनोवचोगोचरीकर्तुमशक्यं केवलं ब्रह्मोपासकैरेव साधनपरिपाके सत्यपि भगवदनुग्रहप्राप्त्यैव ब्रह्माकारेन्तःकरणेऽनुभूयते, इत्यतो वेदेपि " यन्मनो न मनुते " इत्यादि । 'दृश्यते त्वग्र्यया बुद्ध्या' इत्याद्यप्याहेति विवेचनीयम् ॥ ३६ ॥ प्रमाणेनैवार्थसिद्धेः सार्वत्रिकत्वात्तद्विषयत्वानंगीकारे शशविषाणादिवत्तदभावप्रसंगः

सत्त्वमिति । सत्स्थूलं कार्यमसत्सूक्ष्मं कारणं तत्सर्वं ब्रह्मैव भाति । कुतः । यद्यस्मात्तयोः सदसतोः परं कारणम् । कार्यं हि कारणाद्भिन्नं न भवति "वाचारंभणम्" इत्यादिश्रुतेः । ननु कथमेकं बहुविधस्य कारणं तत्राह । उरुशक्ति अनेकशक्तिमत् । उरुर्महती मायालक्षणा शक्तिर्यस्य तँदिति वा । बहुधा भानमेव दर्शयति । आदौ यदेकं ब्रह्म तदेव सत्त्वं रजस्तम इति त्रिवृत्प्रधानं प्रवदंति । ततः क्रियाशक्त्या सूत्रं ज्ञानशक्त्या महानिति तदेव प्रवदंति । ततोऽहमिति जीवं जीवोपाधिमहंकारं च तदेव प्रवदंति । ततश्च ज्ञानक्रियार्थफलरूपतया ज्ञानशब्देन देवताः क्रिया इंद्रियाणि अर्था विषयाः फलं तत्प्रकाशः सुखदुःखादि वा तद्रूपतया ब्रह्मैव भाति । नहि सर्वस्वरूपेण

स्यादिति शंकते—नन्विति । सर्वस्य ब्रह्मरूपत्वे हेतुमाशंकते—कुत इति । कार्यस्य कुंडलादेः कारणात्स्वर्णाद्भिन्नत्वादर्शनादिति भावः । पुनराशंकते—अनंतशक्तिमतो बहुधा भवनं न विरुद्धम् । अनंतशक्तिकल्पने गौरवमालक्ष्याह—उरुर्महतीति. । मायायां सर्वसंभवस्य प्रतिपादितत्वादित्यर्थः । आदौ सृष्ट्यादौ । ततः प्रधानरूपेण भवनोत्तरम् । तदेव यत्सृष्ट्यादावेकमित्यर्थः । तत उभयशक्तिप्रधानमहद्रूपेण भवनोत्तरम् । ततश्चाहंकार सृष्ट्युत्तरम् । इति भाव इति—अनुगततत्सत्त्वभानविवेके प्रपंचस्यासत्त्वनिर्णये निर्णेतुः स्वसिद्धयेऽन्यप्रमाणापेक्षैव नोदेतीत्याशयः ॥ * ॥ तर्हि यदिशब्देन निषेध एव पर्यवसान इतिशब्दस्य निषेध एव प्रामाण्यं न ब्रह्मणि तदा प्रमाणाविषयत्वान्निष्प्रमाणकत्वान्न ब्रह्मास्ति, यन्निष्प्रमाणकं तदसदिति व्याप्तेः । ततः प्रधानकल्पनानंतरं तदेव ब्रह्मैव, ततः महत्कल्पनानंतरं ततश्चाहंकारकल्पनानंतरं देवताः सात्त्विकाहंकारकार्याः इंद्रियाणि राजसाहंकार कार्याणि विषयास्तामसाहंकारकार्याः, तत्प्रकाशो विषयप्रकाशः सुखादि सुखं सात्त्विकम्, आदिना दुःखमोहयोर्ग्रहः । सर्वस्वरूपेण प्रमाणप्रमेयादिरूपेण स्वतो भासमानस्य स्वप्रकाशस्य ॥ * ॥ अथ **संदर्भः**—शक्तेस्तत्स्वाभाविकरूपत्वमाह—ब्रह्मैव उरुशक्ति अनेकात्मकशक्तिमद्भाति । एवकारेण ब्रह्मण एव सा शक्तिर्न तु कल्पितेति स्वाभाविकरूपत्वं शक्तेर्बोधयति—तत्र हेतुः, यद्ब्रह्म सत्स्थूलं कार्यं पृथिव्यादिरूपम् असत्सूक्ष्मं कारणं प्रकृत्यादिरूपं तयोर्बहिरंगवैभवयोः परं स्वरूपवैभवं श्रीवैकुंठादिरूपं तटस्थवैभवं शुद्धजीवरूपम् अन्यथा तत्तद्भावासिद्धिः, किंरूपतया तत्तद्रूपज्ञानक्रियार्थफलरूपतया, महदादिलक्षणज्ञानशक्तिरूपत्वेन, सूत्रादिलक्षण क्रियाशक्तिरूपत्वेन, तन्मात्रादिलक्षणार्थरूपत्वेन, प्रकृतिलक्षणतत्तत्सर्वैक्यरूपत्वेन सदसद्रूपं फलरूपत्वेन तयोः परतंत्रफलं पुरुषार्थस्वरूपं सवैभवं भगवदाख्यं चिद्वस्तु तदनुगतत्वाच्छुद्धजीवाख्यं चिद्वस्तु च एतेन ज्ञानक्रियादिरूपेणोरुशक्तित्वं व्यंजितम् । शक्तेः स्वाभाविकरूपत्वं सप्रमाणं स्पष्टयति—आदौ यदेकं ब्रह्म तदेव सत्त्वंरजस्तम इति त्रिवृत् प्रधानम्, ततः क्रियाशक्त्या सूत्रम्, ज्ञानशक्त्या महानिति ततोहमहंकार इति तदेव च जीवं शुद्धस्वरूपं जीवात्मानं तदुपलक्षणकं वैकुंठादिवैभवं च प्रवदंति वेदाः ते च "सदेव सोम्येदमग्र आसीत्" इत्याद्याः, आदावेकं ततस्तद्रूपमिति शक्तेः स्वाभाविकत्वमायातम् । अन्यस्यासद्भावेनोपाधिकत्वायोगात् स्वरूपवैभवस्यांगप्रत्यंगवन्नित्यसिद्धत्वेऽपि सूर्यसत्तया तद्रश्मिपरमाणुवृंदस्येव तत्सत्तया लब्धसत्ताकत्वात्तदुपादानकत्वं तदादित्वं च स्यात् । "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः । शक्तेरचिंत्यत्वं स्वाभाविकत्वं चोक्तं विष्णुपुराणे—"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोभ्युपगम्यते ॥" इति मैत्रेयप्रश्नानंतरं श्रीपराशर उवाच—"शक्तयः सर्वभावानामचिंत्यज्ञानगोचराः । यतो हेतोर्ब्रह्मणस्ताः सर्गाद्या भावशक्तयः॥ भवंति तपतां श्रेष्ठ पावकस्य यथोष्णता ।" इति । श्रीस्वामिटीका च । तदेवं ब्रह्मणः सृष्ट्यादिकर्तृत्वमुक्तं तत्र शंकते—निर्गुणस्येति । सत्त्वादिगुणरहितस्य अप्रमेयस्य देशकालाद्यपरिच्छिन्नस्य शुद्धस्य सहकारिशून्यस्य अमलात्मनः रागादिशून्यस्य एवंभूतस्य ब्रह्मणः कथं सर्गादिकर्तृत्वमिष्यते, एतद्विलक्षणस्यैव लोके घटादिषु कर्तृत्वादिदर्शनादित्यर्थः । परिहरति—शक्तय इति सार्धेन । लोके हि सर्वेषां भावानां पावकस्योष्णताशक्तिवदचिंत्यज्ञानगोचराः शक्तयः संत्येव अचिंत्याभिन्ना भिन्नत्वादिविकल्पैश्चिंतायितुमशक्याः केवलमर्थापत्तिज्ञानगोचराः संति ब्रह्मणः पुनस्ताः स्वभावभूताः स्वरूपादभिन्नाः शक्तयः "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः । अतो मणिमंत्रादिभिरग्न्यौष्ण्यवन्न केनचिद्भन्तुं शक्यन्ते, अत एव तस्य निरंकुशमैश्वर्यम् । तथा च श्रुतिः "स वा अयमस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इत्यादि । यत एवम्, अतो हेतोः ब्रह्मणः सर्गाद्या भवंति नात्र काचिदनुपपत्तिरित्येषा । किञ्च—ब्रह्मपदेन "सर्वं खल्विदं ब्रह्म" इति प्रसिद्धं व्यज्य सत्त्वादिगुणमयमायायास्तदनन्यत्वेपि निर्गुणस्येति प्राकृतगुणैरस्पृष्टत्व

नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि॥सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेंद्रियबलेन विकल्पितं सत् ॥३८॥

स्वतो भासमानस्य ब्रह्मणः स्वसिद्धौ प्रमाणापेक्षेति भावः ॥ ३७ ॥ ननु सर्वात्मकं चेद्ब्रह्म तर्हि सर्वस्य कार्यस्य जन्मादिविकारवत्त्वाद्ब्रह्मणोऽपि तत्प्रसंगः स्यादत आह । नात्मेति । आत्मा ब्रह्म न जजान न जातः । जन्माभावादेव तदनंतरास्तितालक्षणोऽपि विकारो नास्ति । नैधते न वर्धते वृद्ध्यभावादेव विपरिणामोऽपि निरस्तः । कुतः । हि यस्माद्व्यभिचारिणामागमापायिनां बालयुवादिदेहानां सवनवित्तत्तत्कालद्रष्टा । नह्यवस्थावतां द्रष्टा तदवस्थो भवतीत्यर्थः । ननु निरवस्थः कोऽ

मंगीकृत्य तेषां बहिरंगत्वं स्वीकृतं तदेतदेव " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् " इत्येषा श्रुतिः स्वीचकार । " मायाञ्च तदपाश्रयाम् " इतिवन्महेश्वरत्वं मायाया बहिरंगाया आश्रय इति तां परा भूय च स्थितमिति लभ्यते । पूर्ववदत्र शक्तेः स्वाभाविकत्वं मायादोषास्पृष्टत्वं च साधितम्, अत एव श्रीगीतासु—" ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ सर्वतःपाणिपादं तत् " इत्यादिना । अत्रेयं प्रक्रिया—एकमेव तत्परमं तत्त्वं स्वाभाविकाचिंत्यशक्त्या सर्वदैव स्वरूपतद्रूपवैभवजीवप्रधानरूपेण चतुर्धावतिष्ठते, सूर्यांतर्मंडलस्थतेज इव मंडलतद्बहिर्गततद्रश्मितत्प्रतिच्छविरूपेण । एवमेव श्रीविष्णु पुराणे—" एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥ " इति । " यस्य भासा सर्वमिदं विभाति " इति श्रुतेः । अत्र व्यापकत्वादिना तत्तत्समावेशाद्यनुपपत्तिश्च शक्तेरचिंत्यत्वेनैव पराहता दुर्घटघटकत्वमचिंत्यत्वम् । शक्तिश्च सा त्रिधा—अन्तरङ्गा बहिरंगा तटस्था च, तत्रांतरंगया स्वरूपशक्त्याख्यया पूर्णेनैव स्वरूपेण वैकुंठादिरूपवैभवरूपेण च तदवतिष्ठते, तटस्थया रश्मि स्थानीयचिदेकात्मशुद्धजीवरूपेण, बहिरङ्गया मायाख्यया प्रतिच्छविगतवर्णशाबल्यस्थानीयतदीयबहिरंगवैभवजडात्मप्रधानरूपेण च । चतुर्द्धात्वमत एव तदात्मकत्वेन जीवस्यैव तटस्थशक्तित्वं प्रधानस्य च मायांतर्भूतत्वम मिप्रेत्य शक्तित्रयं विष्णुपुराणे गणितम्—" विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥" इति अविद्या कर्म कार्यं यस्याः सा तत्संज्ञा मायेत्यर्थः । यद्यपीयं बहिरंगा तथाप्यस्या तटस्थशक्तिमयमपि जीवमावरयितुं सामर्थ्यमस्तीत्याह—तयेति । तारतम्येन तत्कृतावरणस्य ब्रह्मादिस्थावरांतेषु देहेषु लघुगु रुभावेन वर्तत इत्यर्थः । तदुक्तम्—' यया संमोहितो जीवः ' इति ययैवाचिंत्यया मायया चिद्रूपता निर्विकारतादिगुणरहितस्य प्रधानस्य विकारित्वं चेति ज्ञेयम् । अत्रांतरंगत्वतटस्थत्वबहिरंगत्वादिनैव तासामेकानां तत्तत्साम्यं न तु सर्वात्मनेति तत्तत्स्थानीयत्वमेवोक्तं न तु तत्तद्रूपत्वम् अतस्तत्तद्दोषा अपि नावकाशं लभन्ते, अत्र विशेषो भगवत्संदर्भे दृश्यः ॥*॥ **विश्वनाथस्तु**—किञ्च—ब्रह्मणः स्वरूपानुभव एव लोकैर्दुष्करस्तस्य प्रामाण्ये तु नास्ति कोपि संशयो यतो " ब्रह्मैवेदं सर्वम् " इति " यस्य भासा सर्वमिदं विभाति " इति श्रुत्युक्तं वस्तुमात्रमेव सर्वं ब्रह्मकार्यत्वाद्ब्रह्मैवेति यत्तदेव विवृणोति—सत्त्वमिति । अन्यत्तैः । विशेषस्तु " तत्परं परमं ब्रह्म सर्वं विभजते जगत् । ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत ॥ " इति हरिवंशोक्तेः । अस्यार्थस्तु—तत्परं सर्वस्मात्परं यत् परमं ब्रह्म सर्वं जगद्विभजते स्वत एव महदहंकारादिरूपेण विभक्तं करोति तन्ममैव तेजो ज्ञातुमर्हसीत्यतो ' ब्रह्मणो हि प्रतिष्ठाहम् ' इति भगवदुक्तेः सूर्यस्य घनं तेज इतिवत्तस्य वपुस्तेज एव ब्रह्मेत्यवगन्तव्यम्, अत एव 'यस्य भासा सर्वमिदं विभाति' इति श्रुतौ यस्य कृष्णस्येति व्याचक्षते ॥ ३७ ॥ सर्वात्मकत्वे पुनराक्षिपति—नन्विति । तत्प्रसंगो जन्मादिविकारप्रसंगः । तदनंतरो जन्मानंतरः । वृद्धेरेव परिणामोऽनुमीयते तदभावात्स च न संभवतीति निरस्तोऽशाकृतः । जन्माद्यभाववत्त्वे हेतुमाशंक्य समाधत्ते—कुत इत्यादिना । तत्तत्कालद्रष्टा बाल्युवादिकालसाक्षी । तदवस्थोऽवस्थावदवस्थो जाग्रदाद्यवस्थः । इत्यर्थ इति—न हि साक्षिणः साक्ष्यरूपत्वं भवतीति भावः । पुनराशंकते—निरवस्थ इति । उपलब्धिमात्रं ज्ञानस्वरूपम् । उपल ब्धिमात्रत्वेऽप्याक्षिपति—नन्विति । तर्हि क्षणिकत्वं क्षणस्थितिकत्वं क्षणिकविज्ञानमतमित्यर्थः । तन्निराकरोति—नेति । अनपायि नाशरहितम् । अनपायित्वमप्याक्षिपति—नन्विति । इंद्रियबलेन चक्षुषो झटिति तत्तत्पदार्थयोगेन तत्तदाकारा प्रतीतिर्जायत इति । इति भाव इति—ज्ञानस्यैकत्वेन बहुत्वासंभवः । तथाहि—घटज्ञानात्पटज्ञानं न भिद्यते उपाधिपरामर्शमंतरेणाविभाव्यमानभेदत्वात् । आकाशवदिति । एवं नीलज्ञानात्पीतज्ञानं न भिद्यते

अंडेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्रतत्र ॥ सन्ने यदिंद्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥ ३९ ॥

सावात्मा अत आह । उपलब्धिमात्रमिति । नन्वायातं तर्हि क्षणिकत्वं नेत्याह । सर्वत्रेति । सर्वत्र देशे शश्वत्सर्वदा अनपाय्यनुवर्तमानम् । ननु नीलज्ञानं जातं पीतज्ञानं नष्टमिति प्रतीतेर्न ज्ञानस्यानपायित्वमत आह । इंद्रियबलेनेति । सदेव ज्ञानमिंद्रियबलेन विविधं कल्पितम् । नीलाद्याकारवृत्त्य एव जायंते नश्यंति च न ज्ञानमिति भावः । व्यभिचारिष्वव्यभिचारे दृष्टांतः । प्राणो यथेति ॥ ३८ ॥ दृष्टांतं विवृण्वन्निंद्रियादिलयेन निर्विकारात्मोपलब्धिं दर्शयति । अंडेष्विति । पेशिषु जरायुजेषु तरुषु उद्भिज्जेष्वविनिश्चितेषु । स्वेदजेषु उपधावत्यनुवर्तते । एवं दृष्टांते निर्विकारत्वं प्रदर्श्य दार्ष्टांतिकेऽपि दर्शयति । कथम् । तदैवात्मा सविकार इव प्रतीयते यद्यदा जागरे इंद्रियगणो यदा च स्वप्ने तत्संस्कारवानहंकारः । यदा तु प्रसुप्तं तदा तस्मिन्प्रसुप्ते इंद्रियगणे सन्ने लीने अहम्यहंकारे च सन्ने कूटस्थो निर्विकार एवात्मा । कुतः आशयमृते लिंगशरीरमुपाधिं विना । विकारहेतोरुपाधेरभावादित्यर्थः । नन्वहंकारपर्यंतस्य सर्वस्य लये शून्यमेवावशिष्येत तत्कथं तदा कूटस्थ आत्मा अत आह । तदनुस्मृतिर्नः तस्य दर्शनस्पर्शनादिविशेषज्ञानशून्यस्य सुखात्मनः सुषुप्तिसाक्षिणः स्मृतिर्नोऽस्माकं भवति एतावंतं कालं सुखमहं सुप्तो न किंचिदवे

ज्ञानत्वात्, पीतज्ञानवदिति ज्ञानस्यैकत्वेन नित्यत्वान्न तन्नाश इति तात्पर्यम् । व्यभिचारिषु व्यभिचारवत्सु । यस्य न व्यभिचारः सोऽव्यभिचारस्तत्र दृष्टान्तः—दृष्टोंतः सादृश्यबलेन प्रकृतार्थनिर्णयो येन स दृष्टान्तः॥*॥ **दीपिका**—तत्प्रसंगो जन्मादिविकारप्रसंगः । तत्तत्कालद्रष्टा बाल्युवाद्यवस्थासाक्षी । अवस्थावतां देहानाम् । तदवस्थो बाल्युवाद्यवस्थः। उपलब्धिमात्रं ज्ञानैकरसम् । क्षणिकविज्ञानवादी बौद्धः शङ्कते—नन्विति । सर्वदा सर्वस्मिन्काले अनुवर्तमानं नित्यत्वेनानुगतम् । पुनः शङ्कते—नन्विति । अनपायित्वं नित्यत्वेनानुवर्तमानत्वं सदेव नित्यस्थिरमेव जायंत इति, अध्यस्तानां वृत्तीनामेव जन्मनाशौ नाधिष्ठानत्वेनानुगतस्य ज्ञानस्येत्यर्थः । व्यभिचारिषु बालादिदेहेषु । अत्रागमापायि देहेभ्यस्तदवधिरूप आत्मा भिन्न इति प्रथमस्तर्कः । तथा द्रष्टात्मा दृश्यदेहभिन्न इति द्वितीयोपि तर्क इति ज्ञेयम् ॥*॥ **संदर्भस्तु**—अत्र यदि त्वंपदार्थस्य जीवात्मनो ज्ञानत्वं नित्यत्वं च प्रथमतो विचारगोचरं स्यात्तदैव तत्पदार्थस्य तस्य तादृशत्वमपि सुबोधं स्यादिति । तद्बोधयितुम् 'अन्यार्थश्च परामर्शः' इति न्यायेन जीवात्मनस्तद्रूपत्वमाह द्वाभ्यां—नात्मेति । आत्मा शुद्धो जीवः' उपलब्धिमात्रं ज्ञानेनैकरूपम्, कथंभूतम् सर्वत्र देशे शश्वत्सदानुवर्तमानम् , अन्यत्तैः । अत्र ज्ञानमिति भाव इत्यंतेन अयमागमापायितदवधिभेदेन प्रथमस्तर्कः, द्रष्टृदृश्यभेदेन द्वितीयोपि तर्को ज्ञेय इति ज्ञेयम् ॥ * ॥ **विश्वनाथस्तु**—तस्य ब्रह्मणस्तत्पदार्थस्यापरोक्षानुभवो न सर्वस्य किंतु शुद्धजीवस्यापरोक्षानुभवानंतरमेवेत्यतः शुद्धजीवमाह—नात्मेति त्रिभिः । आत्मा शुद्धजीवो न जजान न जात इत्याद्यो विकारो निषिद्धः । न भविष्यतीत्यंतः षष्ठः, अन्यत्तैः ॥ ३८ ॥ इंद्रियादीन्यत्रादिनाऽहंकारग्रहः । यद्यपि जरायुजादयोऽपि सर्वथा निश्चेतुमशक्या एव तथापि तेषां यथाकथंचिज्ज्ञानं भवेदेव स्वेदजेष्वतिसूक्ष्माणां बहूनामप्रसिद्धत्वादनिश्चितत्वमेवेत्युक्तमनिश्चितेषु स्वेदजेष्विति । उपधावति प्रतिशरीरं जीवं तत्रतत्रोपधावति एक एव प्राणस्तत्तदात्मना भाति तथा निर्विकार एव सच्चिदानंदरूप आत्मा इन्द्रियविकल्पितं नानाविकारापन्नं भातीत्यर्थः । कथं निर्विकारत्वमिति प्रश्ने, उत्तर यद्यदेति । यदा जागर इंद्रियगणः स्वप्ने च तत्संस्कारवानिन्द्रियविषयसंस्कारवान् । अहंकारस्तदैव सविकार इव प्रतीयते, इवेन वस्तुतो विकाराभाव एवोक्तो विकाराणामवस्तुत्वेन तत्संबंधस्य सुतरामवस्तुत्वादिति भावः । निर्विकारत्वे हेतुमाशङ्कते—कुत इति । इत्यर्थ इति—'यावल्लिंगान्वित आत्मा तावत्कर्मनिबंधनम्' इत्युक्तेर्लिंगदेहसंबंधस्यैव संसृतिलक्षणविकारापादकत्वमिति भावः । पुनरत्राशंकते—नन्विति । यतः स्मृतिरतो हेतोः । चेत्तत्र साक्षिणोऽनुभवस्तर्हि कथं न स्पष्ट इति चेदाह—विषयेति । इति भाव इति—स्पष्टत्वेऽनुभवस्य विषयसंबंधस्यैव हेतुत्वात्सुषुप्तौ तदभावान्न तथेत्याशयः । सुषुप्तौ विषयाभावेपि ज्ञानमस्तीत्यत्र प्रमाणमाह—तथा चेति ।

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि ॥ तस्मिन्विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः॥४०॥

दिषमिति । अतोऽननुभूतस्यास्मरणादस्त्येव सुषुप्तावात्मानुभवो विषयसंबंधाभावात्तु न स्पष्ट इति भावः । तथा च श्रुतिः । "यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति ॥ ३९ ॥ ननु यदि सुषुप्तौ कूटस्थात्मानुभवो भवेत्कथं पुनरपि संसारः स्यात् अविद्यातत्संस्काराणां विद्यमानत्वादिति चेत्कदा तर्हि तन्निवर्तकोऽनुभवो भवेदत आह । यर्हीति । वित्तैषणादि विहाय केवलमब्जनाभस्यैव चरणेच्छया या उरुभक्तिस्तया पुमांश्चेतसो मलानि विधमेन्नाशयेत् । चेत एव वा कर्तृ । स्वगतानि मलानि तया भक्त्या क्षालयेत् । तदा तस्मिन्विशुद्धे चेतसि सति साक्षादव्यवधानेनात्मतत्त्वमुपलभ्यते । अमलयोर्दृशोः सत्योर्यथापूर्वमेव सिद्धः

यद्यदा सुषुप्तौ वै प्रसिद्धं तत्प्रसिद्धं जगत् न पश्यति पश्यन्नात्मानं तद्ब्रह्म द्रष्टव्यं वस्तुजातं द्रष्टुरात्मनो दृष्टेर्ज्ञानस्य विपरिलोपो नाशो न ह्यस्तीति श्रुतिपदार्थः ॥ * ॥ **दीपिका**—निर्विकारोपलब्धेः सुषुप्तौ निर्विशेषात्मानुभवमनुवर्तते उपाधित्वेनानुगच्छति । दृष्टान्ते प्राणे निर्विकारित्वमजडादिवदनश्वरत्वं दार्ष्टान्तिके प्राणदृष्टान्तेनोपपादनीये शुद्धात्मनि कथमिति, केन प्रकारेण निर्विकारित्वदर्शनमित्यर्थः । प्रकारमेवोदाहरणेन व्याचष्टे—तदैवेति । मूले यदित्यव्ययं यदेत्यर्थे, तस्यैव पुनर्मूले योजनार्थं यदा चेत्यावृत्तिः कृता । तत्संस्कारवान् जागरवासनावान् । एवमवस्थाद्वये विकारित्वप्रतीतिं मूलाद्बहिरेव संयोज्य निर्विकारत्वं मूले योजनयाह—यदा त्विति । प्रसुप्तमिति भावे क्तः, जीवेन सुप्यते स्मेत्यर्थः । तस्मिन् जीवे । प्रसुप्ते सति । सर्वस्य स्थूलसूक्ष्मोपाधेः । तदा सुषुप्त्यवस्थायाम् । विशेषज्ञानं वृत्तिज्ञानं तेन शून्यस्याखंडात्मन इत्यर्थः । नोस्माकम् । जाग्रद्द्रष्टॄणां स्मृति मभिनयेन दर्शयति—एतावन्तमिति । अतः जागरे तथास्मरणात् पूर्वं नानुभूतं यत्तस्य स्मरणासंभवादनुभवस्मरणयोश्च सामानाधिकरण्यात् सुषुप्त्यवस्थायामज्ञानसाक्षिसुखात्मनोऽनुभवोस्त्येव । विषयेति—स्वरूपातिरिक्तस्य विषयस्य देहेंद्रियाद्युपाधेः संबंधाभावात्स्वरूपमात्रानुभवो जाग्रदाद्यनुभववन्न स्पष्ट इत्यर्थः । तथा च सुषुप्तावात्मानुभवे प्रमाणं , श्रुतिः—" यद्वै तत् " इत्यादिका । पश्यन्नलुप्तज्ञान एवात्मा तत्तदा सुषुप्तौ न पश्यतीति यत्तद्द्रष्टव्यं विषयं न पश्यतीत्यभिप्रायादेव सुषुप्तावप्यलुप्तज्ञानत्वे हेतुः—न हीति । हि यतो द्रष्टुः साक्षिणः दृष्टेः स्वरूपज्ञानस्य विपरिलोपो नाशो न विद्यते नाशायोग्यत्वादित्यर्थः । न हि प्रकाश्यनाशे सवितृप्रकाशो नश्यतीति भावः । तर्हि कुतो न पश्यति द्रष्टव्यस्य द्वितीयस्याभावादिति ज्ञेयम् । तदुक्तं भगवद्भाष्यकृद्भिः—" अंतरा च " इति सूत्रव्याख्यानावसरे सुषुप्तं प्रकृत्य विषयाभावादियमचेतनता न चैतन्याभावादितीति, अयं साक्षिसाक्ष्यविभागेन तृतीयस्तर्कः । सुखमात्रावशेषात् दुःखिप्रेमास्पदत्वविभागेन चतुर्थोपि तर्को ज्ञेयः, तदुक्तमभियुक्तैः—" अन्वयव्यतिरेकाख्यस्तर्कः स्याच्चतुरात्मकः । आगमापायितदवधिभेदेन प्रथमो मतः ॥ द्रष्टृदृश्यविभागेन द्वितीयोपि मतस्तथा । साक्ष्यसाक्षिविभागेन तृतीयस्सम्मतः सताम् ॥ दुःखिप्रेमास्पदत्वेन चतुर्थः सुखबोधकः । " इति ॥ * ॥ **संदर्भस्तु**—तदनुस्मृतिर्न इति । तस्याखण्डात्मनः सुषुप्तिसाक्षिणो नोस्माकं जाग्रद्द्रष्टॄणां जायते । अन्यत्तैः । तत्र तस्य स्पष्ट इति भाव इत्यंते अतः प्रकाशमात्रवस्तुनः सूर्यादेः प्रकाशवदुपलब्धिमात्रस्याप्यात्मन उपलब्धिः स्वाश्रयमस्त्येवेत्यायातमिति ज्ञेयम् । विपरिलोपो विद्यते इत्यंतेऽयं साक्षिसाक्ष्यविभागेन तृतीयः । सुखावेशात् दुःखिप्रेमास्पदत्वविभागेन च चतुर्थोपि तर्कोऽवगन्तव्यः, अन्यत्पूर्ववत् ॥ * ॥ **विश्वनाथस्तु**—इंद्रियादिलये निर्विकारात्मोपलब्धिं दर्शयति—अंडेष्विति । उपधावति जीवमाददान एव जीवमनुवर्तते । अन्यत्तैः ॥ ३९ ॥ " तमेव विदित्वातिमृत्युमेति " इति श्रुतेः कूटस्थानुभवस्य मोक्षहेतुत्वात्पुनः संसारानुभवो नोचित इत्याशंकते—नन्विति । तत्संस्काराणामविद्यासंस्काराणाम् । आदिना लोकैषणादिग्रहः । गुणकर्मजानि सत्त्वादिगुणावेशकृतानि रागद्वेषादीनि । कर्तुरध्याहारे गौरवं मत्वाह—चेत एवेति । कर्तृ कर्तृपदम् ॥ * ॥ **दीपिका**—नन्विति शंकासमाधानाभासः । अविद्या " न किंचिदवेदिषम् " इत्यनेनोक्तं मूलाज्ञानम् । तत्संस्कारा अज्ञानवासनाश्च तेषां विद्यमानत्वात्सुषुप्तौ कूटस्थानुभवेऽपि सुषुप्त्युपरमे पुनरपि संसारः स्यादिति योजना । यर्हि पुनरपि

**राजोवाच ॥ कर्मयोगं वदत नः पुरुषो येन संस्कृतः ॥ विधूयेहाशु कर्माणि नैष्कर्म्यं विंदते परम् ॥ ४१ ॥ एवं प्रश्नमृषीन्पूर्वमपृच्छं पितुरंतिके ॥ नाब्रुवन्ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम्॥४२॥आविर्होत्र उवाच॥कर्माकर्मविकर्मेति वेदवादो न लौकिकः॥वेदस्य चेश्वरात्मत्वात्तत्र मुह्यंति सूरयः॥४३॥**

सवितृप्रकाश इति ॥ ४० ॥ भक्तेः कर्मयोगाधीनत्वात्तं पृच्छति । कर्मयोगमिति । नैष्कर्म्यं कर्मनिवृत्तिसाध्यं ज्ञानम् ॥ ४१ ॥ प्रश्नांतरमाह । एवमिति । 'कर्मयोगं वदत नः' इत्युक्तप्रकारेण प्रश्नं प्रष्टव्यमर्थम् । पितुरिक्ष्वाकोः । ब्रह्मणः पुत्राः सनकादयः सर्वज्ञा अपि नाब्रुवन् ॥ ४२ ॥ गहनत्वद्योतनाय प्रथमं द्वितीयप्रश्नस्योत्तरमाह । कर्मेति । कर्म विहितम् । अकर्म तद्विपरीतं निषिद्धम् । विकर्म विगतं कर्म विहिताकरणम् । एतत्त्रयं वेदवादो वेदैकगम्यं न लौकिकः । वेदस्येश्वरात्मत्वादीश्वरादुद्भूत

संसारस्तर्हि तन्निवर्तकोऽविद्यादिनाशकः । वित्तैषणादीत्यादिना पुत्रैषणालोकैषणयोर्ग्रहः । अव्यवधानेन सुषुप्तिवदविद्यादिव्यवधानाभावेन । तथा च श्रुतिः—"अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति ॥ * ॥ **संदर्भस्तु**—ननु यदि सुषुप्तावित्यादि । तैः भवतु नाम केवलज्ञानिनां तु ज्ञानेनाहंकारपर्यंतलये महत्तत्त्वप्रधानयोर्लयः कथं स्यात्सुषुप्तिवत्प्रयत्नांतरासंभवात्, आश्रयाव्याघाताच्च तदेवं सति शुद्धत्वंपदार्थस्य जीवस्याप्युपलब्धिसंभवात्किमुत तत्पदार्थस्य भगवत इति सत्यम्, तत एवेदमुच्यते इत्याह—यर्हीति । यदा पुरुषार्थचतुष्टयैषणां विहायाब्जनाभचरणैषणाप्राप्तीच्छा यस्यां तया भक्त्या भक्तिप्रभावेण चेतोमलानि विधमेत्तदा तस्मिंश्चित्ते प्रभावेणैवात्मनो जीवस्य तत्त्वमाश्रयः श्रीभगवानुपलभ्यते किमुतात्ममात्रमिति ॥ * ॥ **विश्वनाथस्तु**—नन्वित्यादि भवेदंतं पूर्ववत् । तत्र भक्तिमिश्रज्ञानपरिपाकेन प्रथमं शुद्धजीवानुभवस्ततः "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥" इति भगवदुक्त्या भक्त्युत्थज्ञानेन तत्पदार्थस्य ब्रह्मणोऽपरोक्षानुभवस्ततो ब्रह्मसायुज्यमिति क्रमः । यदि तु—"यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्" इति वाक्यबलाद्ब्रह्मानुबुभूषुः केवलामेव भक्तिं कुर्यात्तदा 'सत्यं दिशत्यर्थितमर्थितो नृणाम्' इति न्यायेन ब्रह्मानुभवं प्राप्य भगवदनुभवमपि प्राप्नोतीत्याह—यर्हीति । यदा उरुः केवला भक्तिस्तया चेतसो मलानि गुणकर्मजानि विधमेन्नाशयेत् । त्रैगुण्यापगमे यदा नैष्कर्म्यं भवेदित्यर्थः । कीदृश्या—अब्जनाभस्य चरणाचरणोपासनादेव एषणा कामना ध्रुवादीनामिवान्यकामनापि भवेद्यतस्तया तदा तस्मिन्विशुद्धे चेतसि आत्मनस्तत्पदार्थस्य ब्रह्मणस्तत्प्रतिष्ठारूपस्य भगवतोपि तत्त्वमुपलभ्यते, यथाऽमलदृशोः पटलापगमे सति निर्मलयोः सत्योः सवितुः सूर्यस्य प्रकाशः । साक्षादिति पदेन भक्तिमहिम्ना तत्प्रतिष्ठारूपं सवितापि सवितृभक्तेन स्वदृग्भ्यां पाणिपादादिविशिष्टो वाहनादिपरिकरसहितोप्युपलभ्यते ॥ ४० ॥ "नृणां कर्मभिराशुद्ध्या हरिभक्तिः प्रजायते" इत्याद्युक्तेः कर्मभिः शुद्धचित्तस्य भक्तिर्भवतीत्यभिप्रायेणाह—भक्तेरित्यादि । येन कर्मयोगेन । संस्कृतः शुद्धः । इह देहे । कर्माणि तत्फलानि । कर्मफलत्यागस्यैव कर्मत्यागत्वात्साक्षात्कर्मत्यागस्य कर्तुमशक्यत्वात्। "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इत्याद्युक्तेः ॥ * ॥ **दीपिका**—भक्तेरिति—'कुर्वाणा यत्र कर्माणि भगवच्छिक्षया' इत्यादेः "यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥" इत्यादेश्च कर्माधीनत्वाद्भगवदर्पितकर्माधीनत्वादित्यर्थः । तं तादृशकर्मयोगम् । येन कर्मयोगेन । संस्कृतः शुद्धचित्तः सन् । कर्मनिवृत्तिः कर्मणि कर्तृत्वाभिनिवेशाभावस्तया साध्यं परं ज्ञानम् । तथा च श्रुतिः—"अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति ॥ * ॥ **संदर्भस्तु**—पूर्वं 'कर्माण्यारभमाणानाम्' इत्यादिना श्रीप्रबुद्धेन काम्यकर्माण्येव त्याजितानि न तु नित्यनैमित्तिकानि फलस्यैव विनिंदितत्वात्, ततस्तेषां परमार्थोपयोगित्वं मनसि कृत्वाह—कर्मयोगमिति ॥ * ॥ **विश्वनाथस्तु**—गुणकर्मजानि विधमेदिति श्रुत्वा भक्त्या ज्ञानेन च नैष्कर्म्यं स्यादिति मया ज्ञायत एव । कर्मण्यपि नैष्कर्म्यं यथा स्यात्तदहं जिज्ञास इत्याह—कर्मयोगमिति ॥ ४१ ॥ एवमित्थं कर्मयोगप्रश्नम् । पूर्वं पूर्वकाले । नाब्रुव उत्तरं न ददुः । तत्रोत्तरादाने ॥ * ॥ स्पष्टम् ॥ ४२ ॥ द्वितीयस्योत्तरादानरूपद्वितीयप्रश्नस्य । विहितम् "अहरहः संध्यामुपासीत" इत्यादिश्रुतिविहितं संध्यावंदनादि । तद्वि

परोक्षवादो वेदोऽयं बालानामनुशासनम् ॥ कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४४ ॥

तत्वादपौरुषेयत्वादित्यर्थः । पुंवाक्ये हि वक्तुरभिप्रायतोऽर्थज्ञानं शक्यमपौरुषेये तु केवलं वाक्यपौर्वापर्येणैव तात्पर्यावधारणं तच्च दुष्करमिति तत्र कर्मादौ विद्वांसोऽपि मुह्यंति किमुतान्ये । अतस्तव तदा बालत्वात्सर्वज्ञा अपि ते नैवाब्रुवन्निति ॥ ४३ ॥ दुर्ज्ञेयं वेदतात्पर्यमाह । परोक्षवाद इति । यत्रान्यथास्थितोऽर्थः संगोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः । तथा च श्रुतिः "तं वा एतं चतुर्हूतं सन्तम् ॥ चतुर्होतेत्याचक्षते परोक्षेण ॥ परोक्षप्रिया इव हि देवाः " इति । परोक्षवादत्वमेवाह । कर्ममोक्षायेति । ननु स्वर्गाद्यर्थं कर्माणि विधत्ते न कर्ममोक्षार्थं तत्राह । बालानामनुशासनं यथा भवति तथा । अत्र दृष्टांतः । अगदमौषधम् । यथा पिता बालमगदं पाययन्खं

परीतं विहितविपरीतम् " ब्राह्मणं न हन्यात् " इत्यादिश्रुतिनिषिद्धं विहितस्य संध्यावंदनादेरकरणम् । इत्यर्थ इति–' अपौरुषेयं वाक्यं वेदः ' इति जैमिनिनोक्तत्वादिति भावः । वाक्यपौर्वापर्येणोपक्रमादिषाड्विधलिंगेनैव " उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिंगतात्पर्यनिर्णयः ॥ " इत्युक्तेः । तच्च तात्पर्यावधारणम् । यतो विद्वांसोऽपि मुह्यंति अतो हेतोः । बालत्वादर्थं बोद्धुमशक्यत्वात्, न तूक्तराज्ञानादित्यर्थः ॥ * ॥ **दीपिका**–गहनत्वद्योतनाय कर्मतत्त्वस्य दुर्ज्ञेयत्वज्ञापनाय द्वितीयप्रश्नस्योत्तरदाने कारणप्रश्नस्य । विहितं संध्यावंदनादि । अकर्मेत्यत्र विरोधे नञ् असुराधर्मवत् । अतस्तद्विपरीतं निषिद्धमिति व्याख्यातम्, तच्च सुरापानादि विकर्मशब्दस्य विहिताकरणत्वरूपोर्थस्तु ' नाचरेद्यः ' इत्यादौ " विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः " इति वक्ष्यमाणमूलस्वारस्यादेव व्याख्यातः " शास्त्रयोनित्वात् " इति न्यायेनेश्वर एवात्मा कारणं यस्य तादृशत्वात् । तत्र स्वरूपज्ञाने अपौरुषेयत्वस्य मोहे हेतुत्वमुपपादयति–पुंवाक्य इति । अपौरुषेये अजीवजाते स्वतःसिद्धे वेदे तु पुरुषाभावात्केवलमित्यादि योज्यम् । तदुक्तं शास्त्रज्ञैः–" वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥ " इति तात्पर्यं वेदरहस्यम् । अतो वेदतात्पर्यस्य दुर्ज्ञेयत्वात् । तदा प्रश्नकाले बालत्वात्, इति पितुरंतिके तदुक्त्यैवेत्यर्थः ॥ * ॥ **संदर्भः**–ब्रह्मपुत्राणाम दत्तोत्तरत्वे कारणमाह–कर्माकर्मेति । ' नाचरेद्यस्तु ' इति वक्ष्यमाणाद्विकर्मणो विहिताकरणत्वमेवार्थः । वेदस्येश्वरादिति शब्दरूपेण तदाविर्भावविशेषरूपत्वादित्यर्थः । " शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू " इति " वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुमः " इत्युक्तेः, " यदि चास्य महतो भूतस्य निःश्वसितमेतदृग्वेदः " इत्यादिना, " तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छंदांसि जज्ञिरे तस्मात् " इत्यादिना च तत उद्भूतत्वं तथापि तत्रैव तात्पर्यम् अवतारांतरवत्, अपौरुषेयत्वं त्वजीवजातत्वमेव भ्रमादिदोषचतुष्टयनिरसनं हि तावतैव स्यात् । तदेव तस्य परमाचिंत्यस्यात्मत्वं परमपण्डितशिरोमणेर्वचनत्वं वा भवतु भवेदेवाभिप्रायत्वम् ॥ * ॥ इत्थमेव **विश्वनाथोपि** ॥ ४३ ॥ यत्र वाक्ये अन्यथा स्थितोऽर्थः अन्यार्थप्रतिपादकत्वेन स्थितः । परोक्षवादत्वे प्रमाणमाह–तथा चेति । चित्यादिशब्दवच्चतुर्होत्रादिशब्दानामप्यात्मवाचकत्वस्य । " आत्मन्नात्मन्नित्यामंत्रयत । तस्मै चतुर्थं हूतः प्रत्यशृणोत् । स चतुर्हूतोऽभवत् । चतुर्हूतो ह वै नामैषः । तं वा एतं चतुर्हूतं सन्तम् । चतुर्होतेत्याचक्षते परोक्षेण । " इति श्रवणात् । आमंत्रणमनुसंधानं प्रतिश्रवणमुपवक्तुः साक्षात्कार इति । एवं दशहोत्रादिषु योज्यमिति दिक् । हूतशब्दस्य ह्रस्वांतः प्रामादिकः पाठः । तं प्रक्रांतमेतमात्मानम् इत्याचक्षते वदंति परोक्षेण न तु साक्षात्, साक्षात्तु सर्वोऽपि स एव न केवलं चतुर्होतैव " ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ " इति स्मृतेः । परोक्षकथने हेतुः–परोक्षः प्रियो येषां ते परोक्षप्रियाः । इव एवार्थे । हि प्रसिद्धौ, देवाः । देवप्रीत्यर्थं परमेशप्रीत्यर्थम् " यत्परोक्षप्रियो देवो भगवान्मधुसूदनः । परोक्षं मम च प्रियम् " इत्युक्तेः । देवा इति बहुत्वं पूजायाम् । तदेवाह–परोक्षवादत्वमिति । कर्ममोक्षत्वे शंकते–नन्विति । अत्रानुशासने । तल्लाभः खण्डलड्डुलाभः । विशदयति पूर्वोक्तम्–कर्मभिरेवान्तःकरणशुद्धौ बोधोदयेऽज्ञानतत्कार्यकर्मबंधबाधायैव कर्म विधत्ते, यथा–पिता पुत्ररोगापनुत्तये भेषजं पातुमेव मोदकं दर्शयति, तत्र मोदके भेषजे च

**नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेंद्रियः ॥ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४५ ॥**

डलड्डुकादिभिः प्रलोभयन्पाययति ददाति च तानि नैतावताऽगदपानस्य तल्लाभः प्रयोजनमपि त्वारोग्यम् । तथा वेदोऽप्यवांतरफलैः प्रलोभयन्कर्ममोक्षायैव कर्माणि विधत्ते ॥ ॥ ४४ ॥ ननु कर्ममोक्षश्चेत्पुरुषार्थस्तर्हि प्रथममेव कर्म त्यज्यतामत आह । नाचरेदिति । अजितेंद्रियत्वादज्ञः स्वयं यदि नाचरेत्तर्हि विकर्मणा कर्मानाचरणलक्षणेना

नाभिप्रायः किंतु भेषजेन रोगापनोदे भेषजत्याग एवेति ॥ * ॥ आविः प्रकटं सुज्ञेयं होत्रम् अग्निहोत्रोपलक्षितं कर्म यस्येति निरुक्त्या तद्वर्णने तस्यैव योग्यत्वात्स एवोवाचेति ज्ञेयम् । यत्र वादे परोक्षवादे । श्रुतिं प्रमाणयति—" तं वा एतं प्रसिद्धं मंत्रं पृथिवी होता द्यौरध्वर्युरित्यादिकं चतुर्हूतं चत्वारो होत्रादयो हूयंते श्रूयंते यत्र तादृशं संतमपि नाम्ना चतुर्होतेत्याचक्षते । अथवा तस्य मंत्रस्याभिमाने तेनात्मभूतः कश्चित्पुरुषः प्रत्युत्तरमुवाचेति—स पुरुषश्चतुर्हूतस्तदीयनाम्ना मंत्रोपि चतुर्हूत इत्युच्यते । पूज्यानां प्रत्यक्षनामग्रहणमयुक्तमित्यभिप्रायेण हुतशब्दस्थाने होतृशब्दः । एवं यद्यपि चतुर्हूतमेव निरुक्त्या संगच्छते न तु चतुर्होतेति तथापि परोक्षगदनस्वाभाव्याच्चतुर्होतेत्याचक्षत इत्यर्थः । विधिवाक्यं तु— " प्रजाकामः चतुर्होता यजेत " इति ज्ञेयम् । परोक्षगदने हेतुमाह—" परोक्षप्रिया इव " इति ' परोक्षं मम च प्रियम् ' इति भगवदुक्तेः । कर्ममोक्षाय अनाद्यदृष्टकर्मपरम्परानाशायैव किमुत कर्मत्यागाय शङ्कते—नन्विति । " स्वर्गकामो यजेत " इत्यादौ यागेन स्वर्गं भावयेदित्यर्थात्मभावनया स्वर्गाद्यर्थमेव कर्माणि विधत्ते । परोक्षसिद्धान्तमाह—बालाना मशुद्धचित्तत्वेन स्वाभाविकप्रवृत्तिप्रतिबंधार्थमेवैतानि कर्माणि न तुच्छस्वर्गाद्यर्थमित्यजानतामित्यर्थः । अनुशासनं स्वर्गादिभिः प्रलोभनं यथा स्यात्तथा । अत्रानुशासने । अवांतरफलैर्गौणफलैः ॥ * ॥ **संदर्भः**—अथ तदेव व्यंजयन् क्रमेण नित्यनैमित्तिकान्यपि त्याजयित्वा भगवदर्चनं ग्राहयितुमाह—परोक्षेति । बालानां नातिप्रज्ञानामशांतानामनुशासनरूपोयं कर्मकाण्डलक्षणोपि वेदः कर्ममोक्षाय अनाद्यदृष्टपरंपराशान्तय एव कर्माणि सर्वाण्येव विधत्ते यतः परोक्षवादः स्वयमीश्वरात्मा वेदो हि यन्नित्यनैमित्तिकाकरणे विकरणे च लोकं भीषयते यच्च नित्यादावानुषंगिकं फलं दिशते तत्तत् खलु तत्तत्करणेन तदकरणेन च शोधयित्वाऽ नादिदुःखमयकर्ममोक्षार्थमेव प्रवर्तयितुं न तु भयमेव तादृशतुच्छफलमेव वा दातुमिति गम्यते, परमसुहृत्त्वात्तस्येत्यर्थः । तत्र दृष्टांतः—बालानां तादृशस्वभावानामगदं पित्रा तद्दानं यथेति—पिता च रोगशांत्यर्थमेवौषधं पातुं तांस्तथा प्रवर्तयति न त्वौषधपानमेव तस्योद्देश्यमित्यर्थः ॥ * ॥ **विश्वनाथ**श्रीधरौ सममेवाहतुः ॥ ४४ ॥ अत्र पुनराक्षिपति—नन्विति । अज्ञस्य कर्मत्यागे दोषमाह श्रुतिः । तथा चेति—स्वकर्मभिः सुतरामकर्मभिर्वे दोक्तकर्मत्यागेनेति श्रुतिपदार्थः ॥ * ॥ प्रथममेव चित्तशुद्धेः प्रागेव । अजितेंद्रियत्वात् इहामुत्र भोगाविरक्तत्वात् । अज्ञः स्वरूपज्ञानशून्यः भगवत्कथादौ श्रद्धात्मकज्ञानशून्यश्च यः स्वयं नाचरेत्किं त्वात्मानं विज्ञं मत्वाऽ न्यान् शिक्षयेदिति स्वयंपदस्यार्थः । कर्मानाचरणलक्षणेन तज्जन्येनाधर्मेण मृत्योर्मृत्युं मृत्युपरंपराम्, वक्ष्यते च—'तावत्कर्माणि कुर्वीत' इत्यादि । तथा च विकर्मणाधर्मेण मृत्युपरंपराप्राप्तौ श्रुतिः प्रमाणं स्वकर्मभिर्वेदोक्तैः स्वध र्मैरकृतैः सद्भिः अर्द्यमानः पीड्यमानः अकृतानां तेषां पापजनकत्वात्, यद्वा—स्वकर्मभिः पीड्यमानो दुःखबुद्ध्या तानि त्यजन्नित्यर्थ इति **दीपिका** ॥ * ॥ **संदर्भः**—तत्र यथा बालानां बालचिकित्सैव हिताय स्यात्तदतिक्रम स्त्वहिताय तथा तेषां कर्मतदतिक्रमौ ज्ञेयावित्याह—नाचरेदिति । बालवदजितेन्द्रिय इहामुत्र भोगाविरक्तोपि वेदोक्तं यो नाचरेत्, तथा अज्ञः न विद्यते भगवत्कथादौ श्रद्धारूपा ज्ञा धीवृत्तिर्यस्य स च यो नाचरेत् सोऽपि नित्यनै मित्तिककर्माकरणजेनैवाधर्मेण मृत्योर्मृत्युपैति न तु पुण्येनेत्यर्थः । वक्ष्यते च ' तावत्कर्माणि कुर्वीत ' इत्यादि ॥ * ॥ **विश्वनाथस्तु**—वेदोक्तं प्रातःस्नानसंध्यावंदनादिकं कर्म नाचरेत्तदा " नहि कश्चित्क्षणमपि जातु तिष्ठ त्यकर्मकृत्" इति भगवदुक्तेर्दैहिकव्यापारं विना स्नातुमशक्यत्वात्।अजितेन्द्रिय इतीन्द्रियजयाभावात्पशुरिव प्रातरारभ्यानियतभोजनस्त्रीसंगादिविविधपापनिरत एव स्यात् । यतोऽज्ञो विवेकशून्यः, ततश्च विकर्मणा निषिद्धाचरण

वेदोक्तमेव कुर्वाणो निःसंगोऽर्पितमीश्वरे ॥ नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ ४६ ॥

धर्मेण मृत्योरनंतरं मृत्युमेव प्राप्नोति । तथा च श्रुतिः । "मृत्वा पुनर्मृत्युमापद्यंते अर्द्यमानाः स्वकर्मभिः" इति ॥ ४५ ॥ तस्माद्वेदोक्तमेव कुर्वाणो न तु निषिद्धम् । ननु कर्मणि क्रियमाणे तस्मिन्नासक्तिस्तत्फलं च स्यान्न तु नैष्कर्म्यरूपा सिद्धिरत आह । वेदोक्तमिति । निःसंगोऽनभिनिवेशवान् । ईश्वरेऽर्पितं न तु फलोद्देशेन कृतम् । ननु फलस्य श्रुतत्वात्कर्मणि कृते फलं भवेदेव न रोचनार्थेति । कर्मणि रुच्युत्पादनार्थमगदपाने खंडलड्डुकादिवत् । ततश्च कर्माभिरुच्या वेदार्थं सम्यग्विचारयति । तदा च "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः" इत्यनात्मज्ञस्यैव कृपणताम् "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति ब्रह्मचर्येण तपसा यज्ञेनानाशकेन" इति यज्ञादीनां ज्ञानशेषतां चावधार्य निष्कामेषु कर्मसु प्रवर्तते । ततश्च "स्वर्गकामो यजेत" इत्यादिभिः कामितस्यैव स्वर्गादेः फलत्वेनावगमादकामितोऽसौ न भवतीति नैष्कर्म्य

लक्षणेनाधर्मेण मृत्योर्यमात् मृत्युं नरकमेव प्राप्नोति । तथा च श्रुतिः–" मृत्वा " इत्यादिका ॥ ४९ ॥ यतो वेदोक्तकर्मत्यागे दोषस्तस्मादित्यर्थः । नैष्कर्म्यसिद्धौ शंकते–नन्विति । फलमनुद्दिश्यापि कृते कर्मणि भोजने तृप्तिवत्फलं भवत्येवेति शङ्कते–नन्विति । " कर्मणा पितृलोकः " इत्यादिश्रुतेः । फलस्य कर्मफलस्य । नेत्याह–रोचनेति । ततश्च फलश्रवणतः तदा च विचारणे कृते च कृपणतां कृपणो यथेह दानभोगादिहीनः परत्र दुःखमनुभवति तथाऽनात्मज्ञोपीति तत्तुल्यताम् । ज्ञानशेषताम् ज्ञानसाधनताम् । ततश्च तथा च । कामितस्य कामवासनाविषयस्य । अवगमात् बोधात् । अकामितोऽनपेक्षितः । असौ स्वर्गादिः । इति भाव इति–लौकिकाद्भोजनादेर्लौकिकयागादेः कामितत्वोपाधिकृतो भेद इति तात्पर्यम् ॥ * ॥ तस्मात्कर्मत्यागस्य मृत्युहेतुत्वात् । तस्मिन्कर्मणि । तत्फलं कर्मफलम् । नैष्कर्म्यरूपा कर्मनिवृत्तिसाध्यज्ञानरूपा । अनभिनिवेशवान् अहं कर्तेत्यभिनिवेशशून्यः । ततश्च फलश्रवणे सति । तदा च सम्यग्विचारकाले । " यो वा " इति श्रुतिः–हे गार्गि यो जन एतदक्षरं कूटस्थं ब्रह्म विदित्वा ज्ञात्वाऽस्माल्लोकाल्लोकांतरं विषयसुखस्पृहया गच्छति स कृपणो दीनस्तुच्छःइत्यर्थः । इत्यनेन प्रकारेणानात्मज्ञस्य देहाभिमानिनोऽज्ञस्य कृपणतामवधार्य श्रुत्वा तं परोक्षमेतं वेदांतैकवेद्यं परमात्मानं ब्राह्मणा ब्रह्मचारिणो वेदानुवचनेन वेदाध्ययनोपलक्षितस्वधर्मेण विविदिषंति ज्ञातुमिच्छन्ति, एवं वानप्रस्थास्तपसा, श्रद्धयाऽऽस्तिक्येन यज्ञेन च गृहस्थाः, अनाशकेन भोजनसंकोचेन यतयो विविदिषन्ति । दन्त्यसकारपाठेऽनासक्त्येति श्रुत्या ज्ञानशेषतां ज्ञानांगत्वं चावधार्य " यज्ञादिश्रुतेरश्ववत् " इति न्यायात् । ततश्च निष्कामकर्मप्रवृत्त्यनंतरं स्वर्गकाम इति नियोज्य विशेषणेन तस्य श्रुत्यर्थविचारेण निष्कामता चेत् स्वर्गस्याकामितत्वं कामित एव च स्वर्गादिः फलत्वेनावगम्यते यागेन स्वर्गं भावयेदिति । तथा च–संयोगपृथक्त्वन्यायेन वैदिककर्मणां विविदार्थत्वादीश्वरार्पणप्रभावाच्च नैष्कर्म्यापरपर्यायज्ञानभक्तिलक्षणा सिद्धिरित्यर्थः । भक्तिरस्य भजनम् " तदिहामुत्रोपाधिनैराश्येनास्मिन्मनःकल्पनमेतदेव च नैष्कर्म्यम् " इति श्रुतेः, " यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ " इति स्मृतेश्च ॥ * ॥ **संदर्भस्तु**–ननु कर्म खलु सजातीयत्वात्कर्मवृद्धये एव भवेत् प्रत्युत कथं तन्मोक्षाय भवतु इत्याशंक्योभयत्रापि समाधत्ते–वेदोक्तमिति । तत्र क्रियमाणकर्मण्यासंगं निरस्यति–निःसंग इति । तत्फलावाप्तिं निरस्यति–रोचनार्थेति । तदेतद्धेतुद्वयं कर्मवृद्धये दर्शितम् । तन्मोक्षाय हेतुः–ईश्वरेर्पितमिति । तत्संबंधप्रभावेण संस्कृतत्वादिति भावः । 'आमयो येन भूतानाम्' इत्यादेः ॥ * ॥ **विश्वनाथस्तु**–अत एव परमकारुणिको वेदो भक्तिविमुखानां नराणां पशूनामिवेंद्रियारामत्वातिशयवारणायैव तानुद्दिश्य कर्माणि फलदर्शनया रोचयंस्तथा विधत्ते यथा प्रातरारम्य स्नानादिभिर्विहितानुष्ठानैर्विकर्मण्यवसरमेव ते न प्राप्नुवंति । अनिषिद्धभोजनव्यवायादिषु प्रवर्त्यैव पापेभ्यो भीषयमाणाः स्वदत्तां भीषणां तान्मानयतान्यथा तदाज्ञापालनासामर्थ्यादेव ते नामानयिष्यन्नित्येवं वेदतात्पर्यमवधार्य स्वस्याजितेन्द्रियत्वं

य आशु हृदयग्रंथिं निर्जिहीर्षुः परात्मनः ॥ विधिनोपचरेद्देवं तंत्रोक्तेन च केशवम्॥४७॥लब्धानुग्रह आचार्यात्तेन संदर्शितागमः ॥ महापुरुषमभ्यर्चे न्मूर्त्याभिमतयात्मनः ॥ ४८ ॥

सिद्धिर्भवतीति भावः ॥ ४६ ॥ वैदिकं कर्मयोगमुक्त्वा तांत्रिकमाह । य आश्विति । परात्मनः परस्यैव सत आत्मनो जीवस्य हृदयग्रंथिमहंकारबंधं निर्हर्तुमिच्छुः संस्तंत्रोक्तेन च विधिना प्रकारेण भजेत् । तंत्रमागमः । चकाराद्वैदिकेन सह समुच्चयमाह ॥ ४७ ॥ तमेव विधिमाह:। लब्धानुग्रह इत्यादिना । तेनाचार्येण संदर्शित

दुर्वारमालक्ष्य विवेकी कर्मैव कर्तुमर्हतीत्याह—वेदोक्तमेवेति । अन्यत्तैः ॥ ४६ ॥ परस्यैव सतः वस्तुतः परस्यैवोपाधितो जीवभावं प्राप्तस्य । आगमः पांचरात्रादिः ॥ * ॥ दीपिका—वैदिकं बालान्प्रति ज्ञानसाधनत्वेन कर्मयोगमुक्त्वा विज्ञान्प्रति तांत्रिकं नारदपंचरात्राद्युक्तं साक्षाद्भक्त्यात्मकमर्चनलक्षणं कर्मयोगमाहेत्यर्थः । परस्यैव वस्तुतोऽहंकारादिद्रष्टृत्वेन दृश्यात्तस्मात्परस्यैव ॥ * ॥ संदर्भोऽपि—तदेवमपि बालान्प्रत्युक्तं विज्ञान्प्रति तु श्रूयतामिति श्रीभगवदर्चनामेव ग्राहयति—य इति । चकारेण पाद्याद्युपचरणैर्वैदिकमंत्रानपि गृह्णाति । अन्यतैः ॥ ४७ ॥ तमेवागमोक्तमेव । महापुरुषं विष्णुम् । आत्मनः स्वस्य । अभिमतया प्रियया । एतेन हरेर्मूर्तेर्बहुत्वमुक्तम् । केचित्पामरा मूर्तिपूजामवैदिकीं मन्यंते “न तस्य प्रतिमास्ति ” इति श्रुत्यवष्टंभेन ते चाथर्वशिरःस्थया श्रीरामतापनीस्थया “अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये । अहं सन्निहितस्तत्र पाषाणप्रतिमादिषु ॥ क्षेत्रेऽस्मिन्योऽर्चयेद्भक्त्या मंत्रेणानेन मां शिव ॥ ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि मा शुचः । ” इत्यादिकश्रुतिसंहत्या निराकार्याः । आदिना धात्वादिप्रतिमा ज्ञेयाः। “ न तस्य प्रतिमा ” इत्यादिश्रुतौ प्रतिमापदमुपमापरं न मूर्तिपरमिति प्रतिमाबहुत्वमवताराभिप्रायं वा वक्ष्यमाणशैलीलौहीदारुमयीत्याद्यभिप्रायम् । लब्धानुग्रहः प्राप्तदीक्षः । आचार्यश्च ब्राह्मण एव सोऽपि गृहस्थ एव । तदुक्तमगस्त्यसंहितायाम्—“ तत्त्वज्ञो यंत्रमंत्राणां पुरश्चर्यारतः सदा । तपस्वी सत्यवादी च गृहस्थो गुरुरुच्यते ॥” पाद्मेपि—“ महाभागवतश्रेष्ठो ब्राह्मणो वै गुरुर्नृणाम् । सर्वेषामेव लोकानामसौ पूज्यो यथा हरिः ॥” तत्रैव—“ आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः। ब्राह्मणो वीतरागश्च क्रोधलोभविवर्जितः ॥ ” श्रुतिरपि—“ तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ” इति श्रुत्युक्तं श्रोत्रियत्वं ब्राह्मण एव पर्यवस्यति “ श्रोत्रियो ब्राह्मणो ज्ञेयो न वैश्यो नैव बाहुजः । वेदाध्ययनसाम्येपि पुरुषोत्तमशब्दवत् ॥ ” “ हरिर्यथा वै पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यंबक एव नापरः । इन्द्रो यथा वै शतमन्युरुच्यते विप्रस्तथा श्रोत्रिय एव सम्मतः ॥ ” इति संहितोक्तेः । अत्रैवकारो विप्रपदेनैवान्वेति विप्र एव श्रोत्रिय इत्यर्थः । तदुक्तं देवलस्मृतौ—“ एकां शाखां सकल्पां वा षड्भिरंगैरधीत्य वा । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥ ” इति । किञ्च—“ जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते । विद्याभ्यासाद्भवेद्विप्रस्त्रिभिः श्रोत्रियशब्दभाक् ॥ ” इति याज्ञवल्क्येनाप्ययमर्थ उपबृंहितः । रूढिर्योगमपहरतीति पंकजादिवदयं न्यायोऽत्रानुसंधेयः । “ ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः कथ्यते बुधैः ” इति जातूकर्ण्योक्तेः । यच्च “ जन्मना जायते शूद्रः संस्काराद्द्विजसंज्ञिकः” इति केनचिद्यथाजातेनोक्तं तन्न संपनीपद्यते “न हि गवोर्महिषोत्पत्तिर्न हेम्नो लोहसंभवः । यथा कथं तदा शूद्रो विप्रयोर्जायते वद ॥” इति निर्णयसारे आक्षेपस्य दृष्टत्वात् । “वर्णोत्कृष्टो न लभते हीनवर्णस्य शिष्यताम् । हीनवर्णोपि न गुरुर्वर्णोत्कृष्टस्य जायते ॥ वर्णोत्कृष्टो हीनवर्णं गुरुं मोहाद्यदाऽऽचरेत् । प्रायश्चित्तं तदा कृत्वा गुरुं विप्रं समाश्रयेत् ॥ अन्यथा गुरुशिष्यौ तौ जायेते नरकौकसौ । परीक्ष्यैव गुरुः कार्यः शिष्योपीह परीक्ष्य च । अपरीक्षितकार्येण पश्चाद् दुःखं प्रजायते॥ ” ब्राह्मणविषये विशेषमाह वाराहे—“ब्राह्मणः स्वेतरान्वर्णान्गुरून्मोहात्करोति यः । स याति नरकं घोरं विपन्नोपि भवेद् ध्रुवम् ॥ ब्राह्मणो नीचवर्णेभ्यो मंत्रग्रहणमाचरन् । न मंत्रफलमाप्नोति श्वयोनिश्चाधिगच्छति ॥ ” । वाराहे एव—“ उत्तमायाधमो वर्णो मंत्रं यस्तु प्रयच्छति । स याति पतितो भूत्वा श्वचांडालादियोनिषु ॥ ब्राह्मणः क्षत्रियो वापि वैश्यो वा मोहमाश्रितः । न कुर्याद्धीनवर्णेभ्यो मंत्रादानं कदाचन ॥ ” । भविष्येऽपि—“ शृणु राजेन्द्र वक्ष्यामि मंत्रग्रहणमुत्तमम् । ब्राह्मणं श्रोत्रियं शुद्धं नारायणपरायणम् ॥ प्रणम्य विधिवद्भक्त्या मंत्रं गृह्णीत संशतः । यो मोहादन्यवर्णेभ्यो मंत्रं गृह्णाति कर्हिचित् । वेषांतरमितेभ्योऽपि न स कल्याणभाग्भवेत् ॥ अतः कार्यो गुरुर्विप्रो गृहस्थो गृहिभिः सदा । ” इति । यत्तूक्तम्—“ अवैष्णवोपदिष्टेन मंत्रेण निरयं व्रजेत् ”

## शुचिः संमुखमासीनः प्राणसंयमनादिभिः ॥ पिंडं विशोध्य सन्यासकृतरक्षोऽर्चयेद्धरिम् ॥ ४९ ॥

**आगमोऽर्चनप्रकारो यस्य सः ॥ ४८ ॥ मूर्तेः संमुखमासीनः । आदिशब्देन भूतशुद्ध्यादिभिः पिंडं देहं विशोध्य सन्न्यासैः सद्भिर्न्यासैः मातृकान्यासादिभिः कृता**

तत्रापि—" ब्राह्मणा वैष्णवा मुख्या यतो विष्णुमुखोद्भवाः । अंगेषु देवताः सर्वा मुखे वेदा व्यवस्थिताः ॥ विप्रैः कृता वैष्णवास्तु त्रयो वर्णा भवंति हि । " इत्यादिपुराणीयवृंदावनमाहात्म्यवाक्येन समाधेयम् । किं च—" अन्योन्यं गुरवो विप्रा न ह्येषामपरो गुरुः । वर्णानामाश्रमाणाञ्च गुरुर्विप्रः सदा विभो ॥ सेव्य एव हि सर्वेषां विप्रो राजर्षिसत्तम । देवानां दानवानां च मनुष्याणाञ्च का कथा ॥ आरोपयंति ये विप्रे सेवकत्वं नराधमाः । ज्ञेयास्ते सर्वथा पापा अंते निरयगामिनः ॥ " इति पुराणान्तरात् । गृहस्थेतरविप्रदीक्षापि न ग्राह्या । " यतेर्दीक्षा पितुर्दीक्षा दीक्षा च वनवासिनाम् । विविक्ताश्रमिणां दीक्षा न सा कल्याणदायिका ॥ " इति गणेशविमर्षिण्याम् । एतच्च सर्वं कल्याणार्थदेवतामंत्रग्रहणपरं बोध्यम् " यदि भाग्यवशेनैव सिद्धविद्यां लभेत्प्रिये । तदैव तां तु गृह्णीयात्त्यक्त्वा गुरुविचारणाम् ॥ " इति यामलोक्तेः । किञ्च— " यः शूद्रो लिंगधृग्भूत्वा ब्राह्मणं दीक्षयेत्क्वचित् । नृपस्तस्याखिलं चर्म कृत्त्वाऽऽपूर्य बुसेन तत् ॥ अधोमुखं लम्बयेत्तं प्रकटय्य चतुष्पथे । नो चेत्तं शमनः क्ष्मेशं तद्विधं प्रकरिष्यति ॥ " । अन्यच्च—"स त्याज्योन्त्यजवन्नित्यं दैवे पित्र्ये च कर्मणि । योऽधीते लिङ्गिनः शूद्राद्वेदाङ्गादि द्विजोत्तमः ॥ न तस्य निष्कृतिर्दृष्टा धर्मशास्त्रपुराणयोः । न स विप्रः परिज्ञेयः शूद्र एव न तत्समः ॥ तदर्चको विप्रधिया सान्वयो नरकं व्रजेत् । " इति नारदवरतन्तुसंहिताभ्यामिति सर्वार्थचिन्तामणौ । हीनवर्णगुरुतदुच्छिष्टाशनप्रायश्चित्तमपि संहितायाम्—" हीनवर्णगुरूच्छिष्टभक्षणे निष्कृतिं चरेत् । चांद्रायणत्रयं कृच्छ्रदशकं ब्रह्मकूर्चकम् ॥ गंगाम्बुपानं मासं वा गोदानदशकं तथा । गायत्र्या लक्षमेकं च ब्राह्मीपानं च यावकम् ॥ मासद्वयं ततो विप्रान्संभोज्योपनयेत्पुनः । उच्छिष्टाभक्षणे चैव दत्त्वा गा विप्रसेवनम् ॥ मासं कृत्वोपनयनं कुर्यात्तेन ततो शुचिः । " इति । गुरोरपि प्रायश्चित्तं तत्रैवोक्तम्—" प्रमादादुत्तमं वर्णं शिष्यं कृत्वाऽधमो गुरुः । जापयेल्लक्षगायत्रीं ब्राह्मणान्भोजयेद्बहून् ॥ गा दद्याद्बालवद्विप्रे ततः पूतो भवेत्पुनः । " इति । बाला विद्यंते यस्य स बालवान् स चासौ विप्रस्तस्मिंस्तथा, चतुर्थ्यर्थे सप्तमीत्यलं प्रसक्तानुप्रसक्तेन ॥ * ॥ **दीपिका—**तमेव विधिं तत्रोक्तमेव प्रकारं महापुरुषमित्युक्त्या समान्यतः सर्वासामपि प्राप्तौ आत्मनः स्वस्याभिमतया प्रेष्ठयेत्युक्तम् ॥ ४८ ॥ भूतशुद्धिप्रकारस्तु मंत्रशास्त्र उक्तः—" मूलाधारे कुंडलिनीं ध्यात्वा सुषुम्नामार्गेण हृदिस्थं जीवं ब्रह्मणि हंस इति विलाप्य पादादिजान्वंतं पृथिवीं लंबीजयुतां ध्यात्वा जान्वादिनाभ्यन्तं वंबीजयुतं जलं ध्यात्वा नाभ्यादिहृदयान्तं रंबीजयुतं वह्निं ध्यात्वा हृदादिभ्रूमध्यान्तं यंबीजयुतं वायुं ध्यात्वा भ्रूमध्यादिब्रह्मरन्ध्रान्तं हंबीजयुतमाकाशं ध्यात्वा भूतानि प्रत्येकं संविलापयेत् । पृथ्वीमप्सु संहरामि जलमग्नौ संह० अग्निं वायौ संह० वायुमाकाशे संह० आकाशमहंकारे संह० अहंकारं महत्तत्त्वे सं० महान्तं प्रकृतौ सं० प्रकृतिं शुद्धब्रह्मणि सं० आत्मानं ब्रह्माहमस्मीति ध्यात्वा दक्षकुक्षावधोमुखं पापपुरुषं ध्यात्वा यमितिबीजेन द्वात्रिंशद्वारमावर्तितेन वामनासया वायुमापूर्य रमिति बीजेन चतुःषष्टिवारमावर्तितेन कुंभकं कृत्वा पुनर्यमिति बीजेन षोडशवारमावर्तितेन पापभस्मदक्षनासया रेचयेत्, ततस्तं पापपुरुषं दग्धं भावयेत् । ततो वमित्यमृतबीजेन देहोत्थं भस्म संप्लाव्य लमिति बीजेनैकीकृत्य सुवर्णं भावयित्वा हमिति बीजेन सर्वांगान्युद्धृत्य कनकमयं शरीरं धात्वा पुनः "आत्मनः सकाशादाकाशः संभूतः आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी"इति भूतान्युत्पाद्य स्वस्थानगानि ध्यात्वा 'सोहम्'इति मंत्रेण कुंडलिनीसहितं जीवं हृद्यानीय सुधामयं जीवं हृदि निधाय कुंडलिनीं मूलाधारगतां ध्यायेत् " इति भूतशुद्धिप्रकारः ॥ प्राणप्रतिष्ठाप्यत्र कार्या—" अस्य प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः, ऋग्यजुःसामानि च्छंदांसि, प्राणशक्तिर्देवता, आं बीजम्, क्रों शक्तिः, प्राणस्थापने विनियोगः । ब्रह्मविष्णुरुद्रेभ्यो नमः शिरसि । ऋग्यजुःसामभ्यो नमो मुखे । प्राणशक्त्यै नमो हृदये । आंबीजाय नमो गुह्ये । क्रोंशक्तये नमः पादयोः । इति ऋष्यादिन्यासः ॥ ङं कं खं घं गं आकाशवायुवह्निजलपृथिव्यात्मने हृदयाय नमः । ञं चं छं झं जं शब्दस्पर्शरूपरसगंधात्मने शिरसे स्वाहा । णं टं ठं ढं डं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने शिखायै वषट् । नं तं थं धं दं वाक्पाणिपादपायूपस्थात्मने कवचाय हुम् । मं पं फं भं बं वक्तव्यादानगमनविसर्गानंदात्मने नेत्रत्रयाय वौषट् । शं यं रं वं लं षं क्षं हं सं मनोबुद्ध्यहंकारचित्तात्मनेऽस्त्राय फट् । ततः प्राणशक्ति

अर्चादौ हृदये चापि यथालब्धोपचारकैः ॥ द्रव्यक्षित्यात्मलिंगानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५० ॥ पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः॥ हृदादिभिः कृतन्यासो मूलमंत्रेण चार्चयेत् ॥ ५१ ॥ सांगोपांगां सपार्षदां तांतां मूर्तिं स्वमंत्रतः ॥ पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥५२॥ गंधमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥ सांगं संपूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम् ॥ ५३ ॥

रक्षा येन सः ॥ ४९ ॥ आदावेव द्रव्याणि पुष्पादीनि जंत्वादिशोधनेन क्षितिं संमार्जनादिना आत्मानमव्यग्रतया लिंगं मूर्तिमनुलेपक्षालनादिना निष्पाद्य योग्यानि कृत्वा ॥ ५० ॥ पाद्यादिपात्राण्युपकल्प्य सन्निधाप्य हृदि संपूजितं श्रीमूर्तौ ध्यात्वा हृदादिभिः हृदयशिरःशिखाकवचनेत्रास्त्रमंत्रैर्मूलमंत्रेण च देवे कृतन्यासो मूलमंत्रेणार्चयेत् ॥ ५१ ॥ अंगानि हृदयादीन्युपांगानि सुदर्शनादीनि तत्सहितां सपार्षदां सपरिवाराम् । कैरुपचारैरर्चयेत्तदाह । पाद्येति । आदिशब्देन मधुपर्कमाचमनं च ॥ ५२ ॥ अक्षतास्तिलकालंकारे न तु पूजायाम् । " नाक्षतैरर्चयेद्विष्णुं न केतक्या महेश्वरम् " इति निषेधात् । उपहारो नैवेद्यम् ॥ ५३ ॥

ध्यात्वा मनसा संपूज्य हृदये करं निधाय आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं सं हं सः मम प्राणा इह प्राणाः । आं ह्रीं क्रोमित्याद्युच्चार्य मम जीव इह स्थितः । आं ह्रीं मम सर्वेन्द्रियाणि । आं ह्रीं मम वाङ्मनश्चक्षुःश्रोत्रघ्राणपदाः प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । ॐ क्षं सं हं सः ह्रीं ॐ अष्टत्रिंशदधिकशताक्षरममुं प्राणप्रतिष्ठामंत्रं त्रिवारं जपित्वा षोडशप्रणवान् जपेत् ॥ " इति प्राणप्रतिष्ठा इत्यलम् ॥ सद्भिर्वर्णपदमातृकादिन्यासैः कृता रक्षाऽऽत्मनः कर्मणो वा येन स तथा । " भूतप्रेतादिभिश्चैव कृतन्यासो न हन्यते " इत्युक्तेः, " न्यासेन रहितं कर्म त्वद्धं गृह्णंति राक्षसाः " इत्युक्तेश्च ॥ * ॥ दीपिका—भूतशुद्ध्यादिपदेन तत्सेवोपयोगिपार्षदमूर्तिचिंतनपरिग्रहः । भूतशुद्धिर्व्याख्यास्यते सद्भिः केशवादिभिः ॥ ४९ ॥ अर्चादावित्यत्रादिना स्थंडिलादिग्रहः । जंत्वादिना गलितपत्रादिग्रहः । संमार्जनादिना लेपनादिग्रहः । क्षालनादिना वस्त्रासनशोधनादिग्रहः ॥ * ॥ अर्चादाविति युग्मकम् । सन्निधाप्य यथायोग्यस्थाने स्थापयित्वा । अर्चादावित्यादिना वक्ष्यमाणसूर्यादिग्रहः । सन्निधाप्येत्यस्यैव व्याख्यानम्—श्रीमूर्तौ ध्यात्वेति, मनसान्तरं श्रीमूर्तिरूपेण श्रीकृष्णं संनिधाप्येति वा । हृदयाय नमः शिरसे स्वाहा । शिखायै वषट् कवचाय हुम् । नेत्राभ्यां वौषट् अस्त्राय फडित्येवं मंत्रैर्मूलमंत्रेणाष्टादशाक्षरद्वादशाक्षरादिना स्वगुरूपदिष्टमंत्रेण वा ॥५०॥ पाद्यादीत्यत्रादिनाऽर्घ्याचमनीयादिग्रहः । उपकल्प्य सप्तविंशाध्यायव्याख्याने वक्ष्यमाणद्रव्यैः संपाद्य । हृदि संपूजितं प्रथमं हृदये मानसोपचारैः संपूजितं पश्चात्तमेव श्रीमूर्तौ पाषाणादिविग्रहे । मूलमंत्रलक्षणं गारुडे उक्तम्—" आदावोंकारमुच्चार्य नमोंते मध्यदेशके । देवतायाः स्वकं नाम मूलमंत्रः प्रकीर्तितः ॥ " इति । यथा—' ॐ विष्णवे नमः ' इत्यादि । यद्वा—मूलमंत्रो वैदिकस्तत्तद्देवतामंत्रो मंत्रशास्त्रविहितो वा यथाधिकारविहितः । अर्चयेत्सर्वोपचारान्समर्पयेत् । उपचाराश्च षोडश मंत्रशास्त्रे विहिताः—" पाद्यार्घ्याचमनीयं च स्नानं वसनभूषणे । गंधपुष्पधूपदीपनैवेद्याचमनं तथा । तांबूलमर्चना स्तोत्रं तर्पणं च नमस्क्रिया । प्रयोजयेत्प्रपूजायामुपचारांश्च षोडश ॥ " इति । दशोपचाराश्च—" पाद्यार्घ्याचमनीयं च मधुपर्काचमं तथा । गंधादयो नैवेद्यांता उपचारा दश क्रमात् ॥ " पंचोपचाराश्च—" गंधं पुष्पं तथा धूपं दीपं नैवेद्यमेव च " इति । क्वचिच्चतुःषष्ट्युपचारा अप्युक्तास्ते च महापूजायां, न नित्यपूजायामशक्यसंपाद्यत्वात् ॥ * ॥ ० ॥ ५१ ॥ सपरिवारां शक्तिपार्षदायुधादिसंयुताम् ॥ * ॥ सांगेत्यादि युग्मकम् । वस्त्रभूषणानां प्रत्यहं प्रोक्षणं कृत्वा समर्पणमिति " वासोभूषोपवीतानि प्रत्यहं प्रोक्ष्य चार्पयेत् । नैर्माल्यकालात्प्रागेव नैर्माल्ये त्वपरं ददेत् ॥ " इति तंत्रसारादेः । नैर्माल्यकालमग्रे वक्ष्यामः ॥ ५२ ॥ स्तवैः श्रौतागमपौराणैः स्तोत्रैः । नमेद्दंडवदित्यर्थः ॥ * ॥ अक्षता

आत्मानं तन्मयं ध्यायन्मूर्तिं संपूजयेद्धरेः ॥ शेषामाधाय शिरसा स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५४ ॥ एवमग्न्यर्कतोयादावतिथौ हृदये च यः ॥ यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ॥ ५५ ॥ इति श्रीमद्भा० महापुराण एकादशस्कंधे वसुदेवनारदसंवादे जायंतेयोपाख्याने विदेहप्रश्ने तृतीयोऽध्यायः ॥ ३ ॥ ॥ राजोवाच ॥ यानियानीह कर्माणि यैर्यैः स्वच्छंदजन्मभिः ॥ चक्रे करोति कर्ता वा हरिस्तानि ब्रुवंतु नः ॥१॥ द्रुमिल उवाच॥ यो वा अनंतस्य गुणाननंताननुक्रमिष्यन्स तु बालबुद्धिः ॥ रजांसि भूमेर्गणयेत्कथंचित्कालेन नैवाखिलशक्तिधाम्नः ॥ २ ॥ भूतैर्यदा पंचभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ॥ स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥

शेषा निर्माल्यम् । स्वधाम्नि स्वस्थाने । देवं हृदि मूर्तिं करंडके उद्वास्य स्थापयित्वा पूजाविधिं समापयेदिति शेषः ॥५४॥ तांत्रिकं कर्मयोगमुपसंहरति । एवमिति ॥५५॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां तृतीयोऽध्यायः ॥३॥ चतुर्थे त्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ॥ जयंतीनंदनो नाम्ना द्रुमिलो नवसत्तमः ॥ १ ॥ "मूर्त्याभिमतयाऽऽत्मनः" इत्यनेनात्मनः प्रियमवतारं पूजयेदित्युक्तेऽवतारज्ञानमपेक्षितम् । तथा "स्तवैः स्तुत्वा नमेद्धरिम्" इत्युक्ते गुणकर्मज्ञानं चापेक्षितमतः पृच्छति । यानि यानीति । कर्ता करिष्यति ॥ १ ॥ त्वया पृष्टानि कालत्रयसंबंधिसकलावतारगुणकर्माणि कथयितुमशक्यानि संक्षेपतस्तु कानिचित्कथयिष्यामीत्याह यो वा इत्यादिना । अनुक्रमिष्यन्गणयितुमिच्छति यः स तु बालानामिव बुद्धिर्यस्य स मंदमतिः । कालेन महता । कोऽपि महामतिः । रजांसि गणयेदप्यखिलशक्तिधाम्नः सर्वशक्त्याश्रयस्य भगवतो गुणांस्तु नैव गणयेत् । तथा च श्रुतिः "विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्यादि ॥ २ ॥ तत्रादौ पुरुषावतारमाह । भूतैरिति । यदा

श्वानुपहताश्च ताः स्रज इति वा ॥ ५३ ॥ तन्मयं तत्स्वरूपम् । 'नाऽविष्णुरर्चयेद्विष्णुम्' इत्यादिशास्त्रात ॥ * ॥ आत्मानं तन्मयं तदाविष्टं ध्यायन् "नारायणमयं धीराः पश्यन्ति परमार्थिनः" इत्यादिवत् । स्वधाम्नि श्रीकृष्णमूर्तिस्थाने उद्वास्योत्थाप्य शयनादिमुद्रया स्थापयित्वा । यद्वा—स्वधाम्नि प्रदेशविशेषे उद्वास्य इत उत्थाप्य शयनलीलायमानत्वेन ध्यात्वा ॥५४॥ सोऽर्चकः ॥ * ॥ संभवेनान्यान्यपि पूजांगान्याह—एवमग्न्यादिना । इति संदर्भः ॥ ५५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ अवताराणामीहा लीला तस्याः प्रश्नस्योत्तरम् । नवसु सत्तमो नवसत्तमः ( १ ) । यतोऽपेक्षितमतो हेतोः । इह लोके । स्वानां स्वस्य च छंद इच्छा तेन । जन्मभिराविर्भावैः । कर्तेति भवष्यति लुट् ॥ * ॥ अवतारेहाऽवतारलीला । नवसु सत्तमः "मूर्त्याभिमतया" इति श्रुतेः । भगवतः कियत्यो मूर्तय इत्यवतारजिज्ञासा तथा "स्तवैः स्तुत्वा नमेद्धरिम्" इति श्रुतेस्तस्य कियंति गुणचरितानि स्तव्यानीति चरितेपि जिज्ञासेत्यतः पृच्छति—यानीति ॥ १ ॥ प्रश्नस्य कार्त्स्न्येनोत्तरदानं तु सर्वथाऽशक्यमित्याह—विष्णुःवीर्यगणनाशक्यत्वे प्रमाणमाह—तथा चेति । कं कः न कोपीत्यर्थः । व्याख्यातेयं श्रुतिर्द्वितीयस्कंधे ॥ * ॥ द्रुमिल इति—द्रु द्रुतमवतारैः स्फूर्तिप्राप्तैर्मिलतीति द्रुमिलः । यद्वा—द्रावयंति स्वाविर्भावेनाधर्मं दुष्टदैत्यादीन्वा ते द्रवयः 'यदायदा हि धर्मस्य ग्लानिर्भवति' इत्याद्युक्तेस्तान्मिलति शास्त्रजव्यानेन संयुनक्तीति द्रुमिल इति निरुक्त्या तस्यैव सर्वावतारगुणकर्मादियाथार्थ्यविज्ञानात्स एवोवाचेति ज्ञेयम् । कोपि महामतिरिति कर्तुराक्षेपाल्लाभः । गणयेदपीति तद्गणनं संभवतीति । विष्णोर्गुणानामगण्यत्वे श्रुतिं प्रमाणपति—यः कविः पार्थिवानि रजांसि विममे गणितवान्सोपि विष्णोर्वीर्याणि कं कः प्रावोचं प्रावोचदित्यर्थः ॥ २ ॥ तत्र तेषु स्वच्छन्दावतारेषु ।

**यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेंद्रियाणि ॥ ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता॥४॥**
**आदावभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः॥रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु॥५॥**

स्वसृष्टैर्भूतैर्विराजं ब्रह्मांडं पुरं निर्माय तस्मिन् लीलया प्रविष्टो न तु भोक्तृत्वेन । प्रभूतपुण्यस्य जीवस्य तत्र भोक्तृत्वात् ॥ ३ ॥ अस्य गुणकर्माण्याह द्वयेन । यत्काय इति । यस्याधिष्ठेयः काय एषः । काय इति सप्तमी वा । तनुभृतां समष्टिव्यष्टिजीवानां ज्ञानकर्मेंद्रियाणि यस्य स्वतः स्वरूपभूतात्सत्त्वात्तनुभृतां ज्ञानम् यस्य स्वतःसिद्धं ज्ञानमिति वा । यस्य श्वसनतः प्राणाद्बलं देहशक्तिः ओज इंद्रियशक्तिः ईहा क्रिया । यश्च सत्त्वादिभिर्विश्वस्य स्थितिलयोद्भवे आदिकर्ता ॥ ४ ॥ आदिकर्तेत्यनेन तत्पूर्वकं कर्त्रेतरमपि सूचितं तद्दर्शयितुं गुणावतारद्वारा चराचरसृष्ट्यादिकर्तृत्वमाह । आदाविति । यस्येत्यनुषंगः । यस्य रजसाऽस्य जगतः सर्गे कार्ये शतधृतिः ब्रह्माऽभूत् । स्थितौ च विष्णुर्यस्य सत्त्वेनेति शेषः । क्रतुपतिस्तत्फलदाता । द्विजातीनां तद्धर्माणां च सेतुः पालक इत्यर्थः । यस्य तमसाऽस्याप्ययाय संहाराय रुद्रोऽभूत् । इत्येतैर्ब्रह्मा

तस्मिन्विराजाख्यपुरे । स्वांशेन चिच्छक्त्या । प्रभूतपुण्यस्य बहुपुण्यस्य । तत्र विराडाख्यसमष्टिस्थूलप्रपंचरूपदेहे बहुपुण्यवशाज्जीव एव वैराजत्वमाप्नोतीत्यर्थः । वस्तुतस्तु सोऽपीश एवेत्याह—नारायण आदिदेव इति । नारायण एव स्वमायया विराडादिभावं प्राप्नोतीति भावः ॥ * ॥ **दीपिका**—तत्र तेष्ववतारेषु । तस्मिन्ब्रह्माण्डे । स्वांशेनांतर्यामिरूपेण । लीलया नियमनलीलया प्रविष्टः न तु भोक्तृत्वेन । "अनश्नन्नन्योऽभिचाकशीति" इति श्रुतिविरोधात्, 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिंचितामेति' इत्युक्तेः। प्रभूतं प्रचुरं पुण्यं यस्य तस्य हिरण्यगर्भाख्यसमष्टयभिमानिनो जीवस्य । तत्र ब्रह्माण्डे । भोक्तृत्वात् भोक्तृत्वाधिकारात् । यदा स्वांशेन प्रविष्टस्तदा पुरुषाभिधानं पुरुषसंज्ञामवाप आदिदेवो नारायणो भगवान् " नारायणस्तुरीयाख्यो भगवच्छब्दशाब्दितः " इत्यादेः । यदा महत्स्रष्टृत्वेन पुरुषाभिधानमवाप तदा भूतैर्विराजं विरचय्य तस्मिन् स्वांशेनांतर्यामितया प्रविष्टो भूत्दिति **संदर्भादयः** ॥ ३ ॥ यस्य पुरुषाभिधानस्याधिष्ठातुं योग्योऽधिष्ठेय एष प्रसिद्धः प्रपञ्चः । एतेन जगत आधारत्वं पुरुषस्याधेयत्वमाधेयापेक्षयाधारस्यैव महत्त्वमाधेयस्याल्पत्वं च भवतीति भगवतोऽल्पत्वस्यानौचित्यादाह—सप्तमी वेति । तनुभृत्त्वाविशेषात्तस्यापि ज्ञानमन्यत एव स्यादत आह—यस्य स्वतः सिद्धमिति । स्थितिश्च लयश्चोद्भवश्चेति समाहारद्वंदे सप्तम्यन्तम् ॥ * ॥ **दीपिका**—अस्य पुरुषावतारस्य गर्भोदशायिनः । यस्य ब्रह्माण्डप्रविष्टस्य ' द्वितीयं त्वंडसंस्थितम् ' इत्युक्तेरधिष्ठेयो नियम्यः । सप्तमीपक्षे तु नवीनोपासकानां चित्तस्थैर्यार्थं यस्य काय एव भुवनत्रयसंनिवेशः ' पातालमेतस्य हि पादमूलम् ' इत्यादिशास्त्रेण कल्पितः । यद्वा—काय इति सप्तमी तृतीयार्थे, यस्य कायेनैव भुवनत्रयसन्निवेशो भवति " भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोस्य नाभितः" इत्यादेः । ज्ञानकर्मेंद्रियाणि यस्येंद्रियैर्भवंति 'वाचां वह्नेर्मुखं क्षेत्रम्' इत्यादेः । स्वत इत्यस्य व्याख्या स्वरूपभूतसत्त्वादिति । यस्य स्वरूपभूतविशुद्धसत्त्वादेव तनुभृतां ज्ञानं भवति । पूर्वार्धे विशेष्यस्य सत्त्वस्याध्याहार उत्तरार्धे तु यस्य स्वतःसिद्धं ज्ञानमिति सर्वज्ञत्वमुक्तम्"शास्त्रयोनित्वात्"इति न्यायोऽप्यत्रानुसन्धेयः॥*॥**संदर्भोऽ**पीत्थमेव॥ ॥*॥ **विश्वनाथस्तु**—यस्य महाविष्णोः काये भुवनत्रयाणामूर्ध्वाधोमध्यभुवनमयानां कोटिकोटिब्रह्मांडानां प्रतिरोमकूपगतत्वेन सन्निवेशो भवति।तनुभृतामिति—यस्य स्वतः स्वांशभूतादंतर्यामित एव तनुभृतां ज्ञानम् । अन्यत्तैः ॥४॥तत्पूर्वकं पुरुषावतारपूर्वकम् । तत् कर्त्रन्तरत्वम्। गुणोपाधिका अवतारा ब्रह्मविष्णुरुद्रा गुणावताराः तद्वारा तान्द्वारीकृत्य। यस्य पुरुषस्य । रजसा रजःशक्त्या।सर्गे सर्गार्थम्, निमित्ते सप्तमी ।"शतानंदः शतधृतिः पंकजोद्भव आत्मभूः" इति धरणिः । तत्फलदाता क्रतुफलदाता । तद्धर्माणां द्विजातिधर्माणाम् । इत्यर्थ इति—सेतुरिव रक्षक इति भावः । सततं प्रतिकल्पम् ॥ * ॥ तत्पूर्वकम्—स पुरुष एव पूर्वः यस्य कर्त्रन्तरस्य तत्तथा । तद्दर्शयितुं ब्रह्मादिलक्षणं कर्त्रेतरं ज्ञापयितुं, यस्येत्यनुषङ्गः। यस्येंद्रियैरिहान्वितस्य यच्छब्दस्य पुनः संबंध इति ॥ * ॥ एवं **संदर्भस्तु**—तस्माद्गुणावतारमाह—सर्गे विसर्गे विष्णुः, सत्त्वेनेत्यनुक्तिस्तस्य शुद्धरूपत्वात्, सान्निध्ये

धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नरऋषिप्रवरः प्रशांतः ॥ नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेवितांघ्रिः ॥६॥
इंद्रो विशंक्य मम धाम जिघृक्षतीति कामं न्ययुंक्त सगणं स बदर्युपाख्यम् ॥ गत्वाप्सरोगणवसंतसुमंदवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥
विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् ॥ मा भैर्विभो मदनमारुतदेववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥

दिभिर्निमित्तभूतैः प्रजासृद्ध्वादयो यतो भवंति स आद्यः पुरुष इत्यन्वयः ॥ ५ ॥ नरनारायणावतारमाह । धर्मस्येति । धर्मस्य भार्यायां दक्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेनाजनिष्ट जातः । तच्चरितमाह । नैष्कर्म्यमात्मस्वरूपं लक्ष्यते येन तत्कर्म कर्मनिर्हाररूपं वा उवाच नारदादिभ्यः स्वयं चचार च । योऽद्यापि कर्माचरन्नास्ते । ऋषिवर्यैर्निषेवितावंघ्री यस्य सः ॥ ६ ॥ भगवदवतारत्वद्योतकं परमोपशमं दर्शयितुमितिहासमाह इंद्र इति दशभिः । धाम स्थानं तपसा ग्रहीतुमिच्छतीति विशंक्य तपोनाशाय कामं सपरिवारं प्रेषयामास । स कामो बदरीभिरुपाख्यायते यस्तं तस्याश्रममप्सरोगणादिभिः सह गत्वा स्त्रीणां प्रेक्षणान्येव इषवो बाणास्तैः । न तस्य महि महिमानं जानातीत्यतन्महिज्ञः ॥ ७ ॥ अक्रममपराधम् । अहो अहं धीर इति विस्मयो गर्वस्तद्रहितः । एजमानान् शापभिया कंपमानान् । भो विभो समर्थ मदन मारुत हे देववध्वः कामवाय्वप्सरसः मा भैष्ट । बलिमातिथ्यम् । तान्प्रार्थयते । इममस्माकमाश्रममशून्यं पूर्णं कुरुध्वम् । आतिथ्याभावे शून्यप्रायः स्या

नैव सत्त्वगुणोपकारकत्वाच्च ॥ ५ ॥ तच्चरितं नरनारायणचरितम् । कृतावतारप्रयोजनोऽपि लोकानुग्रहकातरो भूमावेकत्राश्रमविशेष आस्त इत्याह—योद्यापीति । ऋषिवर्यैर्नारदाद्यैः ॥ * ॥ निर्गतं कर्म कर्तृत्वं यस्मात्तदकर्तृ आत्मस्वरूपं निष्कर्मेत्युच्यते, ततः स्वार्थे ष्यञ्, नैष्कर्म्यं तल्लक्ष्यते ज्ञायतेऽनेन तत्कर्म भगवदाराधनलक्षणमुवाच नारदादिभ्यः । "तंत्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मिणां यतः" इति प्रथमोक्तेः । कर्म भगवद्ध्यानलक्षणं तपः ॥ ६ ॥ श्रीनारायणं प्राणं च विना कामादयो ज्ञानरोधिनः सर्वान्सुरानप्याविशंति किमुतान्यानित्यभिप्रायेणेन्द्रस्याज्ञानं भगवन्महिम्नोऽप्रतिहतत्वं च प्रकटयति—उपाख्यायते लोकैः कथ्यते । तस्य नरनारायणस्य । काम इतींद्रादीनामुपलक्षणम् । अतन्महिज्ञत्वे कामादयो भगवदभिभवेऽसमर्था इत्यत्र प्रमाणमाह—"अथैनमेव नाप्नोत् योऽयं मध्यमः प्राणः एवमेता देवताः पाप्मनाविद्धाः" इत्यादिश्रुतेः, "तेहासुरा रुत्वा विदध्वसुर्यथाश्मानमास्ये धृत्वा विध्वंसेतैवं है व विध्वंसमाना विष्वंचो विनेशुः" इत्यादिश्रुतेश्च । असुरा असुरतुल्याः कामादय इत्यर्थः ॥ * ॥ परमोपशमं सर्वोत्कृष्टांतरिंद्रियनिग्रहं, किं वा—'शमो मन्निष्ठता बुद्धेः' इति भगवदुक्तेर्लोकसंग्रहार्थं बुद्धेर्भगवन्निष्ठाम् ॥ ७ ॥ भातीति भुस्तत्संबुद्धौ भो, कामं प्रतीयं संबुद्धिः । मादयति कामिन इति मदनो वसन्तः 'वसंत उन्मादकरः प्रजानाम्' इत्युक्तेः । तत्संबुद्धौ हे वसंतर्तो । मारयति विरहिण इति मरुत्स एव मारुतो मलयानिल इति ज्ञेयम् । प्रकृतत्वात्स एव कामोद्द्योतकः । यद्वा—मदनपदेनैव मारुतग्रहणमपि सिद्धम् । इह मारुतेति क्रियापदम् । हे देववध्वः यूयमिन्द्रभयान्मा रुत रोदनं मा कुरुतेति मत्कृपया सोऽपि वः किंचिन्न वदिष्यतीत्यर्थः । तान्कामादीन् भगवान्प्रार्थयते । इत्यर्थ इति—"गतानां यत्र पांथानां न सत्कारो भवेद्यदि । तत्स्थलं शून्यमेवेह नाशून्यं गृहवासिभिः ॥" इत्युक्तेरिति भावः ॥ * ॥ प्रहस्येति । अहो मन्मायामाहात्म्यं यदमी मामपि मोहयितुं प्रवृत्ता इत्युपहस्य भवति प्रभवतीति भुरौणादिको डुस्तत्संबुद्धौ भो विभो समर्थेति यावत् । तान्मदनादीन् । पूर्वमेव नारदादिविशिष्टस्य स्वस्य तत्र सत्त्वात्स चाश्रमोऽशून्य एव । अशून्यस्याशून्यकरणं न संगच्छते, इत आतिथ्याभावेनैव तत्र शून्यत्वमुत्प्रेक्षणीयमिति । अत एव प्रायःशब्दप्रयोगेण व्याख्यातमत उक्तमित्यर्थ इति ॥ * ॥ **विश्वनाथस्तु**—बलिम्पूजोपहारं शाकपत्रादिकमस्मदातिथ्यं

इत्थं ब्रुवत्यभयदे नरदेवदेवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ॥ नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥ त्वां सेवतां सुरकृता बहवोँ तरायाः स्वौको विलंघ्य परमं व्रजतां पदं ते ॥ नान्यस्य बर्हिषि बलीन्ददतः स्वभागान्धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥ क्षुत्तृट्त्रिकालगुणमारुतजैह्वयशैश्न्यानस्मानपारजलधीनतितीर्य केचित् ॥ क्रोधस्य यांति विफलस्य वशं पदे गोर्मज्जंति दुश्चरतपश्च वृथोत्सृजंति ॥ ११ ॥

दित्यर्थः ॥ ८ ॥ हे नरदेव अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते । लज्जाभरेणैवावनतशिरस्का इत्यर्थः । सघृणं यथा भवति तथा कृपां जनयंत इत्यर्थः । कृपायुक्तं तमिति वा मायातः परे अतोऽविकृते । स्वारामाश्च ते धीराश्च तेषां निकरैरानतं पादपद्मं यस्य तस्मिन् । त्वय्ये तदक्षोभानुकंपादि न विचित्रम् ॥ ९ ॥ अस्माकं चापराधाचरणं स्वभावत्वान्न चित्रमित्याहुः । त्वामिति । त्वां सेवतां सेवमानानां सुरैरिंद्रादिभिः कृता अंतराया विघ्ना भवंति । कस्मादित्यत आहुः । स्वौक इति । स्वस्थानं स्वर्गमतिक्रम्य परमं तव स्थानं व्रजताम् । नान्यस्य त्वामसेवमानस्य । कुतः । बर्हिषि यज्ञे स्वभागान्पुरोडाशादीन्बलीन्करान्कृषिक इव राज्ञे इंद्रादिभ्यो ददतः प्रयच्छतः । तर्हि किं मद्भक्तो विघ्नैर्नश्यति नेत्याहुः । धत्त इति । यदीति निश्चये । यतस्त्वं सर्वसुराधीश्वरोऽविता रक्षकोऽतोऽसौ विघ्नानां मूर्ध्नि पदमंघ्रिं धत्ते । कुतः पुनस्त्वयि विघ्नशंकेति भावः ॥ १० ॥ त्वदभक्तानां तु केवलं तपश्चरतामियं गतिः । अस्माकं वा वशं यांति क्रोधस्य वा तत्रास्मद्वशाः कामोपभोगमपि तावदनुभवंति क्रोधस्य वशाः पुनरतिमंदा इत्याहुः । क्षुत्तृडिति । क्षुच्च तृट् च त्रिकालगुणाश्च शीतोष्णवर्षाणि च मारुतश्च प्राणो बाह्यो वा जैह्वया जिह्वाभोगाश्च शैश्न्या गुह्योपभोगाश्च एतानस्मानपारजलधिरूपानतितीर्य विलंघ्य गोष्पदे मज्जंति । कुतः । यतः क्रोधस्य विफलस्य वशं यांति गच्छंति । किं च

गृहीत वयं संपन्ना एव भवेमेति चेत् इममाश्रममशून्यमिति तैः ॥ ८ ॥ इत्यर्थ इति—अहो अपकारिष्वप्यस्मास्वयमुपकरोतीति धिगस्मानित्यधोवदना बभूवुरिति भावः । इत्यर्थ इति—तानधोमुखान् दृष्ट्वा भगवतः करुणोदयोऽभूदिति भावः । संभवत्वाद्भगवद्विशेषणमेवेत्याह—कृपायुक्तं तमिति वेति । यतो मायातः परोऽत एव हेतोः । अविकृते कामादिविकारहीने । निकरैः समूहैः ॥ * ॥ हे नरदेवेति—नरस्य सतो नृपस्य केवलं भूदेववद्देवशब्दयोगेनैवातिथ्यं विहितं ते तु साक्षादेव देवा इति भावः । यद्वा—यथा त्वं नरदेवत्वाल्लोकरक्षकस्तथा स देवदेवत्वाद्देवरक्षक एव "अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः" इत्यस्य नरदेवदेवयोस्तुल्यन्यायत्वादेवेति भावः । किं च—लज्जाया मनोधर्मत्वेन शिरस्सु तदसंभवात्साहित्यस्य लज्जानुभावत्वेनैव विवक्षितत्वाल्लज्जाभरेणैवेत्यादि आर्थिकार्थत्वेन व्याख्यातम् । क्रियाविशेषणे घृणाया विषयो न व्यक्तोऽत इत्यर्थ इत्युक्तम् । एतच्छब्दस्याव्यवहितपूर्वपरामर्शकत्वादक्षोभानुकम्पादीति व्याख्यातम्, तत्र प्रहस्येत्यनेन क्रोधाभावरूपोऽक्षोभ उक्तः । मा भैष्टेत्यनेन भयात्मकदुःखप्रहाणेच्छारूपानुकंपोक्तादिनातिथ्यं, तच्च बलिं गृह्णीतेत्यनेनोक्तम् ॥ ९ ॥ यद्वा—स्वस्वभावं द्योतयंत आहुः—अस्माकमिति । मद्भक्ताः किमिन्द्रादिभिर्भक्तेश्च्याव्यंत इत्याक्षिपति—तर्हीति । इति भाव इति—यदि त्वत्कृपया भक्ता एव विघ्नान्न गणयंति तव तु सा केत्याशयः ॥ * ॥ **दीपिका**—यदीति 'यदि वेदाः प्रमाणं स्युः' इतिवन्निश्चये । यतस्त्वं भक्तानां निश्चयेन रक्षकोऽतोऽसौ भक्तो विघ्नाञ्जयतीत्यर्थः । त्वद्भक्ता अपि त्वत्प्रसादादस्मान्न गणयंति कुतः पुनस्त्वं गणयसीत्याहुः । अन्यत्तैः ॥ १० ॥ द्वयी द्विरूपा । त्रयो मासचतुष्कचतुष्कपरिमाणाः, कालस्य संवत्सरात्मकस्य, बाह्यमारुतजयस्तत्सहनं, प्राणजयः प्राणायामरूपः ॥ * ॥ **दीपिका**—तत्र क्रोधास्मद्वशगयोर्मध्ये । कामोपभोगमपीति—यद्यपि कामोपभोगस्तपःफलं न भवति

इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ॥ दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥ १२ ॥ ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ॥ गंधेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥ तानाह देवदेवेशः प्रणतान्प्रहसन्निव ॥ आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥ १४ ॥ ओमित्यादेशमादाय नत्वा तं सुरवंदिनः ॥ उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥ इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ॥ ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥१६॥ हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान्पिता नः ॥ विष्णुः शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥

जले मज्जंतो यथा विवशाः संतो मस्तकारोपितं भारमुत्सृजंति तथा वृथैव न मोक्षाय न च भोगाय शापादिना दुश्वरं तप उत्सृजंति ॥ ११ ॥ स्त्रियो योगनिर्मिताः स्त्रीः शुश्रूषां कुर्वतीः स्वर्चिताः सुष्ठ्वलंकृतास्तेषां स्वलावण्यादिदर्पोपशमाय दर्शयामास ॥ १२ ॥ रूपिणी मूर्तिमती श्रीरिव ताः स्त्रियः स्त्रीर्दृष्ट्वा। तासां तु रूपस्यौदार्येण महत्त्वेन हता श्रीः कांतिर्येषां ते ॥ १३ ॥ वृङ्ध्वं वृणीध्वम्। क वयं वराकाः क चेमा इति चेत्तत्राह। सवर्णां समानरूपाम्। नैकाप्यस्मदनुरूपेति चेन्मा भवतु तथापि स्वर्गस्य भूषणरूपां स्वर्गं नेतुमर्हामित्यर्थः ॥ १४ ॥ सुरवंदिनो देवभृत्याः ॥ १५ ॥ इंद्राय इंद्रं प्रति नारायणबलमूचुः। शक्रस्तत्रास त्रासं प्राप्तो विस्मितश्च। तत्र विस्मित आसेति वा ॥ १६ ॥ अन्यानप्यवतारांस्तच्चरितानि चाह। हंसस्वरूपीति। दत्तो दत्तात्रेयः। कुमारः सनकादिः। नः पिता ऋषभश्च। विष्णुरेव कलयाऽवतीर्णः सन्नात्मयोगमवदत्। तेन विष्णुना हयास्ये हयग्रीवावतारे मधुभिदा सता ततः श्रुतय आहृताः ॥ १७ ॥

तथाप्यस्मद्वशगास्तुच्छमपि तमनुभवंतीत्यपेरर्थः। क्रोधस्य गोष्पदत्वं स्वविषयघातमात्रेण नष्टत्वाजिह्वादिजयापेक्षया तुच्छत्वाच्च, न तु विषयलोभवदनश्वरत्वम्। तदुक्तं सप्तमे—"कामस्यांतं हि क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात्। जनो याति न लोभस्य जित्वा भुक्त्वा दिशो दश ॥" इति क्रोधस्य गोष्पदत्वारोपेण तद्वतां च मज्जनकर्तृत्वारोपेण तपसि मस्तकभारत्वमारोपितम्। वृथैवेत्यस्य व्याख्यानं—न मोक्षायेत्यादि ॥ ११ ॥ इत्युक्तप्रकारेण। तेषां कामादीनाम्। स्वस्य लावण्यादिभिर्यो दर्पस्तस्योपशमाय। आदिना माधुर्यादिग्रहः। अत्यद्भुतदर्शना अदृष्टश्रुतचरदर्शनाः। विभुरिति सर्वसमर्थः ॥ * ॥ योगबलेन तद्दर्शयामास सेवां कुर्वतीरिव, प्राकृतीरित्यर्थः ॥ १२ ॥ तासां भगवदुद्भावितस्त्रीणाम् ॥ * ॥ तासामुर्वश्यादीनाम् ॥ १३ ॥ तेषां पराभवदर्शनेन हसन्निव शमिनां हासानौचित्यादेव मुखप्रसत्तिर्द्योतिता। यद्वा—भगवदाराधनतपोनिष्ठानां न विघ्ना भवंतीति प्रहसंस्तथा चेवेत्यादिनाधिकार्थम्। स्वर्गभूषणरूपामिति व्याख्यानाद्भूषणमित्येव स्वामिसंमतः तान्कामादीन्। वृङ्ध्वमित्यार्षम्। वराकाः शोच्याः "वराकः शङ्करे पुंसि शोचनीयेऽभिधेयवत्" इति मेदिनी ॥ * ॥ • ॥ १४ ॥ आदेशमाज्ञाम्। ओमिति अंगीकारेऽव्ययम् ॥ * ॥ ओमित्यंगीकारे। आदेशमाज्ञाम् ॥ १५ ॥ तत्रास 'त्रसी—उद्वेगे' लिट्। संदेहजनकत्वेन पूर्वार्थस्यान्यार्थमाह—तत्र तदा। आस बभूवेत्यर्थः ॥ * ॥ तत्र नारायणबले। विस्मितो बभूव ॥ १६ ॥ तच्चरितान्यन्यावतारचरितानि। आत्मयोगं आत्मनोर्जीवपरात्मनोर्योगमभेदमिति। त्रयाणामेकमेव कर्मेति। मधुदैत्यं भिनत्तीति

गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरतांभसः क्ष्माम् ॥ कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुंचदार्तम् ॥ १८ ॥ संस्तुन्वतोऽब्धिपतिताञ्छ्रमणानृषींश्च शक्रं च वृत्रवधतस्तमासि प्रविष्टम् ॥ देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेंद्रमभयाय सतां नृसिंहे ॥ १९ ॥ दैवासुरे युधि च दैत्यपतीन्सुरार्थे हत्वांतरेषु भुवनान्यदधात्कलाभिः ॥ भूत्वाऽथ वामन इमामहरद्बलेः क्ष्मां याच्ञाछलेन समदाददितेः सुतेभ्यः ॥ २० ॥ निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाऽप्ययभार्गवाग्निः ॥ सोऽब्धिं बबंध दशवक्त्रमहन्सलंकं सीतापतिर्जयति लोकमलघ्नकीर्तिः ॥ २१ ॥ भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ॥ वादैर्विमोहयति यज्ञकृतोऽतदर्हाञ्छूद्रान्कलौ क्षितिभुजो न्यहनिष्यदंते ॥ २२ ॥

इला पृथ्वी । ओषधयश्च गुप्ताः । क्रौडे च वाराहावतारे । ग्राहाद्गजेंद्रममुंचन्मोचयामास । एवमादौ यत्रावतारनाम नास्ति तत्र विष्णुः शिवाय जगतां कलयाऽवतीर्ण इत्यनुवर्तनीयम् ॥ १८ ॥ संस्तुन्वतः स्तुतिं कुर्वाणान् ऋषीन्वालखिल्यान्कश्यपार्थं समिदाहरणे गोष्पदे निमग्नानिंद्रेणोपहसितानुद्धृत्यापदोऽमोचयत् । तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास । असुरगृहे पिहिता निरुद्धा या देवस्त्रियस्ताश्चामुंचदनेकावतारैः ॥ १९ ॥ अंतरेषु सर्वमन्वंतरेषु कलाभिर्मूर्तिभिर्भुवनान्यदधादपालयत् । इमां क्ष्मां समदाद्ददौ ॥ २० ॥ हैहयानां कुलस्याप्ययाय भार्गवरूपोऽग्निः । स रामो दाशरथिः सन्सलंकं लंकायां स्थितम् । स च जयति । वर्तमानकालीनोऽवतार इत्यर्थः ॥ २१ ॥ भाविनं रामकृष्णावतारमाह । भूमेरिति । बुद्धावतारमाह । वादैरिति । अतदर्हान्यज्ञानर्हान्दैत्यान्विमोहयिष्यति । कल्क्यवतारमाह । शूद्रानिति ।

तथा तेन । ततो मधोः । आहृता आनीताः ॥ * ॥ आत्मयोगम्—तत्र हंसः सनकादिभ्यः, दत्तो यदुप्रह्लादिभ्यः, कुमारो नारदाय, ऋषभश्चास्मभ्यमवदत् । ततो मधुदैत्यात् ॥ १७ ॥ अप्यये प्रलये । मनुः सत्यव्रतो नाम । मात्स्ये मत्स्यावतारे । अमृतोन्मथनेऽमृतार्थं क्षीरसमुद्रमथने । प्रपन्नं शरणागतम् । एवमादौ ग्राहात्प्रपन्नमित्यादिस्थले ॥ * ॥ ० ॥ १८ ॥ कर्मणान्यावतारचरितान्यप्याह—संस्तुन्वत इति । स्तौतेस्सौवादिकत्वमार्षम् । ततः शतृप्रत्ययः ॥ * ॥ ० ॥ १९ ॥ 'कला मूर्तौ षोडशांशे' इति धरणिः । मूर्तिभिर्विष्वक्सेनादिभिः । अथ वैवस्वतमन्वंतरे । अदितेः सुतेभ्यो देवेभ्यः ॥ * ॥ अदधादपालयत्, धातूनामनेकार्थवात् । अथेत्यर्थान्तरं ॥ २० ॥ अप्ययाय नाशाय । भार्गवरूपः पर्शुरामरूपः । स रामः पर्शुराम एव । इत्यर्थ इति—सीरध्वजस्य समये रामाविर्भावोऽतस्तदा भविष्यदपि नित्यविहाराभिप्रायेण वर्तमानत्वोक्तिरिति भावः ॥ * ॥ स इति अंशांशिनोरभेदाभिप्रायेण । सहाव्ययस्यानेकार्थत्वाद्विद्यमानार्थतामभिप्रेत्य लंकायां स्थितमिति व्याख्यातम्, अनेकार्थता तु सहस्याव्ययीभावसमासे पाणिन्यादिभिः सहरिसाग्निप्रभृतिप्रयोगेषु दर्शिता । यद्वा—"तात्स्थ्यात्ताच्छब्द्यम्" इति न्यायेन लंकास्थसर्ववीरा लंकाशब्देन ग्राह्या लंकास्थसर्ववीरसहितमहन् ॥ २१ ॥ भाविनं भविष्यम् । अजन्मा प्राक्तजन्मातीतः । सुरैरपीति । किं पुनर्मानुषैरित्याह—अंते

एवंविधानि कर्माणि जन्मानि च जगत्पतेः ॥ भूरीणि भूरियशसो वर्णितानि महाभुज ॥ २३ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे वसुदेवनारदसंवादे जायंतेयोपाख्याने विदेहप्रश्ने चतुर्थोऽध्यायः ॥ ४ ॥ राजोवाच ॥ भगवंतं हरिं प्रायो न भजंत्यात्मवित्तमाः ॥ तेषामशांतकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥ चमस उवाच ॥ मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ॥ चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ २ ॥

न्यहनिष्यन्निहनिष्यति ॥ २२ ॥ २३ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ पंचमे भक्तिहीनानां का निष्ठा को युगेयुगे ॥ पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते ॥ १ ॥ त्वां सेवतां सुरकृता बहवोंतराया इत्यनेन श्रीहरिभक्ता विघ्नमूर्ध्नि पदं दत्वा परां गतिं यांति अभक्तानां तु विघ्ना भवंतीत्युक्ते तर्हि तेषां का गतिर्भवतीति पृच्छति । भगवंतमिति । हे आत्मवित्तमाः अविजितात्मनामत एवाशांतकामानां का निष्ठा किं प्राप्यमित्यर्थः ॥ १ ॥ स्वजनस्य गुरोर्भगवतोऽ

कलियुगावसाने । ऌडर्थे लङ् न्यहनिष्यदिति ॥ * ॥ शूद्रानित्युभयत्रान्वेति । पूर्वत्रोग्राख्यान् परत्र म्लेच्छान् विमोहयति बुद्धः, हनिष्यति कल्किः ॥२२॥ अवतारतत्कर्मणामानंत्यं निगमयति—एवमिति । एवंविधानि एतादृशानि । महतो भुनक्ति हरिभक्तिनिष्ठान्सेवनेन पालयतीति तथा । सत्संगनिरतत्वात्तत्रोक्तेतरावतारज्ञानमपि न दुःसंपाद्यमिति संबुद्ध्यभिप्रायः ॥ * ॥ ० ॥ २३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ का निष्ठा का स्थितिः 'निष्ठा स्यात्स्थितिनाशयोः'' इति निरुक्तिः ( १ ) । ये न भजन्ति तेषामित्यन्वयः । अत एवाजितात्मत्वादेव । इत्यर्थ इति—का तेषां गतिर्भवतीति भावः ॥ * ॥ **दीपिका**—का निष्ठा किं प्राप्यम् । पूजाविधिः पूजाप्रकारः । पूर्वाध्यायेनावसरसंगतिमाह—'त्वां सेवताम्' इत्यादिना । तेषामभक्तानां का गतिः, किं प्राप्यम्, एवं कतियावतारैः ख्यापितयशस्यपि भगवति विमुखीभूय किं लिप्सन्ते इत्युद्भूतविस्मयः पृच्छति—हे आत्मवित्तमा इति । आत्मविदो जीवश्चेतनो देहादिर्जड इति ज्ञानवन्त एव, जीवेश्वरविभागतारतम्यविदस्त्वात्मवित्तराः सर्वशास्त्रतात्पर्यविषयं केवलं श्रीकृष्णभक्तियोगमेव ये जानन्ति ते आत्मवित्तमा एतादृशा यूयमेव । अतः स्वयं मुक्ता अन्यान्मोचयितुं क्षमा इत्यर्थः । यद्वा—'वेदो नारायणः साक्षात्' इति न्यायेनात्मशब्दोऽत्र वेदपरो ज्ञेयः । पाठतो वेदज्ञा आत्मविदोऽर्थतस्तज्ज्ञा आत्मवित्तरा उपक्रमोपसंहारादिभिर्वेदतात्पर्यज्ञा आत्मवित्तमास्त एव हि दानतीर्थाटनयज्ञतपोज्ञानप्राप्य गतिज्ञाभवंति, न तु पूर्वेऽतो मत्प्रश्नोत्तरं दातुं कल्पा यूयं वदतेति संबुद्ध्यभिप्रायः ॥ १ ॥ गुरुद्रोहात्तेषां महान्दोष इत्याह—स्वजनकस्येति । नन्वत्र ''मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह । चत्वारो जज्ञिरे वर्णाः'' इत्यस्य ''गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम । वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः ॥'' इत्यनेन विरोधो न शंक्यः । पुरुषादुत्पत्तिमात्रस्य विवक्षितत्वात्तथाहि वर्णा एव पुरुषस्य मुखादिभ्यो जज्ञिरे न त्वाश्रमास्तेषां सहोक्तिस्तु पुरुषादुत्पत्तिमात्र एवाऽन्यथा गृहाश्रम इति भगवदुक्तिव्याकोपः स्यात् । यद्वा—सृष्ट्यादावाश्रमोत्पत्तिस्तु ब्रह्मणः पूर्वादिमुखतः श्रुत्वा तृतीयस्कन्धे तत्र ''न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ'' इत्युक्तेश्च चतुर्विधसंन्यासश्चतुर्मुखेभ्य उद्भूतो मुखं हि शिर एवावयवावयविनोरभेदोपचारात् ॥ * ॥ चमसशब्दस्य यज्ञपात्रवाचकत्वेन सुपात्रत्वात्सुपात्रेणैव कुपात्रगतिर्वाच्येति स एवोवाच मुखेति विराट्तदंतर्यामिणोरभेदोक्तिः । मुखबाहूरूपादेभ्य इत्युपलक्षणमेवाश्रमेषु । तदुक्तम्—''गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम । वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः ॥'' इति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—अत्र मुखादिभ्य आश्रमैः सह चत्वारो वर्णा जज्ञिरे इत्यन्वये आश्रमाणामपि मुखादिभ्य एवोत्पत्तिः

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ॥ न भजंत्यवजानंति स्थानाद्भ्रष्टाः पतंत्यधः ॥ ३ ॥ दूरेहरिकथाः केचिद्दूरेचाच्युतकीर्तनाः ॥ स्त्रियः शूद्रादयश्चैव तेऽनुकंप्या भवादृशाम् ॥ ४ ॥ विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदांतिकम् ॥ श्रौतेन जन्मनाथापि मुह्यंत्याम्नायवादिनः ॥ ५ ॥

नादराद्गुरुद्रोहेण दुर्गतिं यांतीति वक्तुं भगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह । मुखेति । गुणैः सत्त्वेन विप्रः । सत्त्वरजोभ्यां क्षत्रियः । रजस्तमोभ्यां वैश्यः । तमसा शूद्र इति ॥ २ ॥ एषां मध्ये येऽज्ञात्वा तं न भजंति ये च ज्ञात्वाप्यवजानंति । आत्मनः प्रभवो जन्म यस्मात्तम् । तदभजने कृतघ्नतामप्याह । ईश्वरमिति । स्थानाद्वर्णाश्रमाद्भ्रष्टाः ॥ ३ ॥ तत्र येऽज्ञास्ते भवद्विधानामनुग्राह्या इत्याह । दूर इति । दूरे हरिकथाश्रवणं येषां ते अत एव दूरे चाच्युतकीर्तनं येषां ते । दूरे अच्युतकीर्तनाश्चेति वा ॥ ४ ॥ ज्ञानलवदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याशयेनाह । विप्र इति । श्रौतेनोपनयनाख्येन । उपलक्षणमेतत् । अध्ययनादिनाऽपि हरेः पदांतिकं तद्भजनोत्तमाधिकारं प्राप्ता अपि मुह्यंति कर्मफलेषु सज्जंते । कुतः । आम्नायेषु ये वादा अर्थवादास्ते मोहकतया विद्यंते येषां ते । तदुक्तं गीतासु । "यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः ॥

प्रसज्यते सा च न तथा यद्वक्ष्यते गृहाश्रम इत्यादि । तस्मान्मुखबाहूरुपादेभ्य इत्यतः प्राग् जघनहृद्वक्षोमस्तकादित्यध्याहार्थं ततश्च जघनादिभ्यो मुखादिभ्यश्च सहाश्रमैः क्रमेण वर्णा जज्ञिर इति संगतम् ॥ २ ॥ एषां चतुर्णां वर्णानां मध्ये । ईश्वरं सर्वकर्मफलप्रदम् । फलदातुरभजने कृतघ्नता स्फुटतरैवेत्यर्थः । ईश्वरावज्ञानाद्वर्णाश्रमधर्माच्च्युता नरकेषु पतंतीति भावः ॥ * ॥ दीपिका—एषां मध्ये ये न भजंति आत्मनः प्रभवो यस्मात्तमादिपितरमित्यर्थः । न भजन्त्यत एवावजानन्ति अवश्यभजनीयस्य गुरोरभजनमेवावज्ञेति भावः । स्थानाद्वर्णाश्रमलक्षणात् ॥ * ॥ संदर्भस्तु—केचिदश्रुत्वा न भजंति केचित्तु श्रुत्वापि न भजंति चेदवजानंत्येवेत्यर्थः । स्वाश्रमाद्भ्रष्टाः संतः क्रमादधो गच्छन्तीत्यर्थः ॥ ३ ॥ तत्र तयोर्मध्ये । भवद्विधानां भवादृशानाम् । अत एव हरिकथाश्रवणाभावादेव । हरिकथाश्रवणमपि हरिभक्तसंगं विना न लभ्यत इत्याह—अच्युतस्य कीर्तनं येषां ते भगवद्भक्ता अपि येषां दूरे सन्तीत्यर्थः । तानाह—स्त्रिय इत्यादि । आदिनांत्यजादिग्रहः । 'न शूद्राय मतिं दद्यात्' इति निषेधस्तु केवलवेदपर एव, हरिभजने तु "स्त्रियः शूद्रास्तथा वैश्यास्तेपि यांति परां गतिम्" इति श्रीगीतोक्तेः स्त्रीशूद्राणामप्यधिकार इति ॥ * ॥ तत्र येऽज्ञास्ते भवद्विधानामनुग्राह्या एवेत्याह—दूर इति । दूरे हरिकथा येषां ते ये साधुसंगभाग्यहीना इत्यर्थः । दूरे चाच्युतकीर्तना बधिरा इत्यर्थः । तेऽनुकंप्यास्तत्राद्या भक्त्युपदेशेन, द्वितीया मूर्ध्नि चरणधूलिदानेन च कृतार्थी कार्याः । "न ते विदुः स्वार्थगतिं हि विष्णुं विना महत्त्वादरजोभिषेकम्" इति श्रीप्रह्लादोक्तेः ॥ ४ ॥ "अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रंजयति ॥" इति भर्तृहरिवचनात् । अचिकित्स्यत्वाद्बोधितुमशक्यत्वात् । उपेक्ष्यास्त्याज्याः । अध्ययनादिनेहादिना यजनादिग्रहः । अतः कर्मफलासक्तेः । अत्र प्रमाणमाह—तदुक्तमिति । पुष्पितां पुष्पवदापातरमणीयामिमां बुद्धिस्थां "अपाम सोमममृता अभूम" इत्यादिकां स्वर्गविषयाम् । अविपश्चितो वेदतात्पर्यानभिज्ञाः । अतः परं किंचिदपि पुरुषार्थो नास्तीति वदंत इत्यर्थः । एतेन हरिभक्तिं विना जन्मादि न श्रेयस्करमित्युक्तमिति ॥ * ॥ ज्ञानेति, विप्र इति, श्रौतेनेति,

आह । लोक इति । व्यवायः स्त्रीसंगः आमिषं मांसम् । नित्या रागत एव नित्यं प्राप्ताः जंतोः प्राणिमात्रस्य अतस्तत्र तासु चोदना विधिर्नास्ति । ननु ऋतावुपेयादित्यादिना विधिर्दर्शितः । सत्यम् । न त्वयमपूर्वविधिः । रागतः प्राप्तत्वात् । किं तु नियमविधिरूपेण रागिणामभ्यनुज्ञामात्रं क्रियते तदाह । व्यवस्थितिरिरिति । तेषु व्यवायादिषु । कैः । विवाहयज्ञसुराग्रहैः विवाहविषय एव व्यवायः कार्यः । यज्ञ एवामिषसेवा । "सौत्रामण्यां सुराग्रहान् गृह्णाति" इति श्रुतेस्तत्रैव मद्यसेवेति नियमः क्रियते । ननु च नियमपक्षेऽप्यावश्यकत्वान्न निंदा युक्ताऽत आह । आसु निवृत्तिरिति । आसु व्यवायामिषमद्यसेवासु निवृत्तिरिष्टा । अयं भावः । नायं नियमविधिरपि नित्यप्राप्तत्वादत आसु व्यवायामिषमद्यसेवासु परिसंख्याविधिरेवेष्टः । कथं तर्हि व्यवस्थितिरित्युक्तम् । उच्यते । न तावत्परिसंख्याविधिना श्रुत्या निवृत्तिरुच्यते । तथा सति स्वार्थत्यागः परार्थकल्पना प्राप्तबाधश्चेति दोषत्रयं स्यात् । अतः क्वचित्प्राप्स्यतोप्यर्थस्य प्रापणमनर्थकमित्यपूर्वविधिद्वाराऽन्यनिवृत्तिः फलतो भवति । तद्यथा । "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र रशनालिंगतो गर्दभाश्वाभिधानीरशनाद्वये प्राप्स्यतो मंत्रस्यापूर्वविधिद्वारा परिसंख्योच्यते । यथोक्तं तंत्रवार्तिके । "अप्राप्तविधिरेवायमतो मंत्रस्य निश्चितः ॥ परिसंख्या फलेनोक्ता न विशेषः पुनः श्रुतेः॥" इति । क्वचित्तु रागतो नित्यप्राप्तस्याप्राप्तांशपूरणलक्षणस्य नियमफलस्याप्यभावान्नियमविधिद्वारा फलतः परिसंख्या भवति । यथा 'पंच पंचनखा भक्ष्याः' इति । तथा रागतो नित्यवत्प्राप्तस्य व्यवायादेर्विवाहादिनियमेनाभ्यनुज्ञाद्वारा परिसंख्यैवेति । ननु यद्यभ्यनुज्ञामात्रमेतद्भवेत्तर्हि "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ॥ घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः॥" इत्यादिदोषश्रवणं न स्यात् । नैष दोषः । मनसि कामे सत्यपि तस्यामरुच्या द्वेषादिना वा तामनुपगच्छतो दोषश्रवणोपपत्तेरिति सर्वमनवद्यम् ॥ ११ ॥

हि प्रोक्षणसंध्यावंदनादीनामेतद्वाक्यं विना लोकतोनुमानादिना प्राप्त्यभावादयमपूर्वविधिः । पक्षप्राप्तावप्राप्तांशपूरणफलको नियमविधिः, यथा—"व्रीहीनवहन्ति स्वाध्यायोऽध्येतव्यः" इति । अत्र पुरोडाशादिविधिभिस्तण्डुलनिष्पत्तावाक्षिप्तायां लोके तण्डुलनिष्पत्तिसाधनत्वेन दृष्टानि नखद्विदलनावघातादीनि विकल्पेन प्राप्तानि इति नावघातप्राप्त्यर्थोऽपूर्वविधिरयं किं तु विदलनादेः साधनांतरस्य पक्षे प्राप्तावघातस्य पाक्षिकत्वप्राप्तौ पाक्षिकप्राप्तांशपूरणार्थो नियमविधिः, 'अवहन्यादेव' इति नियमेन सर्वथावघाते प्रापितेऽप्राप्तांशभावादप्राप्तांशपूरणरूपनियमफलसिद्धिः, एवं क्रतुविधिभिः स्वानुष्ठानार्थमिति कर्तव्यताद्विज्ञाने आक्षिप्ते ज्ञानसाधनत्वेन वेदाध्ययनं पौरुषप्रयोगादिग्रंथाध्ययनं च पक्षे प्राप्तम्, तत्र वेदाध्ययनेनैव क्रत्वनुष्ठानज्ञानं संपाद्यमिति नियम्यते । न चात्रोभयोः समुच्चयेन प्राप्तिरस्तु, ततश्च पक्षप्राप्तिरिति शंक्यम्, एकेन फलसिद्धौ साधनांतरप्राप्त्यसंभवात् । उभयोर्नित्यप्राप्तावन्यनिवृत्तिफलकः परिसंख्याविधिः, यथा—गृहमेधीये इष्टिप्रकरणे "आज्यभागौ यजति" इति । अत्र हि आज्यभागयोर्नात्यंतमप्राप्तिः "प्रकृतिवद्विकृतिः कर्तव्या" इत्यत्यतिदेशिकन्यायेन प्राप्तेः, अतो नापूर्वविधिर्नापि नियमः अतिदेशेन नित्यप्राप्त्या पक्षप्राप्त्यभावात् । किं त्वाज्यभागयोरिव प्रयाजाद्यंगजातस्यापि नित्यप्राप्त्या प्रयाजादिनिवृत्तिफलक आज्यभागावेव कर्तव्यावित्येवंरूपः परिसंख्याविधिरिति । ननु नियमपरिसंख्याविध्योः पक्षप्राप्तिनित्यप्राप्तिभ्यां भेदेपि फलतो भेदो न दृश्यते, अवघातनियमेन नखविदलनादिनिवृत्तेराज्यभागविधिना प्रयाजादिनिवृत्तेश्च दृष्टत्वे

नान्यनिवृत्तेः फलस्य समानत्वादिति चेन्मैवं, नियमविधावप्राप्तांशपूरणमेव प्राथमिकं फलमप्राप्तांशपूरणं विनान्यनिवृत्त्यसंभवात् । तदनंतरमर्थाज्जायमानान्यनिवृत्तिस्तु न फलमेकफललाभेऽन्यफलाकांक्षाभावात् । पारिसंख्याविधौ तु अप्राप्तांशाभावादप्राप्तांशपूरणरूपफलासंभवादन्यनिवृत्तिरेव फलमिति तस्मात्स्त्रीसंगादीनां रागतः प्राप्तत्वात्तेष्वपूर्वविधिर्नास्तीति सिद्धम् । उक्ताशयमजानानः सर्वविध्यभावोक्तिं मत्वा शंकते—नन्वृतावित्यादिना । स्वाशयमाह—सत्यमिति । किन्तु नियमविधिरूपेणेति—नियमविधिः रूपमाकारो यस्य स तथा तेन, नियमविधिद्वारकपरिसंख्याविधिनेत्यर्थः । तेषु व्यवायादिष्विति स च तच्च सा च तानि तेष्विति "नपुंसकमनपुंसकेन" इति नपुंसकस्यैकशेषः । विवाहविषय एवेति उपलक्षणमेतत् ऋतावेवेत्यस्य "ऋतौ भार्यामुपेयात्" इत्यत्र यदुपेयात्तद्भार्यामेव ऋतावेवेति द्विविधनियमे तात्पर्यात् । उपेयादेवेति तृतीयनियमस्तु न, उपगमनस्यैव रागतो नित्यप्राप्तत्वेन व्यावर्त्याभावात् निवृत्तिरिष्टेति वक्ष्यमाणत्वाच्च । ननु च नियमपक्षेपीति आपिशब्दात्परिसंख्यापक्षेपीति उक्तोदाहरणेषु व्रीह्यवघातवेदाध्ययनाज्यभागादेरवश्यमनुष्ठेयत्वमवघाताद्यकरणे क्रतुवैगुण्यापत्त्या प्रायश्चित्तापत्तेः, एवं स्त्रीसंगाद्यकरणे प्रायश्चित्तापत्तेर्हेयत्वबोधिका निन्दा न युक्तेत्यर्थः । आसु निवृत्तिरिष्टेति प्रतीकग्रंथाग्रे टीकापाठः प्राचीनसंमतः । एवमासु व्यवायामिषमद्यसेवासु निवृत्तिरिष्टा अयं भावः—नायं नियमविधिरपि नित्यप्राप्तत्वात् अतो निवृत्तिः परिसंख्यैव । कथं तर्हि व्यवस्थितिरित्युक्तमित्यादिः पाठांतरं लेखकप्रमादः। ननु विधिविषयेष्ववश्यानुष्ठेयत्वदर्शनात्प्रवृत्तिरेवोचिता तत्कथं सिद्धांतीष्टापि निवृत्तिः संभवतीत्याशंकायामाह—अयं भाव इति । कथं तर्हीति परिसंख्याविध्यंगीकारे व्यवस्थितिपदोक्तनियमविधित्यागापत्त्या व्यवस्थितिपदेन नियमविध्यंगीकारवैयर्थ्यमित्यर्थः । उपलक्षणमेतत् परिसंख्याविध्यंगीकारेपि परिसंख्याविषयेष्वाज्यभागाश्वरशनादानादिष्ववश्यानुष्ठेयत्वदर्शनात्सिद्धांतीष्टाया निवृत्तेरसंभवेन पूर्वपक्षोक्तदोषतादवस्थ्यस्याप्युपलक्षणीयत्वात् । दोषद्वयस्यापि परिहारं प्रतिजानीते—उच्यत इति । स्वतंत्रः परिसंख्याविधिः क्वापि नांगीक्रियते किं तु क्वचिदपूर्वविधिद्वारकः क्वचिन्नियमविधिद्वारक इति । प्रकृते तु नियमविधिद्वारकः परिसंख्याविधिरिति विधिद्वयोक्तेरप्यविरोधेन स्वीकृतपरित्यागादुक्तदोषासंभवः, अपूर्वविधिद्वारकपरिसंख्याविधावेव विधेयस्यावश्यानुष्ठेयत्वं नियमविधिद्वारकपरिसंख्यायां तु विधेयस्यावश्यानुष्ठेयत्वं तस्यानित्यत्वे तु न विधेयस्यावश्यानुष्ठेयत्वमिति सिद्धान्तीष्टा निवृत्तिरपि संभवतीति दोषद्वयसमाधिरुच्यत इत्यर्थः । प्रतिज्ञातमर्थं सहेतुकं सोदाहरणं सप्रमाणमुपपादयितुमुपक्रमते—न तावदित्यादिना । पारिसंख्याविधिनेति कर्तरि तृतीया श्रुत्येति करणे, सर्वत्र परिसंख्याविधिना श्रुत्या शब्देनान्यनिवृत्तिर्नोच्यते अन्यनिवृत्तिः शब्दार्थो न भवति किं तु अर्थादेव सज्यते, तथा सति सतिशब्दत एवान्यनिवृत्तिप्रतिपादनांगीकारे सतीत्यर्थः । स्वार्थत्याग इति—इत्यश्वाभिधानीमादत्त इति परिसंख्याविधिवाक्येऽनेन मंत्रेणाश्वाभिधान्यादानं कर्तव्यमिति स्वार्थस्तत्राश्वाभिधानीमादत्त इति वाक्यस्थानेन मंत्रेण गर्दभरशनादानं न कर्तव्यमिति शब्दांगीकारेऽश्वाभिधान्यादानस्य स्वार्थस्य त्यागः विध्यपेक्षायाः परस्य निषेधस्यार्थः गर्दभरशनादानं न कार्यमित्येवंरूपस्तस्य कल्पनालिंगात् रशनाद्वये प्राप्तस्य मंत्रस्य गर्दभरशनाग्रहणे बाध इति दोषत्रयं स्यादित्यर्थः । तत्राद्यं दोषद्वयं शब्दविषयं, तृतीयदोषोर्थविषयः। फलतोन्यनिवृत्तिरिति पक्षेपि प्राप्तबाधोस्त्येव, तथापि तस्यार्थिकत्वाद्वास्तविकप्राप्त्यभावाद्वा न दोषः । ततो दोषत्रयप्रसंगाभावायापूर्वविधिद्वारको वा परिसंख्याविधिरंगीकार्य इत्याह—अतः क्वचित्प्राप्स्यतोपीति । यथा प्राप्तस्य प्रापणमनर्थकमेवं विधिप्रवृत्तिक्षणे प्राप्तिरहितस्य विधिप्रवृत्त्युत्तरकाले प्राप्स्यतोपि प्रापणमनर्थकमिति दृष्टान्तव्यंजकमपि पदं श्रुतिर्हि विलंबितप्रवृत्तिकाल्लिंगात्पूर्वमेव प्रवर्तते, श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्येषूत्तरोत्तरापेक्षया पूर्वपूर्वस्य प्रथमं प्रवृत्तेः । यथा—"ऐंद्र्या गार्हपत्यमुपतिष्ठते" इत्यत्रैंद्रलिंगेनैंद्रोपस्थाने मंत्रविनियोजनात्पूर्वमेव श्रुत्या गार्हपत्योपस्थाने इंद्रपदोपेतो मंत्रो विनियुज्यत एवम् "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र लिंगप्रवृत्तेः पूर्वमेव श्रुतिरश्वाभिधान्यादाने मंत्रं विनियुक्ते, श्रुतिप्रवृत्तिक्षणे लैङ्गिकविनियोगप्राप्त्यभावादपूर्वविधिरयम् एतद्विध्यभावेपि रशनाग्रहणप्रकाशनसामर्थ्यरूपाल्लिंगान्मंत्रोऽश्वरशनादाने प्राप्स्यति । ऋतस्याव्यभिचारितफलस्य क्रतोः संबंधिनीं रशनां पशुरज्जुम् अगृभ्णन्निति मंत्रार्थसत्त्वात् । यथा—"बर्हिर्देवसदनं दामि" इति मंत्रो विधिं विनैव छेदनप्रकाशनसामर्थ्याल्लिंगादेव बर्हिर्बलेन प्राप्नोति तद्वत । अतः प्राप्स्यतः प्रापणमनर्थकमिति विधिवैयर्थ्ये प्राप्ते रशनालिंगसामान्यादश्वरशना

दान इव गर्दभरशनादानेपि मंत्रः प्राप्स्यति । चयनेऽश्वरशनादानस्येव गर्दभरशनादानस्याप्यनुष्ठीयमानत्वात् । ततो गर्दभरशनादाने मंत्रनिवृत्तिर्विधेः फलमिति फलतोन्यानिवृत्तिप्रयोजनोऽपूर्वविधिद्वारकः परिसंख्याविधिः, ‘‘आज्यभागौ यजाति’’इत्यपि अपूर्वविधिद्वारा परिसंख्या उपदेशाददतिदेशस्य विलम्बितप्रवृत्त्याज्यभागौ यजतीति विधिप्रवृत्तिक्षणेऽतिदेशादाज्यभागाद्यंगसमूहप्राप्त्यभावात् । अत्र वार्तिकं प्रमाणयति—अप्राप्तेति । अतः श्रुति प्रवृत्तिक्षणे लिंगप्राप्त्यभावादन्यनिवृत्तौ शाब्दादिदोषत्रयप्राप्तेश्चायमश्वाभिधानीति विधिरपूर्वविधिरेव मंत्रस्य निश्चितः । परिसंख्या गर्दभरशनादाने मंत्रनिवृत्तिस्तु फलेनोक्ता सूचिता । ननु लिंगेन रशनासामान्येन विनियोग उक्त इति ‘‘अश्वाभिधानीमादत्ते ’’ इति श्रुतेः पुनरश्वरशनारूपो विशेष उक्त इत्यवगम्यते इत्यस्तु, ततश्च श्रुत्या लैंगिकविनियोगस्य बाधो न, उपसंहारन्यायेन श्रौतलैंगविनियोगयोरैक्यवाक्यत्वसंभवात् । उपसंहारो नाम सामान्य प्राप्तस्य विशेषे संकोचः, यथा—पुरोडाशं चतुर्धा करोतीति पुरोडाशसामान्यप्राप्तं चतुर्धाकरणमाग्नेयं चतुर्द्धा करोतीति वाक्येनाग्नेये संकोच्यते, तेन वाक्यद्वयैकवाक्यता तद्वदत्र संभवात् लिंगबाधेन गर्दभरशना निवृत्तिफलकत्वं विधेर्न संगच्छते तत्राह—‘न विशेषः पुनः श्रुतेः ’ इति लिंगेन सामान्यतोवगम्यते । विशेषस्तु श्रुतेरेव गम्यत इति न वाच्यमित्यर्थः । श्रौतविनियोगक्षणे लिंगेन सामान्यविनियोगोक्तेरेवाभावेनोपसंहारन्याय वैलक्षण्यात्, उपसंहारे हि प्रथमं सामान्यं प्रवर्तते पश्चाद्विशेषः । प्रकृते तु प्रथमं श्रुत्युक्तविशेषप्रवृत्तिः पश्चात्सामान्यलिंगबोधकप्रवृत्तिरिति नियमविधिद्वारा परिसंख्यामाह—क्वचिदिति । पंचनखभक्षणस्य रागतो नित्यप्राप्तत्वाद पूर्वविधिर्न, दोषत्रयदुष्टत्वाच्छाब्दी परिसंख्यापि न, ततः पक्षप्राप्त्यभावेपि परिशेषान्नियमविधिः, तस्य चाप्राप्तांशपूरणलक्षणफलाभावादितरानिवृत्तिः फलत्वेन कल्प्यते । अत एव व्याकरणशास्त्रे सूत्रांतरैर्नित्यप्राप्तिविषये आरभ्यमाणः सर्वोपि परिसंख्याविधिर्नियमविधित्वेन व्यवह्रियते । स्वार्थत्यागादिदोषत्रयपरिहाराय च विधिमुखेन प्रवृत्तिं स्वीकृत्य नियमार्थकैवकारगर्भित एव प्रायो वाक्यार्थाकार उच्यते, न तु नञ्गर्भितः । अन्यथा ‘‘उभयप्राप्तौ कर्मणि’’इत्यादेः कर्मण्येव षष्ठीनिवृत्तिर्नोच्यते किं तु कर्मपदस्य कर्तरि लक्षणान्नञोऽध्याहारञ्च कृत्वा कर्तरि षष्ठी नेत्येव वृत्तिरुच्येत,राजपुरुषादौ च‘‘कृत्तद्धितसमासाश्च’’इति प्रातिपदिकसंज्ञेति ग्रंथाश्च संगच्छेरन्। नियमस्य निषेधमुखेन प्रवृत्तौ समासग्रहणस्य वाक्ये प्रातिपदिकसंज्ञा नेत्यर्थकत्वेन राजपुरुषादौ संज्ञाविधायकत्वाभावात् । तस्मात्पंचनखभक्षणादौ नियमविधिद्वारकः परिसंख्याविधिर्व्याकरणशास्त्ररीत्या युक्त इति । यथा— ‘‘पंचपंच ’’ इति ‘‘पञ्चपञ्चनखा भक्ष्या विप्रक्षत्रेण राघव । शशकः शल्लको गोधा कूर्मः खड्गी च पंचमः ॥’’ इति पंचैव पंचनखा भक्ष्या अर्थादितरे वानरादयो न भक्ष्या इति । अत्र हि विधिविषयस्य पंचानां भक्षण स्यावश्यकत्वं न, भक्षणाकरणे प्रायश्चित्ताभावात्, किं तु पंचेतरभक्षणे प्रायश्चित्तम् । एवं व्यवायादेरावश्यकत्वाभावाद्भार्यागमनाद्यकरणे प्रायश्चित्तं न, किन्तु परदारगमनादौ प्रायश्चित्तमिति प्रकृते योजयति—तथेति । एवं विधेयस्यावश्यकत्वानावश्यकत्वे बीजं स्थूलबुद्धिसमाधानाय व्यंजयित्वैतदपि न सर्वव्यापके व्याकरणशास्त्रे नियमद्वारकपरिसंख्याविषयेष्ववश्यानुष्ठेयत्वदर्शनात् , तद्वदत्रापि अवश्यानुष्ठेयत्वमस्त्विति गूढां शंकां मनसि निधायावश्य कत्वानावश्यकत्वे बीजांतरं व्यंजयन्नाह—रागत इति, नित्यवदिति च । अयं भावः—नात्रावश्यकानावश्यकत्वेऽपूर्वविधिद्वारकत्वनियमविधिद्वारकत्वे एव बीजं किंतु पक्षप्रापकस्य उभयोर्नित्यप्रापकस्य च प्रमाणस्य शाश्वतिकत्वाशाश्वतिकत्वे व्रीहीनवहंतीत्यादिनियमस्थलेपि तंडुलनिष्पत्त्याक्षेपकनित्यप्रवृत्तपुरोडाशादिविधिबलादेवावघातस्यानुष्ठानम् , न तु नियमविधिबलात्स्वत एवावघाते प्रवृत्तं प्रति नियमविधिप्रवृत्त्ययोग्यात् । एवं वेदाध्ययनादावपि योज्यम् । तथा—परिसंख्यास्थलेपि रशनालिंगस्यातिदेशस्य नित्यप्रवृत्तत्वाद्बलादेवानुष्ठानम् , न तु परिसंख्याविधिबलात् । परिसंख्याया अन्यनिवृत्तौ तात्पर्येणावश्यकत्वे तात्पर्याभावात् । एवं व्याकरण शास्त्रेपि सामान्यविधीनां नित्यत्वादेव परिसंख्याविषयेष्ववश्यानुष्ठेयत्वमूह्यम् । प्रकृते तु यथा पञ्चनखभक्षणादौ नित्यतः प्रापकस्य रागस्य कादाचित्कत्वेन शश्वत्प्रवृत्त्यभावात् । रागसत्त्वे भक्षणं रागाभावे न भक्षणमिति न विधेयस्यानुष्ठानम् । एवं स्त्रीसंगादौ नित्यतः प्रवर्तकस्य रागस्य शाश्वतिकत्वाभावात् रागसत्त्वेऽवश्यानुष्ठानम् । विरागिणां तु नावश्यकम् । तद्व्यंजनायैव नित्यवत्प्राप्तस्येति वतिप्रत्ययः । रागस्य सर्वपुरुषे सर्वकाले च नियतत्वाभावेन नित्यत्वाभावादिति एतामेव गूढाशंकां स्पष्टयन्नाह—नन्वित्यादिना । ‘भ्रूणहत्यागर्भहत्याश्रवणं न स्यात् ’ इति दोषश्रवणान्नियमविधिद्वारकपरिसंख्याविषयेप्यवश्यानुष्ठेयत्वमस्त्वित्यर्थः । समाधानं स्पष्टयति—

मनासि काम इति । रागस्यैव मूलप्रवर्तकप्रमाणत्वान्नियमद्वारकपरिसंख्याविधेस्तु इतरनिवृत्तावेव तात्पर्येणावश्यानुष्ठाने तात्पर्याभावात्, रागाभावे प्रवर्तकप्रमाणस्यैवाप्रवृत्त्यानुष्ठानाभावे दोषाभावोऽयुक्त एव । एवमग्नीषोमीयादेः पशुद्रव्यकयागस्य सुरायुक्तसौत्रामण्यादेश्च विषयरागिणि पुरुषेन्तःकरणशुद्ध्यभावात्, विषयरागाभावेन्तःकरणशुद्धिसिद्ध्या कर्माधिकाराभावात् । ज्ञाने भक्तौ वाधिकारोत्पत्त्या ज्योतिष्टोमाद्यनुष्ठानस्यैवावश्यकत्वाभावात् । आमिषमद्यसेवयोरनावश्यकत्वं न त्वत्र ज्योतिष्टोमः कार्यो मांसमात्रं न भक्षणीयमिति तात्पर्यं विधिवैगुण्यापत्तेः । सुराग्रहस्य कलिवर्ज्यत्वात्कलौ सौत्रामणिरेव न कार्य इति केचित् । अन्ये तु—सौत्रामणिः कार्यः सुराग्रहस्थाने प्रतिनिधिः कार्य इत्याहुः । मम तु श्लोकतात्पर्यमित्थं प्रतिभाति—व्यवायादिषु रागतः प्राप्तत्वादपूर्वविधिर्न, पक्षप्राप्त्यभावान्नियमो न, दोषत्रयग्रस्तत्वादपूर्वनियमयोर्द्वारत्वासंभवाच्च परिसंख्यापि न, किन्तु सामान्यप्राप्तस्य विशेषे संकोचरूप उपसंहारः । तथाहि—यथा पुरोडाशं चतुर्धा करोतीति पुरोडाशसामान्ये प्राप्तं चतुर्धाकरणमाग्नेयं चतुर्द्धा करोतीति वाक्येनाग्नेये संकोच्यते नात्र नियमः परिसंख्या वा मीमांसकैरुच्यते एवं रागतः प्राप्तं पंचनखसामान्ये भक्षणं पंचसु पंचनखेषु संकोच्यते । परिसंख्योदाहरणं तु ' इत्यश्वाभिधानीमादत्ते ' इत्यादिकमपूर्वविधिद्वारकमेकविधमेव । तथा रागतः स्त्रीसामान्ये कालसामान्ये च व्यवायः प्राप्तः ऋतौ भार्यायां च संकोच्यते । एवमामिषसेवादावपि योज्यम् । तथा च—विधिबलात्प्राप्त्यभावेन रागत एव प्राप्तत्वेन निवृत्तिरेव विरागिणामिष्टेति । इत्थमेतत्पक्षे श्लोकयोजना—व्यवायादयो नित्या रागतः प्राप्ता इति तेषु चोदना कोपि विधिर्नास्ति तर्हि ऋतौ भार्यामुपेयादित्यादेः कोर्थः, तत्राह—व्यवस्थितिरिति । अव्यवस्थया सर्वत्र रागतः प्राप्तं व्यवायादिकं तस्य विवाहयज्ञसुराग्रहैर्व्यवस्था क्रियते, उपसंहारापरनामा संकोचः क्रियत इत्यर्थः । तस्माद्विधेरभावान्मूलभूतप्रापकरागस्य दुर्बलत्वाद्विचारेणापनोद्यत्वाच्च विरागिणां निवृत्तिरेवेष्टा न प्रवृत्तिरिति विधिरपूर्वविधिर्नास्तीत्यर्थः । तदुक्तम्—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ॥ तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥" इति । तत्रापूर्वविधिर्यथा—व्रीहीन्प्रोक्षतीति वाक्यं प्रत्यक्षाद्यप्राप्तावपूर्वविधिः । नियमविधिर्यथा—व्रीहीनवहन्ति अत्र घरट्टनखादिभिर्वितुषीकरणरूपे पक्षे प्राप्ते पाक्षिकाप्राप्तांशपूरणार्थे नियमविधिः । उभयोर्नित्यप्राप्तावन्यत्र निवृत्तिफलकः परिसंख्याविधिः, यथाज्यभागौ यजतीति । अत्र नात्यन्तमप्राप्तिः प्रकृतिवद्विकृतिः कर्तव्येत्यातिदेशिकन्यायेन प्राप्तो नापूर्वविधिर्नापि नियमविधिरतिदेशेन नित्यप्राप्त्या पक्षप्राप्त्यभावात् । किन्त्वाज्यभागयोरिव प्रयाजाद्यंगजातस्यापि नित्यप्राप्त्या प्रयाजादिनिवृत्तिफलक आज्यभागावेवं कर्तव्यावित्येवंरूपः परिसंख्याविधिरिति सकलांगो यागः प्रकृतिशब्दवाच्यः, विकलांगो यागो विकृतिशब्दवाच्यः, तुल्यवत्कथनमतिदेशः, तस्माद्रागतः प्राप्तत्वात्स्त्रीसंगादिष्वपूर्वविधिर्नास्तीत्युक्तमाशयमजानञ्छंकते—नन्विति । स्वाशयमाह—सत्यमिति । नियमविधिरूपेण नियमविधिद्वारकपरिसंख्याविधिनेत्यर्थः । ऋतावेवेति यदुपेयात्तद्भार्यामेव ऋतावेवेति नियमे तात्पर्यात् । उपेयादेवेति तृतीयनियमस्तु न, उपगमनस्यैव रागतो नित्यप्राप्तत्वेन व्यावर्त्याभावात् निवृत्तिरिष्टेति वक्ष्यमाणत्वात् । तत्र शंकते—कथं तर्हीति । परिसंख्याविध्यंगीकारे व्यवस्थितिपदोक्तविध्यंगीकारवैयर्थ्यमित्यर्थः । परिसंख्यायामप्यश्वरशनादिष्ववश्यमनुष्ठेयत्वान्न निवृत्तिरित्युक्तमित्यर्थः । परिहरति—उच्यत इति । परिसंख्याविधिः क्वचिदपि न स्वतंत्रः किं तु क्वचिदपूर्वविधिद्वारकः, क्वचिन्नियमविधिद्वारकः, प्रकृते तु नियमविधिद्वारकोऽतो नावश्यानुष्ठेयता, तस्मान्निवृत्तिरिष्टेति युक्तम् । तदेव व्यनक्ति—न तावदित्यादिना । परिसंख्यादिना कर्त्रा श्रुत्या करणेन शब्देन नोच्यते किन्त्वर्थादेवान्यनिवृत्तिः सूच्यत इत्यर्थः । तथा सति शब्दत एवान्यनिवृत्तिप्रतिपादनाङ्गीकारे सतीत्यर्थः । स्वार्थत्याग इति—अश्वाभिधानीमादत्त इति परिसंख्याविधिवाक्ये हि अश्वाभिधान्या ग्रहणं स्वार्थः । अनेन मंत्रेण गर्दभाभिधानीग्रहणं न कर्तव्यमित्यङ्गीकारे स्वार्थत्यागः परस्य निषेधकामना इमामिति लिङ्गात् रशनाद्वये प्राप्तस्य मंत्रस्य गर्दभरशनाग्रहणे बाध इत्यर्थः । तत्राद्यं दोषद्वयं शब्दविषयमर्थविषयमन्यत् क्वचित्प्राप्स्यत इति । यथाप्राप्तस्य प्रापणमनर्थकमेवं विधिप्रवृत्तिलक्षणे प्राप्तिरहितस्य विधिप्रवृत्त्युत्तरकाले प्राप्स्यतो प्रापणमनर्थकमिति दृष्टान्तव्यंजकमपि पदम् इमामिति । ऋतस्याव्यभिचारिफलस्य क्रतोः सम्बन्धिनीं रशनां ये पशुरशनामभ्यगृभ्णन्नगृह्णन्नित्यर्थः । " हृग्रहोर्भश्छन्दसि " अत्र वार्तिकम्प्रमाणयति—अप्राप्तेति । अतः श्रुतिप्रवृत्तिलक्षणे लिंगप्राप्त्यभावात् अन्यनिवृत्तौ शब्दाद्दोषत्रयप्राप्तेश्चायमश्वाभिधानीविधिरपूर्वविधिरेव मंत्रस्य

निश्चितः । परिसंख्या गर्दभरशनादाने मंत्रनिवृत्तिस्तु फलेनोक्ता सूचिता न विशेषः पुनः श्रुतेरिति लिंगेन सामान्यतोवगम्यते विशेषस्तु श्रुतेरवगम्थत इति न वाच्यमित्यर्थः । एवमपूर्वविधिद्वारा परिसंख्योक्ता नियम
द्वारापि तामाह—क्वचित्त्विति । पञ्चनखेति—"शशकः शल्लको गोधा कूर्मः खड्गी तु पञ्चमः । पञ्च पञ्चनखा भक्ष्या विप्रक्षत्रेण राघव॥" इति वाल्मीकिये पञ्चैव पञ्चनखा भक्ष्या इतरे वानरादयो वर्ज्याः । अत्र पञ्चनखभक्षणं
नावश्यकं तदकरणे प्रायश्चित्ताभावात्, अधिकभक्षणे प्रायश्चित्तविधानात् । एवं व्यवायादिकमपीत्याह—तथेति । तत्रैव बीजांतरमाह—रागत इति । यथा रागसत्त्वे पञ्चनखभक्षणं रागाभावे नावश्यकं तद्वद्व्यवायादीनां सेवनं
रागसत्त्वे रागाभावे नावश्यकमिति व्यञ्जयितुं नित्यवत्प्राप्तस्येति वतिप्रत्ययः । नियमविधिद्वारकपरिसंख्याविषयेप्यवश्यानुष्ठानमाशंकते—नन्विति । भ्रूणहत्यागर्भहत्या तस्यामित्यर्थः ॥ * ॥ **दीपिका**—
व्यवायादीनामपि निंद्यत्वेनाभिप्रेतानामपीत्यपेरर्थः । ऋतौ सदा मैथुनार्थं भार्यामुपगच्छेदिति हुतान्मांसादवशेषं मांसं भक्षयेदित्यादिना विधिरूपेण वेदेन । आदिना 'सौत्रामण्याम्' इति वक्ष्यमाणवाक्यग्रहः ।
रागत एवेच्छात एव नित्यप्राप्ताः नित्यवत्प्राप्ताः अतो नित्य प्राप्तत्वात् तासु व्यवायामिषमद्यसेवासु विधिरुपदेशो नास्ति "चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः" इत्यभियुक्तोक्तेः । विधिर्दर्शित उपेयादिति
विध्यर्थेलिङ्प्रयोगश्रवणात् । सत्यमित्यर्द्धांगीकारे । अयमृतुगमनविधानरूपोऽपूर्वविधिर्नास्ति । अप्राप्तार्थविधायको ह्यपूर्वविधिः यथा—व्रीहीन्प्रोक्षति, यथा च—स्वर्गकामो यजेतेत्यादिः । अत्र यागार्थ
व्रीहीप्रोक्षणस्य स्वर्गार्थयागस्य च वाक्यांतरेण रागेण चात्यंतमप्राप्तत्वादपूर्वविधित्वम् । अत्र तु स्वेच्छयैव नित्यप्राप्तत्वात्तन्नास्त्येवेत्यर्थः । ननु तर्हि कथं लिङ्श्रवणं तव्यादिलिङ्लोटां विधिबोधकत्वात्तत्राह—
किन्त्विति । नियमविधिरूपेण नियमविधिसदृशेन विधिवाक्येन अभ्यनुज्ञामात्रं प्रमाणांतरप्रतिपन्नानिष्टसाधनत्वैतदभावमात्रबोधनं क्रियते तदाह—नियमविधिसमानार्थत्वमाह—द्वंद्वस्य परवल्लिंगत्वे सति तास्विति
वक्तव्ये तेष्वित्येकशेषत्वान्नपुंसकत्वम् । विवाहेत्युपलक्षणं, तत्रापि ऋतावेवेत्यर्थः । सौत्रामण्यां तत्संज्ञके यागे सुराग्रहान्मद्यपात्राणि गृह्णीयादिति श्रुतिपदार्थः । तत्रैव सौत्रामण्यामेव नियमः सार्वदिकव्यवायादिव्यावृत्तये
संकोचः । नन्विति शंकते—नियमपक्षेप्यावश्यकत्वादिति । यथा—व्रीहीनवहन्यादिति नियमविधिप्राप्तोवघातो ह्यावश्यकस्तथेत्यर्थः । आसु निवृत्तिरिष्टेत्यग्रे आसु व्यवायामिषमद्यसेवासु निवृत्तिरिष्टेति पठनीयम्, ततोऽयं भाव
इति युज्यते । व्यत्ययस्तु लेखकप्रमादादेव पूर्वं प्रवृत्तादिति ज्ञेयम् । सिद्धान्तं विशदयति—अयं भाव इति । अयमृतौ भार्यामुपेयादित्यादिर्नियमविधिर्न भवति, कुतः नित्यप्राप्तत्वात् । पक्षे प्राप्तावप्राप्तांशपूरको विधिर्नियम
विधिर्यथा—व्रीहीनवहन्तीत्यादिः । अत्र यथा तंडुलनिष्पत्त्यर्थं नखविदलनादि लोकतः प्राप्तं तथावघातोपि तदर्थमेव लोकतः प्राप्तोपि नखविदलनादिव्यावृत्तये नियम्यते । किं तु यस्यां दशायामवघातं परित्यज्य नखविदल
नादौ स्वेच्छया पुमान्प्रवर्तते तस्यां दशायामवघातस्याप्राप्तत्वात्तत्पूरकत्वेन नियमविधित्वमिति लक्षणसमन्वयः । तदुक्तं भट्टैः—" अवघातेपि नियमो देशादाविव तेन सः । प्रधानेन प्रयुक्तः स्यात्संबंधः प्रक्रियोक्तिभिः ॥"
इति । अतः नित्यप्राप्तत्वेनाप्राप्तांशपूरणलक्षणनियमविधेरसंभवात् परिसंख्यैवेति । उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः सैवेष्टेति, उच्यते—उभयविधिसांकर्ये नियमविधिद्वारैवेयं परिसंख्येति
समाधीयते । एतत्प्रकारमाह—न तावदिति । परिसंख्याविधिना कर्तृत्वेन श्रुत्या वाच्यार्थेन करणेन तथा सति वाच्यार्थासंभवेन न विरोधिप्रत्यनीकलक्षणया निवृत्तिपरिभाषणे सति स्वार्थस्य श्रुतस्य वाच्यार्थस्यर्तु
गमनस्य त्यागः स्यात् । तथा परार्थस्याश्रुतस्यानृत्वगमनस्यातृतौ भार्यां नोपेयादित्येवं कल्पनेति दोषद्वयं शब्दव्यवहारेण प्रतीयत इति शब्दनिष्ठम् । तथा रागतः प्राप्तस्यानृतुगमनस्य बाध इत्येको दोषोऽर्थविचारा
त्फलित इत्यर्थनिष्ठ इत्येवं दोषत्रयं स्यात् । यतो वाच्यार्थसंभवाल्लक्षणातो निवृत्तिपरिभाषणे दोषत्रयं ततस्तान्निर्वहणाय क्वचिदपूर्वविधिद्वारा तात्पर्यतः परिसंख्या, क्वचित्तु नियमविधिद्वारा । तत्र पूर्वामाह—क्वचि
दिति । क्वचिदश्वाभिधानीमादत्त इत्यादौ प्राप्स्यतः मंत्रे ऋतस्य सामान्योक्त्या पक्षे प्राप्स्यतोऽश्वाभिधानीरशनाग्रहणलक्षणार्थस्याश्वाभिधानीमादत्त इति ब्राह्मणवाक्येन पुनः प्रापणमनर्थकं व्यर्थम्, " अप्राप्ते शास्त्र
मर्थवत् " इति न्यायात् । इति हेतोः अपूर्वविधिद्वाराऽपूर्वविधिसदृशतया सर्वांशेनाश्वाभिधानीग्रहणं मानांतरेणाप्राप्तमित्यपूर्वविधित्वं पाक्षिकतया त्वंशेन प्राप्तमिति नापूर्वविधिः संगच्छते तद्द्वारान्यस्य गर्दभरसनाग्रहणस्य

निवृत्तिः फलतस्तात्पर्यतो भवति । गर्दभाभिधानीं न गृह्णीयादिति । तद्यथा तदेव दर्शयति–“ऋतस्य यज्ञियपशोरिमां रशनामगृह्णन् गृह्णीयादिति” इति सामान्यतो रशनाविधायकमंत्रं
पठित्वाऽश्वाभिधानीमश्वोऽवधीयतेऽवस्थाप्यते यया तां रशनामादत्ते । गृह्णीयादित्यत्र रशनालिंगतो रशनाशब्दसामर्थ्यात् रशनाद्वये गर्दभाश्वरशनयोर्विषये प्रयोगकाले प्राप्स्यतो मंत्रस्य संबंधी
अयमश्वाभिधानीमेवाददीतेति मंत्रार्थनिश्चायक इत्यर्थः । अयमश्वाभिधानीग्रहणविधिः परिसंख्योच्यते परिसंख्यात्वेनोच्यते । पूर्वोक्तदोषत्रयनिवारणार्थं तत्र द्वारमाह–अपूर्वविधिद्वारेति । तत्र वृद्धसंमतिमाह–
यथोक्तमिति । अयमश्वाभिधानीविधिर्लकारव्यत्ययेनाप्राप्तविधिरपूर्वविधिरेव मंत्रस्य पाक्षिकविधायकत्वेपि सर्वांशेनाप्राप्तत्वात् । अतस्तादृशविधेर्हेतोर्मंत्रार्थोपि अश्वाभिधानीमाददीतेति निश्चितः स्यात् । अतोऽपूर्वविधिद्वारा
फलेन तात्पर्येण गर्दभाभिधानीं न गृह्णीयादिति परिसंख्योक्तविशेषो नियमविधिर्नास्ति । कुतः–पुनः श्रुतेः अंशेन प्राप्तस्यैवाश्वाभिधानीग्रहणस्य पुनः श्रुतत्वात्, अप्राप्तांशपूरणभावादित्यर्थः । नियमविधिद्वारा परि
संख्यां दर्शयति–क्वचिदिति ! क्वचित्पञ्चनखभक्षणवाक्ये रागतः स्वाभाविकेच्छातो नित्यप्राप्तस्य पंचनखभक्षणादेः व्यवायादेः संबंधेऽप्राप्तांशस्य पूरणमेव लक्षणं स्वरूपं यस्य तस्य नियमफलस्याप्यभावात् । अपिरत्रापूर्वविध्य
भावं समुच्चिनोति । नियमविधिद्वारा नियमविधिसदृशतया फलतस्तात्पर्यतः परिसंख्या भवति । पंचनखेतरा अभक्ष्या इति दार्ष्टांतिकमाह–तथात्रेति । अत्रर्तौ भार्यामुपेयादित्यादावभ्यनुज्ञाद्वारा प्रमाणांतरप्रतिपन्नानिष्ट
साधनत्वेपि तदभावमात्रबोधको विधिरभ्यनुज्ञाद्वारा परिसंख्यैव नापूर्वविधिर्नापि नियमविधिरित्यर्थः।अनृतौ भार्यां नोपेयात् ,अहुतशेषं न भक्षयेत्, सौत्रामणिव्यतिरिक्ते सुरां न गृह्णीयादित्येवं सर्वत्र परिसंख्यैव । न त्वपूर्वनियमयो
रिव शास्त्रप्राप्तत्वेनावश्यकत्वमिति निवृत्तावेव तात्पर्यमित्यर्थः।विधित्रयलक्षणमभिज्ञैरुक्तम्–“विधिरत्यंतमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र संप्राप्तौ परिसंख्येति गीयते॥” इति।अन्यदतिरोहितार्थमिति प्रकाशः॥*॥संदर्भकारै
रपीत्थमेव व्याख्यातम्।तथाहि–लोके इति तैः।तत्र नियमविधिरूपेणेति तत्सदृशेनेत्यर्थः।तदाहेति तत्समानार्थमाहेत्यर्थः। द्वंद्वस्य परवल्लिंगत्वे सतीति पूर्ववत्।नियमपक्षेऽप्यावश्यकत्वादिति यथाश्वाभिधानीमादत्त इत्यत्रादानमावश्यकं
तथेत्यर्थः । सिद्धांतमाह–अत आहेति । नियमेआदानस्य विधिप्राप्तत्वान्न सर्वतो निवृत्तौ तात्पर्यं परिसख्यायां तु भक्षणस्य रागतः प्राप्तत्वात सर्वत एव निवृत्तौ परमतात्पर्यमिति युक्तैव निन्देत्यर्थः । आसु व्यवायेत्यादिकमयं
भाव इत्यतः पूर्वमेव युज्यते, तत्र तु लेखकप्रमादादिति ज्ञेयम्।व्यवस्थितिरिति–तच्छब्देन व्याख्यातो नियम इत्यर्थः। नियमद्वारैवेयं परिसंख्येति सिद्धांतयितुमाह–उच्यते,परिसंख्याविधिना कर्तृभूतेन श्रुत्या शब्देन करणभूतेन।
प्राप्स्यतः पाक्षिकतयेति ज्ञेयम्–क्वचिदिति । रागतो नित्यप्राप्तस्येत्यस्य नियमेत्यादिनान्वयः।तत्र हेतुः–प्राप्तांशेति । यथा पाक्षिकतयांशेनाप्राप्ताश्वाभिधानी सर्वांशेन पूर्यते तादृशत्वाभावादित्यर्थः। अत्रापि नियमविधिस्तत्सदृश
एव ज्ञेयः । मनसीति विध्यभावेप्यभ्यनुज्ञाविषयाणां रागिणामभ्यनुज्ञातिक्रमः स्यादेवेति भावः । अथवा लोक इति । तथाहि–“विधिरत्यंतमप्राप्तौ” इति पूर्ववत् । अत्र विधिर्यथा–“ अहरहः संध्यामुपासीत ” इति ।
इदं खलु सर्वथैव न प्राप्नोति अयमेवापूर्वविधिरुच्यते । नियमो यथा–“इमामगृभ्णन्रशनामृतस्य ” इति मंत्रेण ऋतस्य याज्ञिकपशो रसनां रज्जुमगृभ्णन् अगृह्णन्नित्यर्थेन गर्दभाश्वाभिधान्योरेकतरस्यां स्वाच्छंद्येन प्राप्तायां
ब्राह्मणेन नियम्यते “ अश्वाभिधानीमादत्ते ” इति । परिसंख्या च “ पंच पंचनखा भक्ष्याः ” इति । अत्र रागप्राप्तेषु प्रायः सर्वेष्वेव मांसवत्सु भक्ष्येषु पञ्चैव परिसंख्यायन्ते तदनुसारेण तावन्त एवाभ्यनुज्ञायंते
मात्रं न तु विधीयंत इत्यर्थः । तत्र नियमे प्राप्स्यतोप्यर्थस्य प्रापणमनर्थकमिति ब्राह्मणेनापूर्वविधिनाऽन्यनिवृत्तिस्तात्पर्यतो भवति । अतः परिसंख्या चात्र पर्यवसिता । तंत्रवार्तिके यथोक्तम्–“अप्राप्तविधिरेवायमतो
मंत्रस्य निश्चितः । परिसंख्याफलेनोक्ता न विशेषः पुनः श्रुतेः ॥” इति । अयमश्वाभिधानीविधिरप्राप्तविधिरेव नकारव्यत्ययात्, तस्मादतो विधेर्मंत्रार्थश्च निश्चितः–अश्वाभिधानीमाददीतेति । अतोत्र परिसंख्या
त्वमपि फलेन तात्पर्येण प्राप्तम् । ननु सामान्यतो मंत्रप्राप्तस्य रशनाद्वयस्याश्वाभिधानीमित्यनेन विशेष एवोक्तः अपरोपि ज्ञास्यत इति वाच्यम्, तत्राह–पुनः श्रुतेः पुनरुक्तत्वादनर्थकत्वादित्यर्थः । अत्र
परिसंख्यायामिदं विविच्यते न तावत्परिसंख्याविधिशब्दो नान्यनिवृत्तिं वक्ति, तथा सति पञ्चनखीभक्षणरूपस्य स्वार्थस्य त्यागः तथान्यनिवृत्तिरूपस्य परार्थस्य कल्पनम् । ततश्च प्राप्तस्य पञ्चनखीभक्षणरूपस्य
बाधश्च स्यादिति । तस्माद्यादृशनियमविधौ पाक्षिकतयांशेन प्राप्ताश्वाभिधानी सर्वांशेनैव पूर्यते रागतो नित्यप्राप्तेषु नियमफले तादृशत्वाभावान्नियमद्वारा तात्पर्यतः परिसंख्या भवतीति । तस्मादयमर्थः–
लोके व्यवायादयो जंतोर्मनुष्यादेर्नित्या रागत एव नित्यप्राप्ताः । तत्र व्यवायः स्वभावत एव, आमिषमद्ये तु मनुष्यस्य परम्पराप्राप्तत्वादिति ज्ञेयमतस्तत्र चोदनाऽपूर्वविधिर्नास्ति । किं तु तेषु रागिषु विवाहयज्ञसुरा

धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशांति ॥ गृहेषु युंजंति कलेवरस्य मृत्युं न पश्यंति दुरंतवीर्यम् ॥ १२ ॥

तदेवं व्यवायादिमनोरथाकुलितत्वादभीष्टमात्मानं न शृण्वंतीत्युक्तमिदानीं धनस्यापि धर्मद्वारा परमात्मप्रापकस्य दृष्टोपभोगार्थं विनियोगान्नात्मज्ञानगंधोऽपीत्याह । धनं चेति । धर्म एवैकं मुख्यं फलं यस्य तत् । कुतः । यतो यस्माद्धर्मात्सविज्ञानमपरोक्षज्ञानसहितं दृढं परोक्षज्ञानं भवति । कथंभूतम् । अनुप्रशांति अन्वनंतरमेव प्रकृष्टा शांति र्निर्वाणलक्षणा यस्य तत् । एवंभूतं धनं गृहेषु देहाद्यर्थं युंजंति ॥ १२ ॥

ग्रहैर्व्यवस्थितिः क्रियते नियमद्वारा परिसंख्या क्रियते । तद्यथा—विवाहेत्युपलक्षणं विवाह एव तत्रापि ऋतावेव व्यवायः कार्यः, यज्ञ एवामिषसेवा, सुराग्रहे सौत्रामण्यामेव मद्यसेवेति । ननु परिसंख्यात्वे सति व्यवायादौ विधित्वमस्त्येव लिङ्गादिसद्भावात्, ततस्ताः कथं निन्दया त्यज्यन्ते तत्राह—आसु व्यवायादिषु निवृत्तिरेवेष्टेति । रागप्राप्तत्वादभ्यनुज्ञामात्रं क्रियते न त्वपूर्वनियमयोरिव शास्त्रप्राप्तत्वादवश्यं कार्यते, इति निवृत्तावेव तात्पर्यमित्यर्थः । ऋतुस्नाताया भार्यायाः परित्यागदोषश्रवणं तु विध्यतिक्रमाद्विध्यनुपपत्तेः, न च वैराग्येणाभ्यनुज्ञातिक्रमात्, तत्राभ्यनुज्ञाया अभावात् । किन्तु सत्यामप्यनुज्ञायामन्यस्यां रागादौ स्वभार्यायामरुच्यादिनैवाप्रवृत्तेस्तदतिक्रमात्, ततो भ्रूणहत्यापर्यवसनाच्च । एवमामिषमद्ययोरपि ज्ञेयम् ॥ * ॥ **विश्वनाथस्तु**—चोदनाशास्त्रविधिः अप्राप्तप्रापणैव विधित्वात् । व्यवस्थितिर्व्यवस्थैव दत्ता । यदि स्त्रीमांसमद्यादि विना न स्थातुं शक्यते तदा विवाहविषय एवेत्यादि वाभ्यनुज्ञा दत्ता, न तु वस्तुतोविधिरत आसु निवृत्तिरेवेष्टेति निवृत्तावेव शास्त्रतात्पर्यम् । तथाहि—भार्यामेवोपेयान्न स्त्रीमात्रम्, ऋतावेवोपेयान्नान्यत्र, तत्रापि पंचपर्वातिरिक्तसमय एव, रात्रावेव, पुत्रकामनयैवेति क्रमक्रमतो निवृत्तिरेवाभिप्रेता । पञ्च पर्वाणि च—द्वादशीपूर्णिमामावास्यासंक्रान्तिश्राद्धरूपाणि । विधिरत्यंतमप्राप्तेति कारिकार्थस्तु प्रवृत्तिकर्मैकनिष्ठानां मते, अत्यंतमप्राप्तौ विधिर्यत्र रागतो विध्यंतरतो वा सर्वथैव प्राप्तिर्नास्ति स विधिः । यथा—“ अहरहः संध्यामुपासीत ” “ माघस्नानं प्रकुर्वीत ” इति निशि न स्नायाच्चन्द्रग्रहे तु स्नायादिति । अत्यंताप्राप्तिरहिते स्थले तु विधिर्न भवति, किन्तु नियमः परिसंख्या वा । तत्र कुत्र नियमः कुत्र वा परिसंख्याऽतआह—पाक्षिके सति नियमः पाक्षिकेंऽशेऽसति निन्दा प्रायश्चित्तार्हे सति नियमः । यथा—‘ ऋतौ भार्यामुपेयात् ’ इति ऋतुसमये हि भार्यागमनं रागप्राप्तं तत्रागमनांशे निन्दा । यथा—‘ ऋतुस्नातां तु यो भार्याम् ’ इत्यादि स्मृतेरत एव नियम एव । ऋतौ भार्यामुपेयादेवेति ऋतौ भार्यागमनायोगो न कर्तव्य इति फलितार्थः । अथ तत्र च तन्मध्य इत्यर्थः । अन्यत्र च अन्यत्र तु अन्यस्मिन्भागेऽसति सति परिसंख्या, यथा—पञ्च पञ्चेति । अत्र रागप्राप्ते पंचनख्यभक्षणे च निन्दा न श्रूयते, किन्तु तदितर भक्षण एव । अतः पञ्चैव पञ्चनखा भक्ष्या नान्य इति परिसंख्यैव अभ्यनुज्ञादानमात्रमतो मांसमात्रस्याप्यभक्षणे नास्ति दोष इत्यायातम् । अथ निवृत्तकर्मैकनिष्ठानां मतेऽर्थो यथा—अत्यन्तं सर्वथाप्राप्तौ विधिः, यथाऽहरहः संध्येत्यादि, पाक्षिके प्रापणे सति विधितएवैकत्र कोटौ प्राप्तौ सत्यामन्यत्राप्राप्तौ च सत्यां नियम इत्यर्थः । यथेमामित्येकवचनेन गर्दभाश्वाभिधान्यो रसनयोरेकतरस्यां प्राप्तिर्बुध्यते, तत्र किमश्वाभिधान्यामुत गर्दभाभिधान्यामिति संशये नियम्यतेऽश्वाभिधानीमादत्त इत्यश्वाभिधानीमेवादान्न गर्दभाभिधानीमिति नियमे निषेधो वाक्यार्थः । तदेवमपूर्वविधिरिति नियमविधिरिति द्वावप्येतौ विधी । का खलु परिसंख्येत्यपेक्षायामाह—तत्र च तन्मध्ये त्वित्यर्थः । अन्यत्र विधित इतरत्र रागस्थले प्राप्तौ सत्यां या परिसंख्या विधीयते—यथा रागतो मांसभक्षणप्राप्तौ पंच भक्ष्या इति पंचपंचनखेतरमांसानि सर्वाण्यभक्ष्याणि भोक्तुः प्रत्यवायजनकानीत्यर्थः । मांसभक्षणे पंचपंचनखमांसान्येव परिसंख्यातान्यभ्यनुज्ञातानीति तत्रैव न प्रत्यवायः परिसंख्याया अभ्यनुज्ञानदानमात्रार्थत्वात्सर्वमांसाभक्षण एव शास्त्रतात्पर्यमत एव भार्यामेवाभिगच्छेन्न परकीयामृतावेव नान्यत्रेत्यभ्यनुज्ञामात्रदानात्स्त्रीमात्रानभिगमन एव शास्त्रतात्पर्यमिति ॥ ११ ॥ तदेवं तदित्थम् । न केवलमात्मानं न शृण्वन्तीत्येव किन्तु धनमतिदुःखसंपाद्यमपि व्यर्थमेव व्ययीकुर्वंतीत्याह—इदानीमिति । विनियोगाद्व्ययीकरणात् । एको मुख्यधर्मस्य

यद् घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ॥ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥
ये त्वनेवंविदोऽसंतः स्तब्धाः सदभिमानिनः ॥ पशून्द्रुह्यंति विस्रब्धाः प्रेत्य खादंति ते च तान् ॥ १४ ॥

किंच व्यवस्थयाऽपि व्यवायाद्यभ्यनुज्ञानं न यथेष्टमपि त्वन्यथैवेत्याह । यदिति । यद्यस्मात्सुराया घ्राणंभक्षोऽवघ्राणं स एव विहितो न पानम् । तथा पशोरप्यालभनमेव विहितं न तु हिंसा । अयमर्थः । देवतोद्देशेन यत्पशुहननं तदालभनं "वायव्यं श्वेतमालभेत" इत्यादिश्रुतेर्न तु हिंसा । " या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते" इति वचनात् । भक्षणोद्देशेन तु क्रियमाणं हननं लौकिकवद्धिंसैव । अत्र ह्यालभनमेव विहितं न तु हिंसा । अतो न यथेष्टभक्षणाभ्यनुज्ञेत्यर्थः । व्यवायोऽपि प्रजया निमित्तभूतया न तु रत्यै । अतो मनोरथवादिन इमं विशुद्धं स्वधर्मं न विदुरिति ॥ १३ ॥ एवं भगवत्पराङ्मुखानां बहुदोषतां प्रपंच्य तन्निष्ठां प्रपंचयति ये त्विति पंचभिः । अनेवंविदः न एवं परं धर्मं विदंति ये ते । विस्रब्धा निःशंकाः । अनेन मनोरथो भविष्यतीति विश्वस्ता वा तदानींतनपोषणेन वा । तैः पशुभिर्विश्वस्तास्ते

मुख्यफलत्वे कुत इति हेतुमाशंक्य यत इति समाधत्ते । एवंभूतं मोक्षफलदम् । आदिना पुत्रादिग्रहः । कलेवरस्य कले शुक्रे मधुरास्फुटध्वनौ वा वरं श्रेष्ठं कलेवरं शरीरम् एतदेव शुक्रे श्रैष्ठ्यं यच्छरीरकरणं मुधा तत्त्यागे श्रैष्ठ्याभावात् । यद्वा—कं सुखं लाति ददातीति कलं तस्मिन्मोक्षसुखदे वरस्य श्रेष्ठस्य मानुष्यदेहस्य चरमस्येति यावत् । 'अंत्यांगेपि कलेवरम्' इति निरुक्तिः ॥ * ॥ **दीपिका**—तदेवं पूर्वोक्तप्रकारेण धर्मद्वारा भगवत्परितोषकतदर्पितकर्मद्वारा ज्ञानभक्तिलक्षणपरमार्थप्रापकस्य इष्टोपभोगार्थमैहिकपुत्रकलत्राद्युपभोगार्थं विनियोगाद्व्ययकरणात् । आत्मज्ञानगंधोपि न, कुतः पुनः श्रवणमित्यपेर्थः । अपरोक्षज्ञानमनुभवः । परोक्षज्ञानं शास्त्रीयम् । कलेवरस्येति संबंधसामान्यविवक्षया चतुर्थ्यर्थे षष्ठी । तथा चाजहल्लक्षणया देहाद्यर्थमिति व्याख्यातम् ॥ * ॥ **विश्वनाथस्तु**—तथा धनस्यापि दृष्टोपभोगार्थमेव विनियोगादबुधा एव त इत्याह । अन्यत्तैः ॥ १२ ॥ पूर्वोक्तव्यवायादिव्यवस्थामपि संकोचयन्नाह—किञ्चेति । आलभनपदार्थं स्फुटयति—अयमर्थ इति । वायव्यं वायव इदं वायव्यं श्वेतं शुक्लवर्णमजामिति श्रुतिपदार्थः । इति वचनाच्छास्त्रात् । इत्यर्थ इति—आलभने पापाभावात्स्वस्य पशोश्च स्वर्गहेतुत्वात्तदेवकार्यं न त्वितरथेति भावः । " यतो यज्ञे मृता ऊर्द्ध्वं यांति दैवे च पैतृके । अतो लाभादालभनं स्वर्गस्य न तु मारणम् ॥ " इति तीर्थोक्तेश्च । यतो हेतोः व्यवस्थापि दुष्करातो हेतोः । केचिदालभनशब्दस्य स्पर्शार्थकतां मन्यमाना यज्ञेषु पशुं निषेधन्ति तदेतत्सच्छास्त्रं विचारार्हं न वेति सुधीभिर्विवेचनीयम् । अन्यत्र सर्वत्रापि यज्ञे विशसनं विहितं तदालभनशब्दस्य विशसनार्थकत्वमेव न तु स्पर्शार्थकत्वम्, यज्ञ आलंभनपर्यायाया हिंसाया विहितत्वादन्यत्र च निषेधकवचनात्स्पृष्टपश्वादिकल्पनाया बालस्तोभनकत्वमेवेति । ततस्तेषां मताग्रह एवात्र बीजं ते वदन्ति " यज्ञेष्वालंभनं प्रोक्तं देवतोद्देशतः पशोः । हिंसा नाम तदन्यत्र तस्मात्तां नाचरेद् बुधः ॥ " इति । परन्त्वनेन वचनेन तेषां कियत्यभिमतार्थसिद्धिर्भवति त एव जानन्तु । सर्वेपि याज्ञिकाः " यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा । तस्माद्यज्ञे वधोऽवधः " इत्यादिवाक्यान्यूरीकृत्यालंभनशब्देन हिंसामेव मन्यन्ते स्पर्शार्थतां न क्वचिदपीत्यतः सर्ववैदिकसंमतं पशुविशसनमेवालंभनशब्दार्थो न स्पर्श इति सच्छास्त्रघंटापथः । अत्रास्माभिः 'न दद्यादामिषं श्राद्धे' इत्यत्र सप्तमे श्रीमन्महाभारतीयवसूपाख्यानेन समाहितमतोत्र न प्रपञ्चितमिति ॥ * ॥ **दीपिका**—व्यवस्थयापि नियमविधिसदृशतयापि । अन्यथैव वक्ष्यमाणप्रकारेणैव । नन्वालंभनहिंसयोः को भेद इत्यत आह—अयमर्थः । तथा च—वेदाज्ञापालनार्थं शास्त्रीयहननमालभनं तदनादरेण भक्षणार्थमेव हननं हिंसेति तयोर्भेदः । अत्र तु वेदे तु । अतः सुरापानादेरवघ्राणाद्यर्थत्वात् । अतो व्यवायादेः प्रजाद्यर्थत्वात् । इमं चित्तशुद्ध्यर्थं वेदाज्ञापालनरूपम ॥ १३ ॥ एवं धर्मम् 'यद् घ्राणभक्षः' इत्यादिना विहितम् । स्तब्धा दयार

द्विषंतः परकायेषु स्वात्मानं हरिमीश्वरम् ॥ मृतके सानुबंधेऽस्मिन्बद्धस्नेहाः पतंत्यधः ॥ १५ ॥
ये कैवल्यमसंप्राप्ता ये चातीताश्च मूढताम् ॥ त्रैवर्गिका ह्यक्षणिका आत्मानं घातयंति ते ॥ १६ ॥
एत आत्महनोऽशांता अज्ञाने ज्ञानमानिनः ॥ सीदंत्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥

च पशवः प्रेत्य अमुत्र तान् खादंति । "मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदंति मनीषिणः ॥ " इति वचनात् ॥ १४ ॥ व्यभिचारा दिना द्विषंतः । मृतके देहे । सानुबंधे पुत्रादिसहिते ॥ १५ ॥ अज्ञास्तत्त्वज्ञैरनुकंपितास्तरंति तत्त्वज्ञास्तु स्वतः । ये तु नात्यंतमज्ञा न च तत्त्वज्ञास्तेंतरालवर्तिनः पतंती त्याह । य इति । कैवल्यं तत्त्वज्ञानमसंप्राप्ताः । मूढतामत्यंतजडताम् । अत्र हेतुः । त्रिवर्गप्रधानाः । अक्षणिका उपशांतिक्षणरहिता देहादिस्थैर्यबुद्धयो वा स्वयमेवात्मानं घात यंति ॥ १६ ॥ तदाह । एत इति । आत्महनः आत्मापह्नवकर्तारः । अज्ञाने कर्मणि । तथाच श्रुतिः । " असुर्या नाम ते लोका अंधेन तमसा वृताः । तांस्ते प्रेत्याभि

हिताः । निःशंका ऐहिकनिन्दापारलौकिकभयशून्याः । निश्शङ्कानां तु देवाराधनादौ श्रद्धैव नास्ति कथं तेषां तत्र प्रवृत्तिरित्यरुच्याह–अनेनेति । अनेन बलिदानेन । ननु हिंसकतः पशवोपि बिभ्यतस्तत्पार्श्वं नायान्ति तत्कथमुक्तमनेनेति स्वारस्याभावादाह–तदानीमिति । तदानीं बलिदानपूर्वक्षणे । तेन पोषणेन । तत्कृततृणान्नादिदानहस्तस्पर्शादिना विश्वस्ता एते मद्धितकरा इति कृतविश्वासाः । तान्हिंसकान् । अत्र प्रमाणमाह–यथाहेति । व्याख्यातेयं स्मृतिः पुरंजनोपाख्याने ॥ * ॥ तन्निष्ठां बहिर्मुखप्राप्यम् । एतेन पशुयागेन । अस्मिँल्लोके यस्य पशोर्मांसमहमाद्मि स पशुरमुत्र यमालये मां भक्षयिता भक्षयिष्यति । एतन्मांसस्य मांसश ब्दस्य मांसत्वानिरुक्तिं मनीषिणः प्रवदंतीति स्मृत्यर्थः ॥ * ॥ **विश्वनाथस्तु**–एवमुक्तलक्षणं धर्मं न विदन्ति ते " या शास्त्रविहिता हिंसा न सा हिंसेति कथ्यते " इत्यादिवाक्यतात्पर्यमज्ञात्वा ये पशून्प्राणत एव हिंसन्तीत्यर्थः । विश्रब्धा वधकालेऽप्येतेस्मत्पोषका अस्मान्न हनिष्यन्ति किन्तु शस्त्रदर्शनयाऽस्माभिः खेलितुमुपहसन्त्येवेति पालितैः पशुभिः कृतविश्वासास्तान् द्रुह्यन्ति घ्नन्त्येव । ततश्च ते पशवस्तान्स्वघातकान् खादन्ति । अत एव योगबलेन यज्ञपशून्प्रत्यक्षं प्रदर्श्य प्राचीनबर्हिषं प्रत्युक्तं श्रीनारदेन–" भोभो प्रजापते राजन्पशून्पश्य त्वयाध्वरे । संज्ञापिताञ्जीवसंघान्निर्घृणेन सहस्रशः ॥ एते त्वां संप्रतीक्षन्ते स्मरन्तो वैशसं तव । संपरेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥ " इति ॥ १४ ॥ मृतके मरणधर्मके ॥ * ॥ परकायेष्वप्यात्मानमीश्वरं वसन्तं द्विषन्तः । अभिचारादिनेत्यादिना लौकिकहिंसाग्रहः । अभिचारः श्येनयागादिः ॥ * ॥ **विश्वनाथस्तु**–द्विषन्त इति–मांसार्थं पशून्हिंसन्ति लोकान्वा यद्विषन्ति तत्त्वात्मानं हरिमेव द्विषन्तीत्यर्थः ॥ १५ ॥ विज्ञाज्ञविलक्षणपुरुषगतिमाह–अज्ञा इत्यादिना । अत्र तत्त्वज्ञानाप्राप्तौ उपशांतिवर्जितानां त्रिवर्गे प्रवृत्तिरपि दुःसंपाद्या इत्यरुच्याह–देहादीति । घातयन्ति क्लेशयन्ति " यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यंतरितो जनः ॥ " इत्युक्तेः ॥ * ॥ अंतरालवर्तिनो ज्ञानलवदुर्विदग्धा उपशां तिक्षणरहिताः क्षणमात्रमपि शान्तिशून्या रजोविक्षिप्तमतय इत्यर्थः । द्वितीयपक्षे सर्वं हि पदार्थजातं देहादिः क्षणिकमेव नित्यप्रलये तथाभ्युपगमात्, तथापि नास्ति तत्र क्षणिकं क्षणिकत्वज्ञानं येषामिति देहादिस्थैर्य बुद्धय इति व्याख्यातम् ॥ * ॥ **विश्वनाथस्तु**–अज्ञास्तत्त्वज्ञैरनुकंपिता भवंति तत्त्वज्ञास्तु स्वतः । ये त्विति तैः । कैवल्यप्रापकज्ञानशून्या नापि पश्वादिवन्मूढाः । तर्हि किं ज्ञानार्थिनो भक्त्यर्थिनो वा, न, त्रैवर्गिका धर्मार्थकामपराः। भवन्तु कदाप्यवसरे हरिकथां शृण्वंति, न, अक्षणिकाः क्षणमात्रमप्यवकाशं न लभन्ते । तर्हि ते आत्मानमेव घातयंतीत्यर्थः ॥ १६ ॥ तदात्महननम् । आत्मापह्नवकर्तार आत्मज्ञानरहिताः । अज्ञानेऽ

हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ॥ तमो विशंत्यनिच्छंतो वासुदेवपराङ्मुखाः ॥ १८ ॥ राजोवाच ॥ कस्मिन्काले स भगवान्किंवर्णः कीदृशो नृभिः ॥ नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥ करभाजन उवाच ॥ कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ॥ नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥ कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलांबरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दंडकमंडलू ॥ २१ ॥ मनुष्यास्तु तदा शांता निर्वैराः सुहृदः समाः ॥ यजंति तपसा देवं शमेन च दमेन च ॥ २२ ॥

गच्छंति ये के चात्महनो जनाः ॥ " इति ॥ १७ ॥ या गृहापत्यसुहृच्छ्रियस्ता हित्वा ॥ १८ ॥ तदेवं भगवद्भक्तिरेव कर्तव्येति स्थिते तत्र विशेषं पृच्छति । कस्मिन्काल इति । किंवर्णः कीदृग्वर्णवान् । कीदृशः कीदृगाकारः । केन वा नाम्ना केन वा विधिना ॥ १९ ॥ एषु कृतादिकालेषु नानाप्रकारा वर्णाभिधाकारा यस्य सः । नानैव विधिना विविधेनैव मार्गेण ॥ २० ॥ तदेव वर्णादिचतुष्टयमाह कृत इत्यादिना । कृष्णाजिनादीन्बिभ्रदिति ब्रह्मचारिवेषो दर्शितः ॥ २१ ॥ तपसा ध्यानेन॥ २२॥

ज्ञानविषये । सीदन्ति क्लिश्यन्ति । अत्र प्रमाणमाह–तथा चेति । असुर्या असुरप्राप्याः, व्याख्यातचरेयं श्रुतिः । न कृतं कर्तुं योग्यमात्मविचारादि यैस्तेऽकृतकृत्याः, 'पद्ममुकुलभ्रमरन्यायेन' कालाऽपाकृतोति कृत्याः । न्यायस्तु पूर्वं व्याख्यातः ॥ * ॥ तदाह आत्मघातित्वमाह । तथा च श्रुतिः काम्यकर्मिणामात्महंतृत्वे प्रमाणं श्रुतिः ईशावास्योपनिषदि अविद्वन्निन्दार्थोयं मंत्रः–ते लोका इति । तच्छब्दो यच्छब्दार्थे । परमात्मभावमद्वयमपेक्ष्य देवादयोप्यसुरास्तेषां स्वभूता आसुर्याः । नाम शब्दोऽनर्थको निपातः । लोक्यंते दृश्यन्ते । भुज्यंत इति त्वन्यानि कर्मफलानि । अंधेनादर्शनात्मकेनाज्ञानेन तमसाऽऽवृता अच्छादितास्तान्स्थावरांतान्ये लोकांस्ते जनाः, प्रेत्येमं देहं त्यक्त्वा यथाकर्म यथाश्रुतं गच्छन्ति । ते के–ये केचिदात्मनः आत्मानं घ्नन्तीत्यात्महनोऽविद्वांसः, त हि आत्मानं नित्यं हिंसन्ति अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् ॥ १७ ॥ अत्यायासेन नित्यकृत्यपरित्यागादिपुरस्सरकायक्लेशेन रचिताः । अनिच्छन्तो गृहादित्यागं, तमःप्रवेशं वेति । तमःप्रवेशे हेतुः–वासुदेवेत्यादि । तमो नरकम् " तमोज्ञाने तथेच्छायां निरयध्वान्तराहुषु इति निरुक्तिः ॥ * ॥ अत्यायासेनातिश्रमेण रचिताः संपादिता या गृहापत्यसुहृत्स्त्रियस्ता हित्वेति यत्तदोर्गम्यत्वमेवान्यथा स्त्रिय इति प्रथमान्तमनन्वितं स्यात् ॥ १८ ॥ तत्र भक्तिकरणे । यन्मया पृष्टं तदित्यर्थः ॥ * ॥ तदेवमभक्तनिन्दया भक्तिमार्गदार्ढ्यप्रकारेण । तत्र भक्तौ । यस्य भक्तिः कर्तव्या स भगवान् इह जगति पूज्यते । तत्कालवर्णाकारादि भवद्भिरुच्यता मिति **दीपिका** ॥ * ॥ **विश्वनाथस्तु**–एतादृशानामुद्धारो भगवदवतारं विना न संभवेदिति मनसि कृत्वा पृच्छति–कस्मिन्निति । नृभिः साधारणैरित्यर्थः । असाधारणानामन्यावताराणां ह्युपासनायाः सर्वदा श्रुतत्वात् ॥ १९ ॥ मार्गेण वैदिकतांत्रिकादिरूपेण ॥ * ॥ तत्तत्कालीनयुगावतारवर्णपूजादिज्ञानं संग्रहकर्तुर्न स्यात् । करावेव भाजनं यस्य तथा । " पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही " इत्युक्तेस्तु करभाजनो न संग्रहीति तथाभूतत्वात्स एवोवाचेति ॥ २० ॥ सामान्यत उक्तं विशिनष्टि–कृत इत्यादिना । कस्मिन्काल इत्यस्योत्तरं–कृत इति । किंवर्ण इत्यस्योत्तरं–शुक्ल इति । कीदृश इत्यस्योत्तरं–चतुर्बाहुरित्यादि । केन नाम्नेत्यस्योत्तरं–हंस इत्यादि।केन विधिनेत्यस्योत्तरं–तपसेत्यादि । शांता इत्याद्यधिकारिलक्षणं नृभिरित्यनेन पृष्टमेव । एवमुत्तरत्रापि । अक्षो जपमाला ॥ * ॥ शुक्ल इति शुक्लवर्णः शुक्लनामा च । कृष्णाजिनं कृष्णसारचर्म, उपवीतं यज्ञसूत्रम् , अक्षोऽकारादिक्षकारांतवर्णमयमालासा च कमलमयी । दंडं च कमंडलुं च बिभ्रत् । दंडश्च कमंडलुश्चेति 'सर्वोपि द्वंद्वो विभाषयैकवद्भवति' इति । यद्वा–दंडेन सहितं कमंडलुम् । दंडकमंडलू इति पाठः सुगमः । ब्रह्मचारिवेषो दर्शितः ॥ २१ ॥ तदा कृतयुगे ।

हंसः सुपर्णो वैकुंठो धर्मो योगेश्वरोऽमलः ॥ ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥ २३ ॥ त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ॥ हिरण्य केशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः॥२४॥तं तदा मनुजा देवं सर्वदेवमयं हरिम्॥यजंति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः॥२५॥ विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ॥ वृषाकपिर्जयंतश्च उरुगाय इतीर्यते ॥२६॥ द्वापरे भगवाञ्छ्यामः पीतवासा निजायुधः ॥ श्रीवत्सादिभिरंकैश्च लक्षणैरुपलक्षितः ॥ २७ ॥ तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ॥ यजंति वेदतंत्राभ्यां परं जिज्ञासवो नृप ॥ २८ ॥

॥ २३ ॥ त्रिगुणा दीक्षांगभूता मेखला यस्य स यज्ञमार्तिः । हिरण्यकेशः पिशंगकेशः ॥ २४ ॥ त्रय्या विद्यया वेदत्रयोक्तकर्मभिः ॥ २५ ॥ पृश्निगर्भः पृश्निः सुतपसः प्रजापतेः पत्नी तस्याः पुत्रः । वृषाकपिः स्मृतः सन्वर्षति कामानाकंपयति क्लेशानिति तथा वृषाकपिर्यज्ञवराहमूर्तिः । जयत्येव सर्वदा जयंतः ॥२६॥ श्यामोऽतसी पुष्पसंकाशः । निजानि चक्रादीन्यायुधानि च यस्य सः । श्रीवत्सो नाम वक्षसो दक्षिणभागे रोम्णां प्रदक्षिणावर्तः स आदिर्येषां करचरणादिगतपद्मादीनां तैरंकैरांगिकैश्चिह्नै र्लक्षणैर्बाह्यैः कौस्तुभादिभिः ॥२७॥ महाराजोपलक्षणं छत्रचामरादियुक्तम् । वेदतंत्राभ्यां वैदिकेनागमिकेन च मार्गेण । यजंति पूजयंति । परमीश्वरं ज्ञातुमिच्छवः॥२८॥

तपसा कृच्छ्रादिरूपेण । शमेन मन्निष्ठबुद्ध्यात्मकेन । दमेनेंद्रियनिग्रहलक्षणेन ॥ * ॥ तदा कृतयुगे । शांताः निरुद्धान्तःकरणाः ॥ २२ ॥ तदानींतनप्रायोभजननामानि–हंसो नित्यं सदसद्विवि क्तदृक् । सुष्ठु पर्णमाविर्भावो भक्तानुकूल्येन यस्य । विगता कुंठता निजजनावनातीक्ष्णता यस्मात्स विकुंठः भावप्रधानो निर्देशोऽत्र स एव वैकुंठः । धर्मो हृच्छोधकः । योगेश्वरो भक्तहृन्निरोधकः । अविद्यादिमल हरोऽमलः । ईश्वरो नियन्ता । पुरुषः क्षेत्रज्ञः । अव्यक्तः शुद्धबुद्धिं विना प्राकट्यवर्जितः "दृश्यते त्वग्रया बुद्ध्या" इति श्रुतेः । "सर्वोपाधिसंगशून्यः परमात्मा" इत्युपनिषत्सु गीयते ॥ * ॥ ० ॥ २३ ॥ असौ भगवान् । स्रुक् शामीली जुहूः । स्रुवः खादिरो होमसाधानम् । आदिना स्फ्यादिग्रहः । तैरुपलक्ष्यते यक्षरूपोयमिति ज्ञायत इति तथा ॥ * ॥ त्रयी तत्प्रतिपाद्यो यत आत्मा मूर्तिर्यस्य स तथा । उपलक्षणं ज्ञाप कम् । आदिना ग्रहचमसादिग्रहः ॥ २४ ॥ तं हारिम् । तदा त्रेतायुगे । सर्वदेवमयं सर्वदेवप्रधानम् ॥ * ॥ ० ॥ २५ ॥ पृश्निनाम्नी सुतपसः प्रजापतेर्भार्या । यद्वा–" पृश्निरित्युच्यते चान्नं वेद आपोमृत तथा । ममैतानि सदा गर्भः पृश्निगर्भस्ततो ह्यहम् ॥" इति भारते । यज्ञ. पूज्यः । सर्वे देवा यस्मिन्स सर्वदेवः ॥ * ॥ ० ॥ २६ ॥ ० ॥ * ॥ द्वापरयुगावतारं श्रीकृष्णाविर्भावमयं तद्युगविशेपस्य वैशिष्ट्यातिशयम भिप्रेत्य तमेव तत्तत्सर्वमयमाह–द्वापर इति । सामान्यतस्तु द्वापरे शुकपत्रवर्णत्वं कलौ श्यामत्वं विष्णुधर्मोत्तरे दर्शितम्–" द्वापरे शुकपत्राभः कलौ श्यामः प्रकीर्तितः " इति । द्वापरे छत्रचामरादियुक्तमिति श्रीकृष्ण स्यैव विशेषणं हरिवंशदर्शितराजेन्द्राभिषेकात् ॥ २७ ॥ तं हारिम् । तदा द्वापरे । महाराजोयमित्येवमुपलक्षयंतीति महाराजोपलक्षणानि छत्रचामरादीनि तानि चाल्पराज्ञो न संतीत्यर्थः । तानि विद्यन्तेस्येति महा

**नमस्ते वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥ नारायणाय ऋषये पुरुषाय महात्मने ॥ विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥ ३० ॥ इति द्वापर उर्वीश स्तुवंति जगदीश्वरम् ॥ नानातंत्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥ कृष्णवर्णं त्विषा कृष्णं सांगोपांगास्त्रपार्षदम् ॥ यज्ञैः संकीर्तनप्रायैर्यजंति हि सुमेधसः ॥ ३२ ॥**

नामान्याह । नमस्त इति ॥ २९ ॥ ३० ॥ नानातंत्रविधानेनेति कलौ तंत्रमार्गस्य प्राधान्यं दर्शयति ॥ ३१ ॥ रूक्षतां व्यावर्तयति । त्विषा कांत्या कृष्ण मिंद्रनीलमणिवदुज्ज्वलम् । यद्वा त्विषा कृष्णं कृष्णावतारम् । अनेन कलौ कृष्णावतारस्य प्राधान्यं दर्शयति । अंगानि हृदयादीनि उपांगानि कौस्तुभादीनि अस्त्राणि

राजोपलक्षणम् । मत्वर्थीयोच् । ईश्वरं तमेव ज्ञातुं साक्षात्कर्तुम् ॥ * ॥ तादृशं परं पुरुषं यजंतीत्यन्वयः । यजने हेतुः–जिज्ञासवोऽनुभवितुमिच्छवः ॥ २८ ॥ नामान्युक्तार्थान्येव ॥ * ॥ चतुर्व्यूहतालिंगेन श्रीकृष्णत्वमेव स्पष्टयन्नामान्याह–नमस्त इति ॥२९॥ नानावतारमयत्वेनाप्याह–नारायणाय ऋषय इति । दिग्दर्शनं कृत्वा तत्तदनन्तावताराकरपुरुषावतारमयत्वेनाहं–पुरुषाय महात्मन इति । अत एव विश्वेषामीश्वराय । विश्वाय: तत्तद्रूपाय चेत्यर्थः । किं बहुना सर्वभूतरूपाय सर्वात्मरूपाय च ॥ * ॥ ऋषये सर्वज्ञाय । महात्मने पूज्यत्वे सति व्यापकाय । विश्वस्येश्वरायाधिष्ठानाय । अधिष्ठानत्वादेव विश्वस्य तदनतिरेकाद्विश्वाय तद्रूपाय । क्षेत्रज्ञत्वादेव सर्वभूतानामा त्मने स्वरूपाय ॥ ३० ॥ इतीत्थम् ॥ * ॥ "इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान्विभावयसि हंसि जगत्प्रतीपान् । धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ सत्त्वम्॥" इति प्रह्लादोक्तेः । कलियुगीयावतारस्छन्नत्वेन सर्वलोकदुर्बोधोवगम्यतेऽतस्तत्प्रमापकवचनमपि सोपक्रममर्थांतरेणाच्छन्नतयैवाह–नानेति । कलौ तंत्रमार्गस्य प्राधान्यमित्याच्छादकोर्थः । यथा–नानाकलौ अपिकारात् "आसन्वर्णास्त्रयो ह्यस्य गृह्णतोनुयुगं तनूः" इति गर्गोक्तिप्राप्तवैवस्वताष्टाविंशचतुर्युगीयद्वापरांतरकलावपि तंत्रविधानेन तंत्राख्यन्यायविधिना श्वेतो धावतीतिवदेकप्रयत्नोच्चार्येणैकदैवार्थद्वयबोधकेन शब्देनेत्यर्थः । अत एव शृण्विति । शृण्वंतमपि राजानं पुनः प्रेरणं रहस्यत्वेन तंत्रेणोच्यमानमर्थं वि शिष्यावधापयितुमिति **विश्वनाथः** ॥ * ॥ स्तुतिश्चेयं तदाविर्भावास्पदद्वापरारंभत एव तज्ज्ञैर्ऋषिभिः क्रियत इति सैवानूद्येति **संदर्भः** ॥३१॥ द्वापरेपि कृष्णकांतित्व तु प्रद्युम्नादीनामप्यस्ति ततः को विशेष इति–यद्वेति । त्विषा निजतेजसा कर्षत्यायत्तीकरोति ब्रह्मेंद्रादीनिति त्विषाकृष्णो नंदनन्दनस्तम् । आङ् पूर्वात्कृषेर्नक् । कृष्णश्चासाववतरति लोकहितार्थमित्यवतारश्चेति कृष्णावतारस्तम् । अनेन त्विषा कृष्णमित्युक्तेन " प्रायो बाहुल्यप्राधान्यामरणानुशनेषु च " इति धरणिः ॥ * ॥ **दीपिका**–'शुक्लो रक्तस्तथा पीतः ' इति पूर्वोक्ताभिप्रायेण इंद्रनीलमणेर्भास्वररूपत्वात् गुप्तावतारसूचनं तथापि 'छन्नः कलौ' इति प्रह्लादोक्तेर्गोपनमेव युक्तमिति रहस्यत्वादित्यभिप्रेत्याह–यद्वेति । न केवलं वर्णतः कृष्णमपि तु कांत्यापि कृष्णवर्णावतारमित्यर्थः । अनेन श्लोकेन कृष्णावतारस्य प्राधान्यमित्युक्त्या 'द्वापरे भगवाञ्छ्यामः'इत्यत्र रूक्षश्यामवर्णः कश्चिच्छ्रीकृष्णादन्य एतावतार इति स्वाम्यभिप्रायः । गुप्ततया तु तदिष्टिरपि तत्र प्रथमं सूचितैव । व्यक्तगौरावतारपक्षस्तु संदर्भादौ दृश्यत इति ॥ * ॥ **संदर्भस्तु**–श्रीकृष्णावतारानंतरकलियुगावतारं पूर्ववदाह–कृष्णेति । त्विषा कांत्या योऽकृष्णो गौरस्तं सुमेधसो यजंति । गौरत्वं चास्य–"आसन्वर्णास्त्रयो ह्यस्य गृह्णतोनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः॥"इत्यत्र पारिशेष्यप्रमाणलब्धम्।इदानीमेतदवतारास्पदत्वेनाभिख्याते 'द्वापरे कृष्णतां गतः' इत्युक्तेः । शुक्लरक्तयोः सत्यत्रेतागतत्वेन दर्शितं पीतस्यातीतत्वं प्राचीनावतारापेक्षयात्र श्रीकृष्णस्य परिपूर्णरूपत्वेन वक्ष्यमाणत्वाद्युगावतारांतरत्वं तस्मिन्सर्वेप्यवतारा अंतर्भूता इति तत्तत्प्रयोजनं तास्मिन्नेकस्मिन्नेव सिध्यतीत्यपेक्षया तदेवं यद्वापरे कृष्णोवतरति तदेव कलौ श्रीगौरोप्यवतरतीति स्वारस्यलब्धेः श्रीकृष्णाविर्भावविशेष एवायं गौर इत्यायाति तदव्यभिचारात् तदेतदाविर्भावत्वं तस्य स्वयमेव विशेषणद्वारा व्यनक्ति । कृष्णवर्णं कृष्णेत्येतौ वर्णौ च यत्र यस्मिञ्श्रीकृष्णचैतन्यदेवनाम्नि कृष्णत्वाभिव्यंजकं कृष्णेति वर्णयुगलं प्रयुक्तमस्तीत्यर्थः । तृतीये श्रीमदुद्धववाक्ये–'समाहुताः' इत्यादिपद्ये श्रियः सवर्णेनेत्यत्र टीकायां श्रियो रुक्मिण्याः

**ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिंचिनुतं शरण्यम् ॥ भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वंदे महापुरुष ते चरणारविंदम् ॥ ३३ ॥**

सुदर्शनादीनि पार्षदाः सुनंदादयः तत्सहितम् । यज्ञैरर्चनैः । संकीर्तनं नामोच्चारणं स्तुतिश्च तत्प्रधानैः । सुमेधसो विवेकिनः ॥ ३२ ॥ स्तुतिमाह । ध्येयमिति । हे प्रणतपाल हे महापुरुष ते चरणारविंदं वंदे । कथंभूतम् । ध्येयं ध्यातुं योग्यम् । सदेति सर्वत्र संबध्यते । ध्येयत्वे हेतवः । इंद्रियकुटुंबादिभिर्यः परिभवस्तिरस्कारस्तं हंतीति तथा तत् । किंच अभीष्टदोहं मनोरथपूरकम् । किंच तीर्थास्पदं गंगाद्याश्रयत्वेन परमपावनम् । ननु शिवविरिंचिभ्यां नुतं स्तुतं महत्तमम् । ननु महत्तमौ तौ कृतार्थावेव

समानवर्णद्वयं वाचकं यस्य स श्रियः सवर्णो रुक्मीत्यपि दृश्यते । यद्वा—कृष्णं वर्णयति तादृशस्वपरमानंदविलासस्मरणोल्लासवशतया स्वयं गायति परमकारुणिकतया च सर्वेभ्योपि लोकेभ्यस्तमेवोपदिशति यस्तम् । अथवा—स्वयमकृष्णं गौरं त्विषा स्वशोभाविशेषेणैव कृष्णोपदेष्टारश्च यद्दर्शनेनैव सर्वेषां कृष्णः स्फुरतीत्यर्थः । किंवा—सर्वलोकद्रष्टारं कृष्णं गौरमपि भक्तविशेषदृष्टौ त्विषा प्रकाशविशेषेण कृष्णवर्णं तादृशश्यामसुन्दरमेव संतमित्यर्थः । तस्मात्तस्मिन् श्रीकृष्णरूपस्यैव प्रकाशात्तस्यैवाविर्भावविशेषः स इति भावः । तस्य भगवत्त्वमेव स्पष्टयति—सांगोपांगास्त्रपार्षदम्—अंगान्येव परममनोहरत्वादुपांगानि भूषणादीनि महाप्रभावत्वात्तान्येवास्त्राणि सर्वदेवैकांतवासित्वात्तान्येव पार्षदाः बहुभिर्महानुभावैरसकृदेव तथादृष्टोऽसाविति गौडवरेंद्रवंगोत्कलादिदेशीयानां महाप्रसिद्धेः । यद्वा—अत्यंतप्रेमास्पदत्वात्तत्तुल्या एव पार्षदाः श्रीमदद्वैताचार्यमहानुभावचरणप्रभृतयस्तैः सह वर्तमानमिति चार्थांतरेण व्यक्तं तदेवंभूतम् । कैर्यजन्ति—यज्ञैः पूजासंभारैः 'न यत्र यज्ञेशमखा महोत्सवाः' इत्युक्तेः । तत्र विशेषेण तमेवाभिधेयं व्यनक्ति—संकीर्तनं बहुभिर्मिलित्वा तद्गानसुखं श्रीकृष्णगानं तत्प्रधानैः । तथा संकीर्तनप्राधान्यस्य तदाश्रितेष्वेव दर्शनात्स एवात्राभिधेय इति स्पष्टम् । अत एव सहस्रनाम्नि तदवतारसूचकानि नामानि कथितानि—"सुवर्णवर्णो हेमांगो वरांगश्चन्दनांगदी । संन्यासकृच्छमः शांतः" इत्येतानि । दर्शितं चैतत्परमविद्वच्छिरोमणिना श्रीसार्वभौमभट्टाचार्येण—"कालान्नष्टं भक्तियोगं निजं यः प्रादुष्कर्तुं कृष्णचैतन्यनामा । आविर्भूतस्तस्य पादारविन्दे गाढंगाढं लीयतां चित्तभृंगः ॥" इति ॥ * ॥ **विश्वनाथस्तु—**कृष्णेति नानाकलियुगपक्षे कृष्णवर्णदेहं कृष्णत्वं व्यावर्तयति । त्विषेति तैः । एकतः कलियुगपक्षे कृष्णवर्णं किन्तु त्विषा बहिस्फुरन्त्या कान्त्याऽकृष्णं शुक्लरक्तश्यामानामुक्तत्वात्पारिशेष्येण पीतमंतःकृष्णं बहिर्गौरमित्यर्थः । यद्वा—कृष्णावतारलीलादिवर्णनात्कृष्णवर्णं सांगोपांगेत्यादिकमुभयपक्षेपि स्पष्टप्रच्छन्नत्वाभ्यां तुल्य एवेत्यर्थः । यज्ञैः परिचर्यामार्गैः संकीर्तनप्रधानैर्यै सुमेधसः "शुक्लो रक्तस्तथापीत इदानी कृष्णतां गतः" इति । 'छन्नः कलौ' इति कलावपि तथा श्रुण्वित्यादीनां तात्पर्यधारणावती येषां बुद्धिः शोभमाना भवेत्त एव नान्य इत्यर्थः ॥ ३२ ॥ सदा ध्येयं सदा परिभवघ्नं सदाभीष्टदोहमित्येवं सर्वत्र योज्यम् । कृष्णचरणाश्रितानाम् । 'यत्र न मृत्युहासः' इत्याद्युक्तेः कालकृतोपि परिभवो नास्ति कुत इंद्रियादिकृत इति । अन्यदाह—किंचेति । मनोरथपूरकत्वं त्वन्यदेवांघ्रीणामप्यस्ति न त्वयं तादृशः किंत्वधिक इत्याह—किंचेति, तीर्थेति । महत्तमं पूज्यतमम् । अत्राशंकते—नन्विति । इत्यर्थ इति—"आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥" इति न्यायेन कृतार्था अपि तन्निष्ठा भवन्त्येवेति भावः । स्तोतुमशक्यत्वमाक्षिपति—तर्हीति । प्राकृतस्य सामान्यनरस्य ॥ * ॥ **दीपिका**—तावपि शिवविरिंच्यावपि । आश्रययोग्यं कृतार्थयोरप्यत्यधिकसुखावाप्तिरेव नुतौ हेतुरित्यभिप्रेत्य सुखात्मकमित्यार्थिकोर्थः । 'तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्' इत्युक्तेः । यस्य कस्यापीत्यनेन वर्णाश्रमाचारादिनियमव्यावृत्तिः । आगंतुकार्तिर्ज्वरादिपीडा ॥ * ॥ **विश्वनाथस्तु—**अयमवतारः कलियुगवर्तिनो जनान्प्रायः कृष्णरामयोर्भजनमार्गमुपदिशत्यतस्तयोः स्तुतिनुती आह द्वाभ्याम् । ध्यातुमर्हं सदेति नात्र कालदेशनियम इति भावः । इंद्रियेत्यादि, तैरित्यनुसंहितं फलम् अभीष्टदोहमित्यनुसंहितम् । तीर्थास्पदमिति ध्यानमात्रेण गंगादिसर्वतीर्थस्नानसिद्धेः कलौ द्रव्यदेशक्रियादिजनितं दुर्वारमपावित्र्यं नाशंकनीयमिति भावः । तत्र सदाचारमाह—शिवविरिञ्चीति । सुखसेव्यत्वमाह—शरण्यमिति । भक्तवात्सल्यमाह—भृत्यार्तिहमिति । न च भृत्यानां परिचर्यादिकमप्यपेक्षत इत्याह—हे प्रणतपालेति । भृत्या

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ॥ मायामृगं दयितयेप्सितमन्वधावद्वंदे महापुरुष ते चरणारविंदम् ॥ ॥ ३४ ॥ एवं युगानुरूपाभ्यां भगवान्युगवर्तिभिः ॥ मनुजैरिज्यते राजञ्छ्रेयसामीश्वरो हरिः ॥३५॥ कलिं सभाजयंत्यार्या गुणज्ञाः सारभागिनः ॥ यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥

किमर्थं ताभ्यां नुतं तत्राह । शरण्यमाश्रययोग्यम् आत्मसुखात्मकमित्यर्थः । तर्हि ब्रह्मादिस्तुत्यं प्राकृतस्य कथं गोचरः स्यात् । न । भृत्यार्तिहं यस्य कस्यापि भृत्यमात्रस्यार्तिहंतृ । न केवलमागंतुकार्तिमात्रं हंति । किंतु भवाब्धिपोतं संसारार्णवतारकं च ॥३३॥ इदानीं स्वयमाप्तकामत्वान्नैरपेक्ष्यं भक्तार्थं च सापेक्षतां दर्शयन् श्रीरामचंद्रं स्तौति। त्यक्त्वेति । अन्यैः सुदुस्त्यजा या सुरेप्सिता राजलक्ष्मीस्तां त्यक्त्वा । यदिति य इत्यर्थः । योऽरण्यमगात् । किं राज्यवैकल्यदर्शनेन । न । धर्मिष्ठः । कुतः । आर्यस्य गुरोर्दशरथस्य वचसा । किंच एवं राज्यं त्यक्त्वाऽपि भक्तवात्सल्येन दयितया सीतयेप्सितं मायामृगं स्वर्णाकारं योऽन्वधावत् । तस्य भगवतश्चरणारविंदं वंदे । यद्वा हे धर्मिष्ठेति संबोधनम् । तथाऽप्यविवक्षितत्वादार्यपदेन संधिर्न भवति । तथा यदगादिति चरणारविंदमेवोच्यते । यन्मायामृगमन्वधावत्तत्ते चरणारविंदं वंद इत्यन्वयः । अन्यत्समानम् ॥ ३४ ॥ युगानुरूपाभ्याम् नामरूपाभ्याम् ॥ ३५ ॥ एतेषु चतुर्युगेषु कलिरेव श्रेष्ठ इत्याह । कलिमिति । गुणज्ञाः कलेर्गुणं जानंति ये ते । ननु दोषाणां

भिमानवन्तं प्रणतिमात्रेणैव पालयतीति भावः । भवाब्धिपोतमिति—"तत्पादपोतेन महत्कृतेन कुर्वंति गोवत्सपदं भवाब्धिम्" इति ब्रह्माद्युक्तेर्भवाब्धिः कदा निस्तीर्ण इत्यपि तद्भृत्यो न जानातीति भावः । श्लेषेण तस्याप्यवतारस्यानेनैव स्तुतिनुती । यथा—हे महापुरुष हे परमहंस महामुनींद्रशिवविरिंचिनुतमाचार्यहरिदासाभ्यां नुतम्, अन्यत्समानम् ॥ ३३ ॥ इत्यर्थ इति व्याख्येयम्, आर्षत्वादिति तात्पर्यम् । नेति पूर्वपक्षपरिहारे । धर्मिष्ठत्वे हेतुमाशंकते—कुत इति । राज्यत्यागेपि भक्तवात्सल्यात्त्यागं दर्शयति—किंचेति । यदित्यस्यार्षत्वकल्पनापेक्षया सरलपंथानमाह—यद्वेति । तथापि संबोधनेपि । अविवक्षितत्वात्प्लुतत्वात् ॥ * ॥ दीपिका—नैरपेक्ष्यं राज्यापेक्षारहितत्वं तेन सदाचारपालकत्वं लक्ष्यते पित्राज्ञापालनात् । भक्तार्थं च सापेक्षतामिति कारुण्यं लक्ष्यते । रामचंद्रं स्तौतीत्युक्तेपि वस्तुतः कृष्णावतारप्रसंगात्तत्रैव तात्पर्यावसानम् । सदाचारपालकत्वकारुण्ये तव नाधुनिके तवैव श्रीरामावतारे तथा दृष्टत्वादिति वचनभंग्या तथा प्रतिपत्तेः । राज्यवैकल्यं राज्यव्यभिचारं दृष्ट्वा किमरण्यमगान्नेति समाधानम् । पूर्वार्धे नपुंसकवत्पदस्याव्ययत्वमुपेत्य—य इति । पुंस्त्वपरिणामगौरवं मत्वाह—यद्वेति ॥ * ॥ विश्वनाथस्तु—श्लेषपक्षे—असुभ्यः प्राणेभ्योऽपि दुस्त्यजा च सुरैरपीप्सितं राज्यं स्वकांतेन विराजमानत्वं यस्याः सा च या लक्ष्मीस्तां त्यक्त्वा यद्योरण्यमगात् आर्यस्य विप्रस्य वचसा तव सर्वमपि गार्हस्थ्यसुखं ध्वस्तं भवत्विति यज्ञोपवीतत्रोटनपूर्वकं यच्छापवचस्तेन धर्मिष्ठो धर्मवतां मध्येतिशयेन श्रेष्ठः विप्रवाक्यं माऽन्यथा भवत्विति कृतशापस्वीकार इत्यर्थः । गत्वा किमकरोदित्यत आह—मायां कलत्रपुत्रवित्तादिकं मृग्यत्यन्वेष्यतीति मायामृगः संसाराविष्टो जनस्तमन्वधावत् । कीदृशं—दयातिशयेनास्तीति दयी तस्य भावो दयिता तया हेतुना ईप्सितं स्वाभीप्सितम्, आलिंगनमिषेण स्वस्पर्शं दत्त्वा संसाराब्धौ पतितं तं प्रेमाब्धौ पातयितुमिति निरुपाधिमहाकारुण्यं द्योतितम् ॥ ३४ ॥ युगानुवर्तिभिस्तत्तद्युगजातैः । एतत्तु सामान्यविधानं विशेषस्तु गुरूपदेशगम्यो विस्तरभियात्र नोक्तः, शास्त्रान्तरसिद्धत्वाद्वेति ॥ * ॥ श्रेयसां सर्वपुरुषार्थानामीश्वरो दाता । युगानुरूपाभ्यामिति—भागवतामृते—" कथ्यते नामवर्णाभ्यां शुक्लः सत्ययुगे हरिः । रक्तः श्यामः क्रमात्कृष्णस्त्रेतायां द्वापरे कलौ ॥" इति । अत्र सत्यत्रेताद्वापरेषु हंसः सुपर्णेति—विष्णुर्यज्ञेति—वासुदेवसंकर्षणेत्यादिकीर्तनीयभगवन्नामावली यथोक्ता तथा कलौ सा वर्तमानापि नोक्ता रहस्योद्घाटनाभावार्थमिति ज्ञेयम् ॥ ३६ ॥ कलेः प्राधान्यमाह—एतेष्विति । सत्यप्ये

न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ॥ यतो विंदेत परमां शांतिं नश्यति संसृतिः ॥ ३७ ॥
कृतादिषु प्रजा राजन्कलाविच्छंति संभवम्॥(यत्र संकीर्तनान्नृणां हरिर्दास्यत्यसंभवम् ) कलौ खलु भविष्यंति नारायणपरायणाः॥३८॥

**बहुत्वात्कथं सभाजयंति तत्राह । सारभागिनो गुणांशग्राहिणः । कोऽसौ गुणस्तमाह । यत्रेति । तदुक्तम् । "ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥" इति ॥ ३६ ॥ तस्मात्कलावतोऽस्मात्संकीर्तनात्परमो लाभो नास्ति । यतः संकीर्तनात् ॥ ३७ ॥ किंच कृतादिष्विति ॥ ३८ ॥**

कगुणे बहुदोषस्त्याज्य एवेति शंकते—नन्विति । सभाजयंति सत्कुर्वन्ति । प्रबलतरो गुणो बहून्दोषानाच्छादयति 'सव्यापसव्यकरन्यायेन' तदुक्तमभियुक्तैः—" गृह्णीते च रिपोः शिरः प्रथमतो गृह्णात्यसौ वाजिनं नीत्वा चर्मधनुः प्रयाति सततं संग्राममूमौ पुरः । द्यूतं चैव परस्त्रियं परधनं जानाति नायं करो दाता नैव च तन्निरीक्ष्य विधिना शौचाधिकारी कृतः ॥ " इति । गुणं पृच्छति—कोऽसाविति । तत्र प्रमाणमाह—तदुक्तमिति ॥ * ॥ संकीर्तनेनैव साधनांतरनिरपेक्षेण तेनेत्यर्थः । सर्वः कृतादिषु ध्यानादिसाधनसाहस्रैः साध्य इति **संदर्भः** ॥ * ॥ गुणज्ञाः कीर्तननामोच्चारणरूपं तद्गुणं जानते अत एव तद्ग्रहणात्सारभागिनः सारमात्रग्राहिणः गुणमेवाहुः—यत्र प्रचरितेन संकीर्तनेनैवेति पूर्ववत् । ननु कलेरपरदोषत्वात्कथं ते सारभागमेव गृह्णन्ति, सत्यम् , यथा—पारदोषवत्त्वं तथा पारगुणवत्त्वमपीत्याह—यत्रेति । " ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ " इति **विश्वनाथः** ॥ ३६ ॥ यतः कलिः कीर्तनात्परमेष्टदस्तस्माद्धेतोः । देहिनां देहाध्यासवताम् । परमां क्लेशबीजद्वैतशून्यां ज्ञानरूपाम्, ततश्च संसृत्यभावः ॥ * ॥ **दीपिका**—कीर्तनमाहात्म्यमाह—न ह्यत इति । तस्मात्कीर्तनस्य सर्वार्थोपलंभकत्वात्कलेः प्रसंगात्कलावित्यध्याहृतम् । परमां सर्वोत्कृष्टां शान्तिं भगवन्निष्ठां प्राप्नोति 'शमो मन्निष्ठता बुद्धेः' इति श्रीमुखोक्तेः । अनुषङ्गेण संसृतिश्च नश्यति इह श्रेयःप्राप्त्युपायेषु भ्राम्यतां भ्रमं प्राप्नुवतां शांतिं भक्तिं परमामिति विशेषणात् 'भक्तिस्सिद्धेर्गरीयसी' इति श्रीकापिलोक्तेः ॥ ३७ ॥ कलियुगस्याभीप्स्यतामाह—किंचेति । संभवं जन्म ॥ * ॥ **दीपिका**—किंचान्यदपि कलेर्वैशिष्ट्यमाह—कृतादिष्विति सार्द्धकम् । नारायणपरायणास्तदीयप्रेमातिशयवन्तः । क्वचित्क्वचिद्द्रौडादाविति श्रीकृष्णचैतन्याद्यवताराभिप्रायेण, द्रविडेषु च भूरिशस्तत्र 'वेदैश्च सर्वैरहमेव वेद्यः' इति भगवदुक्तिमाश्रित्य वैदिकास्तद्देशीया भूरिशो भक्ता भवंतीत्यर्थः । अथ कलेर्न नामसंकीर्तनगुणोत्कर्षप्रयोजकत्वं किंतु सर्वयुगेषु संकीर्तनस्य समानमेव सामर्थ्यम् , तथापि कृतादिषु सामर्थ्यादिसद्भावात्तत्संयोगेनान्यान्यपि साधनानि तद्रहस्यरक्षणाय ऋषिभिः स्मर्यंतेऽत्र त्वनायत्त्या स्वतंत्रमेव तदतिप्रशस्यते नारदादौ—"हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ " इति ॥ * ॥ अत्र **संदर्भः**—अत एव ध्यानादिनिष्ठा अपि कृतादिप्रजा एतादृशीं भगवन्निष्ठां न प्राप्तवत्यः " महाभागवता नित्यं कलौ कुर्वन्ति कीर्तनम् " इति स्कांदाद्यनुसारेण तादृशनिष्ठाकारणं कीर्तनमाहात्म्यं च दीनैकक्रुपातिशयशालिना भगवता तदानीं तत्तत्सामर्थ्यावसरे यस्मान्न प्रकाशितं तस्माद्ध्यानादिना समर्थास्ता जिह्वौष्ठस्पंदनमात्रस्य नातिसाधनत्वं भवेदिति मत्वा तन्न प्रतिशोधितवत्यश्च, ततः कलिप्रजानां परमभगवन्निष्ठतां श्रुत्वा तदर्थं कलावेव केवलं निजजन्म प्रार्थयन्ते इत्याह—कृतादिष्विति सार्द्धकेन । तत्र हेतुः—कलाविति । तद्भक्तीच्छायामपि तद्भक्तसंगं विना न संपाद्येतेति विभाव्येति भावः । तत्परायणत्वं तदीयप्रेमातिशयवत्वमेतदेव परमां शांतिमित्यनेन कार्यद्वारा व्यंजितम् 'मुक्तानामपि सिद्धानाम्' इत्यादेः । क्वचित्क्वचिद्द्रौडादाविति पूर्ववत् । अत्र कलिसंगेन कीर्तनस्य गुणोत्कर्ष इति न वाच्यं भक्तिमात्रे कालदेशादिनियमस्य निषिद्धत्वात् । विशेषतो नामोपलक्ष्य च विष्णुधर्मे क्षत्रबंधूपाख्याने—"न देशनियमस्तत्र न कालनियमस्तथा । नोच्छिष्टादौ निषेधश्च श्रीहरेर्नाम्नि लुब्धक ॥ " इति स्कांदे । पाद्मवैशाखमाहात्म्ये विष्णुधर्मे च—"चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत्" इति । स्कांद एव च—"न देशकालावस्थात्मशुद्ध्यादिकमपेक्षते । किंतु स्वतंत्रमेवैतन्नाम कामितकामदम् ॥" इति । न च कलावन्यसाधनासमर्थत्वादेव तेनाल्पे

भा. ए.

श्री. टी.

॥ ३८ ॥

क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ३९ ॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबंति जलं तासां मनुजा मनुजेश्वर ॥ प्रायो भक्ता भविष्यंति वासुदेवेऽमलाशयाः ॥ ४० ॥ देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतो मुकुंदं परिहृत्य कर्तम् ॥ ४१ ॥

॥ ३९ ॥ अमलाशयाः संतः प्रायः प्रायशो भगवति भक्ता भवंति ॥ ४० ॥ भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतामाह । देवर्षीति । आप्ताः पोष्याः कुटुंबिन इतरे दवोदयः पंचयज्ञदेवताः एतेषां यथाऽभक्तः ऋणी अत एव तेषां किंकरस्तदर्थं नित्यं पंचयज्ञादिकर्ता । तथाच स्मृतिः । "हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्" इति । अयं तु न तथा । कोऽसौ । यः सर्वभावेन श्रीमुकुंदं शरणं गतः । कर्तं कृत्यं परिहृत्य । यद्वा कर्तं भेदं परिहृत्य । कृती छेदन इत्यस्मात् । वासुदेवः सर्वमिति बुद्ध्येत्यर्थः ॥ ४१ ॥

नापि महत्फलं भवति न तु तस्य गरीयस्त्वेनेति मंतव्यम् । "यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसां ब्राह्मोपि लोकोल्पकः । मुक्तिं चेतसि यत्स्थितोऽमलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥" इति समाधिपर्यंतादपि तत्स्मरणात्कैमुत्येन कीर्तनस्यैव गरीयस्त्वं श्रीविष्णुपुराणे दर्शितम् । अत एवोक्तम्—'एतन्निर्विद्यमानानाम्' इत्यादि । तथा च—"अघच्छित्स्मरणं विष्णोर्बह्वायासेन साध्यते । ओष्ठस्पंदनमात्रेण कीर्तनं तु ततो वरम् ॥" इति । वैष्णवचिन्तामणौ—"येन जन्मशतैः पूर्वं वासुदेवः समर्चितः । तन्मुखे हरिनामानि सदा तिष्ठंति भारत ॥" अन्यत्र 'सर्वापराधकृदपि' इत्यादि नामापराधभजनस्तोत्रे च । तस्मात्सर्वत्रैव युगे श्रीमत्कीर्तनस्य समानमेव सामर्थ्यं कलौ तु श्रीभगवता कृपया तद्ग्राह्यत इत्यपेक्षयैव तत्र तत्प्रशंसेति स्थितिः । अत एव यद्यन्यापि भक्तिः कर्तव्या तदा तत्संयोगेनैवेत्युक्तम्—'यज्ञैः संकीर्तनप्रायैः' इति । अत्र च स्वतंत्रमेव नामकीर्तनमत्यंतप्रशस्तम् । "हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥" इत्यादौ साधूक्तम् । तस्मात् 'कलिं सभाजयंत्यार्याः' इत्यादित्रयम् ॥ * ॥ **विश्वनाथस्तु**—साधुसंगजनिता केवला भक्तिः कलावेव प्रायेण लभ्यत इत्याह—कृतादिष्विति । यत्र बहवो नारायणार्थिनस्तद्भक्तिमात्रार्थिनस्तत्रावश्यं तेषां संगमतो भक्तिस्ततः प्रेमभक्तिश्च संभवेदित्याकांक्षयेति भावः । चकाराद्गौडांध्रयोः ॥ ३८ ॥ क्वचित्क्वचिदिति पूर्वान्वयि । यत्र द्राविडेषु ॥ * ॥ ० ॥ ३९ ॥ प्रतीची महानदी नाम्ना वेत्रवती वराहक्षेत्रात्सह्यगिरिं भित्त्वा पश्चिमसमुद्रं स्यंदमाना ॥ * ॥ **संदर्भस्तु**—प्राय इति । तेषु भक्तेष्वपराधिनो विनेत्यर्थः ॥ ४० ॥ पोष्याः पोषितुं योग्याः । इतरे पोष्येतरे । देवा ऋषयो भूता नरः पितरश्च येषां पञ्चयज्ञदेवानाम् । अत एव वर्णित्वादेव । ऋणिनः कर्मकरणे प्रमाणमाह—तथा चेति । हीनजातिमुत्तमर्णजातेरधमर्णं निकृष्टजातिं परिक्षीणं निर्धनमृणपूर्त्यर्थं कर्म तदुचितक्रियां कारयेदिति याज्ञवल्क्यः । क्रियत इति कर्तम्, करोतेरौणादिकस्तप् । औणादिकत्वकल्पनाया अगतिकगतित्वादाह—यद्वेति । इत्यर्थ इति—सकलमिदमहं च वासुदेव इति भावनया सर्वत्रैकबुद्धित्वेन तं देवादयोपि पूजयंति "सर्वे देवा यं नमंति" इत्यादिश्रुतेरिति भावः ॥ * ॥ इतरे पोष्यव्यतिरिक्ताः । पञ्चयज्ञाश्च—"पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पंच महायज्ञा ब्रह्मयज्ञादिसंज्ञकाः ॥" इत्युक्ताः । अत एव ऋणित्वादेव । तेषां देवादीनाम् । तदर्थमृणापाकरणार्थम् । तथा च—कर्मानुष्ठानेन ऋणक्षये प्रमाणं स्मृतिः—हानजातिः हीना उत्तमर्णसकाशान्निकृष्टा जातिर्यस्य तं परिक्षीणं दातुमसमर्थं ऋणार्थमृणनिवृत्त्यर्थं कर्मैव कारयेदिति । मशकार्थो धूम इतिवदर्थशब्दो निवृत्तिपरोऽत्र । अयं वक्ष्यमाणस्तु न तथा न ऋणी । कर्तृशब्दस्य कृत्यवाचकत्वमयुक्तमतो—यद्वेति । भेदं मुकुंदाद्देवतादीनां स्वातंत्र्यं परिहृत्य त्यक्त्वा । इत्थमुक्तं गारुडे—"अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः । इत्याख्या जायते तावद्यावन्नार्चयते हरिम् ॥" इति । अत एव 'वासुदेवः सर्वम्' इति बुद्ध्येत्यर्थ इत्युक्तम् । तथैवोक्तं श्रीमदर्जुनेन—'सर्वं समाप्नोषि ततोसि सर्वः' इति । तथा च—सर्वस्य तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वात्तदभेदानिर्देशः । यथा—प्राणायत्तवृत्तिकत्वेनेंद्रियाणामपि प्राणत्व

भा. दी. प्र.

टीका.

अ० ५

॥ ३८ ॥

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ॥ विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि सन्निविष्टः ॥ ४२ ॥ नारद उवाच ॥
धर्मान्भागवतानित्थं श्रुत्वाथ मिथिलेश्वरः ॥ जायंतेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४३ ॥

विहितकर्मनिवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह । स्वपादमूलमिति । त्यक्तोऽन्यस्मिन्देहादौ देवतांतरे वा भावो येन । अत एव तस्य विकर्मणि प्रवृत्तिर्न संभवति । यच्च कथंचित्प्रमादादिना विकर्म उत्पतितं प्राप्तं भवेत्तदपि हरिर्धुनोति । ननु यमस्तन्न मन्येत तत्राह । परेशः । ननु 'श्रुतिस्मृती ममैवाज्ञे' इति भगवद्वचनात्स्वाज्ञाभंगं कथं सहेत तत्राह । प्रियस्य । ननु नायं पापक्षयार्थं भजते तत्राह । हृदि सन्निविष्टः । न हि वस्तुशक्तिरर्थितामपेक्षत इत्यर्थः ॥ ४२ ॥ जायंतेयान् जयंत्याः पुत्रान् ॥ ४३ ॥

निर्देशः । तथा च छांदोग्ये पठ्यते—"न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणो ह्येतानि सर्वाणि भवंति" इति । यत्तु कैश्चिद्बाधितसामानाधिकरण्यं स्वीकृतं तच्छरणं गत इति भक्तिप्रकरणानुपयोगित्वात्, क्षोदासहत्वाच्च त्यक्तम् । विश्वस्य मिथ्यात्वे हि तत्संगच्छते, तदेव तु न संभवति "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः ॥ सत्याद्भूतानि जातानि सत्यं भूतमयं जगत् ।" इति । "तत्सत्यतामाचक्षते" इति । "नित्यो नित्यानां चेतनश्चेतनानाम्" इति । "सत्यस्य सत्यम्" इति च । विष्णुपुराणभारतादिस्मृश्रुतिभिः कंठोक्त्या तत्सत्यत्वप्रतिपादनात्क्वचित्तथा वर्णनं तु ज्ञानप्रकरणे युक्तमेव वैराग्यार्थत्वादिति सुधीभिर्विभावनीयम् ॥ * ॥ **संदर्भस्तु**—तेषां न किंकरः किंतु भगवत एवेत्यनधिकारित्वं कर्त्तं भेदमित्यर्थे । ततो देवतादीनां स्वातंत्र्यमिति यावत् । तदुक्तं गारुड इति पूर्ववत् । भक्तस्य नित्यनैमित्तिकश्राद्धतर्पणादिकर्मयंत्रणाराहित्यमाह—देवर्षीति । देवादयः पंचयज्ञदेवताः, नरः पोष्याः पितृमातृभार्यादयः, एतेषां कर्मी यथा ऋणी अत एव तेषामिति तैः । यद्वा—पृथिवीपतिना स्वकिंकरत्वेन गृहीतस्य जनस्य मंडलेश्वराद्यनुवृत्तिर्न संभवेत् । कृत्यं वर्णाश्रमविहितं कर्म । 'यथा तरोर्मूलनिषेचनेन' इत्यादिन्यायेन विष्णुपूजने संवृत्ते देवर्ष्यादयः साधु पूजिता एवेति । अत एव—"मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति वदता भगवता स्वभक्तस्य कर्माधिकारो दूरीकृतः ॥ ४१ ॥ आदिना स्त्रीपुत्रादिग्रहः । अन्यशब्दस्य जन्मांतरवाचित्वमादायाह—देहांतरे जन्मांतरे वेति । भावः प्रेमा । अत एवैहिकामुष्मिकत्यागित्वादेव । विकर्मणि निषिद्धहिंसाकर्मणि । कथंचिद्बलवददृष्टवशात् । यच्च विकर्म । आदिना पारवश्यादिग्रहः । अत्राक्षिपति—नन्विति । परेशः यमादिनियंता । पुनराक्षिपति—नन्विति । प्रियस्यापराधोपि क्षम्यत एवेत्यर्थः । प्रियेणाप्यनिवेदितं कथं क्षमेतेति शंकते—नन्विति । इत्यर्थ इति—न हि दाहेऽग्निः प्रार्थनमपेक्षत इति भावः ॥ * ॥ **दीपिका**—अत एवानन्यभावत्वादेव । तस्यानन्यशरणस्य । कथंचिदित्यस्याभिप्रायः—विकर्मणीत्यादि । प्रमादोऽनवधानता । आदिना उत्कंठाभक्तिवार्धिष्णोर्विष्णोरिच्छा गृह्यते । यथा चित्रकेतौ । तत् हरिकर्तृकं विकर्मधूननम् । परेशः परेषां ब्रह्मादीनामपीशो नियंता, तदाज्ञामनने यमस्य का शक्तिरिति भावः । "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लंघ्य वर्तते । आज्ञाछेदी मम द्वेषी मद्भक्तोपि न वैष्णवः ॥" इति सकलं वाक्यं गम्यम् । अयं भक्तः । आर्थितां पापक्षयार्थित्वम् ॥ * ॥ **संदर्भः**—विकर्म प्रायश्चित्तरूपं कर्मांतरं न च कर्तव्यं तस्य तच्छ्रवणस्य विकर्मप्रवृत्त्यभावात् । कथं चिदापतितेपि विकर्मणि तदनुस्मरणेनैव प्रायश्चित्तस्याप्यानुषंगिकत्वसिद्धेरित्याह—स्वपादमूलेति । हृदि सन्निविष्टत्वे हेतुः—त्यक्तान्यभावस्य, त्यक्तोऽन्यत्र देवतान्तरे भगवतीव भावो भक्तिर्येन । विकर्मधूनने हेतुः—हरिः स्वभावत एव सर्वदोषहरः । परेशः शक्तितश्चेत्यर्थः । तत्रापि प्रियस्येत्याग्रहतश्चेत्यर्थः ॥ ४२ ॥ स निमिः ॥ * ॥ प्रीतः अनन्यशरणस्य माहात्म्यश्रुत्या हृष्टः । सोपाध्याय इति—तत्संगिनामपि कृतार्थत्वोक्त्या साधुसंगमातिशयो व्यंजितः ।

ततोंतर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ॥ राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४४ ॥ त्वमप्येतान्महाभाग धर्मान्भागवताञ्छुतान् ॥ आस्थितः श्रद्धया युक्तो निःसंगो यास्यसे परम् ॥ ४५ ॥ युवयोः खलु दंपत्योर्यशसा पूरितं जगत् ॥ पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ॥४६॥ दर्शनालिंगनालापैः शयनासनभोजनैः ॥ आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥ ४७ ॥ वैरेण यं नृपतयः शिशुपालपौंड्रशाल्वादयो गति विलासविलोकनाद्यैः ॥ ध्यायंत आकृतधिय । शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥ ४८ ॥

उपातिष्ठन्ननुतिष्ठन् ॥ ४४ ॥ निःसंगो भूत्वा ॥ ४५ ॥ शास्त्रप्रक्रियेयमुक्ता युवां तु संगत एव कृतार्थावित्याह युवयोरिति । वां युवयोः ॥ ४६ ॥ न च सर्वकर्मार्पणा दिभागवतधर्मैरन्येषामिव युवयोः सत्त्वशुद्धिरापादनीया पुत्रोपलालनेनैव भागवतधर्मसर्वस्वनिष्पत्तेरित्याह । दर्शनेति । कृष्णे पुत्र इति स्नेहं प्रकुर्वतोर्वां युवयोः तस्य दर्शनादि भिरात्मा पावितः शोधितः॥ ४७॥एतदेव कैमुत्यन्यायेन स्फुटयति । वैरेणेति । यं शयनासनादौ वैरेणापि ध्यायन्तस्तस्य गतिविलासाद्यैराकृतधियस्तत्तदाकारा धीर्येषां ते तत्सारू

अपूजयदिति—वैष्णवानां विष्णुवत्पूजनमभिप्रेतं न तु सत्कृतिमात्रम् “ अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु यः । न स भागवतो ज्ञेयः केवलं दांभिको मतः ॥ ” इत्युक्तेः ॥ ४३ ॥ ततः पूजनानन्तरम् । राजा निमिः ॥ * ॥ ततः पूजनानन्तरम् । धर्मान्श्रवणकीर्तनादीन्भागवतधर्मान् । परमां गतिं वैकुंठम् ॥ ४४ ॥ परं मोक्षम् ॥ * ॥ एवं तत्प्रश्नानुरूपमन्याहितान्भाग वतधर्मानुक्त्वा तदीयस्वप्रयोजनांतरमाह—त्वमपि परं यास्यसे काका त्वं तु न इत्यर्थः । सर्वतः परस्य कृष्णस्य नित्यप्राप्तत्वादिति भाव इति **संदर्भः** ॥ * ॥ **विश्वनाथोपि**—नित्यसिद्धभगवत्पितृभावस्यापि भगवत इव नित्यमूर्तेरपि भगवदिच्छयैव भक्तिरसोत्कंठा निमग्नस्य स्वस्मिन्प्राकृतनरत्वाभिमानमालक्ष्य तं प्राकृतनरमिवोपदिदेश । भाग्यश्लाघादिभिरानंदयति—त्वमिति षड्भिः । परं परमेश्वरं प्राप्स्यसि ॥ ४५ ॥ युवयोर्देवकीवसुदेवयोः ॥ * ॥ पुत्रतामगमदिति प्रकटलीला भिप्रायेण, नित्यलीलायाम् ‘ जयति जयनिवासः ’ इत्याद्यनुसारेण नित्यपुत्रत्वात् ॥ ४६ ॥ वां युवाभ्यामित्यर्थः । तृतीयार्थे षष्ठी । यद्वा—दर्शनादिभिः कर्तृभिर्युवयोरात्मा पावित इति ॥ * ॥ ननु परमेश्वरे पुत्रबु द्धिरेवानर्थकारिण्यावयोरपराधोत्पादनादिति चेन्मैवम्, प्रातिकूल्यभावेनापि कृष्णोर्पितमनसः कृतार्था भवंति किं पुनरानुकूल्यभावेन युष्मदादय इत्याह—वैरेणेति । गतिविलासाद्यैर्या आकृतिः कृष्णस्याकारस्तन्मात्र एव न तु तन्माधुर्ये धीर्येषां ते । स्वीयशयनादिकर्मणि ध्यायन्तः सन्तः साम्यं सारूप्यं सायुज्यं किं पुनस्तत् तेभ्योऽप्यधिकं प्राप्यं स्यादपराधस्य संभावनैव नास्तीति भाव इति **विश्वनाथः** ॥ * ॥ **संदर्भस्तु**—तथापि जयविजयवद्ब्राह्मणापराधाद्बिभेमि, तत्राह—दर्शनेति । पावितः दोषाभासादपि दूरे रक्षितः, तत्र हेतुः—कृष्ण इति । तत्रापि ‘ पुत्रस्नेहं प्रकुर्वतोः ’ इति ताभ्यां युवयोर्महदंतरमिति भावः । तथैव टीकाकृतामिष्टिः । न चेत्यादि भागवतधर्माणां यत्सर्वस्वं सारभागो वात्सल्यमिति यावत्, तस्य निष्पत्तेर्नित्यासिद्धेः शोधितः ब्राह्मणाद्यपराधाभासादपि दूरे रक्षितः । इत्युक्त्या भाविष्यत्तदपराधस्य च तत्कार्यस्य च मायिकलीलामयत्वं व्यंजितम् ॥ ४७ ॥ मुक्तेरंतरंगसाधनं भक्तिरेवेति दर्शयितुं वैरप्रधानभक्तानामपि सायुज्यं भवति किमुत नित्यानुरक्तबुद्धीनामिति कैमुत्यन्यायेन व्यंजितम् । यं कृष्णम् । तस्य कृष्णस्य । आहृता तत्तदाकारा धीर्येषां ते तथा । तीर्थस्त्वाकृतधिय इति पपाठ ॥ * ॥ एतदेव कृतार्थत्वमेव । तत्साम्यं सच्चिदानंदरूपत्वं भवति नित्यमेवास्तीति मोक्षेपि साम्योक्त्या ऐक्यमनादृतम् “ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेपि नोपजायंते प्रलये न व्यथंति च ॥ ” इति श्रीगीतोक्तेः । “ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम ” “ निरंजनः परमं साम्यमुपैति ” इति मोक्षेति भेदप्रति पादकश्रुतेश्चेइति **दीपिका** ॥ * ॥ **संदर्भस्तु**—आस्तां युवयोर्वार्ता श्रीकृष्णस्य सर्वोत्कृष्टभगवत्स्वभावत्वात्साधारणानुरक्तजनानामपि सुतरां तत्तुल्या गतिः किं पुनर्यदूनामिति तान्प्रति शोचन्तं कैमुत्येनाह—वैरेणेति ॥ ४८ ॥

मापत्यबुद्धिमकृथाः कृष्णेऽसर्वात्मनीश्वरे ॥ मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥४९॥ भूभारासुरराजन्यहंतवे गुप्तये सताम् ॥ अवतीर्णस्य निर्वृत्यै यशो लोके वितन्यते ॥ ५० ॥ श्रीशुक उवाच ॥ एतच्छ्रुत्वा महाभागो वसुदेवोतिविस्मितः ॥ देवकी च महाभागा जहतुर्मोहमात्मनः ॥ ५१ ॥ इतिहासमिमं पुण्यं धारयेद्यः समाहितः ॥ स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५२ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे वसुदेवनारदसंवादे जायंतेयगमनं नाम पंचमोऽध्यायः॥५॥ श्रीशुक उवाच ॥ अथ ब्रह्मात्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ॥ भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः॥१॥

प्यमापुः । किं पुनर्वक्तव्यमनुरक्तधियां तत्साम्यं भवतीति ॥ ४८ ॥ ननु पुत्रस्नेहश्चेन्मोक्षहेतुस्तर्हि मुच्येरंस्तत्राह । माऽपत्यबुद्धिमिति । अपत्यमिति बुद्धिं मा कृथाः । अद्यागमश्छांदसः ॥ ४९ ॥ ननु कथमीश्वरो मानुषः स्यात्कथं वा तस्य विश्वसृष्ट्यादिकर्तुः पूतनाशोषणादि कर्माश्चर्यमिव निरूप्यते तत्राह । भूभाररूपा असुरा एव राजन्यास्तेषां हंतवे तान्हंतुम् । निर्वृत्यै मोक्षाय ॥ ५० ॥ ५१ ॥ इहास्मिन्नेव देहे शमलं मोहं विधूय ब्रह्मभूयाय ब्रह्मत्वाय कल्पते ॥ ५२ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां पंचमोऽध्यायः ॥ ५ ॥ षष्ठे ब्रह्मादिभिः स्तुत्वा गंतुं विज्ञापितं हरिम् ॥ उद्धवः प्रार्थयामास स्वधाम नय मामिति ॥ १ ॥ अतः परमतिविस्तरेणात्म

अत्राक्षिपति—नन्विति । सर्वेश्वरबुद्धिं कुर्वीति भावः ॥ * ॥ **दीपिका**—अपत्यबुद्धिं पुत्रसामान्यमतिं मा कुरु । मायेति—कृपाप्रधानमनुष्यलीलाप्रकटनेन । गूढं दुर्विज्ञेयमैश्वर्यं यस्य तस्मिन् ॥ * ॥ **संदर्भस्तु**—यतः कृष्णे ‘ कृषिर्भूवाचकः ’ इत्यादिलक्षणे अत एव सर्वात्मनि सर्वात्रतारिणि । अत एवेश्वरे सर्वकर्तरि, वशीकर्तरि । अत एव परे तथापि मायेति पूर्ववत् । यद्वा—‘ पुत्रस्नेहं प्रकुर्वतोः ’ इति कथं पुत्रोचितः स्नेहस्तस्मिञ्श्लाघितस्तत्राह—मेति । अपत्यबुद्धिं मा अकृथाः किंतु कुरुष्वैवेत्यर्थः । तत्र हेतुः—कृष्ण इति ॥ * ॥ **विश्वनाथस्तु**—तस्मात्त्वयानुरक्तधियैव भाव्यं न तूदासितव्यमित्याह—मेति । सर्वात्मनीश्वरे मदपत्यत्वमारोपितमेव न वस्तुत इत्यसंभावनया कृष्णे या अपत्यवदेव बुद्धिस्तां मा कृथा मदपत्यमेवायमिति कृष्णे पुत्रभावं कुर्वीति भावः । ननु मनुष्यस्य मम कथं परमेश्वरः पुत्रः स्यात्तत्राह—मायेति । त्वदपत्यत्वप्राप्त्यर्थं मायया मनुष्यत्वेन गूढं गुप्तीकृतमैश्वर्यं येन तस्मिन् । अतो मनुष्यस्य तव मनुष्यः कृष्णः पुत्रो भवेदेवेति भावः । परेऽव्यय इति—तदपि तस्य श्रेष्ठत्वमैश्वर्यव्ययराहित्यञ्च भवेदेवेति भावः । अत्र वसुदेवप्रयोजनार्थमेव मायाशब्दः प्रयुक्तः वस्तुतस्तु कृष्णो मनुष्यस्वरूपेणैव, तदापि मायाशब्दः स्वरूपवाची ॥ ४९ ॥ पुनराक्षिपति—नन्विति । तत्र श्रीकृष्णे । हंतवे तुमर्थे तुरार्षः ॥ * ॥ **दीपिका**—अवतीर्णस्य प्रपंचगोलोकादिति शेषः । तथा चाप्रसिद्धनराकृति ब्रह्मत्वं न तु पार्थिवमनुष्यत्वमिति भावः ॥ ५० ॥ एतन्नारदोक्तम् । आत्मसंबंध्यज्ञानं तत्यजतुः ॥ * ॥ एतद्भक्तिपंचाध्यायीवर्णितम् । मोहं प्रकटलीलावेशेन प्राकृतापत्यमतिं ब्रह्मशापभयञ्च ॥ ५१ ॥ कल्पते योग्यो भवति, जीवन्मुक्तः स्यादित्यर्थः ॥ * ॥ कल्पते योग्यो भवति ॥ ५२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ आदिना रुद्रा दिग्रहः । स्वधाम वैकुंठम् ( १ ) । अतः पंचाध्यायीतः । तत्प्रस्तावमात्मविद्याप्रसंगम् । अथ वसुदेवात्मविद्योपदेशोत्तरम् । आत्मजैर्मनसो जातैः । भूतशब्दोपलक्षिताः पिशाचादयस्तेषां भव्यं कल्याणं तस्येशो दाता । तदेवाह—भूतगणैरिति ॥ * ॥ **दीपिका**—मां स्वधाम वैकुंठं नयेति प्रार्थयामास । अतः पञ्चाध्यायीतः । आत्मविद्यां परमात्मज्ञानम् । तत्प्रस्तावमात्मविद्याप्रसंगम् । अथ नारदोपदेशानन्तरम् । तदेव विवृणोति—तत्रेन्द्र इति सार्धयुग्मकम् ॥१॥

इंद्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ ॥ ऋभवोंगिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ २ ॥ गंधर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ॥ ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ ३ ॥ द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः ॥ वपुषा येन भगवान्नरलोकमनोरमः ॥ यशो वितेने लोकेषु सर्वलोकमलापहम् ॥ ४ ॥ तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः ॥ व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥ ५ ॥ स्वर्गोद्यानोपगैर्माल्यैश्छादयंतो यदूत्तमम् ॥ गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥ देवा ऊचुः ॥ नताः स्म ते नाथ पदारविंदं बुद्धींद्रियप्राणमनोवचोभिः ॥ यच्चिंत्यतेंतर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥ ७ ॥ त्वं मायया त्रिगुणयात्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुंपासि तद्गुणस्थः ॥ नैतैर्भवानजित कर्मभिरज्यते वै यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥ ८ ॥

विधां निरूपयितुं तत्प्रस्तावमाह । अथेति । आत्मजैः सनकादिभिः । अभ्यगात् द्वारकामिति चतुर्थेनान्वयः ॥ १ ॥ २ ॥ ३ ॥ ननु तेषामुपेंद्रादिरूपं भगवंतं नित्यं पश्यतां केयमतिदिदृक्षा अत आह । वपुषेति । येन वपुषा नरलोकमनोरमः सन्सर्वलोकेषु यशो वितेने तदतिसुंदरं वपुर्दिदृक्षवः ॥ ४ ॥ व्यचक्षतापश्यन् ॥ ५ ॥ स्वर्गोद्यानस्थैर्माल्यैः चित्राणि शृंखलाबंधप्रायाणि पदान्यर्थाश्च यासु ताभिर्गीर्भिः ॥ ६ ॥ बुद्धींद्रियादिभिर्दर्शनादिना प्राणेन च बलहेतुना दंडवत्प्रणिपातेन वयं नता नमस्कृतवंतः । स्मेति विस्मये । यथाहुः । "दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा ॥ मनसा वचसा चेति प्रणामोऽष्टांग ईरितः॥" इति । स्मशब्दोक्तविस्मयाय विशेषणम् । कर्ममयादुरुपाशान्मुमुक्षुभिर्भावयुक्तैरपि यत्केवलमंतर्हृदि चिंत्यते न तु दृश्यते तद्वयं नताः अहो भाग्यमित्यर्थः ॥ ७ ॥ ननु ममापि दृष्टादृष्टकर्मकरणात्कुतो मत्पदारविंदचिं

॥ ० ॥ * ॥० ॥ २ ॥०॥ * ॥ ० ॥ ३ ॥ देवानामागमनमाक्षिपति—नन्विति । तेषामिंद्रादीनाम् ॥ * ॥ कृष्णेति लुप्तद्वितीयान्तं पृथक्पदम् "सुपां सुलुक्—" इति स्मृतेः । अत एव वपुर्दिदृक्षव इत्यग्रे योजयिष्यति ॥ * ॥ **विश्वनाथस्तु**—येन वपुषा नरलोकमनोरमस्तत् । कृष्णं दिदृक्षव इत्यभेदोक्त्या वपुषः सकाशाज्जीवस्य यथा भेदस्तथा नेश्वरस्येति ज्ञापितम्।तदुक्तम्—"देहदेहिविभागोयं नेश्वरे विद्यते क्वचित्" इति । येन कृष्णाख्येन । अंतर्भूतोपेंद्रादिरूपेण ॥४॥ तस्यां द्वारवत्याम् । महार्द्धिभिर्दिव्यर्द्धिभिः ॥*॥ अद्भुतं दर्शनं दृश्यत इति दर्शनं श्रीविग्रहो यस्य तम् । 'विस्मापनं स्वस्य च' इत्युक्तेः॥५॥शृंखलाबंधप्रायाणि शृंखलाबंधवदन्योन्यसंग्रथितपदार्थानि न तु शृंखलाबंधा एवोक्ततल्लक्षणस्यात्राघटनादिति । "अन्योन्याक्षरवर्तिन्या एकांतारितयाथवा । शृंखलाबंध इत्युक्तः" इति तल्लक्षणात् ॥ * ॥ शृखलाबंधा ह्येकं चित्रकाव्यं चकाराद्वर्णाश्च ग्राह्यास्तदत्र पूर्वपूर्वपद्यचरमस्थवर्णपदतदर्थैरुत्तरोत्तरादिमवर्णपदपदार्थानां सादृश्येन शृंखलाबंधो विवेचनीयः॥६॥ बुद्ध्यादिभिर्नत्या साष्टांगनतिरुच्यते।। अत्र प्रमाणम्—यथाहुरिति । दोर्भ्यां भुजाभ्याम् । इत्यर्थ इति—अहो अलभ्यलाभातिरस्माकमिति भावः॥*॥ अस्मिन्पद्येंतिमवर्णस्य तकारस्योत्तरपद्याद्यतकारेण शृंखलाबंधः । न च तत्र त्वंकारो न तकार इति वाच्यम् 'काव्यमार्गे स्वरो न गम्यते' इति न्यायात्संयुक्तवकारानुस्वारयोरविवक्षितत्वादिति । एवं परत्रापि ज्ञेयम् ॥ ७ ॥ अहमपि भवत्सदृश एव किं मच्चिंतयेत्याक्षिपति भगवान्—नन्विति । इदानींतनमाधुनिकम् । अलेपे हेतुमाशंक्य समाधत्ते—कुत इत्यादिना । इति भाव इति—"न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति" इति पुष्पदंतोक्तेस्तव बंधाभावात्परमेश्वरत्वेन सेव्यत्वमेवेत्याशयः ॥ * ॥ **दीपिका**—दृष्टमैहिकं पुत्रपौत्रादिविवाहरूपं कर्म, अदृष्टं पारलौकिकं यज्ञादि कर्म, तयोः करणात्: मत्कर्तृकानुष्ठानात् दृष्टादृष्टकर्तृभ्यो जीवेभ्यो मम विशेषाभावात्

शुद्धिर्नृणां न तु तथेडच दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः॥सत्त्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात्॥९॥
स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः॥ यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥१०॥

तन्नं कर्मपाशान्मुमुक्षुभिः क्रियते तत्राहुः । त्वमिति । हे अजित । आस्तामिदानींतनमिदमत्यल्पं कर्म त्वं व्यक्तं महदादिप्रपंचं सृजसि पालयासि संहरसि च तदप्यात्मन्येव न पृथक् । दुर्विभाव्यं मनसाऽप्यन्यैरवितर्क्यम् । तद्गुणस्थस्तस्या मायाया गुणेषु नियंतृत्वेन स्थितः । अत एव तैः कर्मभिर्भवान्नाज्यते न लिप्यते । कुतः । यो भवाननवद्यो रागादिरहितः । यतः स्वे आत्मरूपे सुखे अव्यवहितेनावृते अभिरतः अतस्त्वं कर्म कुर्वन्नप्यात्मारामः परमेश्वर इति मुमुक्षुभिश्चिंत्यस इति भावः ॥ ८ ॥ नन्वात्मारामस्य किं कर्मकरणेनात आहुः । शुद्धिरिति । हे ईडच हे ऋषभ । दुराशयानां रागिणां विद्या उपासना । विद्यादिभिस्तथा शुद्धिर्न भवति । सत्त्वात्मनां सतां ते यशसि श्रवणेन संभृतया परिपुष्टयाऽभिवृद्धया सच्छ्रद्धया यथा स्यात् । परमपावनस्य यशसो वितानाय तव कर्माचरणमिति भावः ॥ ९ ॥ तदेवं त्वद्यशसि श्रद्धैव शुद्धिहेतुरस्माभिस्तु तवांघ्रिर्दृष्टोऽतस्तवांघ्रिर्नोऽस्माकमशुभाशयानां विषयवासनानां धूमकेतुस्तद्दाहकः स्यात् । कथंभूतः । यः क्षेमाय मोक्षाय मुनिभिर्मुमुक्षुभिः प्रेमार्द्रहृदा ऊह्यमानश्चिंत्यमानः । यश्च सात्वतैर्भक्तैः समविभूतये समानैश्वर्याय वासुदेवादिव्यूहेऽर्चितः । तेषु च कैश्चिदात्मवद्भिर्जितात्मभिर्धीरैः स्वरतिक्रमाय स्वर्गमतिक्रम्य वैकुंठप्राप्तये

कुतो ममेत्यादि योजनीयम् । इदानींतनावतारकालीनमिदं मानुष्यनाट्यानुरूपं दृष्टादृष्टकर्मास्ताम् । तदपि सृष्ट्यादिकमपि आत्मनि स्वरूपभूताधिष्ठाने एव न पृथगिति कुलालादिवदिति अभिन्ननिमित्तोपादानत्वमभ्युपगतं, तत्र विवर्ताधिष्ठानत्वेनोपादानत्वमिति भगवाञ्छंकरः स्वरूपशक्तिविशतया निमित्तत्वं प्रधानशक्तिविशतयोपादानत्वमिति तत्त्ववादिगुरवः । आत्मन्येव न तु पृथगिति स्वामिव्याख्यानं सर्वानुकूलमिति । एतैः सृष्ट्यादिकर्मभिः । रागादिदोषरहित इदं मया सम्यक्कृतमिदमसम्यागिति कर्तृत्वाभिनिवेशशून्य इत्यर्थः । आत्मरूपे स्वस्वरूपभूते । सुखे उपाध्यावरणरहिते । अतः सृष्ट्यादिमहत्कर्मभिरलिप्तत्वादिति हेतोः । भावः वाच्योत्थो व्यंग्यः ॥ ८ ॥ परमेशस्य कर्मकरणं नोचितमित्याशंकते–नन्विति । सत्त्वात्मनां सत्त्वगुणधर्मनिष्ठानाम् । इति भाव इति–अतीवकारुणिकत्वेन लोकपावनार्थं कर्म करोति भवानित्याशयः ॥ * ॥ अनवद्यः शुद्ध इत्यत्र प्रकृतार्थमादाय शृंखलाबंधः । शुद्धिरिति–उपासना खंब्रह्मोपासना न तु भक्तिरुत्तरार्द्धे तस्यास्तदादेरुत्कर्षयिष्यमाणत्वात् । सती चासौ श्रद्धा चेति तया । सती: निर्गुणा । आभासोक्तशंकासमाधानाय भावार्थमाह–परमपावनायेति । तथा च भक्तसुखार्थमेव तव लीलेति फलितम् । "मद्भक्तानां विनोदाय करोमि विविधाः क्रियाः" इति भगवदुक्तेरेवेति ॥ * ॥ **संदर्भस्तु**–विद्यादिसद्भावेपि दुराशयानां शुद्धभक्तिश्रद्धाया अभावात् विद्याद्यसद्भावेपि सत्त्वात्मनामिति तद्भावात् । तदेवं शृण्वतामपि तथात्वे किमुत पश्यतामिति भक्तसुखार्थमेव तल्लीलेति भावः ॥ * ॥ **विश्वनाथस्तु**–यथा त्वच्चरणमेव नमस्यं तथैव त्वद्यश एव श्रवणस्मरणादिविषयी कर्तव्यमित्याहुः । विद्यादिभिस्तथा शुद्धिर्न यतस्ताभिरेव दुष्टो गर्वेणाशयो भवत्येवेति भावः । सत्त्वात्मनां शुद्धसत्त्वावताराणां मध्ये ऋषभ श्रेष्ठ तव यशसि श्रोतुः कीर्तयितुः स्मर्तुश्च प्रवृद्धा सती श्रेष्ठा या श्रद्धा तया शुद्धिः स्यात्, कीदृश्या–शास्त्रादिश्रवणोद्भूतया ॥ ९ ॥ धूमः केतुरुपलक्षको यस्य स तथा वह्निरित्यर्थः । वासुदेवादिव्यूहे वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपे चतुर्व्यूहे ॥ * ॥ पूर्वपद्येन संगतिमाह–तदेवमिति । तेषु च भक्तेष्वेव मध्ये । आत्मवद्भिः आत्मा त्वमेव नाथो येषाम् । तथा च चिंताशून्यत्वाद्धीरैरिति व्याख्यातम् । वैकुंठप्राप्तय इति–एवं चैश्वर्येच्छुत्वाभावादिदक्षयैव वैकुंठप्राप्तिरभिप्रेति पूर्वतो वैशिष्ट्यम् ॥ * ॥ **संदर्भविश्वनाथौ** तु–समान

यश्चिंत्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा॥अध्यात्मयोग उत योगिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परीष्टः॥ ११॥
पर्युष्टया तव विभो वनमालयेयं संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ॥ यः सुप्रणीतममुयाऽर्हणमाददन्नो भूयात्सदांघ्रिरशुभाशयधूमकेतुः ॥ १२ ॥

सवनशस्त्रिकालमर्चितः ॥ १० ॥ किंच प्रयतपाणिभिः संयतहस्तैर्हविर्गृहीत्वाऽध्वराग्नौ आहवनीयादौ याज्ञिकैर्यश्चिंत्यते । ननु "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट् करिष्यन्" इति वचनात्तत्तद्देवताश्चिंत्यंते । अत आहुः । त्रय्या निरुक्तेन विधिनेंद्रादिरूपेणैव यज्ञपुरुषश्चिंत्यत इत्यर्थः । उत किंच । अध्यात्मयोगे आत्माधिकारे योगे योगिभिरप्यात्मनस्तव माया अणिमादिस्तां जिज्ञासुभिस्तत्तत्कामैर्यश्चिंत्यते । परमभागवतैस्तु मुक्तैर्यः परीष्टः सर्वतः पूजितः स तवांघ्रिर्नोऽशुभाशयधूमकेतुः स्यादिति पूर्वेणान्वयः ॥ ११ ॥ एतेषां च मुनिसात्वतादीनां षण्णां सेवकानां मध्ये परमभागवतेषु लक्ष्म्या अपि तव प्रीतिरधिकेति संस्तुवंति । पर्युष्टयेति । इडभावश्छांदसः । अहं यत्र वसामि

स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनां नारायणपरायणानां या विभूतिः प्रेमसंपत्तिस्तस्यै स्वरतिक्रमाय स्वर्गादिवासनात्यागाय चार्चितः । तदुक्तं प्रह्लादेन—"कामानां हृद्यसंरोहं भवतस्तु वृणे वरम्" इति ॥ १० ॥ न केवलं मुन्यादिभिरेवार्चितः किंत्वन्यैरपीत्याह—किंचेति । अत्राक्षिपति—नन्विति । इत्यर्थ इति—इंद्रादीनामपि " स चेंद्रस्स बृहस्पतिः " इत्यादिश्रुतेस्त्वद्रूपत्वमेवेति भावः । योगे सविकल्पे तत्कामैरणिमादिसिद्धीप्सुभिः । मुक्तैर्नारदादिभिः ॥ * ॥ याज्ञिकैः श्रीभरताद्यैरिति सिद्धपदप्रत्यासत्तेरध्याहृतम् । यस्यै देवतायै यां देवतामुद्दिश्य वषट् करिष्यन् वषडिति मंत्रमुच्चारयन् इंद्रादिरूपेण बाह्यादिरूपतया ध्यानेन । एवं च तेषां त्रयीतात्पर्यवेत्तृत्वं सिद्धम् । एतदज्ञातॄन्प्रत्येव पृथक् तत्तद्देवता विधीयन्त इति भावः । आत्माधिकार इति—आत्मनः परमात्मनोधिकारः फलत्वेन स्फूर्तिर्यस्मिंस्तस्मिन्योगे, चित्तस्यैकाग्र्यावस्थायां बहिर्वृत्तिनिरासात्कारणे लयो योगस्तस्मिन्योगिभिरपि चिंत्यते । परमभागवतैर्नित्यमुक्तैरिति **दीपिका** ॥ * ॥ सर्वार्थदत्वेन चरणस्य चरणोपनिषदुदाहरिष्यते—"चरणं पवित्रम्" इत्यादिकेति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—याज्ञिकैस्त्वद्भुजादिविभूतय एवेंद्रादयो न ते त्वदन्य इति भाव्यते, "यज्ञभाजो देवास्तान्पुरुषावयवेष्वध्यायत्" इति पंचमनिगमोक्तेः । मायातरणार्थं जिज्ञासुभिश्चिंत्यते यत्तितीर्षितं भवति तत्प्रथमं जिज्ञास्यत एवेति भावः ॥ ११ ॥ षण्णां षट्संख्याकानां मुनिसात्वतात्मविद्याज्ञिकयोगिपरमभागवतानाम् । पर्युषितयेति वक्तव्य इडभाव आर्षः । प्रतिपत्नी सपत्नी । संभवत्वात्—सुप्रणीतामिति । तस्येति पदाध्याहारे गौरवमालक्ष्याह—यद्वेति । अत्रादानादिरवयविधर्मः केवलमवयवस्यापि युक्त एव, हरेरवयवस्य पादस्यावयविवत्स्वातंत्र्येणाप्यादानादिरपि सर्वेश्वरावयवत्वेन विलक्षणत्वादिति भावः । इदानीं हरिप्रियकरत्वेन सर्वेभ्यो हरिकथाश्रवणैकनिष्ठा एव महीयांस इत्याह—अथ वेति । एतेभ्यः पूर्वमुक्तेभ्यः । वैजयंत्या पंचवर्णपुष्पपत्रमय्या ॥ * ॥ **दीपिका**—मुन्यादिषण्णामिति—तत्र मुनयो मुमुक्षवः १, सात्वताः साधकभक्ताः २, धीरास्तत्राप्येकांतिनः ३, याज्ञिकाः ४, योगिनः ५, परमभागवताश्चेति ६, ये षट्सेवकास्तेषां मध्ये । 'वस—निवासे' इति धातुर्निष्ठायां सेट्, पर्युषितयेति तु साधुः, इडभावश्छांदसः । पूर्वार्थेप्रिवर्णनक्रमभंगः पर्युष्टयेत्यार्षत्वकल्पनं चातो—यद्वेति । द्वितीयार्थेप्यार्षत्वकल्पनं तदवस्थमेव । यशसि श्रद्धावतां सत्तमाधिकारिणां मुन्यादिषड्भ्योपि श्रैष्ठ्यं वदंतस्तद्यश एव मालारूपकत्वेन वर्णयंति—अथ वेति ॥ * ॥ **संदर्भस्तु**—तादृशस्यापि चरणस्य स्वेषु परमानुग्रहं दर्शयितुमाहुः—पर्युष्टयेत्यर्द्धेन । तदेवं पर्युष्टापि लक्ष्मीर्दुःसहापि कथं सा न त्यज्यत इति पूर्वपक्षमुत्थाप्य तमेव सिद्धान्तेन दर्शयन्ति—य इत्यर्धेन । योंघ्रि नोस्मत्कर्तृकममुया वनमालया करणभूतयाऽर्हणं सुष्ठु प्रणययुक्तं यथा स्यात्तथाददत्स्वीकृतवानसि । अनेन स्वैः कदाचिद्यद्दत्तांसीत्तामेव तदा श्रीभगवान्धृतवानिति ज्ञापितम् । यद्यपि तस्या मालाया दिव्यत्वात्पर्युषितत्वं न संभवति लक्ष्म्याश्च तत्रेर्ष्या प्रेष्ठभूषणत्वान्न संभवति तथापि प्रणयविनोदोक्तिमात्रमिदम् ॥ * ॥ **विश्वनाथोऽपि**—

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ॥ स्वर्गाय साधुषु खलेष्वितराय भूमन्पादः पुनातु भगवन्भजतामघं नः ॥१३॥
नस्योतगाव इव यस्य वशे भवंति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ॥ कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥१४॥

तत्रैव वक्षसि पर्युषिताऽपीयं वसतीति प्रतिपत्निवत्सपत्नीवच्छ्रीः संस्पर्धमाना भवति तथाऽपि तां स्पर्धमानां श्रियमनादृत्य यो भवान्पर्युषितयाऽपि अमुया वनमालया भक्तैरर्पितेयमिति प्रीत्या सुप्रणीतं सुष्ठु संपादितं यथा भवति तथाऽर्हणं पूजामाददत्स्वीकृतवान् । सुप्रणीतमित्यर्हणविशेषणं वा । तस्य तवांघ्रिर्नोऽशुभाशयधूमकेतुर्भूयात् । यद्वा योंघ्रिरमुया सुप्रणीतमर्हणमाददत्स नोऽशुभाशयधूमकेतुर्भूयादित्यन्वयः । अथवैवं संबंधः । एतेभ्यो ध्यानार्चनादिनिष्ठेभ्योऽपि त्वयशसि प्रवृद्धसच्छ्रद्धावंत एव कृतार्था भगवतो यशःप्रियत्वादित्याहुः । पर्युष्टया वश कांतावित्यस्मात् परितः सर्वांगे उष्टया कांतया शोभितया वनमालया वक्षस्येकदेशे वर्तमाना श्रीः संस्पर्धमाना भवति तथाऽप्याम्नायमधुव्रतैर्बहुधा वर्णितया कीर्तिमय्या वैजयंत्या वनमालयैव यो भवान्सुप्रणीतमर्हणमाददादित्यादि पूर्ववत् ॥ १२ ॥ त्वच्चरणस्य भक्तपक्षपातः प्रसिद्ध एवेति स्तुवंतः प्रार्थयन्ते । केतुरिति । बलिबंधने त्रिभिर्विक्रमैर्युतः । तत्र द्वितीयविक्रमे सत्यलोकं गतस्तव पादः केतुरत्युच्छ्रितो विजयध्वज इव । तत्संपादयंति । त्रिपतत्पताकः त्रिधा पतंती त्रिषु लोकेषु वा पतंती गंगा पताका यस्य तथाऽसुरदेवचम्वोस्तत्सेनयोरुभयोर्भयाभयकरः । साधुषु सुरेषु स्वर्गाय खलेष्वसुरेष्वितरायेतरस्मै अधोगमनाय । य एवं केतुरूपस्ते पादः स भजतां नोऽघं पुनातु शोधयतु । अघादिति पाठे भजतां न इति कर्मणि षष्ठ्यौ । अघाद्भजतोऽस्मान्पुनात्विति । तथा च श्रुतिः । “ चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ॥ तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥ लोकस्य द्वारमर्चिष्मत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् ॥ अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु ” इति ॥१३॥ ननु युद्धे देवासुरादयः परस्परं जयंति जीयंते च किमहं तत्रेत्यत आहुः । नसीति । मिथुर्मिथोऽर्द्यमानां युद्धादिभिः पीड्यमाना ब्रह्मादयोऽपि यस्य तव वशे भवंति न तु जये पराजये वा स्वतंत्राः के इव नसि नासिकायामोता नासिकामाविध्य बद्धा गावो बलीवर्दा इव । कुतः । कालस्य

स्पार्धिनीत्युत्प्रेक्षैव द्रष्टृलोककृता न तु श्रियः कदाचित्क्वापि स्पर्द्धा दृष्टा ॥ १२ ॥ तत्र त्रिविक्रमेषु तदुच्चध्वजत्वं देवादयः संपादयन्ति साधयन्ति । यद्यपि संख्याशब्दानां वृत्त्याश्रयणमभीष्टार्थलाभाय न दुष्टं तथापि तद्विनैव तत्सिद्धौ तन्न कार्यमित्याह–त्रिषु लोकेष्विति । भगवच्चरणस्याघनाशकत्वे श्रुतिमाह–तथा चेति । व्याख्यातचरेयं वेदस्तुतिव्याख्याने ॥ * ॥ **दीपिका**–तत् ध्वजत्वम् । संपादयंति साधयंति । त्रिष्विति–तत्र दिवि मंदाकिनी, पाताले भोगवती, भुवि तु गंगेति ज्ञेयम् । चरणमिति–पवित्रं शुद्धं विततं व्यापकं पुराणमनादि नित्यनूतनं वा येन पूतः पवित्रीकृतः तेन पवित्रेण पापकुलिशत्रायकेण शुद्धेन स्वयं च पवित्रेणारातिं संसारलक्षणं लोकस्य वैकुंठस्य स्वोपासनया द्वारं प्रापकम् अर्चिष्मतः पवित्रादंग्रेरपि पवित्रं ज्योतिष्मत्सूर्यादिष्वपि भ्राजमानं महस्वत्स्वस्मै स्वयंप्रकाशम् अमृतस्य प्रेमानंदस्य धाराः प्रवाहान् बहुधा वैचित्र्येण पूरयत् चरणं लोके स्वभक्तजने सुधितां सुधिततां सुधावदाहरणीयतां दधातु ॥ १३ ॥ सुरासुराभयभयकरत्वं चरणस्याक्षिपति–नन्विति । तत्र जयपराजये । मिथुरव्ययमपि मिथोर्थे । नासिकौतत्वे हेतुमाशंक्य समाधत्ते–कुत इति । तदेव

अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ॥ सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥१५॥ त्वत्तः पुमान्समधिगम्य ययास्य वीर्यं धत्ते महांतमिव गर्भममोघवीर्यः ॥ सोऽयं तयाऽनुगत आत्मन आंडकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥ ॥ १६ ॥ तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ॥ अर्थाञ्जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ १७ ॥

कलयितुः प्रवर्तकस्य । तदेव कुतः ।. प्रकृतिपुरुषयोरपि परस्य । तस्य ते पुरुषोत्तमस्य पादो नः शं तनोतु ॥ १४ ॥ प्रकृतिपुरुषाभ्यां परत्वमुपपादयंतः कालत्वेन पुरुषोत्तमत्वमाहुः । अस्येति । अस्य जगत उदयादीनां हेतुरसि । कुतः । अव्यक्तं प्रकृतिर्जीवः पुरुषो महान्महत्तत्त्वं तेषां कालं नियंतारं त्वामाहुः " अक्षरात्परतः परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ " इत्याद्याः श्रुतयः । किंच अयं संवत्सरात्मको यः कालस्त्रिणाभिस्त्रीणि चातुर्मास्यानि नाभयो यस्य सोऽपि त्वमेव । अतस्त्वमुत्तमपुरुष इति । तथा च गीतासु । "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" इति ॥ १५ ॥ त्वमेव प्रकृत्यादिद्वारा जगत्सृष्ट्यादिहेतुरित्युक्तम् । तत्केन प्रकारेण तदाहुः । त्वत्तः पुरुषो वीर्यं शक्तिं समधिगम्य प्राप्य यया मायया सह महांतं धत्ते । कमिव । अस्य विश्वस्य गर्भमिव । सोऽयं महांस्तयैव माययाऽनुगतः सन्नात्मनः सकाशादांडकोशं ससर्ज । त्वयाऽनुगत इति पाठेऽपि तया मायया त्वयाऽधिष्ठितः सन्निति ॥ १६ ॥ नन्वेवंभूतमीश्वरत्वं मम कुतोऽवगतं तदाहुः । तदिति । तत्तस्मात्तस्थुषः स्थावरस्य जगतो जंगमस्य च भवानधीशः । यद्यस्मान्माययोत्था उज्जृंभिता

प्रवर्तकत्वमेव ॥ * ॥ तत्र देवासुरजयपराजययोरहं किं करोमीति शेषः । परस्य कारणस्येति दीपिका ॥ १४ ॥ यद्वा—महान् हिरण्यगर्भः । नियंतारं स्वस्वव्यापारप्रवर्तकम् । अक्षरात्प्रधानात्परतः जीवात्पर इत्यर्थः । महतः महत्तत्वात् । अव्यक्तं प्रधानम् । 'पुरुषान्न परं किञ्चित्' इति या बुद्धिः सा काष्ठा दिक्समाप्तिः समाप्तिस्थानम् । तदेवाह—सा परा गतिरिति श्रुतिपदार्थः । प्रकारांतरेण तदेवाह—किञ्चेति । यतस्त्वं क्षराक्षरशब्दवाच्यप्रकृतिपुरुषादिभ्यः श्रेष्ठोसि, अतो हेतोः । प्रमाणमाह—तथा चेति ॥ * ॥ प्रकृतिपुरुषाभ्यां प्रधानजीवाभ्यां परत्वमुपपादयंतः युक्त्या प्रतिपादयन्तोनुमानार्थापत्त्यन्यतमत्वं हि युक्तिरत्र हि प्रकृत्यादिनियन्तृत्वान्यथानुपपत्त्या तत्परत्वं सिद्धम् । प्रकृतेः परतोऽक्षराज्जीवात्पर इति जीवपरत्वं महत्तत्त्वात्परमव्यक्तं प्रधानं प्रधानात्परस्तत्प्रवर्तकः पुरुषः परमेश्वरः पुरुषात्परमेश्वरात्परं किंचिदन्यन्नास्ति सा पुरुषरूपा, अत्र तच्छब्दस्य विधेयधीहेतुत्वात्स्त्रीत्वं स हि पुरुषः परमोऽवधिरित्यर्थः । परा गतिः परमपुरुषार्थ इति श्रुतिपदार्थः । अतः कालत्वात् । क्षरः प्रधानादिवर्गः । अक्षराज्जीवात् ॥१५॥ बहिरावरणैः पृथिव्यादिभिरुत्तरोत्तरदशगुणाधिकैः सप्तावरणैः ॥ * ॥ दीपिका—तत् मद्वारकहेतुत्वम् । यया मायया सह यस्यां मायायामित्यर्थः । अनुगतः व्याप्तः सन् । आत्मनः स्वस्मात्सकाशात् । हैमं प्रकाशबहुलम् । पांठातरे माययैव त्वयाधिष्ठितो न तु शुद्धस्वरूपेणान्यथा विकारप्रसंगः स्यादिति ॥ १६ ॥ ममैतादृक्त्वं कुत इत्याशंकते—नन्विति । एवंभूतं सर्वोत्पादकस्वरूपम् । तदीश्वरत्वम् । तत्पदस्य यत्पदेनान्वयः । उपनीतान्प्रापितान् । हृषीकपते सर्वेन्द्रियनियंतः । लिप्त आसक्तः । जीवा दरिद्रास्तेषां स्वत एवार्था न संति योगिनां योगबलादाप्तानपि तैर्बंधभिया त्यजंतीति । इत्यर्थ इति—अप्राप्तत्यक्तयोरप्यर्थयोर्वासनासद्भावाद्बंधो दुष्परिहर इति भावः ॥ * ॥ एवं सृष्ट्यादिकर्तृत्वेन । माययेति—अत्र

स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तु षोडशसहस्रमनंगबाणैर्यस्येंद्रियं विमथितुं करणैर्न विभ्व्यः ॥ १८ ॥
विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हंतुम् ॥ आनुश्रवं श्रुतिभिरंघ्रिजमंगसंगैस्तीर्थद्वयं शुचिषदस्त उपस्पृशंति ॥१९॥
बादरायणिरुवाच ॥ इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् ॥ अभ्यभाषत गोविंदं प्रणम्यांबरमाश्रितः ॥ २० ॥

या गुणविक्रिया इंद्रियवृत्तिस्तयोपनीतानर्थान्विषयान् जुषन् जुषमाणोऽपि हे हृषीकपते न लिप्तस्त्वम् । ये त्वन्ये जीवा योगिनो वा स्वतः परिहृतादप्यविद्यमानात्त्यक्ताद्वा विषयजोषणाद्बिभ्यति । वासनामात्रेण बध्यंत इत्यर्थः ॥ १७ ॥ अलिप्तत्वमाहुः । स्मायेति । स्मायावलोको मंदस्मितविलसितोऽवलोकस्तस्य लवः कटाक्षस्तेन दर्शितो यो भावोऽभिप्रायस्तेन मनोहारि यद्भ्रूमंडलं तेन प्रहिता ये सौरता मंत्रास्तैः शौंडैः प्रगल्भैरनंगबाणैः कामस्य बाणैः संमोहनैः करणैः कामकलादिभिः षोडशसहस्रं पत्न्यो यस्येंद्रियं मनो विमथितुं क्षोभयितुं न विभ्व्यो न समर्थाः स भवान्न लिप्त इति पूर्वेणान्वयः ॥ १८ ॥ तत्तस्मात्तवामृतरूपा या कथा तदेव उदकं वहंतीति कथाकीर्तिनद्यः । तथा पादावनेजसरितः पादोदकनद्यो गंगाद्याश्च त्रिलोक्याः शमलानि हतुं विभ्व्यः । केन प्रकारेण । आनुश्रवं गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तत्र भवं कीर्तिरूपं तीर्थं श्रुतिभिः श्रवणेंद्रियैरंघ्रिजं चांगसंगैरेवं शुचिषदः स्वाश्रमधर्मस्थितास्तव तीर्थद्वयमुपस्पृशंति सेवंत इति ॥ १९ ॥ विबुधैः सह ॥ २० ॥

सर्वावतारावतारिशिरोमणेः श्रीकृष्णस्य स्तोतव्यत्वेन प्रकृतत्वात् स्वांशेन प्रकृतिप्रवर्तकपुरुषरूपेण वर्णनमिदं ज्ञेयम् । कर्मफलं प्रायोक्तरीतिन्यायेन जुषमाणत्वेपि स्वरूपभूताचिच्छक्त्याऽलिप्तत्वम् "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुनोक्तेः ॥ १७ ॥ सौरतमंत्रास्सुरतसंबंधिगुप्तभाषणानि । कामकलाभिरालिंगनादिचेष्टाभिः ॥ * ॥ साक्षाद्रूपेप्यलिप्तत्वमाहुः—स्मायेति । अभिप्रायोऽत्र रमणरूपः । प्रहिताः प्रयुक्ताः सौरताः संभोगांगरूपाः मंत्रवत्संमोहका भावहावहेलादयस्ते च ते शौंडाश्च प्रगल्भास्तैरनंगबाणरूपैः करणैः क्रियते वशीक्रियते नायक एभिरिति करणानि तैः । तथा च—कामकलाभिरिति व्याख्यातम् । कामस्य संभोगशृंगारस्य कला अलंकारशब्दवाच्या भावहावहेलालीलाविलासविच्छित्तिविब्वोककिलकिञ्चिताद्या द्वाविंशतिः । विशेषेण स्वोत्तमप्रेमवतीतुल्यत्वेन क्षोभयितुं न शेकुः किंतु यासां यादृशः प्रेमा तादृशमेव शेकुरिति पत्नीनां चिच्छक्तिवृत्तित्वात्तासां कामकला अप्यप्राकृताश्चिन्मय्य एव ताभिरप्यवशीकारदर्शनादलिप्त एव त्वम् । किञ्च—पारिजाताद्याहरणज्ञापितवशीकारदर्शनात् ताश्च कदाचित्तासां चिद्विशेषप्रेममय्योपि भवन्तीत्युज्ज्वलनीलमणौ प्रतिपादितम् । ततश्च त्वं प्रेमवश्य एव न तु प्राकृताप्राकृतकामवश्य इति भावः । यद्वा—विमाथितुं व्रजसुंदर्य इव विशेषेण मथितुं न शेकुः किन्तु यावांस्तत्र प्रेमांशस्तावदेवेत्यर्थः ॥ १८ ॥ यद्ययं भगवान्देवदत्तवद्विषयलंपटत्वेन स्त्रीजितः स्यात्तर्हि तत्कथा तत्पादोदनदीस्नानं पापहरं न स्यान्न च तथेति तर्कं मनसि धृत्वाह—यस्माद्भवानलिप्तस्तस्माद्धेतोः । यद्यपि पादावनेजसरित्त्वं गंगाया एव तथापि गंगायाः सर्वनदीषु स्मरणीयत्वसंबंधेन सर्वासां गंगोपासकत्वेन च सर्वा गंगा एव "गंगा सर्वासु संध्येया स्नानकाले नदीषु च । गंगास्नानफलावाप्त्यै नान्यां तस्यां स्मरेत्क्वचित् ॥ रेवाद्याः सकलनद्यस्सदोपासत जाह्नवीम् । ताद्रूप्यप्राप्त्यै श्रीविष्णुपादपूतजलां विभो ॥" इत्यादिपुराणात् । तत्र वेदे । अंघ्रिजं गंगादि ॥ * ॥ यद्यपि त्वमेवालिप्तस्तथापि तव कथामृतं चरणामृतं च संसारबंधात् लोकान्मोचयत्येवेत्याहुः—तवामृतरूपा याः कथास्ता एवोदवहाः पुण्यनद्यः पादावनेजसरितः श्रीगंगायमुनाद्याः शमलान्यविद्यामालिन्यानि हन्तुं विभ्व्यः समर्थाः, यतस्तीर्थद्वयं सुखविशेषप्राप्त्यर्थं शुचिसदो निर्मलचित्ता अपि पस्पृशांति सदा सेवन्ते । केन प्रकारेणेत्यग्रे शमलहंतृत्वमिति शेषः ॥ १९ ॥ इत्युक्तरीत्या । सेशः सशिवः ॥ * ॥ नहि देवा भुवं स्पृशंतीत्यत उक्तम्—अंबरमाश्रित इति । स्वमर्यादादर्शनाय भगवतोऽपि मनुष्यमर्यादायां

ब्रह्मोवाच ॥ भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ॥ त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥ २१ ॥ धर्मश्च स्थापितः सत्सु सत्यसंधेषु वै त्वया ॥ कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥ अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ॥ कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥ २३ ॥ यानि ते चरितानीश मनुष्याः साधवः कलौ ॥ शृण्वंतः कीर्तयंतश्च तरिष्यंत्यंजसा तमः ॥ २४ ॥ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ॥ शरच्छतं व्यतीयाय पंचविंशाधिकं प्रभो ॥ २५ ॥ नाधुना तेऽखिलाधार देवकार्यावशेषितम् ॥ कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥ ततः स्वधाम परमं विशस्व यदि मन्यसे ॥ सलोकाँल्लोकपालान्नः पाहि वैकुंठ किंकरान् ॥ २७ ॥ ( श्रीशुक उवाच ॥ संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ॥ प्रतिनंद्याह तान्राजन्मायामनुज ईश्वरः ॥ १ ॥ ) श्रीभगवानुवाच ॥ अवधारितमेतन्मे यदात्थ विबुधेश्वर ॥ कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २८ ॥ यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ॥ लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥ २९ ॥

॥२१॥ विक्षिप्ता विस्तारिता ॥२२॥ उद्दामानि वृत्तानि विक्रमा येषु तानि कर्माणि ॥ २३ ॥ २४ ॥ २५ ॥ २६॥२७॥२८॥ वीर्यशौर्ययुक्तया श्रिया ॥२९॥

स्थेयत्वं दर्शयतीति भावः ॥ ।२० ॥ तद्भूमिभारावतरणम् । यथा प्रार्थितं तथैव प्रार्थनानतिक्रमेण ॥ * ॥ भूमेरिति युग्मकम् । ननु युष्माभिः क्षीरोदशाय्येव विज्ञापितो न त्वहं तत्राह—हे अशेषात्मन् हे सर्वावतारावतारिस्वरूप तस्यापि त्वत्स्वरूपत्वादित्यर्थः । यद्वा—भूम्यादीनां दुःखं ज्ञात्वैवेत्यर्थः । तद्विज्ञापनम् । तथैव विज्ञप्त्यनुरोधेनैव । प्रभो इति तत्साम्पादनसामर्थ्यमाह ॥ २१ ॥ ० ॥ * ॥ सत्यसंधेषु सत्यप्रतिज्ञेषु ॥ २२ ॥ उद्दामानि उत्कटानि । अकृथाः कृतवानसि ॥ * ॥ बिभ्रज्जगति दर्शयन् । यानीति यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षत्वम् ॥ २३ ॥ ते तरिष्यंतीति योज्यम् ॥ * ॥ अंजसेति—श्रवणकीर्तनयोः स्वतः पुरुषार्थत्वम्, तरणस्यानुषंगिकत्वं चोक्तम् ॥ २४ ॥ पञ्चविंशाधिकं पंचविंशत्यृत्वधिकम् । तदुक्तम्—"वत्सराणां शतं चैव ऋतूनां पञ्चविंशकम् । अवतीर्णस्य कृष्णस्य यदा प्रागात्तदा हरिम् ॥ स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामरः ।" इति पुराणांतरमाह विजयध्वजः ॥ * ॥ विवक्षितमाह—यदुवंश इति ॥ २५ ॥ अवशिष्टदेवकार्यापेक्षयापि न स्थेयमिति चेत्तत्राह—नाधुनेति । यदुकुलमवशिष्टमपेक्ष्यापि न स्थेयमित्याह—कुलं चेति ॥*॥०॥२६॥ यादवानां देवत्वात्तत्स्थितौ कलेरप्रवेशात्तस्य चापेक्षितत्वात्तत्कुलसंहारार्थं किंचित्कालं स्थित्यपेक्षायां तत्कृत्वा झटिति स्वधाम प्रवेष्टव्यमित्याशयेनाह । तदुक्तं च—" संवत्सरद्वयं तत्र पश्चात्स्थित्वा जनार्दनः । अभिपेदे परं स्थानं चतुर्मासाधिकं पुनः ॥" इति तीर्थः॥*॥यतो देवकार्यानवशेषस्ततो हेतोः स्वधाम प्रपञ्चागोचरीभूतं द्वारकाया एवाप्रकटप्रकाशं स्वयं भगवत्कृष्णरूपेण प्रविश, वैकुंठश्वेतद्वीपादिकं तु नारायणादिस्वरूपेण सर्वांशमादायावतीर्णत्वात् । श्रीविष्णुरूपेण तु—"सलोकाँल्लोकपालान्नः पाहि वैकुंठ किंकरान्" नानावैकुण्ठनाथरूपैश्च वैकुंठकिंकरान्पाहीति॥२७॥ अवधारितं निश्चितम्॥*॥०॥२८॥ तर्हि कालक्षेपे किं कारणं तत्राह—तदिदमिति । लोकं विश्वं जिघृक्षत् अवमानादिभिर्जगद्ग्रसनेच्छु । मे मया । रुद्धं निरुद्धमस्ति ॥*॥ वीर्यं बलिष्ठत्वम्, शौर्यं युद्धोत्साहस्तयोः श्रिया संपत्त्या उद्धतं हताद्धननादुद्गतमवध्यमित्यर्थः । लोकं जिघृक्षदनंतत्वाद्व्याप्तुमिच्छत् मयाऽचिंत्यशक्तिना द्वारकायामेव रुद्धमन्यथा सर्वभूर्लोकेपि पर्याप्तमिति । व्रजे गोपगोपीनामनंतयूथवत् अनंतरूपायाश्श्रीराधाया देहोद्भूतत्वाद्गोपीनामानंत्यं तथैव ममानंतस्य देहोद्भूतत्वाद्गोपाना

यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ॥ गंतास्म्यनेन लोकोऽयमुद्वेलेन विनंक्ष्यति ॥ ३० ॥ इदानीं नाश आरब्धः कुलस्य द्विजशापतः ॥ यास्यामि भवनं ब्रह्मन्नेतदंते तवानघ ॥ ३१ ॥ श्रीशुक उवाच ॥ इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तम् ॥ सह देवगणैर्देवः स्वधाम समपद्यत ॥३२॥ अथ तस्यां महोत्पातान्द्वारवत्यां समुत्थितान् ॥ विलोक्य भगवानाह यदुवृद्धान्समागतान् ॥ ३३॥ श्रीभगवानुवाच ॥ एते वै सुमहोत्पाता व्युत्तिष्ठंतीह सर्वतः ॥ शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः ॥३४ ॥ न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः॥ प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव मा चिरम् ॥३५॥ यत्र स्नात्वा दक्षशापाद्गृहीतो यक्ष्मणोडुराट् ॥ विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम् ॥ ३६ ॥

उद्वेलेन लंघितमर्यादेन ॥ ३० ॥ वैकुंठं यास्यंस्तव भवनं यास्यामि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ प्रभासं यास्याम इति वदतोऽयमभिप्रायः । एते देवांशाः स्वाधिकारानेवार्हंति न तु सद्योमोक्षम् । द्वारवत्यां मृता मुच्येरंस्तस्मादभ्युदयफलं प्रभासं नेष्यामीति ॥ ३५ ॥ दक्षशापाद्यक्ष्मणा रोगेण गृहीत उडुराट् चंद्रो यत्र

मध्यानंत्यमेव ध्येयं नात्र शंकावकाशः ॥ २९ ॥ अनुपसंहारे को दोष इति चेदाह—अनेनेति । सतोपि यदुकुलस्योद्वेलत्वं युगधर्मोद्भविष्यतीत्यभिप्रायेणोक्तमाचार्यैः—“सतामपि कलौ प्राप्ते विकारो मनसो भवेत् । तस्माद्यदूंश्च संजह्रे नैते स्युः पापिनः खलु ॥ पुनर्लोकविवृद्ध्यर्थमौत्तरेयादिकान् हरिः । आविश्य रक्षामकरोज्जगतः पुरुषोत्तमः ॥ स्वात्मनः सहयानेन पुरुषार्थोधिको भवेत् । इत्यनुग्रहबुद्ध्या हि संजह्रे स्वकुलं विभुः ॥” इति ॥ * ॥ **दीपिका**—नन्वेतेषां ब्रह्मण्यानां वदान्यानां नित्यवृद्धोपसेविनां व्याप्त्या भद्रमेव भवेत्तत्राह—यदीति । उद्वेलेन मद्वियोगात्कर्तव्याकर्तव्यविचारलोपादुन्मत्तचेष्टेन ॥ * ॥ **विश्वनाथस्तु**—दृप्तानां मामकत्वेन धृताहंकाराणाम्, उद्वेलनातिक्रान्तमर्यादसमुद्रोपमेनेत्यर्थः। लोको भूर्लोकः । यद्यपि मत्परिकराणामेषां धार्मिकाणां यदूनां भारं पृथिवी न मन्यते तदपि तस्याः स्वामिना मयाऽयं भारोऽवतारणीय एव सुकुमार्या वनिताया अति बहुतरभूषणभारो यथा तत्कांतेनावतार्य्यते तथा । यद्यपि स्पृहणीयवस्तुनो भारः सुसह एव तदप्यतिभारस्तु न सुसहो यथाऽकस्मात्प्राप्तोपि कनकराशिभारो गृध्नुना वणिजा दुर्वह एव ‘धृतरथचरणोभ्ययाच्चलद्गुः’ इति व्यासवर्णनात्तद्भारोपि पृथिव्या दुःसह एव दृष्ट इति ॥ ३० ॥ एतस्य यदुकुलसंहारस्यान्ते । अनघत्वात्तव त्वदीयभवनं यास्यामीत्यभिप्रायः ॥ * ॥ नाशोऽदर्शनं निगूढायां द्वारकायां प्रवेशनमित्यर्थः । एतस्य प्रवेशनस्यांते तव भवनं विकुंठासुतरूपेण यास्यामि तदुपरिगं वैकुंठं यास्यन्नित्यर्थः ॥ ३१ ॥ इतीत्थम् । तं श्रीकृष्णम् ॥ * ॥ लोकनाथेनेति—लोकसंग्रहार्थं ब्राह्मणशापवर्णनमुचितमिति भावः ॥ ३२ ॥ अथ ब्रह्मादिप्रार्थनोत्तरम् । महोत्पातान् धूमकेतूदयत्रयोदशदिनपक्षभूकंपदिग्दाहादिरूपान् । ‘त्रयोदशदिने पक्षे यादवा निधनं गताः’ इत्याद्युक्तेः ॥ * ॥ महोत्पातान्भगवदिच्छयैवाविर्भूतान् “मुनिवासनिवासे किं घटेतारिष्टदर्शनम्” इत्युक्तेस्तत्र तदसंभवात् ॥ ३३ ॥ एते धूमकेतूल्कापातसंध्याविकृतिरूपाः । इह द्वारकायाम् । दुरत्ययो दुर्लंघ्यः ॥ * ॥ ० ॥ ३४ ॥ “ते मुक्ता ब्रह्म संयांति ये मृता द्वारकापुरे” इति द्वारकामाहात्म्योक्तेन तु सद्योमोक्षमिति । अभ्युदयः स्वर्गारोग्यादिः ॥ * ॥ अस्माभिरिति तेषां स्वसाम्यमेव निर्दिष्टम्, तत्र जिजीविषुभिरित्यात्मवदेव तेषामुत्पातनिरसनमभिप्रेतम् । तत्र व्याजमात्रं प्रभासमित्यादिमंगलरूपायां स्वपुर्याममंगलानुकरणमपि मा भूदित्यभिप्रायकं च । अनुकरणमात्रत्वञ्च जिजीविषुभिरित्यनेनैव व्यंजितमन्यथा श्रीभगवदंगीकारभंगः स्यात् । प्रभासमिति—मन्नित्यपरिकरैर्विशिष्टैव द्वारका सदा विराजतु तेषु प्रविष्टान्देवानेव यादवरूपान् अलक्षितं तेभ्यः सकाशाद्योगबलेन निष्कास्य प्रभासं नीत्वा तत्रैव तान्मायया मौसलसंग्रामं प्रापय्य स्वर्गं प्रस्थाप्य विकुंठासुतादिरूपोहमपि वैकुंठादिधामानि यास्यामि पूर्णस्वरूपेण तु सपरिकरोहं द्वारकायां सदैवास्म्येवेति भगवन्मनोगतं ज्ञेयमिति **विश्वनाथः** ॥ ३९ ॥ तदेवाह—यत्र प्रभासे ॥ * ॥ तीर्थस्य ब्रह्मशापशमनयोग्यतामाह—यत्रेति । अन्यथा श्रीभगवतो युक्तिभंगः स्यात् ॥ ३६ ॥

वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितृन्सुरान् ॥ भोजयित्वोशिजो विप्रान्नानागुणवतांधसा ॥ ३७ ॥ तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महांति वै ॥ वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥३८॥ श्रीशुक उवाच ॥ एवं भगवताऽऽदिष्टयादवाः कुलनंदन॥ गंतुं कृतधियस्तीर्थं स्यंदनान्समयूयुजन्॥ ॥ ३९ ॥ तन्निरीक्ष्योद्धवो राजञ्छ्रुत्वा भगवतोदितम् ॥ दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥ ४० ॥ विविक्त उपसंगम्य जगतामीश्वरेश्वरम् ॥ प्रणम्य शिरसा पादौ प्रांजलिस्तमभाषत ॥ ४१॥ उद्धव उवाच ॥ देवदेवेश योगेश पुण्यश्रवणकीर्तन ॥ संहृत्यैतत्कुलं नूनं लोकं संत्यक्ष्यते भवान् ॥ विप्रशापं समर्थोपि प्रत्यहन्न यदीश्वरः ॥ ४२ ॥ नाहं तवांघ्रिकमलं क्षणार्धमपि केशव ॥ त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥४३॥ तव विक्रीडितं कृष्ण नृणां परममंगलम् ॥ कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥ ४४ ॥

स्नानमात्रं कृत्वा किल्बिषात्तस्माद्रोगदुःखात्सद्यो विमुक्तः सन्भूयः कलावृद्धिं भेजे ॥ ३६ ॥ उशिजः कमनीयान् । अंधसा अन्नेन ॥ ३७ ॥ उप्त्वेति । यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति तथा दानं सत्पात्रे इति द्योतयति ॥ ३८ ॥ ३९॥४०॥४१॥ लोकं मर्त्यलोकम् । यद्यस्मान्न प्रत्यहन्प्रतिहतवान् ॥४२॥४३॥४४॥

तस्मिन् प्रभासे । उशिजः वष्टेरौणादिक इज् संप्रसारणञ्च । कमनीयांस्तपोविद्यावृत्तयुतान् । नानागुणवता माधुर्यदर्शनीयसुस्पृश्यादित्वगुणयुक्तेन ॥ * ॥ नौकादृष्टान्तेन साधनेन तदेव द्रढयति—वयमिति युग्मकेन । एतद्व्याख्यानिदानविवरणं श्रीकृष्णसंदर्भे : सप्तदशोत्तरशततमवाक्यचूर्णिकामारभ्य चतुस्त्रिंशदुत्तरतत्पर्यंतग्रंथे दृश्यम् ॥ ३७ ॥ तेषु विप्रेषु । पात्रेपूक्तलक्षणेषु ॥ * ॥ ० ॥ ३८ ॥ तीर्थं प्रभासम् ॥ * ॥ ० ॥ ३९ ॥ तत्प्रभासयात्रोद्योगम् । भगवतोदितम्—'शापश्च नः कुलस्य' इत्यारभ्य 'नौभिरिवार्णवम्' इत्यंतेन ॥ * ॥ तन्निरीक्ष्येति पाठो न तु तानिति । तत्प्रभासयात्रोद्यमनं दृष्ट्वा पश्चाजयपरंपरयैव यदुभ्यो भगवतोदितम् 'एते वै' इत्यादिपद्यपञ्चकं श्रुत्वा तस्माद्बुत्तीकृत्यैत्र तेभ्यस्तेनोपदेशात् । घोराण्यरिष्टानीति यद्यपि तत्र संभवति तथापि बहिर्दृष्ट्या तदाभासानेव दृष्ट्वा । विविक्ते रहसि ॥ ४० ॥ तं श्रीकृष्णम् ॥ * ॥ ० ॥ ४१ ॥ ० ॥ * ॥ देवानामपि देवा ब्रह्मादयस्तेषामीशेति देवकार्यं ब्रह्मप्रार्थितञ्च त्वया सर्वं संपादितमिति भावः । न केवलमेतदर्थमेवावतीर्णस्त्वमभूः किंतु दुर्वितर्क्यविचित्ररसमयगुणरूपचरित्रप्रकाशनया भक्तजनानंदनार्थमपीत्याह—योगेशेति । तदुक्तम्—" यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् " इति । जनिष्यमाणजनतानिस्तारार्थमपीत्याह—पुण्येति । अत एतत्त्वदीयसर्वविधित्सितसंपन्नत्वादिदानीमिमं लोकं संत्यक्षते । नूनमिति वितर्के, भवानंतर्द्धास्यतीति तर्कयामि । किञ्च—शापनिवर्तकं प्रभासस्नानमुपादिशासि किं त्वद्दर्शनादपि प्रभासस्नानमधिकं भवेत् । विप्रशाप एषां मा फलत्विति तव मनोगते सत्यपि किं शापः प्रभवितुं शक्नुयात् तस्मात्त्वंतर्द्धित्सैव दृश्यते । यद्यतः समर्थोपि भवान्विप्रशापं न प्रत्यहन्न प्रतिहतवान् ॥ ४२ ॥ ० ॥ * ॥ अतः स्वस्मिंस्तद्वोपनमनयनं दृष्ट्वा प्रार्थयते—नाहमिति । यथा यादवान्नेष्यस्येव तथा मामपि नयेत्यपिशब्दार्थः । स्वकर्तृकत्यागाशक्यत्वं कैमुत्येनाह—तवेति । विक्रीडितं भावे निष्ठा । लीलाश्रवणेपि त्वदेकनिष्ठत्वं स्यात्किं पुनः साक्षाद्दर्शनादाविति भावः ॥ * ॥ **विश्वनाथस्तु**—नन्वीश्वरोहं यथेच्छामि तथा करोमि तेन तव किमिति चेत्तत्राह—नाहमिति ॥ ४३ ॥ अन्यस्पृहामैहिकामुष्मिकविषयेच्छाम् ॥ * ॥ अन्यस्पृहां पुत्रकलत्रादिमोक्षांतस्पृहां त्यजंति न तु विक्रीडितुं त्यक्तुं शक्नुवन्ति ।

शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ॥ कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेम हि ॥ ४५ ॥ त्वयोपभुक्तस्रग्गंधवासोलंकारचर्चिताः ॥ उच्छिष्टभोजिनो दासास्तव मायां जयेम हि ॥ ४६ ॥ वातरशना य ऋषयः श्रमणा ऊर्ध्वमंथिनः ॥ ब्रह्माख्यं धाम ते यांति शांताः संन्यासिनोऽमलाः ॥ ४७ ॥ वयं त्विह महायोगिन्भ्रमंतः कर्मवर्त्मसु ॥ त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ४८ ॥ स्मरंतः कीर्तयंतस्ते कृतानि गदितानि च ॥ गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडंबनम् ॥ ४९ ॥ श्रीशुक उवाच ॥ एवं विज्ञापितो राजन्भगवान्देवकीसुतः ॥ एकांतिनं प्रियं भृत्यमुद्धवं तमभाषत ॥ ५० ॥ इति श्रीमद्भागवत एकादशस्कंधे ब्रह्मादिप्रार्थनानिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥ छ ॥ श्रीभगवानुवाच ॥ यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ॥ ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकांक्षिणः ॥ १ ॥

शय्यादिषु त्वां भक्ता नित्यं सेवितवंतो वयं कथं त्यजेम ॥ ४५ ॥ त्यक्तुमशक्नुवन्प्रार्थयते न मायाभयादित्याह । त्वयेति । चर्चिता अलंकृताः । हि निश्चितं जयेम ॥ ४६ ॥ संन्यासिनो हि ब्रह्मचर्यादिक्लेशैः कथंचित्तरंति वयं त्वनायासेनैव तरिष्याम इत्याह । वातरशना इति । ऊर्ध्वमंथिन ऊर्ध्वरेतसः ॥ ४७ ॥ तावकैर्भक्तैः सह त्वद्वार्तया दुस्तरं तमः संसारम् ॥ ४८ ॥ क्ष्वेली परिहासः । द्वंद्वैकत्वम् ॥ ४९ ॥ एकांतिनमित्यादि स्वाभिप्रायावचने हेतुः ॥ ५० ॥ इति श्री भा० म० एकादशे श्री० टीकायां षष्ठोऽध्यायः ॥ ६ ॥ छ ॥ सप्तमे तूद्धवस्यात्मज्ञानसिद्ध्यै हरिः स्वयम् ॥ अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥ १ ॥ यदात्थ

अहं तु त्वामपि त्यक्तुं कथं शक्नुयामिति भावः ॥ ४४ ॥ न कथमपि त्यक्तुं समर्था इत्यर्थः ॥ * ॥ ० ॥ ४५ ॥ अत एव प्रार्थय इत्याह—त्यक्तुमिति । चर्चिताः 'चर्च—अलंकारे' ॥ * ॥ मायां जयेमेति—यदि साऽस्मान्प्रति विक्राम्यंती आयास्यति तर्ह्येतैरेवास्त्रैः प्रबलीभूय तां जयेम जेतुं शक्नुमः । न तु ज्ञानादिभिरित्यर्थः । परोक्षपूजादौ साधकभक्तानामप्युपभुक्तस्रगादिना तज्जयः सुप्रसिद्ध एव किं पुनः साक्षाद्वयमिति भावः ॥ ४६ ॥ वाता त्यक्ता रशना कौपीनबंधनसूत्रं यैस्ते वातरशनाः "वातस्त्यागेथ पवने व्याधिभेदे च हिंसने । रशना कटिसूत्रे च" इति कोशात् । श्रमणा भिक्षावृत्तयः ॥ * ॥ वातरसनेति—रसना शब्देन वस्त्रं लक्ष्यते, हिरण्यरसन इत्यत्र चतुर्थे तैस्तथा व्याख्यातत्वात् । वातरसनाद्यास्तैस्तैर्ज्ञानवैराग्यादिभिः ब्रह्माख्यं तव धाम "यत्परं परमं ब्रह्म सर्वं विभजते जगत् । ममैव तद्धनं तेजो ज्ञातुमर्हसि भारत ॥" इत्यर्जुनं प्रति त्वदुक्तेस्तवैव ज्योतिर्विशेषं ते यान्ति । सत्यम्, ते यान्तु वयं तु न यियासामः, किंतु त्वन्मुखचंद्रमधुरस्मितसुधापानमत्ता एव तिष्ठाम इति भावः ॥ ४७ ॥ अस्माकं तु न कापि चिंतेत्याह—वयमिति । द्वयोरन्वयः । उत्पन्नतत्त्वज्ञानोप्युद्धवः 'भ्रमन्तः कर्मवर्त्मसु' इत्युक्त्या स्वस्यावमतां वक्तीति यत्तत्सतां स्वभाव एव "आत्मनोऽवमतां ब्रूयुरुत्तमा अपि सर्वशः । कदाचिदेव स्वगुणान्स्निग्धेष्वेव न सर्वतः ॥" इत्युक्तेः ॥ * ॥ किञ्च—त्वदेकान्तभक्ता मायातरणं भक्तेः फलत्वेन नैवानुसंदधते वयं तु न तादृशा इति तादृशीं प्रौढिं कथं कुर्म इति दैन्येनैवात्मनि मायातितीर्षामारोप्याह—वयं त्विति । तुर्भिन्नोपक्रमे, वयं तु दासा अपि सख्यरसालंबिनस्त्वदाज्ञयापि ज्ञानाभ्यासमचिकीर्षव एवेति भावः । हे महायोगिन्निति—तव योगमायां मायां च नैव विविदिषाम इति भावः । तावकैस्त्वद्भक्तजनैः सहेति । ते खल्वस्मत्तुल्यस्वभावा एवेति तैरेवास्माकं साहित्यमुपपद्यते न वातरसनाद्यैरिति भावः ॥ ४८ ॥ उत्स्मितेक्षणं सस्मितवीक्षणम् । यदन्यल्लोकविडंबनं लोकानुकरणं तच्च स्मरंतस्तारिष्यामः ॥ * ॥ तत्तरणे वः कः प्रकार इत्यत आह—स्मरन्त इति । त्वदीयचरितश्रवणकीर्तनादिसुदर्शनास्त्रतेजसैवास्माकं तत्तरणं सुगममेवेति भावः । क्ष्वेलिः प्रेयस्या सह सौरतपरिहासः ॥ ४९ ॥ स्वाभिप्रायस्यावचने स्वीकारे । एकस्मिञ्श्रीहरावेवांतो निश्चय एकान्तः, सोऽस्यास्तीति तम् ॥ * ॥ एकांतिनमित्यादि स्वाभिप्रायावचने हेतुः ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कंधे षष्ठोऽध्यायः ॥ ६ ॥ अवधूतो दत्तात्रेयस्तस्येतिहासे उक्ता ये चतुर्विंशतिगुरवस्तेष्वष्टेत्यर्थः ( १ ) । ईदृगिच्छावंत एव महाभागा इति संबुद्ध्यभिप्रायः ॥ * ॥ यत् यदुकुलसंहारादिकं स्वधाम्नि तव नयनमात्थ । अंशेन बलदेवेन सह । हे महाभागेति—त्वमेव मदाश्रितज्ञानभागित्वेनोत्कृष्टभाग्योसि

मया निष्पादितं ह्यत्र देवकार्यमशेषतः ॥ यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः॥२॥कुलं वै शापनिर्दग्धं नंक्ष्यत्यन्योन्यविग्रहात्॥ समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥ ३ ॥ यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमंगलः ॥ भविष्यत्यचिरात्साधो कलिनापि निराकृतः ॥ ४ ॥ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ॥ जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥५॥ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबंधुषु ॥ मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गाम् ॥ ६ ॥ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ॥ नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥ ७ ॥

संहृत्यैतत्कुलमिति । स्वर्वासं वैकुंठवासं प्रति ॥ १ ॥ २ ॥ त्वं च सर्वत्यागेनात्मनिष्ठो भवेति वक्तुमाह कुलमिति त्रयेण ॥ ३ ॥ तदैवायं नष्टमंगलो भविष्यति । निराकृतो नितरामाक्रांतः ॥ ४ ॥ न वस्तव्यमेव त्वया ॥ ५ ॥ ६ ॥ ननु गुणदोषाभ्यां विषमे लोके कुतः समदृष्टिः स्यामत आह । यदिदमिति । मनआदि

यतो लोकानपि भाग्यवंतो विधास्यसि मत्तत्त्वोपदेशेन ‘ ग्राहयन्निह तिष्ठतु ’ इति तृतीयोक्तेः ॥ १ ॥ अंशेन निष्पादितं यदुकुलक्षयस्यावशिष्टत्वात् । यदर्थे देवकार्यार्थमहमशेषतः सामस्त्येनावतीर्ण आविर्भूतः ॥ * ॥ ० ॥ ॥ २ ॥ एतां द्वारकाम् । प्लावयिष्यति अंतर्द्धापयिष्यति । अर्थांतरांगीकारे तु “ अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः । अद्यापि श्रूयते राजन्द्वारकायामहर्निशम् ॥ ” इति पुराणांतरवाक्यं व्याकुप्येतेति ॥ * ॥ शापनिर्दग्धमित्यनुकरणाभिप्रायं वस्तुतस्तु शापेपि निर्गतं दग्धं देहो यस्मात्तथाभूतं सत् नंक्ष्यत्यदर्शनमेव प्राप्स्यतीत्यर्थः । प्लावयिष्यति चतुर्दिक्ष्वावारिष्यति न तु मध्येपि “ वर्जयित्वा महाराज श्रीमद्भगवदालयम् ” इति वक्ष्यमाणत्वात् ॥ ३ ॥ निजविग्रहमन्तर्द्धापयता मया यदा त्यक्तो भविष्यति तदैवेत्यर्थः । निराकृतास्तिरस्कृतः ॥ * ॥ तव स्वधामनयनं तु किञ्चिद्विलंबेनैव करिष्यामि यतो मुनिषु स्वोपदेशग्रहणाय संप्रति स्थापयिष्यामीत्यभिप्रेत्य तथोपदेष्टुमुपचक्रमे—यर्ह्येवेति । हे साधो मद्धर्मनिष्ठ “ नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥ ” इति तृतीयस्थतदुक्तेरिति **संदर्भः** ॥ ४ ॥ ० ॥ * ॥ न वस्तव्यम् एकत्र स्थानं बद्ध्वा न स्थेयम् ‘ समदृग्विचरस्व गाम् ’ इत्युक्तेः ॥ ९ ॥ मयि सर्वगतसच्चिदात्मनि मन आवेश्य विषमं नामरूपमववाध्य सम्यक् समं मां पश्यतीति समदृक् तथा चैवं मम तव विच्छेदाभाव इति भावः ॥ * ॥ अतस्तमुपलक्ष्य तदुपदेश्यान्प्रत्येवाह—त्वन्त्विति सप्तभिः ॥ * ॥ **विश्वनाथस्तु**—अत्रांतरे मनसि भगवान् किञ्चित्परामर्श—रुक्मिण्यादिविवाहे बाणासुराद्यसुरवधप्रसंगतस्तत्रतत्र बंधुमेलनप्रसंगतश्चेन्द्रप्रस्थमिथिलादिषु यातायातैर्मां दिदृक्षूणां भूतलस्थभक्तानां मनोरथो मया संपादितप्राय एव, पृथिव्या अधःस्थितानां बलिरविनंदनादीनामपि षड्गर्भानयनगुरुपुत्रानयनप्रसंगेन, ऊर्ध्वस्थानामदितिकश्यपादीनामपि पारिजाताद्याहरणप्रसंगेन, महावैकुंठस्थानामादिपुरुषभूमादीनामपि विप्रबालकानयनप्रसंगेन व्यंजितं मद्दर्शनं निष्पादितमेव, किन्तु बदरिकाश्रमवासिनां नरनारायणादिपरमहंसमहामुनीन्द्राणामेवं मद्दर्शनौत्सुक्यं न सफलीभूतं बभूव संप्रति तु सपादशतवर्षपर्यन्तमत्प्राकट्यमर्यादा च वृत्तेत्यतस्तत्र प्रस्थापयितुमयमुद्धव एव निरूपयितव्यः । अयं हि मत्तुल्यत्वान्मत्प्रतिमूर्तिरेव तेभ्य उपायनत्वेन देयः, मदीयभगवच्छब्दवाच्ययोर्ज्ञानवैराग्ययोरेकमेकं कणं मद्भक्तियोगं च महानर्घ्यं रत्नमिवादाय यास्यंस्तेषां मनोभीष्टं स्पष्टमेव पूरयिष्यति । यद्यप्यस्य मत्प्रेमपरिपूर्णस्य तदुत्थज्ञानवैराग्ये वर्तेते एव संप्रति मयोपदेष्टव्ययोर्ज्ञानवैराग्ययोर्नास्त्येवास्य जिघृक्षा तदपि मदिच्छायां सत्यां तत्राप्यस्य जिघृक्षा खल्वधुनैवोत्पत्स्यते तथैव, यद्यप्यस्य मद्विच्युतौ सद्य एव प्राणहानिस्तदपि मदिच्छाशक्तिरेव बलवती प्राणानस्य पालयित्वा तावद्दूरमप्येनं प्रापयिष्यति प्राप्स्यिकलोकालक्षितं मदंतिकेपि स्थापयिष्यतीति परामृश्य च श्रीमदुद्धवचेतसि ज्ञानवैराग्ययोर्भक्तियोगस्य च जिघृक्षां संचार्याह—त्वं त्विति । स्वजनबंधुषु यादवादिषु स्नेहं परित्यज्येति, तेषु च तत्स्नेहो द्विविधः—मत्परिचयात्प्रथमत एव स्वदेहसंबंधेनैकः, मत्संबंधोत्थो द्वितीयः । तत्र पूर्व एव त्वया त्यक्तुं शक्यः स एव मया त्यागे विधीयते न तूत्तरः त्वदशक्यत्वाद विगीतत्वाच्चेति भगवदाशय उद्धवेन ज्ञायत एव ॥ ६ ॥ स्वजनादिस्नेहत्यागः कथमिति चेत्तत्राह—यदिदिति । सुखदुःखादिजनकाः स्वजनादयोऽसत्याः स्वप्नवद्गंधर्वपुरवच्चेति । यद्वा—आक्षिप्य समाधत्ते—नन्विति ।

पुंसो युक्तस्य नानार्थो भ्रमः स गुणदोषभाक् ॥ कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥ तस्माद्युक्तेंद्रियग्रामो युक्तचित्त इदं जगत् ॥ आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥ ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ॥ आत्मानुभवतुष्टात्मा नांतरायैर्विहन्यसे ॥ १० ॥ दोषबुद्ध्यो भयातीतो निषेधान्न निवर्तते ॥ गुणबुद्ध्या च विहितं न करोति यथार्भकः ॥ ११ ॥

भिर्गृह्यमाणं मनोमयत्वान्मायेति विद्धि । तदपि न स्थिरं किंतु नश्वरं विद्धि ॥ ७ ॥ मनोमयत्वे हेतुः । पुंस इति । अयुक्तस्य विक्षिप्तमनसः । नानार्थो भेदविषयो भ्रमः स भ्रम एव गुणदोषभाक् । ननु वेदेनैव विधिनिषेधाभ्यां भेदस्य सत्यतोक्ता । न । भ्रमविजृंभितगुणदोषबुद्धेः पुंसः । कर्म विहितम् । अकर्म तल्लोपः । विकर्म निषिद्धमिति भिदा भेदः प्रोक्तः । अविद्यावद्विषय एव वेद इत्यर्थः ॥ ८ ॥ कथमात्मानि परिच्छिन्ने विततं जगदीक्षणीयं तत्राह । आत्मानमिति । मयि ब्रह्मणि तद्रूपेणेक्षस्व ॥ ९ ॥ नन्वेवं युक्तचित्तत्वेन कर्माकरणे देवादयो विघ्नान् कारिष्यंति तत्राह । ज्ञानेति । ज्ञानं वेदतात्पर्यनिश्चयः विज्ञानं तदर्थानुभवस्ताभ्यां सम्यग्युक्तस्तत् आत्मानुभवेनैव तुष्टचित्तो ऽतः शरीरिणां देवादीनामात्मभूतोंतरायैर्न प्रतिहन्यसे । अयं भावः । यावदनुभवं यथाश्रमं कर्माणि कुर्यादेव तदनंतरं सर्वेषामात्मभूतत्वान्न कोऽपि विघ्नानाचरति । तथाच श्रुतिः । " तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति ॥ " इति ॥ १० ॥ न चोत्पन्नज्ञानस्यापि यथेष्टाचरणप्रसंग इत्याह । दोषबुद्ध्येति । उभ

आदिना श्रोत्रादिग्रहः । गृह्यमाणं वस्तुजातम् । तदपि मनोमयमपि ॥ * ॥ ननु कदिशं समदक्त्वं तत्राह–यदिदमिति । यत् पृथिव्यादिकमस्ति तत्सर्वं जागरे मायाकल्पितत्वांशेन तुल्यमेव, स्वप्ने मनःकल्पितत्वांशेन सर्वं तुल्यमेवेति **विश्वनाथः** ॥ * ॥ अत्र **संदर्भः**–जागरे मायाप्रधानं स्वप्ने मनःप्रधानं विद्धि, अत एव नश्वरञ्च विद्धीत्यर्थः ॥ ७ ॥ विक्षिप्तमनसोऽधिष्ठानभानशून्यस्य । एकस्मिन्नात्मनि भेदविषयो नानात्वेन प्रतीतिः । अत्राक्षिपति–नन्विति । नेत्याह–भ्रमेण विजृंभिता विसृता गुणदोषौ इदं श्रेष्ठमिदं नेतिलक्षणौ धर्मौ तद्विषयिणी बुद्धिर्यस्य तस्य।विहितं नित्यकर्मादि । तल्लोपो विहिताकरणम् निषिद्धम् । पारदार्यादि । इत्यर्थ इति–अविद्यावान् विषयो गोचरो यस्य स तथा ' त्रैगुण्य विषया वेदाः ' इत्युक्तेः । "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य च" इत्युक्तेश्चेति भावः॥*॥ उक्तमेवार्थं प्रपञ्चयांत–पुंस इति । नानाविधोर्थो यो गुणदोषभाक् अयमर्थो गुणं भजत इत्युत्कृष्टः, अयमर्थो दोषं भजत इति निकृष्टः पुंसोऽयुक्तस्याज्ञानिनो भ्रमः, भ्रमप्रतीत इत्यर्थः । गुणप्रवाहपतितानां को वार्थ उत्कृष्टः को वार्थो निकृष्ट तदुक्तं चित्रकेतुना–"गुणप्रवाह एतास्मिन्कः शापः कोन्वनुग्रहः । कः स्वर्गो नरकः को वा ।किं सुखं दुःखमेव वा ॥ " इति । अन्यत्तैः ॥ ८ ॥ पुनराशंकते–कथमिति । यतोऽयुक्तचित्तादेरेव भ्रमो भवति तस्माद्धेतोः । आत्मदर्शनविक्षेपकरानिंद्रियादीन्नियम्य मद्रूपेणाहं ब्रह्मास्मीत्येवंरूपेणात्मानं पश्येत्यर्थः ॥ * ॥ तस्माद्युक्तेंन्द्रियग्रामो निरुद्धेद्रियवृंदः निरुद्धचित्तः सन्निदं सुखदुःखमयं जगदात्मनि भोक्तरि जीवे भोग्यत्वेन स्थितं पश्य । तं च भोक्तारमात्मानं मय्यधीश्वरे परमात्मनि नियम्यत्वेन स्थितं पश्य ॥ ९ ॥ पुनराशंकते ।:तदर्थानुभवो वेदार्थसाक्षात्कारः । ततश्च ज्ञानविज्ञानयुक्तत्वोत्तरम् । यतः शरीरिणामात्मभूतोऽतो हेतोः । अंतरायैर्देवादिरूपैः । अत्राशयमाह–अयं भाव इति । यावदनुभवमात्मानुभवपर्यंतम् । यथाश्रममाश्रमधर्माननतिक्रम्य । तदनंतरमात्मानुभवोत्तरम् । सर्वेषां देवादीनाम् । विघ्नाभावे प्रमाणमाह–तथा चेति । तस्यात्मविदः देवा अप्यभूत्यै विघ्नाद्याचरणासमृद्धये नेशते न समर्था भवंति, हि यत एषां देवानामपि स आत्मविदात्मा भवतीति, हनेत्यव्ययमप्यर्थे । इति श्रुत्यर्थः ॥ * ॥ ० ॥ १० ॥ न चेति–यथेष्टाचरणप्रसंग इत्यनेनान्वेति । प्राक्तनसंस्कारा

सर्वभूतसुहृच्छांतो ज्ञानविज्ञाननिश्चयः ॥ पश्यन्मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥ श्रीशुक उवाच ॥ इत्यादिष्टो भगवता महाभागवतो नृप ॥ उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥ १३ ॥ उद्धव उवाच ॥ योगेश योगविन्यास योगात्मन्योगसंभव ॥ निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १४ ॥ त्यागोऽयं दुष्करो भूमन्कामानां विषयात्मभिः ॥ सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ १५ ॥

यातीतो गुणदोषबुद्ध्यतीतोऽपि प्राक्तनसंस्कारान्निषेधान्निवर्तत एव किंतु न दोषबुद्ध्या विहितं च प्रायशः करोति न गुणबुद्ध्या । यथाऽर्भकः संकल्पविकल्परहितः किंचित्करोति कुतश्चिन्निवर्तते तद्वत् ॥ ११ ॥ एवंभूतस्य न पुनः संसार इत्याह । सर्वभूतेति । न विपद्येत न पुनः संसरेत् ॥ १२ ॥ १३ ॥ त्वं तु सर्वं परित्यज्ये त्याद्युपदेशमात्मनोऽयोग्यं मन्वानः पृच्छति । योगेशेति । योगफलदायिन् । योगविदां न्यासो नामातिगोप्यो निक्षेपविशेषः । यद्वा योगो विन्यस्यते क्रियते यस्मिन् । योगात्मन्योगे आत्मा प्रकटो भवति यस्य । योगस्वरूपेति वा । योगस्य संभवो यस्मात् । चतुर्भिरेतैः संबोधनैः स्वमहिम्ना केवलं त्वयोपदिष्टं न तु मदधिकारं पर्यालोच्येति द्योतितम् । तदाह । निःश्रेयसायेति।न चारोग्याद्यर्थं सर्वस्वदानादिवदयं त्यागः किंतु संन्यासलक्षणोऽप्रत्यापत्तिरूपः ॥ १४ ॥ १५ ॥

त्साधनदशाकृतमलिनवासनाक्षयाभ्याससंस्कारानुवृत्त्यैव न गुणबुद्ध्येति न श्रमफलप्राप्तिबुद्ध्या, किंतु साधनाभ्याससंस्कारानुवृत्त्यैव । अर्भको बालः ॥ * ॥ ० ॥ ११ ॥ एवंभूतस्योभयातीतस्य । न पुनः संसरेत्, भेदभ्रांत्यैव विपत्त्यादिरिति भावः ॥ * ॥ एवंभूतस्य जीवन्मुक्तस्य । ज्ञानविज्ञानाभ्यां परोक्षापरोक्षानुभवाभ्यामात्मविषयको निश्चयो यस्य स तथा । न संसरेज्जन्मादि नानुभवेत् ॥ १२ ॥ ० ॥ * ॥ महाभागवतत्वेन कृष्णाख्यपरतत्त्वस्य नित्यप्राप्तेस्तदुपदेशगौरवेणैव तत्त्वजिज्ञासुरित्यर्थः ॥ १३ ॥ न हि योगविदां किंचिदपि गोप्यं भवति सर्वत्रात्मदर्शित्वाद्भगवतस्तत्वाबालगोपालप्रसिद्धस्य गोपनासंभवादित्यत आह—यद्वेति । योगेऽष्टांगयोगे । न केवलमष्टांगयोग एव 'भक्त्या मामभिजानाति' इत्याद्युक्तेर्भक्त्यापि तत्प्राकट्यमस्तीत्यत आह—योगस्वरूपेति वेति । स्वमहिम्ना निजदयालुतया । तद्दयालुत्वम् । निःश्रेयसाय मोक्षाय । अयं त्वदुक्तः 'त्वं तु सर्वं परित्यज्य ' इत्यादिरूपः । आरोग्याद्यर्थम् "सर्वस्वदानात्सिध्यन्ति सकलास्सिद्धयो नृणाम्" इत्याद्युक्तेः। आदिना धनपुत्रादिग्रहः । न प्रत्यापत्तिः पुनः स्वीकारो रूपं स्वरूपं यस्य स तथा ॥*॥ आत्मनोऽयोग्यमिति—भगवता स्वत्यागात्स्वायोग्यतातिशयमननादित्यर्थः ।. निरुपमस्य भगवतो निक्षेपविशेषत्वेन वर्णनमनुचितमिवेत्यरुचौ—यद्वेति । "योगश्चित्तवृत्तिनिरोधः" योगे संप्रज्ञातसमाधावात्मा स्वरूपं प्रकटो ज्ञातो भवति यस्य । तदुक्तं पतंजलिना—" तदा द्रष्टुः स्वरूपेवस्थानम्" इति । अत्र प्रकटपदाध्याहारात्पक्षांतरम्—योगस्वरूपेति । योगोऽसंप्रज्ञातसमाधिः स्वरूपं निर्विकल्पकं यस्य स तथा । तदुक्तं पातंजले—"विरामप्रत्ययाभ्यासपूर्वकः संस्कारशेषोऽन्यः" इति । विरामप्रत्ययो नेतिनेतीत्यतदंशापवादस्तदभ्यासपूर्वोऽन्योऽसंप्रज्ञातसमाधिः, स च ब्रह्मात्मक एव । अभावस्याधिकरणात्मकत्वादित्यर्थः । योगस्य संभवः सुगमतयोत्पत्तिर्यस्माद्वयातात्तदप्युक्तं तत्रैव—"ईश्वरप्रणिधानाद्वा" इति । न त्वारोग्याद्यर्थमिति—कालपुरुषप्रतिग्रही सर्वस्वदानात् स्वप्राणान्रक्षति पुनश्च द्रव्यार्जनं करोतीति तदीयसर्वस्वदानवन्नायं संन्यासरूपस्त्यागः । पुनर्ग्रहणं प्रत्यापत्तिः । अप्रत्यापत्तिरूपः पुनरग्रहणस्वरूपः । 'भिक्षोरिन्द्रियलौल्यतः' इति पुनर्ग्रहणे वांताशित्वेन निन्दाश्रुतेरित्यर्थः । विषयाविष्टचित्तैस्त्वद्भक्तैरपि दुष्करः, अभक्तैस्तु सुतराम् । तदुक्तं त्वयैव—"युंजानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन्दृश्यते पुनरुत्थितम् ॥" इति मुंचकुंदं प्रति ॥ १४ ॥ त्यागस्य दौष्कर्यमाह—त्याग इति । त्वयि सर्वात्मनि अभक्तैः, छांदसो ङेर्लोपः संबुद्धिर्वा ॥ * ॥ ० ॥ १५ ॥

सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबंधे ॥ तत्त्वंजसा निगदितं भवता यथाहं संसाधयामि भगवन्ननुशाधि भृत्यम् ॥
॥ १६ ॥ सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे ॥ सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥ तस्माद्भवंतमनवद्यमनंतपारं सर्वज्ञमीश्वरमकुंठविकुंठधिष्ण्यम् ॥ निर्विण्णधीरहमु हवृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥

यं प्रति त्यागाद्युपदिष्टं सोऽहं मूढमतिः । कुतः ममेत्यहमिति च सानुबंधे पुत्रादिसहिते त्वन्मायया विरचिते आत्मनि देहे विगाढो निमग्नोऽतस्तत्तु भवता निगदितं यथाहमंजसा संसाधयामि तथा भृत्यं मामनुशाधि शनैः शिक्षय ॥ १६ ॥ मया संक्षेपत उक्तं विस्तरतस्त्वन्यान्पृच्छेति चेदत आह । सत्यस्येति । स्वदृशः स्वप्रकाशस्य सत्यस्यात्मन आत्मनो मां प्रति वक्तारं ते त्वत्तोऽन्यं नानुचक्षे न पश्यामि । स्वदृशः स्वतःसिद्धज्ञानात्त्वत्तोऽन्यमिति वा । कुत इत्यत आह । सर्व इति । बहिरर्थभावा विषयेष्वर्थबुद्धयः ॥ १७ ॥ केचिद्दुःशीला भवंति केचित्सेविताः फलकाले विनश्यंति केचिदज्ञाः केचिद्रक्षणेऽसमर्थाः केचित्तु स्थानाद्भ्रष्टास्तद्व्यावृत्त्यर्थमनवद्यमित्यादीनि पंच विशेषणानि । न अंतः कालतः पारं देशतश्च यस्य तम् । कालादिभिरकुंठो विकुंठलोको धिष्ण्यं स्थानं यस्य तम् । उ हे भगवन् । ह स्फुटम् । निर्वेदे हेतुः । वृजिनैर्दुःखैरभितप्तः । हकारगौरवाय वृकारो युक्त इव पठनीयः । नन्वनवद्यत्वादीनि कुतो मम तदाह । नारायणमिति । अनुकंपितामाह । नरसखं नरो जीवस्तस्य सखायं भवंतं शरणं

मूढमतित्वे हेतुं पृच्छति—कुत इति । अतो देहे विगाढत्वाद्धेतोः । तत् 'ज्ञानविज्ञानसंयुक्तः' इत्यादिनोक्तम् ॥ * ॥ स च विषयाविष्टचित्तोऽहमेव यतस्त्वन्मायारचिते देहे सानुबंधे निमग्न इति देहस्यांधकूपत्वमारोपितम्, तेन तदावेशत्याग एवादौ कार्यस्तदनंतरमेव ज्ञानाद्युपदेश इति ध्वनिः ॥ १६ ॥ आत्मन इति षष्ठी द्वितीयार्थे, तेन मामित्यर्थः । संभवत्वात्स्वदृश इति त्वत्स्थानिकादेशीभूतस्य त इत्यस्य विशेषणमत आह—स्वदृश इत्यादि । मनुष्येष्वसंभवेपि देवेषु कश्चिद्भवेद्देवेति चेदाह—विबुधेष्वपीति । सर्वत्र वक्तृभावे हेतुं पृच्छति—कुत इति ॥ * ॥ सत्यस्येति षष्ठीत्रयं कर्मणि । आत्मनः परमात्मनः । पुनरात्मनो मे मां प्रतीत्यर्थः । द्वितीयपक्षे—स्वदृश इति पञ्चम्यन्तं त इत्यस्य विशेषणम् ॥ १७ ॥ यतोन्यत्र वक्तैव न लभ्यते तस्माद्धेतोः । अकुंठोऽविकलः । निर्वेदे वैराग्ये । हकारगौरवाय हकारस्य गुरुत्वलाभाय । 'उक्ता वसंततिलका तभजा जगौ गः' इत्युक्तलक्षणवसंततिलकावृत्ते तृतीयस्थाने जगणो मध्यगुरुं विना नो निष्पद्यतेऽतो गुरुं विनापि गुरुवत्पठनीय आर्षत्वात् । स्वस्योक्तरूपतामाक्षिपति भगवान्—नन्विति । नारायणत्वात्तव सर्वं संगच्छत इति भावः । अनुकंपितां दयालुताम् ॥ * ॥ नारायणस्य महत्स्रष्ट्रादिपुरुषसमूहस्यापि परमाश्रयं तथापि नरसखं नरमात्रानुग्रहायावतीर्णम् ॥ १८ ॥

**श्रीभगवानुवाच ॥ प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ॥ समुद्धरंति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥ आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ॥ यत्प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविंदते ॥ २० ॥ पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ॥ आविस्तरां प्रपश्यंति सर्वशक्त्युपबृंहितम् ॥ २१ ॥ एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः ॥ बह्व्यः संति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥ अत्र मां मार्गयंत्यद्धा युक्ता हेतुभिरीश्वरम् ॥ गृह्यमाणैर्गुणैर्लिंगैरग्राह्यमनुमानतः ॥ २३ ॥**

प्रपद्ये ॥ १८ ॥ तदेवमसंभावनाविपरीतभावनाभ्यामुपदिष्टं तत्त्वमनवगाहमानं प्रति तन्निवृत्तये गुरूपदेशं विनाऽपि स्वान्वयव्यतिरेकाभ्यामेव तत्त्वप्रतिपत्तिर्भवतीति दर्शयितुमाह । प्रायेणेति । लोकतत्त्वस्य विचक्षणाः परीक्षकाः । अशुभाशयाद्विषयवासनातः ॥ १९ ॥ तदुपपादयति । आत्मनः पश्वादिशरीरेऽप्यात्मैव हिताहितज्ञाने गुरुः ॥ २० ॥ तत्र प्रत्यक्षं दर्शयति । पुरुषत्वे चेति । तथाच श्रुतिः । "पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नोऽथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानम्" इति ॥ २१ ॥ अतः पुरुषत्वं स्तौति । एकेति ॥ २२ ॥ अनुमानमाह । अत्र

तदेवमुक्तरीत्या । असंभावना हि नास्ति ब्रह्मेत्येवंरूपा चित्तवृत्तिः, विपरीतभावना हि ब्रह्म यथा शास्त्र उपदिष्टं तथा न किंत्वन्यथैवेत्येवंरूपा चित्तवृत्तिस्ताभ्याम् । अनवगाहमानमज्ञातवन्तम् । तन्निवृत्तयेऽसंभावनाविपरीतभावनानिवृत्तये । स्वस्यात्मनोऽन्वयव्यतिरेकाभ्यां हिताहिते प्रवृत्तिनिवृत्तिभ्याम् । तत्त्वस्य स्वरूपस्य प्रतिपत्तिर्ज्ञानम् । लोकतत्त्वे विश्वाधिष्ठाने विचक्षणा विचारदक्षा आत्मानं साक्षिप्रत्यक्चैतन्यमशुभाशयादाविद्यककोशसंघातात्सम्यक् समष्टिव्यष्ट्युपाधिबाधपूर्वकमुद्धरंति ब्रह्मरूपतामवधारयंतीति वा ॥ * ॥ अनवगाहमानमनिश्चिन्वन्तमुद्धवं प्रति । तत्रोपदिष्टार्थत्यागोऽसंभावना, सोहं ममाहमिति विपरीतभावना, ताभ्यां तन्निवृत्तयेऽसंभावनादिनिवृत्तये । हिते कर्मणि प्रवृत्तिरन्वयः, अहितान्निवृत्तिर्व्यतिरेकः । एवकारस्य व्यावर्त्यमाह—गुरूपदेशं विनापीति । तत्त्वप्रतिपत्तिरनुमानार्थापत्तिभ्यां शुद्धात्मज्ञानम् । प्रायेणेति तेषां विरलत्वमाह । लोकतत्त्वस्य जनयाथार्थ्यस्य । लोकतत्त्वविचक्षणा लोकभद्राभद्रहेतुविचारप्रवीणाः ॥ १९ ॥ तदात्मसमुद्धरणम् । पुरुषस्य मनुष्यशरीरं प्राप्तस्य यद्यतः असौ पुरुषः श्रेयः पुरुषार्थम् आत्मा मनो जीवो वा, अतो मनःपूर्वकं चक्षुषा कृष्यादिना व्रीह्यादिसंपल्लक्षणश्रेयःप्राप्तिदर्शनेन यागादिसाधनसामग्र्या स्वर्गादिश्रेयः प्राप्यत इत्यनुमीयत इति ॥ * ॥ तत आत्मनैवोद्धरणमुपपादयति साधयति । पुरुषस्य मनुष्यस्य तु आत्मा विशेषतो गुरुरिति गुर्वनुसरणे प्रवर्तक इत्यर्थः । श्रेयस्तत्त्वज्ञानमिति **संदर्भः** ॥ २० ॥ तत्र द्वयोर्मध्ये । धीराः शमादिसंपन्नाः । सांख्यं श्रवणमननतर्कविचारः, योगो निदिध्यासनं, तयोर्विशारदाः सर्वशक्त्युपबृंहितमपि तत्तज्जीवेशोपाधिबाधेनाविस्तरां नित्यापरोक्षं पश्यंति । अत्र प्रमाणमाह—तथा चेति । अतिशयेनाविराविस्तराम् । हि यतः स पुरुषः प्रज्ञानेन बुद्ध्या संपन्नतमोतिशयेन युक्तः । लोकालोकौ इह लोकपरलोकौ । अमृतं मोक्षम् । अग्रे स्पष्टम् ॥ * ॥ **दीपिका**—तत्र प्रत्यक्षानुमानयोर्मध्ये । पुरुषत्वे पुरुषदेहे । आत्मानमाविस्तरां प्रपश्यन्ति । तत्र च धीराः शास्त्रविचक्षणाः संतो मामपि पश्यन्ति । मनुष्यदेहे प्रमाणं श्रुतिः । पुरुषत्वे मनुष्यदेहे । आत्मा नितरां प्रकटो वर्तते । स हि मनुष्यदेहावच्छिन्न आत्मा प्रज्ञानेन प्रकृष्टज्ञानेन संपन्नतमः । विज्ञातम् अर्थविशिष्टतया विज्ञातं शब्दं वदति । विज्ञातं विचारितमुपादेयतया पश्यति । श्वस्तनं श्व इदमेव कर्तव्यमिति वेद । लोकालोकौ प्रकाशाप्रकाशौ स्वर्गनरकौ वेद । मर्त्येन मरणधर्मवता देहेन साधनं कृत्वा मोक्षमीप्सतीत्येवं संपन्नज्ञानेनार्च्यतमः । अथेत्यर्थांतरे । इतरेषां तद्व्यतिरिक्तानां पशूनामश्वादीनामशनापिपासे एव । तयोरेव ज्ञानम्, न तु शब्दार्थादिज्ञानमित्यर्थः ॥ २१ ॥ यतः सर्वलक्षणसम्पन्नः पुरुषोऽतो हेतोः ॥ * ॥ ० ॥ २२ ॥ मार्गणेऽन्वेषणे ।

अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ अवधूतस्य संवादं यदोरमिततेजसः ॥ २४ ॥

पौरुष्यां पुरि । युक्ता अप्रमत्ता अग्राह्यं ग्राह्येभ्योऽहंकारादिभ्यो व्यतिरिक्तं मामद्धा साक्षान्मृगयंति । मार्गणे प्रकारद्वयमाह । गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः । जडानां प्रकाशः स्वप्रकाशमेकं विना न घटत इत्यनुपपत्तिमुखेन लक्षकैः । तथा तैरेव लिंगैर्व्याप्तिमुखेनानुमानत ईश्वरं प्रवर्तकं मृगयंते । बुद्ध्यादिकरणानि कर्तृप्रयोज्यानि करणत्वा द्वास्यादिवदिति । तदुक्तम् । " भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः ॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥ " इति । न चैतावता आनुमानिक आत्मेति मंतव्यम् । देहादिव्यतिरिक्तत्वम्पदार्थशुद्धिमात्रस्यैवानुमानेन विवक्षितत्वात् ॥ २३ ॥ भूयोऽन्वयव्यतिरेकाभ्यामसंभावनादिनिवृत्तावितिहासमाह । अत्रापीति ॥ २४ ॥

प्रथमप्रकारस्तु 'गुणप्रकाशैरनुमीयते भवान्' इत्यत्र दशमस्कंध उक्त एव । द्वितीयमाह—तथेति । तैरेव बुद्ध्यादिभिरेव । व्याप्तिमुखेन यत्रयत्र कारणत्वं तत्रतत्र कर्तृप्रयोज्यत्वमित्येवंरूपेण । एतदपि प्रतिपादितं द्वितीयस्कन्ध इत्याह—तदुक्तमिति । एतावताऽनुमानज्ञाप्यत्वेनानुमानिकोऽनुमानगम्य एवात्मेति । न च ज्ञेयमिति देहाद्यतिरिक्तस्त्वंपदार्थो जीव इति ज्ञानस्यैवानुमानगम्यत्वात् ॥ * ॥ **दीपिका**—अतो ज्ञानसाधनत्वात्साक्षान्मां मृगयंति न तु जीवम् । अनुपपत्तिमुखेनार्थापत्तिप्रमाणेन । अनुपपद्यमानार्थदर्शनेन तदुपपादकमर्थांतरकल्पनमर्थापत्तिः । यथा—पीनो देवदत्तो दिवा न भुंक्तेऽत्र यथा दिवाऽभुंजानस्य रात्रिभोजनमंतरा पीनत्वानुपपत्त्या तदुपपादकं रात्रिभोजनं कल्प्यते रात्रौ भुंक्त इति, तथा जडानां बुद्ध्यादीनां प्रकाशमेकमात्मानमंतरा प्रकाशानुपपत्त्या तदुपपादकः स्वप्रकाश आत्मा कल्प्यते बुद्ध्यादीनां प्रकाशकः परमात्मास्तीति लक्षकैः प्रमाणांतरं दर्शयति—तथेति । तैर्बुद्ध्यादिभिरेव करणत्वेन लिंगैर्लीनस्य परमात्मनो गमकैर्हेतुभिरित्यर्थः । व्याप्तिमुखेन व्याप्तिव्यापारद्वारा । तत्र हेतुः—समानाधिकरणात्यंताभावात्प्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः, करणत्वं हि हेतुस्तत्समानाधिकरणस्तदधिकरणवृत्तिर्हि घटाद्यभावस्तत्प्रतियोगी घटादिरप्रतियोगि तु कर्तृप्रयोज्यत्वलक्षणं साध्यं तेन सहैकाधिकरणवृत्तित्वं करणत्वस्येति लक्षणसमन्वयः । अनुमानतः परामर्शात् । कर्तृप्रयोज्यत्वव्याप्यकरणत्ववत्ताज्ञानादित्यर्थः । बुद्ध्यादिकरणानीति पक्षः, कर्तृप्रयोज्यत्वं साध्यो धर्मः, करणत्वादिति हेतुः वास्यादिवदिति दृष्टान्तः । यत्रयत्र करणत्वं तत्रतत्र कर्तृप्रयोज्यत्वं यथा वास्यादिरित्यन्वयव्याप्तिः । यत्र कर्तृप्रयोज्यत्वं नास्ति न तत्र करणत्वं यथात्मेति व्यतिरेकव्याप्तिस्तथा च स्वतंत्रः कर्ता परमेश्वर इति सिद्धम् । एतावतानुमानेनान्वेषणमात्रेण । वैशेषिकादिसंमतः केवलानुमानगम्य आत्मेति न मंतव्यम्, "मंतव्यः" इति श्रुत्या देहादिभ्यो व्यतिरिक्तत्वस्य त्वंपदवाच्यस्येश्वराभेदेन या शुद्धिरसंभावित्वं तावन्मात्रस्यैवानुमानेन विवक्षितत्वादित्यर्थः । उपलक्षणं चैतत् शास्त्रानुसारिलिंगस्यापीश्वरसाधने विहितत्वादिति ॥ * ॥ **विश्वनाथस्तु**—पूर्वोक्तानुमानेनास्वतंत्रकर्ता जीवोऽनुमीयते, तथा प्रयोजकः स्वतंत्रोंतर्यामी च कथंचिदनुमीयते न तु कृष्णः स्वयं भगवानहम्, मम तर्कातीततद्रूप्यगुणलीलैश्वर्याणामप्यतर्क्यत्वादिति ॥ २३ ॥ पुनरन्वयव्यतिरेकाभ्यां हिताहितस्वीकारपरित्यागाभ्यामसंभावनादिनिवृत्तौ । इह्यादिना संशयादिग्रहः । आत्मार्थमेव हिते प्रवर्ततेऽहितान्निवर्तते चेति प्रवृत्तिनिवृत्तिभ्यामात्मा संभाव्यते निःसंशयत्वेन । तथा च—यत्र हिताहितप्रवृत्तिनिवृत्तित्वं तत्रात्मत्वं यत्रैतन्न तत्रात्मत्वमपि न, यथा घटादावित्थमत्रान्वयव्यतिरेकौ ज्ञेयौ, " व्यतिरेको निवृत्तिः स्यात्प्रवृत्तिरन्वयः स्मृतः " इत्यभियुक्तोक्तेः । अत्रापि पुरुषशरीरेऽहंमार्गणेन सुलभ इत्यस्मिन्नर्थे । इतिहासं पुरावृत्तम् । अस्यैव विवरणं—पुरातनमिति । 'स कीचकैर्मारुतपूर्णरंध्रैः' इतिवद्विशिष्टवाचकानां पदानां सति विशेषणसमवधाने विशेष्यमात्रपरतायाः स्वीकारादिति समाधेयम् । अमिततेजसोऽनल्पबलस्य " तेजो बले प्रभावे च ज्योतिष्यार्चिषि रेतासि " इति कोशात् ॥ * ॥ अत्राप्यनुमानगम्यत्वेप्यंतर्यामिस्वरूपस्य मम प्राप्तौ ॥ २४ ॥

अवधूतं द्विजं कंचिच्चरंतमकुतोभयम् ॥ कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥२५॥ यदुरुवाच ॥ कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ॥ यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥ २६ ॥ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ॥ हेतुनैव समीहंत आयुषो यशसः श्रियः ॥ २७ ॥ त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ॥ न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥२८॥ जनेषु दह्यमानेषु कामलोभदवाग्निना ॥ न तप्यसेऽग्निना मुक्तो गंगांभःस्थ इव द्विपः ॥ २९ ॥ त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानंदकारणम् ॥ ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥ श्रीभगवानुवाच ॥ यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ॥ पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥ ३१ ॥ ब्राह्मण उवाच ॥ संति मे गुरवो राजन्बहवो बुद्ध्युपाश्रिताः॥ यतो बुद्धिमुपादाय मुक्तोऽटामीह तान्छृणु॥३२॥ पृथिवी वायुराकाशमापोऽग्निश्चंद्रमा रविः॥ कपोतोऽजगरः सिंधुः पतंगो मधुकृद्गजः॥३३॥

॥ २५ ॥ सुविशारदा अतिनिपुणा सर्वलोकविलक्षणा ॥ २६ ॥ सर्वलोकवैलक्षण्यमेवाह । प्राय इति । धर्मादिविवित्सायामात्मविचारे च मानवाः समीहंते प्रवर्तंते तत्रापि आयुरादेर्हेतुना कामनयैव ॥ २७ ॥ त्वं तु न कस्यचित्कर्मणः कर्ता भवसि । न किंचिदीहसे इच्छसि । नन्वशक्त्याऽज्ञानेन वाऽनैपुण्येन वा विरूपत्वेन वाऽवाग्मितया वा औदासीन्यं घटत एव नेत्याह कल्प इत्यादिना ॥ २८ ॥ महानानंदश्च तव कुत इति पृच्छति । जनेष्विति ॥ २९ ॥ स्पर्शविहीनस्य विषयभोगरहितस्य । अत्र हेतुः । केवलात्मनः कलत्रादिशून्यस्य ॥ ३० ॥ ३१ ॥ बुद्ध्यैवोपाश्रिताः स्वीकृता न तूपदेशेन । अटामि पर्यटामि ॥ ३२ ॥ गुरूनाह । पृथिवीति ॥ ३३ ॥

काञ्चिददृष्टपूर्वम् ॥ * ॥ द्विजं दत्तात्रेयम् । 'योगर्द्धिमापुरुभयीं यदुहैहयाद्याः ' इति द्वितीयोक्तेः । धर्मवित्परमहंसधर्मज्ञः ॥ २९ ॥ अकर्तुरशनाद्यर्थं प्रवृत्तिशून्यस्य, निषिद्धाचरणहीनस्य वा । यां बुद्धिम् ॥ * ॥ इयं बुद्धिः, कुत उपलब्धेति शेषः। आदाय प्राप्य ॥२६॥ बालवत्संचरणं ज्ञानार्थमेव किन्न स्यादिति चेदाह—नेत्थं मनुष्याः ज्ञानार्थं यतंतो दृष्टाः किंतु विवित्सायां सत्यां ते धर्मादिष्वेव प्रवर्तमाना दृश्यंत इत्याह—प्राय इति । स्वामिनस्तु धर्मादीनां विवित्सातः पृथक्प्रयोजनं मन्यमाना आहुः—तत्रापीति । न केवलं निष्कामा प्रवृत्तिरपित्वायुराद्यर्थैक्येव । तत्रापि प्रवृत्तावपि ॥ * ॥ प्राय इति निष्कामप्रवृत्तेर्दौर्लभ्यमाह । अत्रापि आत्मविचारप्रवृत्तावपि । अत्र विवित्सापदस्य स्वाश्रयसमवायेन विचारो लक्षणा ॥ २७ ॥ शक्त्यादिसाधनसामग्र्यप्रभावादेवमवस्थानमिति चेत्तत्राह—त्वं त्विति । कल्पः समर्थः । कविर्विज्ञः । दक्षोतिनिपुणः । सुभगः सुरूपः । अमृतमिव भाषत इत्यमृतभाषणः । पिशाचपदेन तद्वस्तो लक्ष्यते ॥ * ॥ अशक्त्येति—कर्मणि पश्चादीनामशक्त्या सामर्थ्याभावेन तत औदासीन्यं घटते । त्वं त्विति—कल्पः समर्थः । एवमन्येपि कव्यादिशब्दा अज्ञानादिप्रतियोगितया व्याख्येयाः । कविरिति नाज्ञानेन । दक्ष इति न त्वनैपुण्येन । सुभग इति—न तु कौरूप्येण हेतुना वनितादिकन्नेच्छसीत्यर्थः । मितभाषण इति—न त्ववाग्मितया केनापि सह न संलापमिच्छसीत्यर्थः । किंत्वेतादृशोऽपि जडादिवद्वर्तसे ॥ २८ ॥ ० ॥ * ॥ किंच तरुणस्यापि कामादिसंतापो न कुत इति पृच्छति ॥ २९ ॥ अत्र विषयभोगराहित्ये । कलत्रादिशून्यस्य शरीरमात्रपरिग्रहस्य ॥ * ॥ अत्र भोगरहितत्वे ॥ ३० ॥ ब्रह्मण्येनेत्यधिकारद्योतकविशेषणम् ॥ * ॥ 'मुखमेव वार्तां कथयति' इति न्यायेन दृश्यमान एतावानानंदश्च तव कुत इति । ब्रह्मण्येन तत्परिचर्ययैव तद्वशीकारिष्णुनेत्यर्थः । सुमेधसेति स्वबुद्धिप्रीणिततन्मनस्केनेति तत्प्रतिवचने हेतुः ॥ ३१ ॥ यतो येभ्यः । बुद्धिं शिक्षावृत्तिम् । मुक्तः शरीराभिमानमुक्तः । तान् गुरून् ॥ * ॥ मुक्तः सांसारिकतापात् ॥ ३२ ॥ कपोतः पक्षिविशेषः " कपोतः स्याच्चित्रकंठपारावतविहंगयोः " इति मेदिनी । अजगरो महासर्पः । अजो नित्यो गरो विषं यस्य स तथा, अजस्य छागस्य गरो गरणं यस्येति वेति । मधु करोति संपादयतीति । यद्वा—मधु कृंतति पुष्पादिभ्यः छिनत्तीति मधुकृद्भ्रमरः मधुमक्षिका ॥*॥०॥३३॥

मधुहा हरिणो मीनः पिंगला कुररोऽर्भकः ॥ कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥ एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ॥ शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ ३५ ॥ यतो यदनुशिक्षामि यथा वा नाहुषात्मज ॥ तत्तथा पुरुषव्याघ्र निबोध कथयामि ते ॥ ३६ ॥ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ॥ तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥ ३७ ॥ शश्वत्परार्थसर्वेहः परार्थैकांतसंभवः ॥ साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ ३८ ॥ प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेंद्रियप्रियैः ॥ ज्ञानं यथा न नश्येत नावकीर्येत वाङ् मनः ॥ ३९ ॥

शोभनं रूपं कीटस्य करोतीति सुपेशकृत् ॥ ३४ ॥ मे मयाऽऽश्रिताः । तदाह । एतेषां वृत्तिभिरात्मनः शिक्षाः शिक्षणीयानर्थान्हेयोपादेयादीनन्वशिक्षमनुशिक्षितवानस्मि ॥ ३५ ॥ नाहुषो ययातिः ॥ ३६ ॥ क्षितेः क्षमां शिक्षितवानस्मीत्याह । भूतैरिति । आक्रम्यमाणः संपीड्यमानः । तद्विद्वान्भूतानां दैववशवर्तित्वं विद्वान् । व्रतं नियमम् ॥ ३७ ॥ पर्व तरूपा वृक्षरूपा च या पृथिवी तस्याः शिक्षितमाह । शश्वदिति । सर्वदा परार्थाः परोपकारार्थाः सर्वा ईहा यस्य सः । परार्थ एव एकांततः संभवो यस्य सः । भूभृत्तः पर्वतात् । तस्य हि वृक्षतृणनिर्झरप्रस्रवक्रियाः परार्था एव यथा तद्वत् । तथा नगशिष्यो वृक्षशिष्यः सन्परात्मतां पराधीनात्मताम् । वृक्षो यथा परैरवखंड्योत्पाट्य वा नयनमप्यनुमन्यते तद्वत् ॥ ३८ ॥ वायुरपि द्विविधः प्राणो बाह्यश्च । तत्र प्राणस्य गुरुत्वमाह । प्राणवृत्त्येति । प्राणो ह्याहारादिमात्रेण प्रवर्तते रूपरसादीनिंद्रियविषयांस्तु नापेक्षते तथा मुनिरपि भवेदित्यर्थः । प्राणवृत्तेरकरणे मनोवैकल्येन ज्ञाननाशः स्यादतो देहनिर्वाहः कर्तव्यः । गुणलिप्सायां तु वाङ्मनश्च विक्षिप्येतातो नाधिकं लिप्सेदित्याह ।

मधुहा मधुग्रहीता सरघापटलादिभ्यः । पिंगला तन्नाम्नी वेश्या । कुरर उत्क्रोशः । कुमारी विप्रकन्या । शरकृद्बाणसारल्यविधाता । सुपेशकृद्भृंगी, चातुर्मास्ये प्रायस्तस्या उद्भवो भवतीति ॥ * ॥ ० ॥ ३४ ॥ एते पृथिव्यादयः ॥ * ॥ ० ॥ ३५ ॥ यतो यस्मात्पृथिव्यादेः । यद्वर्तनम् । 'शिक्ष–विद्योपादाने' भौवादिक आत्मनेपदी, परस्मैपदमार्षम् । शिक्ष इत्यर्थः । ते तुभ्यम् ॥ * ॥ ० ॥ ३६ ॥ मार्गाद्ब्रह्मात्मानुसंधानलक्षणात् । नियममचलत्वम् । अत एव पृथिव्या अचलेति नामांतरम् ॥ * ॥ ० ॥ ३७ ॥ यद्वा–परेषां गुरुदेवद्विजसज्जनानामर्थे आत्मनः सर्वेहां सकलचेष्टां संभवं वृद्धिं च "सज्जनार्थेनुमन्येत ऐहिकीं वृद्धिमात्मनः" इत्याद्युक्तेः ॥ * ॥ परार्थाः सर्वा ईहा भूधारणनिर्झरोत्क्रमणस्वोत्पन्नरत्नादिप्रदानरूपा चेष्टा यस्य भूभृत इति । शिक्षेदेवंभूतो भवेत् । परात्मतां परेष्वेवार्पित आत्मा येन तस्य भावस्तत्ता ताम् । वृक्षं खलु स्थानात्स्थानांतरं नीत्वा यदारोपयति सेचनादिकं च करोति तत्र सोऽनुमन्यत एव न तु विप्रतिपद्यत इति तथा योगी भवेत् । पर्वतादत्र विशेषो द्रष्टव्यः ॥ ३८ ॥ इत्यर्थ इति–यावता यथाकथंचिच्छरीरनिर्वाहो भवेत्तावदेव गृह्णीयादिति भावः । यतो ज्ञानार्थं देहधारणमावश्यकमतो हेतोः । यतोधिकेच्छा विक्षेपिकाऽतो हेतोः ॥ * ॥ प्राणस्य वृत्तिराहारमात्रम् । इंद्रियप्रियै रूपादिना चक्षुरादिलालनैः न विक्षिप्येतेति, अतिरूक्षेणासंस्कृतेनाहारेण वाङ्मनः वाङ् न निःसरेत् मनोपि विक्षिप्तं स्यादेवमतिस्निग्धेप्यालस्यशुक्रादिवृद्ध्या वाङ्मनसयोर्विक्षोभ इति तथा न कुर्यात्, किंतु

विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः ॥ गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ ४० ॥ पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्न युज्यते योगी गंधैर्वायुरिवात्मदृक् ॥ ४१ ॥ अंतर्हितश्च स्थिरजंगमेषु ब्रह्मात्मभावेन समन्वयेन ॥ व्याप्त्याऽव्यवच्छेदमसंगमात्मनो मुनिर्नभस्त्वं विततस्य भावयेत् ॥ ४२ ॥

ज्ञानमिति । नावकीर्येत न विक्षिप्येत ॥ ३९ ॥ विषयान्सेवमानोऽपि तेष्वनासक्तिं बाह्याद्वायोः शिक्षेदित्याह । विषयेष्विति । नानाधर्मेषु शीतोष्णादिधर्मकेषु । न हि वायुर्वने दहने वा सज्जते तद्वत् ॥ ४० ॥ यथा वायुर्गंधादिधर्मयोगेन प्रतीयमानोऽपि वस्तुतो न तद्योगी एवं देहादिधर्मयोगेनाहंप्रत्ययेन प्रतीयमानोऽप्यात्मा न तद्धर्मवानिति संभावितमिति । वायोरेव शिक्षितमित्याह । पार्थिवेष्विति । तद्गुणाश्रयो देहधर्मान्बाल्यादीनाश्रित्य वर्तमानो गुणैस्तैरेव ॥ ४१ ॥ आकाशाच्छिक्षितं संभावनाद्वयमाह अंतर्हितश्चेति द्वयेन । अंतर्हितश्च देहांतर्गतोऽपि मुनिरात्मनो देहाद्यसंगमत एवाव्यवच्छेदं च भावयेत् । कुतः । स्थिरजंगमेषु समन्वयेन या व्याप्तिस्तया । किं मणिषु सूत्रस्येव व्याप्तिः । न । विततस्य सर्वगतस्य । तत्कुतः । ब्रह्मात्मभावेन ब्रह्मस्वरूपभावनया । “ तत्त्वमसि ” इति श्रुतेः । नन्वेतत्सर्वं कथं संभवति तत्राह । नभस्त्वं तत्तुल्यत्वं संभावयेत् । यथा नभसः सर्वगतस्य न घटादिभिः संगः परिच्छेदो वा एवमात्मनोऽपि संभवतीति ॥ ४२ ॥

नातिरूक्षं नातिस्निग्धमश्नीयादिति । आदिना गुरुत्वलघुत्वोत्कर्षनिकर्षादिग्रहः । देहादीनां ये गुणाः कार्श्यादयस्तेषामहंप्रत्ययेनाश्रयोपि तैरसंगत्वाद्वस्तुतो न युज्येत ॥ ३९ ॥ तेषु विषयेषु । गुणदोषाभ्यां व्यपेत आत्मा बुद्धिर्यस्य स तथा । तद्वद्वायुवत् ॥ * ॥ ० ॥ ४० ॥ तद्योगी गंधादियोगी । एवं वायुवत् । तद्धर्मवान्देहादिधर्मवान् । संभावितं विचारितम् । यथा वायुः पार्थिवेषु पुष्पादिषु आविशन्नपि तद्गुणसुरभ्याद्याश्रयत्वेन प्रतीतोपि गंधैर्न युज्यते न तद्वान्भवति गंधस्य वाय्वानीततत्तत्सूक्ष्मावयवाश्रितत्वात् । एवमात्मा पार्थिवदेहेष्वाविशन्नपि तद्गुणाश्रयत्वेन स्थौल्यकार्श्यादिना स्फुरन्नपि तद्गुणैर्न युज्यत इति ॥ * ॥ ० ॥ ४१ ॥ अत एवासंगत्वादेव । अव्यवच्छेदं व्यवच्छेदो भेदस्तद्राहित्यं च । अत्र हेतुं पृच्छति–कुत इति । किमिति वितर्के । नेत्याह–तत्सर्वगतत्वम् । अत्राशंकते–नन्विति । एतदंतर्हितत्वादिकम् । समन्वयेन उपक्रमादितात्पर्ययुक्तप्रमाणेन संबन्धेन वा “ सोपक्रमादिमाने च संबंधे च समन्वयः ” इति निरुक्तिः ॥ * ॥ एकस्य सजातीयभेदरहितस्याद्वितीयस्य विजातीयभेदरहितस्य । अत एवासंगतत्वादेव । अव्यवच्छेदमपरिच्छिन्नत्वम् । समन्वयेनाधिष्ठानतयानुगमेन । तत् जीवस्य विततत्वम् । तत्त्वमसीति–तत्पदेनेश्वर उच्यते, त्वंपदेन जीवश्च, असिपदेन ब्रह्म । तत्र मायोपहितं चैतन्यं सर्वज्ञं सर्वकारणम्, अविद्योपहितं चैतन्यं किंचिज्ज्ञं जगत्सृष्ट्याद्यशक्तमिति तयोरैक्याभावात् मुख्यार्थस्य बाधः विशिष्टवाचकस्य शब्दस्य विशेष्यांशेपि वाचकतया कथंचिद्योगः, ऐक्यं तु प्रयोजनं सोऽयं देवदत्त इतिवन्मायाविद्याविशेषणपरित्यागेनानुगतचिन्मात्रोपादा

तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ॥ न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान् ॥ ४३ ॥ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् ॥ मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥ ४४ ॥ तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ॥ सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ ४५ ॥ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छताम् ॥ भुंक्ते सर्वत्र दातॄणां दहन्प्रागुत्तराशुभम् ॥ ४६ ॥ स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ॥ प्रविष्ट ईयते तत्तत्सरूपोऽग्निरिवैधसि ॥ ४७ ॥

किंच कूटस्थस्यात्मनो नागमापायिदेहादिसंबंध इत्याह। तेजोबन्नमयैः तेजश्च आपश्चान्नं पृथिवी च तन्मयैः कालसृष्टैर्गुणैर्देहादिभिः पुमान्न स्पृश्यत इति नभोवत्संभवतीति ॥ ४३ ॥ स्वच्छत्वादिभिर्गुणैरुदकं जगत्पुनातीति तद्गुणा मया शिक्षिता इत्याह । स्वच्छो निर्मलः । प्रकृतितः स्वभावतः । स्निग्धो जनेष्वनुरागवान् । माधुर्यो मधुरालापी । तीर्थभूस्तीर्थस्थानम् । अपां मित्रमुदकतुल्यः । अघादिति पाठे सखायं पापात्पुनाति । स्वच्छत्वादिगुणैरर्थादुदकसादृश्यं ज्ञातव्यम् ॥ ४४ ॥ अग्नेः शिक्षितमाह । तेजस्वीति । ज्ञानातिशयात् । विशेषतस्तपसा दीप्तः । दुर्धर्षोऽक्षोभ्यः स चासावुदरभाजनश्चापरिग्रहः । युक्तात्मा मुनिः ॥ ४५ ॥ अग्नेरेव शिक्षांतरमाह । क्वचिदिति । यथाऽग्निः परेच्छयैव हविर्गृह्णाति तथा मुनिरित्याह । दातॄणामिति । प्रागुत्तराशुभं भूतं भविष्यच्च पापम् ॥ ४६ ॥ आत्मनो देहोपाधिकमेवोच्चनीचत्वादि

नेन भागलक्षणया जीवेपि ब्रह्मस्वरूपभावनयावितततत्वोपपत्तिरित्यर्थः । एतदसंगत्वमपारिच्छिन्नत्वम् ॥ ४२ ॥ अन्यदाकाशशिक्षितमाह—किञ्चेति । यद्वन्नभस्तद्वत्पुमान् ॥ * ॥ ० ॥ ४३ ॥ अद्भ्यः शिक्षितमाह—स्वच्छः स्वभावतः प्रकृतितः "प्रकृतिः पंचभूतेषु स्वभावे मूलकारणे" इति यादवः । तीर्थवच्छोधकः सर्वतीर्थाश्रयत्वात् "मुनयः सर्वतीर्थानां निवासो हारिचिंतनात्" इत्याद्युक्तेः । 'अघान्मित्रम्' इति पाठे स्वीकृते मूलेऽप्छब्दानुपलंभेप्यर्थात्तत्सादृश्यमिति ध्येयम् ॥ * ॥ 'मुनिः पुनात्यघान्मित्रम्' इति पाठांतरम् । तत्र स्वच्छादयो गुणा जल उपलभ्यंत इत्यर्थात्तात्पर्याज्जलसादृश्यं ज्ञेयम् । पाठांतरे मित्रसखायमित्यर्थः ॥ ४४ ॥ पक्षेऽर्चिष्मत्यतस्तेजस्वी तपसा कृच्छ्रादिनाऽन्यत्र संतापहेतुज्वालया अक्षोभ्यः कोपयितुमनर्हः पराभवितुमयोग्य इति यावत् "पराभवो वर्षणं स्यादत्रज्ञानमथापि वा । न तत्सत्सु सदा कुर्यात्सहासाशयनं तथा ॥" इत्युक्तेः । एवंविधो ज्ञानी सर्वभक्षोपि मलं भक्ष्यदोषं नादत्ते "सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात्" इति न्यायात् । सर्वान्नानुमतिश्च प्राणात्यय एवेति सावधारणमिदं सूत्रम् । परस्यामापदि सर्वमन्नं सुरावर्जं विद्वांसमविद्वांसं प्रति चादनीयत्वेनानुमतम्, न स्वस्थं प्रति तद्दर्शनात् । अभक्ष्यभक्षणस्यापत्काल एव श्रुतौ दर्शनादित्यर्थः । तथाहि—अटचीहतेषु कुरुष्वित्येतास्मिन्ब्राह्मणो चाक्रायणः किलर्षिः कुरुदेशे दुर्भिक्षे जाते क्षुत्पीडितो देशांतरमागतः कदाचिद्धस्तिपालकदेशं सन्निविष्टः, तेन हस्तिपालकेन दत्तानर्द्धभक्षितान्कुलित्थान्माषान् भक्षितवान् । तेनोदपात्रं गृहाणेत्युक्ते सत्युच्छिष्टं न मे पीतं स्यादिति प्रतिषिद्धम् । किमेते माषा उच्छिष्टा नेति हस्तिपकेनोक्ते नेत्यत्र हेतुमाह चाक्रायणः—कुल्माषभक्षणं यद्यहं न कुर्यां तर्हि मे जीवनमेव न स्यात्, उदपानं तु तटाकादिषु स्वतो भविष्यतीति । एवमिभोच्छिष्टान्माषान्खादित्वा शिष्टाज्ञायार्थं ददौ, तथा च भर्तुः स्वभावज्ञया निहितानुत्तरादिनेपि भक्षितवानिति श्रुतम् । एवं स्वपरोच्छिष्टपर्युषितान्नभक्षणं दर्शयंत्याः श्रुतेरयं भावः—परस्यामापदि प्राणनिर्वाहार्थमभक्ष्यमपि भक्षणीयं स्वस्थावस्थायां विदुषापि तन्न कर्तव्यमिति । अटची पाषाणवृष्ट्यो रक्तवर्णाः क्षुद्रपक्षिविशेषा वा ग्राह्याः ॥ * ॥ ० ॥ ४५ ॥ यथाऽग्निः काष्ठेषु छन्नो गुप्तः क्वचिच्च स्पष्टः, तथा मुनिः कुसंगे छन्नः मुमुक्षुषु सज्जनेषु स्पष्टः। अग्निः कर्मिणामयं मुनिर्मुमुक्षूणामुपास्यो दातॄणां प्रागुत्तराशुभं दहन्सर्वत्र भुंक्ते । "हुत्वाग्नौ मुच्यते पापाद्दत्वान्नं ज्ञानिने तथा" इत्युक्तेः ॥ * ॥ ० ॥ ४६ ॥ तस्यैव शिक्षांतरमाह—स्वमायया स्वेच्छाधीनप्रकृत्या वा मनुष्येष्वर्थ

विसर्गाद्याः स्मशानांता भावा देहस्य नात्मनः ॥ कलानामिव चंद्रस्य कालेनाव्यक्तवर्त्मना ॥ ४८ ॥ कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ ॥ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ॥ ४९ ॥ गुणैर्गुणानुपादत्ते यथाकालं विमुंचति ॥ न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥ ५०॥ बुध्यते स्वेन भेदेन व्यक्तिस्थ इव तद्गतः ॥ लक्ष्यते स्थूलमतिभिरात्मा चावास्थितोऽर्कवत् ॥ ५१ ॥

न स्वाभाविकमित्यग्निदृष्टांतेन संभावितमित्याह । स्वमाययेति । स्वमायया स्वाविद्यया सृष्टं सदसल्लक्षणं देवतिर्यगादिरूपं वा विप्रशूद्रादिरूपं वा ॥ ४७ ॥ आत्मनो जन्मादिषड्विकाराभावश्चंद्रदृष्टांतेन संभावित इत्याह । विसर्गाद्या इति । विसर्गो जन्म । श्मशानं नाशः । तत्रेयं ज्योतिःशास्त्रप्रक्रिया । आप्यमंडलं चंद्रस्तेजोमयं मंडलमादित्यस्तयोरेकनक्षत्रावस्थाने चंद्रो न दृश्यते चक्षुष आदित्यमंडलेन समदेशस्थितेन व्यवधानात् सा अमावास्या । अथ षष्टिघटिकाभिश्चंद्रो नक्षत्रांतरं गच्छति । आदित्यस्तु त्रयोदशभिरहोरात्रैः । अतः प्रतिपदमारभ्य विषमस्थितस्यादित्यमंडलस्य पंचदशः पंचदशो भाग आप्यमण्डले प्रतिबिंबितो दृश्यते सा कलेत्युच्यते । एवं पंचदशेऽह्नि त्रयोदशभिर्नक्षत्रैरंतरमिति राशिचक्रस्य सप्तविंशतिनक्षत्रात्मकस्य मध्ये संमुखौ चंद्रादित्यौ तिष्ठतस्तदा संपूर्णं प्रतिबिंबं भूछायालांछितं दृश्यते सा पौर्णिमा । तस्याममावास्याप्रतिबिंबेन सह षोडशकलश्चंद्र उपचर्यते । ततः पुनः प्रतिपदमारभ्य मंडलयोर्विषमीभावात्कलाह्रासः । तत्र यथा कलानामेवोत्पत्त्यादयो नाप्यमंडलस्य तथात्मनोऽपीत्याह । कलानामिवेति ॥ ४८ ॥ सिंहावलोकनेनाग्निदृष्टांतेनैव देहानां क्षणभंगुरतया वैराग्यं शिक्षितमित्याह कालेनेति । ओघवद्वेगो यस्य तेन । आत्मनः संबंधिनां भूतानां देहानामित्यर्थः । अर्चिषां ज्वालानाम् ॥ ४९ ॥ आदित्याच्छिक्षितमाह द्वयेन । गुणैरिति । गुणैरिंद्रियैर्गुणान्विषयानुपादत्ते यथाकालमर्थिन्यागते सति विमुंचति च न तेषु युज्यते दत्तमिति वाऽभिनिवेशं न करोति । गोभिः रश्मिभिर्गाः जलानि गोपतिः सूर्यो यथा ॥ ५० ॥ स्वतो भेदशून्यस्याप्यात्मनो भेदप्रतीतिरुपाधिवशादित्यादित्यदृष्टांतेनैव संभावितमित्याह । बुध्यत इति । स्वे स्वस्वरूपेऽवस्थित आत्मा भेदेन न बुध्यते । अभिव्यनक्तीति । व्यक्तिरुपाधिः। व्यक्तिस्थ उपाधौ प्रतिबिंबितस्तु

संभवेऽन्यत्र तत्कल्पनातारतम्यस्य सर्वत्र बोधनार्थमित्याह–विप्रशूद्रादिरूपं वेति । तत्तत्स्वरूपः स्वोपाध्यनुरूपः । एधासि काष्ठे । यथाग्नौ वक्रवर्तुलत्वाद्यभावेपि काष्ठवक्रत्वादिना तादृश इव प्रतीयते तद्वत् ॥ * ॥ तथैव भगवाञ्जगत्प्रविष्ट ईयते श्रवणकीर्तनाद्यभ्यासात्प्रत्यक्षी भवति ॥ ४७ ॥ तत्र कलानां जन्मनाशवत्त्वे दृष्टान्तः शास्त्रांतरोपन्यासेन स्वामिचरणैः स्फुटीकृतः–इयं ज्योतिःशास्त्रप्रक्रियेत्यादिना ॥ * ॥ ० ॥ ४८ ॥ सिंहावलोकनेन–सिंहो यथा किंचिद्देशं गत्वा पुनर्ग्रीवां विवृत्य पश्यति तद्वत् । ओघवन्नदप्रिवाहवत् । ‘ ओघो वेगे जलस्य च ’ इति मेदिनी । इत्यर्थ इति–भूतशब्देन तत्कार्यं लक्ष्यते “ गोभिः श्रीणीत मत्सरम् ” इतिवदिति भावः । नित्यौ प्रवाहरूपेण व्यवच्छिन्नौ ॥ * ॥ ० ॥ ४९ ॥ गोपतिः रश्मिपतिः ॥ * ॥ ० ॥ ५० ॥ आत्मनो भेद औपाधिक एवेत्यपि सूर्यादेव शिक्षितमित्याह–बुध्यत इति ॥ * ॥ व्यापक

नातिस्नेहः प्रसंगो वा कर्तव्यः क्वापि केनचित् ॥ कुर्वन्विंदेत संतापं कपोत इव दीनधीः ॥ ५२ ॥ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ॥ कपोत्या भार्यया सार्धमुवास कतिचित्समाः ॥ ५३ ॥ कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ॥ दृष्टिं दृष्ट्यांगमंगेन बुद्धिं बुद्ध्या बबंधतुः ॥ ५४ ॥ शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् ॥ मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥ यंयं वांछति सा राजंस्तर्पयंत्यनुकंपिता॥ तंतं समनयत्कामं कृच्छ्रेणाप्यजितेंद्रियः ॥ ५६ ॥ कपोती प्रथमं गर्भं गृह्णती काल आगते ॥ अंडानि सुषुवे नीडे स्वपत्युस्सन्निधौ सती ॥ ५७ ॥ तेषु काले व्यजायंत रचितावयवा हरेः ॥ शक्तिभिर्दुर्विभाव्याभिः कोमलांगतनूरुहाः ॥ ५८ ॥ प्रजाः पुपुषतुः प्रीतौ दंपती पुत्रवत्सलौ ॥ शृण्वंतौ कूजितं तासां निर्वृतौ कलभाषितैः ॥ ५९ ॥ तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ॥ प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥ ६० ॥ स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया ॥ विमोहितौ दीनधियौ शिशून्पुपुषतुः प्रजाः ॥ ६१ ॥ एकदा जग्मतुस्तासामन्नार्थं तौ कुटुंबिनौ ॥ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥ दृष्ट्वा तांल्लुब्धकः कश्चिद्यदृच्छातो वनेचरः ॥ जगृहे जालमातत्य चरतः स्वालयांतिके ॥ ६३ ॥ कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ॥ गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥

तद्गत इव उपाधिप्रविष्ट इव भेदेन स्थूलमतिभिर्लक्ष्यते । अर्कवदित्यन्वयः ॥ ५१ ॥ कपोताच्छिक्षितमाह । नातिस्नेह इति । स्नेहः प्रीतिः । प्रसंग उपलालनायासक्तिः ॥ ५२ ॥ दृष्टांतं प्रपंचयति । कपोतः कश्चनेति ॥ ५३ ॥ तयोर्मिथः स्नेहप्रसंगौ दर्शयति कपोताविति त्रयेण । स्नेहेन गुणितं बद्धं हृदयं ययोस्तौ ॥ ५४ ॥ विस्रब्धौ निःशंकौ ॥ ५५ ॥ सा कपोती तर्पयंती सहासवीक्षितालापादिभिः प्रीणयंत्यत एव तेनानुकंपिता सती यंयं वांछति तंतं कामं समनयत्संपादयामास । राजन्निति त्वं यथेति सूचितम् ॥ ५६ ॥ ५७ ॥ तेषु जलभरितेष्वंडेषु । हरेः स्वभावकर्मादिशक्तिभी रचितावयवाः पक्षिणः । कोमलान्यंगानि तनूरुहाश्च येषां ते ॥ ५८ ॥ ५९ ॥ पतत्रैः पक्षैः अदीनानां हृष्टानाम् ॥ ६० ॥ शिशून्बालान्प्रजाः पुत्रान् ॥ ६१ ॥ ६२ ॥ स्वालयांतिके चरतः क्रीडतः तान् कपोतपुत्रान् । आतत्य प्रसार्य ॥ ६३ ॥ उत्सुकत्वा

त्वादसंगत्वाच्च, वस्तुतः प्रवेशासंभवादिवेत्युक्तम् ॥ ५१ ॥ ० ॥ * ॥ ० ॥ ५२ ॥ ० ॥ * ॥ ० ॥ ५३ ॥ तयोः कपोतकपोत्योः । बबंधतुः युयुजतुः ॥ * ॥ ० ॥ ५४ ॥ आदिना पानादिग्रहः ॥ * ॥ ० ॥ ५५ ॥ अत एव तर्पणादेव । तेन कपोतेन । राजानोपि प्रायः स्त्रीवशवर्तिनो भवंतीति संबुद्ध्यभिप्रायः, ऐलादिवत् । अजितेन्द्रियः कामवशः ॥ * ॥ अनुकम्पिताऽनुकम्पाविषयीकृता । प्रथमसंततावौत्सुक्याधिक्येनासक्त्याधिक्यं व्यंजितम् ॥ ५६ ॥ ० ॥ * ॥ ० ॥ ५७ ॥ दुर्विभाव्याभिः कथमाभिरेतत्कृतामिति ज्ञातुमशक्याभिः ॥ * ॥ ० ॥ ५८ । प्रजाः संततीः । तासां प्रजानाम् ॥ * ॥ कलभाषितैरव्यक्तमधुरालापैः ॥ ५९ ॥ मुग्धचेष्टितैश्चंचुचालनेतस्ततश्चलनादिभिः । प्रत्युद्गमैः संमुखागमनैः ॥ * ॥ मुग्धचेष्टितैर्बालचेष्टाभिः । प्रत्युद्गमैः सशब्दं संमुखागमनैः ॥ ६० ॥ ० ॥ * ॥ दीनधियौ प्रजापालनपोषणव्यग्रतया कृपणाचित्तौ ॥ ६१ ॥ अर्थिनौ प्रजान्नप्रयोजनवन्तौ ॥ * ॥ एवं वैषयिकसुखमुक्त्वा "यत्तदग्रेऽमृतमिव परिणामे विषोपमम्" इति न्यायेन तस्यैव दुःखमाह–एकदेति ॥ ६२ ॥ ० ॥ * ॥ स्वालयांतिके स्वनीडसन्निधौ ॥ ६३ ॥ तत्पोषणार्थं प्रजापालनार्थम् ॥ * ॥ विशेष्ययोर्द्वयोर्द्वित्वमादाय विशेषणे द्वित्वं न विरु

कपोती स्वात्मजान्वीक्ष्य बालकाञ्जालसंवृतान् ॥ तानभ्यधावत्क्रोशंती क्रोशतो भृशदुःखिता ॥ ६५ ॥ साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ॥ स्वयं चाबध्यत शिचा बद्धान्पश्यंत्यपस्मृतिः ॥ ६६ ॥ कपोतश्चात्मजान्बद्धानात्मनोप्यधिकान्प्रियान् ॥ भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥६७॥ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ॥ अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥६८॥ अनुरूपानुकूला च यस्य मे पतिदेवता ॥ शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥ सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः ॥ जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥ ७० ॥ तांस्तथैवावृताञ्छिग्भिर्मृत्युग्रस्तान्विचेष्टतः ॥ स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥ तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ॥ कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ७२ ॥ एवं कुटुंब्यशांतात्मा द्वंद्वारामः पतत्रिवत् ॥ पुष्णन्कुटुंबं कृपणः सानुबंधोऽवसीदति ॥ ७३ ॥

देव तत्पोषणार्थं गतौ संतौ । पोषणं भक्ष्यम् ॥ ६४ ॥ ६५ ॥ शिचा जालेन ॥ ६६ ॥ आत्मानुरूपां भार्यां च विललाप शुशोच ॥६७॥ विलापमाह त्रयेण । अहो इति । अतृप्तस्य दृष्टसुखे अकृतार्थस्यादृष्टमसंपादयतः ॥ ६८ ॥ ६९ ॥ ७० ॥ तानावृतान्पश्यन्नपि । शिक्षु जालेषु ॥ ७१ ॥ ७२ ॥ दार्ष्टांतिके योजयति । एवमिति ॥ ७३ ॥

द्वम् "तयोर्जगृहतुः पादान्राजा राज्ञी च मागधीः" इत्यत्र कर्तृद्वयेन क्रियाद्वित्ववत् ॥ ६४ ॥ ० ॥ * ॥ क्रोशतो मातरं दृष्ट्वा विलापं कुर्वतः । तानभ्यधावत्संमुखमगच्छत् ॥ ६५ ॥ 'शिग्जाले पक्षिणां शिक्ये' इति कोशात् । असकृत्स्नेहेनातीवस्नेहेन । बद्धान् शिचा बद्धान् ॥*॥ अपस्मृतिः शोकेन नष्टचेतना सती ॥ ६६ ॥ ० ॥ * ॥ ० ॥ ६७ ॥ दृष्टसुखे मैथुनादिरूपेऽदृष्टं पारलौकिकम् । गृहाः दाराः "गृहं गृहाश्च पुंभूम्नि कलत्रेपि च सद्मनि" इति मेदिनी । त्रैवर्गिका धर्मार्थकामसाधनीभूताः 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । दुर्मतेरस्या मृतेर्मम मतिरन्यत्र्यभिलाषिणी भविष्यतीति दुर्बुद्धेः ॥ * ॥ दृष्टसुखे ऐहिकभोगे अदृष्टं पारलौकिककृत्यम् ॥ ६८ ॥ अनुरूपा वयोरूपकुलादिनाऽनुकूला, चित्तानुवर्तिनी भार्येति शेषः ॥ * ॥ ० ॥ ६९ ॥ विधुरो भार्यावियुक्तः "विधुरः प्रत्यवाये स्यात्कष्टविश्लेषयोरपि" इति विश्वः । विधुरो विश्लेषो स्यास्तीति मत्वर्थीयोऽच् । दुःखेन जीवितं जीवनं यस्य स तथा । "धनधान्यसमायुक्तं पुत्रपौत्रसमाकुलम् । स्त्रिया विरहितं यच्च यथारण्यं तथा गृहम् ॥" इत्युक्तेः पुत्रादियुक्तस्यापि स्त्रीवर्जितस्य गृहं न सुखदं कुतस्सर्वविहीनस्येत्यर्थः ॥ * ॥ ० ॥ ७० ॥ तान्कलत्रपुत्रान् । तथैव यथा पतनात्प्रसरे जालैरावृतस्तथैव न किंचिन्निःसृतान् । विचेष्टत इतस्ततोंगानि चालयतः । कृपणो मंदः "कृपणस्तु कृमौ पुंसि मंदकुत्सितयोस्त्रिषु" इति मेदिनी । तद्विवरणम्—अबुध इति ॥ * ॥ ० ॥ ७१ ॥ गृहमेधित्वं विवृणोति—कपोतकानिति । सिद्धः कुटुंबपालनरूपोर्थो यस्य स तथा ॥ * ॥ ० ॥ ७२ ॥ एवमुक्तरीत्या ॥ * ॥ ० ॥ ७३ ॥

यः प्राप्य मानुषं लोकं मुक्ति द्वारमपावृतम् ॥ गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ॥ ७४ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधेऽवधूतगीतेऽष्टगुरुनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥ ब्राह्मण उवाच ॥ सुखमैंद्रियकं राजन्स्वर्गे नरक एव च ॥ देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः ॥ ॥ १ ॥ ग्रासं सुमृष्टं विरसं महांतं स्तोकमेव वा ॥ यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ॥ २ ॥ शयीताहानि भूरीणि निराहारोऽनुपक्रमः ॥ यदि नोपनमेद्ग्रासो महाहिरिव दिष्टभुक् ॥ ३ ॥ ओजःसहोबलयुतं बिभ्रद्देहमकर्मकम् ॥ शयानो वीतनिद्रश्च नेहेतेंद्रियवानपि ॥ ४ ॥ मुनिः प्रसन्नगंभीरो दुर्विगाह्यो दुरत्ययः ॥ अनंतपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥ ५ ॥

एवं गृहासक्तिस्तिरश्चामप्यनर्थहेतुर्मनुष्यस्य त्वतिनिंदितेत्याह । यः प्राप्येति ॥ ७४ ॥ इति श्रीमद्भागवते म० एकादशस्कंधे श्री० टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमेऽजगरादिभ्यो नवभ्यः शिक्षितं हरिः ॥ अवधूतगिरा प्राह विवेकायोद्धवं प्रति ॥ १ ॥ प्रारब्धकर्मभोगस्यावश्यंभावित्वादतदर्थोद्यमैर्नायुर्व्ययो वृथा कर्तव्य इत्यजगराच्छिक्षितमित्याह सुखमित्यादिना । यदैंद्रियकं सुखं तत्स्वर्गे नरके च भवत्येव यथा दुःखम् । तस्माद्बुधस्तन्नेच्छेत् ॥ १ ॥ शरीरनिर्वाहमात्रं तु यथालब्धेन कर्तव्यमित्याह । ग्रासमिति । आजगरोऽजगरवृत्तिः । अक्रिय उदासीनः ॥ २ ॥ यदा नापतति तदा किं कर्तव्यं तत्राह । शयीतेति । अनुपक्रमो निरुद्यमः । दिष्टभुक् दैवमेव प्रापकमिति धैर्यवान् ॥ ३ ॥ ननु समर्थोऽपि शयीतैव किम् ओमित्याह । ओज इति । ओज इंद्रियबलं सहो मनोबलं बलं शारीरमेव तद्युक्तमपि देहमकर्मकमेव बिभ्रच्छयान एव भवेत् । वीतनिद्रः स्वार्थे दत्तदृष्टिश्च भवेन्न पुनरीहेत किंचित् । इंद्रियवानपीति दर्शनादिव्यापारमपि निवारयति ॥ ४ ॥ समुद्राच्छिक्षितमाह ।

एवमित्थम् । आरूढच्युतं प्राप्यस्थानं प्राप्यपतितम् । एतदभिप्रेत्यैव भगवता वैनतेयायोक्तम्—"जातीशतेन लभते किल मानुषत्वं तत्रापि दुर्लभतरं किल भो द्विजत्वम् । यस्तन्न पालयति लालयतींद्रियाणि तस्यामृतं क्षरति हस्तगतं प्रमादात् ॥" इति ॥*॥०॥७४॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे एकादशस्कन्धे सप्तमोऽध्यायः॥७॥ अवधूतगिरा दत्तात्रेयवाचा (१)। ऐंद्रियकं श्रोत्रादीन्द्रियविषयशब्दादिसुखं दुःखशिरस्क, नरके तत्तुल्ये सूकरादिदेहे यतः सर्वत्र भवति तस्मात् । तदैन्द्रियकसुखम् ॥*॥ हे राजन्निति—राज्यस्यापि विषयसुखान्तःपातित्वेन हेयत्वमेवेति भावः । तस्माद्विषयसुखस्य सूकरादिसाधारण्येन तुच्छत्वात् ॥ १ ॥ सुमृष्टं सरसम् 'मृष्टं सरसशुद्धयोः' इति निरुक्तिः । स्तोकमल्पम् । 'स्तोकस्त्रिष्वल्पचातके' इति धरणिः । अल्पचातक इति समाहारद्वंद्वः । यदृच्छयैवापतितमतर्कितत्वेनोपपन्नम् ॥ * ॥ यथालब्धेन यादृच्छिकतया प्राप्तग्रासेन । विरसं कटुतीक्ष्णादि । यथा दुःखमवांछितमपि स्यात्तथा सुखमपि भवेदेव कर्मफलत्वात्किं तदिच्छयेति भावः ॥ २ ॥ आपतति आयाति ॥ * ॥ ० ॥ ३ ॥ अत्राशंकते—नन्विति । ओमित्यंगीकारे । शयानः सर्वप्रवृत्तिशून्यः । तर्हि निद्रालुः स्यादत आह—वीतनिद्रः स्वार्थे परात्मालोचने ॥ * ॥ ० ॥ ४ ॥ इत्यर्थ इति—प्रसन्नत्वादिधर्मानादाय समुद्रतुल्यो भवेदिति भावः । यद्वा—अनंतेन भगवता पारः पूर्तिर्यस्य तथा भवेत् । "पारं तीरांतरं प्रोक्तं पारः पूर्तिस्तथा पुमान्" इति कोशात् ॥ * ॥ बहिः प्रसन्नश्चेति—अर्णवपक्षे—जलप्रसत्तावप्यंतर्दृष्ट्याऽनलस्पर्शः । मुनिपक्षे—सर्वत्र चित्तप्रसत्तावप्यंतर्निजरहस्योपास्याप्रकाशकः; अतः—एवंभूत

समृद्धकामो हीनो वा नारायणपरो मुनिः ॥ नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥ दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेंद्रियः ॥ प्रलोभितः पतत्यंधे तमस्यग्नौ पतंगवत् ॥ ७ ॥ योषिद्धिरण्याभरणांबरादिद्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतंगवन्नश्यति नष्टदृष्टिः ॥ ८ ॥ स्तोकंस्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ॥ गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः ॥ ९ ॥

मुनिरिति । बहिःप्रसन्नश्चासावंतर्गंभीरश्च । दुर्विगाह्य एवंभूत इति परिकलयितुमशक्यः अलक्ष्याभिप्रायत्वात् । दुरत्ययोऽनतिक्रमणीयः तेजस्वित्वात् । अनंतपारः कालतो देशतश्चापरिच्छेद्यः स्वरूपाविर्भावात् । अक्षोभ्योऽविकार्यः रागाद्यभावात् । स्तिमितोदो निश्चलोदकोऽर्णवो यथा तद्वदेतैर्गुणैर्भवेदित्यर्थः ॥ ५ ॥ किंच । वर्षासु सरिद्भिः समृद्धोऽपि सागरो यथा नोत्सर्पेत । ग्रीष्मे तद्विहीनोऽपि न शुष्येत । तथा समृद्धकामस्तद्विहीनो वा न हृष्येन्न शोचेदित्यर्थः । अत्र हेतुः । नारायणपरो न तु विषयपर इति ॥ ६ ॥ रूपगंधस्पर्शशब्दरसैः पंचभिर्विषयैर्मोहिताः पतंगमधुकरगजहरिणमीना हता अतस्तेष्वनासक्तौ पंचैते गुरवः । तदुक्तम् । "पतंगमातंगकुरंगभृंगमीना हताः पंचभिरेव पंच ॥ एकः प्रमादी स कथं न हन्यते यः सेवते पंचभिरेव पंच ॥" इति । तत्र रूपविलासमोहितो नश्यतीति पतंगाच्छिक्षितमाह । दृष्ट्वेति । तस्या भावैः प्रलोभितः ॥ ७ ॥ स्त्रियमुपलक्षणीकृत्यैतत्प्रपंचयति । योषिदिति । उपभोगबुद्ध्या सुखसाधनबुद्ध्या प्रलोभितात्मा ॥ ८ ॥ मधुकराच्छिक्षितमाह । स्तोकमिति । गृहान्गृहस्थानहिंसन्नपीडयन् । अयं भावः । यथा मधुकरो विशिष्टगंधलोभेनैकस्मिन्नेव पद्मे वसन्नस्तमयसमये मुकुलिते तस्मिन्बध्यते एवं

इति । उभयपक्षेप्यनिर्णयांतस्तत्त्व इत्यर्थः । तेजस्वित्वादिभिः—समुद्रपक्षे—जलनक्रादिमयत्वादनतिक्रमणीयत्वं, रागाद्यभावादिति लाभालाभादिनेति एतैर्गुणैर्विशिष्टो भवेत ॥ ५ ॥ समुद्रशिक्षांतरमाह—किञ्चेति । उत्सर्पेत उत्सिक्तो भवेत् । तद्विहीनोऽपि परिपूर्णजलसरित्संगवर्जितोपि । इत्यर्थ इति—हर्षाभावस्यैव शोकपदार्थत्वादिति भावः । अत्र शोकाभावे । विषयपराणामेव तदप्राप्तिनाशादिना शोको भवति, न तु हरिनिष्ठानामिति भावः ॥ ॥ * ॥ तद्विहीनः सरिद्विहीनः । समृद्धकामः संप्राप्तभोगोपि । तद्विहीनस्संभोगहीनः । अत्र हर्षशोकाभावे । नारायणैकनिष्ठः ॥ ६ ॥ यत एते एतैर्हता अतो हेतोः । तेषु रूपादिषु । एते पतंगादयः । अत्र प्रमाणं गारुडे—तदुक्तमिति । स्पष्टार्थः । तत्र तेषु पंचसु । पतंगो दीपेक्षणलालसोऽल्पपक्षो जीवः । देवस्य हरेर्मायां मोहकशक्तिम् । तस्याः स्त्रिया भावैः शृंगारचेष्टाभिः । अंधे दृष्टिव्यापारशून्ये । तमसि नरके ॥*॥ **दीपिका—** अतः रूपादीनां पतंगादिनाशकत्वात् । तेषु रूपादिषु । एते पतंगादयः । तत् पञ्चानां मोहितत्वं गारुडे प्रोक्तम् । तत्र पंचसु । भावैर्हावाद्यैः । यद्यपि स्त्रियां पञ्चापि विषयास्संति तदपि योषिदादिषु प्रथमं दृष्टिरेव पततीति रूपस्यैव प्राधान्यम् ॥ ७ ॥ उपलक्षणीकृत्योपलक्षणत्वेन स्थापयित्वा । एतत् विषयसेवनस्य नाशहेतुत्वम् । आदिना भक्ष्यभोज्यादि ग्रहः । मायारचितेषु मायैव क्वचिद्योषिद्रूपा क्वचिद्धिरण्याभरणादिरूपा भाति न तु ततोऽन्यत्किंचिदित्यर्थः । उपभोगबुद्ध्या भोगसाधनबुद्ध्या । प्रलोभितात्मा विवशमनाः ॥ * ॥ ० ॥ ८ ॥ गृहशब्दो गृहस्थपरः 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेन । अत्राशयमाह—अयं भाव इति । मुकुलिते मुद्रीभावं गते । तस्मिन्पद्मे । गुणलोभेन, इहातीव स्वाद्वन्नमतीव कोमलवस्त्रं चास्तीति बुद्ध्या । अहिंसन्नित्युक्तेरहिंसासत्त्वे त्वेकत्रापि भुंजीतेत्यपि ज्ञेयम् । माधुकरीं मधुकरवदीषदीषदन्नग्रहणरूपाम् ॥ * ॥ ननु यद्येक

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ॥ सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ १० ॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ॥ पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥ ११ ॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः ॥ मक्षिका इव संगृह्णन्सह तेन विनश्यति ॥ १२ ॥ पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ॥ स्पृशन्करीव बध्येत करिण्या अंगसंगतः ॥ १३ ॥ नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ॥ बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥१४॥ न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसंचितम् ॥ भुंक्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥

मुनिरपि गुणलोभेनैकमेव गृहमाश्रितस्तन्मोहेन बध्यत इति ॥ ९ ॥ किंच अणुभ्यश्चेति ॥ १० ॥ द्विविधो मधुकृत् मधु कृंतति पुष्पादाच्छिद्य गृह्णातीति मधुकृद्भ्रमरः । मधु करोत्याहारत्वेन स्वरूपेण चेति मधुमक्षिका च । तत्र प्रथमाच्छिक्षितमुक्तं द्वितीयाच्छिक्षितमाह । सायमिदं भोक्ष्यामि श्व इदं भोक्ष्यामीति भिक्षितमन्नादि न संगृह्णीत । किंतु पाणिपात्रस्तन्मात्रग्राही । यद्वा उदरमेवामत्रं पात्रं यस्य सः । एकभिक्षायामुदरमात्रग्राही भवेत् । संग्रही तु मक्षिकेव न भवति न जीवतीत्यर्थः ॥ ११ ॥ एतद्विवृणोति पुनः । सायंतनमिति ॥ १२ ॥ स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह । पदापीति । पादेनापि दारवीं दारुमयीमपि । गजो हि करिणीं प्रदर्श्य निखाततृणपिहितगर्ते निपात्य बध्यते ॥ १३ ॥ किंच नाधिगच्छेदिति । नोपगच्छेत् ॥ १४ ॥ त्यागभोगविहीनो धनसंचयः परगामी भवतीत्यत्र मधुहा गुरुरित्याह । न देयमिति । तदन्यो बलवान्भुंक्ते तदप्यन्यस्तच्चान्यः । मधुहा मक्षिकाभिः संचितं मधु यथा भुंक्ते तद्वत् अन्यो वा बलवान् भुंक्ते तद्वत् । ननु सुगुप्तं

त्रैवाविशिष्टग्रासोपलब्धिः स्यात्तर्हि स्तोकग्रासे को हठस्तत्राह—अयमिति ॥ ९ ॥ न केवलमन्न एव माधुकरी वृत्तिर्ग्राह्यापि तु शास्त्रेपीत्याह—किञ्चेति । अत्राणुत्वमहत्त्वे संख्ययोच्येते न त्वर्थतः शास्त्रमात्रस्याभ्यर्हितत्वात् । सारं भगवद्भक्तिज्ञानजनकं वाक्यम् ॥ * ॥ त्रिविधो मधुकृत् । एको भ्रमरजातिः । असंग्रहित्वसंग्रहित्वभेदेन द्वयी च मक्षिकाजातिरिति पद्यत्रयेण क्रमादुदाहरणानि ज्ञेयानि ॥ १० ॥ तत्र तयोर्मध्ये । प्रथमाद्भ्रमरात् । द्वितीयान्मधुमक्षिकारूपात् । तन्मात्रग्राही यावतान्नेन पाणिगृहीतेन तृप्तिर्भवेत्तावन्मात्रं गृह्णीयादित्यर्थः । यदि पाणिगृहीतेन तृप्तिर्न स्यात्तदोदरपूर्तिमात्रं वस्त्रादिनापि गृह्णीयादित्याह—यद्वेति । इत्यर्थ इति—अत्यल्पधनसंग्राह्यपि चोरादिना नाश्यते धनेन सहैवेति भावः ॥ * ॥ भिक्षितानिषेधान्निमंत्रणं संगृह्णीयादिति केचित् । केन पात्रेण गृहेगृहे भिक्षां कुर्यादत्राह—पाणिपात्र इति । सर्वतो भिक्षितग्रासानानीय कुत्र:स्थापयेदत्राह—उदरामत्र इति । उदरमेवामत्रं भिक्षानिधानभांडं यस्य स च स च सः ॥ ११ ॥ एतत्संग्रहिनशनम् ॥ * ॥ संग्रहे कृते किं भवेत्तत्राह—सायंतनमिति । प्रथमपद्ये यथा मक्षिकाजातिराहारमात्रं करोति संग्रहं न करोति, तथा यतिरपि स्यात् । द्वितीया—क्षौद्रमक्षिका तु संगृह्णती तेन सहैव नश्यति, तद्वद्यतिरपीति भावः ॥ १२ ॥ स्पर्शासक्तिः स्त्र्यादिस्पर्शप्रेमा । भिक्षुर्यतिः । आपिना चित्रस्थामपि न स्पृशेदित्यर्थः । करी हस्ती ॥ * ॥ ० ॥ १३ ॥ एतदेव विवृणोति—किञ्चेति । स स्त्रीगंता । बलाधिकैस्तदभिलाषिभिरन्यैः राजादिभिस्तत्पल्यादिभिर्वा ॥ * ॥ इयं ममैव भोग्येति स्त्रियं नाधिगच्छेन्न विश्वस्तः स्यात्, यतस्तयानीतैर्बलाधिकैर्जारैः स किल हन्यते ॥ १४ ॥ समागतं धनं दद्याद्वा भुंजीतान्यथा संग्रहीतुः परिश्रम इत्याह—त्यागेत्यादिना । अत्रार्थे । तद्वत् मधुग्राहिवत् । अत्राक्षिपति—नन्विति । लिंगैः सत्यप्यागमेऽयं व्ययं न करोतीत्यतोऽस्य पार्श्वे धनमस्तीत्याद्यादिहेतुभिरर्थं धनं तदुपायं संगृहीतधनहरणोपायं चायमत्रैव स्थले सदा तिष्ठति नास्य स्थलस्य विश्वासं करोतीत्यतोऽत्रैवास्य धन

सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ॥ मधुहेवाग्रतो भुंक्ते यतिर्वै गृहमेधिनाम् ॥ १६ ॥ ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित् ॥ शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥१७॥ नृत्यवादित्रगीतानि जुषन्ग्राम्याणि योषिताम् ॥ आसां क्रीडनको वश्य ऋष्यशृंगो मृगीसुतः ॥ १८ ॥ जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥ इंद्रियाणि जयंत्याशु निराहारा मनीषिणः ॥ वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥ २० ॥

धनं कथमन्यो ज्ञास्यति हरिष्यति चेति तत्राह । अर्थवित् लिंगैरर्थं तदुपायं च वेत्तीत्यर्थवित् यथा मधुहा तरुकोटरादिगतं मधु वेत्ति हरति च ॥ १५ ॥ स्वोद्यमं विनाऽपि भोगः संभवतीत्यत्रापि स एव गुरुरित्याह । सुदुःखेति । आशासानानामिति वक्तव्ये वर्णलोप आर्षः । “ यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्त्वा तु भुक्त्वा चांद्रायणं चरेत् ॥ ” इति गृहिणामावश्यकत्वेन दानविधानात् ॥ १६ ॥ हरिणाच्छिक्षितमाह । ग्राम्येति । भगवद्गीतं तु शृणुयादेव । मृगयोर्लुब्धकस्य ॥ १७ ॥ हरिणशब्दादेव हरिणीसुत ऋष्यशृंगोऽपि गुरुर्ज्ञातव्य इत्याह । नृत्येति । वश्यो बभूवेति शेषः ॥ १८ ॥ रसासक्तिर्नाशहेतुरिति मीनाच्छिक्षितमित्याह । जिह्वयेति । अतिप्रमाथिन्या अतिक्षोभिकया दुर्जयया । ऋच्छति प्राप्नोति । बडिशैरामिषलिप्तैर्लोहकंटकैः ॥ १९ ॥ दुर्जयत्वमुपपादयति इंद्रियाणीति द्वाभ्याम् । अयं भावः । यद्याहारस्त्यज्यते तर्ह्यन्येंद्रियजयः केवलं भवति रसनेंद्रियं तु वर्धते । यदि तु भुज्यते तर्हि पुनश्च रसासक्त्या सर्वेंद्रियक्षोभः स्यात् । अतो

मस्तीति विज्ञाय सुरंगादिना च ततो हरतीत्यर्थः । तरुकोटरादिगतं वृक्षकांडबृहच्छिद्रगतं तत्र मक्षिकागमनागमनैर्लिंगैर्वेत्ति ॥ * ॥ लिंगैस्तत्स्थानमार्जनोपवेशनमुहुरीक्षणादिचिह्नैरर्थं धनं तदुपायं तद्धरणोपायं च वेत्तीति ॥ १५ ॥ इत्यत्राप्यस्मिन्नर्थेऽपि । स एव मधुहैव । सुदुःखोपार्जितैः कृषिसेवनादिनोपपादितैः । गृहाशिषः अनेन द्रव्येण स्त्रिया भूषणान्यनेन च सुतविवाहहर्म्यादिसंपादनं च करिष्यामीत्येवंरूपाः । आशासानानामिच्छताम् । ‘आङः शासु इच्छायाम्’ इत्यतः शानच् । अत्रार्थे मनुं प्रमाणयति—यतिश्चेति । पक्वान्नस्वामिनावित्युक्तिस्तयोः पाककरणनिषेधात् “ आद्यंताश्रमिणौ पाकं न कुर्यातां कदाचन । ब्राह्मणागारपक्वान्नं गृह्णीयातां सदैव हि ॥ प्रायश्चित्तं प्रकुर्यातामन्यथाकरणादुभौ ॥” इति स्मरणात् । तयोर्ब्रह्मचारिसंन्यासिनोरन्नमदत्त्वा यो गृही भुंक्ते सोपि प्रायश्चित्ती भवेदित्याह—चांद्रायणमिति । स्वयं पाककरणे तयोरपि चांद्रायणमेवैककक्षाप्रविष्टत्वादिति ज्ञेयम् । अन्नमित्युपलक्षणमित्याह—गृहिणामित्यादिना ॥ * ॥ अतोऽन्नार्थं यतिनाऽन्योद्यमो न कार्य इति भावः । आशासानानामिति वक्तव्ये वर्णलोप आर्षः ॥ १६ ॥ ग्राम्याणां विषयिणां गीतं दंपतीप्रीत्यादिवर्णनरूपम् । क्वचित्कदाचिदपि । व्याधो यथा मृगवधाद्यर्थं मृगमोहकगीतं गायति तच्छ्रुत्वा ते तत्पार्श्वमायांति स च तान्बध्नाति मारयति चेति प्रसिद्धम् ॥ * ॥ ग्रामं विषयसमूहं सेवंत इति ग्राम्या विषयिणस्तेषाम्, विशेषणस्य व्यावर्तकत्वाद्भगवद्गीतं त्विति व्याख्यातम् । तदुक्तं पाद्मे—“ब्राह्मणो वासुदेवाख्यं गायमानोऽनिशं परम् । हरेः सालोक्यमाप्नोति” इति ॥ १७ ॥ किञ्चित्साम्येन तज्जत्वेन च मृगसाम्यता विभांडकात्मजेप्यस्ति ततोपि किञ्चिच्छिक्षितमाह—ग्राम्याणि, कामोद्बोधकानि । आसां स्त्रीणाम् ॥ * ॥ ० ॥ १८ ॥ असती अतत्त्वज्ञा बुद्धिर्यस्य स तथा ॥ * ॥ असती बहिर्मुखा बुद्धिर्यस्य सः ॥ १९ ॥ जिह्वाया दुर्जयत्वम् । अत्र तात्पर्यमाह—अयं भाव इति । यत इन्द्रियक्षोभकरा रसासक्तिरतो हेतोः ॥ * ॥ रसनेन्द्रियजयस्तु भगवदुच

तावज्जितेंद्रियो न स्याद्विजितान्येंद्रियः पुमान् ॥ न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥ पिंगला नाम वेश्यासीद्विदेहनगरे पुरा ॥ तस्या मे शिक्षितं किंचिन्निबोध नृपनंदन ॥२२॥ सा स्वैरिण्येकदा कांतं संकेत उपनेष्यती ॥ अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥२३॥ मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ ॥ तान्छुल्कदान्वित्तवतः कांतान्मेनेऽर्थकामुका ॥ २४ ॥ आगतेष्वपयातेषु सा संकेतोपजीविनी ॥ अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति भूरिदः ॥ २५ ॥ एवं दुराशया ध्वस्तनिद्रा द्वार्यवलंबती ॥ निर्गच्छंती प्रविशती निशीथं समपद्यत ॥ २६ ॥ तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ॥ निर्वेदः परमो जज्ञे चिंताहेतुः सुखावहः ॥ २७ ॥ तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ॥ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥ २८ ॥

रसासक्तिं परित्यज्यौषधवद्भुंजीतेति । प्राणवृत्त्यैव संतुष्येदित्यत्रोक्तमपि रसनस्यातिदुर्जयत्वज्ञापनायोच्यत इति विशेषः ॥ २० ॥ २१ ॥ पिंगलाया नैराश्यं शिक्षितमिति वक्तुं तदाख्यानमाह पिंगलेत्यादिना । मे मया शिक्षितम् ॥ २२ ॥ स्वैरिणी कामचारिणी । संकेते रतिस्थाने ॥ २३ ॥ तान्वित्तवतः सधनानत एव शुल्कदान्मूल्यदान् । कांतान्सुरतार्हान्मेने ॥ २४ ॥ अपिः संभावनायाम् । अन्योऽपि कश्चिन्मामुपैष्यत्येवं दुराशयेत्युत्तरेणान्वयः ॥ २५ ॥ द्वार्यवलंबती अवलंबमाना पुनः प्रविशती पुनर्निर्गच्छंती एवंकुर्वती निशीथमर्धरात्रं प्राप ॥ २६ ॥ निर्वेदोऽलंबुद्धिः । वित्तचिंतैव हेतुर्यस्य सः ॥ २७ ॥ यथा यथावत् । मम मत्तः । शृणु ।

नामकीर्तनरसास्वादाद्भवेत् । तदुक्तम्—" रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते " ॥ २० ॥ ० ॥ * ॥ ० ॥ २१ ॥ तदाख्यानं पिंगलेतिहासम । तस्याः पिंगं स्वर्णं लाति स्वीकरोति निजदेहार्पणेन, पिंगं पीताम्बरं श्रीकृष्णं लातीति वा तस्या अन्वर्थनाम्न्याः । किंचिद्वैराग्यम् । नृपा नंदंति येन वैराग्येण तन्नृपनन्दनं तद्वांस्तथा तत्संबुद्धौ । न ह्यविरक्तं वयमुपदेक्ष्याम इति संबुद्ध्यभिप्रायः ॥ * ॥ ज्ञानप्रकरणेप्यस्मिन्प्रसंगात्परमभक्तिमपि दर्शयति—पिंगलेति ॥ २२ ॥ स्वैरिणी अनिश्चितपतिका । संकेतं वित्तसमये सति । कान्तमुपनेष्यती स्वसमीपं प्रापयिष्यन्तीति वा । काले सायंकाले । बहिर्द्वारि द्वारबहिर्भागे । अभूत्तस्थावित्यर्थः । उत्तमं प्रतारणोचितम् ॥ * ॥ संकेते रतिस्थाने उपनेष्यती स्वसमीपमानेष्यन्ती आनेतुमित्यर्थः । काले संध्यायां बहिर्द्वारि स्थिता ॥ २३ ॥ अत एव सधनत्वादेव । शुल्कं मैथुनमूल्यं तत्प्रदानम् ॥ * ॥ हे पुरुषर्षभ. विषयवार्ताश्रवणेन सामान्यपुरुषाणां चेतसि क्षोभो भवेत्त्वं तु पुरुषेषु सत्पुरुषेष्वपि श्रेष्ठोऽस्यतस्तव चेतसि स नोदयत इति भावः । शुल्कदान्मूल्यं दत्त्वा सुरतग्राहिणः ॥ २४ ॥ आगतेष्वल्पप्रदत्वेनास्वीकृतत्वादपयातेषु गतेषु । यद्वा रतिं कृत्वा गतेष्वधिकवित्ताशयान्यमपेक्षन्त्याह—अप्यन्य इति ॥ * ॥ ० ॥ २५ ॥ दुराशया निजांगप्रदानेन धनाशया । एवं कुर्वती बहिरंतर्गमनागमनं कुर्वती ॥ * ॥ ० ॥ २६ ॥ 'हेतिः' इति पाठे चिन्ताछेदने हेतिः शस्त्रमित्यर्थः ॥ * ॥ अलंबुद्धिः स्वावज्ञया विषयेषु हेयत्वबुद्धिः । परम इति लौकिकनिर्वेदव्यावृत्तिः । तत्र हेतुः—सुखावह इति । सुखं श्रीकृष्णविषयकानंदमावहति प्रापयतीति सः । प्रसंगाच्चिन्तापदेन वित्तस्यैवोपास्थितेर्वित्तचिन्ताहेतुर्यस्य स तथा ॥ २७ ॥ अत्राक्षिपति—नन्विति । तत्राशाछेदे ॥ * ॥ तस्या इत्यर्धकम् । तस्याः संबंधसामा

न ह्यंगाजातनिर्वेदो देहबंधं जिहासति ॥ यथा विज्ञानरहितो मनुजो ममतां नृप ॥२९॥ पिंगलोवाच ॥ अहो मे मोहविततिं पश्यताऽविजितात्मनः ॥ या कांतादसतः कामं कामये येन बालिशा॥३०॥संतं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय॥ अकामदं दुःखभयादिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा॥३१॥अहो मयात्मा परितापितो वृथा सांकेत्यवृत्त्यातिविगर्ह्यवार्तया ॥ स्त्रैणान्नराद्याऽर्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती॥३२॥ यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धम् ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति कान्या ॥ ३३ ॥

ननु किं निर्विण्णाया गीतश्रवणेन तत्राह । हि यस्मात्पुरुषस्याशापाशानां निर्वेदोऽसिर्यथा तथा छेत्ता ॥ २८ ॥ तत्र हेतुः । न हीति । अंग हे राजन् ॥ २९ ॥ अविजितात्मत्वे हेतुः । याऽहं बालिशा विवेकशून्या तस्या मे कुतः । येन कारणेनासतस्तुच्छान्नरात्कामं कामये ॥ ३० ॥ बालिशत्वं प्रपंचयति संतमिति चतुर्भिः । समीपे संतमंतर्यामित्वात् । इममपरोक्षमीश्वरम् ॥ ३१ ॥ अतिविगर्ह्याऽतिनिंद्या या वार्ता जीविका तया । कुतः । सांकेत्येन या वृत्तिस्तया । बहुव्रीहिणा स्वविशेषणं वा । परितापं प्रपंचयति । स्त्रैणादिति । स्त्रीलंपटादथ चार्थतृषो लुब्धादत एवानुशोच्यान्नराद्याऽहं वित्तं रतिं चेच्छती । मया वृथाऽऽत्मा परितापितः । केन वित्तमिच्छति तेन नरेण क्रीतेन स्वयं विक्रीतेनात्मना देहेन ॥ ३२ ॥ अहो धिङ् मां याऽहमतिबीभत्सितं भजामीत्याह । यदीति । वंशो नाम स्थूणासु निहितस्तिर्यग्वेणुः वंश्यास्तस्मिन्नुभयतो निहिता वेणवः अस्थिभिरेव निर्मिता वंशादयो यस्मिंस्तत् । तत्र पृष्ठे दीर्घमस्थि यत्स वंशः । पार्श्वास्थीनि वंश्यानि । स्थूणा हस्तपादास्थीनि ।

न्ये षष्ठी तयेत्यर्थः । आशा एव संसारबंधस्य पाशाः स्युस्तासां छेदने निर्वेद एवासिर्भवेत् । धर्मलुप्तोपमाधर्मच्छेदः ॥ २८ ॥ अजातनिर्वेदोऽनुत्पन्नवैराग्यः । देहबंधं संसारम् । मोक्षसाधनीभूतज्ञानाधिकारिविशेषणत्वादिहामुत्रार्थभोगविरागस्येति भावः ॥ * ॥ अस्या वश्योपादेयत्वमाह—न हीति । कामं कन्दर्पं कामये ॥ २९ ॥ बालिशत्वं पृच्छति—कुत इति । कामं निजाभीष्टम् ॥ * ॥ ० ॥ ३० ॥ रतिप्रदमानंददं रमणं पतिं नित्यमविनाशिनम् । अकामदमभीष्टपूरणासमर्थम् । अपरोक्षं स्वात्मरूपतयेत्यर्थः ॥ * ॥ निर्वेदेन श्रीदत्तात्रेयप्रभावजेन झटिति पूर्वसंस्कारोदयात्तादृशं तद्वाक्यं—सन्तमित्यादि । अंतर्यामित्वात्समीपे सन्तं न तु दूरगं, तत्रापि परमसुंदरत्वेन रमणं प्रेष्ठमिममेवाहं कथं न रमयामीति भावः । तत्रापि रतिप्रदं रतिसुखदं सैरंध्र्यादिभ्य इव अयमेव कथं मां न रमयत्विति किमन्येन पापिष्ठपुरुषेणेति भावः । वित्तप्रदं मद्दत्तरतितुष्टोयं वित्तमपि प्रचुरं दास्यत्येवेति भावः । तथापि नित्यमकामकलितं तत्रापि परोक्षं स्वयंप्रकाशत्वान्न तु परोक्षं तथाभूतमीश्वरं विहाय अकामदं कामपूर्तिं दातुमसमर्थं यथार्थसुखाप्रदत्वेन प्रत्युत दुःखप्रदम्, तत्र हेतुः—स्तुच्छम् । तस्यां निशि तदंगणे यदृच्छयागतशयितस्य श्रीदत्तात्रेयस्य कृपाभराद्भगवत्येतादृशी मतिरभूदिति प्राञ्चः ॥ ३१ ॥ विनिंद्या निजदेहार्पणरूपा । यद्वा—वार्ता किंवदन्ती । निंद्यत्वे हेतुं पृच्छति—कुत इति । संकेतेन गृह्यत इति सांकेत्यं रतिमौल्यरूपं द्रव्यं तेन । हेतौ तृतीया । स्वविशेषणे कृते हेत्वाकांक्षैव नोदेष्यतीत्याह—बहुव्रीहिणेति । अतिविगर्ह्या वार्ता यस्यास्तया सांकेत्येन वृत्तिर्यस्यास्तया तथा चेति समासेनोभयं स्वविशेषणं वेति । अथ च स्त्रीलंपटत्वेपि । अत एव लब्धत्वादेव । अभिलषितादानेनानुशोच्यान्मुहुःशोकप्रदान् । तया मया ॥*॥ सांकेत्येन संकेतीकृतेन रतिप्राप्तवित्तेन वृत्तिर्वर्तनं तया हेतुना या विनिंद्या जीविका सा यस्यास्तया । स्त्रैणात्स्त्रीलंपटात् । इच्छत्यभूवम् ॥ ३२ ॥ बीभत्सितं निंदितम् । नवद्वाराणि नेत्रनासिकाकर्णानां षट्कं मुखं गुदलिंगे चेत्येवंरूपाणि । एतेनान्यकांतानां हेयत्वमुक्तम् ॥ * ॥ अतिबीभत्सितं विष्ठागृहमेवाहं शृंगाररसं

विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ॥ याऽन्यमिच्छंत्यसत्यस्मादात्मदात्काममच्युतात् ॥ ३४ ॥ सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ॥ तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३५ ॥ कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः ॥ आद्यंतवंतो भार्याया देवा वा कालविद्रुताः ॥ ॥ ३६ ॥ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा ॥ निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३७ ॥ मैवं स्युर्मंदभाग्यायाः क्लेशा निर्वेदहेतवः ॥ येनानुबंधं निर्हृत्य पुरुषः शममृच्छति ॥ ३८ ॥

तथा रोमभिर्नखैश्च पिनद्धं छादितम् । तथाऽपि क्षरंति नवद्वाराणि यस्मिंस्तत् । एवंभूतागाररूपं नृशरीरमेतन्मत् मत्तोऽन्या का वा कांतबुद्ध्या उपैति सेवते ॥ ३३ ॥ सत्संगतौ सत्यामप्यहो मम मोह इत्याह । विदेहानामिति । याहमसती अच्युतादन्यम् । कामं भोगमिच्छंती सा ॥ ३४ ॥ एवं निर्विण्णा सती अतः परमेवं करिष्यामीत्याह । सुहृदिति । अयमीश्वरः । आत्मनैवाऽऽत्मानमेव निवेद्य तं विक्रीय विशेषेण क्रीत्वाऽनेनैव सह रमे । रमा लक्ष्मीर्यथा ॥ ३५ ॥ अन्यस्यासेव्यत्वं दर्शयति । कियदिति । आद्यंतवंतो ये कामा विषयाः कामदा नरा वा देवा वा कालकलिता भार्यायाः कियत्प्रियं कृतवंतो न किंचित् । अतो नेहामुत्र च तद्व्यतिरिक्तः कोऽपि सेव्योऽस्तीत्यर्थः ॥ ३६ ॥ एवं निश्चित्य स्वभाग्यमभिनंदति । नूनमिति । दुष्टा आशा यस्यास्तस्या मे ॥ ३७ ॥ ननु धनाप्राप्त्या क्लिष्टाऽसि कथं विष्णुः

स्वभोग्यमविदमित्याह—यदगारमिति ॥ ३३ ॥ अस्मात्स्वात्मरूपत्वेन नित्यापरोक्षात् । आत्मदात्संसारमोक्षदात् । अच्युतात्च्युतिरहितात् । एतेन सदा स्वपार्श्ववर्त्युदारा विनाशिनं पतिं हित्वा तद्विपरीतमिच्छन्ती मूढैवेति सूचितम् ॥ * ॥ अस्मादिति स्फूर्त्या साक्षादिव निर्देशः । अच्युतात्स्वभक्तस्यापि कालभयवारकात् । तदुक्तं पाद्मे—"न च्यवन्ते तु यद्भक्ता महत्यां प्रलयापदि । अतोऽच्युतोऽखिले लोके विष्णुरेव न संशयः ॥" इति ॥ ३४ ॥ यद्वा—अयं हरिर्निरपेक्षोपकारित्वात्सुहृत्, आनंदघनत्वात्प्रेष्ठतमः, कामदत्वान्नाथः । वस्तुतस्तु आत्मा, तेनात्मना चेतसा रमे । विक्रीय तच्चरणारविन्दे चित्तं समर्प्येत्यर्थः । इयं पिंगला सामान्यवेश्या न किन्तु विशिष्टाप्सरस्स्वेका, अन्यथाऽस्या नैतादृशी बुद्धिरुत्पद्येत । तदुक्तम्—"भगवद्भार्यतायोग्याः काश्चिदप्सरसः स्त्रियः । रमावेशात्कदाचित्स्युस्तास्वेका पिंगलाऽभवत् ॥ तदन्यासां महान्दोषो भगवद्भर्तृता स्मृतौ । " इति तीर्थोक्तेः ॥ * ॥ तर्हि किमतः परं चिकीर्षसीति चेदेवं करोमीत्याह—आत्मना च देहेनानेन मूल्यभूतेन दत्तेन तं विशेषेण क्रीत्वाऽहं प्राप्तेन तेन प्रेष्ठतमेन सह रमे 'अहं भक्तपराधीनः' 'वशे कुर्वन्ति मां भक्त्या' इति स्मृतेः, "भक्तिवशः पुरुषः" इति श्रुतेश्च । अनेनैवेत्यवधारणेनान्यस्यासेव्यत्वमभजनीयत्वम् । अतो देवादीनां कालग्रस्तत्वे प्रियं कर्तुमशक्यत्वात् ॥ ३५ ॥ लोकसिद्धकांतत्यागे लोकविलक्षणकांतस्वीकारेऽलंबुद्धिगोचरकामादातृत्वमाद्यंतवत्वं च निमित्तमित्यभिप्रेत्यैवाहुः स्वाभिचरणा—अन्यस्य भगवदितरस्येति । यदि नरा अयोग्यास्तर्हि देवा भवेयुरित्यत आह—देवा वेति । यतो देवा अपि किञ्चित्कर्तुं न समर्था अतो हेतोः । इत्यर्थ इति—न हि श्रीकृष्णं विना कोपि किञ्चिद्दातुं पातुं वा समर्थोऽतः स एव सर्वेश्वरत्वात्सेव्य इति भावः ॥ * ॥०॥ ३६ ॥ एवं निश्चित्य विश्वबंधविध्वंसिनि श्रीकृष्णे प्रसन्ने सति किमसुलभमपि तु सर्वमेवेत्येवं निश्चयं कृत्वा । नूनमिदानीम् । केनापि जन्मांतरीयेण वक्तुमशक्येन । यद्यतः । दुष्टा स्वांगार्पणेन धनविषयाऽऽशा तृष्णा यस्याः ॥*॥ एवमन्यस्यासेव्यत्वकथनेनेश्वरस्यैव सेव्यत्वं निश्चित्य । केनापि सतां संगलक्षणेन ॥ ३७ ॥ अत्राशंकते—नन्विति । इत्यर्थ इति—न हि मंदभाग्यानां सर्वबन्धापनोदकवैराग्योदयो भवतीति भावः । अनुबध्नातीत्यनुबंधस्तम् । यद्वा—समुद्भूतभगवद्भक्तिसुधा पिंगला पुनः शब्दादिविषयनिमित्ताः क्लेशा मा भूवन्निति प्रार्थयते—मैव

तेनोपकृतमादाय शिरसा ग्राम्यसंगताः ॥ त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३९ ॥ संतुष्टा श्रद्दधत्येतद्यथालाभेन जीवती ॥ विहराम्यमुनैवाहमात्मना रमणेन वै ॥४०॥ संसारकूपे पतितं विषयैर्मुषितेक्षणम् ॥ ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः ॥४१॥ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाखिलात् ॥ अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥ ४२ ॥ ब्राह्मण उवाच ॥ एवं व्यवसितमतिर्दुराशां कांततर्षजाम् ॥ छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥ ४३ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ यथा संछिद्य कांताशां सुखं सुष्वाप पिंगला ॥ ॥ ४४ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधेऽजगरादिनवगुरुशिक्षानिरूपणं नामाष्टमोऽध्यायः ॥ ८ ॥

प्रीतस्तत्राह । मैवमिति । मंदभाग्या चेदहं स्यां तर्ह्येवं निर्वेदहेतवः क्लेशा न स्युरित्यर्थः । येन निर्वेदेनानुबंधं गृहादिकं निर्हृत्य परित्यज्य ॥ ३८ ॥ अतस्तेन श्रीविष्णुनोपकृतं कृतमुपकारं निर्वेदलक्षणम् । ग्राम्येषु नरेषु विषयेषु वा संगताः ॥ ३९ ॥ कथं व्रजसि तदाह । संतुष्टेति ॥ ४० ॥ ननु ब्रह्मादीन्हित्वा अमुनैवेति कोऽयं नियमस्तत्राह । संसारेति । मुषितेक्षणमपहृतविवेकम् ॥४१॥ तर्हि किमात्मत्राणोपाधिना तं भजिष्यसि । न । तत्र सर्वतो निर्विद्य भगवद्भजने प्रवृत्तस्यात्मन एव समर्थत्वादित्याह । आत्मैवेति । यदा एवं जगत्पश्येत्ततश्चाप्रमत्तः सन्निखिलादिहामुत्र च भोगान्निर्विद्येत तदा ह्यात्मनैवात्मनो गोप्तेत्यन्वयः । अतः केवलं प्रेम्णैव भजामीति भावः ॥ ४२ ॥ कांतस्य तर्षोऽभिलाषस्ततो जाताम् ॥४३॥ फलितमाह । आशा हीति ॥४४॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायामष्टमोऽध्यायः ॥८॥

मिति । अनुबंधं संसारबंधम् । शं भगवन्निष्ठालभ्यं सच्चिदानंदलक्षणम्, अं सर्वविलक्षणं ब्रह्म प्राप्नोर्तीत्यर्थः । कुतो मा भूवन्नित्यतो वाह—येन हेतुना पुरुषोऽनुबंधं बंधनिवर्तकं भक्त्यादिकं निर्हृत्य त्यक्त्वा शामं शामलं नरकमृच्छतीति । एतस्मादिति शेषः । एकदेशविकृतः शामलशब्दोनन्यवदिति न्यायोत्रानुसंधेयः ॥ * ॥ मंदभाग्या चेदहं स्यामित्यार्थिकार्थत्वादित्यर्थ इत्युक्तम् । शमं बुद्धेर्भगवन्निष्ठताम् ॥ ३८ ॥ यतो निर्वेदस्सुखाहेतुरतो हेतोः । वृत्तेः सुलभत्वात्—विषयेषु वेति । संगताः प्राप्ता दुराशास्त्यक्त्वा तमधीश्वरमीश्वरस्याप्यधिष्ठानं तत्कल्पनाधारं कृष्णमेव ॥ * ॥ अतो विष्णोः प्रीतत्वात् । तं कृतोपकारम् ॥ ३९ ॥ एतद्वक्ष्यमाणम् 'संसारकूपे' इत्यग्रिमश्लोकाभ्यां वक्ष्यमाणम् । श्रद्दधती श्रद्दधाना । वैराग्यप्रभावाविर्भावेनामुनेत्यपरोक्षोक्तिः ॥ * ॥ शरणं गता सती कीदृशी बुभूषसीत्यत्राह—संतुष्टेति । एतच्छ्रद्दधती विश्वसती । एतदेव किं तत्राह—विहरामीति ॥ ४० ॥ अत्राक्षिपति—नन्विति । अन्यः कृष्णादन्यः । यद्वा—स्वात्मनो वा न कोपीत्यर्थः ॥ * ॥ कोऽन्यस्त्रातुमधीश्वरो न कोपि तस्माद्ब्रह्मादीनां त्रातुमनीश्वरत्वात् पातीति पतिरिति निरुक्त्या पतित्वं न संगच्छत इत्यमुनैवेति सावधारणमुक्तम् ॥ ४१ ॥ पुनराशङ्कते—तर्हीति । आत्मत्राणमुपाधिर्निमित्तं यत्र तेन संकल्पेन । नेत्याह । तत्रात्मत्राणे । आत्मन एव समर्थत्वादिति योज्यम् । यदा यस्यामवस्थायाम् । एवं संसारकूप इत्याद्युक्तम् । ततश्चैवं दर्शनात् । यतो भगवद्भजनप्रवृत्त आत्मा स्वतः समर्थो भवत्यतो हेतोः । इति भाव इति—परसंरक्षणसमर्थभगवद्भक्तानां स्वरक्षणार्थं न यत्नो भवतीति तात्पर्यम् ॥ * ॥ तर्हीत्यादि शंकासमाधानाभासः । आत्मैवेति—यदात्माऽखिलाद्भोगान्निर्विद्येत, तत्र हेतुः—इदं जगत्कालाहिना ग्रस्तं पश्येत्तदात्मा परमात्मा आत्मनो जीवस्य स्वस्य गोप्ता संसाराद्रक्षिता भवेन्ममात्मा च संप्रत्येतादृश एवाभूदतोहं स्वत एव निस्तीर्णसंसाराभूवमेव तेनातः परं केवलं प्रेम्णैव तं भजिष्य इति भावः ॥४२॥ एवमुक्तरीत्या।निश्चितधीः । सा पिंगला॥*॥उपशमं बुद्धेः श्रीकृष्णकांतैकनिष्ठारूपं रागम्,तथा चास्या रागरूपा भक्तिर्न तु वैधीति सूचितम्।साधनानुष्ठानमं तत्रैव 'रमेऽनेन यथा रमा' इति प्रेममयतृष्णाया एव दर्शितत्वात् । रागरूपायाश्चेदं लक्षणम्—"इष्टे स्वारसिकी रागः परमाविष्टता भवेत् । तन्मयी या भवेद्भक्तिः सात्र रागात्मिकोदिता ॥" इति । इष्टे स्वानुकूलविषये स्वारसिकी स्वाभाविकी या परमाविष्टता तद्धेतुः प्रेममयी तृष्णा सा रागो भवेत् । तन्मयी तदेकप्रेरिता या श्रवणमननादिरूपा भक्तिः सा रागरूपोच्यते इत्यर्थः ॥ ४३ ॥ सुखमानंदैकरसं हरिमेव यथा सुष्वाप तस्मिँल्लीनाभवत् । यथायोगे

ब्राह्मण उवाच ॥ परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् ॥ अनंतं सुखमाप्नोति तद्विद्वान्यस्त्वकिंचनः ॥ १ ॥ सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ॥ तदामिषं परित्यज्य स सुखं समविंदत ॥ २ ॥ न मे मानावमानौस्तो न चिंता गेहपुत्रिणाम् ॥ आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥ ३ ॥ द्वावेव चिंतया मुक्तौ परमानंद आप्लुतौ ॥ यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ॥४॥ क्वचित्कुमारी त्वात्मानं वृणानान्गृहमागतान् ॥ स्वयं तानर्हयामास क्वापि यातेषु बंधुषु ॥५॥ तेषामभ्यवहारार्थं शालीन्रहसि पार्थिव ॥ अवघ्नंत्याः प्रकोष्ठस्थाश्चक्रुः शंखाः स्वनं महत् ॥ ॥६॥ सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ॥ बभंजैकैकशः शंखान्द्वौद्वौ पाण्योरशेषयत् ॥ ७ ॥ उभयोरप्यभूद्घोषो ह्यवघ्नंत्याः स्म शंखयोः ॥ तत्राप्येकं निरभिददेकस्मान्नाभवद्ध्वनिः ॥ ८ ॥

नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् ॥ श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ॥ १ ॥ कुरराच्छिक्षितमाह । परिग्रहो हीति । यद्यत्प्रियतमं तस्यतस्य परिग्रहः । तद्विद्वान् परिग्रहो दुःखमिति विद्वान्सन् । यस्त्वकिंचनस्त्यक्तपरिग्रहो न तु दरिद्रः ॥ १ ॥ तदाह । सामिषमिति ॥ २ ॥ अर्भकशिक्षामाह । नेति । गेहपुत्रिणां तद्वतां या भवति चिंता सा च मे नास्ति । आत्मनैव क्रीडा यस्य सः । आत्मनि रतिः प्रीतिर्यस्य सः ॥ ३ ॥ नन्वज्ञसर्वज्ञयोः किं सादृश्यं नैश्चिंत्यं परमसुखमित्याह । द्वाविति । विमुग्धोऽज्ञः जडोऽनुद्यमः एवंभूतो यो बालो यश्च प्रकृतेः परमीश्वरं प्राप्तस्तौ द्वौ ॥ ४ ॥ कुमार्याः शिक्षितं वक्तुमाख्यायिकामाह । क्वचिदित्यादिना । वृणानान्स्ववरणायागतान् । बंधुषु पित्रादिषु ॥ ५ ॥ शंखाः शंखवलयाः । महद्यथा भवति तथा स्वनं चक्रुः ॥ ६ ॥ सा महती बुद्धिमती । तत्स्वयं शाल्यवहननं जुगुप्सितं दरिद्रताद्योतकम् । एकैकशः क्रमेणैकमेकं बभंज स्वकरादपसारितवती ॥ ७ ॥ निरभिदत् पृथक्कृतवती ॥ ८ ॥

द्वितीया 'ततोऽन्यत्रापि दृश्यते' इत्युक्तत्वात् ॥ * ॥ सुष्वाप भगवदेकाश्रयत्वेन निर्वृता बभूवेत्यर्थः ॥ ४४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥ कृतार्थः कृतकृत्यः ( १ ) । यः स सुखमाप्नोतीत्यन्वयः ॥ * ॥ ० ॥ १ ॥ तत् प्रियतमत्यागात्यागयोस्सुखदुःखम् । सामिषं समांसम् । तत्स्वीकृतामिषम् । स त्यागी कुररः ॥ * ॥ ० ॥ २ ॥ तद्वतां गृहवतां पुत्रवतां च या चिन्ता—मे गृहे सदा शुभं भवतु न कदाप्यशुभम्, मे पुत्राः सुचरिता भवेयुर्माऽसुचरिता इत्येवंरूपा सेत्यर्थः ॥ * ॥ ० ॥ ३ ॥ चिंता त्वज्ञानामपि न संभवतीत्यज्ञसर्वज्ञयोः को भेद इत्याक्षिपति—नन्विति । अज्ञसर्वज्ञयोः किं सादृश्यं केन धर्मेण तौल्यमित्यत्राह—नैश्चिंत्यं परमं सुखं तुल्यं विवेकाविवेककृतो भेद इति ज्ञेयम् । विशेषेण मुग्धो मूढो विमूढः 'मुग्धः सुंदरमूढयोः' इति विश्वः । एवंभूतो ज्ञानोद्यमरहितः । गुणेभ्य इति बहुत्वात्त्रिगुणा प्रकृतिर्लक्ष्यतेऽत आह—प्रकृतेः परमिति ॥ * ॥ ० ॥ ४ ॥ वरवरणोत्तरं कुमारीवरणमपि वरपक्षीयैः क्रियते "पंचांगशुद्धिदिवसे चंद्रताराबलान्विते । विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे ॥ मासाद्यदिवसं रिक्तामष्टमीं नवमीं तिथिम् । त्यक्त्वान्यदिवसे गंधस्रक्तांबूलफलान्वितैः ॥ सह वृद्धद्विजगणैर्वरयेत्कन्यकां सतीम् ।" इति कश्यपेन तद्वरणमुहूर्तोक्तेः ॥ * ॥ अर्हयामास आवृतसर्वांगैव गेहान्निष्क्रम्य दर्भासनजलादिभिरातिथ्यं चक्रे ॥ ५ ॥ तेषां वरणार्थमागतानाम् । "भोजनेभ्यवहारः स्याद्युद्धत्यागेऽभिवर्जितः" इति कोशात् । शंखवलया भाषायाम् 'चुरियाँ' इति प्रसिद्धाः ॥ * ॥ कदा ते आयास्यन्ति कदा ते तंडुलान्कारिष्यन्तीति मनसि कुर्वत्यास्तस्याश्चेष्टितमाह—समग्रशखानां प्रकोष्ठत्वायोगान्मुख्यार्थबाधः कार्यकारणलक्षणो योगो रूढिश्चेति शंखशब्दस्य वलये लक्षणा । स्वनशब्देन पुंस्त्वेन महदिति न तद्विशेषणमतः क्रियाविशेषणम् ॥ ६ ॥ यथाश्रुतधात्वर्थस्वीकारेऽमंगलं स्यादिति हेतोरवतारणमर्थो धातूनामनेकार्थत्वादाह—स्वकरादित्यादि ॥*॥ भंजनस्यामंगलत्वे तु धातूनामनेकार्थत्वापदसारितवती ॥ ७ ॥ तत्रापि

अन्वशिक्षमिमं तस्या उपदेशमरिंदम ॥ लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥ ९ ॥ वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ॥ एक एव चरेत्तस्मात्कुमार्या इव कंकणः ॥ १० ॥ मन एकत्र संयुज्याज्जितश्वासो जितासनः ॥ वैराग्याभ्यासयोगेन ध्रियमाणमतंद्रितः ॥ ११ ॥ यस्मिन्मनो लब्धपदं यदेतच्छनैःशनैर्मुंचति कर्मरेणून् ॥ सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिंधनम् ॥ १२ ॥

ननु कुमार्यास्तव च कथं संगतिस्तत्राह । लोकानिति ॥ ९ ॥ वास इति प्रथमांतपाठे कलहहेतुः । वार्ता गोष्ठी हेतुर्भवेदित्यर्थः ॥ १० ॥ चित्तैकाग्रता द्वैतास्फूर्तिलक्षणसमाधिहेतुरिति शरकाराच्छिक्षितमित्याह । मन इति । तत्रोपायमाह । जितेति । आसनजये श्वासजयस्तस्य च जये श्वासाधीनं मनो निश्चलं भवति । ननु क्षणं निश्चलं सदपि मनो विषयवासनया यदि विक्षिप्येत सुषुप्ताविव सर्वथा लीयेत वा तदा किं तत्राह । वैराग्येणेति । वैराग्येणाविक्षिप्यमाणमभ्यासयोगेन लक्ष्ये ध्रियमाणं स्थिरीक्रियमाणम् ॥ ११ ॥ एकत्रेति कुत्र तदाह । यस्मिन्निति । यल्लयविक्षेपात्मकं मन एतयस्मिन्परमानंदरूपे भगवति लब्धास्पदं सत्कर्मरेणून्कर्मवासनां मुंचति तास्मिन् । ननु कर्मवासनात्यागेऽपि सुषुप्तिवल्लयो दुर्वारः । न । सत्त्वेनेति । वृद्धेनोपशमात्मकेन । रजस्तमसोरभावे विक्षेपलयाभावान्निर्वाणमवृत्तिकं ध्येयाकारेणावस्थान

द्वयोरपि मध्ये ॥ * ॥ ० ॥ ८ ॥ अत्राशंकते—नन्विति । तस्याः कुमार्याः । इमं वक्ष्यमाणम् 'वासे बहूनाम्' इत्यादिरूपम् ॥ * ॥ लोकाननुचरन्निति—तद्दिने मया तत्रैव स्थितं सर्वेऽप्येते गुरवो मया स्वचक्षुषैव दृष्टा न तु सर्वज्ञत्वेन ज्ञाता इति भावः। इमं योगिभिरप्यसंकीर्णत्वलक्षणमुपदेशं कर्तव्यार्थम्।हे अरिंदम—त्वमप्यात्मनिष्ठाध्वंसकं जनसंमर्दलक्षणमरिं नाशयेति भावः। लोकेषु जनेषु यद्धेयोपादेयवस्तुनस्तत्त्वं स्वरूपं तज्जिज्ञासया "तत्त्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनि"इति भावः॥९॥इत्यर्थ इति—प्रायेण मिलितौ द्वौ वार्तामेव कुर्वाणौ दृश्यते इति भावः।अत्र दुर्जनैः सह वासो निषिध्यते न तु सज्जनैरपि तस्य विहितत्वात्।"असज्जनैस्तु संवासो न कर्तव्यः कथंचन । यावद्यावच्च बहुभिः सज्जनैः स तु मुक्तिदः॥" इति तीर्थोक्तेः। "संगः सर्वात्मना त्याज्यश्चेत्त्यक्तुं शक्यते न च । सत्स्वेव स विधातव्यः सन्तः संगस्य भेषजम् ॥" इति शिष्टोक्तेश्च । यस्मात्कलहादिरनुसंधानविरोधी तस्मादित्यर्थः ॥ * ॥ वासे वास इति पाठौ द्वौ । अत्र दरिद्रकुमारी अप्राप्तपतिका झणत्काराभावार्थं कंकणान्यथा दूरीकरोति तथैव ज्ञानयोगः स्वाश्रितान्मुनीन्निःसंगानेव करोति । यथा च राजकुमारी पतिमती झणत्कारसिद्ध्यर्थं कंकणान्परिधत्ते तथा श्रीमती भक्तिकुमारी स्वाश्रितान्वैष्णवान्मधुमधुरतरनामकीर्तनध्वनिरसार्थं तान्परस्परसंगिन एव विधत्ते न त्वसंगिन इति ज्ञेयम् ॥ १० ॥ एकत्रेति वक्ष्यमाणत्वाद्ब्रह्माणि तत्र मनस एकत्र योगे, तस्य च श्वासस्य च " सत्संगो वासनात्यागोध्यात्मविद्याविचारणम् । प्राणस्पंदनिरोधश्चेत्युपाया मनसो जये॥ " इति योगवासिष्ठे । श्वासजयस्यापि मनोनैश्चल्यहेतुत्वोक्तेः । पुनराक्षिपति—नन्विति । अतंद्रितो नासाग्रदत्तदृष्टिः । निमीलने लय उन्मीलने विक्षेपस्तन्निवृत्तयेऽर्द्धोन्मीलितनेत्रस्तिष्ठेदिति भावः ॥ * ॥ द्वैतस्य प्रपंचस्य स्फूर्तिहेतुलक्षणं स्वरूपं यस्यैवंभूतो यस्समाधिस्तस्य हेतुश्चित्तैकाग्र्यतैव । तत्र चित्तैकाग्र्यतायाम् । तस्य श्वासस्य जये । ध्रियमाणमित्यस्यैवाविक्षिप्यमाणमित्यप्यर्थस्तत्र वैराग्येण विक्षेपसंभावना निरस्ताभ्यासयोगेन लयोपि निरस्तः ॥ * ॥ **संदर्भस्तु**—रागबलादेव मनः इतस्ततश्चलति तत्राह—वैराग्येणेति ध्रियमाणं भगवत्येव ॥ ११ ॥ पुनराशंकते—नन्विति । नेत्याह । तत्कार्यं गुणकार्यम् । तद्वृत्तयः । अवृत्तिकमनसो ध्येयाकारेण स्थितौ प्रमाणमाह—तदुक्तमिमिति । स्पष्टार्थः श्लोकः ॥*॥ **दीपिका**—तल्लक्ष्यमाह—तत्कार्यं च रागादितद्ध्येयाकारावस्थानम् । वृत्तिशून्यस्य वितर्कादिचतुर्भेदरहितस्य मतसोऽध्येयब्रह्माकारतया या स्थितिरेकाग्रतावस्थाऽसावसंप्रज्ञातनामा समाधिरुच्यते । यथाह भगवान्पतंजलिः—" तस्याऽपि

तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद्बहिरंतरं वा ॥ यथेषुकारो नृपतिं व्रजंतमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥ एकचार्यऽनिकेतः स्यादप्रमत्तो गुहाशयः ॥ अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥ १४ ॥ गृहारंभो हि दुःखाय विफलश्चाध्रुवात्मनः ॥ सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥ एको नारायणो देवः पूर्वसृष्टं स्वमायया ॥ संहृत्य कालकलया कल्पांत इदमीश्वरः ॥ १६ ॥

मुपैति । कुतः । अनिंधनम् इंधनं गुणास्तत्कार्यं च तद्रहितम् । तदुक्तं योगशास्त्रे । " मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ॥ याऽसंप्रज्ञातनामाऽसौ समाधिरभिधीयते ॥ " इति ॥ १२ ॥ ततश्च न द्वैतस्फूर्तिरित्याह । तदेति । बहिर्दर्शनादिना । अंतरं स्मृत्या । इषौ गतात्मा तस्य ऋजूकरणे दत्तचित्तो भेरीघोषैः सेनया च सहांतिके व्रजंतं नृपतिमपि न वेद तद्वत् ॥ १३ ॥ सर्पाच्छिक्षितमाह । एकचारीति । योगिसंमर्दस्यापि त्यागे कुमारी गुरुरुक्तः । जनसंगत्यागे तु सर्पः । स यथा जनाच्छंकमान एकाकी विचरति नियतनिकेतरहितश्च सदाऽप्रमत्तश्चैकांतवासी च । आचारैर्गतिभिः सविषो निर्विषो वेति न लक्ष्यते च । असहायश्च मितभाषी च तद्वन्मुनिर्वर्तेतेत्यर्थः ॥ १४ ॥ किंच गृहारंभ इति । अध्रुवात्मनो नश्वरदेहस्य । सुखं यथा भवति तथा वर्धते ॥ १५ ॥ कारकसामग्रीनिरपेक्षात्केवलादीश्वराद्विश्वसृष्टि

निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधिः " इति । अस्यार्थः—तस्य संप्रज्ञातस्य विलये सति सर्वचित्तवृत्तीनां परमात्मनि विलयान्निर्बीजोऽसंप्रज्ञातसमाधिरिति ॥ १२ ॥ ततश्च ध्येयाकारेण मनसः स्थितेश्च । आदिना श्रवणादिग्रहः । बहिरंतरं बाह्याभ्यन्तरं वस्तु ॥ * ॥ **दीपिका**—ततश्च ध्येयाकारेणावस्थानानंतरं यदाऽसंप्रज्ञातसमाधिर्भवति तदात्मनि परमात्मानि, एवमेकाग्रतयाऽवरुद्धं निरुद्धं चित्तं येनः सः । बहिर्दर्शनादिना घटादि, अंतरं स्मृत्या सुखादि किञ्चिदपि न वेद ॥ १३ ॥ एकचारी द्वितीयसंगशून्यः । मन्निकेतमिदमित्यध्यासशून्यो वाऽनिकेतः । अप्रमत्तः स्वरूपे एकान्तवासी निर्विक्षेपवासी । यद्वा—गुहायां हृत्कमलमध्ये गूढायां परदेवतायामाशयोन्तःकरणं यस्य स तथा, निरंतरं भगवदुपासनापर इत्यर्थः । तद्वत्सर्पवत् । इत्यर्थ इति—न हि सर्पः सजातीयमिलितः संभाषमाणः कृतैकत्रवासश्च दृश्यते यथा तथैव विवेकिना भाव्यमिति भावः ॥ * ॥ संगत्यागत्वेनाभेदात्पौनरुक्त्यमाशंक्य विशेषं व्याचष्टे—गुहाशय एकान्तवासी । गतिभिः सक्रोधदशनादिचेष्टाभिः । एकचारित्वादिविशेषणानां सर्पासाधारणत्वात्सर्पोत्र गुरुर्व्याख्यातः । मुनिपक्षे—आचारो जडवद्योगञ्चर्यास्तैर्विद्वानविद्वान्वेति न ज्ञायमानः ॥ १४ ॥ अन्यच्च सर्पशिक्षितमाह—किञ्चेति । गृहारम्भो गृहकरणम् । अतिदुःखाय आमेष्टकानिर्मितस्य प्रत्यब्दं लेपनादिना पक्वेष्टकादिनिर्मितस्य कुड्येष्टकापातादिना चातीवक्लेशो भवतीति भावः । परकृतवेश्मप्रविष्टस्तु जलपातादिना कुड्यपातादौ संभाव्यमाने ततो निजकंथाद्युपादायान्यत्र गत्वा सुखमाप्नोत्येवेति भावः ॥ * ॥ विफलः प्रत्युतातिदुःखायैव भवति । तर्हि कुत्र वसेदित्यपेक्षायामाह—सर्प इति ॥ १५ ॥ ० ॥ * ॥ एक इति सार्द्धकम् । नारायणो महत्स्रष्ट्राख्यः सर्वब्रह्मांडांतर्यामी पुरुषः । एकः स्वशक्ति

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ॥ कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥१७॥ परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ केवलानुभवानंदसंदोहो निरुपाधिकः ॥ १८ ॥ केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ संक्षोभयन्सृजत्यादौ तया सूत्रमरिंदम ॥ १९ ॥ तामाहुस्त्रिगुणव्यक्तिं सृजंतीं विश्वतोमुखम् ॥ यस्मिन्प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥

संहारावूर्णनाभिदृष्टांतेन मया संभाविताविति वक्तुं प्रथमं संहारप्रकारमाह एक इति सार्धत्रयेण । एकः कारकनिरपेक्षः पूर्वसृष्टमिदं जगत्कालकलया कलाशक्त्या संहृत्य ॥ १६ ॥ एक एवाद्वितीयः सजातीयविजातीयभेदशून्योऽभूत् । कारणभूतासु सत्त्वादिषु शक्तिष्वपि साम्यं नीतासु सतीषु गुणसाम्यं प्रधानं तदुपाधिः पुरुषश्च तयोरीश्वरः ॥ १७ ॥ परावराणां परे ब्रह्मादयः अवरेऽन्ये च मुक्ता जीवास्तेषां परमः प्राप्य आस्ते । कुतः । कैवल्यसंज्ञितो मोक्षशब्दाभिधेयः । तत्र हेतुः । केवलेति । केवलो निर्विषयः । स्वप्रकाशः आनंदानां संदोहः समूहः परमानंद इत्यर्थः । कुतः । निरुपाधिकः ॥ १८ ॥ अतः केवलादेव सृष्टिं दर्शयति । केवलेनात्मानुभावेन कालेन । सूत्रं क्रियाशक्तिप्रधानं महत्तत्त्वं सृजति । जीवसंसारहेतुभूते सूत्रे सृष्टेऽपि त्वं मा भैषीरिति संबोधयति । अरिंदम अरीन् रागादीन्दमयितुं समर्थः ॥ १९ ॥ सूत्रस्यैव व्यक्तिशब्देनोच्यमानस्य तामिति स्त्रीलिंगेन परामर्शः । त्रिगुणव्यक्तिं गुणत्रयकार्यम् । अत एव विश्वतोमुखं नानाविधं त्रिगुणात्मकं विश्वमहंकारद्वारेण सृजंतीम् । त्रिगुणकार्यस्य सूत्रसंज्ञायां कारणमाह । यस्मिन्निति । कारणभूते समष्टिरूपे यस्मिन्निदं विश्वं प्रोतं ग्रथितम् । " वायुर्वै गौतम सूत्रं वायुना वै

व्यतिरिक्तकारकशून्यः । कालोपि कला यस्यास्तया यया स्वशक्तिरूपया कल्पादौ पूर्वं सृष्टमिदं तथैव कल्पांते संहृत्य ॥ १६ ॥ आत्मानुभावेनात्मशक्तिरूपेण ॥ * ॥ अखिलानां तेषामाश्रयो लयस्थानं सत् । अत एवैकः स्वजातीयचिद्रूपजीवभेदरहितः । अद्वितीयो विजातीयप्रधानादिभेदरहितश्च सन्नात्माधारः स्वांशिरूपमहावैकुंठनाथानामाधारोऽभूत् । तस्मिन्नेव प्रविष्ट आसीदित्यर्थः । सर्वस्य तंत्र लयेन पृथग्व्यपदेशानर्हत्वादिति भावः ॥ * ॥ संदर्भः—कालेनेति युग्मकम् । आत्मानुभावेन स्वप्रभावरूपया शक्त्या कालेन "प्रभावं पौरुषं प्राहुः कालमेके यतो भयम्" इति कापिलेयोक्तेः । आदिपुरुषो महत्स्रष्टाख्यः प्रथमः पुरुषः । प्रधानपुरुषेश्वरः प्रकृतेर्जीवानां च नियंता ॥ १७ ॥ प्राप्यत्वे हेतुं पृच्छति—कुत इति । तत्र कैवल्यत्वे । इत्यर्थ इति—सर्वानंदास्पदत्वात्तद्रूपत्वाद्वा परमानंद इति भावः ॥ * ॥ परेषां स्वीयांशानामवरेषां विभिन्नांशानां च परमाश्रयो सौ कैवल्यसंज्ञितस्तदाख्ययाम्नातः सन्नास्ते तदानीमासीदित्यर्थः । केवल एव कैवल्यम्, स्वार्थे ष्यत्र् चातुर्वर्ण्यादिवत् । तत्र केवलत्वे । स्वगतभेदं दर्शयति—केवलेति । स्वरूपशक्तिवैचित्र्यात् केवलानां शुद्धानां स्वरूपभूतानामनुभावानां यः संदोहस्तद्रूपः । केवलत्वं दर्शयति—निरुपाधिक इति । तदुक्तं तृतीये—'सुप्तशक्तिरसुप्तदृक्' इति ॥ १८ ॥ यतः परमानन्दोस्ति अतो हेतोः "आनंदादेव खल्विमानि भूतानि जायंते " इत्यादिश्रुतेः । तया मायया ॥ * ॥ स्वरूपशक्तिमेव स्थापयन्सृष्टिं योजयति—केवलेति । सृष्टिकाले महावैकुंठनाथादाविर्भूय स एव शुद्धस्वरूपप्रभावरूपया शक्त्या त्रिगुणात्मिकां प्रधानैकरूपां स्वमायां संक्षोभयन्विषमगुणां कुर्वन् ॥ १९ ॥ अत एव त्रिगुणकार्यत्वादेव । प्रोतत्वे प्रमाणमाह—"वायुर्वा" इत्यादिश्रुतिम् । हे गौतम सूत्रमेव वायुः संदृब्धानि संग्रथितानीति श्रुतिपदार्थः । संसरति देहयोगवियोगमनुभवति ॥ * ॥ तामिति स्त्रीलिंगेन सूत्रस्यैव परामर्शस्तत्सूत्रमेव त्रिगुणव्यक्तिं गुणत्रयकार्यमाहुरित्यर्थः । तच्छब्देन क्वचिद्विधेयपरामर्शकत्वस्यापि सिद्धांतितत्वात्, नित्यं यत्कर्म स यम इतिवत् । अत एव गुणत्रयस्यादिकार्यत्वादेव । हे गौतम वायुः

यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्रतः ॥ तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥ यत्रयत्र मनो देही धारयेत्सकलं धिया ॥ स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ॥ २२ ॥ कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशितः ॥ याति तत्सात्मतां राजन्पूर्वरूपमसंत्यजन् ॥ २३ ॥ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ॥ स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥ देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कम् ॥ तत्त्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसंगः ॥ २५ ॥

गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदब्धानि " इति श्रुतेः । येन वाय्वात्मना प्राणरूपेण जीवः संसरति ॥ २० ॥ तदेवं शिक्षितमर्थमुक्त्वा दृष्टांतमाह । यथेति । हृदयादुद्गताम् । वक्रतो वक्रेण संतत्य प्रसार्य विहृत्य क्रीडित्वा ॥ २१ ॥ भगवद्ध्यानपराणां तत्सारूप्यं न चित्रमिति पेशस्कृतो भ्रमरविशेषाज्ज्ञातमित्याह । यत्रयत्रेति । सकलमेकाग्रम् ॥ २२ ॥ कुड्यां प्रवेशितो निरुद्धो भयेन ध्यायंस्तत्सात्मातां तत्सारूप्यम् । साम्यतामिति पाठे त्वार्षता । पूर्वरूपमसंत्यजन्नित्यस्यायमभिप्रायः । यदा तेनैव देहेनान्यसारूप्यं दृश्यते तदा किं वक्तव्यं देहांतरेण सारूप्यं घटत इति ॥ २३ ॥ स्वदेहादेव शिक्षितमाह । स्वात्मेति । स्वात्मनो देहाच्छिक्षिताम् ॥ २४ ॥ गुरुत्वे हेतुः । विरक्तिविवेकयोर्हेतुः । विरक्तिहेतुत्वमाह । सत्त्वनिधनमुत्पत्तिविनाशौ बिभ्रत्स्म । किंच सततं संततमार्त्युदर्कम् आर्तिर्दुःखं तदेवोदर्कम् उत्तरफलं बिभ्रत् । यद्वा सततार्तिरेवोदर्के उत्तरफलं यस्य तत्सत्त्वनिधनं बिभ्रत् । विवेकहेतुत्वमाह । तत्त्वानीति । यथा यथावत् । एवमत्युपकारित्वेऽपि देहे

समष्टिप्राणः सूत्रं सूत्रशब्दवाच्यः । संदब्धानि संग्रथितानि वाय्वात्मना वायोः स्वरूपभूतेन ॥ २० ॥ तयोर्णया । एवमीशोऽपि स्वस्माद्विश्वं प्रकटय्य तेन विहृत्य पुनस्तं ग्रसतीत्यर्थः ॥ * ॥ ऊर्णनाभिरत्र दीर्घसूक्ष्मः कीटविशेषस्तस्यैव वक्रेणोद्गीर्णनिगरणदृष्टेः । उद्गीर्णामुत्पन्नाम् । वक्रेण द्वारेण ॥ २१ ॥ ० ॥ * ॥ तत्सारूप्यं भगवत्समानरूपताम् । भ्रमरविशेषात् भृंगीति ख्यातात् । यत्रयत्रेति स्नेहादिना भरतादौ मृगसारूप्यादेर्दृष्टत्वात् । 'अंते या मतिः सा गतिः' इति न्यायाच्चेति भावः ॥ २२ ॥ साम्यशब्दाद्भावार्थकप्रत्ययविधानमार्षत्वादेवेत्याह—साम्यतामिति पाठे त्वार्षतेति ॥ * ॥ साम्यतामिति—साम्यस्य समत्वरूपत्वात्समत्वेऽपि समत्वत्वसत्त्वेऽनवस्थापातात् । 'पूर्वदेहमसंत्यजन्' इति ध्यातृदेह एव ध्येयस्तुल्याकारः स्याद्ध्रुवादिषु दृष्टत्वात् । क्वचिद्ध्यातृभक्तानां दृश्यमानो देहत्यागस्तु भक्तियोगस्य रहस्यत्वरक्षार्थमेव भगवतापि मायया तथा दर्श्यत एव न तु तात्त्विकस्त्यागः स इति ॥ २३ ॥ उपसंहरन्नाह—एवमिति ॥ * ॥०॥ २४ ॥ "ज्ञानवैराग्ययोर्दाता गुरुर्लोकेषु कथ्यते" इति शिष्टोक्तेर्देहस्योभयहेतुत्वेन गुरुत्वमाह—देह इति । न केवलमुत्पत्तिविनाशधार्येव किन्तु दुःखाधिक्यमपीत्याह—किञ्चेति । कस्य फलमिति साकांक्षत्वादाह—यद्वेति ॥ * ॥ देहैकदेशः कुक्षिरपि द्वित्रदिवसीयभक्ष्यमसंगृह्णन्विरक्त इवेति तस्मादप्यसंग्रहं शिक्षेत् । यथा तत्त्वानि विमृशामि तथैव श्रोत्रादींद्रियत्रताऽनेन श्रीभगवत्प्रापकश्रवणकीर्तनादिमयं भक्तियोगमपि प्राप्नोमीत्यर्थः । यथा कश्चिद्रसिको महाभक्तः सर्वरसास्वादेऽपि रसाऽलिप्तः किंतु हरिरसासक्तोऽनुरागी स्यादेवं जिह्वापि घृतादिसर्वरसास्वादिन्यपि न तत्तत्संपर्कवती किंतु तांबूलरससंपर्कवत्येव दृष्टा यत इयमरुणा स्यात् । एवमत्युपकारिण्यपि गुरावप्यस्मिन्देहे स्वीय इति स्थिर इति बुद्धिर्न कार्येत्याह—पारक्यमद्य श्वो वा श्वशृगालादिभक्ष्यमित्यवसितं निश्चयो यस्मिन्सः । पारक्यमिह क्लीबत्वमा

जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णाति यत्प्रियचिकीर्षया वितन्वन्॥स्वांते सकृच्छ्रमवरुद्धधनः स देहः सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मा ॥२६॥ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनंति ॥ ॥२७॥सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या वृक्षान्सरीसृपपशून्खगदंशमत्स्यान्॥तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः॥२८॥

नैवास्था कर्तव्येत्याह । तथापीति । पारक्यं श्वसृगालादिभक्ष्यमिति निश्चितवान् ॥ २५ ॥ सततात्युर्दर्कतां प्रपंचयति जायेति द्वाभ्याम् । यस्य देहस्य प्रियचिकीर्षया भोगसंपादनेच्छया जायादिवर्गान्वितन्वन्संपादयन्पुष्णाति पुरुषः । कथंभूतः । सकृच्छ्रं सायासं यथा भवति तथाऽवरुद्धानि संचितानि धनानि येन सः । देहविशेषणं वा । स देहः स्वांते स्वस्यायुषोंतेऽवसीदति नश्यति । किंच । देहनाशेऽपि न दुःखसमाप्तिरित्याह । अस्य पुरुषस्य देहांतरबीजं कर्म सृष्ट्वेति । वृक्षस्येव धर्मो यस्य सः ॥ २६ ॥ किंच जिह्वेति । अमुं देहं तदभिमानिनं पुरुषं वा एकतो रसं प्रति जिह्वा अपकर्षत्याच्छिनत्ति । कर्हि कदाचित्तर्षा पिपासा जलं प्रति । शिश्नो व्यवायं प्रति । त्वक् स्पर्शं प्रति । उदरमन्नमात्रं प्रति । श्रवणं शब्दं प्रति । घ्राणो गंधं प्रति । चपलदृक् रूपं प्रति । क्व च कचित्स्वस्वविषयं प्रति कर्मशक्तिः । अन्यदपि कर्मेंद्रियम् । लुनंति त्रोटयंति ॥ २७ ॥ तदेवं देहो गुरुरित्यादित्रिभिर्विरक्तिविवेकहेतुत्वमुपपाद्येदानीमस्य देहस्यातिदुर्लभत्वं दर्शयन्नीश्वरनिष्ठां विधत्ते सृष्ट्वेति द्वाभ्याम् । पुराणि शरीराणि । पुरुषं पुरुषदेहम् । ब्रह्मणोऽवलोकायापरोक्षज्ञानाय धिषणा बुद्धिर्यस्मिंस्तम् । तदुक्तं 'तासां मे पौरुषी प्रिया' इति । श्रुतिश्च "पुरुषत्वे चाविस्तरामात्मा" इत्यादि । ईश्वरो हि करणाधिष्ठात्रीरग्न्यादिदेवता वागादिभिः सह सृष्टवान् । ताश्च तं प्रति भोगार्थं शरीरमयाचंत । स च ताभ्यो गोशरीरमश्वशरीरं पुरुषशरीरं यथाक्रममानीतवान् । ततस्ता देवताः सोऽब्रवीद्यथाऽऽयतनं चक्षुरादिस्थानमस्मिन्देहे प्रविशतेति । तदाह । ताभ्य इत्यादि यथा–" ताभ्यो गामान

र्षम् ॥ २९ ॥ पाठा० चिकीरषयेत्यत्र रस्यादंतत्वमार्षम् । संभवत्वाद्देहविशेषणमेवेति–न देहनाशेनैव झकटनिवृत्तिरित्याह–किञ्चेति । यथा वृक्षो बीजेन बीजांतरपरंपरारंभणहेतुस्तथाऽयं देहोप्यसज्जायादिपोषणलक्षणबीजेन देहांतरपरंपरारंभकारणमित्यर्थः ॥ * ॥ ननु विरक्तिविवेकभक्तिप्रदातुः सर्वगुरुषु श्रेष्ठस्य देहस्यास्य नश्वरस्यापि सेवा परमासक्त्यैव कर्तुं युज्यतेऽन्यथा कृतघ्नत्वलक्षणो दोषः स्यादित्यतः कथमसंग इति ब्रूषे, सत्यम्, विचित्रचरित्रोयं गुरुर्यतः परमासक्त्या सेव्यमानो ह्ययं विवेकवैराग्यादिकं किमपि नोत्पादयति प्रत्युत संसारमहांधकूप एव निक्षिपतीत्याह द्वाभ्याम्–जायेत्यादि । यस्य देहस्य प्रियचिकीर्षया जायादींस्तन्वन्विस्तारयन्पुष्णाति । यदा देहस्य प्रियचिकीर्षोत्पद्यते तर्हि जायादीन्संपाद्य तानेव पुष्णाति तेष्वेवासक्तो भवति "लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते । पुत्रदारमयैः पाशैः पुमान्बद्धो व्रजत्यधः ॥" इति गारुडोक्तेः । लुप्तविवेकादिवित्तः स देहोंते वृक्षो वृक्षांतरवद्देहांतरबीजं सृष्ट्वैव येन पुनर्भवरहस्यान्नश्यतीत्यर्थः । यद्वा–उद्भिज्जसाम्येनात्र वृक्षपदं यवाद्योषधीपरं ज्ञेयम् ॥ २६ ॥ अवसीदतीत्युक्तं विवृणोति–किञ्चेति । कर्मशक्तिः पाण्यादिलक्षणाः पूर्वोऽदृष्टशक्तिर्वाऽत एवोक्तं स्वामिचरणैः–कर्मशक्तिः कर्मेंद्रियमन्यदप्यदृष्टमपि कर्मशक्तिरिति ॥ * ॥ तस्माद्दुःखे देहाय केवलं प्राणधारणकरमन्नमात्रं देयं तदप्यनासक्त्यैव एवैवास्य गुरोः शुश्रूषा श्रद्धयास्मै भोगाश्चेद्दीयंते तर्हि शृणु तत्त्वमित्याह–जिह्वेति । अमुं देहासक्तं नरमेकतो जिह्वेत्यादि ॥ २७ ॥ तदेवमित्थं पुरुषदेहस्य दुर्लभत्वे ज्ञानयोग्यत्वे च प्रमाणमाह–श्रुतिश्चेति । ईश्वरो हीत्यादिका कथा वैदिकी । करणाधिष्ठात्रीरिंद्रियाधिष्ठात्रीः ।

लब्ध्वा सुदुर्लभमिदं बहुसंभवांते मानुष्यमर्थदमनित्यमपीह धीरः ॥ तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥ एवं संजातवैराग्यो विज्ञानालोक आत्मनि ॥ विचरामि महीमेतां मुक्तसंगोऽनहंकृतिः ॥ ३० ॥ न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् ॥ ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥

यत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बत " इति च ॥ २८ ॥ तस्माद्बहूनां संभवानां जन्मनामंते मानुष्यमनित्यमप्यर्थदं पुरुषार्थप्रापकं दैवाल्लब्ध्वेदमनुमृत्यु अन्वनु निरंतरं मृत्यवो यस्य तद्यावन्न पतेत्तावदेव तूर्णं शीघ्रं निःश्रेयसाय यतेत । विषयः पुनः सर्वतः पश्वादियोनिष्वपि स्यादेव ॥ २९ ॥ तदेवं हेयोपादेयविवेकं बहुधा निरूप्येदानीं यदुक्तं 'त्वं तु कल्पः कविर्दक्षः' इत्यादि तत्रोत्तरमाह । एवमिति । एवं बहुभ्यो गुरुभ्यः शिक्षितेन विशिष्टं ज्ञानमेवाऽऽलोकः प्रदीपो यस्य सः । सप्तम्यंतं वा आत्मविशेषणम् । आत्मनि स्वस्वरूपे स्थित एव महीं विचरामि ॥ ३० ॥ ननु किं बहुभिर्गुरुभिर्न हि श्वेतकेतुभृगुप्रमुखैर्बहवो गुरव आश्रितास्तत्राह । न ह्येकस्मादिति । बहुधा सप्रपंचनिष्प्रपंचभेदादिभिः । अयं भावः । नैते परमार्थोपदेशगुरवः किंत्वन्वयव्यतिरेकाभ्यामात्मन्यसंभावनादिमात्रनिवर्तकास्तेषां बहुत्वं युक्तमेवेति । ज्ञानप्रदं गुरुमेकमेव वक्ष्यति । 'मदभिज्ञं गुरुं शांतमुपासीत' इति । उक्तं च "तस्मा

ताश्च देवताः । तमीश्वरम् । स चेश्वरः । ताभ्यो देवताभ्यः । ततः शरीरमानयनानंतरम् । ता इंद्रियदेवताः प्रति । स ईशः । यथायतनं स्वस्वस्थानानतिक्रमेण । इतीत्थम् । तदा तास्मिन्काले । गां गोशरीरम् । नोस्माकम् । भोगाय न वै एतदलं पर्याप्तमिति । एवमग्रेपि पुरुषशरीरं दृष्ट्वाहुः—सुकृतम् । एतत्ते सुकृतमस्मद्भोगायालमित्यर्थः ॥ * ॥ **दीपिका**—उपपाद्य हेतुरूपया संसाध्य । सततार्त्युदर्कत्वाद्विरक्तिहेतुत्वं साधनीयं ज्ञानसामग्रीसद्भावात्तु विवेकहेतुत्वमिति ज्ञेयम् । अयं प्रयोगः—मनुष्यदेहो विरक्तिहेतुः सततार्त्युदर्कत्वात् रोगादिवत् यन्नैवं तन्नैवं यथा देवादिदेहः । एवं मनुष्यदेहो विवेकहेतुः ज्ञानसामग्रीसद्भावात् देवदेहवत् यन्नैवं तन्नैवं यथा पश्वादिदेहः । निरुक्तव्याख्यायां श्रुतिप्रमाणमाह—ताभ्यः करणाधिष्ठातृदेवताभ्यः गां गोशरीरमानयद्ददौ नोऽस्माकमयं गोदेहो भोगाद्यर्थं नैवालं न समर्थः । एवमग्रेपि ॥ २८ ॥ यतो मनुष्यदेहो दुर्लभस्तस्मादित्यर्थः । अनुमृत्यु पृष्ठतोनुगतांतकमित्यर्थः । निःश्रेयसाय कल्याणावाप्तये । तदुक्तम्—"यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेंद्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्संदीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ॥" इति श्रीकृष्णेन गरुडं प्रति ॥ * ॥ ० ॥ २९ ॥ एवमित्थम् । आत्मपक्षे—विज्ञानेनालोकः साक्षात्कारो यस्य तस्मिन् । "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतेः ॥ * ॥ यदुक्तम् 'त्वं तु कल्पः कविः' इत्यादि तत्रोत्तरमाह—एवमिति । आत्मनि परमात्मनि । यद्विज्ञानमपरोक्षानुभवस्तत्रैवालोके दृष्टिस्तात्पर्यं यस्य सः । तदेवं पंचविंशतिगुरुभ्यः शिक्षितार्थकथनप्रकारेण । तत्र यदुप्रश्ने । ब्रह्मण्येवाहं स्थितो न तु बाह्ये विषये ममेच्छोत्पत्तिरिति । रसो वै सः, रसं ह्येवायं लब्ध्वानंदी भवतीति भावः ॥ ३० ॥ अत्राक्षिपति—नन्विति । अत्राशय माह—अयं भाव इति । परमार्थोपदेष्टा गुरुस्त्वेक एव भवतीति भावः ॥ * ॥ एते व्यावहारिकपदार्थाः । अन्वयव्यतिरेकाभ्यां तत्तद्धर्माणां हेयत्वोपादेयत्वाद्विधिनिषेधाभ्यामित्यर्थः । असंभावना गुरूपदिष्टे सन्देहः । ननु 'मदभिज्ञं गुरुं शांतमुपासीत' इति । "तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्" इत्याद्युक्तिभ्य एक एव गुरुराश्रणीयोवगम्यते नापि श्वेतकेत्वित्यादि, सत्यम्, ममापि मंत्रोपदेष्टा गुरुरेक एवोपास्योस्ति किंतूपासनायामानुकूल्यप्रातिकूल्यदृष्टांतीभूताः पदार्था एते परामृश्य गुरूकृता इत्यन्वयव्यतिरेकाभ्यां मे शिक्षागुरव एवैते न दीक्षागुरव इति ॥ * ॥ **संदर्भस्तु**—तस्मान्महागुरूप

श्रीभगवानुवाच ॥ इत्युक्तो स यदुं विप्रस्तमामंत्र्य गभीरधीः ॥ वंदितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥ अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ॥ सर्वसंगविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कन्धे भगवदुद्धवसंवादे नवगुरुशिक्षानिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

द्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् " इति ॥ ३१ ॥ विप्रो दत्तात्रेयः । 'योगर्द्धिमापुरुभयीं यदुहैहयाद्याः ' इत्युक्तत्वात् । यथागतं तथैव । यदृच्छया ययावित्यर्थः ॥ ३२ ॥ भगवान्स्वीयं ब्रह्मवित्कुलमिति श्लाघते । नः पूर्वेषां पूर्वज इति । समचित्तो ब्रह्मनिष्ठः । अत्र संग्रहश्लोकाः । " कपोतमीनहरिणकुमारीगजपन्नगाः ॥ पतंगः कुररश्चाष्टौ हेयार्थे गुरवो मताः ॥ मधुकृन्मधुहर्ता च पिंगला च द्वयोस्त्रयः ॥ उपादेयार्थविज्ञाने शेषाः पृथ्व्यादयो मताः ॥ तदवांतरभेदश्च तत्रतत्र स्फुटीकृतः ॥ अध्यायत्रितये चाष्ट नवाष्टावीरिताः क्रमात् ॥ " इति ॥ ३३ ॥ इति श्रीमद्भागवते म० एकादशस्कंधे श्री० टीकायां नवमोऽध्यायः ॥ ९ ॥ छ ॥

दिष्टमतपोषाय तद्विरुद्धमतनिरासाय च स्वबुद्ध्या मननार्थं व्यावहारिकपदार्था एव गुरुत्वेन संभाविता न तु कापिलादिमतांतरस्थापका इति भावः ॥ ३१ ॥ विप्रपदेन दत्तात्रेयस्यैवात्र ग्रहणं नान्यस्येति 'योगर्द्धिम्' इत्यादिना द्वितीयस्कंधे यदुहैहयादीनां तस्यैवोपदेष्टृत्वावगमात् । इत्यर्थ इति–यथातथयोर्नित्यसंबंधाद्यथा निरपेक्षत्वेन समागतस्तथा ययौ तत्कृतपूजाद्रव्यादि विहायैवेति भावः ॥ ॥ * ॥ ० ॥ ३२ ॥ अत्र पञ्चविंशगुर्वाख्याने । हेयार्थे त्यक्तव्यार्थेऽष्टौ गुरवो गृहीताः । क्रमात्कपोतादिभ्यः गृहासक्तित्यागरसत्यागग्राम्यगीतश्रुतित्यागसजातीयसंगत्यागस्त्रीसंगत्यागगृहकरणबहुभाषणादित्यागचाक्षुषविषयत्यागाप्रियवस्तुत्यागाः शिक्षिताः १ । मधुकृदादयस्त्रयः द्वयोस्त्यक्तव्यग्राह्ययोरर्थयोर्गुरवः, मधुकृत्तः संचयत्यागासारोपादाने द्वे एव, तथा मधुहर्तृतोपि स्वसंचयत्यागपरसांचितोपादाने, तथैव पिंगलात आशात्याग नैराश्योपादाने च शिक्षिते । शेषा उक्तशेषाश्चतुर्दशस्वशरीरसहिताः उपादेयार्थस्य ग्राह्यार्थस्य विज्ञाने । पृथ्व्यादयः–पृथ्वीवाय्वाकाशाग्निचंद्ररविसिंध्वजगरार्भकशरकृदूर्णनाभिसुपेशकृन्निजदेहा,: एभ्यः क्रमात् क्षमापरार्थताप्राणमात्रवृत्तिविषयानासक्त्यात्मासंगत्वस्वच्छत्वादितेजस्वित्वादिस्वाभाविकात्मानिरुपाधित्वनिश्चयात्मजन्मादिविकाराभावनिश्चयसमयस्वीकारपरित्यागात्मोपाधिसंगराहित्यनिश्चयप्रसन्नत्वगंभीरत्वादिद्रव्यागमनागमनकृतहर्षशोकाभावदैवागतभोगस्वीकारात्मारामत्वविधिनिषेधातीतत्वचित्तैकाग्र्यसृष्ट्यादीश्वरस्वातंत्र्यसर्वदेश्वरध्यानाविवेकविरागाः शिक्षिता इति २ । तयोर्हेयोपादेययोरवांतरभेदस्तत्रतत्र तत्तदुपाख्याने, प्रथमेऽध्यायेऽष्टपृथिव्यप्तेजोवाय्वाकाशरवींदुकपोताः, द्वितीये त्वजगरसमुद्रपतंगमधुकृद्गजमधुहर्तृहरिणमीनपिंगलाख्याः, तृतीये–कुररार्भककुमारीशरकृत्सर्पोर्णनाभिपेशस्कृन्निजदेहाख्या अष्टौ वर्णिताः ३ ॥ * ॥ समचित्तोऽभिन्नात्मनिष्ठो बभूव । यद्वा–स्वर्गापवर्गनिरपेक्षु समचित्त एकांतभक्तो बभूवेति । कपोतादयोष्टौ हेयार्थे गुरव इति–कपोतवत्संगो हेयः । मीनवद्रसासक्तिर्हेया । हरिणवच्छब्दासक्तिर्हेया । कुमारीकंकणवत्सजातीययोगिसंगोपि हेयः । गजवत्स्पर्शासक्तिर्हेया । सर्पवज्जनसंगानियतनिकेतादिकं हेयम् । पतंगवद्रूपासक्तिर्हेया । कुररेण यथामिषं त्यक्तं तथा धनादिपरिग्रहो हेयः । मधुकरादयस्त्रयो द्वयोर्हेयोपादेययोर्गुरवः, तत्र मधुकृद्वन्माधुकरवृत्तिसारसंग्रहावुपादेयौ । तत्सजातीयमधुमक्षिकावत्संग्रहो हेयः । मधुहर्तुः परमदुःखदानेन संचितग्रहणं हेयम् । उद्यमंतरैव देहनिर्वाहकभोग उपादेयः । पिंगलाया आशामयी पूर्वावस्था हेया, नैराश्यमुपादेयम् । पृथिव्यादीनां तु सहनादयः सर्वे धर्मा उपादेयाः, इति विवेचनीयं सर्वत्र बुद्धया ॥ ३३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे नवमोऽध्यायः ॥ ९ ॥

श्रीभगवानुवाच ॥ मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥ अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ॥ गुणेषु तत्त्वध्यानेन सर्वारंभविपर्ययम् ॥ २ ॥ सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ॥ नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः ॥ ३ ॥ निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ॥ जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥ ४ ॥

चतुर्विंशतिगुर्वाख्यालब्धसंभावनाभुवः ॥ उद्धवस्यात्मतत्त्वाप्त्यै साधनोक्तिरतः परैः ॥ १ ॥ दशमे देहसंबंधात्संसृतिर्नात्मनः स्वतः ॥ इत्येतद्वर्णयामास मतांतरनिरासतः ॥ २ ॥ तदेवमन्वयव्यतिरेकाभ्यामुत्पन्नविवेकज्ञानस्य तत्त्वज्ञानायादित आरभ्य साधनान्युपदिशति भगवान् । मयेति । मया पंचरात्राद्युक्तवैष्णवधर्मेष्ववहितोऽप्रमत्तः संस्तद्विरोधेन वर्णाद्याचारं समाचरेदनुतिष्ठेत् ॥ १ ॥ कथमकामात्मता संभवति तत्राह । अन्वीक्षेतेति । स्वधर्मैर्विशुद्धचित्तः सन्देहिनां विषयेषु सत्यत्वाभिनिवेशेन ये सर्वे आरंभास्तेषां फलवैपरीत्यं पश्येत् एवं फलवैपरीत्यादकामः स्यात् ॥ २ ॥ किंच काम्यविषयाणां मिथ्यात्वादपीत्याह । सुप्तस्येति । विफलोऽर्थशून्यः । अत्रैवं प्रयोगः । इंद्रियैर्या बहिर्नानाबुद्धिः सा विफला नानात्मकत्वात् ऐंद्रियकत्वाच्च मनोजन्यस्वप्नमनोरथवदिति ॥ ३ ॥ "मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥" इति स्मृतिरतः प्रवृत्तं काम्यं कर्म त्यजेन्निवृत्तं नित्यनैमित्तिकमेव कुर्यात् । आत्मविचारे तु सम्यक् प्रवृत्तो निवृत्त

चतुर्विंशतिगुरूणामाख्यया कथनेन लब्धा संभावनात्मास्तीत्येवंरूपा भूर्भूमिर्येन तस्य तथा । अतो नवमाध्यायतः परैरध्यायैः ( १ ) । स्वतो न स्वाभाविकी नेत्यर्थः । मतांतरं वेदांतमतापेक्षया मीमांसकमतं तस्य निरासतः खण्डनेन ( २ ) । अन्वयव्यतिरेकाभ्यां कर्तव्यस्वीकाराकर्तव्यपरित्यागाभ्याम् । तदविरोधेन मदुक्तधर्माविरोधेन । अकामात्मा विषयानासक्तचेताः ॥ * ॥ **दीपिका**—चतुर्विंशतिगुरुकथनेन लब्धा संभावना आत्मानुभवे स्वयोग्यताऽध्यवसायस्तस्या भुवः स्थानस्योद्धवस्येत्यर्थः ( १ ) । स्वतः स्वरूपतो न इत्येतज्जीवसंसृतेरवास्तवत्वम् । मतांतरं मीमांसकमतम् ( २ ) । तदेवं चतुर्विंशतिगुरुवर्णनप्रकारेणान्वयव्यतिरेकाभ्यां हेयोपादेयत्वेन विधिनिषेधाभ्यां तदविरोधतः वैष्णवधर्माविरोधेन तत्प्राप्तिनिश्चयाभावान्निष्कामः स्यादिति भावः ॥ १ ॥ अत्राशंकते—कथमिति । फलवैपरीत्यं यत्सुखार्थं क्रियमाणं तत्रापि दुःखमेव पश्येदित्यर्थः ॥ * ॥ ० ॥ २ ॥ न केवलमारंभविपर्ययेक्षणमेवाकामताहेतुरन्योपीत्याह—किंचेति । अत्र विफलत्वे । प्रयोगोऽनुमानम् । ऐन्द्रियकत्वादिन्द्रियग्राह्यत्वात् । स्पष्टार्थमन्यत् ॥ * ॥ गुणैरिन्द्रियैः । भेदात्मधीर्बहिर्नानाबुद्धिः । भक्तिरूपा भेदात्मधस्तु नानात्मिका न भवति श्रीभगवद्रूपालंबनैक्यात्मत्वादिति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—व्यावहारिकफलस्य नश्वरत्वात्प्राप्तिरन्यप्राप्तिसमैव, पारमार्थिकफलं तु कदिन्द्रियैर्नाप्यत एवेत्याह—सुप्तस्येति । नानात्मकत्वान्नानापदार्थालंबनत्वाद्विफलः परमार्थफलशून्यः । तथैव गुणैरिन्द्रियैर्भेदात्मसु नानाविषयेषु धीर्नानापदार्थालंबिनी कृता इत्यर्थः । तथा च प्रयोगः—इन्द्रियैर्गुणमयवस्तुषु पृथक्पृथग्बुद्धिः पारमार्थिकफलशून्या, भद्राभद्रात्मकनानापदार्थालंबनत्वान्मनोजन्यस्वप्नादिवत् । तस्मात्परमेश्वरैकालंबना बुद्धिरेव पारमार्थिकफला तद्रूपगुणलीलाभक्तादीनां ततः पार्थक्याभावाच्चिदेकमयत्वात्केवलभद्रात्मकत्वाच्च तदैक्यमेव ज्ञेयम् । अत एवोक्तम्—"व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन । बहुशाखा ह्यनंताश्च बुद्धयो व्यवसायिनाम् ॥" इति ॥ ३ ॥ तत्र कर्मसु मध्ये, इति स्मृतिपदार्थः । अतः स्मृत्युक्तेः । नित्यनैमित्तिकानां प्रत्यवायनाशपूर्वकांतःकरणशुद्ध्यापादकत्वान्निवृत्तिप्रवर्तकत्वेन निवृत्तत्वमेवेत्याह—निवृत्तं नित्यनैमित्तिकमिति । नाद्रियेदतीव हठं न कुर्यात्तत्करणे, यथादेशकालं कुर्यादित्यर्थः ॥ * ॥

यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् ॥ मदभिज्ञं गुरुं शांतमुपासीत मदात्मकम् ॥ ५ ॥ अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ॥ असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः ॥ ७ ॥ विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् ॥ यथाऽग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥ ८ ॥

कर्मचोदनामपि नाद्रियेत ॥ ४ ॥ किंच यमानहिंसादीनभीक्ष्णमादरेण सेवेत । शौचादींस्तु नियमान्क्वचिद्यदा शक्तिस्तदा आत्मज्ञानाविरोधेन । यमान्द्वादश नियमांश्चै कोनविंशेऽध्याये वक्ष्यति । किंच यमेष्वप्यादरं परित्यज्य गुरुमुपासीतेत्याह । मदभिज्ञमिति । मदात्मकं मद्रूपम् ॥५॥ गुरुसेवकस्य धर्मानाह । अमानीति । दक्षोऽनलसः । निर्ममो जायादिषु ममताशून्यः । गुरौ तु दृढसौहृदः । असत्वरोऽव्यग्रः । अमोघवाग्व्यर्थालापरहितः । एतान्येव शिष्यलक्षणानि ज्ञेयानि ॥ ६ ॥ ननु स्वजाया दिषु कथं निर्ममः स्यात्तत्राह । जायेति । औदासीन्यहेतुं विवेकं दर्शयति । आत्मनोऽर्थं प्रयोजनं सर्वत्र सममिव पश्यन्निति । अयं भावः । सर्वदेहेष्वात्मन एकत्वाज्जा यादिदेहेऽस्मिंश्च स्वदेहे आत्मनोऽर्थः सुखादिः सम एव । केन विशेषेणैतेष्वेव ममत्वाभिनिवेश इत्येवमुदासीनः सन् गुरुं प्रपद्येतेति ॥ ७ ॥ अहो कोऽसौ देहादिव्य तिरिक्त आत्मा यस्यैक्यादर्थः सर्वेषु समः स्यात्तमाह । विलक्षण इति । स्थूलसूक्ष्मदेहद्वयादात्माऽन्यो यतो विलक्षणः । द्वेधा वैलक्षण्यं दर्शयति । ईक्षिता स्वदृगिति ।

**संदर्भः**—मत्पर इति क्रियात्रयेपि योज्यम्, मदाश्रयं विना सर्वमपि तत्तद्व्यर्थमित्यभिप्रायात । संशब्देन परमवैराग्यपूर्वकं सूचयति । यथोक्तं गीतासु—"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते । सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥" इति ॥ ४ ॥ तर्हि यमादिचोदनायाः का गतिरिति चेदाह—किंचेति । तदा विचारकाले । यमनियमानग्रे वक्ष्यमाणा नर्पीहोपयोगित्वादाह—"अहिंसा सत्यमस्तेयमसंगो ह्रीरसंचयः । आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम् ॥" इति यमाः । "शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् । तीर्थाटनं:परार्थेहा तुष्टिराचार्यसेवनम् ॥" इति नियमाः । ज्ञानोत्पत्तावंतरंगसाधनमाह—किंचेति । मदात्मकं मद्रूपम् । ननु "सर्वं खल्विदं ब्रह्म" इति श्रुतेस्सर्वे त्वदात्मका एवेति भेदभ्रमव्यवच्छिन्नत्वान्न सर्वेषां मदात्मकत्वमिति कीदृशस्त्वदात्मकोस्तीति चेदाह—मदभिज्ञं बोधबाधितभेदभ्रममिति । यद्वा—मदभिज्ञं शास्त्रतः कृतमन्निश्चयम् । मदात्मकं मद्ध्याननिष्ठम् । एतेन "श्रोत्रियं ब्रह्मनिष्ठम्"इति श्रुत्यर्थो गृहीतः । "मामेव नित्यं ध्यायेद्यो मदात्मा स प्रकीर्तितः" इति तीर्थोक्तेः । अत एव शांतमुपशमनिष्ठम् ॥ * ॥ यमानित्यर्द्धकम्, मदभिज्ञमिति युग्मकम् ॥ ५ ॥ अमानी मानानाकांक्षी । अमत्सरी तच्छिष्यांतरास्पर्द्धी ॥ * ॥ असत्वरः साध्यवस्तुप्राप्तौ त्वरामकुर्वन् ॥ ६ ॥ स्वजायादिषु ममतात्यागो दुष्कर इत्याशंकते—नन्विति । अत्राशयमाह—अयं भाव इति । एतेष्वेव जायादिष्वेव । सर्वान्स्वीयान्पराकीयांश्च सादृश्येन पश्यन्सर्वेषां सुखादिदाने तुल्यमेव यत्नं कुर्यान्न वैषम्येणेति भावः । यद्वा—आत्मनोर्थमभीष्टं हारिं सर्वेषु समं पश्यन्निति ॥ * ॥ जायादिषु उदासीनो ममताविशेषमभावयन् । यतः सर्वेषु जीवेषु सुखप्राप्तिदुःखहानिरूपमर्थं चात्मन इव पश्यन्वांछन्नतः समं च पश्यन्निति ॥ * ॥ **विश्वनाथस्तु**—आत्मनः स्वस्यार्थं स्वर्ण रूप्यादिमुद्राधनमिव पश्यन् । तद्यथा—व्यावहारिकं यावद्यस्य करगतं स्यात्तावदेव तस्य ममतास्पदं न तु सर्वदेव तत्तदेवं जायादिकमपीति तत्रतत्र ममताया अनैकांतिकत्वदर्शनान्निर्ममतैवोचिता । तदुक्तं चित्रकेतुपुत्रेण—'यथा वस्तूनि पण्यानि हेमादीनि' इत्युपक्रम्य "नित्यस्यार्थस्य संबंधो ह्यनित्यो दृश्यते नृषु । यावदेव हि संबंधो ममत्वं तावदेव हि॥" इति श्रीगुरुदेवेष्टदेवयोस्तु तादृशत्वासंभवात्तत्र दृढसौहृद्यमेवोचितम् ॥ ७ ॥ विस्मित इव पृच्छति—अहो

निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान्गुणान् ॥ अंतः प्रविष्ट आधत्त एवं देहगुणान्परः ॥ ९ ॥ योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ॥
संसारस्तन्निबंधोऽयं पुंसो विद्याच्छिदात्मनः ॥ १० ॥ तस्माज्जिज्ञासयात्मानमात्मस्थं केवलं परम् ॥ संगम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥

द्रष्टा हि दृश्याद्विलक्षणः । स्वप्रकाशश्च जडाद्विलक्षणः । तयोरन्यत्वे दृष्टांतः । यथाऽग्निर्दाहकः प्रकाशकश्च दाह्यात्प्रकाश्याच्च दारुणः काष्ठादन्यस्तद्वदिति ॥ ८ ॥ अनेनैव दृष्टांतेन नित्यत्वानादित्वविभुत्वैकत्वादयोऽपि सिध्यंतीत्याह । निरोधेति । तथा च दारुष्वंतः प्रविष्टोऽग्निस्तत्कृतान्नाशादीन्प्राप्नोति न तु स्वतो नाशादिमान् । एवं देहगुणाननित्यत्वादीन् देहात्परो नित्यादिस्वरूपोऽप्यात्माऽनुभवति । ततश्च नित्यत्वादिभिरपि वैलक्षण्यादन्यत्वमिति भावः ॥९॥ नन्वग्नेर्दारुसंयोगात्तद्धर्मभाक्त्वं घटते । आत्मनस्त्वसंगत्वात्कथं देहेन तद्धर्मैर्वा संबंधः संबंधे वा कुतस्तन्निवृत्तिस्तत्राह । योऽसाविति । पुरुषस्येश्वरस्याधीनैर्मायागुणैर्योऽसौ सूक्ष्मोऽयं च स्थूलो देहो विरचितः पुंसो जीवस्यायं संसारस्तन्निबंधनस्तदध्यासकृतः । हि यस्मादेवं तस्मादात्मविद्या तन्निवर्तिकेत्याह । आत्मनो विद्या विज्ञानम् आत्मज्ञानमित्यर्थः । तस्य अध्यासप्रयुक्तसंसारस्य छित् छेत्त्री । आच्छिदिति वा पदच्छेदः ॥ १० ॥ यस्मादेवं तस्माज्जिज्ञासया विचारेण । आत्मस्थमात्मनि कार्यकारणसंघात एव स्थितं सम्यग्ज्ञात्वा

कोऽसाविति । तमात्मानम् । विलक्षण इति हेतुगर्भितविशेषणमित्याह—यत इति । तयोर्द्रष्टृप्रकाशयोः । तद्वदग्निवदात्मापीत्यर्थः ॥ * ॥ **संदर्भः**—ननु जायादिषु संबंधवैशिष्टयेन ममता वैशिष्टयात्तद्धितानुसंधानवैशिष्टयं दुर्निवारमित्याशंक्य तत्संबंधं वारयति—चतुर्भिर्विलक्षण इत्याद्यैः ॥ * ॥ **विश्वनाथस्तु**—स्वदेहे च हितानेव कुर्यादित्यत्र विचारमाह—विलक्षण इति । आत्मा चेतयिता द्रष्टा च जडाद्दृश्या देहादन्य एवातः कथं तत्राहंतां कुर्यादिति भावः । यद्यपि परमात्मैव स्वप्रकाशः जीवात्मा तु परमात्मप्रकाश्य एव प्रसिद्धस्तदपि तस्य परमात्मप्रकाश्यत्वेपि किंचित्स्वप्रकाशत्वमपि स्यात् । यथा सूर्यप्रकाशितत्वे सत्येव कनकरजतादेरपि किञ्चित्स्वप्रकाशकत्वं स्यादिति । यद्यप्यविद्यादशायां जीव इवाग्निः काष्ठस्यादाहकः काष्ठावृत एव तिष्ठेत्तथापि विद्यादशायां विद्वान् जीवो विद्याद्वाराऽविद्याया नाशकोपि स्यात्काष्ठानावृतो मंथनोद्भूतोग्निरिवेत्यर्थः ॥ ८ ॥ अनेनैवाग्निदृष्टान्तेनैव । इति भाव इति—नित्यत्वादिधर्मवत आत्मनोऽनित्यत्वादिधर्मवतो देहाद्वैलक्षण्यं प्रथितमेवेति तात्पर्यम् ॥ * ॥ किंच—दारुधर्मा नाशादयो वह्नौ यथा भ्रमादारोप्यंत एव न तु ते तत्र सन्ति एवमेव देहधर्मा अपि नाशादय आत्मनीत्याह—निरोधेति । निरोधो नाशः । यथाग्निर्नष्ट उत्पन्नोऽल्पो महानित्येवं नानाकार उच्यते तथैवात्मापीति । अत्र जीवात्मनां नानात्वे वास्तवेपि एकस्यापि जीवस्य देवादेर्युगपत्क्रमेण वा नानादेहगतत्वेन यन्नानात्वं तत्त्ववास्तवमेवेति ज्ञेयम् ॥ ९ ॥ दृष्टान्तवैषम्यमाशंकते—नन्विति । तद्धर्मान्दारुधर्मान्भजतीति तद्धर्मभाक् तस्य भावस्तत्त्वम् । "असंगोह्ययं पुरुषः" इति श्रुतेरात्मनोऽसंगत्वात् । तद्धर्मैर्देहधर्मैः कृशत्वादिभिः । वस्तुतस्तु संबंधो नास्ति 'तुष्यतु दुर्जनः' इति न्यायेन तत्स्वीकारे कुतः केन साधनेन तन्निवृत्तिः संबंधनिवृत्तिः । तत्राक्षेपे । अप्रत्यक्षत्वाद्यच्छब्देन सूक्ष्मः प्रत्यक्षत्वादिदंशब्देन स्थूलश्च गृह्यते । तदध्यासेन तयोः स्थूलसूक्ष्मदेहयोरध्यासेनात्मत्वाभिनिवेशेन कृतस्तदध्यास कृतः, एवमात्मा ज्ञानकृत एव । तन्निवर्तिका संसारनिवर्तिका । छिनत्तीति छित्, छिदेः क्विप् । अशतश्छेदशंकानिवृत्तय आह—आच्छिदिति वा ॥ * ॥ ० ॥ १० ॥ एवमात्मविद्यैव तच्छेदकर्त्री तस्मादित्यर्थः । यद्वा—तस्माज्जिज्ञासया तत्साध्यविचारेणात्मस्थं पञ्चकोशानुगतमात्मानं तत्साक्षिणं क्षेत्रज्ञं केवलं तदुपाधेरन्वयव्यतिरेकाभ्यां जहदजहल्लक्षणया च विवेचितं परमानन्दं ब्रह्मैव संगम्य तस्मिन्प्रपञ्चे वस्तुबुद्धिं यथाक्रमं तत्कार्याणां कारणानन्यत्वक्रमेण परमकारणकृष्णब्रह्माव्यतिरेकं यथा स्यात्तथा निरसेत् ॥ * ॥०॥११ ॥

आचार्योऽरणिराद्यः स्यादंतेवास्युत्तराऽरणिः ॥ तत्संधानं प्रवचनं विद्यासंधिः सुखावहः ॥ १२ ॥ वैशारदी साऽतिविशुद्धबुद्धिर्धुनोति मायां गुणसंप्रसूताम् ॥ गुणांश्च संदह्य यदात्ममेतत्स्वयं च शाम्यत्यसमिद्यथाग्निः ॥ १३ ॥ अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः ॥ नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥ १४ ॥

एतदेतस्मिन्देहादौ वस्तुबुद्धिं स्थूलसूक्ष्मक्रमेण निरसेत् त्यजेत् ॥ ११ ॥ गुरोर्लब्धा विद्या अविद्या तत्कार्यनिरसनक्षमेति स्फुटीकर्तुं विद्योत्पत्तिमग्न्युत्पत्तिरूपकेण निरूपयति । आचार्य इति । आद्योऽधरः । तत्संधानं तयोर्मध्यमं मंथनकाष्ठं प्रवचनमुपदेशः विद्या तु संधिः संधौ भवन्नग्निरिव । तथा च श्रुतिः "आचार्यः पूर्वरूपम् । अंतेवास्युत्तररूपम् । विद्या संधिः । प्रवचन ँ संधानम्" इति ॥ १२ ॥ अग्निसादृश्यमेवाह । वैशारदीति । विशारदोऽतिनिपुणस्तेन शिष्येण प्राप्ता तेन गुरुणोपदिष्टा वा अतिविशुद्धा बुद्धिर्गुणकार्यरूपां मायां निवर्तयति । यदात्मकमेतद्विश्वं जीवस्य संसृतिनिमित्तं तान् गुणांश्च दग्ध्वा असमिन्निरिंधनः । तस्मात्कार्येण कारणेन विद्यया च व्यवधानाभावात्साक्षात्परमानंदरूपो भवतीति ॥ १३ ॥ एवं तावत्स्वप्रकाशज्ञानस्वरूपो नित्य एक एवात्मा कर्तृत्वादयश्च धर्मास्तस्य देहोपाधि

विद्योत्पत्तौ श्रुतिः स्पष्टार्था ॥ * ॥ ० ॥ १२ ॥ विशरणं विशारः 'शॄ-हिंसायाम्' हिंसाप्रधानोऽविद्यामार्गस्तं द्यति खण्डयति ब्रह्मविद्योपदेशेनेति विशारदः । शिष्यपक्षे-विगतः शारदो यस्य स विरक्त इत्यर्थः । अतिविशुद्धं जीवेशोपाधिविनिर्मुक्तं ब्रह्म बुद्ध्यतेऽनयेति विशुद्धबुद्धिः केवलचिदाकारा धीः । संदह्य सम्यक्कार्येण द्वैतेन सह बाधयित्वा स्वयञ्चांतःकरणवृत्त्यात्मकतया द्वैतांतःपातित्वात् शाम्यति अतो न विद्यया द्वैतापत्तिरिति भावः ॥ * ॥ विशारदो भगवांस्तदीयाऽतिविशुद्धज्ञानरूपा विद्या मायामविद्यां यदात्मकमेतद्देहद्वयाध्यासरूपं संसारबंधनं तान्गुणान्दग्ध्वाऽसमिद्यथाग्निर्भूतसूक्ष्मरूपेण तिष्ठन्स्पष्टं न तिष्ठति तथा स्वयं विद्यापि शाम्यति । ततः केवलयैवं भक्त्याऽभ्यस्तया शांतिरतिं प्राप्य भगवत्सालोक्यं प्राप्नोति । तदुक्तम्-"भक्तिर्मुक्त्यैव निर्विघ्नेत्यतयुक्तविरक्तता" इति शांतिरतिमतां मतम् । गुणीभूतभक्तिमतां ज्ञानिनां तु विद्याविद्ययोरुपरमे 'ततो मां तत्त्वतो ज्ञात्वा' इति गीतोक्तेर्भक्त्युत्थज्ञानेन परमात्मैक्यम् ॥ १३ ॥ उक्तमर्थं निगमयति-एवमिति । तस्यात्मनः । तद्व्यतिरिक्तमात्मातिरिक्तमनित्यं विनाशि मायामयम् । प्रतीतिमात्रशरीरमाविद्यकमिति यावत् । यतः सर्वमात्मातिरिक्तमनित्यमवास्तवञ्चातो हेतोः । सर्वत आत्मातिरिक्ताखिलवस्तुतः । शास्त्रनिर्णीतोऽप्यर्थो मतांतराकर्णनेन संदिग्धो भवतीति हेतोर्मतांतरं निरस्यति, इह च मतांतरं निरीश्वरमीमांसकमतमेव तन्मतं निराकर्तुं खण्डयितुमुद्भावयति प्रकटयति-अथेति प्रश्ने । हे उद्धवेत्यर्थः। मीमांसकमतं निगमयति-एवं हीति । जैमिनीया जैमिनेर्मुनेरनुयायिनः । अहं करोम्यहं गच्छामीत्यादिरूपेणाहं प्रत्ययेनाहमाकारकज्ञानेन । सचात्मा तत्स्वरूपभूतस्तस्यांहंप्रत्ययज्ञेयस्य स्वरूपभूतोऽसाधारणरूपः । अत्रार्थे स्वाचार्यसंमतिमाहुः-यथाहुरिति । तेषामेव वाक्यांतरम् । तथेत्यादिवैराग्याभावमाह । तदेव दर्शयति-तथाहीति । भोगस्थानानां स्वर्गादीनां तेषां भोगस्थानानां प्राप्त्युपायीभूतकर्मणां बोधकस्यागमस्य शास्त्रस्य अनित्यत्वाद्वेति चतुर्भिः संबध्यते । एतद्वाशब्दत्रयेणोक्तम् । एतत् भोगस्थानभोगकालतदुपायकर्मबोधकागमभोक्तृलक्षण चतुष्कानित्यं नास्तीति । द्वितीयोथशब्दः पुनरर्थे । अथ चेत्यर्थः । नित्यत्वं लोकादीनां मन्यस इत्युद्धवमेव मीमांसकत्वेन लक्ष्यीकृत्याह-भगवान् ॥ * ॥ अथेति युग्मकम् ॥ * ॥ **दीपिका**-अहं ब्राह्मण इत्यादिप्रतीत्या ज्ञेय एव न तु ज्ञानैकरूपः । अत एव प्रतिशरीरं भिन्नः यागादिकर्तृत्वात्तत्फलभोक्तृत्वात्कर्तृभोक्तृरूपश्च । वेदांतमतं निराचष्टे-नन्विति । तेषां जीवानां स्वरूपभूतः कल्पितानामधिष्ठानत्वेन मूलस्वरूपभूतो निर्विकारज्ञानस्वरूप एकः परमात्मा नास्ति । यथाहुर्जैमिनीयाः-"अहं प्रत्यय-" इति।अहमिति प्रत्ययो ज्ञातृविषय एव यो हि परामृशति स आत्मानमहमित्येव परामृशति तेनाहंप्रत्ययस्य ज्ञातृगोचरत्वं निर्विवादमेव । यत्तु शरीरस्य कृशोऽहं स्थूलोह

मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा ॥ तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥

कास्तद्व्यतिरिक्तं सर्वमनित्यं मायामयं चातः सर्वतो विरक्तः सन्नात्मज्ञानेन मुच्यत इत्युक्तं 'विलक्षणः स्थूलसूक्ष्मात्' इत्यादिना,।तदेव श्रुतिसमन्वयेन निर्णीतेऽप्यर्थे मतां तरविरोधेन संदेहो मा भूदिति तन्मतं निराकर्तुमुद्भावयति । अथेति । अथ मन्यसे एषां जीवात्मनां कर्मकर्तॄणां सुखदुःखयोर्भोक्तॄणां च नानात्वमिति । एवं हि जैमिनी या मन्यंते । अहंप्रत्ययविज्ञेय एवात्मा स च प्रतिशरीरं भिन्नः कर्तृभोक्तृरूपश्च न तु तत्स्वरूपभूतो निर्विकार एकः परमात्माऽस्तीति । यथाहुः "अहंप्रत्ययवि ज्ञेयो ज्ञातव्यः सर्वदैव हि" इति । तथा वैराग्यं च न संभवति । तथाहि भोगस्थानानामनित्यत्वाद्वा वैराग्यं भवेत् भोगकालस्य वा तदुपायकर्मबोधकागमस्य वा भोक्तु रात्मनो वा न त्वेतदस्तीत्याह । अथ नित्यत्वं लोककालागमात्मनां मन्यस इति ॥ १४ ॥ न च सर्वभोग्यानां विच्छेदान्मायामयत्वाद्वा वैराग्यं स्यादित्याह । मन्यस इति । सर्वभावानां स्रक्चंदनादीनां संस्था स्थितिरौत्पत्तिकी प्रवाहरूपेण नित्या । तथा च वदंति 'न कदाचिदनीदृशं जगत्' इति । अतस्तत्कर्ता कश्चिदीश्वरो नास्तीति भावः । किंच यथा यथावत् । न तु मायामयीत्यर्थः । न चात्मस्वरूपभूतं नित्यमेकं ज्ञानमस्तीत्याह । तत्तदिति । घटपटाद्याकारभेदेन धीर्जायते अतोऽनित्य भिद्यते च । अयं गूढोऽभिप्रायः । न हि नित्यज्ञानरूप आत्माऽपि तु ज्ञानपरिणामवान् । न च विकारित्वेनानित्यत्वप्रसंगः । यथाऽऽहुः "विक्रिया ज्ञानरूपाऽस्य न

मित्यादिज्ञानसामानाधिकरण्यादहंप्रत्ययविषयत्वं तदत्यंतसन्निकृष्टयोरेकत्वभ्रांत्या उष्णतोयप्रतीतिवद्भास्वरायःपिंडप्रतीतिवच्च संगमनीयम्, ममेदं शरीरं कृशमिति षष्ठ्यास्मदर्थस्यात्मनः शरीरव्यतिरेकेण विवेकतः प्रतीतेः, शरीरस्ये दमाकारास्पदत्वप्रतीतेः । तथा–"स्वर्गकामो यजेत" इत्यादिश्रुतयोपि शरीरातिरिक्तं परलोकभोगयोग्यं कर्तारमंतरेणानुपपद्यमानास्तमाक्षिपंति, ताभिश्चाक्षिप्तं साक्षादेवोपनिषदः समर्पयन्ति–"अविनाशी वा अरे अयमात्मानु च्छित्तिधर्मा" इत्यादयः । इति सिद्धम्–शरीरातिरिक्तो मानसप्रत्यक्षरूपोऽहंप्रत्ययगम्यो ज्ञातेति, तस्य ज्ञातृत्वं ज्ञेयत्वं च सिद्धम् । न चैकस्य कर्तृत्वं कर्मत्वं स्वात्मनि क्रियाविरोधात्कथं संभवतीति वाच्यम्, आत्मनः स्वकर्तृकायामेव क्रियायां कर्मव्यवहारस्य लोके वेदे दृष्टत्वात् । तत्र लोके तावद्बाष्प एव स्वसंवेद्यः संभवतीति कर्मवाचिकृता प्रयोगः, वेदेप्यात्मानमुपासीतात्मानं वेदात्मा ज्ञातव्य इत्याद्यनेकशः प्रयोगः तस्मान्मानसाहंप्रत्यय विज्ञेय एवात्मेति सिद्धम्।तथा च श्रुतिः–"स मानसीन आत्मा जनानाम्"इति।सर्वदैवेत्यस्यायं भावः–विषयज्ञानवेलायामपि न विषयज्ञानकर्तृतयात्मावभासः, किन्तु मानसाहंप्रत्ययकर्मतयैव किं पुनः स्वरूपज्ञानवेलायामिति। एवं सिद्धांतोक्तं ज्ञानरूपत्वादिकं प्रत्याक्षिप्य वैराग्यमपि तदुक्तमाक्षिपति–तथेति । वैराग्यासंभवमेव दर्शयति–भोगकालस्य वेति।भोगकालस्याप्यनित्यत्वाद्वैराग्यं भवेत्, तस्य स्वर्गादिभोगस्योपायभूतानि यागादिकर्माणि तेषां बो धकस्यागमस्य"स्वर्गकामो यजेत" "वृष्टिकामः कारीर्या यजेत"इत्यादिशास्त्रस्याप्यनित्यत्वाद्वैराग्यं भवेत्।न त्वेतादिति–एतद्भोगस्थानादीनां चानित्यत्वं नास्तीत्यर्थः॥ १४॥ननु भोगानां विच्छेदावास्तवत्वे एव वैराग्यहेतू स्यातामिति चेदाह–न चेति । वैराग्यं स्यान्न चेत्याह । विच्छेदाभावमेवाह–सर्वभावानामिति । नित्यत्वे प्रमाणमाहुर्निजाचार्यवाक्यम्–तथा चेति । अनीदृशं न ईदृशमनदिशम्, पर्युदासनञा सर्वदेदृशमेव भवतीति बोध्यते 'पर्युदासः सदृग्ग्राही' इत्युक्तेः । यतस्सर्वदेदृशमेव तिष्ठति जगदतो हेतोः । तत्कर्ता जगत्कर्ता । इति भाव इति–अविद्यमानस्यैवोत्पादनं भवति न तु सर्वकालिकस्य, तथा च सर्वदा विद्यमानस्य जगतः कर्त्रपेक्षैव नास्तीति तात्पर्यम्। इममेवार्थं पोषयति–किंचेति । इत्यर्थ इति–मायिकानां काचित्कत्वादस्य च सार्वदिकत्वान्न मायामयत्वमिति भावः । अथात्मनो ज्ञानरूपत्वं प्रतिषेधति–न चेति । धीर्ज्ञानतारूपा । तत्तदाकृतिभेदेन ज्ञातो घट इति विषय

एवमप्यंग सर्वेषां देहिनां देहयोगतः ॥ कालावयवतः संति भावा जन्मादयोऽसकृत् ॥ १६ ॥ अत्रापि कर्मणां कर्तुरस्वातंत्र्यं च लक्ष्यते ॥ भोक्तुश्च दुःख सुखयोः को न्वर्थो विवशं भजेत् ॥ १७ ॥ न देहिनां सुखं किंचिद्विद्यते विदुषामपि ॥ तथा च दुःखं मूढानां वृथाऽहंकरणं परम् ॥ १८ ॥

नित्यत्वे विरोत्स्यते । " इति । अतो मुक्ताविंद्रियादिरहितस्य परिणामासंभवाज्जडत्वेन तत्प्राप्तेरपुरुषार्थत्वात्प्रवृत्तिरेव श्रेयसी न निवृत्तिरिति ॥ १५ ॥ तत्र तावदुक्त मंगीकृत्य वैराग्योपपादनाय प्रवृत्तिमार्गस्यानर्थहेतुत्वं प्रपंचयति एवमपीत्यादिना—लोकानां लोकपालानामित्यतः प्राक्तनेन ग्रंथेन । अंग हे उद्धव । कालावयवतः संवत्सरादिरूपात् ॥ १६ ॥ अत्रापीति । स्वातंत्र्यपक्षे दुष्कर्मणो दुःखभोगस्य वाऽसंभवादित्यर्थः ॥ १७ ॥ ननु ये सम्यक्कर्म कर्तुं जानंति ते सुखिन एव ये तु न जानंति त एव दुःखिन इति चेत्तत्राह । नेति । विदुषामपि क्वचित्सुखं न विद्यते तथा मूढानामपि दुःखं न विद्यतेऽतो वयं कर्मकुशलत्वात्सुखिन इति तेषां केवलं

धर्मतया भिद्यते नैकात्मस्वरूपं ज्ञानमिति मन्यते । अथ मीमांसकाभिप्रेतात्मस्वरूपमाह—अयं गूढ इत्यादिना । ज्ञानपरिणामवदात्मस्वीकारे दध्यादिवदनित्यत्वं स्यादिति चेदाह—न चेति । अत्र वृद्धसम्मतिमाह—यथाहुरिति । ज्ञानरूपा विक्रियाऽस्यात्मनो नित्यत्वे न विरोत्स्यते।ज्ञानाकारेण परिणामो नित्यत्वविघातको न भवतीत्यर्थः । तव मते देहेंद्रियादिविवर्जितकेवलं चित्स्वरूपावस्थितेरेव मुक्तित्वम्। किंच—श्रोत्रसंगेन शब्दज्ञानाकारेण परिणामो घ्राणसंगेन च गंधज्ञानाकारेण चैवमन्यत्रापि तत्संबंधाभावे परिणामाभावात्प्राप्तमात्मनो ज्ञानाभावेन पाषाणादितुल्यं जंडत्वं तेन तत्प्राप्तेर्मुक्तिप्राप्तेर्जडत्वापादकत्वेन पुरुषार्थत्वं नास्तीत्यतः प्रवृत्तेरिन्द्रियसंबंधसत्त्वेन सर्वज्ञान संभवाच्छ्रेयस्त्वमिति भावः ॥ * ॥ भोगानां स्रक्चंदनवनितादीनां विच्छेदादनित्यत्वान्मायामयत्वान्मिथ्यात्वाद्वा वैराग्यं स्यात्तदपि च नेत्याह—सर्वभावानामिति । तथा च जगतो नित्यत्वं जैमिनीया वदन्ति—न कदाचिदिति । जगत्कदाचिदनीदृशं नेति किन्त्वीदृशमेवेति सृष्टिप्रलयाभावो दर्शितः । अतः सर्वभावानां नित्यत्वात्—विक्रियेति । अस्यात्मनो ज्ञानरूपा विक्रिया नित्यत्वे न विरोत्स्यते विरोधं न प्राप्नोति, यथा सूर्यो धूमाद्युपाधिं प्राप्य रश्मिद्वारा मेघरूपेण परिणमते स्वरूपेण तु नित्य एव तिष्ठति तद्वदिति ज्ञेयम् । तत्प्राप्तेर्मोक्षप्राप्तेः ॥ १९ ॥ तत्र प्रवृत्तिनिवृत्त्योर्मध्ये । तावदधुना । उक्तं मीमांसकमतमंगीकृत्य श्रुत्वेत्यर्थः । असकृत्पुनःपुनः ॥ * ॥ तत्र मीमांसकमते । तदुक्तमुद्धवोक्तम् । एवमपि गूढाभिप्रायेण मीमांसकमतस्वीकारेऽपि । देहसंबंधाद्भावा विकाराः । कालावयवतः संवत्सरादिरूपात् । जन्मादय इति—तत्रापि जन्ममरणयोरतिकष्टप्रदत्वं सार्वत्रिकं प्रसिद्ध मेवेति भावः ॥ १६ ॥ अधुना कर्मकर्तुरस्वातंत्र्येणेश्वरं साधयति । अत्रापि लोके । अस्वातंत्र्यमनिच्छन्नपि बलात्कार्यत एव । यः कारयिता स एवेश्वर इति । एतदर्थस्तु—"जानामि धर्मं न च मे प्रवृत्तिर्जानामि पापं न च मे निवृत्तिः । केनापि देवेन हृदि स्थितेन यथा नियुक्तोस्मि तथा करोमि ॥" इति दुर्योधनेन स्फुटितः । श्रुतिरपि—"एष एव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते" इत्यादिकेति । इत्यर्थ इति—सुखं त्वौत्सुक्याद्भुज्यते तथैव तत्साधनं कर्मापि क्रियत एव, दुःखं तु वैवश्येन पाशबद्ध इव भुज्यते एवं जानतस्तत्साधनकर्मणि प्रवृत्तिरपीत्यतो नास्य जीवस्य स्वातंत्र्यमिति भावः । एतदेवाह—विगतो वशः पराधी नता यस्य स तथा, तं विवशं स्वतंत्रमीश्वरं कः सुखदुःखादिरूपोर्थः भजेत्प्राप्नुयान्न कोपीत्यर्थः । यद्वा—विवशमस्वतंत्रं कोऽर्थः पुरुषार्थो भजेन्न कोपीति । न हि स्वतंत्रप्रेरणां विनाऽस्वतंत्रः किञ्चित्कर्तुं शक्नोतीति भावः । यद्वा—विवशं कालकर्मगुणाधीनं पुरुषं को न्वर्थो विषयो भजेत्सुखयेन्न कोपीत्यर्थः ॥ * ॥ कर्मणां कर्तुरिति कर्मकरणे सुखदुःखयोर्भोक्तुरिति भोगेप्यस्वातंत्र्यं लक्ष्यते । स्वतंत्रो हि कः खलु दुःखं भुंजीत, को वा विवेकी दुष्कर्म कुर्यादिति भावः । को नु अर्थः पुरुषार्थः विवशमस्वतंत्रं कर्तारं भोक्तारं भजेत्तत्र स्थिरीभवेदित्यर्थः ॥ १७ ॥ न हीश्वरायत्तं दुःखभोगादि किंत्वन्यथैवेत्याक्षिपति—नन्विति । इत्यर्थ इति—लोकेतीव विद्वांसो मूढानाश्रित्य दीनवृत्त्या दुःखिनो दृश्यन्ते । मूढाश्चाधीनविद्वत्कत्वेन सुखिन इत्यतः कर्मनैपुण्यानैपुण्ये न सुखदुःखप्रयोजके इति भावः ॥ * ॥ विदुषां कर्माभिज्ञानां दक्षादीनामपि क्वचिद्विहितेपि काम्यकर्मणि

यदि प्राप्तिं विघातं च जानंति सुखदुःखयोः ॥ तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा॥१९॥को न्वर्थः सुखयत्येनं कामो वा मृत्युरंतिके ॥ आघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥ २० ॥ श्रुतं च दृष्टवद्दुष्टं स्पर्धासूयात्ययव्ययैः ॥ बह्वंतरायकामत्वात्कृषिवच्चापि निष्फलम् ॥ २१ ॥ अंतरायैरविहतो यदि धर्मः स्वनुष्ठितः ॥ तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥ २२ ॥

वृथैवाहंकार इत्यर्थः ॥ १८ ॥ अंगीकृत्याप्याह । यदीति । तं योगमुपायं न विदुर्यथा साक्षान्मृत्युर्न प्रभवेत् ॥ १९ ॥ तथापि यावज्जीवं सुखं भविष्यतीति चेन्नेत्याह । को न्विति । यतोंतिके वर्तमानो मृत्युः । न तुष्टिदो न तुष्टिं ददाति । आघातं वधस्थानं प्रति नीयमानस्य वध्यस्य स्रक्चंदनादि यथा न सुखयेत् ॥ २० ॥ एवमस्मिँल्लोके सुखं नास्तीत्युक्तं लोकांतरेऽपि तथैवेत्याह । श्रुतमिति । श्रुतं स्वर्गादि । तदपि दुष्टम् । स्पर्धा परसुखासहनम् । असूया परगुणे दोषाविष्करणम् । अत्ययो नाशः । व्ययोऽपक्षयः तैर्दुष्टम् । यद्वा व्ययो नाशः । अत्ययोऽन्यस्यातिशयः । तं दृष्ट्वा तदप्राप्त्या दुःखमित्यर्थः । किंच बहवोंतराया वैगुण्यादिरूपा विघ्ना यस्मिन्कामे सुखे तस्य भावस्तत्त्वं तस्मात् । कृषिर्यथा बहुविघ्ना तद्वत् । बहुसुखत्वेन श्रुतमपि निष्फलम् ॥ २१ ॥ विघ्नवैगुण्याद्यभावमंगीकृत्यापि नाशदुःखं दुष्परिहरमित्याह अंतरायैरिति पंचभिः । निर्जितं साधितम् ॥ २२ ॥

सुखं न विद्यते प्रत्युत स्वनाशपर्यंतं दुःखमेव दृश्यते, प्रमादादिना कर्मवैगुण्यादिति भावः । तथा मूढानां कर्म कर्तुमजानतां सरलानां क्वचित्कर्माकरणेपि दुःखं न विद्यते, सारल्यादिगुणेनाकस्मात्तीर्थादिसंबंधजातपुण्येन च प्रत्युत सुखमेव दृश्यते, अतः कर्मणां सुखदुःखप्रयोजकत्वात् । ननु यः दुष्कर्म कुर्यात्स विद्वानेव नोच्यते तस्य दुःखभोगो न्याय्य एव, यस्तु कर्माकुर्वन्कर्म कर्तुं जानीयात्तस्य न कदापि दुःखमितिचेन्मैवं वादीः, देहधारिणां मध्ये सर्वदैव सुखी सर्वदैव दुःखी कोपि न दृष्ट इत्याह—नेति । अन्यत्तैः ॥ १८ ॥ कर्मनैपुण्यानैपुण्येनैव सुखदुःखे इत्यंगीकारेऽत्यंतदुःखरूपमृत्युप्रतीकारं कथं न कर्मनैपुण्येन कुर्यादतोपि ज्ञायते न कर्मकौशलं सुखहेतुरिति भावः । न प्रभवेद्बाधेत् ॥ * ॥ साक्षान्मृत्युरिति जीवन्मुक्तमृत्युं व्यावर्तयति ॥ १९ ॥ यद्यपि कर्मकौशलेन मृत्युरनिवर्त्यस्तथापि तेन यावदायुः सुखमस्तीति चेदकिञ्चित्करमेतदिति दृष्टांतेन यस्यांतिके समीपे मृत्युरस्ति । एनमित्यन्वादेशानिर्देशाद्यस्येति लब्धम् । यथा मारणार्थं पाशेन बद्धकंठं न कोपि स्रक्चंदनवनितादिरूपः कामोऽर्थो वा सुखयति तथा सर्वदा पृष्ठलग्नमृत्युमपीतिभावः ॥ * ॥ आघातमिति—वध्यस्य संप्रति त्वं पायसपिष्टकादिकं यथेष्टं भुंक्ष्वेति दीयमानोपि भोगो यथा न सुखयति ॥ २० ॥ इममर्थमन्यत्रातिदिशति—एवमिति । व्ययशब्देनापक्षयस्वीकारो व्यर्थस्तस्य नाशेंतर्भावादित्याह—यद्वेति । इत्यर्थ इति—परोत्कर्षासहनं न महतां धर्मः किंतु निकृष्टानामेवेति । तच्च दुःखहेतुरेवेति भावः । तद्दौर्घट्यमाह—किंचेति । वैगुण्यं त्वल्पेनापि विपर्ययेण भवतीति यथाग्नये स्वाहेत्यस्य स्थाने वह्नये स्वाहेत्युक्तेः वह्न्यग्निप्रकृती 'वह—प्रापणे' अगि—'गतौ' इति प्राप्त्यर्थत्वेन समानौ, प्रत्ययश्चोभयत्रैकस्मिन्नेवार्थे, एक एव निः, इकारान्तचतुर्थ्येकवचनांतत्वेनापि समानावेव वह्न्यग्निशब्दौ सर्वथा तौल्येपि वह्निपदोच्चारणमपूर्वप्रतिबंधकं भवतीति विचारितं पूर्वमीमांसायाम् । कृषिवद्बह्वन्तरायकामत्वादिति योज्यम् । कृषिश्चेतिभिरुपद्रुता भवति । ताश्च—" अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥ " इत्युक्ताः । निष्फलं परिणामविरसत्वादिति ॥ * ॥ व्ययः भोक्ष्यमाणस्वर्गादेरल्पताप्रतिपादकः किञ्चित्किञ्चिन्नाशः ॥ २१ ॥ विघ्नवैगुण्याद्यभावेपि नाशस्त्ववश्यंभावीत्याह—विघ्नेत्यादिना ।

इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ॥ भुंजीत देववत्तत्र भोगान्दिव्यान्निजार्जितान् ॥ २३ ॥ स्वपुण्योपचिते शुभ्रे विमान उपगीयते ॥ गंधर्वै विंहरन्मध्ये देवीनां हृद्यवेषधृक् ॥ २४ ॥ स्त्रीभिः कामगयानेन किंकिणीजालमालिना ॥ क्रीडन्न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥ २५ ॥ तावत्प्रमोदते स्वर्गे यावत्पुण्यं समाप्यते ॥ क्षीणपुण्यः पतत्यर्वागनिच्छन्कालचालितः ॥ २६ ॥ यद्यधर्मरतः संगादसतां चाऽजितेंद्रियः ॥ कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥ २७ ॥ पशूनविधिनाऽऽलभ्य प्रेतभूतगणान्यजन् ॥ नरकानवशो जंतुर्गत्वा यात्युल्वणं तमः ॥ २८ ॥ कर्माणि दुःखोदर्काणि कुर्वन्देहेन तैः पुनः ॥ देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥ २९ ॥ लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ॥ ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥ ३० ॥

यज्ञैर्देवता इंद्रादिरूपा इष्ट्वा ॥ २३ ॥ स्वपुण्यैरुपचिते सर्वभोगसंपन्ने देवीनां मध्ये विहरन् गंधर्वैरुपगीयते ॥ २४ ॥ कामगेनेच्छया गच्छता विमानेन । किंकिणीजालमालिना क्षुद्रघंटिकासमूहशोभिना । सह स्त्रीभिः सुराक्रीडेषु नंदनादिषु क्रीडन्नात्मपातं न वेद ॥ २५ ॥ कालेन चालितः पातितः ॥ २६ ॥ प्रवृत्तिर्द्विविधा विध्यनुसारेण काम्ये कर्मणि वा तल्लंघनेनाधर्मे वा तत्र काम्यप्रवृत्तेर्गतिरुक्ताऽधमप्रवृत्तेर्गतिमाह । यदिति । यदिवेत्यन्वयः । अजितेंद्रियत्वात्कामात्माऽतः कृपणो दीनोऽतो लुब्धो भोगतृष्णाकुलोऽतः स्त्रैणः स्त्रीलंपटस्तदर्थं भूतविहिंसकः ॥ २७ ॥ किंच दुष्टजनप्रलोभितो धनाद्यर्थं पशूनविधिना हत्वा तमः स्थावरतां याति ॥ २८ ॥ एवं कर्मसु प्रवृत्तस्य न सुखं न च दुःखनिवृत्तिरित्युपसंहरति । कर्माणीति ॥ २९ ॥ तथापि लोकानां नित्यत्वादमर्त्यधर्मत्वाच्च लोकपालानां सुखमस्तीति चेत्तत्राह । लोकानामिति । द्वौ परार्धौ परमायुर्यस्य तस्य ब्रह्मणोऽपि । तथाच श्रुतिः "भीषास्माद्वातः पवते भीषोदेति सूर्यः ॥ भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचमः ॥" इति । अतः

" विघ्नमध्यस्थान्तधनेष्वन्तरायः प्रकीर्तितः " इति निरुक्त्युक्तेरंतरायैर्विघ्नैः । तेनांतराविहतेन । तत्स्थानम् ॥ * ॥ तेन विघ्नवैगुण्यहीनस्वधर्मेण ॥ २२ ॥ तत्र स्वर्लोके । निजार्जितान्स्वयं यज्ञादिद्वारार्जितान् ॥ * ॥ भोगान्वैषयिकसुखसाक्षात्कारान् । भुंजीत कुरुते । पाकं पचति, तपस्तप्यतीत्यादिवत्सामान्यविशेषतया व्याप्यव्यापकत्वम् ॥ २३ ॥ देवीनामप्सरसाम् । हृद्यो मनोहरः ॥ * ॥ उपगीयते प्रोत्साहनेन स्तूयते ॥ २४ ॥ निर्वृतः स्वर्गानन्दमग्नः ॥ * ॥ आत्मपातं स्वार्गान्निजपतनम् ॥ २५ ॥ अर्वागधः ॥ * ॥ कालेन भोगसमाप्त्यवच्छेदकेन ॥ २६ ॥ अतः कामात्मत्वात् । अतः कृपणत्वात् । अतो लुब्धत्वात् । तदर्थं स्त्रीभोगसिद्ध्यर्थं हिंसामपि कृत्वा तत्प्रीतये धनाद्यानयतीति भावः ॥ * ॥ काम्यकर्मणि पशुयागादौ । तदर्थं स्त्र्यादिप्राप्त्यर्थम् ॥ २७ ॥ अन्यानर्थमाह–किंचेति ॥ * ॥ अविधिना स्वेच्छाचारेण । यद्वा–अविधिना "श्येनेनाभिचरन्यजेत" इत्यादिविरुद्धविधिना ॥ २८ ॥ निवृत्तिः कर्मभ्य इति शेषः । कर्माणि दुःखोदर्काणि 'उदर्क एष्यत्कालीनफले' इति मेदिनी । पुण्यानि फलन्ति पापानि च फलकाले दुःखदानि तत्र कर्मकरणे देहे च किं सुखं न किमपीत्यर्थः ॥ * ॥ ० ॥ २९ ॥ यद्यपि मर्त्यधर्मिणोऽत्र सुखं नास्ति तथापीति । लोकानां स्वर्गादीनां सर्वलोकपालेशब्रह्मणोऽपि किमुत लोकपालानामिति कैमुत्यं सूचितम् । अत्र

गुणाः सृजंति कर्माणि गुणोऽनुसृजते गुणान् ॥ जीवस्तु गुणसंयुक्तो भुंक्ते कर्मफलान्यसौ ॥ ३१ ॥
यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ॥ नानात्वमात्मनो यावत्पारतंत्र्यं तदेव हि ॥ ३२ ॥

प्रवृत्तिमार्गस्यैवमनर्थहेतुत्वाद्विरक्तया ततो निवृत्तिरेव युक्तेति तात्पर्यार्थः ॥ ३० ॥ एतेनैव स्वयमीश्वरत्वाविष्कारेणेश्वराभावांगीकारः परित्यक्तः अन्यदपि प्रौढ्या पूर्वमंगीकृतं निराकरोति चतुर्भिः । तत्र यदुक्तं कर्तृभोक्तृरूप एवात्मेति तन्निराकरोति । गुणा इति । गुणा इंद्रियाणि कर्माणि सृजंति न त्वात्मा । आत्मैवेंद्रियाणि प्रवर्तयन्कर्माणि करोतीति चेन्नेत्याह । गुण इति । गुणः सत्त्वादिर्गुणानिंद्रियाण्यनुसृजते प्रवर्तयति न त्वात्मा । अत आत्मनः कर्तृत्वं तावन्नास्ति भोक्तृत्वमप्यौपाधिकमित्याह । जीवस्त्विति । गुणसंयुक्त इंद्रियादिसंयुक्तः । कुत इत्यत आह । असौ तेष्वहंकारवानित्यर्थः ॥ ३१ ॥ यच्चोक्तमात्मनो नानात्वं तदप्यौपाधिकमित्याह । यावत्स्यादिति । गुणानां वैषम्यमहंकारादिकार्यरूपम् । नन्वात्मन एकत्वे कथं पारतंत्र्यमुक्तं कथं वा लोकपालादीनामपि मद्भयमित्युक्तं त्वयेत्यत्राह । नानात्वमिति ॥ ३२ ॥

प्रमाणमाह—तथा चेति । यतः प्रवृत्तौ दुःखमतो हेतोः । ततः प्रवृत्तिमार्गात् ॥ * ॥ यच्च 'तुष्यतु दुर्जनः' इति न्यायेन स्वर्गादीनां नित्यत्वमंगीकृतं तन्निराकरोति—लोकानामिति ॥ ३० ॥ एतेन मत्त इति वचनेन । अन्यदपि आत्मनः कर्तृत्वादि । प्रौढ्या वृथा हठेन । 'प्रौढिर्व्यर्थहठेऽपि च' इति धरणिः । तत्रान्यांगीकृतेषु । अतः प्रवर्तकत्वाभावात् । औपाधिकमस्वाभाविकम् । जीवस्येंद्रियसंयुक्तत्वे हेतुं पृच्छति—कुत इति । इत्यर्थ इति—अहं पश्याम्यहं शृणोमीत्यादिना जीवस्येंद्रियेष्वहंकारदर्शनात्तत्तत्कर्मफलभोक्तृत्वमिति भावः । यद्वा—नात्मनः कर्तृत्वमित्याह—गुणाः कामसंकल्पप्रयत्नचेष्टारूपाः कर्माणि सृजन्ति । गुणो गुणात्मकं मनस्तान्कामादीन्सृजति । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः । असौ जीवो गुणेन संयुक्तोध्यासापन्नः कर्मफलानि भुंक्त इति ॥ * ॥ संदर्भस्तु—एतेन पूर्वदर्शित 'भीषे' त्यादिश्रुत्यात्मकपुराणरवरूपस्ववाक्यप्रामाण्येनेत्यर्थः । न त्वात्मेति । अयस्कांतस्येवात्मनः सांनिध्येनैव तत्तत्प्रेरकत्वान्न तु स्वेच्छयेति भावः । यद्वा—अथ जीवस्य स्वतः कर्मकर्तृभोक्तृरूपत्वं तन्मतं सांख्यामतेन निराचष्टे—गुणा इति । तत्तत्स्वभाव एव तत्रतत्र कारणमिति भावः॥ ३१ ॥ अन्यदाह—यच्चेति । अहंकारादिकृतमेव नानात्वं तन्निवृत्तौ तन्निवृत्तिदर्शनात् । पुनराशंकते—नन्विति । नानात्वनिवृत्तौ पारतंत्र्यं स्वत एव निवर्तत इति भावः । यद्वा—यावद्गुणवैषम्यं स्थूलसूक्ष्मदेहरूपेण परिणामस्तावत्तत्तद्देहाध्यासेनात्मनानात्वभ्रमः स्यादिति ॥ * ॥ औपाधिकमहंकारादिकार्यनिबन्धनम् । यावदिति सार्द्धकम् । नानात्वं चाद्वयवादिमतेन निराकरोति—यावदित्यर्द्धेन । तत्रैवाद्वयवादिनां सिद्धान्तनिर्वाहं दर्शयति—नानात्वमित्येकेन । अयमर्थः—एक एव खलु चिदेकलक्षणसत्तामात्रस्वरूप आत्मा स एवात्मनि अनाद्यविद्यया गुणमयीं मायां तद्वैषम्यजातकार्यवर्गं च कल्पयन्नस्मदर्थमेकं युष्मदर्थांश्च बहूंन्कल्पयति स्वप्नवत् । तत्रास्मदर्थः स्वस्वरूपः पुरुषः । युष्मदर्थास्त्रिविधाः—पुरुषान्तररूपा जडरूपा ईश्वराख्यपुरुषविशेषरूपाश्चेति । ततस्तस्यामविद्यायां गतायां नानात्वभावादीश्वरो नाम यो वस्तुतो नास्ति स नास्त्येव, किमुत तत्पारतंत्र्यं, किमुततरां ततो भयं, किमुततमां वान्यपारतंत्र्यादिकमिति । तदेवं मतद्वयेन नहि कदाचिदनीदृशं जगदिति ज्ञानं नित्यं नास्तीति परिहृतं

यावदस्याऽस्वतंत्रत्वं तावदीश्वरतो भयम् ॥ य एतत्समुपासीरंस्ते मुह्यंति शुचार्पिताः ॥ ३३ ॥ काल आत्मागमो लोकः स्वभावो धर्म एव च ॥ इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ॥ ३४ ॥ उद्धव उवाच ॥ गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः ॥ गुणैर्न बध्यते देही बध्यते वा कथं विभो॥३५॥

यच्च गूढमभिप्रेतं प्रवृत्तिरेव श्रेयसीति तत्राह । य एतदिति । एतद्गुणवैषम्यं तत्कृतं भोगं कर्म चेत्यर्थः । उपासीरन्सेवेरन् । ते लोकादीनामनित्यत्वाच्छुचार्पिताः प्रोताः संतो मुह्यंति ॥ ३३ ॥ न केवलमनित्यतामात्रं किंतु मायामयत्वमपीत्याह । काल इति । स्वभावो देवत्वादिपरिणामहेतुः । धर्मस्तद्भोगकारणम् । गुणव्यतिकरे मायाक्षोभे सति मामेव प्राहुर्न तु मद्व्यतिरिक्ताः संति ॥ ३४ ॥ ततो निवृत्तिरेव मुक्तिहेतुत्वाच्छ्रेयसीति सिद्धम् । एवं तावदेक एवात्मा तस्य च गुणकार्यदेहसंबंधकृतः संसार आत्मज्ञानाच्च मुक्तिरित्युक्तं 'विलक्षणः स्थूलसूक्ष्मात्' इत्यादिना । तदेव च मतांतरनिरासेन दृढीकृतमथैषामित्यादिना ।

तत्तदुपाधेर्जन्मनाशदर्शनाज्ज्ञानस्य त्वनाशदर्शनादिति भाव इति **संदर्भः** ॥ ३२ ॥ इत्यर्थ इति–त्यदानीनां बुद्धिस्थपरामर्शकत्वाद्व्यवहितमपि गुणवैषम्यमिह गृह्यत इति व्याख्येयम् । यद्वा–उपासीरन्सत्यत्वमभिमन्येरन् ते मुह्यंति स्वरूपान्मुह्येरन् संसृतिशोकार्ताश्च भवंति ॥ * ॥ तदेतत्पूर्वोक्तमतांतरत्रयमपि निंदाति–य एतदित्यर्द्धेन । य एतत्कर्मैवोपासीरन्सेवेरन् ते शोकप्रोताः सन्तः मुह्यन्ति दुःखेन मूर्च्छामाप्नुवन्ति ॥ ३३ ॥ यतोहमेव सर्वस्वरूपस्ततो विवृत्तौ यतत "निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत्" इत्युक्तेः, 'निवृत्तो मामवाप्नोति' इत्युक्तेश्च निवृत्तिरेव श्रेयस्कामैः कार्येति भावः । यद्वा–'कल–गतौ' इति धातोः कमनीयानां गुणानामाधारत्वात्कालः सर्वेषां सर्वस्मात्प्रेष्ठत्वादात्मा सर्वमासमंताज्जानातीत्यागमः । 'लोकृ–दर्शने' । प्रकाशापरपर्यायज्ञानस्वरूपत्वात् लोकः स्वाधीनो भावः सत्ता यस्य स स्वतंत्र इत्यर्थः । सर्वं धारयतीति धर्मः । इति ममैव नामानीति तीर्थः ॥ * ॥ यत्काल इति कालादिचतुष्टयं जैमिनिमतानुवादोक्तं विश्वव्यवहारसिद्धिनिमित्तं तत् पारिशेष्यात्स्वभावः सांख्यमतं गुणादेः प्रत्येकं विलक्षणकार्यकरत्वम्, धर्मस्त्वद्वयमतं सत्तामात्रम्, अपूर्ववाचित्वे तु कर्मेत्येवावक्ष्यत्, सुखदुःखभोगकारणस्य विवक्षितत्वात् । ततश्च मामेव ते प्राहुः, किंतु–काल इत्यादिरूपेण तद्यथावन्मद्रूपेण, तत्रापि बहुधा प्रत्येकं कारणप्राचुर्येण, मिथश्च कैमुत्येन, न त्वखंडकारणत्वेन मामेकं प्राहुरित्यर्थः । "तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम् । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥ न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते॥" इतिवत् । तत्र हेतुः–गुणव्यतिकरे गुणैस्तमआदिभिरासंगे पराभूतत्वे सतीति । तत्पराभवादेव श्रुतिस्मृतियुक्तिविरुद्धानीश्वरवादिनो भूत्वा ते तथा वदंतीत्यर्थः । ईश्वरकारणवादिनां तु प्रायस्तान्यपि न दूषणायेति भावः । तथाहि–"यदंशविद्धाः प्रचरन्ति कर्मसु नैवान्यदा लोहमिवाप्रतप्तम्" इति न्यायेन परमात्मस्वरूपेश्वरांशत्वात्स्वस्वजडवर्गप्रवर्तकत्वात् । चिदात्मनां जीवानां स्वरूपसिद्धेऽपि कर्तृभोक्तृत्वे उपाधिं विना न स्पष्टीभवतः, तत्सांनिध्येनोपाधितो जाते च ये, ताभ्यां न साक्षात्संबंधः किंत्वज्ञानेनैव, तस्मादथैषामित्यत्र कर्मेति सुखदुःखयोरिति च विशेषितम् । तथा प्रत्यात्मं नानात्वं भवतु, किंतु परमात्मरूपेणैकत्वमेव, तथा लोकस्याव्यक्ताख्यकारणरूपेण भवतु नाम नित्यत्वं, किंतु स्थूलरूपेणानित्यत्वमेव, तथात्मनामुपाध्यंशेन नास्ति सर्वथा नित्यत्वं किंतु स्वरूपेणैव, तथा कालस्य तत्प्रभावरूपतया आगमस्य च तन्निश्वासात्मतया नित्यत्वमस्तु, प्रलये तत्र प्रचारो नास्त्येव, तथा गुणादेरपि स्वभावः कारणं भवतु, अविद्योपाहित आत्मा वा, किंतु सर्वकारणेश्वरशक्त्यात्मकत्वेनैवेति । तदेवं सर्वस्येश्वराश्रयैकासिद्धितया तस्य चेश्वरस्य श्रुतिस्मृतिविद्वदनुभवप्रामाण्येन मद्रूपतया मत्तोऽन्यत्र रक्तानां भयमिति वैराग्यमेव श्रेयः । तदेतज्जैमिनिमतनिरासायात्रैवोक्तम्–'लोकानां लोकपालानाम्' इत्यनेन । मतांतरनिरासाय चान्यत्रोक्तम्–"आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यधो नादृतयुष्मदंघ्रयः" इत्यनेनेति तात्पर्यम् ॥ ३४ ॥ तत्र मुक्तौ । प्रश्नं विवृणोति–अयमर्थ इति । आद्ये गुणाभावे ।

कथं वर्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः ॥ किं भुंजीतोत विसृजेच्छयीतासीत याति वा ॥ ३६ ॥ एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ॥ नित्यबद्धो नित्यमुक्त एक एवेति मे भ्रमः॥३७॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे भगवदुद्धवसंवादे संसारप्रकारनिरूपणं नाम दशमोऽध्यायः॥१०॥
श्रीभगवानुवाच ॥ बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥ गुणस्य मायामूलत्वान्न मे मोक्षो न बंधनम् ॥ १ ॥

तत्र पृच्छति । गुणेष्विति । अयमर्थः । गुणेष्वसत्सु मुक्तिः सत्स्वेव वा । आद्ये ज्ञानसाधनाभावान्न मुक्तिः । द्वितीये च गुणेषु वर्तमानोऽपि तत्कार्यदेहजेषु कर्मसु सुखादिषु च कथं न बध्येत । तथापि तैराकाशवदनावृतत्वान्न बध्यत इति चेत्तर्हि बंधो न संभवतीत्याह । अनपावृतः कथं बध्यत इति ॥ ३५ ॥ यदि तु सत्स्वेव तदहंकारेण बध्यते तन्निवृत्त्या च मुच्यत इति मतं तर्हि तत्कथं ज्ञातव्यमिति पृच्छति । बद्धो मुक्तो वा कथं वर्तेतेत्यादि । किं भुंजीत कथं भुंजीतेत्यर्थः ॥ ३६ ॥ एतत् एतद्विषयं प्रश्नम् । किंच एक एवात्माऽनादिगुणसंबंधान्नित्यबद्धः । मुक्तेर्जन्यत्वेऽनित्यत्वप्रसंगान्नित्यमुक्त इत्यप्यंगीकार्यं स्यात् । तत्र मे भ्रमो भवतीत्याह । नित्यबद्ध इति ॥ ३७ ॥ इति श्रीमद्भागवत एकादशस्कन्धे श्री० टीकायां दशमोऽध्यायः ॥ १० ॥ एकादशे तु बद्धानां मुक्तानां चाथ लक्षणम् ॥ साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ॥ १ ॥ 'नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रमः' इति यदुक्तं तत्किं वस्तुतो विरोधः प्रतीतितो वा, नाद्यः, बंधमोक्षयोर्वास्तवत्वाभावादित्याह बद्धो मुक्त इति द्वाभ्याम् । आत्मा बद्धो मुक्तश्च मे गुणतो मदधीनसत्त्वादिगुणोपाधितो न तु वस्तुतः । नन्वौपाधिकत्वेऽपि तंडुल

सत्त्वगुणकार्याणां श्रद्धाविवित्सादीनां ज्ञानहेतूनां गीतोक्तानां सत्त्वशुद्ध्यादीनां च कारणाभावे कार्याणामभावात्साधनाभावे साध्याभावोऽपि स्यादित्यर्थः । तथापि गुणकार्यसत्त्वेपि ॥ * ॥ संदर्भः—ननु भवन्मते मोक्ष एव पुरुषार्थोऽवगतः, स च भक्तिज्ञानवैराग्याभ्यासाद्भवति, तास्मिन्सति पुरुषो मुक्त उच्यत इति मया गुणेष्वसत्सु मुक्तिरित्यत्र बंधस्तु स्तब्धत्वन्यायेन स्वत एव ज्ञेयः ॥ * ॥ दीपिका—तदेवं संसारस्य मिथ्यात्वमात्मज्ञानस्यैव मोक्षहेतुत्वञ्च, तत्र मुक्तेर्निवृत्तिहेतुत्वे गुणानां मायामयत्वाद्गुणेषु वर्तमान इत्यनुपपन्नम् । अतोऽयमर्थः—आद्ये गुणासत्त्वपक्षे द्वितीये च प्रातीतिकगुणसत्त्वपक्षे यद्यपि गुणेषु वर्तमानस्तथापि तैर्गुणैः अह कर्ता भोक्तेति कथं बध्यते बद्धत्वेन प्रतीयते ॥ ३९ ॥ तदहंकारेण गुणाहंकारेण । तन्निवृत्त्या गुणनिवृत्त्या । इत्यर्थ इति—लक्षणं विना पदार्थज्ञानासंभवात्तल्लक्षणं वक्तव्यमिति भावः ॥ * ॥ वर्तन विहरणभोजनमलमूत्रविसर्जनशयनासनगमनानि कर्माणि मुक्तस्य बद्धस्य च तुल्यान्येव दृश्यन्ते, तानि च निरभिमानानि साभिमानानीति मया कैर्वा लक्षणैर्ध्यायत इति ॥ ३६ ॥ अन्योऽपि संदेह इत्याह—किञ्चेति । तत्र बन्धे मोक्षे च ॥ * ॥ नित्यमुक्तो दत्तात्रेयभरतादिर्नित्यबद्धो देवदत्तयज्ञदत्तादिस्तुल्यदैहिकक्रियत्वादेक एवेति भ्रम इति वैलक्षण्यं मया ग्रहीतुमशक्यमप्यस्त्येव तत्त्वयाहं ज्ञापयितव्य इति भावः । अत्र नित्यपदमनधिकार्थम् ॥ ३७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे दशमोऽध्यायः ॥ १० ॥ अथ बद्धमुक्तलक्षणानंतरम् । तथा बद्धादिलक्षणवत् ( १ ) । तत् किं भ्रमः, विरोधाद्वा प्रतीतः । नाद्यः, भ्रमस्य वास्तवत्वं नास्तीत्यर्थः । तत्र—हेतुः बंधमोक्षयोरिति । औपाधिकः सत्यः किन्न स्यादिति शङ्कते—नन्विति । यथा तंडुलेषु पाकोऽग्न्याद्युपाधिसंगकृतोपि वास्तवो भवति तद्वदित्यर्थः । गुणस्येति सामान्याभिप्रायमेकत्वं, गुणानामित्यर्थः । मायामूलत्वान्मायिकत्वादवास्तवत्वादिति यावत् । अत एव बंधनाभावादेव । सर्वशास्त्रेषु बंधमोक्षस्य व्युत्पादनमास्ति तत्कथं तदभाव उच्यत इत्याशंकते—नन्विति । इत्यर्थ इति—मत्कृत

शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया ॥ स्वप्नो यथाऽऽत्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥ २ ॥
विद्याऽविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ॥ मोक्षबंधकरी आद्ये मायया मे विनिर्मिते ॥ ३ ॥

पाकादिवद्वास्तवत्वं किं न स्यात्तत्राह । गुणस्य मायामूलत्वाद्बंधनं नास्ति । अत एव मोक्षश्च नास्ति । ननु कथं सर्वशास्त्रविरुद्धमुच्यते तत्राह । इति मे व्याख्येति । एवं मत्कृतो निर्णयः । अलमतिकुतर्कैरित्यर्थः । अथवैवमन्वयः । आत्मा बद्धो मुक्त इति या व्याख्या उक्तिः सा मे गुणतो मद्गुणपारतंत्र्यात् । अत्र हेतुत्वेन गुणनियंतरि स्वस्मिंस्तद्व्यतिरेकमाह । अत एव न मे बंधनं मोक्षो वेति । अन्यत्समानम् ॥ १ ॥ एवं कारणभूतगुणानां मायामयत्वात्तत्कार्यसंसृतिर्मायेति प्रपंचयति । शोकमोहाविति । यथा स्वप्न आत्मनो बुद्धेरेव ख्यातिर्विवर्तस्तद्वत् ॥ २ ॥ अतो वस्तुविरोधस्तावन्नास्ति प्रतीतिस्त्वौपाधिकी घटत इत्याह । विद्याऽविद्ये इति । तन्येते मोक्षबंधावाभ्यामिति तनू शक्ती । कुतः । मे मायया विनिर्मिते मायावृत्तिरूपत्वात् । मोक्षबंधकरीत्येकवचनं द्विवचनार्थे । ननु तत्कार्यत्वं बंधमोक्षयोरनादित्वविनित्यत्वेन स्याताम् । न आद्ये अनादी । अतो यावदविद्यां प्रवर्तयामि तावद्बंधो यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्यर्थः । तथा च स्कंदपुराणे । "बंधको भवपाशेन भवपा

सिद्धांतस्य सर्वशास्त्राधिकत्वादिति भावः । परमेश्वरस्य तव बंधादिर्यद्यपि नास्ति तथापि जीवस्य स चास्त्येवेति चेदाह—अथवेति । मदधीनगुणकृतत्वादहमेव तत्तददृष्टवशात्तत्तद्गुणकार्येषु जीवान्संयोज्य वियोज्य च बंधमोक्षौ ददामीति भावः । अत्र बंधमोक्षयोर्गुणसंगासंगकृतत्वे । तद्व्यतिरेकं बंधमोक्षाभावम् । अत एव गुणनियंतृत्वादेव । स्वस्मिन्स्वत एव निर्गुणे गुणकृतौ बंधमोक्षौ वारयति । अन्यद्विवरणं समानं पूर्ववत् ॥ * ॥ **दीपिका**—तत् एकस्यैव बद्धमुक्तत्वम् । प्रतीतितो भ्रांत्या । नाद्यः वस्तुविरोधपक्षो न संभवति । मे गुणत इति—गुणा जीवस्य नैव, म इति वक्ष्यमाणत्वान्नियंतृनियम्यभावेन संबंधं व्याचष्टे—मदधीनेति । बंधमोक्षयोरौपाधिकत्वेऽपि यथा 'स्थाल्यग्नितापात्पयसोभितापः' इति न्यायेन स्थाल्याद्युपाधिकत्वेऽपि वह्निसंयोगेन तंडुलपाको वास्तवो भवति तद्वद्बंधमोक्षयोर्वास्तवत्वं किं न स्यादित्यर्थः । मायामूलत्वाद्दार्ष्टांतिके गुणलक्षणोपाधेर्मिथ्यात्वात् । अत एव बंधाभावादेव । पूर्वार्थे शास्त्रानादर इति व्याख्येत्यस्यास्थानपतितत्वं चातः—अथवेति । उक्तिः शास्त्रेषु वर्णनम् । अत्र बंधमोक्षव्यवस्थायाम् । हेतुत्वेन व्यतिरेकव्याप्तिघटितेन । तद्व्यतिरेकं बंधमोक्षाभावम् । अत एव बंधमोक्षयोर्गुणप्रयुक्तत्वादेव । अत्रायं प्रयोगः—असौ बंधमोक्षविषयः, गुणपरतंत्रत्वात्, अमुकवत्, यन्नैवं तन्नैवं, यथाहमिति ॥ * ॥ **विश्वनाथसंदर्भौ** तु—गुणस्य गुणसंबंधस्य मायामूलत्वान्माययाऽविद्यया दुस्तर्कशक्त्या दुर्घटस्य देहेंद्रियादिसंबंधस्य मिथ्यैव स्फोरणादित्यर्थः । अत एव मे मम, मते इति शेषः ॥ १ ॥ एवमुक्तविधया । विवर्त इति—अतात्त्विकोऽन्यथाभावो विवर्त इति यथा शुक्तौ रजतमिति ॥ * ॥ अत्र बद्धस्य मिथ्यात्वं दर्शयति—शोकेति । देहापत्तिर्देहाद्देहांतरप्राप्तिर्देहस्यापत्तिरपमृत्युर्वा, मायया मायिकोपाधिसंबन्धेन अविद्यया मायिकोपाधिरंतःकरणे सूक्ष्मदेहजीवस्याभिमानादेव, तदीयधर्माणां शोकमोहादीनामपि स्वीयत्वेन ग्रहणमित्यर्थः । अतः शोकमोहादिमत्त्वलक्षणा संसृतिर्न वास्तवी न सत्या, शोकमोहादीनां मायासृष्टत्वेन सत्यत्वेपि तत्संबंधस्य जीवेऽविद्याकल्पितत्वान्मिथ्यात्वमित्यर्थः ॥ २ ॥ यतो गुणकृतौ बंधमोक्षावतो हेतोः । तत्प्रतीतिर्विरोधप्रतीतिः । अत्राशंकते—तत्कार्यत्वं मायाकार्यत्वेनेत्याह । यतोऽनादी अतो हेतोः । इत्यर्थ इति—अहमेव बंधमोक्षदातेति भावः । अत्र प्रमाणमाह—तथा चेति । 'विष्णुरेव' इत्येवकारेण विशेष्यसंबद्धेनान्ययोगव्यवच्छेदकार्थेन विष्णोरन्यत्र 'पार्थ एव धनुर्धरः' इत्यत्रत्यैवकारेण पार्थादन्यत्र धनुर्धरत्वस्येव विष्णोरन्यत्र मोक्षप्रदत्वस्य योगो व्यवच्छिद्यत इति । विनिर्मिते स्वस्मिन्नेव गुणविभागेन विभक्त

**एकस्यैव ममांशस्य जीवस्यैव महामते ॥ बंधोऽस्याविद्ययाऽनादि र्विद्यया च तथेतरः ॥ ४ ॥**

शाच्च मोचकः ॥ कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥ " इति ॥ ३ ॥ तत्र शरीरिणामिति बहुवचननिर्देशाद्विषयभेदेनाविरोध उक्त इति भ्रांतिं व्यावर्तयन्बंधमोक्षव्यवस्थामुपपादयति । एकस्यैवेति । तर्हि किमात्माभेदात्तत्वापि बंधो नहीत्याह । अस्य जीवस्यैवेति । नन्वात्माभेदे जीवो नाम कोऽन्योऽस्ति पृथक् । कथं च बंधमोक्षसुखदुःखादिव्यवस्था तत्राह ममांशस्येति । अयं भावः । यथैकस्यापि चंद्रादेर्जलाद्युपाधिना बिंबप्रतिबिंबरूपो भेदो यथा च तत्र जलकृताः कंपादयः प्रतिबिंबस्यैव ।

तया प्रत्यायिते, जन्यत्वे त्वाद्ये इतिविशेषणविरोधः स्यात् ॥*॥ **संदर्भः**—वस्तुतो नित्यमुक्तोपि प्रतीतितोऽनादिबद्ध इति युगपदुभयत्वं घटत इत्यर्थः । अत्र मे मम मायया शक्त्या कर्त्र्या तनू स्वदृष्टांतरूपत्वात्स्वांशरूपे अत एवानादी निर्मिते प्रसारिते ते एव मम शरीरिणां मदीयानां मोक्षबंधकर्त्र्यौ भवत इति स्थिते 'सा धर्मराजवद्भक्ता' 'भयं द्वितीयाभिनिवेशतः स्यात्' इति न्यायेन यस्य यावन्मद्वैमुख्यं तस्य तावदविद्यां प्रसार्य स्वरूपावरणपूर्वकं गुणावेशं कुर्वती बंधं करोति, मत्सांमुख्ये तु गुणावेशत्याजनपूर्वकं स्वरूपस्फुरणं कुर्वती मोक्षं करोतीति ज्ञेयम् । अतस्तस्या एव तयोः कर्तृत्वेपि मद्धेतुकत्वात् 'बंधको भवपाशेन' इत्याद्युच्यत इति भावः । बंधमोक्षकरी इति—" सुपां सुलुक्पूर्वसवर्णा—" इत्यादिना पूर्वसवर्णश्छांदसः ॥ * ॥ **विश्वनाथस्तु**—ननु केयमविद्या यया मिथ्याभूतोऽपि गुणसंबंधः स्फोरितस्तत्राह । अन्यत्तैः । इमे च मम मायया महाशक्त्या सृष्टे, मायावृत्तिरूपत्वात्तयोर्मायासृष्टत्वमौपचारिकमेवोच्यते । अनादी " अनाद्यनंतमव्यक्तं नित्यं कारणमव्ययम् " इति द्वादशोक्तेः, 'पुंसोस्ति प्रकृतिर्नित्या' इति वैद्यकोक्तेश्च । मायाशक्तिरिव तद्वृत्ती विद्याविद्ये अपि नित्ये, तदेवं मायायास्तिस्रो वृत्तयः—प्रधानमविद्या विद्या च । प्रधानेनोपाधिः सत्य एव सृज्यते, अविद्यया तदध्यासो मिथ्याभूतः, विद्यया तदुपराम इति तिसृणां कार्यम् । 'विष्णुरेव' इत्येवकारेण देवतांतरस्य मोक्षदातृत्वेऽनधिकारः सूचितः ॥३॥ तत्र बंधमोक्षव्यवस्थायाम् । विषयभेदेन जीवभेदेन । अत्राशंकते—तर्हि किमिति । पुनराशंकते—नान्वीत अत्राशयमाह—अयं भाव इति । तथा चोभयभेदत्वे च । तत्र द्वयोर्मध्ये । तत्कृतोऽविद्याकृतः । तस्य च जीवस्य । अत्र प्रमाणमथर्वोपनिषदि पठ्यते—तथा चाहुरिति । अत्र निर्गलितार्थमाह—शरीराध्यासप्रयुक्तनानात्वभ्रमस्य मृषात्वादेकस्यैव ममांशस्याखंडैकदेशविभागात्संभवे चांशिनो नश्वरत्वापत्तेरंशत्वेन तत्रतत्र श्रूयमाणस्य भगवत एव जीवत्वापत्तेश्च मद्रूपस्यैव जीवस्यानादिबंधभ्रमान्नित्यबद्धत्वं वस्तुतोऽविद्याया अभावात्, विद्यया तत्त्रैकालिकाभावबोधनात्तद्दृष्ट्या इतरो मोक्षोप्यनादिरिति नित्यमुक्तत्वं चेति ॥*॥ आभ्यामेव मदीयशक्तिभ्यामविद्याविद्याभ्यां मदीयजीवशक्तेर्देहाध्यासप्रसारणाप्रसारणाभ्यामवस्तुभूतावपि बंधमोक्षौ प्रत्यायितौ मदीयसृष्ट्यादिलीलाशक्तिप्रेरणवशादेवेत्याह—एकस्यैवेति । अंशस्य विभिन्नांशशब्दवाच्यस्य । "प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत्" इति मदुक्तेर्जीवस्य मम शक्तित्वेऽपि "ममैवांशो जीवलोके जीवभूतः सनातनः" इति मदुक्तेरेवांशत्वं चेत्यर्थः । न तु शरीरिणामिति पूर्वोक्तेः । "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इति श्रुतेर्जीवानां बहुत्वेपि कथमेकस्येत्युक्तम्, उच्यते—एकस्यापि तटस्थाख्यजीवशक्तेर्वृत्तिबाहुल्यादेव बहवो जीवा इत्युच्यन्ते, यथा एकस्या अपि बहिरंगाख्याया मायाशक्तेः प्रथममविद्या विद्या चेति द्वे वृत्ती, तयोश्चापि प्रतिजीवं वृत्तिबाहुल्याद्बहुत्वमेव । यथा च—मायावृत्तीनां मायाशब्दवाच्यत्वं तथैव जीवावृत्तीनामपि जीवशब्दवाच्यत्वम् । किञ्च—जीवशक्तिमायाशक्त्योर्वृत्तीनामपि नित्यत्वमेव ज्ञेयम् "नित्यो नित्यानाम्" इति 'बंधमोक्षकरी आद्ये' इत्यादिवचनेभ्योऽविद्याध्वंसे सति 'जीवस्य निर्वाणः' इत्यादिवाक्येषु ध्वंसनिर्वाणशब्दाभ्यामुपरामब्रह्मसायुज्ये उच्येते । ब्रह्मणा सह युज्यत इति सयुक् तस्य भावः सायुज्यमिति जीवस्य नं तत्र स्वरूपध्वंसः । किञ्च—"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा । अविद्या कर्मसंज्ञाख्या तृतीया शक्तिरुच्यते ॥ यया क्षेत्रज्ञशक्तिः सा तारतम्येन वर्तते ।" इति विष्णुपुराणोक्तेर्जीवशक्तिर्मायाशक्तेः प्रायो वशीभूता सृष्टिलीलासिद्ध्यर्थमित्याह—बद्ध इति । अस्य जीवस्याविद्यया बंधः स च कर्मणोऽनादिः मोक्षसंभवात्, सांत इतरो मोक्षः । स च जन्यत्वात्सादिरनश्वरत्वान्निरन्तो ज्ञेयः । ममांशस्य रश्मिपरमाणुस्थानीयस्य, अत एव

अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते ॥ विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥ ५ ॥
सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ॥ एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ ६ ॥

तथा च प्रतिबिंबानामप्युपाधिभेदेन भेदादेकस्मिन्नुदकुंभे मग्ने तद्गतप्रतिबिंबस्यैव बिंबैक्यं नान्यगतस्य तथाऽविद्यायां प्रतिबिंबस्य मदंशस्य जीवस्यैव तत्कृतो बंधस्तस्य चोपाधितो भेदान्नाव्यवस्थेति । तथाचाहुः । "यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ॥ न सर्वे संप्रयुज्यंते तथा जीवाः सुखादिभिः ॥" इति । एतच्चातिरहस्यं स्वबुद्ध्या निश्चेतव्यमिति संबोधयति । हे महामते । इतरो मोक्षः ॥ ४ ॥ तदेवं व्यवस्थामुपपाद्य कथं वर्तेतेत्यादिवैलक्षण्यप्रश्नस्योत्तरमाह । अथेति । तच्च वैलक्षण्यं द्विविधम् । जीवेश्वरयोरेकं जीवानां चैकम् । तत्र जीवेश्वरयोर्वैलक्षण्यमाह विरुद्धधर्मिणोरिति सार्धद्वयेन । शोकानंदधर्मवतोरेकस्मिन्धर्मिणि शरीरे नियम्यनियंतृत्वेन स्थितयोः ॥ ५ ॥ सुपर्णौ वृक्षात्पक्षिणाविव देहात्पृथग्भूतौ । सदृशौ चिद्रूपत्वात् । सखायौ अवियोगादैकमत्याच्च । यदृच्छयाऽनिरुक्तया मायया । वृश्च्यत इति वृक्षो देहः । "ऊर्ध्वमूलमवाक्छाखं वृक्षं यो वेद संप्रति" इति श्रुतेः । "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥ छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥" इति स्मृतेश्च । तस्मिन्कृतं नीडं निकेतनं हृदयरूपं याभ्यां तौ तयोर्मध्ये एको जीवः पिप्पलान्नं पिप्पलोऽश्वत्थो देहस्तस्मिन्नदनीयं कर्मफलमित्यर्थः । खादति भक्षयति । अन्य ईश्वरो निरन्नोऽभोक्ताऽपि निजानंदतृप्तो बलेन ज्ञानादिशक्त्या भूयानधिकः । श्रुतिश्च । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ॥ तयोरन्यः

जीवस्यैव न तु मंडलस्थानीयस्यात एवैकस्यैव न तु सर्वस्येत्यर्थ इति **संदर्भः** ॥ ४ ॥ यतो जीवस्यैव बंधमोक्षावथ तस्मात् । अथाव्ययं हेतौ । विरुद्धधर्मिणोरीशत्वानीशत्वधर्मवतोर्वा । नियम्यो जीवो नियंता ईश्वरः ॥ * ॥ वैलक्षण्यप्रश्नस्य बद्धमुक्तयोः परस्परं विरुद्धलक्षणाक्रांतत्वलक्षणप्रश्नस्येति **दीपिका** ॥*॥ **विश्वनाथः**—अयं जीवो बद्धोऽयं मुक्त इतिवज्जीवात्मा बद्धः परमात्मा मुक्त इत्यप्युच्यते । "अयमात्मापहतपाप्मा" इतिवत् । चिद्रूपत्वात्सदृशाविति, चिद्रूपत्वेनैव क्वचिदभेदनिर्देश इति भावः ॥ ५ ॥ अवियोगाज्ज्ञानात्प्राग्मूढानां त्रियोगप्रतीतिः सा चावास्तवी वस्तुत ऐक्यात् । एका चासौ मतिस्तस्या भावस्तथा तस्मात् । ऐकमत्यं चोभयोर्देहादिधारकत्वात् । कृतनीडौ तत्रैकस्य चिदात्मनोऽनाधेयस्यासंगस्य द्वित्वकृतनीडत्वासंभवेपि नियम्योपाधेर्बुद्धेर्नियामकोपाधेर्नियमनशक्तेर्मायाया देहानुगततया तदुपहितत्वेन द्वित्वकृतनीडत्वयोराविरोध एव । देहस्य वृक्षरूपत्वे प्रमाणमूर्द्ध्वमूलमिति । "ऊर्द्ध्वम्" "आनंदाद्ध्येव खल्विमानि भूतानि जायंते" इति श्रुतिप्रसिद्धं मानुषानंदमारभ्योत्तरोत्तरशतगुणविद्वद्वानंदसोपानपंक्तेरुपरिस्थितं परमानंदाद्वयं वस्तु तदेव मूलं कारणमस्य संसारवृक्षस्य तमूर्द्ध्वमूलम्, अवाक् ऊर्द्ध्वादधोधः सोपानस्थानीयाः शाखा इव शाखा अव्यक्तमहदहंकारपञ्चतन्मात्राषोडशविकाराहिरण्यगर्भविराट्प्रजापतिसुरगंधर्वासुरनरातिर्यक्स्थावररूपा यस्य सोऽवाक्शाखस्तम्, यो नरः संप्रति विनाशित्वेन वेदेति श्रुतिपदार्थः । एतदार्थिकैव श्रीगीतास्मृतिश्च । इत्यर्थ इति—"पिप्पलोऽत्रैषोश्वत्थः सनातनः" इति श्रुत्युक्तो देह एव, तं विना कर्मफल भोगासिद्धेः, पिप्पलान्नं कर्मभोग इति भावः । भक्षयति भोक्तुपाधिबुद्ध्यध्यासात् । श्रुतिस्तु व्याख्यातचरैवेति । भूयान् शुद्धमायोपहितत्वेनानावृतस्वरूपत्वात् ॥ * ॥ अवियोगाद्देहाधिकरणे परस्परं वियोगाभावात् । ऐकमत्यात् एका समाना हृदयावस्थानव्यवसायलक्षणा मतिर्ययोस्तौ एकमती तयोर्भावस्तत्त्वं तस्माच्च सखायौ । वृश्च्यते कालेन छिद्यत इति वृक्षो देहः । ऊर्द्ध्वः सर्वोत्तमो नारायणो मूलं यस्य तम्, अवाक् ततोऽ

आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ॥ योऽविद्यया युक्स तु नित्यबद्धो विद्यामयो यः स तुः नित्यमुक्तः ॥ ७ ॥ देहस्थोपि न देहस्थो विद्वान्स्वप्राद्यथोत्थितः ॥ अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा ॥ ८ ॥ इंद्रियैरिंद्रियार्थेषु गुणैरपि गुणेषु च ॥ गृह्यमाणेष्वहं कुर्यान्न विद्वान्यस्त्वविक्रियः ॥ ९ ॥

पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ " इति ॥ ६ ॥ बलाधिक्यमेवाह । आत्मानमिति । अतो योऽविद्यया युग्युक्तः स तु नित्यबद्धोऽनादिबद्धः यस्तु विद्या प्रधानः स तु नित्यमुक्तः । मायाया अनावरकत्वादाश्रयाव्यामोहकत्वाच्च ॥ ७ ॥ इदानीं बद्धमुक्तजीवानामेव मिथो वैलक्षण्यमाह देहस्थोऽपीति दशभिः । विद्वान्मुक्तः संस्कारवशेन देहस्थोऽपि देहस्थो न भवति । तथा स्वप्नादुत्थितः स्मर्यमाणे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तद्गतसुखदुःखाद्यभावात् तद्वत् । तथाच वस्तुतोऽदेहस्थो ऽपि कुमतिरविद्वान्देहस्थस्तन्निमित्तसुखदुःखभाक्त्वात् । यथा स्वप्नदेहगत इति ॥ ८ ॥ अत्र हेतुत्वेन वैलक्षण्यांतरमाह द्वाभ्याम् । इंद्रियैरिंद्रियार्थेषु गृह्यमाणेष्वपि यस्तु वि

र्वाचीना हिरण्यगर्भादयः शाखा इव शाखा यस्य तम्, यः संप्रति वेद स तत्त्वं वेदेत्यर्थः । एवं स्मृतावश्वत्थमिति । नश्वरत्वात् श्वः प्रभातपर्यंतमपि स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः, प्रवाहरूपेणाविच्छे दादव्ययं च प्राहुरिति । तस्मिन्वृक्षे तयोर्जीवेश्वरयोर्मध्ये सयुजा सयुजौ समानं रूपं चिद्रूपत्वं युज्येते भजत इति सदृशावित्यनेन समानोऽर्थः । समानमेकम् " रषाभ्यां नो णः समानपदे " इति वत् । अभिचाक शीति साक्षितया प्रकाशते ॥ ६ ॥ यतोऽविद्याया आवरकत्वमतो हेतोः । अनादिबद्ध इति--अत्र बोधबाध्यबंधस्य नित्यत्वमनादित्वं यावत्कालावस्थायित्वं वा, अन्यथा बन्धनिवृत्तये प्रवृत्तमोक्षशास्त्रस्यारण्यरु दितत्वप्रसंगः स्यादिति भावः ॥ * ॥ विद्याशब्देनात्र स्वरूपशक्तिवृत्तिरेव अक्रूरस्तुतौ तथा व्याख्यातत्वात्, न तु बहिरंगमायाशक्तिवृत्तिः । तथा च गोपालतापनी श्रुतिः– " द्वौ सुपर्णौ भवतो ब्रह्मणोंऽशभूतस्तथे तरो भोक्ता भवति । अन्यो हि साक्षी भवतीति । भोक्तृभोक्तारौ वृक्षधर्मे तिष्ठतः । यत्र विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो विद्यामयो हि यः स कथं विषयीभवतीति " स्मृतिश्च–" छायातपौ यत्र न गृध्रपक्षौ " इति । छायातपौ विद्याविद्ये इति व्याख्या ॥ ७ ॥ देहस्थो न भवतीति तद्देहमृषात्वाध्यवसायात् बाधितानुवृत्त्या देहस्थोपीति । तत्रस्थः स्वप्नदेहस्थः । तद्गतानां स्वप्नदेहगतानाम् । सुखदुःखादीनामभावात् तद्वद्विद्वानपीत्यर्थः । वस्तुतः, अपरिच्छिन्नत्वेनात्मनो देहकृतपरिच्छेदाभावेप्यविद्वानविद्यावशात्तथात्मानं मन्यत इत्यर्थः । तन्निमित्तानां देहहेतुकानां सुखदुःखानां भागी भवतीति ॥ * ॥ **दीपिका**–वस्तुतो वस्तुस्वरूप विचारेणेत्यर्थः । तन्निमित्तेति–अध्यासेन देहोपाधिकसुखदुःखभागित्यर्थः ॥ ८ ॥ अत्र सुखदुःखादिभोक्तृत्वाभोक्तृत्वे । कुतो नाहंकरोतीति चेदाह–गुणैर्गुणकार्यैरिन्द्रियैर्गुणेषु गुणकार्येषु विषयेषु अत एव गुणा गुणेषु वर्तन्त इति ज्ञानादेव । अत्र भगवदुक्तिं प्रमाणयति–तदुक्तमित्यादि । हे महाबाहो गुणकर्मविभागयोस्तत्त्वविद्यथार्थज्ञ इति मत्वा न सज्जते न कर्तृत्वाभिमानं करोतीति गीतार्थः ॥ * ॥ विकारवत्त्वेप्यहं

दैवाधीने शरीरेऽस्मिन्गुणभाव्येन कर्मणा ॥ वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ॥ १० ॥ एवं विरक्तः शयन आसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥ न तथा बध्यते विद्वांस्तत्रतत्रादयन्गुणान् ॥ प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥ १२ ॥ वैशारद्येक्षयाऽसंगशितया छिन्नसंशयः ॥ प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥ १३ ॥ यस्य स्युर्वीतसंकल्पाः प्राणेंद्रियमनोधियाम् ॥ वृत्तयः स विनिर्मुक्तो देहस्थोपि हि तद्गुणैः ॥ १४ ॥ यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया ॥ अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ १५ ॥

द्वान्स नाहं कुर्यादहं गृह्णामीति मतिं न कुर्यादित्यर्थः । कुतः । गुणैर्गुणेषु गृह्यमाणेषु । अत एवाविक्रियो रागादिशून्यः । तदुक्तं गीतासु । “ तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ॥ गुणा गुणेषु वर्तंत इति मत्वा न सज्जते ॥ ” इति ॥ ९ ॥ अबुधस्तु पूर्वकर्माधीनेऽस्मिञ्छरीरे वर्तमानो गुणैरिंद्रियैर्भाव्येन कर्मणा तत्र देहादौ निबध्यते । कुतः । कर्ताऽस्मीत्यहंकारेण । तदुक्तं तत्रैव । “ प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥ अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥ ” इति । एतैस्त्रिभिः श्लोकैः कथं वर्तेतेत्यस्य प्रश्नस्य सुखदुःखशून्यो निरभिमानश्च देहे वर्तत इत्युत्तरमुक्तं भवति ॥ १० ॥ वैलक्षण्यांतरं वदन्किं भुंजीतेत्यादिप्रश्नोत्तरमाह एवमिति त्रिभिः । अन्यगतमेवं कर्म मां बध्नातीत्येवं विरक्तो विद्वान् । तथा अविद्वानिव शयनासनादिषु न बध्यते । कुतः । तत्रतत्र विषयेषु गुणानिंद्रियाण्यादयन् भोजयंस्तत्साक्षित्वेन वर्तमानो न तु स्वयमदन् । एतदेव कुतस्तत्राह, प्रकृतिस्थोऽपीति सार्धेन । यथा खं सर्वत्र स्थितमपि न सज्जते यथा सविता जले प्रतिबिंबितोऽपि यथाऽनिलः सर्वत्र संचरन्नपि तद्वत् ॥ ११ ॥ १२ ॥ असंगेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असंभावनादयो यस्य सः । नानात्वाद्देहादिप्रपंचात् ॥ १३ ॥ कथं विहरेदित्यस्योत्तरत्वेन वैलक्षण्यांतरमाह । यस्य स्युरिति । तद्गुणैर्देहगुणैः । संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरन्मुक्त इत्यर्थः ॥ १४ ॥ एवं तावद्बद्धमुक्तयोः स्वसंवेद्यमेव

न किमपि करोमीति वाचैव ब्रुवन्कपटी महाबद्धो ज्ञेय इति **विश्वनाथः** ॥ ९ ॥ तत्रैव गीतास्वेव । सर्वशः सर्वाणि कर्माणि । प्रकृतेर्गुणै क्रियमाणान्यपि । अहंकारेण देहाद्यध्यासेन विमूढचेता अहं कर्तास्मीत्यभिमन्यत इत्यर्थः ॥ * ॥ ० ॥ १० ॥ रक्तिः रागोऽध्यासस्तद्रहितो विरक्तः । सार्धेनान्वयः ॥ * ॥ ० ॥ ११ ॥ एतदेवाबंधनमेव । प्रकृतिस्थः प्रकृतिकार्ये देहे स्थितोप्यसंसक्तस्तदध्यासरहितः । यथा खादयउपहिता अप्युपाधिधर्मैर्न विक्रियंते तद्वदित्यर्थः ॥ * ॥ एतदेव साक्षित्वेन वर्तमानत्वमेव । प्रकृतिस्थोऽपीति सार्द्धकम् ॥ १२ ॥ वैशारद्येक्षया ब्रह्मैवात्मेति दृष्ट्या । आदिना विपरीतभावनादीनां ग्रहः । प्रतिबुद्धो जागरणं प्राप्तः ॥ * ॥ ० ॥ १३ ॥ किञ्च–प्राणेंद्रियमनोधियां वृत्तयः चेष्टाशब्दादिसंकल्पाध्यवसायादिरूपाः । वीतसंकल्पाः फलानुसंधानरहिताः । देहस्थोऽपि तद्गुणैर्देहधर्मैः कार्श्यादिभिः । इत्यर्थ इति–नालिकेरकपालमुक्तांतस्थनालिकेरवदसंगो विहरन्मुक्तो भवतीति भावः ॥ * ॥ प्राणेंद्रियमनोधियां वृत्तयः क्षुत्पिपासादर्शनश्रवणादिसंकल्पविकल्पनिश्चयरूपाः पुरुषकर्तृकसदसत्संकल्पशून्या भवन्ति । देहगुणैर्जन्मनाशादिभिर्मुक्तः ॥ १४ ॥ स्वसंवेद्यविद्वदविद्वद्वैलक्षण्यमुक्त्वा परसंवेद्यं तदाह–एवमिति । इत्यर्थ इति–रुष्टस्तुष्टो वा ताडनार्चनाभ्यामिति भावः । एतल्लक्षणीभूतं प्रमाणमाह–तदुक्तमिति ।

न स्तुवीत न निंदेत कुर्वतः साध्वसाधु वा ॥ वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥ १६ ॥ न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ॥ आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ १७ ॥ शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ॥ श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥ गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ॥ वित्तं त्वतीर्थीकृतमंग वाचं हीनां मया रक्षति दुःखदुःखी ॥ १९ ॥

वैलक्षण्यमुक्तमिदानीं 'कैर्वा ज्ञायेत लक्षणैः' इत्यस्योत्तरतया परैरपि सुज्ञेयं वैलक्षण्यमाह यस्यात्मेति त्रिभिः । हिंस्रैर्दुर्जनैरन्यैर्वा प्राणिभिर्यस्यात्मा देहः पीड्यते । यदृच्छया येन केनापि क्वचित्किंचिदर्च्यते वा स बुद्धश्चेत्तत्र न व्यतिक्रियते नातिविक्रियत इत्यर्थः । तदुक्तं याज्ञवल्क्येन । "यः कंटकैर्वितुदति चंदनैर्यश्च लिंपति ॥ अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥" इति ॥ १५ ॥ किंच । साध्वसाधु वा कुर्वतो वदतो वा जनान्न स्तुवीत न च निंदेत । यो लौकिकव्यवहारे विमुखः स मुक्त इत्यर्थः ॥ १६ ॥ अपि च न कुर्यादिति । यो दैहिकेऽपि कर्मण्युदासीनः स मुक्तः । इतरो बद्ध इत्यर्थः । एतान्येव सर्वाणि मुमुक्षोः साधनानि ज्ञातव्यानि ॥ ॥ १७ ॥ यस्तु केवलं शब्दब्रह्मण्यभिज्ञः पांडित्यमात्रश्लाघी न तूक्तैः साधनैस्तदर्थनिष्ठो भवेत्तं निंदति । शब्दब्रह्मणि निष्णातोऽर्थतः पारं गतोऽपि परे ब्रह्मणि न निष्णायात् ध्यानाद्यभियोगं न कुर्यात्तस्य शास्त्रश्रमः श्रमैकफलो न तु पुरुषार्थपर्यवसायी । अधेनुं चिरप्रसूतां गाम् ॥ १८ ॥ एतदेवान्यार्थनिदर्शनैः प्रपंचयति । गा

तस्य कंटकवेद्धुः । तस्य च चंदनलेपयितुश्च । समो निर्विकार एकरूप इत्यर्थः ॥ * ॥ स्वसंवेद्यं बद्धमुक्ताभ्यामव सुज्ञेयम् । नातिविक्रियते हर्षशोकादिवशो न स्यात्तत्परवेद्यलक्षणम् ॥ १९ ॥ अन्यदाह—किंचेति । गुणदोषाभ्यां नामरूपगतगुणदोषाभ्यां तयोर्बोधेन वर्जितोऽधिष्ठानतया सच्चिदात्मनानुगतब्रह्मदृक् मुनिस्तदैक्यानुसंधानपरः । इत्यर्थ इति—पश्यन्नप्यपश्यन्निव जानन्नप्यजानन्निव विहरेदिति भावः ॥ * ॥ ० ॥ १६ ॥ इममेवार्थं पुनराह—अपि चेति । द्वैतस्य मृषात्वनिश्चयान्न किञ्चित्कथनादिकं कुर्यात् । इत्यर्थ इति—सर्वकर्मातीतो मुक्तस्तदासक्तो बद्ध इति भावः । यानि मुक्तस्य स्वाभाविकधर्माणि तान्येव मुमुक्षोः साधनानीत्याह—एतानीति ॥ * ॥ एतानि निरहंकारत्वविरक्तत्वादीनि सिद्धस्य मुक्तस्यासाधारणलक्षणान्यपि साधकस्य मुमुक्षोः साधनानि मुक्त्यर्थमनुष्ठेयानीति ज्ञेयानि ॥ १७॥ मुक्तैर्निरहंकारादिभिः । तदर्थनिष्ठः तास्मिन् शब्दब्रह्मणोऽर्थे विचारे निष्ठा यस्य स तथा । पुरुषार्थो मोक्षस्तदवसानः ॥ * ॥ ध्यानादीत्यादिना भक्त्यंगनामकीर्तनादिग्रहः । पुरुषार्थपर्यवसायी मुक्तिसाधकः ॥ * ॥ **विश्वनाथस्तु**—भक्तिं सच्चिदानंदमयाकारत्वभावनया भगवति कुर्वीत तदैवायमुक्तलक्षणो मुक्तजीवः सिध्येदन्यथा तु पतेदित्याह—शब्दे वेदशास्त्रे ब्रह्मणि तत्प्रतिपाद्ये निर्विशेषे ब्रह्मणि च निष्णातः विशिष्टज्ञानकुशलः, किंतु परे ताभ्यामपि सकाशात्परमाश्रयत्वेन श्रेष्ठे भगवति न निष्णायात् भक्तिकौशलवान्न भवेत् । निष्णातशब्दस्य कुशलार्थत्वाद्भगवति सच्चिदानंदाकारत्वभावनया भक्तिरेवात्र कुशलडा, यां विना तस्य श्रमः साधनश्रमः श्रमैकफलो व्यर्थ एव न तु पुरुषार्थप्रापकः, दुग्धकामस्य अधेनुं वंध्यां चिरप्रसूतां वा रक्षतो यथा श्रमः । अत्र शब्दब्रह्मणि वेदे निष्णातोपि परे ब्रह्मणि निर्विशेष इति व्याख्यायामेकदेशान्वय उत्तरश्लोकतात्पर्यविरोधश्च स्यात् ॥ * ॥ **संदर्भस्तु**—पूर्वं ज्ञानयोगमुक्त्वाऽधुना भक्तियोगमुद्भावयितुमाह—शब्दब्रह्मणीति । अत्र परब्रह्मपदेन परतत्त्वमात्रमुच्यते न तु ब्रह्मत्वभगवत्त्वादिविवेकेनेति ज्ञेयं सर्वत्र तत्सामान्यात ॥ १८ ॥ एतदेव श्रमफलत्वमेव । अन्यार्थानां निदर्शनैर्दृष्टान्तैः । दुग्धदोहां दुग्धदानहीनामिति व्यवहारे दृष्टान्तः । परमार्थे तु "न गोसेवनतो धर्मः परोस्ति ह्यनिमित्तकात्" इत्यादिपुराणात्सर्वदा गोसेवा कल्याणदेति

**यस्यां न मे पावनमंग कर्म स्थित्युद्भवप्राणनिरोधमस्य ॥ लीलावतारेप्सितजन्म वा स्याद्वंध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥**
**एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ॥ उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥ २१ ॥**

मिति । दुह्यत इति दोहः पयः । दुग्धो दोहो नोत्तरत्र दोह्योऽस्ति यस्यास्तामर्थशून्याम् । असतीं भार्यां कामशून्याम् । देहं पराधीनं प्रतिक्षणं दुःखहेतुम् । असत्प्रजां दृष्टादृष्टसाधनशून्यं पुत्रम् । अतीर्थीकृतमागते पात्रेऽदत्तं वित्तं दुष्कीर्तिदुरितापादकम् । अंग हे उद्धव । दुःखानंतरं दुःखमेव यस्य स रक्षति ॥ १९ ॥ मया हीनां वाचमित्युक्तमेव विवृणोति । यस्यां वाचि मे जगतः शोधकं चरित्रं न स्यात् । किं तत् । अस्य विश्वस्य स्थित्यादिरूपम् । तद्धेतुरित्यर्थः । लीलावतारेष्वीप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादिजन्म वा न स्यात् । तां निष्फलां गिरं धीरो धीमान्न धारयेत् ॥ २० ॥ उक्तं ज्ञानमार्गमुपसंहरति । एवं निश्चित्य विचारेणात्मनि नानात्वभ्रमं

भावः । अर्थो दुग्धदानम्, तच्छून्याम् । 'सती साध्वी पतिव्रता' इत्यमरोक्तेः पातिव्रत्यधर्महीनां विरक्तां वा । दुःखहेतूनि परान्नभक्षणादीनि, व्यसनानि । दृष्टसाधनानि ऐहिकसेवादीनि, अदृष्टानि "सोयं परलोकः पुत्रेण जय्यः" इति श्रुतेः परमेश्वरनिष्ठास्वधर्मनिष्ठादीनि तद्रहितां संततिम् । मया हीनां मत्कीर्तनादिशून्याम् । 'वाचस्तु गोविंदगुणस्तवे फलम् ' इत्याद्युक्तेः सर्वदा दुःखीति भावः ॥ * ॥ **दीपिका**—एतदेव ध्यानाद्यभावे शास्त्राभ्यासस्य श्रमैकफलत्वमेव । अन्यार्थनिदर्शनैरन्यपदार्थदृष्टान्तैः । असतीं व्यभिचारिणीत्वात्कामशून्याम् । दृष्टमैहिकं धनार्जनवचनांगीकारादि, अदृष्टं श्राद्धादि, तच्छून्यम्, मया हीनां मदीयलीलादिशून्यां वैदिकीमपि वाचम् ॥ * ॥ **संदर्भस्तु**—तदेवं शब्दब्रह्माभ्यासस्य परब्रह्माभ्यासः प्रयोजनमित्युक्तम् । तत्र सर्वेष्वंशेषु विशेषत उपनिषद्भागे शब्दब्रह्मणस्तत्प्रतिपादकत्वे स्थितेपि तद्विचारकोटिभिरपि परब्रह्मनिष्ठा कथनमात्राद‍ृते न जायते । किन्तु यस्य यस्मिन्नंशे श्रीभगवदाकारपरब्रह्मलीलादिकं प्रतिपद्यते तदभ्यासेनैव च भगवदाकारे च निष्ठा जायते । तद्वक्ष्यति द्वादशे—"संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य । लीलाकथारसनिषेवणमंतरेण" इति, "श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥" इति च विरिञ्च्युक्तेः । अत एव मदीयलीलाशून्यां वैदिकीमपि वाचं नाभ्यसेदित्याह द्वाभ्याम्—गामिति । मया श्रीभगवता हीनां मम लीलादिशून्याम् ॥ * ॥ **दीपिकाप्रकाशस्तु**—दृश्यश्रव्यादीन्विषयान्मत्संबद्धानेव स्वीकुर्यान्न तु मत्संबंधशून्यान् । एतदेव मयि निष्णातत्वमिति वक्तुं सर्वेंद्रियव्यापारोपलक्षकमेकं वागिंद्रियव्यापारमेव लक्षीकृत्य स बहुतरदृष्टान्तमाह—गामिति । दुह्यत इति दोहः पयः, दुग्धो दोहो नोत्तरत्र दोहोऽस्ति यस्यास्तां कस्माच्चिन्मूल्यदानेन विनैव प्राप्तां रक्षति पाति गौरियं मद्दत्तबहुतरघासादिचारणैर्दुग्धवती पुनः प्रसूतिमती च भविष्यतीति बुद्ध्या दुग्धलोभी दुःखदुःखी ऐहिकदुःखवान् आयत्यां तस्या गोर्दुग्धलाभादर्शनेनोपेक्षणादुपेक्षणजन्यपापात्पारात्रिकं च यद्दुःखं तद्वान् । एवमसतीं भार्यां सतीजनकृतधर्मोपदेशेनेयमायत्यां सती भविष्यतीति बुद्ध्या संतानकामलोभी रक्षतीत्येवमसत्प्रजामित्यादावपि व्याख्येयम् ॥ १९ ॥ देवतांतरप्रसंगपरं वाचःफलं किं न स्यादित्यतो 'मया हीनाम्' इत्येव विवृणोतीति । यस्यां वाचि । इत्यर्थ इति—विश्वसृष्ट्यादिप्रभाववर्णनरूपमिति भावः । यद्वा—अध्यारोपापवादाभ्यामुपाधिबाधकत्वादधिष्ठानविचाररूपमित्यर्थः । जन्मपदमवतारकार्यपरं कारणेन कार्यग्रहणमिति । "एकान्तलाभं वचसो न पुंसां सुश्लोकमौलेर्गुणवादमाहुः" इत्युक्तेर्निष्फलामित्यर्थः ॥ * ॥ ननु त्वत्सहितैव वाक् का, किं तत्त्वमस्यादिर्जीवब्रह्मैक्यप्रतिपादिका वा काचिदन्यैवेति तां स्पष्टमावेदयेत्यपेक्षायामाह—यस्यामिति । तां निष्फलां गिरं वेदलक्षणामपि । तदुक्तं श्रीनारदेन—'इदं हि पुंसस्तपसः श्रुतस्य वा' इत्यादि । अत एव गीतं कलियुगपावनावतारेण श्रीभगवता—"श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् । यन्न संति द्रवच्चित्तकंपाश्रुपुलकोद्गमाः ॥" इति ॥२०॥ उपारमेत्प्रवृत्तिमार्गादिति शेषः । इत्यर्थ इति—न शास्त्रपांडित्यं कृतकृत्यतापादकम् "नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्" इत्यादिश्रुतेः, "तदा गंतासि निर्वेदं श्रोत

यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ॥ मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥
श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः ॥ गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुः ॥ २३ ॥

देहाद्यध्यासं निरस्य निर्मलं मनो मयि सर्वगे परिपूर्णे समर्प्य संधार्य उपारमेत । न शास्त्रपांडित्यमात्रेणेत्यर्थः ॥ २१ ॥ यद्यनीशोऽशक्तस्तर्ह्यास्तामिदं कृतार्थो भविष्यसी त्याह । मयीति । मयि मदर्पणेनेत्यर्थः ॥ २२ ॥ मदर्पणेन कर्मणा विशुद्धसत्त्वस्यांतरंगां भक्तिमाह श्रद्धालुरिति द्वाभ्याम् । अभिनयन्स्वयमनुकुर्वन् ॥ २३ ॥

व्यस्य श्रुतस्य च'' इति स्मृतेश्चेति भावः ॥ * ॥ तदेवं भक्त्यैव ज्ञानं सिध्यतीत्युक्तम् । एवं जिज्ञासया बद्धो मुक्त इत्यादिपूर्वोक्तप्रकारविचारेण आत्मनि शुद्धजीवे नानात्वं देवत्वमनुष्यत्वादिभेदमपोह्य एवं मल्लीलादिश्रवणेन मनो मयि ब्रह्माकारे सर्वगे संधार्य साधनप्रयासाद्विरमेन्न तु पांडित्यमात्रश्लाघी भवेदित्यर्थः ॥ २१ ॥ मयीति निमित्ते सप्तमी, मन्निमित्तमित्यर्थः ॥ * ॥ तदेवं ज्ञानमिश्रां भक्तिमुपदिश्य तदनादरेणानु षंगिकसिद्धगणां शुद्धामेव भक्तिमाह—चतुर्भिः । यदीति निश्चये । टीकायाम् 'धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि' इत्यादिवत् । अत्र खलु ज्ञानेच्छुरेव प्राकृतः श्रीमदुद्धवं प्रति च तादृशत्वमारोप्यैवेदमुच्यते । ततश्च—'श्रेयः सृतिं भक्तिमुदस्य' इत्यादिप्रमाणेन भक्तिं विना केवलज्ञानमार्गेण ब्रह्मणि धारयितुं निश्चितमेवानीशो भवति, ततोपि स्वतो ज्ञानादिगुणसेवितं भक्तिमार्गमेवाश्रयति । तत्सोपानमुपदिशति—यदीत्यादिना । अथवा प्राक्तनभ क्तिबलाभावाद्ब्रह्मज्ञानेच्छुर्यदि तत्र मनो धारयितुमनीशः स्यात्तदाधुनाप्येवं कुर्वीति योज्यम् । समाचर अर्पय । निरपेक्षः वांछांतररहितः । किंवा—तदेवमपि यस्य लीलाकथायां श्रद्धा न स्यात्तस्य ब्रह्मधारणायामप्यशक्तिस्स्यात्, किमुत भगवद्धारणायामिति लक्ष्येण शुद्धभक्तावेव पर्यवसायितुमाह—यद्यनीश इति संदर्भः ॥ * ॥ **विश्वनाथस्तु**—एवञ्च मदर्पितनिष्कामकर्मणैवांतःकरणशुद्धिः, अंतःकरणशुद्ध्यधीनमेव भक्तिसहितं ज्ञानम, तेन च ब्रह्मणि निश्चलमनोधारणा, ततः 'ब्रह्मभूतः प्रसन्नात्मा' इत्यादिमदुक्तेर्विद्योपरामसमये विद्योत्तीर्णाया मद्भक्तेः प्राप्तिः, तया च विपक्वकषायस्य मनसो मयि सम्यङ्निदिध्यासनम्, ततो भक्त्युत्थेन शुद्धज्ञानेन सायुज्यमिति क्रमः । तत्र कश्चिद्यदि निश्चलमनोधारणात्मिकां चतुर्थीं भूमिकामप्यधिरोढुं न शक्नुयात्तदा स्वान्तःकरणस्य सम्यक्छुद्धभावमनुमाय तच्छुद्ध्यर्थं पुनरपि मदर्पितनिष्कामकर्मैव कुर्यादित्युद्धवं लक्ष्यीकृत्याह—यद्यनीश इति । सर्वाणि नित्यनैमित्तिकनिवृत्तकर्माणि ॥ २२ ॥ सुभद्राः श्रवणादेव मंगलकराः । लोकानां तीर्थस्नानादपि पावनीः पावित्र्यापादकाः । अनुकुर्वन् रावणवधरासलीलादिकं मुहुः प्रतिदिनं पर्वादौ वा कारयन्नित्यर्थः ॥ * ॥ तदेवं सार्धचतुर्भिर्ज्ञानयोगमुक्त्वा भक्तियोगमाह—श्रद्धालुरित्यादिना 'मया स्या ह्यकुतोभयः' इत्यन्तेन । अत्र शीलार्थकेनालुच्प्रत्ययेन भक्तावौपाधिकश्रद्धावन्तो ज्ञानिप्रभृतयो व्यावृत्ताः । प्रथमत एव श्रद्धालुरिति पदोप न्यासो भक्तावीदृशश्रद्धावानेवाधिकारीति ज्ञापयति । यद्वक्ष्यते—''यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिदः ॥'' इति । ''तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥'' इति । ज्ञानकर्माधिकारिभ्योऽस्य भेदाश्च—सुभद्राः दधिपयःपरस्त्रीचौर्यवेणुगानरासाद्या गायन्ननुस्मरन्निति, गानस्य पौनःपुन्येन स्मरणस्यापि पौनःपुन्यं स्वत एव भवेदिति भावः । कर्म कालियदमनादिकम्, जन्म नंदोत्सवादिकम्, नाटकादिरीत्याऽभिनयत् जन्मकर्मलीलयोर्मध्ये येंशा निजाभीष्टभावं भक्तं गतास्तान्स्वयमनुकुर्वन् । भगवद्गतान्भक्तांतरगतांश्च तानन्यद्वारानुकुर्वन्नित्यर्थः ॥ २३ ॥

मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ॥ लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥ २४ ॥ सत्संगलब्धया भक्त्या मयि मां समुपासिता ॥ स वै मे दर्शितं सद्भिरंजसा विंदते पदम् ॥ २५ ॥ उद्धव उवाच ॥ साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो ॥ भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ॥ ॥ २६ ॥ एतन्मे पुरुषाध्यक्ष लोकाध्यक्ष जगत्प्रभो ॥ प्रणतायानुरक्ताय प्रपन्नाय च कथ्यताम् ॥ २७ ॥ त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ॥ अवतीर्णोसि भगवन्स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥

आचरन्सेवमानः ॥ २४ ॥ ततश्चानेन प्रकारेण मयि सत्संगेन लब्धया भक्त्या स भक्तो मामुपासिता ध्याता भवति स च ध्यानशीलः सद्भिर्दर्शितं वै निश्चितं सुखेनैव मे पदं स्वरूपं प्राप्नोति ॥ २५ ॥ सत्संगलब्धया भक्त्येत्युक्तं तत्र सतां भक्तेश्च विशेषं पृच्छति । साधुरिति । साधवः स्वस्वमतिकल्पिताः संति बहवस्तव तु कीदृशो मतः संमतः भक्तिरपि बहुविधा लोके कीदृशी पुनस्त्वय्युपयुज्येत । सद्भिश्च नारदादिभिरादृता ॥ २६ ॥ एतच्च कथ्यताम् । इदं चातिगुह्यं त्वयैव वक्तव्यमित्यैश्वर्यमाविष्करोति हे पुरुषाध्यक्षेत्यादिना । ब्रह्मादिनियंतः ॥ २७ ॥ अत्र हेतुः । त्वमिति । व्योमवदसंगः । यतः प्रकृतेः परः । स्वेषां भक्तानामिच्छयोपात्तं पृथक्परिमितं

मदर्थे मत्सेवार्थम् । धर्मान्नित्यादिकर्माणि, कामान्भोज्यवासोलंकारादीन्, अर्थानर्थसंचयान् तत्रापि मदपाश्रय एव न स्वप्रयत्नाभिमानी।हे उद्धव मयि सनातने सच्चिदात्मना प्रत्यगात्मना च सर्वानुगते निश्चलां भक्तिं लभते ॥*॥ किञ्च—यो धर्मो गोदानादिलक्षणस्तमपि मदर्थे मदीयजन्मोत्सवाद्यंगत्वेनैवेत्यर्थः, यश्च कामो महाप्रसादसेवनानिवासादिलक्षणस्तमपि मदीयसेवार्थमन्मंदिरयासादिलक्षणत्वेनैव, यश्चार्थो धनसंग्रहस्तमपि मदर्थे मत्सेवोपयोगित्वेनैवाचरन्सेवमानस्तामेव कथाश्रवणादिलक्षणां निश्चलां सर्वदाप्यव्यभिचारिणीं लभते, तत्सुखेन कैवल्यादेरप्यनादरात् "या निर्वृतिस्तनुभृतां तव पादपद्मसेवाभवजनकथाश्रवणेन वा स्यात्" इत्याद्युक्तेः । न च भजनीयस्य चलतया तस्यापि चलता शंक्या, यतः सनातने ॥ * ॥ **विश्वनाथस्तु**—मदर्थे मत्सेवार्थम्, मज्जन्मयात्रादिदिवसे मत्स्वरूपश्रीगुरुदेवाराधनदिवसे च धर्मा ब्राह्मण वैष्णवसंप्रदानकान्नवस्त्रादिदानानि, कामा वैष्णवसमाजप्राप्तमधुरमहाप्रसादान्नभोजनस्रक्चंदनतांबूलोपयोगिवसनधारणाद्याः, अर्था विष्णुवैष्णवसेवार्थद्रव्याहरणानि, एतानाचरन्कुर्वन् निश्चलां साधनसाध्यदशयोः स्थिरां नैष्ठिकीम् । सनातन इति—तदाराध्यस्य मद्विग्रहस्य सनातनत्वाद्भक्तिरपि सनातनी निश्चलैवेति भावः ॥ २४ ॥ दर्शितं स्वस्मिन्नेव साक्षाद्बोधितम् ॥ * ॥ ० ॥ २५ ॥ लोकोपकारप्रश्नमुत्थापयति—तत्र सत्संगेत्याद्युक्तौ । लोकास्त्वसाधूनपि स्वानुरागेण साधून्मन्यन्ते, समलांश्च निर्मलान्मन्यंते, विरुद्धक्रियां च भक्तिं मन्यंते । भवतोपि तादृशं मतं भिन्नं वेत्याशयवान्पृच्छति—साधुस्तवेति ॥ * ॥ **दीपिका**—विशेषं विशिष्टलक्षणम् । नारदादिभिरादृतेति भक्तेस्तत्त्वं त एव जानन्ति तेषां च माहात्म्यं भवानेवेति भेदेन दृष्टं भक्तिप्रादुर्भावकं साधुं पृच्छति—साधुस्तवेति ॥ २६ ॥ एतच्च साधूनां भक्तेश्च लक्षणम् । पुरुषाध्यक्षेत्यादिसंबुद्धित्रयं साभिप्रायम्—प्रणताय पुरुषोपि वदति किं पुनः पुरुषाध्यक्षः, अनुरक्ताय लोक्यंते यज्ञेषु ये ते लोका देवा अपि वदंति किं पुनस्तदध्यक्षः, प्रपन्नाय जगत् सर्वो वदति किं पुनर्जगत्प्रभुर्भवानिति । यद्वा—पुरुषाध्यक्षपदेन प्राप्तां राजतुल्यतां लोकाध्यक्षपदेन वारयित्वा तेन प्राप्तेंद्रादिसमतां जगत्प्रभो इत्युक्त्या वारयित्वा सर्वेश्वरत्वेन मद्धितकरणमप्युचितमेवेति प्रार्थयते ॥ * ॥ हे पुरुषाध्यक्ष महत्स्रष्ट्राद्यवतारिन् । लोको वैकुंठम् । जगच्चानंत ब्रह्मांडात्मकम् । प्रणताय भक्ताय । अनुरक्ताय स्निग्धाय । प्रपन्नाय स्वैकशरणाय ॥ २७ ॥ अत्र सर्वेश्वरत्वे । कुतोऽसंगः यतः प्रकृतेर्मायातः । तर्हि कथं मायातीतस्य ब्रह्मणो देहसंबंध इति चेदाह—स्वेषा

श्रीभगवानुवाच ॥ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ॥ सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥२९॥ कामैरहतधीर्दांतो मृदुः शुचिरकिंचनः॥ अनीहो मितभुक्छांतः स्थिरो मच्छरणो मुनिः॥३०॥अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः॥अमानी मानदः कल्पो मैत्रः कारुणिकः कविः॥३१॥

वपुर्येन सः ॥ २८ ॥ तत्र त्रिंशल्लक्षणैः साधुं निरूपयति कृपालुरिति पंचभिः । कृपालुः परदुःखासहिष्णुः । सर्वदेहिनां केषांचिदप्यकृतद्रोहः । तितिक्षुः क्षमावान् । सत्यं सारः स्थिरं बलं वा यस्य सः । अनवद्यात्माऽसूयादिरहितः । सुखदुःखयोः समो हर्षविषादरहितः । यथाशक्ति सर्वेषामुपकारकः ॥ २९ ॥ कामैर्विषयैरक्षुभितचित्तः । दांतः संयतबाह्येंद्रियः । मृदुरकठिनचित्तः । शुचिः सदाचारः । अकिंचनोऽपरिग्रहः । अनीहो दृष्टक्रियाशून्यः । मितभुक् लघ्वाहारः । शांतो नियतांतःकरणः । स्थिरः स्वधर्मे । मच्छरणो मदेकाश्रयः । मुनिर्मननशीलः ॥ ३० ॥ अप्रमत्तः सावधानः गभीरात्मा निर्विकारः । धृतिमान्विपद्यप्यकृपणः । जितषड्गुणः "क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः" एते जिता येन सः । अमानी न मानाकांक्षी । अन्येभ्यो मानदः । कल्पः परबोधने दक्षः । मैत्रोऽवंचकः । कारुणिकः करुणयैव प्रवर्त

मिति । स्वीयानां भक्तानामिति यावत् । उपात्तं स्वीकृतम् । वपुश्शुभाकारतनुः 'शुभाकारतनौ वपुः' इति यादवः । "नित्यानंदशरीरोपि वसुदेवादिदेहगः । प्रदर्शयेज्जनिं स्वस्य नित्यं कारणवर्जितः ॥" इति तीर्थोक्तेः ॥ * ॥ साक्षाद्भगवानेव त्वमवतीर्णो भगवत एव वैभवमाह—ब्रह्म त्वं परमव्योमाख्यो वैकुंठस्त्वं प्रकृतेः परः पुरुषोपि त्वमिति । भगवानपि कथंभूतः सन्नवतीर्णः—'स्वेच्छामयस्य' इत्यनुसारेण स्वेषां सर्वेषामेव भक्तानामिच्छयैतां पूरयितुमुपात्तानि ततस्तत आकृष्टानि पृथग्वपूंषि निजतत्तदाविर्भावा येन तथाभूतः सन्निति, तं प्रति यथाह जांबवान्—'यस्येषदुत्कलितरोषकटाक्षमोक्षैः' इत्यादि । तथा च देवाः—'केतुस्त्रिविक्रमयुतः' इत्यादि । तथा च ब्रह्मणा—'नारायणस्त्वम्' इत्यादौ 'नारायणोंगम्' इति । यथा च देवाः—'स्यान्नस्तवांघ्रिः—' इत्यादि । अत एवाक्रूरः—'अद्भुतानि' इत्यादि । अत एव 'गोविंदभुजगुप्तायाम्' इत्यादि ॥ २८ ॥ तत्र साधुभक्तयोर्मध्ये ॥ * ॥ कर्मज्ञानादिमिश्रा केवला चेति मद्भक्तेर्द्वैविध्यात्तत्प्रवर्तकः साधुरपि द्विविधस्तत्राद्यमाह त्रिभिः । कृपालुत्वाद्यष्टाविंशतिगुणवानयं सत्तम इत्युत्तरस्यानुषङ्गः । अत्र शांत इति जितषड्गुण इति पदाभ्यामयं सिद्धभक्तो निर्वाणवांछाशून्यत्वात् । भक्तात्मारामः शांत इति संज्ञाभ्यामुच्यतेऽयं स्वपूर्वदशायां ज्ञानमिश्रभक्तिमान्, तत्पूर्वदशायां कर्ममिश्रभक्तिमानासीदतस्तदातदास्य भक्तेः प्राधान्यम् । सिद्धिदशायां तु कर्मज्ञानाद्यावरणाच्छुद्धभक्त एवायमुच्यत इत्यतः—सत्तम इति । ज्ञानमिश्रभक्तिमान् सत्तरः, कर्ममिश्रभक्तिमांस्तु सन्नित्यवगम्यते । अतोयं स्वसांगिनं स्वतुल्यं चिकीर्षुः प्रथमं कर्ममिश्रां भक्तिमुपदिशति, ततस्तेनोपदिष्टः स च निष्कामः कर्ममिश्रामेव भक्तिं कुर्वन् "न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते हि सः" इति न्यायेनारूढदशायामनादृतत्वात् स्वत एव कर्मणामुपरामे सति ज्ञानमिश्रां भक्तिं लभते । ततस्तत्पाकदशायां भक्तेः प्राबल्ये सति ज्ञानेप्यनादृतत्वादुपरमत्प्राये सति भक्तात्माराम इति शांतभक्त इति संज्ञाभ्यां स चाप्युच्यमानो भवति । तस्य ज्ञानेनादरो यथा—भक्तिरसामृतसिंधुधृता तदुक्तिः—"अस्मिन्सुखघनमूर्तौ परमात्मनि वृष्णिपत्वेन स्फुरति । आत्मारामतया मे बत वृथा गतश्चिरं कालः ॥" इति । "हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः" इति प्रथमे च । तद्दशायां भक्तिबाधितस्य ज्ञानस्य सत्त्वेपि तस्य भक्त्यनावरकत्वात् । "अन्याभिलाषताशून्यं ज्ञानकर्माद्यनावृतम् । आनुकूल्येन कृष्णानुशीलनं भक्तिरुच्यते ॥" इति भक्तिलक्षणस्य तत्र नाव्याप्तिर्ज्ञेया ॥ २९ ॥ अकिञ्चनत्वं सर्वथा न संभवति पानपात्राच्छादनादेरग्रहणप्रसंगादतोऽर्थांतरमाह—न विद्यते किंचन किमिदमिति प्रश्नयोग्यं धनं यस्य स तथा, संक्षिप्तस्वीकारवान् "संकोचेऽकिंचन व्यर्थे मुधा" इति यादवः । दृष्टक्रिया गणितचिकित्सादिरूपा तद्रहितः ॥ * ॥ ० ॥ ३० ॥ सावधानो विहिताचारे । निर्विकारः कामाद्यनाकुलचित्तः । यद्वा—आत्मनि विद्यमानगुणाभिमानवर्जितोऽमानीति । मानदो ज्ञानोपदेष्टा वा । विहितकरणनिपुणो वा कल्पः । कृपालुत्वं

आज्ञायैवं गुणान्दोषान्मयाऽऽदिष्टानपि स्वकान् ॥ धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः ॥ ३२ ॥

मानो न दृष्टलोभेन । कविः सम्यग्ज्ञानी ॥ ३१ ॥ किंच । मया वेदरूपेणादिष्टानपि स्वधर्मान्संत्यज्य यो मां भजेत सोऽप्येवं पूर्वोक्तवत्सत्तमः । किमज्ञानान्नास्तिक्याद्वा । न । धर्माचरणे सत्त्वशुद्ध्यादीन् गुणान्विपक्षे नरकपातादीन्दोषांश्चाज्ञाय ज्ञात्वाऽपि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेनैव धर्मान्संत्यज्य । यद्वा भक्तिदार्ढ्येन निवृत्ताधिकारतया संत्यज्य । अथवा विद्धैकादश्युपवासकृष्णैकादश्यनुपवासानिवेद्यश्राद्धादयो ये भक्तिविरुद्धा धर्मास्तान्संत्यज्येत्यर्थः ॥ ३२ ॥

मनोधर्मः, कारुणिकत्वं देहधर्म इति पृथगुक्तम् ॥ * ॥ ० ॥ ३१ ॥ स्वधर्मान्वर्णाश्रमधर्मान् । त्यागः किं धर्मस्याज्ञानाद्धर्मस्वरूपज्ञानाभावाद्वा नास्तिक्याद्गुरुशास्त्रोपदेशे श्रद्धाराहित्यादिति चेदाह–नेति । विपक्षे धर्मत्यागे । दोषान्प्रत्यवायादिरूपान् । एवं च "स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इत्युक्तेः का गतिरिति चेद्भगवद्वचनेनैवोत्तरयति–"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति भगवतैव निजभक्तेराधिक्यबोधनात्तत्र प्रवृत्तानां न स्वधर्मत्यागदोषः "त्यक्त्वा स्वधर्मं चरणांबुजं हरेर्भजन्नपक्वोथ पतेत्ततो यदि । यत्र क्व वा भद्रमभूदमुष्य किं कोवार्थ आप्तो भजतां स्वधर्मतः ॥" इत्युक्तेरित्यभिप्रेत्याह–यद्वेति । भक्तिदार्ढ्येपि धर्मत्यागो नोचित इति चेदाह–अथवेति । इत्यर्थ इति–भक्तिविरुद्धधर्माणामेव त्यागो न तु नित्यनैमित्तिकानामपि 'निवृत्तं कर्म सेवेत' इत्युक्तेरिति भावः । विद्धैकादशीविधिमाह–"पारणाहे न लभ्येत द्वादशी कलयापि चेत् । तदानीं दशमीविद्धाप्युपोष्यैकादशीस्थितेः ॥" इति श्रुंग्युक्तेः । कृष्णैकादश्युपवासानुपवासस्तु निर्णयामृते–"शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥" इति । अनिवेद्य श्राद्धादिविधिस्तु–"दानाध्ययनदेवार्चाजपहोमव्रतादिकान् । न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात ॥" इत्याश्वलायनोक्तेः । एषां भक्तिविरुद्धत्वं च–"सपुत्रश्च सभार्यश्च सजनो भक्तिसंयुतः । एकादश्यामुप वसेत्पक्षयोरुभयोरपि ॥" इति नारदोक्तेः, "विष्णोर्निवेदितान्नेन यष्टव्यं देवतांतरम् । पितृभ्यश्चापि तद्देयं तदानंत्याय कल्पते ॥" इत्युक्तेश्च । यद्वा–सर्वानीशजीवधर्मान्सर्वज्ञत्वाल्पज्ञत्वादीन् विरुद्धभागान् भागत्यागलक्षणया सम्यग्बाधेन त्यक्त्वा मामुभयविविक्तं लक्ष्यं सच्चिदानंदघनं श्यामसुंदरं भजेत स सत्तमोऽन्ये संत एवेति ॥ * ॥ मध्यममिश्रसाक्षाद्भक्तिसाधकत्वमाह–आज्ञायैवमिति । निवृत्ताधिकारतया संत्यज्येत्यंता व्याख्या ज्ञेया । तथा च हयशीर्षपञ्चरात्रोक्तनारायणव्यूहस्तवः–"ये त्यक्तलोकधर्मार्था विष्णुभक्तिवशं गताः । ध्यायन्ति परमात्मानं तेभ्योपीह नमोनमः ॥" इति । अत्र त्वेवं व्याख्या–यदि च स्वात्मनि तत्तद्गुणयोगाभावस्तथाप्येवं पूर्वोक्तप्रकारेण गुणान् कृपालुत्वादीन्दोषांस्तद्विपरीतांश्चाज्ञाय हेयोपादेयत्वेन निश्चित्यापि यो मया तेषु गुणेषु मध्ये तत्रादिष्टानपि स्वकान्नित्यनैमित्तिकलक्षणान्सर्वानेव वर्णाश्रमविहितान् तदुपलक्षणं ज्ञानमपि मदनन्यभक्तिविघातकतया संत्यज्य मां भजेत्स सत्तमः । चकारात्पूर्वोपि सत्तम इत्युत्तरस्य तत्तद्गुणाभावेऽपि पूर्वसाम्यं बोधयति । ततो यस्तु तत्तद्गुणान् लब्ध्वा धर्मज्ञानपरित्यागेन मां भजति केवलं स तु परमसत्तम एवेति व्यक्त्यानन्यभक्तस्य पूर्वत आधिक्यं दर्शितम् । अत्र 'अद्वेष्टा सर्वभूतानाम्' इत्यादिश्रीभगवद्गीताध्यायप्रकरणमप्यनुसंधेयम् । सत्तम इत्यनेन तदवरत्रापि सत्तरत्वं सत्त्वमप्यस्तीति दर्शितम् । अस्तु तावत्सदाचारस्य तद्भक्तस्य सत्त्वम् अनन्यदेवताभक्तत्वमात्रेण दुराचारस्यापि सत्त्वान्यपर्यायसाधुत्वं विधीयते–'अपि चेत्सुदुराचारः' इत्यादौ । अत्र च साधुसंगप्रस्तावे यत्तादृशलक्षणं नोत्थापितं तत्खलु तादृशप्रसंगस्य भक्त्युन्मुखेऽनुपयुक्तत्वाभिप्रायेण । यथोक्तं श्रीप्रह्लादेन–'संगेन साधुभक्तानाम्' इति सदाचार एवात्र साधुः ॥ * ॥ **विश्वनाथस्तु**–पूर्वोधिकारी धर्मानसंत्यज्य भजेदयं तु संत्यज्यैव भजेदिति भेदः । तथा पूर्वः कृपालुत्वादिसंपूर्णगुणवानेव सत्तमः, अयं तु विशेषणांतरानुपादानात्तावत्संख्याकगुणवत्त्वाभावेऽपि सत्तमः । न चास्य तावद्गुणाभाव एवाशंकनीयः "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः" इति, "यस्याऽस्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः" इत्यादिश्रवणादचिरेणैव सर्वदोषोपशमपूर्वकसर्वगुणोदयस्य तत्रावश्यंभावित्वात् । किञ्च–पूर्वो जितषड्गुणत्वात्सिद्धदशावस्थ एव सत्तमः, अयं तु तादृशत्वा

ज्ञात्वाऽज्ञात्वाथ ये वै मां यावान्यश्चास्मि यादृशः ॥ भजंत्यनन्यभावेन ते मे भक्ततमा मताः ॥३३॥ मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनम्॥परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम ॥३४॥ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ॥ सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥३५॥ मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ॥ गीततांडववादित्रगोष्ठीभिर्मद्गृहोत्सवः॥३६॥यात्रा बलिविधानं च सर्ववार्षिकपर्वसु ॥ वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम्॥३७॥

किंच यावान्देशकालापरिछिन्नः । यश्च सर्वात्मा । यादृशः सच्चिदानंदादिरूपः । तं मां ज्ञात्वा अज्ञात्वाऽपि । यद्वा । विशेषतः पुनःपुनर्ज्ञात्वा एकांतभावेन ये भजंतीति ॥ ॥ ३३ ॥ साधुलक्षणमुक्तं भक्तेर्लक्षणमाह । मल्लिंगेत्यष्टभिः । लिंगानि प्रतिमादीनि ॥ ३४ ॥ सर्वलाभोपहरणं सर्वस्य लब्धस्य समर्पणम् । दासभावेनात्मसमर्पणम् ॥ ॥ ३५ ॥ पर्वाणि जन्माष्टम्यादीनि तदनुमोदनम् ॥ ३६ ॥ बलिविधानं पुष्पोपहारादिसमर्पणम् । सर्ववार्षिकपर्वसु चातुर्मास्यैकादश्यादिषु विशेषतः ॥ ३७ ॥

युक्तेः साधकदशावस्थोपि सत्तम इत्यस्य पूर्ववत् तावान्व्यंजित उत्कर्षः प्रथमत एव शुद्धभक्तिमत्त्वाज्ज्ञेयः ॥ ३२ ॥ अन्यदाह—किञ्चेति । अज्ञात्वा तु भजनमेव न संभवतीति चेदाह—यद्वेति । अर्थांतरमस्याह—श्रवणमननाभ्यामात्मत्वेन निर्णीयानन्यभावेन भेदनिरासेन भजंति निदिध्यास्यन्ति किंवात्मत्वेन निर्णीय "आत्मेत्येवमुपासीत" इति श्रुतिमवलंब्याभेदेन भजंति ये ते मे भक्ततमाः दास्यादिना भजंतस्तु भक्ता इति ॥ * ॥ तदेवमीश्वरबुद्ध्या विधिमार्गभक्तयोस्तारतम्यमुक्तं तत्रैवोत्तरस्यानन्यत्वेन श्रेष्ठत्वं दर्शितं तत्रैवार्चनमार्गे त्रिविधत्वं लभ्यते पाद्मोत्तरखण्डात् महत्त्वमध्यमत्वकनिष्ठत्वभेदात् । अथ शुद्धदास्यसख्यादिभावमात्रेण योऽनन्यः स तु सर्वोत्तम इत्याह—ज्ञात्वेति । ज्ञात्वाऽज्ञात्वा वा ये केवलमनन्यभावेन श्रीव्रजराजनंदनाद्यालंबनो यः स्वाभीप्सितो दास्यादीनामेकतरो भावस्तेनैव भजति न कदाचिदन्येनेत्यर्थः । ते तु मे मया मताः 'साधुस्तव' इत्याद्यनुसारेण 'ते मे भक्ततमा मताः' इत्यन्तिमस्यैव स्वमतस्यातिशयो दर्शितः । अत एव योगेश्वरैरपि चतुर्थे प्रार्थितम्—'प्रेयान्न तेऽन्यः' इत्यादिना । ज्ञात्वाऽज्ञात्वेत्यत्र हेयोपादेयत्वं निषिद्धम् । भक्ततमा इत्यत्र पूर्ववाक्यस्थसत्पदनिर्देशमतिक्रम्य विशेषतो भक्तपदनिर्देशाद्भक्तेः स्वरूपाधिक्यमत्रैव विवक्षितम् । मे मता मम तु विशिष्टा संमतिरत्रैवेति सूचितम्, ईदृशानुक्तचरत्वात् । अत एव प्रकरणप्राप्तमेकवचननिर्देशमप्यतिक्रम्य गौरवेणैव मता इति बहुवचनं निर्दिष्टम् । ततः किमुत तद्भावसिद्धप्रेमाण इति भावः ॥ ३३ ॥ अत्र कर्तव्यपदमध्याहार्यं विधिप्रकरणत्वात् । आदिना शालग्रामादिग्रहः ॥ * ॥ मल्लिंगमद्भक्तजनेति षष्ठीलुक् छांदसः, उत्तरार्धेप्यन्वयात् । प्रह्वत्वं नमस्कारः ॥ ३४ ॥ दास्येन सहात्मनि मनसि वेदनं भगवज्ज्ञानम् ॥*॥ दास्येनात्मनिवेदनमिति वैधभक्तौ दास्यस्य प्राधान्यात् । उपलक्षणं चैतद्भावांतरेणाप्यात्मनिवेदनस्य 'आत्मार्पितोत्र भवतोऽत्र विभो विधेहि' इत्याद्युक्तेः ॥३५॥ आदिना रामनवम्यादिग्रहः । "द्वादश्येकादशी वाथ होली श्रीपंचमी तिथिः । सर्वावतारतिथयः पवित्रारोपणं तथा ॥ रथयात्रा बले राज्यं हिंदोलक्रीडनं तथा । रासलीलादिकं विष्णोः पर्वाण्यन्यान्यपि प्रभो ॥" इत्यादिसंहितोक्तेः । तांडवं नटनम् । गोष्ठी वैष्णवसमाजकरणम् । मद्गृहे मन्मंदिरादिस्थले उत्सवः कार्य इत्यर्थः ॥*॥ अनुमोदनमभिनयेन श्लाघनम् ॥३६॥ यात्रा रथयात्रादिरूपा, भगवद्गृहगमनरूपा वा । 'बलिः पुष्पोपहारादौ' इति कोशात् । वर्षासु भवानि वार्षिकाणि । यद्यपि वर्षापदेनात्र मासद्वयविशिष्टतन्नामकर्तुबोधो भवति तथाप्यत्र तत्परः शरदृतुरपि गृह्यते "चातुर्मास्यं भवेदुष्मश्चातुर्मास्यं हिमोदयः । चातुर्मास्यं भवेद्वर्षं कालचक्रस्य नेमयः ॥" इत्युक्तेः । आदिना द्वादश्यादिग्रहः । यद्वा—वार्षिकाण्यब्दभवानि सर्वाणि पर्वाण्युत्सवदिनानि ग्राह्याणीति । वैदिकी दीक्षा तु त्रिवर्णस्यैव, तांत्रिकी तु स्त्रीशूद्रयोरपीति । दीक्षाग्रहणाभावे तु—"ते नराः पशवो लोके किं तेषां जीवने फलम् । यैर्न लब्धा हरेर्दीक्षा नार्चितो वा जनार्दनः ॥ अदीक्षितस्य वामोरु सुकृतं स्यादनर्थकम् । पशुयोनिमवाप्नोति दीक्षाविरहितो नरः ॥ द्विजानामनुपेतानां स्वकर्माध्ययनादिषु । यथाधिकारो नास्तीह स्याच्चोपनयनादनु ॥ तथात्र दीक्षितानां तु मंत्रतंत्रार्चनादिषु । नाधिकारोस्त्यतः कुर्यादात्मानं शिवसंस्तुतम् ॥" "सहस्रवेदाध्ययनोपि विप्रो दीक्षाविहीनो नरकं प्रयाति" इत्या

ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः ॥ उद्यानोपवनाक्रीडपुरमंदिरकर्मणि ॥ ३८ ॥
संमार्जनोपलेपाभ्यां सेकमंडलवर्तनैः ॥ गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ ३९ ॥
अमानित्वमदंभित्वं कृतस्यापरिकीर्तनम् ॥ अपि दीपावलोकं मे नोपयुंज्यान्निवेदितम् ॥ ४० ॥

**उद्यानादिकरणे सामर्थ्ये सति स्वतः । असति चान्यैः संभूयोद्यमः। उद्यानं पुष्पप्रधानम् । उपवनं फलप्रधानं वनम्। आक्रीडः क्रीडास्थानम्॥ ३८॥ संमार्जनं रजसोपाकरणम्। उपलेपो गोमयोदकादिभिरालेपनम् । सेकस्तैरेव प्रोक्षणम् । मंडलवर्तनं सर्वतोभद्रादिकरणम् । मह्यं मम ॥ ३९ ॥ कृतस्य धर्मस्यापरिकीर्तनम् । स्वयमन्येन वा निवे**

दिवाक्यैर्दोषश्रवणात्सावश्यं कार्या सर्वाश्रमिणाम् । तदुक्तं तंत्रसारे–"दक्षिामूलो जपः सर्वो दीक्षामूलं परं तपः । दीक्षामाश्रित्य निवसेद्यत्र कुत्राश्रमे वसन् ॥ अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः । न भवन्ति श्रियस्तेषां शिलायामुप्तबीजवत् ॥ देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः । तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥ अदीक्षितो हि मरणे रौरवं नरकं व्रजेत् । यो यस्मिन्नाश्रमे तिष्ठन्दीक्षां प्राप्नोति मानवः ॥ स तस्मिन्नाश्रमे तिष्ठंस्तत्तद्धर्मान्न लंघयेत् ॥ नित्यनैमित्तिकाचारपालकस्य नरस्य हि । दीक्षावैकल्यविरहात्सद्यो मुक्तिस्तु जायते ॥ तत्रापि गुरुभक्तस्य गतिर्भवति नान्यथा । दृष्टार्थतया यस्य गुरुभक्तिस्तु कृत्रिमा ॥ कृतापि निष्फला तस्य प्रायश्चित्तं पदेपदे । दिव्यं भावं यतो दद्यात्क्षपयेद् दुरितानि च । अतो दीक्षेति सा प्रोक्ता सर्वागमविशारदैः ॥" इत्यादि बह्वस्ति दीक्षाप्रतिपादकमित्युपरम्यते । "कल्पे दृष्ट्वा तु मंत्रं वै यो गृह्णाति नराधमः । मन्वंतरसहस्रेषु निष्कृतिर्नैव विद्यते ॥ यदृच्छया श्रुतं वापि च्छन्नेनाथ च्छलेन वा । पत्रस्थितं वा गाथायां वर्जयेत्तदनर्थवत्॥ मंत्रमार्गानुसारेण साक्षात्कृत्येष्टदेवताम् । गुरुश्चोद्बोधयेच्छिष्यं मंत्रदीक्षेति सोच्यते ॥"। सा चानेकधोक्ता विश्वसारे–"महादीक्षा तथा दीक्षोपदेशस्तदनन्तरम् । युगेयुगे हि कर्तव्य उपदेशः कलौ युगे॥"। स च–"सूर्यचंद्रग्रहे तीर्थे सिद्धक्षेत्रे शिवालये । मंत्रमात्रप्रकथनमुपदेशः स उच्यते ॥"। तत्प्रकारश्च–"शंखं संपूज्य विधिवत्साक्षतेन तदंबुना । शिष्यं संप्रोक्ष्य मूलेन ह्यष्टवारं तु के करम् ॥ निधायाष्टौ जपेत्कर्णे ह्युपदेशे त्वयं विधिः । गुरोरभावे मंत्राणां पुस्तकं गुरुमाचरेत् ॥" । योगिनीतंत्रे तु–"स्वयं लब्धे तु कलशे गुरोः प्राणान्निवेशयेत् । वटपत्रे कुंकुमेन लिखित्वा ग्रहणं भवेत् ॥ ततः सिद्धिमवाप्नोति ह्यन्यथा निष्फलो भवेत् ।" । पाद्मे तु–"गुरोरभावे विप्रेंद्र मंत्रग्रहणमुच्यते । कृष्णपक्षे त्रयोदश्यां दक्षिणामूर्तिसन्निधौ ॥ तालपत्रे मनुं लिख्य स्थापयेद्वै तदग्रतः । संपूज्य दक्षिणामूर्तिमुपचारैस्तु षोडशैः ॥ पायसं विनिवेद्याथ प्रणमेद्दंडवत्ततः । तालपत्रं समालोक्य पठेदष्टोत्तरं शतम् ॥ एवं गृहीतो मंत्रस्तु गुरोरपि विशिष्यते । गुरोः संभाविता दोषाः प्रायेण तु कलौ युगे॥तस्मात्सर्वप्रयत्नेन न हि कार्यः कलौ गुरुः । सर्वथा यो भवेद्योग्यस्तं गुरुं यत्नतश्चरेत् ॥" इति च । यादृशो गुरुः कार्यस्तत्प्रतिपादितमधस्तात् । मदीयव्रतानामेकादश्यादीनां धारणम् । यद्वा–मदीयानां यद्व्रतं वृत्तं विविक्तसेवनादिरूपं तस्य धारणमिति ॥ स्वतः स्वयमेव उद्यमः करणादौ प्रयत्नः । पुरकर्म पूजानिर्वाहार्थं ग्रामं मौल्येन गृहीत्वा समर्पणम् । एतदुपलक्षणं क्षेत्रादीनामपि 'क्षेत्रापणपुरग्राम–'इत्यादिवक्ष्यमाणत्वात ॥ वर्त्तनं प्रदक्षिणवर्तनम्–"विशेषजीवनं प्रोक्तं वर्तनं गमनं तथा " इति हलायुधः ॥ अमायया परप्रेम्णा ॥ * ॥ सर्वेषु वार्षिकेषु वत्सरसंबंधिषु पर्वसु फाल्गुनपौर्णिमादिषु या दोलादियात्रास्तासु बलिविधानं विविधवस्त्रालंकार मिष्टान्नस्रक्चंदनपुष्पादि पूजोपहरणम् । आदिना पवित्रारोपदमनकादिग्रहः ॥ उद्यानादिकरणे सामर्थ्ये सति स्वत एव असति अन्यैर्मिलित्वाप्युद्यमः । आक्रीडं क्रीडास्थानम् । पुरं चक्रवेष्टनम् ॥ * ॥ दासवदिति–यथा लौकिको दासः स इत्येत्यन्यदपि तथैव कर्तव्यम् । अमायया चलचित्ततावित्तशाठ्यादिकं विहायेति **संदर्भः** ॥ * ॥ संमार्जनं तृणधूल्याद्यपाकरणं प्रथमम्, गोमयमृज्जलैरुपलेपो द्वितीयः । स्थले शुष्के सति सेकः पुष्पोदकैस्तृतीयः । अन्यत्तैः ॥ ३७ ॥ ३८ ॥ ३९ ॥ न स्त्रीकुर्यात्स्वप्रयोजनायेति शेषः । एतच्च निवेदितास्वीकरणं साधारणस्थावरं बहुभिस्संभूय स्थापितदैवतं तद्विषयं तन्निवेदितं न

यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यं तदानंत्याय कल्पते ॥ ४१ ॥ सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ॥ भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥ ४२ ॥ सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ॥ आतिथ्येन तु विप्राग्र्ये गोष्वंग यवसादिना ॥ ४३ ॥

दितं न स्वीकुर्यात् । एतच्च साधारणं स्थावरविषयं रागप्राप्तविषयं वा । भक्त्या तु ग्राह्यमेव । " षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम् ॥ विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुंजतां कलौ ॥ हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ॥ पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥" इत्यादिवचनेभ्यः । यद्वा अन्यस्मै निवेदितं मे नोपयुंज्यात् । मह्यं न निवेदयेदित्यर्थः । " विष्णोर्निवेदितान्नेन यष्टव्यं देवतांतरम् ॥ पितृभ्यश्चैव तद्देयं तदानंत्याय कल्पते ॥ पितृशेषं तु यो दद्याद्धरये परमात्मने ॥ रेतोधाः पितरस्तस्य भवंति क्लेशभागिनः ॥" इत्यादिवचनेभ्यः ॥ ४० ॥ ४१ ॥ इदानीमेकादशपूजाधिष्ठानान्याह । सूर्य इति । हे भद्र ॥ ४२ ॥ अधिष्ठानभेदेन पूजासाध

गृह्णीयात् । यद्वा—स्वादलोभेन न गृह्णीयात् भाक्तिमांस्तु स्वीकुर्यादेवान्यथा फलश्रवणं मुधा स्यादित्याह—भक्त्येति । "सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्" इति मेदिनी । 'पुलाकस्तुच्छधान्ये स्यात्संक्षेपे' इति च । 'परदत्ते निवेदितम्' इति कोशांतराभिप्रायेणाह—यद्वेति । अन्यस्मै देवाय निवेदितं समर्पितम् । इत्यर्थ इति—सर्वेश्वराय मेन्योच्छिष्टं न दद्यादिति भावः । तद्विष्णुनिवेदितदानम् । अन्यशेषस्य मह्यं दानेन दोषभाग्भवतीत्याह—पितृशेषमिति । पितृपदमुपलक्षणं देवानामपि । रेतोधा नरबीजभक्षकाः 'रेतः शुक्रे पारदे च' इति मेदिनी । श्रुतिरप्येतदर्थोपबृंहिकास्ति—"एक एव नारायण आसीन्न ब्रह्मा नेमे द्यावापृथिव्यौ सर्वे देवाः सर्वे पितरः सर्वे मनुष्या विष्णुनाशितमश्नंति विष्णुनाघ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुः" इति, विष्णूपहृतं विष्णवे निवेदितमिति श्रुतिपदार्थः । यद्वा—सकृन्निवेदितं न पुनर्निवेदयेत् 'स्वोच्छिष्टमपि नैवाद्यात्' इति स्मृतेः । अनिवेदितं तु कदाचिदपि न स्वीकुर्याद्दोषश्रुतेः "अनर्पयित्वा गोविंदे यो भुंक्ते धर्मवर्जितः । शुनो विष्ठासमं चान्नं नीरं तु सुरया समम् ॥" इति पाद्मे ॥ * ॥ अदंभित्वं लोकेषु मिथ्या स्वभक्तिख्यापनराहित्यं नोपयुज्यात्स्वार्थे न व्यवहरेत् । साधारणं कस्याप्यनिजं पथिकादिपूज्यमाने महारण्यदेवालयादावधिकार्यभावात् । स्थावरं कालांतरावस्थातृ भगवदुपयोगयोग्यत्वात् । यथा—दीपावलोकः किं वा क्षीरादिप्रसादो मह्यं देयोऽन्यस्त्वन्येभ्य इति लोभेन प्राप्तो यस्तद्विषयम् । असाधारणमस्थावरं चेत्तदा त्वधिकारीच्छायां सत्यां स्वाधिकृतत्वे सति वा । भक्त्या तु ग्राह्यमेव ॥ * ॥ **विश्वनाथस्तु**—मह्यं निवेदितस्यान्नादेः स्वव्यवहारमात्र उपयोगो न कर्तव्यः किंतु परमार्थसिद्ध्यर्थं वैष्णवेभ्यो दत्त्वा स्वयमप्युपभुंजीतैवेत्यर्थः । लोके शास्त्रे च यदिष्टतमं तन्मह्यं निवेदयेत तेन दर्भमंजर्यादीनि शास्त्रविरहितान्यपि लोके इष्टतमत्वाभावात् तथा मद्यादीनि संकर्षणप्रियाण्यपि शास्त्रे इष्टतमत्वाभावान्न निवेदयेदिति भावः । तत्रापि यच्चात्मनस्स्वस्यातिप्रियं तत्तु विशेषतो लोकशास्त्राविरुद्धं निवेदनीयमित्यर्थः ॥ ४० ॥ इष्टतमं स्पृहणीयमतीवसुंदरं वस्तु आनंत्याया विनश्वरफलाय मोक्षायेत्यर्थः ॥ * ॥ त्वां कुत्र पूजयेदित्यपेक्षायामेकादशपूजाधिष्ठानान्याह—सूर्य इति ॥ ४१ ॥ अधिकारिणां योग्यताया बहुविधत्वेन फलविशेषायार्चनं कुत्र कार्यमिति प्रश्नोपशमनार्थं स्वयमाह—इदानीमिति । वैष्णवः 'त्रिभुवनविभवहेतवे' इत्यादिनोक्तलक्षणः । यद्यपि 'ब्राह्मणा वैष्णवा मुख्याः' इत्यादिपुराणवचनमस्ति तथाप्यत्र पृथग्ग्रहणात् "गृहीतविष्णुदीक्षाकः सदा विष्णुगतांतरः । सर्वत्र विष्णुसंदर्शी वैष्णवोभिमतो बुधैः ॥" इत्युक्तलक्षणो भगवद्भक्तो ग्राह्यः । स च द्विविधः—"बाह्य आभ्यंतरश्चैव वैष्णवो द्विविधो मतः । बाह्यस्तु शंखचक्राभ्यां वीतरागस्तु चांतरः ॥" इति वैष्णवोक्तेः चक्रादिधारणं ब्राह्मणेतरपरमित्यन्यत् । यद्वा—'श्रीपादो वैष्णवो भिक्षुः' इति शारदीनाममालोक्तेर्वैष्णवो गृहीतदंडो विप्रो ब्राह्मणस्त्वितराश्रमस्थो विप्र एवोभयत्र विधीयते 'संन्यासी मे चला मूर्तिः' इति जैमिनीयोक्तेः । आत्मा स्वात्मैव ॥ * ॥ किञ्च—सूर्य इति युग्मकम् । सूर्यांतर्यामितोषणार्थं त्रयी पठितव्या ॥ ४२ ॥ सूक्तैः "उद्यन्नद्य विवस्वान्" इत्यादिमंत्रसमूहैः । उपस्थानं स्तवनम् । आदिनार्घ्यादिग्रहः । विप्राग्र्ये श्रुतिस्मृत्युदिताचारवति । आतिथ्यं

वैष्णवे बंधुसत्कृत्या हृदि खे ध्याननिष्ठया ॥ वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः॥४४॥स्थंडिले मंत्रहृदयैर्भोगैरात्मानमात्मनि ॥ क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥ धिष्ण्येष्वेष्विति मद्रूपं शंखचक्रगदांबुजैः ॥ युक्तं चतुर्भुजं शांतं ध्यायन्नर्चेत्समाहितः ॥ ४६ ॥

नान्याह सूर्य इति त्रिभिः । त्रय्या विद्यया सूक्तैरुपस्थानादिना । अंग हे उद्धव यवसादिना तृणादिना ॥ ४३ ॥ बंधुसत्कृत्या बंधुवत्संमानेन । हृदि खे हृदयाकाशे । मुख्यधिया प्राणदृष्ट्या । तोये तोयादिभिर्द्रव्यैस्तर्पणादिना ॥ ४४ ॥ स्थंडिले भुवि । मंत्रहृदयैः रहस्यमंत्रन्यासैः ॥ ४५ ॥ सर्वाधिष्ठानेषु ध्येयमाह । धिष्ण्येष्विति । इत्यनेन

पादशौचार्चनान्नप्रदानादि "आतिथ्यं देयमतिथेस्तत्स्वरूपं शृणु द्विज । स्वागतासनपादार्चासंवाहान्नप्रदानता ॥ गृहस्थस्य परो ह्यस्मान्नास्ति धर्मो हितावहः ।" इत्यादिपुराणात् । यवसं तृणम् । आदिना जलदानपृष्ठसंघर्षणादिग्रहः ॥ * ॥ तत्र सूक्तैर्वैदिकवाक्यैः "चित्रं देवानाम्" इत्यारभ्य "सूर्य आत्मा जगतस्तस्थुषश्च" "ॐ तच्चक्षुर्देवहितम्" इत्यादिभिः । आदिना गायत्र्या पुष्पांजलिनिक्षेपतर्पणादिग्रहः ॥ ४३ ॥ ध्याननिष्ठया अजपाख्यप्रणवभावनया । तत्प्रकारश्च योगशास्त्रे । तथाहि–"गुदध्वजांतरे कंदमुत्सेधाद्द्व्यंगुलं विदुः । तस्माद्द्विगुणविस्तारं वृत्तरूपेण शोभितम् ॥ नाड्यस्तत्र समुद्भूता मुख्यास्तिस्रः समर्थिताः । इडा वामे स्थिता नाडी पिंगला दक्षिणे मता ॥ तयोर्मध्यगता नाडी सुषुम्ना वंशमास्थिता ॥ पादांगुष्ठद्वयं याता शिफाभ्यां शिरसा पुनः । ब्रह्मस्थानं समापन्ना सूर्यसोमाग्निरूपिणी ॥ तस्या मध्यगता नाडी चित्राख्या योगिवल्लभा । ब्रह्मरंध्रं विदुस्तस्यां पद्मसूत्रनिभं परम् ॥ आधारांश्च विदुस्तत्र मतभेदादनेकधा । दिव्यमार्गमिदं प्राहुरमृतानंदकारणम् ॥ आधारकंदमध्यस्थं त्रिकोणमतिसुंदरम् । तत्र विद्युल्लताकारा कुंडली परदेवता ॥ सुप्ताहिभोगसदृशाकृतिर्जीवंसमाश्रिता ॥ हंसः प्राणाश्रयो नित्यं प्राणो नाडीपथाश्रयः । आधारादुद्गतो वायुर्यथावत्सर्वदेहिनाम् ॥ देहं व्याप्य स नाडीभिः प्रयाणं कुरुते बहिः । अंगुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने ॥ नासारंध्रे मध्यमाभ्यामन्याभिर्वदनं दृढम् । बद्ध्वात्मप्राणमनसामेकत्वमनुभावयन् ॥ धारयेन्मारुतं सम्यग्योगोयं योगिवल्लभः । नादः संजायते तस्य क्रमादभ्यसतः शनैः ॥ मत्तभृंगांगनागीतसदृशः प्रथमो ध्वनिः । वंशिकास्यानिलापूर्णवंशध्वनिसमोपरः ॥ घंटारवसमः पश्चाद्घनिर्मेघसमोपरः । एवमभ्यसतां पुंसां संसारध्वान्तनाशनम् ॥ ज्ञानमुत्पद्यते पूर्वं हंसलक्षणमव्ययम् । पुंप्रकृत्यात्मकौ प्रोक्तौ बिंदुसर्गौ मनीषिभिः ॥ ताभ्यां क्रमात्समुद्भूतौ बिंदुसर्गावसानकौ । हंसौ तौ पुंप्रकृत्याख्यौ हं पुमान्प्रकृतिस्तु सः ॥ अजपा कथिता ताभ्यां जीवोयमुपतिष्ठते । पुरुषं स्वाश्रयं मत्वा प्रकृतिर्नित्यमाश्रिता ॥ यदा तद्भावमाप्नोति तदा सोहमिदं भवेत् । सकारार्णं हकारार्णं लोपयित्वा ततः परम् ॥ संधिं कुर्यात्पूर्वरूपं तदाऽसौ प्रणवो भवेत् । आत्मा भेदस्थितं योगी भावयेत्प्रणवं सदा ॥" इत्यलम् । मुख्यधिया 'सर्वदेवोत्तमो वायुः' इति ज्ञानेनेति वायुज्ञानस्यापि मृत्युतरणापरपर्यायमोक्षहेतुत्वं श्रुत्योच्यते–"तस्माद्वायुरेव व्यष्टिर्वायुस्समष्टिरयं पुनर्मृत्युं जयति य एवं वेद" इत्येवंरूपयेति । आदिना पुष्पगंधादिग्रहः । पुनरादिना नत्यादिग्रहः ॥ * ॥ प्राणोयं मुख्य इति बुद्ध्या मुख्यत्वं तु तस्य "अनुप्राणंति यं प्राणाः प्राणन्तं सर्वजन्तुषु" इत्यादेः ॥ ४४ ॥ चंदनादिना गोमयादिलिप्तभूमौ गोप्यमंत्राँल्लिखित्वा तदुपरि भगवंतमर्चयेदित्यर्थः । आत्मनि मनसि स्वशरीरे वा । भोगैः स्रग्गंधादिधनैस्तत्तद्भोगे मम पूजनध्यानेन 'भोगो राज्ये धने सौख्ये' इति यादवः । क्षेत्रज्ञं जीवांतर्यामिणम् । समत्वेन तुल्यभावनया । स्वसदृशभोगैः सर्वानर्चयेदित्यर्थः ॥ * ॥ आत्मनि देहे । आत्मानं जीवं भोगैरुचितान्नवस्त्रालंकारादिभिरयं मम देहोपि मत्प्रभोरधिष्ठानमिति बुद्ध्यैव न तु लोभेन पुष्ट्याद्यर्थम् । समत्वेन सुखदुःखयोः समधिया यजेत ॥ ४५ ॥ धिष्ण्येष्वधिष्ठानेषु ॥ * ॥ धिष्ण्येष्विति । अत्र सर्वत्र चतुर्भुजरूपध्याने सत्यपि पूजाप्रकारस्य

---

१ पृष्ठवंशम् । २ मूलाभ्याम् ।

**इष्टापूर्तेन मामेवं यो यजेत समाहितः ॥ लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ ४७ ॥**
**प्रायेण भक्तियोगेन सत्संगेन विनोद्धव ॥ नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥ ४८ ॥**

**मंत्रप्रकारेण एषु धिष्ण्येषु ॥ ४६ ॥ उक्ताया भक्तेः फलमाह । इष्टापूर्तेनेति । सद्भक्तिं दृढां भक्तिम् । अस्या भक्तेरंतरंगसाधनमाह । इत्थं मत्स्मृतिः साधुसेवया भवति । यद्वा स्मृतिर्ज्ञानम् । ततश्च दृढभक्तिमतः पुंसः साधुसेवया मज्ज्ञानं भवतीत्यर्थः ॥ ४७ ॥ ज्ञानभक्तिमार्गावुक्तौ तत्र ज्ञानमार्गादपि भक्तिमार्गः श्रेष्ठ इत्याह । प्रायेणेति ।**
द्वैविध्यम् । गवादिषु तु मंदिरलेपादिना यथा तदधिष्ठातृप्रतिमायाः परिचर्या स्यात्तथैव यवसादिना परिचर्या । हृदयाकाशे जलादौ तु साक्षात्तदधिष्ठातुरेवोपासनेति यवसादेरभक्ष्यत्वेन चतुर्भुजसंप्रदानकत्वासंभवात् । अत्राग्न्यादौ तदंतर्यामिरूपस्यैव चिंतनं कार्यं न जातु निजप्रेमसेवाश्रयस्य । स तु सर्वथा परमसुकुमारत्वादिबुद्धिजनितया प्रीत्यैव सेवनीयः । तथोक्तं भगवतैव–'वस्त्रोपवीतस्मरण–' इत्यादि । तेषां तथाभक्तिरीत्या परमेश्वरस्यापि तथाबुद्धिः श्रूयते । यथा नारदीये–"भक्तिग्राह्यो हृषीकेशो न धनैर्धरणीसुराः । भक्त्या संपूजितो विष्णुः प्रददाति समीहितम् ॥ जलेनापि जगन्नाथः पूजितः क्लेशहा हरिः । परितोषं व्रजत्याशु तृषार्तः सुजलैर्यथा ॥" इति । वैपरीत्ये दोषश्च यथा–ग्रीष्मे जलस्थपूजा प्रशस्ता वर्षासु निंदिता । तदुक्तं गारुडे–"शुचिशुक्रगते काले येर्चयिष्यन्ति केशवम् । जलस्थविविधैः पुष्पैर्मुच्यंते यमयातनात् ॥ घनागमे प्रकुर्वन्ति जलस्थं वै जनार्दनम् । ये जना नृपतिश्रेष्ठ तेषां वै नरकं ध्रुवम् ॥" इति । एवमन्यत्रापि तत्तद्देशकालसुखदानि शतशो विहितानि । तद्विपरीतानि विष्णुयामले–'विष्णोः सर्वर्तुचर्या च' इति । अत उक्तम्–'यदिष्टतमम्' इति । तत्रतत्रेष्टमंत्रध्यानस्थानञ्च सर्वर्तुसुखमयमनोहररूपरसगंधस्पर्शशब्दमयत्वेनैव ध्यातुं विहितमस्तीति ॥ ४६ ॥ अस्या दृढभक्तेः । इत्थं मत्स्मृतिर्दृढा मद्भक्तिः । दृढाभक्तिस्तु भगवत्प्रीत्यर्थकारितेष्टापूर्तादिसाधनैरेव । पुनस्तदर्थमंतरंगताविधानं सत्सेवायाः पुनरुक्तमिव प्रतीयत इति चेदाह–यद्वेति । फलितमाह–ततश्चेति । तेनेत्यर्थः । इत्यर्थ इति–"रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा । न च्छंदसा नैव जलाग्निसूर्यैर्विना महत्पादरजोभिषेकम् ॥" इति जडविप्रोक्तेः, "नैषा मतिस्तावदुरुक्रमांघ्रिं स्पृशत्यनर्थापगमो यदर्थः । महीयसां पादरजोभिषेकं निष्किंचनानां न वृणीत यावत् ॥" इति प्रह्लादोक्तेश्च । सत्सेवां विना ज्ञानोत्पत्तिर्न भवतीति भावः ॥ * ॥ अत्रेष्टशब्देन सप्तमस्कंधोक्तोक्तरीत्याऽग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुयागवैश्वदेवबलिहरणमुच्यते । पूर्तशब्देन सुरालयारामकूपवापीतडागप्रपान्नसत्राण्युच्यन्ते । मत्स्मृतिस्तु साधुसेवया सतां संगेन । मद्भक्तिमंतरंगभक्तिनिष्ठाम्प्राप्नोतीत्यर्थः । तत्राग्निहोत्रादीनां भक्तौ प्रवेशः, अग्न्यंतर्यामिरूपभगवदधिष्ठानत्वेनाग्न्यादिसंतर्पणात् । कूपारामादीनां च तत्परिचर्यार्थं क्रियमाणत्वात्तत्र प्रवेशः ॥ * ॥ **विश्वनाथस्तु**–मत्कर्तृका स्मृतिर्मत्स्मृतिः । साधुसेवयेति–यस्तु साधूनाधिक्येन सेवते तं त्वहं स्मरामि सदेत्यर्थमाह ॥ ४७ ॥ भक्तेराधिक्यं दर्शयति–ज्ञानेत्यादिना । प्रायेणेत्यवधारणे 'प्रायोऽधिक्येऽवधारणे' इति धरणिः । इत्यर्थ इति–सत्संग एव मत्प्राप्तौ मुख्यं साधनमिति भावः ॥ * ॥ वस्तुतस्तु संसारतरणायुपेयवस्तुनो भक्तिरेवोपाय इत्याह–प्रायेणेति वितर्के । यद्वा–सत्संगेन हेतुनैव यः प्रायेण भक्तियोगस्तेन विना नोपायो विद्यते । प्रधानभूता केवला चेति द्विविधा भक्तिः साधुसंगेनैव भवेदिति व्याख्यातमेव । यच्च मोक्षसाधकं भक्तिमिश्रज्ञानं तत्र गुणभूता या भक्तिः सा तु साधुसंगं विनापि भवेदित्यत उक्तं–प्रायेणेति । तस्या भक्तेस्तज्ज्ञानमेव कारणं यथा कर्षकस्य करदानादिना यत्पृथ्वीश्वरोपासनं तस्य कारणं कृषिरेव, अन्यथा तस्या वैफल्यादिति प्रथमस्कंध एव व्याख्यातम् । एवं च 'यत्कर्मभिर्यत्तपसा' इत्यादिभगवदुक्तेर्ज्ञानादिकं विनापि भक्तिः सर्वफलदात्री भक्त्या तु विना ज्ञानादिकं न मोक्षादिसाधकमिति तत्रतत्रापि भक्तिरेव फलदायिनी व्याख्येयातोऽन्य उपायोऽजागलस्तनन्यायेनैवेति केचिदाहुस्तत्रेयं भगवदुक्तिरपि प्रमाणम् । "तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीह । पश्यामि नान्यच्छरणं तवांघ्रिद्वंद्वातपत्रादमृताभिवर्षात् ॥" इत्युद्धवोक्तिरपि । "संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य । लीलाकथारसनिषेवणमंतरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥" इति शुकोक्तिरपि । "किं वा योगेन सांख्येन न्यासस्वा

अथैतत्परमं गुह्यं शृण्वतो यदुनंदन ॥ सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ॥ ४९ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कन्धे भगवदुद्धवसंवाद एकादशोऽध्यायः ॥ ११ ॥ श्रीभगवानुवाच ॥ न रोधयति मां योगो न सांख्यं धर्म एव च ॥ न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥ १ ॥

सत्संगेन यो भक्तियोगस्तेन विनोपायः संसारतरणे न विद्यते । सत्संगेनेत्यत्र हेतुमाह । हि यस्मात्सतामहं प्रायणं प्रकृष्टमयनमाश्रयः । अतः सत्संगो मय्यंतरंग इत्यर्थः ॥ ॥ ४८ ॥ इदानीं सांख्ययोगादीनि साधनांतरसव्यपेक्षाणि सव्यभिचाराणि च सत्संगस्तु स्वतंत्र एव समर्थः फलाव्यभिचारी चेति वर्णयितुमाह । अथेति । एतद्वक्ष्यमाणं परमं गुह्यमतः शृण्वित्यर्थः ॥ ४९ ॥ इति श्रीमद्भागवत एकादशस्कंधे भावार्थदीपिकायां टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे साधुसंगस्य महिमा वर्णितः पुरा ॥ कर्मानुष्ठानतत्त्यागव्यवस्था च ततः परम् ॥ १ ॥ न रोधयति न वशीकरोति । योग आसनप्राणायामादिः । सांख्यं तत्त्वानां विवेकः । धर्मः सामान्यतोऽहिंसादिः । स्वाध्यायो वेदजपः । तपः कृच्छ्रादि । त्यागः संन्यासः । इष्टापूर्तमिष्टं च पूर्तं च । तत्रेष्टमग्निहोत्रादि पूर्तं कूपारामादिनिर्माणम् । दक्षिणाशब्देन

ध्याययोरपि । श्रेयोभिरन्यैश्च तथा न यत्रात्मप्रदो हरिः ॥" इति नारदोक्तिरपि ॥ ४८ ॥ उत्तराध्याये वक्ष्यमाणार्थप्राशस्त्यमाह–इदानीमित्यादिना । अथेति हेतौ, यतस्त्वं भृत्यो ज्ञानेन भर्तुं योग्यः, सुष्ठुजितं हृन्मनो यस्य स सुहृत्, रहस्यार्हत्वात्सखासि अतो हेतोः । इत्यर्थ इति--योग्यसुहृदेऽतीवगोप्यमपि वक्ष्यामीति भावः ॥ * ॥ " ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत" इति स्मृतेस्तुभ्यमनन्यप्रकाश्यमपि वस्तु वच्मि । सांख्ययोगादीनीति–आदिना धर्मादिग्रहः । तत्र सांख्यं वैराग्यादिसापेक्षम् । योगः समाधिर्यमाद्यपेक्षः । धर्मादीन्यपि धनक्लेशाद्यपेक्षाणि सव्यभिचाराणि भक्त्यभावे फलव्यभिचारवंति । स्वतंत्रो वैराग्याद्यनपेक्ष एव साध्यं साधयितुं समर्थः, फले भगवत्प्रसादनलक्षणेऽव्यभिचारी च । अथात एव परमं गुह्यम् । अतो गुह्यत्वात् । कृष्णसुहृत् व्रजसंदेशप्रापणलक्षणहितकर्ता । सखा यंत्रणाशून्यमित्रवृत्तिमान् ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्ध एकादशोऽध्यायः ॥ ११ ॥ ततः परं सत्संगमहत्त्वत्रर्गनोत्तरम् । तत्त्यागः कर्मत्यागः ( १ ) । ० ॥ * ॥ योगादयस्तथा वेत्युक्त्या किंचिद्वशीकुर्वंतीत्यायातम् । तथा च भक्तिमिश्रा एव ते ज्ञेया न साधारणा अत एव व्रतान्येकादश्यादीनीति व्याख्यातम् । न चैतावता नित्यव्रतानामकर्तव्यत्वप्रसंग इति वाच्यम्, एकस्य फलाधिक्यप्रशंसयाऽन्यस्य निराकरणायोगात् । कर्माधिकारिणः विप्रमुखहुतप्रशंसयाग्निहोत्रापरित्यागवत्, भक्त्यधिकारिणश्च भक्तपूजाभ्यधिकत्वश्रवणाद्धर्यर्चनापरित्यागवच्च तत्त्यागायोगाच्च । अन्यथा "वैष्णवो यदि भुंजीत एकादश्यां प्रमादतः । विष्ण्वर्चनं वृथा तस्य नरकं घोरमाप्नुयात् ॥" इति

व्रतानि यज्ञश्छंदांसि तीर्थानि नियमा यमाः ॥ यथावरुंधे सत्संगः सर्वसंगापहो हि माम् ॥ २ ॥ सत्संगेन हि दैतेया यातुधाना मृगाः खगाः ॥
गंधर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोंऽत्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥
॥ ४ ॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः॥
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे ॥ ६ ॥ तेऽनाधीतश्रुतिगणा नोपासितमहत्तमाः ॥ अव्रतातप्ततपसः सत्संगान्मामुपागताः॥ ७ ॥

सामान्यतो दानं लक्ष्यते ॥ १ ॥ व्रतानि एकादश्युपवासादीनि । यज्ञो देवपूजा छंदांसि रहस्यमंत्राः । अवरुंधे वशीकरोति॥ २॥ यातुधाना राक्षसाः॥ ३॥ ४॥ त्वाष्ट्रो वृत्रः ।
कयाधूनाम्नी दानवी तस्याः पुत्रः कायाधवः प्रह्लादः ॥ ५ ॥ ऋक्षो जांबवान् । गृध्रो जटायुः । वणिक्पथस्तुलाधारः । व्याधो धर्मव्याधः । यज्ञपत्न्यो दीक्षितभार्याः
॥ ६ ॥ तेषां सत्संगव्यतिरिक्तसाधनांतराभावमाह । त इति । न अधीताः श्रुतिगणा यैः तदर्थं च नोपासिता महत्तमा यैस्ते तथा । किंच अव्रतातप्ततपसः न व्रतानि

गौतमीयादिवचनव्याकोपः स्यात् ॥ १ ॥ सर्वसंगो भगवदितरसंगः । "अत्यन्तं विषयासंगः सर्वसंग इति स्मृतः" इति निरुक्तिः । तमपहंति तज्जं पापमपाकरोतीति सर्वसंगापहः । 'संतः संगस्य भेषजम्' इत्यभियुक्तोक्तेः ॥ * ॥ योगादयो न मत्प्राप्त्युपाया इत्यतो नोपायो विद्यत इति पूर्वोक्तिरेव दृढीकृता । सत्संगो मां वशीकरोतीत्यनंतप्रयोगेण भक्त्युत्पत्तेः पूर्वमपि स एव मां वशीकरोति, किं पुनर्भक्तिं जनयित्वेत्यर्थाल्लब्धम् । 'भक्त्या हमेकया ग्राह्यः' इत्यग्रिमवाक्येनैक्यार्थात् । सर्वसंगापहः सर्वत्रासक्तिनिरासकः । इति वशीकारे हेतुः ॥ २ ॥ यातूनि रक्षांसि दधंति पुष्णंतीति यातुधानाः 'स्वजातिपोषा रक्षांसि' इति वचनात् ॥ * ॥ ० ॥ ३ ॥ "रंगकारो नटो व्राटः सखश्च धत्र एव च । कैवर्तमेदभिल्लाश्च सप्तैते ह्यंत्यजास्स्मृताः ॥" इति गारुडे ॥ * ॥ ० ॥ ४ ॥ शृंगग्राहिकतया दर्शयितुमाह—त्वाष्ट्र इत्यादि । आदिना घंटाकर्णादिग्रहः ॥ * ॥ ० ॥ ५ ॥ अपरे बहवः ॥ * ॥ सुग्रीवस्य हनुमत्संगः, हनुमदृक्षयोर्भगवत्संगः, गजेंद्रस्य पूर्वजन्मनि सत्संगः उत्तरजन्मांते भगवत्संगः, गृध्रस्य गरुडदशरथादिसत्संगः, वणिक्पथस्य महाभारते जाजलिमुनिगर्वप्रसंगे प्रोक्तमहिम्नः श्रीनारदादिसंगोऽन्वेषणीयः । धर्मव्याधस्य हि आदिवाराह इयं कथा—वसुनामा कश्चिद्वैष्णवो राजा तेन च मृगभ्रांत्या कश्चिद्ब्राह्मणो हतः, ब्रह्मराक्षसतां प्राप्तस्तस्य प्रापंचिकविष्णुलोकगमनसमये तच्छरीरं प्रविष्टो बभूव । तद्भोगांते राजतां प्राप्तस्य ब्रह्मपराख्यस्तवपाठतेजसा तद्देहान्निर्गतस्तत्कृतधर्मव्याधसंज्ञः सन् हिंसाविमुखः नीलाद्रिनाथं दृष्ट्वा प्राप्ततदालिंगनस्तत्सायुज्यमापेति । कुब्जाया भगवत्संगः पूर्वजन्मनि नारदसंगश्चेति माथुरहरिवंशप्रसिद्धेः । गोपीनां साधनसिद्धानां नित्यसिद्धगोपीसंगः । यज्ञपत्नीनां व्रजस्थश्रीकृष्णदूतीभिर्मालिकतांबूलिकादिस्त्रीभिः क्रयविक्रयाद्यर्थं मथुराप्रस्थानसमये संगः । अपरे दैतेयादयः ॥ ६ ॥ ते सुग्रीवादयः । तदर्थं श्रुतिगणप्राप्त्यर्थम् ।महत्तमा वेदविदः । वेदाध्ययनाभावेऽपि तपोव्रतादिरूपसाधनांतरमप्यस्ति त्वत्प्राप्तिसाधनमिति चेदाह—किंचेति । व्रतानि यमनियमादीनि, तपांसि पञ्चाग्नितापादीनि । सत्संगस्वरूपमाह—सत्संगो नामेति । ममैव संग इत्यभिप्रेत्योक्तं—मत्संगादिति । यस्य संगिसंगात्पुरुषाणां सत्तमत्वं तस्य भगवतस्तत्त्वाभावे संशय एव नो पनीपद्यत इत्याह—यद्वेति । भगवता विवक्ष्यते । स्वस्यापि स्वरूपस्यैव सत्त्वात्साधुत्वात् । अत्र पक्षे सत्त्वाद्भगवत्संगस्यैव मोक्षसाधनत्वमायाति न तु तदीयसंगस्येत्यरुच्याह—यद्वेति । मदीयानां संगो मत्संगः । आर्षत्वमाश्रित्य तद्धितलोपः । इत्यर्थ इति—'मद्रूपा एव मद्भक्ताः' इत्युक्तेर्भगवद्भागवतानामभेद इति भावः ॥ * ॥ त इति—पूर्ववदध्ययनादिकं भगवत्प्रीणनमेव ग्राह्यम्, अत्रैकेषां वृत्रादीनां प्राग्जन्मादौ साधनान्तरं यत्तदपि सत्संगानुषंगसिद्धमित्यभिप्रेत्याह—सत्संगस्यैव तत्तत्फलमुक्तं धर्मव्याधादीनां केवलस्यैव तस्येति ज्ञेयम् । मत्संगशब्देनात्र

केवलेन हि भावेन गोप्यो गावो नगा मृगाः ॥ येऽन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा ॥ ८ ॥ यं न योगेन सांख्येन दानव्रततपोऽध्वरैः ॥ व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ९ ॥ रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ॥ विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥ १० ॥

येषां न तप्तानि तपांसि यैस्ते च ते च । तथा । सत्संगादिति सद्भिः संगो नाम मयैव संग इत्यभिप्रेत्योक्तम् । यद्वा स्वसंगस्यापि सत्संगत्वं विवक्ष्यते । स्वस्यापि सत्त्वात् । यद्वा मदीयसंगादित्यर्थः ॥ ७ ॥ तत्र वृत्रादीनां भवतु नाम कथंचित्साधनांतरं गोपीप्रभृतीनां तु नान्यदस्तीत्याह । केवलेनेति । सत्संगलब्धेन केवलेनैव भावेन प्रीत्या । नगा यमलार्जुनादयः । नागाः कालियादयः । यद्वा तदानींतनानां सर्वतरुगुल्मादीनामपि भगवति भावोऽस्तीति गम्यते । तदुक्तं भगवतैव । "अहो अमी देववरामरार्चितं पादांबुजं ते सुमनःफलार्हणम् ॥ नमंत्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥" इत्यादि । नागाः कालियादयः सिद्धाः कृतार्थाः संतः ईयुः प्रापुः ॥ ८ ॥ स्वप्राप्तेर्दुर्लभतामाह । यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं मामीयुरिति पूर्वेणान्वयः । अत्र च प्रथमं या गोप्यः पश्चादयो वा श्रीकृष्णेन सह संगतास्ते संतस्तत्संगोऽन्येषां सत्संगस्तेन च तेषां भक्तिरिति ज्ञातव्यम् ॥ ९ ॥ गोपीनां भावं प्रपंचयति रामेणेति चतुर्भिः । श्वाफल्किना अक्रूरेण मयि प्रणीते

मम संगो मदीयानां च संगः, उभयत्रापि मत्संबंधित्वात् । तत्र स्वस्यापि सत्संगप्रकरणेंतर्भावितत्वात्सत्त्वमेवाभिहितम् । यत्तु पुरा भागवतसंगेनैव भगवत्कृपा भवतीत्युक्तं तत्तु तत्सांमुख्यजन्मन्येव भागवतसंगसाधनविशेषत्वेनोच्यत इति न दोषः । यदि वात्र कुत्रचित्सांमुख्यजन्मकारणमपि भगवत्संगो भवेत् तदाप्येवमाचक्ष्महे स्वरक्षार्थमवतारमंगीकृत्य यत्कदाचित्कृपां वितनोति भगवान् तच्च सत्संबंधत्वेनैवेत्यतो नाभ्युपगमहानिः । भावतारतम्याद्वशीकरणतारतम्यं ज्ञेयम् ॥ ७ ॥ तत्र तेषु । प्रभृतिपदेन गवादिग्रहः । केवलं तदानीं कालियादय एव न कृतार्था अपि तु सर्वे व्रजस्थस्थावरजंगमा इति भावेनाह—यद्वेति । तदानींतनाः श्रीकृष्णप्रादुर्भावकालिकाः । अत्र प्रमाणमाह—तदुक्तमिति ॥ * ॥ अथ मुख्यं वशीकरणमसंभावितं साधनांतरेणेति सत्संगमात्रेण श्रीगोप्यादीनां दर्शयति—केवलेनेति । भावेन प्रकरणप्राप्तसत्संगमात्रजन्मना प्रीत्या । भावोऽत्र वशीकारमुख्यत्वे चिह्नम् "वशीकुर्वंति मां भक्त्या सत्स्त्रियः सत्पतिं यथा" इत्यादेः । 'भक्त्याहमेकया ग्राह्यः' इत्यादेश्च । केवलेन ज्ञानकर्माद्यमिश्रेण निष्कामेन । भावेन शृंगारवात्सल्यसख्यदास्यभावशालिना भक्तियोगेन । गोप्यः शृंगाररसेन, गावो वात्सल्यरसेन, नगा गोवर्धनादिपर्वताः सख्यरसेन, मृगा अपि मूढधियो वृंदावनीयतरुगुल्माद्याः, नागाः कालियाद्या दास्यरसेन मामीयुः । अत्र गोप्यादयः सिद्धा एव पूर्वरागाद्यनंतरमामयुरिति केवलेन भावेन तेषां मत्प्राप्तिमत्त्वमनादितो नित्यसिद्धमेवेत्यर्थोऽवसीयतेऽन्यथा सिद्धा इति पदस्य वैयर्थ्यम् ॥ ८ ॥ एतच्चातीवदुर्लभमित्याह स्वामी । संप्रदायपरंपरामाह—अत्र चेत्यादिना ॥ * ॥ तामेव व्यनक्ति—यमिति । यं भावम् । अत्रापि योगादयो भगवत्परा एव योगादिभिर्यत्नवानपीत्यनेन तत्प्राप्त्यर्थं प्रयुज्यमानत्वावगमादिति **संदर्भः** ॥ * ॥ केवलस्य भक्तियोगस्य सत्संग एव हेतुर्न तु सुकृतांतरं किमपीत्याह—यमिति । यत्नवानपि योगादीनां सम्यगनुष्ठाननिरतोपीति **विश्वनाथः** ॥९॥ सुखाभावे हेतुं पृच्छति—कुत इति। अत्र तीव्राधित्वे ॥ * ॥ **संदर्भः**—अथ साधकचरीणां गोपीनां प्रथमतत्प्राप्तिप्रस्तावेन नित्यप्रेयसीनामपि तन्महावियोगांतरप्राप्तिस्तस्य वियोगस्यातीतत्वनिर्देशाद्द्रढयति द्वाभ्याम् । यतोऽनुरक्तचित्ताः प्रेम्णः षष्ठीभूमिकायानुरागस्तन्मयीभूतानि चित्तानि यासां ताः । अत्र ददृशुरिति भूतनिर्देशादधुना तु दंतवक्त्रवधांते मया सह संयुक्ता एव वर्तंत इति

तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृंदावनगोचरेण ॥ क्षणार्धवत्ताः पुनरंग तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥
ता नाविदन्मय्यनुषंगबद्धधियः स्वमात्मानमदस्तथेदम् ॥ यथा समाधौ मुनयोऽब्धितो ये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥

सति मे मत्तोऽन्यं सुखाय न ददृशुः । कुतः । वियोगेन तीव्रो दुःसह आधिर्यासां ताः । अत्र हेतुः । मयि विगाढेनातिदृढेन भावेन प्रेम्णाऽनुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥ तीव्राधित्वं व्यनक्ति । तास्ता इति । मया सह या एव क्षपा रात्रयः क्षणार्धवन्नीतास्ता एव पुनर्मया हीनास्तासां कल्पसमा बभूवुः । कथंभूताः । तास्ताः वाचामगोचरा इत्यर्थः ॥ ११ ॥ किंच एवं तीव्राधयस्ता मोहमिषेण समाधिं प्राप्ता इत्याह । ता इति । मय्यनुषंगेणासक्त्या बद्धा धियो याभिस्ताः स्वमात्मानं स्वदेहमदो दूरस्थमिदं सन्निहितं च नाविदन् । यद्वा स्वं पतिपुत्रादि ममतास्पदम् । आत्मानमहंकारास्पदं देहम् । अदः परं लोकमिदमिमं लोकं च नाविदन्निति यथा

द्योतितम् ॥ १० ॥ इत्यर्थ इति–परमानन्दरसप्रदत्वाद्वक्तुमशक्या इति भावः ॥ * ॥ ''कल्पस्य क्षणतां योगे वियोगे तद्विपर्यय'' इति प्रेम्णः सप्तम्या भूमिकाया महाभावभेदस्य रूढभावस्य लक्षणं सर्वतो विलक्षणं दर्शयति–तास्ता इति । ब्रह्मरात्रमिता अपि क्षणार्धवत् वृन्दावनगोचरेण वृन्दावने गोभिः सह चरता हीनास्ताः प्रहरचतुष्टयपरिमिता अपि यापयितुमशक्यत्वात्कल्पैर्बहुभिः समा बभूवुः । अधुना तु तादृश्यो न संति नास्त्येव वियोग इत्यर्थः । पूर्वं त्वेतस्यैवोद्धवं प्रति 'मयि ताः प्रेयसां प्रेष्ठे' इत्यादौ वर्तमानप्रयोगाः कृता इति ॥ ११ ॥ गोपीनां भक्त्यतिशयमाह–किंचेति । स्वशब्देनैवात्मनो गृहीतत्वात्पुनरुक्तिमस्मिन्नर्थे संभाव्याह–यद्वेति । तद्वन्मुनिवन्न किंचिद्विदुः । तासां सायुज्येन मुनिभ्य आधिक्यमाह–किंत्विति ॥ * ॥ ततश्च प्रकटाप्रकटलीलयोः पृथक्त्वाप्रतिपत्त्यै वा प्रकटभावमापद्य स्वनामरूपयोरेव ताः स्थिता इत्याह–तास्तथाभूताविरहोत्कंठातिशयेनाभिव्यक्तदुर्द्धरमहाभावाः सत्यः, अथ 'आगमिष्यत्यदीर्घेण कालेन' इत्यादिभगवदुक्त्यनुसारेण 'यर्ह्यंबुजाक्षापससार भो भवान्कुरून्मधून्वा' इत्यादिद्वारकावासिप्रजावचनानुसारेण च कदाचित्तासां दर्शनार्थं गते मयि लब्धो योऽनुषंगो महामोदनभावाभिव्यक्तिकारी पुनः संयोगस्तेन बद्धा धीर्यासां तथाभूताः सत्यः स्वममतास्पदमात्मानमहंकारास्पदम् । अदः अप्रकटलीलानुगतत्वेनाभिमतं वा तथेदं प्रकटलीलानुगतत्वेनाभिमतं वा यथा स्यात्तथा तदानीं नाविदन्, किंतु द्वयोरैक्येनाविदुरित्यर्थः । प्रकटाप्रकटतयाभिन्नं प्रकाशद्वयं लीलाद्वयं चाभेदेनैवाभ्यजानन्निति विवक्षितम् । ततश्च नाम च रूपं चेति समाहारद्वंद्वेन नामरूपात्मनि प्रकटप्रकाशविशेषे प्रविष्टा इव न तु प्रविष्टा वस्त्वभेदादित्यर्थः । अत्राहंकारास्पदे प्रविष्टा इवेति वस्त्वभेदेनैव योजयति–यथा समाधौ समाध्युपाधौ तुरीयाख्यात्मनि मुनयो जाग्रदाद्युपाधितया विश्वतैजसप्राज्ञाख्यामतीतमात्मानं प्रविष्टा इव किंतु तेषाम् । 'तुरीयं त्रिषु संततम्' इति न्यायेनोपाधिनैव तुरीयाद्भिन्नतया ख्यातानां तदुपाधिपरित्याग एव प्रवेशतयोपचर्यते । तथा तासां मत्प्राप्त्यन्तरायतत्तत्परित्याग एव प्रवेशतयोपचर्यत इत्यर्थः । अथ ममतास्पदे प्रविष्टा इवेत्यपि सम्यगंशाप्रवेशेन योजयति–यथाब्धितोये नद्यः प्रविष्टा इव भवन्ति पृथिव्यामविच्छेदात् तद्वत्तयोः प्रकाशयोर्मिथो विच्छेदाज्ञानात् प्रविष्टा इवेति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**–मोहाद्यभावेपि सर्वविस्मरणमिति विगाढभावस्यापरमप्यनुभावमुज्ज्वलमण्युक्तं दर्शयति–मयि अनुषंगेण बद्धा धियो याभिस्ताः । अत्र बद्धपदेन कृष्णस्य त्रिजगन्मोहनविचित्रलीलास्तंभत्वम् अनुषंगस्य बलवद्दामत्वं धीवृत्तीनां कृष्णवांछितसंपादककामधेनुत्वञ्चारोपितम् । स्वमात्मानं देहं न विदुः रासाभिसारादौ क्व स्थितं क्व वायातमिति नानुसंदधुः । तथादः परलोकं धर्मातिक्रमादिति भावः । इदमिमं लोकं लज्जाभयाद्यतिक्रमादिति भावः । समाधौ मुनय इति–तेषां यथा सर्वविस्मरणे ब्रह्मानुभवोतिरिच्यते तथैवासां मदनुभव इति सर्वविस्मरणांशे दृष्टान्तः, न तु प्राप्यांशे । गोपीप्राप्यप्रेममुनिप्राप्यनिर्वाणयोरह्नो महदेवांतरं यस्मान्ममत्वाममते तयोः । तथाहि–सर्वसंतापनिवर्तकात्परमाह्लादकात् दृश्यमानाच्चंद्रादपि सकाशात्सर्वगुणहीनोपि दृश्यमानः पतिपुत्रादिको यत्सुखमधिकं दत्ते तत्र ममतैव यदि कारणं तदा किं पुनः सर्वगुणमंडिते स्वभावादेव निरवधिकसुखप्रदे श्रीकृष्णे परब्रह्मणि निरधि

मत्कामा रमणं जारमस्वरूपविदोऽबलाः ॥ ब्रह्म मां परमं प्रापुः संगाच्छतसहस्रशः ॥ १२ ॥

मुनयः समाधौ नामरूपे न विदुस्तद्वत् । किंत्वब्धितोये नद्य इव मयि प्रविष्टा इत्यन्वयः ॥ १२ ॥ एवं ता अबलाः केवलं मत्कामा अस्वरूपविदः स्वरूपं तु न

कैव ममतासुखाधिक्यकारणं भक्तानामिति । अत एवोक्तम्–"ब्रह्मानंदो भवेदेष चेत्परार्द्धगुणीकृतः । नैति भक्तिसुखांभोधेः परमाणुतुलामपि ॥" इति ब्रह्म च भक्तेष्वासक्तं तद्वश्यं च मुनिषु तु नैवासक्तं न तद्वश्यञ्चेति । नद्यो यथाब्धितोये नामरूपे स्वीये न विदुरिति रसचर्वणांशे दृष्टान्तः ॥ १२ ॥ इत्यर्थ इति–वस्तुशक्तिर्बुद्धिं नापेक्षत इत्युक्तं प्रागिति भावः । वस्तुतस्तु–जरयति संसाररोगमिति जारः, रमयति नित्यानंदप्रदानेनेति रमण इतिबुद्धिवर्जितानामपि स्वप्रभावेण स्वस्मिँल्लयं कृतवानिति तात्पर्यम् ॥ * ॥ तदेवं प्रकटाप्रकटयोर्द्वयोरपि लीलयोस्तासां स्वप्राप्तौ भाव एव कारणं दर्शितम्, ततश्चाप्रकटलीलायां प्रविष्टा अपि यद्विशेषेणाधिक्येन तं प्रापुस्तद्दर्शयन्नन्यदप्यनुवदाति–मत्कामा इति । यथा भीष्ममुदारं दर्शनीयं कटं करोतीत्यत्र क्रिया खलु विशेष्यस्य कृतिं प्रत्याययंती विशेषणानामपि प्रत्यापयति–कटं करोति तं च भीष्मामित्यादिरीत्या । तथात्रापि प्रतीयते विशेष्यं चात्र ब्रह्मैव सर्वविशेषाश्रयणीयपरमवस्तुतया तेषु तस्याभेदेनानुगमात् । तदेवं स्थिते "अनुवादमनुक्त्वैव न विधेयमुदीरयेत्"इत्युक्तदिशा पाठानुरोधेनात्र न विधेयं निर्णीयते किंत्वर्थानुरोधेन तस्यैव बलवत्त्वात् । यथा–"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यत्र 'पच्यन्तां विविधाः पाकाः' इत्यादौ 'सर्वदोहश्च गृह्यताम्' इत्यत्र "अग्निहोत्रं जुहोति यवागूंश्च पचति" इत्यत्र च पर्णमयीत्यादीनामेव विधेयत्वम्, तद्वत् तस्मिन्नेवाकांक्षापूर्तेरर्थानुरोधस्य बलवत्त्वम् । ततश्च पूर्वोक्तरीत्या ता ब्रह्म प्रापुः । किं निर्विशेषतयाविर्भूतः, न, किंतु परमं परा मा लक्ष्मीर्यस्मिंस्तदिति भगवद्रूपमित्यर्थः । 'परमं यो महद्ब्रह्म' इति सहस्रनामस्तोत्रात् । तादृशत्वं च "शुभाश्रयः स चित्तस्य सर्वगस्य तथात्मनः" इति विष्णुपुराणरीत्यान्यत्रापि भगवदाविर्भावे संभवतीत्याशंक्याह–मां कृष्णाख्यमेव । यथोक्तं तासु स्वयमेव–'मय्यावेश्य मनः कृष्णे' इत्यादि 'मयि भक्तिर्हि' इत्यादि । तत्र च मां निजभावविशेषमयभेदेन द्विधा प्रापुरिति बोधयितुं तासां तत्तद्विशेषेण साहित्येन सविशेषणद्वयमाह–मत्कामा रमणमिति, जारस्वरूपाविद इति, रमणशब्देनात्र पतिरेवोच्यते नंदनशब्देन पुत्र इव रूढ्या यौगिकत्वबाधात् 'रूढिर्योगमपहरति' इति न्यायात् । यथा मित्रानंदनशब्देन मित्रापुत्र एवोच्यते न तु मित्रापतिः, मित्रारमणशब्देन मित्रापतिर्न तु मित्रापुत्रस्तद्वदत्रापि जारशब्देनोपपतिरेवोच्यते न तु पतिः । कोशकारमते तत्रैव रूढः "रमणं स्यात्पटोलस्य मूलेऽपि रमणः प्रिये" इति विश्वप्रकाशात् । स्त्रीजातिसंबंधेन रमणशब्दवत्प्रियशब्देन पतिरेवोच्यते तत्रैव प्रसिद्धेः । "धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ" इत्यमरात्, 'जारः पापपतिः' इति त्रिकांडशेषाच्च । पतित्वं तूद्वाहेन कन्यायाः स्वीकारित्वमिति लोक एव, भगवति तु स्वभावेनापि दृश्यते परमव्योमाधिपस्य महालक्ष्मीपतित्वं ह्यनादिसिद्धमिति । अस्वरूपविद इति–नित्यमेव मत्प्रेयसीत्वलक्षणमवतारसमये मदीयलीलाशक्त्या मोहितत्वान्न विदन्ति यास्तथा सत्यो जारं जारबुद्धिवेद्यं सन्तं मां प्रापुः । तथापि रमणत्वप्राप्तौ हेतुः–मत्कामा इति । मयि कामः कथमस्माकमन्यस्मिन्पतित्वं स्वप्नवद्विलीयेत श्रीकृष्ण एव जागरणवत्तत्तत्प्रादुर्भवेदित्याभिलाषो यासां तथा सत्यो मां रमणं प्रापुः । तादृगभिलाषश्चासां स्पष्ट एवोपलभ्यते । यथा–'अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते' इत्यत्र तस्य स्वीया एव वयमिति व्यज्य तत्र च–'किंकरीणाम्' इति 'श्यामसुंदर ते दास्यः' इतिवद्दैन्यात्किंकरीत्वेनापि निश्चिताः । 'भुजमगुरुसुगंधं मूर्ध्न्यधास्यत्कदा नु' इत्यनेन तदेवासावसंकोचांगीकारेण कदा सांगीकरिष्यतीति श्रीराधा स्वयमेव प्रार्थितवतीति । तथा–'कात्यायनि महामाये' इत्यादौ 'गोप्यः किमाचरन्' इत्यादौ 'यत्पत्त्यपत्यसुहृदाम्' इत्यादौ च । श्रीभगवता च स्वमतं तदेवोद्धवायोपदिष्टम्–'बल्लव्यो मे मदात्मिकाः' इति । अत्र 'यात यूयम्' इत्याद्यनुसारेण श्रीमन्नंदराजे निजपितृत्वाभिमननेन स्वस्मिन्गोपत्वमननात् । ब्राह्मणस्य मम ब्राह्मणीतिवत् । बल्लवस्य मम बल्लवीरूपास्ता इति श्रीशुकदेवेन च कृष्णवध्व इत्येवोक्तम् । तदेवं जारबुद्धेर्हेयत्वं रमणस्तूपादेयत्वं जारबुद्धिवेद्यमपीति व्याख्याय स्वामिचरणैरवगमितम् । भर्त्राभिलाषप्राप्तिरवश्यमवगन्तव्या । अन्यथा–"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति श्रीगीतोपनिषद्वयः । यथेति–यदभिलाषेणेत्येवार्थः । तस्मात् रमणतया विद्यत इति प्रतिज्ञाहानिर्न स्यात् । 'तत्क्रतुन्यायेन' 'अहं भक्तपराधीनः' इति, 'स्वेच्छामयस्य' इति, प्रतिज्ञाहानिश्च स्यात् । स्वयमेवेदं दृष्टान्तद्वारा बोधयितुम् ' मय्या

तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥ प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥

जानंति तथाऽपि सत्संगाज्जारं ब्रह्म जारबुद्धिवेद्यमपि ब्रह्मस्वरूपमेव मां परमं प्रापुरित्यर्थः ॥ १३ ॥ यस्मादेवंभूतो मद्भजनप्रभावस्तस्मात्त्वं चोदनां श्रुतिं प्रतिचोदनां

वेश्य मनः कृष्णे' इत्यादावनंतरम् ''या मया क्रीडता रात्र्यां वनेस्मिन्व्रज आस्थिताः । अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिंतया ॥'' इति । अथ खल्वंतर्गृहगतानां तासां तान्पतींस्तांश्च देहांस्त्यक्तवतीनामौपपत्यं न संभवतीति हे कल्याण्य इत्यनेन भवतीनां तत्तद्देहत्याग इति वैशिष्ट्यमवगमितम् । तदेतदभिप्रेत्यैव पूर्वमपि तमुद्धवं प्रति--''धारयंत्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन । प्रत्यागमनसंदेशैः'' इत्युक्त्वा तासां प्राणधारण आग्रहो दर्शितः । जारतया प्रतीतत्वेन रमणत्वेन च मत्प्राप्तौ मम कारुण्यं तु परमसहायमित्याह--अबला इति । तादृशमत्प्रेमकैवल्येन तासु स्वस्वरूपानुसंधानबलतिरोधानान्न विद्यते बलं मत्साहाय्यं विनान्यद्यासां तादृश्य इति । अत एव ममातिकरुणोदयादिति भावः । आस्तां नित्यप्रेयसीनां वार्ता तासां संगादन्या अपि शतसहस्रशस्तथा मां प्रापुरिति । किंच--ब्रह्मत्वं परमेश्वरत्वञ्च तत्र स्वाभाविकमेव तादृशप्रेमविशेषेण तयोरावरणमेव न तु निर्धुननं परममाधुर्यस्य तु परमोल्लासः । अथ जारत्वं तु तत्रासत्यं दुःखमयजुगुप्सितान्यसंबंधाविष्कृतं चेति तेन प्रेमविशेषेण निर्धुननमेव न तु पूर्ववदावरणमात्रं परमरमणस्य तु परमोल्लास इति । अत्र पद्ये विशेषः कृष्णसंदर्भे दृश्यः ॥ १३ ॥ यतो मुमुक्षूणामहमेव शरणमतस्त्वमपि मां शरणं व्रजेत्युपसंहरति द्वाभ्याम् । सर्वथा श्रुतिस्मृतित्यागे नास्तिक्यं स्यादिति चेदाह--यद्वेति । तदेव स्फुटयति--प्रवृत्तं प्रवृत्तिकारकं काम्यकर्मबोधकं, निवृत्तं निवृत्तिबोधकञ्च शास्त्रं, श्रोतव्यं श्रुतं च कर्मफलं तदपि त्यक्त्वा ''परीक्ष्य लोकान्कर्मचितान्'' इत्यादिश्रुतेः ॥ * ॥ तदेवं तदभीष्टतमां श्रीगोपीनामपि स्वप्राप्तिं कथयित्वा तस्यापि तां क्रोडीकुर्वन्नुपसंहरति--तस्मादिति युग्मकेन । यस्मान्मदीयत्वेन लब्धसद्भावानां तेषां नारदांगिरःप्रभृतीनामपि संगस्यैव तावन्महिमा तस्मात्तद्गुणपरमाश्रयत्वेन परमसंतं मामेकमेव शरणं याहि, शरणागतिपर्यंततया भजेत्यर्थः । ततश्च हि निश्चितं मया त्वमकुतोभयः स्या भविष्यसि । तत्र कैमुत्यायात्मनः स्वभावतः सर्वहितत्वं दर्शयति--सर्वदेहिनामात्मानं परमात्मानमिति । एकमेव शरणमित्येव दर्शयति--सर्वात्मभावेनेति । तदेव विवृणोति--उत्सृज्येत्यादिना । श्रोतव्यं श्रुतमिति ज्ञानाश्रयत्वमपि निराकरोति--तत्रैकमिति । तदात्वे एव कालांतरे चाश्रयांतरस्य भावनामपि निषेधस्तस्येति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**--तदेवमुद्धवेन साधुलक्षणं श्रीभगवांस्तारतम्येन त्रिविधं साधुं लक्षयित्वा तत्तत्सगप्रादुर्भूतां प्रधानीभूतां केवलां च भक्तिं सामान्यतो निरूप्य भक्तेः स्ववशीकारं विवक्षुः कैमुत्येन सत्संगस्यैव वशीकारित्वमुक्त्वा सत्संगिनो भक्तांश्च निर्दिश्यांते गोप्यादिनिकृष्टकेवलं भक्तियोगं दुर्लभत्वेन स्तुत्वा सहसैव 'रामेण सार्द्धम्' इत्यादिना तत्रापि गोपीविषयकस्वप्रेमबाष्पं सदा जाज्वल्यमानं गांभीर्येण हृदि मुद्रितमप्यधीरतयोद्घट्य्य तासामेव भक्तियोगस्य स्ववशीकारसर्वोत्कर्षपरावधित्वं च तासामेव साधुत्वस्यापि सर्वमहामहोत्कृष्टत्वकक्षाविश्रामित्वमभिव्यज्य केवले तदनुष्ठिते भक्तियोग एवोद्धवं प्रवर्तयितुमाह--तस्मादिति । विहितं निषिद्धं च कर्म त्यक्त्वेति भावः । तर्हि किं संन्यासं कुर्वे न प्रवृत्तं गृहस्थधर्मं निवृत्तं संन्यासिधर्मं च त्यक्त्वा तत्रापि श्रोतव्यं च श्रुतं च त्यक्त्वेति भाविधर्मश्रवणमनाकांक्षधर्मश्रवणं च विस्मृत्येत्यर्थः । सर्वात्मभावेन सर्वोपाय आत्मना मनसा भावो दास्यसख्यादिस्तेनैकमेव मामालंबनीकृत्य शरणं याहि । मयैवाकुतो भयः स्या इति तव नास्ति कर्माधिकारो नापि

मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥ याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥१५॥उद्धव उवाच ॥ संशयः शृण्वतो वाचं तव योगेश्वरेश्वर॥ न निवर्त्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥ श्रीभगवानुवाच ॥ स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ॥ मनोमयं सूक्ष्म मुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७ ॥

स्मृतिं च । यद्वा विधिं च निषेधं चोत्सृज्य मां शरणं याहि ॥ १४ ॥ मयैवाकुतोभयः स्याः भव ॥ १५ ॥ पूर्वं तावन्मयोदितेष्ववहितः स्वधर्मेष्वित्यादिना कर्म कर्तव्यमित्युक्तमिदानीं तु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते । तत्र किमात्मनः कर्तृत्वाद्यस्ति नास्ति वेत्यात्मस्थ आत्मविषयः संशयो न निवर्तते । यद्वा कर्म कार्यं त्याज्यं वेत्यात्मस्थो हृदिस्थः संशयो न निवर्तत इति पृच्छति । संशय इति । येन संशयेन ॥ १६ ॥ उत्तरं स एष इत्यष्टभिः । अयं भावः । ईश्वरस्तावत्स्वमायावशात्प्रपंचात्मना भाति तत्प्रपंचाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादि ततो विधिप्रतिषेधाधिकारस्तदानीं सत्त्वशुद्ध्यर्थं कर्माणि कुर्वित्युक्तम् । सत्त्वे च शुद्धे पुनः कर्मजाड्यपरिहाराय

ज्ञानाधिकारस्तदपि तंतमात्मन्यारोप्य प्रत्यवायभयं संसारभयञ्चात्मनि मन्यसे चेत्तदा तद्भयद्वयात्त्राताऽहं विद्यमान एवास्मीत्यर्थः ॥१४॥ एकं केवलम् । एवकारेण देवतांतरव्यवच्छेदः । सर्वात्मभावेन श्रीकृष्ण एव सर्वेषामात्मेत्यभेदभावनया । यद्वा–सर्वात्मभावेन चराचरस्वरूपेण श्रीकृष्णार्चनेन सर्वमार्चितं स्यात् 'सर्वार्हणमच्युतेज्या' इत्युक्तेः । "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥" इति श्रीगीतोक्तेः ॥ * ॥ ० ॥ १५ ॥ बहुविधवाक्यश्रवणेन जातसंशयः पृच्छतीत्याह–पूर्वं तावदित्यादिना । तत्रोभयविधवाक्योपलंभे । यदि वस्तुत आत्मा कर्त्रादिरूपोस्ति तदा कर्मत्यागो वक्तुं न शक्यो यदि नास्ति तर्हि कर्मविधिर्न वक्तुं शक्य इत्येवं संशयः । कर्मकार्याकार्यविधावात्मविषयसंशयस्यायोग्यत्वादाह–यद्वेति ॥ * ॥ पूर्वं तावच्छ्रीभगवता 'मयोदितेषु' इत्यादिना कर्ममिश्रा भक्तिरुक्ता, ततश्च तत्परत्वे सति 'निवृत्तं कर्म सेवेत' इत्यादिना सर्वं कर्म त्याजितम् । 'किं तज्ज्ञानम्' इत्यादिना ज्ञानमिश्रा विहिता ज्ञानार्थमात्मतत्त्वनिरूपणञ्च सुष्ठु कृतं श्रीमदुद्धवेनापि गुणेषु 'वर्तमानोपि' इत्यादिना पृष्ट्वा 'बद्धो मुक्तः' इत्यादिना श्रीभगवदुक्तसिद्धांतोऽवधारितः । तत्तु ज्ञानं भक्तिं विना न सिध्यतीति स्वयं भगवतैव पुनः 'शब्दब्रह्मणि निष्णातः' इत्यादिनोट्टंकितम्, 'श्रद्धालुः' इत्यादिना भक्तिञ्च दर्शयित्वा तस्या भक्तेर्जन्मनि सिद्धौ च कारणं सत्संग एवेति दार्शितम्, पुनरुद्धवेन 'साधुस्तव' इत्यादिना तौ विशेषतः पृष्टौ, श्रीभगवता च तावुद्दिश्य 'प्रायेण भक्तियोगेन' इत्यादिना केवलं सत्संग एव दृढीकृतोऽतिशायितश्च । 'तस्मात्त्वमुद्धव' इत्यादिना कर्म च ज्ञानञ्च सम्यगेव त्याजितम् । तदेवं यद्यपि संशयावसरो नास्ति तथाप्याह–संशय इति । तव वाचं शृण्वतोऽवधारयतो ममात्मस्थं सशयम् 'मयोदितेष्ववाहितः' इत्यादिकाध्यायत्रयगतमहावाक्यार्थपर्यालोचनासामर्थ्यं न निवर्तते, कुतो येन मम मनो भ्राम्यति वैयग्र्यविशेषाविष्टमास्ते तस्मात्पुनः सम्यक्तेनोपदिश्यतामिति भावः । संशयोऽत्र तत्तत्प्रकरणानामेकतात्पर्यताग्रहणे वफैल्यम् । शृण्वत इति शृण्वतोपीत्यर्थ इति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**–संशयो न निवर्तत इत्येतत्पूर्वलक्षण एव "मयि सर्वाणि कर्माणि निरपेक्षः समाचरन्" इति वदता त्वया मह्यं कर्माधिकारो दत्तः, तत्पूर्वं तु 'यदिदं मनसा वाचा' इत्यादिना 'विद्धि मायामनोमयम्' इत्यादिना ज्ञानाधिकारो दत्तः, अधुना तु सर्वं त्यक्त्वा मां शरणं याहीति भक्त्यधिकारं ददासि न जाने पुनरग्रे कमधिकारं दास्यसीति सख्यरसोद्भूता वक्रोक्तिर्द्योतिता ॥ १६ ॥ स्वाशयमाह भगवान्–अयं भाव इति । ततः कर्तृत्वाद्यंगीकारात् । तदानीं विधिनिषेधाधिकारवेलायाम् । सत्त्वस्यांतःकरणस्य शुद्ध्यर्थं कर्मजाड्यं कर्मासक्तिस्तत्परिहाराय । तत्र प्रश्नोत्तरनिमित्तम् । तत्रेति निमित्तार्थसप्तम्यंतात्त्रल् । तावदधुना । किंच–अवाङ्मनसगोचरात्मविषयकसंशयस्याध्यारोपापवादैकनिरसनीयत्वादारोपं वदन्स्थूलसूक्ष्मक्रमेण वागुत्पत्तिमाह–आधारादिचक्रेषु । तानि च योगशास्त्रे उक्तानि–"मूलाधारः स्वाधिष्ठानं मणिपूरकमेव च । अनाहतं विशुद्ध्याख्यमाज्ञा षट्चक्रमुच्यते ॥ मूलाधारे लिंगमूले नाभौ हृदि च कंठके । भ्रुवोर्मध्ये ब्रह्मरंध्रे

भक्तिविक्षेपककर्मादरं परित्यज्य दृढविश्वासेन भजेत्युक्तम् । जातायां तु विद्यायां न किंचित्कर्तव्यमस्तीति । तत्र तावदीश्वराद्रागादींद्रियद्वारा जीवसंसृतिकारणभूतं प्रपंचो द्भममाह सार्धैश्चतुर्भिः । स एषोऽपरोक्षः जीवयतीति जीवः परमेश्वरः । अपरोक्षत्वे हेतुः । विवरेष्वाधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः । तामेवाभिव्यक्ति माह । घोषेणेति । घोषेण पराख्येन नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन्मनोमयं सूक्ष्मं रूपं पश्यंत्याख्यं मध्यमाख्यं च मणिपूरकचक्रे विशुद्धिचक्रे चोपेत्य प्राप्य वक्त्रे मात्रा ह्रस्वादिः स्वर उदात्तादिर्वर्णः ककारादिरित्येवं वैखर्याख्यः स्थविष्ठोऽतिस्थूलो नानावेदशाखात्मको भवति । तथाच श्रुतिः । “ चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहिता नेंगयंति तुरीयं वाचो मनुष्या वदंति ॥ ” इति । अभियुक्तश्लोकश्च । “ या सा मित्रावरुण सदनादुच्चरंती त्रिषष्टिं वर्णानंतःप्रकटकरणैः प्राणसंगात्प्रसूते ॥ तां पश्यंतीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं चक्रे करणविशदां वैखरींच प्रपद्ये ॥ ” इति ॥ १७ ॥

क्रमाच्चक्राणि चिंतयेत् ॥ इति । परा–पश्यंती–मध्यमा–वैखरीरूपेण चतुर्द्धा वाक्तु वैखर्येव वक्तुं शक्या नान्या । अत्र प्रमाणमाह–तथा चेति । वाक्परिमितानि वाचाः परिमितानि चत्वारि पदानि स्थानानि परा पश्यंती मध्यमा वैखरी, तानि च ये ब्राह्मणा मनीषिणोऽध्यात्मकुशलास्ते विदुः, तेषां मध्ये आदौ त्रीणि पदानि गुहायां शरीरे आधारनाभिहृदयेषु निहितानि तानि नेंगयंति न जानंति तुरीयं चतुर्थं वैखर्याख्यं मनुष्या वदन्ति मनुष्याणां वदने वर्तमानोऽर्थबोधकः शब्दो भवतीति श्रुतिपदार्थः । अभियुक्तानां कुशलानां श्लोकः–“शास्त्रज्ञे तत्परे शत्रूद्युक्ते काले च निर्भये । अभियुक्तः स्मृतो विज्ञैः” इति निरुक्तिः । श्लोकार्थश्च–तां त्रिविधां भारतीं प्रपद्ये या सा मित्रावरुणसदनात् अग्नीषोमस्थानात् उच्चरंती उद्भवन्ती मित्रोऽग्निर्वरुणः सोमः तयोस्सदनमावासस्थानं परमात्मा यतः श्वासस्य शीतोष्णत्वं तस्मादुच्चरंती त्रिषष्टिं वर्णान् जनयति वायुसंगजान् प्रकटकरणैः बुद्धिं गतैः प्रत्यक्षरूपैरिंद्रियैः अंतः पश्यति तनूच्चारयति सा पश्यंत्याख्या तां प्रथममुदितामुत्पन्नां बुद्धिसंस्थामुच्चारयामीति विचारयुक्ताम् , मध्यमां मुखेवस्थिताम् , करणविशदां स्थानप्रयत्ननिर्मलां वैखरीञ्च प्रपद्ये । “ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः संभुमते मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृताश्चाष्टौ चत्वारश्च यमाः स्मृताः ॥ अनुस्वारो विसर्गश्च ᳲ क ᳲ पौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेय ऋकारः प्लुत एव च ॥ ” इति।अस्यार्थः–अ इ उ ऋ एषां ह्रस्वदीर्घप्लुताः कालकृता द्वादशभेदाः, ऌकारस्यैकस्तस्य दीर्घाभावात् , प्लुतस्तु कैश्चिदिष्टः कैश्चिन्न । एचां चतुर्णामष्टौ तेषां ह्रस्वाभावा दित्येकविंशतिस्वराः । स्पर्शाः कादयो मावसानाः पंचविंशतिः । यादयो हांताश्चाष्टौ । यमा वर्गेष्वाद्यानां पंचमे परे मध्ये पूर्वसदृशाः प्रातिशाख्ये प्रसिद्धाश्चत्वारो वर्णाः । यथा–पलिक्क्नीः, चख्ख्नतुः, अग्ग्निः, पतिघ्घ्नी त्यादौ । अनुस्वारादयश्चत्वारः स्पष्टाः । पराश्रितावित्युक्तिस्तु कखयोः परयोरेकविधः, पफयोः परयोरन्यविधः । कंठ्यौष्ठ्यभेदादिति ज्ञापनाय दुःस्पृष्ट ईषत्स्पृष्टऌकार इति शब्दार्थरत्ने । अत्र विशेषोऽपि योगशास्त्रे मातृका पूजाप्रकरणे वर्णितः । तथाहि–प्रथममध्यमोत्तमानामधिकारिणां स्वाधिकारानुसारेण मातृकापूजाकरणमित्यभिप्रेत्य तस्यास्त्रैविध्यमाह–“मातृका च त्रिधा स्थूला सूक्ष्मा सूक्ष्मतरापि च । गुरूपदेशतो ज्ञेया नान्यथा शास्त्रकोटिभिः ॥ ” प्रथमोऽधिकारी स्थूलया मातृकया पूजयेत् , मध्यमः सूक्ष्मया, उत्तमः सूक्ष्मतरयेति विभागः । स्थूलादिरूपत्रयं चैवमवगन्तव्यम्–नियतकालपरिपाकानां प्राणिकर्मणां मध्ये परिपक्वानामुपभो गेन प्रलयात् , इतरेषां चापरिपक्वानां भोगाभावेन तदर्थायाः सृष्टेरनुप्रयोगात् । प्राकृतलये ग्रस्तसमस्तप्रपंचा माया स्वप्रतिष्ठे निष्कले पराशिवे विलीना यावदवशिष्टकर्मपरिपाकं वर्तते । उक्तं हि–“प्रलये व्याप्यते तस्यां चराचरमिदं जगत् ” इति । तथा–“जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥ वायुः प्रलीयते व्योम्नि तदव्यक्ते प्रलीयते । अव्यक्तं पुरुषं ब्रह्म निष्कले संप्रली यते ॥ ” इति । अव्यक्तं माया तस्याश्च सम्यक्प्रलयो नाम मुक्ताविव नात्यंतिको विनाशः किन्तु सुषुप्तौ सत्यां मायागोचरवृत्तीनामप्यभावात् । स्वप्रतिष्ठपरमात्मप्रकाशस्याप्यत्यंतानिर्विकल्पिकतया तद्बलाद्भासमानाया अप्यप्रतिभातप्रायत्वं न पुनरनवभानमेव । प्रतिभासमात्रशरीरस्य हि मिथ्यावस्तुनोऽनवभाने सत्यभाव एव स्यादिति । न चाभाव एवास्तु उत्तरसर्गानुपपत्तिप्रसंगादिति, अवशिष्टैः प्राणिकर्मभिश्च तस्यां मायायां

विलीयेत्र क्रमेण प्राप्तपरिपाकैः स्वफलप्रदानाय परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जन्यते सैषा मायावस्था ईक्षणकामतमोत्रिचिकीर्षादिशब्दैरभिधीयते । " तदैक्षत बहुस्यां प्रजायेय " इति छांदोग्ये, " स ईक्षत
लोकान्नु सृजा इति " इति ऐतरीयके, " सोकामयत बहु स्यां प्रजायेय " इति तैत्तिरीयके, "तपसा चीयते ब्रह्म " इति मुंडके, " विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिंदुताम्" इति प्रपञ्चसारे । अपरिपक्वकर्म-
भेदाद्घनीभावस्तदर्थव्यापारिश्चिकीर्षापरिपक्वकर्माकारपरिणतमायाविशिष्टं बिंदुस्तदिदमविभागावस्थमव्यक्तमुच्यते । अत एव तस्योत्पत्तिः स्मर्य्यते–" तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति । स एव जगदंकुराकारोऽ
ध्यात्मञ्च आधारादाभिव्यज्यमानकुण्डलादिशब्दैरुच्यते । यथाहुः–"शक्तिः कुंडलिनीति विश्वजननव्यापारबद्धोद्यमां ज्ञात्वेत्थं न पुनर्विशंति जननीगर्भेर्भकत्वं नराः" इति । "कुंण्डलिनी सर्वथा ज्ञेया सुषुम्ना तु गतैव सा"
इति च । बिंदोः कालक्रमेणाचिचिदचिचिदंशविभागात्त्रैविध्यं तत्रैवोक्तम्–"कालेन भिद्यमानस्तु स बिंदुर्भवति त्रिधा । स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥ स बिंदुनादबीजत्वभेदेन च निगद्यते ।" इति ।
अचिदंशः स्थूलो बीजं चिदचिन्मिश्रः सूक्ष्मो नादः स एव पुरुषश्चिदंशः परो बिंदुः स एवेश्वरः तस्य च त्रिधा विभागसमये शब्दब्रह्मापरनामधेयस्य परस्योत्पत्तिरुक्ता–"बिन्दोस्तस्माद्भिद्यमानाद्रवो व्यक्तात्मको
भवेत् । स रवः श्रुतिसंपन्नैः शब्दब्रह्मेति गीयते ॥" इति । स एव ब्रह्मात्मरवो जगदुपादानं बिंदुतादात्म्येन संगतोऽपि प्राणिनां मूलाधारे व्यज्यत इत्युक्तम् । स तु सर्वत्र संस्यूतो जाते भूताकारे पुनरावि-
र्भवति देहेषु प्राणिनामर्थविस्तृत इति देहेष्विति मूलाधारप्रदेशे तस्यानुस्यूतस्य रवस्य संस्कृतपवनबलेनाभिव्यक्तिराविर्भावस्तत्र हि पवनस्योत्पत्तिरुक्ता–"देहेपि मूलाधारेस्मिन्समुद्याति समीरणः" इति । ज्ञातमर्थं
विवक्षोः पुरुषस्येच्छया जातेन प्रयत्नेन मूलाधारस्थः पवनः संस्कृतस्तेन पवनेन सर्वत्र स्थितं ब्रह्म तत्राभिव्यज्यते तदभिव्यक्तं शब्दब्रह्मकारणं बिन्द्वात्मकं स्वप्रतिष्ठतया निष्पंदं सत् परा वागित्युच्यते, तदेव नाभिपर्यंतमा-
गच्छता तेन पवनेनाभिव्यक्तं विमर्शरूपेण मनसा युक्तं सामान्यस्पंदप्रकाशरूपिणी कार्यं बिंदुतत्त्वात्मिकाधिदैवमीश्वररूपा पश्यंती वागित्युच्यते, तदेव ब्रह्म तेनैव वायुना हृदयपर्यंतमभिव्यज्यमानं निश्चयात्मिकया बुद्ध्या
युक्तं विशेषस्पंदरूपनादबिन्दुमयी अधिदैवतं हिरण्यगर्भरूपा मध्यमा वागित्युच्यते, तदेवास्यपर्यंतं तेनैव वायुना कंठादिस्थानेष्वभिव्यज्यमानमकारादिक्षकारांतवर्णमालारूपं परश्रोत्रग्रहणयोग्यं बीजात्मकमधिदैवतं विराड्-
रूपा वैखरी वागित्युच्यते । तदुच्यते आचार्यैः–"मूलाधारात्प्रथममुदितो यस्तु भावः पराख्यः पश्चात्पश्यंत्यथ हृदयगो बुद्धियुङ् मध्यमाख्यः । वक्त्रे वैखर्यथ रुरुदिषोरस्य जंतोः सुषुम्नाबद्धस्तस्माद्भवति पवनप्रेरितो वर्ण-
संज्ञः ॥" इति । तत्र वैखरी स्थूलमातृका, सा प्रथमाधिकारिणः पूजोपकरणं, मध्यमा सूक्ष्मा मातृका मध्यमाधिकारिणः पूजोपकरणं, कारणकार्यबिन्द्वात्मिका परा पश्यंतीरूपा सूक्ष्मतरा मातृका सोत्तमाधिकारिणः पूजोपक-
रणम् । मातृकात्रैविध्यं सर्वमंत्रोपलक्षणम् । अतश्च सर्वे मंत्रा उक्तरीत्या स्थूलसूक्ष्मसूक्ष्मतररूपाः प्रथममध्यमोत्तमाधिकारिविषया इत्यर्थः । बहुवक्तव्यश्चायमर्थः । गुरूपदेशत इति–गुरूपदेशमंतरेण शास्त्रैर्दुरधिगमत्वात्तथैव
फलातिशयवत्त्वाच्चेत्यर्थ इत्यलमतिप्रपञ्चेन । मंत्रोपयोग्यप्ययं वाङ्निरूपणप्रसंगादत्र लिखितः "वागेव विश्वा भुवनानि जज्ञे"इति श्रुतिरपीममर्थमाह । वागेव विश्वाकारेण विवर्तते परिणमते वेत्यर्थः । श्रुत्यन्तरञ्च–"वाचैव विश्वं
बहुरूपं निबद्धं तदेतदेकं विभज्योपभुंक्ते" इति ॥ * ॥ **संदर्भः**–वैयग्र्यं च द्विविधम्–एकं पूर्वत एवानुगतया स्वत्यागभीत्याऽन्यत्संप्रति ज्ञातया 'रामेण सार्द्धम्' इत्याद्युक्तया हंत तासामनेन संगमः कुत्र कथं वर्तत
इति विशेषे ज्ञानमुत्कंठया तत्र स एष इत्यस्यार्धद्वयेन द्विविधं वैयग्र्यमपनेतुं स्वत्यागभीत्या कृतं तत्तत्प्रकरणैकतात्पर्यग्रहणवैयग्र्यं प्रथमेनार्थेन निवारयति–'तस्मात्त्वमुद्धवोत्सृज्य' इति । पर्यवसानं सर्ववेदार्थं युतः संक्षे-
पतस्तन्नेतृत्वं तदाश्रयत्वं च तथाविधे मय्येवेति दर्शयितुं सर्वेषां वेदानां शब्दरूपेण सर्वाविर्भावरूपत्वमाह–स एष इति द्वाभ्याम् । आधारचक्रादिकमत्र चतुर्भ्यो मुखेभ्यः प्रथमतो वेदाविर्भावसमये चतुर्मुखस्यैवेति ज्ञेयम् ।
अत एव नादो वेदशब्दात्मको भवतीत्यादिटीका च संगच्छते । व्याख्यास्यते चैकादशे–'आकाशाद्घोषवान्प्राणः' इत्यत्र। प्राणस्तदुपाधिहिरण्यगर्भरूपः घोषवान्नादोपादानवानिति । अनंतपारामित्यत्र न समष्टिप्राणादिमयस्य
कालतो देशतश्चापरिच्छेदादिति श्रुत्यभियुक्तश्लोकौ दृष्टान्तावेवालौकिकवाङ्मयत्वात् । तत्र श्रुतौ वाक्परिमितानि शास्त्राणि निर्णीतानि चत्वारि पराख्यादीनि पदानि रूपाणि तेषां मध्य आदौ त्रीणि गुहायां शरीरे आधा-
रनाभिहृदयेषु स्फुरंत्यपि नेंगयन्ति स्वरूपं न प्रकाशयन्तीति श्रुतिपदार्थः । श्लोकार्थस्तु–या सा पराख्या मित्रोऽग्निर्वरुणः सोमस्तयोः सदनमाधारचक्रं तस्मात्प्राणसंगेनोच्चरंती स्वयमेव सूक्ष्मरूपमुद्वहन्ती त्रिषष्टिं वर्णान्सूते ।
कैः । अन्तःकरणाभ्यां प्रकटकरणेन च ततस्तां प्रथममुदितां सतीं पश्यंत्याख्याम् अन्तः पश्यति न तूच्चारयति या तां प्रथमां तथा बुद्धिसंस्थामुच्चारयामीति विचारयुक्तां मध्यमां करणविशदां स्थानप्रयत्ननिर्मलां वैखरीं

यथाऽनलः खेऽनिलबंधुरूष्मा बलेन दारुण्यधिमथ्यमानः ॥ अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८ ॥ एवं गदिः कर्मगतिर्विसर्गो घ्राणो रसो दृक्स्पर्शः श्रुतिश्च ॥ संकल्पविज्ञानमथाभिमानः सूत्रं रजःसत्त्वतमोविकारः ॥ १९ ॥ अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ॥ विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥

अव्यक्तस्य सतः सूक्ष्ममध्यमक्रमेणाभिव्यक्तौ दृष्टांतः । यथेति । यथाऽग्निः खे ऊष्मा अव्यक्तोष्मरूपः दारुण्यधिकं मथ्यमानोऽनिलसहायः सन्नणुः सूक्ष्मविस्फुलिंगादिरूपो भवति पुनः प्रकृष्टो जातो हविषा संवर्धते तथैवेयम् वाणी ममाभिव्यक्तिः ॥ १८ ॥ उक्तां वाग्वृत्तिमुपसंहरन्नितरेंद्रियवृत्तीरप्यतिदिशति । एवं गदिर्गदनं भाषणं मे व्यक्तिरित्युपसंहारः । कर्म हस्तयोर्वृत्तिर्गतिः पादयोर्विसर्गः पायूपस्थयोरिति कर्मेंद्रियाणाम् । घ्राणोऽवघ्राणं रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणमिति ज्ञानेंद्रियाणाम् । संकल्पो मनसो विज्ञानं बुद्धिचित्तयोरभिमानोऽहंकारस्य सूत्रं प्रधानस्य सत्त्वरजस्तमसां विकारोऽधिदैवादिस्त्रिविधः प्रपंचो मे व्यक्तिरिति पूर्वेणान्वयः ॥ १९ ॥ तस्मादीश्वरादिव्यक्तिरूपः प्रपंचो नेश्वराद्भिन्नोऽस्तीत्याह । अयमिति । अयं जीव ईश्वर आदावव्यक्त एक एव ।

प्रपद्ये । त्रिषष्टिरिति—ह्रस्वदीर्घप्लुतभेदेन वर्णा नव । दीर्घत्वाभावात् ऋलृवर्णाश्चत्वारः । ह्रस्वत्वाभावादेचोष्टौ । उदात्तादिस्वरास्तदन्तर्गता एव । विसर्गानुस्वाराजिह्वामूलीयोपध्मानीयाश्चत्वारः । एवं पंचविंशतिस्स्पर्शास्तावंत एवं पंचाशत् । यवलाः सानुनासिकानिरनुनासिकाः षट् । रेफ एकः।नकारस्य दंत्यमूर्धन्यत्वेन द्विःपाठात् शषसहलक्षाः षट् । एवं त्रिषष्टिरिति । अथ द्वितीयं वैयग्र्यं द्वितीयेनार्थे निराकरोति—स एष इति।स एष जीवो जगतो जीवनहेतुमल्लक्षणः विशेषतो व्रजस्य जीवनहेतुर्वा।प्राणेन मत्प्राणभूतेन घोषेण व्रजेन सह विवरप्रसूतिर्विवरादप्रकटलीलातः प्रसूतिः प्रकटलीलायामभिव्यक्तिर्यस्य तथाभूतः सन् गुहां पुनरप्रकटलीलामेव प्रविष्टः।कीदृशः सन्, किं कृत्वा—मात्रा मर्मचक्षुरादीनि स्वरो भाषागानादिः वर्णरूप इतीत्थं स्थविष्ठः । स्वपरिजनानां प्रकट एव सन् बहिरंगभक्तानां मनोमयं कथंचिन्मनस्येव गम्यमन्येषां सूक्ष्ममज्ञेयं यद्रूपं प्रकाशस्तदुपेत्य ॥ १७ ॥ इममर्थं दृष्टांतेन स्फुटयति—अव्यक्तस्येति । खे काष्ठच्छिद्रे । तथैव अग्निवत् । इयम् उक्तलक्षणा ॥ * ॥ प्रथमेर्थे यथानल इति तथैव मम व्यक्तिरूपा वाणी चेत्यर्थः । द्वितीयेर्थे प्रकटलीलाविष्कारञ्च सदृष्टान्तं स्पष्टयति—यथेति । हि यस्मादियं स्वरहस्यैकवेद्यविज्ञस्य ममैव वाणी नात्रासंभावना विधेयेत्यर्थः । दृष्टान्तोऽयं गर्भादिक्रमेणाविर्भावमात्रांशे । तृतीयस्कन्धेपि श्रीमदुद्धवेनोक्तम्—'अजोपि जातो भगवान्यथाग्निः' इति ॥ * ॥ **विश्वनाथस्तु**—मे व्यक्तिर्मदाविर्भावरूपा इयं वेदलक्षणा वाणी अतोऽस्या अतिगूढमर्थं मां विना को ज्ञास्यति ज्ञात्वा च जीवस्य संसारनिस्तारणार्थान्भक्तिज्ञानकर्माद्युपायान्को वा व्यवस्थास्यतीत्यतस्त्वयि परमयोग्ये पात्रे स्वतुल्ये तानुपायान्सांप्रतं कृपया न्यस्यामि त्वत्तो बदरिकाश्रमस्था मुनयः प्राप्य कृतार्था भविष्यन्तीति भावः ॥ १८ ॥ सूत्रं क्रियाशक्तिप्रधानं महत्तत्त्वम् ॥ * ॥ **संदर्भः**—तदेवं वेदस्य स्वाविर्भावत्वं दर्शयित्वा तदर्थद्वारा जीवानां जगदादेशं त्याजयितुं जगति लौकिकरागादिवृत्तीनामपि तत उद्भवं दर्शयति—एवं गदिरिति । यथा पराख्यादिक्रमेण वैदिकी वाग्वृत्तिरुत्पन्ना तथा गदिर्लौकिक्यप्युत्पन्ना, किन्तु पूर्वा स्वरूपशक्त्या परा तु माययेति ज्ञेयम् । ततश्च यथा गदिस्तथा कर्मादयोपीत्यर्थः ॥ * ॥ **विश्वनाथोऽपि**—यथा मत्स्वरूपभूता वदेलक्षणा वाणी ब्रह्मशरीरादुद्भूता तथैव प्रकृतापि वाणी प्राकृतलोकशरीरादपभ्रंशरूपा संभवतीत्याह—एवं गदिर्वागिंद्रियव्यापारो भाषणम् एतदादिप्रपञ्चो मायिकी व्यक्तिरित्यर्थः ॥ १९ ॥ यतः कार्यं कारणादभिन्नं तस्माद्धेतोः । अयमिति शास्त्रेण प्रत्यक्षमेव दर्शितत्वात्, जीवयति सर्वमिति निरुक्तेः । आदौ सृष्ट्यादौ । सूक्ष्मरूपत्वादव्यक्तः ।

यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तंतुवितानसंस्थः ॥ य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते॥२१॥ द्वे अस्य बीजे शतमूलस्त्रिनालः पंचस्कंधः पंचरसप्रसूतिः ॥ दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः॥२२॥अदंति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः॥ हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम् ॥ २३ ॥

वयसा कालेन विश्लिष्टा विभक्ता वागादींद्रियरूपाः शक्तयो यस्य । यद्वा विशेषेण श्लिष्टा आलिंगिता मायाशक्तिर्येन सः । बहुप्रकार इवाभाति । यतः स एवाद्यः । त्रिवृत् त्रिगुणाश्रयः । अब्जयोनिर्लोकपद्मस्य कारणभूतः । एकस्य बहुधा भाने दृष्टान्तः । योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजानि यद्वदिति ॥ २० ॥ तस्मात्तन्मायाविलसितत्वात्तदाश्रयमिदं जगन्न ततः पृथगिति सदृष्टांतमाह । यस्मिन्निति । तंतुविताने संस्था स्थितिर्यस्य स पटो यथा तथा यस्मिन्निदं विश्वमोतं दीर्घतंतुषु पट इव प्रोतं तिर्यक्तंतुष्विव । एवंभूतं समष्टिव्यष्ट्यात्मकं विश्वमविद्ययाऽऽत्मन्यध्यस्तं वृक्षरूपं जीवस्य कर्तृत्वादिसंसारहेतुरतस्तद्विवेकज्ञानेन कर्मादि सर्वं त्याज्यमित्युक्तमित्याशयेनाह य एष इति सार्धैस्त्रिभिः । पुराणोऽनादिः । कर्मात्मकः प्रवृत्तिस्वभावः । पुष्पफले भोगापवर्गौ । कर्म तत्फले वा प्रसूते जनयति ॥ २१ ॥ वृक्षरूपकं प्रपंचयति । द्वे इति । द्वे पुण्यपापे अस्य बीजे । स च शतमूलः शतमपरिमिता वासना मूलानि यस्य । त्रयो गुणा नालानि प्रकांडा यस्य । पंच भूतानि स्कंधा यस्य । पंच रसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात् । दश च एका च शाखा इंद्रियाणि यस्य । द्वयोः सुपर्णयोर्जीवपरमात्मनोर्नीडं यस्मिन् । त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य । द्वे सुखदुःखे फले यस्य सः । अर्कं प्रविष्टः सूर्यमंडलपर्यंतं व्याप्तः । तन्निर्भिद्य गतस्य संसाराभावात् ॥ २२ ॥ तत्फलभोक्तॄनाह । गृध्यंति अभिकांक्षंत इति गृध्राः कामिनो ग्रामेचरा गृहस्था अस्य वृक्षस्यैकं फलं दुःखमदंति परिणामतः स्वर्गादेरपि दुःखरूपत्वात् । हंसा विवेकिनोऽरण्यवासाः संन्यासिन एकं फलं सुखमदंति । एकं परमात्मानं माया

पूर्वव्याख्याने भगवतः कालाधीनत्वप्रतीतेराह—यद्वेति । कालेन सह बहुरूपेण भानं कुत इति चेदाह—यत इति । त्रयो वर्ततेऽत्रेति त्रिवृत् । दृष्टान्तः स्फुटतर एव ॥ * ॥ तथैव दर्शयति—अयं हीति सार्द्धकम् । बीजानीति—बीजानां मध्ये यदेकमपीत्यर्थः । अत एव—यस्मिन्निति ॥ २० ॥ यतः स एव कारणं तत्तस्मादिति । अध्यस्तं रज्जूरगवत् । आदिना भोक्तृत्वादिग्रहः । यतः संसारहेतुरतो हेतोः । तद्विवेकज्ञानेन तस्य जीवस्य विवेकः कर्तृत्वादिरूपसंसाराद्विवेचनं स एव ज्ञानं तेन । आदिना तदुपायग्रहः । य एष आबालगोपालप्रसिद्धः । अपवर्गस्य नित्यत्वेन 'नित्यसिद्धो ह्ययं मोक्षः' इत्याद्युक्तेः प्रसूतेरसंभवादाह—कर्म तत्फले वेति ॥ * ॥ विशेषबोधाय जगदेव रूपकेण दर्शयति—य एष इति सार्द्धेन ॥ २१ ॥ अस्य संसारतरोः । स च संसारतरुश्च । प्रकांडाः स्थूलशाखाधाराः । "प्रकांडो विटपे शस्ते मूलस्कंधान्तरे तरोः" इति हैमः ॥ * ॥ संदर्भः—तदेवं वेदं जगच्च निरूप्य 'तस्मात्त्वमुद्धवोत्सृज्य' इति पर्यवसानं पूर्वोक्तं वेदार्थमेव समासेन दर्शयति द्वाभ्याम् ॥ २२ ॥ तत्फलभोक्तॄन्संसारतरुफलभोगकर्तॄन् । ननु "यन्न दुःखेन संभिन्नं तत्पदं स्वःपदास्पदम्" इत्युक्तेः स्वर्गाधिकारिणां गृहस्थानां कथं दुःखभोक्तृत्वमित्यत आह—परिणामत इति । भोगकालेपि स्पर्द्धासूयादिसत्त्वेन दुःखरूपमेवेति भावः । वस्तुत एकं बहुरूपं मायाकल्पितना

एवं गुरूपासनयैव भक्त्या विद्याकुठारेण शितेन धीरः ॥ विवृश्च्य जीवाशयमप्रमत्तः संपद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥ इति श्रीमद्भा० म०
एकादशस्कंधे भगवदुद्धवसंवादे सत्संगमाहात्म्यादिनिरूपणं नाम द्वादशोऽध्यायः॥१२॥श्रीभगवानुवाच॥सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ॥
सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव हि ॥ १ ॥ सत्त्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः ॥ सात्त्विकोपासया सत्त्वं ततो धर्मः प्रवर्तते ॥ २ ॥

मयमेव बहुरूपमिज्यैर्गुरुभिः कृत्वा यो वेद स वेदं वेदतत्त्वार्थं वेद ॥ २३ ॥ त्वं चैवं ज्ञात्वा कृतकृत्यः सर्वं साधनं त्यजेत्याह । एवमिति । एकांतभक्त्या शितेन तीक्ष्णेन ज्ञानकुठारेण । स्वतंत्रता वा द्वयोर्ज्ञानभक्त्योः । जीवोपाधित्रिगुणात्मकं लिंगशरीरं विवृश्च्य छित्त्वा परमात्मानं च संपद्य प्राप्याथास्त्रं साधनं त्यजेति ॥ २४ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ त्रयोदशेऽथ सत्त्वस्य वृद्धया विद्योदयक्रमः ॥ हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥ १ ॥ विद्याकुठारेण जीवाशयं विवृश्च्य साधनं त्यजेत्युक्तम् । ननु तत्र तमआदिगुणत्रयवृत्तिप्रतिबंधे सति कथं विद्योत्पत्तिरित्याशंक्य तन्निवृत्त्या विद्योत्पत्तिप्रकारमाह सत्त्वमिति सप्तभिः । तत्र यद्यानंदादिवदात्मधर्मा गुणाः स्युस्तर्हि तत्स्वरूपत्वात्तेषामनिवृत्त्या विद्योत्पत्तिर्न स्यान्न त्वेतदस्तीत्याह बुद्धेः प्रकृतेरेते गुणा न त्वात्मन इति । अतः सत्त्वेन सत्त्ववृद्ध्याऽन्यतमौ हन्यात् । रजस्तमोवृत्तीर्जयेदित्यर्थः । सत्त्वं च सत्यदयादिवृत्तिरूपमुपशमात्मकेन सत्त्वेनैव हन्यात् ॥ १ ॥ ननु गुणत्रयवृत्तीनां परस्परोपमर्दनरूपत्वात्कथं सत्त्ववृत्त्यैवेतरवृत्तयो

नाकारम् । इज्यैः पूज्यैः कृत्वा तद्द्वारेण ॥ * ॥ तत्र वेदोक्तसाध्येष्वधिकारभेदमाह—अदंतीत्येकेन । तत्र संन्यासिनः खलु सुखमिति तत्फलेन ब्रह्मलोकगतानां तत्रैव ब्रह्मणा सह मोक्षं प्राप्स्यतां पाताभावात् । एक मेव स्वरूपशक्तिवैचित्र्याद्बहुरूपं चतुर्व्यूहादिलक्षणं कचिन्मायामयं मायाशक्त्या जगद्रूपं यो वेद । मामिति शेषः । स वेदं वेदतत्त्वार्थं वेदेति ॥ २३ ॥ एवं ज्ञात्वा एक एवेति ज्ञात्वा । साधनं कर्म विचाररूपं स्वतंत्रभावात् स्वतंत्रमन्योऽन्यापेक्षत्वम् । जीवोपाधिलिंगशरीरनाशे "जरयत्याशु या कोशं निगीर्णमनलो यथा" इति कपिलोक्तेर्या भक्तिः 'वयुनेन येन चिच्छेद संशयपदं निजजीवकोशम्' इति पृथुकोपाख्यानोक्तेश्च भक्तिज्ञानयोर्द्वयोरेव स्वतंत्रत्वेन श्रवणादित्यर्थः । विवृश्च्य बाधयित्वा । अस्त्रं भक्तिज्ञानरूपम । कृतकृत्यस्य साधनैः प्रयोजनाभावात् 'स्वराडिव निपानखनित्रमिंद्रः' इति न्यायेनेति भावः ॥ * ॥ तदेवं वेदार्थं प्रदर्श्य 'तस्मात्त्वमुद्धवोत्सृज्य' इत्यादिवाक्यैकार्थेन निगमयति—एवमिति । एवं पूर्वोक्तप्रकारेण मद्रूपस्य सद्वृंदाश्रयस्य गुरूपासनया जातेन विद्याकुठारेण शुद्धजीवात्मज्ञानस्वरूपेण परशुना जीवाशयं भयमयसंसारतरुरूपं मद्द्वयवधायकं विवृश्च्य गुरूपासनयैव जातया प्रेमलक्षणयैकांतभक्त्यात्मानं सर्वाश्रयस्वरूपं मां संपद्य साक्षात्कृत्याथानंतरमेवास्त्रं तद्रूपत्वेन कृतरूपकं विद्याकुठारं त्यजेति मया सर्वत्राख्यानां त्वमेव लक्ष्यीक्रियसे यथा गीताशास्त्रे पूर्वमर्जुन इत्यतः स्वानिष्टं नाशंकनीयमिति भावः । तस्य तद्वृश्चनमात्रप्रयोजनत्वात्त्यागो युक्तः, भक्तेस्तु दृष्टेरेव सदा तत्तत्साक्षात्कारहेतुत्वान्न युक्त इति भावः । वक्ष्यते च—" संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम्" इति ॥ २४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ चित्तस्य गुणानां विषयाणां चान्योन्यविश्लेषस्य वर्णनम् ( १ ) । विद्योत्पत्तावाक्षिपति—नन्विति । तत्र विद्योत्पत्तौ । तन्निवृत्त्या गुणप्रतिबंधनिवृत्त्या । प्रतिबंधकत्वं च सामग्रीसमकालीनकार्यानुत्पादप्रयोजकत्वम् । यथा—सत्यप्यग्नौ दाहानुत्पाद इति । तत्र भवदाक्षेपे । तत्स्वरूपत्वादात्मस्वरूपत्वात् । तेषां गुणानाम् । एतदात्मस्वरूपत्वं गुणानाम् । यतो बुद्धेरतो हेतोः । इत्यर्थ इति—प्रबलेन निर्बलजयः संपद्यत एवेति भावः । शांतस्वभावत्वेन स्थितिरेव सत्त्वजयः स एव तद्धननमित्यर्थः ॥ * ॥ पूर्वोक्ताध्यायार्थेन निर्वाह्यनिर्वाहकसंगतिमवतारयति—पूर्वोक्तसत्संगलब्धो मद्भक्तिलक्षणो धर्मो वृद्धिं प्राप्तात्सत्त्वाद्भवेत् मालाकारेणोप्तं चंपकबीजविशेषं क्षीरसेकेन जातवीर्यो भवेद्यथेत्यर्थः ॥ १ ॥ पुनराशङ्कते—

धर्मो रजस्तमो हन्यात्सत्त्ववृद्धिरनुत्तमः ॥ आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥ आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ॥ ध्यानं मंत्रोऽथ संस्कारो दशैते गुणहेतवः ॥ ४ ॥ तत्तत्सात्त्विकमेवैषां यद्यद् वृद्धाः प्रचक्षते ॥ निंदंति तामसं यत्तद्राजसं तदुपेक्षितम् ॥ ५ ॥ सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये ॥ ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम् ॥ ६ ॥

नियमेन हंतव्यास्तत्राह । सत्त्वादिति । मद्भक्तिं लक्षयति यो धर्मः स मद्भक्तिरूप एव वा । सत्त्वमेव कथं वर्धेत तत्राह । सात्त्विकानां पदार्थानामुपासया सेवया सत्त्वं वृद्धं भवतीत्यर्थः ॥ २ ॥ स च धर्मो रजस्तमश्च हन्यात् । कुतः । न विद्यते उत्तमो यस्मात्स सर्वोत्तमः । यतः सत्त्ववृद्धिः सत्त्वस्य वृद्धिर्यस्मिन्कारणे सः अत एव तत्कार्यो धर्मप्रतिबंधोऽपि नास्तीत्याह । तस्मिन्नुभयस्मिन्हते तन्मूलः ते रजस्तमसी रागद्वेषादिना प्रमादालस्यादिना च मूलं यस्य सः ॥ ३ ॥ सात्त्विकोपासनया सत्त्वं वर्धत इत्युक्तं तानेव सत्त्ववृद्धिहेतून् दर्शयितुं सामान्यतो गुणत्रयवृद्धिहेतूनाह । आगमः शास्त्रम् । अपः आपः । क्वचिदागमोऽर्थ इति पाठः ॥ ४ ॥ एषु सात्त्विकादिनिर्णयमाह । एषामेव मध्ये यद्यद्वृद्धाः शास्त्रज्ञाः प्रचक्षते प्रशंसंति तत्तत्सात्त्विकम् । यच्च निंदंति तत्तामसम् । यत्तु तैर्वृद्धैरुपेक्षितं न स्तुतं न च निंदितं तद्राजसम् ॥ ५ ॥ सात्त्विकान्येवेति । निवृत्तिशास्त्राण्येव सेवेत न प्रवृत्तिपाखंडशास्त्राणि राजसतामसानि । तीर्थाप एव न गंधोदकसुरायाः । प्रजा जनाः । निवृत्तान् जनान्न प्रवृत्तदुराचारान् । विविक्तदेशं न रथ्याद्यूतदेशान् । कालं ब्राह्ममुहूर्तादिकं ध्यानादौ न प्रदोषनिशीथादीन् । कर्म च नित्यं न काम्याभिचारादीनि । जन्म च वैष्णवशैवदीक्षालक्षणं न शाक्तक्षुद्रदीक्षारूपम् । ध्यानं श्रीविष्णोर्न कामिनीविद्विषाम् । मंत्रं प्रणवादिकं न काम्यक्षुद्रान् । संस्कारमात्मनः शोधकं न तु केवलं देहगृहादीनाम् । ननु ज्ञानं महावाक्यश्रवणादेवोत्पद्यते किं तत्र

नन्विति । 'धर्मिकल्पनातो धर्मकल्पनमेव वरम्' इति न्यायमाश्रित्याह—भक्तिरूप एव वेति । सत्त्ववृद्धिं पृच्छति—सत्त्वमेवेति । तत्राक्षेपे । इत्यर्थ इति—सात्त्विकोपासनमेव सत्त्ववृद्धिहेतुरिति भावः ॥ * ॥ सत्त्वस्येतरगुणपराभावकत्वे बलमाह—मद्भक्तिः गुणभूतलक्षणं चिह्नं यत्र सः । यद्वा—मद्भक्त्यैव लक्षणं यस्य सः । तां विना तु विगीत एव धर्म इति भावः । 'धर्मः सत्यगुणोपेतः' इत्यारभ्य "मद्भक्त्यपेतमात्मानं न सम्यक्प्रपुनाति हि" इत्युक्तेः ॥ २ ॥ स च भक्तिलक्षणः । रजस्तमोहनने हेतुं पृच्छति—कुत इति । अत एव सर्वोत्तमत्वादेव । तत्कार्यो रजस्तमःकार्यः । उभयस्मिन्रजस्तमोद्वये ॥ * ॥ ० ॥ ॥ ३ ॥ उपोद्घातत्वेनान्यदप्याह—सात्त्विक इत्यादिना । अर्थो द्रव्यं गंगांभआदीत्यर्थः । पाठांतरे आगमः शास्त्रम्, अपो जलानि, प्रजा पुत्रादिः, देशो वाराणस्यादिः, कालो वसंतादिः, कर्म वर्णाश्रमादिविहितादि, जन्मोभयकुलविशुद्धादि, ध्यानं देवादिविषयम्, मंत्रो गायत्र्यादिः, संस्कारो गर्भाधानादिः, एते आगमादयो दशसंख्याकाः ॥ * ॥ ० ॥ ४ ॥ एष्वागमादिषु । वृद्धा ज्ञानवृद्धाः शास्त्रनिपुणाः प्रशंसन्ति साध्वेतदिति वदन्ति ॥ * ॥ वृद्धा व्यासादयः ॥ ५ ॥ निवृत्तिशास्त्राणि भक्तिज्ञानपराणि सत्पुराणवेदांतलक्षणानि, प्रवृत्तिपाखंडपराणि प्रवृत्तिपराणि, राजसानि पूर्वमीमांसादीनि, पाखंडपराणि बौद्धशास्त्राणि तामसानि । तीर्थापःश्रीगंगोदकाविष्णुतीर्थरूपाणि सात्त्विकानि, गंधोदकादीनि राजसानि, सुरापीतशेषादीनि तामसानि । निवृत्तान् हरिभक्तिविचारनिष्ठान्सात्त्विकान्, प्रवृत्तिपरा राजसाः, दुराचारा मद्यमांसादिसेवनास्तामसाः । विविक्तः सात्त्विको देशः, रथ्यापणादिस्तु राजसः, द्यूतपानादिदेशस्तामसः । ब्राह्ममुहूर्तो रात्रेरष्टमभागः सात्त्विकः,

वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ॥ एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ॥ ७ ॥ उद्धव उवाच ॥ वदंति मर्त्याः प्रायेण विषयान्पद मापदाम् ॥ तथापि भुंजते कृष्ण तत्कथं श्वखराजवत् ॥ ८ ॥ श्रीभगवानुवाच ॥ अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि ॥ उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥

सत्त्ववृद्ध्या धर्मेण वाऽत आह । यावत्स्मृतिरात्मापारोक्ष्यम् । यावच्च देहद्वयतत्कारणभूतगुणापोहस्तावत्पर्यंतं ज्ञानं भवतीत्यर्थः । अन्यथा तु नैतादृशम् ॥ ६ ॥ ननु गुणव्यतिकराज्जातो देहः कथं स्वाश्रयभूतान् गुणान्स्वत एवोत्पन्नया विद्ययाऽपोह्य स्वयमप्युपरमेत्तत्राह । वेणूनां संघर्षाज्जातोऽग्निर्यथा स्वत एवोत्पन्नाभिर्ज्वालाभिस्तद्वनं सर्वं दग्ध्वा पश्चात्स्वयं शाम्यति। एवं देहोऽपि तत्क्रियस्तस्याग्नेरिव क्रिया व्यापारो यस्य सः ॥७॥ ननु नियतेंद्रियतया सात्त्विकसेवायामियानस्ति पुरुषार्थस्तथाऽपि राजसा दीन्विषयान्दुःखमिति जानंतोऽपि कथं सेवंत इति पृच्छति । विदंतीति । पदं स्थानम् । श्वानो यथा भर्त्स्यमाना अपि । खरा यथा पद्भ्यां ताड्यमाना अपि खरी मनुधावंतः । अजा यथा निर्लज्जा हंतुमानीता अपि तद्वत् ॥ ८ ॥ मिथ्याऽभिनिवेशेन भुंजत इति सहेतुकमाह । अहमिति त्रिभिः । प्रमत्तस्य विवेकशून्यस्य देहादावह

ध्यानादावित्यादिना पूजनजपादिग्रहः । प्रदोषो राजसस्तदा ध्यानादिकं लोकरंजनार्थं प्रायो भवतीति राजसत्त्वम्, निशीथोर्धरात्ररूपस्तु तामस एव, निद्रानिरोधादिना प्रायस्तदा बुद्धेरस्थिरत्वादिति । नित्यं कर्म सात्त्विकं सत्त्वशुद्धिहेतुत्वात् , काम्यं पुत्रेष्ट्यादिराजसम्, अभिचारादि तामसं नरकहेतुत्वात् । आदिना निषिद्धग्रहः । वैष्णवशैवदीक्षारूपं सात्त्विकं जन्म, शाक्तं तु राजसम्, क्षुद्रा भूतप्रेतादयस्तद्दीक्षा तु तामस्येव परमार्थविघा तकत्वात् । श्रीहरिध्यानं सात्त्विकम् , कामिन्यादिध्यानं राजसम्, विद्विड्ध्यानं तु तन्मरणाद्यनिष्टचिंतनात्तामसम् । प्रणवादिर्मंत्रः सात्त्विकः, काम्यमंत्रस्तु राजसः । क्षुद्रमंत्रा भूतप्रेतादिमंत्रास्तामसास्तन्निष्ठानम् 'भूतानि यांति भूतेज्याः ' इत्यनिष्टश्रवणात् । आत्मनश्चेतसः शोधकः संसारः सात्त्विकः, देहगेहादिशोधको राजसः । आदिना वस्त्रादिग्रहः । तामसस्तु—मांसादिशोधनरूपो नरकहेतुत्वादिति दिक् । केवलपदेन श्रीकृष्ण सेवार्थं देहगेहादीनां संस्कारः कर्तव्य एवेत्यर्थः । अत्राक्षिपति—नन्विति । महावाक्यानि " तत्त्वमसि " इत्यादीनि तेषां श्रवणात् । तत्र ज्ञाने किं प्रयोजनमित्यर्थः । आत्मापारोक्ष्यमात्मसाक्षात्कारः । देहद्वयं स्थूल सूक्ष्मरूपं तत्कारणभूता गुणा रजआदयस्तेषामपोहो नाशः । इत्यर्थ इति—यावत्पर्यंतमात्मसाक्षात्कारो न जायते, यावच्च गुणापोहो न भवति तावत्पर्यंतं सात्त्विकसेवाधर्माचरणश्च कर्तव्यमेव, साध्यसिद्धि मंतरा साधनत्यागायोगादिति भावः ॥ * ॥ तावत्पर्यंतमिति शास्त्रादैक्यज्ञानं परोक्षज्ञानमेव स्यान्न त्वपरोक्षम् । आत्मापारोक्ष्यं तु सात्त्विकपदार्थसेवाजनितभक्तिलक्षणधर्मादेव । " प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् " इत्यादेः ॥ ६ ॥ पुनराशङ्कते—नन्विति । तत्राक्षेपे । देहो जिज्ञासुदेहः । उपलक्षणं चैतद्बोधादेः । बोधादिश्च तत्क्रियः स्वोत्पादकवेणुदाहवद्गुणान्संदह्य शाम्यतीत्यर्थः ॥ * ॥ ० ॥७॥ भवतु सात्त्विकसेवनं पुरुषार्थहेतुत्वात् । आदिना तामसग्रहः । तद्वत् खरादिवत् ॥ * ॥ यद्यपि विदंति तथापि श्वादयो ये न विदंति तद्वत् कथं भुंजते । प्रायेणेति—श्वादिभिर्निर्विशेषास्तावद्भुंजतामित्यर्थः । विषयांस्त्र्यादीन् । आपदां भाविदुःखानां पदमव्यभिचारिस्थानम् ' दुःखोदर्काणि संपश्यन् ' इति वक्ष्यमाणात् । अत्र श्वा मैथुनांते शुन्यां बंधं न जानाति, खरो रजकदर्शिततृणमुष्टिभोगांते महाभारवहनम् । अजा नानाभोजनाद्यंते शिरश्छेदं न जानंतीति तथा दृष्टांतितम् । यद्वा—श्वा भर्त्स्यमानोप्युच्छिष्टग्रासं ग्रसत्येवेति ॥ ८ ॥ वस्तुतत्त्वज्ञानाभावात्तेषां भोग इत्याह—मिथ्येत्यादि । इत्यर्थ इति—देहाद्यहंबुद्ध्या सात्त्विकमनो राजसत्व

**रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ॥ ततः कामो गुणध्यानाद्दुःसहः स्याद्धि दुर्मतेः ॥ १० ॥ करोति कामवशगः कर्माण्यविजितेंद्रियः ॥ दुःखोदर्काणि संपश्यन्रजोवेगविमोहितः ॥ ११ ॥ रजस्तमोभ्यां यदपि विद्वान्विक्षिप्तधीः पुनः ॥ अतंद्रितो मनो युंजन्दोषदृष्टिर्न सज्जते ॥ १२ ॥ अप्रमत्तोऽनुयुंजीत मनो मय्यर्पयञ्छनैः ॥ अनिर्विण्णो यथाकालं जितश्वासो जितासनः॥१३॥एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः॥सर्वतो मन आकृष्य मय्यद्धाऽवेश्यते यथा॥१४॥उद्धव उवाच ॥ यदा त्वं सनकादिभ्यो येन रूपेण केशव ॥ योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम्॥१५॥**

मिति मिथ्याबुद्धिर्हृदि यथावदुत्सर्पति ततोऽहंबुद्धेश्च वैकारिकं सत्त्वप्रधानमपि मनः प्रति घोरं दुःखात्मकं रज उत्सर्पति । मनो व्याप्नोतीत्यर्थः ॥ ९ ॥ इदमेवमिदमेवं भोग्यमिति सविकल्पः संकल्पः स्यात्ततश्च अहो रूपमहो भाव इति गुणाभिध्यानाद्दुर्धरः कामः स्यात् ॥ १० ॥ ततो विषयान् भोक्तुं कर्माणि करोति दुःखैकफलानि संपश्यञ्जानन्नपि ॥ ११ ॥ एवं चेन्न कस्यापि दुःखनिवृत्तिः स्यादित्याशंक्याह । यदपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्च तथापि विद्वान्विवेकी पुनर्मनो निरुंधन्न सज्जते ॥ १२ ॥ विषयदोषदृष्ट्याऽपि मनोनिरोधाशक्तौ सुखं तन्निरोधोपायमाह । अप्रमत्त इति । अनिर्विण्णोऽनलसः । यथाकालं त्रिषवणम् । मयि परमानंदरूपेऽर्पयन्स मादध्यात् ॥ १३ ॥ विषयैः संग्रथितस्य मनसस्तद्वियोगेनेश्वरनिष्ठत्वमसंभावितं मन्यमानं प्रति तन्निरूपणायेतिहासमुपक्षिपति । एतावानिति । यथा यथावन्मय्यावेश्यते एतावानित्यर्थः॥ १४ ॥मच्छिष्यैरित्युक्ते तेषामतिज्यायसामनेन रूपेण निरूपणासंभवात्पृच्छति । यदेति । तं कालं तदेतद्रूपं च वेदितुमिच्छामि तदेतत्कथयेति॥ १५॥

मेतीति भावः ॥ * ॥ प्रमत्तस्य पूर्वकर्मविशेषेण लुप्तविवेकस्य देहादावहमित्यन्यथाबुद्धिर्यथोत्सर्पति अतिशेते तथारजोप्युत्सर्पति ततो हेतोर्वैकारिकं सात्त्विकमपि मन उत्सर्पति दुर्वशं भवति ॥ * ॥ **दीपिका**—मिथ्याभिनिवेशो नाम ज्ञात्वापि स्वीकृतस्य पुनस्त्यागासहिष्णुत्वम् । सहेतुकं सयुक्तिकम् । युक्तिश्चेयं—विषयाणां दुःखरूपत्वज्ञानेऽपि मनुष्या देहादौ यथावन्मिथ्याज्ञानवंतो यथावद्विवेकशून्यत्वात् पश्वादिवदिति ज्ञेयम् ॥ ९ ॥ काम इच्छा । दुर्धरो वोढुमशक्यः ॥ * ॥ गुणाधानाच्छ्रेष्ठत्वारोपात् । दुर्धरोऽसह्यः ॥ १० ॥ ततो दुर्द्धरत्वादेव दुःखमुदर्क उत्तरफलं येषां तानि पश्यन्कथं करोतीति चेत्तत्राह—रजोवेगेति ॥ * ॥ दुःखोदर्काणि दुःखोत्तरफलानि ॥ ११ ॥ एवं चेद्रजोवेगेन विमोहिते सति कर्मत्यागाभावान्न कस्यापि दुःखनिवृत्तिः संसारनिवृत्तिः, तथा च मोक्षशास्त्रं मुधा स्यादिति चेदज्ञस्यैव रजोवेगकृतं दुःखं न तत्त्वज्ञस्येत्याह—अतंद्रितः सावधानः । पुनरिति वीप्सार्थे, पुनःपुनर्दोषदृष्टिर्विषयेण सज्जते । शरीरयात्रार्थं विषयान्सेवमानोऽपि तैर्न बध्यत इति भावः ॥ * ॥ एवं चेदिति—चेद्यदि दुःखोदर्कत्वज्ञानेऽपि कर्मकरणं तर्हि विरक्त्यभावान्न कस्यापि दुःखनिवृत्तिः स्यादित्यर्थः ॥ १२ ॥ तन्निरोधोपायं मनोनिरोधोपायम् । युंजीत समादध्यात् निरुंध्यात् । यद्वा—मामित्यध्याहृत्य युंजीत ध्यायेत् "योगः सन्नहनोपायध्यानसंगतियुक्तिषु" इति यादवः । अनिर्विण्णः प्रयासवैफल्ये निर्वेदरहितो वा ॥ * ॥ सुखं मयि मनोर्पणे नानायासं यथा स्यात्तथा तन्निरोधोपायम् । मनोनिरोधसाधनं स्वस्मिन्परमसुंदरे तद्धारणमिति ॥ * ॥ **दीपिका**—अतंद्रित इत्यस्यार्थमाचष्टे—अप्रमत्त इति । कुत्र मनो युंजन्नित्यत आह—मयीति । अनिर्विण्ण इति—यदपि मनोनिरोधो न स्यात्तदपि तत्प्रयत्नान्न विरमेदिति भावः ॥ १३ ॥ तद्वियोगेन विषयवियोगेन । इत्यर्थ इति—चित्तवृत्तिनिरोधस्यैव योगत्वादिति भावः ॥ * ॥ तद्वियोगेन विषयविच्छेदेन । असंभावितमघटितम् । तन्निरूपणाय ईश्वरनिष्ठत्वोपपादनाय । उपक्षिपति आरभते । अद्धा साक्षादिति वैराजधारणा व्यावृत्तेति ॥ १४ ॥ लोकोपकाराय मेरुशृंगोपरिस्थितौ पथोपदेशवत्सनकाद्यादिष्टयोगोपदेशनमत्यश्रद्धेयमिति भावेन स्वाम्याह—मच्छिष्यैरित्यादिना ॥ * ॥ अतिज्यायसामतिवृद्धानाम् । अनेन कृष्णाख्येन । त्वं नित्यनराकृतिपरब्रह्मरूपः सर्वावतारी । यदा येन रूपेण

श्रीभगवानुवाच ॥ पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ॥ पप्रच्छुः पितरं सूक्ष्मां योगस्यैकांतिकीं गतिम् ॥ १६ ॥ सनकादय ऊचुः ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ॥ कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः ॥ १७ ॥ श्रीभगवानुवाच ॥ एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ॥ ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥ स मामचिंतयद्देवः प्रश्नपारतितीर्षया ॥ तस्याहं हंसरूपेण सकाशमगमं तदा ॥ १९ ॥ दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवंदनम् ॥ ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥ इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥ २१ ॥ वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ॥ कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः ॥ २२ ॥

मानसाः पुत्राः । सूक्ष्मां दुर्ज्ञेयाम् । ऐकांतिकीं गतिं परां काष्ठाम् ॥ १६ ॥ तदेवाह । गुणेष्विति । विषयेषु स्वभावतो रागादिवशाच्चेतः प्रविशति ते चानुभूता विषया वासनारूपेण चेतसि प्रविशंति । अतितितीर्षोर्विषयानतिक्रमितुमिच्छोः ॥ १७ ॥ एवमिति । महान्देवोऽपि स्वयंभूरपि भूतानां स्रष्टाऽपि ध्यायमानो विचारयन्नपि प्रश्नस्य बीजं यदज्ञानादयं प्रश्नस्तन्नाविंदत् । यतः कर्मविक्षिप्तधीः ॥ १८ ॥ प्रश्नस्य पारमुत्तरमभिप्रायो वा तस्य तितीर्षया जिज्ञासया हंसरूपेणेति । यथा हंसो नीरं क्षीरं च पृथक्कर्तुं शक्त एवमहं गुणांश्चेतश्चेति द्योतयितुं हंसरूपेण गतोऽस्मीति ॥ १९ ॥ २० ॥ इत्यहं मुनिभिः पृष्ट इति पृथग्वाक्यम् । यदवोचमिति च पृथक् । अतोऽस्मच्छब्दावृत्तिरदोषः । तेभ्यो यदवोचं तन्मे वचनं निबोध ॥ २१ ॥ देहादिविविक्तात्मज्ञाने सति तन्निष्ठस्य रागाद्यसंभवात्स्वयमेव विषयचेतसोर्विश्लेषो भवतीति

तं कालं तद्रूपं च ज्ञातुमिच्छामि ॥ १९ ॥ विश्वासायेतिहासमाह–योगस्य सर्वत आकृष्टचित्तस्य भगवति निवेशलक्षणस्य ॥ * ॥ ० ॥ १६ ॥ तदेव प्रश्नवाक्यम् । अन्योन्यसंत्यागः विषयेभ्यश्चेतसः आकर्षणं चेतसो विषयाणामाकर्षणं पृथक्करणं कथमित्यर्थः । तदुच्यतामिति शेषः ॥ * ॥ **दीपिका**–तदेवैकांतिकगतेः प्रश्नकरणमेव । स्वभावतः स्वरसत एव । रागादिवशादिति–अनुकूलेषु रागः प्रीतिः । आदिना प्रतिकूलेषु द्वेषस्तद्वशात् । वासनारूपेण संस्काररूपेण ॥ १७ ॥ चतुर्भिरपिभिः प्रश्नस्यातिगहनत्वमाह स्वामी । यदज्ञानाद्यस्यात्मनोऽज्ञानात् । अयं चेतोविषयविश्लेषरूपः । कुतो नाविंददिति चेदाह–यत इति । “ कर्मावेशितचित्तानां ब्रह्मावेशः सुदूरतः । वारुणीदिग्गतं वस्तु व्रजन्नैंद्रीं किमाप्नुयात् ॥ ” इति मैत्रेयोक्तेः । यद्वा–प्रश्नो बीजं हेतुर्यस्य तमुत्तरमित्यर्थः ॥ * ॥ यदज्ञानात् यस्यात्मस्वरूपस्याज्ञानात् । अयमन्योन्यत्यागरूपप्रश्नः । तत् आत्मस्वरूपम् । इति **दीपिका * संदर्भस्तु**–एवमिति–“ यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ ” इति । “एतन्मतं समातिष्ठ परमेण समाधिना । भवान्कल्पविकल्पेषु न विमुह्यति कुत्रचित् ॥ ” इति । “ ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ” इति लब्धभगवद्वरत्वेपि ‘ न भारती मेंग मृषोपलक्ष्यते ’ इत्यादिना व्यंजिततादृशस्वानुभवत्वेपि ‘योंतर्हितः ’ इत्यादौ ‘ पित्रानुवर्णितरहः ’ इति श्रीभगवन्तं प्रति सनकादीनां वाक्येऽपि च ब्रह्मणः कर्माधीनत्वं संप्रति स्वमहिमव्यंजनाय भगवदिच्छयैव ज्ञेयम् । हंसोपनिषदि वाद्यादिस्तंभेनेतिहासवत् ॥ १८ ॥ पूरणं पारः “ पारं परतटे क्लीबमुत्तराशययोर्द्वयोः ” इति निरुक्तिः । हंसरूपेणागमनेभिप्रायमाह–यथेति । स ब्रह्मा । तस्य ब्रह्मणः । सकाशं समीपम् । तदा चिंतनावसरे ॥ * ॥ । ० ॥ १९ ॥ ते सनकादयः ॥ * ॥ ० ॥ २० ॥ ० ॥ * ॥ कृतपादाभिवंदनात्वाज्ञानजोऽयं प्रश्नः किंतु प्रश्नेनैव हंसाभिप्रायज्ञानेन पूर्वप्रश्नोद्धारणार्थः । अत एवाह–तत्त्वजिज्ञासुभिरिति ॥ २१ ॥ तन्निष्ठस्यात्मज्ञाननिष्ठस्य । विषयप्रवृत्तिहेतो रागादेः । आदिना संकल्पादिग्रहः । तदुपाधेरात्मोपाधेः । भूतसंघस्य देहस्य । परमार्थरूपस्य सन्यस्यात्मनः । अविशेषे विशेषातीते, एकस्मिन्नित्यर्थः । इत्यर्थ इति–नियोक्तृ

पंचात्मकेषु भूतेषु समानेषु च वस्तुतः ॥ को भवानिति वः प्रश्नो वाचारंभो ह्यनर्थकः ॥ २३ ॥ मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपींद्रियैः ॥ अहमेव न मत्तोऽन्यदिति बुध्यध्वमंजसा ॥ २४ ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ॥ जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥

वक्तुं प्रश्नखंडनमिषेणैव तावदात्मानात्मविवेकमाह वस्तुन इति त्रिभिः। किमात्मनोऽयं प्रश्नस्तदुपाधेर्भूतसंघातस्य वा। यद्यात्मनस्तर्हि तस्य वस्तुतः परमार्थरूपस्य नानात्वे सति हे विप्रा वो युष्माभिः कृतः प्रश्न ईदृशो बहुषु निर्धारणरूपः कथं घटेत। वक्तुरुत्तरदातुर्वा मे मम क आश्रयः। अविशेषे आत्मनि कं जातिगुणादिविशेषमाश्रित्योत्तरं वक्ष्यामीत्यर्थः ॥ २२ ॥ भूतसंघविषयत्वेऽप्ययं वः प्रश्नो वाचारंभो वाङ्मात्रेणारब्धः। यतोऽनर्थकः। कुतः। भूतेषु देवमनुष्यादिदेहेषु पंचभूतात्मकेष्वतः समानेष्वभिन्नेषु। पुनश्च वस्तुतः परमकारणात्मना अभिन्नेषु "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः ॥ २३ ॥ तत्र पंचात्मकत्वं प्रत्यक्षादिसिद्धमेवेति परमकारणाभेदमेवोपपादयति। मनसेति। मनआदिभिर्यद्यद्गृह्यते तत्तदहमेवेत्यर्थः। अंजसा तत्त्वविचारेण। एतेनैव सर्वात्मकोऽहमित्यंजसाऽप्युत्तरमुक्तं भवति ॥ २४ ॥ एवं प्रश्नखंडनमिषेणैवात्मस्वरूपं सामान्यतो निरूप्य ब्रह्मणोपि दुष्परिहरं यत्पृष्टं तत्रोत्तरमाह गुणेष्वित्यादिना यावदध्यायसमाप्ति। अयमभिप्रायः। यदि

प्रतिवक्रोरैक्ये प्रश्नोत्तरद्वयमेव न संभवतीति भावः। आत्मनो नानात्वस्वीकारेपि अनेकस्मिन्बहुत्वसंख्याविशिष्टे वस्तुन्येकत्वसंख्याविशिष्टत्वेन प्रष्टुं प्रतिवक्तुश्चानुपपन्नत्वादिति भावः ॥ * ॥ किं मां जीवं ज्ञात्वायं को भवानिति प्रश्नः क्रियते भौतिकदेहं ज्ञात्वा वा किंवेश्वरं ज्ञात्वेति विकल्प्य जीवपक्षं दूषयति—आत्मनो जीवरूपस्य वस्तुनो यद्यनानात्वं सर्वस्यापि तस्य चिदेकरूपतया विशेषांशनिर्देशायोग्यत्वं तर्हीदृशः प्रश्नः कथं घटेत। यदीति निश्चये। तस्माद्विप्रा वो युष्माकं प्रष्टॄणां वक्तुर्वा मम क आश्रयः। युष्माभिः किं जात्यादिविशेषमाश्रित्य क इति प्रयुक्तं मया चोत्तरयितव्यमित्यर्थः ॥ २२ ॥ भूतसंघविषयत्वेपि देहविषयत्वेपि। आदिना पितृगंधर्वासुरादिग्रहः। अतः पंचभूतात्मकत्वात्। वस्तुत इति पदं परब्रह्मपरम्। वाङ्मात्रेणारब्धस्यासत्यत्वे प्रमाणमाह—"वाचारंभणम" इत्यादिः ॥ * ॥ **संदर्भः**—देहपक्षं दूषयति—पञ्चेति। वस्तुतो वस्तुविचारे सति देहस्थानां भूतानां पंचात्मकत्वात्को भवानित्येकत्वेन प्रश्नो नार्थवान् न घटते तस्मात्के यूयं पञ्चेत्युच्यतामिति भावः। यदि च देहरूपाणां तेषां मिलितत्वेनैकत्वं मन्यध्वे तथाप्यात्मवत्समानत्वात्प्रश्नोयं नार्थवान्। ननु विदुषामपि प्रश्नोत्तरेष्वेवमेव व्यवहारो दृश्यते यतो भवतापि विप्रा इति व इति चोक्तमित्याशंक्याह—वाचारंभ इति। मम त्वयं व्यवहारो ह्यनर्थक एव मया तु वाङ्मात्रेणारभ्यते युष्मद्वचनानुवादरीत्या युष्मत्प्रश्नवदवटमानत्वादनर्थकमेत्र प्रत्युक्तमित्यर्थः। तथैवास्माभिरपीति चेद्ब्रूध्वे तर्हि यूयमज्ञानिन एव कथं तत्त्वं जिज्ञासध्वे किमत्र न लजध्व इति भावः, भवद्भिश्च मद्विधवदिति चेद् ज्ञातमेव तं किं पृच्छतेति भावो वा ॥ २३ ॥ तत्र तयोः पंचात्मकत्वपरमकारणाभिन्नत्वयोर्मध्ये। इत्यर्थ इति—"सर्वं खल्विदं ब्रह्म" "ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतेः, 'इदं हि विश्वं भगवानिवेतरः' इत्याद्युक्तेश्चेति भावः। एतेन सर्वेन्द्रियग्राह्यवस्तुनः स्वाभिन्नत्वकथनेन ॥ * ॥ ईश्वरपक्षं दूषयति—मनसेति। परमेश्वरस्य मे सजातीयभेदो नास्ति परमेश्वरांतराभावात्। मनआदिभिर्यद्गृह्यते तदहमेव न त्वन्यत् मच्छक्तिकार्यत्वादिति विजातीयभेदोऽपि नास्त्यतः को भवानिति प्रश्नो न घटत इति भावः। ग्राह्यस्याधिष्ठानमंतरा प्रतीत्यनुपपत्तेः। कल्पितस्याधिष्ठानाभेद एव प्रसिद्धः ॥ २४ ॥ एवमुक्तरीत्या। सामान्यतः सर्वात्मकोऽहमित्येवंरूपेण। दुष्परिहरम् अज्ञातोत्तरम्। तत्र प्रश्ने। अत्राशयं विशदयति—अयमभिप्राय इति। ततस्तदा। तद्वियोगो विषयचित्तवियोगः। तस्य तु

गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ॥ गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥
जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ॥ तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २७ ॥

कर्तृत्वभोक्तृत्वादिरूपतया विषयैः संग्रथितं चित्तं बुद्ध्यादिशब्दवाच्यमेव जीवस्य स्वरूपं भवेत्ततस्तद्वियोगो न घटेत तस्य तु स्वरूपमहं ब्रह्मैव । चित्ताध्यासेन तु तत्स्वभावतया विषयैः संग्रथितम् । अतः स्वस्य ब्रह्मत्वभावनया विषयाणां च मिथ्यात्वानुसंधानेन सर्वतो निर्विद्य भगवंतं भजतो भवत्येव परिपूर्णस्वरूपावस्थानमिति । हे प्रजाः पुत्रकाः । सत्यं गुणेषु चेत आविशति गुणाश्च चेतासि एवं गुणाश्चेतश्चोभयं ग्रथितं मदात्मनो ब्रह्मरूपस्य जीवस्य देहोऽध्यस्त उपाधिर्न तु स्वरूपम् ॥ २५ ॥ तस्मादभीक्ष्णं पुनःपुनर्गुणसेवया तत्संस्कारेण गुणेष्वाविशच्चित्तं ते च पुनर्वासनारूपेण चित्ते प्रकर्षेण भवंति संतीति तथा ते गुणाश्चेतश्च एवं यदुभयं तन्मद्रूपः संस्त्यजेत ॥ २६ ॥ ननु जाग्रदाद्यवस्थावतः कुतः कूटस्थत्वरूपता तत्राह । जाग्रज्जागरः स्वप्नः सुषुप्तं चेति बुद्धेरेता वृत्तयो न तु जीवस्य ताश्च न स्वाभाविक्यः । किंतु । "सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ॥ प्रस्वापं तमसा जंतोस्तुरीयं त्रिषु संततम् ॥" इति वक्ष्यमाणक्रमेण गुणत एव । जीवस्तु विलक्षणस्तदवस्थारहित एव विनिश्चितः ।

जीवस्य तु स्वरूपं वस्तुतः "तत्त्वमसि" इत्यादिवाक्यैरहं वासुदेवस्वरूपो ब्रह्मैव । तत्स्वभावतया चित्तस्य विषयचिंतनस्वभावतया । यतो जीवो मत्स्वरूपं ब्रह्मैव अतो हेतोः । ब्रह्मत्वभावनया ब्रह्मैवाहं न संसारीति चिंतनेन । मिथ्यावस्तुचिन्तनाच्चिंतकोपि मिथ्या भवतीत्यतस्तच्चिन्तनं परित्यज्य । सत्यमित्यर्द्धांगीकारेऽव्ययम् । देहशब्द उपाधिपरः, उपाधिश्चाध्यस्त एव न स्वरूपतस्तत्त्यागो भवत्येवेत्यर्थः ॥ * ॥ नन्वेवं सति गुणाश्चेतश्च मिथः प्रसज्यैव स्थितानि भवंत्यपि प्रसज्जंति किमुत जीव इत्यस्माकं द्विगुणीभूयैव प्रश्नो जात इत्याशंक्य जीवे तेषामस्वाविकसंबन्धं कथयन्स्वस्मिंश्च तत्कैमुत्यं दर्शयति—गुणेष्विति । गुणेष्वित्यादिकं सत्यमेव किंतु जीवस्य तदुभयमपि देह उपाधिमात्रेणैव जीवे संबद्धमित्यर्थः । यतो मदात्मनः । अहमेवात्मा परमांशिरूपो यस्य तस्य मदंशस्य मयि तु तत्संबन्धः सुतरामेव नास्तीत्यर्थः । अयं भावः—यथा सूर्यांशानां रश्मीनां सूर्यकार्यभूतेन मेघेन स्वाभाविकसबन्धो नास्ति सूर्यस्य तु दूरत एव तद्वार्ता, तथा जीवानां मम च संबंध इति **दीपिका** ॥ * ॥ चित्ताध्यासेन चित्तमेवाहमित्यभिमानेन तत्स्वभावतया चित्तस्वभावत्वात् चित्तस्य संग्रथितत्वे जीवस्वरूपमपि संग्रथितमित्येवार्थः । अतो जीवस्य ब्रह्मस्वरूपत्वात् ॥ २९ ॥ यतो न स्वरूपं तस्मादित्यर्थः । तथाहि—गुणाश्च न संतः किन्तु चित्तप्रभवाः स्वाप्नवदविद्याकल्पितास्तदधिष्ठानमद्रूपः सन्नुभयं त्यजेन्मिथ्यात्वदृष्ट्या बाधयेदित्यर्थः ॥ * ॥ तस्मादध्यस्तोपाधित्वात् । जीवस्तु स्वशक्त्या तान्वियोजयितुं न शक्नोति किंतु मदभेदोपासनादिलब्धमच्छक्त्यंशेनैवेत्याह—गुणेषु चेति । मद्रूपो मदभेदभावनाविष्ट इति ज्ञानानुसारेणोक्तम् । भक्तिरूपोपासना चेन्मम रूपं यत्र स ध्यातेति ज्ञेयमिति **दीपिका** ॥ * ॥ चित्ते सदा गुणास्तिष्ठन्ति तच्च कथं तांस्त्यक्तुं प्रभवेदिति भावः । प्रकर्षेण भवन्तीति—सदा तत्र वर्तन्त इति । ते गुणाश्च कथं वा तत्त्यक्तुं प्रभवंत्विति भावः । ज्ञानिनां कष्टेन परस्परतदुभयत्याजना च निष्प्रयोजनैव । तैरुभयैरपि प्रायः प्रयोजनं नास्ति तेषामित्याह—मद्रूपो मदभेदभावनावेशान्मन्मयः सन् ज्ञानी उभयं त्यजेत् । भक्तानां तु मत्सेवामेव परमपुरुषार्थत्वेन निश्चितवतां मद्रूपगुणलीलानिमग्नचेतसः सकाशात्स्वत एव गुणा अपयान्तीति न तेषां चेतोगुणयोः परस्परत्यागो दुर्घटः । मन्मयीभावस्तु तेषां नेष्ट इति **विश्वनाथः** ॥ २६ ॥ जाग्रदाद्यवतस्त्वद्रूपत्वं नः संभवतीत्याक्षिपति—नन्विति । विनिश्चितः शास्त्रेणेति शेषः । अत्र

यर्हि संसृतिबंधोऽयमात्मनो गुणवृत्तिदः ॥ मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥ २८ ॥ अहंकारकृतं बंधमात्मनोऽर्थविपर्ययम् ॥ विद्वान्निर्विद्य संसारचिंतां तुर्ये स्थितस्त्यजेत् ॥२९॥ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ॥ जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥ असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ॥ गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥

कुतः । तासां साक्षित्वेन ॥ २७ ॥ ननु तर्हि कथमहं जागर्मीत्यादिप्रतीतिस्तत्राह । यर्हीति । यर्हि यस्मात्सम्यक् सृतिः सरणमनयेति संसृतिर्बुद्धिस्तया बंधोऽयमात्मनो गुणवृत्तीर्ददाति तस्मान्मयि तुर्ये अवस्थात्रयसाक्षिणि स्थितः सन्निमं संसृतिबंधं जह्यात् । तत्तदा गुणचेतसां गुणानां चेतसश्चान्योन्यं त्यागो भवति ॥ २८ ॥ कथं संसृत्या बंधः कथं च तं जह्यात्तदाह । अहंकारेण कृतं बंधमात्मनोर्थविपर्ययमानंदाद्यावरणेनानर्थहेतुं विद्वान् जानन्सन्निर्विद्य दुःखमेतदिति ज्ञात्वा तुर्ये स्थितो भूत्वा संसारचिंतां संसारो बुद्धिस्तस्मिंश्चिंतामभिमानं तत्कृतां भोगचिंतां च त्यजेदिति ॥ २९ ॥ यावदेव न त्यजेत्तावत्तस्य कर्म ज्ञानादि सर्वं व्यर्थमित्याह । यावदिति । यद्यपि जागर्ति कर्मादिषु तथापि स्वपन्स्वमान्पश्यन्निव भवति । यतोऽज्ञः असम्यग्दर्शी । अज्ञजागरस्य स्वप्नत्वे दृष्टांतः । स्वप्न इति ॥ ३० ॥ ननु कथं वेदप्रमितवर्णाश्रमकर्मादिनानाधीर्निवर्तेत तत्राह । असत्त्वादिति । भावानां देहादीनां तत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि हेतवः कर्माणि चास्यात्मनो मृषा । अवि

हेतुमनुयुंक्ते–कुत इति । तासां जाग्रदादीनाम् ॥ * ॥ वस्तुतस्तु निर्लेपस्य जीवस्य गुणैश्चित्तादिभिः संबंध एव नास्ति मिथ्याध्यासत्याग एव तत्त्याग उच्यत इत्याह–जाग्रदिति । 'सत्त्वाज्जागरणम्' इत्यादिवक्ष्यमाणगुणाद्धेतोर्बुद्धेर्वृत्तयः, जीवस्तु विलक्षणस्तत्तदवस्थारहित एव । कुत इति तैः ॥ २७ ॥ अहमाकारेण प्रतीतिविरोधमाशंकते–नन्विति । यदि साक्षी तर्हीति । तत्र प्रतीतौ । यर्हीति पंचम्यर्थे र्हिल् । आत्मनो जीवात्मनः । गुणवृत्तीर्जाग्रदाद्याः । संसृतिबंधं बुद्धिसंबंधम् । तदा स्वरूपावस्थितिसमये । बुद्धिसंबंधाभावेन ग्राहकाभावे ग्राह्याभावस्स्वयमेव भवति न तत्र यत्नांतरापेक्षेति भावः ॥ * ॥ यद्यपि गुणाः सर्वथैव जीवस्य न भवन्ति तदपि देहाध्यासप्रसादाद्गुणवृत्तीः स प्राप्नोति । ततश्च देहाध्यासभंगे सत्येव स तास्त्यजतीत्याह–यर्हि आत्मनो जीवस्यायं देहाध्यासरूपः संसारबंधोभूत्तर्ह्येव स गुणवृत्तिदः जीवाय तस्मै गुणवृत्तिप्रदोभूत्, यर्हि च मयि तुर्ये स्थितः सन् जह्यात् इमं संसृतिबंधं त्यजेत् तदा गुणानां चेतसश्च स्वत एव त्यागो भवति ॥ २८ ॥ बंधतत्त्यागप्रकारं पृच्छति–कथमिति । तत्कृतां बुद्ध्यभिमानकृताम् ॥ * ॥ ० ॥ २९ ॥ एवं बुद्ध्यभिमानकृतभोगत्यागप्रकारेण त्यागं न कुर्यात् । युक्तिभिर्वक्ष्यमाणाभिः । जागरणं जागरत्वबुद्धिः ॥ * ॥ एवं निर्वेदप्रकारेण यावदभिमानकृतं नानात्वं न त्यजेत् । युक्तिभिः 'यो जागरे' इत्यत्र वक्ष्यमाणाभिः । तावज्जागर्त्यपि संसारबंधान्मुक्तोपि स्वपन्संसारबद्ध एव अज्ञः स अज्ञान्युच्यते । स्वप्नमध्य एव स्वप्नाद्यथा जागरणं तथैव तस्याज्ञानमध्य एव ज्ञानमित्यर्थः ॥ ३० ॥ वेदबोधितकर्मणां त्याग एव दुःशक इत्याशङ्कते–नन्विति । तत्कृता देहादिकृता । अविद्या देहाद्यात्मबुद्धिः सा विद्यतेऽस्येत्यविद्यावान्स विषयो यस्य स तथा । इति भाव इति–ज्ञानिनो विधिनिषेधातीतत्वेनाज्ञ एव विधिनिषेधाकिंकर इति तात्पर्यम् ॥ * ॥ **दीपिका**–वेदप्रमिता वेदप्रमाणज्ञापिताः । ननु " अष्टवर्षं ब्राह्मणमुपनयीत " " स्वाराज्यकामो राजा राजसूयेन यजेत " इत्यादिभेदप्रतिपादकवेदस्य का गतिरिति चेत्तत्राह–अविद्यावद्विषय इति । अविद्या स्वरूपाज्ञानं तद्वंत

यो जागरे बहिरनुक्षणधर्मिणोऽर्थान्भुंक्ते समस्तकरणैर्हृदि तत्सदृक्षान्॥स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिंद्रियेशः॥३२॥ एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः॥ संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ॥३३॥ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम्॥विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः३४॥

यावद्विषयो वेद इति भावः ॥ ३१ ॥ युक्तिभिरित्युक्तं ता एव युक्तीराह । य इति । अर्थान्स्थूलान्देहादीन्समस्तकरणैश्चक्षुरादिभिर्भुंक्ते । कथंभूतान् । अनुक्षणधर्मिणः क्षणिकबाल्यतारुण्यादिधर्मवतः । यश्च स्वप्ने हृदि जागरदृष्टसदृशान्वासनामयान्भुंक्ते यश्च सुषुप्ते तान् सर्वानुपसंहरति स एकः । कुतः । त्रिगुणवृत्तिदृगवस्थात्रयद्रष्टा । ननु जाग्रदवस्थां सर्वेंद्रियाणि पश्यंति । स्वप्नं मनः । सुषुप्तिं तत्संस्कारशेषा बुद्धिः । कथमात्मा तद्द्रष्टा तत्राह । इंद्रियेशः । ननु इंद्रियेशा अपि विश्वतैजसप्राज्ञा भिन्नाः । न । कुतः । स्मृत्या प्रतिसंधानेन सर्वावस्थास्वन्वयात् । यः स्वप्नमद्राक्षं यश्च तदनंतरं न किंचिदवेदिषं स एवैतर्हि जागर्मीत्युपाधिभेदेन विश्वादिव्यवहार इति भावः । एतेन बाल्युवाद्यवस्थास्वपि प्रतिसंधानेनात्मैक्यं द्रष्टव्यम् ॥ ३२ ॥ ततः किमत आह । एवमिति । गुणतो या एता मनसस्त्र्यवस्थास्ता मदविद्यया मयि कृता न तत्त्वतः संतीति निश्चित आत्मरूपोऽर्थो यैस्ते यूयमखिलसंशयानामाधिम् आधीयंतेऽस्मिन्नित्याधिरहंकारस्तं संछिद्य हार्दं हृदि स्थितं मा मां भजत । केन छित्त्वा तदाह । अनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च । तीक्ष्णेन ज्ञानखड्गेन ॥ ३३ ॥ अनुमानादि दर्शयति । ईक्षेतेति । इदं जगद्विभ्रममीक्षेत । तत्र हेतवः । मनोविजृंभितत्वात् दृष्टत्वाद्विनाशित्वाच्च स्वप्नवत् । अतिचंचलत्वाच्चालातचक्रवत् । ननु भ्रमोऽपि निर्विषयः कथं स्यात्तत्राह । विज्ञानमिति । विज्ञानमिति निगमनम् । तस्मात्त्रिधा योऽयं

एव विषया अधिकारिणो यस्य तादृशो वेदः । तथा च—" त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन " इतिवदात्मानुभविनो न तत्राधिकार इत्यर्थः ॥ ३१ ॥ पूर्वोक्तं साधयति—युक्तिभिरिति । एकत्वे हेतुं पृच्छति—कुत इति । आत्मनो द्रष्टृत्वमाक्षिपति—नन्विति । इंद्रियेशः सर्वबाह्याभ्यंतरेंद्रियप्रवर्तकत्वेनात्मैव द्रष्टेत्यर्थः । पुनराक्षिपति—नन्विति । भिन्ना बहवः, नेत्याह—तदनंतरं सुषुप्तौ, उपाधिभेदेन जाग्रदाद्युपाधिभेदेन । इति भाव इति—औपाधिकभेदस्यावास्तवत्वादात्मैक्यमेवेत्याशयः । एतेन जाग्रदादिष्वात्मैक्यसाधनेन ॥ * ॥ बाल्युवाद्यवस्थास्विति—योऽहं बालः क्रीडासक्तो यश्च तारुण्ये तरुणीरक्तः स एवेदानीं वृद्धो यष्ट्यालंबनो स्मीति स्मृत्वैक्यं द्रष्टव्यमित्यर्थः ॥३२॥ तत आत्मैक्यसाधनात् । एवमुक्तरीत्यात्मैकत्वं विचार्य । आधिस्थानीभूतः । मामात्मत्वेन भजत । मय्यधिष्ठाने । कृताः कल्पिताः । अनुमानं तु—अहंकारो मिथ्या ज्ञाननाश्यत्वात्, दिङ्मोहवदिति । सदुक्तिस्तु— ' मिथ्याहंकारसंसृतिः ' इत्येवंरूपा । श्रुतिस्तु—" अतोऽन्यदार्तम् " इत्यादिका ॥ * ॥ ततः सर्वावस्थात्मन ऐक्यज्ञानानंतरमेवं विमृश्य मननं कृत्वा यूयं भजत ध्यायत हार्दं हृदुद्भवमवस्थात्रयं संछिद्य मामखिलसंशयानामाधिं पीडकं नाशकम् ॥ ३३ ॥ विशेषेण भ्रमो यत्र विभ्रमं जगद्विशेषणत्वाच्छठत्वम् । तत्र विभ्रमत्वे । मनसो विजृंभितं विलासस्तद्रूपत्वात् । अलातचक्रं काष्ठाद्यग्नौ प्रज्वाल्य चक्राकारेण तद्भ्रामणमुल्मुकभ्रामणमित्यर्थः । भ्रमोपि सविषय एव भवतीत्याशंकते—नन्विति । अबाधितत्वात्सत्प्रतिपक्षत्वतात्पर्यकं वाक्यं निगमनम् । यथा—तस्माद्वह्निमानिति । तथा चायमित्युपनयस्य तस्मात्तथेति

---

१ विकारः ।

दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ॥ संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ॥ ३५ ॥ देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदांधः ॥ ३६ ॥

गुणपरिणामकृतो विकल्पो भेदः स मायेति ॥ ३४ ॥ तस्मात्ततो दृश्याद्दृष्टिं प्रतिनिवर्त्य निजसुखानुभवो भवेत् । तन्नैश्चल्यार्थं च निवृत्ततृष्णस्तूष्णीं निरीहश्च भवेत् । मनोवाक्कायव्यापाररहित इत्यर्थः । ननु देहवतः सर्वथा द्वैतदृष्टिप्रतिनिवर्तनायोगात्पुनः संसारः स्यादेव तत्राह । संदृश्यत इति । क्वचिदावश्यकाहारादिषु यद्यपीदं संदृश्यते तथापि पूर्वमवस्तुबुद्ध्या यत् त्यक्तं तत्पुनर्मोहाय न भवेदेव । किंतु देहपातपर्यंतं स्मृतिरिव स्मृतिः संस्कारमात्रेणावभासो भवेदित्यर्थः ॥ ३५ ॥ एतदेवोपपादयति । देहमिति । आसनादुत्थितमुत्थाय तत्रैव स्थितं ततः क्वचिदपेतं निर्गतं पुनस्तत्रैवोपेतं वा देहमपि नानुसंधत्ते कुतोऽन्यत् । यतो येन देहेन स्वरूपमध्यगमज्ज्ञातवांस्तं

निगमनस्य च शरीरमिति प्राञ्चः । तस्माद्विनाशित्वादिरूपत्वाद्विज्ञानं बुद्धिर्यथैकमेवोपाधिभेदाद्बहुधा घटपटाद्याकारेण प्रतीयते, तद्वदिदमपि विभातीत्याह–योयमिति ॥ * ॥ अनुमानानि ज्ञानोत्पत्तौ सहकारीणि । तत्र विभ्रमत्वे । निर्विषयः निराश्रयः । निगमनमिति–अयं भावः–पदार्थानुमाने पञ्चावयववाक्यं जगद्विभ्रममीक्षेतेति प्रतिज्ञा । दृष्टत्वादिति यद्यद्दृष्टत्वाद्यवच्छिन्नं तत्तद्भ्रममात्रम् । यथा स्वप्नादि इत्युदाहरणम् । भ्रमत्वव्याप्यदृष्टत्वादिमान् यथा स्वप्नादिस्तथा चेदं जगदित्युपनयः । तस्मात्त्रिधा योयं गुणपरिणामकृतो विकल्पः स माया मिथ्येति साध्योपसंहारलक्षणं निगमनमिति ॥ * ॥ **विश्वनाथस्तु**–एवमवस्थात्रयान्निःसंबंधस्यात्मनः पार्थक्यमनुभूय पूर्वं यदहंतास्पदममतास्पदीभूतं वस्तु तदिदं जगद्विभ्रमं विशिष्टो भ्रमो यत्र तथाभूतमीक्षेत । कोटिकोटिजन्मसु तत्र भ्रमादेवाहन्ताममतयोरारोपितचरत्वात् । मनसो विलासं कौतुकास्पदम्, मनसो विशिष्टो लासो नृत्यं यत्र स तदिति वा । अन्यत्तैः । नन्वेवंभूतद्वैतदर्शनान्निर्भेदब्रह्मानुभवो नोपपद्यते तत्राह–विज्ञानमेकं यद् ब्रूथे तदेव उरुधेव विभाति न तु परमार्थत उरुधा यतो माया, माययैव त्रिधा गुणविसर्गकृतो विकल्पः, स्वप्नः स्वप्नवदचिरस्थायीति **दीपिका** ॥ ३४ ॥ यतो माययैव तस्माद्धेतोः । दृष्टिं सत्यत्वभ्रांतिम् । निजसुखं स्वरूपानंदस्तमनुभवतीति तथा । तन्नैश्चल्यार्थं निजानंदानुभवस्थैर्यार्थम् । इत्यर्थ इति–' सर्वेहोपरतिस्तनुः ' इत्युक्तेस्सर्वव्यापारशून्यस्यैव स्वानंदावाप्तिर्भवतीति भावः । निरीहत्वमशक्यमित्याशंकते–नन्विति । इदं द्वैतम् । मोहाय न भवेद्भ्रांतिकरं न स्यात्सकृत्सर्पभ्रमापोहेन ज्ञाता रज्जुर्यथा पुनः सर्पादिभ्रांतिजनिका न भवति तद्वदित्याह–किंत्विति । इत्यर्थ इति–दग्धशुल्बपरावर्तप्रतीतिवत्प्रतीतिर्मिथ्यैवेति निश्चयात्पुनर्भ्रमो न भवतीति भावः ॥ * ॥ तन्नैश्चल्यार्थं सुखानुभवस्य स्थिरत्वार्थं निवृत्ततृष्ण इत्यादिपदत्रयं यथासंख्यं मनोवाक्कायव्यापाररहित इत्यर्थः । संस्कारेति–प्रारब्धजसंस्कारमात्रेण जीवन्मुक्तस्य दग्धपटवत् द्विदलादिवदवभासो बाधितानुवृत्तिमात्रं भवेदित्यर्थः ॥ ३५ ॥ एतदेव सत्यत्वेनानुसंधानमेव । तत्रैवासने । तत आसनात् । तत्रैवासन एव । नानुसंधत्ते न सत्यत्वेन पश्यति । अन्यद्देहातिरिक्तं गृहादि तु कुत इत्यर्थः । देहेन साधनेन स्वरूपं परमानंदलक्षणम् । यद्यप्यात्मज्ञानसाधनेषु देहं मुख्यसाधनमस्ति तथापि साधनेषु तदगणनादाह–यतः कारणादिति वेति । यतो हेतोः स्वरूपमध्यगमदतो हेतो

देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपंचमधिरूढसमाधियोग[illegible]वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ॥ ३७ ॥ मयैतदुक्तं वो विप्रा गुह्यं यत्सांख्ययोगयोः ॥ जानीत माऽऽगतं यज्ञं युष्मद्धर्मवि[illegible] ॥ ३८ ॥ अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः ॥ परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥ ३९ ॥ मां भजंति गुणाः सर्वे[illegible]णं निरपेक्षकम् ॥ सुहृदं प्रियमात्मानं साम्यासंगादयोऽगुणाः ॥ ४० ॥

देहम् । यतः कारणादिति वा । परिकृतं परिहितं वासो गतं स्थितं वा यथा न वेत्ति तद्वत् ॥ ३६ ॥ ननु च यः परिप[illegible]यमं[illegible]वे मुमूर्षति तं चेन्न पश्यति तर्हि पतेदेव नेत्याह । देहोऽपीति । देहो दैववशेन गच्छन्स्वारंभकं कर्म यावदस्ति तावत्पर्यंतं प्रतिसमीक्षत एव जीवत्येव । [illegible]प्राणेंद्रियसहितः । ननु तर्हि तस्मिन्कदाचिदासज्जेतापि नेत्याह । तमिति । स्वाप्नं स्वप्नतुल्यम् । अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येनात एव प्रतिबुद्धं ज्ञातं परमा[illegible]तु येन सः । तथाच श्रुतिः । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये " इति ॥ ३७ ॥ उक्तार्थे तेषां विश्वासार्थं स्वस्वरूपमाह । मयेति । सांख्यमात्मानात्म[illegible]विवेको योगोऽष्टांगस्तयोर्गुह्यं रहस्यम् । यज्ञं विष्णुम् । "यज्ञो वै विष्णुः" इति श्रुतेः । युष्मद्धर्मविवक्षयेत्यनेन धर्मा अप्युपदिष्टा इति ज्ञेयम् । अत एव यत्तेन हंस[illegible]ण ब्रह्मणेऽभ्यात्थ माधवेत्यनुवादो भविष्यति ॥ ॥ ३८ ॥ ऋतं प्रमीयमाणो धर्मः । सत्यमनुष्ठीयमानो धर्मः । तेजः प्रभावः एतेषां परमयनम् ॥ ३९ ॥ किंच । [illegible]मिति । कथंभताः । अगुणाः गुणपरिणामरूपा

देहं न पश्यतीत्यर्थः । मदिरामदांधः मद्यपानजातमदविस्मृतात्मज्ञानः ॥ * ॥ एतदेव संस्कारमात्रेणात्रभासनमेव ॥ ३६ ॥ देहादर्शनेऽनर्थमाशंकते–नन्विति । यो देहः दैववशेन दिष्टवशेन स्वारंभकं स्वोत्पादकं कर्मादिष्टलक्षणं प्रतीक्षत एव प्रतीक्ष्यावतिष्ठत एव । अत्राक्षिपति–नन्विति । तस्मिन्देहे । आसज्जेतैवमभिमानं कुर्यादेव । अत एवाधिरूढसमाधियोगत्वादेव । शरीरपाते जीवन्मुक्तो विदेहमुक्तिं लभत इत्यत्र प्रमाणमाह–तथा चेति । तस्य जीवन्मुक्तस्य तावदेव चिरं विलम्बो यावत् न विमोक्ष्ये देहो न पतेत्, अथ देहपातोत्तरं संपत्स्ये ब्रह्मसायुज्यमेतीति श्रुतिपदार्थः ॥ * ॥ स्वारंभकं देहजनकं प्रारब्धं कर्म । अत एवारूढसमाधियोगत्वादेव । जीवन्मुक्तौ श्रुतिः–तस्य जीवन्मुक्तस्य तावदेव चिरं विलंबो यावत्प्रारब्धदेहान्न विमोक्ष्येत, अथ देहपातोत्तरं संपद्यते विदेहमुक्तो भवतीत्यर्थः ॥ ३७ ॥ तेषां सनकादीनाम् । "यज्ञो वै विष्णुः" इति श्रुतेः । अत एव युष्मद्धर्मविवक्षयेत्युक्तेरेव ॥ * ॥ **संदर्भः**–निजोक्तमादरयति–मयेत्यर्द्धेन । आदरकारणविशेषत्वेन स्वपरिचयविशेषं करोति–जानीतेति । यज्ञं विष्णुं न त्वीश्वरत्वेन । ज्ञापितमपि शिवादिकम् ॥ ३८ ॥ प्रमीयमाणो वेदप्रमाणविहितः । श्रियः सम्पदः । दमस्य बाह्येन्द्रियनिग्रहस्य । अयनं स्थानम् ॥ * ॥ स्वज्ञानांतर्भूतत्वं सर्वज्ञानस्य दर्शयन्सर्वोत्कृष्टत्वं दर्शयति–अहमिति ॥ * ॥ **विश्वनाथस्तु**–अहो अद्भुतं ज्ञानमश्रौष्मेत्यतिचमत्कारवतस्तानालक्ष्याह–अहमिति । "ऋतं च सूनृता वाणी सत्यञ्च समदर्शनम्" इति । वक्ष्यमाणे वर्तसत्ये ध्येये ॥ ३९ ॥ निर्गुणं मायिकगुणातीतम् । निरपेक्षकं मायिकगुणापेक्षाशून्यम् । सुहृदं स्वभक्तजनहितकारिणं, यतः प्रियं तेषां प्रेमविषयीभूतम् । आत्मानं तेषु प्रीतिकर्तारं च । के ते गुणाः–साम्यं सर्वत्र प्राकृतवस्तुष्वौदासीन्यं, समत्वं च अप्राकृतेषु स्वभक्तेष्वासंग आसक्तिः । आदिपदात्प्रथमस्कन्धे पृथिव्युक्ताः सत्यशौचादयो ग्राह्याः । इत्यर्थ इति–प्राकृता एव गुणपरिणामकृताः स्वाम्यादयो न त्वप्राकृता भगवन्निष्ठा इति भावः ॥ * ॥ नन्वहं परायणमिति त्वद्वाक्यादेव तवास्मिञ्छरीरेऽभिमानो दृश्यतेऽतः कथमस्मानशिक्षयद्भवानि

इति मे छिन्नसंदेहा मुनयः सनकादयः ॥ सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः ॥ ४१ ॥ तैरहं पूजितः सम्यक्संस्तुतः परमर्षिभिः ॥ प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे हंसेतिहासनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ उद्धव उवाच ॥ वदंति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ॥ तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥ १ ॥ भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः ॥ निरस्य सर्वतः संगं येन त्वय्याविशेन्मनः ॥ २ ॥

न भवंति । किंतु नित्या इत्यर्थः ॥ ४० ॥ मे मया । अगृणत मां तुष्टुवुः ॥ ४१ ॥ प्रत्येयाय प्रत्यागतोऽस्मि ॥ ४२ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे परं श्रेयो भक्तिरेव नः चेतरत् ॥ इत्येतद्वर्ण्यते ध्यानयोगश्च सह साधनैः ॥ १ ॥ एवं तावद्भगवतो भक्त्या मोक्ष इत्युक्त मन्ये त्वन्यानि साधनानि वदंति तत्र विशेषनिर्धारणाय पृच्छति । वदंतीति । श्रेयांसि श्रेयःसाधनानि । किं विकल्पेन प्राधान्यमुताहो किंवा एकस्यैव मुख्यता ॥ १ ॥ एक मुख्यतापक्षोत्थाने कारणम् । भवतेति । अनपेक्षितः न अपेक्षितमपेक्षा यस्मिन्सोऽहेतुकः । अयमर्थः । भवता यो भक्तियोग उक्तोऽन्ये च यानि श्रेयःसाधनानि वदंति

त्याशंकध्वे चेत्—सत्यम, नेदं मदीयं शरीरं जीवस्येव स्वस्माद्भिन्नं भौतिकं नाप्यत्राहंकारादिकमपि प्राधानिकं किंतु मत्स्वरूपभूतं सच्चिदानंदमयमेवेत्याह—मां निर्गुणं मायिकगुणातीतम् । सर्वे गुणाः प्रथमस्कन्धे पृथि व्युक्ताः 'सत्यं शौचम्' इत्यादिना बहुधोक्ताः । साम्यासंगादयोऽनन्तगुणाश्च सर्वे मां भजन्ति।तत्र हेतुः—आत्मानं सर्वेषामाश्रयभूतम्।अत एवोत्कृष्टस्वरूपास्ते सर्वोत्कृष्टरूपं मां भजन्ति मां विना कथं चान्यं भजंत्विति भावः। तादृशात्मत्वादेव निर्गुणं न तु जीववदविद्यया गुणसंबद्धं निरपेक्षकं स्वेच्छयापि तदसंबद्धम । यद्वा—निरपेक्षं मायिकगुणापेक्षाशून्यं सुहृदं निरुपाधिसर्वजन[illegible]तकारिणं प्रियनिरुपाधिसर्वप्रेमास्पदं तेषु साम्यं सर्वत्र प्राकृतव स्तुष्वौदासीन्यात्, ममत्वं चाप्राकृतेषु स्वभक्तेष्वासंग आसक्तिश्च तदाद्याः।अतः स्वरूपभूता एव गुणा आत्मानं स्वरूपमेव भजंति । "न तस्य कार्यं कर[illegible] विद्यते" इत्यादौ "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः। अतः सर्वोत्कृष्टे प्रेमभक्तिरेव साध्येति पर्यवसानवाक्यार्थः ॥ ४० ॥ सभाजयित्वा पूजयित्वा ॥ * ॥ ततश्च संदेहं त्यक्त्वा मयि तां भक्तिं प्राप्तवंत इत्याह[illegible]इतीति । [illegible]या प्रेमलक्षणया ॥ ४१ ॥ तैः सनकादिभिः । प्रत्येयाय प्रत्याङ्पूर्वकादेतेः कर्तरि लिट् ॥ * ॥ धाम वैकुंठम् ॥ ४२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे [illegible]ऽध्यायः ॥ १३ ॥ परं श्रेयः सर्वोत्कृष्ट कल्याणसाधनम् । इतरत तपोदानादि ( १ ) । सर्वतो विरज्य मां भजतः स्वरूपावस्थानलक्षणो मोक्षो भवतीति भक्तिरेव परं [illegible]नमिति भगवतो मतम् । अन्ये त्वाचार्याः अन्यानि धर्मादीनि । तत्र तेषु साधनेषु । विकल्पेन यवाग्वा पयसा वेतिवत् । एकस्यैव कस्यचित्तेषां मध्ये ॥ * ॥ श्रुतानां श्रोतव्यानाञ्च साधनानां [illegible] पृच्छति—वदंतीति ॥ १ ॥ अपेक्षा साधनांतरापेक्षा । यस्मिन्भक्तियोगे । अहेतुकः फलेच्छारहितो वा । स्वाशयं प्रकाशयत्युद्धवः—अयमर्थ इति । तेषां साधनानाम् ॥ * ॥ ननु निरपेक्षो भक्तियोगो मयोक्तश्चेद[illegible]धनप्रश्नैरिति चेदत्रोच्यते—अयमर्थ इति । तेषां धर्मादि साधनानां साक्षात्फलसाधनत्वेनाव्यवहितमुक्तिफलोपधायत्वेन उत किं वा अंगांगित्वं यथा दर्शपौर्णमासादीनां परमापूर्वे प्रत्यंगत्वेपि प्रयाजाद्यपेक्षयांगित्वं तथा[illegible]ंगित्वं केषां चांगत्वमित्यर्थः । कश्चिदस्ति विशेष इति

श्रीभगवानुवाच ॥ कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ॥ मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ॥ ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः ॥ ४॥ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ॥ मनुष्याः सिद्धगंधर्वाः सविद्याधरचारणाः॥५॥ किंदेवाः किन्नरा नागा रक्षःकिंपुरुषादयः ॥ बह्वयस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥ ६ ॥

तेषां किं साक्षात्फलसाधनत्वेन प्राधान्यमेव सर्वेषामुतांगांगित्वम् । प्राधान्येऽपि किं विकल्पेन सर्वेषां तुल्यफलत्वं यद्वा कश्चिदस्ति विशेष इति ॥ २ ॥ तत्र भक्तिरेव महाफलत्वेन मुख्या । अन्यानि तु स्वस्वप्रकृत्यनुसारेण पुष्पस्थानीयस्वर्गादिफलबुद्धिभिः प्राणिभिः प्राधान्येन परिकल्पितानि क्षुल्लकफलानीति विवेक्तुं प्रकृत्यनुसारेण बहुधा वेदार्थप्रतिपत्तिमाह कालेनेति सप्तभिः । मदात्मकः मय्येवात्मा चित्तं येन सः ॥ ३ ॥ भृग्वादयः । भृगुश्च मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुरित्येते च सप्त ब्रह्माणः प्रजापतयस्ते च ते महर्षयश्च ॥ ४ ॥ ५ ॥ किंदेवाः क्लमस्वेददौर्गंध्यादिराहित्येन किं देवा मनुष्या वेति संदेहास्पदभूता द्वीपांतरमनुष्याः । एवं किन्नराः किंचिन्नरा इव मुखतः शरीरतो वा । किंपुरुषाः किंचित्पुरुषा इव वानरादयः । प्रकृतयो वासना बह्व्यः । कुतः । रजःसत्त्वतमांसि भुवः जन्मस्थानानि यासां ताः ॥६॥

प्राधान्येपि ' क्लेशोधिकतरस्तेषाम् ' ' कृच्छ्रो महानिह भवार्णवमप्लवेशम् ' इत्यादिन्यायेन क्लेशाक्लेशलक्षणो विशेषः कश्चिदस्ति वेत्यर्थः ॥ २ ॥ तत्र तेषु पुष्पस्थानीयेषु स्वर्गादिषु फलमिदमेवेति बुद्धिर्येषां तैः । क्षुल्लकं तुच्छं फलं येषां तानि तथा । वेदार्थप्रतिपत्तिं श्रुत्यर्थप्रतिपादनम् । यस्यां वेदवाचि ॥ * ॥ **दीपिका**—तत्र साधनेष्वन्यानि धर्मादीनि । क्षुल्लकं तुच्छम् । कालेनेति सार्द्धकम् । कालेन नष्टा तत्रापि प्रलये कल्पांते बहुनष्टेत्यर्थः । इयमिति—भवतेत्यादिना।यथा भवतानूद्यते तथा निरूपिकेत्यर्थः । एतेन ज्ञानादिकं ज्ञानादिमिश्रत्वं मदावेशान्यफलत्वं च न मन्मतमिति बोधितम् । आदौ ब्रह्मकल्पादौ। भो उद्धव सर्वमतानि वेदादेवोत्थितानि तस्यतस्य वेदस्य तु मद्भक्तियोग एव तात्पर्यमित्याह—कालेनेति । मदात्मको मत्स्वरूपभूतः भक्तियोगस्य ह्लादिनीसारभूतत्वात् । यद्वा—मय्येवात्मा चित्तं यतश्चित्तस्य मदाविष्टता मद्भक्त्यैव भवेत् 'भक्त्याहमेकया ग्राह्यः' इति मद्वचनाद्भक्त्यैवाहमिंद्रियैर्ग्रहीतुं शक्यो नान्यथेति तत्रार्थो द्रष्टव्यः । ब्रह्मवादिभिरुक्तानां मद्भक्तियोगादन्येषां श्रेयसां मत्प्रापकत्वाभावात् । श्रेयस्त्वमेव वस्तुतो नास्तीत्यतस्तेषां विकल्पतः प्राधान्येनैकस्य मुख्यत्वेन वा जिज्ञास्ये न तव किं प्रयोजनमिति भावः ॥ ३ ॥ तेन ब्रह्मणा । मनवे स्वायंभुवाय । अत्र मनोः पूर्वजत्वं रुद्रेंद्रकुमारान्विनेति ज्ञेयम् " रुद्रमिंद्रं कुमारञ्च विनैवान्याग्रजो मनुः । ब्रह्मपुत्रेष्वादिसृष्टौ " इति तीर्थोक्तेः । ततः स्वायंभुवान्मनोः ॥ * ॥ कथं ततो नानामतान्युद्भूतानि तत्राह—तेनेति सार्द्धैरष्टभिः ॥ ४ ॥ तेभ्यो भृग्वादिभ्यः । स्वस्वपितृभ्यस्तत्पुत्राः । तानाह—' देवदानव— । ' इत्यादि ॥ * ॥ ० ॥ ९ ॥ एवं किं देववत् । आदिना भल्लुकादिग्रहः । तेषां देवादीनाम् । 'प्रकृतिर्मूलकारणम्' इत्युक्तेर्मुख्यकारणत्वं सर्वत्र वासनास्वेव पर्यवस्यतीत्यभिप्रेत्योक्तं स्वामिचरणैः—प्रकृतयो वासना इति । तासां बहुत्वे हेतुं पृच्छति—कुत इति ॥ * ॥०॥६॥

याभिर्भूतानि भिद्यंते भूतानां मतयस्तथा ॥ यथाप्रकृति सर्वेषां चित्रा वाचः स्रवंति हि ॥ ७ ॥ एवं प्रकृतिवैचित्र्याद्भिद्यंते मतयो नृणाम् ॥ पारंपर्येण केषांचित्पाखंडमतयोऽपरे ॥ ८ ॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ॥ श्रेयो वदंत्यनेकांतं यथाकर्म यथारुचि ॥ ९ ॥ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ॥ अन्ये वदंति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥ केचिद्यज्ञतपोदानं व्रतानि नियमान्यमान् ॥ १० ॥

भूतानि देवासुरमनुष्यादीनि । चित्रा वाचो वेदार्थव्याख्यानविषयाः ॥ ७ ॥ एवमित्युक्तोपसंहारः । केषांचिदध्ययनादिशून्यानामप्युपदेशपारंपर्येण । अपरे पाखंडमतयो वेदविरुद्धार्थमतयः ॥ ८ ॥ तत्प्रकृतीनां मायागुणमूलत्वान्मन्मायामोहितधियः । अनेकांतं नानाविधम् ॥ ९ ॥ तदेवाह धर्ममिति सार्धेन । धर्मं कर्ममीमांसकाः । यदुक्तम् । " मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥ " इत्यादि । यशः काव्यालंकारकृतः । यथाहुः । " यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ " इति । कामं वात्स्यायनादयः । सत्यं दमं शमं च योगशास्त्रकृतः । अन्ये दृष्टार्थवा

याभिर्वासनाभिः । भिद्यन्तेऽनेकरूपा भवन्ति । सर्वेषां देवादीनां यथाप्रकृति सात्त्विक्यादिप्रकृत्यनतिक्रमेण चित्रा धर्माद्यनेकपुरुषार्थप्रतिपादिकाः स्रवन्ति स्वस्वबुद्धौ प्रमाणवत्प्रतिभांतीत्यर्थः । अत्र दृष्टान्तः श्रीमहाभारताश्वमेधपर्वणि–" देवर्षयश्च नागाश्चाप्यसुराश्च प्रजापतिम् । पर्यपृच्छन्नुपासीनाः श्रेयो नः प्रोच्यतामिति ॥ तेषां प्रोवाच भगवाञ्छ्रेयः समनुपृच्छताम् । ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन्दिशः ॥ तेषां प्रद्रवमाणानामुपदेशार्थमात्मनः । सर्पाणां दंशने भावः प्रवृत्तः पूर्वमेव तु ॥ असुराणां प्रवृत्तस्तु दंभभावः स्वभावजः । दानं देवा व्यवसिता दममेव महर्षयः ॥ एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः । नाना व्यवसिताः सर्वे सर्वदेवर्षिमानवाः ॥ " इति । प्राद्रवन्प्रतिपेदिरे । दिशो मार्गान् । आत्मनः स्वस्य । उपदेश ओमित्येकाक्षरं वाक्यं तस्यार्थम् । प्रद्रवमाणानां तात्पर्येणानुसरतां तेषां मध्ये सर्पाणां प्रणवोच्चारणे मुखस्योन्मीलनयोरेव दृष्टिं कृत्वा स्वीयस्वभावानुकूलं मुखोन्मीलननिमीलनसाध्यं दंशनमेव श्रेय इति मन्वानानाम् । एवमसुराणामोष्ठचालनमात्रे दत्तदृष्टीनाम् । दंभे जपाद्यभिनयप्रदर्शनरूपे । भावो निश्चयः प्रवृत्तः । देवास्तु लोके प्रार्थितमोमित्यनुजानंतीति बुद्ध्वा दानं श्रेय इति निश्चिताः । महर्षयस्तु ओमित्यस्योच्चारणे ओष्ठप्रवृत्त्युपसंहाररूपं दमं श्रेयो मेनिर इति ॥ * ॥ चित्राः व्याख्यानेन विविधप्रकारावच्छिन्नाः । स्रवन्ति निःसरंतीति ॥ ७ ॥ अपरे श्रुतिमनादृत्याततामसाः । वेदविरुद्धार्थमतयो वामशैवादयः ॥ * ॥ पाषंडमतयोऽतितमःप्रकृतित्वाद्वेदविरुद्धार्थमतयः । तेन भागीरथ्या जलं शुद्धं मधुरमपि तत्तटवर्त्यैरंडनिंबचिञ्चाकपित्थविषवृक्षादिभिः स्वस्वमूलद्वारा गृहीतं विषमं विरुद्धं च यथा भवेत्तथैव तेषांतेषां व्याख्यातॄणां मुखं प्राप्य वेदार्थो विरसो विरुद्धफलप्रदश्च भवेदिति भावः ॥ ८ ॥ यथा प्राचीनकर्मानुसारेण । यथारुचि स्वस्वरुच्यनुसारेण ॥ * ॥ श्रेयः श्रेयःसाधनम् ॥ ९ ॥ तदेव यथारुचित्वाद्येव । कर्ममीमांसका जैमिन्यादयः । काव्यालंकारकृतो भारतादयः । अत्र वृद्धोक्तिमाहुः–यथाहुरिति । दंडनीतिकृतः कामंदकादयः । यत ऐश्वर्यमेव श्रेयोऽस्त्यतो हेतोः । भोजनम्–' ऋणं कृत्वा घृतं पिबेत् ' इत्यादितदुक्तेः । लोकायतिकाश्चार्वाकाः । त्यागं चाभिमानस्येत्यपि तेषां मतम् । केचित्पौराणिकाः ॥ * ॥ तदेव नानाविधमतवदनमेव । तत्र चतुर्विधकर्मसु मध्ये । काम्यमग्निहोत्रादि, निषिद्धं कलंजभक्षणादि, नित्यं संध्यावंदनादि, नैमित्तिकं पुत्रेष्ट्यादि, प्रत्यवायस्तदकरणे निषिद्धकरणे च यो दोषस्तस्य जिहासया त्यागेच्छयेति **दीपिका** ॥ * ॥ **संदर्भः**–धर्ममिति–ईश्वरामननाज्जैमिन्यादीनामपि तत्तत्प्रवर्तकत्वमेवेति भावः । एके निवृत्तिकर्मनिष्ठाः । सत्यादित्रयमद्वैता योगिनश्च । केचित्कर्मनिष्ठाः । स्वार्थमिति स्थानभेदेन साधनं साध्यं चोच्यते, उभयोरपि स्वेनार्थमानत्वात् । तत्र कामभोगैश्वर्याणि साध्यानि

आद्यंतवंत एवैषां लोकाः कर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानंदाः शुचार्पिताः ॥ ११ ॥ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ॥ मयात्मना सुखं यत्तत्कुतः स्याद्विषयात्मनाम् ॥१२॥ अकिंचनस्य दांतस्य शांतस्य समचेतसः ॥ मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥१३॥ न पारमेष्ठ्यं न महेंद्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ १४ ॥

दिनो दंडनीतिकृतो वै प्रसिद्धम् ऐश्वर्यमेव स्वार्थं पुरुषार्थं वदंति । अतः सामाद्युपाया एव श्रेयःसाधनमिति तेषां मतम् । तथैव त्यागं भोजनं च लोकायतिकाः । यज्ञतपो दानं यज्ञो देवतानां पूजनं तपश्च दानं च ॥ १० ॥ तेषां तुच्छफलत्वमाह । आद्यंतवंत इति । एषां लोका एतैः साध्यानि फलानि । तमोनिष्ठा मोहावसानाः । भोगकालेऽप्यसूयादिभिः शुचार्पिता व्याप्ताः ॥ ११ ॥ भक्तेर्मुख्यत्वमाह मयीति यावत्समाप्ति । हे सभ्य । मया परमानंदरूपेणात्मना स्वरूपत्वेन स्फुरता ॥ १२ ॥ किंच अन्येषां तत्तल्लोकादिपरिच्छिन्नं सुखं भक्तस्य तु परिपूर्णमित्याह । अकिंचनस्येति ॥ १३ ॥ परिपूर्णतामेवाह । न पारमेष्ठ्यमिति । रसाधिपत्यं पातालादिस्वा

अन्यानि तु साधनानि ॥ १० ॥ तेषां पूर्वोक्तानां सर्वेषां तुच्छफलत्वं विनाशिफलत्वम् । मोहावसाना अज्ञानदार्ढ्यहेतवः । " मद्भक्तिवर्जितं श्रेयो ये मन्यन्ते दुराशयाः । तेषामन्ते तमोघोरमनंतं प्राप्यते ध्रुवम् ॥ " इति तीर्थोदाहृतवचनात् ॥ * ॥ एषां मध्ये ये वा कर्मणा वेदविधिना विनिर्मिता लोकाः सुखदफला भवंति तेप्याद्यंतवदादिरूपा एव, वेदविमुखत्वे नारका एवेति भावः ॥ ११ ॥ सुखं पूर्णानंदः । ' समूहे सदसि सभा ' इति कोशात्सभायां समूहे श्रेष्ठः सभ्यो विवेकिजनमुख्यत्वात्त्वमेतमर्थं ज्ञातुं योग्योऽसीति संबुद्ध्यभिप्रायः । सर्वत ऐहिकपारत्रिकविषयेभ्यः ॥ * ॥ तस्माद्भक्तावेव तात्पर्यं, सैव सर्वश्रेष्ठेति निर्द्धार्य तयैव मां प्राप्नोतीत्याह—मयीत्यादिनोद्धवप्रश्नपर्यंतेन ग्रंथेन । मया रूपगुणसमुद्रेण सर्वाश्चर्यरूपगुणादिविशिष्टमद्रूपेण स्फुरतेत्यर्थ इति **संदर्भः** ॥ * ॥ तत्राप्यात्मना पूर्णसच्चिदानंदलक्षणपरमतया परमप्रेष्ठरूपेण हेतुना विषयेषु मायिकेषु शमदमज्ञानादिष्वपि मनो येषां तेषां ज्ञानादीनामपि सात्त्विकत्वेन मायिकत्वात्, मदतिरिक्तपुरुषार्थिनस्सर्वे एव विषयात्मान इति भावः । न च शमादिप्राप्यं ब्रह्मैवेत्यपि वाच्यम् " किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि । किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥ " इति नारदोक्तेः ॥ १२ ॥ स्वभक्तस्य सुखाधिक्यमाह—किंचेति । अकिंचनत्वादिष्वेकैकोऽपि सुखित्वहेतुः किमुत समुदिता इत्याशयेनाह—सर्वा इति । सुखमया मदानंदैकरूपत्वात् ॥ * ॥ भक्तस्य सुखं सुखस्यानुभावं च विवृणोति—अकिंचनस्येति द्वाभ्याम् । मया ध्यानप्राप्तेनैवालौकिकशब्दस्पर्शरूपरसगंधलीलाकृपादिमहामाधुर्यवता संतुष्टानि मनःप्रभृतिसर्वेंद्रियाणि यस्य तस्य सर्वा इति । स च या दिशो याति ता एव सुखमयाः यथा ग्रंथिनिबद्धाः । नश्वरमहाधनो ना यं देशं याति तत्रैव तस्य भोगैश्वर्यसुखानीत्यर्थः । अत एवाकिञ्चनस्य मल्लक्षणसंपूर्णानश्वरमहाधनप्राप्त्यैव । किञ्च—न शब्दवाच्यपरिमितनश्वरप्राकृतधनजनादिग्रहणविमुखस्य बाह्याभ्यंतरविषयेष्विंद्रियाणां स्वयमरोचकत्वेनैव निवृत्तेः । दांतस्य शांतस्य मदेकनिष्ठबुद्धेः ' शमो मन्निष्ठता बुद्धेः ' इति वक्ष्यमाणत्वात् । अत एव समचेतसः स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ १३ ॥ योगसिद्धीरणिमाद्याः । मद्विनान्यदपुनर्भवं कपिलकणादजैमिन्यादिसंमतं नेच्छति, किंतु मत्स्वरूपात्मकं मोक्षमिच्छतीत्यर्थः ॥ * ॥ तस्य किञ्चनशब्दवाच्यपदार्थेषु स्पृहाराहित्यमाह—नेति । सार्वभौमं श्रीप्रियव्रतादीनामिव महाराज्यम् । अप्यर्थे वाशब्दः । अपुनर्भवं सायुज्यसुखञ्च । मय्यर्पितात्मेति—" ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् " इति मत्कृतनियमादहमपि तस्मिन्नर्पितात्मा भवामीत्यत आह—मद्विनेति । अहमेव तस्य सर्वेन्द्रियग्राह्यतया सदैव वर्त एव

न तथा मे प्रियतम आत्मयोनिर्न शंकरः ॥ न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥ १५ ॥ निरपेक्षं मुनिं शांतं निर्वैरं समदर्शनम् ॥ अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः ॥ १६ ॥ निष्किंचना मय्यनुरक्तचेतसः शांता महांतोऽखिलजीववत्सलाः ॥ कामैरनालब्धधियो जुषंति यत्तन्नैरपेक्ष्यं न विदुः सुखं मम ॥ १७ ॥

न्यम् । अपुनर्भवं मोक्षमपि । मद्विना मां हित्वाऽन्यन्नेच्छति । अहमेव तस्य प्रेष्ठ इत्यर्थः ॥ १४ ॥ ममापि स एव प्रेष्ठ इत्याह न तथेति द्वाभ्याम् । आत्मयोनिर्ब्रह्मा पुत्रोऽपि । शंकरो मत्स्वरूपभूतोऽपि । संकर्षणो भ्राताऽपि । श्रीर्भार्याऽपि । आत्मा मूर्तिरपि । तथा भक्त इति वक्तव्येऽतिहर्षेणाह । भवानिति ॥ १५ ॥ पूयेय मदंतर्वर्तिब्रह्मांडानि पवित्रीकुर्यामिति भावेनेत्यर्थः ॥ १६ ॥ किंच मद्भक्तानां सुखमेतावदेवंभतमिति वा को वक्तुं समर्थो यतस्तत्स्वसंवेद्यं निरुपममित्याह । निष्किंचना इति ।

न हि निरन्तरदिव्यामृतरसास्वादिने जनाय मृत्तिका रोचत इति भावः । पारमेष्ठ्यादिचतुष्टयस्यानुक्रमश्चाधोधो विवक्षया न्यूनत्वविवक्षया च ततश्चोत्तरोत्तरं कैमुत्यमपि योगसिद्ध्यादिद्वयं तु सार्वत्रिकत्वात्पश्चाद्विन्यस्तम्, अपुनर्भवस्तूत्तरत्र श्रेष्ठ्यात् ॥ १४ ॥ स एव निरपेक्ष भक्त एव । यद्वा—यथा भवान्भक्तस्ते चापि मत्प्रियास्तद्भक्तत्वेनैव नात्मजत्वादिसम्बन्धैश्वर्यादिनेति भावः ॥ * ॥ स च भक्तस्तव कीदृक् प्रिय इत्यत आह—न तथेति । अत्र ब्रह्मादीनां भक्तत्वेऽपि तेषु भक्तत्वांशादपि पुत्रत्वाद्यंशा अधिका वर्ततेऽतः 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन ते पुत्रादित्वेनैव व्यपदिश्यन्ते न तु भक्तत्वेन, नंदयशोदादिषु तु महाप्रेमवत्त्वात्पितृत्वाद्यंशेभ्योपि भक्तत्वलक्षणोंशोधिकतर इति तेषु भक्तत्वमेवेति ते कृष्णस्यातिप्रियतमा एव । तदुक्तम्—"दर्शयंस्तद्विदां लोक आत्मनो भक्तवश्यताम्" इति तेषां भक्तशब्दवाच्यत्वे स्वातिवशीकारकत्वं च "नेमं विरिञ्चो न भवो न श्रीरप्यंगसंश्रया । प्रसादं लेभिरे गोपी:" इति सर्वोत्कर्षश्च । यद्वा—तादृशभक्तेष्वपि भवान्मे यथा प्रियतमस्तथा मन्मुखादेव शृण्वित्याह—तथेति । तेन सर्वभक्तेषूद्धवः श्रेष्ठस्ततोपि गोप्यः श्रेष्ठास्तेनापि तासां चरणधूलिप्रार्थनादिति वैष्णवसिद्धान्तः ॥ १५ ॥ इत्यर्थ इति—एतेन तदंघ्रिपावनत्वबोधन एव तात्पर्यं नित्यशुद्धस्य स्वप्रयोजनाभावादिति भावः ॥ * ॥ तदेवं प्रेमविशेषपात्रत्वेन तादृशं भक्तं स्तुत्वा गौरवविशेषपात्रत्वेन भक्तविशेषं स्तौति—निरपेक्षं निष्कामभक्तम्, अतो भोगरहितं मात्सर्यादिरहितमन्यत्र हेयोपादेयभावनारहितं च । मुनिं श्रीनारदादिम् । अनुव्रजामि यतस्तादृशभक्तिमयसाधुत्वदर्शनेन ममापि भक्तिविशेषो जायते कथं गोपनीय इत्याह—पूयेयेति । तद्भक्त्यनिष्कृतिदोषात् पवित्रितः स्यामिति भावेनेत्यर्थः ॥ * ॥ **विश्वनाथः**—किं बहुना भक्तो यथा सदा मामनुचरति तथाहमपि भक्तः परोक्षः सन्भक्तमनुचरामि 'भगवान्भक्तभक्तिमान्' इति मदीयशुकोक्तेरित्याह—निरपेक्षमिति । मुनिं मद्रूपगुणलीलापरिकरादिमननपरम् । पूयेयेति तैः । वस्तुतस्तु भक्तचरणधूलिग्रहणं विना भक्तिर्न स्याद्भक्त्या विना मन्माधुर्यरसानुभवो न स्यादिति मयैव मर्यादा स्थापिताऽतोहमपि भक्त इव भक्त्या पूर्णमन्माधुर्यसरोनिमग्नो भवेयमिति भावः । 'विस्मापनं स्वस्य च सौभगर्द्धेः परं पदम्' इत्युक्तेः ॥ १६ ॥ पुनर्भक्ताधिक्यमाह—किञ्चेति । यथेष्टं निष्किञ्चनत्वे मदनुरक्तचेतस्त्वं त्वत्र च निष्किञ्चनत्वम् । एवमन्येपि ज्ञेयाः । एवंभूता निष्किञ्चनत्वादिसंपन्नाः । अन्येषामज्ञाने हेतुं पृच्छति—कुत इति । इत्यर्थ इति—भक्तिसुखमत्यलौकिकं निरपेक्षावाप्यमिति भावः । कारणमंतरा कार्योत्पत्तिर्न भवतीति कथं त्वत्सेवां विना नैरपेक्ष्यसुखावाप्तिरिति चेदाह—यद्वेति । षष्ठी द्वितीयार्थे बोध्या इत्याह—मामित्यर्थ इति । प्रीणनस्य स्मरणपूर्वकत्वात्स्मरणमप्यत्र प्रीणनेन लक्ष्यते, तेन स्मृत्यर्थयोगे कर्मणि षष्ठी विभाषया भवत्येवेति भावः । तत्सुखं स्वरूपत्वेन विदुरित्यर्थः ॥ * ॥ यतो मन्माधुर्यगुणरूपादिसुखं मद्भक्त्यैव लभ्यं नान्यथेत्याह—निष्किञ्चना इति । निष्किञ्चना ज्ञानिनोपि भवंतीति केचिदाहुस्तद्व्यावृत्त्यर्थमाह—मय्यनुरक्तचेतस इति । अखिलजीववत्सलाः अखिलेभ्योऽपि जीवेभ्यो भक्तिरसादित्सावंतः।अत एव महांतस्तत्संज्ञयैव लोकैरुच्यमानाः कामैर्दैवादापतितैरपि भोगैर्न आलब्धा छिन्ना धीर्येषां ते यन्मम सुखं जुषंति अस्वादयंति तत्सुखं त एव विदुर्नान्ये।कुतः—

बाध्यमानोऽपि मद्भक्तो विषयैरजितेंद्रियः ॥ प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥ यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ॥ तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १९ ॥ न साधयति मां योगो न सांख्यं धर्म उद्धव ॥ न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ ॥ २० ॥ भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ॥ भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥ २१ ॥

महांतो निरभिमानाः । अनालब्धधियोऽस्पृष्टचित्ताः । निष्किंचनत्वादीनां यथेष्टं हेतुहेतुमद्भावः । एवंभूता मम मदीया यत्सुखं जुषंति सेवंते तत्सुखं त एव विदुर्लभंते नान्ये । कुतः । नैरपेक्ष्यं नास्त्यपेक्षणीयं येषां ते निरपेक्ष्यास्तैरेव लभ्यं न तु मोक्षापेक्षैरपीत्यर्थः । यद्वा एवंभूताः संतो ये मम मामित्यर्थः । जुषंति प्रीणंति त एव यन्नैर पेक्ष्यं सुखं तद्विदुर्नान्य इत्यन्वयः ॥ १७ ॥ अपि च आस्तां तावदुत्तमभक्तकथा । यतः प्राकृतोऽपि भक्तः कृतार्थ एवेत्याह बाध्यमान इति द्वाभ्याम् । विषयैराकृष्यमाणोऽपि प्रगल्भया समर्थया ॥ १८ ॥ पाकाद्यर्थं प्रज्वालितोऽग्निर्यथा काष्ठानि भस्मीकरोति तथा रागादिनाऽपि कथंचिन्मद्विषया सती भक्तिः समस्तपापनाशिनीति । भगवानपि स्वभक्तिमहिमाश्चर्येण संबोधयति । अहो उद्धव विस्मयं शृणिवति ॥ १९ ॥ अत एवंभूतं श्रेयो नान्यदस्तीत्याह न साधयतीति द्वाभ्याम् ॥ २० ॥ श्रद्धया

नैरपेक्ष्यं नास्ति अपेक्ष्यं मोक्षादिकं येषां ते नैरपेक्ष्यास्तेष्वेव जातम् । एतावत् एवंभूतमेवंजातीयं तत्सुखं स्वसंवेद्यमेव । मय्यनुरक्तचेतस इत्यनेनैव मदीयत्वमागतं पुनर्ममेत्यधिकमतो—यद्वेति । प्रीणंयति प्रसन्नीकुर्वंति ॥ १७ ॥ अन्यदाह—अपि चेति । प्राकृतः साधारणः । नाभिभूयते विषयसेवाप्राप्तदोषेणाधो न पततीत्यर्थः । प्रायो विषयैः ॥ * ॥ अपि चास्तां तावदुत्पन्नभावभक्तकथा यतो भक्तौ प्रथमवर्तमानोऽपि भक्तः कृतार्थ एवेत्याह—बाध्यमान इति । प्रायः प्रगल्भया प्रायेणैव प्रबलीभवंति किं पुनः प्रगल्भया ॥ * ॥ **संदर्भस्तु**—प्रगल्भया समर्थप्रभावया शरणागतिमात्रात्मिकयेत्याह । यद्वा—ज्ञानप्रकरणे, यथा दुराचारो ज्ञानी निंद्यते ज्ञानित्वं च तस्य निषिध्यते ‘ यस्त्वसंयतषड्वर्गः ’ इत्यादिना, तथात्र भक्तप्रकरणे दुराचारो भक्तो न निंद्यो भक्तत्वं च तस्य नो निषिद्धमित्याह—बाध्यमान इति । यदुक्तम्—“ अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ” इति । किंचात्र विषयैर्बाध्यमानो विषयैर्नाभिभूयत इत्युभयत्रापि वर्तमाननिर्देशाद्विषयबाध्यत्वदशायामपि विषयाबाध्यत्वं भक्तिसद्भावात् । यथा—वैरिकृतकिंचिच्छस्त्राघातं प्राप्तस्यापि न पराभविष्णुता शौर्यसद्भावात्, यथा वा—शीतज्वरघ्नमहौषधस्य तद्दिवस आगतोपि ज्वरो बाधकोप्यबाधक एव विनश्यदवस्थत्वात्, दिनांतरे सम्यङ्नष्टीभावित्वाच्च ॥ १८ ॥ “ घटायोन्मीलितं चक्षुः पटं किं नहि पश्यति ” इति न्यायमाश्रित्याह—पाकाद्यर्थमिति ॥ * ॥ तस्याजितेंद्रियताजन्यपापस्य भक्तिरेव नाशिकास्तीत्यत्र दृष्टान्तो—यथाग्निरिति । हे उद्धवेति—त्वमत्रोद्धवमेव लभस्वेति भावः ॥ * ॥ **संदर्भस्तु**—सर्वानेव भक्तिभेदान्प्रशंसति—यथेत्यष्टभिः । यथा मद्विषया यथाकथंचिच्छ्रवणादिलक्षणा ॥ १९ ॥ यतो यथाकथंचित्कृतापि भक्तिः सर्वपापहराऽतो हेतोः । एवंभूतं भक्तिसदृशं भक्त्यनुपहितधियानुष्ठितयोगादयो मदपरोक्षं न जनयंतीत्यर्थः । ऊर्जिता फलाभिसंध्यादिरहिता ॥ * ॥ ननु भक्तिर्यथा त्वत्प्राप्तिसाधनं तथा ज्ञानयोगादिकमपीति केनांशेन भक्तेरुत्कर्ष इत्यत आह—नेति द्वाभ्याम् । न साधयति मत्प्राप्तिसाधनं न भवति । ऊर्जिता ज्ञानकर्माद्यनावृतत्वेन तीव्रा प्रबलेत्यर्थः ॥ * ॥ **संदर्भस्तु**—ज्ञानयोगादिस्तत्साधनार्थं प्रयुक्तोऽपि तथा मां न साधयति वशयत्नुन्मुखं न करोति यथोर्जिता साधनात्मिका भक्तिरित्याह ॥ २० ॥ इत्यर्थ इति—“ किरातहूणांध्रपुलिंदपुक्कसा आभीरकंका यवनाः खसादयः । येऽन्ये च पापा यदुपाश्रयाश्रयाच्छुध्यन्ति तस्मै प्रभविष्णवे नमः ॥ ” इति श्रीबादरायण्युक्तेः,

धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ॥ मद्भक्त्यापेतमात्मानं न सम्यक्प्रपुनाति हि ॥ २२ ॥ कथं विना रोमहर्षं द्रवता चेतसा विना ॥ विनानंदाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः ॥ २३ ॥ वाग्गद्गदा द्रवते यस्य चित्तं रोदित्यभीक्ष्णं हसति क्वचिच्च ॥ विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥

या भक्तिस्तया । संभवाज्जातिदोषादपीत्यर्थः ॥ २१ ॥ भक्त्यभावेऽन्यत्साधनं व्यर्थमित्याह द्वाभ्यां धर्म इति ॥ २२ ॥ रोमहर्षादिकं विना कथं भक्तिर्गम्यते । भक्त्या विना च कथमाशयः शुध्येदिति ॥ २३ ॥ किंच भक्तिः स्वाश्रयं शोधयतीति किं वक्तव्यं यतो गद्गदवागादिलक्षणो मद्भक्तियुक्तो लोकं सर्वं पुनातीत्याह । वागिति ॥ २४ ॥

'स्त्रीशूद्रहूणशबरा अपि पापजीवाः' इति ब्रह्मोक्तेश्चेति भावः । अहं सतां विदुषां प्रिय आत्मा, सर्वात्माप्यविदुषां भेदभ्रमेण तदात्मास्वीकारात् । श्रद्धया शास्त्रोक्ताभेदविश्वासेन या एकसत्स्वरूपा भक्तिस्तयैव ग्राह्यो ज्ञातुं साक्षात्कर्तुं च शक्यः "ज्ञानकारणसामग्र्यां भक्तिरेव गरीयसी । स्वस्वरूपाधिसंधानं भक्तिरित्यभिधीयते ॥" इति भगवत्पूज्यपादोक्तेः ॥ * ॥ श्रद्धया भक्त्या श्रद्धापूर्विकया केवलया भक्त्या त्वहमेव ग्राह्यः क्रमाद्दर्शीकार्यः सैव मन्निष्ठा मयि दाढर्यं गता सती ॥ * ॥ विश्वनाथस्तु—एकया न त्वन्येन योगादिना । तेन यदन्यत्र ज्ञानादीनामपि ब्रह्मप्राप्तिसाधनत्वं श्रूयते तत्रापि गुणीभूता भक्तिरेव तत्प्रापिकेति ज्ञेयम् । तदेवं ज्ञानसत्कर्मादिकं भगवन्तं साधयितुमसमर्थं केवलं पापनाशकतयैव सार्थकमभूदिति स्थितम् । तत्रापि भक्तेर्यथा पापनाशकता न तथा ज्ञानादीनामित्याह—भक्तिरिति सार्द्धेन । तेन प्रारब्धपापनाशकता भक्तेर्बुध्यते ॥ २१ ॥ साधनांतरवैयर्थ्यमाह—भक्त्यभाव इति । अपेतं हीनम् ॥ * ॥ किञ्च—ज्ञानादिकं पापनाशकत्वमपि भक्तिसाहित्येनैव भक्तिराहित्येन तु किञ्चिन्मात्रमेवेत्याह—धर्म इति । विद्या ज्ञानम् ॥ २२ ॥ यद्यपि सुज्ञा वैष्णवसिद्धांताचलनत्वादिव्रतेनास्य भक्तिरस्तीति जानते तथाप्यज्ञजनबोधाय भक्तेः प्रत्यक्षज्ञापकमाह—कथमिति ॥ * ॥ अंतःकरणं तु सम्यक्तया भक्तिरेव शोधयति नान्यत्साधनं, सा च भक्ती रोमाञ्चाद्यनुभवगम्येत्याह—कथमिति । भक्त्या हेतुना यद्द्रवच्चेतस्तेन विना कथं साधनांतरेण रोमहर्षः, कथं चानंदाश्रुकला रोमहर्षं विना, आनंदाश्रुकलया च विना कथमाशयः शुध्येदित्यन्वयः । तदुक्तं कलियुगपावनावतारेण भगवता—"श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् । यन्न संति द्रवच्चित्तकंपाश्रुपुलकादयः ॥" इति । तेन निष्कामकर्मयोगादयो बहुप्रमाणसिद्धा अंतःकरणस्य शोधकास्तावद्भवंतु, किंतु तस्य येन कषायेण भगवदपरोक्षानुभवो न भवति तं कषायं तु प्रेमभक्तिरेव ज्वालयति न तु ज्ञानाग्निरपीति भावः । तदेव व्यतिरेकेणाह—कथमिति । रोमहर्षस्तावद्यत्किञ्चिच्चेतोद्रवस्य चिह्नम्, आनंदाश्रुकला तु विशिष्टस्य तस्य चिह्नम्, चेतोद्रवस्तु भक्तेरंतरंगस्वभाव इति । तथातथोक्तम्—रोमहर्षेणानंदाश्रुकलया च विना कथं तारतम्येन चेतोद्रवोवगम्यते, द्रवता चेतसा च विना कथं भक्तिराविर्भवति, भक्त्या च विना कथमाशयः शुद्ध्येदिति ॥ २३ ॥ कैमुत्येन भक्तेर्वैभवांतरमाह—किञ्चेति । गद्गदा त्रुट्यंतीव प्रतीताऽस्पष्टाक्षरा । "चित्तद्रवस्तथा धैर्यं प्रसादो भक्तिलक्षणम् । आधिक्येन च तत्रापि स्थैर्यमेव विशेषतः ॥" इति । एतेन समीचीनभक्तोऽपि भुवनं पुनाति किं पुनर्भक्तिरिति भावः ॥*॥ मद्भक्तियुक्तो मत्प्रेमाशयपात्रश्चेद्भुवनमपि पुनाति किमुताशयं संगिनो ग्रामं देशं मंडलं वर्षं द्वीपादिकं चेत्यर्थः । गद्गदाऽस्पष्टाक्षरा ॥२४॥

यथाऽग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते स्वरूपम् ॥ आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥२५॥ यथायथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ॥ तथातथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवांजनसंप्रयुक्तम् ॥ २६ ॥ विषयान्ध्यायतश्चित्तं विषयेषु विषज्जते ॥ मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥२७॥ तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ॥ हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ ॥ २८ ॥ स्त्रीणां स्त्रीसंगिनां संगं त्यक्त्वा दूरत आत्मवान् ॥ क्षेमे विविक्त आसीनश्चिंतयेन्मामतंद्रितः ॥२९॥ न तथाऽस्य भवेत्क्लेशो बंधश्चान्यप्रसंगतः ॥ योषित्संगाद्यथा पुंसो यथा तत्संगिसंगतः ॥ ३० ॥

अपि च भक्त्यैवात्मशुद्धिर्नान्यत इति सदृष्टांतमाह । यथेति । यथाऽग्निना ध्मातं तापितमेव हेम सुवर्णमंतर्मलं जहाति न क्षालनादिभिः । स्वं निजं रूपं च भजते । कर्मानुशयं कर्मवासनाम् । मां भजते मद्रूपतामापद्यते ॥ २५ ॥ ननु "ब्रह्मविदाप्नोति परम् । तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतिभ्यो ज्ञानादेवा विद्यानिवृत्त्या त्वत्प्राप्तिरवगम्यते । कुतो भक्तियोगेनेत्युच्यते तत्राह । यथायथेति । आत्मा चित्तं परिमृज्यते शोध्यते मत्पुण्यकथानां श्रवणैरभिधानैश्च । भक्तेरेवावांतर व्यापारो ज्ञानं न पृथगित्यर्थः ॥ २६ ॥ किंच ज्ञानं नाम चित्तस्य मदाकारपरिणामः स च मां भजतः स्वभावत एव भवति न च यत्नांतरमपेक्षत इति सदृष्टांत माह । विषयानिति ॥ २७ ॥ यस्मादन्यसाधनं तत्फलं च स्वप्नमनोरथवदसदभिध्यानमात्रं तस्मात्तद्विहाय मय्येव मनः समाहितं कुर्विति प्रकरणार्थमुपसंहरति । तस्मा दिति । मद्भावभावितं मद्भावेन मद्भजनेनैव शोधितम् ॥ २८ ॥ विशेषतो वात्स्यायनाद्युक्तकाममार्गाः परित्याज्या इत्याह । स्त्रीणामिति । आत्मवान् धीरः सन् । क्षेमे निर्भये देशे । विविक्ते विजने ॥ २९ ॥ एतदुपपादयति । न तथेति । अस्य पुंसो यथा तत्संगिसंगतः क्लेशो भवेत् । यथा च बंधो योषित्संगतस्तथाऽन्यप्रसंगतो न भवे

अग्निना मुखवायुसंयोगोज्ज्वलितेन । मलमष्टादशदोषलक्षणम् । स्वरूपं निर्दोषभास्वरलक्षणं वा । आदिना घर्षणादिग्रहः ॥ * ॥ अथो कात्स्न्येन भजति पूर्णां सेवापद्धतिमाप्नोति ॥ २५ ॥ श्रुत्यवष्टं भेनाक्षिपति—नन्विति । तमात्मानं ज्ञात्वा मृत्युं संसारमत्येति तरतीत्यर्थः । आदिना "ज्ञानादेव हि कैवल्यम्" इत्यादिश्रुतिग्रहः । इत्यर्थ इति—ज्ञानस्य भक्त्यविनाभूतत्वेनासिद्धेर्भक्त्यवस्थांतरमेव ज्ञानमिति भावः । तत्त्वसूक्ष्मं दुर्ज्ञेयब्रह्मतत्त्वम् ॥ * ॥ आदिभजनमारभ्य केवलया भक्त्यैवात्मशोधनतारतम्येन श्रवणकीर्तनस्मरणादितारतम्यात्तन्माधुर्यानुभवतारतम्यं प्राप्नोतीत्याह—यथेति । 'तत्त्वसूक्ष्मम्' इति पाठे तु तत्त्वं मद्रूपलीलादिस्वरूपं सूक्ष्मं तन्माधुर्यानुभवविशेषं, द्वंद्वैक्यम् । यद्वा—पूर्वनिपातभाव आर्षः ॥ २६ ॥ तदेवाह—किंच । विषज्जते विलीयते ॥ * ॥ तादृशश्रवणादिनिष्ठानां त्वद्भक्तानां चित्तं त्वयि कीदृशं स्यादित्यत आह—विषयानिति । विषय ध्यानासक्तं चित्तं यथा विषयमाधुर्यनिमग्नं दृष्टं तथैव मदीयध्यानासक्तं चित्तं मन्माधुर्यमात्रनिमग्नं स्यात् ॥ २७ ॥ फलितमाह—यस्मादिति ॥ * ॥ यस्मादन्यत्साधनं तत्फलं च स्वप्नमनोरथवदसदभिध्यानमात्रं तस्मात्त द्विहाय केवलया भक्त्यैव मयि मनः समाहितं कुर्विति प्रकरणार्थमुपसंहरति—मद्भावेन मद्भावनयैव भावितं भावयुक्तीकृतम् ॥ २८ ॥ भक्तिविरोधित्यागमाह—विशेषत इति । आदिना भरतादिग्रहः । अतंद्रितो निरालसः ॥ * ॥ विशेषतो वात्स्यायनाद्युक्ताः काममार्गास्त्याज्या इत्याह—स्त्रीणामिति । यत आत्मवान्धृतियुक्तः । तत्संगे सति धृतिर्न तिष्ठतीति भावः ॥ २९ ॥ एतदसदभिध्यानम् । तासां संगस्तत्संगस्सोऽस्यास्तीति सत्सं

उद्धव उवाच ॥ यथा त्वामरविंदाक्ष यादृशं वा यदात्मकम् ॥ ध्यायेन्मुमुक्षुरेतन्मे ध्यानं मे वक्तुमर्हसि॥३१॥श्रीभगवानुवाच ॥ सम आसन आसीनः समकायो यथासुखम् ॥ हस्तावुत्संग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥ प्राणस्य शोधयेन्मार्गं पूरकुंभकरेचकैः ॥ विपर्ययेणापि शनैरभ्यसेन्निर्जितेंद्रियः ॥ ३३ ॥

दिति ॥ ३० ॥ मां चिंतयेदित्युक्तं तत्प्रकारं पृच्छति । यथेति ध्यानांगप्रश्नः । यादृशमिति ध्येयविशेषणप्रश्नः । यदात्मकमिति यस्य तानि विशेषणानि तत्स्वरूपप्रश्नः । एतन्मे ध्यानं मे वक्तुमर्हसीति पाठः । तत्रायमर्थः । मुमुक्षुस्त्वां यथा ध्यायेत् तन्मे वक्तुमर्हसीति जिज्ञासोः कथनाय । मे पुनरेतत्त्वद्दास्यमेव पुरुषार्थो न तु ध्यानेन कृत्यमस्तीति । तदुक्तम् । त्वयोपभुक्तस्रग्गंधेत्यादि । त्वं वक्तुमर्हसीति पाठः सुगमः ॥ ३१ ॥ तत्र ध्यानांगत्वेनासनप्राणायामप्रकारमाह सम इति चतुर्भिः । समे नात्युच्छ्रिते नातिनीचे आसने कंबलादौ समकायः सन् यथासुखमासीन इति । नास्ति स्वस्तिकादिनियम इत्युक्तम् । नासाग्रनिरीक्षणं च चित्तस्थैर्याय । "अंतर्लक्ष्यो बहिर्दृष्टिः स्थिरचित्तः सुसंयतः" इति योगशास्त्रोक्तेः ॥ ३२ ॥ विपर्ययेण रेचकपूरककुंभकक्रमेणापि । यद्वा वामनाड्या पूरितं दक्षिणया त्यजेत्तया वा पूरितं वामयेत्येवं विपर्ययेण । यथोक्तं योगे । "इडया पूरयेद्वायुं त्यजेत्पिंगलया ततः ॥ पिंगलापूरितं वायुमिडया च परित्यजेत् ॥" इति । निर्जितेंद्रिय इति प्रत्याहार उक्तः ॥ ३३ ॥

गी तस्य संगात्, अग्निस्तथा न दहति यथा तत्संगिलोहमिति भावः ॥ * ॥ यथा तत्संगिसंगत इति—योषित्संगिसंगत्यागे भूयानेव यत्नः कार्यः, यतः योषित्संगे स्वीया लज्जा प्रतिष्ठा च बाधिकास्ति तत्संगिसंगे तु प्रायस्ते अपि न बाधिके । एवं च योषित्संगी यथा तत्कथाभिस्तस्यामासंजयति लज्जाभयादिकमपि त्याजयति न तथा योषिदपि । अत्र तप्तायःपिंडाग्निदृष्टान्तोऽनुकूलः । यद्यपि क्लेशो बंधश्चोभयत्र तुल्यौ तथापि द्रव्यन्वेषणादिक्लेशस्य तत्संगिसंगः कारणं, बंधस्य स्त्रीकारणम् ॥ ३० ॥ तत्र पाठे । मम ध्यानप्रश्नो जिज्ञासुर्यदिमां पृच्छेत्कीदृग्ध्यानं कुर्यात्तत्कथनायैवेति भावः । एतत्पदस्य त्वद्दास्यमित्यर्थस्तु प्रथमांतमुमुक्षुपदस्य पृथगुच्चारणसामर्थ्यात् । अन्यथा—'ध्यायेन्मुमुक्षवे ह्येतद्ध्यानं मे' इति पाठः स्यादिति प्रतीयते । यद्वा—मे ध्यानं मादिष्टं ध्यानं मन्मनोलग्नताहं वा । सुगमः सुबोधः ॥ * ॥ भक्तिं विना किमपि साध्यं न सिध्यतीति भगवद्वाक्यान्निश्चित्य सर्वेषां मार्गाणां प्रकारज्ञानं विना स्वमार्गोत्कर्षज्ञानमतिसुखदं न भवतीति भावेन मोक्षाकांक्षिणो ध्यानभक्तेः प्रकारादीन्पृच्छति—यथेति । ननु मुमुक्षोर्ध्यानेन पृष्टेन तवैकांतिकस्य किं तस्मात्, तस्माद्यथा त्वामहं ध्यायामि तद्वदेलेवं पृच्छवतामित्यत आह—मे मम तु । एतद्ध्यानमिति संहतपाणिद्वयेन तस्य चरणद्वयं दर्शयति । 'ध्यानं त्वं वक्तुमर्हसि' इति पाठः सुगमः ॥ ३१ ॥ तत्रादौ "नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्" "समं कायशिरोग्रीवं धारयन्नचलं स्थिरः" इत्यादिश्रीगीतोक्तेः । अंतश्चेतस्येव लक्ष्यो यस्य स तथा ॥ * ॥ ० ॥ ३२ ॥ विपर्ययेण मत्प्रोक्तपूरककुंभकरेचकाख्यक्रमवैपरीत्येन । योगशास्त्रे तु वैपरीत्यमन्यथोक्तमित्याह—यद्वेति । पूरकादिस्वरूपं तु—" बाह्यस्थितं नासपुटेन वायुमाकृष्यते नैव शनैः समस्तम् । नाडीषु सर्वासु च पूरयेद्यः स पूरको नाम महान्निरोधः ॥ न रेचको नैव तु पूरको वा नासाग्रचारी स्थित एव वायुः । सुनिश्चलं धारयति क्रमेण कुंभाख्यमेनं प्रवदंति तज्ज्ञाः ॥ निष्क्रम्य नासाविवरादशेषं प्राणं बहिः शून्यमिवानलेन । निरुच्छ्वसंस्तिष्ठति चोर्ध्ववायुः स रेचको नाम महान्निरोधः ॥" इति । प्रत्याहारस्तु—" शब्दादिभ्यः प्रपन्नानि यदक्षाणि यतात्मभिः । प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥" इति ॥ * ॥ द्वादशांगुलपर्यंतमनाहतचक्रं प्रति नत्वाऽत एव 'हृदि संतम्'

ह्यविच्छिन्नमोंकारं घंटानादं बिसोर्णवत् ॥ प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरम् ॥ ३४ ॥ एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् ॥
दशकृत्वस्त्रिषवणं मासादर्वाग्जितानिलः ॥ ३५ ॥ हृत्पुंडरीकमंतःस्थमूर्ध्वनालमधोमुखम् ॥ ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥ ३६ ॥

प्राणायामो द्विविधः सगर्भोऽगर्भश्चेति । तत्र श्रेष्ठत्वात्प्रणवगर्भमाह हृदीति द्वाभ्याम् । मूलाधारादारभ्याविच्छिन्नं संततं घंटानादतुल्यमोंकारं हृदि संस्थितं प्राणेनोदीर्योर्ध्वं द्वादशांतपर्यंतं नीत्वा । कथम् । बिसोर्णवत्कमलनालतंतुवत् । तत्र मात्रातीते स्वरं पंचदशं बिंदुं संवेशयेत् । अथ पुनरित्यस्य तं च बिंदुशिरस्कं कुर्यादित्यर्थः । यद्वा मूलाधारादारभ्य मूर्धांतपर्यंतं बिसतंतुवत्सूक्ष्ममविच्छिन्नं संततं हृदि मनसि प्राणेनोदीर्याभिव्यज्याथ पुनस्तत्रोंकारे घंटानादतुल्यं स्वरमुदात्तं नादं स्थिरीकुर्यादिति ॥ ३४ ॥ मासादर्वाक् जितानिलो भवति ॥ ३५ ॥ एवं ध्यानांगमुक्त्वा यादृशमित्यस्योत्तरं वक्तुं ध्येयपीठमाह हृत्पुंडरीकमिति सार्धेन । अंतःस्थं देहांत

इत्युक्तम् ' हृदये स्यादनाहतम् ' इत्युक्तत्वात् ॥ ३३ ॥ तत्र सगर्भागर्भयोर्मध्ये । मूलाधारात्तन्नामकगुदेंद्रियस्थचक्रात् । द्वादशांतपर्यंतं द्वादशमात्रापर्यंतम् । तल्लक्षणं योगशास्त्रे–" चक्षुःस्पंदनमात्रस्य यावद्द्वादशसंज्ञकाः । तावन्निरुध्यते प्राणः प्राणायामः स एव हि ॥ " । यद्वा–" स्वजानुतः करावर्तं यावद्द्वादशछोटिकाः । तावन्निरुध्यते प्राणः प्राणायामः स कीर्तितः ॥ प्राणायामो लघुस्त्वेको द्विगुणो मध्यमः स्मृतः । उत्तमस्त्रिगुणो ज्ञेय इत्येषा वैदिकी स्थितिः ॥ " इति । बिंदूपनिषदि तु–" घोषिणी प्रथमा मात्रा विद्युन्माली तथा परा । पतंगी च तृतीया स्याच्चतुर्थी वायुवेगिनी ॥ पंचमी नामदेया च षष्ठी चैन्द्री विधीयते । सप्तमी वैष्णवी नाम शांकरी च तथाष्टमी ॥ नवमी महती नाम ध्रुवेति दशमी स्मृता । एकादशी भवेन्मौनी ब्राह्मीति द्वादशी मता ॥ " इति मात्रानामान्युक्तानि । फलं चासां प्राणवियोगकाले तत्रैवोक्तम्–" प्रथमायां तु मात्रायां यदि प्राणैर्वियुज्यते । स राजा भारते वर्षे सार्वभौमः प्रजायते ॥ द्वितीयायां समुत्क्रांतो भवेद्यक्षो महात्मवान् । विद्याधरस्तृतीयायां गंधर्वश्च चतुर्थिकाम् ॥ पंचम्यामथ मात्रायां यदि प्राणैर्वियुज्यते । उषितः सह देवैस्तु सोमलोके महीयते ॥ षष्ठ्यामिंद्रस्य सायुज्यं सप्तम्यां वैष्णवं पदम् । अष्टम्यां व्रजते रुद्रं पशूनाञ्च पतिं तथा ॥ नवम्यां च महर्लोकं दशम्यां च ध्रुवं व्रजेत् । एकादश्यां तपोलोकं द्वादश्यां ब्रह्म शाश्वतम् ॥ " इति । तत्रोंकारे मात्रातीते द्वादशमात्रामतिक्रम्य भाविते पंचदशं मातृकायामकारादारभ्य गणनायां पंचदशममिति बिंदुरूपमनुस्वारसंज्ञम् । अथ पुनरित्यक्षरचतुष्कस्येत्यर्थ इदं विवरणम् । तमोकाररूपं प्रथममुच्चारयन्द्वादशमात्रातीते सबिन्दुमुच्चारयन्ध्यायेदित्यर्थः । पूर्वव्याख्याने बिन्दुशिरस्कस्य पुनर्बिन्दुशिरस्ककरणं प्राकृतजनबुद्ध्यारूढं न भवति, ओकाररूपेणोच्चारणे तु प्रणवसाकल्यं न स्यादित्यतोऽर्थांतरमाह–यद्वेति । विशेषस्त्वजपाप्रसंगेनोक्त एव प्राक् ॥ * ॥ मात्रातीत इति–यथा घंटानादे मात्रा नास्ति तथा मात्राशून्य इत्यर्थः । तं चोंकारबिंदुः शिरसि यस्य तथाभूतं कुर्यात् । वस्तुतस्तु नादशिरस्कमित्येव वाच्यम्, नादस्य तदंगत्वेनावश्यं वाच्यत्वात् । प्राणेन प्राणायामेन मनसि भावनयाभिव्यक्तं कृत्वेति दीपिका ॥ ३४ ॥ प्राणं प्राणायामम् । प्रतिदिनं त्रिषवणं त्रिकालं दशकृत्वोऽभ्यस्यतो मासादर्वाक् मासात्प्रागेव जितानिलः प्राणप्रसादं प्राप्तो भवतीत्यर्थः ॥ * ॥ प्राणं प्राणायामम् ॥ ३५ ॥ नालं दंडाकारम् उर्द्ध्वभागे । पुष्पभागस्त्वधोमुखोऽस्तीत्यर्थः ॥ * ॥ ध्येयस्य भगवतः पीठं सिंहासनं हृत्पुंडरीकमिति । उन्निद्रप्रतियोगित्वेन मुकुलितमि

कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ॥ वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमंगलम् ॥ ३७ ॥ समं प्रशांतं सुमुखं दीर्घचारुचतुर्भुजम् ॥ सुचारुसुंदरग्रीवं सुकपोलं शुचिस्मितम् ॥ ३८ ॥ समानकर्णविन्यस्तस्फुरन्मकरकुंडलम् ॥ हेमांबरं घनश्यामं श्रीवत्सश्रीनिकेतनम् ॥ ३९ ॥ शंखचक्रगदापद्मवनमालाविभूषितम् ॥ नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥ ४० ॥ द्युमत्किरीटकटककटिसूत्रांगदायुतम् ॥ सर्वांगसुंदरं हृद्यं प्रसादसुमुखेक्षणम्॥४१॥सुकुमारमभिध्यायेत्सर्वांगेषु मनो दधत्॥ इंद्रियाणींद्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः॥बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ॥४२॥ तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ॥ नान्यानि चिंतयेद्भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥ तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ॥ तच्च त्यक्त्वा मदारोहो न किंचिदपि चिंतयेत् ॥ ४४ ॥

र्वर्ति ऊर्ध्वनालमधोमुखं मुकुलितं च कदलीपुष्पसंकाशं यदस्ति तद्विपरीतं ध्यात्वेत्यर्थः ॥ ३६ ॥ न्यसेच्चिंतयेत् । सविशेषणं ध्यानमाह वह्निमध्य इति षड्भिः । ध्यानमंगलं ध्यानस्य शुभं विषयम् ॥ ३७ ॥ सममनुरूपावयवम् । दीर्घाश्चारवश्चत्वारो भुजा यस्मिंस्तत् । सुचारु अतिरम्यम् ॥ ३८ ॥ समानयोः कर्णयोर्विन्यस्ते स्फुरती मकराकारे कुंडले यस्मिंस्तत् । श्रीवत्सश्रियोर्निकेतनं वक्षसि दक्षिणवामतः ताभ्यां युक्तमित्यर्थः ॥ ३९ ॥ ४० ॥ द्युमद्भिः किरीटादिभिरासमंताद्युतमलंकृतम् । प्रसादेन शोभनं मुखमीक्षणं च यस्मिंस्तत् ॥ ४१ ॥ सुकुमारमतिकोमलम् । सविशेषणं ध्यानमुपसंहरति । इंद्रियाणीति । प्रकर्षेण नयेत् । सर्वतः सर्वांगयुक्ते ॥ ४२ ॥ यादृशमित्यस्योत्तरत्वेन सविशेषणमुक्त्वा यदात्मकमित्यस्योत्तरतया शनैर्विशेषणत्यागेन ध्यानमेव समाधिपर्यंतमाह तदिति त्रिभिः । एकत्रांगे । अन्यान्यंगानि न चिंतयेत् । एकत्रेति यदुक्तं तदेवांगं दर्शयति । सुस्मितमिति ॥ ४३ ॥ व्योम्नि सर्वकारणरूपे । तच्च कारणत्वमपि त्यक्त्वा मदारोहो मयि शुद्धे ब्रह्मण्यारूढः सन् किंचिद्ध्यातृध्ये

त्यध्याहृतम् । सूर्यादिमंडलानि ध्यायेत् ॥ ३६ ॥ उत्तरोत्तरं क्रमानतिक्रमेण । एतद्वक्ष्यमाणम् ॥ * ॥ उत्तरोत्तरं क्रमेणांतरंतःक्रमेण ॥ ३७ ॥ ० ॥ * ॥ अनुरूपावयवम्—अन्यूनाधिका अवयवा यस्मिन्रूपे ॥ ३८ ॥ इत्यर्थ इति—वामे श्रीर्दक्षिणे च भागे श्रीवत्समिति भावः ॥*॥ श्रीवत्सो वक्षसो दक्षभागे रोम्णां दक्षिणावर्तो भृगुलतासंज्ञकः, श्रीश्च वामभागरोम्णामावर्तो हेमरेखा रूपा वा, ते निकेतने असाधारणाचिह्ने यस्य तम् ॥३९॥ ० ॥ * ॥ आयुतं समंतादलंकृतम् । शंखेति सार्द्धयुग्मम् ॥ ४० ॥ ० ॥ * ॥ ० ॥४१॥ सर्वस्मिन्निति सर्वतः, सप्तम्यर्थे तसिः । सर्वांगेषु इत्यर्थः ॥ * ॥ इन्द्रियाणि चक्षुरादीनि । इन्द्रियार्थेभ्यः विषयेभ्यो रूपादिभ्यः । सारथिना सहायरूपया 'सहाये सारथिः सूते मित्रे' इति कोशात् ॥ ४२ ॥ ० ॥ * ॥ ० ॥ ४३ ॥ तत्र मुखे ॥ * ॥ तत्र लब्धपदमित्यादिकं मुमुक्षुध्यानत्वात् । यद्वा—तदनंतरं ब्रह्मानुसंधानं मायावृत्तिलेशावशेषलोपेच्छया, तल्लोपे च स्वतः श्रीभगवत्स्फूर्तिर्भवतीति 'ब्रह्मभूतः प्रसन्नात्मा' इतिवत् ॥ * ॥ **विश्वनाथस्तु**—लब्धपदं ततोऽन्यत्रागत्य तत्रैव स्थिरीभूतमित्यर्थः । अतश्चात्र मुखध्यान एव लब्धं मुखध्यानमजहदेवेत्यर्थः । "भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेत्" इति श्रीकपिलोक्तेः । कर्मज्ञानादित्यागवद्भक्तिध्यानत्यागेच्छाया निषिद्धत्वात् । आकृष्य देहेंद्रियादिभ्यः पृथक्कृत्य, न तु ध्यानभक्तेरपि पृथक्कृत्वेत्यर्थः । न

एवं समाहितमतिर्मामेवात्मानमात्मनि ॥ विचष्टे मयि सर्वात्मञ्ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥ ध्यानेनेत्थं सुतीव्रेण युंजतो योगिनो मनः ॥ संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे भगवदुद्धवसंवादे भक्तियोगनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीभगवानुवाच ॥ जितेंद्रियस्य युक्तस्य जितश्वासस्य योगिनः ॥ मयि धारयतश्चेत उपतिष्ठंति सिद्धयः ॥ १ ॥ उद्धव उवाच ॥ कया धारणया कास्वित्कथंस्वित्सिद्धिरच्युत ॥ कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥ श्रीभगवानुवाच ॥ सिद्धयोऽष्टादश प्रोक्ता धारणा योगपारगैः ॥ तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥ ३ ॥

यंविभागमपि न चिंतयेत् ॥ ४४ ॥ मामेवात्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे । ज्योतिर्ज्योतिषि संयुक्तमिवेत्यन्वयः ॥ ४५ ॥ एवंभूतसमाधिपर्यंत ध्यानस्य फलमाह । ध्यानेनेति । मनो युंजतः समादधतः द्रव्यज्ञानक्रियाभ्रमोऽधिभूताधिदैवाध्यात्मरूपो दृश्यद्रष्टृदर्शनरूपो वा भ्रमो निर्वाणं शांतिं सम्यग्यास्यतीति ॥ ॥ ४६ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ततः पंचदशे प्रोक्ताः सिद्धयो धारणानुगाः ॥ श्रीविष्णुपदसंप्राप्तावंतराय तया मताः ॥ १ ॥ एवं मनो युंजतो योगिनोंतराविर्भवंत्यः सिद्धयोऽप्यंतरायप्राया एवातस्ताः परिहृत्य परमेश्वरपर एव भवेदिति वक्तुं सिद्धीराह । जितेंद्रियस्येति । युक्तस्य स्थिरचित्तस्य ॥ १ ॥ स्विदिति वितर्के । कास्वित्किंनामा कथंस्वित्कीदृशी वा । धारणाश्च कतीति प्रश्नांतरे वाशब्दः । त्वमेवैतज्जानासि नान्य इत्याशयेनाह । योगिनामिति ॥ २ ॥ धारणाश्चाष्टादशेत्यनुषंगः । योगपारगैरिति । त्रिकालज्ञत्वादिक्षुद्रसिद्धीरन्येऽपि जानंतीति भावः । अहमेव प्रधानं मुख्यः स्वभावत आश्रयो

किञ्चिदापि चिन्तयेत् किन्तु भक्तिकणिकायुक्तो जीवो ब्रह्मप्रविष्टो ब्रह्मैवानुभवेदिति भावः । श्रीहंसदेवेन गुणचेतसोस्त्यागो य उक्तस्तस्यायमेव प्रकार इति ज्ञेयम ॥ ४४ ॥ सर्वात्मन्निति 'परमे व्योमन्' इतिवत् । यद्वा—सम्यग्युतं संयुतमभिन्नमित्यर्थः ॥ * ॥ किंतु ध्यानमयी भवेदित्याह—मामेव ब्रह्म आत्मनि जीवात्मनि विचष्टे, आत्मानञ्च सर्वात्मनि मयि संयतः विचष्टे, ज्योतिर्ज्योतिषि संयुतमिति ब्रह्मजीवयोरप्राकृतस्वीयपूर्णज्योतिर्ज्योतिःकणत्वं ज्ञापितम् । यद्वा—मां तत्पदार्थमेव चिद्रूपत्वेनानुगतमात्मनि त्वंपदार्थे विचष्टे, आत्मानं त्वंपदार्थं ज्योतिःकिरणमिव ज्योतिषि किरणमालिनि संयुतमित्याश्रितं विचष्टे ॥ ४५ ॥ एवंभूतसमाधिर्निर्विकल्पसमाधिस्तत्पर्यंतस्य ध्यानस्य संभवत्वादपरोप्यर्थ इत्याह—दृश्येत्यादि । संयास्यति संयातीत्यर्थः ॥ * ॥ ० ॥ ४६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥ ततो ध्यानवर्णनोत्तरम् । धारणानुगा धारणानुरूपाः । अंतरायतया विघ्नरूपतया ( १ ) । यतोंतरायप्राया अतो हेतोः । ताः सिद्धीः । परिहृत्य त्यक्त्वा । 'नापृष्टः कस्यचिद् ब्रूयात्' इत्युक्तेः । प्रश्नबीजमुत्थापयति—उपतिष्ठंतीति ॥ * ॥ अन्तरायतया विघ्नतया अन्तरायप्राया एव कर्दमादिविधानां तु "तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात्" इत्यनुसारेण सिद्धिसत्त्वेपि नान्तराया इति प्रायग्रहणम् ॥ १ ॥ ० ॥ * ॥ ० ॥ २ ॥ तत्तदधिष्ठानगततत्तद्भगवद्रूपविशेषानुस्मरणं धारणेत्युच्यते । वस्तुतः सिद्धीनां ज्ञानफलत्वेपि धारणाफलत्वकथनं तूपचारत एवान्यथानुत्पन्नज्ञानस्यापि धारणामात्रेण तत्तत्सिद्धिप्रसंग इति । असुरादीनां तु भगवत्क्लृप्तमायाहेतुका एव सिद्धयो नान्यथेति । इति भाव इति—क्षुद्रसिद्धयः क्षुद्रदेवाराधनादिनापि जायंत इति तात्पर्यम् । इति भाव इति—मत्सारूप्येषु मत्पार्षदेष्वपि मत्सदृशा अणिमाद्या न भवन्तीति तात्पर्यम् । सत्त्वस्योत्कर्ष आधिक्यं

अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिंद्रियैः ॥ प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ ४ ॥ गुणेष्वसंगो वशिता यत्कामस्तदवस्यति ॥ एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ ५ ॥ अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥ स्वच्छंदमृत्यु र्देवानां सहक्रीडानुदर्शनम् ॥ यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहताऽऽगतिः ॥ ७ ॥

यासां ताः मत्सारूप्यं प्राप्तेषु किंचिन्न्यूना भवंतीति भावः । गुणहेतवः सत्त्वोत्कर्षहेतुकाः ॥ ३॥ ताः स्वरूपेणोपदिशति अणिमेति सार्धैः पंचभिः । अणिमा महिमा लघिमा च मूर्त्तेर्देहस्य तिस्रः सिद्धयः । प्राप्तिर्नाम सिद्धिः सर्वप्राणिनामिंद्रियैः सह तत्तदधिष्ठातृदेवतारूपेण संबंध इत्यर्थः । श्रुतेषु पारलौकिकेषु दृष्टेषु दर्शनयोग्येष्वपि सर्वेषु भूविवरादिपिहितेष्वपि प्राकाश्यं भोगदर्शनसामर्थ्यं सिद्धिः । शक्तीनां मायातदंशभूतानां प्रेरणम् । तत्रेश्वरे मायाया अन्येषु तदंशानां प्रेरणमीशिता नाम सिद्धिः ॥ ४ ॥ विषयभोगेष्वसंगो वशितासिद्धिः । यत्कामो यद्यत्सुखं कामयते तत्तदवस्यति तस्यतस्य सीमानं प्राप्नोतीति सिद्धिः । औत्पत्तिकाः स्वाभाविक्यो निरतिशयाश्चेत्यर्थः ॥ ॥ ५ ॥ गुणहेतुसिद्धीराह । अनूर्मिमत्त्वं क्षुत्पिपासादिराहित्यम् । दूरे श्रवणं दर्शनं चेति द्वे सिद्धी । मनोजवः मनोवेगेन देहस्य गतिः । कामितरूपप्राप्तिः । परकाये प्रवेशः ॥ ६ ॥ स्वेच्छामृत्युः । अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः । संकल्पानुरूपप्राप्तिः । अप्रतिहता आसमंताद्गतिर्यस्याः सा आज्ञा चेत्येता

हेतुर्यासां तास्तथा ॥ * ॥ मत्प्रधाना इति–स्वरूपशक्तिवृत्तिविशिष्टत्वेनोपास्यमानान्मत्त एव मत्पार्षदवत्स्वरूपशक्त्येशानां तेषामाविर्भावात्, अन्यत्र तु तदाभासानामेवेति ज्ञेयम् । गुणहेतव इति–मदुपहितत्वेनोपास्यमानेभ्योऽपि तत्कार्येभ्य एव तदंशानां तेषां प्रापंचिकजनेष्वाविर्भावात् ॥ * ॥ संदर्भः–मत्प्रधानाः प्रधानलक्षणाविशेषणेन विशेष्याश्रयोपस्थितिः, मुख्याश्रयत्वं भगवत एव, योगिषु तदाभासः, तेषां सम्यग्भगवत्परत्वाभावात् ॥ ३ ॥ ताः सिद्धीः । इत्यर्थ इति–सर्वेषामिंद्रियदेवानामैक्यादन्यानुभूताविषयप्राप्तिरिति भावः । पारलौकिकेषु इंद्रादिविषयेषु दर्शनयोग्येष्वैहिकेषु देशांतरीयेष्वपि प्राकाश्यं सिद्धेर्नाम । तत्र द्वयोर्मध्ये । अन्येषु ईश्वरेतरेषु देवादिनरादिषु । तदंशानां मायांशानामविद्यादीनाम् ॥ * ॥ अणिमेति युग्मकम् । अणिम्ना भवति अणुः यतः शिलामपि प्रविशति । महिम्ना महान्भवति यतः सर्वं व्याप्नोति । लघिम्ना लघुर्भवति यतः सूर्यमरीचिमवलंब्य सूर्यलोकं याति । प्राप्त्यांगुल्यग्रेण स्पृशति चन्द्रमसम् । प्राकाम्यमिच्छानभिघातः यतो भूमावुन्मज्जति निमज्जति च यथोदके । ईशित्वं यतो भूतभौतिकानां प्रभवस्थितिव्ययानामीष्टे व्यूहे मिलनम् । वशित्वम् उपस्थितेषु दृष्टानुश्रविकादिषु यतमानादिसंज्ञात्रयं वैराग्याणां कामावसायित्वं सत्यसंकल्पता ‘ यथास्य संकल्पो भवति तथैव भूतानि भवन्ति ’ इति सांख्यकौमुद्यां वाचस्पतिमिश्राः । अत्र ‘प्राकाम्यमिच्छाभिघातः’ इत्येव वाचस्पतिमिश्रादिभिर्व्याख्यातत्वात् । प्राकाश्यमिति पाठः ‘ तस्माद्दर्शनसामर्थ्यम् ’ इति व्याख्यातस्य हृदयमबुद्ध्वा केनचित्कल्पितः प्रतिभाति ॥ ४ ॥ तस्यतस्य सुखस्य अस्याः सिद्धेर्ग्रंथांतरे प्रकाम्यमिति । इत्यर्थ इति–“स्वाभाविकाधिक्ययोश्च शब्द औत्पत्तिको मतः ” इति निरुक्त्युक्तेः । “ सर्वाधिका अणिमाद्या विष्णोर्नान्यस्य कस्यचित् ” इति विजयध्वजोक्तेरिति व्याख्येति ॥ * ॥ ० ॥ ५ ॥ गुणहेतुसिद्धीः सत्त्वोत्क

त्रिकालज्ञत्वमद्वंद्वं परचित्ताद्यभिज्ञता ॥ अग्न्यर्काम्बुविषादीनां प्रतिष्टंभोऽपराजयः ॥ ८ ॥ एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ॥ यया धारणया या स्याद्यथा वा स्यान्निबोध मे ॥ ९ ॥ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः ॥ अणिमानमवाप्नोति तन्मात्रोपासको मम ॥ १० ॥ महत्यात्मन्मयिपरे यथासंस्थं मनो दधत् ॥ महिमानमवाप्नोति भूतानां च पृथक्पृथक् ॥ ११ ॥ परमाणुमये चित्तं भूतानां मयि रंजयन् ॥ कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥ १२ ॥

दश ॥ ७ ॥ क्षुद्रसिद्धीश्च पंचाह । त्रिकालज्ञत्वमिति । अद्वंद्वं शीतोष्णाद्यनभिभवः । अग्न्यादीनां संस्तंभनम् ॥ ८ ॥ तत्तद्धारणाभिः सह विशेषतो निरूपयति ययेति यावत्समाप्ति ॥ ९ ॥ भूतसूक्ष्मोपाधौ मयि तन्मात्रं भूतसूक्ष्माकारम् । स तन्मात्रोपासकः । मम मदीयमणिमानम् ॥ १० ॥ ज्ञानशक्तिमहत्तत्त्वोपाधौ मयि । यथासंस्थं महत्तत्त्वाकारम् । भूतानां चेति । आकाशादिभूतोपाधौ च मयि मनो धारयंस्तत्तद्भूतमहिमानं प्राप्नोतीत्यर्थः ॥ ११ ॥ वाय्वादिभूतानां ये परमाणवस्तन्मये तदुपाधौ मयि चित्तं रंजयन् योगी कालसूक्ष्मार्थतां कालपरमाणूपाधिरूपतामिति लघुत्वविवरणम् । तदुक्तम् । "स कालः परमाणुर्वै यो भुंक्ते

षैकृताः ॥ * ॥ ० ॥ ६ ॥ ७ ॥ अष्टादशभ्योऽन्याः क्षुद्रसिद्धीः पंच । संस्तंभनं वेगनिरोधः । आदिशब्देन शस्त्रास्त्रादिग्रहः । अथासामंतर्भावभेदेनाष्टादश सिद्धयः, अष्ट सिद्धय इति केषांचित्पक्षः । तथाहि—अनूर्मिमत्त्वस्य प्राकाम्यांतर्गतत्वेन ते उभे एका, दूरश्रवणदर्शनत्रिकालत्वपरचित्ताद्यभिज्ञतानां प्राकाश्यांतर्भावेन चतस्र एका, कामरूपत्वस्याणिमलघिमांतर्भावेनैका, अग्निस्तंभार्कस्तंभजलस्तंभविषस्तंभशस्त्रास्त्रशापादिस्तंभानामीशित्वांतर्भावेन पंच, अपराजयोपीशित्वांतर्गत इति षट् । मनोजवकामरूपपरकायप्रवेशस्वच्छंदमृत्युतानां देवैः सह तत्क्रीडानुदर्शनाज्ञाप्रतिहतीनां प्राप्त्यंतर्भावेन षट् । अत्र कामरूपत्वस्य द्विरुक्तिस्तु रूपभेदेन न विरुध्यते । तथाहि—"मूलभूतास्तु सिद्धीनां दैवानामष्टसिद्धयः । सर्वसिद्धिप्रधानास्तास्तज्ज्ञा अष्टादश स्मृताः ॥ अष्टस्वंतर्गतास्तास्तु तदपेक्षतयाल्पकाः । अनूर्मिमत्त्वसिद्धिस्तु प्राकाम्यांतर्गता स्मृता ॥ दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेव च । परचित्ताद्यभिज्ञानं प्राकाश्यांतर्गतानि च ॥ अणिमादित्रयांतश्च कामरूत्वमिष्यते । अग्न्यर्काम्बुविषादीनां प्रतिष्टंभोवशित्वगः ॥ मनोजवः कामरूपं परकायप्रवेशनम् । स्वच्छंदमृत्युता देवैः सह क्रीडेष्टसाधनम् ॥ प्राप्तावंतर्गतान्याहुराज्ञाप्रतिहतिस्तथा ! अग्निष्टंभो रविष्टंभ उदकस्तंभ एव च ॥ विषस्तंभस्तथा शस्त्रशापादिस्तंभ एव च । ईशित्वांतर्गतान्याहुरपराजय एव च ॥ एवमष्टादशाष्टभ्यो जायंते सिद्धयः क्रमात् । अष्टादशभ्यश्चान्यास्तु जायन्ते सिद्धयोऽमिताः ॥" इत्यलं प्रपञ्चेन, किं बहुना । "सिद्धयः परिपूर्णास्तु विष्णोरेकस्य नान्यगाः" इति तीर्थः ॥ * ॥ ० ॥ ८ ॥ ० ॥ * ॥ ० ॥ ९ ॥ तत्र प्रथमोद्दिष्टाणिमादिसिद्धिप्रापकध्यानप्रकारमाह—भूतेति । भूतसूक्ष्माणां पार्थिवादिपरमाणूनामात्मनि नियामके परमाणुषु स्थिते मयि तन्मात्रपरिमितत्वेन मनो धारयन् ध्यायन्नणिमानमवाप्नोति । अनेन यद्यद्वस्तु नियतं रूपं स्वयमपि तत्तत्परिमितो भवतीत्युक्तं भवति । यद्वा—मम तन्मात्रोपासकः तस्याकाशादिगुणस्य शब्दादेर्यत्सूक्ष्ममात्रं परिमाणं तत्परिमाणस्य मम स्वरूपस्योपासकोपि तत्परिमितो भवतीत्यर्थः ॥ * ॥ भूतसूक्ष्मादयो वैकुंठादिगताः स्वरूपशक्तिविलासा ज्ञेयाः । तासामष्टाविंशत्यादावुभयेषां भेदेनावश्यव्यवस्थाप्यमानत्वात् । तन्मात्रोपासको ममेति पुनरुक्तेस्तदवधारणार्थत्वाच्च । अणिमानमित्यत्रापि ममेत्यन्वयः । किन्त्वणिमादिकमिदमदंशेनैव ज्ञेयम् 'जगद्व्यापारवर्जम्' इति न्यायेन सर्वथा तद्धर्मप्राप्त्यसंभवात् ॥ १० ॥ तत्तद्भूतमहिमानमाकाशादिमहाभूतसादृश्यं गच्छति । इत्यर्थ इति—पृथिव्युपाधिकमद्रूपचिंतनात्पृथिवीवद्विस्तृतो निश्चलो गुरुश्च भवति एवमन्यत्रापीति भावः ॥ * ॥ महिमानं तत्तच्छक्त्यलंकृतमूर्तित्वमित्यर्थः । भूतानां वेति महत्तत्त्वधारणायामेतदपीच्छावांतरं फलं भवतीत्यभिप्रायात् ॥ ११ ॥ रंजयन्ननुरक्तं कुर्वंस्तदेकनिष्ठमिति यावत् ॥ * ॥

धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् ॥ सर्वेंद्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥ महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम् ॥ प्राकाश्यं पारमेष्ठ्यं मे विंदतेऽव्यक्तजन्मनः ॥ १४ ॥ विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे ॥ स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम् ॥ १५ ॥ नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ॥ मनोमय्यदधद्योगी मद्धर्मा वशितामियात् ॥ १६ ॥ निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः ॥ परमानंदमाप्नोति यत्र कामोऽवसीयते ॥ १७ ॥

परमाणुताम् " इति ॥ १२ ॥ वैकारिकाहंकारोपाधौ मयि । अखिलमेकाग्रम् । आत्मत्वमधिष्ठातृत्वम् । अत्र हेतुः । मन्मनाः । मयि मनोधारणप्रभावादेवं भवति नात्रातीव हेतुरनुसंधेय इति भावः । 'एवं मद्धारणानुभावेन मद्योगबलमाश्रय' इत्यादिषु द्रष्टव्यम् ॥ १३ ॥ क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूत्रं तदुपाधौ मयि समे पारमेष्ठ्यं सर्वोत्कृष्टं प्राकाश्यं विंदते । क[illegible]भतस्य । अव्यक्ताज्जन्म यस्य तस्य सूत्रस्य । तदुपाधेर्ममेत्यर्थः ॥ १४ ॥ त्र्यधीश्वरे त्रिगुणमायानियंतरि अत एव कालविग्रहे आकलयितृरूपेंतर्यामिणि । ईशित्वं विशिनष्टि । क्षेत्रज्ञानां जीवानां क्षेत्राणां तदुपाधीनां च चोदनां प्रेरणं न तु विश्वसृष्ट्यादिकर्तृत्वलक्षणमित्यर्थः ॥ १५ ॥ तुरीयाख्ये "विराड् हिरण्यगर्भश्च कारणं चेत्युपाधयः । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः ॥" इत्येवंलक्षणे । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ " तद्वति भगवच्छब्दशब्दिते ॥ १६ ॥ यत्र परमानंदरूपे सर्वोऽपि कामस्तदंशभूतोऽ

भूतानां मध्ये यः परमाणुर्भारशून्याकाशपरमसूक्ष्मांशस्तदुपाधिके मयि चित्तं रञ्जयन्योगी लघिमानं भारशून्यत्वमवाप्नोति तमेव दर्शयति–कालस्य सूक्ष्मांशो यः परमाणुस्तस्यार्थः । उपाधिः परमसूक्ष्मदेशावच्छिन्न आकाशस्तद्रूपतां तद्वदतिलघुतामित्यर्थः ॥ १२ ॥ वैकारिकः सात्त्विकः । अत्र सर्वेंद्रियाधिष्ठातृत्वे । इति भाव इति–अचिंत्यशक्तेर्मम चिन्तनान्न किंचिदसाध्यं भवतीत्याशयः । एतदन्यत्राप्यतिदिशति–एवमित्यादिना ॥ * ॥ अत्रेंद्रियाधिष्ठातृत्वाप्तौ । एवं भवतींद्रियाधिष्ठातृत्वं भवति । अस्यां सिद्धौ मद्धारणादन्यो हेतुर्न विचार्यः, किन्तु मद्धारणैवात्र हेतुः ॥ १३ ॥ प्राकाश्यं तन्नामिकां सिद्धिम् । इत्यर्थ इति–सूत्रोपाधेर्मम ध्यानात्प्राकाश्यसिद्धिलाभो भवतीति भावः ॥ * ॥ अव्यक्तमिंद्रियागम्यं जन्म यस्य तस्य मम प्राकाम्यं दृष्टादृष्टभोगसामर्थ्यम् ॥ १४ ॥ अत एव मायानियंतृत्वादेव । तदुपाधीनां जीवोपाधीनां देहादीनाम् । इत्यर्थ इति–विश्वसृष्ट्यादिसामर्थ्यं तु भगवत एव नान्यत्र परं तु यस्य देहस्य जीवस्य यत्र कर्मणि प्रेरणा स तदेव कुर्यादिति भावः ॥ * ॥ तदुपाधीनां देहानाम् । प्रेरणं तत्रतत्र स्वशक्तिसंचारणम् । जगद्व्यापारवर्जमिति सृष्ट्यादिकर्तृत्वरूपं प्रेरणं न ज्ञेयम् ॥ १५ ॥ वशितां विषयभोगेष्यसंगताम् ॥ * ॥ वशितां वशित्वं वशीकारवैराग्यम् । तदुक्तं पातञ्जले–" दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् " इति । विराट् समष्टिस्थूलोपाधिर्विराट्, हिरण्यगर्भः समष्टिसूक्ष्मोपाधिः कारणम् । ऐश्वर्यस्येति समग्रस्येति षड्भिरन्वेति । त्रिपाद्विभूत्यधिष्ठातृत्वमैश्वर्यम्, वीर्यं पराक्रमः । धर्मस्येति भक्तिहेतुभूतस्य ' धर्मो मद्भक्तिकृत्प्रोक्तः ' इति वक्ष्यमाणत्वात् । यशः सत्कीर्तिः, श्रीः संपत्तिः सौंदर्यं वा । ज्ञानं स्वपरविषयं वैराग्यं प्राकृतभोगसंबंधाभावः । इंगना ईरणा वा संज्ञा । यस्य स्थूलसूक्ष्मकारणानि नोपाधयः किंतु तुरीयं सच्चिदानंद आख्या आख्यागम्य आकारो यस्य तस्मिन्नारायणे । स च केन शब्देनोच्यते तत्राह–भगवच्छब्देन शब्दितः कथितस्तस्मिन् ॥ १६ ॥ तदंशभूतः काम्यमानो विषयः । " अन्यानि भूतानि मात्रामुपजीवंति " इति श्रुतेः ॥ * ॥

श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ॥ धारयञ्छ्वेततां याति षडूर्मिरहितो नरः ॥ १८ ॥ मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ॥ तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥ १९ ॥ चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ॥ मां तत्र मनसा ध्यायन्विश्वं पश्यति सूक्ष्मदृक् ॥ २० ॥ मनो मयि सुसंयोज्य देहं तदनुवायुना ॥ मद्धारणाऽनुभावेन तत्रात्मा यत्र वै मनः ॥ २१ ॥ यदा मन उपादाय यद्यद्रूपं बुभूषति ॥ तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः ॥ २२ ॥ परकायं विशन्सिद्ध आत्मानं तत्र भावयेत् ॥ पिंडं हित्वा विशेत्प्राणो वायुभूतः षडंघ्रिवत् ॥ २३ ॥

वसीयते समाप्यते तम् ॥ १७॥ अतः परं गुणहेतुकाः सिद्धीराह । शुद्धे सत्त्वात्मके । श्वेततां शुद्धरूपताम् ॥ १८॥ आकाशात्मा यः प्राणः समष्टिरूपस्तद्रूपे मयि मनसा घोषं नादं चिंतयन्नसौ हंसो जीवस्तत्राकाशे उपलब्धा ज्ञाता संस्तत्रस्था विचित्रा वाचः शृणोति । यद्वा तत्राकाशे उपलब्धा अभिव्यक्ता या वाचस्ताः दूरतः शृणोतीति ॥ १९ ॥ त्वष्टा आदित्यस्तस्मिन्नपरिच्छिन्ने चक्षुः संयोज्य तं च चक्षुषि संयोज्य तत्रोभयसंयोगे मां ध्यायन् विश्वं दूरतः पश्यति ॥ २० ॥ मनो देहं च तदनुवर्तिना वायुना सह मयि सुसंयोज्य या मद्धारणा क्रियते तस्याः प्रभावेण यत्र मनो याति तत्रात्मा देहो यातीत्यर्थः । यद्वा मनः कर्तृ । आत्मानं वायुना सह देहं च मयि सुसंयोज्य यत्र याति तदनु तत्र देहो यातीति ॥ २१ ॥ मन उपादाय उपादानकारणं कृत्वा यद्यद्देवादिरूपं भवितुमिच्छति तत्तन्मनोरूपं मनसोऽभीष्टरूपं योगी भवेत् । कुतः । यतो मद्योगबलम् । योऽहमचिंत्यशक्तिर्नानाकारस्तस्मिन्मयि मनसो योगो धारणा तस्य बलं प्रभावः स एवाश्रयः कारणम् ॥ २२ ॥ यत्र प्रविविक्षति तत्रात्मानं चिंतयेत् ।

निर्गुणे निर्विशेषे ब्रह्मणि । परमानन्दं ब्रह्मसायुज्यम् । तदंशभूतो ब्रह्मानन्दांशभूतः " एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति " इति श्रुतेः । एवं च ब्रह्मसायुज्यमपि सिद्धिमध्ये गणितम् ॥ १७ ॥ अतः परमष्टसिद्धेः कथनात्परम् । शुद्धे निर्दुःखे वा श्वेततां निर्दुःखत्वं वेति तीर्थः ॥ * ॥ अतः परं प्राकृतधर्मोपाधितयोपास्यमानत्वाद्गुणहेतुका इत्युक्तम् । धर्ममये प्राकृतसत्त्वजधर्माधिष्ठातरि स्वतः शुद्धे शुद्धरूपतां रजस्तमोहीनसत्त्वात्मतामित्यनूर्मिमत्त्वनाम्नी सिद्धिरिति **संदर्भः** ॥ १८ ॥ " त्यागात्पूर्वशरीराणां नवानां संचयेन च । जीवं हंस इति प्राहुः " इति । तत्रस्था आकाशस्थाः । अत्र सन्निति तत्र स्था इति पदयोरध्याहारे गौरवं मत्वाह—यद्वेति ॥ * ॥ प्रथमार्थे आकाशे ज्ञातृत्वं तद्गुणशब्दज्ञानेनैव प्राप्तं तत्रोपलब्धेत्यधिकमपुष्टार्थत्वादतो—यद्वेति । दूरत इति प्रकरणबलादध्याहृतम् ॥ १९ ॥ तं च त्वष्टारम् । तत्र तस्मिन्नुभयसंयोगे त्वष्टृचक्षुःसंयोगे । अत्राशयमाह—अध्यात्माधिदैवभावेनैकं संभाव्य तत्रैकं मां मनसा एकत्वेन ध्यायन् " यश्चासावादित्ये यश्चायं पुरुषे स एकः " इत्यादिश्रुतेः ॥ * ॥ अपरिच्छिन्ने नेत्रगोलकदेशपरिच्छेदशून्ये । उभयसंयोगे चक्षुस्त्वष्टृसंयोगे । तन्नियंतारं मां ध्यायन् स्वध्यानप्रभाव एव तत्र हेतुत्वेनोक्त इति ज्ञेयम् ॥ २० ॥ तदनुवर्तिना मनोनुवर्तिना । इत्यर्थ इति—मनस्तुल्यगतिर्देहो भवतीति भावः । या मद्धारणा । क्रियत इत्यादिपदाध्याहारे गौरवादाह—यद्वेति । तदनु मनोनु ॥ * ॥ तदनुवर्तिना मनोऽनुकूलेन । मयि मनआद्यधिष्ठातरि । मद्धारणा योगिकर्तृकं मद्धारणम् । एवमेवमभिप्रेत्य मद्धारणा क्रियत इति व्याख्यातम् । तथा च क्त्वाप्रत्ययस्य समानकर्तृकत्वं निर्वहति तथापि मद्धारणा क्रियत इति कष्टकल्पनैवायाति अतो—यद्वेति । आत्मानं मन एव कर्तृभूतम् । मनोजवसिद्धिरियम् ॥ २१ ॥ यदा धारणाकाले । अभीष्टरूपभवने हेतुं पृच्छति—कुत इति । कारणं मनश्चिंतितरूपधारण इत्यर्थः ॥ * ॥ यद्यद्देवादिरूपमिति कामरूपसिद्धिः ॥ २२ ॥ यत्र देहे । तत आत्मचिंतनोत्तरम् । वायौ बाह्यवायौ भूतः प्रविष्टो वायुभूतः ।

पाष्ण्यर्ऽऽपीडय गुदं प्राणं हृदुरःकंठमूर्धसु ॥ आरोप्य ब्रह्मरंध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् ॥ २४ ॥ विहरिष्यन्सुराक्रीडे मत्स्थं सत्त्वं विभावयेत् ॥ विमानेनोपतिष्ठंति सत्त्ववृत्तीः सुरस्त्रियः ॥ २५ ॥ यथा संकल्पयेद् बुद्ध्या यदा वा मत्परः पुमान् ॥ मयि सत्ये मनो युंजंस्तथा तत्समुपाश्नुते॥ ॥ २६ ॥ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ॥ कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥ २७ ॥ मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः ॥ तस्य त्रैकालिकी बुद्धिर्जन्म मृत्यूपबृंहिता ॥ २८ ॥ [ उदासीने मयि परे प्रकृतेर्गुणवृत्तिषु ॥ चिंतयेद्धारयेच्चेतो द्वंद्वैर्नैवाभिभूयते ॥१॥ सर्वभूतहृदिस्थं मामात्मानं सर्वसाक्षिणम् ॥ धारयेदात्मनश्चित्तं परेषां परिपश्यति ॥ २ ॥ ] अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ॥ मद्योगश्रांतचित्तस्य यादसामुदकं यथा ॥ २९ ॥

ततः पिंडं स्वदेहं हित्वा प्राणः प्राणप्रधानलिंगशरीरोपाधिर्वायुभूतो बाह्यवायौ भूतः प्रविष्टस्तेन मार्गेणेत्यर्थः । षडंघ्रिवत् । भृंगो यथा पुष्पात्पुष्पांतरमनायासेन प्रविशति तद्वत् ॥ २३ ॥ पिंडं हित्वेत्युक्तं तत्प्रकारं कथयन्स्वच्छंदमृत्युमाह । पाष्ण्यर्या पार्ष्णिना गुदं निरुध्य प्राणं प्राणोपाधिमात्मानं ब्रह्मरंध्रेण मूर्धद्वारेण । ब्रह्मेत्युपलक्षणम् । ब्रह्म वा अन्यद्वा अपेक्षितं स्थानं मनसा नीत्वा ॥ २४ ॥ मत्स्थं मन्मूर्तिरूपं शुद्धं सत्त्वं चिंतयेत् । तदा सत्त्ववृत्तयः सत्त्वांशभूताः ॥ २५ ॥ यदा वा अकालेऽपि । यथा वेति पाठे यथा वा येन केनापि प्रकारेण । बुद्ध्या संकल्पयेत्तत्तथा यथावत्प्राप्नोतीत्यर्थः । यद्वा यथा संकल्पयेद्यथा वा मत्परो मयि विश्वासवान् भवति तथा तदनुरूपं सर्वमाप्नोतीत्यर्थः । किं कुर्वन् । सत्ये सत्यसंकल्पे मयि मनो युंजन् ॥ २६ ॥ मदिति पृथक् पदम् । ममेत्यर्थः । ईशितुः सर्वनियंतुर्वशितुः स्वतंत्रस्य मम भावं स्वभावं प्राप्तः । एता गुणहेतवः ॥ २७ ॥ अतः परं क्षुद्रा धारणाविद इति त्रिकालज्ञेश्वरधारणा सूचिता । त्रैकालिकी त्रिकालवस्तुविषया । स्वजन्ममृत्युभ्यामुपबृंहिता तत्सहिता । अनयैव परचित्ताद्यभिज्ञताऽपि व्याख्याता ॥ २८ ॥ अग्न्यादिसर्वोपघातशून्यो भगवानित्येवंभूतयोगमयं मुनेर्वपुः तैर्नाभिभूयेत । अत्र हेतुः । मद्योगेति । मद्यो

इत्यर्थ इति–बाह्यवायुद्वारा प्राणप्रधानलिंगदेहं देहांतरं प्रविशतीति भावः ॥ * ॥ ० ॥ २३ ॥ पार्ष्णिः पादस्य गुल्फाधस्तनदेशः ॥ * ॥ गुदं निरुध्येति–'संपीडय सीवनीं सूक्ष्माम्' इत्याद्युक्तेर्मुक्तासनं सूचितम् । स्वच्छन्दमृत्युसिद्धिः ॥२४॥ विहरिष्यन् विहर्तुकामो योगी । उपतिष्ठंति समीपमाप्नुवंतीति ॥*॥ सत्त्वं स्त्रीयान्तःकरणं मत्स्थं मद्गतं चिंतयेत् । देवक्रीडासिद्धिः ॥२५॥ इत्यर्थ इति–असमयेऽपि यथा कथंचित्संकल्पितोऽपि मत्परेण प्राप्यत इतिभावः । एवं चेद्धारणासाधनवैयर्थ्यं स्यादत आह–यद्वेति । इत्यर्थ इति–धारणानुरूपं फलमाप्नोतीति भावः ॥ * ॥ यथा वेत्यत्र द्वितीययथाशब्दस्य यथावदित्यर्थः । तत्संकल्पितं वस्तु तथाप्नोतीत्युक्त्यैव यथावत्त्वमागतमतो–यद्वेति ॥ २६ ॥ तस्येशितृवशितृत्वोपाधिविशिष्टमद्रूपध्यातुः । मदिति पंचमी षष्ठ्यर्थे । एता दश गुणहेतवः सत्त्वोत्कर्षजन्याः ॥ * ॥ स्वभावं नियंतृत्वस्वातंत्र्यलक्षणं ध्येयत्वेन प्राप्तः ॥२७॥ अतो गुणहेतुसिद्धिकथनानंतरम् । क्षुद्रास्तुच्छफलत्वात् । तस्येति तच्छब्दः 'सर्वे सर्वार्थवाचकाः' इति न्यायमाश्रित्य स्वार्थे, स्वस्येत्यर्थः । अत एव स्वाम्याह–स्वजन्ममृत्युभ्यामिति । अनयैव त्रिकालज्ञेश्वरधारणयैवोपलक्षणभूतया, तेन सर्वभूतहृदयस्थाद्युपाधिविशिष्टध्यानात्सर्वभूतचित्ताद्यभिज्ञता भवतीत्यर्थः ॥ * ॥ ० ॥ २८ ॥ इत्येवंभूतयोगोऽग्न्यादिप्रतिघातशून्यो हरेर्ध्यानयोगः प्रधानं यत्र तत्तथा । तैरग्न्यादिभिः । अत्राग्न्या

मद्विभूतीरभिध्यायञ्छ्रीवत्सास्त्रविभूषिताः ॥ ध्वजातपत्रव्यजनैः स भवेदपराजितः ॥ ३० ॥ उपासकस्य मामेवं योगधारणया मुनेः ॥ सिद्धयः पूर्वकथिता उपतिष्ठंत्यशेषतः ॥ ३१ ॥ जितेंद्रियस्य दांतस्य जितश्वासात्मनो मुनेः ॥ मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ॥ ३२ ॥ अंतरायान्वदंत्येता युंजतो योगमुत्तमम् ॥ मया संपद्यमानस्य कालक्षपणहेतवः ॥ ३३ ॥ जन्मौषधितपोमंत्रैर्यावतीरिह सिद्धयः ॥ योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥ ३४ ॥

गेन यादसामुदकं यथा विघातकं न भवति । तथा तस्य वपुषोऽग्न्यादय इत्यर्थः । अनयैवाद्वंद्वताऽपि व्याख्याता ॥ २९ ॥ मद्विभूतीर्ममावतारान् । ध्वजादिभिः सह ॥ ॥ ३० ॥ उपसंहरति । उपासकस्येति । एवं पृथग्धारणाभिः ॥ ३१ ॥ यद्वा किं नानाधारणाप्रयासेन एकयैव सर्वाः सिद्धयो भवंतीत्याह । जितेंद्रियस्येति । मद्धारणां 'नारायणे तुरीयाख्ये' इत्यत्रोक्ताम् । या सुदुर्लभा स्यात्सा का । न काचिदित्यर्थः ॥ ३२ ॥ यद्यप्येवं तथापि न प्रार्थ्या इत्याह । अंतरायानिति ॥ ३३ ॥ तस्माद हैतुकीयमेव धारणा कार्या नान्याः काम्या इत्याह । जन्मेति । जन्मनैव काश्चित्सिद्धयो भवंति । यथा देवानां यथा च यादसामुदकस्तंभः पक्ष्यादीनां खेचरत्वादि । तदुक्तं

यनभिभवे मद्योगेनाग्न्याद्यौष्णत्वादिशक्तिप्रतिबंधकमद्रूपध्यानेन शांतमग्न्यादिव्याघातशून्यं चित्तं यस्य तस्य । अत्र दृष्टान्तः—यादसां जलजंतूनां मत्स्यादीनाम् 'यादांसि जलजन्तवः' इत्यमरः । अभिघातकं सर्वजलसंयोगेपि गालकं न भवति । इत्यर्थ इति—अचिंत्यशक्तिमद्धारणाप्रभावादग्न्यादिशक्तिप्रतिबंधो भवतीति भावः । अनयैवोपलक्षणभूतया वह्न्यादीनां सुखदुःखहेतूनां शक्तिप्रतिबन्धे स्वत एव द्वंद्वाभावो निष्पद्यत इत्याशयः । उदकयादसी अत्रोपलक्षणे, तेन सर्पादीनां विषाद्यपि प्रतिघातकं नेति ज्ञेयम् ॥ * ॥ ० ॥ २९ ॥ साम्राज्यविभूतिविशिष्टमद्रूपाणां ध्यानं पराजयविघातकमित्याह—ध्वजातपत्रेत्यादि ॥ * ॥ ० ॥ ३० ॥ उपासकस्योपासनयाऽपरोक्षीकृततत्तद्रूपमत्तत्त्वस्य ॥ * ॥ ० ॥ ३१ ॥ बहुधारणाकर्णनाकुलमानसमाश्वासयति—यद्वेति । इत्यर्थ इति—मच्छुद्धस्वरूपध्याने सर्वमभिलषितं सिध्यतीति भावः ॥ * ॥ ० ॥ ३२ ॥ यद्यप्येवं शुद्धस्वरूपं तव धारणातः सर्वाः सिद्धयः प्राप्यन्ते तथा ता न प्रार्थ्या नेष्टव्या इति । उत्तमं मोक्षोपयोगिनं योगं भक्तियोगं मया संपद्यमानस्य मत्प्रसादं प्राप्तुकामस्य कालक्षपणस्य हेतवो व्यर्थायुःक्षयंकरा इत्यर्थः ॥ * ॥ मया संपद्यमानस्य मत्प्राप्त्या संपद्यमानस्य संपत्तिमतः अंतरायानिति । अतो ब्रह्मसायुज्यमप्यंतरायः स्यादिति युक्तमेव तत्र गणितम् उत्तमं निष्कामं भक्तियोगम् । कालक्षपणहेतव इति—दिनेदिने तस्य मत्प्राप्तिलक्षणसंपच्चिह्नसत्येव तस्माद्योगेनैव कालं यापयेत् । न तत्फलभूताभिः सिद्धिभिरिति भावः ॥ ३३ ॥ यस्मात्सिद्धिहेतुका धारणा मत्प्राप्तौ विघ्नरूपास्तस्माद्धेतोः । अहैतुकी फलेच्छारहिता । इयमेव शुद्धसत्त्वस्वरूपध्यानरूपैव । देवानामणिमाद्या अन्याश्च यथा सिद्धयः । जन्मादिनापि सिद्धयो भवंतीत्यत्र योगसूत्रं प्रमाणयति—तदुक्तमिति । पातंजले पतंजलिमुनिप्रणीते योगशास्त्रे । अस्यार्थः—जन्मना पक्ष्यादीनामाकाशगमनादिसिद्धिः । कपिलादीनां च सांसिद्धिकीत्युच्यते । औषधिविशेषसेवया मांडव्यादीनाम् । मंत्रजपेन केषांचिदणिमादिसिद्धिः । तपसा विश्वामित्रादीनां सिद्धिः । एताश्चतस्रः सिद्धयः पूर्वाभ्यस्तयोगजा एव जन्मादिनिमित्तेन व्यज्यंते, अत एव योगाभ्यासे दृढविश्वासेन प्रवृत्तिः कार्या इह सिद्धदर्शनेपि साफल्यात् । समाधिजाः सिद्धयस्तु—"परिणामत्रयसंयमादतीतानागतज्ञानम्" इत्यादिसूत्रैः प्रतिपादिता इति योगमणिप्रभाकारः ॥ * ॥ पातञ्जलसूत्रार्थः—जन्मनिमित्ताः पक्ष्यादीनामाकाशगमनादयः । यथा कपिलादीनां जन्मत एव

सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥ ३५ ॥ अहमात्मांतरो बाह्योऽनावृतः सर्वदेहिनाम् ॥ यथा भूतानि भूतेषु बहिरंतः स्वयं तथा ॥ ३६ ॥ इति श्रीमद्भा॰म॰एकादशस्कंधे भगवदुद्धवसंवादे सिद्धिकथनं नाम पंचदशोऽध्यायः ॥ १५ ॥

पातंजले । ' जन्मौषधितपोमंत्रयोगजाः सिद्धयः ' इति । योगेन मद्धारणामित्युक्तेन । योगगतिं मत्सालोक्यादिरूपाम् ॥ ३४ ॥ कुत इत्यत आह सर्वासामित्यर्द्धेन । प्रभुत्वोपपादनं हेतुः कारणं पतिः पालयिता चेति । किंच न केवलं सिद्धीनामेव प्रभुरपि तु मोक्षादीनामपत्याह । अहमिति । योगो मोक्षः सांख्यं तत्साधनं ज्ञानम् । तत्साधनं धर्मः तस्य धर्मस्य तदुपदेष्टॄणां ब्रह्मवादिनां च ॥ ३५ ॥ कुतस्तत्राह । अहमिति । सर्वदेहिनां जीवानामात्मा । यत आंतरोंतर्यामी । " एष त आत्मांतर्याम्यमृतः " इति श्रुतेः । तर्हि किमंतर्वर्तित्वात्परिच्छिन्नः । न । बाह्यश्च व्यापक इत्यर्थः । तत्र हेतुः । अनावृतः । एतत्सदृष्टांतमाह । भूतेषु चतुर्विधेषु भौतिकेषु महाभूतानि यथा बहिश्चांतश्च भवंति स्वयमहमपि तथेत्यर्थः ॥ ३६ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री॰ टीकायां सिद्धिकथनं नाम पंचदशोऽध्यायः ॥ १५ ॥

ज्ञानादयः । यथौषधिसिद्ध्या पातालादौ रसायनाद्युपयोगः, मंत्रसिद्ध्याप्याकाशगमनादिः, तपःसिद्ध्या विश्वामित्रादीनां प्रभावः, समाधिरेव जन्मांतराभ्यस्तः कारणं भवति मंत्रादीनि तु निमित्तमात्राणि । अन्यैर्जन्मादिसिद्धिरूपैः । योगगतिं सालोक्यादिमुक्तिम् ॥ ३४ ॥ इतोऽप्युत्कर्षं स्वस्याह—किंचेति । तत् योगेन सर्वसिद्धिप्रापणम् । धर्मस्य भक्तिलक्षणस्य ॥ * ॥ मयि विश्वस्तैस्तु तत्तत्सिद्धिकामनया नान्यत्, न च सोपाधिमद्धारणं कर्तव्यं । स्वतः सर्वाश्रयत्वेन ममेत्याह—सर्वासामिति द्वाभ्याम् । यतो मम ध्यानेनैव सर्वाः सिद्धयस्तस्मादहमेव तासां हेतुः । न केवलं हेतुरेव पतिः पालयिता च, प्रभुः स्वामी च । न केवलं सिद्धीनामेव हेतुप्रभृतयोहं यतो योगस्य ध्यानयोगस्याप्यहमेव । न केवलं योगस्य ज्ञानस्य सांख्यस्य । ज्ञानसाधनधर्मस्य निष्कामकर्मणोपि ॥ ३५ ॥ त्वमेव सर्वेश इत्यत्र हेतुमाशंकते—कुत इति । आत्मापि कुत इति चेदाह—यत इति । अंतर्यामित्वे प्रमाणमाह—' एष ते' इत्यादि । श्रुतिश्चेयं व्याख्यातचरा । अत्राप्याक्षिपति—तर्हीति । नेत्याह—इत्यर्थ इति । अंतर्बहिर्व्याप्य स्थितः " अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः " इति श्रुतेरिति भावः । तत्र व्यापकत्वे । अनावृतत्वाद्व्यापकत्वम् । एतद्व्यापकत्वं चतुर्विधेषु जरायुजांडजस्वेदजोद्भिज्जेषु । महाभूतान्याकाशादीनि । इत्यर्थ इति—महाभूतवद्बाह्याभ्यंतरव्यापक इति भावः ॥ * ॥ योगिनां ज्ञानिनां च ध्यानमालंबनोऽप्यहमेवेत्याह—अहमांतर आत्मांतर्यामी, तर्हि किमंतर्वर्तित्वात्परिच्छिन्नः, न, बाह्यश्च व्यापक इत्यर्थः । तत्र हेतुरनावृत एतत्सदृष्टांत इति तैः ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे पंचदशोऽध्यायः ॥ १५ ॥

उद्धव उवाच ॥ त्वं ब्रह्म परमं साक्षादनाद्यंतमपावृतम् ॥ सर्वेषामपि भावनां प्राणस्थित्यप्ययोद्भवः ॥ १ ॥

षोडशे तु हरेराविर्भावयुक्ता विभूतयः ॥ ज्ञानवीर्यप्रभावादिविशेषेणोपवर्णिताः ॥ १ ॥ अंतश्चित्तेन यद्ध्यानमशक्यमकृतात्मनाम् ॥ अतस्तद्योग्यतापत्त्यै विभूत्यादि निरूपणम् ॥ २ ॥ एवं तावन्नवाध्याय्यामष्टप्रश्ना निरूपिताः ॥ ब्रह्मत्वसंभवे तावत्सप्तमादिचतुष्टये ॥ ३ ॥ बंधमुक्तयोस्तु निर्धारे सद्भक्तयोश्च ततः परे ॥ द्वादशेऽनंतरं कर्मकृतित्यागव्यवस्थितौ ॥ ४ ॥ हंसेतिहासतो योगनिष्ठायां च त्रयोदशे ॥ श्रेयःसाधननिर्धारे ध्याने चैव चतुर्दशे ॥ ५ ॥ धारणासिद्धिभेदे च प्रसंगेन निरंतरे । उद्धवप्रश्नतो दत्तमुत्तरं हरिणोचितम् ॥ ६ ॥ षोडशे भूतिविस्तारे द्वयोर्वर्णाश्रमव्रते ॥ ज्ञानादिनिर्णये चातो यमादीनां च निर्णये ॥ ७ ॥ योगत्रयाधिकारे तु विंशे च तदनंतरे ॥ सत्त्वसंख्या विवादे च पुंप्रकृत्योर्विवेचने ॥ ८ ॥ जन्ममृत्युप्रकारे च द्वाविंशे दत्तमुत्तरम् ॥ परापराधसहने चतुर्भिस्तदनंतरैः ॥ ९ ॥ सप्तविंशे क्रियायोगप्रश्ने तदुपवर्णनम् ॥ अष्टाविंशे ततः प्रोक्ता ज्ञानयोगोपसंहृतिः ॥ १० ॥ संसारासंभवप्रश्ने तन्मध्ये दत्तमुत्तरम् ॥ तदशक्त्या पुनः प्रश्ने भक्तियोगोपसंहृतिः ॥ ११ ॥ एवं प्रश्नोत्तराण्यत्र क्रमेणैतानि विंशतिः ॥ १२ ॥ "अहमात्मांतरो बाह्योऽनावृतः सर्वदेहिनाम् ॥ यथा भूतानि भूतेषु बतिरंतः स्वयं तथा ॥" इत्युक्तं तत्र भूतानि यथा क्वचित्केनचिद्गुणविशेषेणोद्रिक्तानि वर्तंते क्वचित्सामान्यरूपेणैव तथा त्वमपि क्व कथं वर्तस इति विभूतीः प्रष्टुं प्रथमं तावदुक्तमेव सर्वात्मकत्वमनुवदति । त्वं ब्रह्मेति । अपावृतं निरावरणं

ज्ञानविशेषेण वीर्यविशेषेण प्रभावविशेषेण।आदिना वैराग्यादिग्रहः (१) । यतो हेतोः चित्तेन यदंतर्मनसि ध्यानं तत् । अकृतात्मनाम् अस्थिरचेतसाम्।अतो हेतोस्तस्यांतर्ध्यानस्य योग्यताया आपत्त्यै प्राप्तये।आदिना वागादिनिरोधग्रहः (२) । एवमुक्त रीत्या । नवानामध्यायानां समाहारो नवाध्यायी तस्याम् । नवेति सप्तमतः पंचदशांता ग्राह्याः । पूर्वेषु प्रथमादिपंचमान्तेषु मौसलवसुदेवनारदाख्यानस्य, षष्ठे भगवतो यानार्थं देवप्रार्थनोद्धवप्रार्थनायाश्च वर्णितत्वात्तेषामत्रानुपयोगात् । सप्तमादिचतुष्टयेऽध्यायचतुष्के तावदादौ ब्रह्मत्वस्य जीवभावपरित्यागस्य संभवो यथा भवेदिति उद्धवप्रश्नतो हरिणोचितं न्याय्यमुत्तरं दत्तमिति चतुर्थेनान्वयः (३) । ततो दशमात्परे एकादशे बंधमुक्तयोः सद्भक्तयोश्च निर्द्धारे उद्धवप्रश्नत इति पूर्ववद्योज्यम् । अनंतरम् एकादशतः परे कर्मकरणतत्त्यागव्यवस्थायामुद्धवप्रश्नत इत्यादि सर्वत्र सप्तम्यन्तेन योज्यम् (४) । (५) । निरंतरे पंचदशे । उक्तमर्थं स्फुटयति—सप्तमादिदशमांताध्यायचतुष्के ब्रह्मत्वसंभवप्रश्नोत्तरम्, १, एकादशे बंधमुक्तिनिर्द्धारप्रश्नोत्तरम् २, संतः कीदृशा इति प्रश्नस्योत्तरम् ३, भक्तिः कीदृशीति प्रश्नस्य चोत्तरम् ४, इत्येवं प्रश्नोत्तरत्रयम् । द्वादशे कर्मकृतितत्त्यागव्यवस्थाप्रश्नोत्तरम् ५, त्रयोदशे हंसेतिहासतो योगनिष्ठाप्रश्नोत्तरम् ६, चतुर्दशे श्रेयःसाधननिर्द्धारप्रश्नोत्तरम् ७, पंचदशे धारणाभेदतः सिद्धिभेदप्रश्नोत्तरम् ८, एवमष्टप्रश्नोत्तराणि नवाध्यायेषु संतीति ( ६ ) । भूतिविस्तारे प्रश्ने हरिणोत्तरं दत्तमिति तृतीयेनान्वयः । हरिणेत्यध्याहार्यम् । द्वयोः सप्तदशाष्टादशयोः । वर्णाश्रमाणां व्रते धर्मे पृष्टे सति उत्तरं दत्तमिति पूर्ववत् । अतः अनन्तरम् ऊनविंशे ( ७ ) । योगत्रयाणां कर्मोपास्तिज्ञानरूपाणामधिकारे पृष्टे तदनंतरे एकविंशे चाध्यायद्वये उत्तरं दत्तम् । तत्त्वसंख्याविवादादिप्रश्नत्रयाणां द्वाविंशे ( ८ ) । तदनंतरैर्द्वाविंशतितः परैस्त्रयोविंशचतुर्विंशपंचविंशषड्विंशैः ( ९ ) । तदुपवर्णनं क्रियायोगोपवर्णनम् । ततः क्रियायोगोपवर्णनानंतरम् ( १० ) । तन्मध्येऽष्टाविंशाध्यायमध्ये । तदशक्त्या ज्ञानयोगाशक्त्या । पुनः प्रश्ने एकोनत्रिंशे भक्तियोगेनोपसंहृतिरुपसंहारः ( ११ ) । एतानि पूर्वोक्ताष्टप्रश्नसहितानि विंशतिसंख्याकानि ( १२ ) । अहमित्यादिश्लोकोऽध्यायांत उक्तस्तत्रोक्तं सर्वात्मकत्वं तावदादौ । यथा—सर्पे आकाशोऽधिकशब्दग्रहणगुणेन वर्तते, गृध्रे च तेजोऽधिकरूपग्रहणेन, पिपीलिकायां पृथ्वी चाधिकगंधग्रहण

उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ॥ उपासते त्वां भगवन्याथातथ्येन ब्राह्मणाः ॥ २ ॥ येषुयेषु च भावेषु भक्त्या त्वां परमर्षयः ॥ उपासीनाः प्रपद्यंते संसिद्धिं तद्वदस्व मे ॥ ३ ॥ गूढश्चरसि भूतात्मा भूतानां भूतभावनः ॥ न त्वां पश्यंति भूतानि पश्यतं मोहितानि ते ॥ ४ ॥ याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ॥ ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदांघ्रिपद्मम् ॥ ५ ॥

स्वतंत्रं वा । अत एव सर्वेषामपि त्राणं रक्षणम् । स्थितिर्जीवनम् । त्राणस्थितिसहितावप्ययोद्भवौ यस्मात् । सत्त्वमुपादानकारणमित्यर्थः ॥ १ ॥ अत्र सदाचारं प्रमाणमाह । याथातथ्येन यथार्थत्वेन । सर्वभूतकारणं त्वाम् । ब्राह्मणा वेदतात्पर्यविदः ॥ २॥ एवं कारणत्वेन सर्वात्मत्वमनूद्य विभूतीः पृच्छति । येष्विति । उपासीनाः सेवमानाः संतः ॥ ३ ॥ दुर्ज्ञेयत्वमेवाह । गूढः अस्फुटः । भूतानां प्राणिनां मध्ये । अत्र हेतुः । भूतानामात्मा अंतर्यामी । अत्रापि हेतुः । हे भूतभावनेति । ते त्वया ॥ ४ ॥ ता एव साकल्येन पृच्छति । हे महाविभूते याः काश्चिद्भूम्यादिषु ते विभूतयः । रसायां रसातले । अनुभावितास्त्वयैव केनचिच्छक्तिविशेषेण संयोजिताः । तीर्थानां पदं च

गुणेनेत्येवमन्यत्राप्यूह्यम् । पुरुषे च समान्यरूपेण सर्वाणि । अपावृतत्वं कालादेरप्यस्तीत्यत आह—स्वतंत्रं वेति । अत एव स्वतंत्रत्वादेव । इत्यर्थ इति—यतो जायते यस्मिंस्तिष्ठति यत्र च लयं याति तदुपादानमित्युपादानलक्षणस्य "यतो वा इमानि भूतानि जायंते" इत्यादिश्रुत्या त्वयि बोधनादिति भावः ॥ * ॥ टीकायां नवाध्याय्यामिति सप्ताध्याय्या इति ज्ञेयमादिषण्णामुक्ततात्पर्यत्वात् । अष्टप्रश्नान्निरूपयति—ब्रह्मेति । सप्तमादिचतुष्टये दशपर्यंते ( ३ ) । ततः परे एकादशे ( ४ ) । निरंतरे पंचदशे (५) । द्वयोः सप्तदशाष्टादशयोः (६) । अत ऊनविंशे ( ७ ) । तदनंतरे एकविंशे ( ८ ) । चतुर्भिः षड्विंशपर्यन्तैः ( ९ ) । तत्र ब्रह्मत्वेति १, बद्धमुक्ताविति २, सदिति ३, कर्मेति४, हंसेति ५, श्रेय इति ६, ध्यान इति ७, धारणेति ८, इत्यष्टौ प्रश्नाः । भूतेति ९, वर्णेति १०, ज्ञानेति ११, यमेति १२, योगेति १३, तत्त्वेति १४, जन्मेति १५, परेति १६, क्रियेति१७, ज्ञानेति १८, संसारेति १९, भक्तीति २०, इति विंशतिः ॥ सर्वेषां सर्ववैभवं तत्र एवेति सर्वासामित्यादिना पूर्वमुक्तं तच्छ्रुत्वा प्राकृताप्राकृततद्वैभवास्पदानि प्रश्नेन ज्ञातुं तस्य सर्वाश्रयत्वमनुवदति—त्वं ब्रह्मेति । ब्रह्म बृहत्सर्वकारणत्वात्, तत्रापि परमं भगवद्रूपत्वात्, तत्राऽपि साक्षात्स्वयं भगवत्त्वात् । तत्राप्राकृतानंतवैभवाश्रयत्वमाह—अनाद्यन्तं न तु पुरुषादिवत्परिच्छिन्नवैभवम् । अपावृतं न तु तद्वन्मायासंवलितम् ॥ * ॥ **विश्वनाथस्तु**—अपावृतं परिच्छिन्नमनुष्याकारत्वेपि सर्वकालदेशव्यापकमित्याह । प्राकृतवैभवाश्रयत्वमाह—सर्वेषां भावानां महदादीनां त्राणस्थित्युद्भवो यः पुरुषः सोऽपि त्वमिति "यस्यांशांशांशभागेन विश्वस्थित्यप्ययोद्भवः" इत्यादेस्तस्यापि त्वमंशीत्यर्थः ॥ १ ॥ अत्र श्रीकृष्णस्य ब्रह्मत्वे ॥ * ॥ तत्र प्राकृतीर्विभूतीः पृच्छति तावत्—उच्चावचेति । भूतेषु प्रधानकार्येषु त्वां गुणसाम्यादिरूपमिति संदर्भः ॥ * ॥ **विश्वनाथस्तु**—यस्त्वं विष्णुरूपेण सर्वेषां कारणम् अत एव सर्वेषु भूतेषु तत्कार्येषु उच्चावचेषु उत्कृष्टनिकृष्टेषु सन्तं त्वाम् । अकृतात्मभिस्त्वव्यक्तमनस्कैः याथातथ्येन यत्रयत्र यथायथा वर्तसे तत्रतत्र तथातथैव त्वां तारतम्येनोपासत इत्यर्थः ॥ २ ॥ संसिद्धिम्मुक्तिलक्षणाम् । मे मह्यम् । हे स्व आत्मस्वरूप । तदुपासनम् । यद्वा—"भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वदः" इत्युपमंत्रणे आत्मनेपदम् ॥ ॥ * ॥ अप्राकृतीस्ताः पृच्छति—येष्विति । भावेषु भूतेषु परमार्थसत्येषु भगवदादिषु "अस्य महतो भूतस्य" इत्यादिश्रुतेः । त्वां वासुदेवादिरूपम् । प्रपद्यन्ते संसिद्धिं प्राप्नुवन्ति ॥ ३ ॥ बहुश्रवणतोऽपि मम तव ज्ञानं दुःशकमित्याह—गूढ इति । अत्र गूढत्वे । अत्राप्यंतर्यामित्वेपि । ते त्वयेति, आदेशश्चार्षः ॥ * ॥ चरासि क्वचित्साक्षाद्रूपेण क्वचिच्छक्त्यावेशरूपेणेति ज्ञेयम् । अत्र गूढत्वे । अत्रापि अंतर्यामित्वेपीति **दीपिका** ॥ ४ ॥ ताः विभूतीः । हे महाविभूते ब्रह्माद्यचिंत्यैश्वर्य । अनुभाविता ।निश्चिता महद्भिरुपासिता वेति तीर्थः । हे तीर्थपदेति पृथक्संबोधनं वा ॥ * ॥ भूमावित्यादित्रयेण मध्योर्द्धतल

श्रीभगवानुवाच ॥ एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर ॥ युयुत्सुना विनशने सपत्नैरर्जुनेन वै ॥ ६ ॥ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् ॥ ततो निवृत्तो हंताहं हतोऽयमिति लौकिकः ॥७॥ स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ॥ अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि॥८॥ अहमात्मो द्धवामीषां भूतानां सुहृदीश्वरः ॥ अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥ अहं गतिर्गतिमतां कालः कलयतामहम् ॥ गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥

तदंघ्रिपद्मं च ॥ ५ ॥ नरावतारभूतार्जुनप्रश्नसंवादित्वात्तवायं प्रश्नः साधीयानिति तावदनुमोदते एवमिति त्रिभिः । प्रश्नं प्रष्टव्यम् । सपत्नैर्योद्धुमिच्छता । विनशने कुरुक्षेत्रे ॥ ६ ॥ युयुत्सोर्विभूतिप्रश्ने कः प्रसंगस्तत्राह । ज्ञात्वेति । अहं हंता अयं हत इति लौकिकः प्राकृतमतिः सन् ॥ ७ ॥ स च यदा ततो ज्ञातिवधान्निवृत्तस्तदा मया प्रतिबोधितः सन् यथा त्वमभिभाषस एवं संग्राममुखे मामभ्यभाषत । तद्वदेव तवापि कथयिष्यामीति भावः ॥ ८ ॥ ता विभूतीः कथयति । अहमिति । अस्मच्छब्दसमानाधिकरणाः प्रथमांता द्वितीयांताश्च सर्वा विभूतयस्तास्ताश्चोपासनार्थं कथ्यंते । षष्ठी च क्वचिन्निर्धारणे संबंधे च क्वचिद्यथायोग्यं द्रष्टव्या । ततश्चामीषां भूतानामात्मेति ते सुहृदिति ईश्वर इति च सामान्येनाहमुपास्य इत्यर्थः । एवं सर्वत्र । तेषां स्थित्युद्भवाप्ययः । तत्तद्धेतुरित्यर्थः ॥ ९ ॥ विशेषतो विभूतीराह । कलयतां वशीकुर्वताम् ।

लोकाः प्राकृताश्चाप्राकृताश्च सर्व एव गृहीताः । ते त्वयैकेन स्वयं भगवताऽनुभावितास्तत्तन्माहात्म्यं प्रापिता अनुभवगोचरीकारिता वा । ता आख्याहि ब्रूह्यनुभावय चेत्यर्थः । चिन्मयस्य भगवतश्चिन्मया विलासा अंशा उच्यन्ते, मायामयास्तु विभूतय इति सर्वत्र व्यवहारः । अत्र विभूतिशब्देनैश्वरं प्राकृताप्राकृतवस्तुमात्रमेव तथा प्राकृताप्राकृतवस्तुसारश्चाग्रिमग्रंथदृष्ट्योच्यत इति विवेचनीयम् । हे महाविभूते इति—अनंतविभूतेस्तव सर्वविभूतिज्ञानं तवैव यथाकथंचिदस्ति नान्यस्येति भावः । तीर्थानां सर्वासां गुरुपरंपराणां पदमाश्रयोंघ्रिपद्मं यस्य तम् ॥ ५ ॥ संवादित्वात् तुल्यत्वात् । साधीयान् प्रशस्ततरः । एवं त्वद्वत् । एतदेतं प्रश्नं कृत्वेति शेषः ॥ * ॥ अर्जुनप्रश्नसंवादित्वादर्जुनप्रश्नेन तुल्यार्थत्वात् । अहो आश्चर्यं मन्मित्रद्वयस्य प्रश्नसंवादितेत्याश्चर्यं प्रष्टव्यं विभूतिरूपार्थं प्रति अहं पृष्टः ॥ ६ ॥ प्रश्ने कोऽभिप्राय इत्याह—युयुत्सोरिति । प्राकृतमतिर्बहिर्जनस्वभावः ॥ * ॥ अस्य हंताऽहम्, अयं मया हत इत्येवं लौकिकं प्राकृतलोकभवं चेष्टितं यस्य सः ॥ ७ ॥ स चार्जुनः । इति भाव इति—यथार्जुनो ममातिप्रियस्तथा त्वमप्यतस्तुभ्यमपि कथयिष्याम्येवेति तात्पर्यम् ॥ * ॥ तद्वदेवार्जुनस्येव ॥ ८ ॥ या अर्जुनायोक्तास्ता इत्यर्थः । अस्मच्छब्देन समानमधिकरणं येषां ते तथा । यथायोग्यं प्रसंगानुरूपम् । यतोऽस्मच्छब्दसमानाधिकरणविभूतयस्ततो हेतोः । इत्यर्थ इति—सुहृदात्मा च सर्वेषामुपास्य एवेति प्रसिद्धमिति भावः । उक्तमर्थमन्यत्राप्यतिदिशति—एवं सर्वत्रेति । सर्वत्राहमेवोपास्यस्सर्वासु विभूतिष्वित्यर्थः । तेषां भूतानाम् । इत्यर्थ इति—स्थित्युद्भवाप्ययानां कारणमहमेव ‘ जन्माद्यस्य यतः ’ इति न्यायादिति भावः ॥ * ॥ आत्मांतर्यामी सर्वेश्वरांतर्यामित्वलक्षणेन सामान्यधर्मेणाहं सर्वैरुपास्यः । इत्यर्थः अंतर्यामित्वलक्षणाऽप्राकृतविभूतिवर्णनम् । भूतानि व्यवहारसंपादकानि सर्वाण्यहमेव सद्वैभवविशेषानुभावितैरेव तैर्व्यवहारसिद्धेः । इति प्राकृतविभूतिवर्णनं तद्धेतुः सर्वकारणमिति । महत्स्रष्टृपुरुषरूपा प्राकृतविभूतिः । एवमन्यत्रापि विवेचनीयम् ॥ ९ ॥ यद्वा—गतिमतां ज्ञानवतां गतिर्ज्ञानम् ‘ ज्ञानं

---

१ अहो पृष्ट इति पाठाभिप्रायेणेदम् ।

**गुणिनामप्यहं सूत्रं महतां च महानहम् ॥ सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥ हिरण्यगर्भो वेदानां मंत्राणां प्रणवस्त्रिवृत् ॥ अक्षराणा मकारोऽस्मि पदानि च्छंदसामहम् ॥ १२ ॥ इंद्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट्॥आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥ १३ ॥**

गुणानां मध्ये साम्यं सर्वत्र समत्वम् । गुणानां सत्त्वादीनां साम्यमव्याकृतं वा । गुणिनि धर्मिणि औत्पत्तिकः स्वाभाविको यो गुणः सोऽहम् ॥ १० ॥ सूत्रं प्रथमकार्यम् । महान्महत्तत्त्वम् । सूक्ष्मोपाधित्वाद्दुर्ज्ञेयत्वाच्च जीवस्य सूक्ष्मत्वम् । " बुद्धेर्गुणेनात्मगुणेन चैव वालाग्रमात्रो ह्यवरोऽपि दृष्टः " इति श्रुतेः ॥ ११ ॥ वेदानां संबंधी

ज्ञानवतामहम् ' इति श्रीगीतोक्तेः । तद्वत्सु नित्यं सन्निहित इत्यर्थः । गुणिनि आकाशादौ स्वाभाविकः शब्दादिः ॥ * ॥ गतिः फलं शरणागतिर्वा । धर्मिण्याकाशादौ स्वाभाविकः शब्दादिः ॥ १० ॥ प्रथमं कार्यं प्रधानस्येति शेषः । सूक्ष्मोपाधित्वात्सूक्ष्मशब्दापरपर्यायलिंगशरीरोपाधित्वात्, " वालाग्रशतभागस्य " इत्यादिश्रुतेर्दुर्ज्ञेयत्वाच्च । बुद्धेर्गुणेन व्यवसायेनात्मगुणेन विचारेणारा[2]ग्रमात्रोतीवसूक्ष्मोऽवर ईश्वरापेक्षया दृष्टो योगिभिरिति श्रुत्यंतरपदार्थः ॥ * ॥ सूत्रं प्राण इत्यर्थः । महतां महत्त्व[3]वतामंतःकरणानां मध्ये महांश्चित्तमित्यर्थः । जीव इति–" एषोणुरात्मा चेतसा वेदितव्यः । यस्मिन्प्राणाः पंचधा संविवेश " इति " बालाग्रशतभाग्यस्य " इति " आराग्रमात्रो ह्यवरोऽपि दृष्टः " इत्यादिश्रुतेः । अत्र जीवस्य परमाणुपरिमाणत्वेपि संपूर्णदेहव्यापिशक्तिमत्त्वं जतुजटितस्य महामणेर्महौषधिखंडस्य च शिरसि धृतस्य पूर्णदेहपुष्टिकरिष्णुत्वशक्तित्वमविरुद्धम् ॥ * ॥ **दीपिका**–गुणिनां कार्याणां मध्ये अद्वयवादे हि वस्तुतो जीवानां ब्रह्मत्वेन विभुत्वादणुत्वं न संगच्छत इति तन्मतानुसारेण गौण्या वृत्त्या व्याचष्टे–सूक्ष्मोपाधित्वादिति । सूक्ष्मं लिंगशरीरमुपाधिर्यस्य तस्य भावस्तत्त्वं तस्मात् । उपाधेर्लिंगस्य सूक्ष्मत्वेनोपहितस्यापि सूक्ष्मत्वव्यपदेशः, सूक्ष्मो हि दुर्ज्ञेयत्वगुणो भवति तस्माद् दुर्ज्ञेयत्वाच्च सूक्ष्मत्वम् ॥ * ॥ **संदर्भस्तु**–सूक्ष्माणामिति–सूक्ष्मतापराकाष्ठां प्राप्तो जीव इत्यर्थः । दुर्ज्ञेयत्वात्सूक्ष्मत्वं तदत्र न विवक्षितं महतां चेति सूक्ष्माणामपीति परस्परप्रतियोगित्वेन वाक्यद्वयस्यानंतर्योक्तौ क्रियास्वारस्यभंगापत्तेः । प्रपंचमध्ये सर्वकारणत्वान्महत्तत्त्वस्य महत्त्वं नाम व्यापकत्वं न तु पृथिव्याद्यपेक्षया सुज्ञेयत्वं यथा तद्वत् प्रपंचे जीवानामपि सूक्ष्मत्वं परमाणुत्वमेवेति स्वारस्यम् । ११ ॥ त्रिवृत् अकारोकारमकारात्मकः "नादबिंदू त्वर्द्धमात्रा सानुच्चार्या त्वयोगिभिः" इति त्रिवृत्पदं सार्द्धत्रिवृत्परं प्रणवस्य सार्द्धत्रिमात्रत्वमेवेति निश्चयात् । छंदसां नियताक्षरपादत्वरूपच्छंदोविशिष्टानामृचां मध्ये द्विजातेर्द्वितीयजन्महेतुत्वेन प्रातःसवनादिसवनत्रयव्यापित्वेन त्रिष्टुब्जगतीभ्यां सोमाहरणार्थं गताभ्यां सोमो न लब्धोऽक्षराणि च हारितानि जगत्या त्रीणि त्रिष्टुभैकमिति चत्वारि तैरक्षरैः सह "सोमस्याहरणेन च सर्वश्रेष्ठा गायत्री ऋगहं चतुरक्षराणि हवा अग्रे छंदांस्यासुस्ततो जगती सोममच्छापतत् त्र्ण्यक्षराणि हि त्वां जगाम, ततस्त्रिष्टुप् सोममव्यापतत्सैकमक्षरं हित्वा जगाम, ततो गायत्री सोममच्छापतत्सा तानि चाक्षराणि हरंत्यागच्छत्सोमञ्च ततोष्टाक्षरा गायत्रीत्युपक्रम्य तदाहुर्गायत्राणि वै सर्वाणि सवनानि गायत्री ह्येवैतदुपसृजमानैः" इति शतपथश्रुतेः गायत्री वा । " इदं सर्वं भूतम् " इत्यादिच्छांदोग्यश्रुतेश्च । त्रयः पादा अष्टाक्षरात्मका यस्याश्चतुर्विंशत्यक्षरात्मिकायाः सा । त्रिपदा पादस्य पदादेशः समासांतप्रत्ययानां तद्धितांतर्भूतत्वात् । इत्यर्थ इति–' यायत्री छंदसामहम् ' इति श्रीगीतोक्तेरिति भावः ॥ * ॥ ० ॥ १२ ॥ हव्यं वहतीति हव्यवाट् वह्निनाम ॥ * ॥ विष्णुर्वामनोऽदितिपुत्राणां मध्येऽहमिति अप्राकृतविभूतिनिर्देशः । नीललोहितः

१ " वालाग्रं स्यादष्टकेन त्र्यणुकानां मुनीश्वराः " इति शैवोक्तेः । २ वालाग्रमात्र इत्यत्र आराग्रमात्र इतिपाठे ' आरा चर्मप्रभेदिनी ' इति कोशः प्रमाणम् । ३ व्यापकत्वेन ।

ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ॥ देवर्षीणां नारदोऽहं हविर्धान्यस्मि धनुषु ॥ १४ ॥ सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम् ॥
प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥ १५ ॥ मां विद्धयुद्धव दैत्यानां प्रह्लादमसुरेश्वरम् ॥ सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥ १६ ॥
ऐरावतं गजेंद्राणां यादसां वरुणं प्रभुम् ॥ तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥१७॥ उच्चैःश्रवास्तुरंगाणां धातूनामस्मि कांचनम् ॥यमः संयमतां
चाहं सर्पाणामस्मि वासुकिः ॥१८॥नागेंद्राणामनंतोऽहं मृगेंद्रः शृंगिदंष्ट्रिणाम् ॥ आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ॥१९॥तीर्थानां स्रोतसां गंगा
समुद्रः सरसामहम् ॥आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम्॥२०॥धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः ॥ वनस्पतीनामश्वत्थ ओषधीनामहं यवः
॥२१॥पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः॥स्कंदोऽहं सर्वसेनान्यामग्रण्यां भगवानजः॥२२॥यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ॥वाय्वग्न्यर्का-
म्बुवागात्मा शुचीनामप्यहं शुचिः ॥ २३ ॥ योगानामात्मसंरोधो मंत्रोऽस्मि विजिगीषताम् ॥ आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम्॥२४॥

तेषामध्यापकः । पदानि त्रिपदा गायत्रीत्यर्थः ॥ १२ ॥ १३ ॥ हविर्धानी कामधेनुः ॥ १४ ॥ १५ ॥ नक्षत्रौषधीनां प्रभुं सोमम् । यक्षरक्षसां प्रभुम् ॥ १६ ॥
यादसां प्रभुम् । तपतां तापयताम् । द्युमताम् दीप्तिमतां च मध्ये ॥ १७ ॥ संयमतां दंडयतामित्यर्थः ॥ १८ ॥ शृंगिणां दंष्ट्रिणां च मध्ये तेषां प्रभुर्वा । तुर्यः संन्यासः ।
प्रथमो ब्राह्मणः ॥ १९ ॥ स्रोतसां प्रवाहाणां च सरसां स्थिरोदकाशयानाम् ॥ २० ॥ धिष्ण्यानां निवासस्थानानाम् । गहनानां दुर्गमानाम् ॥ २१ ॥ ब्रह्मनिष्ठानां
वेदार्थनिष्ठानाम् । सेनान्यां चमूपतीनाम् । अग्रण्यां सन्मार्गप्रवर्तकानाम् । अजो ब्रह्मा ॥ २२ ॥ शुचीनां शोधकानामपि मार्जनतक्षणघर्षणादीनां मध्ये वाय्वादिरूपः
शोधकोऽहम् ॥ ॥ २३ ॥ योगानां योगांगानामष्टानां मध्ये आत्मसंरोधः समाधिरहम् । मंत्रो नीतिः । कौशलानां विवेकादिनैपुणानां मध्ये आन्वीक्षिकी आत्मा

सदाशिवः ॥ १३ ॥ ० ॥ * ॥ ० ॥ १४ ॥ ० ॥ * ॥ ० ॥ १५ ॥ प्रभुं स्वामिनम् ॥ * ॥ ० ॥ १६ ॥ ० ॥ * ॥ ० ॥ १७ ॥ 'धातूनामस्मि काञ्चनम्' इह काञ्चनस्य विष्णुरिव रक्षःपिशाचादिबाधकत्वा
त्सर्वदेवानामादिबलत्वाद्विभूतित्वं तदुक्तमथर्वषष्ठानुवाके—" नैनं रक्षांसि न पिशाचाः सहंते देवानामोजः प्रथमे ह्येतत् । यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः ॥ " इति ॥ * ॥ ० ॥ १८ ॥
अनंतः शेषः ॥ * ॥ शृंगिणां मध्ये मृगेन्द्रः कृष्णसारः । दंष्ट्रिणां मृगेंद्रः सिंहः " वाराहे कृष्णसारे च मृगेन्द्रो गजवैरिणि " इति निरुक्तेः ॥ १९ ॥ त्रिपुरघ्न इति रूपांतरविवक्षयैकस्य द्विरावृत्त्या विभूतित्वम् ॥ * ॥
॥ ० ॥ २० ॥ ० ॥*॥ ०॥२१॥ ० ॥ * ॥ ० ॥२२॥ ब्रह्मयज्ञः स्वाध्याययज्ञः । व्रतानां नियमानाम् । मार्जनादीनां शोधकत्वमग्रे वक्ष्यामः ॥*॥ यज्ञानां पंचयज्ञानां ब्रह्मयज्ञो वेदाध्ययनाध्यापनलक्षणः । वाग्यादिपठि
तावाक् ब्राह्मणस्यैव शुद्धमिदमित्येवंरूपा ज्ञेया ॥ २३ ॥ अष्टानां यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधीनाम् । विजिगीषतां शत्रुजयमीप्सताम् । मिथो विचारो वा मंत्रः । अथ ख्यातयः—वेदान्तिनां मतेऽ
निर्वचनीयख्यातिः, शुक्तावनिर्वचनीयरजतमुत्पद्यते । नैयायिकानां मतेऽन्यथाख्यातिः, अन्यत्र शुक्त्यादौ देशांतरस्थरूप्यादेरध्यासः । विज्ञानवादिमते आत्मख्यातिः, बाह्ये शुक्त्यादौ बुद्धिरूपात्मधर्मस्य रजतस्याध्यासः ।

स्त्रीणां तु शतरूपाऽहं पुंसां स्वायंभुवो मनुः ॥ नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥ २५ ॥ धर्माणामस्मि संन्यासः क्षेमाणामबहिर्मतिः ॥
गुह्यानां सूनृतं मौनं मिथुनानामजस्त्वहम् ॥ २६ ॥

नात्मविवेकविद्या । आख्यात्यन्यथाख्यातिशून्यख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिवादिनामेवमिदमेवं वेति यो दुरंतो विकल्पः सोऽहम् ॥ २४ ॥ कुमारः सनत्कुमारः ॥ ॥ २५ ॥ संन्यासो भूताभयदानम् । क्षेमाणामभयस्थानानां मध्ये अबहिर्मतिरंतर्निष्ठा । सूनृतं प्रियवचनं मौनं च । न हि प्रियभाषणे मौने च पुरुषस्याभिप्रायो ज्ञायते ।

आंतरस्य रजतस्य बहिर्वदवभास इति वदंति । मीमांसकमतेऽख्यातिर्नाम यत्र यस्याध्यासो लोकसिद्धस्तयोरर्थयोस्तद्धियोश्च भेदाग्रहे सति तन्मूलो भ्रम इदं रूप्यमिति विशिष्टव्यवहार इति वदंति । शून्यवादिमतेऽसत्ख्यातिः, शुक्त्यादौ रजतादेरत्यंतासतः कल्पनं शुक्तावपरोक्षस्य रजतस्य देशांतरे बुद्ध्यादौ वा सत्त्वायोगात्, शून्यत्वे प्रत्यक्षत्वायोगाच्छुक्तौ सत्त्वे बाधायोगान्मिथ्यात्वमेवेति भावः । एतदेव स्फुटयति पुनः–“आत्मख्यातिरसत्ख्याति रख्यातिः ख्यातिरन्यथा । तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥ विज्ञानशून्यमीमांसातर्काद्वैतविदां मतम्॥” इति । तत्र प्रवृत्तिरूपपरंपरैव तत्तद्विषयाकारतया बहिर्भासते स्वाप्निकविषयवदिति विज्ञानवादिनः, ते च शुक्तिरजतादावात्मख्यातिं मन्यन्ते।आत्मैव विषयाकारतया भासत इत्यात्मख्यातिरिति १ । अथ शून्यादेव सर्वमविद्यया जायत इति शून्यवादिनः, ते च शुक्तिरजतादावप्यसत्ख्यातिं मन्यंते, अलीकपदार्थतया भासमानत्वमसत्ख्यातिरिति २ । शुक्त्यादिपरंपरारूपरजतादिपरंपरारूपमपि वस्तुजातमस्तीति मीमांसकाः,ते च शुक्तिरजतादावख्यातिं मन्यंते, परस्परसंश्लेषेण यद्ज्ञानद्वयं तदख्यातिरिति ३। अथ द्व्यणुकाद्यारंभेण तत्तद्द्रव्यं जायत इति तार्किकाः, अतद्वति तत्संसर्गोऽन्यथाख्यातिरिति ४।अथ सर्वमेवाद्वैतमनिर्वचनीयमित्यद्वैतवादिनः, ते च तस्य दृष्टान्ते शुक्तिरजतादावनिर्वचनीयख्यातिं मन्यन्ते, सदसद्भिन्नत्वे सति सदसदात्मकं ज्ञानमनिर्वचनीयमिति ५। वैष्णवास्तु–“एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा।परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्॥”इति सर्वस्य भगवच्छक्तिरूपत्वाभिधानात् “सदेव सोम्येदमग्रआसीत्” इति सर्वस्य सत्यत्वांगीकारात्सर्वत्र सत्ख्यातिरेव ‘सद्धेतुका सत्ख्यातिः’ इति लक्षणादिति मन्यंते ॥*॥“आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा । तथानिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥ विज्ञानशून्यमीमांसातर्काद्वैतविदां मतम् ।” इति । तत्रांतर्वृत्तिरूपविज्ञानपरंपरैव तत्तद्विषयाकारतया बहिर्भासते स्वाप्निकविषयवदिति विज्ञानवादिनः, ते च शुक्तिरजतादावात्मख्यातिं मन्यन्ते, तस्याश्च लक्षणं विषयाकारे सत्यन्ते वैशिष्ट्यासंसर्ग आत्मख्यातिरिति । विषयो रजतादिवस्त्वेवाकारो यस्य तस्मिन्विज्ञाने सति स्वप्नवदेवावस्तुतो रजताद्यादकवैशिष्ट्याग्रहणमात्मख्यातिरित्यर्थः।अथ शून्यादेव सर्वमविद्यया जायत इति शून्यवादिनः, ते च शुक्तिरजतादावप्यसत्ख्यातिं मन्यन्ते, तस्याश्च लक्षणम्–अलीकपदार्थतया भासमानत्वमसत्ख्यातिरिति । यथाऽसदाख्यं शून्यमेव शुक्त्यात्मना भासते तथा रजतात्मनापि भासते, किन्तु यत्र रजतादिकमर्थकारि न स्यात्तत्रालीकपदार्थतया व्यवह्रियते । अथ शुक्त्यादिपरंपरारूपं रजतादिपरंपरारूपमपि वस्तुजातमस्तीति मीमांसकाः, ते च शुक्तिरजतादावख्यातिं मन्यंते, तस्या लक्षणम्–परस्परसंश्लेषेण यत्प्रत्यक्षात्मकं स्मरणात्मकं ज्ञानद्वयं तदख्यातिरिति, विज्ञानानां विज्ञेयानां च विवेकाग्रहणमिति वा, इदं तद्रजतं तत्रेदंतापरामर्शेन शुक्त्यादिकं प्रत्यक्षतो गृह्यते तत्तापरामर्शेन तु रजतं स्मर्यते तथा च ज्ञानद्वयमपि सत्यमेव अभेदेन ग्रहणं तु मानसदोषादित्यर्थः । अथ द्व्यणुकाद्यारंभेण तत्तद्द्रव्यं जायत इति तार्किकाः, ते च शुक्तिरजतादावन्यथाख्यातिं मन्यन्ते, तस्या लक्षणं तु–अतद्वति तत्संसर्गोन्यथाख्यातिरित्यर्थः । विरुद्धप्रकारकं ज्ञानमेकवृत्त्यन्यथाख्यातिरिति प्राचीनतार्किकाः । अथ सर्वमेव द्वैतमनिर्वचनीयमित्यद्वैतवादिनः, ते च तस्य दृष्टान्ते शुक्तिरजतादावनिर्वचनयिख्यातिं मन्यंते, तल्लक्षणं तु–सदसद्भिन्नत्वे सति सदसदात्मकं ज्ञाननिर्वचनीयख्यातिरिति । ज्ञानमाधितत्वावात्सतो भिन्नत्वं तथाप्यापातत उपलभ्यमानत्वादसतो भिन्नं तथात्वे सति सदसदात्मकं ज्ञानमनिर्वचनीयख्यातिरित्यर्थः । स्वमते तु–विकल्पः ख्यातिवादिनामित्युक्त्या ते च विकल्पा मम शक्तिमया एवेति न परस्परमद्यापि व्युच्छिद्यते, ततस्तत्प्रतिपाद्यस्य शक्तेश्चाचिंत्यत्वं विज्ञाप्य तन्मयत्वात्सर्वत्राचिन्त्यशक्तित्वमेव प्रतिपादितम् ॥ २४ ॥ नारायणो नरभ्राता धर्मात्मजः ॥ * ॥ ० ॥ २५ ॥ अंतर्निष्ठा प्रत्यगात्मज्ञानम् ॥ * ॥ संन्यासस्त्यागो दानमिति यावत् । पूर्वं वेदाध्यापकत्वावच्छेदेन हिरण्यगर्भो विभूतित्वेनोक्त इह

संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ॥ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ॥ २७ ॥ अहं युगानां च कृतं धीराणां देवलोऽसितः ॥
द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥२८॥ वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ॥ किंपूरुषाणां हनुमान्विद्याध्राणां सुदर्शनः ॥
॥ २९ ॥ रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसाम् ॥ कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ॥ ३० ॥

अजः प्रजापतिः । यस्य देहार्धाभ्यां मिथुनमभूत्स एव मुख्यं मिथुनम् । " अर्धो ह वा एष आत्मनो यत्पत्नी " इति श्रुतेः ॥ २६ ॥ अनिमिषामनिमिषाणामप्रमत्तानाम् । मधुमाधवौ वसंत इत्यर्थः । अभिजिदुत्तराषाढाचतुर्थपादः श्रवणप्रथमपादश्च । तथाच श्रुतिः "अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामवस्ताच्छ्रोणायाः " इत्यादिः ॥ २७ ॥ कृतं कृतयुगम् । देवलोऽसितश्च । व्यासानां वेदविभागकर्तृणाम् । कवीनां विदुषां काव्यः शुक्र आत्मवाञ्ज्ञानी ॥ २८ ॥ भगवताम् " उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ " इत्येवंलक्षणानाम् ॥ २९ ॥ पद्मरागो लोहितमणिः । सुपेशसां सुंदराणाम् । दर्भजातीनां

तु मिथुनोत्पादकत्वावच्छेदेन मुख्यमिथुनत्वेनेति विशेषणभेदेन विशेष्यभेदावगमात् ॥ २६ ॥ अनिमिषामिति क्विबन्तात्षष्ठी । इत्यर्थ इति–" मुखं वा एतदृतूनां यद्वसन्तः " इति श्रुतेस्सर्वर्तुमुख्यत्वान्मद्रूप इति भावः । मार्गशीर्षोभिनवशालिवास्तूकयज्ञियान्नागमकालः, शीतातपशून्यत्वेन सुखहेतुश्च । उत्तराषाढचतुर्थपादत्वे प्रमाणमाह–तथा चेति । श्रोणायाः श्रवणात्, श्रीपतिना तन्मानमप्युक्तं रत्नमालायाम्–" वैश्वदैवतचतुर्लवः श्रवः पञ्चभूलव १९ इहाभिजिन्मितिः " इति । वैश्वदैवतस्योत्तराषाढर्क्षस्य चतुर्थांशः पञ्चदश घट्यः, श्रवणस्य पञ्चदशांशश्चतुर्घट्यस्तथा चैकोनविंशतिघटिकामानमभिजिन्नक्षत्रम् उत्तराषाढाधिक्याच्छ्रवणांशयोगः स्वामिचरणैरुपेक्षितः । शरीरपार्थिवाद्युक्तिवदत उक्तमुत्तराषाढचतुर्थपाद इति ॥ * ॥ श्रोणायाः श्रवणस्य । तदुक्तं ज्योतिषे–" उषायाश्चांत्यपादश्च श्रुतेराद्यब्धिनाडिकाः । अभिजिद्भमितिर्ज्ञेया ह्यष्टाविंशतिभेषु च ॥ " इति ॥ २७ ॥ व्यासानामिति–" अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः । वैवस्वतेंतरे तस्मिन्द्वापरेषु पुनःपुनः ॥ वेदव्यासा व्यतीता ये अष्टाविंशतिसत्तमाः । चतुर्द्धा यैः कृतो वेदो द्वापरेषु पुनःपुनः ॥ द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयंभुवा । द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥ तृतीये चोशना व्यासश्चतुर्थे च बृहस्पतिः । सविता पंचमे व्यासो मृत्युः षष्ठे स्मृतः प्रभुः ॥ सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे स्मृतः । सारस्वतश्च नवमे त्रिधामा दशमे स्मृतः ॥ एकादशे तु त्रिवृषा भारद्वाजस्ततः परम् । त्रयोदशे त्वांतरिक्षो वप्रीवापि चतुर्दशे । त्रय्यारुणिः पंचदशे षोडशे तु धनंजयः ॥ कृतंजयः सप्तदशे ऋणज्योऽष्टादशे स्मृतः । ततो व्यासो भरद्वाजो गौतमस्तु ततः परम् ॥ उत्तमस्तु ततो राजश्रवा व्यासस्ततो मुने । तृणबिंदुश्च वाल्मीकिस्ततः शक्तिस्ततो ह्यहम् ॥ जातूकर्णोऽभवन्मत्तः कृष्णद्वैपायनस्ततः । अष्टाविंशतिरित्येंते वेदव्यासाः प्रकीर्तिताः ॥ भविष्ये द्वापरे द्रौणिर्वेदव्यासो भविष्यति । " इति विष्णुपुराणोक्तेः ॥ * ॥ आत्मवान् आत्मानात्मविवेकज्ञः ॥ २८ ॥ आगतिं लोकांतरात्, गतिं लोकांतरगमनम् । विद्यां मोक्षहेतुमविद्यां संसारहेतुम् । त्वमुद्धवः ॥ * ॥ भगवतां षड्गुणयुक्तभगवदाविर्भावानां मध्ये वासुदेवश्चतुर्व्यूहस्यादिव्यूहः । अनेन स्वस्य ततोपि परत्वं दर्शितम् । उत्पत्त्यादिज्ञानयुक्तानामिति व्याख्यायां मुन्यादित्वे प्राप्ते त्रिजातीयत्वेन निर्द्धारणानुपपत्तेस्तथापि उत्पत्त्यादिज्ञानयुक्तत्वमेव जातिं कल्पयित्वा तथा व्याख्यातमिति स्थितस्य गतिश्चिन्तनीया ॥ २९ ॥ दर्भजातीनाम् "कुशाः काशास्तथा दूर्वा यवा व्रीहय एव च । बल्वजाः पुंडरीकाणि सप्तधा बर्हिरुच्यते ॥ " इति यमः । गव्यमिति महिष्यादिघृतानां श्राद्धाद्यनर्हत्वात् । अज्यते स्निह्यतेऽनेनेत्याज्यम् ।

व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ॥ तितिक्षाऽस्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ॥ ३१ ॥ ओजः सहो बलवतां कर्माहं विद्धि सात्वताम् ॥ सात्वतां नवमूर्तीनामादिमूर्तिरहं परा ॥ ३२ ॥ विश्वावसुः पूर्वचित्तिर्गंधर्वाप्सरसामहम् ॥ भूधराणामहं स्थैर्यं गंधमात्रमहं भुवः ॥३३॥ अपां रसश्च परमस्तेजिष्ठानां विभावसुः ॥ प्रभा सूर्येंदुताराणां शब्दोऽहं नभसः परः ॥ ३४ ॥ ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ॥ भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ॥ ३५ ॥ गत्युक्त्युत्सर्गोपादानमानंदस्पर्शलक्षणम् ॥ आस्वादश्रुत्यवघ्राणमहं सर्वेंद्रियेंद्रियम् ॥३६॥ पृथिवीवायुराकाश आपो ज्योतिरहं महान् ॥ विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम् ॥ अहमेतत्प्रसंख्यानं ज्ञानं तत्त्वविनिश्चयः ॥ ३७ ॥

काशदूर्वादीनाम् । हविःषु चरुपुरोडाशादिषु घृतेषु वा ॥ ३० ॥ लक्ष्मीर्धनादिसंपत् । छलग्रहो द्यूतम् ॥ ३१ ॥ बलवतामोजश्च सहश्च । सात्वतां भागवतानां भक्त्या कृतं कर्माहमित्यर्थः । तेषामेव नवव्यूहार्चने वासुदेवसंकर्षणप्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहब्रह्माण इति या नवमूर्तयस्तासां मध्ये वासुदेवाख्याहम् ॥ ३२ ॥ गंधर्वाणां विश्वावसुः । अप्सरसां पूर्वचित्तिः । गंधमात्रमविकृतम् ॥ ३३ ॥ परमो मधुरः । परः पराख्यः शब्दः ॥ ३४ ॥ अर्जुनः पार्थः । भूतानां प्राणिनां प्रतिसंक्रमः प्रलयः ॥ ३५ ॥ गत्यादयः पंचकर्मेंद्रियव्यापाराः । स्पर्शादयो ज्ञानेंद्रियव्यापाराः । तत्र लक्षणं दर्शनम् । सर्वेंद्रियाणामिंद्रियं तत्तदर्थग्रहणशक्तिरप्यहम् ॥ ३६ ॥ तदेवं तत्रतत्र निर्धारणेन तत्तत्संबंधेन च विशेषतो विभूतीर्निरूप्येदानीं सामान्यतः सर्वा अपि निरूपयति पृथिवीति सार्धद्वयेन । पृथिव्यादिशब्दैस्तन्मात्राणि विवक्षितानि । अहमहंकारः महान्महत्तत्त्वम् । एताः सप्त प्रकृतिविकृतयः । विकारः पंचमहाभूतानि एकादशेंद्रियाणि चेत्येवं षोडश

'अंजू—व्यक्तिम्रक्षण—' इत्याद्यर्थकधातोः "अंजेः संज्ञायाम्" इति क्यप् । न त्वजाया इदमाज्यमिति व्युत्पत्त्या छाग्या घृतमपि यज्ञादौ ग्राह्यमिति भ्रमितव्यम् । अनामिषत्वात्तस्य भक्षणे तु न दोष इत्यलमप्रकृतेन ॥ * ॥ रत्नानां पद्मरागोस्मि इत्यनेन कौस्तुभस्य तज्जातीयत्वं व्यंजितम् । अत एव क्रमदीपिकायाम्—' कौस्तुभं भानुमंतम ' इति तद्ध्यानं दर्शितम् । इन्द्रनीलजातीयत्वं तु यन्नारायणस्तवे तदन्यत्र ज्ञेयम् ॥ ३० ॥ व्यवसायिनां व्यवहर्तॄणामुद्यमवतां वा । कितवानां दीव्यताम् । छलस्य वञ्चनस्य ग्रहो ग्लहो यत्र स तथा द्यूतमित्यर्थः । 'द्यूतं छलयतामस्मि' इति श्रीगीतोक्तेः । सत्ववतां प्राणिनां सत्वम् "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जंतुषु ॥" इति मेदिनी । बुद्धिमतां बुद्धिनिर्वाहम् ॥ * ॥ व्यवसायिनामुद्यमवतामिति संबंधे षष्ठी । कितवानां कापट्यवताम् । छलग्रहो द्यूतम् । सत्त्वं धैर्यम ॥ ३१ ॥ इत्यर्थ इति—न तु स्वाभाविकं स्नानपानादिरूपमपि मद्विभूतिरिति भावः । तेषामेव सात्वतामेव । नवव्यूहार्चनप्रकारः पंचरात्रतोऽवसेयः ॥ * ॥ 'नवसु ब्रह्मायं साक्षाद्भगवद्रूपः । यः खलु तादृशजीवासद्भावे तत्कर्मार्थं स्वयमाविर्भवति यज्ञरूपेणेंद्रवत् । क्वचित्कल्पे विष्णुरेव ब्रह्मा भवति ॥ ३२ ॥ भूधराणां पर्वतानाम् । अविकृतं सुरभ्यादिभेदहीनम् ॥ * ॥ गन्धमात्रमहं भुव इति मात्रपदोपादानात् 'पुण्यो गंधः पृथिव्यां च' इति गीतोक्तेर्दुर्गन्धो व्यावृत्तः । 'अपां रसश्च परमः' इत्युत्तरवाक्यस्वारस्यात् ॥ ३३ ॥ तेजिष्ठानामर्चिष्मताम् । पराख्यः परापश्यंतीमध्यमावैखरीरूपेषु प्रथमः ॥ * ॥ ० ॥ ३४ ॥ वीराणां शूराणाम् ॥ * ॥ ० ॥ ॥ ३५ ॥ आनंद उपस्थस्य "सर्वेषामानंदानामुपस्थः परमानन्दः" इति श्रुतेः । तत्र तेषु । लक्ष्यत इति लक्षणम् 'लक्ष—दर्शनाङ्कनयोः' इत्यतो भावे ल्युट् ॥ * ॥ इन्द्रियं तत्तच्छक्तिहेतुरित्यर्थः । "चक्षुषश्चक्षुः" इत्यादिश्रुतेः ॥ ३६ ॥ तदेवम् इत्थम् । तत्त्वानां पञ्चविंशत्वे प्रमाणमाह—तदुक्तमिति । उक्तामेव विभूतिं भंग्यंतरेणाह—किंचेति । न केवलं तत्त्वान्येव मद्विभूतयोपि तु तद्गणनादिकमपीत्याह—किञ्चेति ॥ * ॥ पृथिवीति

मयेश्वरेण जीवेन गुणेन गुणिना विना ॥ सर्वात्मनाऽपि सर्वेण न भावो विद्यते क्वचित् ॥ ३८ ॥
संख्यानं परमाणूनां कालेन क्रियते मया ॥ न तथा मे विभूतीनां सृजतोऽडानि कोटिशः ॥ ३९ ॥

संख्याकः । पुरुषो जीवः । अव्यक्तं प्रकृतिः एवं पंचविंशतितत्त्वानि । तदुक्तम् । " मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ॥ षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ " इति । किंच रजः सत्त्वं तम इति प्रकृतेर्गुणाश्च परं ब्रह्म च तदेतत्सर्वमहमेव । किंचैतत्प्रसंख्यानमेतेषां परिगणनमेतेषां लक्षणतो ज्ञानं च तत्फलं तत्त्वनिश्चयश्चाहमेव ॥ ३७ ॥ एतदेव संक्षिप्याह । मयेति जीवेश्वररूपो द्विविधो यो भावो यश्च गुणिगुणरूपो यश्च क्षेत्रज्ञक्षेत्ररूपः स सर्वोऽपि अहमेव मया विना मद्व्यतिरेकेण नास्ति । अहमेव सर्वमित्यर्थः ॥ ३८ ॥ ननु सामान्यतः किमेवं संक्षिप्य कथयसि पूर्ववन्निर्धारणसंबंधाभ्यां विशेषतः सर्वाः कथयेति चेत्तत्राह ।

सार्द्धकम् । तत्त्वानां पञ्चविंशतिकत्वं सांख्यतत्त्वकौमुद्यामुक्तम्—मूलेति । प्रकर्षेण करोतीति प्रकृतिः प्रधानं सत्त्वरजसां साम्यावस्था मूलं चासौ प्रकृतिश्चेति अजहल्लिंगत्वात्क्लीबेनापि सामानाधिकरण्यम् । यावत्कार्यमूलत्वा न्नास्या मूलांतरापेक्षाऽनवस्थाप्रसंगात् । महदाद्याः सप्त प्रकृतयो विकृतयश्च । तत्र तत्त्वांतरोपादानत्वं प्रकृतित्वं कार्यत्वं च विकृतित्वम् । तथाहि—महत्तत्त्वमहंकारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः । एवमहंकारस्तन्मात्रेंद्रियाणां प्रकृतिर्विकृतिश्च महतः । एवं पञ्च तन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयोऽहंकारस्य । एकादशेंद्रियपञ्चमहाभूतलक्षणः षोडशको गणः कार्यमेव न कस्यापि कारणं घटादिजनकत्वेऽपि तत्त्वांतराणामजनकत्वान्न प्रकृतित्वमिति **दीपिका** ॥ * ॥ **संदर्भस्तु**—परं ब्रह्म चेति ब्रह्मणोपि स्वविभूतित्वमुक्तम् । युक्तं चैतत्, विशिष्टतयाविर्भावाच्छ्रीभगवतो धर्मिरूपत्वम् अविशिष्टतयाविर्भावाद्ब्रह्मणो धर्मरूपत्वं ततः पूर्वस्य मंडलस्थानीयत्वमिति भावः । तत्र श्रीविष्णुपुराणमपि संप्रवदते—"शुभाश्रयः सचित्तस्य सर्वज्ञस्य तथात्मनः" इति व्याख्यातञ्च स्वामिभिः । सर्वज्ञस्यात्मनः परब्रह्मणोप्याश्रयः प्रतिष्ठा श्रीभगवताप्युक्तम्—'ब्रह्मणो हि प्रतिष्ठाहम्' इति । अत्र च तैर्व्याख्यातम्—ब्रह्मणो हि प्रतिष्ठा घनीभूतं ब्रह्मैवाहम्—यथा घनीभूतः प्रकाश एव सूर्यमंडलस्तद्वदित्यर्थः । श्रीमत्स्यदेवेनापि तथैवोक्तम्—"मदीयं महिमानं च परं ब्रह्मेति शब्दितम्" इति । ब्रह्मसंहितायाञ्च—"यस्य प्रभा प्रभवतो जगदंडकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम् । तद्ब्रह्म निष्कलमनंतमशेषभूतं गोविंदमादिपुरुषं तमहं भजामि ॥" इति । यामुनाचार्यैरप्युक्तम्—"यदंडमंडांतरगोचरं च यद्दशोत्तराण्यावरणानि यानि च । गुणाः प्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभूतयः ॥" इति । अत एवाह श्रीध्रुवः—"या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्किंत्वंतकासिलुलितात्पततां विमानात् ॥" इति । अत एव भगवद्गुणेनात्मारामाणामप्याकर्षणं भवति । यथा—'आत्मारामाश्च मुनयः' इत्यादौ 'स्वसुखनिभृतचेताः' इत्यादौ दृष्टश्च तथैव श्रीव्यासनारदसंवादे प्रथमे । अत्र विशेषो भगवत्संदर्भे दृश्यः । एतत्प्रसंख्यानमेतत्परिगणनम् । एतेषां लक्षणतोऽसाधारणधर्मतो ज्ञानं तत्फलं तत्त्वज्ञानफलञ्च तत्त्वनिश्चयश्चाहमेवेति तैः ॥ ३७ ॥ एतदेव सर्वात्मत्वमेव । इत्यर्थ इति—'सर्वं समाप्नोषि ततोसि सर्वः' इति स्मृतेः । सर्वेण सर्वं व्याप्य तिष्ठता बहिर्व्याप्तिं वारयति—सर्वात्मनेति । "यच्च किंचिज्जगद्वस्तु दृश्यते श्रूयतेऽपि वा । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेरिति भावः ॥ * ॥ मया विना भावः पदार्थमात्रं क्वचिन्न विद्यते, सर्वकारणं मां विना तस्य शशशृंगादिगणनांतःपातात् । ननु महत्स्रष्टृपुरुषादिलक्षणेश्वरादयः कारणानि सन्ति ततस्तैरेव तत्सेत्स्यति तत्राह—मयैवेश्वरादिरूपेणेत्यर्थः । कारणव्यतिरेकेण कार्यव्यतिरेकादिति भावः । अनेनानंतकोटिब्रह्माण्डेश्वरावस्थातोपि यस्य परत्वं दर्शितम् । तदुक्तं श्रीगीतासु—'ईश्वरः सर्वभूतानां हृद्देशे' इत्यादिभिः ॥ ३८ ॥ अत्राक्षिपति—नन्विति । इत्यर्थ इति—असंख्यब्रह्मांडनिर्मातुर्विभूतिगणनं त्वीश्वरेणापि कर्तुं न शक्यते " यो ह्यात्ममायाविभवं स्म पर्यगात् " इत्याद्युक्तेरिति भावः ॥ * ॥ कालेन सर्वांतर्यामिणा

तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ॥ वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥ ४० ॥
एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः ॥ मनोविकारा एवैते यथा वाचाभिधीयते ॥ ४१ ॥

संख्यानं पृथिव्यादिपरमाणूनां कालेन महता तदपि मयैव क्रियते कृत्वा च वक्तुं शक्यते तथा मे विभूतीनां संख्यानं कर्तुं न शक्यते । कुत इत्यत आह । सृजतोण्डानीति । यदा मया सृज्यमानानां ब्रह्मांडानामेव तावत्संख्या नास्ति तदा कुतस्तद्गतानां विभूतीनां संख्येत्यर्थः ॥ ३९ ॥ तथापि विशेषत एव सर्वा अपि संक्षेपतः कथयामीत्याह । तेजः प्रभावः । श्रीः संपत् । सौभगं मनोनयनाह्लादकत्वम् । भगो भाग्यम् । वीर्यं बलम् । अंशको विभूतिः ॥ ४० ॥ उपसंहरति । एता इति । एते च विभूतिभेदा मयि चित्तावताराय कल्पिता अतो नात्रातीवाभिनिवेशः कर्तव्य इत्याह । मनोविकारा एव न तु परमार्थाः।यथा किंचित् खपुष्पादि वाङ्मात्रेणाभिधीयते तत्तुल्याः ॥४१॥

मया पृथिव्यादिपरमाणूनां संख्यानं क्रियते ज्ञायत इति भावः, सर्वज्ञत्वाद्यव्यभिचारादित्यर्थः । तथापि मे विभूतीनां संख्यानं न तथेति । तासामनंतत्वादिति भावः । कृधातोः सर्वधात्वर्थानुगतत्वात्तथा व्याख्यातम्, ' शिष्टकृत् ' इति सहस्रनामभाष्यवत् । तत्रास्तु तावन्महावैकुंठेश्वररूपस्य मम ब्रह्मांडकोटिस्रष्टुरस्यापि न ज्ञायत इत्याह–सृजत इति ॥ ३९ ॥ यद्यपि वक्तुमशक्यास्तथापीति । ऐश्वर्यं प्रभुत्वम्, ह्रीरिकार्यकृतौ संकोचः, त्याग औदार्यम्, विज्ञानं ज्ञानाधिक्यम् ॥ * ॥ एवंरीत्या विशेषतोऽपि सर्वा विभूतयो वक्तुं शक्या इत्याह–तेज इति ॥ ४० ॥ अभिनिवेशोयमेवेश्वरोऽतोन्यत्र नेति हठः । परमार्थाभावे दृष्टान्तमाह–यथेति । यथाऽसदेव खपुष्पम् । आदिपदाच्छशविषाणादिग्रहः । वाङ्मात्रेण वचनमात्रेण । एतत्कथनं परमार्थस्वरूपमेव ध्येयमिति बोधनायेति भावः ॥ * ॥ एता इति–छत्रिन्यायेन परमात्मादीनां मनोविकारत्वाभावात् । यद्वा–एता विभूतयः संक्षेपेण कीर्तिता अपि सामान्यविशेषाभ्यां सर्वा एव कीर्तिताः । तत्र ते पौरुषे प्रमाणातीतान्परमात्मवासुदेवनारायणपरब्रह्मरूपा अपि कीर्तिताः, किंतु एते पौरुषेयप्रमाणगोचराः, सर्वभूतादयस्तु मनोविकारा एव मच्छक्तिलेशाभासावेशित्वेन मनसैव मन्यमानाः यथा राजाश्रिते राजत्वं वाचा गौण्या वृत्त्याभिधीयते तत्तुल्या न तु परमात्मवद्यथावद्रूपा इत्यर्थः । यद्वा–मनो विकारयंतीति मनोविकाराः । तर्हि कथं स्वविभूतित्वेन निःश्रेयसहेतुत्वमुपदिश्यते तत्राह–यथेति । यथा येन मद्गुणांशाभिव्यक्तिप्रकारेण वाचा मन्निगमलक्षणयाभिधीयते प्रतिपाद्यते तथा तत्प्रकारेणैव ते मान्या न बहिर्दृष्ट्येति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**–उपसंहरति–एता इति । सर्वाः सामान्यतो विशेषतश्च कीर्तिता एव, किन्तु एते प्रसिद्धा लोकेषु दृश्यमाना मनसो विकाराः स्नेहद्वेषाभिमानादयो यथा येन प्रकारेण वर्तंते तथा तेन प्रकारेणाभिधीयंते तत्रतत्र लोकैरभिधीयन्ते न तु मद्विभूतिरूपेणेत्यर्थः । यथा सर्ववस्तुमात्राणामेव सामान्यतो मद्विभूतित्वेऽपि यत्र यस्य मनसः स्नेहमयो विकारस्तत्र तेनायं मे पुत्र इति, अयं मे पितेति, अयं मे भर्तेति, अयं मे पितृव्य इति, अयं मे मित्रमित्येवमेवाभिधीयते न त्वयं भगवद्विभूतिरिरिति। तथा यत्र द्वेषमयो मनोविकारस्तत्रायं ममापकर्ता, अयं,ममापकार्यः,अयं द्वेष्टा,अयं द्वेष्य इति,अयं हंता अयं वध्य इत्येवमभिधीयते न त्वयं भगवद्विभूतिरिरिति। एवमिंद्रो विशेषतो मद्विभूतिरपि शच्या मद्भर्तेति,अदित्या मत्पुत्र इति,जयन्तेन मत्पितेति,बृहस्पतिना मच्छिष्य इति, असुरैरयमस्यद्वेष्टेत्येवमेवाभिधीयते न त्वयं भगवद्विभूतिरिरिति।निस्स्पृहैर्मद्भक्तैस्तु सर्वत्रैवायं भगवद्विभूतिरित्येवाभिधीयते । अप्राकृतविभूतिस्तु–विभूतित्वेन पुत्रभ्रात्रादित्वेन अवध्यायतां सर्वथैव कृतार्थतैव तत्तदवतारतत्तत्परिकराणां तथा दृष्टत्वात्।विभूतय इत्यनूद्य मनोविकारा इति न व्याख्येयम्, त्रिभूतिमध्य एव वासुदेवादीनां तथा निर्विशेषब्रह्मणश्च

वाचंयच्छ मनो यच्छ प्राणान्यच्छेंद्रियाणि च ॥ आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥ ४२ ॥ यो वै वाङ्मनसे सम्यगसंयच्छन्धिया यतिः ॥ तस्य व्रतं तपो ज्ञानं स्रवत्यामघटांबुवत् ॥ ४३ ॥ तस्मान्मनोवचःप्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥ ४४ ॥ इति श्रीमद्भा॰ एकादशस्कन्धे भगवदुद्धवसंवादे विभूतिनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥ उद्धव उवाच ॥ यस्त्वयाभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥ १॥ यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ॥ स्वधर्मेणारविंदाक्ष तत्समाख्यातुमर्हसि ॥ २॥ पुरा किल महाबाहो धर्मं परमकं प्रभो ॥ यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव ॥ ३ ॥

तस्माद्वागादीन्नियच्छ । आत्मानं बुद्धिमात्मना सत्त्वसंपन्नया तयैव नियच्छ । अध्वने संसारमार्गाय ॥ ४२ ॥ असंयमने दोषमाह । य इति । असंयच्छन्न संयच्छति ॥ ४३ ॥ परिसमाप्यते कृतकृत्यो भवतीत्यर्थः ॥ ४४ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री॰ टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ ततः सप्तदशे पृष्टे स्वधर्मे भक्तिलक्षणे॥ हंसोक्तं धर्ममन्वाह ब्रह्मचारिगृहस्थयोः॥ १॥ 'कर्माहं विद्धि सात्वताम्' इत्यत्र भक्त्या कृतं कर्म मोक्षसाधनं मद्विभूतिरित्युक्तं भक्तिसाधनत्वं च कर्मणां 'मयोदितेष्ववहितः स्वधर्मेषु' इत्यादिना तत्रतत्रोक्तम् । न च कर्मानुष्ठातॄणां नियमेन भक्तिर्दृश्यतेऽतः पृच्छति यस्त्वयेति सप्तभिः । पूर्वं कल्पादौ त्वद्भक्तिलक्षणस्तत्प्रापकस्तत्साधनमित्यर्थः । वर्णाश्रमहीनानामपि द्विपदां नराणाम् ॥ १ ॥ यथा येन प्रकारेणानुष्ठीयमानेन स्वधर्मेण ॥ २ ॥ ननु संप्रदायादेव

परिपठितत्वात्, तेषामपि खपुष्पायमाणत्वे सति शून्यवादप्रसक्तेः, श्लोकेऽप्यत्रैते इत्यस्य वैयर्थ्याच्च ॥४१॥ यतो मनोविकारा एव तस्माद्धेतोः । तया बुद्ध्या कल्पसे योग्यो भवसि ॥*॥ यतः सर्व एव पदार्था मद्विभूतयस्ततः सर्व एव मनसा वाचा कायेनापि संमाननीया एव न तु तिरस्करणीयाः केऽपि इत्याह—वाचमिति । मनोविकारमयवागादिकं नियच्छ निरुंधीत्यर्थः ॥ ४२ ॥ ० ॥ * ॥ व्यतिरेके दोषमाह—य इति ॥ ४३ ॥ यतो वागादेरसंयमनमनर्थहेतुस्तस्मादित्यर्थः । ततो भक्तिसहितवागादिसंयमनात् ॥ * ॥ " अतिवादांस्तितिक्षेत नावमन्येत कंचन । न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ " इत्युक्तेः । स्वयमेवोपसंहरति—तस्मान्मनोविकारमयवागाद्यनियमेन सर्वं सत्कर्म वृथा तस्मान्मयि स्वयं भगवति परमात्मादिरूपे वा या भक्तिः श्रद्धा तद्युक्तया बुद्ध्याऽहमेव वचोमनआदीनां परमुत्कृष्टं केवलमयनमाश्रयो यस्य तथाभूतः सन्प्राकृतवचआदीन्नियच्छेत् । ततः न किञ्चिज्ज्ञानादिभिः कृत्यमस्तीत्यर्थः ॥ ४४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ ॥ ततो विभूतिकथनोत्तरम् । भक्तिं लक्षयतीति तथा तस्मिन् । हंसेन हंसावतारेण । ब्रह्मणे यदुक्तं धर्मम् ( १ ) । न च दृश्यते यतोऽतो हेतोः । इत्यर्थ इति—भक्तिसाधनमिति भावः ॥ * ॥ ज्ञानयोगं भक्तियोगमष्टांगयोगञ्च श्रुत्वा कर्मयोगं विजिज्ञासमानः पृच्छति—यस्त्वयेति । " कालेन प्रलये नष्टा वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ " इति । स च भक्तिलक्षणो धर्मस्त्रिविधः—केवलः, प्रधानभूतो, गुणभूतश्च । तत्र यः केवलः सर्ववर्णाश्रमवतां वर्णाश्रमहीनानामपि द्विपदां नराणां यदृच्छयैव तादृशसाधुसंगादेव भवति न तु धर्मादिभ्यः । यदुक्तं त्वया—" यं न सांख्येन योगेन प्राप्नुयाद्यत्नवानपि " इति । यस्मिंश्च वर्णाश्रमवत्सु जनेषु यदृच्छयैवाविर्भूते सति ते जना वर्णाश्रमाचारं परित्यज्यैव तमनुतिष्ठंति । तदुक्तम्—" सर्वान्धर्मान्परित्यज्य मां भजेद्यः स सत्तमः " इति । प्रधानभूतगुणभूतौ तु तौ यथायोगं तादृशसत्प्रसंगात्स्वधर्माच्च भवत एव ॥ १ ॥ तद्धर्मम् । रवेरन्योऽरविः प्रकाशाभावस्वरूपोऽज्ञानस्य समूहस्तं द्यति खंडयतीत्यरविंदं ज्ञानम्, खश्प्रत्यये मुम् । तदेवाक्षि यस्येति समासांतः षच् । हे अज्ञानतिमिरनाशकेत्यर्थः ॥ * ॥ येन भक्तिर्गुणभूता प्रधानभूता वा तत्त्वदन्यो न जानातीति भावः ॥ २ ॥ आक्षिप्य समाधत्ते—नन्विति । माधव मायानाशक ॥ * ॥ ब्रह्मणेऽभ्यात्थेति विष्णुधर्मोत्तरे तथैवोक्तत्वात् । माधवेति स्वीयत्वं बोधयन्दयामुत्पादयतीति

स इदानीं सुमहता कालेनामित्रकर्शन॥ न प्रायो भविता मर्त्यलोके प्रागनुशासितः ॥४॥ वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि ॥ सभायामपि वैरिंच्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥ कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन ॥ त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥६॥ तत्त्वं नः सर्वधर्मज्ञधर्मस्त्वद्भक्तिलक्षणः ॥ यथा यस्य विधीयेत तथा वर्णय मे प्रभो ॥७॥ श्रीशुक उवाच ॥ इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान् हरिः ॥ प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥ ८ ॥ श्रीभगवानुवाच ॥ धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम् ॥ वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ९ ॥ आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ॥ कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः ॥ १० ॥

ज्ञास्यते किं पुनर्वर्णनेन तत्राह । पुरेति । परमकं परमश्चासौ कं सुखरूपश्च तम् । यत् । यम् । हंसरूपेण धर्मोऽप्युक्त एव न तु योगमात्रम् । "जानीत माऽऽगतं यज्ञं युष्मद्धर्मविवक्षया" इत्युक्तत्वात् ॥ ३ ॥ प्रागनुशासितोऽपि न भविता न भविष्यति ॥ ४ ॥ अत्र हेतुमाह वक्तेति द्वाभ्याम् । ये वदंति ब्राह्मणाः ये च कर्तारो ये च पालयंति नृपास्तेषां मध्ये ते त्वत्तोऽन्यः । कला वेदाद्याः ॥ ५ ॥ ६ ॥ तत्तस्मान्नोऽस्माकं मनुष्याणां मध्ये यस्य यथा विधीयते ॥ ७ ॥ ८ ॥ धर्म्यो धर्मादनपेतः । कुतो नैःश्रेयसकरो भक्तिजनकः । अतो मे मत्तस्तं धर्मं निबोध ॥ ९ ॥ तत्रादौ मदुपासनालक्षण एव मुख्यो धर्म आसीत् आचारलक्षणस्तु पश्चात्प्रवृत्तः स चैवमनुष्ठितो भक्तिहेतुरिति वर्णयितुमाह । आदाविति । कल्पादौ यत्कृतयुगं तस्मिन् । ते च तदा मामुपासत एव केवलं नान्यत्कुर्वंतीति वक्तुं कृतयुगनामनिरुक्तिमाह ।

भावः ॥ ३ ॥ स धर्मः । न भविष्यति तिरोहितो भविष्यति ॥ * ॥ अमित्रकर्षण हे अविद्यानिवर्तक । अत्र त्वमेव सर्वज्ञशिरोमणित्वेन ममाविद्यां नाशयितुं समर्थ इति भावः ॥ ४ ॥ अत्र तिरोधाने । वैरिंच्यां ब्रह्मसंबंधिन्याम् । यत्र ब्रह्मसभायाम् । "पुराणं धर्ममीमांसा वेदा उपपदाश्च ते । अंगानि सेतिहासानि कथ्यंते श्रीहरेः कलाः ॥ देवा ब्रह्मर्षयश्चैव क्षत्रिया रक्षणोत्सुकाः । कलाः सर्वे हरेरेव सप्रजापतयोऽपरे ॥" इति पुराणांतरात् ॥ * ॥ हे अच्युत तव ज्ञानं सदैकरसमेव न प्रलयेऽपि नश्यतीति भावः । कला वेदाद्या अष्टादशविद्याः "ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार एव च । पुराणन्यायमीमांसाधर्मशास्त्राणि चेत्यपि ॥ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा । छंदश्चेति षडित्येवं विद्याः प्रोक्ताश्चतुर्दश ॥ आयुर्धनुर्गान्धार्थैश्च शास्त्रैरष्टादशापि ताः ।" इति ॥ ५ ॥ तत्त्वज्ञानं तेऽहमुपदिशामि धर्मं त्वन्यस्मात्प्रष्टव्यामिति चेदाह—कर्त्रेत्यादि । कः प्रवक्ष्यति त्वदन्यो धर्मस्य वक्ता न भविष्यतीत्यर्थः । 'धर्मस्य तत्त्वं दुर्ज्ञेयम्' इत्युक्तेः ॥ * ॥ हे मधुसूदन—वेदहर्तृमधुहंतृत्वेन वेदसारभक्तियोगस्य त्वमेव बोद्धासीति भावः । हे देव—वेदादिषु प्रकाशमानस्त्वमेवाधुना वक्तुमर्हसीति भावः ॥ ६ ॥ यतस्त्वदन्यो वक्ता नास्ति तत्तस्मात् । यस्य वर्णादेः । मे मह्यम् ॥ * ॥ तस्मादन्यवक्तृत्वाभावात् । हे सर्वधर्मज्ञेति—त्वमेव सर्वधर्मवेत्तासि नान्यस्त्वत्सदृश इति भावः । हे प्रभो—मत्स्वामित्वेनाप्यहं त्वदनुग्राह्य एवेति भावः ॥ ७ ॥ स्वभृत्यमुख्येन सर्वभक्तोत्तमेन । सनातनः सर्वकारणः ॥ * ॥ ० ॥ ८ ॥ धर्म्यत्वे हेतुमाशंकते—कुत इति । यतो नैःश्रेयस्करोऽतो हेतोः । निबोध जानीहि ॥ * ॥ **दीपिका**—अतो नैःश्रेयसकरत्वात् ॥ ९ ॥ तत्र धर्मेषु । स चाचारलक्षण एवमनुष्ठितोऽनया रीत्या कृतः । ते च नरास्तदादिकृतयुगे । हंसो हंसाभिधानः ॥ * ॥

वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ॥ उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः ॥ ११ ॥ त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी ॥ विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ॥ १२ ॥ विप्रक्षत्रियविट्छूद्रा मुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः ॥ १३ ॥ गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ॥ वक्षःस्थानाद्वने वासो न्यासः शीर्षणि संस्थितः ॥ १४ ॥ वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः ॥ आसन्प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः ॥ १५ ॥

कृतकृत्या इति जात्या जन्मनैव ॥ १० ॥ किंच विधायकाभावादपि तदानीं नान्यत्कर्मास्तीत्याह । वेद इति । धर्मश्च मनोविषयोऽहमेव वृषरूपधृक् चतुष्पान्न क्रिया विशेषो यज्ञादिः अतस्तपोनिष्ठाः । " मनसश्चेंद्रियाणां च स्वैकाग्र्यं परमं तपः " इति वचनादेकाग्रतया हंसं शुद्धं मां ध्यायंतीत्यर्थः ॥ ११ ॥ पश्चात्त्रेतायुगप्रवेशे मे वैराजरूपस्य प्राणान्निमित्तात् । हृदयात्सकाशात् । तस्यास्त्रय्याः सकाशात् हौत्राध्वर्यवौद्गात्रैस्त्रिवृत्त्रिरूपः । " यज्ञो वै विष्णुः " इति श्रुतेः ॥ १२ ॥ वर्णानामाश्रमाणां च धर्मान्वक्तुं तेषामुत्पत्तिमाह विप्रेति द्वाभ्याम् । आत्माचारः स्वधर्म एव लक्षणं ज्ञापको येषां ते ॥ १३ ॥ मम वैराजरूपस्य हृदो वक्षसोऽधस्तात् । ब्रह्मचर्यमिति नैष्ठिकाभिप्रायम् ॥ १४ ॥ तेषामधिकारिविशेषेण स्वभावानाह वर्णानामिति पंचभिः । जन्मस्थानानुसारिण्यः । नीचैरित्यव्ययम् । अतोऽयमर्थः । मंदाभिर्जन्मभूमिभिर्मंदाः ।

एष त्वत्पृष्टो वर्णाश्रमाचारलक्षणो धर्मो यत आरभ्य प्रवृत्तस्तं समयमपि शृण्वित्याह—आदौ द्विपरार्धादौ । ब्राह्मे कल्पे । या तु सृष्ट्यादित एव चातुर्वर्ण्यादिप्रवृत्तिर्वर्णिता सैव कल्पांतरेष्वपीति ज्ञेयम् ॥ १० ॥ तत्रत्यमन्यदप्याह—किंचेति । प्रकर्षेण नूयते स्तूयते हरिरनेनेति प्रणव ओंकारस्तद्व्याख्यानरूपो वेद एक एवासीदग्रे प्रथमे कृतयुगे न त्वृगादिभेदेन विभक्तः । " ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूत भवद्भविष्यदिति सर्वमोंकार एव " इति श्रुतेः । चतुष्पात्संपूर्णो न विकलांगः । यतो यज्ञादिरूपक्रियाभावोऽतो हेतोः । इत्यर्थ इति—अवतारविशेषाणां तदाभावाच्छुद्धं निर्विकल्पं वेदांतैकवेद्यमेव ध्यायंतीति भावः ॥ * ॥ विधायकाभावाद्वेदानाविर्भावात् । तदानीं कृतयुगेऽन्यत्तपोऽतिरिक्तम् ॥ ११ ॥ महाभागत्वात्त्वामहमिदं वच्मीति संबुद्ध्यभिप्रायः ॥ * ॥ क्रमेण तेषां मुक्तौ सत्यां तानन्यान्वेदान्प्रवर्त्यान्याधिकारिणः प्रवर्तिता इत्याह—त्रेतेति । वैराजाख्यब्रह्मरूपस्य व्यष्टिसृष्टेस्तत्कारणकत्वात् । अत एव ' नीचैर्नीचोत्तमोत्तमैः ' इति नीचत्वेनापि व्यपदेक्ष्यते, श्रीनारायणे तथोक्तेरनुचितत्वात् ॥ १२ ॥ तेषां वर्णाश्रमाणाम् । कस्माद्रूपाद्विप्रादयो जाता इति चेदाह—वैराजाद्ब्रह्मांतर्यामिणः । स्वधर्मो वक्ष्यमाणः 'शमो दमः ' इत्याद्युक्तः ॥ * ॥ ० ॥ १३ ॥ आश्रमोत्पत्तिमाह—जवनतः ऊरुदेशतः । यद्यपि " पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघनं पुरः " इति कोशात्स्त्र्यवयव एव नितंबजघनशब्दौ वर्तेते, तथाप्यनयैव भगवदुक्त्या पुरुषावयवेऽपि प्रयुज्येते क्वचिदिति ध्येयं सुमतिभिः । नैष्ठिकाभिप्रायमिति व्यत्ययनिर्देश एवात्र मानमिति । वने वासो वानप्रस्थः ॥ * ॥ ० ॥ १४ ॥ तेषां वर्णाश्रमाणामधिकारिणां विशेषेण भेदेन । प्रथमार्थे द्वितीया । नीचा इत्यत्र विसर्गलोपे संधिरार्षः । यद्वा—नीचैर्नीचाभिर्नीचा नीचैर्नीचा उत्तमाभिरुत्तमा उत्तमोत्तमाः, ताश्च ताश्च नीचैर्नीचोत्तमोत्तमा इति यतोऽव्ययमतोऽयमर्थः । तृतीयाविभक्तित्वाभावाद्वक्ष्यमाणोऽर्थो विधेयस्तमाह—मंदाभिरित्यादिना ॥ * ॥ मुखस्य शीर्ष्णश्च सर्वोत्तमत्वाद्विप्रस्य संन्यासस्य च सर्वोत्तमा प्रकृतिः । पादस्य

शमो दमस्तपः शौचं संतोषः क्षांतिरार्जवम् ॥ मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १६ ॥ तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ॥ स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ १७ ॥ आस्तिक्यं दाननिष्ठा च अदंभो ब्रह्मसेवनम् ॥ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥ १८ ॥ शुश्रूषणं द्विजगवां देवानां चाप्यमायया ॥ तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः ॥ १९ ॥ अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः ॥ कामः क्रोधश्च तर्षश्च स्वभावोंऽतेवसायिनाम् ॥ २० ॥ अहिंसा सत्यमस्तेयमकामक्रोधलोभता ॥ भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥ द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः ॥ वसन्गुरुकुले दांतो ब्रह्माधीयीत चाऽऽहुतः ॥ २२ ॥

उत्तमाभिरुत्तमाश्चेति । नीचैर्नीचाश्चोत्तमैरुत्तमाश्च । स्वभावस्यान्यथा प्रतीतिस्त्वौपाधिकी । यथा जलस्य वह्न्यातपयोगादौष्ण्यम् ॥१५॥ तप आलोचनम् ॥१६॥ तेजः प्रतापः ॥ १७ ॥ १८ ॥ एतैरेवाश्रमस्वभावा अपि ज्ञेयाः ॥ १९ ॥ तद्बाह्यानां स्वभावानाह । अशौचमिति । शुष्कविग्रहो निर्मूलकलहः । तर्षस्तृष्णा ॥२० ॥ तत्र तावत्सर्वसाधारणं धर्ममाह । अहिंसेति । वर्णग्रहणमुपलक्षणार्थम् । वर्णधर्मान् गृहस्थप्रकरणे वक्ष्यति ॥ २१ ॥ प्रथमं तावदाश्रमेषु ब्रह्मचारिणो धर्मा वर्ण्यंते । स द्विविधः ।

जघनस्य च नीचत्वाच्छूद्रस्य गृहाश्रमस्य च नीचा प्रकृतिः ॥ १५ ॥ प्रकृतयः स्वभावाः ॥ * ॥ मद्भक्तिर्गुणभूता ॥ १६ ॥ अर्थहानौ च बंधूनां वियोगेष्वपि संपदि तयोः प्राप्तौ च सर्वस्य चित्तस्थापनं धृतिः । ऐश्वर्यमस्थिरता । स्थैर्यमनाकुलता ॥ * ॥ ० ॥ १७ ॥ धर्माधर्मेषु विश्वासो यस्तदास्तिक्यमुच्यते । न्यायार्जितद्रव्यस्य श्रद्धया त्यागो दानम् । अदंभः पाखंडासेवा । अतुष्टिरलंबुद्ध्यभावः ॥ * ॥ ० ॥ १८ ॥ तत्र सेवनेपि । एतैरेव शमादिभिरेव । यथाकथंचिदाश्रमधर्मा अप्यनुसंधेयाः । यथा—गुरुशुश्रूषादि ब्रह्मचारिधर्मः, दानादि गृहस्थधर्मः, तपश्चर्यादि वनस्थधर्मः, शमादिः संन्यासधर्म इति । तद्वक्ष्यति—“भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः । गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥” इति ॥ * ॥ ० ॥ १९ ॥ तद्बाह्यानां वर्णाश्रमबाह्यानाम् । “शौचं तु द्विविधं प्रोक्तं बाह्यमभ्यन्तरं तथा । मृज्जलाभ्यां तथा बाह्यं मनःशुद्धिरथापरम् ॥” इत्येतद्विपरीतमशौचम् । कर्मणा मनसा वाचा च परद्रव्यानपहरणमस्तेयं तद्विरुद्धं स्तेयम् । शुष्कविग्रहो निर्निमित्तकलहः । कामो निषिद्धविषयाभिलाषः । क्रोधस्तत्त्वोक्तावसहिष्णुता । तृष्णा अनलंबुद्धिः । अन्तेऽवसायिनश्चण्डालादयः । ते च—“चंडालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा । मागधायोगवौ चैव सप्तैतेंत्यावसायिनः ॥ ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा । शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥ क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च । शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ शूद्रायां क्षत्रियज्जाता कन्योग्रा कीर्त्यते बुधैः । उग्रायां क्षत्तृतो जातः श्वपचः परिकीर्तितः ॥” इति धर्मशास्त्रात् ॥ * ॥ अंत्येऽवसायिनामंत्यजानाम् ॥ २० ॥ तत्र प्रकृतधर्मवर्णने । उपलक्षणार्थमित्युक्तेर्वर्णेतराणामप्ययं धर्मः श्रेयस्कर इति ज्ञेयम् । “कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा । अक्लेशजननं प्रोक्ता ह्यहिंसा योगवित्तमैः ॥” कामादित्रयाणामभावः । लोभोऽकार्येणापि धनेच्छा । भूतानां प्रियहितयोरीहा वांछा “सर्वे भवंतु सुखिनः सर्वे हि निरुपद्रवाः” इत्येवंलक्षणा ॥ * ॥ सार्ववर्णिक इत्युपलक्षणम्—सर्ववर्णैः सार्वश्रमैर्वर्णबाह्यैश्च कर्तुमर्ह इत्यर्थः ॥ २१ ॥ तावत्साकल्येन । स च ब्रह्मचारी । सावधिकब्रह्मचर्यवानुपकुर्वाणको यावज्जीवं ब्रह्मचर्यवान्नैष्ठिकः । तत्र तयोर्मध्ये । आद्यस्योपकुर्वाणकस्य । त्रैवर्णिको विप्रक्षत्रविट्स्वन्यतमः । विप्रादित्रयाणामुपनयनव

मेखलाजिनदंडाक्षब्रह्मसूत्रकमंडलून् ॥ जटिलोऽधौतदद्वासोऽरक्तपीठः कुशान्दधत् ॥ २३ ॥ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ॥ न च्छिंद्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥ २४ ॥ रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ॥ अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥ २५ ॥ अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुराञ्छुचिः ॥ समाहित उपासीत संध्ये च यतवाग्जपन् ॥ २६ ॥

उपकुर्वाणो नैष्ठिकश्च । तत्राद्यस्य धर्मानाह द्वितीयमिति नवभिः । द्विजस्त्रैवर्णिकः । आनुपूर्व्याद्गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्म प्राप्याचार्येणाहूतो ब्रह्म वेदमधीयीत । चकारात्तदर्थं च विचारयेत् ॥ २२ ॥ किंच मेखलादीन्कुशांश्च दधत् । तत्राक्षशब्देनाक्षमाला । कथंभूतः । जटिलः अनभ्यंगादिना जातजटः । तथा अधौतदद्वासोऽरक्तपीठः दंताश्च वासश्च दद्वासांसि न धौतानि तानि यस्य सः अधौतदद्वासाः स चासावरक्तपीठश्च न तु कौतुकादिना रक्तं पीठमासनं यस्य सः ॥ २३ ॥ जपश्चोच्चारो मूत्रपुरीषोत्सर्गो जपोच्चारं तस्मिन्वाग्यतो मौनी भवेत् ॥ २४ ॥ रेतो बुद्धिपूर्वं नावकिरेन्नोत्सृजेत् । ब्रह्मव्रतधरो गृहस्थः । स्वयमेव कथंचिदवकीर्णे अवगाह्य स्नात्वा यतासुः कृतप्राणायामस्त्रिपदीं गायत्रीं जपेत् ॥ २५ ॥ संध्ये च द्वे यतवाग् जपन्नुपासीत । मध्याह्ने संध्यानिमित्तं मौनं नास्तीति द्विवचनम् ॥ २६ ॥

त्वाद्विजत्वम् । गर्भाधानादिसंस्कारास्तु सप्तमे स्कंधे व्याख्याताः । तदर्थं वेदार्थम् । विनार्थज्ञानं वेदाध्ययनं प्रोक्तफलदं न भवतीति " यथा पशुर्भारवाही न तस्य भजते फलम् । द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥ पाठमत्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् । पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥ तस्मादर्थपरिज्ञाने यत्नः कार्यो विजानता । " इति व्यासोक्तेः ॥ * ॥ ० ॥ २२ ॥ अन्यदाह–किंचेति । तत्र मेखलादिषु । अक्षमाला " आदिक्षांतगतैर्वर्णैर्जपमालाक्षमालिका " इति तांत्रिकाः । अनभ्यंगादिना " अंजनाभ्यंजनोन्मर्दस्त्र्यवलेखामिषं मधु । स्रग्गंधलेपालंकारांस्त्यजेयुर्ये धृतव्रताः ॥ " इति नारदोक्तेरभ्यंगादिपरित्यागेन जातजटोऽत्यंताश्लिष्टकेशसमूहः । कौतुकादिना जनसमाजे महत्त्वं ज्ञापयितुं रक्तोर्णादिमयमासनं न स्वीकुर्यादित्यर्थः । कौतुकं कुतूहलम् । आदिना शोभादिग्रहः ॥ * ॥ ० ॥ २३ ॥ जपो वेदाध्ययनं मंत्रांतरजपश्च " अधीत्य वेदसूत्रे च सेतिहासपुराणके । पुनःपुनस्तदभ्यासो जप इत्युच्यते बुधैः ॥ विधिनोक्तेन मार्गेण मंत्राभ्यासोथवा जपः । " । मंत्रजपश्च त्रिविधः–" जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः । निजकर्णागोचरो यो मानसः स प्रकीर्तितः ॥ उपांशुर्निजकर्णस्य गोचरः परिकीर्तितः । वाचिकस्तु जनैर्वेद्यस्त्रिविधो जप ईरितः ॥ यावंतः कर्मयज्ञाः स्युः प्रदिष्टानि तपांसि च । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य कीर्तितम् । तस्माच्छतगुणोपांशुः सहस्रो मानसः स्मृतः ॥" इति । जपप्रसंगान्मालानिर्णयमाह–"रुद्राक्षशंखपद्माक्षपुत्रजीविकमौक्तिकैः । स्फटिकैर्मणिरत्नैश्च सौवर्णै राजतैस्तथा ॥ विद्रुमैः कुशमूलैश्च गृहस्थस्याक्षमालिका । अंगुलीगणनादेकं पर्वण्यष्टगुणं भवेत् ॥ पुत्रजीवैर्दशगुणं शतं शंखैः सहस्रकम् । प्रवालैर्मणिरत्नैश्च दशसाहस्रिकं स्मृतम् ॥ तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते । पद्माक्षैर्दशलक्षं स्यात्सौवर्णैः कोटिरुच्यते ॥ कुशग्रंथ्या कोटिशतं रुद्राक्षैः स्यादनंतकम् । सर्वैर्विरचिता माला नृणां मुक्तिफलप्रदा ॥ " इति तंत्रसारात् । कक्षो भुजमूलाधोदेशः ॥ * ॥ ० ॥ २४ ॥ जपेत् 'संख्यानुक्तौ शतं जपेत' इत्यात्रोक्तेः । "स्वप्नेपि रेतः स्खलतो प्रायश्चित्तं विधीयते" इति स्मृतेः ॥ * ॥ ० ॥ २५ ॥ आचार्यो हि उपनीय वेदाध्यापकः । तदुक्तं मनुना–"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ " इति । गुरुरपि–" निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥ "

आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ॥ न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥ २७ ॥ सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ॥ यच्चान्यदप्यनुज्ञातमुपयुंजीत संयतः ॥ २८ ॥ शुश्रूषमाण आचार्यं सदोपासीत नीचवत् ॥ यानशय्यासनस्थानैर्नातिदूरे कृतांजलिः ॥ २९ ॥ एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः ॥ विद्यासमाप्यते यावद्बिभ्रद्व्रतमखंडितम् ॥ ३० ॥ यद्यसौ छंदसां लोकमारोक्ष्यन्ब्रह्मविष्टपम् ॥ गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३१ ॥

॥२७॥अन्यदपि यत्संप्राप्तं तच्च निवेदयेत् । तेनानुज्ञातं तु संयतः सन्नुपयुंजीतेत्यर्थः॥ २८॥यानशय्यासनस्थानैः यांतं पृष्ठतो यानेन निद्रितमप्रमत्ततया समीपशयनेन विश्रांतं पादसंवाहनादिभिः समीपासनेन आसीनं कृतांजलिः । नियोगप्रतीक्षया नातिदूरेऽवस्थानेनेत्यर्थः ॥ २९ ॥ एवंभूतं वृत्तं यस्य सः ॥ ३० ॥ एवमुपकुर्वाणकस्य धर्मानुक्त्वा नैष्ठिकस्य विशेषधर्मानाह यदीति षड्भिः । असौ ब्रह्मचारी यदि छंदसां लोकं महर्लोकं ततो ब्रह्मलोकं चारोक्ष्यन्नारोढुमिच्छतीत्यर्थः । यद्वा छंदसां लोकमिति ब्रह्मलोक

इत्यनेन पितुरेव गुरुत्वमुक्तं तस्यैव निषेकादिकर्तृत्वं शास्त्रे विहितमिति । वृद्धान्स्वकुलगुरुकुलवृद्धान्विद्यावृद्धान्वा । सुरान्गणेशादीन् । संध्ये चेति कथनेन मध्याह्नसंध्यायां वाङ्नियमाभावो ज्ञाप्यते, न तु द्वे एव संध्ये कुर्यादिति । " संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा । उभे संध्ये च कर्तव्ये ब्राह्मणैस्तु गृहे सदा ॥ " इत्यत्रिस्मृत्युक्तेः । अत्र विशेषस्तु सप्तमस्कन्धे श्रीदशमस्कन्धे चोक्त एवेत्युपरम्यते ॥ * ॥ ० ॥ २६ ॥ आचार्यं गुरुम् । " विद्यामंत्रोपदेष्टा हि विप्र आचार्य उच्यते " इत्युक्तेर्ब्राह्मणेतरस्याचार्यत्वं न स्यात्तदुक्तं श्रीवाराहेणापि—"आचार्यत्वमाद्यवर्णे मया संस्थापितं धरे " इति । कर्हिचिदित्युक्तेरत्यापद्यपीति भावः । मर्त्यबुद्ध्या यथान्ये नरास्तथायमपीति धिया नासूयेतेश्वरबुद्धिं न त्यजेत् " कामिनं कृष्णरूपं हि गुरुं मन्येत मानवः । सत्यव्रतं रामचन्द्रं नृसिंहं क्रोधिनं तथा ॥ कपटं वामनं विद्याद्दोषैस्तं न नरं स्मरेत् । " इत्यादिपुराणात् सर्वदेवमयो हरिरित्यर्थः ॥ * ॥ ० ॥ २७ ॥ तस्मै गुरवे । अन्यदपि वस्तु । तेन गुरुणा । इत्यर्थ इति—गुर्वाज्ञयैव प्राप्तं वस्त्राद्यपि स्वीकुर्यादिति भावः । संयतश्चापल्यरहितः ॥ * ॥ ० ॥ २८ ॥ नीचवन्निकृष्टवत् । इत्यर्थ इति—" निकटेऽतिविनाशाय ह्यतिदुरे च निष्फलाः । सेव्या हि मध्यभागेन राजवह्निगुरुस्त्रियः ॥ " इत्युक्तेरिति भावः ॥ * ॥ ० ॥ २९ ॥ वृत्तं चरितम् । कियंतं कालमेवं वास इति चेदाह—विद्येति । अखण्डितं च्युतिवार्जितम् ॥ * ॥ ० ॥ ३० ॥ ' विद्यातपोयोगसमाधिभाजाम् ' इति द्वितीयस्कन्धे महरादीनां चतुर्णां लोकानां विद्यादिफलत्वश्रवणाद्विद्यापदं वेदादिशास्त्रपरम्, तेन वेदाद्यभ्यासेन महर्लोकप्राप्तिरस्तीति सिद्धम् । तथा च छंदसां छंदोविदां वेदविदामित्यर्थः । " छंदः पद्ये च वेदे स्वैरेच्छयोश्छंदसा सह " इति धरणिः । 'विप्रोऽयं निगमः साक्षात्' इत्यादिषु वेदवेदविदोरभेदोपचारात् । ततो महर्लोकात् क्रमेण । इत्यर्थ इति—आरोक्ष्यन्निति । आङ्पूर्वाद्रोहतेर्भविष्यति " लृटः सद्वा " इति शतारि । आरोहणस्य भावित्वेन तत्रेच्छायाः संभवादित्याभिप्रेत्याह—आरोढुमिच्छतीति । ' ऋजुमार्गेण सिद्ध्यतोर्थस्य ' इति न्यायमाश्रित्याह—यद्वेति । अधीतनिष्क्रयो दक्षिणा तदर्थं गुरुसेवामेव कुर्यादिति भावः ॥ * ॥ अधीतनिष्क्रयार्थं वा । पिष्टपशब्दोपि विष्टपशब्दवद्भुवनवाची दृष्टः ॥ ३१ ॥

१ पादिपाठमनुसृत्यैतत् ।

अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ॥ अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥ ३२ ॥ स्त्रीणां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ॥ प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥३३॥ शौचमाचमनं स्नानं संध्योपासनमार्जवम्॥ तीर्थसेवा जपोऽस्पृश्याऽभक्ष्यासंभाष्यवर्जनम् ॥३४॥ सर्वाश्रम प्रयुक्तोऽयं नियमः कुलनंदन ॥ मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३५ ॥ एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ॥ मद्भक्तस्तीव्रतपसा दग्धक र्माशयोऽमलः ॥ ३६ ॥ अथानंतरमावेक्ष्यन्यथाजिज्ञासितागमः ॥ गुरवे दक्षिणां दत्त्वा स्नायाद्गुर्वनुमोदितः ॥ ३७ ॥ गृहं वनं वोपविशेत्प्रव्रजेद्वा द्विजोत्तमः ॥ आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥ ३८ ॥

विशेषणम् । 'यत्र मूर्तिधराः कलाः' इत्युक्तत्वात् । तर्हि बृहद्व्रतः सन्बृहन्नैष्ठिकं व्रतं यस्य सः । विन्यसेत्समर्पयेदधिकस्वाध्यायार्थमधीतनिष्क्रयार्थं च ॥ ३१ ॥ ब्रह्मवर्चो वेदाभ्यासजं तेजस्तद्वान् ॥ ३२ ॥ तस्यैव वनस्थयतिसाधारणधर्मानाह । स्त्रीणामिति । निरीक्षणं भावगर्भम् । क्ष्वेलनं परिहासः । एवमादिकं त्यजेत् । मिथुनीभूतानग्रतस्त्यजेत् । न पश्येदित्यर्थः ॥ ३३ ॥ तस्यैव सर्वाश्रमसाधारणं धर्ममाह शौचमिति द्वाभ्याम् ॥ ३४ ॥ ३५ ॥ निष्कामनैष्ठिकस्य तु मोक्षं फलमाह । एवमिति । अमलो निष्कामश्चेद्दग्धः कर्माशयोंतःकरणं यस्य तथाभूतः सन्मद्भक्तो भवति ॥ ३६ ॥ उपकुर्वाणस्य समावर्तनप्रकारमाह । अथेति । अनंतरं द्वितीयाश्रममावेक्ष्यन्प्रवेष्टुमिच्छन्यथा यथावद्विचारितवेदार्थः स्नायात् । अभ्यंगादिकं कृत्वा समावर्तेतेत्यर्थः ॥ ३७ ॥ तस्याधिकारानुरूपमाश्रमविकल्पसमुच्चयावाह । गृहमिति । सकामश्चेद्गृहमंतःकरणशुद्ध्यादिकामश्चेद्वनं प्रविशेत् । शुद्धांतःकरणः स च द्विजोत्तमो ब्राह्मणश्चेत्प्रव्रजेदित्यर्थः । द्विजोत्तम इत्युक्तेः क्षत्रियवैश्ययोर्न प्रव्रज्या

उपासनस्य दृष्टफलं—ब्रह्मवर्चस्वीति । ततश्चाकल्मषो निष्पापः ॥ * ॥ ० ॥ ३२ ॥ तस्यैव नैष्ठिकस्यैव । भावगर्भं साभिप्रायम् । आदिना स्मरणादिग्रहः । इत्यर्थ इति—गृहस्थेषु यावदर्थं गच्छेदिति भावः ॥ * ॥ अग्रतः प्रथमत एव मिथुनीभूतान् पशुकीटादीन् प्राणिनस्त्यजेत् ॥ ३३ ॥ तस्यैव नैष्ठिकस्यैव । तीर्थसेवा गंगादिसेवा गुरुसेवा वा । अस्पृश्यादित्रयवर्जनम् अस्पृश्या म्लेच्छादयः, अभक्ष्याणि मांसादीनि, असंभाष्याः महापातक्यादयः ॥ * ॥ ० ॥ ३४ ॥ ० ॥ * ॥ ० ॥ ३५ ॥ ० ॥ * ॥ एवमिति । मद्भक्तश्चेत्तेन मद्भक्तेनैव तीव्रेण सता तपसा स्वधर्मेणामलः शुद्धान्तःकरणो भवति, दग्धकर्माशयो मुक्तश्च भवतीत्यर्थः ॥ ३६ ॥ अथ ब्रह्मचर्यानंतरम् । इत्यर्थ इति—ब्रह्मचर्यं त्यक्त्वा स्नातको भवेदिति भावः॥*॥०॥३७॥तस्योपकुर्वाणस्य । अधिकारानुरूपम् आधिकारानुसारेण । इत्यर्थ इति—ब्राह्मणस्य शुद्धान्तःकरणस्यैव प्रव्रज्या नान्यथेति भावः । ननु तर्हि शुद्धान्तःकरणो ब्राह्मणः प्रव्रजेत् क्षत्रियवैश्यौ तु विनाप्यन्तःकरणशुद्धिं प्रव्रजेतामित्यागतमिति चेदाह—यद्वेति । " मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते ॥" इति देवलोक्तेर्ब्राह्मणस्यैव संन्यासः । विष्णोर्लिंगं दंडः । "पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः" इतींद्रोक्तेः, "मामैश्वर्यश्रीमदांधो दण्डपाणिं न पश्यति" इति श्रीमुखोक्तेश्च । दण्डोऽपि विष्णुलिंगमिति श्रीदशमे । यद्यपि कलौ संन्यासो निषिद्धः "अश्वालंभं गवालंभं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पंच विवर्जयेत् ॥" इति कमलाकरप्रबंधोक्तेस्तथापि—"यावद्वर्णविभागोऽस्ति यावद्गंगा महीतले । अग्निहोत्रं च

गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ॥ ३९ ॥ इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् ॥ प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ४० ॥ प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक्तयोः ॥ ४१ ॥ ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ॥ कृच्छ्राय तपसे चेह प्रेत्यानंतसुखाय च॥ ४२ ॥

धिकार इति सूचयति । यद्वा आश्रमादाश्रमांतरं गच्छेत् । अन्यथा अनाश्रमी प्रतिलोमं च नाचरेदित्यर्थः । अमत्पर इति वा छेदः । स्वभक्तस्याश्रमनियमाभावस्य वक्ष्यमाणत्वात् ॥ ३८ ॥ विवाहनियमपूर्वकं वर्णधर्मैः सह गृहस्थधर्मानाह । गृहार्थीति । सदृशीं सवर्णाम् । अजुगुप्सितां कुलतो लक्षणतश्चानिंदिताम् । कामतस्तु यामन्यामुद्वहेत्तां सवर्णामनु तस्या अनंतरम् । तत्रापि वर्णक्रमेणोद्वहेदित्यर्थः । "तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ॥ ब्राह्मणक्षत्रियविशां भार्याः स्वाः शूद्रजन्मनः ॥" इति स्मृतेः ॥३९॥ इज्यादयस्त्रैवर्णिकानामावश्यका धर्माः । प्रतिग्रहादित्रयं तु वृत्तिः सा च ब्राह्मणस्यैव ॥४०॥ तत्रापि मुख्यां मुख्यतमां चान्यां वृत्तिमाह प्रतिग्रहमिति । तयोर्याजनाध्यापनयोरपि कार्पण्यादिदोषं पश्यन् शिलैः स्वामित्यक्तैः क्षेत्रपतितैः कणिशैः ॥ ४१ ॥ एवं च वृत्तिकार्श्यं ब्राह्मणेन सोढव्यमित्याह । ब्राह्म

संन्यासं तावत्कुर्यात्कलौ युगे ॥" इति स्मृतेः पञ्चसहस्रवर्षकलिभुक्तेः परं संन्यासाभावः कलावस्तीति ज्ञेयम् । एतच्चाद्यपद्यव्याख्याशतके प्रपञ्चितमत उपरम्यत इति । इत्यर्थ इति–"अनाश्रमी न तिष्ठेद्वै क्षणमात्रमपि द्विजः । पराश्रमं परित्यज्य न च पूर्वाश्रमं विशेत् ॥" इत्यादिपुराणादिति भावः । एतत्तु मद्भक्तिहीनस्यैवास्तीत्याह–अमत्पर इति वेति । "मद्भक्तो वानपेक्षकः । सलिंगानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः" इति वक्ष्यमाणत्वात् ॥ * ॥ अमत्पर इति छेदः । तेन भगवद्भक्तस्य व्युत्क्रमेणाश्रमितयानाश्रमितया वा स्थितौ न कोपि दोष इति भावः ॥ ३८ ॥ लक्षणानि तु रुक्मिण्युपाख्यान उक्तानि । अन्यामसवर्णाम् । तत्रापि असवर्णास्वीकारेपि । इत्यर्थ इति–'तिस्रः' इत्यादिमनुस्मृतेरिति भावः । वर्णानुपूर्व्येण–ब्राह्मणीविवाहोत्तरं ब्राह्मणेन तिस्रः क्षत्रिया वैश्या शूद्रा भार्या विवाह्याः, क्षत्रियेण क्षत्रियाविवाहोत्तरं द्वे वैश्या शूद्रा च, वैश्येन वैश्याविवाहोत्तरमेका शूद्रा, शूद्रेण तु शूद्रैवैका विवाह्या नान्येति स्मृत्यर्थः ॥ * ॥ तिस्रइत्यादिसजातीयास्त्यक्त्वेति बोध्यम् ॥ ३९ ॥ सर्वेषां विप्रक्षत्रविशां त्रयाणाम् । "षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥" इति स्मृतेः । विशुद्धाज्जातिशुद्धात्कर्मशुद्धाच्चेत्यर्थः ॥ * ॥ ० ॥ ४० ॥ तत्रापि त्रिविधवृत्तावपि ॥ * ॥ ० ॥ ४१ ॥ शिलोञ्छवृत्तेः क्लेशरूपत्वात्किमिति सा प्रशस्तेति चेदाह–एवं चेति । क्षुद्रकामाय तुच्छविषयभोगाय नेष्यते न योग्यः । किंयोग्य इति चेदाह–कृच्छ्राय कष्टाय कुशेध्माद्याहरणक्लेशाय । तपसे मनइंद्रियादिनिग्रहाय "मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः" इति स्मृतेः । यद्वा–कृच्छ्रायेति तपोविशेषणम् । चः पादपूरणे । अतीवक्लिष्टतीर्थयात्रोपवासाध्ययनाध्यापनादिरूपाय तपस इत्यर्थः । अनंतसुखाय मोक्षाय ॥ * ॥ कृच्छ्राय जीविकाजनितं कृच्छ्रं भोक्तुमिति **विश्वनाथः** ॥ ४२ ॥

शिलोंछवृत्त्या परितुष्टचित्तो धर्मं महांतं विरजं जुषाणः ॥ मय्यर्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैति शांतिम् ॥ ४३ ॥ समुद्धरंति ये विप्रं सीदंतं मत्परायणम् ॥ तानुद्धरिष्ये न चिरादापद्भ्यो नौरिवार्णवात् ॥ ४४ ॥ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः ॥ आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥ ४५ ॥ एवंविधो नरपतिर्विमानेनार्कवर्चसा ॥ विधूयेहाशुभं कृत्स्नमिंद्रेण सह मोदते ॥ ४६ ॥ सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् ॥ खड्गेन वाऽऽपदाक्रांतो न श्ववृत्त्या कथंचन ॥ ४७ ॥ वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि ॥ चरेद्वा विप्ररूपेण न श्ववृत्त्या कथंचन ॥ ४८ ॥ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियाम् ॥ कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥

णस्येति ॥ ४२ ॥ उञ्छवृत्तिर्नाम विपण्यादिपतितकणोपादानं तां शिलवृत्त्यैकीकृत्य तया तुष्टचित्तस्य मोक्षं फलमाह। शिलोंछेति। महांतं मासतिथ्यादिलक्षणम् ॥ ॥ ४३ ॥ एवमधनस्य महत्फलमुक्त्वा सधनानामप्याह त्रिभिः। समुद्धरंति दारिद्र्यादुत्तारयंति। विप्रमित्युपलक्षणम्। मत्परायणं यं कमपि ॥ ४४ ॥ राज्ञस्त्वावश्यकमेतदित्याह। सर्वा इति ॥ ४५ ॥ ४६ ॥ सर्वेषामापद्वृत्तीराह सीदन्निति त्रिभिः। पण्यैर्विक्रयार्हैर्न तु सुरालवणाद्यैः। तत्राप्यापदाक्रांतश्चेत्खड्गेन क्षत्रियवृत्त्या वा। यद्यपि गौतमः "अनंतरां पापीयसीं वृत्तिमातिष्ठेत्" इति स्मरन्खड्गधारणं पण्यविक्रयाच्छ्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्तिरेव श्रेष्ठेति भगवतो मतम्। न तु श्ववृत्त्या नीचसेवया ॥ ४७ ॥ तत्राप्यापदि मृगयया। विप्ररूपेण वा अध्यापनादिना ॥ ४८ ॥ कारवः प्रतिलोमजविशेषा बुरुडादयस्तेषां वृत्तिं कटादिक्रियाम्। आपदुत्तीर्ण

मद्भक्तस्य गृहत्यागो नावश्यक एवेत्याह—मय्यर्पितेत्यादि। नातिप्रसक्तः गृहकृत्ये पुत्रादौ नातीवप्रेमवानित्यर्थः। शांतिं मुक्तिम्। "मद्वार्तायातयामानां न बंधाय गृहा मताः" इत्याद्युक्तेः ॥ * ॥ ० ॥ ४३ ॥ एवमित्थम्। उत्तारयंति धनं दत्त्वा दारिद्र्यं नाशयन्ति संकल्पजले दारिद्र्यं मज्जयंतीति यावत्। संकल्पजले दारिद्र्यमज्जनमुक्तं केनचिद्विप्रेण कंचिन्नृपं प्रति—"यो गंगामतरत्तथैव यमुनां यो नर्मदां शर्मदां का वार्ता सरसां तु मज्जनविधौ यस्तीर्णवानर्णवम्। सोऽस्माकं नृपतेऽद्भुतं सहचरो दारिद्र्यनामा सखा त्वद्दानाम्बुचलत्प्रवाहलहरीमग्नो न संभाव्यते ॥" इति। तान् विप्रोद्धर्तॄन्। नौः पोतः। 'नौः पोते नावि च स्त्रियाम्' इति धरणिः ॥ * ॥ सधनानां ब्राह्मणेतरेषामिति ज्ञेयं टीकायाम् ॥ * ॥ **विश्वनाथस्तु**—तादृशं विप्रसेवमानानां फलमाह—समुद्धरन्तीति। विप्रमित्युपलक्षणं मत्परायणं मद्भक्तं यं कमपि ॥ ४४ ॥ धीरो विवेकी। आत्मना भक्तिज्ञानाभ्यां संस्कृतचेतसा॥*॥०॥४५॥०॥*॥०॥४६॥पण्यैर्विक्रयार्हैः शुष्ककाष्ठतृणतूलश्वेतवस्त्राद्यैः। न तु सुरालवणाद्यैरित्यत्रोक्तेनादिपदेन पक्वान्नादिग्रहः। तथा चोक्तं पैठीनसिना—"ब्राह्मणस्य लवणं पक्वान्नं मधु क्षीरं दधि घृतमुदकं सर्वगंधास्तिला रक्तं वासो गुडतैलग्राम्यपश्वेकशफकेशाः सर्वे चारण्याः पशवो विद्या गावः शंखश्चोर्णाश्चेति विक्रयणेनैकैकस्मिन्प्राजापत्यं चरेत्"। गोविक्रये विशेषमाह यमः—"गवां विक्रयकारी तु गवां रोमाणि यानि तु। तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत् ॥" इति। सर्वं प्रायश्चित्तमापदि वैश्यवृत्त्या जीवतो ब्राह्मणस्यैवेतरेषां त्वापदि न दोषः। वैश्यवृत्त्या जीवतापि विप्रेण नैतानि विक्रेयाण्यापदि किं पुनरनापदीति भावः। अनंतरां क्षत्रियविहितां पापीयसीं हिंसाबहुलाम्। गोरक्षवाणिज्यरूपैव स्वाम्युक्ता भगवतोऽभिमता। ननु कृषिरपि—"वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा। हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥ कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता। भूमिं भूमिशयांश्चैव हंति काष्ठमयोमुखम् ॥" इति मनूक्तेः ॥*॥ ० ॥ ४७ ॥ वैश्यवृत्त्या कृषिवाणिज्यादिरूपया। तत्राप्यापदि वैश्यवृत्त्यसंभवेऽपि। आदिना याजनग्रहः। 'षडन्यस्याप्रतिग्रहः' इति सप्तमस्कन्धोक्तेः प्रतिग्रहस्तु क्षत्रियेणापद्यपि न कार्य इति भावः ॥ * ॥ ० ॥ ४८ ॥ शूद्रवृत्तिं द्विजसेवारूपामुच्छिष्टभक्षणं विना। 'अनाचरन्नकार्याणि' इति मनूक्तेः। आदिना क्षत्रादयो ग्राह्याः।

वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ॥ देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥ ५० ॥ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ॥ धनेनाऽपीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ॥ ५१ ॥ कुटुंबेषु न सज्जेत न प्रमाद्येत्कुटुंब्यपि ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५२ ॥ पुत्रदाराप्तबंधूनां संगमः पांथसंगमः ॥ अनुदेहं वियंत्येते स्वप्नो निद्रानुगो यथा ॥ ५३ ॥ इत्थं परिमृशन्मुक्तो गृहेष्वातिथिवद्वसन् ॥ न गृहैरनुबध्येत निर्ममो निरहंकृतः ॥ ५४ ॥ कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् ॥ तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत् ॥ ५५ ॥

स्तु नानुकल्पेन वर्तेतेत्याह । कृच्छ्रादिति ॥ ४९ ॥ तदेवं वृत्तिव्यवस्थामुक्त्वा पुनर्गृहस्थस्यावश्यकान्पंचयज्ञानाह । वेदाध्ययनं ब्रह्मयज्ञस्तेन ऋषीन्स्वधाकारेण पितॄन्स्वाहाकारेण देवान्बलिहरणेन भूतानि अन्नाद्यैरन्नोदकादिभिर्मनुष्यानिति ज्ञातव्यम् । यथोदयं विभवानुसारतः । तेष्वीश्वरदृष्टिं विधत्ते । मद्रूपाणीति ॥ ५० ॥ आवश्यकं धर्ममुक्त्वा शक्त्यनुसारं धर्ममाह । यदृच्छया उद्यमं विना । उपार्जितेन वा शुक्लेन स्ववृत्त्या लब्धेन शुद्धेन वा धनेन । भृत्यान्पोष्यान् ॥ ५१ ॥ गृहस्थस्यापि निवृत्तिनिष्ठामेवाह कुटुंबेष्विति त्रिभिः । न प्रमाद्येदीश्वरनिष्ठायां प्रमत्तो न भवेत् । ननु दृष्टादृष्टार्थकर्मासक्तस्य कथमप्रमादो विचारेणेत्याह । विपश्चिदिति ॥ ५२ ॥ तत्रापि दृष्टेष्वासक्तेरधिकत्वात्तेषां नश्वरतां प्रपंचयति । पुत्रादीनामेकत्र संगमः पांथानां प्रपायां संगम इव । तत्र हेतुः । अनुदेहं प्रतिदेहमेते वियंति नश्यंति । निद्रानुवर्ती स्वप्नो निद्रापाये यथेति ॥ ५३ ॥ अतिथिवदुदासीनः ॥ ५४ ॥ अस्याप्याश्रमविकल्पमाह । कर्मभिरिति । गृहाश्रम एव तिष्ठेत् । यदि प्रजावांस्तर्हि प्रव्रजेद्वा ॥ ५५ ॥

कटादीत्यादिना शूर्पादिग्रहः । अनुकल्पेन विपद्विहितवृत्त्या ॥*॥०॥४९॥ तदेवमित्थम् । तेन ब्रह्मयज्ञेन । तेषु देवर्ष्यादिषु ॥ * ॥ ० ॥ ५० ॥ पोष्यान् ते च—"माता पिता गुरुर्भार्या प्रजाहीनः समाश्रितः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥" इति स्मृत्युक्ता ग्राह्याः ॥ * ॥ ० ॥ ५१ ॥ अप्रमादमाक्षिपति—नन्विति । अदृष्टं स्वर्गाद्यपि दृष्टवद्देहादिनाशवत् । "तद्यथेह कर्मचितो लोकः क्षीयते तथामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः ॥ * ॥ ० ॥ ५२ ॥ तत्रापि दृष्टादृष्टयोर्द्वयोर्मध्ये । दृष्टेषु पुत्रादिषु । तेषां दृष्टानाम् । प्रपायां जलशालायाम् । 'प्रपा तु जलशालिका' इत्यमरः । इवेति लुप्तोपमा । तत्र पांथसंगमसादृश्ये । यद्वा—अनुदेहं स्वदेहे नष्टे एते तदपेक्षया नष्टा एवेत्यर्थः ॥ * ॥ ० ॥ ५३ ॥ उदासीनो लाभालाभयोर्हर्षविषादशून्यो निरभिमान इति यावत् । गृहैर्गृहकृत्यैस्तत्रत्यैर्वा नानुबध्येत तेष्वत्यासक्तिं न कुर्यादित्यर्थः ॥ * ॥ ० ॥ ५४ ॥ अस्यापि गृहस्थस्यापि । गृहमेधीयैः पञ्चयज्ञादिभिः । तिष्ठेदित्यस्य गृह इति शेषः प्रजावानि

यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ॥ स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥ ५६ ॥ अहो मे पितरौ वृद्धौ भार्या बालात्मजाऽऽत्मजाः ॥ अनाथा मामृते दीनाः कथं जीवंति दुःखिताः ॥ ५७ ॥ एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् ॥ अतृप्तस्ताननुध्यायन्मृतोंधं विशते तमः ॥ ५८ ॥ इति श्रीमद्भागवत महापुराण एकादशस्कन्धे भगवदुद्धवसंवादे ब्रह्मचर्यगृहस्थाश्रमविभागो नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ॥ वन एव वसेच्छांतस्तृतीयं भागमायुषः ॥ १ ॥ कंदमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत् ॥ वसीत वल्कलं वासस्तृणपर्णाजिनानि च ॥ २ ॥ केशरोमनखश्मश्रुमलानि बिभृयाद्दतः ॥ न धावेदप्सु मज्जेत त्रिकालं स्थंडिलेशयः ॥ ३ ॥ ग्रीष्मे तप्येत पंचाग्नीन्वर्षास्वासारषाड् जले ॥ आकंठमग्नः शिशिर एवंवृत्तस्तपश्चरेत् ॥ ४ ॥

गृहाद्यासंगे दोषमाह यस्त्विति त्रिभिः ॥ ५६ ॥ बंधमेवाभिनयेन दर्शयति अहो इति । बाला आत्मजा यस्याः सा । आत्मजाश्च मां विना अनाथाः संतः कथं जीविष्यंतीति ॥ ५७ ॥ गृहे य आश्रयो वासना तेन आ सर्वतः क्षिप्तं हृदयं यस्य सः । अंधं तमोतितामसीं योनिम् ॥ ५८ ॥ इति श्रीम० एका० श्री० टी० सप्तदशोऽध्यायः ॥ १७ ॥ ॥ अष्टादशेऽवदद्धर्मं वनस्थयतिगोचरम् ॥ अधिकारविशेषेण विशेषं चापि तद्गतम् ॥ १ ॥ क्रमप्राप्तान्वनस्थधर्मानाह । वनमिति । आयुषस्तृतीयं भागं पंचसप्ततिवर्षपर्यंतम् । ततः परं क्षीणेंद्रियस्येषद्विरागेऽपि संन्यासाधिकारः स्यादिति भावः ॥ १ ॥ वसीत परिदधीत ॥ २ ॥ दतो दंतान्न धावेन्न शोधयेत् । त्रिकालमप्सु मज्जेत मुसलवत्स्नायात् । स्थंडिलेशयो भूमिशायी ॥ ३ ॥ तप्येत पंचाग्नीन्सूर्येण सह चतुर्दिक्षमग्नीन्निधायात्मानं तापयेदित्यर्थः । आसारषाट् आसारं धारासंपातं

त्युक्तेः । संततिहीनस्य प्रव्रज्यानधिकार इति ज्ञायते ॥ * ॥ ० ॥ ५५ ॥ 'एकसंबंधिज्ञानमपरसंबंधिस्मारकम्' इति न्यायाल्लोकैषणाप्यनुक्ताऽप्यत्र बोध्या । स्त्रैणस्त्र्यनुरागी । ममाहमिति कृपणधीः कातरचित्तः । अत एव मूढः स बध्यत इति ॥ * ॥ ० ॥ ५६ ॥ अभिनयेन स्फुटतया ॥ * ॥ ० ॥ ५७ ॥ एवमुक्तरीत्या । अतितामसीं श्वशृगालादिलक्षणाम् ॥ * ॥ ० ॥ ५८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥ वनस्थयती गोचरौ विषयौ यस्य तं तथा । तद्गतं वनस्थयतिगोचरधर्मगतम् ( १ ) । तृतीयं भागं पञ्चाशद्वर्षतः परं पंचसप्ततिवर्षपर्यंतम् । इति भाव इति–पञ्चसप्ततिवर्षमितायुष्यतीते स्वभावत एव विषयप्रीत्यभावेन विरक्तप्रायत्वात्संन्यासयोग्यता भवेदित्याशयः । पुत्रेषु भार्यां न्यस्य–वृद्धेयं भवतां माताऽतोऽस्याः सेवा भवद्भिः कार्येत्युक्त्वा तां त्यक्त्वा, यदि सापि विषयविरक्ता भवेत्तर्हि तां सहैव नयेदित्यर्थः ॥ * ॥ ० ॥ १ ॥ वन्यैरपि मेध्यैरेव । कंदमूलयोः किञ्चिदेव भेदः–यस्य फलं मूलमपि भक्ष्यते तत् मूलकादि मूलम्, यस्य मूलमेव भक्ष्यते तत् सूरणादि कंद इत्युच्यते । वल्कलं वृक्षादित्वक् भूर्जपत्रादिरूपम् । तृणपत्रधारणं तद्राशौ प्रवेशः ॥ * ॥ ० ॥ २ ॥ केशा मूर्द्धजाः, रोमाणि शारीरकाणि, श्मश्रु पुंचिह्नम् 'तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । तेषां रोम्णां वृद्धावित्यर्थः । एतद्रूपाणि मलानि ॥ * ॥ ० ॥ ३ ॥ इत्यर्थ इति–न तु पञ्चाग्नीन्स्थापयित्वा तपेदिति भावः । "धारासंपातसहनं वर्षर्तौ नियतं तु यत् । अभ्रावकाशं नामैतद्व्रतं वनचरश्चरेत् ॥" इति ।

अग्निपक्वं समश्नीयात्कालपक्वमथापि वा ॥ उलूखलाश्मकुट्टो वा दंतोलूखल एव वा ॥ ५ ॥ स्वयं संचिनुयात्सर्वमात्मनो वृत्तिकारणम् ॥ देशकालबलाभिज्ञो नाददीताऽन्यदाऽऽहृतम् ॥ ६ ॥ वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान् ॥ न तु श्रौतेन पशुना मां यजेत वनाश्रमी ॥ ७ ॥ अग्निहोत्रं च दर्शश्च पूर्णमासश्च पूर्ववत् ॥ चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ॥ ८ ॥ एवं चीर्णेन तपसा मुनिर्धमनिसंततः ॥ मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ ९ ॥ यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ॥ कामायाल्पीयसे युंज्याद्बालिशः कोऽपरस्ततः ॥ १० ॥ यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः ॥ आत्मन्यग्नीन्समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥ ११ ॥

सहत इति तथा अभ्रावकाशं नाम व्रतं चरेत् । जले आकंठमग्नः उदकवासं नाम व्रतं चरेत् ॥ ४ ॥ उलूखलेन वाऽश्मना वा कुट्यति कंडयतीति तथा । दंता एवोलूखलं यस्य स तथा ॥ ५ ॥ संचिनुयादाहरेत् । अन्यदा कालांतरे आहृतं कालांतरे नाददीत । "लब्धे नवेनवेऽन्नाद्ये पुराणं तु परित्यजेत्" इति नारदोक्तेः ॥ ६ ॥ कालचोदितानाग्रयणादीन् ॥ ७ ॥ किंचाग्निहोत्रमिति । मुनेश्च । नैगमैर्वेदवादिभिः ॥ ८ ॥ अस्य निष्कामस्य फलमाह । एवमिति । धमनीभिः शिराभिः संतता व्याप्तः । यावज्जीवं कृतेन तपसा शुष्कमांस इत्यर्थः । ऋषिलोकान्महर्लोकादिक्रमेण । अयं भावः । अंतःकरणशुद्धिभक्तिद्वाराऽत्रैव तावन्मुच्येत । प्रतिबंधकबाहुल्ये त्वनेन क्रमेण मुच्यत इति ॥ ९ ॥ तं सकामं निंदति । यस्त्विति । निःश्रेयसं मोक्षफलम् । अल्पीयसे आविरिंच्यादत्यल्प एव तस्मै ॥ १० ॥ एवं यावज्जीवं वर्तमानस्य मोक्षः । तृतीयभागावसाने तु मंदविरागेऽपि संन्यासाधिकारः । यदि तु ततोर्वागेव स्वधर्माशक्तो भवेत्तदापि सम्यगविरक्तो विरक्तो वा । तत्राविरक्तस्य कृत्यमाह । यदेति । जातो

" आकंठमग्नं शिशिर उदके वसनं हि यत् । उदवासव्रतं नाम वनस्थानामिदं सदा ॥ " इति । एवं पंचाग्नितपआदिना वृत्तं वर्तनं यस्य स तथा ॥ * ॥ ० ॥ ४ ॥ कालेन पक्वं कदलीफलादि । उलूखलादिभावेऽश्मकुट्टः सति दंतसामर्थ्ये दन्तोलूखलः स्यात् ॥ * ॥ ० ॥ ५ ॥ अन्येनाहृतमानीतमन्यदाहृतमिति वा । देशकालेत्याद्युक्ते रोगाद्यवस्थायामन्यानीतमपि स्वीकुर्यादित्यर्थः ॥ * ॥ ० ॥ ६ ॥ आग्रयणादीन्—इहादिना पंचयज्ञानुष्ठानाष्टकापार्वणश्रावणीचैत्र्याश्वयुजीनां ग्रहः । पशुना पशुयागेन ॥ * ॥ ० ॥ ७ ॥ अन्यदाह—किंचेति । मुनेः वैखानसस्य ॥ * ॥ ० ॥ ८ ॥ अस्य वानप्रस्थस्य । " धमनी तु शिरा हट्टविलासिन्योश्च योषिति " इत्यमरः । इत्यर्थ इति—सर्वभोगत्यागादतीवकृश इति भावः । अत्राशयमाह—अयंभाव इति ॥ * ॥ **दीपिका**—अस्य वानप्रस्थस्य निष्कामस्य भगवदाराधनमात्रकामस्य । ननु क्रमोपादाने किं बीजमित्यपेक्षायामाह—अयं भाव इति । भगवत्तोषकेण तपसा यद्यंतःकरणशुद्धिभक्ती स्यातां तदा तु तद्द्वारात्रैव वानप्रस्थत्व एवमुच्यते प्रतिबंधकबाहुल्ये त्वंतःकरणशुद्धिभक्त्यभावो हेतुः ॥ ९ ॥ तं वानप्रस्थम् । " आब्रह्मभुनाल्लोकाः पुनरावर्तिनोर्जुन " इत्युक्तेरत्यल्पत्वमेव । एतत्पञ्चाग्न्यादिरूपम् । चीर्णं संपादितम् । ततः सकामतापसात् ॥ * ॥ ० ॥ १० ॥ ततस्तृतीयभागतोऽर्वागेव प्रागेव । आत्मनि स्वस्मिन् । अग्नीन् गार्हपत्यादीन् । वैखानसशास्त्रविधानेन अग्निं समाविशेत् । मानसाग्निहोत्रं कुर्यात् स्वयं स्वशरीरदाहे त्वात्मघातित्वप्रतीतेः । विहितत्वाद्यथाश्रुत एव वार्थः ॥ * ॥ कामानां प्रतिबंधं विना तपसा यावज्जीवं वर्त

यदा कर्मविपाकेषु लोकेषु निरयात्मसु ॥ विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत्ततः ॥ १२ ॥ इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥ १३ ॥ विप्रस्य वै संन्यसतो देवा दारादिरूपिणः ॥ विघ्नान्कुर्वंत्ययं ह्यस्मानाक्रम्य समियात्परम् ॥ १४ ॥ बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् ॥ त्यक्तं न दंडपात्राभ्यामन्यत्किंचिदनापदि ॥ १५ ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ॥ सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ १६ ॥

वेपथुः कंपो देहे यस्य सः ॥ ११ ॥ विरक्तं प्रत्याह । यदेति ॥ १२ ॥ तत्रादौ कृत्यमाह । इष्ट्वेति । यथोपदेशं श्राद्धाष्टकपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा स्वे प्राणे आत्मनि ॥ १३ ॥ संन्यासे विघ्ना भवंति तानविगणय्य संन्यसेदेवेत्याशयेनाह । विप्रस्येति । केनाभिप्रायेण कुर्वंति तमाह । अयमिति । परं परब्रह्म ॥ १४ ॥ एवं प्रव्रजितस्य धर्मानाह । बिभृयाच्चेदिति । परं कौपीनादन्यद्वासो यदि धारयितुमिच्छति तर्हि कौपीनमाच्छाद्यते यावता कटिवेष्टनेन तावन्मात्रं धारयेदित्यर्थः । त्यक्तं प्रैषोच्चारात्पूर्वमेव । अतोऽन्यत्किंचिदपि न बिभृयात् । दंडपात्राभ्यामित्यावश्यकजलपात्रादेरुपलक्षणम् ॥ १५ ॥ मनःपूतं मनसा सम्यग्विचार्य यच्छुद्धं तदाचरेत् ॥ १६ ॥

मानस्य मोक्षः । ततस्तृतीयभागादर्वाक्पूर्वम् । तत्र विरक्ताविरक्तयोर्मध्ये । अग्नीनग्निसाध्यकर्माणि ॥ ११ ॥ कर्मणां यज्ञादीनां विपाकेषु फलभूतेषु स्वर्गादिषु । निरयात्मसु भोगांते दुःखहेतुत्वान्नरकतुल्येषु । " अमूनि यानि स्थानानि देवानां परमात्मनाम् । नानासंस्थानवर्णानि नानारूपफलानि च ॥ दिव्यानि कामचारीणि विमानानि सभास्तथा । आक्रीडा विविधा राजन् पद्मिन्यश्चैव कांचनाः ॥ चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः । मरुतां विश्वेदेवानां साध्यानामश्विनोरपि ॥ रुद्रादित्यवसूनाञ्च तथान्येषां दिवौकसाम् । एते वै निरयास्तात स्थानस्य परमात्मनः ॥ " इति शांतिपर्वांतर्गतमोक्षधर्मेषु जापकाख्यानोक्तेः परमात्मनस्स्थानस्यापेक्षयैतेषां निरयत्वमेवोक्तं श्रीभीष्मेण युधिष्ठिरं प्रति, निर्गतोऽयः शुभावहविधिरत्यंतसुखलक्षणो येभ्यस्ते निरया इत्यन्वर्थसंज्ञाप्रतिपत्तेः । न्यस्ताग्निस्त्यक्ताग्निसाध्यकर्मा सन् । ततः तदनु ॥ * ॥ ० ॥ १२ ॥ तत्र संन्यसने । आवेश्य प्रव्रज्याशास्त्रोक्तक्रमेण संधार्य । निरपेक्ष ऐहिकामुष्मिकाभिलाषशून्यः ॥ * ॥ श्राद्धानामष्टकं श्राद्धाष्टकं तत्तु संन्यासपद्धत्यादिभ्योऽवसेयम् । केचित्तु मार्गशीर्षादिमासचतुष्टयकृष्णाष्टमीसंभवं श्राद्धं श्राद्धाष्टकं तत्पूर्वकं यथा स्यात्तथेति दीपिका ॥ १३ ॥ तान् विघ्नान् । विप्रस्येति नोपलक्षणम्, किन्तु विप्रेतरस्य प्रव्रज्यानधिकारसूचनमन्यथा द्विजस्य नरस्य वेत्यन्यतरं ब्रूयादिति भावः । तम् अभिप्रायम् । अयं संन्यसिता । आक्रम्योल्लंघ्य ॥ * ॥ परं ब्रह्मलोकं ब्रह्म वा ॥ १४ ॥ एवम् इत्थम् । प्रव्रजितस्य कृतसंन्यासस्य । इत्यर्थ इति—ततोऽधिकधारणे पातित्यं स्यादिति भावः । प्रैष इति मंत्रनाम । ते च त्रयस्तेषामनुक्रमेणोच्चारणं गृहस्थैर्न कार्यं किञ्चिदंतरोच्चारणे तु न दोषः । प्रैषानाह—" ॐ भूः संन्यस्तं मया । ॐ भुवः संन्यस्तं मया । ॐ स्वः संन्यस्तं मया स्वाहेति प्रथमप्रैषः । ॐ पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थितोऽहं स्वाहेति द्वितीयप्रैषः । ओमभयं सर्वभूतेभ्यो मत्तः स्वाहेति तृतीयः प्रैषः । अतः त्यक्तादन्यत् । आदिना जलशोधनवस्त्रादिग्रहः ॥ * ॥ ० ॥ १५ ॥ दृष्टिपूतं सूक्ष्मजीवादिराहित्येन

मौनानीहानिलायामा दंडा वाग्देहचेतसाम् ॥ न ह्येते यस्य संत्यंग वेणुभिर्न भवेद्यतिः ॥ १७ ॥ भिक्षां चतुर्षु वर्णेषु विगर्ह्यान्विवर्जयंश्चरेत् ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥ १८ ॥ बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ॥ विभज्य पावितं शेषं भुंजीताऽशेषमाहृतम् ॥ १९ ॥ एकश्चरेन्महीमेतां निःसंगः संयतेंद्रियः ॥ आत्मक्रीड आत्मरत आत्मवान्समदर्शनः ॥ २० ॥

मौनं वाचो दंडः । अनीहा काम्यकर्मत्यागो देहस्य । प्राणायामश्चेतसः । एते अंतर्धृतास्त्रयो दंडा यस्य न संति । अंग हे उद्धव । अंगे धृतैर्वेणुभिर्न स यतिरिति वा ॥ १७ ॥ चतुर्ष्विति । ब्राह्मणेष्वेव वृत्तिभेदेन चतुर्विधेषु । पूर्वपूर्वासंभवे वा । विगर्ह्यानभिशस्तपतितान् । असंक्लृप्तान् अत्रायं लाभो भविष्यतीति पूर्वमनुद्दिष्टान् ॥ १८ ॥ बहिर्ग्रामात् । पावितं प्रोक्षणादिभिः शोधितम् । विभज्य विष्णुब्रह्मार्कभूतेभ्यः । अशेषमित्यधिकाहरणं निरस्तम् । याचितमिति पाठे माधुकरेण याचितमन्नं चेत्तर्हि विभज्य भुंजीत । न त्वयाचितादिभैक्ष्यचतुष्टयमित्यर्थः । "माधूकरे तु नैवेद्यं भैक्ष्ये नान्येषु विद्यते ॥ नैवेद्यकं क्षिपेदप्सु त्रितयं भौतिकं बहिः ॥ " इति स्मृतेः । यद्वा तदानीं केनापि याचितं चेत्तन्मध्ये तस्मै किंचिद्विभज्य दत्त्वेत्यर्थः ॥१९॥ किंच एकश्चरेदिति । आत्मन्येव क्रीडा कौतुकं यस्य

शुद्धम् ॥ * ॥ ० ॥ १६ ॥ वेणुधारणेन यतित्वे वेणुविक्रेत्रादीनामपि तत्स्यादत आह–अंगे शरीरे । उक्तविधिना धृते गृहीते । बहुत्वेन मौनादिहीनस्य वेणुदंडभारधारणेपि यतित्वं न स्यादेकदंडस्य तु का कथेति सूचितम् ॥ * ॥ ० ॥ १७ ॥ वृत्तिभेदेन चातुर्विध्यमाह–" वेदशास्त्रार्थतत्त्वज्ञः संतुष्टोऽध्यापको वशी । विद्यावृत्तिर्जपपरो दयालुर्निरहंकृतिः ॥ कुर्वाणोहरहः श्राद्धं ब्राह्मणो ब्राह्मणः स्मृतः ( १ ) पशुवाहनतत्त्वज्ञो रणे चाप्यपलायवान् । आरंभे नीतिमाञ्छूरः स विप्रः क्षत्रियः स्मृतः ( २ ) वैश्यकर्मण्यभिरतः पशुपालनतत्परः । वाणिज्यकृषिकर्ता[2] च स वैश्यो विप्र उच्यते ( ३ ) स्नेहलाक्षातिलान्नीलीं क्षीरं क्षारं घृतं मधु । महीं विक्रयते चैव स विप्रः शूद्र उच्यते (४) " इति । सर्वथा ग्रामे विप्राभावे किं कार्यमित्याह–पूर्वपूर्वेति । "सता वा ह्यसता वापि ब्रह्महत्यादिना तु यः । अभियुक्तो हि लोकेषु सोभिशस्तः प्रकीर्तितः॥कर्मणा योनितश्चैव देहदोषैश्च कुत्सिताः । पतितांस्तान्विजानीयान्महापातकिनस्तथा ॥ " इति यमोक्तेः । बहुवचनेनायाज्ययाजनादिग्रहः " शूद्रान्यः पतितांश्चापि याजयेदर्थकारणात् । सोऽयाज्ययाजको विप्रस्त्यजेत्तं हव्यकव्ययोः ॥ " इति देवलोक्तेः । अत्र सप्तपदं मध्य एवोदरपूर्तिक्षमान्नाप्तौ न तु सप्तावश्यकत्वं किंत्वधिकं न लिप्सेतालाभान्नाप्तावपि तावतैव तुष्येदित्यर्थपरम् ॥ * ॥ वृत्तिभेदेन प्रतिग्रहाध्यापनयाजनशिलोंछरूपेण चतुर्विधेष्विति संदर्भविश्वनाथौ ॥ इह वृत्तावेव वर्णत्वमारोपितम् ॥ १८ ॥ इत्यर्थ इति–मधुकरवदानीतान्न एव नैवेद्यादि न त्वसंक्लृप्तादावपीति भावः । त्रितयं ब्रह्मविष्ण्वर्कत्रयसंबंधिजले । भौतिकं भूतेभ्यः पिपीलिकादिभ्यः बहिर्जलात् क्षिपेदित्यर्थः । " माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् । तात्कालिकोपपन्नं च भैक्ष्यं पंचविधं स्मृतम् ॥ " इति स्मृतेः । माधूकरं प्रसिद्धम् । असंक्लृप्तं पूर्वमनुद्दिष्टम् । प्राक्प्रणीतं केनचिदुक्तं मद्य मद्गेहे भिक्षा कार्येति संकेतेनोक्तम् । अयाचितं प्रसिद्धम् । भिक्षार्थमुद्यताय तदैव प्राप्तं तात्कालिकम् । याचितपदस्य माधुकरयाचिते लक्षणायां गौरवं मत्वाह–यद्वेति । इत्यर्थ इति–यदि भिक्षितान्नमल्पमपि तदापि विभजनीयमेवेति भावः ॥ * ॥ ० ॥ १९ ॥ अन्यदपि यतिमधिकृत्याह–किंचेति ॥ * ॥ आत्मनि परमात्मनि अनुभवगोचरीकृते रतस्तुष्टः तेनैव क्रीडायुक्तः ॥ २० ॥

---

१ कुसीदग्रहणे । २ समर्घं क्रीत्वा महर्घविक्रयो वाणिज्यम् ।

विविक्तक्षेमशरणो मद्भावविमलाशयः ॥ आत्मानं चिंतयेदेकमभेदेन मया मुनिः ॥ २१ ॥ अन्वीक्षेतात्मनो बंधं मोक्षं च ज्ञाननिष्ठया ॥ बंध इंद्रिय
विक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ॥ विरक्तः क्षुल्लकामेभ्यो लब्ध्वात्मनि सुखं महत् ॥ २३ ॥
पुरग्रामव्रजान्सार्थान्भिक्षार्थं प्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥ २४ ॥ वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ॥ संसि
ध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलांधसा ॥ २५ ॥ नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति ॥ असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥ २६ ॥
यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ॥ सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् ॥ २७ ॥

सः । आत्मन्येव च रतस्तुष्टः । आत्मवान् धीरः॥ २० ॥ विविक्तं विजनं क्षेमं निर्भयं शरणं स्थानं यस्य सः । मयि भावेन विमल आशयो यस्य सः ॥ २१ ॥ बंधं मोक्षं च ।
केन बंधः केन वा मोक्ष इति तावाह । बंध इति ॥ २२ ॥ २३ ॥ पुराणि हट्टादिमंति । ग्रामास्तद्रहिताः । व्रजा गोष्ठानि तान् । सार्थान्
यात्रिकजनसमूहान् ॥ २४ ॥ यतः शिलवृत्त्या प्राप्तेन तदीयेनांधसाऽन्नेन शुद्धसत्त्वः सन्निवृत्तमोहः संसिध्यति मुच्यते ॥ २५ ॥ ननु मिष्टान्नं विहाय कथं
शिलान्ने प्रवृत्तिः स्यादत आह । नैतदिति । एतत् दृश्यमानं मिष्टान्नादि वस्तुतया न पश्येत । यतो विनश्यति । अत इहामुत्र च लोके असक्तचित्तः संश्चिकीर्षितात्तदर्थं
कृत्याद्विरमेत् ॥ २६ ॥ ननु तथापि यावद्विनाशं सुखहेतुत्वात्तच्चिंतावतः कुतो विरागः स्यात्तत्राह । यदेतदिति । एतज्जगन्ममतास्पदं मनोवाक्प्राणैः संहतं सहितमहं

भावेन भक्त्या ॥ * ॥ अभदेने ' तत्त्वमसि ' इत्युक्तचिदंशैक्येन । यद्वा—आद्वासुदेवाद्भक्तिभावेन भेदेन एकं केवलमात्मानं चिंतयेत् ॥ २१ ॥ इन्द्रियाणां विषयेषु विक्षेपः प्रसरणम् । एषाम् इन्द्रियाणां
विषयेभ्य आहृत्य मयि स्थापनं संयमो मोक्षः मोक्षहेतुः “ देवानां गुणलिंगानामानुश्राविककर्मणाम् । सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ”
इति कपिलोक्तेः ॥ * ॥ अन्वीक्षेत पुनःपुनर्विचारयेत ॥ २२ ॥ यत इन्द्रियविक्षेपो बंधहेतुस्तस्माद्धेतोः । समनसामिन्द्रियाणां वर्गं समूहम् । मद्भावेन मद्भक्त्या । क्षुल्लकामेभ्यस्तुच्छविषयेभ्यो
विरक्तः सन् । आत्मनि चेतसि । महत्सुखं भक्तिसुखम् । “या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्” इत्याद्युक्तेः ॥ * ॥ ० ॥ २३ ॥ पुण्यदेशाः कुरुक्षेत्रादयः, पुण्यसरितो गंगाद्याः, पुण्य
शैलाः श्रीगोवर्धनाद्याः, पुण्यवनानि वृंदावनादीनि, पुण्याश्रमाः वासिष्ठाद्याश्रमाः, तैर्युक्तां भूमिं चरेत् ॥ * ॥ ० ॥ २४ ॥ यतो हेतोः । पदं स्थानम् । असंमोहो मिथ्याज्ञानरहितः । मुच्यतेऽपरोक्षज्ञानवान्भवति
॥ * ॥ तदीयेन व्रतस्थसंबंध्यन्नेनः॥ २५ ॥ अत्राक्षिपति—नन्विति । यतो हेतोर्विनश्यति तुल्यमलरूपेण मिष्टममिष्टं च परिणमते, भक्षणकालेऽपि क्षणिकमेव मिष्टामिष्टसुखादि क्षणोत्तरं तदनुभवसुखस्यापि नाशा
दित्यर्थः । यतः सर्वं विनाशि अतो हेतोः । तदर्थकृत्यादैहिकामुष्मिककार्यात् ॥ * ॥ एतत्त्वाद्वन्नादि । वस्तुतया न पश्येद्यतो विनश्यति उदरगतं सर्वं मलरूपेण परिणतं सन्नश्यत्येव । अत ऐहिकामुष्मिकलोकेऽसक्त
चित्तः संश्चिकीर्षितात्तदर्थं कृत्याद्विरमेत् ॥ २६ ॥ पुनरांकते—नन्विति । यद्यपि सर्वं विनाशि तथापीति । तच्चिंतावतः विषयस्मरणशीलस्य । तत् विषयसुखम् ॥ * ॥ माया मायागुणकार्यं तर्केण कार्याणां करणात्मकत्वा

ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ॥ सलिंगानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥ २८ ॥ बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यां नैगमश्चरेत् ॥ २९ ॥ वेदवादरतो न स्यान्न पाखंडी न हैतुकः ॥ शुष्कवादविवादे न कंचित्पक्षं समाश्रयेत् ॥ ३० ॥

कारास्पदं शरीरं च सर्वं तज्जन्यं सुखं चात्मनि मायामात्रमिति तर्केण स्वमादिदृष्टांतेन त्यक्त्वा स्वस्थ आत्मनिष्ठः संस्तन्न पुनःपुनः स्मरेन्न चिंतयेत् ॥ २७ ॥ एवं बहूदकादिधर्मानुक्त्वा परमहंसधर्मानाह ज्ञाननिष्ठ इति सार्धैर्दशभिः । बहिर्विरक्तो मुमुक्षुः सन् ज्ञाननिष्ठो वा मोक्षेऽप्यनपेक्षो मद्भक्तो वा सलिंगांस्त्रिदंडादिसहितानाश्रमां स्तद्धर्मास्त्यक्त्वा तदासक्तिं त्यक्त्वा यथोचितं धर्मं चरेदित्यर्थः । न पुनरत्यंतत्याग एव विवक्षितः पुनर्धर्मविधानात् । अक्रियत्वस्योत्तराध्याये वक्ष्यमाणत्वाच्च । तर्हि पूर्व स्मात्को विशेषस्तमाह । अविधिगोचरो विधिकिंकरो न स्यादिति । एतदेव स्फुटीकरिष्यति । "शौचमाचमनं स्नानं न तु चोदनया चरेत्" इत्यादिना ॥ २८ ॥ कथं चरेत्तदाह । बुधो विवेकवानपि बालकवन्मानावमानविवेकशून्यः । कुशलो निपुणोऽपि जडवत्फलानुसंधानाभावेन । विद्वान् पंडितोऽप्युन्मत्तवल्लोकरंजनाभावेन । नैगमो वेदार्थनिष्ठोऽपि गोचर्यामनियताचारमिव ॥ २९ ॥ वेदवादरतः कर्मकांडव्याख्यानादिनिष्ठः । पाखंडी श्रुतिस्मृतिविरुद्धधर्मानुष्ठानवान् । हैतुकः केवलतर्कनिष्ठः ।

त्परमात्मैक्यमेवैतस्येति न्यायेन इदंकारास्पदं न स्मरेत् ॥२७॥ बहूदकादयस्तृतीयस्कन्धे उक्ता अपि पुनः सौगम्यायाह—"चतुर्विधो भिक्षुकः स्यात्कुटीचकबहूदकौ । हंसः परमहंसश्च योयः पश्चात्स उत्तमः ॥" इति । तत्राद्ययो र्द्वयोः शिखासूत्रधारणं पुत्रदत्तान्नभोजनं भवति परं तु सर्वव्यासंगान्विहायाध्यात्मविद्याभ्यासः । हंसस्तु पुत्रादीनां त्यागं कृत्वा वनादौ वसेत् शिखासूत्रे तस्य वैकल्पिके । परमहंसो मुण्डः सूत्ररहितश्च । सर्वेषां ब्रह्मविद्या भ्यासस्तुल्य एवेति । परमहंसस्यैक एव दण्डस्त्रिदण्डादिकं हंसादीनामिति संक्षेपः । अथ प्रकृतमनुसरामः । बहिर्विरक्तो बाह्यविषयेभ्य उपरतः । इत्यर्थ इति—यथा शास्त्रे प्रणवजपशमदमादिकं विहितं तदतिक्रम्य न वर्तेतेति भावः । अत्र हेतुद्वयमाह—पुनरित्यादिना । पुनराक्षिपति—तर्हीति । पूर्वस्माद्बहूदकादेः । तं विशेषम् । विधिकिंकरत्वं चातीवहठेन तदुक्तकर्तृत्वं तादृशो न भवेत्किंतु यथादेशकालं कुर्यादित्यर्थः । एतदेव विधि किंकराभावत्वमेव ॥ * ॥ परिपक्वज्ञानिनो निष्कामभक्तस्य वर्णाश्रमनियमाभावमाह—ज्ञाननिष्ठः परिपक्वज्ञानवान् । अनपेक्षकः प्रतिष्ठापर्यंतापेक्षारहितः । अत्र सर्वथा नैरपेक्ष्यमजातप्रेम्णो भक्तस्य न संभवेदत उत्पन्नप्रे मैव भक्तः सलिंगानाश्रमांस्त्यजेत्, अनुत्पन्नप्रेमा तु निर्लिंगाश्रमधर्मांस्त्यजेदित्यर्थो लभ्यते । स्वधर्मत्यागस्तु 'तावत्कर्माणि कुर्वीत' इति वाक्याद्भक्तानामारंभत एवावगम्यते, तयोः शुद्धान्तःकरणत्वादेव पापे प्रवृत्त्यभावाद् दु राचारत्वं नाशंक्यमतो नाविधिगोचरः ॥ २८ ॥ तदाचरणं पृच्छति—कथमिति । इवपदेन न तु सर्वथाचारपरित्यागी भवेदित्युक्तम् ॥ * ॥ लोकप्रतिष्ठोत्थविक्षेपभयात्क्वापि स्वं न प्रकाशयेदित्याह—बुध इति ॥ २९ ॥ निष्प्रयोजनगोष्ठ्याम् "काकस्य कति दंताश्च कति रोमाणि गर्दभे" इत्यादिनिष्फलवादकर्तृसमाजे । पाखण्डी बौद्धादिमताश्रयी ॥ * ॥ पाखण्डी न स्यादिति—पूर्वपक्षज्ञानार्थमपि बौद्धादिशास्त्रं नाभ्यसेदित्यर्थः । शुष्क

नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित् ॥ ३१ ॥ एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ॥ यथेंदुरुदपात्रेषु भूतान्येकात्मकानि च ॥ ३२ ॥ अलब्ध्वा न विषीदेत कालेकालेऽशनं क्वचित् ॥ लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतंत्रितम् ॥३३॥ आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ॥ तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥ ३४ ॥ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ तथा वासस्तथा शय्यां प्राप्तंप्राप्तं भजेन्मुनिः ॥ ३५ ॥

शुष्कवादे निष्प्रयोजनगोष्ठ्यां यो विवादस्तस्मिन् ॥ ३० ॥ अतिवादान् दुरुक्तानि ॥ ३१ ॥ आत्मदृष्ट्या तावद्वैरकारणं नास्तीत्युक्तमेक एवेति देहदृष्ट्यापि नास्तीत्याह । भूतानि च देहा अपि कारणरूपेणैकात्मकानि ॥ ३२ ॥ दैवतंत्रितं दैवाधीनं यतः ॥ ३३ ॥ अलं तर्हि भिक्षाप्रयत्नेनापि तत्राह । आहारमात्रार्थं समीहेतैव । यतः तस्य प्राणधारणं युक्तं सम्यगुपपन्नम् । कथम् । तेन प्राणधारणेन तत्त्वं विचार्यते । किं तेनापि तदाह । तद्विज्ञायेति ॥ ३४ ॥ तर्हि किं मिष्टान्नादिकमग्राह्यमेव के

वादो विवर्तादिलक्षणः । तत्र विवादे सति कश्चित्पक्षं विष्णुभक्तिकारकेतरं नाश्रयेत् ॥ ३० ॥ उद्विजेत भीतो भवेत् । उद्वेजयेत्किंचिदुक्त्वा भीतं न कुर्यादित्यर्थः । पशुवत् यथा पशवो देहताडनादिनैव वैरं कुर्वन्ति तादृशो न भवेदित्यर्थः ॥ * ॥ अतिवादान् 'त्वं मूर्खोसि मूर्खसभायां निजपाण्डित्यप्रकाशकत्वात्' इत्येवंरूपाणि दुर्वचनानि । तुशब्दाज्जनं संसारादुद्वेजयेदेव तन्निःसारत्वज्ञापनेन 'त्रस्तोऽस्म्यहं कृपणवत्सलदुःसहोग्रसंसारचक्रकदनात्' इत्युक्तन्यायेन । भक्तिहीनाज्जनात्स्वयमपि तत उद्विजेत्तत्संसर्गस्य संसारचक्रपातकत्वात् ॥३१॥ भूतेषु ब्रह्मादिस्थावरांतेषु । "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतेः । कारणरूपेण महाभूतादिरूपेण ॥ * ॥ आत्मा परमात्मा । भूतेष्वन्येषु । आत्मनि स्वस्मिन् जीवे । यथेन्दुरित्येकस्यैव बैभवमात्रे दृष्टान्तः न तु प्रतिबिम्बत्वे । "अंबुवदग्रहणात्तु न तथात्वम् " " वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामञ्जस्यादेवम्" इति पूर्वोत्तरन्यायाभ्यां तथा निर्णीतत्वात् ॥ * ॥ **विश्वनाथस्तु**—यथोदपात्रेषु प्रतिबिम्बत्वेन प्रतीतेषु स्वकिरणेषु इन्दुः स्वकार्येषु कारणस्य सत्त्वादित्वादृष्ट्या वैरकारणाभावः, देहदृष्ट्या तु 'भूतान्येकात्मकानि' इति क्व वैरं कार्यमिति भावः ॥ ३२ ॥ अशनं भोजनम् । उभयं लाभालाभौ । यतो देवाधीनमतो हर्षविषादौ न कार्यावित्यर्थः ॥ * ॥ अत्र जले चन्द्रसूर्ययोः किरणा एव प्रतिबिम्बत्वेन प्रतीयन्ते, न तु वस्तुतः प्रतिबिम्बास्तेषां तापशमकत्वतापकत्वयोः प्रत्यक्षत एवानुभूतत्वेनावस्तुत्वासंभवात् । यतो हेतोरुभयं लाभालाभम् ॥ ३३ ॥ अत्राक्षिपति—अलमिति । यतो हेतोः । तस्य यतेः । योग्यतां पृच्छति—कथमिति । तेनापि तत्त्वविचारेणापि । किं किंप्रयोजनम् । तत् तत्प्रयोजनम् । तत् तत्त्वम् । यत्तु—'नाहारं चिन्तयेत्प्राज्ञः' इति निषेधश्रवणं तदाहारगुणचिन्तनपरमिति तत्त्वविचारहेतुप्राणधारणार्थान्नमात्रप्रयत्ने न दोष इति भावः ॥ * ॥ समीहेतैव यत्नं कुर्यादेव । सत्यधैर्ये कुतोप्यतस्तस्य प्राणानां मनआदींद्रियाणां धारणं स्थिरीकरणं युक्तमन्यथात्वपरिपक्वत्वाद्विक्षेपः स्यादेवेत्यर्थः । तद्धारणे किं स्यात्तत्राह—तत्त्वमिति । तेनापि तत्त्वविचारेणापि । किं तत्राह—तद्विज्ञाय संसारान्मुक्तो भवतीत्यर्थः ॥ ३४ ॥ पुनरत्राशङ्कते—तर्हीति । केनैवमुक्तं मिष्टान्नादिग्रहणाभावः केनोक्त इत्यर्थः । यदृच्छया दैवेच्छया । श्रेष्ठं षड्रसवत् । अपरं रसहीनम् । यथान्नसेवनं तथैव वस्त्राद्यपीति ॥ * ॥ यत्नं

शौचमाचमनं स्नानं न तु चोदनया चरेत् ॥ अन्यांश्च नियमाञ्ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३६ ॥ न हि तस्य विकल्पाख्या या च मद्वीक्षया हता ॥ आदेहांतात्क्वचित्ख्यातिस्ततः संपद्यते मया ॥ ३७ ॥ दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ॥ अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३८ ॥ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ॥ यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ३९ ॥

नैवमुक्तमित्याह । यदृच्छयेति ॥ ३५ ॥ यथाहमीश्वरो लीलया चरामि तथा ज्ञानी ज्ञाननिष्ठोऽनासक्तः कुर्यान्न तु विधिकिंकरत्वेन । तस्य ज्ञाननिष्ठाविरोधादित्यर्थः ॥ ३६ ॥ कुतो विधिकिंकरत्वाभावस्तस्य तत्राह । न हि तस्य विकल्पाख्या भेदप्रतीतिः । नन्वस्ति सा । सत्यम् । या चासीत्साऽपि मद्वीक्षया ज्ञानेन हता । ननु न हता पुनर्दृश्यमानत्वात्तत्राह । आदेहांतात्क्वचित्कदाचिद्बाधितैव ख्यातिर्भवति ॥ ३७ ॥ तदेवं विरक्तस्यापरोक्षज्ञानवतः संन्यासं तद्धर्मांश्चोक्त्वा केवलं वैराग्यवंतं विविदिषुं प्रत्याह । दुःखोदर्केष्विति । न जिज्ञासितो मद्धर्मो मत्प्राप्तिसाधनं येन सः ॥ ३८ ॥ मामेव मद्दृष्ट्यैव गुरुं परिचरेत् । ततः परमेकश्चरेदित्यादिधर्मैर्वर्तेतेति भावः ॥ ३९ ॥

विनैवोपस्थितं श्रेष्ठं स्वादु अपरं विरसं वा । मुनिरिति—तत्रतत्र वचनेनाभिनंदनं प्रत्याख्यानं वा न कुर्यादिति भावः ॥ ३५ ॥ तस्य विधिकिंकरत्वस्य । इत्यर्थ इति—" कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् " इति श्रीगीतोक्तेरासक्त्या कर्माचरणेन ज्ञाननिष्ठातो भ्रश्यतीति भावः ॥ * ॥ यथाहं लीलया स्वेच्छया न तु कर्मवशत्वेन चरामीति स्वशक्तिलेशप्राप्तिस्तस्य दर्शिता । तत्र हेतुः—ज्ञानी मत्स्फूर्तिमान् ॥ ३६ ॥ विधिकिंकरत्वाभावत्वे हेतुं पृच्छति—कुत इति । तस्य ज्ञानिनः । भेदप्रतीत्यभावमाक्षिपति—नन्विति । सा भेदप्रतीतिर्देहेन्द्रियादिलक्षणाऽस्त्येवेति चेत्सत्यम्, अंगीकृत्य परिहरति—येति । हतस्य दर्शनासंभवान्न हतेत्याक्षिपति—नन्विति । ख्यातिः प्रतीतिः । "संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् " इत्युक्तेः । ततो देहपातोत्तरम् । मया संपद्यते विदेहमुक्तो भवति "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति श्रुतेः ॥ * ॥ ननु तस्य प्रापंचिकशुभाशुभस्फूर्तेरनुगतत्वाद्विधिवशतापि स्यात्तत्राह—न हीति । विकल्पाख्या मत्तोन्यस्फूर्तिः । ततो मया संपद्यते सार्ष्ट्याख्यां मत्तुल्यसंपत्तिं प्राप्नोतीति संदर्भः ॥ * ॥ **दीपिका**—बाधितैव स्वकार्यं कर्तुमसमर्थैव प्रतीतिर्भवति दग्धरज्जुवत् ॥ * ॥ **विश्वनाथस्तु**—तस्य ज्ञानपरिपाक एव विधिकैङ्कर्याभावे कारणमित्याह—न हीति । विकल्पस्य भेदस्याख्या प्रख्यानं तस्य नास्ति । नन्वात्मैवेदं सर्वमिति ब्रुवाणस्य तस्य वाचैव नास्ति मनसा त्वस्त्येव, या चास्ति साऽपि मद्वीक्षया मदपरोक्षानुभवेन हता हतप्राया । ननु हतप्राया तत्राह—क्वचिदिति तैः ॥ ३७ ॥ तदेवम् तदित्थम् । तद्धर्मान्संन्यासधर्मान् । जिज्ञासितः ज्ञातः।मत्प्राप्तिसाधनं भक्तिरित्यर्थः।'गुणः प्रकृत्यर्थोऽन्यत्र सात्' इत्यनुशासनात्सन्नंतप्रयोगे प्रकृत्यर्थस्यैव मुख्यत्वेन जिज्ञासित इत्यस्य ज्ञात इत्यर्थः । दुःखमुदर्कं उत्तरफलं येषां तेषु । "उदर्क एष्यत्कालीनफले मदनकण्टके" इति मेदिनी । मुनिं वेदार्थावगंतारम्, श्रोत्रियमित्यर्थः ॥ * ॥ सम्यग्विदुषः कृत्यमुक्त्वा विविदिषोः कृत्यमाह—केवलवैराग्यवन्तं ज्ञानशून्यविषयारुचिमन्तम् । अतो विविदिषुं शास्त्रद्वारा ज्ञानेच्छुम् । न जिज्ञासितो न विचारितः मद्धर्मः परमात्मतत्त्वं येन सः । जिज्ञासापदस्य स्वाश्रयसमवायसंबन्धेन विचारे लक्षणा, इच्छाविरहे गुरूपसत्तेर्निरर्थकत्वात् ॥ ३८ ॥ मद्दृष्ट्या गुरुरेव परं ब्रह्मेति धिया । ततः परं ज्ञानप्राप्ते

यस्त्वसंयतषड्वर्गः प्रचंडेंद्रियसारथिः ॥ ज्ञानं वैराग्यरहितास्त्रिदंडमुपजीवति ॥ ४० ॥
सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ॥ अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ ४१ ॥

अनधिकारिणः संन्यासं निंदति द्वाभ्याम् । यस्त्विति । प्रचंडोऽत्यासक्त इंद्रियसारथिर्बुद्धिर्यस्य सः ॥ ४० ॥ सुरान्यष्टव्यान् देवानात्मानं च स्वात्मान मात्मस्थं मां च निह्नुते प्रतारयति । निह्नवफलमाह । अस्मादिति ॥ ४१ ॥

रनंतरम् । इति भाव इति–यावज्ज्ञानोदयं गुरुं संसेव्य तत्प्रसादादवाप्तात्मज्ञानो जितेन्द्रियत्वादिधर्मयुत एक एव चरेदिति तात्पर्यम् ॥ * ॥ ततः परं ब्रह्मज्ञानानंतरम् ॥ ३९ ॥ त्रिदण्डमिति संन्यासोपलक्षणम् । उप जीवति सेवते धारयति ॥ * ॥ अनधिकारिणोऽविरक्तस्य । यस्त्विति युग्मम् । त्रिदण्डमुपजीवतीति त्रिदण्डोपलक्षितदांभिकसंन्यासं प्रदर्श्य जीविकां करोतीत्यर्थः ॥४०॥ प्रतारयति संन्यासमिषेण न भजति । धर्महा नित्यनै मित्तिकादिकर्मत्यागी । अविपक्वाः कषाया मलानि यस्य स तथाऽविशुद्धान्तःकरणः । अमुष्मात्स्वर्गादेः । विहीयते अधःपततीत्यर्थः । "यदि न समुद्धरन्ति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदिगतोऽस्मृतकंठ मणिः । असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतांतकादनधिरूढपदाद्भवतः ॥" इति वेदस्तुत्युक्तेः । अथ चतुर्थाश्रमविचारः । तत्र त्रैवर्णिकेषु कस्तदधिकारी–"त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इतिच्छंदोगसूत्रकारः । अपरार्केपि–"ऋणत्रयमपाकृत्य निर्ममो निरहंकृतः । ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात् ॥" इति । तथा धर्मविवृतावपि–"ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती । संन्यसेद्वाऽघनाशाय सर्वभूतदयापरः ॥" एतानि वाक्यानि त्रैवर्णिकाधिकारं विदधति, ततोस्त्यधिकारः । "तुर्याश्रमे त्रैवर्ण्या ब्राह्मणाः प्रव्रजन्ति" इति जाबालश्रुतेरियं गतिः । ब्राह्मणपदमिहोपलक्षणं क्षत्रियवैश्ययोरपि । बहुत्वमप्येनमर्थमाहान्यथा ब्राह्मणः प्रव्रजतीत्येवं कथं नावादीदिति । यद्वा–ब्रह्म वेदस्तन्निष्ठस्तदध्ययनवान्ब्राह्मण इति व्युत्पत्त्या त्रिवर्णपरो ब्राह्मणशब्दः । एतेन "आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" इत्यादीनि मन्वा दिवचनान्यपि व्याख्यातानीति न विरोधः । यच्च देवलदत्तात्रेयवचनम्–"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते ॥" तथा–"गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित् । तुर्याश्रमे गतिः प्रोक्ता स्वयंभुवे" तदपि न वस्तुतो विरुद्धं यतो लिंगधारणस्यैव क्षत्रविशोर्निषेधो न त्वाश्रमस्य । लिंगं चिह्नं त्रिदण्डैकदण्डरूपम् । तथा च दक्षः–"मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते । गृहस्थोपीष्टवेदाद्यैर्नखरोमैर्वनाश्रितः ॥ त्रिदंडेन यतिश्चैव लक्षणानि पृथक्पृथक् ।" इति । 'गतिस्तुर्याश्रमे नास्ति' इहापि गतिर्ज्ञानं गत्यर्थानां ज्ञानार्थतानियमात् । ज्ञानञ्च ज्ञापकनिष्पाद्यमतस्तत्कार्ये तु तेन ज्ञानरूपेण कार्येण कारणं ज्ञापकं दंडधारणं लक्ष्यते । तथा चैतदुक्तं भवति–क्षत्रियवैश्ययोर्ज्ञापकं दण्डधारणं नास्तीति लिंगस्यैव निषेधो न त्वाश्रमस्येति । किञ्च–दंडधारणं बहिरंगमन्तरङ्गन्तु विषयविराग एव तदभावेधि क्काराभावात् "सर्वं दुःखमिति ज्ञात्वा येन संत्यज्यते गृहम् । स च त्यागफले भागी विपरीतस्तु दुःखभुक् । विषयाविष्टचेताश्चेत्त्यजेज्ज्ञेयः स वञ्चकः ॥ यस्त्यक्त्वा विषयान्मूढः पुनस्तानेव सेवते । स वान्ताशी परिज्ञेयः सारमेयो नराधमः ॥" इत्यादिकौशिकोक्तेः । यच्च धर्मविवृतावेव वचनान्तरम्–"संन्यसेद्ब्राह्मणः सम्यग्वानप्रस्थो भवेन्नृपः । गृहस्थश्च भवेद्वैश्य एवं वर्णक्रमः स्मृतः ॥" इति । अत्र सम्यङ् न्यसेदिति सम्यक्पदोपादानाद्ब्राह्मणस्य बहिरङ्गभूतदण्डधारणोपेत एव संन्यासो न तु तद्रहित इति गम्यते । तथा च क्षत्रियवैश्ययोस्तद्रहित आश्रमो भवतीत्यर्थादुक्तं भवति, अन्यथा छन्दोगसूत्रकारादिवचनविरोधापत्तेः । तत्र तात्पर्यमिदम्–'अबाधेनोपपत्तौ बाधो न न्याय्यः' इति न्यायेन श्रुतिस्मृतिविरोधपरिहाराय विधिवाक्यानामाश्रमस्वरूपविधौ तात्पर्यम् । निषेधवाक्यानां तु दण्डग्रहणमात्रनिषेधे तात्पर्यम् । ततः क्षत्रियवैश्ययोर्दण्ड ग्रहणनिषेधो न त्वाश्रमनिषेध इति । एवं प्राप्तेऽभिधीयते–"श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी" ततश्च श्रुत्यनुसारेण व्यवस्थाभिधीयते–"ब्राह्मणाः प्रव्रजन्ति" इति श्रुतौ ब्राह्मणशब्दस्य ब्राह्मणत्वजाति वाच्योर्थः, ब्राह्मणोद्देशेन च प्रव्रज्या विधीयते उद्देश्यविशेषणमेवाविवक्षितं हविरुभयत्ववत् न तूद्देश्यमविवक्षितम्, तस्मादस्य ब्राह्मणोद्देशेन संन्यासविधानादुद्देश्यस्य ब्राह्मणत्वस्य हविर्वद्विवक्षितत्वात्तस्यैव प्रव्रज्याधिकारो नान्यस्य।

ननु यदि भवेद्ब्राह्मणशब्दस्य ब्राह्मणत्वजातिर्वाच्योर्थस्तर्हि तस्योद्देश्यत्वेनं विवक्षितत्वात् क्षत्रियवैश्ययोः प्रव्रज्यायां मा भूदधिकारः । न च तथा ब्राह्मणत्वजातिरर्थः, अपि तु ब्रह्मवेदस्तन्निष्ठास्तदध्ययनवन्तो ब्राह्मणा इति वेदाध्ययनवत्त्वमेकोनुगतो धर्मः स च ब्राह्मणशब्दस्यार्थः । तथा च—वेदाध्ययनवत्त्वरूपेणैकेनोपाधिना ब्राह्मणक्षत्रियवैश्यास्त्रयोपि क्रोडीकृताः स्युः । एवं च ब्राह्मणोद्देशेन प्रव्रज्याविधानात्त्रयाणामपि वर्णानां प्रव्रज्याधिकारो स्त्विति चेन्मैवम्, यथा क्षत्रियशब्दस्य क्षत्रियत्वं वैश्यशब्दस्य वैश्यत्वं गोशब्दस्य गोत्वं तथा ब्राह्मणशब्दस्यापि ब्राह्मणत्वमेवार्थ इति शेषजैमिनिबादरायणादिभिरंगीकृतं, तद्व्याहन्येत, तथा चोक्तव्याघातभयाद्ब्राह्मणशब्दस्य ब्राह्मणत्वं वेदाध्ययनवत्त्वं चोभयमपि वाच्यत्वेन परिकल्प्येत तदा " अन्यायश्चानेकार्थत्वम् " इति तांत्रिकैरेकस्यानेकार्थत्वं विरुद्धं तेन न्यायेन सह विरोधः स्यात् । अथैवं ब्रूषे—" अन्यायश्चाने कार्यत्वम् " इति न्याये जाग्रत्यपि गवादिशब्दानां यथानेकार्थत्वं तथा ब्राह्मणशब्दस्याप्यनेकार्थत्वमस्त्विति, न चैतदुचितम्, अगतिका हीयं गतिर्यदनेकशक्तिकल्पनयाप्यनेकार्थत्वस्वीकरणम् । शब्दार्थज्ञाने वृद्धव्यवहारः प्रमाणम्—वृद्धा हि गवादिशब्दानामनेकशक्तिकल्पनयानेकार्थत्वमंगीकुर्वते न ब्राह्मणशब्दस्य, अत एवाभिधानकारैरपि गवादिशब्दा अनेकार्थवर्गे पठितास्तेषामपि व्यवहारः शब्दश्लेषादिष्वेव न शास्त्रार्थनिर्णये । शास्त्रार्थपरिज्ञाने तु प्रसिद्धार्थस्यैव ग्रहणं नेतरस्य, इतरस्यापि ग्रहणे गोपशुविधायकवाक्ये प्रतिग्रहनिवृत्तये गां दद्यादित्येवंरूपे सास्नाद्युपेतगोपिण्डव्यतिरिक्तस्यापि दिग्दृष्ट्यादेरपि ग्रहणं स्यान्न च गृह्यते, तस्माच्छास्त्रार्थनिर्णयेषु प्रसिद्धार्थस्यैव ग्रहणं युक्तं विपरीतार्थद्योतकवाक्यशेषाद्यभावे, अतोऽनेकशक्तिकल्पनाभयाद् ब्राह्मणशब्दस्य ब्राह्मणत्वजातिरेवार्थः । " ननु वै जायमानो ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते " इत्यत्र यथा ब्राह्मणशब्दो वर्णत्रयपरस्तथात्राप्यस्त्विति चेन्मैवम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथाहि—ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति वाक्यशेषे ब्रह्मचर्यादिभिर्ऋष्याद्यृणत्रयापकरणप्रतीतेर्ब्रह्मचर्यादिषु च त्रैवर्णिकस्याधिकारात्फलचमसवत् । यथा सोमपाने स्थाने ब्राह्मणेतरयोः क्षत्रियवैश्ययोः फलचमसयोर्विहितत्वेनाधिकारस्तथात्राप्यस्त्वित्यर्थः । शाखांतरे—" जायमानो वै ब्राह्मणः" इत्यत्रापि त्रैवर्णिकानुप्रवेशाद्युज्यते तत्र त्रैवर्णिकपरत्वं, प्रकृते तु वाक्यशेषाद्यभावान्न त्रैवर्णिकपरत्वम् । किञ्च—यावता कालेनावयवव्युत्पत्त्या लक्षणया वा क्षत्रियवैश्यौ ब्राह्मणशब्देन प्रत्यायेते ततः प्रागेव 'रूढिर्योगमपहरति, इति न्यायाल्लब्धात्मिकाया रूढेः प्राबल्यादनुपपत्त्यभावाच्च रूढया ब्राह्मणत्वमेव प्रत्याय्यते । अतः प्रथमप्रतीतब्राह्मणोद्देशेन प्रव्रज्याविधेश्चरितार्थत्वान्न चरमप्रतीतयौगिकार्थस्वीकरणमुचितम् । ततश्च "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुत्या विरुद्धम् " औदुंबरी सर्वा वेष्टयितव्या " इति स्मृतिवचनं यथा विरोधाधिकरणेऽप्रमाणमित्युक्तम्, तथा " ब्राह्मणाः प्रव्रजंति " इति जाबालश्रुतिविरुद्धम् " त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः " इत्यादिकं स्मार्तवचनजातमप्रमाणमेव । यद्वा—श्रुतिविरुद्धस्यापि स्मार्तवचननिचयस्य सर्वथाऽप्रामाण्यपरिजिहीर्षया श्रुत्यनुकूल एवार्थः परिकल्पनीयः । तत्र " त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः " इति छंदोगसूत्रस्यायमर्थः—त्रयाणां वर्णानां यथोदितं चत्वार आश्रमा इति औचित्यं श्रुत्यविरोधाय ब्राह्मणस्यैव तुर्याश्रमाधिकारविधौ नान्यत्रैवर्णिकानां संन्यासो विद्यते, नात्र संशयः " शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डयुक् " इति ब्रह्माण्डपुराणमपि छन्दोगसूत्रसमानार्थम् । यच्च ब्रह्मवैवर्तवचनम्—" वैराग्योत्पत्तिमानेव संन्यासे परियुज्यते । रागवान्न तु विप्रोपि वेदवेदांगवित्तमः ॥ " इति वेदवेदांगवित्तमोपि विप्रो रागवांश्चेत्तर्हि संन्यासे न युज्यत इत्यन्वयः । एवञ्च—विरक्तस्य विप्रस्यैवाधिकारोऽभिहितो न क्षत्रियादेः । यच्च स्मृत्यन्तरम्—" ऋणत्रयमपाकृत्य निर्ममो निरहंकृतः । ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात् ॥ " इति, तस्यायमभिप्रायः—गृहात्प्रव्रजेद्वानप्रस्थाश्रमं गच्छेत् । प्रव्रज्याशब्दो यद्यपि संन्यासे रूढस्तथाप्यत्र श्रुतिविरोधपरिहाराय तृतीयाश्रमपरस्तस्याऽपि वैराग्यहेतुकत्वात् । यद्वा—यदा ब्राह्मणः स्ववृत्तावजीवन्क्षत्रियवृत्तिमाश्रितस्तत्राप्यजीवन्वैश्यवृत्तिं ततस्तामापदं निस्तीर्यापि न वर्णांतरवृत्तिं परित्यजति किन्तु तत्रैवावस्थितस्तदा तत्तत्क्षत्रियादिवृत्तिजीवनेन स एव ब्राह्मणः क्षत्रिय इति वैश्य इति च व्यपदिश्यते शास्त्राननुज्ञातकालेपि क्षत्रादिवृत्तिनिरतत्वात्तस्यापि प्रव्रजेदिति प्रव्रज्याधिकारं दर्शयति । अत एव—"ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात् " इत्यत्राथशब्द उपात्तः, ब्राह्मण एवाथानंतरं क्षत्रियवृत्त्याश्रयणात् क्षत्रियः, अथ वैश्य इत्यानंतर्यप्रतिपादनादयमर्थो गम्यत इत्यर्थः । एतेन " ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं गृही । संन्यसेद्वाथ वा शान्तः " इत्येतदपि व्याख्यातम् । एवं च मनुदत्तात्रेयादिवचनान्यप्यनुकूलानि भवेयुः । तस्माच्छ्रुतिविरोधपरिहारायान्यान्यपि विरुद्धवचनानि ज्ञेयानि । यश्च जडभरतं प्रत्युपदेशो योगिरहस्ये—' यदि मृत्योः परं शांतमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भव' इति । अत्रेदं चिन्त्यं—किं जडभरतं प्रत्ययमुपदेश उत लक्षणया क्षत्रियमात्रं प्रति । आद्ये—जडभरतस्यैव नेतरक्षत्रियप्राप्तिः ।

भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः ॥ गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४२ ॥ ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदम् ॥ गृहस्थ स्याप्यृतौ गंतुः सर्वेषां मदुपासनम् ॥ ४३ ॥ इति मां यः स्वधर्मेण भजन्नित्यमनन्यभाक् ॥ सर्वभूतेषु मद्भावो मद्भक्तिं विंदतेऽचिरात् ॥ ४४ ॥ भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ॥ सर्वोत्पत्त्यप्ययं ब्रह्मकारणं मोपयाति सः ॥ ४५ ॥

चतुर्णां प्रधानधर्मानाह । भिक्षोरिति ॥ ४२ ॥ अन्यधर्मान्कांश्चिद्गृहस्थस्याप्यतिदि शति । ब्रह्मचर्यमिति । शौचं रागादिराहित्यं च । तस्य ब्रह्मचर्य प्रकारमाह । ऋतौ गंतुरिति ॥ ४३ ॥ एवंभूतवर्णाश्रमधर्मफलमाह । इति मामिति । दृढां मद्भक्तिं विंदते ॥ ४४ ॥ ततः किमत आह । भक्त्येति । महेश्वरत्वे हेतुः । सर्वोत्पत्त्यप्ययं सर्वस्योत्पत्त्यप्ययौ यस्मात् अत एव तत्कारणं मा मां ब्रह्मरूपं वैकुंठनिवासिनम् । यद्वा ब्रह्मणो वेदस्य कारणं मामुपयाति

किंच—जडभरतोपि प्रैषोच्चारणपूर्वकमाश्रमं गृहीतवानिति न क्वापि श्रूयते.। अतः—“ ब्राह्मणाः प्रव्रजन्ति ” इत्यनुरोधात्परमहंसो भवेत्यस्यायमर्थः—परमहंसो भव निर्ममो भवेति । न द्वितीयः। तत्र हि लक्षणा,सा च न युक्ता “ न विधौ लक्षणा ” इति भट्टगुरुप्रभृतिभिर्विधौ लक्षणानिषेधात् । किञ्च—लक्षणां वदन्वादी प्रष्टव्यः । किं विशिष्टविधिरुत प्राप्ते कर्मण्यधिकारविधिरिति । पक्षद्वयेपि लक्षणा दुर्वारा । ननूद्देश्ये लक्षणा न विध्यंशेऽतो न दोष इति चेत्तर्ह्युद्देश्येपि न युक्तेति ब्रूमः । तथाहि—संबंधानुपपत्तिभ्यां हि लक्षणा, न चानुपपत्तिः पूर्वोक्तरीत्या वाक्यस्यार्थांतरपरत्वेनाप्युपपत्तेः । या च जाबालश्रुतिर्जनकयाज्ञवल्क्यसंवादे तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतरैवतप्रभृतय इति । तत्रापि विधायकप्रत्ययाभावात्परमहंससदृशधर्मवन्त इति अहन्ताममतयोरभावात्परमहंसा इति व्यपदिश्यंत इति । किञ्च—“ब्राह्मणाः पुत्रैषणा याश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यां चरन्ति ” इति संन्यासविधायकमुख्यश्रुतौ ब्राह्मणत्वस्य विवक्षितत्वात् “ स्वाराज्यकामो राजा राजसूयेन यजेत ” इत्यत्र क्षत्रियत्ववत् क्षत्रियत्वजातिमात्राजा यथा राजसूयेऽधिकृतस्तथा ब्राह्मणत्वजातिमत एव विरक्तस्य संन्यासाधिकारः, साधितं चैतद्भगवद्भाष्यकारैः—‘ कर्मणैव हि संसिद्धिमास्थिताः ’ इत्यत्र । वार्तिककृता तु प्रौढिवादमात्रेण क्षत्रियवैश्ययोः संन्यासोस्तीत्युक्तम्—“दार्ढ्येन यन्नहि प्रोक्तं कर्तव्यत्वेन कोविदैः । कंचित्तद्धेतुमादाय तत्साधनमिहोच्यते ॥ सर्वसाधनहीनत्वात्प्रौढिवादो बुधोज्झितः । ” इति । किञ्च—कलौ स न कार्यः “ अश्वालंभं गवालंभं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥ ” इति बृहन्नारदोक्तेः । “ कलौ पतति संन्यासात्तद्धर्माणामसंभवात् । कलौ नैव त्रयो ग्राह्या गृहस्थाश्रमतो विना । असंभाव्या हि तद्धर्मास्तदग्रहीता ततः पतेत् ॥ ” इति कौशिकोक्तेः । तेषामाश्रमाणां ग्रहीता तद्ग्रहीता ततस्तद्धर्माणामसंभवात् । पतेत् नरक इति शेषः । इत्यत्र बहु वक्तव्यमस्तीति वंशीधरः । भोगवैभवप्राकट्यभयादस्माल्लोकात्तथा विद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमादमुत्र निरयप्राप्तेः परस्माच्च विहीयते ॥४१॥ चतुर्णाम् आश्रमाणाम् । ईक्षा विचारः । भूतरक्षाऽन्नादिना प्राणिरक्षा । इज्या यागः । द्विजस्य ब्रह्मचारिणः ॥*॥ ईक्षा आत्मानात्मविवेकः । इज्या यज्ञानुष्ठानम् । द्विजस्य द्विजत्वहेतुकब्रह्मचर्यव्रतवतः॥४२॥ अन्यधर्मान् ब्रह्मचार्यादिधर्मान् । तप इति वनस्थस्य । संतोषशौचमिति साधारणः । भूतसौहृदं जीवाभयप्रदानमिति भिक्षोः । तस्य गृहस्थस्य । “ यो द्विज ऋतुगामी स्याद्ब्रह्मचारी स ईरितः ” इत्युक्तेः । सर्वसाधारणमुख्यधर्ममाह—सर्वेषामिति ॥ * ॥ अन्यधर्मान् ब्रह्मचर्यादिधर्मान् । उपादिष्टस्यान्यत्र नयनमतिदेशः । किञ्च—मदुपासनं सर्वेषां वर्णाश्रमधर्माणां प्राणप्रदत्वादावश्यकम्, येन विना ते सर्वे विफलाः स्युः । तदुक्तम्—‘ मुखबाहूरुपादेभ्यः ’ इत्यत्र ‘ स्थानाद् भ्रष्टाः पतंत्यधः ’ इति ॥ ४३ ॥ अनन्यभाक् त्यक्तान्योपासनः अचिरात् ॥ * ॥ मां स्वधर्मेण भजन्मत्प्रीत्यर्थं स्वधर्ममाचरन् । अनन्यभाक् न त्वन्यार्थः । ननु स्वधर्मेण देवादीनां यजनात्कथं मत्प्रीतिस्स्यात्तत्राह—सर्वभूतेषु ममैवांतर्यामित्वेन स्थितस्य भावो भावना यस्य सः । दृढां प्रेमलक्षणाम् ॥ ४४ ॥ ततस्तव भक्तेः । अत एव सर्वोत्पत्त्यप्ययहेतुत्वादेव । तद्ब्रह्म कारणं कारणरूपम् । विगतः कुंठो वैकल्यं यस्मात्तद्विकुंठं शुद्धचेतस्तदेव वैकुंठं तत्र वासिनम् । सर्वोत्पत्त्यप्ययमित्युक्तेरेव कारणत्वमायातं पुनस्तत्कथनं पुनरुक्तमिवेत्यरुच्याह—यद्वेति ॥ * ॥ **दीपिका**—ततस्तादृशभक्तिप्राप्तेः ।

इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ॥ ज्ञानविज्ञानसंपन्नो न चिरात्समुपैति माम् ॥ ४६ ॥ वर्णाश्रमवतां धर्म एष आचारलक्षणः ॥ स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥ ४७ ॥ एतत्तेऽभिहितं साधो भवान्पृच्छति यच्च माम् ॥ यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम् ॥ ४८ ॥ इति श्रीमद्भा० महापुराण एकादशस्कन्धे भगवदुद्धवसंवादे वनस्थसंन्यासिधर्मनिरूपणं नामाऽष्टादशोऽध्यायः ॥ १८ ॥ श्रीभगवानुवाच ॥ यो विद्याश्रुतसंपन्न आत्मवान्नानुमानिकः ॥ मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥ १ ॥

सामीप्येन प्राप्नोति ॥ ४५ ॥ ततश्चासौ मुक्त एवेत्याह । इतीति । इति एवंभूतेन स्वधर्मेण निर्णिक्तं शुद्धं सत्त्वं चित्तं यस्य सः । अत एव निर्ज्ञाता मम गतिरैश्वर्यं येन ॥ ४६ ॥ उक्तमर्थं संक्षिप्याह । य एष आचारलक्षणः पितृलोकप्राप्तिफलः स एव मद्भक्तियुतो मदर्पणेन कृतः ॥ ४७ ॥ प्रकरणार्थमुपसंहरति । एतच्च तेऽभिहितम् । यथा भक्तो भूत्वा मां परं संप्राप्नुयादिति ॥ ४८ ॥ इति श्रीमद्भागवत एकादशस्कन्धे श्री० टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ज्ञानादेर्निर्णयः पूर्वं कृतो ह्याश्रमधर्मतः ॥ अत्रोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥ १ ॥ तदेवं तर्कतो बाधितोऽपि देहादिप्रपंचो यावदपरोक्षानुभवेन दिङ्मोहादिरिव न लीयते तावज्ज्ञानाभ्यासस्ततो मुक्तिरित्युक्तम् "आदेहांतात्क्वचित्ख्यातिस्ततः संपद्यते मया" इत्यादिना। यस्य त्वपरोक्षानुभवेन प्रपंचो लीनप्रायस्तस्य न किंचित्कृत्यमस्तीत्याह । य इति । विद्या अनुभवस्तत्पर्यंतेन श्रुतेन संपन्नोऽत एवात्मवान्प्राप्तात्मतत्त्वो नानुमानिकः केवलपरोक्षज्ञानवान्न भवति । अनकारपाठे प्राक् श्रुत्यनुकूलतर्कतो निर्णीतार्थ इत्यर्थः ।

अत एव सर्वोत्पत्त्यप्ययत्वात्तेषु तत्कारणं सर्वकारणं पूर्वार्धे कारणशब्दात्तत्पदाध्याहारः, ब्रह्मशब्दस्य सविशेषे लक्षणा चातो—यद्वेति ॥ * ॥ **विश्वनाथस्तु**—ततश्च तया भक्त्या कश्चित्सर्वलोकमहेश्वरं मां प्राप्नोति स्वतुल्यैश्वर्यप्रदोहं तस्मै सार्ष्टिरूपां मुक्तिं ददामीति भावः । कश्चित्सर्वोत्पत्त्यप्ययं मां प्राप्नोति तदभिप्रेतयोगसिद्धिं ज्ञानानंदाद्युत्पत्तिं संसाराप्ययं च तस्मै तावदहं ददामीति भावः । कश्चिन्मां ब्रह्मेति तस्मै निर्वाणमुक्तिं ददामीति भावः ॥४५॥ ततः सामीप्यप्राप्तेरनंतरम् । असौ मद्भक्तः । अत एव शुद्धान्तःकरणत्वादेव । ज्ञानं तत्त्वम् । पदार्थद्वयशोधनं विज्ञानं वाक्यार्थभेदबाधस्ताभ्यां संपन्नो न चिराद्बोधसमकाल एव सम्यगभेदेन ॥*॥ सा च मत्प्राप्तिर्मद्भक्त्युदयानुरूपेण मज्ज्ञानपूर्विकैव भवतीत्युपसंहरति—इतीति । इति स्वधर्मे गम्यते ज्ञायतेऽनया गतिर्भक्तिः, निःशेषेण ज्ञाता तत्त्वतोऽनुभूता मम गतिर्येन । अत एव ज्ञानविज्ञानसंपन्नः मत्स्वरूपरूपगुणलीलादीनां परोक्षापरोक्षज्ञानसमृद्धः । यद्वा—ब्रह्मसायुज्येच्छुश्चेत्तदा त्वेष क्रममाह इति निर्ज्ञातमद्गतिः सम्यगधीतमदुपदिष्टज्ञानशास्त्रः । मां निर्विशेषं ब्रह्माख्यम् ॥ ४६ ॥ पितृलोकप्राप्तिः फलं यस्य स तथा । "कर्मणा पितृलोकः" इति श्रुतेः । परः सर्वोत्कृष्टः स्यात् । परत्वमाह—निःश्रेयसकरो मोक्षदः । 'श्रेयो निःश्रेयसामृतम्' इत्यमरः ॥ * ॥ ० ॥ ४७ ॥ अभिहितम् कथितम् ॥ * ॥ साधो इति—त्वं तु पूर्वमपि सदाचारोऽसि मया त्वामुद्दिश्य लोकहितार्थमेवोक्तमिति भावः ॥ ४८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ पूर्वम् अनंतरोक्ताध्याये । 'नैतद्वस्तुतया पश्येत्' इत्यादिना । ज्ञानादेः, इहादिना भक्तिबंधमोक्षादिग्रहः । यद्वा—अत्रोनविंशतितमे । पूर्वं ज्ञानादेर्निर्णयः कृतः पश्चात्त्यागो विधीयत इति ( १ ) । तर्कतो विचारतः । दिङ्मोहोंधकारस्थस्य यथा प्रकाशं विना न निवर्तते तद्वत् । श्रुतेन श्रवणेन । अत एवानुभवावसानकश्रुतवत्त्वादेव । अनुमानं करोत्यानुमानिकः । "यतो वा इमानि" इत्यादिश्रुत्युक्तेश्वरानुमातृवत्परोक्षज्ञानवान्न, किंतु "अहं ब्रह्मास्मि" इत्यपरोक्षीकृतस्वात्मतत्त्वः । अनकारपाठे

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ॥ स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥

**स इदं द्वैतं तन्निवृत्तिसाधनं च मयि मायामात्रमिति ज्ञात्वा ज्ञानं च तत्साधनं संन्यसेत् । अयमेव विद्वत्संन्यासो नाम ॥ १ ॥ अत्र हेतुमाह । ज्ञानिनस्त्विति । यस्मादहमेव तस्येष्टोऽपेक्षितः । स्वार्थः फलम् । हेतुस्तत्साधनं च संमतः । स्वर्गोऽभ्युदयश्च । अपवर्गः संसारनिवृत्तिश्च । अतस्तस्य न प्राप्यं कृत्यं वा किंचिदस्तीत्यर्थः ॥ २ ॥**

'आत्मवानानुमानिकः' इति पाठे । प्राक् पूर्वम् । मयि मत्स्वरूपे । मायामात्रं कल्पितमिति निश्चित्य । यद्वा—मयि मन्निमित्तं स्वरूपभूतमत्प्राप्त्यर्थमिति यावत् । अयमेव ज्ञानतत्साधनयोर्मायामात्रत्वज्ञानेन तयोस्त्यागरूप एव गृहस्थाश्रमादौ कृतश्रवणादिभिरुत्पन्नब्रह्मसाक्षात्कारेण गृहस्थादिना विक्षिप्तचित्तस्य चित्तविश्रान्तिलक्षणजीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासो विद्वत्संन्यासः । तत्रैतमेव विदित्वा मुनिर्भवति । अथ योगिनां परमहंसाना मित्यादिपरमहंसोपनिषदादीनि बहूनि प्रमाणानि । विविदिषासंन्यासस्तु—साधनसंपन्नेन तत्त्वज्ञानमुद्दिश्य क्रियमाणः संन्यासो विविदिषासंन्यासः । "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजंति" इति श्रुतिस्तत्र प्रमाणम् । स च द्विविधः—जन्मापादककर्मत्यागात्मकः, प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्च । " न कर्मणा न प्रजया धनेन त्यागेनैके नामृतत्वमानशुः " इति श्रुतिराद्ये मानम्, विरक्तस्य गृहस्थादेः प्रबलनिमित्तवशेन संन्यासप्रतिबन्धे आद्यसंन्यासेऽधिकारः । अत्र स्त्रीणां विप्रेतरगृहस्थानां चाप्यधिकारः । जनकादीनां मैत्रेयीप्रभृतीनां च तत्त्वविदां श्रुतिस्मृतीतिहासपुराणेषूपलंभात् । प्रतिपादितं चैतद्विशेषतो विद्यारण्यैर्जीवन्मुक्तिविवेके॥*॥ **दीपिका**—आश्रमधर्मेतः आश्रमधर्मं पुरस्कृत्य ( १ ) । तर्कतः शास्त्रविचारेण बाधितोपि मिथ्यात्वेन ज्ञातोपि । तावदपरोक्षानुभवादर्वाक् । ततः परोक्षानुभवे सति प्रागनुभवात् पूर्वं श्रद्धानुकूलतर्कतः मन्तव्य इति मननविधानाच्छ्रुत्यनुकूला मुख्यत्वेन निश्चिता । तथाहि—विमतमभिन्ननिमित्तोपादानकं कार्यत्वात्सुखादिवत् । तदुक्तं शंकरशारीरके—सत्सु तु वेदन्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदांतवाक्याविरोधि प्रमाणं भवन्न निवार्यते, श्रुत्यैव च सहायतया तर्कस्योपेतत्वात् । तथाहि—" श्रोतव्यो मंतव्यः " इति श्रुतिरिति । द्वैतं जगत् तन्निवृत्तिसाधनञ्च, वाक्यजन्यं ज्ञानं मयि शुद्धे ब्रह्मणि मायामात्रं प्रतीतिमात्रं माययैवात्मन्यध्यस्तं न वास्तवम् ' अज्ञानसंज्ञौ भवबंधमोक्षौ ' इति, ' अतो न बन्धस्तव नैव मोक्षः ' इत्याद्युक्तेः । तत्साधनं ज्ञानसाधनम् । ' शमादि मयि संन्यसेत् ' इति । विजयार्थं दत्तमस्त्रमिव विजयानंतरं राज्ञि समर्प्य पुनस्तमिव मामेवोपासीतेत्यर्थः । अयमेव विद्वत्संन्यास इति ॥ * ॥ **विश्वनाथस्तु**—तदेवमनाद्यविद्यादूरीकरणार्थमेव निष्कर्मज्ञानयोगवैराग्यादीनि जीवस्य कर्तव्यत्वेनोक्तानि, तैः साधनैर्दूरीभूतायामविद्यायां विद्यायां चोत्पन्नायां न तैः साधनैः कोप्युपयोगः । यथा—सर्पव्याघ्रभूताद्याविष्टः पुरुषः स्वं विस्मृत्य सर्पोहं भूतोहं व्याघ्रोहमित्येवं यावन्मन्यते तावदेव मणिमंत्रमहौषधादीनां प्रयोग उपयुज्यते तत्तदावेशे तैस्तैरुपायैरुपशांते सति अमुकोहममुकस्य पुत्र इति स्वस्वभावे प्राप्ते न पुनस्तैर्मंत्रौषधादिभिः कृत्यमित्याह—य इति । विद्या सांख्ययोगतपोवैराग्यमयं, ज्ञानमविद्यानिवर्तकम् , श्रुतानि तत्तत्प्रतिपादकशास्त्राणि तैः संपन्नः । अत एव तत्तत्साधनवशादात्मवान्प्राप्तात्मतत्त्वः, नानुमानिक इति तैः । किन्त्वपरोक्षानुभवसहित एव इदं देहदैहिकसर्ववस्तुषु स्वाभिमननं मायामात्रं मायिकमेव ज्ञात्वा । यद्वा—इदं इदंकारास्पदं जगन्मायिकं मायिकत्वादस्थिरमेवेति ज्ञात्वा ज्ञानं तत्साधनञ्च मयि संन्यसेन्मत्प्राप्त्यर्थं त्यजेत् ॥ १ ॥ अत्र ज्ञानतत्साधनत्यागे । यस्माद्धेतोस्तस्य ज्ञानिनः । तत्साधनं फलसाधनम् । अभ्युदय ऐश्वर्यम् । अतो हेतोः । स्तस्य ज्ञानिनः । इत्यर्थ इति—आनंदकंदस्वरूपभूतमदज्ञानादज्ञानामेव यत्किंचिदानन्दोपेतस्वर्गाद्यभिलाषो भवतीति भावः ॥ * ॥ **दीपिका**—अत्र ज्ञानसमर्पणे । तुशब्दः शुष्कज्ञानिनिरासाय । फलं परमसाध्यम् । तत्साधनं फलसाधनम् । अभ्युदयः परलोकवैभवम् । अतो ममैव सर्वस्वात् । तस्य विद्वत्संन्यासिनः ॥ * ॥ **संदर्भस्तु**—यतः सम्यगनुभवे सति ज्ञानिनः परमसाधनसाध्यरूपोप्यहमेव विस्फुरामि न तु ब्रह्मकैवल्यादिरित्याह—ज्ञानिनस्त्विति । तुशब्दः पक्षान्तरनिरासार्थः ॥ * ॥ **विश्वनाथस्तु**—ननु ज्ञानमिव किं भक्तिमपि संन्यसेत्तत्र नहिनहीत्याह—ज्ञानिन इति । अहमेवेष्टो यजनाविषयीभूतः कथं मद्यजनं त्यजेत् । स्वार्थः स्वापेक्षितं फलमहमेव हेतुस्त

ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ॥ ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥ तपस्तीर्थं जपो दानं पवित्राणीतराणि च ॥ नाऽलं कुर्वंति तां सिद्धिं या ज्ञानकलया कृता ॥ ४ ॥ तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ॥ ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावितः ॥ ५ ॥ ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि ॥ सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥ ६ ॥

अत्र विद्वदनुभवं प्रमाणयति। ज्ञानेति। यथोक्तं ज्ञानिनमभिनंदति। ज्ञानीति। यतोऽसौ ज्ञानेन मां धारयति॥ ३ ॥ तस्य ज्ञानं स्तौति। तप इति। अलमत्यर्थम्। ज्ञानस्य कलया लेशेन॥ ४ ॥ ज्ञानेन सहितं तत्पर्यंतं यथा भवति तथा ज्ञात्वा तत्संपन्नः सन्मामेव भज। अन्यत्सर्वं त्यजेत्यर्थः ॥ ५ ॥ तस्य प्रत्ययार्थं पूर्वेषां वृत्तमाह। ज्ञानेति। मामेव संसिद्धिं प्राप्ताः॥ ६ ॥

त्साधनं चेति कथं मद्भक्तिं त्यजेत्। संमत इत्येतत्प्रमाणमेव। तदुक्तं मयैव—'ब्रह्मभूतः प्रसन्नात्मा' इत्यनंतरम् "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥" इति। वक्ष्यते चात्रापि—'भज मां भक्तिभावितः' इति। स्वर्गः सुखहेतुः। अपवर्गो दुःखाभावहेतुश्चाहमेवेति ॥ २ ॥ अत्र ज्ञानिनोऽहमेव सर्वमित्यस्मिन्नर्थे। यतो हेतोरसौ ज्ञानी अतो मे प्रियतम इत्यन्वयः। यद्वा—ज्ञानविज्ञानसंसिद्धाः पदार्थवाक्यार्थविचारकुशलाः। श्रेष्ठमुपाधिद्वयविभक्तं मम पदं मत्स्वरूपं विदुः। ज्ञानी यतोऽनावृततयाऽसंतमिवाज्ञानां ज्ञानेनावरकाज्ञानबाधेन मामात्मतया बिभर्ति धारयति अतोऽसौ मम प्रियतमः ॥ * ॥ अत्र स्वस्यैव परमसाध्यसाधनत्वे प्राचीनज्ञानिनामनुभवं प्रमाणयति—ज्ञानेति। ज्ञानविज्ञानसंपन्नाः श्रीसनकादयः श्रीशुकादयश्च मम पदं चरणारविंदमेव परं श्रेष्ठं विदुर्जानंति न तु ब्रह्मतत्त्वम् 'तस्यारविंदनयनस्य पदारविंदे' इत्यादेः, 'स्वसुखनिभृतचेताः' इत्यादेः। यस्मादेवं विदुरत एव ज्ञानी प्रियतमः। अत एव ज्ञानेन मां बिभर्ति पुष्णाति सुखयतीत्यर्थः। तथा च गीतं मयैव—"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते": इति। 'ज्ञानी त्वात्मैव मे मतम्' इति। "प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः" इति भावः ॥ ३ ॥ तस्य मानिनः। तपः कृच्छ्रादि, तीर्थं कुरुक्षेत्रादि, जपोष्टाक्षरादेः, दानं त्वपुनर्ग्रहणाय स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनम्, एवं च कन्यादाने स्वत्वत्यागाभावात्तद्दानं न स्यादिति चेत्, अत्रेदमवधेयम्—स्वस्य भावः स्वत्वम् आत्मीयत्वात्मत्वधनत्वज्ञातित्वभेदात्तच्चतुर्द्धेति। यद्यप्यत्रात्मत्वात्मीयत्वयोस्त्यागो नास्ति तथापि ज्ञातित्वधनत्वयोस्तत्र त्यागोऽस्त्येव। परगोत्रप्रवेशाज्ज्ञातित्वत्यागो विवाहोत्तरं दातुं विक्रेतुं चाशक्यत्वाद्धनत्वत्यागोऽपीत्यतोत्र परस्वत्वापादनरूपं मुख्यं दानत्वमस्त्येवेत्यलम्; इतराणि सत्सेवनादीनि। पवित्राणि पावित्र्यापादकानि। तीर्थस्तु—'शुद्धिम्' इति पपाठ। सिद्धिः श्रेयःप्राप्तिः ॥ * ॥ अत एव तप इति तां सिद्धिं भक्तिरूपां नालंकुर्वन्ति न विशेषयन्ति। शुद्धिमिति पाठे भक्तौ योग्यताम्। ज्ञानमत्र भगवज्ज्ञानम्। तां प्रेमलक्षणाम्। न वर्धयन्ति किन्तु ज्ञानमेव वर्द्धयंतीति भावः ॥ ४ ॥ यतः सर्वश्रेयःप्राप्तौ ज्ञानस्योत्तमत्वं तस्मादित्यर्थः। स्वात्मानं परमात्मानं माम् "तं वा एतमभिवदन्ति स्वात्मा" इति श्रुतेः। भक्तिभावितः भक्त्या युक्तः शोधितो वा। तत्संपन्नो ज्ञानविज्ञानसंपन्नः। इत्यर्थ इति—मद्भजने सर्वश्रेयसामंतर्गतत्वादिति भावः। भजनं चात्र स्वरूपानुसंधानमेव। "यावानार्थ उदपाने सर्वतः संप्लुतोदके। तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥" इति श्रीगीतोक्तेः ॥ * ॥ तस्माद्भक्त्यविरुद्धज्ञानस्य वैशिष्ट्यात्। अनुभवपर्यंतं शास्त्रेणानिश्चित्य। अन्यत्सर्वं मोक्षपर्यन्तमिति ॥ ५ ॥ तस्य उद्धवस्य। प्रत्ययार्थं विश्वासार्थम्। संसिद्धिं परं श्रेयः ॥ * ॥ **दीपिका**—ज्ञानविज्ञानसंपन्न एव कस्तत्राह—ज्ञानविज्ञानयज्ञेन परोक्षज्ञानरूपयज्ञेन सर्वे यजन्ति मामात्मानं परमात्मानं परमात्मानमात्मन्येवेष्ट्वा मुनयः संसिद्धिमन्वगमन्। एवंभूताः संसिद्धिं गताः प्राचीना मुनय एव ज्ञानविज्ञानाभ्यां संपन्ना

**त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायांतराऽऽपतति नाद्यपवर्गयोर्यत् ॥ जन्मादयोऽस्य यदमी तव यस्य किं स्युराद्यंतयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥ उद्धव उवाच ॥ ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम् ॥ आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्भिमृग्यम् ॥ ८ ॥**

तदेव ज्ञानं संक्षेपत उपदिशति । त्वयीति । त्रिविध आध्यात्मिकादिर्विकारो देहादिः स माया न तु परमार्थः । यद्यस्मादंतरा मध्य एवापतति । रज्जौ सर्पमालादिवत् । नाद्यपवर्गयोर्न त्वादावंते चास्ति । अतो यद्यदा अस्य विकारस्यामी जन्मादयः स्युस्तदा तस्य तवाधिष्ठानभूतस्य किम् । न किंचिदित्यर्थः । ननु तस्यापि वस्तुतो न संति तस्मात्सत्त्वादित्याह । आद्यंतयोरिति । असतः सर्पादेराद्यंतयोर्यदस्ति रज्ज्वादि तदेव मध्येऽपि न तु सर्पादि तद्वदयं विकारो नास्तीत्यर्थः । यद्वा आद्यंतयोर्यदस्ति तन्मध्येऽप्यस्त्येव । न तस्य जन्मादयः संत्यतस्त्वं निर्विकारं ब्रह्मेति ॥ ७ ॥ ज्ञानादेर्विशेषं जिज्ञासुः पृच्छति । ज्ञानमिति । विशुद्धमेतज्ज्ञानं विपुलं निश्चितं यथा भवति

उच्यन्त इत्यर्थः ॥ ६ ॥ येन ज्ञानेन मुनयो ब्रह्म प्राप्तास्तदेवेत्यर्थः । त्रिविधस्त्रिगुणात्मकः संसारो वा । माया असत् इदं माया, आद्यंतयोरविद्यमानत्वे सति मध्ये प्रतीयमानत्वात्, रज्जुसर्पादिवत् । आदिना जलरेखाभू सूक्ष्मविवरग्रहः । यतो नाद्यंतयोरत इत्यर्थः । इत्यर्थ इति–न हि घटोत्पत्त्यादिना मृद उत्पत्त्यादिरस्तीति भावः । तस्यापि विकारस्यापि । ''विकारो नामधेयम्'' इति श्रुतेः । तस्य विकारस्य । सर्पादेरित्यादिना शुक्तिरजतग्रहः । रज्ज्वादि इत्यत्रादिना शुक्तिग्रहः । तद्वत् रज्जुसर्पादिवत् । अयं देहादिः । इत्यर्थ इति–विकारस्यासत्यत्वावश्यंभावादिति भावः । प्रातीतिककारणरज्ज्वादिदृष्टान्तापेक्षया परमकारणमेव दृष्टांतीकरोती त्याह–यद्वेति । यद्ब्रह्मास्ति तद्ब्रह्म । तस्य ब्रह्मणः ''न जायते म्रियते वा कदाचित्'' इत्यादिश्रुतेः । यतो जन्मादयो न सन्त्यतो हेतोः । यद्वा–ननु त्रिविधस्य मायात्वे कथं सत्यत्वप्रत्ययस्तत्राह–असतः स्वप्नस्याद्यंतयोर्य दस्ति साक्षिचैतन्यमधिष्ठानमेव यथा मध्येप्यस्ति नान्यद्दृश्यजातं तथाऽसतः प्रपंचस्याद्यंतयोः सदात्मचैतन्यमेव मध्ये सन्नान्यत् । ''एतदात्म्यमिदं सर्वम्'' ''नारायण एवेदं सर्वम्'' ''नेह नानास्ति किंचन'' इत्यादिश्रुतेः ॥ * ॥ एवमुक्तलक्षणो ज्ञानविज्ञानसंपन्नो मां भजन् ज्ञानी परां काष्ठां प्राप्तो ह्यतिदूरे वर्तताम्, त्वं तु त्वंपदार्थं ज्ञात्वैवाविद्योत्तीर्णो भवेत्युद्धवं लक्ष्यीकृत्य सर्वलोकमाह–त्वयीति । हे उद्धव त्वयि जीवात्मनि यस्त्रिविध स्त्रिगुणमयो विकारो देहाध्यास आश्रयति त्वामाश्रितोयमध्यासो यो वर्तत इत्यर्थः, स मायाऽविद्यैव अविद्याकार्य इत्यर्थः । अन्तरा मध्य एवाऽऽपतति प्राप्तो भवतीति नायं तवौत्पत्तिको धर्म इति भावः । यतो नाद्यपवर्गयो रादावंते च स नास्तीत्यर्थः । तव चिद्रूपत्वात्तस्य जडरूपत्वादिति भावः । यदमी देहस्य जन्मादयस्ते तस्य चिदात्मनस्तव किं स्युर्न स्युरेव कथं त्वं जातोहं मृतोहमहं सुखी दुःखीत्यात्मानं मन्यस इति भावः । ननु यदा देहसंबंधो नासीद्यदा च ज्ञानेनापयास्यति तदैवाहं देहातिरिक्तो भवितुं शक्नुयामधुना तु देह एवाहमित्यत आह–असतो भ्रमप्रतीतत्वादसत्यस्य वस्तुन आद्यंतयोर्यत्सत्यं मध्येपि तदेव, यथा व्याघ्राविष्टस्य पुरुषस्य प्रतीतिकालेऽपि पुरुषत्वमेव सत्यं न तु व्याघ्रत्वम् । अत्र जीवस्याविद्यासंबंधभयाज्ज्ञानादेवानाद्यविद्यासम्बन्ध इति सर्वलोकप्रसिद्धिरन्यथाऽविद्यासम्बन्धस्य सर्वथैवानादित्वे सति स्वरूपत्वप्रसक्तौ ज्ञानेनापि तदपगमो न स्यात् । मुक्तिर्नाम जीवस्य स्वरूपहानिरिति मतं तु सद्भिर्नादृतमिति **विश्वनाथः** ॥ * ॥ **दीपिका**–तदेवानुभवात्मकमेव । आदौ अध्यासा त्पूर्वम्, अंते ज्ञानेनाध्यासे नष्टे देहादिविकारो नास्त्येव । अतः अज्ञानेनारोपितत्वात् । अस्यात्मनोत्यंतभिन्नस्य तस्यापि विकारस्यापि पूर्वार्धेनाद्यपवर्गयोरित्यनेनैव कल्पितस्यासत्त्वमुक्तं पुनस्त द्दर्शने पौनरुक्त्यमतो–यद्वेति । यदस्ति यत्प्रतीत्यधिष्ठानं ब्रह्मास्ति तस्याधिष्ठानस्य त्वं निर्विकारं ब्रह्मेति चिदंशेनैव तत्त्वमस्यादिवत् । एवं चाधिष्ठानस्यैव सत्यत्वनिरूपणान्न पौनरुक्त्यम् ॥ ७ ॥ विशेषं विज्ञानादिरूपम् । विश्वेश्वरत्वाद्विश्वमूर्तित्वाच्च तव विश्वांतर्गतस्य ममोद्धारायैतत्कथनमुचितमेवेति द्योतयन्संबोधयत्युद्धवः । यद्यन्ये महान्तो बहवः संति तांस्त्वमेतत्पृच्छेत्थं ब्रूयास्तत्राह–महद्भिरिति । तैरपि विमृ ग्यमन्वेष्यमेव न तु ज्ञातमतस्त्वमेव कृपया ब्रूहीति भावः ॥ * ॥ त्वयीत्यनेनापातबोधार्थत्वं त्वंपदार्थज्ञानमेवोक्तमित्यपरितुष्य तत्पदार्थज्ञानविज्ञाने सवैराग्ये पृच्छंस्तन्मात्रेणापरितुष्य तत्तत्फलं भक्तियोगमपि

तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश ॥ पश्यामि नान्यच्छरणं तवांघ्रिद्वंद्वातपत्रादमृताभिवर्षात् ॥ ९ ॥ दष्टं जनं संपतितं बिलेऽस्मिन्कालाहिना क्षुद्रसुखोरुतर्षम् ॥ समुद्धरैनं कृपयाऽऽपवर्ग्यैर्वचोभिरासिंच महानुभाव ॥ १० ॥ श्रीभगवानुवाच ॥ इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरम् ॥ अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्वताम् ॥ ११ ॥ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ॥ श्रुत्वा धर्मान्बहून्पश्चान्मोक्षधर्मानपृच्छत ॥ १२ ॥

तथा कथयेति । महद्भिर्ब्रह्मादिभिर्विमृग्यम् ॥ ८ ॥ महद्भिर्मृग्यत्वमभिनयेनाह । तापत्रयेणेति । तापत्रयेणाभितो हतस्य अतः संतप्यमानस्य । अंघ्रिद्वंद्वमेवातपत्रं तस्मात् । न केवलमातपात्त्रातुः किंत्वमृतमप्यभितो वर्षति यत्तस्मात् ॥ ९ ॥ अतिकृपामुत्पादयन्नाह । दष्टमिति । अस्मिन्बिले संसारकूपे पतितं तत्र च कालाहिना दष्टमेवमपि क्षुद्रसुखेष्वेव उरुस्तर्षस्तृष्णा यस्य तम् । दह्यमानः कथं समुद्धरणीय इति चेत्तत्राह । आपवर्ग्यैरपवर्गबोधकैर्वागमृतैरासिंचेति ॥ १० ॥ तद्विश्वासार्थं विद्वत्सभायां निर्णीतमर्थं

पृच्छति–ज्ञानमिति । ननु भक्तिपूर्वकमपि विशुद्धज्ञानमुक्तं तत्राह–विपुलं तत्पदार्थविषयत्वादतिमहत्तरं यत्तदपीत्यर्थः । तत्कथं विवर्तवादानुरूपं नेत्याह–पुराणम् “श्रुतेस्तु शब्दमूलत्वात्” इत्यनुसारेणानादिसिद्धं यत्तदेव तदनुसारेणैवाह–विज्ञानानंतरं त्वद्भक्तियोगं सर्वदुर्लभञ्च । विवर्तवादस्तु भक्तियोगनाशक इति भावः । विज्ञानानंतरभावित्वं प्रमाणयति–महद्भिर्ब्रह्मसनकादिभिरपि विशेषतो मृग्यम् ‘परमहंसमहामुनीनामन्वेषणीयचरणौ’ इत्याद्युक्तेः ॥ * ॥ **विश्वनाथस्तु**–पुराणं प्राचीनज्ञानिसंमतम् । तथैव संबोधयति–हे विश्वेश्वर विश्वमूर्ते । इति विश्वस्य मिथ्यात्वे तवैश्वर्यं तन्मूर्तित्वं च वृथैवेति भावः । शुद्धं ज्ञानाद्यमिश्रमित्याह ॥ ८ ॥ अभिनयेन व्यंजकेन । तापत्रयाभिहतत्वादेवं यस्मात्तस्मान्महद्भिर्मृग्यमिति भावः । अमृतमत्रामृतकारणीभूतं ज्ञानं ग्राह्यं, तदभिवर्षतीति तस्मात् । “धातर्यदस्मिन्भव ईश जीवास्तापत्रयेणाभिहता न शर्म । आत्मल्लँभंते भगवंस्तवांघ्रिच्छायां सविद्यामत आश्रयेम ॥” इति सृष्ट्युपक्रमदेवस्तुत्युक्तेः ॥ * ॥ ननु ज्ञानेनैव कृतार्थी भव, किं शुद्धभक्तियोगप्रश्नेनेत्यत आह–तापत्रयेणेति । अमृतं ब्रह्मानन्दादप्यधिकं सुखप्रदं माधुर्यमभितो वर्षतीति तस्मात् । तदुक्तम्–“या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्” इति । तेन ज्ञानं विनापि संसारक्षयस्य ज्ञानसाध्यब्रह्मानन्दादप्यधिकानंदस्य च लोभाद्भक्तिः पृच्छयत इति भावः ॥ ९ ॥ तत्र च कूपे च । दष्टं देहाध्यासेनैव कालदंशसंभवात्तद्वृत्तम् । एवमपि कालाहिदष्टत्वेपि । स्वयमाक्षिप्य परिहरति–दह्यमान इत्यादिना । अपवर्गबोधकैः ब्रह्मात्मैकत्वबोधकैः । सर्पदष्टस्य मंत्ररूपवागमृतसेकादेव शुभं भवति नान्यथेति भावः । महानुभावेति संबोधयन्सामर्थ्यं द्योतयति ॥ * ॥ ननु तर्हि शुद्धभक्तियोगेनैव कृतार्थी भव किं ज्ञानयोगप्रश्नेन तत्राह–दष्टमिति । अयमर्थः–शुद्धभक्तियोगस्य यादृच्छिकमहत्कृपैकलभ्यत्वान्न पुरुषप्रयत्नमूलकत्वम् । ज्ञानयोगस्तु निष्कामकर्मजन्यज्ञानेन ज्ञाततत्त्वंपदार्थैः स्वत एवं सुलभ इत्ययं पुरुषप्रयत्नसाध्यस्तस्मादप्राप्तशुद्धभक्तियोगा अप्येवं निस्तरेयुरित्यतो ज्ञानं पृच्छयत इति । आपवर्ग्यैरपवर्गार्हैर्वचनामृतैर्वा । सिंचेति–त्वन्मुखचन्द्रोदितं ज्ञानामृतमेव ममापवर्गजनकं भवतीति भावः । यद्वा–आपवर्ग्यैर्भक्तियोगतात्पर्यकैः । ‘यथावर्णविधानमपवर्गश्च भवति’ इत्यादिपंचमस्कन्धगद्ये भक्तियोग एवापवर्गशब्दस्य प्रयुक्तत्वात् । हे महानुभाव तवाचिन्त्यैश्वर्यचिंतनमप्यपवर्गं जनयतीति भावः ॥ १० ॥ यथा त्वया पृष्टमित्थमिति ॥ * ॥ ० ॥ ११ ॥ बहून् राज

तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ॥ ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥ १२ ॥ नवैकादश पंच त्रीन्भावान्भूतेषु येन वै ॥ ईक्षेताथै कमप्येषु तज्ज्ञानं मम निश्चितम् ॥ १४ ॥ एतदेव हि विज्ञानं न तथैकेन येन यत् ॥ स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्मनाम् ॥ १९ ॥

महं वक्ष्यामीत्याशयेनाह । इत्थमिति ॥ ११ ॥ १२ ॥ ज्ञानादिभिरुपबृंहितान् । तत्सहितानित्यर्थः ॥ १३ ॥ तत्र ज्ञानं कथयति । नवेति । प्रकृतिपुरुषमहदहंकार पंचतन्मात्राण्येकादशेंद्रियाणि पंच महाभूतानि त्रयो गुणाः एतान्भवानष्टाविंशतितत्त्वानि भूतेषु ब्रह्मादिस्थावरांतेषु कार्येष्वनुगतानि येन ज्ञानेनेक्षेत । अथ एष्वपि भावेष्वेकं परमात्मतत्त्वमनुगतं येनेक्षेत । कार्यकारणात्मकं जगत्पश्यन्परमकारणात्मकमेवैतन्न तु ततः पृथगिति येन पश्येत्तज्ज्ञानमित्यर्थः ॥ १४ ॥ विज्ञानमाह एतदेवेति श्लोकार्धेन । यद्यदा येनैकेनानुगतानेकात्मकान् भावान् पूर्वमैक्षत तांस्तथा पूर्ववन्नेक्षेत । किंतु तदेकं परमकारणं ब्रह्मैव । तदा एतदेव विज्ञानमुच्यते । एतदुक्तं भवति । परोक्षज्ञानेनापरोक्षभ्रमस्य दिङ्मोहादिष्विव निवृत्त्यभावात्तदात्मकं जगत्पश्यन्नप्यात्मनः पृथक सदिति मन्यते । अपरोक्षज्ञाने तु बाधितमेव दग्धपटवज्जीवन्मुक्तः संस्कारशेषं पश्यति । ततः परं न पश्यति चातः परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यामुच्येते इति । एकेन सर्वकार्याणामनुगतिं कार्याणां कारणात् पृथगसत्त्वं चोपपादयति सार्धेन । तत्र च यदि 'न कदाचिदनीदृशं जगत्' इत्यादिमतेनैतेषां भावानामुत्पत्त्यादयो न स्युस्ताह कारणस्यैकस्याभावादेकात्मकता मिथ्यात्वं च न स्यादतस्तेषामुत्पत्त्यादीन्साधयति ।

धर्मादीन् । तैः शोकानिवृत्तेः "तरति शोकमात्मवित्" इति श्रुतेः । पश्चाद्राजधर्मादिश्रवणमनु ॥ * ॥ ० ॥ १२ ॥ देवानामिव दृढव्रतं निश्चितं यस्य स देवव्रतो भीष्मः । इत्यर्थ इति—उपबृंहितपदमुपसर्गवशात्स्वार्थं विहाय साहित्यपरमत्रेति भावः ॥ * ॥ देवव्रतो भीष्मः ॥ १३ ॥ तत्र तेष्वादौ । अथ एष्वप्यष्टाविंशतितत्त्वेषु । अनुगतं सच्चिदात्मना सत्तास्फूर्तिप्रदम् । येन ज्ञानेन । इत्यर्थ इति—सर्वं परमकारणात्मकमेव सकलमिदमहं च वासुदेव इत्येवंरूपो बोधो ज्ञानमिति भावः ॥ * ॥ **दीपिका**—अनुगतानि कारणतया व्याप्तानि । अतः कारणस्य व्यापकत्वज्ञानात् । तेष्वष्टाविंशतितत्त्वेष्वनुगतमनुस्यूतं व्यापकं कार्यं देहादि कारणं महदादि तद्रूपं परमकारणं ब्रह्म तदात्मकमेव । ततः परमकारणात् ॥ १४ ॥ द्वितीयमाह—ब्रह्मैवास्ति न ततोऽन्यत्किंचिदस्तीति "नेह नानास्ति किंचन" इति श्रुतेः । बाधितमेव दग्धपटवत् । ततः परं विदेहमुक्तौ संस्कारशेषमपि न पश्यतीत्यर्थः । यतोऽबाधितबाधितप्रपंचप्रतीतिद्वयमस्ति अतो हेतोस्तद्धेतुनी ज्ञाने अपि द्वे एव । तयोः पर्यायान्तरमाह—परोक्षापरोक्षेत्यादिना । पूर्वोक्तं स्फुटयति—एकेनेति । तत्रेति वाक्यालंकारे । इत्यादिमतेन मीमांसकमतेन । यत इत्थं नास्ति अतो हेतोः । तेषां भावानाम् । इत्यर्थ इति—गुणत्रयावयवत्वेनानित्या इति भावः । अत्र प्रयोगः विमता इत्यादि ॥ * ॥ तदा पूर्वोक्तं यज्ज्ञानं तदेव विज्ञानमुच्यते । कदेत्यपेक्षायामाह—न तथेति । अयं भावः—शब्देन परोक्षज्ञाने हि आधाराधेयत्वेन कार्यकारणत्वेन वा द्वयोरप्यवधानं भवत्येवेति तस्य ज्ञानत्वं निदिध्यासनेन शब्दमात्रेणैव वा । परमात्मनोऽपरोक्षस्फुरणे तु नान्यत्स्फुरेदित्यस्य विज्ञानत्वमिति **संदर्भः** ॥ * ॥ **विश्वनाथोपि**—ज्ञानदशायां परोक्षीभूतेन परमात्मानुगताः सर्वे परोक्षाः परोक्षभूता भावा दृष्टाः, विज्ञानदशायां तु एकः परमात्मैवापरोक्षीभूत ईक्षिता भवति तदनुभवा

**आदावंते च मध्ये च सृज्यात्सृज्यं यदन्वियात् ॥ पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् ॥ १६ ॥ श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ॥ प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते ॥१७॥ कर्मणां परिणामित्वादाविरिंचादमंगलम् ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८ ॥**

स्थितीति । त्रिगुणात्मनां सावयवानामित्यर्थः । विमता भावा उत्पत्त्यादिमंतः सावयवत्वाद्घटादिवदिति पश्येत् ॥ १५ ॥ तत आदावुत्पत्तौ अंते परिणामांतरापत्तौ च कारणत्वेन मध्ये चाश्रयत्वेन कारणं सृज्यात्सृज्यं कार्यात्कार्यांतरं प्रति यदन्वियादनुगच्छेत्तत्प्रतिसंक्रामे तेषां प्रलये च यदवशिष्येत तदेव सदिति पश्येदित्यर्थः ॥ १६ ॥ वैराग्यमाह श्रुतिरिति द्वाभ्याम् । श्रुतिः "नेह नानास्ति किंचन" इत्यादिः । प्रत्यक्षं पटादिकार्यं तंत्वादिव्यतिरेकेण न दृश्यते । ऐतिह्यं महाजनप्रसिद्धिः । अनुमानं विमतमिथ्यादृश्यत्वाच्छुक्तिरजतादिवदित्यादि । एवं प्रमाणचतुष्टयम् । एतेष्वनवस्थानादेतैर्बाधितत्वात् । स एवं सर्वानुगतं सत्यमात्मतत्त्वं पश्यन्विकल्पस्य च मिथ्यात्वात्ततो विरज्यते विरक्तो भवतीत्यर्थः॥ १७॥ ननु वेदोक्तस्वर्गादिसुखाशया न विरज्येतेत्याह। कर्मणामिति। आविरिंचाद्ब्रह्मलोकपर्यंतमदृष्टमपि सुखममंगलं दुःखरूपं नश्वरं च पश्येत्॥ १८॥

नंदादेव तत्कार्याणां भावानामीक्षणेऽवकाशो न भवेदित्यद्वितीयात्मानुभवः ॥ १५ ॥ अनुगच्छेत्सत्तास्फूर्त्यात्मना । इत्यर्थ इति—त्रिकालावस्थायिन एव सत्त्वमिति भावः । कथं सत् स्वप्नबाधे तत्साक्षीवेति ज्ञेयम् ॥ * ॥ सृज्यात्सृज्यमिति—" श्रुतेश्च शब्दमूलत्वात् " इति न्यायेन परिणाम एव स्वीकृतो न विवर्तः कल्प्यात्कल्प्यमित्यनुक्तेः ॥ * ॥ **विश्वनाथस्तु—**ज्ञानदशायामेकेन परमात्मनैवानुगतानां कार्याणां सर्वेषां परमकारणात्मकत्वात्परमात्मैक्यमेव यदुक्तं तदुपपादयति—स्थितीति सार्द्धेन । त्रिगुणात्मनां भावानां कार्याणाम् ' स्थित्युत्पत्त्यप्ययान्पश्येत् ' इत्युत्पत्तिस्थितिप्रलयवत्त्वात्तेषामनित्यत्वं पश्येदित्यर्थः । अनित्यत्वादेव सार्वकालिकसत्यत्वाभावादसत्यत्वं ज्ञानिनो मन्येरन्निति भावः । सत्यः पुनरेकः परमात्मैवेत्याह—आदावुत्पत्तावंते परिणामांतरापत्तौ च कारणत्वेन मध्ये चाश्रयत्वेनेत्यादि तैः । यथा महदादीनां स्वस्वकार्यं प्रति कारणत्वेपि सर्वकारणत्वाभावान्न कारणत्वम्, किंत्वेकः परमात्मैव कारणम्, तथैव तेषां सत्यत्वेपि सार्वकालिकसत्यत्वाभावान्न सत्यत्वम्, किंतु परमात्मैव सत्य इति ज्ञानदशायामपि तस्याद्वयत्वं पश्येदिति भावः ॥ १६ ॥ महाजना विद्वांसः । एतैः श्रुत्यादिभिः । स द्रष्टा । विकल्पात् द्वैतात् । इत्यर्थ इति—मिथ्यात्वानुसंधानमेव वैराग्यहेतुरिति भावः ॥ * ॥ विकल्पात्संशयात् । संशयमनादृत्येत्यर्थः । यद्वा—तेषु प्रमाणेषु अनवस्थानात्तैः प्रमाणैः संबंधानवगमाद्धेतोर्विकल्पाद्विशेषेणात्मीयत्वेन कल्पत इति । प्रपंचाद्विरज्यते विरक्तो भवति । तत्र श्रुतिः—' असंगो ह्ययं पुरुषः ' इत्यादि । प्रत्यक्षं प्रकाश्यप्रकाशकत्वलक्षणवैलक्षण्येन सर्वानुभवात् । ऐतिह्यं तत्तच्छास्त्रसंप्रदायकप्रवर्तकमहाजनप्रसिद्धिः । अनुमानम् " यथाग्निर्दारुणो दाह्याद्दाहकोन्यः प्रकाशकः " इत्यादिलक्षणं तथानुमानं विमतं प्रपंचत्वं, प्रपंचसमवायश्चात्मनि मिथ्या कदाचिदेव दृश्यमानत्वाच्छुक्तौ रजतत्त्ववत् तत्समवायवदिति च सुषुप्तादौ न दृश्यत इति कदाचिद्ग्रहणम् । तदुक्तमादावंते च मध्ये चेति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—श्रुतिः—" यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्ति " इति । प्रत्यक्षं घटादीनां मृदुद्भवत्वं मृदवसानत्वं च दृष्टमेव । ऐतिह्यमिति तैः । न कदाचिदनीदृशं जगदिति वदतां तु न महाजनत्वम् । अनुमानं—जगदिदमसार्वकालिकमाद्यन्तवत्त्वादिति । अतश्चतुर्षु प्रमाणेषु सत्सु अनवस्थानात्सार्वकालिकस्थित्यभावाद्धेतोर्विकल्पात्स्वर्गादिभोगमयाद्वैतप्रपंचाद्विरक्तो भवेत् ॥ १७ ॥ अत्राक्षिपति—नन्विति । परिणामत्वात्फलरूपत्वात् । दृष्टवदैहिकगृहादिसुखवत् ॥ * ॥ ननु स्वर्गादीनां सार्वकालिकसुखदत्वाभावेपि कंचित्कालिकसुखदत्वमस्त्येवेत्यत आह—कर्मणां परिणामित्वात् कर्मपरिणामवत्त्वात्कर्मपरिणतत्वादिति यावत् । ब्रह्मलोकपर्यन्तमदृष्टं स्वर्गादि दृष्टवत्, दृष्टं राजादिकमिव स्पर्द्धासूयादिमत्त्वेन सकंटकत्वादमंगलं नश्वरं च ॥१८॥

भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ॥ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १९ ॥ श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ॥ परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ २० ॥ आदरः परिचर्यायां सर्वांगैरभिवंदनम् ॥ मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ॥ २१ ॥ मदर्थेष्वंगचेष्टा च वचसा मद्गुणेरणम् ॥ मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥ २२ ॥ मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ॥ इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥ २३ ॥

भक्तियोगं सकारणमाह । भक्तियोगः पूर्वमुक्त एव तथापि तस्मिन्प्रीतिं प्राप्नुवते तुभ्यं पुनश्च कथयिष्यामि ॥ १९ ॥ श्रद्धा श्रवणादरः । शश्वदिति सर्वत्रानुषज्यते । मदनुकीर्तनं श्रवणानंतरं मत्कथाव्याख्यानमित्यर्थः ॥ २० ॥ २१ ॥ अंगचेष्टा लौकिकी क्रिया । वचसा लौकिकेनापि मद्गुणानामीरणं कथनम् ॥ २२ ॥ मदर्थे मद्भजनार्थम् । तद्विरोधिनोऽर्थस्य परित्यागः । भोगस्य तत्साधनस्य चंदनादेः । सुखस्य पुत्रोपलालनादेः । इष्टादि वैदिकं यत्कर्म तदपि मदर्थं कृतं भक्तेः कारणमित्यर्थः ॥ २३ ॥

कारणं मत्कथाश्रद्धादि तेन युतं सकारणम् ॥ * ॥ यत्पृष्टम्—'त्वद्भक्तियोगञ्च महद्विमृग्यमाख्याहि' इति तत्राह—भक्तियोग इति । पुरैवोक्तस्तमपि श्रुत्वापि त्वं तत्र तृप्त्यभावादेव पुनः पृच्छसीति भावः । पुनरपि कथयिष्यामि यतः प्रीयमाणाय तस्मिन्नेव प्रीतिं प्राप्नुवते । तत्रापि हेतुः—हे अनघेति । अपराधे सत्येव तत्र प्रीतिर्ह्रसति नान्यथेति भावः । कारणं परं श्रेष्ठमंगम् ॥ १९ ॥ अमृतवज्जरामरणहारिण्यां कथायां श्रद्धा, अत्यापद्यपि तच्छ्रवणापरित्यागः । यद्वा—अमृतकथा श्रीमद्भागवतमेव तस्यैव । काश्मीरमण्डले पार्वतीं प्रति 'अमृतकथां श्रावय प्रभो' इति तस्याः प्रश्ने श्रीभागवतस्यैव श्रावणात् । यच्छ्रवणेन गलितशुकांडमप्यमरतामापेति प्रसिद्धं कौशिकसंहितायाम्, तत्रत्यवाक्यानि तु विस्तरभियेह नो लिखितानीति ज्ञेयम् । इत्यर्थ इति—श्रवणोत्तरं कथानुकीर्तनाभावे तद्विस्मृतिः स्यादतोऽनुकीर्तनस्यावश्यकत्वमिति भावः । परिनिष्ठाश्रद्धापदयोरेक एवार्थ इति । स्तुतिभिः श्रौतैः पौराणिकैर्वा स्तोत्रादिभिरधिकारानुरूपेण ॥ * ॥ श्रद्धेति चतुष्कम् । अभ्यधिका मत्पूजातोऽपि तत्र मम संतोषविशेषात् । सर्वभूतेष्वपि दृश्या ममैव मतिस्तत्रतत्र स्फुरणम् । सर्वकामेत्यादिकं कथानिष्ठासंपादनद्वारा कारणम् । अमृतरूपेति—सत्कथायास्सर्वस्यामृतत्वेप्यतिमाधुर्यवती रासादिसंबन्धिनीत्यर्थः । श्रद्धातिश्रद्धा ॥२०॥ परिचर्यायां पूजासामग्रीसंपादने प्रदक्षिणायां वा "सामग्र्यामर्चने चैव परिचर्या प्रदक्षिणे" इति निरुक्तिः । सर्वांगैर्न्यासध्यानार्चनजपादिरूपैः । परिचर्यायामर्चने । आदरः सर्वप्रकारेण मदर्चने उत्साह इति वार्थः । यद्वा—सर्वांगैः 'दोर्भ्यां पदाभ्यां जानुभ्याम्' इत्याद्युक्तैरभिवंदनं न तु केवलं करसंपुटादिनैवेत्यर्थः । मद्भक्तानामधिकार्चनेऽप्यन्यत्र मन्मतिः कार्येत्याह—सर्वभूतेष्विति ॥ * ॥ अभ्यधिका मत्संतोषविशेषं ज्ञात्वा मत्पूजातोपीत्यर्थः ॥ २१ ॥ लौकिकी क्रिया स्नानाहारविहाररूपा सापि मदर्थेषु मत्पूजनाद्यर्थमेव कार्या न तु मलाद्यपकर्षणाद्यर्थम् । यद्वा—अंगचेष्टा गीतनृत्यादिरूपा मदर्थेषु मन्निमित्तं कार्या । अहमर्थो धनं येषां ते मदर्था अकिंचनभक्तास्तेषु, तत्सेवार्थं वांगचेष्टा—आसनास्तरणजलपाकाद्यानयनरूपा कार्येति लौकिकेन वचसा प्राकृतादिभाषयापि । मयीति सर्वकामविवर्जनमित्यत्राप्यन्वेति । मयि मन्निमित्तं सर्वभोगत्यागः ॥ * ॥ अंगचेष्टा दंतधावनादिर्दैहिकी क्रियापि मदर्थे मत्सेवार्थम् । वचसा अपभ्रंशवाक्येनापि गीतबंधेन मद्गुणकथनम् ॥ २२ ॥ यद्वा—मदर्थे मत्प्रीत्यर्थमर्थस्य धनस्य त्यागो दानं न तु कामनान्तरार्थम् । इत्यर्थ इति—मदर्पणबुद्ध्या कृतं कर्म मत्प्रीतिजनकं भवतीति भावः ॥ * ॥ मदर्थे मदीययात्रोत्सवाद्यर्थे अर्थपरित्यागः श्रीगुरुविप्रवैष्णवादिसंप्रदानकः । यद्वा—भजनविरोधिनोर्थस्योपेक्षा । भोगस्य स्त्रीसंभोगादेरित्यादि तैः । दत्तं दानम् । हुतं ब्राह्मणवैष्णवमुखे घृतपक्वान्नप्रक्षेपः, विष्णवे स्वाहेति संस्कृतवह्निमुखे तिलाज्यनिःक्षेपो वा । जप्तं

एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥ मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २४ ॥ यदात्मन्यर्पितं चित्तं शांतं सत्त्वोपबृंहितम् ॥ धर्मज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २५ ॥ यदर्पितं तद्विकल्पे इंद्रियैः परिधावति ॥ रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २६ ॥ धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ॥ गुणेष्वसंगो वैराग्यमैश्वर्यं चाणिमादयः ॥ २७ ॥ उद्धव उवाच ॥ यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ॥ कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥ २८ ॥

भक्तिः प्रेमलक्षणा संजायते । अस्य भक्तस्यान्यः कोऽर्थः साधनरूपः साध्यरूपो वावशिष्यते । सर्वोऽपि स्वत एव भवतीत्यर्थः ॥ २४ ॥ तत्र किं बहुना चित्तमेवांतर्बहिर्निष्ठमर्थानर्थयोः कारणमित्याह यदात्मनीति द्वाभ्याम् । यदा आत्मनि मयि ईश्वरे चित्तमर्पितं तदा पुमान् धर्मादीन्प्राप्नोत्येव ॥ २५ ॥ एतदेव व्यतिरेकेण द्रढयति । यद्यदा तच्चित्तं विकल्पे देहगृहादावर्पितं सद्विषयेषु परिधावति तदाधिकं रजस्वलमसन्निष्ठं च भवति । ततश्च विपर्ययमधर्मादिकं विद्धि ॥२६॥ स्वाभिप्रेतान्धर्मादीन् व्याचष्टे । धर्मो मद्भक्तिकृत् । यतः स एव प्रोक्तः प्रकृष्ट उक्तः शास्त्रेषु ॥ २७ ॥ धर्मादीनां महाजनप्रसिद्धानामन्यथा व्याख्यातत्वाद्यमादिष्वपि संख्यातः स्वरूपतो वा किंचिद्वैलक्षण्यं स्यादि

सहस्रलक्षादिभगवन्नाममंत्रजपः । एतत्त्रितयमेवेष्टं भक्तानां यागः । मदर्थं मत्प्राप्त्यर्थम् । व्रतमेकादश्युपवासादिकं यत्तदेव भक्तानां तपः ॥ २३ ॥ इत्यर्थ इति—मद्भक्तस्य नार्थाय कश्चिद्व्यपाश्रयणीयो भवतीति भावः । आत्मनिवेदिनां देहादौ मदीयत्वात्मीयत्वाध्यासमकुर्वताम्, आत्मनि चेतसि वेदिनां मां जानतां वा, आत्मानं बुद्धिं निवेदितुं मय्यर्पयितुं शीलं येषां तेषां वा । भक्तेरधिको न कोऽप्यर्थोऽस्ति यत्रास्य कामो जायेत निधौ लब्धे काणवराटिकायां न कस्यापि प्रीतिर्भवतीत्याशयः ॥ * ॥ अस्य भक्तस्य कोन्योर्थोऽवशिष्यते परमपुरुषार्थशिरोमणौ तत्र सर्वसुखान्तर्भावादिति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—अस्य निष्कामभक्तस्य कोन्योर्थोऽतःपरं किं फलमवशिष्टं भवति । किन्तु तदेव पुनःपुनरमुत्र कथाश्रवणादिकमेव फलम् । तेन ज्ञानिनो यथासाध्यप्राप्तौ सत्यां साधनस्य त्याग उक्तस्तथा भक्तस्य साध्यभक्तिप्राप्तौ सत्यां साधनभक्तेः श्रवणकीर्तनादिकाया नैव त्यागः, प्रत्युत प्रेमप्रसररूपायाः साध्यभक्तेरनुभावरूपा श्रवणकीर्तनादिभक्तिः पूर्वतोपि सहस्रगुणिता भवतीति ॥ २४ ॥ चित्तमेव शुभाशुभहेतुरित्याह—किं बहुनेत्यादिना ॥ * ॥ अस्यां तटस्थलक्षणं दर्शयन् धर्मादयश्च तदनुगता भवंतीत्याह—यदेति । 'यस्यास्ति भक्तिर्भगवत्यकिञ्चना' इत्यादेरिति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—कोन्योर्थोस्यावशिष्यत इत्याक्षेपमय्या भगवदुक्तेरियमुक्तलक्षणा केवला निर्गुणा भक्तिर्ज्ञानांगत्वेन न व्याख्येया ज्ञानाद्यंगभूता भक्तिस्त्वतोऽन्या सात्त्विकी वर्तत एव तयैव सकामभक्तः स्वापेक्षितं धर्मज्ञानादिकं प्राप्नोत्येवेत्याह—यदिति । यच्छान्तं चित्तमात्मनि परमात्मनि मय्यर्पितं सात्त्विक्या भक्त्या मद्विषयीकृतं भवति तद्धर्मादियुक्तमित्यर्थः ॥ २५ ॥ एतदेव ईश्वरार्पितचेतसा धर्मादिप्रापणमेव । व्यतिरेकेण तद्भावेन ॥ * ॥ व्यातिरेकमाह—असन्निष्ठं निषिद्धविषयासक्तं च भवति तच्चित्तं विपर्ययं मत्प्रेमरहितं विद्धि । अधर्मज्ञानमवैराग्यमनैश्वर्यं चाप्नोतीत्यर्थः ॥ २६ ॥ ऐकात्म्यम्—'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुत्युक्तसर्वत्रेश्वरदर्शनम् । गुणेष्वसंगः गुणतत्कार्यदेहादावनध्यासो न तु कुटुंबादित्यागमात्रम् । योगसाध्यमणिमादिरूपमेवैश्वर्यं न तु युद्धादिसाध्यराज्यादि ॥ * ॥ मद्भक्तिकृदेव धर्मः प्रकर्षेणोक्तो नान्यः । ततः स एव मुख्यवृत्त्या धर्मशब्दवाच्य इत्यर्थः । एवमेव भक्तावपि धर्मशब्दः । एवं धर्मैरितीति भावः । ऐकात्म्यं सर्वेषां परमस्वरूपं मद्रूपेणैकरूपत्वम् । यद्वा—एक एव सर्वेषामात्मा योहं स्वयं भगवान्स एकात्मा, स्वार्थे ष्यञ् । तद्दर्शनमेव ज्ञानं प्रोक्तमिति पूर्ववत् । "मन्निमित्तं कृतं पापमपि धर्माय जायते । मामनादृत्य धर्मोपि पापं स्यान्मत्प्रभावतः ॥" 'यत्करोषि,' 'कुर्वाणा यत्र कर्माणि' इत्यादिवचनजातेभ्यः ॥२७॥ लोकविलक्षणपदार्थश्रवणोत्सुकः पुनरन्यपदार्थान्पृच्छतीत्याह—धर्मादीनामिति । तद्विशेषं यमादिनिष्ठविशेषं ज्ञातुमिच्छुः ॥ * ॥ ० ॥ २८ ॥

किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते ॥ कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा॥२९॥पुंसः किंस्विद्बलं श्रीमन्भगो लाभश्च केशव॥ का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च॥३०॥कः पंडितः कश्च मूर्खः कः पंथा उत्पथश्च कः ॥ कः स्वर्गो नरकः कः स्वित्को बंधुरुत किं गृहम् ॥ ३१ ॥ क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ एतान्प्रश्नान्मम ब्रूहि विपरीतांश्च सत्पते ॥ ३२ ॥ श्रीभगवानुवाच ॥ अहिंसा सत्यमस्तेयमसंगो ह्रीरसंचयः ॥ आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ ३३ ॥ शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् ॥ तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ ३४ ॥ एते यमाः सनियमा उभयोर्द्वादश स्मृताः ॥ पुंसामुपासितास्तात यथाकामं दुहंति हि ॥ ३५ ॥ शमो मन्निष्ठता बुद्धेर्दम इंद्रियसंयमः ॥ तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥ ३६ ॥

त्येवं संभावनया तद्विशेषं जिज्ञासुः पृच्छति यम इति पंचभिः ॥ २८ ॥ इष्टमभ्यर्हितं धनं च किम् ॥ २९ ॥ परेति विद्यादीनां विशेषणम् । श्रीर्मंडनम् ॥ ३० ॥ ३१ ॥ प्रश्नान्पृष्टानर्थान् । विपरीतानशमादीन् ॥ ३२ ॥ यमनियमानाह अहिंसेति त्रिभिः । अस्तेयं मनसाऽपि परस्वाग्रहणम् । असंचयो विषयासंकल्पः । आस्तिक्यं धर्मे विश्वासः ॥ ३३ ॥ शौचं बाह्यमाभ्यंतरं चेति द्वयम् । अतो द्वादश नियमाः । श्रद्धा धर्मादरः ॥ ३४ ॥ उभयोः श्लोकयोर्ये स्मृतास्ते यमा नियमाश्च । यद्वा उभयोः प्रवृत्तनिवृत्तयोः । मुमुक्षोर्यमा मुख्याः सकामस्य नियमा मुख्याः स्मृता इत्यर्थः । अत्र हेतुमाह । हि यस्मादुपासिताः सेविताः संतः पुंसां प्रवृत्तानां निवृत्तानां च यथाकामं कामानुसारेण मोक्षमभ्युदयं च दुहंतीति॥ ३५॥मुमुक्षोरुपादेयान् शमादीन्हेयांश्च दुःखादीन्महाजनप्रसिद्धेभ्यो विलक्षणानाह शम इत्यादिना यावत्समाप्ति । एतेनैव तद्विपरीता अशमादयोऽप्युन्नेयाः । शमो मन्निष्ठता बुद्धेर्न तु शांतिमात्रम् । दम इंद्रियसंयमो न चौरादिदमनम्।तितिक्षा विहितदुःखस्य संमर्षः सहनं न भारादेः। जिह्वोपस्थयोर्जयो वेगधारणं

अभ्यर्हितं पूजितम् ॥*॥०॥२९॥परा उत्कृष्टा । विद्यादीनां विद्याह्रीश्रीणाम् । मंडनं भूषणम् ॥*॥०॥३०॥ पंथाः सरलः । उत्पथो वक्रः ॥*॥०॥३१॥०॥*॥ प्रश्नोत्तरैरेवैतद्विपरीतास्स्वत एवोक्ता मया ज्ञाताश्च भविष्यंतीति भावः । प्रश्नानित्यस्य कर्मसाधनत्वात् पृष्टार्थानिति व्याख्यातम्, प्रष्टव्यानिति क्वचित् ॥ ३२ ॥ ० ॥*॥ अहिंसेति त्रिकम् । "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" इति पतंजलिसूत्रे पंचैवोक्ता अत्र संख्यातो वैलक्षण्यं द्वादशेति ॥ ३३ ॥ आतिथ्यमतिथिसेवा । परार्थेहा परोपकारार्थं देहव्यापारः ॥ * ॥ एवम् " शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः " इत्यत्रापि संख्यावैलक्षण्यम् ॥ ३४ ॥ श्लोकस्य प्राकृतत्वादुभयो रित्यनेन तदर्थतेति चेदाह—यद्वेति । मुमुक्षोरिति—" यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् " इत्युक्तेः स्मृता विहिताः । इत्यर्थ इति व्याख्येयम् । अत्र विहितत्वे । अभ्युदयं धर्मं ज्ञानं भक्तिं चेत्यर्थः ॥ * ॥ ० ॥ ॥ ३५ ॥ एतेनैव शमादिव्याख्यानेनैव । तद्विपरीताः शमादिविपरीताः । आदिना जारादिग्रहः । विदितदुःखस्य कर्मोपस्थापितक्लेशस्य । आदिना श्यालिकादिगालिग्रहः । अनुद्वेगो भयाभावः ॥ * ॥ अन्तःकरणस्य स्वनिष्ठत्वमेव शममुक्त्वा अन्तःकरणाधीनानामिंद्रियादीनां च स्वस्वसंबंधेनैव यमादिकं मेने मन्निष्ठबुद्धिं विना केवला शांतिर्विगीतैव । इन्द्रियसंयम इति । स्वेन्द्रियदमनं विना स्वशिष्यादिदमनं हासास्पदमेव । दुःखसंमर्षः परावमानोत्थदुःखस्य शास्त्रविहितस्य ब्रह्मचर्यादिधर्मसेवनादेस्तस्यापि क्लेशदत्वेन दुःखत्वमेव, स्वेच्छयैव दुःखसहनं त्वार्हतानामिव मौढ्यमेव तत्प्रणीतशास्त्राणां वेदविरुद्धत्वादशास्त्रत्वमेवेति । जिह्वोपस्थजयं विना

दंडन्यासः परं दानं कामत्यागस्तपः स्मृतम् ॥ स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३७ ॥ ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ॥ कर्मस्वसंगमः शौचं त्यागः संन्यास उच्यते ॥ ३८ ॥ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ॥ दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम् ॥ ३९ ॥ भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ॥ विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ॥ ४० ॥

धृतिर्न त्वनुद्वेगमात्रम् ॥ ३६ ॥ दंडो भतद्रोहस्तस्य त्यागो दानं न धनार्पणम् । कामत्यागो भोगोपेक्षा तपो न कृच्छ्रादिः । स्वभावो वासना तस्य विजयः प्रतिबंधः शौर्यं न विक्रांतिः । समं ब्रह्म तस्य दर्शनमालोचनं सत्यविषयत्वात्सत्यं न यथार्थभाषणमात्रम् ॥ ३७ ॥ अन्यच्च । ऋतं सूनृता सत्या प्रिया च वाक् । एवं च ऋत सत्ययोः स्फुट एव विवेकः । क्रमप्राप्तं त्यागं व्याख्यातुमादौ ततोऽर्थभेदेन शौचं व्याचष्टे । तस्यापि मलत्यागरूपत्वे त्यागाभेदप्रतीतेः । कर्मस्वसंगमोऽनासक्तिः शौचं त्यागस्तु संन्यास इति तयोर्भेद इत्यर्थः ॥ ३८ ॥ नृणामिष्टं धनं धर्मो न पश्वादिसाधारणम् । भगवत्तमः परमेश्वरोऽहमेव यज्ञः मद्बुद्ध्या यज्ञोनुष्ठेयो न क्रियाबुद्ध्येत्यर्थः । यज्ञार्थं दानं दक्षिणा सा च ज्ञानोपदेशो न हिरण्यादिदानम् । तेन हि यज्ञरूपो विष्णुः प्राप्यते । दुर्दमनं बलं तच्च मनोदमनहेतुत्वात्प्राणायाम इति ॥ ३९ ॥ लाभं व्याचिख्यासुः प्रथमं भगं ततो भेदेन व्याचष्टे । लोके तयोरभेदप्रसिद्धेः । भगो भाग्यं तच्च मे ऐश्वरो भावो मदीयमैश्वर्यादिषाड्गुण्यमित्यर्थः । उत्तमो लाभस्तु मद्भक्तिर्न

न्यत्र धीरता व्यर्थैव ॥ ३६ ॥ द्रोहो जिघांसा । आदिना चान्द्रायणपराकादिग्रहः । यद्वा—अशास्त्रीयप्रवृत्तिनिरोधेन शास्त्रीये प्रवृत्तिः स्वभावविजयः ॥ * ॥ समदर्शनम् ' नारायणपराः सर्वे ' इत्याद्युक्तरीत्या भोगान पेक्षा । एकादशी कार्तिकव्रतादौ या विहिता सैव तपः । स्वभावः स्वीयपाण्डित्यादिप्रकाशनं तस्य स्वाभाविकयोः कामक्रोधाद्यो राजसतामसयोर्भावयोश्च विजयः । प्रतिबन्धे शौर्यम् । समदर्शनम् ईर्ष्यासूयादिवैषम्यपरित्या गेन सर्वत्र स्वसुखदुःखालोचनम् । " आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि वा दुःखम् " इति श्रीगीतोक्तेः ॥ ३७ ॥ वाग्विषयमन्यदप्याह—अन्यच्चेति । " सूनृतं मंगलेपि स्याप्रियसत्ये वच स्यपि " इति मेदिनी । तयोः शौचत्यागयोः । इत्यर्थ इति—न तु त्यागरूपत्वेनोभयोरैक्यमिति भावः ॥ * ॥ केवलसत्यभाषणे तु दोषवतां दोषकीर्तनमपि प्रसज्येत तस्मिंश्च सति निन्दा स्यात् सा च श्रोतॄणां सतामप्रियेति तस्याः सूनृतवाणीत्वाभावः स्यात् । पूर्वाचार्यास्तु सत्यं यथार्थाचरणम् 'ऋतं यथार्थभाषणम्' इत्यनयोर्लक्षणं चक्रुः । पूर्वमपृष्टस्य त्रेतायुगधर्मस्य शौचस्य कर्मस्वनासक्तिः शौचमिदं लक्षणम् " अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः " इति न्यायात् । एवं भगो ममैश्वरो भाव इत्यत्रापि ज्ञेयम् । त्यागः पुत्रकलत्रादिषु ममतात्यागः, न तु भोगमात्रत्यागः ॥ ३८ ॥ इष्टं इष्टसाधनम् । आदिना स्वर्णादिग्रहः । इत्यर्थ इति— " यज्ञो वै विष्णुः " इति श्रुतेर्विष्ण्वाराधनमेव यज्ञ इति भावः । आदिना गवादिग्रहः । " प्राणस्पंदनिरोधश्चेत्युपाया मनसो जये ": इत्युक्तेः ॥ * ॥ टीकायां सा च ज्ञानोपदेश इति—ज्ञानोपदेशो यस्मात्सः । ज्ञानोपदेशप्राप्तिहेतुराचार्ये भक्तिविशेष इत्येवार्थः । न हि यजमानो ज्ञानोपदेशं करोति यथा हिरण्यादिदक्षिणामिति । यद्वा भगवत्तमः स्वयं भगवद्रूपः श्रीकृष्णोऽहमेव यज्ञः यज्ञज्ञानेनैव सर्वयज्ञफलप्राप्तेः । " सर्वे वेदाः सर्वविद्याः सशास्त्राः सर्वे यज्ञाः सर्व इज्यश्च कृष्णः । विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन्सर्वयज्ञाः समाप्ताः ॥ " इति महाभारतोक्तेः । तस्मिंश्च ज्ञाने यः सन्देशः संवादः आचार्यानुकूलं वचः तदाज्ञानु ष्ठानं वा स एव दक्षिणा तत्संतोषकरत्वाज्ज्ञानपर्यायकत्वाच्चेति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—अहं भगवत्तमो वसुदेवनंदन एव यज्ञः मज्जन्मयात्राद्युत्सव एव यज्ञबुद्ध्यानुष्ठेय इत्यर्थः, न तु नश्वरफलोश्वमेधादिः । ज्ञान स्योत्सवान्ते मत्कीर्तनादिस्सानुभवस्य सन्देशः स्वेष्टमित्रेषु ज्ञापनैव दक्षिणा न तु धनवस्त्राद्यर्पणम् । निर्हेतुकपरदुःखप्रहाणेच्छा दयेति लोकप्रसिद्धलक्षणत्वान्न विलक्षणलक्षणं कृतम् ॥ ३९ ॥ ततो लाभात् । तयो

श्रीर्गुणा नैरपेक्ष्याद्या सुखं दुःखसुखात्ययः ॥ दुःखं कामसुखापेक्षा पंडितो बंधमोक्षवित् ॥ ४१ ॥ मूर्खो देहाद्यहंबुद्धिः पंथा मन्निगमः स्मृतः ॥
उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४२ ॥ नरकस्तमउन्नाहो बंधुर्गुरुरहं सखे ॥ गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४३ ॥
दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेंद्रियः ॥ गुणेष्वसक्तधीरीशो गुणसंगो विपर्ययः ॥ ४४ ॥

पुत्रादिः । विद्या चात्मनि प्रतीतस्य भेदस्य बाधो न ज्ञानमात्रम् । अकर्मसु जुगुप्सा हेयत्वदर्शनं ह्रीर्न लज्जामात्रम्॥ ४० ॥ गुणा एव श्रीर्मंडनं न किरीटादि । दुःखसुखयोरत्ययोऽतिक्रमोऽननुसंधानं सुखं न भोगः । विषयभोगापेक्षैव दुःखं नाग्निदाहादि । बंधान्मोक्षं द्वयं वा यो वेत्ति स पंडितो न विद्वन्मात्रम् ॥ ४१ ॥ अहंबुद्धिरित्युपलक्षणम् । देहगेहादिष्वहं ममेत्यभिमानवान्मूर्ख इत्यर्थः । मन्निगमो मां नितरां गमयति प्रापयति यो निवृत्तिमार्गः स तु पंथाः सन्मार्गो न कंटकादिशून्यः । चित्तविक्षेपः प्रवृत्तिमार्गः । स उत्पथः कुमार्गो न तु चौराद्याकुलः । सत्त्वगुणस्योदय उद्रेकः स्वर्गो नेंद्रादिलोकः ॥ ४२ ॥ तमस उन्नाह उद्रेकः स नरको न तामिस्रादिः । गुरुरेव बंधुर्न भ्रात्रादिः । स चाहमेव यथाहं जगद्गुरुः । "एक एव परो बंधुर्विषमे समुपस्थिते ॥ गुरुः सकलधर्मात्मा यत्राकिंचनगो हरिः ॥" इति । ससाधनं भोगायतनं गृहं तच्च मानुष्यं मानुषरूपं शरीरमेव न हर्म्यादि । गुणैः संपन्न आढ्य उच्यते न धनी ॥ ४३ ॥ असंतुष्टो यः स दरिद्रो न निःस्वः । योऽजितेंद्रियः स कृपणः शोच्यो न दीनः । विषयेष्वनासक्तधीर्यः सः ईशः स्वतंत्रो न राजादिः । गुणसंगो गुणेषु संगो यस्य स विपर्ययोऽनीशः । एतच्च शमादिविपर्ययोपलक्षणार्थम् ॥ ४४ ॥

र्भगलाभयोः । इत्यर्थ इति—विषयाद्यर्थाधीनेतेति भावः । आदिना स्त्रीस्वर्णादिग्रहः ॥*॥ मम ऐश्वरो भावो ममैवेश्वरत्वं भगः न तु जीवानां ब्रह्मेन्द्रादीनामीश्वरत्वमित्यर्थः । अपृष्टस्य भगस्य व्याख्याने हेतुमाह—लोके तयोर्लाभभगयोः । भावोत्र प्रकृतिजन्यबोधे प्रकारीभूतो धर्मविशेषः, स चैश्वर्यादिषाड्गुण्यमेवेति तथा व्याख्यातम् भेदो मर्त्योहं देवोहं बालोहं युवाहमित्यादिभेदस्तस्य बाधः । 'त्रिगुणमयः पुमानिति भिदा यदबोधकृता' इति न त्वधीता व्याकरणाद्या । अकर्मसु पापेषु जुगुप्सा लोकनिन्दोत्थैव । तत्राप्रवृत्तिहेतुर्ह्रीः ॥ ४० ॥ आद्यपदेनादैन्यादिग्रहः । आदिना कटककुंडलादिग्रहः । आदिना शस्त्रपातादिग्रहः । बंधस्वरूपज्ञानं विना ततो मोक्षानुपपत्तेराह—द्वयं वेति, बंधं मोक्षं च ॥ * ॥ ० ॥ ४१ ॥ आदिना स्त्रीपुत्रादिग्रहः । इत्यर्थ इति—न तु शास्त्रानभिज्ञ एव मूर्ख इति भावः । सन्मार्गः वेदोक्ताचार इत्यर्थः । आदिना शर्करादिग्रहः । आदिना व्याघ्रादिग्रहः । उद्रेकोऽभिवृद्धिः । आदिना ब्रह्मादिग्रहः ॥ * ॥ ० ॥ ४२ ॥ आदिना कुंभीपाकादिग्रहः । आदिना तत्पुत्रादिग्रहः । विषमे संकटे । सकलधर्मात्मा सर्वधर्मज्ञः । अनेन संकटानुरूपधर्मोपदेशेन तत्तारकः । यत्र यस्मिन्गुरौ सति हरिरप्याप्यते किमन्यदित्यर्थः । सर्वार्थसाधकत्वान्मानुषं गृहम् । आदिनोपकार्यादिग्रहः । गुणैः सत्यशौचादिभिः ॥ * ॥ **दीपिका**—विषमे संसारलक्षणे कष्टे समुपस्थिते प्राप्ते सति । सकलधर्मात्मा सर्वधर्मोपदेष्टा । यत्र यस्मिन् गुरौ तुष्टेऽकिंचनलभ्यो हरिर्लभ्यत इति । तुष्ट इति च शेषः ॥ ४३ ॥ निःस्वो निर्धनः । "दरिद्रस्य परा मूर्तिर्याच्ञा न द्रविणाल्पता । अकौपीनधरश्शंभुस्तथापि परमेश्वरः ॥" इत्युक्तेः । दीनो रंकः । आदिना धनिकादिग्रहः । गुणेषु विषयेषु संग आसक्तिः । एतच्चानीशलक्षणकथनं च ॥ * ॥ एतच्चेशविपर्ययकथनम् ॥ ४४ ॥

एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः ॥ किं वर्णितेन बहुना लक्षणं गुणदोषयोः ॥ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥ ४५ ॥ इति श्रीमद्भा० म० एकादशस्कंधे भगवदुद्धवसंवादे यमादिनिरूपणं नामैकोनविंशोऽध्यायः ॥ १९ ॥ उद्धव उवाच ॥ विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ॥ अवेक्षतेऽरविंदाक्ष गुणं दोषं च कर्मणाम् ॥ १ ॥ वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ॥ द्रव्यदेशवयःकालान्स्वर्गं नरकमेव च ॥ २ ॥

उपसंहरति । एत इति । साधु मोक्षोपयोगितया । एतच्च सर्वं गुणदोषयोर्विवेकायोद्धवेन पृष्टमिति तयोः संक्षेपतो लक्षणमाह । किं बहुना वर्णितेन गुणदोषयोर्लक्षणमेतावदेव तदाह । गुणदोषयोर्दृशिर्दर्शनं दोषः । गुणस्तु तदुभयदर्शनविवर्जितः स्वभाव इति ॥ ४५ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् ॥ गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥ १ ॥ "गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः" इत्युक्तं तदाक्षिपति विधिश्चेति पंचभिः । विधिश्च प्रतिषेधश्चेश्वरस्य तव निगम आज्ञारूपो वेदः । स च विधेयानां प्रतिषेध्यानां च कर्मणां गुणं दोषं च पुण्यपापफलरूपमवेक्षते ॥ १ ॥ उत्तमाधमभावेन तदधिकारिणां वर्णानामाश्रमाणां च विकल्पं भेदं च गुणदोषरूपमवेक्षते । प्रतिलोमानुलोमजं च गुणं दोषं च तथैवावेक्षते प्रतिलोमजा उत्तमवर्णासु स्त्रीषु हीनवर्णेभ्यः पुरुषेभ्यो जाताः सूतवैदेहकादयः । अनुलोमजास्तूत्तमवर्णेभ्यः पुरुषेभ्यो हीनवर्णासु स्त्रीषु जाता मूर्धावसिक्तांबष्ठादयस्तेषां च । "असत्संतस्तु विज्ञेयाः प्रतिलोमानुलो

एतत्पूर्वोक्तम् । दोषो भेदभानापादकत्वात् । उभयोर्मिथ्यात्वानुसन्धानेन वर्जनं गुणः । उभयदर्शनं गुणदोषदर्शनम् ॥ * ॥ मोक्षोपयोगितया मोक्षसाधनत्वेन एवं तत्प्रश्नमनुसृत्यैव प्रपञ्चितम् । एतच्च प्रायो मम नातिसुहृद्यमिति व्यंजयन्परमस्वहृद्यं पूर्वोक्तयमादिफलभूतं गुणं लक्षयन्व्यतिरेकज्ञाय दोषमपि लक्षयति–किमिति । बहुना व्यवहारमयत्वादसारप्रचुरेण परमार्थप्रचुरमयत्वान्मुख्यमेव गुणदोषयोर्लक्षणमित्याह–गुणेति । गुणो विहितत्वं दोषो निषिद्धत्वं तत्तयोर्दृशिर्विवेको दोषः । किंतूभयवर्जितो यः स्वभावविशेषः स गुणः तत्तद्दृष्टिमतिक्रम्य स्वभावत एव परमश्रेयसी प्रवृत्तिर्गुण इत्यर्थः । एतदपेक्षयोभयोरप्यपकृष्टत्वात् ॥ ४५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्ध एकोनविंशोऽध्यायः ॥ १९ ॥ अधिकारिणां विभागतः पार्थक्येन ( १ ) । स च वेदः । विधेयानां अग्निहोत्रादीनां प्रतिषेध्यानां कलंजभक्षणादीनां च अवेक्षते । विहितस्य पुण्यजनकत्वेन तत्करणे गुणं निषिद्धस्य पापजनकत्वेन तत्करणे दोषं च वक्तीत्यर्थः ॥ * ॥ 'गुणदोषदृशिः' इत्यादि यदुक्तं तस्य भगवदभिप्रेतमर्थं जानन्नपि तन्मुखेनैव तस्य विवरणं नानार्थविशेषसहितं श्रोतुकामस्तत्र विप्रतिपद्यमान इवाह–विधिश्चेति पंचभिः । विधिर्निषेधश्चेश्वरस्य तवाज्ञारूपो वेद एव । विधिर्विधेयानामग्निहोत्रादीनां कर्मणां गुणमवेक्षते प्रतिपादयति । प्रतिषेधश्च निषेध्यानां कलंजभक्षणादीनां दोषं प्रतिपादयति । गुणदोषमिति समस्तपाठे चोऽनर्थकः । हे अरविंदाक्ष त्वमेव मे बुद्धिदोषं वारय शीतलदृष्टित्वादिति भावः ॥ १ ॥ तदधिकारिणां कर्माधिकारिणाम् । गुणदोषरूपं श्रेष्ठाश्रेष्ठत्वरूपम् । आदिना चण्डालक्षत्रादयो ग्राह्याः । आदिनोग्रादिग्रहः । पूर्वमुक्ता अप्यत्र सौगम्यार्थमाह पुनः–" शूद्राविशोस्तु करणोंबष्ठो वैश्याद्विजन्मनोः । शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः ॥ माहिष्योर्यार्क्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः । ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ॥ स्याच्चांडालस्तु जनितो ब्राह्मण्यां वृषलेन यः । क्षत्रायां ब्राह्मणाज्जातो नाम्ना मूर्द्धावसिक्तकः ॥ " इत्यमरादेः । तेषां प्रतिलोमानुलोमजानां मध्ये प्रतिलोमजा असंतः श्रौतकर्मानधिकारित्वात् । अनुलोमजाः सन्तः श्रेष्ठास्तेषां किञ्चित्कर्माधिकारित्वात् । यथा–" निषादस्थपतिं याजयेत् " इत्यादिश्रुतेः । निषादस्तु–" ब्राह्मणाच्छूद्रकन्यायां

गुणदोषभिदादृष्टिमंतरेण वचस्तव ॥ निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥ ३ ॥
पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥

मजाः " इति गुणदोषौ । द्रव्यादीन्कर्मार्हेतानर्हताभ्याम् । स्वर्गं नरकं च तत्फलतया गुणदोषरूपमेवावेक्षते । एतच्चोत्तराध्याये प्रपंचयिष्यते ॥ २ ॥ तथापि प्रस्तुते किमायातमत आह । गुणदोषेति 'गुणदोषदृशिर्दोषः' इति निराकृतत्वाद्गुणदोषभिदादृष्टिमंतरेण तां विना निषेधविधिलक्षणं कर्मकांडगतं तव वचः कथम् । तच्च वचोंतरेण नृणां निःश्रेयसं कथं स्यात्तत्रापि "श्रोतव्यो मंतव्यः" इति साधनविधेः "नानुध्यायेद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्" इत्यादिनिषेधस्य चावश्यकत्वादिति भावः । यद्वा गुणदोषभिदादृष्टिरूपं निषेधविधिलक्षणं तव वचो विनेति सामानाधिकरण्यमेवास्तु । यद्वा । गुणदोषभिदादृष्टिमंतरेण निषेधविधिलक्षणमपि वचः कथं नु तत्त्वमस्यादिवाक्यवन्निःश्रेयसपरं स्यात् । सर्वस्य वेदस्य तत्परत्वांगीकारादित्यर्थः ॥ ३ ॥ ननु पितरो देवाश्च सर्वज्ञाः प्रत्यक्षतो दृष्ट्वा मनुष्येभ्यः कथयिष्यंति नेत्याह ।

निषादो नाम जायते" इत्युक्तेः । द्रव्यं धर्मार्जितं गुणरूपम्,तद्विपरीतं दोषरूपं देशः कुरुक्षेत्रादिरपरः कीकटादिः, वयो यथा "जातपुत्रः कृष्णकेशः" इत्यादि श्रुत्युक्तमपरं च बाल्यादि,कालो वसंतादिरपरो निशीथादिः,गुणदोषावत्र क्रमतो ज्ञेयौ । एतत् गुणरूपनिरूपणम् । उत्तराध्याये वक्ष्यमाणाध्याये ॥ * ॥ तदधिकारिणां कर्माधिकारिणां वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां भेदमपि वेद । उत्तमाधमरूपतया गुणदोषरूपत्वेन अयमुत्तमोऽयमधम इति प्रतिपादयन्ति ॥ २ ॥ यद्यपि गुणदोषं विध्यादिरपेक्षते तथापीति निराकृतत्वादपास्तत्वात् । तां विना गुणदोषदृष्टिं विना । काण्डं वेदभागः । कथम्, गुणदोषदृष्टिं विना विधिनिषेधकथनस्यैवानुपपत्तेः । तच्च विधिनिषेधलक्षणमपि । वचोंतरेण कथनं विना निश्श्रेयसं कल्याणापादकं कथं भवेन्न कथमपीत्यर्थः । तत्रापि वचस्यपि । इति भात्र इति–वाक्यस्य श्रवणादिविधिनिषेधाभ्यां गुणदोषयोर्निश्चितत्वादित्याशयः । एतेन विचारोपयोगिवाक्यश्रवणादिर्गुणस्तदनुपयोगितच्छ्रवणादिर्दोष इत्यायातम् । क्लिष्टान्वयापेक्षया सरलान्वयस्य न्याय्यत्वादाह–यद्वेति । इहापि विना शब्दावृत्तिदर्शनादस्वारस्यं मत्वाह–यद्वेति । गुणदोषदृष्टिमादायैव वचसा श्रेयस्त्वमन्यथा विधिनिषेधयोर्निर्विषयत्वं स्यादिति भावः । यथा तत्त्वमस्यादीनां साक्षान्निःश्रेयसपरत्वं तथा विधिनिषेधादिवाक्यानामपि विहितकारणनिषिद्धत्यागद्वारांतःकरणशोधकत्वेन निःश्रेयसपरत्वमेवेति । इत्यर्थ इति–" वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे " इत्युक्तेरिति भावः ॥ * ॥ तथापि गुणदोषावेक्षणेपि । प्रस्तुते गुणदोषदृशिर्दोष इति सिद्धान्ते । निराकृतत्वाद्गुणदोषदर्शनस्य निषिद्धत्वात् । गुणदोषदर्शनं विना विधिनिषेधरूपं तव वचः कथमिति गुणदर्शनं विना विधौ प्रवृत्त्यसंभवात्, निषेधदर्शनं विना निषिद्धनिवृत्त्यसंभवात्रेत्यर्थः । ननु ज्ञानकाण्डे मया गुणदोषदर्शनं निषिद्धं न तु कर्मकाण्डे इत्याशंक्याह–तत्रापि ज्ञानकाण्डेपि । साधनविधेः श्रवणादिसाधनस्य । हि यतः । तत् बहुशब्दध्यानं वाचो विग्लानिकरं नानामतोपपादनेन समाधिच्यावकमित्यर्थः । पूर्वार्धे वाक्यभेदमाशंक्याह–यद्वेति । अंतरेणैवेत्यस्य योजनां विनेति व्याख्यातं तां तच्च विना निःश्रेयसं कथं स्यादित्यर्थः । अत एकप्रतिपादकत्वात् । वाक्यभेदाभावेन सामानाधिकरण्येन न तु वैयधिकरण्येन । तच्च वच इत्यादिकं पुनरावर्तत इत्येवकारार्थः । उद्धवस्य शिष्यस्य जिज्ञासैव युक्ता न तु प्रतिवादित्वं निरुक्तार्थे च प्रतिवादित्वप्रतीतिरतः पुनः–यद्वेति । तत्परत्वान्मोक्षपरत्वात् । अन्तःकरणशुद्ध्या विधिनिषेधलक्षणस्यापि ज्ञानद्वारत्वादिति भाव इति दीपिका ॥ ३ ॥ पितृदेवानां त्रिकालत्वात्त एव निःश्रेयसमुपदेक्ष्यंति किं मद्वचोरूपवेदेनेत्याक्षिपति–नन्विति । प्रमापकं बोधकम् । तेषामपि वेदत एव ज्ञानं न त्वन्यथा क कस्मिन्विषये पित्रादीनां वेदाधीनं ज्ञानमिति चेदाह–अनुप

गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः ॥ निगमे नापवादश्च भिदाया इति ह भ्रमः ॥ ५ ॥
श्रीभगवानुवाच ॥ योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ॥ ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कुत्रचित् ॥ ६ ॥

पित्रादीनां सर्वेषां तव त्वद्वाक्यरूपो वेद एव तु श्रेयः श्रेष्ठं चक्षुः प्रमापकम् । क । अनुपलब्धेऽर्थे मोक्षे स्वर्गादौ च । तथा साध्यसाधनयोरिदमस्य साध्यमिदमस्य साधन मित्यत्रापि । तदेवं गुणदोषदृष्ट्यभावे निःश्रेयसं न घटेत ॥ ४ ॥ किंच शास्त्रेणैव विहितां भेददृष्टिं तस्मिन्नेव विषये शास्त्रं कथं निवर्तयेदित्याह । ते निगमात्त्वदाज्ञारूपा दादेव नहि स्वतः । यस्मादर्थप्राप्तत्वेन निवर्तेत । ह स्फुटम् । भ्रमो भवति तं निवर्तयेति शेषः ॥ ५ ॥ विषयाभेदेऽप्यधिकारिभेदेनाविरोधं वक्तुं प्रथमं योगत्रयमाह । योगा इति । योगा उपाया ब्रह्मकर्मदेवताकांडैः प्रोक्ताः । कर्म च निष्कामम् । श्रेयोविधित्सया मोक्षसाधनेच्छया । अन्य उपायो नास्तीति काम्यकर्मादिकं व्यावर्तयति

लब्धे प्रत्यक्षाविषये । तथैव अस्य यागादेः श्रवणादेर्वा । इदं स्वर्लोकावाप्तिरूपं मोक्षावाप्तिरूपं वा साध्यं फलम् । अस्य स्वर्गस्य मोक्षस्य वा इदं यागादि श्रवणादि वा साधनमित्यत्रापि वेद एव बोधक इति । फलि तमाह—तदेवमिति । गुणबुद्ध्या विहितकरणेन दोषबुद्ध्या निषिद्धत्यागेन च निःश्रेयसो भवतीति सिद्धम् ॥ * ॥ अनुपलब्धेऽर्थे भगवत्स्वरूपविग्रहवैभवादाविति **संदर्भः** ॥ * ॥ न केवलं मनुष्याणामेव वेदो निःश्रेयसकरोपि तु देवपित्रादीनामपीत्याह—पित्रिति । तत्र वेद एव श्रेयः श्रेष्ठं चक्षुर्ज्ञानहेतुः । अन्यत्तैः । हे ईश्वर सर्वोऽज्ञाननाशे समर्थ ममापि तन्नाशयेति भावः ॥ ४ ॥ शंकांतरमाह—किंचेति । भेददृष्टिं गुण दोषरूपाम् । तस्मिन्नेव विषये विहित एव । गुणदोषलक्षणे विषये यस्मादर्थात्प्राप्तत्वेन प्राप्ततया निवर्तेत निषिध्येत ततो भ्रमो भवति । अत्रायमाशयः—अर्थप्राप्तस्य निषेधो नोचितः, यथा “ कर्मणा पितृलोकः ” इति श्रुतेः पितृलोकप्राप्तिरूपार्थात्प्राप्तः कर्मयोगस्तं यदि कर्म न कुर्यादिति निषिध्येत तदा “ यावज्जीवमग्निहोत्रं जुहुयात् ” इत्यादिश्रुतिभिस्तद्विधानं व्यर्थं स्यादतोर्थप्राप्तस्य करणौचित्ये यन्निषेधः स भ्रमावहो भव तीति । तथा च—“ श्रोतव्यो मन्तव्यः ” इत्यादिना विधाय पुनः “ नानुध्यायेत् ” इत्यादिना निषेधोनुपपन्न इव प्रतीयत इति प्रश्नाशयः ॥ * ॥ परं त्विदानीमुभयविधसंकटमुपस्थि तमित्याह—गुणेति । निगमाद्विधिनिषेधात्मकात् विहिताभूत्, न हि स्वतो रागतस्तथात्वे ‘ तर्केणापि निवर्तेत ’ यतः रागप्राप्त्यभावात् । किंतु वेदेनैव प्राप्तत्वाद्वेदार्थप्राप्तत्वेनैव निवर्तते तस्माद्वेदवाचा त्वमेव तं भ्रमं निवर्तयेत्यर्थः ॥ ५ ॥ कुत्रचिच्छ्रुतिस्मृत्यादौ । यथान्य उपायो नास्ति तथा च तथैव ॥ * ॥ विषयाभेदेपि पूर्वोक्तपुण्यपापादिरूपाणां विषयाणामभेदेपि अधिकारिभेदेनेति कर्मादिसाधकान्प्रति बहवो गुणदोषा वर्णिताः । परमैसिद्धान्प्रति ‘ गुणदोषदृशिर्दोषः ’ इत्यनेनैक एवेति भावः । यद्वा—अकिंचनाख्याया एव भक्तेः सर्वोर्द्ध्वभूमिकावस्थितत्वमधिकारिविशेषनिष्ठत्वं च दर्शयितुं प्रक्रियान्तरम् । तत्र परतत्त्वस्य वैमुख्यपरि हाराय यथाकथंचित्साम्मुख्यमात्रं कर्तव्यत्वेन लभ्यते । तच्च त्रिधा—निर्विशेषरूपस्य तदीयब्रह्माख्याविर्भावस्य ज्ञानरूपम्, सविशेषरूपस्य च तदीयभगवदाख्याविर्भावस्य भक्तिरूपमिति द्वयं, तृतीयं च—तस्य द्वयस्यैव द्वारं कर्मार्पणरूपमिति । तदेतत्त्रयं पुरुषयोग्यताभेदेन व्यवस्थापयितुं लोके सामान्यतो ज्ञानकर्मभक्तीनामेवोपायत्वं नान्येषामित्यनुवदति—योगास्त्रय इति । योगा उपायाः । शास्त्रयोनिना श्रेयांसि मुक्तित्रिवर्गप्रेमाणि । अनेन

१ शुद्धान्तःकरणान् ।

निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ॥ तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥७॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥८॥ तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥९॥

तथा चोत्तराध्याये स्फुटीकरिष्यति य एतानित्यादिना ॥ ६ ॥ तेष्वधिकारिभेदमाह निर्विण्णानामिति द्वाभ्याम् । इह एषां मध्ये कर्मसु निर्विण्णानां दुःखबुद्ध्या तत्फलेषु विरक्तानामत एव तत्साधनभूतकर्मन्यासिनां ज्ञानयोगः सिद्धिद इत्युत्तरेणान्वयः । अनिर्विण्णचित्तानां दुःखबुद्धिशून्यानाम् । अतः कामिनां तत्फलेष्वविरक्तानामित्यर्थः ॥ ७ ॥ यदृच्छया केनापि भाग्योदयेन तत्र काम्यकर्मसु प्रवर्तमानस्य सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति । निष्कामकर्मयोगाधिकारिणस्तु यथाशक्ति स च ज्ञानभक्तियोगाधिकारात्प्रागेव । तदधिकृतयोस्तु स्वल्पः ताभ्यां सिद्धानां तु न किंचिदिति ॥ ८ ॥ सावधिं कर्मयोगमाह तावदिति नवभिः । कर्माणि

भक्तेः कर्मत्वं व्यावृत्तम् । त्रयं विना न्यस्तपोयोगादिरूपः । तपोष्टांगयोगादेर्यथासंभवं ज्ञानभक्त्योरेवांतर्भावदर्शनादिति भावः ॥ ६ ॥ तेषु योगत्रयेषु । तत्फलेषु कर्मफलेषु स्वर्गादिषु । अत एव विरक्तत्वादेव । तत्साधनभूतकर्मन्यासिनां स्वर्गादिसाधनभूतयागादिकर्मत्यागिनाम् । सिद्धिदोऽभीष्टदः । अतो दुःखबुद्धिशून्यत्वात् । इत्यर्थ इति—कर्मफलेच्छावंत एव कामिनो भवंतीति भावः ॥ * ॥ तत्र के कुत्राधिकारिण इत्यपेक्षायामाह—निर्विण्णेति द्वाभ्याम् । निर्विण्णानामैहिकपारलौकिकविषयप्रतिष्ठासुखेषु विरक्तचित्तानां गृहकुटुंबादिष्वनासक्तानामत एव कर्मसु गृहाश्रमप्राप्तेषु लौकिकवैदिककर्मसंन्यासिनां तानि त्यक्तवतामित्यर्थः । पदद्वयेन दृढजातमुमुक्षाणामित्यभिप्रेतम् । कामो विषयासक्तिस्तदतिशयवताम्, भूम्नि मत्वर्थीयः । देहकलत्रादिष्वत्यासक्तिमतामित्यर्थः । तानि त्यक्तुमसमर्थानां सिद्धिदस्तत्संकल्पानुकूलफलप्रदः ॥ ७ ॥ यदृच्छया स्वादृष्टोद्बोधितभगवदिच्छया वा । तत्र कर्मयोगेपि । स च यथाशक्त्यधिकारः । तदधिकृतयोर्ज्ञानभक्तियोगाधिकारिणोस्तु स्वल्पो विधिनिषेधाधिकारो लोकसंग्रहमात्र इत्यर्थः । ताभ्यां ज्ञानभक्तिभ्याम् । सिद्धानां कृतार्थानां न किञ्चिद्विधिनिषेधाधिकारः । एतच्चावगमम् 'तत्र मे दिश माधव' इत्यादिना "त्वदवगमी न वेत्ति" इत्यादिश्रुत्यर्थे प्रतिपादितं स्वामिचरणैः ॥ * ॥ अथ 'ते वै विदंत्यतितरंति च देवमायाम्' इत्यादौ 'तिर्यग्जना अपि' इत्यनेन भक्त्यधिकारे कर्मादिवज्जात्यादिकृतनियमातिक्रमाच्छ्रद्धामात्रं हेतुरित्याह—यदृच्छया केनापि परमस्वतंत्रभगवद्भक्तसंगतत्कृपाजातमंगलोदयेन । तदुक्तम्—'शुश्रूषोः श्रद्दधानस्य' इत्यादि **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—यदृच्छया प्रथमस्कन्धव्याख्यानयुक्त्या यादृच्छिकमहत्संगेन सत्संगिनस्तत्कथादौ जातश्रद्धस्त इति । अत एव 'श्रद्धामृतकथायां मे' इति 'श्रद्धालुर्मे कथाः शृण्वन्' इति । तत्रतत्र भक्तियोगे कथाश्रद्धालुरेवाधिकारी दर्शितः । अत्र तुर्भिन्नोपक्रमे । इत्यस्य ज्ञानिभ्यः कर्मिभ्यश्च वैशिष्ट्यमेकवचनेन विरलप्रचारत्वं च ध्वनितम् । नातिसक्तः देहगेहकलत्रादिष्वत्यासक्तिरहितः । अथ न निर्विण्ण इति । तेषु निर्विण्णत्वे ज्ञानेऽधिकारः । अत्यासक्तत्वे कर्मण्यधिकारः । अत्यासक्तिराहित्ये भक्तावधिकार इत्यधिकारत्रयविवेकः । निर्वेदस्य कारणं निष्कामकर्महेतुकान्तःकरणशुद्धिरेव, अत्यासक्तेः कारणमनाद्यविद्यैव, अत्यासक्तिराहित्यस्य कारणं यादृच्छिकमहत्संग एवेति, तत्रतत्र कारणं दृश्यम् । किंचैतदुत्कृष्टाधिकारिण एव लक्षणम्, किंतु—"को नु राजन्निन्द्रियवान्मुकुन्दचरणांबुजम् । न भजेत्सर्वतो मृत्युः" इत्युक्तेर्यादृच्छिकभक्तसंगे सतींद्रियवानेव भक्त्यधिकारी ज्ञेयः ॥ ८ ॥ यावता कालेन । पक्षान्तरमाह—मत्कथेति । "तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात्" इत्युक्तेः ॥ * ॥ तावदिति तैः । तत्र स्वल्पः यदृच्छया ज्ञानभक्त्यनुकूलः न किञ्चिदिति । अनुपयोगादन्तरायरूपत्वाच्चेति भावः । वाक्यार्थे तु तस्मादनयोः कर्मजगुणदोषाभ्यां न गुणदोषत्वमिति भावः । यद्वा—नन्वेवं केवलानां कर्मज्ञानभक्तीनां व्यवस्थोक्ता नित्यनैमित्तिकं कर्म तु सर्वेष्वावश्यकम् तर्हि सांकर्ये कथं शुद्धे ज्ञानभक्ती प्रवर्त्तयेतां तदेतदाशंक्य तयोः कर्माधिकारितां वारयति—तावदिति । कर्माणि नित्यनैमित्तिकानीति टीका च— । "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लंघ्य वर्तते । आज्ञाच्छेदी मम द्रोही भक्तोपि

स्वधर्मस्थो यजन्यज्ञैरनाशीःकाम उद्धव ॥ न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥
अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ॥ ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥

नित्यनैमित्तिकानि । यावता यावत् ॥ ९ ॥ कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह । स्वधर्मस्थ इति । अनाशीःकामोऽफलकामः । अन्यन्निषिद्धं काम्यं च । नरकयानं हि द्वेधैव विहितातिक्रमाद्वा निषिद्धाचरणाद्वा । अतः स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं न याति । अफलकामत्वान्न स्वर्गमपीत्यर्थः ॥ १० ॥ किंतु अस्मिँल्लोकेऽस्मिन्नेव देहे । अनघो निषिद्धत्यागी । स्वधर्मस्थो विहितकारी । अतः शुचिर्निवृत्तरागादिमलः । यदृच्छयेति । केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति ॥ ११ ॥

न स वैष्णवः ॥" इत्युक्तदोषोप्यत्र नास्ति । आज्ञाकरणात् प्रत्युत जातयोरपि निर्वेदश्रद्धयोस्तत्करणे एवाज्ञाभंगः स्यात् । यथा च—व्याख्यातम् ' अज्ञायैवं गुणान् दोषान् ' इत्यस्य टीकायां भक्तिदाढर्येन निवृत्ताधिकारितया संत्यज्येति निवृत्ताधिकारत्वं चोक्तं करभाजनेन—' देवर्षिभूताप्तनृणाम् ' इत्यादिना । तेषां न किंकरः किन्तु भगवत एवेत्यनधिकारित्वम् । अत्र कर्मपरित्यागहेतुत्वेनाभिधानाच्छ्रद्धाशरणापत्त्योरैक्यार्थं लभ्यते तच्च युक्तं श्रद्धा हि शास्त्रार्थविश्वासः, शास्त्रं च तदशरणस्य भयं तच्छरणस्याभयं वदति अतो जातायाः श्रद्धायाः शरणापत्तिरेव लिंगमिति । अत्र विशेषजिज्ञासा चेद्भक्तिसंदर्भो दृश्यः ॥ * ॥ **विश्वनाथस्तु**—तदेवं जात्यैवास्य जीवस्य कर्माधिकारः स्वाभाविक एव स च किंपर्यंतस्तथा ज्ञानाधिकारो भक्त्यधिकारश्च कदा स्यादित्यपेक्षायामाह—तावदिति । कर्माणि नित्यनैमित्तिकानि । यावता यावन्न निर्विद्येत कर्मणैवांतः करणशुद्धौ सत्यां यावन्निर्वेदो न जायत इत्यर्थः । निर्वेदे तु जाते निर्विण्णानां ज्ञानयोग इति मदुक्तेर्ज्ञान एवाधिकारो न कर्मणीति भावः । तथाकस्मिकमहत्कृपाजनिता श्रद्धा वा यावदिति श्रद्धातः पूर्वमेव कर्माधिकारः, श्रद्धायां जातायां तु 'जातश्रद्धस्तु यः पुमान्' इति मदुक्तेर्भक्तावेव केवलायामधिकारो न कर्मणीति भावः । श्रद्धा चेयमात्यंतिक्येव ज्ञेया । सा च भगवत्कथादिभिरेव कृतार्थीभविष्यामीति न तु कर्मज्ञानादिभिरिति दृढैरास्तिक्यलक्षणैव तादृशशुद्धभक्तसंगोद्भूतैव ज्ञेया । अत एव ' श्रुतिस्मृती ममैवाज्ञे ' इत्याद्युक्तदोषोऽप्यत्र नास्ति आज्ञाकरणादित्यादिपूर्ववत् । किंत्वप्राप्तमहत्कृपत्वाद जाततादृशश्रद्धमपि वैष्णवांतरोत्कर्षं दृष्ट्वैव तद्वदेव कर्म त्यक्त्वा भगवन्तं भजनमेव तद्वचनं विषयीकरोतीति केचिदाहुः । अन्ये तु श्रुतिस्मृती भक्तिप्रतिपादिके एव न तु वर्णाश्रमधर्मप्रतिपादिके " मया दिष्टानपि स्वकान् । धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः " इति भगवदुक्तिविरोधात् । अनन्यभक्तानामस्माकं श्रुतिस्मृत्युक्तविधिनिषेधाभ्यां न किमपि प्रयोजनमिति मत्वा यदेकादश्यादिव्रतानामाचरणं ताम्रपात्रस्थदधिदुग्धादेः कांस्यपात्रस्थनारिकेलोदकस्य च भगवतेऽर्पणं तस्य च भगवदर्पितस्य यद्भक्षणमिति निषिद्धाचरणं च । तथैव च—' श्रुतिस्मृती ममैवाज्ञे ' इति भगवदुक्तिर्विषयीकरोतीत्याचक्षते—" न चलति निजवर्णधर्मतः " इति । न चलति न कंपत इति तत्रार्थः । अत्र प्राच्यादिभक्तानामनन्यानामपि कर्मिकुलसंघट्टगतत्वेनैव तदनुरोधवशात् यदीषत्कर्मकरणं तत्कर्माकरणमेव तत्र श्रद्धाराहित्यात् । " अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ " इति भगवदुक्तेः ॥ ९ ॥ यतो द्विधाऽतो हेतोः । इत्यर्थ इति—कामितस्यैव स्वर्गादेर्नियोज्यविशेषत्वादकामितं फलं न भवतीति भावः ॥ * ॥ तदेवं योगत्रयं तदधिकारहेतूंश्चोक्त्वा कर्मार्पणेऽपि यया भगवत्सांमुख्यरूपत्वं स्यात्तथाह—स्वधर्मस्थ इति । टीकायां स्वर्गमपीति—पुण्यफलयोगस्योपलक्षणमेवेदम् । अफलकामत्वं केवलेश्वराराधनबुद्ध्या कुर्वाणत्वं, तत्र ज्ञानिसंगे सति तन्मात्रत्वमेव भगवदर्पणं भवेत्, भक्तसंगे तु तत्सन्तोषमयत्वम् ॥ १० ॥ विशेषमाह—किन्त्विति । यद्वा—अनघः शुचिर्वर्तमानो यदृच्छया मद्भक्तिं ततो विशुद्धं जीवेशोपाधिविविक्तं ज्ञानं चाप्नोति । वा समुच्चये, विकल्पार्थत्वे तु अज्ञत्वाभक्तत्वयोरन्यतरापत्तेः ॥ * ॥ तर्ह्ययं कर्मी किं प्राप्नोतीत्यत आह—स्वधर्मस्थ इति । निष्कामकर्मकरणात्—अनघ इति । निष्पापत्वाच्च शुचिः शुद्धान्तःकरणः सन्विशुद्धं ज्ञानमाप्नोति ज्ञानान्मोक्षं च । यदृच्छयेति—यदि च यादृच्छिकशुद्धभक्तसंगलाभस्तदा मद्भक्तिं च केवलां

स्वर्गिणोप्येतमिच्छंति लोकं निरयिणस्तथा ॥ साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥ न नरः स्वर्गतिं कांक्षेन्नारकीं वा विचक्षणः ॥ नेमं लोकं च कांक्षेत देहाऽऽवेशात्प्रमाद्यति ॥ १३ ॥ एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः ॥ अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥ छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ॥ खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलंपटः ॥ १५ ॥ अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ॥ मुक्तसंगः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥

अनेन प्रकारेण ज्ञानभक्तिसाधनत्वान्नरदेहं स्तौति । स्वर्गिणोऽपीति । निरयिण इति दृष्टांतत्वेनोक्तम् । निरयिणो यथेत्यर्थः । ज्ञानभक्तिभ्यां ज्ञानभक्त्योः । तदुभयं स्वर्गिनारकिशरीरम् ॥ १२ ॥ अतो नरः स्वर्गतिं न कांक्षेत् । नारकीमिति दृष्टांतः । यद्वा स्वर्गनरकसाधनकर्माणि न कुर्यादित्यर्थः । अस्यातिश्रेष्ठत्वात्पुनरपि मनुष्यो भवेयमित्यपि न कांक्षेत । यतो देहावेशाद्देहासक्त्या प्रमाद्यति स्वार्थेऽवधानशून्यो भवति ॥ १३ ॥ अपि त्वेतद्देहसाधकमिति विद्वांस्तत्रार्थसिद्धिदमपि मर्त्यं ज्ञात्वाऽप्रमत्तोऽनलसः सन् मृत्योः पूर्वमेव मोक्षाय घटेत प्रयत्नं कुर्यात् ॥ १४ ॥ अप्रमत्तो मुक्तसंगः सुखं प्राप्नोतीत्यत्र दृष्टांतः । छिद्यमानमिति । यमैर्यमवन्निर्दयैः पुरुषैः कृतं नीडं यस्मिंस्तम् । स्वकेतं स्वस्याश्रयम् । अलंपटोऽनासक्तः ॥ १५ ॥ दार्ष्टांतिकमाह । अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा । भयेन वेपथुः कंपो यस्य सः ॥ १६ ॥

तया च प्रेमाणं प्राप्नोति । यदि च कर्ममिश्रज्ञानमिश्रभक्तिमत्साधुसंगलाभस्तदा ततः प्राप्तया कर्ममिश्रया ज्ञानमिश्रया च प्रधानीभूतया भक्त्या ततः शांतिरतिं प्राप्नोति ॥ ११ ॥ अनेन पूर्वोक्तेन 'तावत्कर्माणि' इत्याद्युक्तेन दृष्टान्तत्वेन यथा निरयिणो नरकस्था यदि वयं मनुष्या भविष्यामस्तर्हि पुनरत्र कदापि नागमनं भवेत्तादृग्यत्नं करिष्याम इति यथा वाञ्छन्ति, तथा स्वर्गिणोपीच्छन्ति यदत्र न स्वर्गसुखावशेषितम्' इत्याद्युक्तेः । मनुष्यदेहस्यैव ज्ञानभक्तिद्वारा मोक्षसाधनत्वादिति भावः ॥ * ॥ **दीपिका**—अनेन निष्कामकर्मानुष्ठाननिषिद्धवर्जनरूपेण प्रकारेण । उभयं स्वार्गिनरकिदेहम् । स्वर्गिणो महाविषयावेशात्, नारकिणो महापीडावेषात् । ननु तत्तत्साधनाभावात्सर्वथा " तदुपर्यपि बादरायणः संभवात् " इति न्यायात् ॥ १२ ॥ यतो नरदेहो मोक्षसाधनमतो हेतोः । वाशब्द इवार्थे, नारकीमिवेत्यर्थः । स्वर्गादीच्छाभावेपि तत्साधनकर्मकरणात्तद्भवत्येवेत्यत आह—यद्वेति । इत्यर्थ इति—कारणाभावात्कार्यं स्वयमेव न संभवतीति भावः । अवधानं विचारः । स चात्मानात्मविवेकस्तेन शून्यो हीनः ॥ * ॥ तस्मान्नरदेहं सर्वोत्कृष्टंगातिं प्राप्य ततो निकृष्टां स्वर्गतिं नरकगतिं च पुण्यपापाभ्यां न कामयेदित्याह—नेति । इमं नृदेहमपि न कांक्षेत मनुष्यत्वसाधनकर्माणि न कुर्यात् ॥ १३ ॥ देहाद्ग्रह्यमाह—अपि त्विति । साधकं मुक्तेरिति शेषः । तत्र देहम् । मृत्योः पूर्वं स्वस्थावस्थायामेव । यत्नं भक्तिविचारादिरूपम् ॥ * ॥ एतत् मर्त्यशरीरम् ॥ १४ ॥ रेतैः पुरुषैः, रियंति जानंति गच्छन्ति छेदनार्थमिति वा रेताः 'रि—गतौ' अतस्तप्रत्यय औणादिकः । " रेतोर्हनिशनरयोर्वाद्धिकौ रेतासि तथा " इति निरुक्तिः । यद्वा—अलंपटः उत्पतनसमर्थः । 'पट—गतौ' खैरिन्द्रियैर्गच्छति विषयानिति खगो जीवः । अलंपटो विरक्तो ज्ञानी वा । स्वकेतं देहम् । क्षेमं मोक्षम् ॥ * ॥ देहावेशत्यागे दृष्टान्तमाह—छिद्यमानमिति ॥ १५ ॥ एतमेवार्थं दार्ष्टांतिकेन स्फुटयति—मुक्तसंगो देहादौ त्यक्ताध्यासः । परं परात्मानम् ॥ * ॥ दृष्टान्तोपपाद्यं

नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥ मयाऽनुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥ १७ ॥ यदारंभेषु निर्विण्णो विरक्तः संयतेंद्रियः ॥ अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥ धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ॥ अतंद्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥ मनोगतिं न विसृजेज्जितप्राणो जितेंद्रियः ॥ सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥

एवमप्रयतमानं प्रमत्तं निंदति । नृदेहं प्लवं नावं प्राप्येत्यध्याहारः । यो भवाब्धिं न तरेत्स आत्महा । तत्र हेतवः । आद्यं सर्वफलानां मूलम् । एतदुपार्जितकर्मभिः सर्वप्राप्तेः । किंच सुदुर्लभमुद्यमकोटिभिरपि प्राप्तुमशक्यम् । तथापि तु सुलभम् । यदृच्छया लब्धत्वात् । तं च सुकल्पं पटुतरम् । किंच गुरुः संश्रितमात्र एव कर्णधारो नेता यस्य तम् । मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम् ॥ १७ ॥ एवं तावदविरक्तस्य वैराग्यद्वारा ज्ञानभक्तिसाधकं कर्मयोगमुक्त्वेदानीं सम्यग्विरक्तस्य ज्ञानयोगं तस्य च ज्ञानप्राप्तेः पूर्वं किंचित्कृत्यं वर्जनीयं चाह सार्धैर्नवभिः । यदा त्वारंभेषु कर्मसु निर्विण्णो दुःखदर्शनेनोद्विग्नस्तत्फलेषु विरक्तश्च तदा संयतेंद्रियः सन्नात्मनोऽभ्यासेनात्मविषयवृत्तिसंतत्या अचलं यथा भवति तथा मनो धारयेत् ॥ १८ ॥ तत्र प्रथममेवात्यंतधारणासंभवात्तत्स्वभावानुसारेण वशीकरणमेवाह । यर्हि आशु भ्राम्यत्परिभ्रमदनवस्थितं भवति तदानुरोधेन किंचिदपेक्षापूरणद्वारेण ॥ १९ ॥ ननु तर्हि यथापूर्वमेव स्यात्तत्राह । मनोगतिं तु न विसृजेन्नोपेक्षेत । किंत्वप्रमत्तः सन्

दार्ष्टान्तिकं छिद्यमानत्वम् ॥ १६ ॥ एवम् उक्तरीत्या । 'प्लवस्तरणसाधने' इति धरणिः । नयति पारमिति नौस्तां पोतमित्यर्थः स्वामिचरणाभिप्रेतोऽन्यथा नौकार्थस्वीकारे तयाब्धितरणासंभवात् । आत्महात्मवञ्चकः । "मानुष्यं यः समासाद्य स्वर्गमोक्षप्रदायकम् । द्वयोर्न साधयत्येकं तेनात्मा वञ्चितो ध्रुवम् ॥" इति गारुडोक्तेः । स्वर्गोऽत्र ब्रह्मपदम् । तत्रात्मवञ्चकत्वे । एतच्छब्देन नृदेहो ग्राह्यः । न केवलं सर्वफलमूलमेवेत्याह—किञ्चेति । यद्यपि दुर्लभं तथाप्यधुनोद्यमं विनैव प्राप्तत्वात्सुलभम् । ननु प्राप्ततरणसाधनोऽपि तारकं विना न तरतीति चेदाह—किञ्चेति । संश्रितमात्र इत्यनेन सेवनमात्रेणैव न धनाद्यर्पणेनेत्युक्तम् । 'कर्णधारस्तु नाविकः' इत्यमरः । न हि प्रसिद्धपोतो वायुस्मरणाच्चलति नाविकश्च सेवनमात्राच्चालयति न च तमिति ततो वैलक्षण्यमुक्तम् ॥ * ॥ यदृच्छया केनापि भाग्योदयेन । तत्राप्यतिभाग्योदयेन । सुकल्पं सर्वांगविकृतिरहितम् ॥ १७ ॥ एवमुक्तग्रंथेन । तस्य सम्यग्विरक्तस्य । तत्फलेषु कर्मफलेषु । आत्मविषयवृत्तिसंतत्या तच्चिन्तनम् तत्कथनमन्योन्यं तत्प्रबोधनम् । "एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः" इत्युक्तलक्षणया धारयेत् स्वीकुर्यात ॥ * ॥ दीपिका—तस्य च सम्यग्विरक्तस्य कृत्यं मनोधारणादि वर्जनीयं निरुद्धस्य मनस उपेक्षणादि आत्मविषयवृत्तिसंतत्या सजातीयप्रत्ययप्रवाहेण ॥ १८ ॥ तत्रेति वाक्यालंकारे, तत्र तस्येत्यर्थो वा । किंचिदपेक्षापूरणे क्वचित्तदनुकृत्य पुनर्निरोधेन अतन्द्रितः । अहो बहुकालो यातोऽधुनापि न स्थितोऽतस्त्यक्तव्योऽत्र यत्न इति संकल्पशून्य इत्यर्थः ॥*॥ यर्हि तु यत्नेन धार्यमाणमपि आशु प्रथममनवस्थितं द्विगुणितं चाञ्चल्यं भवेद्बलवतः कामादिवेगस्यात्यन्तधारणेन वेगो द्विगुणितो भवेदेवेति भावः । किञ्चिदपेक्षापूरणेन द्वित्रिदिनं मिष्टान्नादिरुचौ सेवित्वेति भावः ॥ १९ ॥ मनोऽनुसरणे तु तद्विरोधो दुर्घट इत्याक्षिपति—नन्विति । यथापूर्वमनिरुद्धमेव । यद्वा—मनसोऽगतिं विरुद्धगतिं न विसृजेद्विरुद्धविषयात्तन्निरुंध्यादेवेत्यर्थः । इत्यर्थ इति—मनसो वशीकरणमात्मदर्शनार्थमेव 'सत्त्वसंपन्नया' इत्युक्तेः । 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुत्यर्थो लक्षितः ॥ * ॥ यथा पूर्वं विषयाविष्टं तर्हि

एष वै परमो योगो मनसः संग्रहः स्मृतः ॥ हृदयज्ञत्वमन्विच्छन्दम्यस्येवार्वतो मुहुः ॥२१॥ सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ॥ भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ॥ मनस्त्यजति दौरात्म्यं चिंतितस्यानुचिंतया ॥ २३ ॥ यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ॥ ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ॥ योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥

लक्षयेदित्यर्थः ॥ २० ॥ अनुरोधमार्गं सदृष्टांतं स्तौति । एषः अनुवृत्तिमार्गेण मनसः संग्रहः परमो योगः । तत्साधनत्वादुपचारेण स्तुतिः । यथा अदांतस्य दमनीयस्यार्वतोऽश्वस्य हृदयज्ञत्वं स्वाभिप्रायेण गतिमन्विच्छन्नपेक्षमाणोऽश्वधारकः प्रथमं किंचित्तद्गतिमनुवर्तते तदा च रश्मिना तं धृत्वैव गच्छति न तूपेक्षते तद्वदित्यर्थः ॥ २१ ॥ एवमीषद्वशीकृतस्य मनसोऽत्यंतनैश्चल्योपायानाह सांख्येनेति त्रिभिः । सांख्येन तत्त्वविवेकेन सर्वभावानां महदादिदेहांतानामनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं चान्वनुध्यायेत् । प्रसीदति निश्चलं भवति ॥ २२ ॥ ननूपायसहस्रेणापि मनो विषयाकारतां न त्यजति किं भूयोभूय उपदेशेनेति चेत्तत्राह । निर्विण्णस्येति । ततश्चागमापायिषु तेष्ववधिभूतात्मदर्शनात्तदविवेकापन्नसंसारे निर्विण्णस्यातो विरक्तस्य ततश्चोक्तवेदिनो गुरूपदिष्टार्थालोचकस्य ततो गुरूपदिष्टस्यैव चिंतितस्य पुनःपुनरनुचिंतया दौरात्म्यं देहाद्यभिमानं त्यजति ॥ २३ ॥ किंच यमादिभिर्योगमार्गैरान्वीक्षिक्या पदार्थद्वयशोधनेन ममार्चनध्यानादिभिर्वा । वाशब्देनास्य पक्षस्य स्वातंत्र्यं दर्शयति । एतैरुपायैर्योग्यं परमात्मानं मनः स्मरेन्नान्यैरतोऽन्यन्न कुर्यादित्यर्थः ॥ २४ ॥ ननु पापापत्तौ प्रायश्चित्तं कार्यमेव तत्राह । यदीति ।

तद्गतिं स्तम्भयेदेवेत्यर्थः ॥ २० ॥ तत्साधनत्वाद्योगसाधनत्वात् । उपचारेणाविद्यमानस्यारोपेण । "अर्वा तुरंगमे पुंसि कुत्सिते वाच्यलिङ्गकः" इति मेदिनी । इत्यर्थ इति—सर्वथा रश्मित्यागे पृष्ठगमेव पातयेदेवं सर्वथा निरोधे देहपातो भवेदिति भावः ॥ * ॥ अनुवृत्तिमार्गेण किञ्चिदवेक्षापूरणद्वारेण । संग्रहः स्ववशीकारः ॥ २१ ॥ अनुलोमतः सिद्धक्रमेण । भवमुत्पत्तिम् । प्रतिलोमत उत्क्रमेण ॥ * ॥०॥२२॥ तत उत्पत्त्यप्ययध्यानात् । तेषु भावेषु । अवधिभूतस्य परमाश्रयीभूतस्यात्मनो दर्शनाज्ज्ञानात् । तस्यात्मनोऽविवेकेन देहादिभ्यः पृथक्त्वेनाज्ञानेनापन्नः प्राप्तो यः संसारस्तस्मिन् । निर्विण्णस्याकुलस्य । अतः आकुलत्वात् । ततो विरक्तत्वात् । "विरक्ते दुःखिते चाथ निर्विण्णो वेदनेऽपि च" इति निरुक्तिः । "विरक्तो योग्यतामेति गुरूक्तार्थावधारणः" इत्युक्तेः । ततो गुरूपदिष्टार्थालोचकत्वात् ॥ * ॥ निर्विण्णस्य संसारादुद्विग्नस्यात एव विरक्तस्य ॥ २३ ॥ अन्यदाह—किञ्चेति । पदार्थद्वयशोधनमात्मानात्मविवेचनम् । अर्च्या प्रतिमा वार्चनम् । अस्यार्चोपासनादेः । योग्यं योगगम्यम् । इत्यर्थ इति—यमादीन्विहाय काम्ययागादिकं योगी न कुर्यादिति भावः ॥ * ॥ अस्य ज्ञानाधिकारिणः ॥ २४ ॥ योगिनोऽपि प्रामादिकपापपरिहारः कार्य एवेत्याशंकते—नन्विति । गर्हितं व्यभिचारादि । एतच्च प्रायश्चित्तम् । कृच्छ्रादीनां योगविक्षेपकत्वात्तन्न कार्यमित्यर्थः । तत्र गर्हितकृतिजपापपरिहारार्थमित्यर्थः ।

स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ ( विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः ॥ ) कर्मणां जात्यशुद्धानामनेन नियमः कृतः ॥ गुणदोषविधानेन संगानां त्याजनेच्छया ॥ २६ ॥

योगेन ज्ञानाभ्यासेनैव । एतच्च भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थम् । नान्यत्कृच्छ्रादि ॥ २५ ॥ ननु नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणो हिंसादिकं त्वशुद्धिहेतुत्वाद्दोषः । तत्र च तन्निवर्तकत्वात्कृच्छ्रादिप्रायश्चित्तं गुण इति विधिप्रतिषेधाभ्यामुक्तत्वात्प्रायश्चित्तं विना योगेनैव कथं पापं दहेत्तत्राह स्वेस्व इति सार्धेन । स एव गुणो नेतरः । तदुपपादयति । यस्माद्विधिप्रतिषेधाभ्यामनेन गुणदोषविधानेन कर्मणां नियमः संकोचः कृतः । कुत इत्यत आह । जात्या उत्पत्त्यैवाशुद्धानाम् । स च प्राप्तानां संगानां त्याजनेच्छया कृतः । अयं भावः । पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्यास्ति स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात् । न च सहसा सर्वतो निवृत्तिः कर्तुं शक्यते । अत

॥ * ॥ कर्मजगुणदोषास्पर्शमाह—यदीति सार्द्धद्वयेन । यद्यस्य निर्विण्णस्य कर्मणि नाधिकारस्तदा पापे दैवात्कृते सति प्रायश्चित्तं विना कथं तदुपशमस्तत्राहेति **विश्वनाथः** ॥ * ॥ भक्तस्येति—"केचित्केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥" इति, 'स्वपादमूलम्' इत्यत्र "विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि सन्निविष्टः" इति च । योगीति ज्ञानयोगभक्तियोगवान्व्याख्येयः । योगेन भक्त्या ज्ञानेन वेति ॥ २५ ॥ ज्ञानादीनां प्रायश्चित्तप्रकरणानुक्तेस्तत्त्वं न संभवतीत्याशङ्कते—नन्विति । सत्त्वमन्तःकरणम् । तत्र च तयोर्नित्यादिकर्महिंसादिकर्मणोर्मध्ये च । तन्निवर्तकत्वात् पापनिवर्तकत्वात् । विधिनिषेधाभ्याम् "अहरहः संध्यामुपासीत" "ब्राह्मणं न हन्यात्" इत्येवंरूपाभ्यामुक्तत्वाद्गुणदोषयोर्विहितत्वात् । तत्राक्षेपे । तत् स्वाधिकारनिष्ठाया गुणत्वम् । यस्मादित्यस्य त इत्यनेन संबंधः । संकोचे हेतुं पृच्छति—कुत इति । स च संकोचः । अत्राशयं प्रकाशयंति स्वामिचरणाः—अयं भाव इत्यादिना । स्वाभाविकी प्रवृत्तिर्व्यवायामिषमद्यसेवादिष्वादरः । तस्य पुरुषस्य । सहसा झटिति । निवृत्तिविधानफलमाह—तथा चेति । यतस्स्वाभाविकप्रवृत्तिमतामेव प्रायश्चित्तविधानमतो हेतोः । निर्गलितार्थस्तु—सर्वकर्मणा जात्या जन्मनैव देहाद्यध्यासफलतया । अनेन गुणदोषविधानेन । क्रमेण संगत्यागेच्छयैव नियमः संकोचः कृतः । आदौ पापकर्मपरित्यागस्ततो लौकिककर्मत्यागस्ततः काम्यकर्मत्यागस्ततस्तदाग्रहत्यागस्ततस्तत्फलत्यागश्च, ततः सति बोधे सर्वकर्मपरित्याग इति ॥ * ॥ तदेवं कर्मार्पणकेवलज्ञानकेवलभक्तयोऽधिकारिभेदेन व्यवस्थापिताः, अतः स्वाधिकारानुरूपेणैव स्थातव्यमित्याह—स्व इति । विपर्ययस्तु दोषः स्यादिति भावः । तस्मात्साधूक्तं योगेनैव न तु कर्मणेति । कर्मणामिति तैः । तत्रानेनेति पूर्वसूचितेन कर्मशास्त्रोक्तेनेत्यर्थः । यद्वा—ननु कथं योगस्य तादृशं सामर्थ्यं कथं वा कर्मणैवांहोदाहः स्यादिति कर्मशास्त्राग्रहः संगमितः स्यात्, तत्र कर्मणां वस्तुतोदोषत्वेऽपि तेष्वेव किञ्चिद्गद्रत्वेन गुणतया संमितत्वं दर्शयन् योगस्य स्वभावगुणत्वं व्यंजयति—कर्मणामिति । कश्चित्कश्चिदतीव विरक्तो निंबोऽस्तीति लोके मिष्टतिक्तजातिव्यपदेश इव जात्यैवाशुद्धानां कर्मणां यद्गुणदोषत्वविधानं तेनानेन संकोच एव कृतः, कथं संगानामिति सहसा सर्वत्याजनाशक्तेस्तत्र क्रम एव कृत इत्यर्थः ॥ * ॥ **विश्वनाथस्तु**—नान्यत्कथं ब्रवीषि तदप्यस्तु कस्तत्र दोषस्तत्राह—स्वेस्व इति । वीप्सया ज्ञानिनो भक्तस्य च प्राप्तिर्गम्यते । अयं भावः—ज्ञानिनो ज्ञानेन भक्तस्य भक्त्या च यदि पापं न नश्येत्तदा तेनतेन पापनाशनार्थं कृच्छ्रादिकमनुष्ठीयते ज्ञानभक्त्योः पापनाशकत्वस्य बहुशः श्रुतत्वात्, पापनाशे सिद्धे कथं पराधिकारगतं तेनतेन कृच्छ्रादिकमनुष्ठेयं तस्मिन्ननुष्ठिते सति स्वधर्मनिष्ठात्यागः परधर्मप्रसक्तिश्चेति दोषद्वयं स्यात् । वस्तुतस्तु—ज्ञानिभक्तयोः पापे प्रवृत्तिरेव न स्याद्यदि दैवात्स्यात्तदपि ज्ञानभक्तियोगयोर्जात्यैव शोधकत्वात्ताभ्यामेव स्वत एव पापक्षय इत्यतो गुणदोषम

**जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ॥ वेद दुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः ॥ २७ ॥**

इदं न कर्तव्यमिदमेव कर्तव्यमित्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते । यथा च न प्रवृत्तिपरो वेदस्तथोत्तराध्याये वक्ष्यामः । 'उपत्यैव हि कामेषु' इत्यादिना । अतो योगिनः स्वाभाविकप्रवृत्त्यभावान्न प्रायश्चित्तादिविधिगोचरतेति ॥ २६ ॥ भक्त्यधिकारिणो भक्तियोगमाह जातश्रद्ध इति नवभिः । मत्कथासु जातश्रद्धोऽत

यविधिप्रतिषेधाधिकारमध्यपातित्वं ज्ञानिभक्तयोः प्रायेणोक्तं वेदेन । किन्तु तयोरपि मध्ये भक्त एव पापप्रवृत्तेऽपि दोषदर्शनं सर्वत्र निषिद्धं प्राकृतगुणदर्शनं च तस्य निर्गुणत्वेन व्याख्यास्यमानत्वात् । ज्ञानिनस्तु सात्त्विकत्वात्तस्मिन् शमदमादिगुणदर्शनस्य " यस्त्वसंयतषड्वर्गः प्रचंडेन्द्रियसारथिः " इत्यादेर्दोषदर्शनस्य च व्यक्तत्वात्तेषु गुणदोषदृशिर्दोष इति न शक्यते वक्तुम् । कर्मिणां तु स्वाभाविकावेव गुणदोषावित्याह—कर्मणां जात्यैवाशुद्धानामनेन विधिप्रतिषेधरूपगुणदोषविधानेन नियमः, देहगेहासक्तानां कर्मिणामुत्पत्त्यैव पापरतानां स्वाभाविकप्रवृत्तिसंकोचः कृत एवाभीक्ष्णशो वेदेन । किमर्थम्—संगानां विषयासक्तीनां त्याजनेच्छया । अयं भाव इत्यादितैः ॥ २६ ॥ अथान्यदाह—भक्त्यधिकारिण इति । अत एव सर्वथा मत्कथाश्रद्धावत्त्वादेव । अन्येषु काम्येषु उद्विग्नस्त्रस्तः तत्फलत्यागेन तु विरक्तः किंतु फलाभिलाषुकः । तत्फलाभिलाषुकत्वम् । कामान् विषयान् । तत्परित्यागे विषयपरित्यागे ॥ * ॥ अथ भक्तिमार्गं विवृणोति—जातेत्यादिना एवमित्यतः प्राक् । तत्र जातश्रद्ध इति युग्मकेन । कथेत्युपलक्षणम् । मत्कथादिषु एतदेव केवलं परमं श्रेय इति जातविश्वासः । अत एवान्येषु कर्मसूद्विग्नः किंतु वर्तमानेषु प्राचीनपुण्यकर्मफलभोगेषु एवंभूत इत्याह—वेदेति । ततस्तां वेदेत्यादि व्याख्यातम् । ' न निर्विण्णो नातिसक्तः ' इत्येवंलक्षणमारभ्यैवेत्यर्थः । मां भजेत मदीयानन्यताख्यभक्तावधिकारी स्यात्, न तु ज्ञानवज्ज्ञाते सम्यग्वैराग्य एव तस्याः स्वतः सर्वशक्तिमत्त्वेनान्यनिरपेक्षत्वादित्यर्थः । अनंतरं च वक्ष्यते—'तस्मान्मद्भक्तियुक्तस्य' इत्यादिना ' यत्कर्मभिः ' इत्यादिना च । न च कर्मनिर्वेदसापेक्षत्वमापतितं स तु भक्तेः सर्वोत्तमत्वविश्वासेन स्वत एव प्रवर्तते । अतो निर्विण्ण इत्यनुवादमात्रम् । अत एव यद्यपि ज्ञानकर्मणोरपि श्रद्धापेक्षास्त्येव तां विना बहिरंतः सम्यक्प्रवृत्त्यनुपपत्तेः, तथाप्यत्र श्रद्धामात्रस्य कारणत्वेन विशेषतस्तदंगीकारः, तत्रापि च तदपेक्षा पूर्ववत् सम्यक्प्रवृत्त्यर्थैव, तां विनाऽनन्यताख्यभक्तिस्तथा न प्रवर्तते, कदाचित्किञ्चित्प्रवृत्ता च नश्यति । अत एव ' न निर्विण्णो नातिसक्तः ' इत्यस्यानंतरमपि ' मत्कथाश्रवणादौ च ' इत्यत्र श्रद्धायां जातायामेव कर्मपरित्यागो विहितः, भक्तिमात्रं तु तां विनापि सिध्यति 'सकृदपि परिगीतं श्रद्धया हेलया वा ' इत्यादौ ' सतां प्रसंगात् ' इत्यादौ च तत्र तत्पूर्वतोऽपि तस्याः फलदातृत्वश्रवणाच्च " म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् " इत्यादौ तस्याः फलदातृत्वसौष्ठवश्रवणाच्च । सा च श्रद्धा शास्त्राभिधेयावधारणस्यैवांगं तद्विश्वासरूपत्वात् । ततो नानुष्ठानांगत्वे प्रविशति भक्तिश्च फलोत्पादने विधिसापेक्षापि न स्यात् दाहादिकर्मणि वह्न्यादिवत् । भगवच्छ्रवणकीर्तनादीनां स्वरूपस्य तादृशशक्तित्वात् । ततस्तस्याः श्रद्धाद्यपेक्षा कुतः स्यात् । तस्माच्छ्रद्धा न भक्त्यंगं किंतु कर्मण्यर्थिसमर्थविद्वत्तादिवदनन्यताख्यायां भक्तावधिकारिविशेषणमेवेत्यत एव तद्विशेषणत्वेनैवोक्तम् ' यदृच्छया मत्कथादौ जातश्रद्धः ' इति जातश्रद्धो मत्कथास्विति च, " श्रद्धामात्रस्य तद्भाक्तावधिकारित्वहेतुता । अंगत्वमस्य विश्वासविशेषस्य तु केशवे ॥ " इति भक्तिरसामृतसिंधावुक्तत्वात् । अतस्तामारभ्येत्यर्थेन ल्यब्लोपे पंचम्यंतेन तत इति पदेनानवधिकनिर्देशेनात्मारामतावस्थायामपि सा केषांचित्प्रवर्तत इति तस्याः साम्राज्यमभिप्रेतम् । वक्ष्यते चानन्तरम्—' न किञ्चित्साधवो धीराः ' इति । अतः साम्राज्यज्ञापनाय तां विना कर्मज्ञाने अपि न सिध्यत इति च ज्ञापितम् । तदेवमनन्यभक्त्याधिकारे हेतुं श्रद्धामात्रमुक्त्वा स यथा भजेत तथा शिक्षयति—श्रद्धालुर्विश्वासवान्, प्रीतः प्रजातायां रुच्यावासक्तः, दृढनिश्चयः साधनाध्यवसायभंगरहितश्च सन् सहसा त्यक्तुमसमर्थत्वात्कामाञ्जुषमाणश्च गर्हयंश्च । गर्हणे हेतुः—दुःखोदर्कान् शोकादिकृदुत्तरकालानिति ॥ * ॥ **विश्वनाथस्तु**—अथ भक्त्यधि

ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन् ॥ २८ ॥ प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ॥
कामा हृदय्या नश्यंति सर्वे मयि हृदि स्थिते ॥२९॥ भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चाऽस्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥३०॥

एवान्येषु कर्मसूद्विग्नो न तु तत्फलेषु विरक्तः । तदाह । वेदेति । यद्यपि वेद तथापि तत्परित्यागेऽनीश्वरोऽशक्तः ॥ २७ ॥ एवंभूतो यः श्रद्धालुर्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयः संस्ततस्तदनंतरं मां प्रीत्या भजेत विषयांस्तु सेवमानोऽपि तेषु प्रीतिं न कुर्यादित्याह । गर्हयन्निति ॥ २८ ॥ कथं भजेत किं वा ततो भवति तदाह प्रोक्तेनेति द्वाभ्याम् । "श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम्" इत्यादिना तत्रतत्रोक्तेन मा मामसकृन्नित्यं भजतो हृदय्या हृद्गताः कामा नश्यंति ॥ २९ ॥ हृदयमेव ग्रंथिरहं

कारिणः प्राथमिकं स्वभावं दर्शयन्भक्तिमाह—जातश्रद्ध इति द्वाभ्याम् । सर्वकर्मसु लौकिकवैदिकेषु तत्फलेषु च दुःखबुद्ध्योद्विग्नः । नातिसक्त इति यदुक्तं तद्विवृणोति—कामान्स्त्रीपुत्रादिसंगाख्यान् दुःखात्मकान् वेद । अथ च तत्परित्यागेप्यसमर्थः ॥ २७ ॥ एवंभूतः मत्कथाश्रद्धावत्त्वेपि विषयत्यागासमर्थः । तदनंतरं दृढनिश्चयानंतरम् । तान्कर्मफलभूतान् दुःखावसानकान् गर्हयन्—अहो कदा मामेते विषयास्त्यक्ष्यंतीति निंदन् ॥ * ॥ ततस्तामवस्थामारभ्यैव दृढनिश्चय इति । गृहाद्यासक्तिर्मे नश्यतु वर्धतां वा, तथा भजनेऽपि मे विघ्नकोटिर्भवतु नश्यतु वा, अपराधे नरकं चेद्भवतु काममंगीकुर्वे तदपि भक्तिं न विजहामि, ज्ञानकर्मादिकं नैव जिघृक्षामि, यदि स्वयं ब्रह्माप्यागत्य वदेदित्येवं दृढो निश्चयो यस्य सः । आरब्धभजनस्य तस्य भक्तौ यथा प्रीतिः, न तथा तत्प्रतिकूलवस्तुनीत्याह—जुषमाणश्चेति । कलत्रादिसंगोत्थान्कामान्दुःखोदर्कान्गर्हयन्नेव जुषमाणः । अहो अमी विषयभोगा एव ममानर्थकारिणो भगवत्प्राप्तिप्रतिकूला एवैधन्ते बहुशो नामग्राहमपि सशपथमपि त्यक्ता अपि समये भोक्तव्या एव भवन्तीति 'निंदामि च पिबामि च' इति न्यायेन भुंजानः ॥ २८ ॥ भजनप्रकारं तत्फलं च पृच्छतीत्याह—कथं भजेतेति । ततो भजनात् । तत्रतत्र प्रकरणे नश्यंति विवेकेन त्यक्ता अपि बोधेन कारणबाधेन बाध्यन्त एव । हृदिस्थिते बोधेन गतावरणतया स्फुरति सति ॥ * ॥ ततश्च सैव भक्तिस्तस्य तान्कामान्दहेदित्याह । यद्वा—ननु किं त्वद्भक्त एवं विषयबाधित एव तिष्ठत्यत्र नहिनहीत्याह—प्रोक्तेनेति द्वाभ्याम् । 'श्रद्धामृतकथायां मे' इत्यादिना मया प्रोक्तेन सकृन्नित्यं पुनःपुनर्मां भजतः हृद्गत मयि हृदि स्थिते इति न ह्येकस्मिन्नेव हृदि मम स्थितिस्तेषां च स्थितिः संभवेत्, न हि सूर्यान्धकारयोरेकाधिकरण्यं घटेतेति भावः॥२९॥अहंकारोऽन्तःकरणदृढाध्यासः।तत्पूर्वका अहंकारपूर्वकाः । आदिना विपरीतभावनादयो ग्राह्याः । अनारब्धफलानीति "प्रारब्धकर्मणां भोगादेव क्षयः" इति श्रुतेः ॥ * ॥ सर्वसंशयास्तद्दर्शनासंभावनापर्यन्ताश्छिद्यन्ते समाप्यन्ते क्षीयंत इति " तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ " इति न्यायेनेति **संदर्भः** । ॥*॥ **विश्वनाथस्तु**—निष्ठारुच्यादिभूमिकारूढस्य भक्तस्य हृदयग्रंथिरहंकारो भिद्यते स्वयमेवेति न तत्र भक्तस्येच्छाप्रयत्नाविति भावः । तदुक्तम्—"जरयत्याशु या कोशं निगीर्णमनलो यथा" इति । संशया असंभावनादयः । कर्माणि प्रारब्धपर्यंतानि । तथा च श्रुतिर्गोपालतापनी—या भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यम् । नैष्कर्म्यंकरमिति तस्यार्थः ॥ * ॥ **दीपिका**—असंभावना तद्दर्शने संदेहः । आदिना विपरीतभावना तत्कार्यभूता रागादयश्च गृह्यन्ते । अनारब्धफलानि संचितागाम्यादीनि । प्रारब्धस्य भक्तोत्कंठावर्धनार्थं भगवतैव रक्षणमिति ज्ञेयम् । तत्र पारमर्षं सूत्रम् 'तदधिगमे' इत्याद्युक्तमेव । श्रुतिश्च—

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ॥ योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३२ ॥

कारस्तत्पूर्वकाश्च सर्वे संशया असंभावनादयः । कर्माण्यनारब्धफलानि संसारहेतुभूतानि च ॥ ३० ॥ तदेवं व्यवस्थयाऽधिकारत्रयमुक्तम् । तत्र च भक्तेरन्यन्निरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति तस्मादिति त्रिभिः । मदात्मनो मय्यात्मा चित्तं यस्य तस्य । श्रेयः श्रेयःसाधनम् ॥ ३१ ॥ तत्र हेतुः यत्कर्मभिरित्यादि । इतरैरपि तीर्थयात्राव्रतादिभिः श्रेयःसाधनैर्यद्भाव्यं सत्त्वशुद्ध्यादि तत्सर्वमंजसा अनायासेनैव । स्वर्गमपवर्गं मद्धाम वैकुंठं लभत एव । वांछा तु नास्तीत्युक्तं यदि

"सुकृतदुष्कृते विधुनुते एवं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्" इति ॥ ३० ॥ तदेवम् इत्थम् । तत्र योगत्रयेषु । अन्यनिरपेक्षत्वाज्ज्ञानयोगादेर्निरपेक्षत्वात् । अन्यस्य ज्ञानयोगादेस्तत्सापेक्षत्वाद्भक्तियोगापेक्षत्वात् । यस्माद्भक्तियोगः श्रेष्ठस्तस्माद्धेतोः । श्रेयःपदं लक्षणया श्रेयःसाधनं वक्तीति । यद्वा—तस्मान्मद्भक्तियुक्तस्य किं वैराग्यं न भवेत्तत्साध्यं ज्ञानं वा तत्साध्यं श्रेयो मोक्षो वा न भवेदपि तु इहैव परवैराग्यज्ञानाभ्यां जीवन्मुक्तो भवेदेव । "वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥" इत्युक्तेः ॥ * ॥ अस्य भक्त्यधिकारिणः कर्मज्ञानयोरपि स्पर्शो न संमत इति वदन्सुतरां तत्कारणगुणदोषास्पर्शमाह—तस्मादिति । यस्मात् 'भिद्यते' इत्यादेर्ज्ञानम् 'प्रोक्तेन' इत्यादेर्वैराग्यं स्वत एव स्यात् । मद्भक्तियुक्तस्य ज्ञानं तत्साधनाभ्यासवैराग्यं च वैराग्याभ्यासः प्रायः श्रेयो न भवेत्किमुत कर्मयोग इत्यर्थः । व्यर्थादिकप्रयासात्तादृशभक्त्यंतरायाच्च । नन्द्वयमत्यन्ततन्निराकरणार्थम् । प्रायो वितर्के ॥ * ॥ **विश्वनाथस्तु—**यतो हेत्वन्तरनिरपेक्षया भक्त्यैव हृदयग्रंथिभेदाद्याः स्वत एव स्युस्तस्माद्भक्त्यर्थं वा हृदयग्रंथिभेदार्थं वा मद्भक्तेन ज्ञानवैराग्ये नैवोपादेये स्वस्मिंस्तयोः श्रेयस्करत्वादर्शनादित्याह—तस्मादिति । मदात्मनो मन्मनसः देहाद्यतिरिक्तत्वानुसंधानलक्षणं ज्ञानं विषयाग्रहलक्षणं वैराग्यं च न श्रेयस्तयोः सात्त्विकत्वात्तस्यास्तु गुणातीतत्वात्तस्यां सत्यां तयोः स्वस्मिन्नानिनीषैव दोष इति भावः । प्रत्युत अविद्यावृत्तीनां रागद्वेषादीनामिव विद्यावृत्तिरूपयोरपि ज्ञानवैराग्ययोर्भक्तेः स्वत एव वर्तमानयोरपि भक्त्यैव निर्जय एवाग्रे पंचविंशाध्याये वक्ष्यते । किञ्च—भगवदनुभवरूपं ज्ञानं विषयारोचकत्वलक्षणं वैराग्यं भक्त्युत्थत्वाद्गुणातीतं तस्य स्वत एव स्यात् । यदुक्तम्—"भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः । प्रपद्यमानस्य" इति प्रायोग्रहणेन क्वचिच्छांतभक्तेः प्रथमदशायां तयोर्ग्रहोऽपि नाश्रेयस्करः । 'भक्तिर्भुवो निर्विघ्नेत्यंतयुक्तविरक्तता' इति तन्मतमुक्तं भक्तिरसामृतसिंधौ ॥ ३१ ॥ तत्र भक्तस्य ज्ञानादीनां श्रेयस्साधनत्वाभावे । कर्मभिर्नित्यादिभिः । तपसा मनइन्द्रियनिरोधरूपेण । "मनसश्चेंद्रियाणाञ्च ह्यैकाग्र्यं परमं तपः" इत्युक्तेः । ज्ञानेन परात्मैक्यलक्षणेन । वैराग्येणाब्रह्मलोकजिहासारूपेण । योगेनाष्टांगेन । दानं जीवाभयप्रदानं तदेव धर्मो यत्र तेन संन्यासेन । यद्वा—दानेन वसुनः पात्रसमर्पणरूपेण धर्मेणातिथ्यादिना । सत्त्वशुद्ध्यादीत्यत्रादिनोपशांत्यादिग्रहः ॥ * ॥ ननु यदि कश्चित्त्वत्कथादावेव श्रद्धालुः कर्मज्ञानादिषु तदरोचकत्वादथ च तत्फलेषु स्वर्गापवर्गादिषु स्पृहावांश्च स्यात्तदा किं भवेदत आह—यदिति द्वाभ्याम् । इतरैरिति तैः । यद्भाव्यं तत्सर्वं भक्तियोगेन मद्भक्तो लभते तत्राप्यंजसाऽनायासेनैव । किं तत्सर्वं तदाह—स्वर्गापवर्गमिति । स्वर्गः प्रापञ्चिकसुखं सत्त्वशुद्ध्यादिक्रमेणापवर्गो मोक्षसुखं च तदतिक्रमसुखं च भवतीत्याह—मद्धाम वैकुंठं चेति । कथंचिद्भक्त्युपकरणत्वेनैव यदि वाञ्छति कश्चित् । तत्र श्रीचित्रकेत्वादिवत्स्वर्गवांछा तस्य भक्त्युपकरणत्वं चोक्तम्—"रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम्" इति । श्रीशुकादिवदपवर्गवांछा तत्प्रार्थनया श्रीकृष्णेन दूरीकृतायां मायायां सत्यां मातुर्गर्भान्निश्चक्रामेति ब्रह्मवैवर्तीयकथा । तत्र च भक्त्युपकरणत्वम्—'ब्रह्मभूतः प्रसन्नात्मा'

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ॥ स्वर्गापवर्गं मद्धाम कथंचिद्यदि वांछति ॥ ३३ ॥ न किंचित्साधवो धीरा भक्ता ह्येकांतिनो मम ॥ वांछंत्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३४ ॥ नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ॥ तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३५ ॥ न मय्येकांतभक्तानां गुणदोषोद्भवा गुणाः ॥ साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥ एवमेतान्मयादिष्टाननुतिष्ठंति मे पथः ॥ क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदुः ॥ ३७ ॥ इति श्रीमद्भागवते महापुराण एकाशस्कंधे भगवदुद्धवसंवादे विंशतितमोऽध्यायः ॥ २० ॥

वांछतीति ॥ ३२ ॥ ३३ ॥ तत्र हेतुमाह । न किंचिदिति । धीरा धीमंतो यतो मम एकांतिनो मय्येव प्रीतियुक्ता अतो मया दत्तमपि न गृह्णंति । किं वक्तव्यं न वांछंतीत्यर्थः । अपुनर्भवमात्यंतिकमपि कैवल्यम् ॥ ३४ ॥ तदुपपादयति । नैरपेक्ष्यमेव परमुत्कृष्टमनल्पकं महन्निःश्रेयसं फलं तत्साधनं च प्राहुः । मे भक्तिर्निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य पुंसो भवेत् । यद्वा मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः ॥ ३५ ॥ अनेन प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति । न मयीति । गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः पुण्यपापादयः साधूनां निरस्तरागादीनामतः समचित्तानामत एव बुद्धेः परमीश्वरं प्राप्तानाम् ॥ ३६ ॥ काम्यकर्मनिष्ठां निंदिष्यन्नेतान्मुक्तिमार्गानुपसंहरति एवमिति । मे पथो मत्प्राप्त्युपायान् येऽनुतिष्ठंति ते क्षेमं कालमायादिरहितं मम लोकं विंदंति । यत्परमं ब्रह्म तच्च विदुः ॥ ३७ ॥ इति श्रीमद्भागवत एकाशस्कंधे श्री० टीकायां विंशतितमोध्यायः ॥ २० ॥

इत्यादिगीतावचनम् । यथा प्राप्तभगवत्पदतदीयवृन्दविशेषवद्वैकुंठेच्छा ते हि प्रेम्णा साक्षाच्छ्रीमद्भगवच्चरणारविन्दसेवेच्छयैव तत्प्रार्थ्य प्राप्तवन्तः । 'यच्च व्रजंत्यनिमिषामृषभानुवृत्त्या' इत्यादिवत् ॥ ३२ ॥ ० ॥ * ॥ ० ॥ ॥ ३३ ॥ तत्र वांछाभावे । इत्यर्थ इति–दीयमानास्वीकारिणां वांछाभावः परवैराग्यं बोधयतीति भावः ॥ * ॥ **दीपिका**–तत्र वांछाभावे । एकस्मिन्मय्येवांतो निष्ठा येषां ते एकान्तिनः । अत एकान्तित्वात् ॥ ३४ ॥ तत् नैरपेक्ष्यम् । निराशिष इत्युक्तेरेव निरपेक्षतापि ज्ञायत एवेति पुनर्विशेषणस्याचमत्कृतिहेतुत्वादाह–यद्वेति । इत्यर्थ इति–निरपेक्षाणामेव भक्तिर्भवति सकामानां तु मद्वार्तापि न रोचत इति भावः ॥ * ॥ नैरपेक्ष्यं साधनांतरफलान्तरापेक्षाराहित्यम् । हि परं जात्या श्रेष्ठम् । अनल्पकं प्रमाणेनात्यधिकं निःश्रेयसं भवति । निराशिषः फलान्तरकामनाशून्यस्य । निरपेक्षस्य ज्ञानवैराग्यादावपेक्षाशून्यस्य ॥ ३५ ॥ अनेन च भक्तिरूपेण । अतो निरस्तरागत्वात् । अत एव समचित्तत्वादेव । 'यो बुद्धेः परतस्तु सः' इति श्रीगीतोक्तेः ॥ * ॥ यन्मयोक्तम्–"गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः" इति, तदेतादृशेषु भक्तेष्वित्याह–नेति । गुणदोषयोरुद्भवो येभ्यः सत्त्वरजस्तमोभ्यस्ते गुणा एकान्तभक्तानां न सन्ति किन्त्वप्राकृता एव गुणाः । यतो बुद्धेः प्रकृतेः परं सच्चिदानंदमेव वस्तु उपेयुषां न गुणमयं किञ्चिदपि मनइन्द्रियादिकम् 'निर्गुणो मदुपाश्रयः' इत्यग्रिमोक्तेः । यद्वा–गुणदोषोद्भवा विधिप्रतिषेधनिबंधना गुणा न भवन्तीति नैषां शिष्टाचारे कोऽपि गुणो भवति नापि निषिद्धाचरणे कोऽपि दोष इत्यर्थः । समचित्तानामिति–भक्तानां समचित्तानामुक्तं चित्रकेतूपाख्याने शंभुना–"नारायणपराः सर्वे न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥" इति । भक्त्या सिद्धेष्वेतेषु दोषदृष्टिर्न कर्तव्येति किं व्यक्तव्यं साधकेषु दुराचारेष्वपि सा न कार्या । एतच्च गीतं स्वयं भगवता–"अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥" इति ॥ ३६ ॥ एतान्पूर्वोक्तान्भक्तिज्ञानक्रियारूपान् ॥ * ॥ श्रेयोमार्गानुपसंहरति–एवमिति । येऽनुतिष्ठंति ते यथायोगं निष्कामकर्मिणः क्षेमं विंदन्ति भक्ताः मत्स्थानं वैकुण्ठं विंदन्ति ज्ञानिनो ब्रह्म विदुः साक्षात्कुर्वन्ति ॥ ३७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे विंशोध्यायः ॥ २० ॥

श्रीभगवानुवाच ॥ य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥ क्षुद्रान्कामांश्चलैः प्राणैर्जुषंतः संसरंति ते ॥ १ ॥
स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥

जयति स्वपरानंदः परानंदनृकेसरी ॥ यत्कृपालवलेशेन श्रीधरः सत्कृतिः कृती ॥ १ ॥ ईक्षंतामिच्छया संतः क्षमंतां मम साहसम् ॥ मया हि स्वीयबोधाय कृतमेतन्न सर्वतः ॥ २ ॥ एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ॥ कामिनां द्रव्यदेशादिगुणदोषाः प्रपंचिताः ॥ ३ ॥ तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तं तत्र ज्ञानभक्तिसिद्धानां न किंचिद्गुणदोषौ । साधकानां तु प्रथमतो निवृत्तिकर्मनिष्ठानां यथाशक्तिनित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणः तदकरणं निषिद्धकरणं च तन्मलीमसकरणत्वाद्दोषः । तन्निवर्तकत्वाच्च प्रायश्चित्तं गुणः । विशुद्धसत्त्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गुणः । भक्तिनिष्ठानां पुनः श्रवणकीर्तनादिभक्तिरेव गुणः । तद्विरुद्धं सर्वमुभयेषां दोष इत्युक्तम् । इदानीं ये तु न सिद्धा नापि साधकाः किंतु केवलं काम्यकर्मप्रधानास्तेषां सकलगुणदोषान्प्रपंचयिष्यान्नादौ तानतिबहिर्मुखान्निंदति । य एतानिति । मत्पथो मदुक्तमार्गान् क्षुद्रांस्तुच्छांश्चलैरस्थिरैः प्राणैर्देहवायुभिरिंद्रियैर्वा जुषंतः सेवमाना भवंति ते संसरंति । निखिलगुणदोषभाक्त्वे नानायोनीः प्राप्नुवंतीत्यर्थः ॥ १ ॥ ननु तैरेव कर्मभिः

स्वान्परांश्चानंदयति । यद्वा—स्वस्मिन्परास्तत्पराः स्वपरा भक्तास्तानानंदयतीति स्वपरानंदः । परानंदः परमानंदश्चासौ नृकेसरीति तथा । लवस्य लेशस्य लेशस्तेन । श्रीधरः कृती विद्वान् । सती श्रेष्ठा कृतिर्व्याकृतिर्यस्य स तथा जातः 'लब्धवर्णः कृती सूरिः' इति कोशात् । इहार्णवप्रविष्टैरावर्तलंघनायेश्वरार्थनवत्स्वामिचरणैरपि क्रियायोगस्यावर्ततुल्यतां दुस्तीर्यतां लोकस्यालक्ष्य नृसिंहप्रार्थना कृतेति ध्येयम् ( १ ) । तदेवाह—ईक्षंतामिति । इच्छया कृपया 'इच्छा वाञ्छानुकम्पयोः' इति धरणिः । साहसं चापलम् । स्वीयबोधाय स्वस्य विचाराय न सर्वतो न सर्वेषाम् अन्येषां मत्तोऽतीव संज्ञत्वात् । एतद्व्याख्यानम् ( २ ) । कामिनां काम्यकर्मप्रधानानाम् ( ३ ) । तत्र एषु ज्ञानादियोगाधिकारेषु । तदकरणं नित्यनैमित्तिकाकरणं तन्मलीमसकरणत्वादन्तःकरणमालिन्यापादकत्वात् । तन्निवर्तकत्वान्मालिन्यनिवर्तकत्वात् । सिद्धिर्मोक्षस्तद्धेतुत्वात् । तद्विरुद्धं श्रवणकीर्तनादिविरुद्धं विचारविरुद्धं च । उभयेषां भक्तिनिष्ठानां ज्ञानाभ्यासिनाञ्च । तान्काम्यकर्मप्रधानान् । मत्प्रापकाः पन्थानो मत्पंथानस्तान् । यद्यपि प्राणसंबन्ध एव विषयसेवने हेतुस्तथापि मुख्यत्वं तत्रेन्द्रियाणामेवेत्याह—इन्द्रियैर्वेति । इत्यर्थ इति—विषयसेविनः संसरन्तीति भावः ॥ * ॥ सकामकर्मिणो निन्दन्ति—य इति । मत्पथः समासान्ताभावस्त्वार्षः । मत्प्रापकमार्गान् । भक्तिः साक्षान्मत्प्रापिका, ज्ञानं मम निर्विशेषरूपब्रह्मप्रापकं, क्रिया निष्कामकर्मपरंपरा तत्प्रापकम् ॥ १ ॥ न ह्येकस्य वस्तुनो विरुद्धक्रियाकारित्वमुचितमित्याक्षिपति—नन्विति । वस्तुनिष्ठौ वास्तवौ । इति भाव इति—गुणदोषयोर्वास्तवत्वे व्यवहारनिरोधः स्यादिति तात्पर्यम् । ननु किमिति कामिनामेव गुणदोषौ न भक्तिज्ञानादिमतां तत्राह—वस्तुयाथात्म्यवेदिनां कल्पितगुणदोषयोर्दृष्टावधिकार एव नास्तीत्युक्तम्—स्वेस्वेधिकार इति ॥ * ॥ ननु मया को गुणः को दोष इति त्वं पृष्टस्त्वया च मद्भक्तेषु 'गुणदोषदृशिर्दोषः' इति प्रत्युक्तं तत्राहमिदमांशंके यदि कश्चित्त्वत्कथादौ श्रद्धालुः शुद्धभक्त्यधिकारी प्रतिष्ठितैः कर्मिभिर्ज्ञानिभिर्वा युक्त्या दैवाद्वशीकृतस्तदनुगत एव सन् औषधपानन्यायेनारोचकमपि कर्म करोति ज्ञानं वाभ्यस्यति तदा तस्मिन्भक्ते किं गुणदोषदृशिर्दोषः किं तदभाव एव गुणः । किंच—यदि कश्चिदप्राप्तमहत्कृपत्वाद्भक्तावजातसम्यक्श्रद्धः गर्वी ज्ञानी वा भक्तोत्कर्षं दृष्ट्वा तादृशनिजोत्कर्ष

**शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ॥ द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥**

**केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यं न ह्यग्निना केचित्प्लुष्यंते केचिन्नेति संभवति तत्राह । स्वेस्व इति । अधिकारभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः ॥ २ ॥ तदेवाह । शुद्ध्यशुद्धी इति । विचिकित्सार्थं संशयार्थं योग्यमयोग्यं वेति संदेहद्वारा स्वाभाविकप्रवृत्तिप्रतिबंधार्थमित्यर्थः । तत्र शुद्ध्यशुद्धी यो**

कामनयैव स्वाधिकारप्राप्तानि कृत्यानि त्यक्त्वा तद्वदेव भगवन्तं भजन्नात्मानं वैष्णवत्वेन ख्यापयति तदा तस्मिंस्तस्मिन्दांभिनि जगद्वंचके किं गुणदृष्टिः कर्तव्या न वेति चेत्सत्यम्, शृणु तर्हि गुणदोषयोर्लक्षणमित्याह—स्वे स्व इति । ज्ञानिनो ज्ञान एव कर्मिणः कर्मण्येवाधिकारस्तत्रैव निष्ठानिष्ठितत्वं गुणः । किंतु तयोः स्वतः फलदानासमर्थयोर्भक्तिमिश्रत्वेनैवानुष्ठेयत्वम् ‘ नैष्कर्म्यमप्यच्युतभाववर्जितम् ’ इत्यादेरन्यथा तु वैफल्यमेव, शुद्धभक्तस्य तु भक्तावेव निष्ठा गुणः । तस्यास्तु स्वत एव फलदानसामर्थ्यात् । कर्मज्ञानाद्यमिश्रत्वेनैवानुष्ठेयत्वम् ‘ धर्मान्संत्यज्य यः सर्वान्मां भजेत् ’ इति । ‘ न ज्ञानं न च वैराग्यम् ’ इत्यादेर्ज्ञानादेर्मिश्रत्वे सति तस्याः शुद्धभक्तित्वापगमः स्यात् । विपर्ययः पराधिकारनिष्ठत्वम् । उभयोः गुणदोषयोः ॥ * ॥ **संदर्भस्तु**—तत्र व्यावहारिकयोर्गुणदोषयोर्विधानार्थमाधिकारमात्रस्य पूर्वानुवादेनैव गुणदोषौ लक्षयति—स्वेस्व इति । अधिकारे कामित्वनिष्कामत्ववैराग्यश्रद्धाभिर्यथायोग्यतयाऽधिक्रियमाणे योगविशेषे । उभयोर्व्यावहारिकपारमार्थिकाधिकारिणोः । किंतु—पूर्वत्र गुणत्वं कल्पितमुत्तरत्र तु सिद्धमेवेति भावः । अत्र ज्ञानकर्मणोर्भक्त्यंशं विना सिद्ध्यभावेन तन्मिश्रतयैव विहितत्वान्न तेन तत्रतत्र निष्ठाच्युतिः । किंतु—सर्वनिरपेक्षतया सर्वसाधिकायां भक्तावेव तत्तदंशमिश्रत्वे कृते निष्ठाच्युतिः स्यादिति गम्यते । तदेवं भक्त्यंशसहाया कर्मनिष्ठा कर्मठे गुणः, तथा तत्सहाया ज्ञाननिष्ठा ज्ञानिनि ततोऽपि गुणः, निष्किंचनभक्तिनिष्ठा तु भक्तेः सर्वोत्कृष्टो गुणः किमुत तत्साध्यप्रेमलक्षणा भक्तिरिति पूर्वत्रदेव प्राप्तः । एवमेतद्विपर्ययो न्यूनेधिके वाधिकारे प्रवेशो दोषः । न्यूने पूर्वहानेः, अधिके परासिद्धेश्चेत्यर्थः ॥ २ ॥ तत्कल्पितत्वम् । इत्यर्थ इति—योग्यायोग्यविचारं विना प्रतिहता प्रवृत्तिर्भवेदिति भावः । तत्र शुद्ध्यादिषु । ते योग्यत्वायोग्यत्वे निमित्ते कारणे ययोस्ते चोपादेयत्वानुपादेयत्वे । योग्यतावान्पदार्थो गुणत्वेनोपादेयस्तद्विपरीतोऽनुपादेयः । ते उपादेयत्वानुपादेयत्वे निमित्ते ययोस्तौ तथा । उपादेयत्वविशिष्टोऽर्थस्तद्विपरीतोऽनर्थ इत्यर्थः । यद्वा—तन्निमित्तेत्यस्य गुणदोषनिमित्तेत्यर्थः । तन्निमित्तौ शुभाशुभनिमित्ताविति समानेषु सच्चित्स्वरूपे मयि मायाकल्पितपंचभूतात्मकत्वेन तुल्येषु ॥ * ॥ अत्र व्यावहारिकेष्वपि स्वेस्व इत्यनुसारेणैव गुणदोषौ विवृणोति—शुद्ध्यशुद्धी इत्यादिना । तत्र शुद्धीति सार्धकम् । टीकायां धर्मार्थमिति प्रायिकमेव । विचिकित्साप्रस्थापनादिलक्षणव्यवहारार्थमपि तदुपयुक्तद्रव्यादीनां तत्तच्छास्त्रे शुद्ध्यशुद्धित्वशुभत्वाशुभत्वविधानदर्शनात् । एवमुत्तरत्रापि गुणदोषौ व्यवहारार्थमिति विनापि शुद्ध्यशुद्धिव्यवस्थां केवलं व्यवहारार्थमपि गुणदोषौ विधीयेते इत्यर्थः । शुभाशुभौ धर्मार्थमिति विनापि गुणदोषव्यवस्थां केवलवृत्त्यर्थमपि तौ विधीयेते इत्यर्थः । तस्माद्गुणदोषावित्यादिलक्षणे तूपलक्षणे एवेति भावः । अतः शुद्ध्यशुद्ध्यादियुग्मत्रिकेण धर्मार्थत्वादीनां योजना न यथासंख्यं सर्वत्र सर्वविधानदर्शनात् । व्यवहारोत्र परमार्थशास्त्रमात्रानुगतो न तु पूर्ववत्परमार्थेतरपद्धतिः, धर्मयात्रयोस्तादितरयोः पृथगुपादानात् ॥ * ॥ **दीपिका**—तदेवाह—गुणदोषयोः कल्पितत्वमेवाह । शुद्धीति सार्धकम् । विचिकित्साशब्दस्य विचिकित्साकार्ये प्रवृत्तिप्रतिबन्धं लक्षणाऽत इत्यर्थ इत्युक्तम् । तन्निमित्ते ते योग्यत्वायोग्यत्वे निमित्ते कारणे ययोस्तथाभूते, उपादेयत्वानुपादेयत्वे पुनस्तन्निमित्ते ते उपादेयत्वानुपादेयत्वे निमित्ते ययोस्तावर्थानर्थौ । तत्र शुद्ध्यशुद्ध्यादिमध्ये शुद्धेन देशकालादिषट्पदार्थेन व्यवहारार्थमिति विनापि शुद्ध्यशुद्धी व्यवस्थां केवलव्यवहारार्थमपि गुणदोषावुपादेयत्वानुपादेयत्वे विधीयेते । अत एवाशुद्धावपीति व्याख्यातम् । नान्यदिति प्रतिग्रहादिकं नोपादेयं यात्रार्थमिति । विनापि गुणदोषव्यवस्थां केवलवृत्त्यर्थमपि तौ शुभाशुभौ विधीयेते,

धर्मार्थं व्यवहारार्थं यात्रार्थमिति चाऽनघ ॥ दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥ ४ ॥ भूम्यंब्वग्न्यनिलाकाशा भूतानां पंच धातवः ॥ आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥ वेदेन नामरूपाणि विषमाणि समेष्वपि ॥ धातुषूद्धव कल्प्यंत एतेषां स्वार्थसिद्धये ॥ ६ ॥

ग्यत्वायोग्यत्वे । गुणदोषौ तन्निमित्तोपादेयत्वानुपादेयत्वे । शुभाशुभौ तन्निमित्तावर्थानर्थौ ॥ ३ ॥ तत्र शुद्ध्यशुद्धी धर्मार्थम् । शुद्धेन धर्मः अशुद्धेनाधर्म इति । गुणदोषौ व्यवहारार्थम् । अशुद्धावपि राजादीनां व्यवहारदर्शनाद्युपादेयं नान्यदिति । शुभाशुभौ यात्रार्थं दोषत्वेऽप्यापत्सु शरीरनिर्वाहमात्रोपादाने न पापमधिकोपादाने तु पापमिति । मया मन्वादिरूपेण । धर्मरूपां धुरं भारमुद्वहताम् । कर्मजडानामित्यर्थः ॥ ४ ॥ शुद्ध्यशुद्धी प्रपंचयिष्यन्वेदोक्तत्वेन तदभिनिवेशो मा भूदिति समानेष्वपि वस्तुष्विति यदुक्तं तत्प्रपंचयति भूमेति त्रिभिः । भूतानां प्राणिनाम् । धारयंतीति धातवः कारणानि । शारीराः शरीरारंभकाः । देहतः साम्यमुक्तं जीवतोऽप्याह । आत्मसंयुता इति ॥ ५ ॥ धातुषु देहेषु । नामरूपाणि वर्णाश्रमादीनि । कल्पनायाः प्रयोजनमाह । एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिपुरुषार्थसिद्धये ॥ ६ ॥

अत एव दोषत्वेऽपीति व्याख्यातम् ॥ ३ ॥ तदेव स्फुटयति–तत्रेति । तत्र शुद्ध्यादिषु । शुद्धेन शुद्धपदार्थस्वीकारेण धर्मः सिध्यति । व्यवहारार्थं व्यवहारसिद्धये गुणदोषावुभावपि ग्राह्यावेव । यथाऽशुद्धावपि सूतकाद्यशौचेऽपि राजादीनां व्यवहारस्यर्णदानाद्यष्टादशविषयस्य दर्शनादि । प्रथमादिना ब्राह्मणानामपि यज्ञार्थमृत्विक्त्वेन वृतानामार्त्विज्यं कार्यमेव । द्वितीयादिना शांतिहोमादिग्रहः । नान्यदिति संध्यावंदनं विहायान्यच्छ्रौतस्मार्तकर्मादि न कार्यमित्यर्थः । यत्तु छंदोगपरिशिष्टे–“ मृतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ” इत्युक्तं तत् मानससन्ध्येतरपरमिति ज्ञेयम् । “ सूतके मृतके चैव संध्याकर्म न संत्यजेत् । जपेच्च मानसीं सन्ध्यां प्राणायाममृते द्विजः॥ ” इति स्मृतेः । व्यवहारलक्षणमपि कात्यायनेनोक्तम्–“ विर्नानार्थेऽव संदेहे हरणं हार उच्यते । नानासंदेहहरणाद्व्यवहार इति स्मृतः ॥ ” इति । विरुद्धार्थिप्रत्यर्थिवाक्यजानितसंदेहहारी विचार एव व्यवहार इति निर्गलितोऽर्थः । राजादीनामशौचाभावो मनुनोक्तः–“ न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम । ऐन्द्रं स्थानं समासीना ब्रह्मभूता हि ते सदा ॥ ” इति । राज्ञामभिषिक्तक्षत्रियाणाम् । ऐन्द्रस्थानं राज्याभिषेकाख्यम् । व्रतिनां ब्रह्मचारिणां चान्द्रादिव्रतकारिणां वा । सत्रिणां यागप्रवृत्तानां यतस्ते ब्रह्मेव निष्पापाः । अशौचाभावश्च कर्मविशेष एव न सर्वथेति । तदाह विष्णुः–“ अशौचं न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे ” इति । राजकर्म च व्यवहारदर्शनशांतिहोमादिकर्माणीत्यलं प्रसक्तानुप्रसक्तेन । यात्रार्थं देहनिर्वाहार्थम् । इत्यर्थ इति–न त्विहामुत्र विरक्तानां मदेकपराणामितिं भावः ॥ * ॥ दर्शित इत्यर्धकम् । धर्ममुद्वहतां धुरमिति मद्भक्तिमुद्वहतामाचारः सुखमय एवेत्यर्थः । सुखस्वरूपया भक्त्यैव प्रवृत्तत्वादिति ॥ ४ ॥ तस्यां शुद्धावशुद्धौ चाभिनिवेशो हठेन संपादनमत्यासक्तिरिति यावत । आत्मसंयुताः अनुगतसच्चिदात्मना देहादिषु संघातेषु स्फुरता संयुताः ॥ * ॥ वेदप्रोक्तत्वेन हेतुना भक्तस्य तदभिनिवेशः । शुद्ध्यशुद्ध्यासक्तिर्मा भून्न भवत्विति हेतोः । तत्समानत्वम् । कारणानि शरीरेभ्यः पूर्ववर्तीनि । अत एव शरीरारंभकाः शरीरजनकाः । औत्पत्तिकत्वेन सर्वदेहानां समत्वाज्जीवानां देहतः साम्युमुक्तम् ॥ ५ ॥ उद्धवेति संबोधयन्नुद्धवादिनामवत्कल्प्यंत इति सूचितवान् ॥ * ॥ वर्णाश्रमादीनि ब्राह्मणब्रह्मचर्यादीनि नामानि, रूपाणि द्विपदत्वानि उत्तममध्यमाधमत्वानि च । व्याख्येयं प्रवृत्तिनियमद्वारा प्रवृत्तिसंकोचक्रमेण । आदिना मोक्षपर्यन्तानां परिग्रहः ॥ * ॥ **विश्वनाथस्तु**–धातुषु देहेषु । समेष्वपि नामरूपाणि वाचकवाच्यानि ब्राह्मणोऽयमिति, ब्रह्मचार्ययमिति, तांबूलिकतैलिकादिरयमिति वर्णाश्रमादिनिबंधनानि कल्पनाय।

देशकालादिभावानां वस्तूनां मम सत्तम ॥ गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥
अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ॥ कृष्णसारोप्यसौ वीरकीकटासंस्कृतेरिणम् ॥ ८ ॥

न केवलं देहेष्वेवापि तु देशकालादिभावानामपि । आदिशब्देनानुपादेयानां फलनिमित्ताधिकारिणां ग्रहणम् । वस्तूनामुपादेयानां व्रीह्यादीनामपि । मम मया । नियमार्थं प्रवृत्तिसंकोचार्थमित्यर्थः ॥ ७ ॥ एवं गुणदोषविषयं परिशोध्य तयोः शुद्ध्यशुद्धिमूलत्वाच्छुद्ध्यशुद्धी प्रपंचयति अकृष्णसार इत्यष्टभिः । देशानां मध्ये कृष्णहरिणरहितोऽशुचिः । तत्राप्यब्रह्मण्यो ब्राह्मणभक्तिशून्योऽत्यंतमशुचिः । कृष्णसारोऽपि कृष्णेन मृगेण सारः श्रेष्ठो यः सोऽप्यसौ वीरकीकटः सुवीराः सत्पुरुषास्तद्वान्सौवीरः तादृशो न भवति स कीकटतुल्यः अर्थात् सौवीरः कीकटोपि शुचिः । तदुक्तम् । " स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते " इति । तद्वर्जितो यः कीकटोंगवंगकालिं

हेतुः । एतेषां प्राणिनामिति तैः ॥ * ॥ संदर्भस्तु—समेषु सर्वेषामात्मसंयतत्वाद्गुणाधिक्याभाववत्सु भौतिकत्वाद्दोषत्वाविशेषेष्वपि नामानि ब्राह्मणादीनि, रूपाणि उत्तमादित्वेन भिन्नानि, निंबभेदस्वादुवद्गुणदोषतया कल्प्यन्ते केवलमुपचर्य्यंते । किमर्थम्—स्वाधिकारानुरूपायामेव प्रवृत्तौ जीवानां स्वार्थो धर्मादिः सिद्ध्यति तेन प्रवृत्तिसंकोचात् क्रमेण मोक्षश्च सिद्ध्यतीत्येतदर्थमित्यर्थः ॥ ६ ॥ उक्तार्थमन्यत्रातिदिशति—न केवलमिति । अनुपादेयानामस्वीकार्याणाम्, हस्तादिना ग्रहीतुमशक्यानाम् । यद्यपि फलनिमित्तयोरमूर्तत्वेन ग्रहणमशक्यमधिकारिणस्तु मूर्तत्वेनोपादानं सुकरमिति चेदत्र शुद्धं चित्तमेवाधिकारि न तु तन्मूर्तमिति । आदिनाऽन्यधान्यग्रहः । विधीयेते अनूद्येते । इत्यर्थ इति—स्वाभाविकप्रवृत्तकर्मणां संकोचार्थमेव गुणदोषविधानमिति भावः ॥ * ॥ दीपिका—फलनिमित्ताधिकारिणां कामिनां, कीदृशानाम्—अनुपादेयानाम् ' वेदा ब्रह्मात्मविषयाः ' इति वक्ष्यमाणत्वाच्चित्तशुद्ध्यर्थमेव कर्माणि विहितानि न काम्यफलार्थमतः फलमुद्दिश्य कर्तारो हि अयोग्या एवात एवानुपादेया इति तेषां निखिलगुणदोषौ विधीयेते इत्यर्थः । उपादेयानां यागादिकर्मणि योग्यत्वेन ग्राह्याणामित्यर्थः । नियमशब्दस्य व्यवस्थार्थत्वाद्व्यवस्थायाश्च संकोचे पर्यवसानादित्यर्थ इत्युक्तं संदर्भेनियमार्थं व्यवस्थार्थं संकोचार्थं च । तदेतच्च श्रीभगवत्संबंधं विनैव, तत्संबंधे तु ' निर्गुणो मदपाश्रयः ' ' मन्निकेतं तु निर्गुणम् ' इत्यादिवक्ष्यमाणत्वात् प्राकृतगुणातीतगुणाश्रयस्य ममेति वेदात्मकेन मयेत्यर्थः ॥ ७ ॥ परिशोध्य दर्शयित्वा । तयोर्गुणदोषयोः । शुद्ध्यशुद्धी मूलं कारणं ययोस्ते तथा तयोर्भावस्तथा तस्मात् " कृष्णसारो मृगो यत्र धर्मदेशः स उच्यते " इति गारुडोक्तेः । तत्रापि कृष्णहरिणसंचारसत्त्वेपि । सत्पुरुषाः हरिभक्ताः श्रोत्रियाः । तद्विवर्जितः सत्पात्ररहितः । आदिना सौराष्ट्रादिग्रहः । तदुक्तम्—" अंगवंगकलिंगेषु सौराष्ट्रमगधेषु च । तीर्थयोगं विना गत्वा पुनः संस्कारमर्हति ॥ " इति । आदिना लेपनग्रहः । संमार्जनादिशून्यत्वेनाशुचित्वे तीर्थोपान्त्यदेशस्याशुचित्वं स्यादत आह—म्लेच्छबहुलो वेति । " गोमांसभक्षको यस्तु लोकबाह्यश्च भाषते । सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते॥" । अमरेण तु—" भेदाः किरातशबरपुलिंदा म्लेच्छजातयः " इति । एकवद्भावः कीकटादीनां समाहारद्वन्द्वात् । तत् सः । तदन्यः कीकटाद्यन्यः ॥ * ॥ गुणदोषविषयं देशकलादिषट्कं विविच्य तयोर्गुणदोषयोः । तत्राप्यकृष्णसारत्वेपि । कीकटः कलिंगादिः । सत्पुरुषवर्जितोऽशुचिः । कीकटश्चासंस्कृतश्चेरिणं चेति समाहारद्वन्द्वत्वादेकवद्भावः । तदन्यः असौवीरादन्यो भक्तवान् कीकटादिरपि श्रुचिरित्यर्थात्तात्पर्यवशादुक्तम् ॥ * ॥ संदर्भः—कृष्णमृगेण श्रेष्ठोऽपि सुवीरैर्ब्राह्मणैः हीनश्चेदकीकटोप्यशुचिः, तद्युक्तश्चेत्कीकटोऽपि शुचिरिति । अब्रह्मण्या ब्राह्मणभक्तिशून्या यत्र संति स त्वत्यंतमशुचिः । 'भगवत्कलावीरकुलं कदर्थीकृत्य' इत्यत्र पञ्चमस्कन्धे वीरशब्दो विप्रपरत्वेन प्रयुक्तः, सुष्ठुवीरः सुवीरः ।

कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा ॥ यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः ॥ ९ ॥ द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च ॥ संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथ वा ॥ १० ॥ शक्त्याऽशक्त्याऽथ वा बुद्ध्या समृद्ध्या च यदात्मने ॥ अवं कुर्वंति हि यथा देशावस्थानुसारतः ॥ ११ ॥

गादिः असंस्कृतः संमार्जनादिशून्यो म्लेच्छबहुलो वा । ईरिणमूषरम् । एकवद्भावः । तदशुचि । तदन्यः शुचिरित्यर्थादुक्तं भवति ॥ ८ ॥ कालस्य शुद्ध्यशुद्धी दर्शयति । कर्मण्य इति । द्रव्यतो द्रव्यसंपत्त्या स्वतो वा पूर्वाह्णादिर्यः कर्मण्यः कर्मार्हः स कालस्तस्मिन्कर्माणि गुणवाञ्छुद्ध इत्यर्थः । यतो यस्मिन्द्रव्यालाभेन वा राष्ट्रविप्लवादिना वा कर्म निवर्तते । यश्च सूतकादौ दशाहादिलक्षणोऽकर्मकः कर्मानर्हः स्मृतः स कालो दोषः । अशुद्ध इत्यर्थः ॥ ९ ॥ वस्तुशब्दोपात्तानां द्रव्याणां शुद्ध्यशुद्धी दर्शयति द्रव्यस्येति चतुर्भिः । द्रव्येण तोयादिना शुद्धिर्मूत्रादिना त्वशुद्धिः । वचनेन शुद्धमशुद्धं वेति संदेहे शुद्धमित्येवंरूपेण ब्राह्मणवचनेन शुद्धिर्विपरीतेनाशुद्धिः । संस्कारेण प्रोक्षणादिना पुष्पादेः शुद्धिरवघ्राणादिना त्वशुद्धिः । कालेन दशाहादिना नवोदकादेः शुद्धिः । "काले मेघोदकं ग्राह्यं वर्ज्यं तु त्र्यहमेव हि । अकाले दशरात्रं स्यात्ततः शुद्धिर्विधीयते ॥" विपरीतेनाशुद्धिः पर्युषितान्नादेरशुद्धिः । अंत्यजाद्युपहतानां तडागाद्युदकानां महत्त्वाल्पत्वाभ्यां शुद्ध्यशुद्धी ॥ १० ॥ शक्त्याऽशक्त्या सूर्योपरागादिसूतकान्नादेः शक्तान्प्रत्यशुद्धिरशक्तान्प्रति शुद्धिः । बुद्ध्या पुत्रजननादौ दशाहाद्बहिर्ज्ञानेन शुद्धिरंतर्ज्ञानेनाशुद्धिः । समृद्ध्या जीर्णमलवद्वस्त्रादेः समृद्धं प्रत्यशुद्धिर्दरिद्रं

सुपदं भगवत्कलार्थबोधकम् । तेन हि वेदशास्त्रवित्त्वमुक्तं, वेदविद्ब्राह्मणनिवासशून्योऽसौवीर इति सिद्धम्॥८॥आदिना मृतकादिग्रहः।इत्यर्थ इति–"यस्मिन्काले शुभं कर्म स कालः शुद्ध ईरित" इत्युक्तेरिति भावः॥०॥*॥९॥ द्रव्यस्य ताम्रादेः । आदिनाम्लादिग्रहः । पुनरादिना श्लेष्मादिग्रहः । वचनेनार्षवाक्येन । यथालाब्वादिपात्रं यतेः शुद्धं तदितरेषामशुद्धम् । तथाहि–"अलाबूर्दारुपात्रं वा मृन्मयं वैणवं तथा । एतानि यतिपात्राणि नेतरेषां कदाचन ॥" इत्यादिस्मृतिवचनेन शुद्धिरशुद्धिश्च । एवं मृगचर्मशंखादेर्वचनेन शुद्धिस्तदितरचर्मास्थ्यादेर्वचनेनैषाशुद्धिः । आदिना गलितपत्रापाकरणादिग्रहः । द्वितीयादिना पत्रादिग्रहः । यस्मात्कस्माद्गृहीतं पुष्पादि प्रोक्षयित्वा तेनार्चनादि कुर्यात् । बिल्वपत्रतुलसीकुशपत्राणि च द्विजेतरानीतानि न गृह्णीयात् । "तुलसीबिल्वपत्राणि कुशपत्राणि वा द्विजः । द्विजानीतानि गृह्णीयाद्दैवे पित्र्ये च कर्मणि ॥" इत्युक्तेः । अवघ्राणं गंधोपादानम् । आदिनांगोपरिस्थापनादिग्रहः । काले वर्षर्तौ । अकाले वर्षर्तुभिन्नकाले । आदिना त्र्यहादिग्रहः । द्वितीयादिना सूतकादिग्रहः । "विप्रः शुद्ध्येद्दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥" । एवम्–"दशाहेन सपिण्डास्तु शुध्यंति प्रेतसूतके । त्रिरात्रेण सकुल्यास्तु स्नानमात्रेण गोत्रजाः ॥" इत्यादि । विपरीतेन उक्तविपर्ययेण । पर्युषितमत्र रात्र्यंतरितम् । आदिना जलादिग्रहः । "वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् । अ-र्ज्यं जाह्नवीतोयं तुलसीबिल्वपद्मकम् ॥" इत्याद्युक्तेः । आदिना वाप्यादिग्रहः । अल्पत्वं च सहस्रघटपूर्तेन्यूनत्वं तडागाद्येकदेशस्थत्वं वा "तत्राक्षोभ्यतडागानि नदी वाप्यः सरांसि च । कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत् ॥" इति देवलोक्तेः ॥ * ॥ ० ॥ १० ॥ सूर्योपरागादीनां यत्सूतकं तत्रस्थं यत्पक्वान्नादि । अत्राद्यादिपदेन चन्द्रोपरागग्रहः । द्वितीयेन तोयादिग्रहः । "सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत श्रृतमन्नं परित्यजेत् ॥" इति मेधातिथिः । तत्रापि शुद्ध्यशुद्धिविचारेऽपि । अघं दोषम् ।

धान्यदार्वस्थितंतूनां रसतैजसचर्मणाम् ॥ कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥ १२ ॥

प्रति शुद्धिः । तत्रापि विशेषमाह । यदिति । एते च द्रव्यवचनादयो द्रव्याशुद्धिद्वारा आत्मने यदघं कुर्वंति तद्देशावस्थानुसारत एव यथा यथावत्कुर्वंति न सर्वतः । तथाहि निर्भय एव देशे कुर्वंति न तु चौराद्याकुले । तथा रोगादिव्यतिरिक्तयुवाद्यवस्थायामेव कुर्वंति न बाल्यरोगाद्यवस्थायामिति । तथा च स्मृतिः "देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत ॥ " इति ॥ ११ ॥ द्रव्यादिभिर्द्रव्यस्य शुद्धिरित्युक्तं तत्र वचनादिशुद्धिरेकरूपैव । द्रव्यतस्तु शुद्धिर्बहुरूपेति तां प्रपंचयति । धान्येति । दारु लौकिकं ग्रहचमसादि च । अस्थि गजदंतादि । रसास्तैलघृतादयः । तैजसाः सुवर्णादयः । तेषां पार्थिवानां च रथ्याकर्दमघटे

देशावस्थानुरोधेन शौचं कार्यमित्यत्र स्मृतिं प्रमाणयति–तथा चेति । आत्मानं शरीरं, द्रव्यं मृत्तोयादि, तत्प्रयोजनं तदुत्पादितां शुद्धिम् । एतावतेयती शुद्धिः स्यादित्यतोऽधिकं न ग्राह्यम् । उपपत्तिं यदि तुलसीमूलदेशस्थमृदेव पुनाति तर्हि तुलसीपत्रादि कथं न पुनाति पुनात्येवेत्येवंरूपां युक्तिं च । अवस्थां बालरोगादिरूपाम् " बालानां प्रोक्षणाच्छुद्धिरार्तानामच्युतस्मृतेः " इत्यादिस्मरणान्नह्यशुचिबालार्तवृद्धानां पावित्र्यार्थं शीततो यस्नानादावाग्रहः कार्य इति बोधायनोक्तस्मृतिपदार्थः । यद्वा–द्रव्यं तत्तद्देशीयमृज्जलादि तेनैव शौचादिकार्यं । न तु गिरिष्ठस्तदधोदेशांतरीयमृज्जलाद्यपेक्षेतेत्यर्थः । तदुक्तं मरीचिना–" येषु देशेषु यच्छौचं धर्माचारश्च यादृशः । तत्रत्यं नावमन्येत धर्मस्तत्रैव तादृशः ॥ यत्र देशेषु ये देवा येषु देशेषु ये द्विजाः । येषु स्थानेषु यत्तोयं या च तत्रैव मृत्तिका ॥ तत्र तान्येव गृह्णीयात्तत्रत्यैरेव मानवैः । " इति ॥ * ॥ दीपिका– स्मृत्यर्थस्तु–देशं निर्भयदेशं, कालं महर्घादिदोषशून्यम्, आत्मानं ब्राह्मणादिरूपं, द्रव्यमल्पबहुधान्यादिरूपं, द्रव्यप्रयोजनं च, यदि पक्वान्नादि विवाहादौ भोजनादिप्रयोजनं सद्य उपस्थितं तर्हि " तन्मात्रद्रव्यमुद्धृत्य शेषं संस्कारमर्हति " इत्युक्तेः । उपपत्तिं युक्तिम् । यथा–प्रोक्षणमात्रेण पुस्तकशुद्धिर्न तु प्रक्षालनतापनादिना मूलनाशापत्तेः, इति शौचान्यथानुपपत्त्या प्रोक्षणमात्रमेव तच्छोधकं कल्प्यते । अवस्थां बालाद्यवस्थाम् । यथा– " अहस्तदत्तकन्यासु बालेषु च विशोधनम् " अदत्ता अपरिणीता याः कन्यास्तासु कृतचूडासु वाग्दानात्प्राक् अहोरात्रं विशोधनं सपिंडानां सापिंड्यं च कन्यानां त्रिपुरुषपर्यन्तमेव । " अप्रत्तानां तु स्त्रीणां त्रिपुरुषीं विज्ञाय " इति वसिष्ठवचनात् । बालेषु चानुत्पन्नदन्तेषु अग्निसंस्कारे सत्येवाहोरात्रं विशोधनम् । एवम् ' वृद्धबालातुरान्विना ' इत्युक्तेः सूतकादौ तेषां शुद्धिर्विज्ञेया ॥ ११ ॥ तत्र तासु शुद्धिषु । वचनादी हादिना कालादिग्रहः । लौकिकं पाकाद्यर्थानीतम् । ग्रहचमसादीनि यज्ञपात्राणि । आदिना प्राशित्रादिग्रहः । आदिना शंखादिग्रहः । यथायथं स्मृत्युक्त्यनुसारेण । तत्रापि कालादिना शोधनेपि । यावत्स्थलकालादिभिरशोधितं तावदेव शोधयेदित्यर्थः । एतैः कालादिभिः । अन्यैः फेनिलादिभिः । तथाहि मनुः–" मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि । चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन च ॥ चरूणां स्रुक्स्रुवाणां च शुद्धिरुष्णेन वारिणा । स्याच्छूर्पशकटानां च मुसलोलूखलस्य च । अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् । प्रक्षालनेन स्वल्पानामद्भिरेव विधीयते ॥ चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च । शाकमूलफलानां च धान्यवच्छुद्धिरिष्यते ॥ प्रोक्षणात्तृणकाष्ठानि पलालञ्च विशुद्ध्यति । मार्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृन्मयम् ॥ " उपांजनं लेपनम् । वायुः–" मणिवज्रप्रवालानां मुक्ताशंखोपलस्य च । सिद्धार्थानां तु कल्केन तिलकल्केन वा पुनः ॥ " बोधायनः–" आसनं शयनं यानं नावः पंथास्तृणानि च । मारुतार्केण शुद्ध्यन्ति पक्वेष्टिकचितानि च ॥ आत्मशय्यासनं वस्त्रं जायापत्यं कमण्डलुः । शुचीन्यात्मन एतानि परेषामशुचीनि च ॥ " इति । " सुवर्णरूप्यशंखाश्मशुक्तिरत्नमयानि च । कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ॥ निर्लेपाणि च शुद्ध्यन्ति केवलेनोदकेन च । " । हारीतस्तु–' अद्भिः कांचनरत्नानाम्'

अमेध्यलितं यद्येन गंधं लेपं व्यपोहति ॥ भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते ॥ १३ ॥

ष्टकादीनां यथायथं कालादिभिः शुद्धिः । तत्रापि काकांत्यजाद्युपघाततारतम्येन देशकालावस्थाद्यनुसारेणैव एतैरन्यैर्वा युतायुतैर्मिलितैः केवलैश्च । कालस्य पुनर्ग्रहणं युत त्वप्रदर्शनार्थम् ॥ १२ ॥ अस्पृश्यस्पर्शे शुद्धिमुक्त्वा लेपविषयेऽप्याह । यत्पीठपात्रवस्त्रादि येन तक्षणक्षाराम्लोदकादिना गंधं लेपं च व्यपोहति त्यजति स्वगतं च मलं त्यक्त्व प्रकृतिं स्वमेव रूपं भजते तस्य तच्छौचं शोधकम् । यावता च तक्षणादिना व्यपोहति तावत्प्रमाणं स्वरूपत आवृत्तितो वा तत्कर्तव्यमिष्यते ॥ १३ ॥

तद्गुणवर्णयोगात् । स्नेहवैवर्ण्योपहतानां यवगोधूमकलायमाषगोमयचूर्णैर्गोरोचनाद्भिः प्रक्षालनम् । अम्ललवणाभ्यां ताम्राणां, भस्मना कांस्यानां, शाणघर्षणैः शैलानां, शिलावघर्षणमार्जनैर्मणिमयानां, निर्लेखनैर्दारुमयानां, पुनःपाकेन मृन्मयानां, गोमयगोमूत्रैर्वेणुदलानां, गोवालरज्ज्वा सोदकया फलपात्राणां, मार्जनं कमण्डलूनां यतिपात्राणां च, क्षारोदकाभ्यां कार्पासशणमयानां, पुत्रजीवारिष्टकैः क्षौमदुकूलानां, पुत्रजीवोदश्विद्भिश्चीनानां, श्रीफलयुतश्वेतसर्षपैः कौशेयानाम् , उदश्विद्वल्मीकमृत्तिकया सर्षपैरूर्णानां, स्नेहसक्तुकुल्माषोद्वर्तनैर्गुरूणाम् । “ पक्वान्नं तु गवाघ्रातं मक्षिकाकेशदूषितम् । छागाघ्रातं च तत्कृत्वा शोध्यं रत्नांबुभि. सह ॥ ” मनुः–“ देवद्रोण्यां विवाहे च यज्ञेषु प्रकृतेषु च । काकैः श्वभिश्च यत्स्पृष्टं तदन्नं नैव दुष्यति ॥ तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति । धन्यानां प्रोक्षणाच्छु द्धिर्द्रव्याणामग्नितापनात् ॥ ” शातातपः–“ गोकुले कन्दुशालायां तैलयंत्रेक्षुयंत्रयोः । अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥ ” देवलः–“ दहनं खननं भूमेरुपलेपनवापनम । पर्जन्यवर्षणं चैव शौचं पंचविधं स्मृतम ॥ सूर्येन्दुरश्मिपातेन मारुतस्पर्शनेन च । गवां मूत्रपुरीषेण श्रुध्यंत्याप इति स्मृतिः ॥ ” इति गुरुः । विष्णुः–“ वेदमंत्राः कुशाश्चैव ब्राह्मणाश्च हुताशनः । नैते निर्माल्यतां यांति क्रियमाणाः पुनःपुनः ॥ ” अस्यापवादमाह स एव–“ मंत्राः शूद्रेषु निर्माल्या ब्राह्मणाः प्रेतभोजने । कुशाः पिंडेषु निर्माल्याश्रितायां च हुताशनः ॥ ” इत्यलमतिप्रपञ्चेन ॥ * ॥ **दीपिका**–तत्र द्रव्यशुद्धौ । तां द्रव्यतः शुद्धिम् । यथायथं धर्मशास्त्रानुसारेण । तत्र धान्यानां शुद्धिः प्रोक्षणात् । यथाह बोधायनः–“ व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च । तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा ॥ ” इति । लौकिक काष्ठस्य तक्षणादिना “ काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि ” इति यावज्ञवल्क्योक्तेः । गजदंतादेस्तु गोमूत्रादिभिः “ गोमूत्रेणास्थिदंतानां क्षौमाणां गौरसर्षपैः ” इति यमोक्तेः, “ सिद्धार्थकानां कल्केन दंतशृंगमयस्य च । गोबालैः फलपात्राणामस्थ्नां स्याच्छृंगवत्तथा ॥ ” इति शंखोक्तेश्च । तैलघृतादीनां तु श्रपणादिना “ श्रपणं घृततैलानां प्लावनं गोरसस्य च । भांडानि क्षालयेदद्भिः शाकमूलफलानि च ॥ ” इति शंखोक्तेः । अत्र चाद् घृततैलयोरपि प्लावनम् । प्लावनं वस्त्रांतरितपात्रे प्रक्षेपः । तस्मिन्नेव पात्रे यथा तद्बहिर्निःसरति तथा तज्जातीयद्रव्येण पूरणं वा । सुवर्णादीनां च जलादिना “ सुवर्णरूप्यशंखाश्मशुक्तिरत्नमयानि च । कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ॥ निर्लेपाणि च शुद्ध्यन्ति केवलेन जलेन च । शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिः ॥ ” इति ब्राह्मादित्यपुराणोक्तेः । रथ्या राजमार्गस्तस्या मारुतार्कादिना शुद्धिः । “ आसनं शयनं यानं नावः पंथास्तृणानि च । मारुतार्केण शुद्ध्यन्ति पक्वेष्टकचितानि च ॥ ” इति बोधायनः । एवं कर्दमस्यापि । घटादेस्तु–“ मृन्मयानां तु पात्राणां दहनाच्छुद्धिरिष्यते ” इति देवलः । ‘ पुनःपाकेन मृन्मयम् ’ इति मनुयाज्ञवल्क्यौ । चर्मणां तु ‘ कृष्णाजिनानां वातैश्च ’ इति यमोक्तेः । तत्रापि पूर्वोक्तशुद्धावपि । एतैः कालादिभिरन्यैश्च गौरसर्षपादिभिः कार्पासिकवस्त्रादीनां शुद्धिः । युतैः यथा–तैजसानां मृत्तोयादिभिः । अयुतैरेकेनैव यथोर्णातन्तूनां केवलवायुनेति ॥ १२ ॥ अमेध्येन असृगादिना लिप्तम् । मलमूत्रासृक्पूयरेतोवसामज्जादीनि मुनिभिरमेध्यान्युक्तानीति । आदिना भूषादिग्रहः । द्वितीयादिन

स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः ॥ मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद्द्विजः ॥ १४ ॥ मंत्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ॥ धर्मः संपद्यते षड्भिरधर्मस्तु विपर्ययः ॥ १५ ॥ क्वचिद्गुणोपि दोषः स्याद्दोषोपि विधिना गुणः ॥ गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥

एवं तावद्द्रव्यशुद्धिरुक्ता इदानीं कर्तृशुद्धिमाह । स्नानेति । तपः कृच्छ्रादि । अवस्था कौमारादिः।वीर्यं शक्तिः।संस्कार उपनयनादिः।कर्म संध्योपासनदीक्षादिलक्षणम्। आत्मनः साहंकारस्य कर्तुरेतैः स्नानादिभिर्यथायथं तत्कार्यानुसारिणी शुद्धिः । इयं च शुद्धिर्न व्यवहारार्था किंतु विहितकर्मार्थेत्याह।शुद्ध इति।द्विज इत्युपलक्षणं शूद्रादेरपि॥ १४॥ मंत्र शुद्धिमाह । सद्गुरुमुखाद्यथावत्परिज्ञानं मंत्रस्य शुद्धिः।कर्मशुद्धिमाह । ईश्वरार्पणं कर्मणः शुद्धिः । धर्माद्यर्थं शुद्ध्यशुद्धी प्रपंचतः प्रदर्श्योपसंहरति । धर्मे इति । देशकाल द्रव्यकर्तृमंत्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते । एतेषां यो विपर्ययः सोऽधर्मस्तद्धेतुरित्यर्थः ॥ १५ ॥ अयं च गुणदोषविभागो न वास्तव इत्याह । क्वचिदिति । आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः । परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः । दोषोऽपि कुटुंबत्यागादिर्विरक्तादेर्न दोषोऽपि तु विधिबलेन गुणः । एवं योऽयं गुणदोष

मार्जनादिग्रहः । तस्य पीठपात्रादेः । स्वरूपतः सकृत् ‘ सकृत्स्वरूपेऽनावृत्तौ च’ इति कोशान्तरे । सकृत्तक्षणादिना शुद्ध्यभावे पुनरावृत्तिरिति ॥ * ॥ यावतेति–तक्षणादिना यद्येकावृत्त्या तद्गतगंधलेपादि र्नापगमेत्तदा वारंवारं तत्कर्तव्यम्. “ यावन्नापैत्यमेध्याक्ताद्गंधो लेपश्च तद्गतः । तावन्मृद्वारि वा देयं सर्वासु द्रव्यशुद्धिषु ॥ ” मृद्वारि इत्युपलक्षणं कल्कादेरपि ॥ १३ ॥ यथायथं यथोचितं, शौचं कृत्वेति शेषः । अवस्थयापि शुद्धिरस्ति, यथा कुमारादेः । शक्त्यापि शुद्धिरस्ति, यथा राजादेः ॥ * ॥ स्नानेति–तत्र स्नानेन देहशुद्धिस्तया देवार्चनादिसिद्धिः । दानेन मनःशुद्धिस्तया विषयभोगेपि पापाभावसिद्धिः । यथाह गार्ग्यः–‘ अकार्यकारिणां दानम् ’ इति । एवं ग्रहनिमित्तदानेन ग्रहशांतिलक्षणकार्यसिद्धिर्ज्ञेया । तपसा कृच्छ्रचान्द्रायणादिना पापप्रायश्चित्तसिद्धिः । अवस्था कौमारादिस्तया च शुद्धिः । यथा हरिहरभाष्ये–“ शिशो रभ्युक्षणं कार्यं बालस्याचमनं स्मृतम् । रजस्वलादिसंस्पर्शे स्नातव्यं च कुमारकैः ॥ ” इति । बालादयोऽपि तत्रैव लक्षिताः–“ प्राक्क्रीडाकरणाद्बालः प्रागन्नप्रशानाच्छिशुः । कुमारस्तु स विज्ञेयो यावन्मौंजीनिबं धनम् ॥ ” इति । तया च शुद्ध्या शिशुस्पर्शादिकार्यसिद्धिः । शक्त्या च ग्रहणादौ व्रतादिकार्यसिद्धिः । उपनयनादिसंस्कारेण यज्ञयोग्यतालक्षणकार्यसिद्धिः । सन्ध्योपासनादिकर्मणा पापापनोदकार्यसिद्धिरिति तत्तत्का र्यानुसारिणी शुद्धिर्वा ज्ञेया । आत्मनः शौचं शुद्धिमाचरेत्ततः शुद्धः सन्वेदविहितं कर्माचरेदिति । मत्स्मृत्येति स्वातंत्र्योक्तेः । ‘ अपवित्रः पवित्रो वा ’ इत्यादेः । अतोऽप्रतिकार्याशुद्धिशोधनायेयं प्रोक्ता मत्स्मृ तिलक्षणा न व्यावहारिकी मंतव्या, किंतु परमस्वतंत्रा सर्वत्राव्यभिचारत्वात् । “ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ” इत्याद्युक्तेः ॥ १४ ॥ यथावत् देवर्षिच्छंदोविनियोगपूर्वकम् । “ ऋषिच्छंदोऽपरिज्ञानान्न मंत्र फलभाग्भवेत् । दौर्बल्यं यांति मन्त्राश्च विनियोगमजानताम् ॥ ” इति तंत्रसारात् । याज्ञवल्क्योऽपि–“ आर्षं छंदश्च देवत्यं विनियोगस्तथैव च । वेदितव्यः प्रयत्नेन ब्राह्मणेन विपश्चिता ॥ अविदित्वा तु यः कुर्याद्या जनाध्यापनं जपम् । होममंतर्जलादीनि तेभ्योऽल्पाल्पफलं भवेत् ॥ ” इति । कर्मणामीश्वरार्पणेनैव शुद्धिः । “ यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् । न्यूनं पूर्णमशुद्धं तु शुद्धं स्यादन्यथान्यथा ॥ ” इति स्मृतेः । एतेषां देशकालादीनाम् । इत्यर्थ इति–देशकालादिविपर्ययेण कृतं कर्माधर्महेतुर्जायत इति भावः ॥ * ॥ एतेषां देशादिषण्णाम् । विपर्ययोऽशुद्धत्वम् । सोऽधर्म इति । अत्राशुद्धत्वस्य देशादिनिष्ठत्वादधर्मस्य पुन्निष्ठत्वा दभेदानुपपत्तिः । किंतु–जन्यजनकयोगमाश्रित्यायुर्घृतमितिवल्लक्षणाप्रयोजनं देशाद्यशुद्धिरधर्मं न व्यभिचरतीति ॥ १५ ॥ “ आपन्नः प्रतिगृह्णीयादनापन्नो न कर्हिचित् ” इत्युक्तेः । परधर्मो यथा–भैक्ष्यं ब्राह्मणस्य स्वं क्षत्रियादेः विधिबलेन ‘ यदहरेव विरजेत् ’ इत्यादिविधिविधानबलेन स तच्छास्त्रं तयोर्गुणदोषयोः बाधते । सर्ववस्तूनां परमार्थाभेदमेव बोधयति–“ ऐतदात्म्यम् ” इति श्रुतेः ॥ * ॥ क्वचिदिति–प्रतिग्रहस्य गुणत्वं तु

समानकर्माचरणं पतितानां न पातकम् ॥ औत्पत्तिको गुणः संगो न शयानः पतत्यधः ॥ १७ ॥ यतोयतो निवर्तेत विमुच्येत ततस्ततः ॥ एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥ विषयेषु गुणाध्यासात्पुंसः संगस्ततो भवेत् ॥ संगात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥१९॥

योरेकस्मिन्नर्थे नियमो गुणदोषार्थं वा यो नियमो नियामकं शास्त्रं स तयोर्भेदमेव बाधते ॥ १६ ॥ दोषस्य क्वचिद्दोषत्वाभावे गुणत्वे चोदाहरणं दर्शयति । समानस्य तस्यैव कर्मणः सुरापानादेराचरणमपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकमधिकारभ्रंशकं न भवति पूर्वमेव पतितत्वात् । अतोऽत्र दोषस्यापि दोषता नास्तीत्यर्थः । तथा संगोऽपि यो यतेर्दोषः स गृहस्थस्यौत्पत्तिकः पूर्वस्वीकृतो न दोषोऽपि तु गुणः "ऋतौ भार्यामुपेयात्" इत्यादिविधानात् । उभयत्र दृष्टांतः । पूर्वमेवाधःशयानो यथा न पततीति ॥ १७ ॥ अतो गुणदोषनियमविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याह । यतोयत इति । यतोयतो देशकालादेरशुद्धादेः शुद्धैर्देशकालादिभिः संपन्नः क्षेमः अभीष्टकृत् शोकमोहरूपं यद्द्वयमनिष्टं तदपहंति च ॥ १८॥ यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुतां दर्शयति

'आहारार्थं समीहेत' इति प्राणधारणस्यावश्यकत्वात् । निषिद्धत्वं च "प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम्" इत्यादेः । कुटुंबत्यागादेर्दोषत्वम् "पुंसस्त्रिवर्गो विहितः सुहृदां ह्यनुभावितः । न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते॥' इत्युक्तेः । विरक्तादेरित्यादिना नैष्ठिकपरिग्रहः । न दोष इति—"यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतिरूपविधिबलेन गुणः श्रेष्ठ एव, एकस्मिन्नेवार्थे प्रतिग्रहादौ योयं प्रसिद्धो नियमः नियामकं शास्त्रमापदि प्रतिग्रहस्य गुणत्वप्रतिपादकमनापदि तु दोषत्वप्रतिपादकं गुणदोषौ न वस्तुनिष्ठौ किंत्वधिकारिभेदेन कल्पिताववेति तयोर्भेदमेव वारयतीत्यर्थः । अतो गुणदोषौ न सामान्यतो नियतौ किंतु स्थलविशेष एव नियतौ ज्ञेयाविति भावः ॥ १६ ॥ समानस्य तुल्यस्य । अपतितानां ब्राह्मणादीनाम् । जात्या पतिता अन्त्यजादयः । कर्मणा सुरापानादिना पतिता ब्राह्मणादयः । अधिकारस्य स्वजातिविहितकर्माधिकारस्य । यतः पूर्वमेव पतिता अतो हेतोः । अत्र सुरापानादौ । इत्यर्थ इति—अपतितं प्रति सुरापानादिर्दोषो न पतितं प्रतीति भावः । यथा सुरापानादि पतितं प्रति न दोषस्तथेति । स संगः । औत्पत्तिकः स्वाभाविकः । "प्राकट्ये च स्वभावे च जनावुत्पत्तिरीरिता" इति निरुक्तिः । उभयत्र पतितानां समानकर्माचरणस्य गृहस्थानां संगस्य च दोषत्वाभावे । अधःशयानो भूमौ शयानः ॥ * ॥ ० ॥ १७ ॥ यतो गुणस्यानैयत्यमतो हेतोः । निवर्तेत भेदबुद्धिः । यतोयतो वर्णाश्रमादेः । एष भेदबाधनरूपः । क्षेमः सर्वदुःखाभावरूपः शोकमोहभयापहः । तत्र "को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रुतेः । यद्वा—यतोयतः कर्मणो नाहं कर्तेति निवर्तेत अहंकारराहित्येन यद्यत्कर्म परमेश्वरबुद्ध्या करोति ततस्ततः कर्मणो विमुच्येत तत्तत्कर्मबंधकं न स्यात् "एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः । त एवमात्मविनाशाय कल्प्यंते कल्पिताः परे ॥ " इत्युक्तेः । एष परमेश्वरार्पणलक्षणो धर्मः । क्षेमः संसारमुक्तिहेतुः । "मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा" "शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः" इति श्रीगीतोक्तेः ॥ * ॥ यतो गुणदोषविभागो न वास्तवोऽतः । एष निवृत्तिलक्षणः ॥ १८ ॥ विपक्षे बाधकमाह—भगवदर्पणबुद्धिराहित्येन क्रियमाणं कर्म शब्दादिविषयेषु गुणबुद्धिं जनयति मृगतृष्णिकापयःपूरमतिवत् । तदनु निरंकुशस्य पुंसो विषयेषु गुणध्यानात्सुखसाधनत्वध्यानात् । तेषु स्नेहलक्षणः संगः स्यात्ततस्तेषु काम इच्छा स्यात् । ततः कलिश्चेतनधर्मज्ञानद्रावणहेतुरधर्मो भवति । 'कल—द्रावणे' धातुः । स्वामिनां तु स्फुट एवार्थः ॥ * ॥ यथाश्रुतमिति वाच्यार्थमनतिक्रम्य या प्रवृत्तिपरता "स्वर्गकामो यजेत" इत्या

कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते ॥ तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥ २० ॥ तया विरहितः साधो जंतुः शून्याय कल्पते ॥ ततोऽस्य स्वार्थविभ्रंशो मूर्छितस्य मृतस्य च ॥ २१ ॥ विषयाभिनिवेशेन नात्मानं वेद नापरम् ॥ वृक्षजीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन् ॥ २२ ॥ फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ॥ श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥ उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ॥ आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥

विषयेष्विति चतुर्भिः । संग आसक्तिः । तत्र तेषु विषयेषु । येन प्रतिहन्यते कामस्तेन सह कामादेव कलिः कलहो विवादः ॥ १९ ॥ दुर्विषहस्तीव्रः । तमः संमोहः । तं क्रोधम् । चेतना कार्याकार्यस्मृतिः । द्रुतं शीघ्रम् ॥ २० ॥ शून्याय कल्पते असत्तुल्यो भवतीत्यर्थः । स्वार्थविभ्रंशः पुरुषार्थहानिः । मूर्छितस्य मृततुल्यस्य ॥ २१ ॥ तत्तुल्यत्वं प्रपंचयति । विषयेति । व्यर्थं वृक्षजीविकयैव जीवन्वर्तते स मूर्छिततुल्यः । अत एव यो भस्त्रेव श्वसन्वर्तते स मृततुल्यः अतः स्वार्थनाश इत्यर्थः ॥ २२ ॥ ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात्कुतः स्वार्थविभ्रंशस्तत्राह । फलश्रुतिरिति । इयं फलश्रुतिर्न श्रेयः । परमपुरुषार्थपरा न भवतीत्यर्थः । किंतु बहिर्मुखानां नृणां मोक्षविवक्षयाऽवांतरफलैः कर्मसु रुच्युत्पादनमात्रम् । यथा भैषज्ये औषधे रोचनं रुच्युत्पादनं गुडशर्करादि । तथाहि । "पिब निंबं प्रदास्यामि खलु ते खंडलड्डुकान् ॥ पित्रैवमुक्तः पिबति न फलं तावदेव तु ॥" तथा च "शिखा ते वर्द्धते वत्स गुडूचीं श्रद्धयां पिब" इति ॥ २३ ॥ ननु कर्मकांडे मोक्षस्य नामापि न श्रूयते कुत एवं व्या

दिरूपा तां निराकर्तुं तात्पर्यानुपपत्त्या तिरस्कर्तुम् ॥ १९ ॥ तीव्रः निरोद्धुमशक्यः ॥ * ॥ व्यापिनी पूर्वं व्याप्य स्थिता । तमसा क्रोधेन । ग्रस्यते नाश्यते ॥ २० ॥ तया चेतनया । इत्यर्थ इति—कार्याकार्यविचारेणैव पुरुषसत्त्वमनुमीयते तदभावे वस्तुतो नाशाभावादसन्निव भवतीति भावः । ततश्शून्यत्वानन्तरम् । अस्य पुरुषस्य । मूर्च्छितस्य मृतसदृशस्य । मुग्धेऽर्धसंपत्तिरिति न्यायात् । अत्र मृतस्य च परत्र । यद्वा—मूर्च्छितस्य निःसंज्ञस्य मृतस्य मृततुल्यस्य पुरुषार्थहानिः स्यात्प्रज्ञानाभावः । "नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः । यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥" इति पृथुं प्रति सनत्कुमारोक्तेः ॥ * ॥ **दीपिका**—तया स्मृत्या । अतोऽसत्तुल्यत्वात् ॥ २१ ॥ तत्तुल्यत्वं मूर्छिततुल्यत्वं मृततुल्यत्वं च । यथा वृक्षा जलाद्याहारं कुर्वतो ज्ञानरहिता वर्तंते तद्वदित्यर्थः । अत एव मूर्च्छिततुल्यत्वादेव । अतो मृततुल्यत्वात् । इत्यर्थ इति—ज्ञानरहितत्वेन मृततुल्यस्य स्वार्थनाशो भवत्येवेति भावः ॥ * ॥ तत्तुल्यत्वं मूर्छितमृततुल्यत्वम् । वृक्षजीविकया यथाऽनुद्यमेनैव यादृच्छिकी जलोपलब्धिरूपा वृक्षस्य जीविका, तथा विषयाविष्टस्यापि यादृच्छिकाहारादिरूपा तया जीवन्स्वस्थितिं कुर्वन् यो वर्तेत । अत एव मूर्च्छिततुल्यत्वादेव । अतो मृततुल्यत्वाच्चतुर्विधपुरुषार्थहानिरित्यर्थः ॥२२॥ अत्राक्षिपति—नन्विति । इत्यर्थ इति—स्वर्गादीनां विनाशित्वान्न श्रेयस्त्वमिति भावः । तर्हि तत्साधने कर्मणि प्रवृत्तिः कथमिति चेदाह—किंत्विति । बहिर्मुखाणां विषयतृष्णावताम् । अवांतरफलैः गौणफलैः । तावदेव हि खण्डलड्डुकप्राप्तिमात्रमेव हि । वर्णितं चैतदधस्तादित्युपरम्यते ॥ * ॥ इयम् "पशुकामः" इत्यादिरूपा । "न श्रेयो दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते" इति नारदेन कर्मफलस्य श्रयस्त्वखण्डनात् । तर्हि कथमप्सरोभिर्विहरिष्याम इत्यादि श्रूयते तत्राह—बहिर्मुखाणां स्वर्गादिविषयेच्छूनाम् । अवांतरफलैर्गौणफलैः । तावदेव खण्डलड्डुकमात्रमेव फलं न, किंतु रुच्युत्पादनार्थं गौणफलाभास एवेत्यर्थः । पूर्वमैहिकविषयकविषयेच्छूनां निन्दाऽत्र तु पारलौकिकतदिच्छूनामिति ज्ञेयम् ॥ २३ ॥ पुनराक्षिपति—

न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ॥ कथं युंज्यात्पुनस्तेषु तांस्तमो विशतो बुधः ॥ २५ ॥ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ॥ फलश्रुतिं कुसुमितां न वेदज्ञा वदंति हि॥ २६ ॥ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ॥ अग्निमुग्धा धूमतांताः स्वं लोकं न विदंति ते ॥२७॥

ख्यायते यथाश्रुतस्याघटनादित्याह । उत्पत्त्येति द्वाभ्याम् । उत्पत्त्या स्वभावत एव कामेषु पश्वादिषु प्राणेष्वायुरिंद्रियबलवीर्यादिषु । स्वजनेषु पुत्रादिषु । अनर्थहेतुषु परिपाकतो दुःखहेतुषु ॥ २४ ॥ अतस्तान्स्वार्थं परमसुखमविदुषः अतो न तान् प्रह्वीभूतान् । वेदो यद्बोधयिष्यति तदेव श्रेय इति विश्वसितानित्यर्थः । तानेवंभूतान्वृजिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः । ततः पुनस्तमोवृक्षादियोनिं विशतः । पशुकाम इति आयुरिंद्रियादिकाम इति पुत्रादिकाम इति च । कथं पुनस्तेष्वेव कामेषु स्वयं बुधो वेदो युंज्यात्प्रवर्तयेत् । तथा सत्यनाप्तः स्यादिति भावः ॥ २५ ॥ कथं तर्हि कर्ममीमांसकाः वेदस्य फलपरतां वदंति तत्राह । एवमिति । व्यवसितं वेदस्याभिप्रायम् । कुसुमितामवांतरफलप्ररोचनया रमणीयां फलश्रुतिं परमफलश्रुतिं वदंति । कतस्ते कुबुद्धयस्तदाह । हि यस्माद्वेदज्ञा व्यासादयस्तथा न वदंतीति ॥ २६ ॥ कुबुद्धितां प्रपंचयति कामिन इत्यष्टभिः । कामित्वात्कृपणा दीनास्ततो लुब्धास्तृष्णाकुला अतः पुष्पेष्ववांतरफलेषु परमफलबुद्धयोऽत एवाग्निमुग्धा अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकास्ततश्च धूमतांता धूमता धूममार्गोऽन्ते येषां ते । स्वं लोकमात्मतत्त्वम् । तथाच श्रुतिः । "कश्चिद्ध वा अस्माल्लोकात्प्रेत्य आत्मानं वेद अयमहमन्विति । एवं मोक्षपरत्वम् । अघटनादसंभवात् । पश्वादिषु गवाश्वादिषु कामनाविषयेषु । आदिना स्वर्णादिग्रहः । "प्राणो वीर्येऽनिले जीवे बलायुरिन्द्रियासुषु" इति कोशात् ॥ * ॥ एवं निवृत्तिपरत्वेन यथाश्रुतस्य प्रवृत्तिपरत्वस्य पश्वादिषु "पशुकामो यजेत्" "दध्नेन्द्रियकामस्य जुहुयात्" "खादिरं वीर्यकामस्य यूपं कुर्वीत" इत्यादिवाक्यान्यादिपदबोध्यानि परिपाकतः ॥ २४ ॥ यतोऽनर्थासक्तमनसोऽतो हेतोः । अतः परमसुखावेदितृत्वात् । इत्यर्थ इति–वेदोक्तमात्रविश्वस्ता न तु तत्तात्पर्यज्ञा इति भावः । एवंभूतान् वेदोक्तिकृतविश्वासान् । ततः देवादियोनिप्राप्त्युत्तरम् । "पशुकामः" इत्यादि यदि वेदः पुरुषान्पशुकाम इत्थं कुर्यादायुरिन्द्रियादिकामश्चेत्थं यजेत्पुत्रादिकामश्चेत्थमिति तत्तत्कर्मसु नियोजयेत्तर्हि वेदोऽप्यवेद एव परमार्थाबोधनादित्याह–कथमिति । इति भाव इति–न हि परमाप्तो वेदः पुरुषान्परमार्थतश्च्यावयतीति तात्पर्यम् ॥ * ॥ अतः स्वभावतो विषयाविष्टत्वात् । अतः परमसुखाज्ञानात् । ततो देवादियोनिभ्रमणोत्तरम् । तथा सति स्वभावतो विषयप्रवृत्तस्य पुनस्तत्रैव प्रवर्तने सति वेदोऽनाप्तोऽविश्वसनीयः स्यादित्यर्थः ॥ २५ ॥ अत्राक्षिपति–कथं तर्हीति । एवमुक्तरीत्या वेदस्याप्रवृत्तिपरत्वरूपमाभिप्रायम्, तथा प्रवृत्तिपरत्वम् ॥ * ॥ यर्हि वेदस्य निवृत्तिपरत्वं तर्हि एवं रुच्युत्पादनमात्रेण चित्तशुद्ध्यर्थं कर्मसंकोचार्थं च कर्मणि प्रवर्तनरूपमभिप्रायं रमणीयां विषलतावदापाततः सुंदरीं फलश्रुतिं परमफलश्रुतिं वदंतीत्यायोज्यम्, वस्तुतस्तु–कुसुमान्येव संजातानि न तु फलानि यस्यास्तां, फलश्रवणं न फलयुक्तं किंतु कुसुमयुक्तमेव कुसुमस्यैवाज्ञानेन फलत्वभानादित्यर्थः । अतस्ते कुबुद्धयो वेदतात्पर्यानभिज्ञाः । हि यस्माद्वेदज्ञा व्यासादयस्तथा न वदंति फलतया न वदंति किंतु निवृत्तिपरतयैवेत्यर्थः ॥ २६ ॥ कृपणा मंदाः । "कृपणस्तु कृमौ पुंसि मंदकुत्सितयोरपि" इति मेदिनी । ततः कृपणत्वात् । अतः पुष्पेषु पुष्पवदापातरमणीयेषु । अवांतरफलेषु स्वर्गादिषु । अत एवावांतरफलेषु परमफलबुद्धित्वादेव । ततश्चाग्निसाध्यकर्माभिनिवेशात् कर्मिणामात्मज्ञानं न भवतीत्यत्र प्रमाणमाह–तथा चेति । कश्चित्साधनदेशीयः । ह स्फुटम् । वै निश्चितम् । लोकात्प्रेत्य देहान्तरेग्रिमजन्मनि स्वं लोकमात्मतत्वम् । अग्निना तत्साध्यकर्मणा । मुग्धो लुप्तज्ञानः । धूमतांतः धूममार्गयायी "ते धूममभिसंभवंति" इति श्रुतेः ॥ * ॥

न ते मामंग जानंति हृदिस्थं य इदं यतः ॥ उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥२८॥
ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ॥ हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ॥ २९ ॥

स्मीति ॥ कश्चित्स्वं लोकं न प्रतिजानाति ॥ अग्निमुग्धो हैव धूमतांतः ” इति ॥ २७ ॥ कोऽसौ स्वलोकस्तमाह । हृदिस्थमात्मानं मां स्वलोकम् । ननु हृदिस्थमहंकारास्पदं जानंत्येव । सत्यम् । परमात्मानं तु न जानंतीत्याह । य इदं यद्व्यतिरिक्तं जगन्नास्ति । कुतः । यत इदं जगज्जातम् । तं कुतो न जानंति । हि यस्मात् । उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं पशुहिंसासाधनं वा येषां ते । अतः केवलमसुतृपः प्राणतर्पणपराः । नीहारं तमस्तेन व्याप्तानि चक्षूंषि येषां ते यथा सन्निहितमपि न जानंति तद्वत् । तथा च श्रुतिः “ न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंति ॥ ” इति ॥ २८ ॥ वेदतात्पर्याज्ञानाच्चान्यान्यजंतीत्याह । ते परोक्षमस्फुटं मे मतमविज्ञाय देवतादीन्यजंत इत्युत्तरेणान्वयः । स्वमतमेवाह । हिंसायां मांसभक्षणार्थं तत्फलार्थं च यदि रागः स्यात्तर्हि यज्ञ एवेत्यभ्यनुज्ञाद्वारा परिसंख्येयं न त्वावश्यकत्वेन चोदनेत्येवंरूपम् । यद्यपि नित्यनैमित्तिकयोः कामविशेषानुबंधो नास्ति तथापि “ कर्मणा पितृलोकः ” इति श्रुतेः । सामान्यतः पितृलोककामनास्त्येव । अंतःकरणशुद्धिकामना चेति भावः । तदुक्तम् “ नाकामस्य क्रिया काचिद्दृश्यते चेह कर्हिचित् । यद्यद्धि कुरुते जंतुस्त

अवांतरफलेषु स्वर्गादिषु । स्वं लोकं स्वाश्रयम् । आत्मतत्त्वं परमात्मतत्त्वम् ॥ २७ ॥ स्वलोकं पृच्छति—कोसाविति । तत्कुतो न जानंति तत्राह—हीति । कर्मिणां स्वरूपाज्ञाने हेतुरूपां श्रुतिमाह—तथा चेति । उक्तार्थेयं श्रुतिः ॥ * ॥ तथा च कर्मजडस्य कुबुद्धित्वे श्रुतिः—“न तं जजान” इत्यादिव्याख्यातैव पूर्वम् ॥ २८ ॥ ‘ वेदैश्च सर्वैरहमेव वेद्यः ’ इति स्मृतेः । “ सर्वे वेदा यत्पदमामनंति ” इति श्रुतेश्चार्थमपर्यालोच्य देवतांतरं यजंत इत्याह—वेदेति । तत्फलार्थं मांसभक्षणफलं पुष्ट्यादि तदर्थम् । रागोऽत्यंताभिनिवेशः । तद्द्वाराऽभ्यनुज्ञाद्वारा । न तु हिंसायाः क्वचिच्चोदनास्ति रागतो नित्यप्राप्तत्वात् । अपूर्वत्वाप्राप्तांशयोरपूर्वविधिनियमविधिप्रयोजकयोरभावात् । किंतु यदि रागः स्यात्तर्हि यज्ञ एवेति तन्निवृत्तौ तात्पर्यम् । अन्यदाह—यद्यपीति । इति भाव इति—न हि निष्कामा प्रवृत्तिर्भवतीति तात्पर्यम् । अत्र प्रमाणमाह—तदुक्तमिति । अकामस्य निष्कामस्य । कर्हिचित्कदाचिदपि । स्पष्टमन्यत् ॥ * ॥ त इति युग्मकम् । तत्फलार्थं च यागोपयुक्तहिंसाफलार्थम् । तर्हि योग्यैव देवतामुद्दिश्य हिंसा कार्या न स्वार्थमिति योजना । तद्द्वारा “ आग्नीषोमीयं पशुमालभेत ” इत्यभ्यनुज्ञाद्वारा । परिसंख्येति—उभयप्राप्तावितरव्यावर्तको विधिः परिसंख्या । रागेणाग्नीषोमीयतद्भिन्नोप्यालभ्यत एवेत्युभयप्राप्तावितरस्याग्नीषोमीयातिरिक्तस्य व्यावृत्तिः । आग्नीषोमीयव्यतिरिक्तं पशुं नालभेतेति चोदना तु नैव । अपूर्वविधिस्तु नास्त्येव अप्राप्तविधायको हि अपूर्वविधिः, स च न संभवति, रागतो नित्यप्राप्तत्वात् । ननु प्रयोजनवदर्थविधानेनार्थवान् विधिरित्यपि न तल्लक्षणं, तथा च—“ अहरहः सन्ध्यामुपासीत ” इत्यादौ फलाश्रवणाद्विधित्वमेव न स्यादित्याशंक्याह—यद्यपीति । नित्यमग्निहोत्रादि नैमित्तिकं ज्योतिष्टोमादि तयोः सामान्यतः विशेषतः कामनाभावेपि सास्त्येव, पितृलोकान्तःकरणशुद्धिप्रयोजनसद्भावाद्विधित्वमस्त्येवेत्यर्थः । अकामस्येत्याद्यभियुक्तवाक्यस्याप्यत्र प्रमाणत्वादिति ॥ २९ ॥

हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ॥ यजंते देवता यज्ञैः पितृभूतपतीन्खलाः ॥ ३० ॥ स्वप्नोपममम्ुं लोकमसंतं श्रवणप्रियम् ॥
आशिषो हृदि संकल्प्य त्यजन्त्यर्थान्यथा वणिक् ॥ ३१ ॥ रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ॥ उपासते इंद्रमुख्यान्देवादीन्न तथैव माम् ॥
॥ ३२ ॥ इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ॥ तस्यांत इह भूयास्म महाशाला महाकुलाः ॥३३॥ एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ॥
मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥ ३४ ॥ वेदा ब्रह्मात्मविषयास्त्रिकांडविषया इमे ॥ परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥ ३५ ॥

तत्कामस्य चेष्टितम् ॥ " इति ॥ २९ ॥ अज्ञत्वादेव हिंसया विहारः क्रीडा येषां ते ॥ ३० ॥ किंच तेऽतिमंदबुद्धय इत्याह । स्वप्नोपममिति । अमुं परलोकम् । आशिषश्चास्मिँल्लोके संकल्प्य न तु निश्चित्य विघ्नबाहुल्यात् । त्यजंति कर्मसु विनियोजयंति । यथा कश्चिद्वणिक् दुस्तरसमुद्रादिलंघनेन बहुधनार्जनेच्छया सिद्धं धनं त्यजन्नुभयभ्रष्टो भवति तद्वदित्यर्थः ॥ ३१ ॥ अतो रजःसत्त्वतमोजुषः स्वानुरूपानिंद्रादीनेवोपासते न तु मां गुणातीतम् । यद्यपींद्रादीनामपि मदंशत्वान्मदुपासनमेव तत्तथापि यथा वन्नोपासते भेददर्शित्वादित्यर्थः ॥ ३२ ॥ हृदि संकल्प्येत्युक्तं तमेव संकल्पं दर्शयति । इष्ट्वेति । तस्य भोगस्यांते महाशाला महागृहस्थाः संपन्ना इत्यर्थः ॥ ३३ ॥ ततः किमत आह । एवमिति । अतो मत्प्रवणत्वाभावान्नित्यं संसारिणो भवंतीति भावः ॥ ३४ ॥ तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य प्रकृतं निवृत्तिपरत्वमेवोपसंहरति । वेदा इति । कर्मब्रह्मदेवताकांडविषया इमे वेदा ब्रह्मात्मविषयाः "ब्रह्मैवात्मा न संसारी" इत्येतत्पराः । तत्परत्वाप्रतीतौ च । " फलश्रुतिरियं नृणां न श्रेयोरोचनं परम् ॥

आलब्धैर्हिंसितैः ॥ * ॥ ० ॥ ३० ॥ तेषां निर्बुद्धितामाह—किञ्चेति । आशिषः कामनाः । इत्यर्थ इति—तेषां हानिरेव न त्वभीष्टाप्तिरिति भावः ॥ * ॥ तेऽतिमंदधिय इत्याह—स्वप्नोपम इति । विनियोजयंति व्ययं कुर्वंति ॥ ३१ ॥ इन्द्रादयः किन्त्वद्भिन्ना इति चेदाह—यद्यपीति । इत्यर्थ इति—" येप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः । तेपि मामेव कौन्तेय यजंत्यविधिपूर्वकम् ॥ " इति श्रीगीतोक्तेरिति भावः ॥ * ॥ उपपादितं चैतच्छ्रीदशमचत्वारिंशाऽध्याये विस्तरतः । रजःसत्त्वतमांसि जुषंते सेवंते ते तथा तान् इन्द्रादीन् । यथावदुपासनाभावाद्भ्रश्यंति " न तु मामभिजानंति तत्त्वेनातश्च्यवंति ते " इति मदुक्तेः । भेददर्शित्वात्तेषु स्वातन्त्र्यबुद्धित्वात् ॥ ३२ ॥ पूर्वोक्तं स्मारयति—हृदि संकल्प्येति । रंस्यामहे क्रीडिष्यामः । इह भूमौ । महती शाला येषां ते तथा । ' शाला द्रुस्कंधशाखायां गृहगेहैकदेशयोः ' इति कोशाच्छालापदं गृहपरमपि ' तात्स्थ्यात्ताच्छब्द्यम् ' इति न्यायेन गृहस्थमाहेत्याह—महागृहस्था इति ॥ * ॥ इह भुवि । रंस्यामहे अप्सरोभिर्विहरिष्यामः ॥ ३३ ॥ फलितं पृच्छति—तत इति । ततो महागृहस्थत्वादेः किं फलम् । एवमुक्तरीत्याऽयथोपासनेन पुष्पितया स्वर्गादिषु परमफलबुद्ध्युत्पादकया व्याक्षिप्तमिदमेव परं फलमन्यन्नेति भ्रमापन्नं मनो येषां तेषाम् । अपिना मनःसम्यक्त्वापादकतत्त्वज्ञगुर्वादिसेवाद्यभावो दर्शितः । यतो मद्वार्तारुचिरपि तेषां नास्ति अतो हेतोः । मत्प्रवणत्वं मत्परत्वम् । इति भाव इति—भगवद्विमुखानामेव संसार इति तात्पर्यम् ॥ * ॥ ० ॥ ३४ ॥ प्रकृतमुपसंहरति—इत्येतत्परा इत्येतत्तात्पर्यिकाः । तत्परत्वाप्रतीतौ ब्रह्मात्मपरत्वाप्रतीतौ । इत्युक्तं पूर्वोक्तमेव । ' ऋषिर्मन्त्रे तथा मुनौ ' इति कोशात् । मंत्राणामुच्चारयितारमंतरेण वादोऽदृष्टचर इवेत्याह—तद्द्रष्टारो वेति । तत्परोक्षत्वेन कथनं किमिति किमर्थमिति चेदाह—यत इति । यतो हेतोः । अत्राशयमाह—अयं भाव इति । एतद्वेदानां ब्रह्मपरत्वम् । अन्यैः काम्यकर्मादिपरैः । वृथाकर्मत्यागेन स्वात्मबोधं विना कर्मत्यागेन भ्रंश

शब्दब्रह्म सुदुर्बोधं प्राणेंद्रियमनोमयम् ॥ अनंतपारं गंभीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥

श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ " इत्युक्तमेव कारणमनुस्मारयति । परोक्षेति । ऋषयो मंत्राः 'तदुक्तमृषिणा' इति प्रयोगात् । तद्द्रष्टारो वा । तत्किमिति । यतः परोक्षमेव मम च प्रियम् । अयं भावः । शुद्धांतःकरणैरेवैतद्बोद्धव्यं नान्यैरनधिकारिभिर्वृथाकर्मत्यागेन भ्रंशप्रसंगादिति ॥ ३५ ॥ ननु वेदज्ञा अपि जैमिन्यादयः किमिति तथा न वर्णयंति मां विना तत्त्वतो वेदं तदर्थं वा न कोऽपि वेदेत्याशयेनाह शब्दब्रह्मेति यावत्समाप्ति । स्वरूपतोऽर्थतश्च दुर्विज्ञेयम् । तच्च सूक्ष्मं स्थूलं चेति द्विविधम् । तत्र सूक्ष्मं तावत्स्वरूपतोऽपि दुर्ज्ञेयमित्याह । प्राणेंद्रियमनोमयम् । प्रथमं प्राणमयं पराख्यं ततो मनोमयं पश्यंत्याख्यं तत इंद्रियमयं मध्यमाख्यम् । तस्य वाग्व्यंजकत्वेन वागिंद्रियप्रधानत्वात् । किंच अनंतपारं समष्टिप्राणादिमयस्य निर्विशेषस्य च तस्य कालतो देशतश्चापरिच्छेदात् । अर्थतोऽपि दुर्ज्ञेयत्वमाह । गंभीरं निगूढार्थम् । अतो दुर्विगाह्यं मतिप्रवेशानर्हम् । तथाच श्रुतिः । " चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहिता नेंगयंति तुरीयं

प्रसंगात् । " ज्ञानवैराग्यरहितस्त्रिदंडमुपजीवति । सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा । अविपक्वकषायोस्मादमुष्माच्च विहीयते ॥ " इत्युक्तेः ॥ * ॥ ब्रह्मात्मविषयाः सर्वतो बृहत्तमो य आत्मा परममूलस्वरूपो भगवानहं तत्पर एवेत्यर्थः । मत्प्रियाचरणत्वेन वक्ष्यमाणत्वात् । तथा सर्वेषामप्रतीतौ कारणमाह—परोक्षेति । 'परोक्षं मम च प्रियम्' इति तु—" त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अथ तानि वितथ्यानि दर्शयस्व महाभुज ॥ प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु । " इत्यन्यत्र व्यक्तत्वात् । एतच्चास्माभिराद्यपद्यव्याख्याशतके बहुधा वर्णितं साभिप्रायम् " इदं ते गुह्यमाख्यातं गुह्याद्गुह्यतर मया " इत्यादौ तदभिप्रायप्रकाशात् । तच्च तत्र सर्वेषामधिकाराभावात् । यत एव " मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् " इत्याद्युक्तमिति **संदर्भः** ॥ * ॥ अत एव परोक्षाभिधानस्य मत्प्रीतिकरत्वेन मन्त्रद्रष्टारोऽपि यथा वदंतीति **विश्वनाथः**॥*॥**दीपिका**—एतद्वेदानां तात्पर्येण निवृत्तिपरत्वं स्फुटं, निवृत्तिपरत्वाऽभिधानेऽशुद्धान्तःकरणैर्विषयास्त्यक्तुं न शक्यंते किंतु तेषां विहितकर्मत्यागेनोभयतो भ्रंशप्रसंगो भवेदित्यर्थः ॥३५॥ इत्थं चेत्तर्हि वेदज्ञैः कथं कर्मादिपरत्वेन वेदो वर्णित इत्याशंकते—नन्विति । वेदार्थस्य दुर्ज्ञेयतामाह—मां विनेति । तदर्थं वेदार्थम् । तच्च शब्दब्रह्म । तत्र तयोर्मध्ये । तस्य मध्यमाख्यशब्दब्रह्मणः । वाग्व्यंजकत्वेन वाचां प्राकट्यहेतुत्वेन । न केवलं सूक्ष्मत्वेनैव दुर्ज्ञेयं किंत्वनंतत्वादिनापीत्याह—किंचेति । निर्विशेषस्य केनापि विशेषेण वक्तुमशक्यस्य । अतो निगूढार्थत्वात् । वेदस्य प्राणादिमयत्वेन सूक्ष्मत्वे प्रमाणमाह—तथा चेति । पूर्वं व्याख्यातापि सौगम्याय पुनः स्वामिचरणैर्व्याख्यायते श्रुतिः ॥ * ॥ शब्दब्रह्मेति युग्मकम् । प्राणेन्द्रियमनोमयं लौकिकवाग्वत् पराख्यादिरूपेण तथाविर्भूतमपि दुर्बोधम् । यतः शब्दतोऽनंतपारम् । अर्थतश्च गंभीरं दुर्विगाह्यञ्च । प्रवेष्टुं तावदशक्यं कथंचित्प्रवेशे सति गंभीरं दुर्गमार्थपर्यवसानमित्यर्थः ॥ * ॥ **विश्वनाथस्तु**—ननु वेदस्याप्तत्वान्यथानुपपत्त्यैव भैषज्यरोचनन्यायेनैव तस्य स्वर्गादिपरत्वमिति भवान्व्याचष्टे, तथैव जैमिन्यादयोऽपि व्याचक्षता, मैवम्, यदि ते जानीयुस्तर्हि व्याचक्षीरन्, मा विना मद्भक्तांश्च व्यासनारदादींश्च तत्त्वतो वेदार्थं न कोऽपि जानातीत्याह—शब्दब्रह्मेति यावत्समाप्ति । प्राणेन्द्रियमनोमयं प्रथमं प्राणमयं पराख्यमाधारचक्रस्थम् । ततो मनोमयं पश्यंताख्यं नाभावनाहतचक्रस्थमुपलक्षणमेतत् । बुद्धिमयं मध्यमाख्यं हृदये च मणिपूरकचक्रस्थम् । तत इन्द्रियमयं वैखर्याख्यं तस्य वागात्मकत्वेन वागिन्द्रियप्रधानत्वात् । किंच—अनंत

मयोपबृंहितं भूम्ना ब्रह्मणाऽनंतशक्तिना ॥ भूतेषु घोषरूपेण बिसेसूर्णेव लक्ष्यते ॥ ३७ ॥
यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ॥ आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ॥ ३८ ॥

वाचो मनुष्या वदंति ॥ " इति । अयमर्थः । वाचः शब्दब्रह्मणः परिमितानि गणितानि पद्यते ज्ञायते परं तत्त्वमेभिरिति पदानि रूपाणि चत्वारि तानि चत्वार्यपि ये मनीषिणोंतर्दृष्टयस्त एव विदुर्नान्ये । यतो गुहायां देहमध्ये त्रीणि निहितानि नेंगयंति स्वरूपं न प्रकाशयंत्यतः केवलं वाचस्तुरीयं चतुर्थं भागं वैखरीरूपं स्थानप्रयत्नाभ्यां स्पष्टं मनुष्याः प्राणिनो वदंति । तदपि वदंत्येव न तत्त्वतो जानंति ॥ ३६ ॥ तत्र मनीषिभिरेव ज्ञेयं सूक्ष्मं तत्त्वरूपं दर्शयति । मयेति । मयांतर्यामिणोपबृंहितमधिष्ठितम् । अंतस्थत्वेऽप्यपरिच्छेदमाह । भूम्नेति । अधिष्ठातृत्वेऽप्यविकारित्वमाह । ब्रह्मणेति । अविकृतस्यापि नियंतृत्वं घटयति । अनंतशक्तिनेति । भूतेषु सर्वप्राणिषु घोषरूपेण नादरूपेण लक्ष्यते मनीषिभिः । अंतःसूक्ष्मत्वेन दर्शने दृष्टांतो बिसेसूर्णातंतुरिवेति ॥ ३७ ॥ ततो वैखर्याख्याया बृहत्या वाच उत्पत्तिप्रकारं सदृष्टांतमाह यथेति त्रिभिः । हृदयात्सकाशात् । मुखात् द्वारात् ऊर्णां तंतुम् उद्वमते बहिः प्रकटयति । दार्ष्टांतिके योजयति आकाशादिति । प्राणस्तदुपाधिर्हिरण्यगर्भरूपः प्रभुर्भगवान् तेन

पारं प्राकृताप्राकृतप्राणमयस्य कालतो देशतश्चात्परिच्छेदादित्यादि तैः ॥ ३६ ॥ तत्र द्वयोर्मध्ये । मनीषिभिर्विद्वद्भिः । अंतर्यामित्वे तत्र परिच्छिन्नता स्यादित्याह—अंतस्थेति । भूम्ना परिच्छेदराहितेन अंतर्यामित्वेन अधिष्ठातृत्वे राज्ञादिवद्विकारित्वप्रसंगः स्यात्तत्राह—अधिष्ठातृत्वेपीति । एकरसत्वाच्छुद्धब्रह्मणो न विकारित्वमिति भावः । तथात्वेप्यनंतशक्तित्वान्नियंतृत्वं संगच्छत एवेत्याह—अविकृतस्येत्यादि । बिसेषु मृणालषु यथातीव सूक्ष्मोपि तंतुर्लक्ष्यते तद्वदित्यर्थः ॥ * ॥ नन्वेवंभूतं चेत्कथं प्राणादिष्वाविर्भवति तत्राह—मयोपबृंहितं तत्रतत्रोद्भावितम् । नन्वनंते वैकुण्ठेऽनंतप्राये च वैकुण्ठे ब्रह्माण्डगणेऽनंतसंख्ययाविर्भूतं तत्कथं भवतैकेनोद्भावितं स्यात्तत्राह—ब्राह्मणा स्वरूपतः परमबृहत्तमेन शक्तितश्चानंतशक्तिनेति । ननु यत्सर्वव्यापकं स्यादनंतपारं च तदेव भवति न तु तथेदं लक्ष्यते तत्राह—भूतेष्विति । नादरूपेणाव्यक्तप्रणवाकारेण लक्ष्यते योगिभिः । तदुक्तम्—" अनंतोऽनंतमात्रश्च द्वैतस्योपशमः शिवः । ओंकारो विदितो येन स योगी नेतरो जनः ॥ " इति ॥ ३७ ॥ तत ईश्वरात् । तदुपाधिः प्राणोपाधिः । तेन रूपेण हिरण्यगर्भरूपेण । नादस्योपादानं प्राणस्तद्वान् । तदुपाधिः उपलक्षणमंतस्थादीनाम् । आकाशा हृदयाकाशात् । सहस्रशब्दो बह्वर्थकः । " शब्दः शतसहस्रादिर्भेदानंत्यवाचकः " इत्युक्तेः । अतः स्वामिचरणैर्बहुमार्गामित्युक्तम् । तदेव बहुमार्गत्वमेव । हृद्गतः सूक्ष्मः । " येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः " इति द्वादशे वक्ष्यति । " प्रणवं ह्रीश्वरं विद्यात्सर्वस्य हृदये स्थितम् । अमात्रोनंतमात्रश्च " इति मांण्डूकोक्तेश्च । हृद्गतः त्रिमात्राद्भिन्न एव तस्य त्रिमात्रस्य व्यंग्या व्यंजितु योग्याकारादिरूपेण कोटिः स्वरूपं यस्य तस्य भावस्तस्मात् । " कोटिः प्रकर्षे धनुषोग्रेऽह्यौ संख्यास्त्ररूपयोः " इति कोशात् । तथा च—सूक्ष्मो हृद्गतो व्यंजकः, स्थूलस्त्रिमात्रो व्यंग्य इति तयोर्विशेषः । तत्र व्यंगेषु । कादिपंचवर्गाः ' कादयो मावसानाः स्पर्शाः ' इत्युक्तेः कादीनां वर्गत्वम् । ' कु चु टु तु पु वर्गाः ' इति व्याकरणसूत्रसिद्धमस्ति । षोडशस्वरा मातृकोक्तरीत्या ज्ञेयाः ॥ * ॥ तस्यैव प्राणादिपराख्यादिरूपेण स्वस्मादुद्भवप्रकारमाह—यथोर्णेति त्रिकेण । यथोर्णनाभिर्लूतातंतुः कीटभेदः हृदयादूर्णामुद्रमति गिरति चेत्यर्थः, तथा प्रभुरीश्वरो.मदंशो हिरण्यगर्भः स्वरूपतोऽमृतमयः परमानंदरूपः स्वशक्त्यैव छंदोमयः सर्वज्ञानादिसंपन्नवेदमयः सन् आकाशादाकाशमालम्ब्य हिरण्यगर्भस्याधारचक्रे चाविर्भूय ' प्राणेन घोषेण गुहां प्रविष्टः '

छंदोमयोऽमृतमयः सहस्रपदवीं प्रभुः ॥ ओंकाराद्व्यंजितस्पर्शस्वरोष्मांतस्थभूषिताम् ॥ ३९ ॥ विचित्रभाषाविततां छंदोभिश्चतुरुत्तरैः ॥ अनंतपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥ गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च ॥ त्रिष्टुब्जगत्यतिच्छंदो ह्यत्यष्ट्यतिजगद्विराट् ॥ ४१ ॥ किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ॥ इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥ ४२ ॥

रूपेण छंदोमयो वेदमूर्तिः । स्वतस्त्वमृतमयः । घोषवान्नादोपादानवान् । मनसा निमित्तभूतेन । निमित्ततामेव दर्शयति । स्पर्शादीन्वर्णान् रूपयति संकल्पयतीति स्पर्शरूपि तेन । स्पर्शग्रहणं स्वरादीनामुपलक्षणम् । आकाशात् हृदयाकाशाद्बृहतीं सृजतीति तृतीयश्लोकेनान्वयः । बृहतीशब्दार्थव्याख्यानाय विशेषणानि । सहस्रपदवीं बहुमार्गाम् । तदेवाह । ओंकारात् हृदयगतसूक्ष्मध्वनेः उरःकंठादिसंगेन व्यंजितैः स्पर्शादिभिर्भूषिताम् । ओंकारश्चात्र हृद्गतः सूक्ष्मोऽभिप्रेतो न त्वकारादिवर्णरूपः तस्य व्यंग्यकोटित्वात् । तत्र स्पर्शाः कादिपंचवर्गाः । स्वरा अकारादयः षोडश । ऊष्माणः शषसहाः । अंतस्था यरलवाः ॥ ३८ ॥ ३९ ॥ एवं विचित्राभिर्वैदिकलौकिकभाषाभिर्वितताम् । यथोत्तरं चत्वारि चत्वार्यक्षराण्युत्तराण्यधिकानि येषां तैश्छंदोभिरुपलक्षिताम् । एवमनंतपारां वाचं सृजति स्वयमेवाक्षिपते उपसंहरति ॥ ४० ॥ तेषु कतिचिच्छंदांसि दर्शयति गायत्रीति । तत्र चतुर्विंशत्यक्षरा गायत्री । ततश्चतुरक्षरवृद्ध्योष्णिगादिच्छंदांसि । अत्यष्टिः अतिजगती अतिविराट् चेत्यर्थः । एतैश्छंदोभिरुपलक्षितामिति पूर्वेणान्वयः । अतो बृहत्यपि साकल्येन स्वरूपतो दुर्ज्ञेया इत्युक्तम् ॥ ४१ ॥ एवं वैखर्याः साकल्येन स्वरूपतो दुर्ज्ञेयत्वं दर्शितम् । अर्थ

इति पूर्वोक्तघोषो नादस्तद्वान्प्राणः स्वयं तदीयप्राणवांश्च सन् मनसा निमित्तेन बृहतीं वैखरीप्रधानां श्रुतिं प्रथमं पराख्यां सृजते । ततो घोषवान् किंचिद्व्यक्तनादवान्नाभिचक्रे मध्यमाख्यां सृजति । ततो हृदि प्राणात्मकः सन् ओंकारान्नादरूपतामापद्य स्पर्शरूपिणा तत्तद्वर्णभेदज्ञानस्पर्शिना मनसा पश्यंत्याख्यं सृजति । ततश्चोरःकंठादिसंगेन व्यंजितैः स्पर्शादिभिर्भूषिताम् । ओंकारश्चात्र हृद्गत एव ज्ञेयोऽकारादिवर्णरूपस्य तस्य व्यंग्यकोटित्वात् । व्यक्तवैखर्यंतःपातात् कालांतरे आक्षिपते, अंतः प्रवेशयति च । तत्र स्पर्शाः काद्या मांताः । स्वरा अकारादयः षोडश । ऊष्माणः शषसहाः । अंतस्था यरलवाः । स्वरा ये पृथक् प्लुता उदात्तादयस्तेषामपि स्वरान्तर्भावात् । क्षकारस्य स्पर्शोष्मस्वंतर्भावादेकोनपञ्चाशदेवात्र गणिताः ॥ ३८ ॥ ० ॥ * ॥ ० ॥ ३९ ॥ छंदोभिर्गायत्र्यादिभिः । चतुरक्षराधिक्यं गायत्रीतो ज्ञेयम् । यथा—गायत्रीछंदसि षडक्षराश्चत्वारः पादास्तेषां चतुर्विंशतिरक्षराणि, तथा उष्णिक्छंदसि चतुरक्षराधिक्यादष्टाविंशतिरक्षराणि, तथैवानुष्टुप्छंदसि द्वात्रिंशदक्षराणि, एवमग्रे बृहत्यादिष्वपि बोध्यम् ॥ * ॥ ० ॥ ४० ॥ तेषु छंदस्सु । दर्शयति नामतो निर्दिशति । तत्र तेषु छंदस्सु । ततस्तदनंतरम् । जगतीछंदतः पराणि छंदांस्यतिशब्दविशिष्टानि शुद्धानि च संति । यथा—जगत्यतिजगती च । एवं विराट् अतिविराट् च । विराट्पदमत्र शक्करीछंदःपरम् । तथा च—शक्कर्यतिशक्करी च । तथैवाष्टिरत्यष्टिरित्यादि । जगत्या सहितो विराट् जगद्विराट्, पुंवद्भावस्त्वार्षः । अतिना सहितं जगद्विराट् अतिजगद्विराट् । सर्वं संस्फोट्याह—गायत्री षडक्षरपादा, उष्णिक्सप्ताक्षरपादा, अनुष्टुबष्टाक्षरपादा, बृहती नवाक्षरपादा, पंक्तिर्दशाक्षरपादा, त्रिष्टुबेकादशाक्षरपादा, जगती द्वादशाक्षरपादा, अतिजगती त्रयोदशाक्षरपादा, शक्करी चतुर्दशाक्षरपादा, अतिशक्करी पंचदशाक्षरपादा, अष्टिः षोडशाक्षरपादा अत्यष्टिस्सप्तदशाक्षरपादा, धृतिरष्टादशाक्षरपादा, अतिधृतिश्चैकोनविंशत्यक्षरपादेत्यलमतिप्रसंगेन । एतैरन्यैश्चात्रानुक्तैः छंदोभिरुपलक्षितामिति ॥ * ॥ तेषु छंदस्सु मध्ये । अतोऽनंतपारत्वात् ॥ ४१ ॥ यतोऽनंतपाराऽतो हेतोः । किमनूद्य कस्यानुवादं कृत्वा । " नेह नानास्ति किंचन " इत्यादिनिषेधाय विकल्पये

मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ॥ एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥ मायामात्रमनूद्यांते प्रतिषिध्य प्रसीदति ॥ ४३ ॥
इति श्रीमद्भा० म० एका० भगवदुद्धवसंवाद एकविंशोऽध्यायः ॥ २१ ॥

तोऽपि दुर्ज्ञेयत्वमाह । किमिति । कर्मकांडे विधिवाक्यैः किं विधत्ते । देवताकांडे मंत्रवाक्यैः किमाचष्टे प्रकाशयति । ज्ञानकांडे च किमनूद्य विकल्पयेन्निषेधार्थमित्येव मस्या हृदयं तात्पर्यम् मत् मत्तोऽन्यः कश्चिदपि जैमिन्यादिर्न वेद ॥ ४२ ॥ ननु तर्हि त्वं मत्कृपया कथय । ओमिति कथयति । मामिति मामेव यज्ञरूपं विधत्ते मामेव तत्तद्देवतारूपमभिधत्ते न मत्तः पृथक् । यच्चाकाशादिप्रपंचजातम् " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादिना विकल्प्यापोह्यते निराक्रियते तदप्यह मेव न मत्तः पृथगस्ति । कुत इत्यपेक्षायां सर्ववेदार्थं संक्षेपतः कथयति । एतावानेव सर्वेषां वेदानामर्थः । तमेवाह । शब्दो वेदो मां परमार्थरूपमाश्रित्य भिदां मायामात्र मित्यनूद्य " नेह नानास्ति किंचन " इति प्रतिषिध्य प्रसीदति निवृत्तव्यापारो भवति । अयं भावः । यथा ह्यंकुरे यो रसः स एव तद्विस्तारभूतनानाकांडशाखास्वपि तथैव प्रणवस्य योऽर्थः परमेश्वरः स एव तद्विस्तारभूतानां सर्ववेदकांडशाखानामपि संगच्छते नान्य इति ॥ ४३ ॥ नित्यमुक्तः स्वतः सर्ववेदकृत्सर्ववेदवित् ॥ स्वपरज्ञानदाता

द्विकल्पं करोतीत्यर्थः ॥ * ॥ बृहती स्वरूपतो दुर्ज्ञेयेत्युक्तम् । अर्थतस्तदाह–तदेवं मदुद्भूतस्य वेदस्य तात्पर्यज्ञश्चाहमेवेत्याह–किं विधत्ते श्रुत्या कर्तव्यत्वेन किं विधीयते, स्वस्य हितार्थं जीवैरिदमेव कर्तव्यमिति, किं कर्तुमादिश्यत इत्यर्थः । किमाचष्टे किमभिधत्ते श्रुत्या किमभिधीयते, श्रुत्यर्थश्च तावत्क इत्यर्थः । किमनूद्य विकल्पयेत्–इदमेकं वस्तु इदमपरं वास्त्विदमन्यद्वास्त्विति द्वित्राणि वस्तूनि निर्देश्य विकल्पयेत् । इदं वा कुर्यादिदं वा कुर्यादिति यद्विदधीत तत्किमित्यर्थः । ननु " अहरहः संध्यामुपासीत " "कर्मणा पितृलोकः" इति दर्शनात्कर्मैव श्रुतिर्विधत्ते 'चोदनालक्षणो धर्मः' इति व्याख्यानाद्धर्म एव श्रुत्यर्थः । " व्रीहिभिर्वा यजेत यवैर्वा यजेत " इति वैकल्पिको विधिरपि धर्मविषयक एव । यद्वा–भक्तियोगो निष्कामकर्मयोगश्चानूद्य विकल्पितो यथा–" भक्तियोगश्च योगश्च मया मानव्युदीरितः । तयोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥" इति । तत्र रे मूढा नहिनहीत्याह–अस्याः श्रुतेर्हृदयं हृद्गतमभिप्रायं मदन्यो नहि कश्चन वेद, प्रेयस्या अभिप्रेतमर्थं प्रेयांसं विना को वेदेति भावः ॥ ४२ ॥ अत्र ननुपदमेवं चेदित्यर्थे ज्ञेयम् । विधत्ते " यावज्जीवमग्निहोत्रं जुहुयात् " इत्यादिवाक्यैरग्निहोत्रादिरूपेण मामेव विदधाति, " वज्रहस्तः पुरंदरः " इत्यादिमंत्रवाक्यैर्मामेवेन्द्रादिरूपेण कथयाति । अपोह्यते निषिध्यते । सर्वस्य त्वद्रूपत्वे को हेतुरिति पृच्छति–अत्राशयमाह । अयं भाव इति–प्रण वार्थ एव सर्ववेदार्थः । तथा च माण्डूक्योपनिषदि–" ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भव्यं भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एवेति ", " प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः । अपूर्वोऽनंतरो बाह्यो न परः प्रणवोऽव्ययः । सर्वस्य प्रणवो ह्यादिर्मध्यमंतस्तथैव च । ओंकारो विदितो येन स मुनिर्नेतरो जनः ॥ " इति स्वस्यात्मनः परस्य ब्रह्मणो यदैक्यरूपं ज्ञानं तस्य दाता । ईश्वरमी श्वराभिन्नम् । ' गुरुरेव परं ब्रह्म ' इति स्मृतेः ॥ * ॥ ननु तर्हि त्वमेव कृपया कथयेति तत्रोमित्याह–भक्तेर्मत्स्वरूपभूतत्वान्मद्भक्तिमेव कर्तव्यत्वेन विधत्त इत्यत आह–मां विधत्त इति । यागादिविधीनामपि मद्भक्तिवि धान एव तात्पर्यात् ' धर्मो यस्यां मदात्मकः ' इति मदुक्तेः । अभिधत्ते मामिति । अहमेव सर्ववेदार्थ इत्यर्थः । विकल्प्यापोह्यते त्वहमिति ' योगास्त्रयो मया प्रोक्ताः ' इत्युक्तेः । कांडत्रयेण भक्तिंज्ञानं कर्म चानूद्य कर्म कुर्यात् ज्ञानं वाभ्यसेत् भक्तिं वा कुर्यादिति विकल्प्य पश्चादपोह्यते प्रथमं सकामकर्मापोहो निष्कामकर्मकरणम् । ततो ज्ञानारूढत्वे सति निष्कामकर्मणोऽप्यपोहः । ज्ञानसिद्धिदशायाम् ' ज्ञानं मयि संन्यसेत् ' इत्युक्तेर्ज्ञानस्यापोहः, भक्तेरपोहस्तु न क्वापि समयेन केनापि शास्त्रवाक्येन प्रतिपादितो दृष्ट इत्यतः कर्मज्ञानापोहादेवाहमपोह्य इत्युक्तम् । प्रथमपुरुष आर्षः ।

उद्धव उवाच ॥ कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो ॥ नवैकादश पंच त्रीण्यात्थ त्वमिह शुश्रुम ॥ १ ॥
केचित्षड्विंशतिं प्राहुरपरे पंचविंशतिम् ॥ सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥ २ ॥

यस्तं वंदे गुरुमीश्वरम् ॥ १ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायामेकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशे तत्त्वसंख्यानामविरोधविधोच्यते ॥ पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥ १ ॥ तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य मोक्षपरत्वं निर्णीतम्। संति च मोक्षपरत्वेऽपि तदवांतरविवादाः । तथाहि । केचित्तत्त्वसंख्यासु विवदंते तत्रापि बाह्यार्थसदसत्त्वे आत्मत्वेऽप्येकत्वनानात्वादिषु तत्र किं सत्यमिति जिज्ञासया पृच्छति । कतीति । ऋषिभिरागमेषु बहुधा संख्यातानि तेषु कति युक्तानीत्यर्थः । भगवन्मतानुवादपूर्वकं बहुधा संख्यानं प्रपंचयति नवेति त्रिभिः । त्वं तावदष्टाविंशतितत्त्वान्यात्थ तानि च वयं शुश्रुम श्रुतवंतः ॥ १ ॥ २ ॥

कर्मज्ञानयोरपि स्वप्रापकमार्गत्वात्तत्रास्मच्छब्दः प्रयुक्तस्तस्य चिद्रूपत्वान्मायिकरूपत्वाच्च । तत्र मायिकरूपस्यैवापोहो युज्यते न चिद्रूपस्य ॥ * ॥ संदर्भस्तु—वेदपरमप्रतिपाद्यश्चाहं श्रीकृष्णस्वरूप एवेत्याह—मां विधत्त इत्यर्धकेन । मत्तात्पर्यकत्वेनैव तत्तद्विधानादिकं कृत्वा मय्येव पर्यवस्यतीत्यर्थः । तदेव दर्शयति—एतावानिति । यतः शब्दो वेदस्तदनुगतश्च स मायामात्रं जगन्निषिद्ध्य भिदां मदवतारादिभिदां चानूद्य तदंते मां श्रीकृष्णरूपमास्थायावलंब्य प्रसीदति कृतकृत्यो भवति "वेदैश्च सर्वैरहमेव वेद्यो वेदांतकृद्वेदविदेव चाहम्" इति श्रीगीताभ्यः ॥ * ॥ विश्वनाथस्तु—नन्वितोपि किंचित्स्पष्टीकृत्य व्याचक्ष्वेत्यत आह—एतावानिति । वेदात्मकः शब्दो मामास्थाय मद्भक्तियोगविधायकत्वेन मामेवाश्रित्य भिदां मत्तोपि भिन्नं कर्मयोगं ज्ञानयोगं च मायामात्रमनूद्य कर्मयोगस्य त्रिगुणमयत्वेन त्वंपदार्थज्ञानपर्यंतज्ञानयोगस्यापि विद्यामयस्य 'सात्त्विकं ज्ञानमात्मोत्थम्' इति वक्ष्यमाणत्वात्सात्त्विकत्वेन मायामात्रत्वमतोन्ते प्रतिषिद्ध्य क्रमेण तद्द्वयमपोह्य त्यक्त्वा प्रसीदति । निर्गुणाया मद्भक्त्यमृतवल्ल्याः फलस्य मन्माधुर्यानुभवरूपस्य रसेन मज्जनानानंदयन्स्वयं निर्वृणोतीत्यर्थः । ये त्वेवं व्याचक्षते—मामेव कर्मकांडे यज्ञरूपम् "यज्ञो वै विष्णुः" इति श्रुतेर्विधत्ते मंत्रवाक्यैर्देवताकांडेऽभिधत्ते ज्ञानकांडे मत्तः पृथगाकाशादिकं विकल्प्य यदपोह्यते तदप्यहमेव । तस्मादेतावानेव सर्ववेदार्थः शब्दो वेदो मां परमार्थरूपमाश्रित्य भिदा मायामात्रमित्यनूद्य "नेह नानास्ति किंचन" इति प्रसीदति निवृत्तव्यापारो भवति । एतद्व्याख्यानेपि मायामात्रस्यैव प्रतिषेधोक्तेर्भक्तानां भक्त्युपकरणानां भगवन्निकेतादीनां च मायामात्रत्वाभावान्न कापि क्षतिः ॥ ४३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्ध एकविंशोऽध्यायः ॥ २१ ॥ अविरोधस्य विरोधाभावस्य विधा प्रकारः । आदिनाऽसदतिक्रमसहनादिग्रहः ( १ ) । तदेवम् इत्थम् । निर्णीतेऽप्यर्थे पुनः किमर्थं वाद इति पृच्छति—सन्तीति । तत्रापि तत्त्वसंख्याविवादेऽपि । बाह्यार्थानां प्रकृत्यादीनां सदसत्त्वे सत्त्वेऽसत्त्वे च आत्मा नानारूप एकरूपो वेत्यत्र च । तत्र बाह्यार्थानां सत्त्वमसत्त्वं वा आत्मन एकत्वं नानात्वं वेत्यत्र किं सत्यं यत्राहं विश्वसिमीत्याशयवान्पृच्छति । आगमेषु शास्त्रेषु । इत्यर्थ इति—मुख्यं पक्षं कथयेति भावः । परेप्सितसंपादनमेव प्रभुधर्म इत्याशयेनामन्त्रयति—प्रभो इति । "नवैकादश पञ्च त्रीन्भावान्भूतेषु येन वा" इत्यत्रैकोनविंशतितमाध्याये त्वमष्टाविंशतितत्त्वान्यात्थेति भवतो वयं शुश्रुम । केचिद्वदन्त्य आचार्या भवन्मतमुल्लंघ्यान्यथात्वं तत्त्वानां यद्वर्णयन्ति तच्छ्रेयो भवन्मतं वेति सन्देहः ॥ * ॥ तदेवं कर्मकाण्डतात्पर्यमभिज्ञाय स्पष्टतयैव ज्ञानकाण्डतात्पर्यं जिज्ञासमानस्तदवान्तरवादसमाधानाय पृच्छति—कतीति । ऋषिभिरिति तेषां बहुत्वान्मन्मते एतावन्तीति पृथक्पृथग्निश्चितानि तेषु कति युक्तानीत्यर्थः । तत्र कतिकति तत्त्वानि केके वदन्तीत्यपेक्षायामाह—नवेति त्रिभिः । ईश्वरो जीवो महदहंकारपञ्चभूतानीति नव । तन्मात्राणि पञ्च दशेन्द्रियाणि मनश्चैकादश । सत्त्वरजस्तमांसीति त्रीणीत्यष्टाविंशतितत्त्वानि त्वमात्थ तानि शुश्रुम श्रुतवन्तो वयम् । अत्र प्रकृतिस्थाने त्वया त्रयो गुणा एव गृहीतास्तेभ्यो गुणेभ्य एव क्रमेण द्विविधमहत्तत्त्वस्या

केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ॥ एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ॥ गायंति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥ श्रीभगवानुवाच ॥ युक्तं च संति सर्वत्र भाषंते ब्राह्मणा यथा ॥ मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४ ॥ नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ॥ एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ॥ ५ ॥

एतावतीनां भाव एतावत्त्वं नानात्वमित्यर्थः । यद्विवक्षया यत्प्रयोजनमभिप्रेत्य च गायंति।हे आयुष्मन्नित्यमूर्ते॥ ३॥ विवक्षाभेदेन सर्वं युक्तमेव । मायया च किं नाम न युक्तमित्याह ।युक्तमिति । यथा ब्राह्मणा ऋषयो भाषंते तद्युक्तं युक्तितो ग्राह्यम्। न च वस्तुतः।यस्मात्संति सर्वत्रांतर्भूतानि सर्वाणि तत्त्वानि । किंच मायामिति असत्त्वेऽपि मायाश्रयत्वाद्घटत एवेत्यर्थः । उद्गृह्य स्वीकृत्य । न हि मरीचिजलपरिणामादिविवादे किंचिदघटितमिव भवति ॥ ४ ॥ ननु यदि सर्वमपि युक्तं तर्हि कुतो विवादो यदि च मायैवालंबनं तर्हि कुतो हेतुं प्रति विवादस्तत्राह नैतदेवमिति । हेतुं प्रति च विवदमानानां मदीया दुरतिक्रमाः शक्तयः सत्त्वाद्याः अंतःकरणवृत्तिविशेषरूपेण परिणता

हङ्कारस्य चोत्पत्तिदर्शनान्न तु गुणसाम्यरूपायाः प्रकृतेरिति त्वदभिप्रायो गम्यते ॥ १ ॥ ॰ ॥ २ ॥ इत्यर्थ इति—नानात्वविवक्षायां को हेतुरिति प्रश्नाभिप्रायः । नित्यमूर्तित्वात्त्वं सर्वमुन्यभिप्रायज्ञानमस्तीत्यर्थः ॥ * ॥ हे आयुष्मन्निति नित्ययोगे मतुप् । नित्यमूर्तित्वेन हे सर्वकालव्यापिन्नित्यर्थः । तेन तेषामृषीणामाद्यतममध्यवर्तित्वात्त्वमेव सर्वमताभिप्रायज्ञः प्रष्टव्य इति भावः ॥ ३ ॥ सर्वत्राविरोधमाह—विवक्षाभेदेन कल्पनाभेदेन । अघटनघटनापटीयस्या मन्मायया किं न भवतीत्याशयेनाह—मायया चेति । युक्तं युक्तिमत् । युक्तिमत्त्वेऽपि तत्त्वनानात्वविवादो न वास्तव इत्याह—न वस्तुत इति । वास्तवत्वेऽद्वैतसिद्धान्तविघातः स्यादिति भावः । असत्यस्यापि स्वीकारो मायया सङ्घटीत्येवेत्याह—किञ्चेति । इत्यर्थ इति—"ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥" इत्युक्तेरिति भावः । तदेवोदाहरणेन द्रढयति—न हीति । आदिना तच्छीतोष्णादिग्रहः । इवेन वस्तुतो घटनाभाव उक्तः ॥ * ॥ येषां विवादेऽपि वस्तुतो नैव विवाद इत्याह—तत्र सर्वेणापि मतेन स्वमतमनुवादयँस्तत्प्रशंसति—युक्तमिति । युक्तमेव भाषन्ते यतो ब्राह्मणा वेदतात्पर्यज्ञास्ते सर्वत्र यथावदेव भाषन्ते । ननु यदि सर्वमेव युक्तं तर्ह्यन्यमतानि परित्यज्य कथं स्वस्वमतं प्रवेशयेयुस्तत्राह—मायामिति । मरुमरीचिकादीनामपि तावद्देशपरिच्छिन्नत्वात् परिमाणतारतम्यमस्त्येवेति स्वीयाष्टाविंशतिपक्षस्य स्थापनीयत्वमस्त्येवेति भावः । मायात्राचिन्त्यशक्तिर्न त्वसद्व्यञ्जिकाविद्या तामुद्गृह्यालम्ब्य । तत्र मदीयामिति तेषां यत्किञ्चित्तादालम्बनात् । तस्याः पूर्णाया मदेकालम्बनत्वात्स्वं स्वैकवेद्या यत्किञ्चिद्युक्तिष्वप्यस्ति किंतु मदीया युक्तिरेव सर्वप्रकाशिकेति भावः । वस्तुतस्तु यथा मरीचिजलमेव नास्ति किमुत तत्परिमाणादिवादस्तथा ब्रह्मव्यतिरिक्तानि तत्त्वान्येव न सन्ति तत्संख्यायां कुतो विवाद इत्यर्थः ॥ ४ ॥ अत्र द्विधाऽऽक्षिपति—नन्विति । हेतुं प्रति विवादहेतुं प्रति । दुरतिक्रमा अतिक्रान्तुमशक्याः । सत्त्वाद्याः सत्त्वरजस्तमोरूपाः । इत्यर्थ इति—विकल्पाकारेण परिणतसत्त्वादिगुणवृत्तय एव वादहेतुरिति भावः ॥ * ॥ तथैवाह—नैतदिति । मम शक्तयो नानाऽतर्क्यरूपा एव हेतव इत्यर्थः ॥ * ॥ **विश्वनाथः**—विवदमानानां तेषां विवादे हेतुर्मच्छक्तयो मायाशक्तिवृत्तय एव तत्तर्करूपा अविद्या एवेत्यर्थः । तदुक्तं हंसगुह्ये—"यच्छक्तयो वदतां वादिनां वै

यासां व्यतिकरादासीद्विकल्पो वदतां पदम् ॥ प्राप्ते शमदमेऽप्येति वादस्तमनुशाम्यति ॥ ६ ॥ परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ ॥ पौर्वापर्य प्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥ एकस्मिन्नपि दृश्यंते प्रविष्टानीतराणि च ॥ पूर्वस्मिन्वाऽपरस्मिन्वा तत्त्वे तत्त्वानि सर्वशः ॥ ८ ॥ पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम् ॥ यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसंभवात् ॥ ९ ॥

एव हेतुरित्यर्थः ॥ ५ ॥ तासां विवादहेतुत्वमुपपादयति । यासामिति । यासां व्यतिकरात्क्षोभाद्वदतां पदं विषयो विकल्पो भेद आसीदंतःकरणवृत्तिविकल्पो वा तन्मूलभूतः । एतदेव व्यतिरेकेण द्रढयति । शमदमयोर्द्वंद्वैक्यम् । तस्मिन् प्राप्ते विकल्पोऽप्येति लीयते । तं च विकल्पनाशमनुवादः शाम्यतीति ॥ ६ ॥ संति सर्वत्रेति यदुक्तं तत्प्रपंचयति परस्परेति द्वाभ्याम् । अन्योऽन्यस्मिन्ननुप्रवेशाद्वक्तुर्यथा विवक्षितं तथा पूर्वं कारणमपरं कार्यम् तदभावस्तेन । कार्यकारणभावेन प्रसंख्यानं भवति । यद्वा पूर्वा अल्पसंख्या पराधिकसंख्या तयोर्भावः पौर्वापर्यं तेन प्रसंख्यानं गणनमिति ॥ ७ ॥ अनुप्रवेशं दर्शयति । एकस्मिन्नपीति । पूर्वस्मिन्कारणभूते तत्त्वे कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घटवत् । अपरस्मिन्कार्यतत्त्वे कारणतत्त्वान्यनुगतत्वेन प्रविष्टानि घटे मृद्वत् ॥ ८ ॥ अविरोधमुपसंहरति । अतोऽमीषां तत्त्वानां पौर्वापर्यं तत्तत्का

विवादसंवादभुवो भवन्ति । कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥" इति । समुदितानां हेतुत्वाद्धेतुरित्येकवचनं जात्यैव । यद्वा–हेतुं कारणं प्रतीत्यर्थः ॥ ९ ॥ तासां शक्तीनाम् । यासां सत्त्वादिशक्तीनाम् । वदतां वादं कुर्वताम् । भेदस्य विकल्पहेतुत्वाद्विकल्पपदेन कथं भेदबोध इति चेदाह–अन्तःकरणेति । अन्तःकरणवृत्तिरूपो विकल्पो वेति । तन्मूलभूतो वादमूलकारणम् । एतदेव विकल्पस्य वादहेतुत्वम् । व्यतिरेकेण यत्र विकल्पो न तत्र वादोऽपि नेत्येवंरूपेण । शाम्यति नश्यति ॥ * ॥ व्यतिकरादासंगाद्धेतोः सर्वोऽपि विकल्पो मतभेदो भेदमात्रं वा वदतां विषयो भवति । स तु विकल्पः शमदमे मन्निष्ठान्तःकरणविहितबाह्येन्द्रियनिग्रहे प्राप्ते सति लीयतेऽपगच्छति सर्वविलक्षणेश्वरतत्त्वमात्राग्रहात् । ततः स्वत एव तदनुवादकारणीभूतविकल्पनाशानन्तरं वादोऽप्यपगच्छति । एतदेव स्फुटयति–विकल्प एवं वा एवं वा, एवं न एवं नेत्येवं सहस्रविधः । वदतां पदं विवादास्पदं मच्छक्त्यावेशाद्भवति । "शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः" इत्युक्तलक्षणे दैवान्मन्निष्टबुद्धित्वे सति इन्द्रियसंयमेऽहङ्कारोपरमे विकल्पोऽप्येति सर्वः संशयो नश्यति तत्पश्चाद्वादो विरुद्धवादश्च नश्यत्येवेति भावः ॥ ६ ॥ पूर्वोक्तं स्मारयति–सन्तीति । अनुप्रवेशात्कारणे क्वचित्कारणे कार्यानुप्रवेशात्क्वचिच्च कार्ये कारणानुप्रवेशादन्तर्भावात् । तत्त्वन्यूनाधिकभावस्य का गतिरिति चेदाह–यद्वेति । तेन न्यूनाधिकभावेन ॥ * ॥ परस्परस्मिंस्तत्त्वानामनुप्रवेशात्पौर्वापर्यं भवति मतभेदेषु मध्ये कस्मिंश्चिन्मते कार्यस्य कारणे प्रवेशात्पूर्वत्वम्, कस्मिंश्चिन्मते कारणस्य कार्ये प्रवेशादपरत्वं ततश्च प्रकृष्टं न्यूनमधिकं वा संख्यानं स्यात् । पौर्वापर्यं च प्रसंख्यानञ्चेति द्वन्द्वैक्यम् । ननु तत्त्वानां कारणे कार्ये वा किं प्रवेशेन संख्याया न्यूनत्वे प्रकर्षेणाधिक्ये वा किं तत्राह–वक्तुर्वादिनो यथा विवक्षितं वक्तुमभीष्टं तथैव तत्तन्मतं पृथगभूदित्यर्थः । अत एव संदर्भेऽप्युक्तम्–'वक्तुर्यथा विवक्षितं तथा प्रसंख्यानम्' भवतीति शेषः ॥ * ॥ दीपिका–कार्यकारणयोरन्योऽन्यप्रवेश एव विवक्षितो न तु कार्यकारणभावेन प्रसंख्यानमतो यद्वेति । अल्पसंख्यायाः प्रथमोपस्थितेः पूर्वत्वं अधिकसंख्यायाः पश्चादुपस्थितेरपरत्वं तेन गणनम् ॥ ७ ॥ एतदेव विवृणोति–एकस्मिंस्तत्त्वे कारणतत्त्वे कार्यतत्त्वे वा ॥ * ॥ यदि सूक्ष्मरूपेण कारणे कार्यस्य स्थितिर्न स्यात्तदा तत्रासम्बद्धत्वादुपपत्त्यनुपपत्तिः स्यादित्यर्थः । अनुगतत्वेन व्यापकत्वेन ॥ ८ ॥ यतोऽनुप्रवेशरीत्या विरोधाभावोऽतो हेतोः । तत्र तत्त्वेषु । नन्विदमार्षं नानातत्त्ववादमतं तत्रानुमतं न वेति पृष्टे भगवानाह–गृह्णीम इति ।

अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ॥ स्वतो न संभवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥ १० ॥
पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ॥ तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥ ११ ॥

रणकार्यत्वं प्रसंख्यानं च न्यूनाधिकमभीप्सतां वादिनां मध्ये यथाविवक्षया यद्वक्त्रं यस्य मुखं प्रवर्तते तत्सर्वं विविक्तं निश्चितं वयं गृह्णीमः । उक्तन्यायेन सर्वत्र युक्तेः संभवात् ॥ ९ ॥ ननु कार्यकारणतत्त्वानां पृथक्त्वापृथक्त्वविवक्षया भवतु नाम संख्याभेदः । जीवेश्वरयोस्तु कथं भेदाभेदविवक्षा यया षड्विंशतिपंचविंशतिपक्षौ प्रवृत्ता वत आह । अनादीति । स्वतो न संभवत्यन्यतस्तु संभवात्स्वतः सर्वज्ञः । परमेश्वरो ज्ञानदोऽन्यो भवितव्य इति षड्विंशतिपक्षाभिप्राय इत्यर्थः ॥ १० ॥ कथं तर्हि पंचविंशतिपक्षस्तत्राह । पुरुषेति । वैलक्षण्यं विसदृशत्वं नास्ति द्वयोरपि चिद्रूपत्वादतस्तयोरत्यंतमन्यत्वकल्पना अपार्था व्यर्था । एवं पंचविंशतिपक्षः प्रवृत्त इत्यर्थः । नन्वेवमपीश्वरप्रसादलभ्यज्ञानस्य पृथक्त्वात्पक्षद्वयमपि न घटतेऽत आह । ज्ञानं चेति । सत्त्वगुणवृत्तित्वात्तदंतर्भूतमित्यर्थः । षड्विंशतिपक्षास्तु औपाधिकभेदविवक्षयेत्यर्थः । ननु

उक्तन्यायेन परस्पराऽनुप्रवेशन्यायेन । सर्वत्र मतेषु । युक्तेः पौर्वापर्यप्रसंख्यानरूपायाः । सम्भवात्संघटनात ॥ * ॥ पौर्वापर्यतत्तत्कारणकार्यगतत्वं प्रसंख्यानं न्यूनाधिकमभीप्सतां यथाविवक्षया यस्य मुखं प्रवर्तते तत्सर्वं वयं विविक्तं सविवेकमुक्तरीत्या स्वीकुर्म इत्यर्थः । सर्वत्राल्पसंख्यायामधिकसंख्यायां च कार्यकारणयोरन्योन्यप्रवेशयुक्तेः सत्त्वादिति भावः ॥ ९ ॥ किञ्चिदंगीकृत्य किञ्चिदाक्षिपति—नन्विति । यया विवक्षया । स्वतो नेति—"स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा" इति विदुरोक्तेः । अन्यतस्त्विति—'नैषा मतिस्तर्केणापनेयाऽन्येनैव प्रोक्ता सुज्ञानाय प्रेष्ठा" इति श्रुतेः "आचार्यवान्पुरुषो वेद" इति श्रुतेश्च । परमेशस्याप्यन्याधीनज्ञानत्वेऽनवस्थाभिया स स्वतःसिद्धज्ञान एव स्वीकार्य इत्याह—स्वत इति । इत्यर्थ इति—शुद्धसत्त्वप्रधानमायोपाधिको मायायाः स्वाश्रयानावरकत्वात्तत्त्वज्ञः, अविद्योपहितादन्य इति भावः ॥*॥ आत्मवेदनमपि न संभवति कुतः परमात्मवेदनमित्यर्थः । ततश्चानिर्मोक्षप्रसङ्गादीश्वराख्यपरमात्मपर्यन्तज्ञानाय जीवाख्यपुरुषादन्यस्तत्त्वज्ञो ज्ञानदो भवेत्सम्भाव्यते स तु स्वयंप्रकाशज्ञान ईश्वर इति भावः ॥ * ॥ **विश्वनाथस्तु**—आत्मवेदनमिति षष्ठ्यर्थे प्रथमा । आत्मवेदनस्य स्वतः स्वेनासम्भवाद्धेतोः । स्वतः सर्वतत्त्वज्ञः परमेश्वरोऽन्यो भवेदेवेति वैष्णवसिद्धान्तः ॥ १० ॥ पञ्चविंशतिपक्षं पृच्छति—कथमिति । तत्र प्रश्ने । द्वयोर्जीवेश्वरयोः । यतो द्वयोश्चिद्रूपत्वं समानमतो हेतोः । तयोर्जीवेश्वरयोः । इत्यर्थ इति—जीवेश्वराभेदमादाय पञ्चविंशतिपक्षः प्रवृत्त इति भावः । अत्र पुनराक्षिपति—नन्विति । तदन्तर्भूतं सत्त्वगुणान्तर्भूतम् । इत्यर्थ इति—"अयमात्मा ब्रह्म अहं ब्रह्म आत्मैव नृसिंहदेवो भवति तत्त्वमसि नान्योऽतोऽस्ति द्रष्टा" इत्यादि श्रुतिभिर्भेदबाधनादन्यकल्पना व्यर्थैव । यथा जीवगतमज्ञानं तथेशगतं ज्ञानं च मायाया एव गुणः । कार्यं नात्मनः अतस्तयोर्मिथ्यात्वान्नात्मभेदकत्वमिति निर्गलितोऽर्थः ॥ * ॥ अन्ये तु पूर्वोक्तवैशिष्ट्यमबुद्ध्वा किंतु चिन्मात्ररूपत्वेनावैशिष्ट्यं बुद्ध्वैवं वदन्तीत्याह—तर्हि तन्मते पुरुषस्य ज्ञानं कुतः स्यात्तत्र चैवं वदन्तीत्याह—ज्ञानं च प्रकृतेरेव गुणः, ततश्च तद्गुणप्रवाहेषु भ्रमतस्तस्य कदाचित्तेन सम्बन्धः स्यात्, नदीप्रवाहे भ्रमतस्तारककाष्ठादिनेवेति भावः ॥ * ॥ **विश्वनाथस्तु**—उक्तलक्षणे भेदे वर्तमानेऽपि न वैलक्षण्यमपि । अभेदोऽपि कीदृशम्—अणु अल्पमात्रं चिद्रूपत्वेन शक्तिमत्त्वेन वैक्यात् । तयो

**प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मना गुणाः ॥ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यंतहेतवः ॥ १२ ॥**
**सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥**

ज्ञानकृतं वैलक्षण्यमिति चेन्न । ज्ञानं हि प्रकृतेर्गुणः ॥ ११ ॥ ननु ज्ञानं जीवधर्मः कथं प्रकृतेर्गुणः स्यादत आह । प्रकृतिरिति । गुणसाम्यं हि प्रकृतिरतस्तद्विशेषरूपा गुणास्तस्या एव न त्वात्मनो जीवस्य अकर्तृत्वात्तस्य स्थित्यादिहेतुभूतगुणाश्रयत्वानुपपत्तेः ॥ १२ ॥ अतः सत्त्वं सत्त्वमयं ज्ञानं प्रकृतेर्गुण इति पूर्वेणैवान्वयः । ननु तन्निवर्त्यं कर्माज्ञानं च तत्त्वांतरं स्यात् । न । रजःकर्म रजसो वृत्तिः । अज्ञानं च तमसः अतः कर्माज्ञानयोरजस्तमोद्वारा प्रकृतावेवांतर्भाव इति भावः । तथापि

भेदेऽप्यल्पमात्रं खल्वभेदो वर्तत एवेति भावः । अतः परमेश्वरादन्योऽत्यन्तभिन्न एवेति कल्पना व्यर्था । नन्वेवमपीति तैः । सत्त्वगुणवृत्तित्वाज्ज्ञानं प्रकृतावन्तर्भूतमित्यर्थः ॥ ११ ॥ पुनराक्षिपति—नन्विति । यतो गुणानां साम्यावस्थैव प्रकृतिरतो हेतोः । तद्विशेषरूपाः प्रकृतिविशेषरूपाः । तस्याः प्रकृतेः । तस्यात्मनः । स्थित्यादेर्हेतुभूताः कर्तृभूता ये गुणाः सत्त्वादयस्तदाश्रयत्वं न सम्भवति तदकर्तृत्वहानादिति भावः ॥ * ॥ तर्हि भगवन्मताष्टाविंशतिपक्षोद्वलकः षड्विंशतिपक्षः कथं सिद्ध्यतीत्याशङ्क्य तन्निरस्यन् पुनः पूर्वमतं स्थापयति—प्रकृतिरिति सार्द्धेन । गुणानां सत्त्वादीनां साम्यमेव प्रकृतिः प्रकृतेर्गुणास्ते तु आत्मनो न भवन्तीति ये प्रकृतेर्गुणाः सत्त्वादयस्ते आत्मनः पुरुषस्य ये गुणा ज्ञानानन्दादयस्ते प्रकृतेर्नेति किमुतेश्वरगुणानां वार्तेत्यर्थः । प्रकृतेर्गुणाश्च केवलं प्रपञ्चस्थित्यादिहेतव इत्याह—तत्रैव सत्त्वं रज इत्यर्द्धेन । अन्तशब्देनात्र चात्यन्तिकप्रलयरूपो मोक्षोऽपि गृह्यते तमःकारणस्यैव प्रलयस्य क्रमप्राप्तत्वान्मोक्षस्य ज्ञानहेतुकत्वात् ॥ * ॥ **विश्वनाथस्तु**—ननु ज्ञानं जीवधर्म इति प्रसिद्धं कथं प्रकृतेर्गुण इति ब्रूषे, तथा कर्मापि जीवकृतमेव, अज्ञानमपि जीवस्यैव न प्रकृतेर्नापीश्वरस्येत्यत आह—एतानि तत्त्वानि जीव एवान्तर्भावनीयान्यन्यथा सर्वमत एव तत्त्ववृद्धिः स्यादत आह—प्रकृतिरिति सार्द्धेन । गुणानां साम्यं हि प्रकृतिरतस्तद्विशेषरूपा गुणास्तस्या एव न त्वात्मनो जीवस्याकर्तृत्वात् । स्थित्युत्पत्त्यन्तहेतव इति—जीवस्य स्थित्यादिहेतुभूतगुणाश्रयतानुपपत्तेरिति भावः । सत्यमेतेन किमायातमत आह—सत्त्वमिति । ज्ञानमिति यत्प्रसिद्धं तत् ‘सत्त्वात्सञ्जायते ज्ञानम्’ इत्युक्तेः सत्त्वकार्यत्वात्सत्त्वमेव । एवं कर्म रज एव अज्ञानं तु तम एवेत्येतानि प्रकृतेरेव धर्मा उपाध्यधीने जीवे प्रतीयन्त एवेत्यत एतानि प्रकृतावेवान्तर्भाव्यानि ॥ १२ ॥ यतो गुणाश्रयत्वमात्मनो न सम्भवति अतः कारणात् । सत्त्वमयं सत्त्वविकारः । पुनराशंकते—नन्विति । तन्निवर्त्यं ज्ञानपरिहार्यं नेत्याह । इति भाव इति—वृत्तिवृत्तिमतोरभेदोपचारात् रजस्तमो द्वारीकृत्य कर्माज्ञाने अपि न प्रकृतितो भिन्ने इति तात्पर्यम् । तथापि कर्माज्ञानयोः प्रकृत्यन्तर्भूतत्वेऽपि । नेत्याह—कालस्य “योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम्” इति श्रीदशमोक्तेरीश्वरचेष्टारूपत्वान्न तेन तत्वान्तरता स्यात् । ‘चेष्टाचेष्टावतोर्यो यद्व्यापारः स तदभिन्नः’ इति न्यायात् । स्वस्माद्भावयत्युत्पादयति विश्वमिति स्वभावो महत्तत्त्वम् ‘विश्वमात्मगतं व्यञ्जन्’ इत्युक्तेः । ‘सूते विश्वम्’ इति सूत्रमित्येकार्थता । तस्य महत्तत्त्वस्य । सर्वशक्तिमत्त्वं तु क्रियाशक्तिप्रधानत्वेन सर्वोत्पादकत्वादेवेति ध्येयम् । यथायथं यथोचितम् । पक्षद्वयेऽपि षड्विंशतिपञ्चविंशत्यन्यतरपक्षद्वयेऽपि । उक्तन्यायमन्यत्रातिदिशति—एतच्चेति । एतदन्तर्भावनम् ॥ * ॥ यच्च ‘सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानम्’ इति । तदपीह प्रपञ्च एवोच्यते भेदेन व्यपदिश्यतेमात्रं न तु वस्तुविचारे सतीति भावः । तत्तत्समुदायस्य प्रकृतेरपि जडत्वात् प्रत्यक्चिदाभाससम्बन्धेनैव ज्ञानत्वव्यपदेशाच्च । स च न परोक्षस्य तज्ज्ञानस्य हेतुः तदा स्फुरत्यपि तस्मिंस्तदनुत्पत्तेः, नतराञ्चापरोक्षस्य, न हि गृहान्तर्गतस्वप्रकाशाभासेन सूर्यः प्रकाश्यते अपि तु स्वप्रकाशतयैवेति । ततः ‘स यदजया त्वजाम्’ इत्याद्युक्तदिशाऽनाद्यविद्यायुक्तत्वेन

पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः ॥ ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥ श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ॥
वाक्पाण्युपस्थपाय्वंघ्रिकर्माण्यंगोभयं मनः ॥१५॥ शब्दः स्पर्शो रसो गंधो रूपं चेत्यर्थजातयः ॥ गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥१६॥

कालस्वभावयोस्तत्त्वांतरता स्यात् । न । गुणव्यतिकर इति । गुणानां व्यतिकरो यस्मात्स ईश्वर एव कालो नाम । स्वभावो नाम सूत्रं महत्तत्त्वमेव । तस्य सर्वशक्तिमत्त्वात् । तदेवं ज्ञानादीनां यथायथमंतर्भावान्न पक्षद्वयेऽपि तत्त्ववृद्धिरेतच्च पक्षांतरेष्वपि ज्ञेयम् ॥ १३ ॥ स्वमते तु गुणानामागमापायित्वात्प्रकृतेर्भेदो विवक्षितोऽतो गुणास्त्रीणि तत्त्वान्यपराणि पंचविंशतितत्त्वानि पूर्वोक्तपक्षद्वयसाधारणानि दर्शयति पुरुष इति सार्धद्वाभ्याम् । व्यक्तं महत्तत्त्वम् । नभआदीनि पंचतन्मात्राणि । मे मया ॥ १४ ॥ एकादश दर्शयति । श्रोत्रमिति । दर्शनं चक्षुः । ज्ञानशक्तयो ज्ञानेन्द्रियाणि पंच । वागादिपाय्वंतानि द्वंद्वैक्येनोक्तानि चत्वार्यंघ्रिश्चेति कर्माणि कर्मेंद्रियाणि पंच । उभयात्मकं मनः । उभयेंद्रियसाधारणमित्यर्थः । अंग हे उद्धव । एवमेतान्येकादश ॥ १५ ॥ पंच दर्शयति । शब्द इति । शब्दादीनि विषयतया परिणतानि पंच महाभूतानि । ननु गत्यादिभिस्तत्त्वाधिक्यं पक्षत्रयेऽपि स्यान्नेत्याह । गतीति । गतिश्च उक्तिश्च उत्सर्गौ च शिल्पं च तानि कर्मायतनानां कर्मेंद्रियाणां सिद्धयः फलानि ।

पिहितज्ञानस्य पुरुषस्य मोक्षार्थमन्वेष्टव्यो ज्ञानदोऽन्य ईश्वर एवावसीयते । एवमेवानुवदिष्यते श्रोत्रापि ' त्वत्तो ज्ञानं हि जीवानाम् ' इति पराभिध्यानात्तु तिरोहितम् । ' ततो ह्यस्य बन्धविपर्ययौ ' इत्यत्र प[illegible]रप्येतदंगीकृतम्, तद्देयं च ज्ञानं संविदारब्धस्वरूपशक्तेरंशत्वात्तदन्तःपात्येव । गुणत्रयं च त्रैगुण्यस्य प्रकृतेरङ्गत्रयमिति न त्वाधिक्यमपीति भावः । तदेवं षड्विंशतिपक्ष एव सुविविक्त इति दर्शितम् । एवं षड्विंशतिपक्षं स्थापयित्वा तत्र च प्रकृतेर्गुणा इत्युक्त्वा गुणत्रयस्याधिक्यं बाधमानो " नवैकादश पञ्च त्रीण्यात्थ त्वमिति शुश्रुम " इति तत्प्रश्नानुवादेन गणशः स्वमतं गणयति—गणेति त्रयेण । तत्र स्वमताधिकसङ्ख्याहेतूनि त्रीणि तत्त्वानि प्रथमतो दर्शयति अर्द्धेन । गुणेति—गुणानां व्यतिकरः क्षोभो यस्मात् एवंभूतः कालः कालाख्यस्वचेष्टात्मक ईश्वरस्तावदेकस्वभावस्तत्तद्वैशिष्ट्यप्राप्तिहेतुः कर्मवासना द्वितीयं वक्ष्यते च साङ्ख्यकथने—" मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् " इति सूत्रं क्रियाशक्त्यात्मकं मुख्यप्राणाख्यं तृतीयं महान् सूत्रेण संयुत इति ॥ * ॥ **विश्वनाथोऽपि**—ननु तदपि कालस्वभाववतिरिच्येते तौ कुत्रान्तर्भाव्यौ तत्राह—गुणानां व्यतिकरो यस्मात्स ईश्वर एव कालो नाम, स्वभावो नाम कर्मपरिणामः । स च सूत्रं महत्तत्त्वमेव तस्य सर्वशक्तिमत्त्वात्तौ तयोरन्तर्भाव्याविति सर्वमतेष्वपि ज्ञानादितत्त्ववृद्धिपरिहार उक्तः ॥ १३ ॥ स्वमतमाह भगवान्—स्वमते त्विति । अतो भेदविवक्षातः । पूर्वोक्तपक्षद्वयसाधारणानि षड्विंशतिपञ्चविंशतिपक्षोक्तानि, व्यज्यते विश्वमस्मादिति व्युत्पत्तेः । तन्मात्राणि तेषां नभआदीनां मात्राणि स्वल्परूपाणि शब्दादीनि तत्तन्नामकश्रोत्रादिविषयभिन्नानि । ' मात्रा क्लीबे भवेत्सूत्रे ' इति धरणिः । म इति तृतीयार्थे षष्ठी ॥ * ॥ अथ नवैकादश पञ्च क्रमेण गणयति—पुरुष इति सार्द्धद्वयेन । पुरुषो जीवः व्यक्तं महत्तत्त्वं ज्ञानशक्त्यात्मकम् । नभआदीनि महाभूतानि । मे मया ॥ १४ ॥ दृश्यतेऽनेनेति व्युत्पत्तेः । उभयात्मकं सङ्कल्पविकल्पात्मकम् । एतानि श्रोत्रादीनि ॥ * ॥ उभयात्मकं ज्ञानकर्मात्मकम् ॥ १५ ॥ पुनस्तत्त्वाधिक्यं शङ्कते—नन्विति । पक्षत्रये पूर्वोक्ते । उत्सर्गौ मलोत्सर्गवीर्योत्सर्गौ । इत्यर्थ इति—तत्त्वान्तरत्वस्वीकारे कर्मेन्द्रियाणां निर्विषयत्वं स्यादिति भावः ॥ * ॥ शब्दादयो विषया भूतसूक्ष्माणि इतीश्वरादयोऽष्टाविंशतिरुक्ताः । तत्र गत्यादीनाम

सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ॥ सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते ॥ १७ ॥ व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ॥ लब्धवीर्याः सृजंत्यंडं संहताः प्रकृतेर्बलात् ॥ १८ ॥ सप्तैव धातव इति तत्रार्थाः पंच खादयः ॥ ज्ञानमात्मोभयाधारस्ततो देहेंद्रियासवः ॥ १९ ॥ षडित्यत्रापि भूतानि पंच षष्ठः परः पुमान् ॥ तैर्युक्त आत्मसंभूतैः सृष्ट्वेदं समुपाविशत् ॥ २० ॥ चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ॥ जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥

तत्रोत्सर्गौ पायूपस्थफले । शिल्पं करस्य । अतो न तत्त्वांतराणीत्यर्थः ॥ १६ ॥ तदेवं मतत्रयेपि तत्त्वसंख्याभेदं निरूप्य यद्विवक्षया गायंतीति यत्पृष्टं तत्तन्मततात्पर्यं दर्शयति । सर्गादाविति । कार्याणि षोडश विकाराः कारणानि महदादीनि सप्त तद्रूपिणी सती प्रकृतिरस्य विश्वस्य सर्गादौ गुणैः सृज्यत्वाद्यवस्थां धत्ते उपादानकारणरूपत्वात् । पुरुषस्त्वव्यक्तोऽपरिणामी निमित्तभूतः केवलमीक्षते । अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्न इति ॥ १७ ॥ तत्त्वैरारब्धकार्यस्य तदंतर्भावमभिप्रेत्याह । व्यक्तादय इति । व्यक्तादयो महदादयः प्रकृतेरुत्पन्ना ये धातवस्ते विकुर्वाणाः पुरुषेक्षणेन लब्धवीर्याः संहता अंडं सृजंति । तदा प्रकृतेर्बलात्तामाश्रित्येत्यर्थः ॥ १८ ॥ एवं स्वमतमुपसंहृत्य मतांतरेष्वपि सामान्यतो निरूपितां घटनां विशेषतः सतात्पर्यां दर्शयति । सप्तैवेति । ज्ञानं जानातीति द्रष्टा जीवः । उभयोर्द्रष्टृदृश्ययोराधार आत्मा चेति सप्त । तत्र प्रकृत्यादीनां कारणत्वेन खादिष्वंतर्भावः । उत्तरेषामंतर्भावार्थमाह । ततस्तेभ्यः सप्तभ्यो देहेंद्रियासवः सर्वकार्याणि जायंते ॥ १९ ॥ षडिति मतेऽपि भौतिकस्य भूतांतर्भावं जीवस्य च परमात्मांतर्भावमाह । तैर्युक्त इति ॥ २० ॥ अन्नं पृथ्वी आत्मनो जातानि आत्मना सह चत्वारि तत्त्वानि । अंतर्भावार्थमाह ।

धिक्यं निरस्यति । फलानि कार्याणि ॥ १६ ॥ मतत्रये षड्विंशतिपञ्चविंशत्यष्टाविंशतितत्त्वलक्षणे सृज्यत्वाद्यवस्था इति शेषः । यतः केवलमीक्षिताऽतो हेतोः ॥ * ॥ सर्गादाविति सर्वेषां विवक्षितमुक्तम् ॥ १७ ॥ तदन्तर्भावं तत्त्वेष्वन्तर्भावम् । इत्यर्थ इति–परमकारणतया प्रकृतिमालम्ब्यैव ब्रह्माण्डसर्जनक्षमा भवन्ति तां विना तेषामनुद्भवादिति भावः ॥ * ॥ दीपिका–कार्यस्याण्डस्य तदन्तर्भावं तत्त्वान्तर्भावम् । धारयन्त्यण्डमिति धातवस्तत्त्वानि । संहता मिलिताः ॥ १८ ॥ तत्र सप्तपक्षे । खादिषु आकाशादिषु । उत्तरेषामिन्द्रियादीनाम् । धातवः तत्त्वानि ॥ * ॥ दीपिका–परस्परानुप्रवेशलक्षणां घटनां रचनाम् । आत्मा च परमात्मा । उत्तरेषां देहादिकार्याणाम् ॥ १९ ॥ आत्मनः सम्भूतैः । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिश्रुतेराकाशादिपञ्चभूतैः इदं समुपाविशत् "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः ॥ * ॥ आत्मसम्भूतैः स्वस्मात्सञ्जातैः । तैर्महाभूतैः । इदं देहादिकम् । समुपाविशदिति जीवस्याभेदो विवक्षितः । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतेः ॥ २० ॥ 'कार्येण कारणं कारणेन कार्यञ्च निर्दिश्यते' इति न्यायेनान्नेन कार्येण कारणस्य पृथिव्या ग्रह । तैस्तेजआदिभिः । "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति श्रुतेर्भूतत्रयात्मिकापि सृष्टिः श्रूयते संज्ञामूर्तिक्लृप्तिस्तु "त्रिवृत्कुर्वत उपदेशात्" इति न्यायात् ॥ * ॥ चत्वारीति मते, आकाश इन्द्रियागोचरत्वात्तत्त्वेष्वमननम्, वायोश्च तैजसः सूक्ष्मावस्थत्वमेवेति

संख्याने सप्तदशके भूतमात्रेंद्रियाणि च ॥ पंच पंचैकमनसा आत्मा सप्तदशः स्मृतः ॥२२॥ तद्वत्षोडशसंख्याने आत्मैव मन उच्यते ॥ भूतेंद्रियाणि पंचैव मन आत्मा त्रयोदश ॥ २३ ॥ एकादशत्वमात्माऽसौ महाभूतेंद्रियाणि च ॥ अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥ २४ ॥ इति नानाप्रसंख्यानं तत्त्वानामृषिभिः कृतम् ॥ सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥ २५ ॥ उद्धव उवाच ॥ प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ॥ अन्योन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ॥ २६ ॥ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि ॥ एवं मे पुंडरीकाक्ष महांतं संशयं हृदि ॥ छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ॥ २७ ॥

तैरिति । अवयविनः कार्यस्य ॥ २१ ॥ भूतानि च मात्राणि च इंद्रियाणि च पंचपंच एकेन मनसा सह आत्मा सप्तदशः ॥ २२ ॥ आत्मैव संकल्पयन्मन उच्यते । त्रयोदशपक्षे भूतानि तन्मात्रैरेकीकृतानि पंचैव । इंद्रियाणि तत्प्रकाशकानि पंचैव । मनश्चैकमिंद्रियाधिष्ठातृ । आत्मा च द्विविधः । एवं त्रयोदश ॥ २३ ॥ एकादशत्वपक्षे पंचमहाभूतानि पंचेंद्रियाणि जीवमनसोश्चात्मांतर्भावेनैतान्येवैकादश । नवपक्षे अष्टौ प्रकृतयः पुरुषश्च । विकाराणां तदंतर्भावः ॥ २४ ॥ उपसंहरति । इतीति । इति एभिः प्रकारैः । प्रकृतिपुरुषभेदज्ञापनायेत्यर्थः ॥ २५ ॥ ननु गुणसाम्यं प्रकृतिस्तस्याः सत्त्वादयो गुणा न त्वात्मन इति तयोर्भेदाप्रतीतेः कथं ज्ञातुं शक्यत इत्युद्धवः पृच्छति । प्रकृतिरिति । आत्मना जडाजडस्वभावेन विलक्षणौ । अन्योन्यापाश्रयात्परस्परपरिहारेणाप्रतीतेरित्यर्थः ॥ २६ ॥ अन्योन्यापाश्रयत्वमेवाह । प्रकृता

त्रयाणामेव ग्रहः । जीवस्य परमात्मन्यन्तर्भावः विस्फुलिंगानां वह्नाविव ॥ २१ ॥ भूतानि च मात्राणि चेन्द्रियाणि चेति द्वन्द्वः । द्विरावृत्तोऽपि पञ्चशब्दोऽत्र त्रिरावृत्तो बोध्यः । कारणत्वेन महदादयस्तन्मात्रासु कर्मेन्द्रियाणि भूतेषु यथायथमन्तर्भाव्यान्यत्र ॥ * ॥ आत्मा परमात्मा ॥ २२ ॥ तद्वत् भूतमात्रेन्द्रियाणि च पञ्चपञ्चेत्युक्तवत् । तत्प्रकाशकानि तन्मात्रापदगृहीतशब्दादिविषयप्रकाशकानि ॥ * ॥ ० ॥ २३ ॥ विकाराणां भूतेन्द्रियमनसाम् । अथ नवेति अष्टौ प्रकृतय इत्यतः प्राग्योज्यम् ॥ * ॥ केचिदेकादशेति पद्यं प्रक्षिप्तमाहुः । अतः क्वचिन्नास्त्यपीदं पद्यम् ॥ २४ ॥ एभिः पूर्वोक्तैः प्रकारैस्तत्त्वसङ्ख्याभेदैः । इत्यर्थ इति—प्रकृतिस्तत्कार्याणि च जडानि परिणामीनि च, पुरुषश्चेतनोऽपरिणामीति भेदविज्ञानं विना प्रकारदर्शनं न सम्भवतीति भावः । न्याय्यमुचितम् । अशोभनं दुष्करम् ॥ * ॥ उपसंहरति—इतीति ॥ २५ ॥ तदित्थं तत्त्वसङ्ख्यानुपपत्तिपरिहारश्रवणेन तत्र निःशंकोऽपीदानीं प्रकारान्तरेण शंकते उद्धवः—प्रकृतिरिति । विलक्षणौ भिन्नौ । परस्परपरिहारेण द्वयोरेकत्यागेन । इत्यर्थ इति—द्वयोः समुचितैव प्रतीतिरस्ति न पार्थक्येनेति भावः ॥ * ॥ तत्त्वविचारोत्थं संशयान्तरमाह—प्रकृतिर्माया पुरुष ईश्वरः । यद्यपि शास्त्रदृष्ट्यैव भेदो ज्ञायते तथापि देहेष्वनयोरन्योन्याश्रयात् परस्परपरित्यागेन भिन्नतयाऽज्ञानात् । हे कृष्ण हे संशयकर्षणशील त्वमेवैतं संशयमपाकर्तुं समर्थ इति भावः ॥ २६ ॥ तेन आत्मना । तस्याः प्रकृतेः । इत्यर्थ इति—" यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः । अपां रसस्य च तथा प्रकृतेः पुरुषस्य च ॥ " इति देवहूत्युक्तेरिति भावः । मिथ्याप्रकृतावपि सच्चिद्रूपेणात्मा लक्ष्यतेऽतः प्रकृतिरस्ति भाति चेत्युच्यते । प्रकृतिश्च कर्तृत्वभोक्तृत्वादिविक्रियारूपेणात्मनि अहं कर्ता अहं भोक्ता च इत्यादिना लक्ष्यत इति वा भावार्थः । एवमुक्तरीत्या सर्वज्ञत्वात्त्व

त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः ॥ त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥ २८॥ श्रीभगवानुवाच ॥ प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ॥ एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २९ ॥ ममांग माया गुणमय्यनेकधा विकल्पबुद्धिश्च गुणैर्विधत्ते ॥ वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ३० ॥

विति । प्रकृतौ तत्कार्ये देहे । प्रकृतिश्चात्मनि । तेन विना तस्या अप्रतीतेः । अहमित्यभेदप्रतीतेर्न देहात्मनो भेदो लक्ष्यत इत्यर्थः । एवं हृदि वर्तमानं संशयम् । नये युक्तौ नैपुणं प्रावीण्यं येषां तैः ॥ २७ ॥ अर्हसीत्युक्तं तत्र हेतुमाह । त्वत्त इति । हि यस्मात् त्वत्तस्त्वत्प्रसादादेव । अत्र ज्ञाने प्रमोषो भ्रंशश्च ते शक्तितो मायातः । ननु स्वप्रकाशस्यात्मनः कथं ज्ञानप्रमोषः ज्ञानदाने तत्प्रमोषे वा मम किं प्रयोजनं तत्राह । त्वमेवेति ॥ २८ ॥ विकाराविकाराभ्यां नानात्वैकत्वाभ्यां सापेक्षनिरपेक्षत्वाभ्यां प्रकाशाप्रकाशाभ्यां चात्यंतं भेदं वक्तुमाह । प्रकृतिः पुरुषश्चेति । विकल्पोऽत्यंतभेद एव । कुत इत्यपेक्षायां प्रकृतिशब्दोक्तदेहादिसंघातस्य विकारित्वं तावद्दर्शयति एष इति द्वाभ्याम् । एष सर्गः सृज्यत इति सर्गो देहादिसंघातो वैकारिको विकारवान् । अत्र हेतुः । गुणव्यतिकरात्मको गुणक्षोभकृतः ॥ २९ ॥ नानात्वमाह । ममेति । विकल्पं भेदं तद्बुद्धीश्च । अनेकधात्वं प्रपंचयति । वैकारिकोऽनेकविकारवानपि स्थूलेन मार्गेण तावत्त्रिविधः । त्रैविध्यमाह । अध्यात्ममिति । एकं रूपम् ॥ ३० ॥

संशयच्छेदसामर्थ्यमस्तीति सम्बुद्ध्यभिप्रायः ॥ * ॥ तदेवं प्रकृतिपुरुषाभेददर्शनमेव । तेन विनेत्यादि यथासङ्ख्यं हेतुद्वयम् । तेनात्मना । तस्या देहावस्थलक्षणायाः प्रकृतेः । हे पुण्डरीकाक्षेति—शङ्कराराधने समर्पणप्रतिज्ञातसहस्रकमलपूर्त्यर्थं त्वया निजनेत्रमप्यर्पितमतो मदज्ञानापाकरणमपि त्वया प्रतिज्ञातं तदपि यथाकथञ्चित्कर्तव्यमेवेति भावः । युक्तौ अर्थापत्त्यनुमानोपमानान्यतमायाम् ॥ २७ ॥ तत्रार्हत्वे । द्वेधाऽऽक्षिपति—नन्विति । तवाक्षेपोत्तरं त्वमेव जानासीत्याह—त्वमेवेति ॥ * ॥ एवमिति यदुक्तं तत्र श्रीभगवन्मतं जीवेश्वरभेदपक्षमेव हेतुत्वेन दर्शयति—त्वत्त इति । शक्तितो मायावृत्तित एवेति । तस्य तत्रानासक्तस्य नैर्घृण्यं निरस्तम् । ननु मायावृतानां मत्तः कथं ज्ञानं स्यात्कथं वा स्वप्रकाशस्यात्मनो मायया ज्ञानप्रमोषस्तत्राह—त्वमेवेति । पूर्वत्र मायादूरीकरणे तवैव शक्तिः उत्तरत्र मायायास्त्वदङ्गीकृतादन्यत्राभिभवसामर्थ्यमस्त्येवेति ध्वनितम् । तदेवमष्टाविंशतिसहायः षड्विंशतिपक्ष एवानेन दृढीकृतः ॥ * ॥ **विश्वनाथस्तु**—त्वत्तो ज्ञानं त्वयैव विद्याशक्त्या ज्ञानप्रदानमित्यर्थः । तेऽत्र शक्तितो मायावृत्तितोऽविद्यातः प्रमोषः, तयैव ज्ञानस्य चौर्यमित्यर्थः । ननु मच्छक्तेर्ज्ञानचौर्येण किं प्रयोजनं तत्राह—त्वमेवेति ॥ २८ ॥ बहुहेतुभिः प्रकृतिपुरुषयोर्भेदं वक्तुमाह—विकारेत्यादिना । भेदे हेतुं पृच्छति—अत्र विकारवत्त्वे । यद्वा—माया पुरुषश्चेति विकल्पः । प्रकृतेः पुरुषसत्तातिरिक्तसत्ताया असम्भवेन न पुरुषाद्भेदः, सदसतोरभेदासम्भवान्नाभेदः, भेदाभेदयोरेकत्र विरोधान्नोभयात्मकोऽतोऽनिर्वाच्य एवायमिति भावः । यश्चैष वैकारिको नानाविकारात्मकः सर्गः स च तस्या एव गुणानां व्यतिकरात्मकः क्षोभकल्पनारूपः ॥*॥ अत्यन्तं भिन्न एव प्रकृतिः पुरुषश्च विकारा विकारादिभिस्तदपि 'दृश्यते न भिदा तयोः' इति कथं ब्रवीषीति भावः । गुणक्षोभकृत इति प्रकृतौ विकारो दर्शितः । पुरुषस्तु केवलमीक्षमाणो निर्विकारः प्रसिद्ध एवेति भावः ॥२९॥ सर्गानेकविध्यमाह—ममेति । तद्बुद्धीर्भेदबुद्धीः । एकं प्रथमम् । अथ द्वितीयमधिदैवं रूपमन्यत्तृतीयमधिभूतम् ॥ * ॥ वैकारिक इत्यत्र सर्ग इति विशेष्यं पूर्वश्लोकादनुवर्त

१ अन्योन्या० इत्यत्र तदेवाहेत्येव पाठ एतत्सम्मतो भाति ।

दृग्रूपमार्कं वपुरत्र रंध्रे परस्परं सिध्यति यः स्वतः खे ॥ आत्मा यदेषामपरो य आद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः ॥ एवं त्वगादि श्रवणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥ ३१ ॥

तानि रूपाणि दर्शयति । दृगध्यात्मम् । रूपमधिभूतम् । अत्र रंध्रे चक्षुर्गोलके प्रविष्टमार्कं वपुरंशोऽधिदैवमिति । सापेक्षप्रकाशतामाह । परस्परमिति चक्षुषा रूपं ज्ञायते । तदन्यथाऽनुपपत्त्या चक्षुः तत्प्रवृत्त्यन्यथानुपपत्त्या तदधिष्ठात्री देवता । ततश्च चक्षुषः प्रवृत्तिस्ततो रूपज्ञानमित्येवमेतत्त्रयं परस्परं सिध्यति । अत्र रंध्र इति विशेषणव्यावर्त्यमाह दृष्टांतोपयोगितया । यस्तु खे आकाशे अर्को वर्तते मंडलात्मा स तु स्वतः सिध्यति । चक्षुर्विषयत्वेऽपि प्रतियोग्यपेक्षाभावमात्रेण स्वत इत्युक्तम् । इदानीमात्मनो विकारित्वाद्यभावेन भेदमाह । यद्यस्मादात्मा एषामध्यात्मादीनामाद्यः कारणमत एकरूपोऽभिन्नश्च तस्मादेतेभ्यः परो भिन्नः स्वप्रकाशत्वादपीत्याह । स्वयाऽनुभूत्या स्वतः सिद्धप्रकाशेनाखिलानां सिद्धानां सिद्धिः । परस्परप्रकाशकानामपि प्रकाशकः । सर्वेषामपि सामान्यतश्चित्प्रकाशविषयत्वात् । अत एव तस्य स्वप्रकाशत्वं सिद्धम् । चक्षुषि दर्शितं त्रैविध्यमिंद्रियांतरेष्वप्यतिदिशति । एवमिति यथा चक्षुरेवं त्वगाद्यपीत्यर्थः । त्वक् स्पर्शो वायुरिति । श्रवणं शब्दो दिश इति । जिह्वा रसो वरुण इति ।

नीयम् ॥ ३० ॥ तान्यध्यात्मादीनि आत्मानमहङ्कारमधिकृत्य भवतीति अध्यात्ममिन्द्रियवर्गः । तैजसाहङ्कारकार्यत्वादिन्द्रियाणामित्यभिप्रेत्याह—दृगध्यात्ममिति । आर्कमर्कसम्बन्धि 'वपुः स्यादंशदेहयोः' इति कोशात् । वपुरंशोऽपि परिच्छिन्नप्रकाशकत्वादंशोक्तिर्न विरुद्धा तदन्यथानुपपत्त्या चक्षुर्विना रूपज्ञानासम्भवाच्चक्षुः सिद्ध्यति । चक्षुषो जडत्वेन रूपज्ञाने तत्प्रवृत्तेश्चक्षुःप्रवृत्तेश्चेतनं देवं विनासम्भवेन तदधिष्ठात्री देवता सिद्ध्यति । तस्यांश्चेतनत्वम् "योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः" इत्युक्तेरवसेयम् । ततो देवतातः । ततश्चक्षुःप्रवृत्तेः । एतत्त्रयं चक्षुरादित्रयम् । अत्र रन्ध्रे इति भूतले घट इतिवत्सप्तम्यन्तमपि विशेषणं भवति तार्किकनये दृष्टान्तोपयोगिता त्वत्रेत्थम् यथा—चक्षूरन्ध्रगो रविः सापेक्षसिद्धस्तथाऽऽकाशगो नेति ज्ञेया । यद्यप्याकाशगस्यापि रवेश्चक्षुरपेक्षास्ति ब्रह्मात्मज्ञाने वृत्तिव्याप्तिरिव तथापि प्रतियोगिनो निरूपकान्तररवेरपेक्षा न स्वतःप्रकाशरूपत्वाद्ब्रह्मणः फलव्याप्तिवत् । तदुक्तम्—"ब्रह्मण्यज्ञानननाशाय वृत्तिव्याप्तिरपेक्षिता । स्वयं स्फुरणरूपत्वान्नाभासस्तत्र युज्यते ॥" इति । प्रकारान्तरेणात्मनो भेदं साधयति—इदानींमिति । अतः कारणत्वात् । सर्वेषां वस्तूनाम् । अत एव सर्वप्रकाशकत्वादेव । एतन्न्यायमन्यत्राप्यतिदिशति—चक्षुषीति । इत्यर्थ इति—चक्षुषि यथा त्रैविध्यमध्यात्मादिरूपमस्ति तथैव त्वगादिष्वपि ज्ञेयमिति भावः । तत्रान्तःकरणे । इत्येवमुक्तविधया । इत्यर्थ इति—अन्तःकरणचतुष्क एव त्रैविध्यं ध्येयमिति भावः ॥ * ॥ तस्य रूपज्ञानस्य चक्षुर्विनाऽनुपपत्त्याऽसिद्ध्याऽतीन्द्रियं चक्षुर्ज्ञायतेऽनुमीयते । अयं चक्षुष्मान् रूपज्ञानाद्यन्नैवं तन्नैवं यथान्ध इति । तस्य चक्षुषो रूपदर्शने या प्रवृत्तिस्तस्या अधिष्ठातृदेवतामन्तराऽसिद्ध्या चक्षुरधिष्ठात्री अर्करूपदेवताऽनुमीयते । इदं चक्षुः साधिष्ठातृकं जडत्वेऽपि प्रकाशकारित्वाद्दास्यादिवत् यन्नैवं तन्नैवं यथा घटादि । ततो देवतातः । ततश्चक्षुषः । इत्येवमेतत्त्रयं परस्परं सिद्ध्यति । अत्र रन्ध्र इति विशेषणं तु आर्कवपुषो ज्ञेयम् । यथा भूतले घटो नास्तीत्यत्र भूतलस्य विशेषणत्वमभावस्य विशेष्यत्वं भूतलानुयोगिको घटप्रतियोगिकोऽभाव इति । तथा कीदृगार्कं वपुरत्र रन्ध्रेरूतद्रन्ध्राधारकमिति । तथा चैतद्विशेषणेन यद्व्यावर्त्यं भेवं तदाह । तत्र हेतुः—दृष्टान्तस्य या दार्ष्टान्तिके उपयोगिता उपकारकत्वं तया यथाऽऽकाशस्थरवेर्न चक्षुर्दोषोपरक्तत्वं किंतु चक्षुस्थस्यैव तथान्तःकरणावच्छिन्नस्यैव जीवस्य पुण्यपापाद्युपरक्तत्वं न परमात्मन इति भावः । ननु यदि स्वतः सिद्ध्यति तर्हि तमन्धः कथं न पश्यति, तत्राह—चक्षुर्विषयत्वेऽपीति । यथा चक्षुरवच्छिन्नाधिदैवतस्य प्रतियोगिनः सम्बन्धिनश्चक्षुरपेक्षा न

योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ॥ अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐंद्रियश्च ॥ ३२ ॥
आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः ॥ व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ३३ ॥

नासा गंधोश्विनाविति । चित्तेन युक्तमंतःकरणांतरमपि । तत्र चित्तं चेतयितव्यं वासुदेव इति । मनो मंतव्यं चंद्र इति । बुद्धिर्बोद्धव्यं ब्रह्मेति । अहंकारोऽहंकर्तव्यं रुद्र इत्येवं त्रिविधमित्यर्थः ॥ ३१ ॥ ननु पुनरपि वैलक्षण्यमात्रमेवोक्तं त्रिविधप्रपंचव्यतिरिक्तात्मप्राप्तिस्तु कुतः स्यात् । अहंकारनिवृत्त्या । तत्कुतः । त्रिविधविकल्पनिवृत्त्यैवेत्याशयेनाह । योऽसावहमहंकारः । तमेवाह । गुणक्षोभं करोति तथा ततः परमेश्वरात्कालाद्वा निमित्तात्प्रधानं मूलमुपादानं यस्य तस्मान्महतः प्रसूतो विकारः । स त्रिवृत् त्रिविधो मोहमयस्य विकल्पस्य हेतुः । त्रिवृत्त्वमेवाह । वैकारिक इति ॥ ३२ ॥ स कुतो निवर्तते आत्मा ज्ञानविलसितत्वात्तज्ज्ञानेनेत्याशयेनाह । आत्मा परिज्ञानमय इति । ननु कथं मोहमयत्वं विकल्पस्याहंकारस्य वा कैश्चित्सत्यत्वांगीकारात्तत्राह । विवाद इति । अयं भिदार्थनिष्ठो विवादोऽप्यात्मा परिज्ञानमय इत्यन्वयः ।

तथा गगनस्थरवेश्चक्षुरपेक्षास्तीत्येतावन्मात्रेण स्वत इत्युक्तं चक्षुर्विषयत्वमस्त्येवेत्यर्थः । वास्तवोऽर्थस्तु—यथा चक्षुःप्रकाशितपदार्थानां यथा चक्षुःस्थाधिष्ठातृरवेस्स्वप्रकाशनेऽपेक्षास्ति, तथा खस्थरवेः स्वप्रकाशने चक्षुःस्थरवेरपेक्षा न, तस्य स्वयंप्रकाशत्वाच्चक्षुस्स्थस्य तु खस्थं विना न प्रकाशकत्वमन्यथान्धकारेऽपि घटादिपदार्थप्रत्यक्षता स्यादिति । यथा दीपः स्वमपि प्रकाशयति पदार्थान्तराणि च । यथा दीपस्य स्वप्रकाशने दीपान्तरापेक्षा नास्ति तथा खस्थरवेरपीति तात्पर्यम् । अतः सर्वकारणत्वादेकरूपः विवर्तोऽधिष्ठानत्वेनाविकृतस्वरूपः कार्येणाभिन्नश्च, तस्माद्विकारित्वाद्यभावादेतेभ्योऽऽध्यात्म्यादिभ्यो भिन्नः । आत्मनः स्वप्रकाशत्वात्स्वव्यवहारे परानपेक्षत्वादप्यात्मा भिन्न इत्याह । अत एव सर्वप्रकाशकत्वादेव । तस्यात्मनः, इति दीपिका ॥३१॥ पुनराक्षिपति—नन्विति । उत्तरमाह—अहङ्कारनिवृत्त्येति । तदहंकारनिवर्तनम् । तमेवाहंकारमेव । ततस्तस्मात् । परमेश्वरात् साधारणात् । 'कालाद्गुणव्यतिकरः' इत्युक्तेरसाधारणात्कालाद्वेति । स विकारः । मोहमयस्य मोहप्रधानस्यासत इत्यर्थः ॥*॥०॥३२॥ सोऽहंकारः । तज्ज्ञानेन आत्मज्ञानेन । पुनराक्षिपति—नन्विति । भिदा भेदः सैवार्थस्तत्र निष्ठा स्थितिर्यस्य स तथा । एतादृशो योऽयं विवादोऽहंकारसत्यत्वासत्यत्वलक्षणः । अस्यैव विवादस्यात्मा परिज्ञानमयत्वेऽन्येषामात्मज्ञानमयत्वं स्यादत आह—यद्वेति । भिदया भेदेनोपलक्षितोऽर्थः प्रपञ्चस्तस्मिन्निष्ठा यस्य स तथा । वस्तु सत्यं मात्रास्वरूपं यस्य तद्वस्तु ब्रह्म तन्निष्ठो वस्तुमात्रनिष्ठः । यतोऽवस्तुमात्रनिष्ठो भेदोऽतो हेतोः । पुनराशंकते—नन्विति । अलं कृतम् तन्निवृत्तिप्रयासेन भेदनिवृत्तियत्नेन । प्रत्युत किञ्च । तत्कृतैर्भेदबुद्धिकृतैः । ते मद्विमुखाः ॥ * ॥ सोऽहंकारः केन निवर्तते, उच्यते—'भयं द्वितीयाभिनिवेशतः स्यात्' इत्यनुसारेण मद्बहिर्मुखतानिदानत्वेन मदन्तर्मुखतयैवेत्याह—आत्मा परिज्ञानमय इति । स्वलोकात्स्वाश्रयादपि मत्तः परावृत्तधियां पुंसां यदात्मापरिज्ञानं स्वरूपास्फूर्तिस्तन्मयो यो निजमतपरमतयोरस्तीति नास्तीति भिदार्थनिष्ठो विवादः सोऽर्थशून्योऽपि नैवोपरमेतेति मद्बहिर्मुखतायां सत्यां विवादमात्रं प्रसरेन्न तु ज्ञानमुदयते मदन्तर्मुखतायां ज्ञानमप्यानुषङ्गिकतयोदयते परमपुरुषार्थलक्षणमत्प्राप्तिस्तु मुख्यतयेत्यर्थः ॥ * ॥ **विश्वनाथस्तु**—संशयच्छेत्तारो विद्वांस एव तत्त्वनिश्चायका इति चैतेषामपि विवादो नोपशाम्यतीत्याह—आत्मेति । प्रपञ्चोयमस्तीति सत्य इति कश्चिदुपपत्त्या निश्चिनोति तन्मतं दूषयित्वा नास्तीति मिथ्येति कश्चिन्निश्चिनोतीति विवादो ह्यात्मनः परमात्मतत्त्वस्यापरिज्ञानसूचक इत्यर्थः । आत्मन्यनुभवगोचरीकृते विवादानुपपत्तेः । भिदार्थे मद्भिन्न एवार्थे प्रयोजने । ननु मयि निष्ठा नितरां स्थितिर्यस्मात्सः । यद्वा—भिदा विदारणं परमतखण्डनमेव, तत्रैव निष्ठा यस्य सः । किञ्च—व्यर्थो विफलः तस्मान्न पुण्यं न पापं न स्वर्गो न नरकश्चेत्येवं निष्प्रयोजनोऽपि नोपरमेतेति मन्मायाशक्तेरेव स स्वभाव इति भावः । तदुक्तम्—"यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति" इति । किञ्च—

उद्धव उवाच ॥ त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ॥ उच्चावचान्यथा देहान्गृह्णंति विसृजंति च ॥३४॥ तन्ममाख्याहि गोविंद दुर्विभाव्यमनात्मभिः ॥ न ह्येतत्प्रायशो लोके विद्वांसः संति वंचिताः ॥ ३५ ॥ श्रीभगवानुवाच ॥ मनः कर्ममयं नृणामिंद्रियैः पंचभिर्युतम् ॥ लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥ ३६ ॥ ध्यायन्मनोऽनुविषयान्दृष्टान्वाऽनुश्रुतानथ ॥ उद्यत्सीदत्कर्मतंत्रं स्मृतिस्तदनु शाम्यति ॥ ३७ ॥

यद्वा विवादः सर्वोपि भिदार्थनिष्ठ एव न तु वस्तुमात्रनिष्ठः । अतः परस्परं युक्तिभिरेव भेदस्य निराकृतत्वान्मोहमयत्वं सिद्धमिति । ननु यद्यहंकारो विकल्पश्च नास्ति अलं तर्हि तन्निवृत्तिप्रयासेन तत्राह । व्यर्थोऽपीति । व्यर्थोऽप्यर्थरहितोऽपि स्वरूपभूतान्मत्तो बहिर्मुखानां नैवोपरमेत् । प्रत्युत तत्कृतैः कर्मभिरुच्चनीचदेहेषु ते संसरंतीति॥ ३३॥ तत्र पृच्छति । त्वत्त इति । व्यापकस्यात्मनो देहाद्देहांतरगमनमकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथमिति भावः ॥ ३४ ॥ एतद्विद्वांसो न संति । हि यस्मान्मायया वंचिता मोहिताः ॥ ३५ ॥ लिंगशरीराध्यासेन सर्वं घटत इत्युत्तरमाह । मन इति । प्रधानत्वेन पंचभिरिति निर्देशोऽन्येषामप्युपलक्षणार्थम् । देहाद्देहांतरं प्रति याति । ततोऽन्य एवात्मा तन्मनोऽनुवर्तते अहंकारेणानुगच्छति ॥ ३६ ॥ ननु मनसोऽपि पूर्वदेहवियोगो देहांतरयोगश्च कथं भवतीति चेत्स्मृतिवियोगयोगाभ्यामिति

बहुसम्भवान्ते मत्प्रापकं मार्गं प्राप्यापि ते ततश्च्युता भवन्तीत्याह—मत्तः परावृत्तधियामिति । वेदशास्त्रार्थो मत्प्रापको मार्ग एव तं विद्वांसस्ते मां प्राप्तुं प्रवृत्तधियोऽपि मध्ये विवादमङ्गीकृत्य मत्तः सकाशात्परावृत्तधियो भवन्तीति भावः । मत्तः कीदृशात्—स्वलोकतः स्वान्भक्तानेव लोकते कृपया पश्यति नान्यानिति तथा तस्मात्, भक्ताश्च विवादानुत्पतिष्णव एव । तेन मच्चिन्तनादिनैव स्वायुःसफलयितव्यं न तु विवादास्पदस्य प्रपञ्चस्य तत्त्वानिश्चयजिज्ञासया तद्विफलयितव्यमिति सूचितम् ॥ * ॥ **दीपिका**—परस्परं युक्तिभिरिति—भेदो नाम वस्तु तत्स्वरूपं तद्धर्मो वा । आद्ये हस्तः कर इतिवत् घटाभेद इति पर्यायापत्तिः, द्वितीये भेदस्यापि भेदस्तद्धर्मत्वात् पुनस्तस्यापि पुनस्तस्यापीत्यनवस्थेत्यादियुक्तिभिः ॥ ३३ ॥ तत्र संसरणे । इति भाव इति—न हि व्यापकस्य देहान्तरगमनमकर्तुः कर्मकरणं नित्यस्य जनिमृतिवृद्ध्यादीनि सम्भवन्तीति तात्पर्यम् ॥ * ॥ त्वत्त इति युग्मकम् । तत्र बहिर्मुखानां संसरणे एतद्विद्वांसः व्यापकस्य निरीहस्याकर्तुः संसरणं कथमित्यत्र सिद्धान्तवेत्तारः ॥ * ॥ **विश्वनाथस्तु**—यदि बुद्धिस्त्वत्तः परावृत्ताभूत्तदैव तेषां कर्मभिर्बन्धः, ततश्चोच्चावचानुत्तमाधमान्देहान्स्थूलान्यथा गृह्णन्ति विसृजन्तीति त्वद्बहिर्मुखानां जन्ममरणयोः प्रकारं ब्रूहीत्यर्थः ॥ ३४ ॥ तत् देहग्रहणादि । मम मह्यम् । अनात्मभिर्बुद्धिबलविधुरैः । दुर्विभाव्यं दुर्ज्ञेयम् । त्वं तु गा वेदलक्षणा वाचो विन्दति सर्वथा जानातीति गोविन्दोऽसि, तवास्य प्रश्नस्योत्तरदाने सामर्थ्यमिति सम्बुद्ध्यभिप्रायः । त्वदन्य एतत्प्रश्नोत्तरविद्वांसो ज्ञातारो न सन्तीति तत्र हेतुः—वञ्चिता इति । तव माययेति शेषः ॥ * ॥ अनात्मभिरल्पबुद्धिभिर्दुर्विभाव्यं भावयितुमप्यशक्यं, किं पुनर्वक्तुमित्यर्थः । ननु लोके विज्ञा बहवः स्युस्त एतत्प्रष्टव्यास्तत्राह—न हीति । वञ्चितास्त्वन्मायया मोहिताः ॥ ३५ ॥ संसरणस्याध्यासमूलत्वमाह—लिंगशरीरेति । अध्यासो विपरीतज्ञानम्, तदत्र लिंगदेह आत्मबुद्धिरूपम्, तेन । सर्वं शरीरग्रहणादि । प्रधानत्वेन ज्ञानसाधनत्वेन ज्ञानेन्द्रियाणां प्राधान्येन पञ्चभिरिति । अन्येषां कर्मेन्द्रियाणाम् । लोक्यते सर्वैरिति लोको देहः “ लोको भूरादिलोकेषु देहे ज्ञाने जने दृशि ” इति निरुक्तिः । ततो मनःप्रधानलिंगात् । अहङ्कारेण मिथ्याध्यासेन । कर्ममयं कर्मजादृष्टाश्रयम् ॥ * ॥ मनः मनःप्रधानं सूक्ष्मशरीरमेव लोकाल्लोकान्तरं याति कर्ममयं कर्माधीनम् आत्मा जीवोऽन्यस्ततो भिन्नोऽपि तदुपहितत्वादेव तत्सूक्ष्मशरीरमनुवर्तते अनुगच्छति ॥ * ॥ **संदर्भस्तु**—तदनुवर्तते तदारूढश्चलति तदारूढत्वात्तच्चलनेनैव चलतीत्याह ॥ ३६ ॥ पुनराशङ्कते—

विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः ॥ जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ॥ ३८ ॥ जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥ ३९ ॥ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ ॥ तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ॥ ४० ॥ इंद्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि ॥ बहिरंतर्भिदा हेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥

वक्तुं तयोः कारणमाह । ध्यायदिति । कर्मतंत्रत्वात्कर्मोपस्थापितान् दृष्टान्वा अनुश्रुतान्वेदोक्तान्विषयाननुध्यायेत् । अथानंतरं ध्यायमानेषूद्यदाविर्भवत्पूर्वविषयेषु च सीदल्लीयमानं भवति तदनंतरं तस्य स्मृतिः पूर्वापरानुसंधानं नश्यति ॥ ३७ ॥ ततः किमत आह । विषयेति । कर्मोपस्थापितदेवादिदेहात्यंताभिनिवेशेनात्मानं पूर्वदेहं पुनर्मनो न स्मरेदिति यत्सैव यातना देहाभिनिवेशेन भयशोकादेर्देवादिदेहाभिनिवेशेन वा हर्षतर्षादेर्हेतोः पूर्वदेहेत्यंतविस्मृतिरहंकारनिवृत्तिस्तदभिमानिनो जंतोर्जीवस्य मृत्युरुच्यते न तु देहवन्नाशः ॥ ३८ ॥ जन्म तु विषयस्य देहस्यात्मतया स्वीकृतिमभिमानं प्राहुर्न तु देहवदुत्पत्तिः । न च पुत्रादिदेहवत्प्रीत्यतिशयमात्रेण किंतु सर्वभावेनाभेदेन । अभिमानमात्रेणोत्पत्तिमरणयोर्दृष्टांतद्वयम् । यथा स्वप्नश्च मनोरथश्चेत्यर्थः ॥ ३९ ॥ दृष्टांतौ विवृणोति । स्वप्नमिति । तत्र वर्तमाने स्वप्नादौ पूर्वं चेति अपूर्वमिवेति चान्वयः । पूर्वसिद्धमप्यात्मानमपूर्वमिवाद्य जातमिव पश्यतीत्यर्थः ॥ ४० ॥ उपसंहरति । इंद्रियाणामयनं मनस्तस्य देहांतराभिनिवेशेन या सृष्टिरुत्पत्तिस्तया

नान्विति । तयोः जन्ममरणयोः । दृष्टान् ऐहिकान् । आविर्भवद्रूढाभिमानं लीयमानं त्यक्ताभिमानम् । तदनन्तरं मनोलयानन्तरम् ॥ * ॥ एवं सर्वदैव सूक्ष्मशरीरानुवर्तिनो जीवात्मनः स्थूलशरीरेण वियोग एव मृत्युः संयोग एव जन्मेति ब्रुवंस्तयोरपि स्थूलवियोगसंयोगयोः सर्वथा स्मृतिवियोगस्मृतिसंयोगावेव कारणमित्याह—ध्यायन्निति । कर्मतन्त्रं कर्माधीनं मनः । कर्मोपस्थापितान् दृष्टान् विषयान्मर्त्यलोकस्थान् परदारादीन् श्रुतान्देवलोकस्थान् तानेव ध्यायत्सत्, अथ क्षणान्तरं ध्येयेषु तेष्विव उद्यत् तदाकारीभवत्, सीदत् पूर्वध्यातेभ्यो विषयेभ्यः सर्वथा विच्युतीभूतं भवति तदनु तदनन्तरं तस्य स्मृतिः पूर्वपरानुसन्धानं नश्यति ॥ ३७ ॥ ततो मनोलयात् । तस्यैव मनसः । पूर्वादिना क्लेशादिग्रहः । द्वितीयेनेर्ष्यादिग्रहः । तदभिमानिनः पूर्वदेहाभिमानिनः । नित्यत्वाज्जीवस्य देहवन्नाशो नास्तीत्यर्थः ॥ * ॥ कस्यचिद्धेतोः प्रारब्धकर्मसमाप्तेः ॥ ३८ ॥ नित्यत्वाद्देहवज्जन्मापि नेत्याह—अभेदेन ब्राह्मणोऽस्मीत्याद्यभिनिवेशेन । इत्यर्थ इति व्याख्येयम् ॥ * ॥ स्वप्नमनोरथ इति—'सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवति' इति, पुंस्त्वमार्षम् ॥ ३९ ॥ स्वप्नं स्वप्नभवं मनोरथं मनोरथभवं चेत्थमात्मानं प्राक्तनमपीत्यन्वयः । आदिना मनोरथग्रहः । इत्यर्थ इति—स्वप्ने मनोरथे च प्राक्तनमप्यप्राक्तनं जानातीति भावः ॥ * ॥ वर्तमानदेहस्थो जीवो यथा प्राक्तनं स्थूलदेहं न स्मरति इत्थमेव वर्तमानस्वप्नस्थो मनोरथस्थो वा जीवः प्राक्तनं स्वप्नं मनोरथं वा न स्मरति । कश्चित्स्वप्ने कदाचित्पूर्वकं स्वप्नं स्मरतीति चेत्, कश्चित्कदाचिज्जातिस्मरश्च पूर्वदेहं स्मरतीति न सर्वथा नियमः । किञ्च—तत्र वर्तमानदेहस्थो जीवः पूर्वसिद्धमेवात्मानमपूर्वमिव पश्यति, अहं षाडवार्षिक इति साप्तवार्षिक इति इतः पूर्वमहं नासमिति प्रतिक्षणमात्मानं जानातीत्यर्थः ॥ ४० ॥ तदभिमानेन देहान्तराभिमानेन असदेव

नित्यदा ह्यंग भूतानि भवंति न भवंति च ॥ कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ ४२ ॥ यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ॥
तथैव सर्वभूतानां वयोऽवस्थादयः कृताः ॥४३॥ सोयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ॥ सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥४४॥

वस्तुन्यात्मनि तदभिमानेनेदं त्रैविध्यमुत्तममध्यमनीचत्वमसदेव भातीत्यन्वयः । एवंभूत आत्मा बाह्याभ्यंतरभेदहेतुश्च भवति । बाह्यविषयानांतरान्सुखादींश्च पश्यतीत्यर्थः । यथा जनो जीवः स्वप्ने बहूनसतो जनान् देहान्कुर्वन्पश्यन् बहुरूपो भाति तद्वत् । यद्वा इदं त्रैविध्यमध्यात्मादिरूपं भाति । असज्जनकृदुष्टपुत्रोत्पादको जनः पिता स्वयं समोऽपि पुत्राभिमानतस्तदरिमित्रादिषु यथा भेदहेतुर्भवति तद्वदिति । अन्यत्समानम् ॥ ४१ ॥ तदेवं लोकप्रसिद्धौ जन्ममृत्यू निरूप्य सूक्ष्मावपृष्टावपि तौ वैराग्याय निरूपयति । नित्यदा प्रतिक्षणं भूतानि शरीराणि उत्पद्यंते नश्यंति च । कालस्यातिसूक्ष्मत्वात्तत्कृतं भवनमभवनं वाऽविवेकिभिर्न लक्ष्यते ॥ ४२ ॥ सतोर्जन्ममरणयोर्ज्ञाने कारणमेतद्भवेत् । सत्त्वमेव तयोः कुत इत्याशंक्यानुमानेन साधयति । यथेति । अर्चिषां परिणामादिभिः स्रोतसां गत्यादिभिः फलानां रूपादिभिर्यथाऽवस्थाविशेषाः कृताः कालेनेति पूर्वस्यानुषंगः । आदिशब्देन तेजोबलकामकौशलादीनामुपादानम् । विमतं प्रतिक्षणोत्पत्तिविनाशवत् अवस्थाभेदवत्त्वाद्दीपज्वालादिवदित्यनुमानम् ॥ ४३ ॥ कथं तर्हि प्रत्यभिज्ञा तद्वदेव सादृश्यावलंबिनीत्याह । सोऽयमिति । सादृश्यादर्चिषामेव यथा सोऽयं दीप इति प्रत्यभिज्ञा यथा च स्रोतसां प्रवाहजलानामेव तदिदं जलमिति तथा सोऽयं पुमा

भाति देहधर्मानात्मन्यारोपयतीत्यर्थः । एवंभूतोऽसदुत्तममध्यमनीचत्वभानवानात्मा । इत्यर्थ इति—असद्देहाध्यासेनासद्विषयाननुभवतीत्यर्थः । दृष्टान्तमाह—यथेति । कुर्वन्स्वाप्निकाविद्यया कल्पयन् तद्वज्जागरणेऽपीति । न ह्येकस्य युगपदुत्तमत्वादित्रयभानं संगच्छत इत्यत आह—यद्वेति । तद्वद्देहाभिमानतोऽध्यात्मादित्रैविध्यं प्रतीयत इत्यर्थः । अन्यत् इन्द्रियाय नेत्यादिसमानं पूर्ववत् । अध्यात्मादित्रयभानन्त्वित्थम्—इन्द्रियोपलक्षितलिंगाधारस्य देहस्य कोशपञ्चकसंघातस्य सृष्ट्या कल्पनया त्रैविध्यं भाति । यत्कल्पितसंघातात्मैतदहन्ताध्यासगोचरत्वादध्यात्मं, यत्तन्नियामकं तदधिदैवं, यत्तद्बहिर्विषयतया कल्प्यं तदधिभूतमिति । यथाऽसज्जनकृत् अभद्रात्मकजगतः कल्पको जनः स्वप्नदृक् ज्ञानेन्द्रियायनसंघातकल्पनयैव स्वस्मिन्नेव बहिरन्तर्भिदा हेतुः त्रैविध्यं मनुते ॥ * ॥ उपसंहरति—इन्द्रियायनस्योन्द्रियाश्रयस्य देहस्य सृष्टयैवेदं त्रैविध्यं विश्वतैजसप्राज्ञत्वं वस्तुनि जीवे भाति । त्रैविध्यं कीदृशम्—बहिर्भिदानां जागरे श्रोत्रादीन्द्रियगुणभेदानाम् अन्तर्भिदानां स्वप्नसुषुप्त्योर्मनोबुद्धिगुणभेदानां हेतुरुत्पादकम् । जनो यथाऽसज्जनकृत् अभद्रपुत्रोत्पादकः इन्द्रियमनोबुद्धिगुणभिदानां तिसृणामप्यभद्रत्वात्स कुत एव दृष्टान्तः ।
दीपिका—तदभिमानेन देहान्तराविष्टमनोभिमानेन । एवंभूतो देहाध्यासवान् । पूर्वेर्थे सच्छब्दस्य स्थानपतितत्वं स्वप्न इत्यध्याहारः । त्रैविध्यशब्देनाप्राकृतोत्तमादिग्रहश्चातो—यद्वेति ॥ ४१ ॥ तौ जन्ममृत्यू । अङ्गेति प्रियत्वात्तवापृष्टमपि वदामीति सम्बुद्ध्यभिप्रायः ॥ * ॥ ० ॥ ४२ ॥ सतोर्विद्यमानयोः । एतद्भवनमभवनम् तयोः सूक्ष्मयोर्जन्ममरणयोः । प्रथमेनादिना प्रकाशादिग्रहः, द्वितीयेनागत्यादिग्रहः, तृतीयेन वृद्ध्यादिग्रहः । विमतं देहादि । दृष्टान्तस्थादिना फलादिग्रहः ॥ * ॥ उत्पत्तिविनाशयोरलक्ष्यत्वेऽपि ताववस्थाभिरेवानुमीयेते अनुमानेन यन्नैवं तन्नैवं यथात्मेति व्यतिरेकव्याप्तिः । आदिना तेजोबलकामकौशलानां ग्रहः ॥ ४३ ॥ आक्षिपति—कथमिति । इदन्त्वावच्छिन्नसंस्कारजन्यं ज्ञानं प्रत्यभिज्ञा उत्तरसादृश्यावलम्बिनीति ॥ * ॥ अर्चिषां क्षणमात्र एव सहस्रशः उद्भूयोद्भूय लयं गतानां ज्योतिःकिरणानां पुञ्ज एव क्षणान्तरे सोऽयं दीप इति, स्रोतसां स्रोतोयुक्तजलानां क्षण

मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ॥ म्रियते वाऽमरो भ्रांत्या यथाऽग्निर्दारुसंयुतः ॥ ४५ ॥ निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ॥ वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥ एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ॥ गुणसंगादुपादत्ते क्वचित्कश्चिज्जहाति च ॥ ४७ ॥

निति धीर्गीश्च मृषा नृणां बहूनां शरीरिणां मृषा व्यर्थमायुर्येषामविवेकिनां तेषां भवति ॥ ४४ ॥ ननु कथं देहाध्यासवतः पुंसः कर्मजन्ममरणानि संति नान्यस्येति व्यवस्था नहि घटते । घटस्य पुरुषभेदेन सत्त्वमसत्त्वं चेति न अज्ञस्यापि वस्तुतस्तदभावादित्याह । मा स्वस्य । नैवात्मनः कर्मणा बीजभूतेन । सोऽप्यज्ञोऽपि । पुमान् जायते म्रियते वा । किं त्वयं भ्रांत्या अजन्मापि जायत इवामरोऽपि म्रियत इव । यथा महाभूततेजोरूपोऽग्निराकल्पांतमवस्थितोऽपि दारुयोगवियोगाभ्यां जन्मनाशौ प्राप्नोति तद्वत् ॥ ४५ ॥ सिद्धवत्कृत्योक्ता वयोवस्थाः प्रपंचयति । निषेको जठरे प्रवेशः । गर्भस्तन्मध्ये वृद्धिः । जन्म प्रसिद्धम् । बाल्यं शिशुत्वमापंचमाब्दात् । कौमारमाषोडशाब्द्वर्षात् । ततो यौवनमापंचाशत् । ततो वयोमध्यमाषष्टिवर्षात् । तदुपरि जरा । तदुपरि मृत्युः ॥ ४६ ॥ देहसंबंधाज्जन्ममरणादीनीत्युपपादितमर्थमुपसंहरति । एता इति । हि स्फुटम् । अन्यस्य देहस्य । तनूरवस्थाः । गुणसंगात्प्रकृत्यविवेकात् । कश्चित्परमेश्वरानुग्रहतः क्वचित्कथंचिज्जहाति । अवस्थावतो देहस्य द्रष्टा नासाववस्थावानिति विवेक

स्रात्र एव क्रमशो दूरगतत्वेऽपि क्षणान्तरेऽपि तरंगसाम्यात्तदिदं जलमिति, तथैव कौमारे दृष्टे यौवनेऽपि हस्तबाह्वादिसन्निवेशसाम्यात्सोऽयं पुमानिति धीर्ज्ञानं गीर्वाक्च मृषाऽज्ञानविजृम्भितेत्यर्थः । मृषेत्यावृत्त्या योज्यम् । मृषाऽविवेकव्याप्तमायुर्येषां तेषाम् ॥ ४४ ॥ अत्र पुनराशंकते—नन्विति । इयं व्यवस्था न घटत इत्याह—पुरुषभेदेन सन् घटः एकस्य प्रतीयते एकस्य न प्रतीयत इत्येवंरूपा व्यवस्था दृष्टचराऽस्तीति नेत्याह । तदभावात्कर्ममरणजन्मनामभावात् । मा इत्यस्य नैवेत्यर्थः । स्वस्येत्यस्यात्मन इत्यर्थः । बीजभूतेन देहादिजननादिकारणेन "कर्मणा जायते जीवो म्रियते कर्मणा पुनः" इति स्मृतेः । ननु 'न जायते म्रियते वा कदाचित्' इत्यादिश्रुतिस्मृतिविरोधाज्जीवस्य जन्मादि न संगच्छतेऽतः कथमुक्तं जायत इत्यादीति चेदाह—किन्त्विति । अयमज्ञजीवः । भ्रान्त्या विवेकाभावेन । तद्वदग्निवत्काष्ठसंयोगवियोगाभ्यां यथाऽग्निभावाभावौ तथा देहसंयोगवियोगाभ्यामात्मनोऽपीति भावः ॥*॥ वस्तुतस्तूपाधिसंगेनैव जीवस्य जन्ममृत्यू स्त इत्याह—मेति । स्वस्य कर्मरूपेण बीजेनायं पुमान्मा जायते मा म्रियते किन्त्वयं भ्रान्त्याऽजन्मापि जायतेऽमरोऽपि म्रियतेऽग्रे समानमिति **विश्वनाथः** ॥ ४५ ॥ सिद्धवत्कृत्येह देहस्यासत्त्वात्तदवस्थानां सुतरामसत्त्वमिति वतिनोक्तम् 'एता मनोरथमयीः' इति वक्ष्यमाणत्वात् । वयोयुक्तस्य देहस्यावस्था वयोवस्थाः, मध्यमपदलोपी समासो ध्येयोऽन्यथा 'वयः पक्षिणि बाल्यादौ' इति कोशात्पौनरुक्त्यं स्यात् । शुक्रशोणितैकीभावेन स्थितिर्निषेको गर्भप्रवेश इति यावत् । तन्मध्ये गर्भमध्ये । ततः षोडशाब्दानन्तरं चत्वारिंशद्बदान्तं यौवनं, ततश्चत्वारिंशतः षष्टिपर्यन्तं वयोमध्यं, षष्टितः शतान्तं जरा, ततो मृत्युरिति तनोर्देहस्य नवसंख्याका अवस्थाः दशाः । 'अवस्था तु दशास्थित्योः' इति निरुक्तिः ॥ * ॥ ० ॥ ४६ ॥ उक्तावस्थासंयोगोऽज्ञस्यैव न तु ज्ञस्येत्याह—देहेति । एता निषेकाद्याः । मनोरथमयीरसत्याः । 'जीवे चन्द्रे च वितथे कल्पिते च मनोरथे' इति निरुक्तिः । प्रसंगादन्यपदमत्र देहपरम् । प्रकृत्यविवेकात् सत्त्वपुरुषान्यताख्यातिलक्ष

आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥ ४८ ॥ तरोर्बीजविपाकाभ्यां यो विद्वाञ्जन्मसंयमौ ॥ तरोर्वि लक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ॥ ४९ ॥ प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ॥ तत्त्वेन स्पर्शसंमूढः संसारं प्रतिपद्यते ॥ ५० ॥ सत्त्वसं गाहृषीन्देवान्त्रजसाऽसुरमानुषान् ॥ तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥ नृत्यतो गायतः पश्यन्यथैवानुकरोति तान् ॥ एवं बुद्धि गुणान्पश्यन्ननीहोऽप्यनुकार्यते ॥ ५२ ॥

ज्ञानेन ॥ ४७ ॥ ननु तदानीं मूर्छितत्वेन जन्ममरणवान्देहो न दृश्यते तत्राह । आत्मन इति । पितृदेहस्यौर्ध्वदेहिकं कुर्वताऽप्ययदर्शनात्पुत्रदेहस्य च जातकर्मणि जन्मदर्श नादात्मनः स्वस्य देहस्यापि भवाप्ययावनुमेयौ । एवं च दृश्यत्वे सति भवाप्ययवतां वस्तूनां देहानामभिज्ञो द्रष्टा द्वयलक्षणो भवाप्ययधर्मको न भवति ॥ ४८ ॥ एतदेव दृष्टांतेन स्पष्टयति । तरोरिति । तरुशब्दो नोद्भिज्जमात्रस्योपलक्षणम् । किंतु फलपाकांतस्य व्रीह्यादेरित्यर्थः । यद्वा तरोरेवांत्यः परिणामो विपाकः बीजाज्जन्म उत्पत्तिं विपाकात्फलपाकात्संयमं नाशं च विद्वान् । स द्रष्टा तरुद्रष्टा ततः पृथक् । एवं तनोर्द्रष्टा ततः पृथक् अतस्तत्र वर्तमानोऽपि भवाप्ययाभ्यां न संबध्यते ॥ ४९ ॥ अविवेकिनः संसारं प्रपंचयति प्रकृतेरिति पंचभिः । तत्त्वेन तत्त्वतो विविच्य । तत्त्वदृष्ट्या स्पर्शेषु विषयेषु संमूढ इति वा ॥ ५० ॥ गुणभेदेन त्रिविधं तत्रापि च तत्तारतम्येनैकैकत्र द्विविधं संसारमाह । सत्त्वेति ॥ ५१ ॥ नन्वकर्तुरात्मनः कुतः कर्मभिर्भ्रमणं तत्राह । नृत्यतो गायतो जनान्पश्यंस्ताननुकरोति । तद्गतस्वरतालादिगतिं शृंगारकरुणादिरसं च मन

णविवेकाभावात् । कश्चित् सत्त्वपुरुषान्यताख्यातिलक्षणविवेकवान् । तदेवाह—अवस्थावत इति ॥ * ॥ ० ॥ ४७ ॥ जनिमृती आक्षिपति—नन्विति । तदानीं जनिमृतिसमये जातकर्माणि कुर्वतेत्यन्वयः । मम देहो जनिमृतिमान् मत्पितृपुत्रकृतकरिष्यमाणजातकर्मौर्द्ध्वदैहिककर्मवत्त्वात् मत्पितृपुत्रदेहवत्, इत्येवमनुमेयौ भवाप्ययौ । कश्चिदित्थमनुमिनोति—स्वदेहो मरणधर्मा देहत्वात्पितृदेहवत्, स्वदेहो जन्मवान् देहत्वात्पुत्रदेहवदिति ॥ * ॥ ननु देहस्य निषेकगर्भजन्ममरणानि विनाऽन्यावस्था देहिनो दृश्यन्त एव, न तु निषेकाद्यास्तत्राह—आत्मन इति । अत्र भवशब्दो निषेकगर्भयोरप्युपलक्षको ज्ञेयः ॥ ४८ ॥ एतदेव भवाप्ययद्रष्टुर्दृश्याभिन्नत्व मेव । उद्भिद्य भूमिं जायते यत्तदुद्भिज्जम् । फलपाकेनान्तो नाशो यस्य तस्य । आदिनौषधिमात्रग्रहः 'ओषध्यः फलपाकान्ताः' इत्यमरोक्तेः । उपलक्षितस्यानन्त्येन ज्ञातुमशक्यत्वादाह—यद्वेति । तरोरेव तरुत्वावच्छिन्नस्यै वेत्यर्थः । तरोर्द्रष्टा तरोर्विलक्षणो यथा तथा तनोर्द्रष्टापि तनोः पृथगेवेत्यर्थः ॥ * ॥ पूर्वार्थे लक्षणातो—यद्वेति ॥ ४९ ॥ फलितमाह—प्रकृतेरिति । तत्त्वतो यथावत् अविविच्येत्येव सिद्धेस्तत्त्ववत इत्यनेन सम्बन्धोऽ धिक क्रियत आह—तत्त्वदृष्ट्या सत्यत्वबुद्ध्या । संमूढः संसक्तः ॥ * ॥ अविविच्य पृथक्त्वेनाज्ञात्वा ॥ ५० ॥ तत्रापि गुणभेदेऽपि । तत्तारतम्येन तत्तद्गुणन्यूनाधिक्येन । एकैकत्र गुणे सत्त्वसंगात्सात्त्विककर्माध्यासात् । रजसा राजसकर्माध्यासेन । एवमग्रेऽपि । कारणेन कार्यग्रहस्तु सूत्रशाटिकान्यायेन ज्ञेयः । कर्मभिरपार्थैः स्वस्मिन्नध्यस्तकर्मभिः ॥ * ॥ **दीपिका**—तत्रापि त्रैविध्येऽपि । तत्तारतम्येन गुणानां न्यूनाधिकत्वेन । द्विविधमृषिदे वादियोन्यात्मकम् ॥ ५१ ॥ अत्राशंकते—नन्विति । तद्गता नृत्यद्गायद्गता या स्वराणां निषादादीनां तालानां ध्रुवमण्ठप्रतिमण्ठनिशारुकादुरासैकतादीनां गतिः स्वरूपं ताम् । आदिना शुद्धसूठादितालभेदग्रहः । द्विती

यथांभसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५३ ॥ यथा मनोरथधियो विषयानुभवो मृषा ॥ स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ॥ ५४ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ५५ ॥ तस्मादुद्धव मा भुंक्ष्व विषयानसदिंद्रियैः ॥ आत्माऽग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमम् ॥ ५६ ॥ क्षिप्तोऽवमानितोऽसाद्भिः प्रलब्धोऽसूयितोऽथ वा ॥ ताडितः सन्निबद्धो वा वृत्त्या वा परिहापितः ॥ ५७ ॥

स्यनुवर्तयतीत्यर्थः । एवम् अनुकार्यते गुणैर्बलादित्यर्थः । अनेन दृष्टांतेन दृश्यधर्मो द्रष्टरि स्फुरतीति दर्शितम्॥५२॥उपाधिधर्माश्चोपहितेऽवभासंत इत्यत्र दृष्टांतमाह । यथांभसेति । तटस्थास्तरवो धावंत इव दृश्यंते जले प्रतिबिंबिता वा चंचला इवेति । विषयग्राहकेण मनसा परिकल्पिता एव तेषु लावण्यादयो गुणा न वस्तुतः संत्यतो मनोनिबंधन एव संसार इत्यभिप्रेत्य ग्राहकगुणाग्राह्येऽवभासंत इत्यत्र दृष्टांतमाह । चक्षुषेति॥५३॥ भोगस्यापि मिथ्यात्वे दृष्टांतद्वयमाह । यथेति । यथा एताः प्रसिद्धा मनोरथधियः स्वप्नदृष्टाश्च धियो मृषा एवमात्मनो विषयानुभवः संसारो मृषा ॥५४॥ ननु यदि मृषा तर्हि किं तन्निवृत्तिश्रमेणात आह । अर्थे हीति । अर्थे सत्यत्वे । अस्यात्मनः ॥५५॥ अतो भोगोद्यमो न कर्तव्य इत्याह तस्मादिति ॥५६॥ दुःखप्रतीकारोद्यममपि परित्यज्य परमेश्वरनिष्ठेनैव भाव्यमित्याह क्षिप्त इति द्वाभ्याम्। क्षिप्त आक्षिप्तो नुन्न इति वा ।

यादिनाऽद्भुतादिग्रहः । इत्यर्थ इति—यादृशं नृत्यादि पश्यति तादृशं स्वयमपि करोतीति भावः । अनीहोऽप्यनिच्छन्नपि । इत्यर्थ इति—"कार्यते ह्यवशः कर्म गुणैः स्वाभाविकैर्बलात्" इत्याद्युक्तेः । बुद्धिगुणान् सुखदुःखादीन् 'दुःखशोकादयः सर्वे ज्ञेया बुद्धिगुणाः' इति । अनेन नृत्यत इत्यादिना । यद्वा—एवमात्मा बुद्धिगुणान् कर्तव्यत्वादीन् व्यञ्जकस्यालोकादेर्व्यंग्यघटदण्डाद्याकारत्ववदनीहोऽप्यनुकार्यत इव स्वस्मिन्नध्यस्यति ॥ * ॥ गतिं परिपाटीम् । आदिना ग्राममूर्च्छादिग्रहः । द्वितीयादिना रौद्रवीरादिग्रहः । अनेन नर्तकदृष्टान्तेन । दृश्यधर्मो बुद्धिधर्मो दुःखसुखादिरूपो द्रष्टरि आत्मनि यथा दृश्यानां नर्तकगायकानां धर्माः स्वरतालादयः शृंगारादयश्च द्रष्टृषु सभ्येषु स्फुरन्ति तद्वत् ॥ ५२ ॥ दृष्टान्तान्तरमाह—न केवलं तीरस्थतरूणामेव चाञ्चल्यं पर्वताग्रगतवृक्षादीनामपि चलाम्बुनि चाञ्चल्यं प्रतीयत इत्यत आह—जल इत्यादि । उपाधिरत्र जलमुपहितं वृक्षादि । तेषु विषयेषु । आदिना माधुर्यग्रहः । यतः कल्पिता एव गुणा अतो हेतोः । ग्राहकं चक्षुः । ग्राह्यो भूम्यादिः ॥ * ॥ उपाधेर्बुद्धेर्धर्मा जाग्रदादयो दुःखादयश्चोपहिते उपाध्यनुरक्ते आत्मनि । ग्राहकस्य मनसो धर्मा लावण्यादयो ग्राह्ये विषये कलत्रादौ ॥५३॥ दाशार्हेति सम्बोधयन्नुद्धवस्यात्मज्ञाने योग्यतां द्योतयति स्ववंश्यत्वात् ॥ * ॥ ० ॥ ५४ ॥ पुनराशंकते—नन्विति ॥ * ॥ संसारबंधस्य मिथ्यात्वे तदुत्थं दुःखं न निवर्तत इत्याह—अर्थे उपाधिसंबंधेऽविद्यमानेऽवस्तुभूतेऽपि संसृतिः संसारसंबंधोत्थं दुःखं न निवर्तते, कस्य—भोगबुद्ध्या विषयान्ध्यायतोऽस्य जीवस्य । अवस्तुभूतस्यापि दुःखदत्वे दृष्टान्तः—स्वप्नेऽनर्थागमः सर्पादिदंशः ॥५५॥ यतो मृषाऽतो हेतोः।यस्मात्स्वप्नवन्मृषा विषयास्तदनुभावकानींद्रियाणि च तस्मादित्यर्थः।आत्माग्रहणेन स्वरूपाज्ञानेन रज्जुभुजंगवन्मृषा निर्भातं प्रतीतं वैकल्पिकं नानाविकल्पात्मकं प्रपञ्चं भ्रमरूपमयथाप्रतीतत्वात् पश्य विचारय । उद्धतो धवो वरो यतः स उद्धवस्तस्मात्पुरुषश्रेष्ठत्वात्त्वं समर्थोसि विचार इत्यभिप्रायः । "धवः पुमान्वरे धूर्ते पत्यौ वृक्षांतरेऽपि च" इति मेदिनी ॥*॥ तस्मादुद्धव मा भुंक्ष्वेति स्फुटमेव तमुपलक्ष्यान्यान्प्रत्युपदेशो व्यज्यते । "नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः" इति श्रीभगवन्मनोवृत्तेः ॥*॥ **विश्वनाथस्तु**—यस्माद्भोगबुद्ध्या विषयध्यानमनर्थहेतुस्तस्मात्त्वं तत्त्यजेत्याह—तस्मादिति । विकल्पाद्देहाध्यासादुद्भूतं भ्रममज्ञानं पश्य । कीदृशम्—आत्मनो जीवस्याग्रहणमप्राप्तिस्तत्र निर्भातं विराजमानं तदतिसाधकमित्यर्थः । यद्वा—"आततत्वाच्च मातृत्वादात्मा हि परमो हरिः" इति तन्त्रोक्तेः श्रीहरिविस्मृतिजन्यं देहादिविषयकं विप्रोऽहं क्षत्रियोऽहमित्यादिभ्रमं पश्य, तेन तन्निवर्तकं तत्स्मरणं कुर्विति व्यज्यते ॥ ५६ ॥ अन्यदुपदिशति—दुःखेति । आक्षिप्तो भर्त्सितः । उपसर्गस्य प्रकृत्यर्थानुयायित्वे तु नुन्नः गलहस्तादिना पातितः । असूयितो गुणित्वेऽप्यगुणित्वेन वर्णितः । सन्निरुद्धः कोष्ठादिषु स्थापितः । परि

निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकंपितः ॥ श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ॥ ५८॥ उद्धव उवाच ॥ यथैवमनुबुध्येयं वद नो वदतां वर ॥ सुदुःसहमिमं मन्य आत्मन्यसदतिक्रमम् ॥ ५९ ॥ विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी ॥ ऋते त्वद्धर्मनिरतान्छांतांस्ते चरणालयान् ॥ ६० ॥ इति श्रीमद्भा० म० एकादशस्कंधे भगवदुद्धवसंवादे सांख्यतत्त्वनिरूपणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ बादरायणिरुवाच ॥ स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ॥ सभाजयन्भृत्यवचो मुकुंदस्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥

प्रलब्ध उपहसितः॥५७॥निष्ठितो निष्ठीवनविषयीकृतः । मूत्रितो मूत्रेणार्द्रीकृतः । प्रकंपितः परमेश्वरनिष्ठातः प्रच्यावितोऽपि । कृच्छ्रगतः कृच्छ्रं प्राप्तोपि ॥५८॥एवं त्वदुक्तं यथा अनुबुध्येयं तथा नोऽस्मान्सर्वान्प्रति वद ॥ ५९ ॥ त्वद्धर्मनिरतान् ऋते विदुषामप्यसद्भिः कृतमतिक्रममपराधं सुदुःसहं मन्य इत्यन्वयः । प्रकृतिः स्वभावः ॥ ६० ॥ निरस्य सर्वसंदेहमेकीकृत्य सुदर्शनम् ॥ प्रकाशितरहस्यं तं भजस्व गुरुमीश्वरम् ॥ १ ॥ इति श्रीमद्भागवत एकादशस्कन्धे श्री० टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे तिरस्कारसहनोपाय ईर्यते। भिक्षुगीतप्रकारेण मनसः संयमो धिया ॥ १ ॥ दुर्जनोपद्रवो नूनं दुःसहो हि महीयसाम् ॥ अतश्चतुर्भिरध्यायैः सहनोपायवर्णनम् ॥ २॥ तत्र तावदस्मिन्नध्याये भिक्षुगीतया मनोविजय उत्तरस्मिन् प्रकृतिपुरुषविवेकस्तदुत्तरस्मिन्गुणवृत्तिविजयस्ततः परस्मिन्नैलगीतया विषयसंगत्यागेन सत्संग इति क्रमेणोपाया

हापितस्त्याजितः ॥ * ॥ विषयभोगरहितः कीदृशस्तिष्ठेयमित्यपेक्षायामाह–क्षिप्त आक्षिप्तो वाचा तिरस्कृतो बहिर्निःसारितो वा । अवमानितः प्रत्युत्थानाद्यभावेनानादृतः । प्रलब्ध इति तैः । असूयितः दोषारोपविषयी कृतः । वृत्त्या जीविकया रहितीकृतः ॥ ५७ ॥ निष्ठित इति उदित्वात्क्त्वे इडभावात् क्ते नेट् " लोपो व्योर्वलि " इति वलोपे ' ष्ठिवु–निरसने ' धातो रूपम् । श्रेयस्कामो मोक्षमार्गेऽवस्थितमतिः सन् धैर्यमवलम्ब्या त्मना देहादिविविक्तात्मज्ञानेनात्मानमुद्धरेत् हरिं स्मरेत् " भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत् " इति कपिलोक्तेः ॥ * ॥ ० ॥ ५८ ॥ सर्वानिति बहुत्वेन व्याख्यानं सर्वलोकाभिप्रायम् । इत्यन्वयोऽ ग्रिमेणेत्यर्थः ॥ * ॥ यथाऽनुबुद्ध्येय तत्तत्सहने यथा विवेकं प्राप्नुयामेवं वद न इत्येकत्वे बहुवचनम् " अस्मदो द्वयोश्च " इति सूत्रात् । पूर्वं हि ' विविक्त उपसंगम्य ' इत्यादिना निर्जन एव संवादोऽय.मिति व्यज्य तेऽतोऽत्रापि च ' अनुबुद्ध्येयम् ' इत्येकवचनान्त एव लिङ्प्रयोग इति ॥ ५९ ॥ विदुषां विविधतर्ककुशलानां स्वभावोऽहंममेत्यभिमानलक्षणः । बलीयसी दुर्निवार्या ' प्रकृतिं यान्ति भूतानि ' इत्याद्युक्तेः ( ६० ) सुष्ठु दृश्यते ज्ञायते परमात्मतत्त्वमनेनेति सुदर्शनं शास्त्रसमूहम् एकीकृत्य परस्परविरोधपरिहारेण प्रकाश्य प्रकाशितं रहस्यमात्मतत्त्वं येन तं परमानन्दमाधवम् ( १ ) ॥ * ॥ ऋते त्वद्धर्मनिरतानिति–ये त्वच्छ्रवणकीर्तनादितत्प रास्तेष्वस्माकं न विस्मयः, अतस्ते तु भवता नाऽत्रोदाहार्याः किन्त्वन्य एवेति भावः ॥ * ॥ **विश्वनाथस्तु**–विदुषामसदतिक्रमसहनोपायं जानतामपि प्रकृतिरमर्षात्मकः स्वभावः त्वद्धर्मनिरतांस्त्वद्भक्तान्विनेति तेषां त्वत्सा धर्म्यप्राप्त्या प्रकृतिरकोपनैवेत्याह–शान्तान्, तत्र हेतुस्त्वच्चरणनिवासान् ॥ ६० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥ संयमो निरोधः ( १ ) । यतो दुःसहोऽतो हेतोः । चतुर्भिस्त्रयोविंशात्षड्विंशान्तैः ( २ ) । तत्र चतुर्षु मध्येऽस्मिंस्त्रयोविंशे । तावत्कात्स्न्येनादौ वा । उत्तरस्मिंश्चतुर्विंशे । तदुत्तरस्मिन्पञ्चविंशे । ततः पञ्चविंशात्परस्मिन्षड्विंशे । बादरं बदरीवृक्षसमूहं तदुपलक्षितं प्राक्

श्रीभगवानुवाच ॥ बार्हस्पत्य स वै नात्र साधुर्वै दुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥ न तथा तप्यते विद्धः पुमान्बाणैः सुमर्मगैः ॥ यथा तुदंति मर्मस्था ह्यसतां परुषेषवः ॥ ३ ॥ कथयंति महत्पुण्यमितिहासमिहोद्धव ॥ तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥ केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः ॥ स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥ ५ ॥ अवंतिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ॥ वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥

भगवता वर्ण्यते । आशंसितः प्रार्थितो भृत्यस्य वचः सत्कुर्वंस्तं भृत्यं प्रति आबभाषे ॥ १ ॥ तत्र तावदंगीकारस्तत्तद्वचः संपूजयति द्वाभ्याम् । हे बार्हस्पत्य बृहस्पतेः शिष्य । अत्र लोके स साधुर्नास्ति यो दुर्जनोक्तैर्भिन्नं क्षुभितं मनः शमयितुमीश्वरः स्यात् ॥ २ ॥ कुत इत्यत आह । नेति । यथा मर्मस्था मर्मस्वेव नित्यं स्थिताः परुषोक्तिरूपा इषवस्तुदंति व्यथयंति तथा इतरे बाणा न तुदंति । अतस्तैस्तथा न तप्यत इत्यर्थः ॥ ३ ॥ तथापि मया वक्ष्यमाणैरुपायैः सर्वं सोढुं शक्यमित्यभिप्रायेणेतिहासं प्रस्तौति । महद्यथा भवति तथा पुण्यमितिहासं गाथां कथयंति ॥ ४ ॥ ५ ॥ स भिक्षुः पूर्वं धनाढ्यः कृच्छ्रार्जितस्य धनस्य नाशेन संतप्यमानो निर्विण्णः सन्प्रव्रज्य भिक्षार्थमटन् दुर्जनैरुपद्रुतः प्रस्तुतोपयोगिनीं गाथामगायतेति वक्तुं तस्य पूर्वचरितमाह अवंतिष्वित्यादिना । अवंतिषु मालवेषु । वार्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य । कदर्यस्तु स्मृतावुक्तः ।

तजनसञ्चारवार्जितमयनं तपश्चर्यास्थानं यस्य स बादरायणो व्यासः " तस्मिन्स्वे आश्रमे व्यासो बदरीखण्डमण्डिते " इत्युक्तेः, तदपत्यत्वात्त्रिकालज्ञो बादरायणिरित्युक्तवानित्यर्थः । यो भगवानुद्धवेनैवमसदतिक्रमसहनमतीव दुष्करमित्येव प्रार्थितः स इत्यर्थः । दशार्हेत्यत्र ह्रस्वत्वमार्षम् । छन्दस्तु–' शेषं गाथा ' इत्युक्तत्वाद्गाथा नाम । तं भृत्यम् । तत्पदेन भृत्यबोधस्तु–" दशैते राजमातंगास्तस्यैवामी तुरंगमाः " इतिवद्बोध्यः । श्रवणीयं श्रोतुमर्हं वीर्थं यशो यस्य स तथा ॥ * ॥ आशंसितः प्रीत्या प्रार्थितः ॥ १ ॥ तत्र प्रश्ने । अंगीकारतोंगीकारेण । तद्वच उद्धववचः । स साधुर्न दुर्लभ इति भावः ॥ * ॥ हे बार्हस्पत्य बृहस्पतेः शिष्येति सोपपत्तिकं त्वद्वाक्यमहममानयमेव किन्तु पारमार्थिकोऽयं मार्गस्त्वद्गुरुणा तेनाप्यगम्योत्तम एव त्वया शिक्षयितव्य इति भावः ॥ २ ॥ तदभावे हेतुं पृच्छति–कुत इति । यतः पुरुषोक्तिवद्ध तुदन्ति अतो हेतोः । तैः प्रसिद्धैर्बाणैः । इत्यर्थ इति–परुषोक्तिवेधवादिषवो न तापका इति भावः ॥ * ॥ नित्यं स्थिताः प्रसिद्धबाणास्तु निःसरन्ति तत्क्षणमपि कालान्तरे शाम्यन्ति अत इतरे न तुदन्ति अतस्तथा तोदकर्तृत्वाभावात् ॥ ३ ॥ यद्यपि परुषोक्तिसहनमशक्यं तथापीति । तम् इतिहासम् ॥ * ॥ यद्यप्येवं सर्वत्र दृष्टं तदपि परुषेषु वैयर्थ्यकरमुपाख्यानं शृण्वित्याह–कथयन्तीति युग्मकम् । विपाकं फलम् ॥ ४ ॥ केनचिदनिर्दिष्टनाम्ना । विपाकं फलनिष्पत्तिम् ॥ * ॥ ० ॥ ५ ॥ मालवेषु उज्जयिनीप्रान्तदेशेषु । स्मृत्यर्थस्तु–आत्मपीडनं सत्यपि धने भोगाभावः, धर्मकृत्यपीडनं दानाद्यकरणम्, पुत्रादिपीडनं तदीप्सितवस्त्रभूषाद्यसमर्पणम् ।

ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः॥शून्यावसथ आत्मापि काले कामैरनर्चितः॥७॥दुःशीलस्य कदर्यस्य द्रुह्यंते पुत्रबांधवाः॥दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियम् ॥८॥ तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ॥ धर्मकामविहीनस्य चुक्रुधुः पंचभागिनः ॥ ९ ॥ तदवध्यानविस्रस्तपुण्यस्कंधस्य भूरिद ॥ अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥ १० ॥ ज्ञातयो जगृहुः किंचित्किंचिद्दस्यव उद्धव ॥ दैवतः कालतः किंचिद्ब्रह्मबंधो नृपार्थिवात् ॥ ११ ॥ स एवं द्रविणे नष्टे धर्मकामविवर्जितः ॥ उपेक्षितश्च स्वजनैश्चिंतामाप दुरत्ययाम् ॥ १२ ॥ तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः॥खिद्यतो बाष्पकंठस्य निर्वेदः सुमहानभूत्॥१३॥स चाहेदमहो कष्टं वृथात्मा मेऽनुतापितः॥न धर्माय न कामाय यस्यार्थायास ईदृशः॥१४॥

“आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् ॥ देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः ॥ ” इति ॥ ६ ॥ तस्य ये ज्ञातयो बांधवा अतिथयोऽध्वनीनाश्च तेन वाङ्मात्रेणापि नार्चिता इत्यर्थः । शून्यावसथे धर्मकर्महीने गृहे देहे वा ॥ ७ ॥ ८ ॥ यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य । पंचभागिनः पंचयज्ञदेवताः तस्मै चुक्रुधुः ॥ ९ ॥ तेषामवध्यानमनादरस्तेन विस्रस्तो विशीर्णः पुण्यस्य स्कंधोऽर्थलाभमात्रहेतुरंशो यस्य । बह्वायासैः कृष्यादिभिः केवलं श्रमो यस्मिन्सः ॥ १० ॥ कुतो निधनमगच्छत्तदाह । ज्ञातय इति । ज्ञातयो दायादाः । दस्यवश्चौराः । दैवतो गृहदाहादिना । कालतो निखातधान्यादि । नृणां पार्थिवानां च द्वंद्वैक्यम् । तस्मात् ॥ ११ ॥ ॥ १२ ॥ नष्टरायः नष्टो रा अर्थो यस्य तस्य । तपस्विनः संतप्तस्य ॥ १३ ॥ मे मया । आत्मा देहः । वृथा वृथैवानुतापितः । आत्माऽनुतापं प्रपंचयति न धर्मायेत्या

एवं देवाद्यर्चनाभावस्तेषां पीडनम् ॥ * ॥ दीपिका–प्रव्रज्य सन्न्यस्य । प्रस्तुतोपयोगिनीं सहनोपयुक्ताम् । तस्य कदर्यस्य ॥ ६ ॥ तस्य विप्रस्य । अपिना कुतोऽन्नादिनेति सूच्यते । इत्यर्थ इति–तेनेत्यध्याहृत्य योज्यमिति भावः । धर्मेण त्यक्तं देहादिशून्यमेव “ भवेदावसथो देहे गेहे ग्रामे च नीवृति ” इति निरुक्तेः । गृहस्थकर्तृत्वाभावादाह–देहे वेति । काले वसन्ताद्युत्सवसमये । कामैः काम्यैरशनादिभिः । अपिनाऽन्यार्चनाभाव एवोक्तः ॥ * ॥ तस्येति कर्तरि षष्ठी, तेनेत्यर्थः ॥ ७ ॥ दुःशीलस्य सदा वक्रदृष्ट्यादिमतः । पुत्रादयो विषण्णाः इप्सितानवाप्त्यतीवदुःखिताः । प्रियं नाचरन्नपि तु द्रुह्यन्ते तन्नाशमभीप्सव आसन्नित्यर्थः ॥ * ॥ दुःशीलस्य दुःशीलाय । द्रुह्यन्ते कदा मरिष्यतीति द्रोहं कुर्वन्ति ॥ ८ ॥ दानभोगाद्यभावेनोभयतो भ्रष्टस्य तस्य तदेवाह–धर्मकामाभ्यां विहीनस्य । पञ्चयज्ञदेवताः देवर्षिपितृभूतनराख्याः ॥ * ॥ ० ॥ ९ ॥ तेषां पञ्चयज्ञदेवानाम् । ‘ स्कन्धोंशे समूहेऽपि ’ इति । यस्मिन्नर्थे ॥ * ॥ द्रव्यलाभमात्रहेतोरंशस्यापगमात् सद्वासनाहेतोर्भगवदर्पितत्वलक्षणविशेषस्याविस्रंस इति बोधयति–पुण्यस्कन्धस्येति ॥ १० ॥ दस्यवस्तस्कराः । वृद्ध्यर्थं दत्तमधमर्णमरणादिना नृभ्यो हेतुभ्यो नष्टं पुत्रादिकृतव्यभिचारादिना राज्ञो हेतोः किञ्चिद्दण्डेन किञ्चिन्नाशेन गतमित्यर्थः ॥ * ॥ नरश्च पार्थिवाश्च तेषां समाहारो नृपार्थिवं तस्मात् ॥ ११ ॥ स विप्रः । एवमुक्तरीत्या । उपेक्षितस्त्यक्तप्रायः । दुरत्ययां महतीम् ॥ * ॥ उपेक्षितस्त्यक्तः ॥ १२ ॥ तस्य दीर्घं ध्यायतः शोचमानस्य । एवं वक्ष्यमाणप्रकारेण निर्वेदोऽभूदित्यन्वयः । बाष्पमश्रु कण्ठे रुदतो नेत्राभ्यां पतत्कण्ठदेशं प्राप्तं यस्य तस्य अतीव रोदनं कुर्वतः, प्रायः कण्ठदेशमश्रूण्यायान्तीति । ‘बाष्पं नेत्रजलोष्मणोः’ इति कोशः ॥ * ॥ कदर्यस्यापि तस्यापराधः स्थगितः तद्भोगान्ते प्राचीनः संस्कारविशेषोऽयमुद्बुद्ध इत्याह–तस्येति । निर्वेदोऽर्थेऽलम्बुद्ध्या स्वावज्ञानम् ॥ १३ ॥ निर्वेदप्रकारमाह–स चेति । इदं वक्ष्यमाणम् । ईदृशो व्यर्थः । अर्थायासो धनसम्पादनपरिश्रमः ॥ * ॥ ईदृशः महानपि लोभातिशयादकिञ्चित्करः ॥ १४ ॥

प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ॥ इह चात्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥ यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ॥ लोभः स्वल्पोऽपि तान्हंति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥ अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ॥ नाशोपभोग आयासस्त्रासश्चिंता भ्रमो नृणाम् ॥ १७ ॥ स्तेयं हिंसाऽनृतं दंभः कामः क्रोधः स्मयो मदः ॥ भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥ एते पंचदशानर्था ह्यर्थमूला मता नृणाम् ॥ तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ १९ ॥ भिद्यंते भ्रातरो दाराः पितरः सुहृदस्तथा ॥ एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः ॥ २० ॥ अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः ॥ त्यजंत्याशु स्पृधो घ्नंति सहसोत्सृज्य सौहृदम् ॥ २१ ॥ लब्ध्वा जन्माऽमरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम् ॥ तदनादृत्य ये स्वार्थं घ्नंति यांत्यशुभां गतिम् ॥ २२ ॥

दिना । यस्य ईदृशोऽर्थायासस्तेन मया ॥ १४ ॥ नरकाय सत्यप्यर्थे धर्माननुष्ठानात् ॥ १५ ॥ श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥ सिद्धेऽप्यर्थे तस्य उत्कर्षे संवर्धने । नाशोपभोगयोर्द्वंद्वैक्यम् । नाशे उपभोगे चेत्यर्थः । साधनोत्कर्षयोरायासस्ततस्त्रासश्चिंता च नाशे भ्रम इति ॥ १७ ॥ किंच । अर्थप्राप्त्यर्थाः स्तेयादयः षडनर्थाः प्राप्तेऽर्थे स्मयादयो व्यसनैः सह नव । व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि ॥ १८ ॥ १९ ॥ भेदवैरस्पर्धाः प्रपंचयति द्वाभ्याम् । भिद्यंते स्नेहं त्यजंति कथंभूताः एकास्निग्धाः एके एकप्राणास्ते च ते आस्निग्धा अतिप्रियाश्चेत्यर्थः । कुतः । काकिणिना । पुंस्त्वमार्षम् । विंशतिवराटिकाः काकिणी तया ॥ २० ॥ संरब्धाः क्षुभिताः । स्पृधः स्पर्धमानाः ॥ २१ ॥ इह तावदर्थनिष्ठानामेतेऽनर्थाः परलोकेऽप्यनर्था एवैतेषामप्याह लब्ध्वेति त्रिभिः । मानुष्यं जन्म तत्रापि द्विजाग्र्यतां ब्राह्मण्यम् । स्वार्थं घ्नंति आत्म

इहात्मनो देहस्य मनसो वा व्यर्थपरिश्रमाय दानभोगानिष्पत्तेः नरकाय 'वित्तग्रहं पापपुरुषं धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रैरिव परिवयन्ति' इत्युक्तेः ॥ * ॥ मृतस्य नरकाय धनव्ययभीत्या नित्यनैमित्तिकाननुष्ठानात् ॥ १५ ॥ श्लाघ्याः पाण्डित्यतपस्वित्यादयः । ईप्सितं रम्यम् ॥ * ॥ ० ॥ १६ ॥ इत्यर्थ इति--समाहारद्वन्द्वेन कार्थ इति । तत आयासात् । त्रास उद्वेगः । भ्रमो बुद्धिभ्रंशः ॥ * ॥ ० ॥ १७ ॥ अन्यदर्थस्य वैक्लव्यमाह—किंचेति । दम्भः परवञ्चनार्थं मिथ्यानुष्ठानम् । स्मयो गर्वः । सौभाग्यरूपतारुण्यगुणसर्वोत्तमाश्रयैः । "इष्टलाभादिना चान्यहेलनं गर्व इष्यते" इति । मदः परतिरस्कृतिः, स्वस्मिन्नाधिक्यबुद्धिर्वा । भेदो मिथोन्तःकल्युत्पादनम् । वैरं द्वेषः । संस्पर्धा परशुभासहिष्णुता ॥ * ॥ ० ॥ १८ ॥ एते स्तेयादयः । यतोऽर्थमूलास्तस्माद्धेतोः ॥ * ॥ तस्मादर्थस्यानर्थमूलत्वात् । संज्ञामात्रेणार्थाख्यं वस्तुतस्त्वनर्थहेतुत्वादनर्थमेव । यथा—स्नुहीवृक्षस्य संज्ञामात्रेण वृक्षत्वं वस्तुतोऽवृक्षत्वमेव वृक्षधर्माणां गृहाच्छादककाष्ठादिप्रदानादीनामसत्त्वात् ॥१९॥ भेदे हेतुं पृच्छति—कुत इति ॥*॥ सद्यस्तत्क्षणमेव ॥ २० ॥ अल्पीयसाऽत्यल्पेन काकणिकादिरूपेण ॥ * ॥ ० ॥ २१ ॥ पारलौकिकानर्थमाह—तत् । तत्रापि मनुष्यत्वेऽपि । तद्ब्राह्मण्यम् । तत्फलभक्तिज्ञानासम्पादनेनानादृत्य स्वार्थं परिपूर्णानन्दात्मकं मोक्षं नित्यसिद्धमावरणाबाधेन घ्नन्ति तेऽशुभां नारकीम् । तदुक्तं महाभारते शुकानुशासने—" सम्पतन्मोहजालानि कदाचिदिह मानुषे । ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ॥ ब्राह्मणस्य तु देहोऽयं न कामार्थाय जायते । इह

स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ॥ द्रविणे कोनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥ देवर्षिपितृभूतानि ज्ञातीन्बंधूंश्च भागिनः ॥ असं विभज्य चात्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥ व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो बलम् ॥ कुशला येन सिध्यंति जरठः किं नु साधये ॥ २५ ॥ कस्मात्संक्लिश्यते विद्वान्व्यर्थयाऽर्थेहयाऽसकृत् ॥ कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥ २६ ॥ किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ॥ मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥ २७ ॥ नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ॥ येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥ २८ ॥

हितं न कुर्वंति ये ते यांति ॥ २२ ॥ अमरप्रार्थ्यतां दर्शयन्नाह । स्वर्गेति । लोकं देहम् । अनुषज्जेत आसक्तिं कुर्यात् ॥ २३ ॥ ऋषयो मनुष्ययज्ञब्रह्मयज्ञयोर्देवताः । देव पितृभूतानि इतरेषु । ज्ञातयः सगोत्राः । बंधवो विवाहादिना संबद्धास्तान् अन्यांश्च । भागिनो भागार्हान् । आत्मानं चासंविभज्यान्नादिभिरसंतर्प्य यक्षवित्तः यक्षस्य वित्तमिव रक्षणीयमात्रं वित्तं यस्य सः ॥ २४ ॥ एवं विमृश्यानुतप्यमान आह । व्यर्थयाऽर्थेहया प्रमत्तस्य मम वित्तादि व्यर्थं गतमिति शेषः । येन वित्तादिना कुशला विवेकिनः सिध्यंति संस्कारान्मुच्यंते । जरठो वृद्धः ॥ २५ ॥ अन्यमपि स्वसदृशं शोचति । कस्मादेवमनर्थं विद्वानपि संक्लिश्यत इति । कारणं संभावयति । कस्यचिदिति ॥ २६ ॥ ननु नायं मोहितः क्लिश्यति किंतु धनादिभिर्भोगादिविधित्सयाऽत आह । किं धनैरिति । उत पुनरपि ॥ २७ ॥ इदानीं संपन्नविवेकः संहृष्यन्नाह नूनमिति त्रिभिः । येन

क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् ॥ ब्राह्मण्यं बहुभिरवाप्यते तपोभिस्तल्लब्ध्वा न रतिपरेण हेलितव्यम् । स्वाध्याये तपसि दमेन नित्ययुक्तः क्षेमार्थी कुशलपरः सदा यतस्व ॥" ॥*॥ आत्महितं श्रीकृष्णभक्तिम् 'ततो वक्ष्यामि ते हितम्' इति भक्तावेव हितत्वोक्तेः । अशुभां गतिं निरयम् "य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् । न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः" इति श्रीमैत्रेयोक्तेः ॥ २२ ॥ स्वर्गापवर्गयोर्द्वारम "मानुष्यं यः समासाद्य स्वर्गमोक्षैकसाधनम् । द्वयोर्न साधयत्येकं तेनात्मा वञ्चितो ध्रुवम् ॥" इति गारुडोक्तेः । धामनि गृहे । 'धाम स्याद्गृहतेजसोः' इति धरणिः । द्रविणे वित्ते । "द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे" इति मेदिनी । कः कुत्सितोऽनुषज्जेत नान्य इत्यर्थः । 'को ब्रह्मा कश्च निन्दितः' इति सौभरिः ॥ * ॥ धामनि आश्रये । कारण इति यावत् ॥ २३ ॥ इतरेषु देवपितृभूतयज्ञेषु ॥ * ॥ यक्षवद्गुप्तमदेयमभोग्यं च वित्तं यस्य सः ॥ २४ ॥ व्यर्थया दानभोगशून्यया । आदिना वयोबलग्रहः । 'पाण्डौ वृद्धे च कठिने जरठः' इति कोशात् ॥ * ॥ येन वित्तादिना भगवदाराधनविनि युक्तीकृतेन विवेकिनः सिद्ध्यन्ति कृतकृत्या भवन्तीत्यर्थः ॥ २५ ॥ स्वसदृशं कृपणम् । एवमनर्थं महानर्थकरं दानभोगरहितं धनं विद्वानपि जानन्नपि । असकृत् पुनःपुनः । आत्मनेपदमुपसर्गवशात्, संक्लिश्यतीत्यर्थः । कस्यचिदिति—इदमित्थतया ज्ञातुं वक्तुं वाशक्यस्येशस्येत्यर्थः । लोको जनः । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥" इति गीतोक्तेः ॥ * ॥ कस्मादिति स्वगतं पृच्छति । तत्र स्वयमेवोत्तरयति—कस्यचिदिति ॥ २६ ॥ मोहितत्वमाक्षिपति—नन्विति । प्रथमादिना हृयादिग्रहः । द्वितीयादिना दानादिग्रहः । अत इति चेदाह—कामैर्भोगैः । मृत्युना कालेन । न हि मृत्युग्रस्तस्य धनादयो मोचका अपि तु बन्धका एवेति भावः ॥ * ॥ किं, न किमपीत्यर्थः ॥ २७ ॥ स्वभाग्यमभिनन्दति—इदानीमिति । भगवत्प्रीतत्वे हेतुमाह—येनेति । प्लवरूपस्तारकरूरः । "न ह्यंगाजातनिर्वेदो देहबन्धं जिहासति" इत्युक्तेः ॥ * ॥ तस्य संस्कारस्य भगवत्सम्बन्धित्वं व्यञ्जयति—सम्पन्नविवेकः भगवत्सम्बन्धिसंस्कारेण संसिद्धप्रेमा सन्नाह—सर्वदेवमयः यज्ञादौ तन्मयत्वेन तदुपासनस्फूर्तेः । एतामर्थानर्थेक्षाम्, येन तुष्टेनाहं प्रापितः, येन

सोऽहं कालावशेषेण शोषयिष्येंगमात्मनः ॥ अप्रमत्तोऽखिलस्वार्थे यदि स्यात्सिद्ध आत्मनि ॥२९॥ तत्र मामनुमोदेरन्देवास्त्रिभुवनेश्वराः॥मुहूर्तेन ब्रह्म लोकं खट्वांगः समसाधयत् ॥३०॥ श्रीभगवानुवाच ॥ इत्यभिप्रेत्य मनसा ह्यावंत्यो द्विजसत्तमः ॥ उन्मुच्य हृदयग्रंथीन्छांतो भिक्षुरभून्मुनिः॥३१॥ स चचार महीमेतां संयतात्मेंद्रियानिलः ॥ भिक्षार्थं नगरग्रामानसंगोऽलक्षितोऽविशत् ॥ ३२ ॥ तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वा पर्यभ वन्भद्र बह्वीभिः परिभूतिभिः॥३३॥केचित्त्रिवेणुं जगृहुरेके पात्रं कमंडलुम् ॥ पीठं चैकेऽक्षसूत्रं च कंथां चीराणि केचन ॥३४॥ प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः॥ अन्नं च भैक्ष्यसंपन्नं भुंजानस्य सरित्तटे॥३५॥मूत्रयंति च पापिष्ठाः ष्ठीवंत्यस्य च मूर्धनि ॥ यतवाचं वाचयंति ताडयंति न वक्ति चेत् ॥३६ ॥ तर्जयंत्यपरे वाग्भिः स्तेनोऽयमितिवादिनः ॥ बध्नंति रज्ज्वा तं केचिद्बध्यतांबध्यतामिति ॥ ३७ ॥ क्षिपंत्येकेऽवजानंत एष धर्मध्वजः शठः ॥ क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ॥ ३८ ॥

प्रीतेनात्मनः प्लवरूपो निर्वेदश्च भवति स हरिर्मे नूनं प्रीत इति ॥ २८ ॥ अहं शोषयिष्ये तपसा यद्वा विद्यया लयं नेष्यामि । यदि स्यात्कालावशेषस्तर्ह्यात्मन्येव सिद्धस्तुष्टः सन् । अखिले स्वार्थे धर्मादिसाधनेऽप्रमत्तः सन् ॥ २९ ॥ अनुमोदेरन्ननुगृह्णंतु । ननु देवैरनुमोदितोऽपि जरठः स्वल्पेन कालेन किं साधयिष्यसि तत्राह । मुहूर्तेनेति ॥ ३० ॥ अभिप्रेत्य निश्चित्य आवंत्योऽवंतिदेशभवः । हृदयग्रंथीनहंकारममकारान् । भिक्षुर्यतिः ॥ ३१ ॥ असंग आसक्तिशून्यः अलक्षितः श्रैष्ठ्यमद्योतयन् ॥ ३२ ॥ प्रवयसं वृद्धम् । अवधूतं मलिनम् । पर्यभवन्नवमेनिरे । हे भद्र । परिभूतिभिस्तिरस्कारैः ॥ ३३ ॥ परिभवानेव दर्शयति केचिदिति सप्तभिः ॥ ३४ ॥ भो भगवन् गृहाणेति दर्शितानि संति प्रदाय पुनश्चाददुः ॥ ३५ ॥ अन्ये मूत्रयंति । मूर्धनि च ष्ठीवंति फूत्कारेण श्लेष्माणं प्रक्षिपंति ॥ ३६ ॥ ३७ ॥ क्षिपंति निंदंति । निंदामेवाह ।

तुष्टेन च हरिणा निर्वेदः संसारतरणप्लवरूपश्चाभूत् ॥ २८ ॥ अंगं देहम् । अंगशोषणेन सिद्धो यदि स्यात्तर्हि ज्वरादिपीडाशोषितांगस्यापि सिद्धिः स्यादिति चेदाह—यद्वेति । विद्यया ज्ञानेन लयं पुनरुत्पत्त्यभावरूपं मोक्षम् ‘ विद्ययाऽमृतमश्नुते ’ इति श्रुतेः । अप्रमत्तः सावधानः । आत्मनि चेतसि ॥ * ॥ यदि स्यात्कालावशेषस्तर्हि तेन कालावशेषेण तं व्याप्याखिलस्वार्थेऽखण्डपुरुषार्थस्वरूपे आत्मनि अप्रमत्तः अवहितान्तःकरणः सन् ततश्च जातसाक्षात्कारः सन् अंगं स्थूलसूक्ष्मात्मकं देहं लयं नेष्यामि । तत्र कालावशेषेणेति तृतीया “ अपवर्गे तृतीया ” इति ॥ २९ ॥ “ तद्देवानामप्रियं यन्मनुष्या विद्युः ” इति श्रुतेर्देवानुग्रहं प्रार्थयते । तत्र मुक्तिपथप्रवृत्तौ । देवानुग्रहेऽप्याक्षिपति—नन्विति । खट्वांगो राजा ॥ * ॥ अनुमोदेरन् विघ्नान्मा कुर्वन्त्वित्यर्थः । ब्रह्मलोकं ब्रह्मात्मकं वैकुण्ठम् ‘ गतवानभयं हरिम् ’ इति द्वितीयोक्तेः ॥ ३० ॥ इति इत्थम् । शान्तः शांतिमापन्नः । मुनिर्मननपरः ॥ * ॥ पूर्वं गर्हितमपि सद्व्यवसायं दृष्ट्वा भगवांस्तमभिनन्दति—द्विजसत्तम इति । शान्तो मन्निष्ठबुद्धिमान् । भिक्षुः सन्न्यासी ॥ ३१ ॥ स विप्रः । संयतेन्द्रियानलः शमदमाद्युपेतः ॥ * ॥ ० ॥ ३२ ॥ तं भिक्षुम् । त्वं तु मत्प्रियत्वाद्विनैव त्यागं भद्रोऽसीति सम्बुद्ध्यर्थः ॥ * ॥ हे भद्रेति—त्वमपि भद्रेच्छयैतादृशो भवेति भावः ॥ ३३ ॥ पीठम् आसनम् । अक्षसूत्रं जपमालाम् । चीराणि जीर्णवस्त्रखण्डानि । तानि त्रिवेण्वादीनि ॥ * ॥ अक्षसूत्रं कमलाक्षमालामिति **संदर्भः** ॥ ३४ ॥ ० ॥ * ॥ ० ॥ ३५ ॥ यतवाचं तूष्णींभूतम् । वाचयन्ति बलाद्वाग्व्यापारं कारयन्ति । तर्जयन्ति तर्जनीं चालयित्वा भर्त्सयंति ॥ * ॥ अस्य भिक्षोः । यतवाचं धृतमौनम् ॥ ३६ ॥ ० ॥ * ॥ ० ॥ ३७ ॥ ० ॥ * ॥ बको यथा मौनेनैव यादांसि भक्षयति तथायमपि जीविकाद्यर्थं दृढ

अहो एष महासारो धृतिमान्गिरिराडिव ॥ मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ॥३९॥ इत्येके विहसंत्येनमेके दुर्वातयंति च ॥ तं बबंधुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥४०॥ एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ॥ भोक्तव्यमात्मनो दिष्टं प्राप्तंप्राप्तमबुध्यत ॥ ४१ ॥ परिभूत इमां गाथामगायत नराधमैः ॥ पातयाद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीम् ॥ ४२ ॥ द्विज उवाच ॥ नायं जनो मे सुखदुःखहेतुर्न देवताऽऽत्मा ग्रहकर्मकालाः ॥ मनः परं कारणमामनंति संसारचक्रं परिवर्तयेद्यत् ॥ ४३ ॥ मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ॥ शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवंति ॥ ४४ ॥

एष धर्मध्वजस्त्रिदंडलिंगोपजीवी शठो लोकवंचकः । तदेवाहुः । क्षीणवित्त इति ॥ ३८ ॥ महासारोऽतिबली ॥ ३९ ॥ दुर्वातयंति तदुपर्यधोवायुं मुंचंति । बबंधुः शृंखलैः । निरुरुधुः कारागृहादिषु । द्विजं शुकसारिकादि यथा बध्नंति पंजरे तद्वत् ॥ ४० ॥ भौतिकं दुर्जनादि कृतम् । दैहिकं ज्वरादिनिमित्तम् । दैविकं शीतोष्णादि प्रभवम् । दिष्टं दैवप्राप्तम् ॥ ४१ ॥ धर्मात्पातयद्भिः परिभूतोऽपि सात्त्विकीं धृतिमास्थाय स्वधर्म एव स्थित इमां वक्ष्यमाणां गाथामगायत । सात्त्विकीं धृतिश्च । "धृत्या यया धारयते मनः प्राणेंद्रियक्रियाः ॥ योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ " इति ॥ ४२ ॥ तामेवाष्टादशश्लोकीं गाथामाह नायमिति । न चात्मा नापि ग्रहादयः । मनःपरं केवलं सुखदुःखयोः कारणं वदंति "मनसा ह्येव पश्यति मनसा शृणोति" इत्यादिश्रुतयः ॥ ४३ ॥ परिवर्तनप्रकारमाह मन इत्यादिना । गुणान् गुणवृत्तीः सृजति । ततश्च तेभ्यो गुणेभ्यः शुक्लानि सात्त्विकानि कृष्णानि तामसानि।लोहितानि राजसानि । सवर्णास्तत्तत्कर्मानुरूपाः सृतयो देवतिर्यङ्नरादिगतयः ॥४४॥

निश्चयः ॥ ३८ ॥ ० ॥ * ॥ ० ॥ ३९ ॥ इति इत्थम् । आदिना मिश्रितरक्तपक्षचटकादिग्रहः ॥ * ॥ ० ॥ ४० ॥ ० ॥ * ॥ प्राप्तंप्राप्तं दुःखं दैवप्राप्तत्वाद्भोक्तव्यमेव न कस्यापि दोष इति ज्ञातवान् ॥ ४१ ॥ धर्मात् स्वधर्मात् । योगेन यमाद्यष्टांगोपेतेन । अव्यभिचारिण्या संयुतया ॥ * ॥ गाथां स्वपरोपदेशमयं वाक्यसमूहम् । सात्त्विकीम् "धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥" इत्युक्तलक्षणाम् ॥ ४२ ॥ तामेव भिक्षुगीतामेव । अयं परितो वर्तमानः । तर्हि देवादयः स्युरिति चेदाह—न देवतेत्यादि । तर्हि किं कारणमिति चेदाह—मन इति । आदिना "यन्मनास मनुते तद्वाचा वदति " इत्यादिश्रुतिग्रहः । स्पष्टार्थत्वान्न व्याख्याता । परिवर्तयेत् भ्रामयति । वर्तमाने लिङार्षः । यत् मनः ॥ * ॥ अहो दुःखमेतावत्कः खलु दत्त इति विमृशन्न तावदयं दुर्जनो दत्त इत्याह—नायमिति । ननु प्रत्यक्षमर्थं किमपलपसि स्वातन्त्र्येणायं जनो न दत्त इति चेत्केषाञ्चित्प्रेरणादत्त इत्युच्यतां, तत्र प्रेरकान्निषेधति—न देवता नाप्यात्मा नापि ग्रहादयः, किंतु मन एव परं कारणमित्यादि तैः । परिवर्तयेत्परिभ्रामयेत् ॥ ४३ ॥ गुणवृत्तीः शान्तघोरमूढलक्षणाः । सात्त्विकानि देवार्चनादीनि । तामसानि अभिचारादीनि । राजसानि नर्तनादीनि ॥ * ॥ परिवर्तनप्रकारमाह—मन एव दोषपूर्णेऽपि कनककामिन्यादिवस्तुनि गुणान्सृजति धनं विना कुतो धर्माः, स्रक्चंदनवनितादिभोगाश्च कुतः सिद्ध्यन्ति, तांश्च विना कुतः सुखमतो धनमुपार्जनीयमिति प्रथमं धनार्जने दोषेऽपि मन एव प्रवर्तयतीत्यर्थः । बलीय इत्येव महानर्थकृद्ध

अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे ॥ मनः स्वलिंगं परिगृह्य कामान्जुषन्निबद्धो गुणसंगतोऽसौ ॥ ४५ ॥ दानं स्वधर्मो नियमो यमश्च श्रुतं च कर्माणि च सद्व्रतानि ॥ सर्वे मनोनिग्रहलक्षणांताः परो हि योगो मनसः समाधिः ॥ ४६ ॥समाहितं यस्य मनः प्रशांतं दानादिभिः किं वद तस्य कृत्यम् ॥ असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः ॥ ४७ ॥

तर्हि मनस एव संसारः स्यान्नात्मन इत्याशंक्याह । अनीह इति । अयमर्थः । अविद्यया योऽध्यासस्तेनेयमात्मनः संसृतिर्न तु स्वतः । यतस्तद्रहितस्येश्वरस्य सा नास्ति । किंतु तद्वतो जीवस्यैवेति । तदेवाह । मनसा समीहमानेन सह नियंतृत्वेन वर्तमानोऽपि परमात्मा अनीहस्तत्क्रियासंगरहितः । यतो हिरण्मयो विद्याशक्तिप्रधानः । यतो मत्सखः मम जीवस्य सखा नियंता । अत उदुच्चैर्विचष्टे । अतिरोहितज्ञानेन केवलं पश्यतीत्यर्थः । असौ पुनरहं जीवः स्वलिंगं स्वस्मिन्नात्मनि लिंगयति द्योतयति संसारमिति तथा तन्मनः परिगृह्यात्मत्वेन स्वीकृत्य मनसो गुणैः कर्मभिः संगतः संबद्धो गुणसंगाद्वा कामान् जुषन्निबद्ध इति ॥ ४५ ॥ अतो मनोनिग्रहे कृते सर्वं कृतं स्यात्तं विना तु सर्वं व्यर्थमित्याह । दानमिति द्वाभ्याम् । स्वधर्मो नित्यनैमित्तिकः । सद्व्रतान्येकादश्युपवासादीनि । अन्यानि च यावंति कर्माणि सकामान्यपि । एते सर्वे उपाया मनोनिग्रहलक्षणोंतो निष्ठा फलं येषां ते तथा । ननु ज्ञानांगत्वं तेषां प्रसिद्धं तत्राह । मनसः समाधिर्निग्रह एव परो योगो ज्ञानम् ॥ ४६ ॥ अतो यस्य

नपुत्रकलत्रादिकमिति स्वतोऽन्यतो वा जातं विवेकमपि नैव गृह्णातीति भावः । कर्माणि मनःप्रवर्तितानि कानिचित्साात्त्विकानि शुक्लानि धर्मोपयोगीनि, कानिचित्तामसानि कृष्णानि नरकोपयोगीनि, कानिचिल्लोहितानि राजसानि प्रवृत्तिमयानि क्रमेण तेभ्यः सवर्णादेव तिर्यङ्नरादिजातयः सृतयः संसारा भवन्ति ॥ ४४ ॥ अत्राक्षिपति–तर्हीति । अत्राभीप्सितार्थमाह–अयमर्थ इति । मनोऽध्यासेन मनस्यात्मत्वबुद्ध्या इयं सुखदुःखादिसम्बन्धरूपा । तद्रहितस्य मनोध्यासरहितस्य नित्यज्ञानवतः । सा संसृतिः । तद्वतो मनोध्यासवतः । तत्क्रियासंगरहितः मनसः क्रिया सङ्कल्पादिरूपा तत्संगस्तत्राभिनिवेशस्तद्रहितः । मनःक्रियासंगराहित्ये हेतुमाह–यत इत्यादि । विद्याशक्तिप्रधानत्वे हेतुं पृच्छति–कुत इति । हेतुमाह–यत इत्यादि । अविद्यावृतजीवनियन्तृत्वं विद्याशक्तिमत ईशस्य भवत्येव । अतो विद्याशक्तिप्रधानत्वात् । इत्यर्थ इति–न हि बुद्धो द्रष्टा दृश्यधर्मानुयायी भवतीति भावः । तस्यान्तत्वे तु गुणसंगात्सत्त्वादिगुणसंगात्सुखादिषु निबद्धो भवति "सत्त्वं सुखे सञ्जयति रजः कर्माणि भारत । ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ " इति श्रीमुखोक्तेः ॥ * ॥ ननु तर्हि मनस एव संसारोऽस्तु नात्मनः । तत्र सत्यम् । आत्मा ह्यत्र शरीरे द्विविधः–एकः परमात्मा मनोलेपरहितः, अन्यो जीवात्मा तल्लेपसहित एव । तत्र प्रथमं तावच्छृण्वित्याह–अनीह इति । सर्वं तैः । द्वितीयो जीवात्मा तु मनसोऽध्यासात् मनोरूपलिंगमेवात्मत्वेन मत्वा संसरतीत्यर्थः । मनसो जडत्वात्सुखदुःखानुभवाभावात्स्वर्गनरकापवर्गेषु मध्ये न कोऽपीति भावः ॥ ४५ ॥ यतो मनोनिबन्धनः संसारोतो हेतोः । सर्वं दानादि शुभं कर्म । तं विना मनोनिग्रहं विना । आदिनोर्जादिव्रतग्रहः । कर्माणि तीर्थस्नानगुरुसेवनादीनि । मनोनिग्रहफलत्वं दानादीनामाक्षिपति–नन्विति । तेषां दानादीनाम् । " तमेतं वेदानुवचनेन दानेन तपसा नाशकेन ब्राह्मणा विविदिषन्ति " इति श्रुतौ ज्ञानाङ्गत्वं युज्यते । समाधीयते चित्तमनेनेति । योगो ज्ञानम् । चित्तसमाधानं ज्ञानं विना न सम्भवतीति योगो ज्ञानमेव । ' योगो ज्ञानमितीरितम् ' इत्युक्तेः ॥ * ॥ तस्मात्सर्वानर्थकारि मनसो निग्रह एव यतनीयमित्याह–दानमिति ॥ ४६ ॥ यतो मनोनिग्रह एव ज्ञानमतो हेतोः । तस्य समाहितमनसो ज्ञानिनः । किं कृत्यमस्ति न किमपीति ' ज्ञाने सर्वं समाप्यते ' इत्युक्तेः । क्षुद्रसुखाभासफलैर्दा

मनोवशेऽन्ये ह्यभवन्स्म देवा मनश्च नान्यस्य वशं समेति ॥ भीष्मो हि देवः सहसः सहीयान्युञ्ज्याद्वशे तं स हि देवदेवः ॥ ४८ ॥ तं दुर्जयं शत्रुमसह्यवेगमरुंतुदं तन्न विचिन्त्य केचित् ॥ कुर्वंत्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः ॥ ४९ ॥ देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यंधाधियो मनुष्याः ॥ एषोऽहमन्योऽयमिति भ्रमेण दुरंतपारे तमसि भ्रमंति ॥ ५० ॥

मनः प्रशांतं कामक्रोधादिवृत्तिरहितम् अत एव समाहितं भवति तस्य किं कृत्यमस्ति वदेति परं प्रत्युपदिशन्निव स्वयमेवाह । असंयतं विक्षिप्तं चेत् । यद्वा विनश्यदालस्यादिना लीयमानं चेद्भवेत्तर्ह्येभिर्दानादिभिः किमपरं प्रयोजनं स्यान्न किंचिदित्यर्थः ॥ ४७ ॥ नन्वितरेंद्रियजयः प्रयोजनं स्यान्नेत्याह । मनोवश इति । देवा इंद्रियाणि तदधिष्ठातारो वा । भीष्मो योगिनामपि भयंकरो मनोलक्षणो देवः । कुतः । सहसो बलादपि बलिनोऽपि वा सहीयान्बलवान् । अतस्तं यो वशवर्तिनं कुर्यात्स एव देवदेवः सर्वेंद्रियजेता भविता नान्यः । तथा च श्रुतिः । "मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवः सहसः सहीयान्" इति ॥ ४८ ॥ अतोऽसह्या रागादयो वेगा यस्य तम् । अत एवारुंतुदम् अरुर्मर्म तत्तुदति व्यथयतीत्यरुंतुदस्तम् । तत् नेति च्छेदः। तं न विजित्याजित्वा तत् ततो ये केचिन्मर्त्यैः कैश्चिदसद्विग्रहं शुष्कवैरं कुर्वंति तत्र चानुकूलप्रतिकूलादीनन्यान्मित्रादीन्कुर्वंति मन्यंते ते मूढा इत्यर्थः ॥ ४९ ॥ ततश्च तेऽनेन प्रकारेण संसारे भ्रमंतीत्याह । देहमिति । मनोमात्रपरि

नादिभिः किं सर्वदानादिमुख्यफलभूतब्रह्मानंदलाभात् । यद्वाऽथवा स्वरूपानन्दविमुखत्वाद्विनश्यत् । तर्ह्येभिर्मृषाफलैर्दानादिभिः ॥ * ॥ सुधीभिरेको मनोनिग्रह एवापेक्षणीयो नान्य इत्याह—समाहितं वशीकृतं चेत् किं दानादिभिः । असंयतमवशीकृतम् । यतो विनश्यत् लययुक्तम् अपरमनुत्कृष्टं विक्षेपयुक्तं च चेत्तर्ह्यपि किमेभिर्दानादिभिः ॥ ४७ ॥ मनोजये तदितरेन्द्रियजय एव तत्प्रयोजनं भवेदित्याक्षिपति—नन्विति । देवा इन्द्रियाणि । देवानां गुणलिंगानामित्यत्र श्रीकपिलदेवेनेन्द्रियेषु देवशब्दस्य प्रयुक्तत्वात् । असार्वत्रिकत्वादेतत्प्रयोगस्य प्रसिद्धार्थमाददान आह—तदधिष्ठातारो वेति । भीष्मत्वे हेतुमाशङ्कते—कुत इति । 'सहः स्याद्बलवद्बले' इति धरणिः । बलवांश्च बलश्चेति समाहारद्वन्द्वः । यतोऽतिबलवान् अतो हेतोः । तं मनोदेवम् । यद्वा—देवदेवो विष्णुः "स ज्ञेयो भगवान्विष्णुर्मनो यस्य वशे स्थितम्" इत्यादिपुराणात् । मनसः सर्ववशित्वे प्रमाणमाह—तथा चेति । सर्वं जगत् । अन्यस्य सत्सङ्गादिरहितस्य । अन्यत्स्पष्टम् ॥ * ॥ नन्वितरेन्द्रियजयोऽप्यपेक्षणीय एव—नेत्याह । अन्यत्तैः ॥ ४८ ॥ यतः सहसः सहीयानतो हेतोः । अत एवासह्यवेगत्वादेव । ततो मनसोऽजयात् । असंश्चासौ विग्रहो हतः शत्रुमित्रादिरूपस्तम् । तत्रासद्विग्रहे । अन्यान्स्वेतरान् । अनुकूलं मित्रं, प्रतिकूलं रिपुं, प्रातिकूल्यानुकूल्यरहितमुदासीनं च कुर्वन्ति । इत्यर्थ इति—मूढानामेव भेददर्शित्वेन मित्रादिकरणं युज्यते ज्ञानिनस्तु सर्वत्रात्मदृष्ट्या तन्न युज्यत इति भावः । यद्वा—अरुस्तुदतीत्यरुन्तुद् तमरुन्तुदम्, शत्रन्तद्वितीयान्तरूपम्, मुमत्रार्षः संयोगान्तलोपश्च ॥ * ॥ ० ॥ ४९ ॥ ततश्चासद्विग्रहाच्च । अनेन वक्ष्यमाणेन । मनोमात्रकल्पितत्वं तु—'सदिव मनस्त्रिवृत्त्वयि विभात्यसदा मनुजात्' इत्यत्र वेदस्तुतौ देहादेर्वर्णितम् । अन्धधियो यथार्थज्ञानशून्याः । एष देहोऽहमन्यः पुत्रादिरयमिति भ्रमेण भ्रान्तिज्ञानेन । तमस्यज्ञानकार्ये

---

१ अर्शआद्यजन्तबलशब्दार्थोयम् ।

जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत् ॥ जिह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥ ५१ ॥ दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत् ॥ यदंगमंगेन निहन्यते क्वचित्क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥

कल्पितमिमं स्वदेहमहमिति पुत्रादिदेहं च ममेति स्वीकृत्य । तमसि संसारे ॥ ५० ॥ तदेवं मनस एव सुखदुःखकारणत्वमुपपाद्येदानीं जनादीनां षण्णामकारणत्वं प्रपंचयति । जनस्त्विति षड्भिः । अत्र चास्मिन्नपि पक्षे आत्मनः किं न किंचित् । सुखदुःखकर्मत्वं तत्कर्तृत्वं चेत्यर्थः । कुत इत्यत आह । ह निश्चितम् । भौमयोर्भूविकारयोर्देहयोस्तन्न त्वात्मनः । अमूर्तस्याक्रियस्य च हननादिषु कर्मत्वकर्तृत्वानुपपत्तेः । तथापि दुःखमात्मपर्यवसाय्येवेति चेदेवमपि परमात्मन उभयत्राप्येकत्वान्न कोपविषयोऽस्तीति स्वदृष्टांतेन दर्शयति । जिह्वामिति ॥ ५१ ॥ यदि देवता हेतुरस्तु नाम तत्रापि पक्षे आत्मनः किम् । यतो विकारयोर्विक्रियमाणयोर्देवयोस्तद्धस्तेन मुखेऽभिहते तेन वा हस्ते दष्टे तदभिमानिनोर्वह्नींद्रयोरेव तन्न त्वविक्रियस्यानहंकारस्य चात्मनः । देवतानां च सर्वदेहेष्वभेदान्न कोपविषयोऽस्तीति स्वदेहदृष्टांतमाह । यद्यदा अंग

संसारे ॥ * ॥ मनसो मात्रावृत्तय इन्द्रियादयो यस्मिंस्तं देहम् ॥ ५० ॥ अकारणत्वं सुखदुःखयोरिति योज्यम् । जनोऽन्यदेहः । अस्मिन्नपि पक्षे परदेहस्य सुखदुःखहेतुत्वपक्षे । आत्मनश्चेतनस्य जीवात्मनः । तत्कर्तृत्वं सुखदुःखकर्तृत्वम् । इत्यर्थ इति व्याख्येयम् । आत्मनः सुखदुःखकर्मकर्तृत्वाभावे हेतुं पृच्छति—कुत इति । देहयोस्ताड्यताडकशरीरयोः । तत्सुखदुःखकर्तृत्वादिकम् । आत्मनः कुतस्तन्नेति चेदत्र हेतुमाह—अमूर्तस्येत्यादिना । मूर्तस्य सक्रियस्य । हननादिषु कर्तृत्वादिदर्शनादिति भावः । यद्यप्यमूर्तस्य कर्तृत्वादिकं न सम्भवति तथापीति । आत्मनि पर्यवसीयते निष्ठीयत इत्यात्मपर्यवसायि "भोक्तृत्वे सुखदुःखानां पुरुषं कारणं विदुः" इत्युक्तेः । एवमपि दुःखादेरात्मपर्यवसायित्वस्वीकारेऽपि । उभयत्र स्वदेहपरदेहयोः । स्वदद्भिः स्वजिह्वां समासान्तर्गतैकदेशोऽपि सम्बध्यते क्वचित् "विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च" इतिवत् । तद्वेदनायां तस्या जिह्वाया वेदनायां पीडायां सत्यां कतमाय दन्तसमूहाय जिह्वायै वा नैकतरायापि कोपो युज्यते उभयोरचेतनत्वेन तुल्यत्वादिति भावः ॥ * ॥ जन एव जनं दुःखयति, जन एव जनं सुखयतीति चेदत्र—चेदित्यादि तैः । कर्मकर्तृत्वकर्मत्वानुपपत्तेः "य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥" इति श्रीभगवदुक्तेः । तथापि कर्तृत्वकर्मत्वानुपपत्तावपि पीडा त्वात्मन एव प्रत्यक्षीभवतीत्यत आह—जिह्वामिति । तत्र वेदनायां पीडायामात्मगामिन्यां सत्यां कतमाय: कुप्येत्—किं पीडाकरेभ्यो दन्तेभ्यः—किं वा पीड्यमानायै जिह्वायै तत्र तथा पीड्यमानायै जिह्वायै कोपस्यानौचित्यात्पीडाकरेभ्यो दन्तेभ्योऽपि कोपो न क्रियते तथैवात्रापि कोपो न कर्तव्य इति भावः । दुःखं त्वात्मनो लिंगाध्यासमूलकं सोढव्यमेव लिंगन्तु मन एवेति तद्दतेऽन्यस्मै दोषो न देय इत्यग्रिमश्लोकेषु सर्वत्रैवेदं ज्ञेयम् ॥ ५१ ॥ यदि देवता दुःखहेतुः । नामेति वाक्यालङ्कारे । तत्रापि देवताया दुःखहेतुत्वपक्षेऽपि । किं न किमपीति पूर्ववत् । यतो यस्मात् । विक्रियमाणयोः स्वमुख्यरूपमत्यक्त्वा नानात्वेन तत्तदिन्द्रियादिषु सूक्ष्मरूपतां प्राप्तयोः । यद्वा—विकारयोः सत्त्वपरिणामभूतयोः । "देवाः सत्त्वं परिणतास्तमो दैत्या रजो नराः" इत्यादिपुराणात् । विकाराभिमानिनोर्वा । तत् दुःखम् । तेन मुखेन । तदभिमानिनोर्हस्तमुखाभिमानिनोरिन्द्राग्न्योरेव तद्दुःखम्, पूर्ववद्देवानामभेदादैक्यात्, 'प्रतिदृशमिव नैकधार्कमेकम्' इति गांगेयोक्तेः । अत्रार्कमित्युपलक्षणं सर्वेन्द्रियदेवानाम् । अत एव

आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ॥ न ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्कुध्येत कस्मान्न सुखं न दुःखम् ॥ ९३ ॥
ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ॥ ग्रहैर्ग्रहस्यैव वदंति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ९४ ॥

देवताधिष्ठानं हस्तमुखादि अत एव पूर्वत्र देवतानधिष्ठानरूपभूविकारदंतोदाहरणम् ॥ ९२ ॥ आत्मनः सुखदुःखाद्याकारपरिणामोतः स एव यदि हेतुः स्यात्तत्र तस्मिन्पक्षे अन्यतः किं न किंचिदन्यतो भवति । यस्मै कुप्येदित्यर्थः । यतो निज एव स्वभावः सः न त्वन्यस्य । नन्वात्मनस्तथा परिणामोऽन्यनिमित्तो भवत्यतोऽस्ति कोपविषय इति चेत्तत्राह । न हीति । आत्मनोऽन्यत् आत्मव्यतिरिक्तं नास्त्येव । यदि स्यादस्तीति प्रतीयेत तर्हि तन्मृषैवातः कस्माद्धेतोः क्रुध्येत । यतो नास्ति निमित्तं न च सुखं दुःखं चेत्यर्थः ॥ ९३ ॥ ग्रहपक्षेऽप्यजस्यात्मनः किम् । यतो जन्यत इति जनो देहस्तस्यैव जन्मलग्नापेक्षया द्वादशाष्टमादिराशिस्थास्ते सुखदुःखयोर्निमित्तं भवंति । किंच अंतरिक्षस्थैर्ग्रहैस्तत्रस्थस्य ग्रहस्यैव पादार्धादिदृष्ट्यादिभेदैः पीडां वदंति दैवज्ञा न तु ग्रहकोणादिषु स्थितस्य तद्दृष्ट्यगोचरस्य पुरुषस्य । ग्रहगतैव तु पीडा तल्लग्नो

हस्तमुखादीनां देवताधिष्ठानत्वादेव ॥ * ॥ तेन च मुखेन श्वित्रमस्त्विति हस्तेऽभिशप्ते । अन्यत्तैः ॥ ९२ ॥ यत आत्मपरिणामोऽवस्थान्तरमतो हेतोः । स एवात्मैव । अन्यत आत्मेतरात् । इत्यर्थ इति— स्वस्मिन्स्वकोपासम्भवादिति भावः । यतो हेतोः । निजः स्वीय एव । स सुखदुःखाद्याकारपरिणामः । तथा सुखदुःखाद्याकारः । अत्राशंकते—नन्विति । अन्यनिमित्ततोऽन्यस्मान्निमित्तात् । यत इत्थमतो हेतोः । तर्ह्यस्तीति योज्यम् । अतः प्रतीत्यभावात् । तदात्मव्यतिरिक्तं वस्तु मृषैवेति । इत्यर्थ इति—निमित्तं विना नैमित्तिकासत्त्वादिति भावः ॥ * ॥ आत्मा जीवात्मैवेति न हीष्टकालोष्टादिकं केनचिद्दुःखयितुं शक्यं ततो जीवात्मनश्चेतनत्वमेव दुःखानुभवहेतुरिति चेत्तर्हि किमन्यतः अन्यः कथं दूषणीय इत्यर्थः । तत्रात्मनि निजस्वभावचैतन्यमेव सुखदुःखहेतुरित्यर्थः । न हि तच्चैतन्यमात्मनः सकाशादन्यत्, यदि च ततोऽन्यदेव तदिति मतं तर्हि तन्मतं मृषा मिथ्यैवाज्ञानकल्पितमित्यर्थः । तथा सत्यात्मनो लोष्टादीनामिव न सुखं न च दुःखं स्यादित्यतः कस्माद्धेतोः क्रुध्यति, मृषेत्यात्मन्यविद्ययारोपितमेवेत्यर्थः ॥ ९३ ॥ तस्यैव देहस्यैव । ते ग्रहाः । आत्मनः सुखाद्यसम्बन्धे कारणान्तरमाह—किञ्चेति । तत्रस्थस्य अन्तारिक्षस्थस्य । पादार्द्धादिदृष्ट्यादीत्यत्रादिना संयोगग्रहः । तद्दृष्ट्यगोचरस्य ग्रहदृष्ट्यविषयस्य । तल्लग्नोत्पन्ने तत्तद्ग्रहाधिष्ठितलग्नोत्पन्ने । तस्य पुरुषस्याभि मानात्—मेषलग्नोत्पन्नोऽहं, मल्लग्नस्य भौमोऽधिष्ठाता, तद्दृष्टिश्च चतुर्थस्थे बुधेऽष्टमस्थे शनौ पूर्णाऽस्ति, सा च शत्रुदृष्टिस्ततो मे दुःखमस्तीति तत्राभिमानादज्ञत्वाद्देहात्मदृष्ट्या ग्रहगतं देहगतं च दुःखमात्मन्यारोपयतीत्यर्थः । यतो देहग्रहगतैव पीडाऽतो हेतोः । ततस्तस्माद्देहजन्मलग्नाधिष्ठितग्रहात्तस्माद्देहाच्च भिन्नः पुरुषः । कस्मै देहाय ग्रहाय वा । न ह्यन्यस्य दुःखेऽन्यः कोपमर्हतीति भावः । ग्रहाणां पादादिदृष्टिस्तु—“ तृतीयदशमे ग्रहो नवम पञ्चमेऽष्टाम्बुनी क्रमाच्चरणवृद्धितः स्मरगृहं ततः पश्यति । कुजः सितबुधौ शशी रविबुधौ सितक्ष्मासुतौ गुरुर्यमशनी गुरुर्भवनपा इमे मेषतः ॥ ” इति गणेशदैवज्ञैर्जातकालंकारे उक्ता । ‘तृतीयदशमे शनिर्नवमपञ्चमे गुरुः चतुर्थाष्टमेऽपि भौमः शेषाः पश्यन्ति सप्तमं पूर्णदृष्ट्या ’ इति जातकान्तरे पूर्णदृष्टिरप्युक्ता । तथा च यो ग्रहो यं ग्रहं पश्यति शत्रुमित्रसमदृष्ट्या तस्य ग्रहस्यैव तत्कृतं दुःखादि तच्चाज्ञानादज्ञैरात्मनि मन्यत इति सिद्धम् । शत्रुग्रहयोः परस्परं दृष्टिः शत्रुदृष्टिर्मित्रयोर्मित्रदृष्टिः समयोश्च समदृष्टिरिति । दृष्टीनां शत्रुत्वादिकं ग्रहाणां शत्रुमित्रसमत्वं च “ चन्द्रेज्यक्षितिजा रवीन्दुतनयौ गुर्विन्दुसूर्याः क्रमाच्छुक्रार्कौ रविचन्द्रभूमितनया ज्ञार्की सितज्ञौ

कर्माऽस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे ॥ देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम् ॥ ५९ ॥
कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ॥ नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुद्ध्येत कस्मै न परस्य द्वंद्वम् ॥५६॥

त्पन्ने देहे तस्याभिमानाद्भवति यतः पुरुषस्ततो ग्रहाद्देहाच्चान्यः अतः कस्मै क्रुध्येत ॥ ५४ ॥ कर्म हेतुश्चेदस्त्वित्यसूयोपगमं कर्मैव नास्ति कुतस्तस्य हेतुत्वमिति तदाह । हि यस्मात्कर्म एकस्य जडाजडत्वे सति स्यात । जडत्वाद्विकारित्वोपपत्तेः । अजडत्वाच्च हितानुसंधानतः प्रवृत्तिसंभवात् तत्तु न संभवति विरोधात् । अचिज्जडो देहोऽत स्तस्य प्रवृत्तिर्न संभवति । पुरुषस्तु सुपर्णः शुद्धज्ञानस्वरूपोऽतः कस्मै क्रुध्येत । यतः सुखदुःखयोर्मूलभूतं कर्मैव नास्तीति ॥ ५५ ॥ तत्र कालपक्षेऽप्यात्मनः किम् । यतोऽसौ कालात्मक एव ब्रह्मांशत्वात् । स्वांशस्य स्वतः पीडा नास्तीत्यत्र दृष्टांतः । नाग्नेर्हेतोस्तदंशस्य ज्वालादेस्तापो दाहतो नाशोऽस्ति तत्रोपाधिभूतकाष्ठांशदाहा न्नाशः स्यादिति दृष्टांतांतरमाह । हिमस्य तच्छैत्यं तदंशस्य तुषारकणस्य नाशकं न स्यादित्यर्थः । किंच आस्तामंशत्वं वस्तुतः पर एवायं न च परस्य द्वंद्वं सुखदुःखादि

मताः । सूर्यादेः सुहृदः समा अथ बुधः सर्वेऽथ शुक्रार्कजौ भौमाचार्ययमा यमः कुजगुरू पूज्यः परे वैरिणः ॥ '' इति गणेशदैवज्ञैरेवोक्तम् । परे इति–यो यस्य मित्रं न समो न, स तस्य वैरीत्यर्थः । यथा रवेः शुक्रार्की एवमन्येषामपि ॥ * ॥ ० ॥ ९४ ॥ असूया गुणेषु दोषारोपणं तस्या उपगमोऽङ्गीकारः । गुणोऽत्र कर्म तत्र दोषारोपणं तदसिद्धिरेव " अजातस्य हि पुत्रस्य कथं नाम प्रवर्तते । अखाते हि तडागे च प्रविष्टो मकरः कथम् ॥ '' इति न्यायेन कुतस्तस्य कर्मणः यस्य दुःखहेतुत्वमंगीक्रियते तत्कर्म । एकस्य पुरुषस्य देहस्य वा । जडाजडत्वे चिज्जडोभयरूपत्वे । तदेव न सम्भवतीत्याह–अचिज्जड इति । अतो देहस्य केवलं जडत्वात् । तस्य देहस्य शुद्धज्ञानस्वरूपस्य द्वैतदर्शनाभावात्तद्धेतुका प्रवृत्तिर्न संघटते यतोऽतो हेतोः । कस्मै देहायात्मने वाऽऽकोपविषयाय, देहस्य जडत्वादात्मनोऽदृश्यत्वाच्च कोपगोचरता नास्तीति भावः । यतो हेतोः । येन सुखदुःखमुत्पद्यते तत्कर्मैव न सिद्ध्यतीत्यर्थः ॥ * ॥ **दीपिका**–असूयोपगमः मीमांसकमते दोषदृष्ट्यंगीकारः । असूयामभिनीय दर्शयति–कर्मैव नास्तीति । तस्यासतः कर्मणः । तदाह कर्मणोऽसत्त्वमाह । शुद्धज्ञानस्वरूपः अतस्तस्य विकारित्वं न सम्भवतीति पूरणीयम् । न च शुद्धचैतन्यस्य जडदेहेन शुद्धतेजसस्तमसेव साहित्यं स्यादतः कस्मै क्रुद्ध्येतेति ॥ ९९ ॥ असावात्मा कालात्मकः कालस्वरूपब्रह्मात्मक एव " काल आत्मागमो लोकः स्वभावो धर्म एव च । इति मां बहुधा प्राहुः '' इत्युक्तेः । 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' इति गीतोक्तेः । 'कालः कलयतामहम्' इति च । 'केचित्कालं वदन्त्यन्ये स्वभावम्' इत्याद्युक्तेश्च । यद्वा–असौ कालः तदात्मक आत्मस्वरूप एव उभयथाऽप्येक एवार्थ इति । तत्र अग्निदृष्टान्ते । तदंशस्य हिमांशस्य । 'तुषारः शीतलः शीतो हिमः' इत्यमरः । इत्यर्थ इति–न हि शीतस्य शीतं नाशकं स्यादिति भावः । अन्यदाह–किञ्चेति । पर एव साक्षाद्ब्रह्मैव । नातोऽन्यो जीवो नामास्ति " अयमात्मा ब्रह्म'' इत्यादिश्रुतेः । देहाद्यध्यासत एवात्मनः सुखदुः खादि न स्वत इत्यर्थः ॥ * ॥ यतोऽसौ तदात्मकः[1] कलात्मक एव कालात्मनो ब्रह्मांशत्वात्कालब्रह्मणोश्चैक्यादिति भावः । न ह्यंशस्यांशिनः सकाशात्पीडास्ति इह दृष्टान्तः–अग्नेरित्यादि तैः । तदेवं परस्य स्वरूपतो

---

१ कालात्मक इत्यस्य स्थाने तदात्मक इति पाठाऽभिप्रायेणेदम् ।

न केनचित्क्वापि कथंचनास्य द्वंद्वोपरागः परतः परस्य ॥ यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥ एतां समास्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ॥ अहं तरिष्यामि दुरंतपारं तमो मुकुंदांघ्रिनिषेवयैव ॥ ५८ ॥ श्रीभगवानुवाच ॥ निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ॥ निराकृतोऽसद्भिरपि स्वधर्मादकंपितोऽमूं मुनिराह गाथाम् ॥ ५९ ॥

कमस्तीति ॥ ५६ ॥ तदेवं षडेते हेतवः प्रसिद्धा निरस्ताः यदि कश्चिद्वैलक्षण्यंतरमुद्भावयेत्तदपि वस्तुमहिमापेक्षया न संभवतीत्याह । न केनचिदिति । नन्वपरोक्षः कथम पह्नूयते तत्राह । यथेति । संसृतिमविद्यमानामेव रूपयति प्रकाशयतीति तथा तस्य अहमोऽहंकारस्य यथा द्वन्द्वसंबंधः स्यान्न तथा परतः प्रकृतेः परस्यात्मनः । अहं कारनिमित्तोऽसौ न वास्तव इत्यर्थः । एवं प्रबुद्धो विवेकी यः स भूतैः कृत्वा न बिभेति ॥ ५७ ॥ अतोऽहमपि तथैव परमात्मनिष्ठतया तरिष्यामीत्याह । एतामिति । सोऽहमित्यन्वयः । नन्वियं निष्ठैव कथं भवेत्तदाह । मुकुंदेति ॥ ५८ ॥ प्रस्तावेन सह गाथार्थं संक्षेपतो दर्शयति द्वाभ्याम् । इत्थं नष्टद्रविणो निर्विद्य गतक्लमः प्रव्रज्य गां पर्यटन्नस

मायातीतस्यं जीवात्मनः द्वन्द्वं नास्तीति षडेते हेतवो निरस्ताः ॥ ५६ ॥ हेतवः सुखदुःखयोरिति योज्यम् । तदपि जनादिषडन्यदपि । वस्तुन आत्मनो महिमाऽसंगादिलक्षणस्तदवेक्षया । अत्राशङ्कते—नन्विति । अप ह्नूयतेऽपलप्यते । इत्यर्थ इति—"अहंकारकृतं बन्धमात्मनोऽर्थविपर्ययम्" इत्युक्तेरिति भावः । एवं प्रबुद्धः अहंकारकृत एवात्मनो दुःखादिसम्बन्धो न वास्तव इति ज्ञानवान् । भूतैः नरव्याघ्रादिभिः ॥ * ॥ अपरोक्षः सर्वप्रत्यक्षः द्वन्द्वोपरागः । ननु तर्ह्यपरोक्षस्य दुःखानुभवस्य को हेतुस्तत्र पूर्वोक्तमनोऽध्यास एवेत्याह—यथाहम इति । मनःप्रधाने लिंगदेहे योऽहंकारस्तस्मादेव नान्यस्मात् । यथाशब्द एवार्थे । संसृतिं संसारबन्धं निरूपयितुं शीलं यस्य तस्मात् । अथ जीवात्मा हि स्वरूपतः शुद्ध एव न तस्य कालकर्मादयो दुःखहेतवः किन्त्वविद्यया देहेऽहंकाराद्देहस्वाध्यास एव, स च देहो मनःप्रधानत्वान्मन एवेति तदेव दुःखहेतुरिति प्रकरणार्थः । देहाध्यासे सति तु जीवात्मनः शुद्धत्वेऽपगतेऽध्यासानुगाः षडपि हेतवो यथायोगमुद्भवन्तीति निर्गलितार्थः ॥ ५७ ॥ यतः परमात्मनिष्ठैव श्रेयसी अतो हेतोः । एतया मानस एव दुःखजाल आत्मा त्वसंगसुखरूप एवेत्येवमाकारिकया । एतामुक्तलक्षणां परात्मनिष्ठां स्वरूपस्थितिं मनःसंयमनरूपां वा । पूर्वतमैः सनकादिभिः । महर्षिभिः सर्वविरक्तमुख्यैः । अध्यासितां सम्यगनुष्ठिताम् । यो भूतैः क्रीड नकवत्कृतः सोऽहमित्यर्थः । एतन्निष्ठावातिरेव दुर्घटेत्याशंकते—नन्विति । मुकुन्दसेवया किन्नावाप्यतेऽपि तु सर्वमेवेत्यर्थः । "धर्मार्थकाममोक्षेषु य इच्छेच्छ्रेय आत्मनः । एकमेव हरेस्तत्र कारणं पादसेवनम् ॥" इति नारदोक्तेः । तमोऽज्ञाननिमित्तकं संसारम् ॥ * ॥ **संदर्भः**—तदेषा च मम परमात्मनिष्ठा श्रीमुकुन्दाङ्घ्रिनिषेवणं विना सोपद्रवैव जाता, यदीदृशो नानाविचारोऽपि तन्निष्ठाया उपद्रव एवेत्यन्ते तन्निषेवामवलम्ब्यैव विविन क्ति—एतामिति । तस्माद्भवता साध्वेवोक्तम् ऋते त्वद्धर्मनिरतानिति भगवतो भावः ॥ * ॥ **विश्वनाथस्तु**—ततश्च तस्य विघ्नस्थगिता प्राग्भवीया शुद्धा मद्भक्तिर्मनसि प्रादुर्भूता प्रादुर्भूतायां च तस्यां स्वस्य सन्न्यासः । द्वन्द्वसहनोपायमुक्तलक्षणमेतावन्तं विचारं चावधारयन्मच्चरणनिषेवयाऽमृतसिंधुनिमग्न उच्चैर्नृत्यन्सहर्षाटोपमाह—एतामिति । सोऽहमित्यन्वयः । परात्मनिष्ठां देहदैहिकाभिमानेभ्यः परः शुद्धो य आत्मा जीवस्तस्य निष्ठां विचारि तलक्षणं स्वरूपं केवलमास्थायेति परात्मनिष्ठायामेतस्यां मम आ ईषत् स्थितिमात्रमेव तमः संसारन्तु सेवयैव तरिष्यामि न त्वनयेत्यर्थ एवकाराल्लभ्यते । ननु तर्हि परात्मनिष्ठायां स्थितिमात्रमपि किं करोषि तत्राह—पूर्व तमैः प्राचीनैरध्यासितां सेविताम् ॥ ५८ ॥ प्रस्तावेन प्रसंगेन । गतक्लमो विगतग्लानिः । अकम्पितोऽचलितः । अमूम् 'नायं जनो मे' इत्यादिषोडशपद्यात्मिकां गेयां कथाम् । यद्वा—अमूं वक्ष्यमाणां गाथां श्लोकम् 'सुख

सुखदुःखप्रदो नान्यः पुरुषस्यात्म विभ्रमः ॥ मित्रोदासीनारिपवः संसारस्तमसः कृतः ॥ ६० ॥ तस्मात्सर्वात्मना तात निगृहाण मनो धिया ॥ मय्यावेशितया युक्त एतावान्योगसंग्रहः ॥ ६१ ॥ य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ॥ धारयञ्छ्रावयञ्छृण्वन्द्वंद्वैर्नैवाभिभूयते ॥ ६२ ॥ इति श्रीमद्भा० म० एकादशस्कंधे भगवदुद्धवसंवादे भिक्षुगीतानिरूपणं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ॥ यद्विज्ञाय पुमान्सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥ १ ॥

द्भिर्निराकृतोऽपि स्वधर्मादकंपितः सन्मुनिरमूं गाथामाहागायतेत्यन्वयः ॥ ५९ ॥ सुखदुःखप्रदो न मनसोऽन्यः यतः मित्रोदासीनारिपवः सर्वोऽपि संसारस्तमसोऽज्ञानत आत्मनो मनसो विभ्रममात्रः कृतो न तात्त्विक इत्यर्थः ॥ ६० ॥ उक्तं द्वंद्वसहनोपायमुपसंहरति । तस्मादिति ॥ ६१ ॥ मनोनिग्रहाशक्तोऽप्येतच्छ्रवणादिनिष्ठस्तत्फलं प्राप्नोतीत्याह । य इति । द्वंद्वैः सुखदुःखादिभिः ॥ ६२ ॥ भिक्षुगीतं मिषं कृत्वा भक्तचित्तगतं हरिः ॥ मोहं निघ्नन्निहाभाति परमानंदरूपतः ॥ १ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ छ ॥ चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ॥ आत्मनः सर्वभावानामागमापायचिंतया ॥ १ ॥ स्वपदद्वंद्वभक्तानामद्वंद्वत्वाय संयमम् ॥ चित्तस्योक्त्वा पुनः कृष्णः सांख्यमत्राह तत्कृते ॥ २ ॥ अद्वितीयात्परमात्मनो मायया प्रकृतिपुरुषद्वारा सर्वं द्वैतमुदेति पुनस्तत्रैव लीयत इत्यनुसंदधानस्य द्वंद्वभ्रमो निवर्तत इति वक्तुं सांख्यं प्रस्तौति । अथेति । पूर्वैः कपिलादिभिर्विनिश्चितं वैकल्पिकं भेदनिमित्तम् । भ्रमं सुखदुःखादिरूपम् ॥ १ ॥

दुःखप्रदो नान्यः' इत्यादिम् “गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः” इति मेदिनी ॥ * ॥ कदर्योपाख्यानोत्थापनप्रयोजनञ्चाह श्लोकद्वयेन—निर्विद्येति ॥ ५९ ॥ इत्यर्थ इति—मनोरथवदवास्तव इति भावः ॥ * ॥ आत्मविभ्रम इति पञ्चम्यर्थे प्रथमा । आत्मविभ्रमादन्यो न सुखादिप्रदः किंतु भ्रम एव ॥ अत एव तमसोऽज्ञानस्वरूपात् । मित्रादिरूपः संसारः ॥ *॥ सन्दर्भोऽपि—मित्रोदासीनारिपुरूपः सुखदुःखप्रदः पुरुषस्य सर्वोऽपि संसारोऽयं नान्योऽस्ति । किन्तु तमसस्तमसा स्वाज्ञानेन कृतो य आत्मनो मनसो विभ्रमस्तद्रूप एवेत्यर्थः ॥६०॥ यतो मनोविलासः संसारस्तस्माद्धेतोः । एतावान् मनःसंयमलक्षणः।योगसंग्रहः योगसंक्षेपः।“चित्तवृत्तिनिरोधो योगः” इति भगवता पतञ्जलिना सूत्रितत्वात् । धिया व्यवसायात्मिकया युक्तः ॥ * ॥ ० ॥६१॥ अशक्तं प्रत्याह—मन इत्यादिना । एतस्या गाथायाः श्रवणे निष्ठा यस्य स तथा । तत्फलं मनोनिग्रहफलं द्वन्द्वाऽनभिभवलक्षणम् । आदिना लाभालाभादिग्रहः ॥ * ॥ ० ॥ ( ६२ ) ॥ निजगुरुं हरिरूपतया स्तौति—भिक्षिवति । भक्तस्य ममोद्धवस्य वा । इवशब्देन मोहस्यावास्तवतां सूचयति—परमानन्दरूपेण मद्गुरुरूपेण वासुदेवरूपेण वा ( १ ) ॥ ६२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ आत्मनः स्वस्य । मनोमोहः द्वैतसत्यत्वधीः ( १ ) । अद्वन्द्वत्वाय द्वन्द्वनिवृत्तये । अत्र चतुर्विंशे । तत्कृते चित्तसंयमार्थम् ( २ ) । अध्यायतात्पर्यमाह—अद्वितीयादित्यादिना । तत्रैव परमात्मनि । अथ मनःसंयमनोक्त्यनन्तरम् । ते तुभ्यम् । यत्सांख्यम् । जह्यात्पुमांस्त्यजेत् । अनेन भेदभ्रमापादकाग्निवंशजकापिलोक्तानीश्वरसांख्यशास्त्रान्यत्वमस्योक्तम् ॥ * ॥ मनःप्रधाने लिंगदेहेऽहंबुद्धिरेवात्मनो दुःखकारणमिति भिक्षुगीतादवगतम् । सा चानात्मबुद्धिरात्मानात्मविवेके सति निवर्तते, स चात्मानात्मविवेकः सांख्यज्ञानमूलक इत्यतः सांख्य

**आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम् ॥ यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ २ ॥ तन्मायाफलरूपेण केवलं निर्विकल्पितम् ॥ वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ॥ ३ ॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ॥ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥ ४ ॥ तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ॥ मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥ ५ ॥**

अथो शब्दः कात्स्न्र्ये । ज्ञानं द्रष्टा तेन दृश्यः कृत्स्नोऽप्यर्थश्चाविकल्पितं विकल्पशून्यमेकमेव । ब्रह्मण्येव लीनमासीदित्यर्थः । कदेत्यपेक्षायामाह । अयुगे युगेभ्यः पूर्वं प्रलय इत्यर्थः । तथा आदौ यत्कृतयुगं तस्मिंश्चान्यदाऽपि यदा विवेकनिपुणा जना भवंति तदाऽपि । तेषां च भेदास्फूर्तेः ॥ २ ॥ तद्बृहद्ब्रह्म वाङ्मनोगोचरं यथा भवति तथा । मायादृश्यं फलं तत्प्रकाशस्तद्रूपेण मायाविलासरूपेण वा द्विधाऽभूत् ॥ ३ ॥ तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिका कार्यकारणरूपिणी ॥ ४ ॥ अभवन्नभिव्यक्ता बभूवुः । मया परमेश्वरेण । जीवादृष्टप्रत्युक्तत्वात्सृष्टेः पुरुषानुमतत्वं युक्तम् । यद्वा । स्वस्यैव प्रकृतिलक्षणरूपा या पुरुषावस्था तदनुमतेन तद्द्वारे

मुपदिशन्नाह—अथेति । सांख्याधिकारे विकल्पो देहस्तदुद्भवमध्यासरूपं भ्रमं त्यजेत् ॥ १ ॥ द्रष्टा जीवः । इत्यर्थ इति—केवलं ब्रह्मैवासीत् "अहमेवासमेवाग्रे" इत्याद्युक्तेः । इत्यर्थ इति—प्रलये सर्वस्य लीनत्वाद्युगादिकल्पनापि तदा नासीदिति भावः । तथा प्रलयवत् । अन्यदापीत्युक्तेर्नात्र कालनियमः । तेषां विवेकिनाम् ॥ * ॥ तृतीयस्कन्धे—"भगवानेक आसेदमग्र आत्मात्मनां विभुः" इत्यादौ यद्भगवत्त्वेन शब्द्यते तदेव ब्रह्मत्वेन शब्द्यत इति वदन्तीत्यादेर्यदुभयत्रैकमेव वस्तु प्रतिपाद्यम्, अन्ते तु "एष सांख्यविधिः प्रोक्तः परावरदृशा मया" इत्यनेन भगवद्रूपेणावस्थितिः स्पष्टैव । कदेत्यपेक्षया तैः ॥ २॥ तत्प्रकाशः दृश्यप्रकाशः । तत्प्रकाशयतीति व्युत्पत्तेश्चेतनः मायायाः कार्यद्वारकं दृश्यत्वं यद्यप्यस्ति तथापि सा स्वरूपेणादृश्येत्यस्वारस्यादाह—मायाविलासरूपेण वेति । विलसत्यनेनेति विलासः पुरुषः । माया च विलासश्च मायाविलासौ तावेव रूपमिति सामानाधिकरण्याभावेऽपि कर्मधारयो विधायकसूत्रे विपरीतग्रहणात् । यद्वा—मायया सहितो विलासो मायाविलासः स एव रूपं तेन तथा ॥ * ॥ तदिति—तैस्तत्र मायादृश्यमिति फलं तत्प्रकाश इति छेदः । तेन ब्रह्मणा यद्दृश्यं वस्तु तन्माया तस्य ब्रह्मणो यः प्रकाशविशेषः स फलमित्यर्थः । यद्वा—'प्रकृतिर्ह्यस्योपादानम्' इत्यादौ 'ब्रह्म तत्त्रितयं त्वहम्' इति वक्ष्यमाणात् । तद् बृहत् मल्लक्षणं ब्रह्मस्वरूपेण स्थित्वैव मायाया निजशक्तिविशेषस्य यत्फलं व्यंग्यं वस्तु तद्रूपेण मायास्वरूपशक्तेराभासरूपा बहिरंगा निमित्तशक्तिस्तस्या विलासः प्रकृतिपुरुषाविर्भावकरूपक्रीडाविशेषस्तेन रूपेणेति टीकापक्षान्तरार्थः ॥३॥ एकतरोऽर्थो माया सा । अन्यतमो द्वितीयोऽर्थः प्रकृतेर्ज्ञाननाश्यत्वेन भावत्वं सदातनत्वं नास्तीति ततो विलक्षणो भावः भावयति सर्वं प्रकृत्येति व्युत्पत्तेः ॥ * ॥ **दीपिका**—अंशयोरिति—प्रकृतेस्तद्बहिरङ्गशक्तित्वादंशत्वं पुरुषस्य तटस्थशक्तित्वादंशत्वमिति ज्ञेयम् । कार्यमाकाशादि, कारणं महदादि तद्रूपिणी ॥ * ॥ **सन्दर्भस्तु**—प्रकृतिः प्रधानं पुरुषो जीवः । तदुक्तं वैष्णवे—"विष्णोः स्वरूपात्परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्र" इत्यादौ । टीका च—परतो निरुपाधेर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ४ ॥ अभिव्यक्ता इति—साङ्ख्यस्य कार्यसत्यत्ववादित्वात् । तदुक्तम्—"असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥" इति वाचस्पतिना व्याख्याता चेयं तृतीयस्कन्धे कारिका । पुरुषानुमतत्वे सृष्टेरनीश्वरवादापत्तेराह—यद्वेति । इत्यर्थ इति—प्रकृत्यवेक्षणावसरे ममैव पुरुषसंज्ञा भवतीति भावः ॥ * ॥ मया महत्स्रष्टृमहापुरुषस्वरूपेण पुरुषस्य जीवस्यानुमतेन अस्मद्विधस्य जीवस्य प्राक्तनकर्मज्ञानभक्तिसाधनानि सम्पद्यन्तामित्यात्मकेन जीवादृष्टप्रयुक्तत्वात्सृष्टेः ॥ * ॥ **सन्दर्भस्तु**—मया कलाख्यचेष्टात्मकेन महत्स्रष्ट्रा महापुरुषरूपेण लीलासाधकजीववृन्दार्थकृतयेक्षया प्रक्षोभ्यमाणायास्तत उद्बुद्धेन पुरुषेषु सर्वेषु जीवेष्वनुगतेन मतेन ज्ञानेन वासनारूपेण पूर्वोक्तस्वभावाख्येन विशेषतः

तेभ्यः समभवत्सूत्रं महान्सूत्रेण संयुतः ॥ ततो विकुर्वतो जातोऽहंकारो यो विमोहनः ॥ ६ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ॥ तन्मात्रेंद्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥

णेत्यर्थः ॥ ५ ॥ सूत्रं क्रियाशक्तिमान् प्रथमविकारः । ततो महान् ज्ञानशक्तिः । नन्वयं महानेव प्रथमो विकारः प्रसिद्धस्तत्राह । स च ज्ञानक्रियागर्भत्वात्सूत्रेण संयुतो न पृथक् । एकमेव तत्त्वं क्रियाज्ञानशक्तिभ्यां द्विधोच्यत इत्यर्थः । विमोहनो जीवस्य भ्रमहेतुः संजातः ॥ ६ ॥ यतस्तन्मात्रादीनां कारणम् । मनःशब्देन देवानामप्युपलक्षणम् । चिदाचिन्मयः चिदाभासव्याप्तत्वादुभयग्रंथिरूप इति जीवोपाधित्वं दर्शितम् । यद्यपि " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादिश्रुतेः "अन्नमयं हि सौम्य मनः " इत्यादिश्रुतेश्च प्रथमं भूतानि जायंते । तेभ्यश्चापंचीकृतेभ्यः प्राणादिक्रमेण समष्ट्यात्मकं लिंगशरीरम् । पंचीकृतेभ्यश्च ब्रह्मांडम् । तस्मिन्वैराजस्तदंतर्यामी लीलविग्रहः क्षीराब्धिशायी श्रीनारायणस्तन्नाभिपद्मे च वैराजस्य भोगविग्रहश्चतुराननस्ततो यथावसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया । तथापि चित्ताभिव्यक्तिपूर्वकोऽहंकारस्ततो भूतेंद्रियादिव्यवहार इत्येतावता महदादिक्रमेण सृष्टिरुच्यते । तथा चोक्तम् । " मृल्लोहविस्फुलिंगाद्यैः सृष्टिर्या चोदिताऽन्यथा ॥ उपायः

प्रक्षोभ्यमाणायाः प्रकृतेः सम्बन्धिनस्तमआदयो गुणा अभवन्, व्यक्तीभूता इत्यर्थः । चेति पाठोऽपि समुच्चयार्थः ॥ ५ ॥ महतो द्वितीयत्वमाक्षिपति–नन्विति । स च महान् । ज्ञानक्रिये गर्भे यस्य तस्य भावस्तत्त्वं तस्मात् । इत्यर्थ इति–शक्तिभेदेन मायाविद्यावद्भेदो न वास्तव इति भावः । ततो महतः । सोऽहङ्कारः । विमोहकत्वं तु तस्य 'अहंकारविमूढात्मा' इति श्रीगीतोक्तेः । 'मत्सूत्रेण च संयुतम्' इति विजय० पाठे मम सर्वाधारेण संयुतं सर्वजगदाधारवायुतत्त्वमुत्पन्नमित्यर्थः ॥ * ॥ ततस्तेभ्यो महान्सूत्रेण संयुतः समभवज्जात इत्यनयोर्भेद एव दर्शितः । तदेवमीश्वरजीवप्रकृतिस्वभावसूत्रमहदाख्यानि षडेव तत्त्वानि । महापुरुषस्य मायायाश्च बृहदाख्यसर्वेश्वरगुणत्रयस्य प्रकृतावन्तर्भावात्, देवतानां चान्तर्भावात् अहंकारादयो द्वाविंशतिरित्यष्टाविंशतिः ॥ * ॥ **विश्वनाथस्तु**–सूत्रं प्रथमो विकारः । ननु प्रथमो विकारो ज्ञानशक्तिर्महानिति प्रसिद्धस्तत्राह–महान्यः प्रसिद्धः स हि सूत्रेण संयुतः । तत्रतत्र सूत्रसहित एव स ज्ञेय इत्यर्थः । भ्रमहेतुर्देहाध्यासहेतुः ॥ ६ ॥ यतस्तन्मात्रादीनां कारणमतस्त्रिवृत्त्रिप्रकारः, त्रिभिर्भेदैर्वर्तत इति व्युत्पत्तेः । उभययोः चिदचितोर्ग्रन्थिरूपः । ईश्वरस्य निरहंकारत्वं कर्तृत्वाद्यभिमानाभावाज्जीवस्य कर्तृत्वाद्यभिमानादहंकारोपाधित्वम् । सर्वसृष्टिप्रकारैक्यमाह–यद्यपीत्यादिना । तेभ्यो भूतेभ्यः । तस्मिन्ब्रह्माण्डे । तदन्तर्यामी वैराजान्तर्यामी । ततो ब्रह्मणः । तथापि न किञ्चिद्भेदः । अत्र पूर्वाचार्यसंमतिमाह–तथा चोक्तमिति । मृदो यथा घटादयो लोहात्सुवर्णाद्यथा कटकादयोऽग्नेर्यथा विस्फुलिंगादयः । आदिना दुग्धाद्यथा दध्यादय इति ग्रहः । एवमीश्वरात्सृष्टिरित्येवं दृष्टान्तैरुदिता कथिता स श्रोतुश्चित्तस्य सृष्टाववताराय प्रवेशायोपायः, सृष्टेस्तु कथञ्चनापि भेदो नास्तीत्यर्थः । विवाहाद्युत्सवे प्रज्वालनाय निर्मितगन्धकाक्तशणपत्रगजादिपुच्छस्य ह्रस्ववक्रदीर्घर्जुभवने न कोऽपि व्याघातस्तथापवादार्थोक्ताध्यारोपरूपसृष्टेर्यथाकथञ्चिद्वर्णनेऽपि न कोऽपि दोष इति ध्येयं विज्ञैः । एकमेवाद्वितीयं ब्रह्मासीत्तत्स्वमायासमावेशाद्बीजमव्याकृतात्मकमभवत् तस्मादाकाशः शब्दस्तन्मात्रोऽभूत्ततः स्पर्शात्मको वायुस्ततो रसात्मिका आपस्ताभ्यां गन्धात्मिका भूरेवमपञ्चीकृतानि पञ्च भूतानि तेभ्यः समष्टिव्यष्ट्यात्मकं लिंगशरीरं तद्यथाकाशादिसात्त्विकांशेभ्यः श्रोत्रादि ज्ञानेन्द्रियाणि तेषां समष्टिसात्त्विकांशादन्तःकरणं तथा तेषां राजसांशेभ्यः वागादिकर्मेन्द्रियाणि तत्समष्ट्या प्राणः दिग्वातार्काम्बुपृथिव्यो ज्ञानेन्द्रियदेवता अग्नीन्द्रोपेन्द्रमृत्युप्रजापतयः, कर्मेन्द्रियदेवताश्चन्द्रधिषणरुद्रक्षेत्रज्ञाः, अन्तःकरणचतुष्कदेवता आदित्यपृथिवीबाह्यवायुसामान्यतेजोबाह्यवायवः प्राणदेवताः शब्दादयो विषया इति । ततो व्यवहारार्थं पञ्चीकृतभूतेभ्यः समष्टिव्यष्ट्यात्मकं स्थूलशरीरं भागवते त्वद्वितीयाद्ब्रह्मणः साभासं त्रिगुणात्मकं प्रधानं तत्र प्रतिबिम्बितचैतन्यं पुरुष

अर्थस्तन्मात्रिकाज्जज्ञे तामसादिंद्रियाणि च ॥ तैजसादेवता आसन्नेकादश च वैकृतात् ॥ ८ ॥
मया संचोदिता भावाः सर्वे संहत्यकारिणः ॥ अंडमुत्पादयामासुर्ममायतनमुत्तमम् ॥ ९ ॥

सोऽवताराय नास्ति भेदः कथंचन ॥ " इति ॥ ७ ॥ तस्मात्रिविधात्रिविधप्रपंचोत्पत्तिं दर्शयति । अर्थ इति । 'तन्मात्रिकाच्छब्दादितन्मात्रकारणात्तामसात्त द्वारा अर्थो महाभूतरूपो जज्ञे बभूव । भूतानामावरणस्वभावत्वात् । इंद्रियाणि दश तैजसाद्राजसात् । तेषां प्रवृत्तिस्वभावत्वात् । वैकृतात्सात्त्विकाद्देवताः दिग्वातार्कप्रचेतोश्विवह्नींद्रोपेंद्रमित्रकाः चंद्रश्चेत्येकादश । चशब्दान्मनश्च । तेषां प्रकाशस्वभावत्वात् ॥ ८ ॥ मम वैराजांतर्यामिणः ॥ ९ ॥

इत्युक्तम् । गुणसाम्यावस्थं प्रधानम् । तस्मान्महत्ततोऽहङ्कारः । स च सात्त्विकादिभेदात्त्रिधा—तत्र सात्त्विकाहंकारान्मनइन्द्रियदेवाः, राजसात्ततो बुद्धिरिन्द्रियाणि च, तामसात्पञ्च तन्मात्राणि शब्दादीनि, तेभ्योऽप्याकाशादीनि । तत्र निरीश्वरसाङ्ख्यमते विरोध एव ' ईक्षतेर्नाशब्दम् ' इत्यादिनापाकृतः । वेदान्तमते तु—मायैव प्रधानं समष्टिबुद्धिर्महत्तत्त्वम् " तदैक्षत " इत्यादिभिरीक्षणं वा " एकोऽहम् " इत्यादिभिरहंकारः । वेदान्ते इन्द्रियाणां भौतिकत्वं भागवतेऽहंकारजन्यत्वम्, तत्त्ववान्तरकार्ये विप्रतिपत्तिः मुख्यकारणं तु ब्रह्मेति सर्वत्रोक्तम् । श्रीधरस्वामिना तु—प्रथमं चित्ताभिव्यक्तिस्ततोऽहमस्मीत्याकारस्ततो भूतेन्द्रियादिस्फूर्तिरिति लोकप्रतीत्यभिप्रायेणोक्तमतो भागवतेन विरोध इत्युक्तम् । "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ " इति श्लोके मधुसूदनस्वामिना व्याख्यातम् । स्वसिद्धान्ते तु—ईक्षणसंकल्पात्मकौ मायापरिणामावेव बुद्ध्यहंकारौ पञ्च तन्मात्राणीति।अपञ्चीकृतमहाभूतानीत्यादि—भाष्यकारोऽप्येवं भूमिरिति पृथिवी तन्मात्रमुच्यते न स्थूला,तथाऽबादयोऽपि तन्मात्राण्येव।मन इति मनसः कारणमहंकारो गृह्यते बुद्धिरित्यहंकारकारणं महत्तत्त्वम्।अहंकार इत्यविद्यासंयुतमव्यक्तमित्यादि।एवमेव यत्र विरोधस्तत्रैवं समाधानं युक्तम्। वार्तिके तु—"यथायथा भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।सासैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता॥" इति मुख्यसमाधानन्तु सर्वेषां वेदान्तानामद्वैते तात्पर्यात्सृष्ट्याद्यर्थवादे तात्पर्याभावादस्तु यथाकथञ्चित्समाधानम्। द्वैते तु न कश्चिद्विरोध इत्युक्तं श्रीधरस्वामिना—मृल्लोहेति ॥*॥ **दीपिका**—त्रिवृत्त्वे हेतुः—यत इति।तन्मात्रहेतुत्वात्तामसः,इन्द्रियहेतुत्वात्तैजसः, मनोदेवहेतुत्वाद्वैकारिकः, विगतः कारो विक्षेपो यस्मात्स विकारः सत्त्वं तत्प्रधानत्वात्सात्त्विक इत्यर्थः । जीवोपाधित्वं जीवस्य सुखदुःखादिहेतुत्वं वेदान्तसाङ्ख्ययोः सृष्टिप्रक्रियायां विरोधमाशङ्क्य समाधत्ते—यद्यपीति। अन्नमयं पृथिवीकार्यम् अपञ्चीकृतभूतेभ्यः पञ्चीकरणावस्थामप्राप्तेभ्यः । पञ्चीकरणञ्च वृद्धैरुक्तम्—" द्विधा विधाय चैकैकं चतुर्द्धा पञ्चमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात्पञ्चपञ्च ते ॥ " इति । लिंगशरीरं सप्तदशतत्त्वात्मकम् । "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम् ॥ " इति श्रीभगवत्पूज्यपादोक्तेः । तस्मिन्ब्रह्माण्डे । क्षीरोदशायीत्यत्र गर्भोदशायीति वाच्यम "प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्" इत्यत्र तथोपगमात् । वैराजस्य स्थूलब्रह्मणो भोगार्थं विग्रहः सूक्ष्मो हिरण्यगर्भः । ततो ब्रह्मणश्चित्ताभिव्यक्तिर्महत्तत्त्वापरपर्यायचित्तस्य ज्ञानरूपपरिणामः । एतावता व्यवहारमात्रप्रदर्शनेन । तथा चोक्तं वार्त्तिककृद्भिः—मृल्लोहेति । मृदादिर्भिर्दृष्टान्तरूपैर्या वेदान्ते सृष्टिस्ततोऽन्यथा या साङ्ख्ये सृष्टिरुक्ता सा चित्तस्यावताराय तत्र प्रवेशाय, भेदस्तु कथञ्चन नास्ति, यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातम् । एवमग्रेऽपि ॥ * ॥ **संदर्भस्तु**—वैकारिक इति तैः । तत्र यद्यपीत्यादौ पुराणैकनिश्चितश्रुत्यर्थानां त्विदं तत्त्वम्—अहङ्कारोपाधेरात्मन आकाशः सम्भूतः मनसोऽन्नमयत्वं चाभिव्यक्तिविशेषापेक्षयेत्यादि ज्ञेयमिति । स्मार्ताश्चैवं तमेवार्थं मन्यन्ते युक्तं च तत् । यथोक्तम्—" वेदार्थादधिकं मन्ये पुराणार्थं वरानने । वेदाः प्रतिष्ठिता देवि पुराणे नात्र संशयः ॥ पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात् । सुदान्तोऽपि सुशान्तोऽपि न गतिं प्राप्नुयात्क्वचित् ॥ यो वेद चतुरो वेदान्साङ्गोपनिषदो द्विजः । पुराणं नैव जानाति न च स स्याद्विचक्षणः॥" इत्यादि, "भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः " इत्यादि च । ' क्षीराब्धिशायी ' इत्यत्र ' गर्भोदशायी ' इति वाच्यम् । चित्तं महत्तत्त्वम् ॥ ७ ॥ तस्मादहंकारात्त्रिविधात् । तेषामिन्द्रियाणाम् । तेषां देवानां मनसश्च ॥ * ॥ तद्द्वारा तन्मात्रद्वारा ॥ ८ ॥ मया चिद्रूपेण संचोदिता आविष्टाः " परेण विशता स्वस्मि

तस्मिन्नहं समभवमंडे सलिलसंस्थितौ ॥ मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्मभूः ॥ १० ॥ सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ॥ लोकान्सपालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥ ११ ॥ देवानामोक आसीत्स्वर्भूतानां च भुवः पदम् ॥ मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात्परम् ॥ १२ ॥ अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ॥ त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥ १३ ॥ योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ॥ महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥

सलिले संस्थितिर्यस्य तत्सलिलसंस्थिति तस्मिन्सलिलसंस्थितावंडे श्रीनारायणरूपो लीलाविग्रहेण समभवं स्थित इत्यर्थः । विश्वाख्यं लोककारणभूतम् । तत्र चात्मभूश्चतुरानननरूपभोगविग्रहेण पुनर्वैराज एव तस्मिन्नाविर्भूत इत्यर्थः ॥ १० ॥ रजसा युक्तो मदनुग्रहात्तपसा कृत्वाऽसृजत् । भूरतलादिसहिता । भुवः अंतरिक्षलोकः । स्वः स्वर्लोकः । महर्लोकादेरप्युपलक्षणम् ॥ ११ ॥ लोकसृष्टिप्रयोजनमाह देवानामिति सार्धेन । ओको निवासः पदं स्थानम् । त्रितयात्परं महर्लोकादि॥ १२॥ भूमेरधः अतलादि । एवं व्यवस्थायां कारणमाह सार्धेन । त्रिलोक्यां पातालादिसहितायाम् ॥ १३ ॥ योगादितारतम्येन यथोत्तरं महर्लोकादयो गतयः । मद्गतिर्वैकुण्ठ

न्मात्रया विश्वसृग्गणः " इत्याद्युक्तेः । उत्तमत्वं तस्य ममायतनत्वादेव ॥ * ॥ स्वयं भगवतस्तदासनासंभवाद्वैराजान्तर्यामिणेति व्याख्यातम् । भावाः सूत्रादयः । आयतनमुपाधिस्तत्रोत्तमत्वं व्यष्ट्यपेक्षया ॥ ९ ॥ (सलिलसंस्थिताविह नुमभावस्त्वार्षः) । लीलार्थं लीलया वा विग्रहो लीलाविग्रहः । इत्यर्थ इति—उपसर्गवशात्स्थित्यर्थोऽत्र भवतिरिति भावः । तत्र कमले । भोगाय सृष्टिव्यवहाराय विग्रहो भोगविग्रहः । ' लीला केलिविलासयोः ' इति । " भोगः सुखे धने चाहेः शरीरफणयोरपि । पालने व्यवहारे च योषिदादिभृतावपि ॥ " इति मेदिनी । इत्यर्थ इति—श्रीनारायण एव चतुराननरूपेण कमलादुद्भूतः " तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् । तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदन्ति सोऽभूत् ॥ " इत्युक्तेरिति भावः ॥ * ॥ सलिलस्य गर्भोदकरूपस्य संस्थितिर्यत्र तस्मिन्नण्डेऽहं गर्भोदशायिरूपो द्वितीयः पुरुषः समभवं स्थित इत्यर्थः । तत्र लोककारणभूते पद्मे ब्रह्मा वैराज एव भोगविग्रहः, पुनश्चतुराननोऽभूदित्यर्थः । सलिलसंस्थिताविति तन्त्रेणोक्तम् ॥ १० ॥ स आत्मभूः । भूरादित्रयमव्ययम् ॥ * ॥ लोकान्भुवनानि ' इत्युपलक्षणम् ' त्रितयात्परम् इत्युक्तेः ॥ ११ ॥ आदिना पश्वादीनां ग्रहः । " धरां रजःस्वभावेन पणयो ये च तानु " इत्युक्तेः । सिद्धानां तपोयोगादिनेति शेषः ॥ * ॥ सिद्धानां योगादिभिः ॥ १२ ॥ आदिना सुतलवितलादिग्रहः । एवं व्यवस्थायाम् । मनुष्यादीनां भूलोकादिस्थितिरूपमर्यादायाम् । सर्वा उच्चावचाः ॥ * ॥ अध इत्यर्द्धकम् । एवं व्यवस्थायां देवादीनां तत्तत्स्थाननियमलक्षणायाम् । त्रिलोक्यामिति सार्द्धकम् । पातालादिकभूर्भुवःस्वश्चेति । कर्मणां गार्हस्थ्यधर्माणाम् । तपो वानप्रस्थत्वं ब्रह्मचर्यञ्च । तत्र ब्रह्मचर्येणोपकुर्वाणनैष्ठिकत्वभेदेन क्रमान्महर्जनश्च, वानप्रस्थत्वेन तपः, न्यासेन सत्त्वं, योगतारतम्येन तु सर्वमिति ज्ञेयम् । मद्गतिरिति तैः । भक्तियोगप्राप्यत्वेन वक्ष्यमाणम् ' यन्न व्रजन्ति ' इत्यादिवाक्यसाहाय्यात्, लोकप्रकरणाच्च । उक्तं च तृतीये देवान्प्रति ब्रह्मणैव—'तत्सङ्कुलं हरिपदानतिमात्रदृष्टैः ' इत्यादि । टीका च—तावन्मात्रेण दृष्टैर्भक्तानां विमानैर्न तु कर्मादिप्राप्यैरित्येषा । एवमेव श्रुतिश्च—" परीक्ष्य लोकान्कर्मचितान् आब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन " इति । तत्राप्यकृत इत्यस्य विशेष्यं लोक इत्येव तत्प्रसक्तेः । 'ईश्वरः सर्वभूतानाम ' इत्यादौ "तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ " इति श्रीभगवद्गीतोपनिषत्सु ॥१३॥ योगादितारतम्येन धारणादिन्यूनाधिक्यभावेन ॥*॥ कर्मणां तद्वतां योगस्याष्टांगस्य न्यासस्य ज्ञानस्येति एतत्त्रितयवतां महारादयश्चत्वारो लोका गतयः प्राप्याः । मद्गतिर्वैकुण्ठलोकः।भक्तियोगस्य

मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ॥ गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १९ ॥ अणुर्बृहत्कृशः स्थूलो योयो भावः प्रसिध्यति ॥
सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥ १६ ॥ यस्तु यस्यादिरंतश्च स वै मध्यं च तस्य सन् ॥ विकारो व्यवहारार्थो यथा तैजसपार्थिवाः॥१७॥
यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम् ॥ आदिरंतो यदा यस्य तत्सत्यमभिधीयते ॥ १८ ॥

लोकः ॥ १४ ॥ तत्र तु मद्गतिव्यतिरेकेणेतरा गतयश्चंचला इत्याह वैराग्यार्थम् । मया कालशक्तिना धात्रा परमेश्वरेण कर्मफलप्रदेन हेतुभूतेन गुणप्रवाहे संसारे उन्मज्जत्याऽऽसत्यलोकमुत्तमा गतीः प्राप्नोति पुनर्निमज्जत्यास्थावरं नीचा गतीः प्राप्नोति ॥ १५ ॥ सृष्टिनिरूपणस्याद्वितीयात्मप्रतिपत्त्यर्थत्वात्तत्प्रतिपादनाय कारणेन कार्यस्य व्याप्तिमाह । अणुरिति । उभयेन संयुक्तो व्याप्तः । तदेवाह । प्रकृत्येति ॥ १६ ॥ इदानीं कार्यस्य कारणात्मतां दर्शयति । यस्य कार्यस्य आदिः कारणमंतो लयस्थानं च तस्य मध्यं मध्यावस्थापि स एव । वै प्रसिद्धं मृत्सुवर्णादिषु । अत एवाव्यभिचारित्वात्स एव सन् सत्यः नेतरः । अलं तर्हि मिथ्याभूतकार्यसृष्ट्या तत्राह । विकार इति । तैजसाः कटककुंडलादयः । पार्थिवा घटशरावादयश्च यथेति ॥ १७ ॥ नन्वेवं स्वकार्यं प्रति महदादीनामप्याद्यंतरूपत्वात्सत्यत्वं स्यात्तत्राह । यदिति । यद्रूपमुपादायोपादानकारणतया स्वीकृत्य पूर्वः कारणरूपो महदादिर्भावः अपरमहंकारादिकं भावं विकुरुते सृजति । यथा पिंडो मृदमुपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत् ।

निर्गुणस्य तद्वतां निर्गुणानां प्राप्योऽपि वैकुण्ठलोको निर्गुण एवेति भावः॥१४॥ तत्र तासु गतिषु । इतरा महर्लोकादिगतयः । “ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ” इति श्रीगीतोक्तेः चञ्चला अस्थिरा कर्मभिर्युक्तम् ॥*॥ मया कर्त्रा इदं जगत् कर्मयुक्तं कर्मफलेन योजितमित्यर्थः । 'फलमत उपपत्तेः' इति न्यायात् ॥१५॥ तत्प्रतिपादनायाद्वितीयात्मनिरूपणाय । अतीतानागतवर्तमानत्वेन योयो भावः पदार्थः प्रसिद्धः।तदेवोभयम्। जडदेहात्मना प्रकृत्या अनुगतसच्चिदात्मना क्षेत्रज्ञतया च पुरुषेणेति विवेकः ॥*॥ दीपिका—अद्वितीयेति अभिन्नात्मज्ञानप्रयोजनकत्वात् । तस्याद्वितीयात्मनः । प्रतिपादनाय निरूपणाय ॥ १६ ॥ कार्यकारणयोरभेदमाह—इदानीमिति।आदिना लोहादिग्रहः। अत एवादिमध्यावसानवर्तित्वादेव।स एव कारणपदार्थ एव । इतरः कार्यपदार्थो न सन्निति । अत्राक्षिपति—अलमिति । तत्तस्मात्।विकारो घटकुण्डलादिः।व्यवहारो जगन्निर्वाहस्तदर्थः।अत्र दृष्टान्तः—यथेति । कटकुण्डलादिविकारभेदं विना व्यवहारसांकर्यापत्तेः । भेदं विना कुण्डलोक्तौ कटकग्रहणमपि स्यादित्यर्थः ॥*॥ ० ॥ १७ ॥ प्रतिवन्द्याशंकते—नन्विति । स्वकार्यमहंकारादि । तद्वत् मृत्पिण्डवत् । स एव कारणरूपभाव एव । पुनराशंकते—कथं तर्हीति । इत्यर्थ इति—मृदादीनां सत्यत्वं स्वकार्यापेक्षं, वस्तुतः सत्यत्वम् “यतो वा इमानि भूतानि” इत्यादिश्रुतेर्ब्रह्मण एवेति भावः ॥ * ॥ दीपिका—यद्याद्यन्तरूपस्य सत्यत्वं तर्हि स्वकार्यमहंकारादिकं प्रति स एव सर्वोपादानरूपः परमात्मैव सन्सत्यः घटादिकं नामधेयमात्रं ह्येतदनृतम्, “मृत्तिकेत्येव सत्यम्” नाममात्रं विकारो न कारणात्पृथगस्तीत्येवकारार्थ इति श्रुतिपदार्थः । परमकारणस्य सत्यत्वविवक्षा चेत्थम्—यदा पृथिव्या आदिरन्तश्च विवक्ष्यते तदा तत्कारणं जलमेव सत्यम्, यदा तस्य सा विवक्षा तदा तेज एव सत्यम्, एवं तस्यापि सा चेत्तदा वायुरेव सत्यः, तस्यापि सा चेत्तदाकाश एव सत्यः, तस्यापि सा चेत्तर्हि अहंकार एव, तस्यापि सा चेत्तर्हि महानेव, तस्यापि सा चेत्तर्हि प्रधानमेव, तस्यापि चेत्तर्हि काल एव, तस्यापि सा चेत्तर्हि महापुरुष एव, तस्यापि

१ टीकायाम् 'तदाह विकार' इति पाठमभिप्रेत्यैतदिति प्रतिभाति ।

प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोभिव्यंजकः कालो ब्रह्म तत्त्रियं त्वहम् ॥ १९ ॥ सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः ॥ महान्गुण विसर्गाऽर्थः स्थित्यंतो यावदीक्षणम् ॥ २० ॥ विराण्मयाऽसाद्यमानो लोककल्पविकल्पकः ॥ पंचत्वाय विशेषाय कल्पते भुवनैः सह ॥ २१ ॥

स एव सन्निति पूर्वस्यानुषंगः । कथं तर्हि "मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिस्तत्राह । आदिरिति । यदा यस्यादिरंतश्च विवक्ष्यते तदा तत्सत्यमित्यभिधीयते श्रुत्या । परम कारणात्मनः सत्यत्वविवक्षयेत्यर्थः ॥ १८ ॥ ननु तथापि प्रकृतिपुरुषकालानामकार्यभूतानां भिन्नत्वात्कथमद्वितीयता तत्राह । प्रकृतिरिति । अस्य सतः कार्यस्योपा दानं या प्रकृतिः प्रसिद्धा यश्च तस्या आधारोऽधिष्ठाता परः पुरुषो यश्च गुणक्षोभेणाभिव्यंजकः कालस्तत्त्रितयं ब्रह्मरूपोऽहमेव न तु पृथक् । प्रकृतेः शक्तित्वात्पुरुषका लयोरवस्थारूपत्वात् ॥ १९ ॥ एवं तावत्कालत्रयेऽप्यव्यभिचारित्वाद्ब्रह्मैव सत्यमिति वक्तुं तस्य सृष्टिकारणत्वेनादौ सत्त्वमुक्त्वा मध्येऽपि तस्यैव सत्त्वमुपपादयितेऽप्यव धित्वेन सत्त्वं दर्शयिष्यन्सर्गप्रवाहरूपायाः स्थितेरवधिमाह । सर्ग इति । महान्बहुलः । पौर्वापर्येण पितृपुत्रादिरूपेण । नित्यशः अविच्छेदेन प्रवर्तते । किमर्थं प्रवर्तते तदाह । गुणेषु देहेषु विविधतया सृज्यत इति गुणविसर्गो जीवस्तदर्थस्तद्भोगप्रयोजनः । किंपर्यंतं प्रवर्तते तदाह । यावत्स्थितेरंतः । सोऽपि किमवधिकस्तत्राह । यावदी क्षणं परमेश्वरस्येक्षणं यावत् तावत् ॥ २० ॥ प्रलयं निरूपयति । विराट् ब्रह्मांडं मया कालात्मना आसाद्यमानो व्याप्यमानो लोकानामहरहः । कल्पाः सृष्टिप्रलया

सा चेत्तर्हि श्रीकृष्ण एवेति श्रीकृष्णस्यैव परमकारणत्वं श्रुत्यभिप्रेतम् । तथैवाग्रे स्वयमेव व्याख्यास्यति । किञ्च–मृदादीनामापेक्षिकं सत्यत्वं प्रकृतेस्तु परमकारणत्वलक्षणमात्यंतिकं सत्यत्वमायातम् । अत्र करणस्यैव कार्यरूपत्वेन प्रतिपादनादुभयोरपि कार्यकारणयोर्वस्तुतः सत्यत्वेऽपि 'तत्सत्यमभिधीयते' इत्युक्तेः कारणस्य सत्यं नामैव भगवता कृतमित्यवसीयते " मृत्तिकेत्येव सत्यम्" इति श्रुतेः । सत्कार्यवादेऽपि व्याख्यानार्थमत एव तत्सत्यं भवतीत्यप्रयुज्य सत्सत्यमभिधीयत इत्युक्तम् । व्याख्यानान्तरेऽध्यायेऽस्मिन्मायावादस्याप्रसंगात् कार्यकारणयोर्लक्षणस्य सर्वैरेव ज्ञातत्वाद्वाक्यस्यास्य वैयर्थ्यमेवापद्येतेत्यवधेयम् ॥ १८ ॥ अद्वि तीयत्वन्त्वेवमपि ब्रह्मणो न सेत्स्यतीत्याक्षिपति–नन्विति । यद्यपि कार्याणां कारणाभिन्नत्वं तथापीति । दृश्यतया मिथ्याभूतस्यापि सतोऽधिष्ठानस्य सत्तया प्रतीयमानस्य माययैवोपादानं कल्पितोरगस्य रज्जुवद्यद्यपि ब्रह्मण उपादानत्वमायातीति चेत्तत्राप्यज्ञानमेवोपादानं न तु ब्रह्मेति । अधिष्ठाता सत्तास्फूर्तिप्रदमाधिष्ठानं प्रकृतिकालयोरपि मदधिष्ठानकत्वेन मदतिरिक्तसत्ताभावात् ॥ * ॥ ननु तर्हि परमेश्वरस्य तव कथं परमकार णत्वलक्षणमात्यन्तिकसत्यत्वं तत्राह–प्रकृतिरिति तैः । एवं च प्रकृतेर्जगदुपादानत्वादेव मम जगदुपादानत्वं तस्याविकारित्वेऽपि न मे विकारित्वं तस्या मच्छक्तित्वेऽपि मत्स्वरूपशक्तित्वाभावात् । किन्तु बहिरंगशक्ति त्वमेव मत्स्वरूपस्य मायातीतत्वेन सर्वशास्त्रप्रसिद्धेः ॥ १९ ॥ सर्गावधिमाह–एवमिति । स्थितेः प्रवाहरूपायाः । सोऽपि स्थित्यन्तोऽपि । तत् स्थित्यवधित्वम् ॥ * ॥ ननु जगत्सर्गोऽयं कियत्कालावधिरिति चेत्स्थितिकालपर्यन्त इत्याह–सर्ग इति । महानतिबहुलः । स्थितेः पालनस्यान्तः समाप्तिः । स चान्त एव किमवधिकस्तत्राह–यावदीक्षणम् । पालनेच्छानुकूलमिति **विश्वनाथः** ॥ २० ॥ तान् लोककल्पा दीन् । स्वस्मिन्स्वरूपे । तेषां पञ्चभूतानाम् । इत्यर्थ इति–पञ्चीकरणरीत्या पञ्चभूतैक्येनैव ब्रह्माण्डोत्पत्तिरस्ति " पञ्ची करोति भगवान्प्रत्येकं वियदादिकम् । द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ॥ स्वस्वेतरद्वि

अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ॥ धाना भूमौ प्रलीयंते भूमिर्गंधे प्रलीयते ॥ २२ ॥ अप्सु प्रलीयते गंध आपश्च स्वगुणे रसे ॥ लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥ २३ ॥ रूपं वायौ स च स्पर्शे लीयते सोऽपि चांबरे ॥ अंबरं शब्दतन्मात्र इंद्रियाणि स्वयोनिषु ॥ २४ ॥ योनिर्वैकारिके सौम्य लीयते मनसीश्वरे ॥ शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥

विविधाः कल्पंते यस्मिंस्तान्वा स्वस्मिन्विकल्पयतीति स तथाभूतोऽपि पंचत्वरूपाय विशेषाय विभागाय कल्पते योग्यो भवति । पंचानां भूतानामैक्यरूपस्तेषां पृथग्भावापत्त्या नश्यतीत्यर्थः ॥ २१ ॥ तत्र "तस्माद्वा एतस्मादात्मन आकाशः संभूतः ॥ आकाशाद्वायुः ॥ वायोरग्निः ॥ अग्नेरापः ॥ अद्भ्यः पृथ्वी ॥ पृथिव्या औषधयः ॥ ओषधीभ्योऽन्नम् ॥ अन्नाद्रेतः ॥ रेतसः पुरुषः ॥ " इति श्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन लयमाह । अन्न इति । मर्त्यं शरीरं येनोपचितं तस्मिन्नन्ने शतवर्षायामनावृष्टौ क्षीणे सति तत्रैव लीयत इत्यर्थः । अन्नं धानासु । बीजमात्रावशेषं भवतीत्यर्थः । धाना भूमौ उप्ता न प्ररोहंतीत्यर्थः । भूमिर्गंधे संवर्तकादित्यशोषिता संकर्षणमुखाग्निना दग्धा च सती भूतसूक्ष्मरूपगंधमात्रावशेषा भवति ॥ २२ ॥ गंधः शतवार्षिक्या वृष्ट्या प्लाव्यमानोऽप्सु लीयते । एवमेवापो ज्योतिषा शोष्यमाणा रसमात्रावशेषा भवंति । ततो रसोऽपि तस्मिञ्ज्योतिषि लीयते । ज्योतिश्च वायुनाऽभिभिभूयमानं रूपमात्रं सत्तस्मिन् लीयते ॥ २३ ॥ वायुश्च कालप्रेरितेनांबरेण ग्रस्तः स्पर्शमात्रः संस्तस्मिन् । अंबरं च भूतादिनाऽहंकारेण ग्रस्यमानं शब्दतन्मात्रे लीयते । तदेवं तामसाहंकारकार्यस्य शब्दपर्यंतं लयमुक्त्वा राजसाहंकारकार्यस्याप्याह । इंद्रियाणि स्वयोनिष्विति । स्वप्रवर्तकदेवतासु इंद्रियाणां लयः तेषां प्रवृत्तिस्वभावत्वात्प्रवृत्तेश्च देवताधीनत्वात्तासु लय इति वाचोयुक्तिः । वस्तुतस्तु स्वकारणे राजसाहंकार एव लयोऽभिप्रेतः ॥ २४ ॥ योनिरित्युद्देश्यगतत्वादेकत्वमविवक्षितम् । योनयो देवतास्तु

तीयांशैर्योजनात्पञ्च पञ्चधा । तैरण्डस्तत्र भुवनम् " इति विद्यारण्योक्तेस्तेषां पञ्चभूतानां पृथग्भावापत्त्या ब्रह्माण्डनाशो भवतीति भावः ॥ * ॥ तदनन्तरं किं भविष्यतीति चेत्प्रलय एवेति तं निरूपयति—लोकानां भूरादीनां मनुष्यतिर्यगादीनां वा कल्पः सामान्यतः कल्पनाविकल्पो विशेषतश्च कल्पना यत्र सः । पञ्चत्वरूपो यो विशेषो विभागस्तस्मै तं प्राप्तुं कल्पते पञ्चत्वं मृत्युः ॥ २१ ॥ तत्र पञ्चत्वे । इत्यर्थ इति—अन्नाप्राप्त्या देहा नश्यन्त्येवेति भावः । इत्यर्थ इति—वृष्ट्यभावाद्यत्रकुत्रचिदत्यल्पं बीजमात्रमवशिष्यत इति भावः । " धाना धान्याकबीजयोः । नव्यांकुरे भृष्टयवे स्वशालायां स्त्रियामपि । " इति कोशात् । इत्यर्थ इति—जलासम्बन्धादेवोत्पत्त्यभावोऽपि धरणिधानासलिलसंयोगस्यैवांकुरोत्पादकत्वदर्शनादिति भावः । संवर्तकादित्यशोषिता प्रलयकालीनसूर्यातितप्ता ॥ * ॥ तत्र पञ्चत्वरूपपृथग्भावापत्तौ । तस्मादिति " ब्रह्मविदाप्नोति परं तदेष भोक्ता सत्यं ज्ञानमनन्तं ब्रह्म " इति तैत्तिरियिके प्रकृतात् । एतस्मादुपहिताद्ब्रह्मणः पुरुषोपाधित्वात् । पुरुषोऽन्नरसमयः स्थूलदेहः । तत्रैवान्नेऽन्नोत्पादकपृथिव्यंश इत्यर्थः । शतवर्षव्यापिन्यनावृष्टिर्यां भवेत्तन्मध्य एव प्रथमं शरीरस्य तदनन्तरमेवान्नस्य कार्त्स्न्येन नाशात् ॥ २२ ॥ ततो रसमात्रावशेषत्वोत्तरम् । तस्मिञ्ज्योतिष्येव । तस्मिन्वायौ ॥ * ॥ ० ॥ २३ ॥ तस्मिन्नाकाशे । तेषामिन्द्रियाणाम् । रजश्चलमित्युक्ते राजसत्वेन प्रवृत्तिस्वभावत्वं प्रवृत्तिस्वभावत्वेऽपि जडानां स्वतः प्रवृत्तिर्नास्तीति तस्या देवताधीनत्वोक्तिः । तासु देवतासु । प्रवृत्तिरहितानां लयप्रायत्वं स्वकार्यासमर्थत्वादिति वाचोयुक्तिरेव । लयस्तु स्वकारण एवेत्याह—वस्तुतस्त्विति ॥ * ॥ स्वयोनिषु स्वयोनौ तैजसाहङ्कारे ॥ २४ ॥ योनिमुद्दिश्य लयविधानाद्योनिरुद्देश्यो लयो विधेयोऽत्रेति । अविवक्षितं विवक्षावन्न ' गृहं संमार्ष्टि ' इतिवत् । यथा

स लीयते महान्स्वेषु गुणेषु गुणवत्तमः ॥ तेऽव्यक्ते संप्रलीयंते तत्कालं लीयतेऽव्यये ॥ २६ ॥



मनसि । कुतः । ईश्वरे नियंतरि । 'मनोवशेऽन्ये ह्यभवन्स्म देवाः' इत्युक्तत्वात् । इंद्रियलयोक्त एवात्राप्यभिप्रायः । मनश्च देवताभिः सह वैकारिकेऽहंकार इत्यर्थः । तामसाहंकारकार्यावशेषितस्य शब्दस्य लयमाह । शब्दो भतादितामसाहंकारमप्येति तस्मिन् लीयत इत्यर्थः । भूतादिरित्युपलक्षणम् । त्रिविधोऽप्यहंकारो महति जडांशं विहाय ज्ञानक्रियाशक्तिमात्ररूपो भवति । कथंभूतः । प्रभुः समर्थः सर्वजगन्मोहकत्वात् ॥ २५ ॥ स च महान्स्वकारणेषु गुणेषु । ज्ञानक्रियाशक्तिमत्त्वाद्गुणवत्तमस्ताद्दग्भावं विहाय गुणमात्ररूपो भवति । तेऽव्यक्ते प्रकृतौ साम्यावस्थां गच्छंतीत्यर्थः । तदव्यक्तं काले कालाधीनत्वात्तेनैकीभूयावतिष्ठते । अव्यये उपरतवृत्तौ ॥ २६ ॥

गृहमुद्दिश्य संमार्गस्य तत्र विधेयत्वात् । उद्देश्यविधेयभावे ह्युद्देश्यगता सङ्ख्याया विवक्षा न भवति विधेयस्य सा विवक्ष्यते "विशेष्यस्यानुसारेण लिंगाद्या हि विशेषणे । यत्रोद्देश्यविधेयत्वं तत्रायं नियमो न हि ॥ स्यात्तत्तदजहल्लिंगमजहद्वचनं च तत् । रामदाराश्च सीतेयं करुणाभाजनं हरिः ॥" इत्याद्युक्तम् । अन्यदेतत् । अत्रापि देवलयेऽपि । इन्द्रियलयो यथा प्रवर्तकाधीनतयोक्तस्तथा मनसोऽपि 'मनोवशेऽन्ये' इत्युक्तदिशा देवप्रवर्तकत्वात्तत्र देवलयोऽपीत्यभिप्रायस्तात्पर्यम् । इत्यर्थ इति—यद्यप्यत्र मनोलयो नोक्तस्तथापि तस्य वैकारिकत्वात्तत्रैव लय इत्यनुक्तोऽपि ज्ञेय इति भावः । सिंहावलोकनेन पुनराह—तामसेत्यादि । इत्यर्थ इति—स्वकारणे प्रविशतीति भावः ॥ * ॥ योनिस्तैजसाऽहंकारो वैकारिकाहंकार्ये मनसि कुत ईश्वरे तैजसाहंकारस्य ज्ञानकर्ममयत्वाज्ज्ञानकर्मणोश्च ज्ञानेन्द्रियकर्मेन्द्रियरूपत्वात् । ज्ञानेन्द्रियकर्मेन्द्रियाणां च मनस एवेशितव्यत्वान्मन एव तेषामीश्वर इति युक्तेः । अम्बरं शब्दतन्मात्र इत्युक्तम् । तस्य शब्दतन्मात्रस्य लयमाह—भूतादिं शब्दोऽप्येति तत्र लीयत इत्यर्थः ॥ * ॥ **संदर्भस्तु**—योनिः सर्वेन्द्रियप्रवृत्तिहेतुर्मनः वैकारिके सात्त्विकाहंकारे तस्मिन्कथंभूते मनसीश्वरे व्यधिकरणसप्तम्यौ मनसः सप्तमी च "स्वामीश्वराधिपति—" इत्यादिना । मनःकारणत्वान्मनोधिष्ठातरीश्वर इत्यर्थः । उपलक्षणं चैतद्देवतालयस्य महति सूत्रसंयुत इति ज्ञेयम् 'महांश्च सूत्रसंयुतः' इति ज्ञापितत्वात् ॥ * ॥ **दीपिका**—उद्देश्यगतत्वादनुवाद्यप्राप्तत्वात् । स्वयोनिषु इति—यत्पूर्वमुक्तं तस्यैव योनिरित्यनुवादः । तथा च—बहुवचनस्य योनिशब्दस्य बहुवचनतयैवानुवादितुमौचित्यादेकत्वं विवक्षितं गृहं संमार्ष्टीतिवत् । अत्रापि मनसि देवतालयेऽपि । अभिप्राय इति—देवतानां मनोधीनत्वान्मनसि लय इति वाचोयुक्तिः । वस्तुतस्तु—स्वकारणे सात्त्विकाहंकार एव लयोऽभिप्रेत इत्यर्थः । रिक्तमर्थात्पूरयति—मनश्चेति । "वैकारिकान्मनोजज्ञे देवा वैकारिका दश" इत्युक्तेस्तत्कार्याणां तेषां तत्र लयस्याभिप्रेतत्वात् ॥ २५ ॥ ताद्दग्भावं ज्ञानक्रियाशक्तिभावम् । इत्यर्थ इति—गुणसाम्यावस्थैव प्रकृतिस्तद्भाव एव तेषां लय इति भावः । कालाधीनत्वात्प्रकृतिव्यापारस्य 'कालाद्गुणव्यतिकरः' इत्याद्युक्तेः । तेन कालेन ॥ * ॥ **दीपिका**—ताद्दग्भावं गुणवत्तमत्वं जडांशमित्यर्थः । गुणमात्ररूपम् अहंकारवज्ज्ञानक्रियाशक्तिमात्ररूपः । मायावस्थायाः कालकृतत्वात् तेन कालेन सहाभिन्नीभूय । उपरतवृत्तौ निमेषाद्यवस्थाहीने ॥ * ॥ **विश्वनाथस्तु**—गुणानां वैषम्यत्याग एव लयो विवक्षितः प्रकृतेर्गुणसाम्यरूपत्वात् । ततः अव्यक्तं काले लीयत इति प्रकृतेर्लयो व्याख्यातुमशक्यः । "न तस्य कालावयवैः परिणामादयो गुणाः । अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥" इति द्वादशोक्तौ प्रकृतेर्नित्यत्वश्रवणात् । जायन्तेयोपाख्याने ऽप्यन्तरिक्षेण प्रलयवर्णने प्रकृतेर्लयो नोक्तः । अत एवाव्यक्तम् । "लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा । शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥" इति । तस्मादेवं व्याख्येयम्—तत्काले तस्मिन्काले ते

कालो मायामये जीवे जीव आत्मनि मय्यजे ॥ आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥
एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ॥ मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥

मायामये मायाप्रवर्तके ज्ञानमये वा अत एव जीवयतीति जीवस्तस्मिन्महापुरुषे। अयं भावः । विश्वस्रष्टुर्महापुरुषस्योपकरणरूपः कालो वृत्त्यंशेन सृज्यश्चातस्तदात्मनाऽवतिष्ठत इति । तदुक्तं सप्तमे । " कालं चरंतं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेवसत्यकृत् " इति । दशमे च " योऽयं कालस्तस्य तेऽव्यक्तबंधो चेष्टामाहुश्चेष्टते येन विश्वम् ॥ निमेषादिर्वत्सरांतो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये" इति जीव आत्मनि प्रकृतेर्लीनत्वेन प्रतियोग्यभावात्परिपूर्णत्वेन सद्रूपेणावतिष्ठते आत्मा चात्मस्थ एव नान्यत्र लीयते । यतः केवलो निरुपाधिः । तत्र हेतुः । विकल्पापायाभ्यां विश्वोत्पत्तिप्रलयाभ्यां लक्ष्यतेऽधिष्ठानत्वेनावधित्वेन वेति तथा सः ॥ २७ ॥ अस्य कथनस्य प्रस्तुतोपयोगमाह ।

गुणाः अव्यक्ते सम्प्रलीयन्ते ततश्च कालो लौकिकः सृज्यः ॥ * ॥ **सन्दर्भस्तु**—काले तच्छक्त्यात्मक ईश्वरेऽत एवाव्यये ॥ २६ ॥ मायाप्रवर्तकत्वं जीवस्यापीन्द्रजालादौ दृश्यतेऽत आह—अज्ञानमये मायोपाधिके । जीवस्याविद्योपाधिकत्वान्मायोपाधिकत्वं नास्ति " मायाकारणमज्ञानमविद्याकार्यमुच्यते । कार्योपाधिर्भवेज्जीवः कारणोपाधिरीश्वरः ॥ " इत्युक्तेः । यद्वा—मीयतेऽनयेति माया बुद्धिर्ज्ञानमिति यावत् । तन्मये ज्ञानप्रधाने । अत एव मायाप्रवर्तकत्वाज्ज्ञानप्रधानत्वाद्वा । अत्राशयमाह—अयं भाव इति । यतो वृत्त्यंशेन सृज्योऽतो हेतोः । तदात्मना महापुरुषात्मना । कालस्य सृज्यत्वे प्रमाणमाह—तदुक्तमिति । मयि सर्वाधारे । प्रकृतिनिरूपितमेवेशजीवभेदो न वास्तवः " माया जीवेशावाभासेन करोति " इति श्रुतेस्तल्लये जीवेशत्वादिनिरूपकाभावात्परिपूर्णस्वरूपेणावस्थानमाह—प्रकृतेरिति । अत्र निरुपाधित्वे ॥ * ॥ **दीपिका**—अत एव कालः क्रियाणां क्रमानुसन्धानात्मकः । महापुरुषे कारणार्णवशायिनि पुरुषावतारे । ननु कालस्य नित्यत्वं श्रूयते कथं लय इत्यत्राह—अयं भाव इति । उपकरणरूपचेष्टात्मकः वृत्त्यंशेन क्रियाणां क्रमानुसन्धानात्मकत्वेन । तत् चेष्टारूपत्वं सृज्यत्वं च तत्र सप्तमे चेष्टारूपत्वं च दशमे इति योजनीयं प्रतियोग्यभावात् । प्रकृतीक्षणावस्थाया एव महापुरुषत्वात् । यस्या ईक्षणं क्रियते तस्या ईक्षणकर्मत्वेन प्रतियोगिन्याः सम्बन्धिन्याः प्रकृतेरभावादित्यर्थः । परिपूर्णपुरुषस्याप्यंशी सदित्युपलक्षणं सदानन्दरूपो योऽहं तद्रूपेणेत्यर्थः । तथैव व्याख्यातं स्वामिभिरेव । अंशभागेनेत्यत्र अंशेन पुरुषरूपेण मायाया भागो भजनमीक्षणं यस्येति । अत्र निरुपाधित्वे ॥ * ॥ **संदर्भस्तु**—यस्तु क्रियाणां क्रमानुसन्धानात्मकस्तत्कार्यरूपलौकिकः कालः स तु मायामये तदनुसन्धातरि जीवे लीयते । मायाशब्देन तैर्ज्ञानं व्याख्यातम् 'माया वयुनं ज्ञानम्' इति निघण्टुः । स जीव आत्मनि परमात्मरूपे मयि तस्य तु लयाभावमाह—अज इति । किंतु स परमात्मा परमपुरुषः केवले शुद्धे आत्मनि भगवद्रूपे स्वस्वरूपे स्थितो भवति । कीदृशः सन्—विकल्पानां सृष्टिस्थितिप्रलयानामप्ययोऽनंगीकारो यत्र तादृशस्वरूपः सन्निति ॥ * ॥ **विश्वनाथस्तु**—मायामये मायोपाधौ जीवे लीयत इति पूर्वेणान्वयः । न व्येतीत्यव्ययस्तस्मिन्निति जीवस्यापि तटस्थशक्तित्वान्नित्यत्वेन तत्त्वान्तराणामिव स्वरूपलयानौचित्यात्, स च जीव आत्मनि परमात्मनि मयि लीयतेऽव्ययत्वादप्रच्युतस्वरूप एव संश्लिष्टस्तिष्ठतीत्यर्थः । आत्मात्मस्थ एव विराजते केवलो निरुपाधिः यतो विकल्पाप्ययाभ्यां विश्वोत्पत्तिप्रलयाभ्यां लक्ष्यते ॥ २७ ॥ किमर्थं सांख्यनिरूपणं कृतमित्युत्सुकमाह—अस्येति । एवमुक्तरीत्या विमृशतः ॥ * ॥ **दीपिका**—अस्य सांख्यकथनस्य । प्रस्तुते द्वन्द्वसहने उपयोगमु

एष सांख्यविधिः प्रोक्तः संशयग्रंथिभेदनः ॥ प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥ इति श्रीमद्भा० महापुराण एका०भगवदुद्धवसंवादे सांख्यतत्त्वनिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ श्रीभगवानुवाच ॥ गुणानामसमिश्राणां पुमान्येन यथा भवेत् ॥ तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥ शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ॥ तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ॥ २ ॥ काम ईहा मदस्तृष्णा स्तंभ आशीर्भिदा सुखम् ॥ मदोत्साहो यशः प्रीतिर्हास्यं वीर्यं बलोद्यमः ॥ ३ ॥

एवमिति । मनसः कथं भेदनिमित्तो भ्रमः स्यात् । जातो वा कथं हृदि तिष्ठेदिति ॥ २८ ॥ उपसंहरति । एष इति ॥ २९ ॥ प्रत्यक्षमिव येनेदं दर्शितं तत्त्वमात्मनः ॥ सांख्यप्रख्यानतस्तस्मै हरये गुरुवे नमः ॥ १ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे श्री०टीकायां चतुर्विंशोऽध्यायः ॥२४॥ पंचविंशे स्वनैर्गुण्यप्रतिपत्त्यै निरूप्यते ॥ चित्तप्रभवसत्त्वादिगुणवृत्तिरनेकधा ॥ १ ॥ प्रकृतिपुरुषविवेकज्ञानवतोऽपि यावत्प्रयत्नविशेषेण गुणत्रयवृत्तिजयो न स्यान्न तावद्द्वंद्वोपरमोऽतस्तज्जयोपायकथनाय गुणवृत्तिनिरूपणार्थमाह गुणानामिति । सह मिश्रीभूय वर्तमानाः समिश्रा न समिश्रा असमिश्रास्तेषां विभक्तानां गुणानां मध्ये येन गुणेन यथा यादृशो भवेत्तदिदं कथयतो मत्तो निबोधेत्यर्थः ॥ १ ॥ तत्र सत्त्ववृत्तीराह । शम इति । शमो मनोनिग्रहः । दमो बाह्येंद्रियनिग्रहः । तितिक्षा सहिष्णुत्वम् । ईक्षा विवेकः । तपः स्वधर्मवर्तित्वम् । स्मृतिः पूर्वापरानुसंधानम् । तुष्टिर्यथालाभसंतोषः । त्यागो व्ययशीलता । अस्पृहा विषयेषु वैराग्यम् । श्रद्धा आस्तिक्यं गुर्वादिषु । ह्रीरनुचिते कर्मणि लज्जा । तेषामनवलोकनम् । दया दानम् दय—दानगतिरक्षणेष्विति स्मरणात् । आदिशब्देनार्जवविनयादि । स्वनिर्वृतिरात्मरतिः ॥ २ ॥ रजसो वृत्तीराह । कामोऽभिलाषः । ईहा व्यापारः । मदो दर्पः । तृष्णा लाभे सत्यप्यसंतोषः । स्तंभो गर्वः । आशीर्धनाद्यभिलाषेण देवतादिप्रार्थनम् । भिदा अहमन्य इति भेदबुद्धिः । सुखं विषयभोगः । मदोत्साहो मदेन युद्धाद्यभि

प्रकारताम् । अन्वीक्षमाणस्य विचारयतः वैकल्पिको देहोऽहमिति मनसो भ्रमः कथं हृदि तिष्ठेतेति उक्तलक्षणेन सांख्येनात्मानात्मविवेके सति देहस्यानात्मत्वनिर्धारणादिति भावः ॥ २८ ॥ संशयानामसम्भावनादीनं ग्रन्थेश्चानाद्यध्यासरूपविपर्ययस्य भेदनः । अगोचरतत्त्वे साक्षाद्वागप्रवेशेन प्रतिलोमानुलोमाभ्यामध्यारोपापवादाभ्यामुपाधिबाधेन । परावरदृशा सर्वज्ञेन ( २९ ) येनं गुरुरूपेण हरिणा । इवशब्दो वस्तुत आत्मनो गोचरतामाह ( १ ) ॥ * ॥ परावरदृशा मयेति—सर्वादित्वं सर्वशेषत्वं स्वयंभगवद्रूपस्य स्वस्यैव स्थापितम् ॥ * ॥ **दीपिका**—सर्वावताराबतारिमूलरूपत्वमित्यात्मतत्त्वपदार्थः ॥ २९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥ स्वस्य स्वरूपभूतं यन्नैर्गुण्यं तस्य प्रतिपत्त्यै ज्ञापनाय । चित्ते प्रभवो यस्याः सा चासौ गुणानां वृत्तिरिति ( १ ) । निरूपणफलमाह—प्रकृतिपुरुषेति । यतो द्वन्द्वोपरमो गुणत्रयवृत्तिजयाधीनोऽतो हेतोः । तासां गुणवृत्तीनां जयोपायस्य कथनाय गुणवृत्तिनिरूपणमेवार्थस्तम् । ‘ न हि शत्रुमविज्ञाय तज्जयः कर्तुं शक्यः ’ इति न्यायात् । येन गुणेन । तदिदं गुणिनां पार्थक्येन कथनम् । इत्यर्थ इति—धातूनामनेकार्थत्वात्सोपसर्गत्वाद्वा धरतिरत्र श्रवण इति भा ॥ * ॥ हे पुरुषवर्येति—एतादृशमदुक्तिधारणादेव पुरुषेषु श्रैष्ठ्यं लभ्यत इति भावः ॥ १ ॥ तत्रादौ ॥ * ॥ ० ॥ २ ॥ ० ॥ * ॥ ० ॥ ३ ॥

क्रोधो लोभोऽनृतं हिंसा याच्ञा दंभः क्लमः कलिः ॥ शोकमोहौ विषादार्ती निद्राऽऽशा भीरनुद्यमः ॥ ४ ॥ सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ॥ वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥ सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः ॥ व्यवहारः सन्निपातो मनोमात्रेंद्रियासुभिः ॥ ६ ॥ धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ॥ गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥

निवेशः । यशःप्रीतिः स्तुतिप्रियता । हास्यमुपहासः । वीर्यं प्रभावाविष्कारः । बलेनोद्यमो न्यायेनोद्यमः सात्त्विक एव ॥ ३ ॥ तमोवृत्तीराह क्रोध इति । क्रोधोऽसहिष्णुता । लोभो व्ययपराङ्मुखता । अनृतमशास्त्रीयं प्रमाणमिति भाषणम् । हिंसा द्रोहः । याच्ञा प्रार्थना । दंभो धर्मध्वजित्वम् । क्लमः श्रमः । कलिः कलहः । शोकमोहौ अनुशोचनं भ्रमश्च । विषादार्ती दुःखं दैन्यं च । निद्रा तंद्रा । आशा मे इदं भविष्यतीत्यन्वीक्षा । भीर्भयम् । अनुद्यमो जाड्यम् ॥ ४ ॥ अनुपूर्वशः क्रमेणैताः श्लोकत्रयोक्ता वर्णितप्रायाः । अन्या अप्यूह्या इति भावः ॥ ५ ॥ विभक्तानां गुणानां वृत्तयो वर्णिताः मिश्राणामाह सन्निपात इति त्रिभिः । अहं ममेति ममतानुषक्तसर्ववृत्तिसामानाधिकरण्यदर्शनात्सन्निपातजत्वम् । अहं शांतः कामी क्रोधीत्यादि । तथा मम पुत्रः शांतः कामी क्रोधीत्यादि । तथा मम शांतिरस्ति कामः क्रोध इत्यादि द्रष्टव्यम् । तत्पूर्वकः सर्वो व्यवहारश्च सन्निपातकार्यमित्याह । व्यवहार इति । अत्र हेतुः । मनश्च मात्राणि शब्दादीनि चेंद्रियाणि चासवश्च तैः । मनआदीनां सात्त्विकतामसराजसत्वात्तैर्व्यवहारः सन्निपातज इति भावः ॥ ६ ॥ असौ पुरुषो यदा धर्मादिषु परिनिष्ठितो भवति तदाऽयं त्रिषु धर्मादिषु निष्ठारूपः सन्निकर्षः सन्निपातकार्यम् । धर्मादीनां

क्रोधः प्रज्वलनात्मता । दम्भोऽविद्यमानमहिमप्रकटनम् ॥ * ॥ ० ॥ ४ ॥ इति भाव इति—न तूक्ता एव गुणवृत्तयोऽपि तु सौशील्यकृत्रिमप्रभावपरोत्कर्षासहनादिरूपा अन्या अपि प्रायपदसूचिताः सन्तीति भावः । अथो गुणवृत्तिपार्थक्यकथनोत्तरम् । सन्निपातं मिश्रीभावम् "मिश्रीभावे सन्निपातो वृन्दे रोगेऽपि दुर्जये" इति निरुक्तिः ॥ * ॥ वर्णितप्रायाः स्पष्टीकृत्यावर्णिता अपि वर्णिता एवेत्यर्थः ॥ ५ ॥ अहमिति शान्तादित्रिभिर्युज्यते । आदिनाऽहं दान्तः स्पृही लोभीत्यादिग्रहः । द्वितीयादिना मम तितिक्षा तृष्णा हिंसाऽस्तीत्यादिग्रहः । तत्पूर्वकोऽहंकारपूर्वकः । अत्राहंव्यवहारस्य सन्निपातकार्यत्वे । इति भाव इति—व्यवहारस्य त्रिगुणात्मकत्वात्सन्निपातत्वमेवेति तात्पर्यम् ॥ * ॥ **दीपिका**—शमादीनां सामानाधिकरण्यमेकाधिकरणवृत्तित्वं तस्याहंममेति वृत्तौ दर्शनात् । यत्राहंममकारौ स्तस्तत्रैव शांतिक्रोधादीनामुदयो न तु ब्रह्मविदि निरहंकार इत्यर्थः । तत्पूर्वकोहंकारममकारपूर्वकः । अत्र सन्निपातकार्यत्वे । सन्निपातजं मिश्रगुणवृत्तिकार्यम् ॥ * ॥ **विश्वनाथस्तु**—अहमिति ममेति या मतिः स सन्निपातः । ततश्च मनआदिभिः सर्वोऽपि व्यवहारः सन्निपात इत्यन्वयः । यदि कदाचिच्छमादिकामादिक्रोधादीनामत्युद्रेको भवेत्तदायं पुरुषो मूर्तः शम इति मूर्तः काम इति मूर्तः क्रोध इत्युच्यते, तेन पुरुषेण व्यावहारिकाणामहंकारममकारमूलको लौकिकः कोऽपि व्यवहारो न सिद्ध्यति अतिशान्तस्याहंकारममकारयोः स्वत एवाभावात् । कामान्धस्य क्रोधान्धस्य च अहममुकस्य प्रतिष्ठितस्य पुत्रो ममेदमुचितमिदमनुचितमिति विवेकगन्धस्याप्यभावादेव सतोरपि तयोरभावात् । व्यवहारसिद्धिस्तु मनआदिभिः सत्त्वादिमेलनरूपेण समुचितेनेति ॥ ६ ॥ तथात्वं सत्त्वादिगुणभिन्नकार्यत्वम् । आवहति करोति ॥ * ॥ धर्मनिष्ठितो धर्मविषयकश्रद्धाप्रापकः फलतो धर्मप्रापक इत्यर्थः । कामनिष्ठितो रति

प्रवृत्तिलक्षणे निष्ठा पुमान्यर्हि गृहाश्रमे ॥ स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥ पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः ॥ कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥ ९ ॥ यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ॥ तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा ॥ १० ॥ यदा आशिष आशास्य मां भजेत स्वकर्मभिः ॥ तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥ ११ ॥ सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे ॥ चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥ १२ ॥

सत्त्वतमोरजःकार्यत्वाद्विषयतः सन्निपातजत्वमुक्तम् । फलतश्च तथात्वमाह । श्रद्धारतिधनानि सत्त्वरजस्तमोमयान्यावहतीति तथा ॥ ७ ॥ धर्मनिष्ठायामेव सन्निपातं दर्शयति । प्रवृत्तिलक्षणे काम्यधर्मे यदा पुंसो निष्ठा भवति तथा पुमान्यदा गृहाश्रम एवासक्तस्तिष्ठेत् अनु पश्चात्स्वधर्मे च नित्यनैमित्तिके तिष्ठेत्साऽपि समितिः सन्निपातः । हि यस्मात्काम्यधर्मगृहासक्तिस्वधर्मा रजस्तमःसत्त्वमया इत्यर्थः ॥ ८ ॥ तदेवं मिश्राभिश्रगुणवृत्तीः प्रदर्श्येदानीं 'पुमान्येन यथा भवेत्' इति यदुक्तं तद्दर्शयति पुरुषमिति त्रिभिः ॥ ९ ॥ १० ॥ हिंसां शत्रुमरणादिकमाशास्य यो भजेत्तं तामसं विद्यात् । एतैर्गुणैरेवंभूतो भवतीति तात्पर्यार्थः ॥ ११ ॥ ननु तवापि गुणवशेन कर्तृत्वाविशेषात्केन विशेषेण त्वं सेव्यो जीवस्तु सेवक इति नियमो यतो मां भजेतेति वारंवारमुच्यते तत्राह । सत्त्वमिति । जीवस्यैव न मे । कुतः । यतश्चित्तजाः जीवोपाधौ चित्तेऽभिव्यज्यंतेऽतो यैः स एव बध्यते । कीदृशः । भूतानां देहरूपाणामन्येषां च मध्ये सज्जमानो निबध्यते । अहं त्वसज्जमानो गुणनियंतृत्वेन सृष्ट्यादिकर्ताऽपि

प्रापकः। अर्थनिष्ठितो धनप्रापको भवतीति **विश्वनाथः** ॥*॥ **दीपिका**–निष्ठाया विषयो धर्मादिस्तस्य सत्त्वादिकार्यत्वात्तन्निष्ठाया अपि सन्निपातजत्वमुक्तमित्यर्थः । फलतश्च तथात्वमिति तत्र धर्मनिष्ठायाः सात्त्विक्याः फलं श्रद्धापि सात्त्विक्येव 'सात्त्विक्याध्यात्मिकी श्रद्धा' इत्युक्तेः।तथा कामनिष्ठाया राजस्याः फलं विषयरतिः सा राजस्येव।एवमर्थनिष्ठायास्तामस्याः फलं व्ययाभावविशिष्टं धनं तामसमेवेति फलतोऽपि सन्निपातजत्वम् ॥ ७ ॥ एकत्र सन्निपातं दर्शयति–धर्मनिष्ठेति । इत्यर्थ इति–क्रमात्काम्यादयो धर्मास्त्रिगुणात्मका इति भावः ॥ * ॥ काम्ये धर्मे स्वर्गार्थकयागादौ ॥ ८ ॥ पूर्वोक्तं विशदयति–तदेवमिति । शमादिभिर्द्वितीयश्लोकोक्तैः, कामादिभिस्तृतीयश्लोकोक्तैः, क्रोधादिभिश्चतुर्थश्लोकोक्तैर्लिंगैः । अयं सात्त्विकः शमादियुक्तत्वादेवमग्रेऽपि ॥ * ॥ अनुमीयादित्यत्रेत्थं प्रयोगः–अयं सात्त्विकः शमादिमत्त्वात् , अयं राजसः कामादिमत्त्वात्, अयं तामसः क्रोधादिमत्त्वादिति ॥ ९ ॥ स्वकर्मभिर्वर्णाश्रमविहितैः ॥ * ॥ स्वरूपतो भक्तेर्निर्गुणत्वेऽपि सात्त्विकस्वधर्ममिश्रत्वात्सत्त्वप्रकृतिमित्युक्तम् । एवं परत्रापि ज्ञेयम् ॥ १० ॥ आशास्य सङ्कल्प्य । एतैः सत्त्वादिभिः । एवंभूतो निरपेक्षः । साभिलाषो हिंसादियुतश्च ॥ * ॥ आशिषो राज्यादिभोगान् । आशास्य सङ्कल्प्य ॥ ११ ॥ भगवत्याक्षिपति–नन्विति । गुणानां जीवसम्बन्धित्वे हेतुः–चित्तजा इति । यतश्चित्तजा अतो हेतोः । यैः गुणैः । स एव जीव एव । अन्येषां पशुपक्ष्यादीनाम् । यतोऽनासक्तोऽतो हेतोः । इति भाव इति–आसक्तिमत्त्वादेव सेवकत्वं जीवस्य तद्रहितत्वात्सेव्यत्वं ममेति तात्पर्यम् । ननु तवापि शान्तत्वादिदर्शनात्कथं जीवस्यैवेति हठ इति चेदुपाधिधर्मा उपहितस्यैवेत्याह–यद्वेति । भूतानां चित्तजा इति योजना । अन्नशब्देन पृथ्वी 'कार्येण कारणं लक्ष्यते' इति न्यायात् । तच्चाबादीनामप्युपलक्षकं सर्वभूतकार्यं मन इत्यर्थः ।

यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम् ॥ तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥ यदा जयेत्तमः सत्त्वं रजः संगं भिदा बलम् ॥ तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥ १४ ॥ यदा जयेद्रजः सत्त्वं तमो मूढं लयं जडम् ॥ युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥ १५॥ यदा चित्तं प्रसीदेत इंद्रियाणां च निर्वृतिः ॥ देहेऽभयं मनोऽसंगं तत्सत्त्वं विद्धि मत्पदम् ॥ १६ ॥

नित्यमुक्तोऽतो महान्विशेष इति भावः । यद्वा भूतानामपंचीकृतानां यत्कार्यभूतं चित्तम् । "अन्नमयं हि सौम्य मनः" इति श्रुतेः । तत्प्रभवाः अतो भूतोपहितस्य जीवस्यैवेति । अन्यत्समानम् ॥ १२ ॥ तदेवं मिश्रामिश्रगुणकार्याणि प्रदर्श्येदानीमेकैकगुणोद्रेककार्याणि दर्शयति यदेति सप्तदशभिः । यदेतरौ गुणौ जयेदभिभवेत् । भास्वरं प्रकाशकम् । विशदं स्वच्छम् । शिवं शांतम् । शिवत्वविशदत्वभास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात्तदा तैर्युज्येत । आदिशब्दाच्छमदमादिभिश्च ॥ १३ ॥ तमः सत्त्वं च कर्मभूतम् । रजः कर्तृ । संगं संगहेतुः । भिदा भेदहेतुः । बलं प्रवृत्तिस्वभावम् । यत एतादृशं रजः । अतः संगहेतुत्वाद्यशसा श्रिया युज्येत । तत्कामः पुमान्भवतीत्यर्थः । भिदाहेतुत्वाद्दुःखेन युज्येत । "द्वितीयाद्वै भयं भवति" इति श्रुतेः । बलहेतुत्वात्कर्मणा युज्येत ॥ १४ ॥ यदा रजः सत्त्वं च कर्मभूतं तमः कर्तृ जयेत् । मूढं विवेकभ्रंशकम् । लयमावरणात्मकम् । जडमनुद्यमात्मकम् । अतो मूढत्वाच्छोकमोहहिंसाभिर्लयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येतेति द्रष्टव्यम् । जन इति पाठे लयात्मकत्वमेव निद्राशयोर्हेतुः ॥ १५ ॥ किंच यदा चित्तं प्रसीदेत स्वच्छं भवेत् । निर्वृतिरुपरतिः । तत्तदा मत्पदं मदुपलब्धिस्थानं सत्त्वमुद्रिक्तं विद्धि ॥ १६ ॥

आकाशादीनां सर्वेषां सात्त्विकांशेभ्योऽन्तःकरणमुत्पद्यते 'तैरन्तःकरणं सर्वैः' इति विद्यारण्योक्तेः । यतो भूतकार्योद्भवा अतो हेतोः । मम तु भूतानुपहितत्वात्ते[1] नेत्यर्थः । अन्यत् उक्तेतरत्सत्त्वमित्यादि ॥ ॥ * ॥ भूतानामिति सप्तम्यर्थे षष्ठी । अन्येषां शब्दादिरूपेण परिणतानां मध्ये तेष्वित्यर्थः । मध्य इत्याध्याहृतं न तु निर्धारसूचकं चेतनाचेतनयोः साजात्यायोगात् गुणनियन्तृत्वेन चिच्छक्त्या मायाव्युदासादित्यर्थः । "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुनोक्तेः । अतः चिच्छक्तिवैशिष्ट्याज्जीवादीश्वरस्य महान्भेद इत्यर्थः । पूर्वार्धे सज्जमान इत्यनेनैव चरितार्थत्वे भूतानामित्याधिक्याद्–यद्वेति । अन्नमयं पृथिवीप्रधानं तत्प्रभवा भूतकार्यचित्तप्रजाताः । अतो भूतकार्यचित्तजत्वात् ॥ १२ ॥ किञ्च–यदेति । इतरौ रजस्तमोगुणौ ॥ * ॥ किञ्च–गुणमये जीवे गुणाः परस्परं बाध्यबाधकभावेनैव तिष्ठन्ति तथा सति जीवस्य यादृशी दशा स्यात्तामाह–यदेति त्रिभिः । सत्त्वं कर्तृ यदेतरौ रजस्तमोगुणौ जयेत् ॥ १३ ॥ यतः सत्त्वाद्यभिभावकम् अतो हेतोः । इत्यर्थ इति–सङ्गित्वाद्यशःश्रीकामुको भवतीति भावः । भेदस्य दुःखहेतुत्वे श्रुतिं प्रमाणयति–द्वितीयादिति ॥ * ॥ चलत्वात् कर्मणासंगहेतुत्वात् यशसा श्रिया च युज्यते । तत्तत्कामो यशःश्रीकामः । यस्य देहगेहाद्यासक्तिस्तस्यैव यशआदिकामना नान्यस्येत्यर्थः ॥ १४ ॥ अत इत्युक्तार्थः । आशाप्यज्ञानावृतस्यैवेत्युभयहेतुत्वम् ॥ * ॥ अत्रोत्तरग्रन्थव्याख्यामनुसृत्य तत्तत्कालेऽपि तत्तद्गुणात्मको ज्ञेयः । तथा यदा केवलभक्त्या गुणत्रिकं जितं स्यात्तदा निर्गुणेन प्रेमानन्देन युज्येतेत्येवमग्रेऽपि व्याख्यानशेष उपन्यसनीयः ॥ १५ ॥ अन्यदाह–किञ्चेति ॥ * ॥ एवञ्च वर्द्धमानो गुणो बाधको यदा भवति तदा क्षीणौ बाध्यावित्यवगतम् । इदानीं केनकेन लक्षणेन कस्को गुणो वर्तमानो ज्ञेय इत्यत आह–यदेति त्रिभिः ।

---

१ गुणाः ।

विकुर्वन्क्रियया चाऽऽधीरनिर्वृत्तिश्च चेतसाम् ॥ गात्रास्वास्थ्यं मनो भ्रांतं रज एतैर्निशामय ॥ १७ ॥ सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ॥ मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥ १८ ॥ एधमाने गुणे सत्त्वे देवानां बलमेधते ॥ असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥ १९ ॥ सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ॥ प्रस्वापं तमसा जंतोस्तुरीयं त्रिषु संततम् ॥ २० ॥ उपर्युपरि गच्छंति सत्त्वेन ब्राह्मणा जनाः ॥ तमसाऽधोऽध आमुख्याद्रजसांतरचारिणः ॥ २१ ॥

यदा पुनः क्रियया विकुर्वन्विकारं प्राप्नुवन् आधीर्भवति । आसमंताद्विक्षिप्ता धीर्यस्य सः । चेतसां बुद्धींद्रियाणामनिर्वृत्तिरनुपरतिः । गात्राणि कर्मेंद्रियाणि तेषामस्वास्थ्यं विकाराधिक्यं मनो भ्रांतं चंचलं तदा एतैः रज उत्कटं निशामय जानीहीति ॥ १७ ॥ यदा सीदत्तिरोभवच्चेतसो ग्रहणे चिदाकारपरिणामेऽक्षमं सच्चित्तं विलीयेत । मनोपि संकल्पात्मकं नष्टं लीनं भवेत् । तमोऽज्ञानं ग्लानिर्विषादश्च भवति । तत्तदा तम उत्कटमुपधारय विद्धि ॥ १८ ॥ किंच एधमान इति । इंद्रियाण्येव निवृत्तिप्रवृत्तिमोहस्वभावानि देवासुररक्षांसि । यद्वा प्रसंगादाधिदैविकानां गुणानामुत्कर्षकार्याण्युक्तानीति ज्ञेयम् ॥ १९ ॥ गुणोत्कर्षतोऽवस्थाभेदं दर्शयति । सत्त्वादिति । प्रसंगान्निर्गुणावस्थामाह । तुरीयं चतुर्थमवस्थांतरं नाम त्रिषु जागरणादिषु संततमेकरूपमात्मतत्त्वमेवेत्यर्थः ॥ २० ॥ गुणोत्कर्षद्वारेण तत्तत्कर्मफलनिष्ठां दर्शयति । उपर्युपरीति । ब्राह्मणा वेदानुष्ठानयुक्ताः । आब्रह्मण इति पाठे ब्रह्मलोकमभिव्याप्य । आमुख्यात्स्थावरानभिव्याप्य अंतरचारिणो मनुष्या

निर्वृतिर्वैतृष्ण्यलक्षणमवैय्यग्र्यम् । मनः संगरहितमनासक्तं स्यात्तदा सत्त्वमुद्रिक्तमधिकं विद्धि । मयि मत्प्राप्तौ पदं व्यवसायो यस्मात्तत् “ पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु ” इत्यमरः ॥ १६ ॥ क्रियया कुर्वद्रूपया ॥ * ॥ आ समन्तान्नानापदार्थगतत्वाद्विक्षिप्ता धीर्बुद्धिर्यस्य तथाभूतो भवति । अनिर्वृत्तिः सतृष्णता ॥ १७ ॥ विलीयत शिथिलीभवेत् । विषादश्चेतसो भङ्गः ॥ * ॥ चेतसो ज्ञानस्य ग्रहणे लीयते जडीभवति यदा तु केवलया भक्त्या गुणत्रयपराभवस्तदा नैर्गुण्यमवधारयेति शेषः ॥ १८ ॥ पुनरन्यदाह–किञ्चेति । ‘ प्रसिद्धार्थं परित्यज्याप्रसिद्धार्थकल्पनमहेतुकम् ’ इति न्यायादाह–यद्वेति । आधिदैविकानां गुणाधिष्ठातृदेवानां गुणपरिणामभूतानामिति यावत् । “ सत्त्वं रजस्तम इति तिस्रः सुरनृनारकाः ” इत्युक्तेः नारका नरकहेतुकर्मकर्तारः ॥ * ॥ देवासुररक्षःसु इन्द्रियाणां लक्षितलक्षणा, सा च सति मुख्यार्थे नोचिताऽतो–यद्वेति । यदा भक्तिहेतुकं नैर्गुण्यं वर्द्धते तदा भक्तानां बलमेधत इति शेषः ॥ १९ ॥ इत्यर्थ इति–तत्तदवस्थासाक्षित्वेन चतुर्थस्य चेतनस्यावश्यमंगीकार्यत्वादिति भावः ॥ * ॥ कस्माद्गुणात्काऽवस्थाऽत आह–सत्त्वादिति । अवस्थाप्रसंगादप्रस्तुतापि तुरीयावस्था तामाहेत्यर्थः ॥ २० ॥ आमुख्यादिति–आङ्योगे पञ्चमीति भावः । “ सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ” इत्युक्तेः । अन्तरे तलाद्यन्तरिक्षाद्यन्तरस्मिन्मध्ये चरितुं शीलं येषां ते तथा । सत्त्वेनेत्यादित्रयाणां युक्ता इति शेषः ॥ * ॥ नैर्गुण्येन भक्त्या भगवत्पदं यान्तीति शेषः । वेदार्थो वेदप्रतिपाद्यप्रयोजनवदर्थो यागादिस्तदनुष्ठानेऽभियुक्ता निपुणाः रजसा राजसकर्मणा मनुष्या

सत्त्वे प्रलीनाः स्वर्यांति नरलोकं रजोलयाः ॥ तमोलयास्तु निरयं यांति मामेव निर्गुणाः ॥ २२ ॥ मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ॥ राजसं फलसंकल्पं हिंसाप्रायादि तामसम् ॥२३॥ कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत् ॥ प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥२४॥

एव भवंति ॥ २१ ॥ देहादुत्क्रांतिकालीनगुणोत्कर्षफलमाह । सत्त्वे वृद्धे सति प्रलीना मृताः । रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते । एवं तमोलया इत्यपि । निर्गुणा इत्यत्र तु लयशब्दानुपादानाज्जीवंतोपि निर्गुणा एकांतभक्तियोगेन मन्निष्ठाश्चेन्मामेव यांतीत्यर्थः ॥ २२ ॥ इदानीं गुणोत्कर्षकृतमेव तत्तत्फलसाधनकर्मत्रैविध्यमाह । मदर्पणं मत्प्रीत्युद्देशेन कृतं निष्फलं केवलं दासभावेनैव कृतं यन्निजं कर्म नित्यादि तत्सात्त्विकम् । फलं संकल्प्यतेऽस्मिंस्तत् । हिंसाप्रायं हिंसोद्देशेन कृतं हिंसाबहुलं च । आदिशब्दाद्दंभमात्सर्यादिकृतम् ॥ २३ ॥ इदानीं सगुणनिर्गुणभेदेन ज्ञानादीनां चातुर्विध्यमाह । कैवल्यं देहादिव्यतिरिक्तात्मविषयम् । वैकल्पिकं

एव भवन्तीति मूले योजनीयं टीकानुरोधेन ॥ २१ ॥ इत्यर्थ इति–मरणावसरे निर्गुणत्वं ब्राह्मी निष्ठा " स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति " इति गीतोक्तेः । अत्रापिना जीवतो ग्रहणमेव । तथा च जीवनावस्थायां निर्गुणब्रह्मपरा ये तेऽपि मामेवाप्नुवन्तीति भावः ॥ * ॥ देहोत्क्रमणकालिकगुणोत्कर्षफलमाह–सत्त्व इति ॥ २२ ॥ निष्फलं फलाभिसन्धिहीनम् । आदिना नैमित्तिकादिग्रहः ॥ * ॥ दासभावेन दासोऽस्मीत्यभिमानेन मयि अर्पणं यस्य तन्मदर्पितमिति । " कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् " इति नारदोक्तेर्धर्मशास्त्रविहितस्य धर्ममात्रस्यैव भगवदनर्पितत्वे वैयर्थ्यश्रवणान्मदर्पणमित्युत्तरत्रापि योजनीयम् । ततश्च मदर्पणं नित्यं कर्म तथा निष्फलं फलाभिसन्धिरहितं काम्यं वा कर्म मदर्पितं सात्त्विकं स्यात् । फलं सङ्कल्प्यते यस्मिंस्तत्फलाभिसन्धिसहितं काम्यं कर्म मदर्पितं राजसं स्यात् तथाऽधर्मशास्त्रोक्तं हिंसाप्रायं हिंसोद्देशेन कृतं तामसं स्यात् । आदिना दम्भमात्सर्यादिकृतं च । श्रवणकीर्तनादि शुद्धभजनं तु निर्गुणमिति शेषः ॥ * ॥ **सन्दर्भस्तु**–मदर्पणमुत्तमत्वाय मय्यर्पितमित्यर्थः । निष्फलं सत्त्वशुद्ध्यर्थं निष्कामत्वेनैव कृतं निजकर्म स्ववर्णाश्रमादिधर्मः ॥ २३ ॥ आदिना वासकर्तृश्रद्धादिग्रहः । मन्निष्ठं मय्यभेदनिष्ठात्मकम् । निर्गुणत्वापादकत्वान्निर्गुणत्वं ज्ञानादीनामिति ॥ * ॥ केवलस्य निर्विशेषस्य ब्रह्मणः शुद्धजीवभेदेन ज्ञानं कैवल्यं त्वंपदार्थमात्रज्ञानस्य कैवल्यानुपपत्तिस्तत्पदार्थज्ञानसापेक्षत्वात् । सत्त्वयुक्ते हि चित्ते प्रथमतः शुद्धं सूक्ष्मं जीवचैतन्यं प्रकाशते ततश्चिदेकाकारत्वाभेदेन तस्मिन् शुद्धं पूर्णं ब्रह्मचैतन्यमप्यनुभूयते । ततः सगुणस्यैव तत्र कारणताप्राचुर्यात्सात्त्विकत्वम् । तथा च श्रीगीतोपनिषदः–' सत्त्वात्सञ्जायते ज्ञानम् ' इति भगवज्ज्ञानस्य तु ' देवानां शुद्धसत्त्वानाम् ' इत्यादि ' मुक्तानामपि सिद्धानाम् ' इत्याद्युक्त्वा सत्त्वादिसद्भावेऽप्यभावात् ' रजस्तमःस्वभावस्य' इत्याद्युक्त्या वा तदभावेऽपि वृत्रासुरस्य सद्भावात् न तत्कारणकत्वं किंतु तदुत्तरत्वेन तस्य पूर्वजन्मनि श्रीनारदादिसंगवर्णनया ' नैषां मतिस्तावदुरुक्रमांघ्रिम् ' इत्याद्युक्त्या च भगवत्कृपापारिमलपात्रभूतस्य श्रीमतो महतः संग एव कारणं, तत्संगश्च–' तुलयाम लवेनापि ' इत्याद्युक्त्या निर्गुणावस्थातोऽप्यधिकत्वात्परमनिर्गुण एव । सप्तमे च–' समः प्रियः सुहृद्ब्रह्मन् ' इत्यादौ सत्त्वगुणे देवादौ तस्य कृपा वास्तवी न भवति किंतु श्रीमत्प्रह्लादादिष्वेवेति प्रतिपादनात् । महतां निर्गुणाभिव्यक्त्या तत्संगस्यापि निर्गुणत्वं व्यक्तं, तथा भक्तेरपि गुणसंगनिर्धूननानन्तरं चानुवृत्तिः श्रूयते ' तस्माद्देहमिमं लब्ध्वा ' इत्यादौ परमेश्वरज्ञानस्यापि नैर्गुण्यहेतुत्वेन निर्गुणोक्तिस्तु लक्षणामयक्लिष्टकल्पना । तथा कैवल्यज्ञानस्यापि नैर्गुण्यहेतुत्वादवैशिष्ट्येनोदाहरणभेदावृत्तिश्च स्यात्तस्मात्स्वत एव निर्गुणं भगवज्ज्ञानम् । अत्र विशेषो भक्तिसन्दर्भे दृश्यः ॥ * ॥ दीपिका–देहादिव्यतिरिक्तो य आत्मा त्वंपदार्थस्तद्विषयकं वस्तुतस्तु त्वंपदार्थज्ञानस्य तत्पदार्थज्ञानसापेक्षत्वात्केवलत्वासम्भव इति निर्विशेषज्ञानमेव तच्छब्देन व्याख्येयमिति वैष्णवमतम् । अद्वैतमते तु–परमेश्वरविषयज्ञानस्यापि

वने तु सात्त्विको वासो ग्रामे राजस उच्यते ॥ तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥ सात्त्विकः कारकोऽसंगी रागांधो राजसः स्मृतः ॥ तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ॥ तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् ॥ राजसं चेंद्रियप्रेष्ठं तामसं चार्तिदाऽशुचि ॥ २८ ॥

देहादिव्यतिरिक्तात्मविषयं यत्तद्रजो राजसम् । प्राकृतं बालमूकादिज्ञानतुल्यम् । मन्निष्ठं परमेश्वरविषयम् ॥ २४ ॥ वनं विविक्तत्वात्सात्त्विको वासः । भगवन्निकेतनं तु साक्षात्तदाविर्भावान्निर्गुणं स्थानम् ॥ २५ ॥ कारकः कर्ता । असंगी अनासक्तः । रागांधोऽत्यभिनिवेशवान् । स्मृतिविभ्रष्टोऽनुसंधानशून्यः । मदपाश्रयो मदेकशरणः । स हि निरहंकारत्वान्निर्गुणः ॥ २६ ॥ अधर्मे धर्म इति या श्रद्धा ॥ २७ ॥ पथ्यं हितम् । पूतं शुद्धम् । अनायस्तमनायासतः प्राप्तम् । आहार्यं भक्ष्यभोज्यादि ।

नैर्गुण्यहेतुत्वेन नैर्गुण्यमिति लक्षणामयक्लिष्टकल्पनैव । प्रत्युत 'भक्षितलशुनन्यायेन' त्वंपदार्थविषयज्ञानस्यापि नैर्गुण्यहेतुत्वाद्विशेषाभावादुदाहरणभेदवैयर्थ्यमेव स्यादिति चिन्त्यमेव तत् । पुनष्टीकाकृतां तथा व्याख्यानं तु तन्मतानुयायिनां स्वमतप्रवेशनायैव ज्ञेयम् । एवमन्यत्रापि ॥ * ॥ **विश्वनाथस्तु**—कण्ठोक्त्यैव सगुणनिर्गुणभेदेन ज्ञानादीनां चातुर्विध्यमाह । कैवल्यं देहादिव्यतिरिक्तत्वेन केवलजीवात्मविषयकं यत्तत्सात्त्विकं, वैकल्पिकं द्वैतमिदं सत्यमसत्यं वा जीवा नित्या जन्या वेत्यादिविकल्पभवं यज्ज्ञानं तद्राजसं, प्राकृतमाहारविहारादिज्ञानं तामसम् । मन्निष्ठं मद्विषयकम् ॥ २४ ॥ तपोयोगाद्युपयोगित्वाद्वनस्य, व्यापारवत्त्वाद्ग्रामस्य, स्मृतिनाशकत्वाद्द्यूतगृहस्य । मन्निकेतं देवालयादि ॥*॥ **दीपिका**—वृक्षखण्डस्वरूपस्य वनस्य रजस्तमःप्रधानत्वाद्विविक्तत्वलक्षणसात्त्विकगुणमादाय सात्त्विक इत्युक्तम् ॥ * ॥ **सन्दर्भस्तु**—तदेवं ज्ञानस्वरूपाया भक्तेर्निर्गुणत्वमुक्त्वा क्रियारूपाया व्याचष्टे । तत्राप्यस्तु तावच्छ्रवणकीर्तनादिरूपायाः, भगवत्सम्बन्धेन वासमात्ररूपाया आह—वनमिति । वनं वास इति । तत्सम्बन्धिनी वसनक्रियेत्यर्थः । वानप्रस्थानामिति ज्ञेयम् । एवं ग्राम्य इति गृहस्थानां, तामस इति दुराचाराणां, द्यूतसदनमित्युपलक्षणम् । मन्निकेतमिति मत्सेवापराणामिति च वनादीनां वासेन सह 'आयुर्घृतम्' इतिवदेकाधिकरणत्वं, वनस्य वृक्षखण्डस्वरूपस्य रजस्तमःप्राधान्यात् । अत एव विविक्तत्वलक्षणं त्वदीयसात्त्विकगुणस्यापि तद्युगलमिश्रत्वेन गौणत्वम् । वासक्रियायास्तु सत्त्वोत्पन्नत्वात्तद्वर्द्धनत्वाच्च सात्त्विके मुख्यत्वमिति । अत एव ग्राम्य[1] इति तद्धितान्त एव पठितः । एवं द्यूतसदनमित्यत्र च वासक्रियैव विवक्षिता मन्निकेतमित्यत्रापि । किंतु भगवत्सम्बन्धमाहात्म्येन निकेतस्यापि निर्गुणत्वं भवेत् स्पर्शमणिन्यायेन तादृशत्वं तादृशभक्तिचक्षुर्भिरेवोपलब्धव्यम् "दिविष्ठा यत्र पश्यन्ति सर्वानेव चतुर्भुजान्" इतिवत् । अत एव तैर्व्याख्यातं भगवन्निकेतं—त्विति । "शिलाबुद्धिः कृता किं वा प्रतिमायां हरेर्मया" इति । तत्र शिलाबुद्धिनिषेधात्साक्षात्तदाविर्भाववत्त्वं तत्स्थानान्निकेतस्यापि नैर्गुण्यमेवेति भावः ॥ २५ ॥ करोतीति कारकः । अनासक्तो निष्कामकर्मकर्ता । रागान्धः फलरागेणान्धस्तन्नश्वरत्वाद्यपश्यन् ॥ * ॥ एवं वासमात्रस्य तादृशत्वमुक्त्वा सर्वासां तत्क्रियाणामाह—सात्त्विकः कारक इत्यत्र तद्विशेषणीभूतक्रियायामेव तात्पर्यं न तदाश्रये द्रव्ये सात्त्विककारकशरीरस्यापि गुणत्रयपरिणामत्वात् । सविशेषणविधिनिषेधौ 'सति विशेष्यबाधे विशेषणमुपसंक्रामति' इति न्यायात् ॥ २६ ॥ आत्मानात्मविवेचिका सात्त्विकी । अधर्मे पाखण्डादौ मत्सेवाया बुद्धिशोधबोधद्वारा गुणबाधकत्वात् ॥ * ॥ क्रियाप्रवृत्तिभूतायाः शुद्धाया अप्याह—सात्त्विकीति । आध्यात्मिकी वेदान्तशास्त्रविषयिणी । अधर्मोऽत्र परधर्मः ॥ २७ ॥ आदिना लेह्यादिग्रहः । आदिना मिष्टादि

[1] ग्राम्यो राजस इति पाठाभिप्रायेणेदम् ।

सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ॥ तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥ द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ॥ श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥ ३० ॥ सर्वे गुणमया भावाः पुरुषा व्यक्तधिष्ठिताः ॥ दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥ ३१ ॥ एताः संसृतयः पुंसो गुणकर्मनिबंधनाः ॥ येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ॥ ३२ ॥

इंद्रियाणां प्रेष्ठं भोगकाले सुखदं कट्वम्ललवणादि । आर्तिदाशुचि दैन्यकरमशुद्धं च । चशब्दान्मन्निवेदितं निर्गुणमित्यभिप्रेतम् ॥ २८ ॥ आत्मोत्थं सुखम् । आत्मोत्थमिति त्वंपदार्थविषयत्वेन मदपाश्रयमित्यपि तत्पदार्थविषयत्वेन सुखं ज्ञानवदेव द्रष्टव्यम् ॥ २९ ॥ तदुक्तं संसारहेतुभूतं त्रैगुण्यमुपसंहरति द्वाभ्याम् । द्रव्यं पथ्यपूतादि । देशो वनग्रामादिः । फलं 'सात्त्विकं सुखम्' इत्यादि । कालो 'यदा भजेत मां भक्त्या, यदेतरौ जयेत्' इत्यादिना योर्थादुक्तः । ज्ञानम् 'कैवल्यं सात्त्विकं ज्ञानम्' इत्यादि । कर्म 'मदर्पणम्' इत्यादि । कारकः 'सात्त्विकः कारकोऽसंगी' इत्यादि । श्रद्धा 'सात्त्विक्याध्यात्मिकी' इत्यादिः । अवस्था 'सत्त्वाज्जागरणम्' इत्यादिः । आकृतिः 'उपर्युपरि गच्छंति' इत्यादिनोक्ता देवत्वादिरूपा । निष्ठा 'सत्त्वे प्रलीनाः स्वर्यांति' इत्यादिनोक्ता स्वर्गादिः । एवं सर्वोऽप्ययं भावस्त्रैगुण्यस्त्रिगुणात्मकः ॥ ३० ॥ न केवलमेष एव किंतु यावंतः पुरुषा व्यक्तधिष्ठितास्ते सर्वे भावा गुणमया एव । तत्प्रपंचः दृष्टमिति ॥ ३१ ॥ इदानीमुक्तं त्रैगुण्यस्य संसारहेतुत्वमनुवदंस्तन्निर्जयान्मोक्ष इत्याह । एता इति सार्धेन । येन निर्जिताः स पश्चादविक्षिप्तेन भक्तियोगेन मन्निष्ठः सन् मद्भावाय मोक्षाय प्रपद्यते योग्यो भवति ॥ ३२ ॥

ग्रहः ॥ * ॥ मन्निवेदितं मत्प्रसादीभूतम् ॥ २८ ॥ त्वंपदार्थो देहाद्यतिरिक्तात्मज्ञानम् । तत्पदार्थो ब्रह्म तदनुभवजं निर्गुणम् ॥ * ॥ दीपिका—ज्ञानवदेवेति—यथा त्वंपदार्थविषयं ज्ञानं सात्त्विकं परमेश्वरविषयं तु निर्गुणम् । तथा त्वंपदार्थानुभवोत्थं सुखं सात्त्विकं तत्पदार्थानुभवोत्थं तु सुखं निर्गुणमित्यर्थः । अहमेव तत्पदार्थः अतो मदपाश्रयं मत्कीर्तनाद्युत्थम् । एवं शुश्रूषोः श्रद्दधानस्येत्याद्युक्त्या महन्निदानत्वेन श्रवणादिलक्षणक्रियाया अपि भक्तेर्निर्गुणत्वं ज्ञेयम् ॥ २९ ॥ अर्थादुक्तो यदेत्यव्ययस्य कालबोधकत्वात् । भावः पदार्थः ॥ * ॥ उपसंहरन्नुक्तेषु त्रिगुणमयेषु गुणातीतेषु च पदार्थेषु मध्ये ये गुणमया भावास्ते जीवस्य संसारहेतव इत्याह—सार्द्धद्वयेन । द्रव्यमित्यादि तैः । सर्वोऽप्ययं त्रैगुण्य एव । हीति मदीयं विनेति ज्ञेयं तथा दर्शितत्वात् । स्वार्थे ष्यञ् ॥ ३० ॥ उक्तमर्थमन्यत्राप्यतिदिशति—न केवलमिति । तत्प्रपञ्चः गुणमयत्वप्रपञ्चः । तथाहि—दृष्टमिति । धिष्ठिताः स्थिताः । उपसर्गाकारलोपस्त्वार्षः । यद्वा—पुरुषाधिष्ठितं च तदव्यक्तं पुरुषाव्यक्तम् । मध्यमपदलोपी समासः । तेनाधिष्ठिताः कल्पिताः "प्रकृतिः पुरुषाध्यक्षा सूयते सचराचरम्" इत्युक्तेः ॥ * ॥ न केवलमित्यादि तैः । एष एव द्रव्याद्येकादशपदार्थ एव । भावाः पदार्थाः । तत्प्रपञ्चः सर्वशब्दार्थप्रपञ्चः ॥ ३१ ॥ तन्निर्जयान्नैर्गुण्यनिर्जयात् । चित्तजाः चित्तभवाः । मम तु 'निर्गुणत्वाद्धियो गुणैः' इति श्रीमत्स्यचरितोक्तेर्गुणा धिय एव न तु मे 'गुणा बुद्धेर्न चात्मनः' इति श्रीकृष्णदेवेनाप्युद्धवं प्रत्युक्तेश्च । चित्तबुद्ध्योरुभयोरन्तःकरणत्वेनैक्येऽपि वृत्तिभेदादेव भेदः । स च न वास्तव इति बुद्धिस्थचिदाभास एव जीवस्तस्यैव गुणसमानाधिकरणत्वाज्जीवत्वं मम तु 'यो बुद्धेः परतस्तु सः' इत्युक्तेः 'बुद्धेरात्मा महान्परः' इत्युक्तेश्च निर्गुणत्वमेवात एवोक्तम्—'गुणा जीवस्य नैव मे' इति स्वयं भगवता ॥*॥ एता इति सार्द्धकम् । एताः शमकामक्रोधादिरूपा गुणकर्मनिबन्धना गुणकर्मकारणकाः । सन्तीति शेषः । मोक्षाय सप्रेमपार्षदत्वाय "विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः" इति पाद्मोक्तेरिति दीपिका ॥*॥ विश्वनाथस्तु—किंतु येन जीवेन कर्त्रा भक्तियोगेन करणेन इमे गुणा निर्जि

भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥ तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम् ॥ ३३ ॥ गुणसंगं विनिर्धूय मां भजंतु विचक्षणाः ॥ निःसंगो मां भजेद्विद्वानप्रमत्तो जितेंद्रियः ॥ रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ॥ ३४ ॥ सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शांतधीः ॥ संपद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ॥ ३५ ॥ जीवो जीवविनिर्मुक्तो गुणैश्चाशयसंभवैः ॥ मयैव ब्रह्मणा पूर्णो न बहिर्नांतरश्चरेत् ॥ ॥ ३६ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे भगवदुद्धवसंवादे पंचविंशोऽध्यायः ॥ २५ ॥

तस्माद्विवेकिनामिदमेव युक्तमित्याह । तस्मादिति । ज्ञानविज्ञानयोः संभवो यस्मिंस्तमिमं नरदेहम् ॥ ३३ ॥ भजनप्रकारमाह निःसंग इति सार्धेन ॥ ३४ ॥ सत्त्वसंसेवया 'सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये' इति प्रागुक्त्या । नैरपेक्ष्येणोपशमात्मकेन सत्त्वेनैव ॥ ३५ ॥ एवं च सति मां प्राप्नोतीत्याह । संपद्यत इति । जीवं जीवत्वकारणं लिंगशरीरम् । मां प्राप्तस्य न पुनः संसार इत्याह । जीव इति । बहिर्विषयभोगेन नांतरस्तत्स्मरणेन ॥ ३६ ॥ गुणकृतामनुसंसरणप्रथामजितपुण्यकथाकथनादिभिः ॥ धुनुत भक्तिरसेन विवेकिनो न हि पुनः सुलभं जनुरीदृशम् ॥ १ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्रीधरीयटीकायां पंचविंशोऽध्यायः ॥ २५॥

ताः स मन्निष्ठो मद्भक्तः मद्भावाय मत्सारूप्याय । यद्वा—मद्दास्यसख्यादिभावार्थं प्रपद्यते । अत्र 'यान्ति मामेव निर्गुणाः' इति 'निर्गुणो मदपाश्रयः' इति मद्भक्तस्य निर्गुणत्वम् "लक्षणं भक्तियोगस्य निर्गुणस्येत्युदाहृतम्" इति कपिलदेवोक्तेरत्रापि भक्तियोगेन गुणा निर्जिता इत्युक्त्या भक्तियोगस्य निर्गुणत्वं, स च भक्तियोगोऽर्चनादिगन्धपुष्पधूपदीपच्छत्रचामरादिघटित इति तत्तद्द्रव्याणामपि निर्गुणत्वं, तदीयश्रद्धादीनां तु निर्गुणत्वमुक्तमेवेत्यतो भक्त्युपकरणमात्रस्यैव निर्गुणत्वमवगमितं भगवता ॥ ३२ ॥ यतस्त्रैगुण्यजयो मोक्षहेतुस्तस्माद्धेतोः । इदमेव त्रैगुण्यविजयनमेव ॥ * ॥ तस्माद्भक्त्यैव गुणत्रयजयात् । इदमेव भजनमेव । भक्त्या गुणसम्बन्धं दूरीकृत्य भजंतु भक्तिमेव कुर्वन्त्विति भक्तेः साध्यत्वं साधनत्वञ्च व्यक्तीकृतम् । 'तस्मात्त्वमुद्धवोत्सृज्य' इत्यादिभिरभ्यस्तमपि भजनस्य सर्वोपरितनता प्रकटिता नरदेह इति भावः । ज्ञानविज्ञाने अप्यत्र भक्त्युत्थे एव ज्ञेये ॥ ३३ ॥ विनिर्धूय त्यक्त्वा ॥ * ॥ शुद्धभजनप्रकारं शिक्षयति—निःसंगः अन्यकामनाज्ञानकर्मादिसंगरहितः । अप्रमत्तः सेवानामापराधानवधानशून्यः । यतो जितेन्द्रियः विद्वान् भक्तिरेव परमपुमर्थ इति जानन् मां भजेत श्रवणादिभिरनुशीलयेदिति तत्रेतिकर्तव्यताऽभिहिता ॥ * ॥ **विश्वनाथस्तु**—ननु च यस्य त्वत्सेवायां श्रद्धा निर्गुणास्ति अथ च सात्त्विक्याध्यात्मिकी श्रद्धाऽप्यस्ति राजसी कर्मश्रद्धा तामस्यधर्मश्रद्धाऽप्यस्ति एवं त्वद्भक्त्युत्थं निर्गुणं सुखं तथाऽऽत्मोत्थं विषयोत्थं मोहोत्थं च त्रिगुणमयसुखमप्यस्ति एवमेवोक्तलक्षणं नैर्गुण्यं त्रैगुण्यञ्चास्ति तेनारब्धत्वद्भजनेन किं कर्तव्यमिति चेच्छ्रूयताम्—स यदि केवलं भक्तिमान्स्यात्तदा भक्त्यैव त्रैगुण्यं निर्जयेदित्युक्तमेव "येनेमा निर्जिताः सौम्य गुणा जीवेन" इत्यादिना ॥ ३४ ॥ ० ॥ * ॥ यदि च प्रधानीभूतभक्तिमान्स्यात्तत्पुनरुपायान्तरमपि त्रैगुण्यजयेऽस्तीत्याह—रज इति । नैरपेक्ष्येण भक्त्युत्थवैतृष्ण्येन । उपशमात्मकेनान्तःकरणनियमनेन । सर्वत्र हेतुः शान्तधीः भगवन्निष्ठबुद्धिः ॥ ३५ ॥ एवं च साति त्रैगुण्यजये सति । जीवत्वहेतुर्लिंगदेहसम्बन्ध एव तदभावे मोक्षश्रवणात् । तत्स्मरणेन विषयस्मरणेन । न चरेत् न स्यात् ॥ उरुसंसरणप्रथां बहुतरसंसारप्रसिद्धिं रोगं वा । आदिना श्रवणादिग्रहः । धुनुत अपाकुरुत । भक्तिरसेन तद्रूपरसायनेन । पुनरीदृशावसरो न लभ्य इत्याह—न हीति । 'जनुर्जन्मप्रथारोगे प्रसिद्धौ च' इति कोशात् ( १ ) । ॥ * ॥ सम्पद्यत इत्यर्द्धकम् । एवं च लिंगदेहेन अन्तःकरणोत्थैर्गुणैश्च रहितः बहिः प्राकृतशब्दादिविषयान् आन्तरं शोकमोहादिकञ्च न चरेन्न प्राप्नुयात् ॥ ( ३६ ) ॥ * ॥ **दीपिका**—'तनुसंसरणव्यथाम्' इति पाठे

श्रीभगवानुवाच ॥ मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ॥ आनंदं परमात्मानमात्मस्थं समुपैति माम् ॥ १॥ गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ॥ गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥ वर्तमानोऽपि न पुमान्युज्यते वस्तुभिर्गुणैः ॥ २ ॥ संगं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ॥ तस्यानुगस्तमस्यंधे पतत्यंधानुगोऽन्धवत् ॥ ३ ॥

षड्विंशे योगनिष्ठाया विघातो दुष्टसंगतः ॥ साधुसंगेन तन्निष्ठापराकाष्ठेति वर्ण्यते ॥ १ ॥ योगिनो योगविभ्रंशः संगतः संभवेदिति ॥ सर्वथा तन्निवृत्त्यर्थं मैलगीतं वितन्यते ॥ २ ॥ ' निःसंगो मां भजेद्विद्वानप्रमत्तो जितेंद्रियः ' इत्युक्तं तत्र विपक्षेऽनर्थं कथयिष्यन् जीवन्मुक्तस्यापि तर्हि संगो दुर्वार इत्यनर्थः स्यादित्याशंक्योक्तानुवादपूर्वकं परिहरति सार्धाभ्याम् । मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन्नात्मस्थमात्मन्येव नियंतृत्वेन स्थितं परमानंदरूपमात्मानं मां समुपैति सम्यक्प्राप्नोति ॥ १ ॥ न चैवंभूतस्य विषयसंगो नामास्तीत्याह गुणमय्येति । गुणमयी या जीवयोनिर्जीवोपाधिस्तया विमुक्तो गुणेषु वर्तमानोऽपि तैर्न युज्यते संगं न प्राप्नोति । अत्र हेतुः । अवस्तुभिः । नन्ववस्तुभिरप्यन्ये युज्यमाना दृश्यंते तत्राह । अवस्तुत्वेन दृश्यमानेषु ॥ २ ॥ तथापि संगं वर्जयेदित्याह । संगमिति । असतां लक्षणमाह । शिश्नोदरे तर्पयंतीति शिश्नोदरतृपस्तेषां क्वचित्कदाचिदपि आस्तां तावद्बहूनां संगं किंतु तस्यैकस्याप्यनुगोऽनुवर्ती

देहोपाधिकां संसारपीडामित्यर्थः । 'उरुसंसरणप्रथाम्' इति पाठे तु उर्वी महती चासौ संसाराख्या प्रथा ख्यातिरर्थान्महान्संसार इत्यर्थः । हे विवेकिनः अजितस्य कथाकथनादिभिर्धुनुत नाशयत पुनरीदृशं सर्वांगपूर्णं ब्राह्मणादिजन्म नहि सुलभं सर्वथा दुर्लभम्, एतेन हरिकथैव संसारनाशिनीति हरिकथायाः संसारापाकरणे मुख्योपायत्वमुक्तम् । आदिना श्रवणाध्ययनादिग्रहः ( १ ) ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे एकादशस्कन्धे पञ्चविंशोऽध्यायः ॥ २९ ॥ तन्निष्ठाया योगनिष्ठायाः । परा काष्ठा परोऽवधिः ( १ ) । तन्निवृत्त्यर्थं संगनिवृत्त्यर्थम् ( २ ) । तत्राधुना । विपक्षे निःसंगभजनाभावे । अनर्थं निष्ठाभ्रंशरूपम् । तर्हि संगस्य भ्रंशहेतुत्वे जीवन्मुक्तस्यापि यथाकथञ्चित्संगो भवत्येव तथा च तस्याऽपि पुनः संसारः स्यादिति चेत्, उक्तस्य 'निःसंगो मां भजेत्' इत्यस्यानुवादः 'गुणमय्या जीवयोन्या' इत्याद्युक्तलक्षणस्तत्पूर्वकं परिहरति । 'न युज्यतेऽवस्तुभिः' इत्यादिनाऽनर्थमपाकरोति ॥ * ॥ **दीपिका**—तन्निष्ठा योगनिष्ठा तस्याः परा काष्ठा परमोऽवधिः ( १ ) । तन्निवृत्त्यर्थं संगपरिहारार्थम् ( २ ) । तत्रेत्युक्तौ विपक्षे संगकरणे । परिहरति शंकामिति शेषः । मद्भक्तिलक्षणे श्रवणकीर्तनादौ । आत्मन्येव जीवस्वरूप एव ॥ १ ॥ एवंभूतस्य भक्तिधर्मे स्थितस्य । न चास्तीति योज्यम् । जीवोपाधिर्लिंगमविद्या वा । तैर्गुणैः । अत्र गुणसंगाभावे । अवस्तुभिः अवस्तुत्वेन परिज्ञातैः । अत्राशंकते—नन्विति । अवस्तुत्वे ज्ञातेऽपि दृश्यमानत्वात्तेषु संग ऐन्द्रजालिकलीलावदज्ञानामेवेति भावः ॥ * ॥ निःसंगो मां भजेदित्युक्तम् । तत्र च "उपायं चिन्तयन्प्राज्ञो ह्यपायमपि चिन्तयेत्" इति न्यायेन स्त्रीसंगः खलु तत्र महानन्तरायस्तस्माच्च जीवन्मुक्तेनापि भेतव्यमिति वक्तुं पूर्वप्रक्रान्तं जीवन्मुक्तत्वमाह सार्द्धद्वाभ्याम् । एवंभूतस्य परमानन्दं प्राप्तस्य । जीवोपाधिर्लिंगदेहः । गुणेषु गुणकार्येषु देहेन्द्रियादिषु । संगं सुखदुःखादिसम्बन्धम् । तत्र गुणसंगाप्राप्तौ ॥ * ॥ **विश्वनाथस्तु**—स च गुणेषु विषयेषु प्राकृतेषु भगवत्सम्बन्धगन्धरहितेष्वित्यर्थः । वर्तमानोऽपि तैर्गुणैरवस्तुभिरसत्तुल्यैर्न युज्यते बद्धजीव इव नासक्तो भवति । कुतः—न वस्तुतो दृश्यमानेषु दृष्टिस्तस्य मयि कामात्मन्येवेति भावः ॥ २ ॥ यद्यपि गुणा अवास्तवास्तथापीति । एकस्यापि शिश्नोदरतृपः ॥ * ॥ **दीपिका**—तथापि विषयसंगा

ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥ त्यक्त्वाऽऽत्मानं व्रजंतीं तां नग्न उन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥ ५ ॥ कामानतृप्तोऽनुजुषन्क्षुल्लकान्वर्षयामिनीः ॥ न वेद यांतीर्नायांतीरुर्वश्याऽऽकृष्टचेतनः ॥ ६ ॥ ऐल उवाच॥अहो मे मोहविस्तारः कामकश्मलचेतसः ॥ देव्या गृहीतकंठस्य नायुःखंडा इमे स्मृताः ॥ ७ ॥

अंधमनुगच्छति योंधस्तद्वत् ॥ ३ ॥ अत्रेतिहासमाह । ऐलः पुरूरवाः । सम्राट् चक्रवर्ती । बृहच्छ्रवः कीर्तिर्यस्य सः । उर्वशीविरहात्प्रथमं मुह्यन्पश्चात्कुरुक्षेत्रे तां समागम्य गंधर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे शोकापगमे सति ततो निर्विण्णः सन्निमां गाथामगायतेति नवमस्कंधानुसारेण द्रष्टव्यम् ॥ ४ ॥ प्राक्तनीं मोहावस्थामाह । त्यक्त्वेति । आत्मानं राजानं त्यक्त्वा । अथवा शय्यायामात्मानं त्यक्त्वा व्रजंतीम् घोरे तिष्ठेति । " हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ॥ न नौ मंत्रा अनुदितास एते मयस्करन्परतरे च नाहन् " इत्येवं मंत्रैर्विलपन् ॥ ५ ॥ वैक्लव्ये कारणमाह । कामानिति वर्षाणां यामिनी रात्रीर्यान्तीरपयांतीर्न वेद । नाप्यायांतीरागामिनीः । उर्वश्या आकृष्टा चेतना यस्य सः ॥ ६ ॥ तस्य गंधर्वलोकप्राप्तस्य बहुकालमुर्वशीसंभोगानंतरं निर्विण्णस्य गाथामाह अष्टा

सम्भवेऽपि । तच्छब्दस्य पूर्वप्रक्रान्तानुवादकत्वात् एकवचनानुपपत्तिमाशंक्य व्याचष्टे–आस्तामिति । एवंभूतोऽप्यसत्संगं न कुर्यात्किं पुनरेवंभूत इत्याह–संगमिति ॥ ३ ॥ अत्र असत्संगस्य पात हेतुत्वे । इमां बक्ष्यमाणाम् 'अहो मे मोहविस्तारः' इत्यादिकाम् ॥ * ॥ अत्र संगवर्जने । तत उर्वशीलोकात् ॥ ४ ॥ श्रुत्यर्थमाह–हये अहो जाये मनसा तिष्ठ मनःपूर्वकं पूर्ववत्तिष्ठ । मां त्यक्तुं नार्हसीति शेषः । हे घोरे सुरतशौण्डे ये परतरे अहन् अहनि उत्तरोत्तरदिवसे मयः सुखं करन् अकुर्वत । एते नौ आवयोः सुरतमन्त्राः करुणोक्तिपूर्वका नु अद्याप्यनुदितासोऽनिवृत्ता अपरिसमाप्ता इति यस्मादतो नैतदुचितमतो मिश्रा मिश्राणि सल्लाँपलक्षणानि वचांसि कृणवावहै करवावहै इत्येवमुक्तरीत्या मन्त्रैराम्नातोक्तसूक्तेनेत्यर्थः ॥ घोरे भयंकरे । तव वियोगो मम भयहेतुरिति सम्बुद्ध्यर्थः । " यदस्यां जायते ह्यात्मा तस्माज्जायेति कीर्तिता " इति स्मृत्यर्थोऽपि नोपपन्न इत्यभिप्रेत्याह–हे जाय इति ॥ * ॥ तस्य पुरूरवसः । अय इति कोमलामन्त्रणे । मनसा भावेन । घोरे क्रूरचित्ते, मत्प्राणहरणात् । आवां मिश्रामिश्रौ भूत्वा वचांसि प्रेमालापान् कृणवावहै करवाव । नु अहो नौ आवयोर्मन्त्रा एते अनुदितासः अव्यक्ता न सन्ति । हे मयस्करन् प्रीतिमतिपरतरे पूर्वकृताश्च मन्त्रा नाऽहन् न नष्टा बभूवुरिति श्रुतिपदार्थः ॥ ५ ॥ क्षुल्लकान् तुच्छान् " क्षुल्लकस्त्रिषु नीचेऽल्पे ह्रस्वशीर्ष्ण्यल्पशान्तिके " इति निरुक्तिः ॥ * ॥ ० ॥ ६ ॥ तस्य पुरूरवसः । तत्र अष्टादशसु श्लोकेषु । अनुतापः पश्चात्तापः । कश्मलमाकुलम् । देव्या अप्सर

१ तस्य प्राक्तनीमिति पाठान्तरे । २ 'अये जाये' इति पाठान्तरम् ।

नाहं वेदाभिनिर्मुक्तः सूर्यो वाऽभ्युदितोऽमुया ॥ मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥ अहो मे आत्मसंमोहो येनात्मा योषितां कृतः ॥
क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥ सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ॥ यांतीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥ १० ॥
कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ॥ योऽन्वगच्छं स्त्रियं यांतीं खरवत्पादताडितः ॥११॥ किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ॥ किं
विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥ स्वार्थस्याकोविदं धिङ् मां मूर्खं पंडितमानिनम् ॥ योहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः॥१३॥

दशभिः । तत्राष्टभिरनुतापः प्रपंच्यते । अहो इति । यतो मया इमे अहोरात्ररूपा आयुःखंडा न स्मृताः ॥ ७ ॥ तदेवाह । नाहमिति । अभिनिर्मुक्तो मयि रम
माणेऽस्तं गतोऽभ्युदितो वा सूर्य इति । अमुया उर्वश्या वंचितः । बत खेदे । उतापि । वर्षपूगानामपि गतान्यहानि न वेदेति ॥ ८ ॥ येन संमोहेन । आत्मा देहः । क्रीडा
मृगवदधीनः ॥ ९ ॥ ननु प्रणयकुपिताया अनुनयार्थमधीनता युक्तैव । सत्यं न त्वत्र तदस्तीत्याह । सपरिच्छदं राज्यादिसहितमीश्वरं चक्रवर्तिनम् आत्मानं तृणमिव
त्यक्त्वा यांतीमप्यन्वगममनुगतोऽस्मि ॥ १० ॥ किंच मम प्रभावाद्यभिमानो वृथैवेत्याह । कुतस्तस्य मे तेजो बलम् । खरो यथा पादताडितोऽपि खरीमनुगच्छति
तद्वत् ॥ ११ ॥ एवंभूतस्य सर्वं साधनं व्यर्थमित्याह । किमिति । त्यागेन संन्यासेन । विविक्तेन एकांतसेवया । मौनेन वाङ्नियमेन ॥ १२ ॥ अनुतप्तः सन्नात्मानं

सा । आयुःखण्डा वयोभागाः ॥ * ॥ ० ॥ ७ ॥ तदेव आयुःखण्डाविस्मरणम् । " सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ॥ " इत्यमरः ॥ * ॥ अस्म
रणमेवाह—नाहमिति । सूर्येऽस्ते सति स्वपन्नभिनिर्मुक्तः, सूर्येऽभ्युदिते सति स्वपन्नभ्युदितः । अहं सूर्यासूर्यं न वेद नाज्ञासिषम् । सूर्य इति द्वितीयार्थे प्रथमा । वेदेति भूतेऽपि लट् "सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति
च । अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ॥" इत्यमरः । कुतो नाज्ञासीरत आह—अमुया उर्वश्या मुषितश्चोरितविवेकसर्वस्व इत्यर्थः । बत खेदे ॥ ८ ॥ आत्मनो मनसः संमोहो ज्ञानाभावः । नरदेवेषु शिखामणि
रुत्कृष्टः ॥ * ॥ ० ॥ ९ ॥ अत्रानौचित्यं परिहरन्नाक्षिपति—नन्विति । प्रणयः स्नेहः । अनुनयः आनुकूल्यम् । अत्र अप्सरसि । तत्प्रणयकुपितत्वम् । आत्मानं माम् ॥ * ॥ अत्रोर्वश्याम् ।
तत् प्रणयकुपितत्वम् ॥ १० ॥ स्वात्मनिन्दामभिनयति—किञ्चेति । अनुभावस्तत्त्वनिश्चयः । ईशित्वं योगशक्तिविशेषः । दृष्टान्तेन निर्लज्जस्य सर्वे गुणा अगुणा भवन्तीत्युक्तम् ॥ * ॥ ननु त्वं महातेजःप्रभावै
श्वर्यः कथमेवं दैन्यमालम्बसे तत्राह—कुत इति । तस्य मम ईशित्वं नियन्तृत्वम् ॥ ११ ॥ एवंभूतस्य स्त्रीजितस्य । साधनं योगादि । विद्यया शास्त्राभ्यासेनाध्यात्मविचारेण वा । तपसा कृच्छ्रादिना । श्रुतेन शास्त्र
श्रवणेन । विविक्तेन एकान्तसेवनेन ॥ * ॥ एवंभूतस्य स्त्रैणस्य विद्यया शास्त्रार्थज्ञानेन, तपसा स्वधर्मेण, श्रुतेन शास्त्रश्रवणेन ॥ १२ ॥ स्वार्थस्य आत्मतत्त्वस्य । गौर्वृषभः स यथा धावन्तीमपि गामनुधावति ।

सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ॥ न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥ पुंश्चल्याऽपहृतं चित्तं को न्वन्यो मोचितुं प्रभुः ॥ आत्मारामेश्वरमृते भगवंतमधोक्षजम् ॥ १५ ॥ बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ॥ मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥ किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः ॥ रज्जुस्वरूपाविदुषो योऽहं यदजितेंद्रियः ॥ १७ ॥ क्वायं मलीमसः कायो दौर्गंध्याद्यात्मकोऽशुचिः ॥ क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥

निंदति द्वाभ्याम् । स्वार्थस्येति । अकोविदमज्ञातारम् । गोखरवत् गौरिव खर इवेति ॥ १३ ॥ अधरासवं सेवमानस्यात्मभूर्मनसिजः पुनःपुनरुद्भवन् ॥ १४ ॥ एवमष्टभिर्निर्वेदो निरूपित इदानीं तस्य विवेकमाह दशभिः । पुंश्चल्येति । अयं भावः । कर्मभिर्देवानिष्ठा दुःखमेव प्राप्तोऽस्म्यतः परमेश्वरमेव भजेयमिति ॥ १५ ॥ परमेश्वरप्रसादं विना देवैरुपदिष्टादपि वेदवाक्यान्मोहो न निवर्तते इत्याह । बोधितस्यापीति । देव्या उर्वश्या सूक्तवाक्येन यथार्थवचनेन " पुरूरवो मा मृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उक्षन् ॥ न वै स्त्रैणानि सख्यानि संति सालावृकाणां हृदयान्येताः ॥ " इत्यनेन ॥ १६ ॥ पूर्वं 'पुंश्चल्याऽपहृतं चित्तम्' इत्यादिना तस्या अपकारोऽनुस्मृत इदानीं ममैवायमपराध इत्याह । किमेतयेति । नोऽस्माकं कामिनामेतया किमपकृतं न किंचिदपि । यथा रज्जुस्वरूपाविदुषो रज्जुद्रष्टुः पुंसस्तस्यां सर्पकल्पनया खिद्यतोऽपि रज्ज्वा किमपि नापकृतं तद्वत् । यद्यस्माद्योऽहमेवंभूतः स एवाजितेंद्रियत्वादपराधीत्यर्थः ॥ १७ ॥ ननु तथापि सैव सौगंध्यप्रेमादिगुणैः संमोहमूलमित्याशंक्य तेऽपि स्वमतिपरि

जितो वशीकृतः ॥ * ॥ स्वार्थस्य मुक्तिहेतुविचारस्य । ईश्वरतां राजराजताम् ॥ १३ ॥ अधरासवम् अधरमधु ॥ * ॥ ० ॥ १४ ॥ तस्य पुरूरवसः । कः प्रभुर्न कोऽपीति तात्पर्यमाह–अयं भाव इति । अतो दुःखनिवृत्तये ॥ * ॥ नन्विदानीं तस्मादधरासवाद्वेन मोचितः प्राप्तेदशवैतृष्ण्योऽसि तत्राह–पुंश्चल्येति । मोचितुं मोचयितुम् । आत्मारामेश्वरमृत इति आत्मारामोऽपि मादृशस्य देहारामस्य चित्तं प्रायो न शक्नोति किंत्वात्मारामेश्वरः परमेश्वर एव शक्नोतीति भावः । तत्र हेतुः निरतिशयैश्वर्यमेवेत्याह–भगवन्तं मन्मोचने परमसमर्थम् अधोक्षजम् अधः कृतं तिरस्कृतमक्षजमैन्द्रियकं ज्ञानं यस्मात्तम् ॥ * ॥ दीपिका तु–भगवन्तमृते इति–भगवानेव भक्तस्य चित्तं मोचयितुं प्रभुर्नान्ये देवा इत्यर्थः । अत एव परमेश्वरमेव भजेयमिति भावार्थोल्लेखः ॥ १५ ॥ श्रुत्यर्थमाह–हे पुरूरवस्त्वं मा मृथा मरणं न याहि । मा प्रपप्तः कामपारवश्येन भृशं पतितो मा भूरित्यर्थः । प्रपप्त इति पततेर्यङ्लुगंतरूपम् । अभ्यासदीर्घाभावादिश्छान्दसः । इमे अशिवासोऽशुद्धिहेतवो वृकासो वृकास्त्वा त्वां मा उक्षन् मा स्माद्युः न लालाजलेन प्रोक्ष्य भक्षयेयुरित्यर्थः । स्त्रीसम्बन्धीनि सख्यानि " ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुंक्ते भोजयते चैव षड्विधं सख्यलक्षणम् ॥ " इत्युक्तलक्षणमित्युक्तानि सदातनानि न सन्ति यथा शालावृकाणां हृदयानि स्त्रीणामेता एतानि हृदयानि तथा छान्दसत्वाच्छयादिलोपः । लुप्तोपमात्र बोध्येति । अजितात्मनोऽवशीकृतचित्तस्य ॥ * ॥ तथैवोपदिष्टाद्वैराग्यात्तव मोहोऽपगतस्तत्राह–बोधितस्यापि मम नापयाति नापययौ । मन्त्रार्थस्तु–मा प्रपप्तः मद्विरहेण मा प्रपप्तो भव हे पुरूरवस्त्वं मृथा मा म्रियस्व । अशिवासः अमंगलाः । वृकास इन्द्रियलक्षणा वृकास्त्वा त्वां मा अद्युर्भक्षयेयुः । इन्द्रियवशो मा भवेत्यर्थः । स्त्रैणानि स्त्रीसम्बन्धीनि सख्यानि विश्वासा न सन्ति तासु विश्वासो न कर्तव्य इत्यर्थः । यत एता एतासां स्त्रीणां हृदयानि शालावृकाणां शुनामिव नवनवाकांक्षीणीति ॥ १६ ॥ स्वापराधं स्मृत्वाह–एतया उर्वश्या । एवंभूतोऽन्यस्मिन्नन्यबुद्धियुतः । इत्यर्थ इति–रज्जुसर्पदर्शनभीत्या पाते रज्ज्वा अपराधो नास्तीति भावः ॥ * ॥ ० ॥ १७ ॥ अत्राक्षिपति–नन्विति । सैवाप्सरा एव । तेऽपि सौगन्ध्यप्रेमादिगुणा अपि । अतिमलिनः " वहद्द्रहलदूषिकं तुलितमुत्पलेनेक्षणं

पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ॥ किमात्मनः किं सुहृदामिति यो नावसीयते ॥१९॥ तस्मिन्कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते॥
अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियाः ॥ २० ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ॥ विण्मूत्रपूये रमतां कृमीणां कियदंतरम् ॥ २१ ॥

कल्पिता एवेत्याह चतुर्भिः । कायमिति । मलीमसोऽतिमलिनः । सुमनसां कुसुमानामिव गंधसौकुमार्यादिसौमनस्यं शोभनमनोभावो वा ॥ १८ ॥ ममत्वमपि तस्मिन्प
रिकल्पितमेवेत्याह । पित्रोः किं स्वं कायः जनकत्वात् । नु वितर्के । भार्याया वा भोगप्रदत्वात् । अत्रानुपयुक्तमप्येतन्न्यायतुल्यत्वादुक्तम् । स्वामिनो वाऽधीनत्वात् ।
अग्नेर्वा अंत्येष्ट्यां तदाहुतित्वात् । श्वगृध्रयोर्वा भक्ष्यत्वात् । किं वात्मनः तत्कृतशुभाशुभभागित्वात् । सुहृदां वा उपकारित्वात् । एवं यो न निश्चीयते ॥ १९ ॥ तुच्छा
कृमिविड्भस्मलक्षणा निष्ठा अंतो यस्य तस्मिन् काये कलेवरे प्रियत्वेन गृहीते । विषंगमेवाह । अहो इति । सुनसं शोभननासिकम् ॥ २० ॥ अतो गुणारोपेण रममाणा

मुखं च बहुथूत्कमप्युपमितं सुधारश्मिना । स्तनौ पिशितपूरितौ कनककुम्भवद्वर्णितौ बुधैरहह रागिभिः किमिह युक्तमुक्तं वचः ॥ ” इति विश्वम्भरात्रिपाठयुक्तेः । अध्यासोऽन्यस्मिन्नन्यत्वकल्पनमतस्मिंस्तद्बुद्धिरिति यावत् ॥ * ॥ ० ॥ १८ ॥ अन्यदाह—ममत्वमपीति । अत्र स्त्रीवर्णनप्रकृते । एतत् पुरुषवर्णनमनुपयुक्तं प्रकृतानुपयोग्यपि । न्यायोऽत्र स्वत्ववर्णनरूपः स च स्त्रीवत्पुरुषशरीरेऽपि तुल्य एवात उक्तं भार्याया इति । अन्त्येष्ट्यां चरमसंस्कारे तदाहुतित्वात् तस्याग्नेराहुतिरूपत्वात् । आत्मनः स्वस्यैव । तत्कृतयोः शरीरकृतयोः शुभाशुभयोः पुण्यपापयोर्भागित्वात् । एवमित्थम् । यः कायः ॥ * ॥ ० ॥ १९ ॥ तस्मिन्काये । कले शुक्रेऽव्यक्तमधुरध्वनौ वा । वरं श्रेष्ठमिति व्युत्पत्तेः प्रियपर्यायत्वाद्वरशब्दस्य प्रियत्वेन गृहीत इत्यर्थः । तुच्छाऽसती निष्ठा स्थितिः ‘ स्यादल्पासत्ययोस्तुच्छे ’ इति धरणिः । ‘ निष्ठा याच्ञास्थितिसिद्धिव्यवस्थानशनेषु च ’ इति निरुक्तिः । विषंगमासक्तिम् ॥ * ॥ ० ॥ २० ॥ स्नायुर्नाडी । मेदः शुद्धमांसस्नेहः । मज्जाऽस्थ्यन्तर्गतस्नेहः । पूयमामासृक् । रमतां नृणां कियदन्तरं कियानवकाशो न कियदपीत्यर्थः । साक्षान्नरकमेतन्नारीशरीरम् । तदुक्तम्—“दुर्गन्धयोनिकृमिकीर्णगभीरकुण्डं दन्तक्षतक्रकचदारुणयातनाढ्यम् । निर्मज्जनाय किल नारकिणां नराणां नारीमयं निरयमेतदकारि धात्रा ॥ ” । किञ्च—“ त्वङ्त्र स्याद्यवधायिका यदि तदा ज्ञातुः कथं कस्य वासृग्लिप्तामिषपिण्डके परिचयो नारेऽथवा कौक्कुरे । मृद्वंगीति च सुन्दरीति च तडिद्वल्लीति मूढात्मनां दीव्यद्दीपशिखेति का मतिरियं त्वङ्मात्रगुप्तामिषे ॥ लालाश्लेष्मधरे विगन्धविवरे पूर्णेन्दुबिम्बीयता पिण्डीभूतनिरास्थिमांसरुधिरे सौवर्णकुम्भीयता । मूत्रोद्गारिणि पायुवायुविरसे रन्ध्रे रतिं कुर्वता मोहान्धेन विदग्धतां प्रथयता नायुःक्षयो गण्यते ॥ ” किञ्च—“ अनर्थानां मूलं परमलघुतातूलमशुचित्वभावानां धाम प्रभवनवधाम स्फुटतरम् । समाधीनां व्याधिः शिवचरणयोर्विस्मृतिविधावपस्मारः कोऽयं रुचिर इव नारीति निरयः ॥ ” इत्यादिवाक्यैः कामार्तानां नारी निरयोपमापि सुष्ठु प्रतीयतेऽतः कामत्याग पुरःसरं हरिभक्तिरेव विधेया । तदुक्तम—“ यो धर्मद्रुमकर्तनाय कठिनः स्फीतः कुठारः कृतो यश्चार्थोच्चयशुष्कदारुदहने विश्वान्तवैश्वानरः । योऽयं मुक्तिमृगीविहिंसनविधौ शार्दूलवत्क्रीडितस्तेनालं मदनेन वै कुरुत रे कृष्णे

अथापि नोपसंसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ॥ विषयेंद्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥ २२ ॥ अदृष्टादश्रुताद्भावान्न भाव उपजायते ॥ असंप्रयुंजतः प्राणाञ्छाम्यति स्तिमितं मनः ॥ २३ ॥ तस्मात्संगो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेंद्रियैः ॥ विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् ॥ २४ ॥ श्रीभगवानुवाच ॥ एवं प्रगायन्नृपदेवदेवः स उर्वशीलोकमथो विहाय ॥ आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥ ततो दुःसंगमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ॥ संत एतस्य छिंदंति मनोव्यासंगमुक्तिभिः ॥ २६ ॥ संतोऽनपेक्षा मच्चित्ताः प्रशांताः समदर्शिनः ॥ निर्ममा निरहंकारा निर्द्वंद्वा निष्परिग्रहाः ॥ २७ ॥

मादृशाः कृमितुल्या इत्याह । त्वगादिसंहतौ तत्संघाते देहे । विण्मूत्रादिसंहतौ रमतां कृमीणाम् अस्माकं वा ॥ २१ ॥ यद्यप्येवं बीभत्सिता एव स्त्रियोऽथापि नोपसज्जेताव लोकनादिनापि संगं न कुर्यात् । अर्थविद्विवेकी । अत्र हेतुः । विषयेति ॥ २२ ॥ ननु क्वचिन्निमीलितनयनादेरपि मनःक्षोभो दृश्यते । सत्यम् । सोऽपि पूर्वदर्शनादिकं विना न भवतीत्याह । अदृष्टादिति । भावात्पदार्थात् । भावो मनःक्षोभः । अतः प्राणानिंद्रियाण्यसंप्रयुंजतोऽनियच्छतः । विषयेन्द्रियसंयोगमकुर्वत इत्यर्थः । स्तिमितं निश्चलं सत् ॥ २३ ॥ इंद्रियैः कृत्वा । अविस्रब्ध अविश्वसनीयः । मादृशामविवेकिनाम् ॥ २४ ॥ फलितमाह द्वाभ्याम् । एवमिति । नृपेषु देवेषु च दीव्यतीति तथा ॥ २५ ॥ उक्तिभिर्हितोपदेशैरिति ॥ २६ ॥ तीर्थदेवादिसंगादपि सत्संगः श्रेयानिति दर्शयति । तत्र सतां लक्षणमाह । संत इति । अत्र विशेषणाष्टकस्य यथेष्टं हेतुहेतुमद्भावः ॥ २७ ॥

सतृष्णं मनः ॥" इत्यलं प्रसक्तानुप्रसक्तेन ॥ * ॥ ० ॥ २१ ॥ बीभत्सिता निन्दिताः । अत्र संगाभावे । अन्यदा विषयेन्द्रियसंयोगाभावे मनःक्षोभो नास्तीत्यर्थः ॥ * ॥ ० ॥ २२ ॥ अत्राक्षिपति—नन्विति । सत्यमित्यर्द्धाङ्गीकारे । सोऽपि निमीलितनयनादिमनःक्षोभोऽपि । आदिना श्रवणस्पर्शादिग्रहः । यतो विषयेन्द्रियसंयोगान्मनः क्षुभ्यति अतो हेतोः । नियच्छतः विषयेभ्य आकृष्य स्ववशं कुर्वतः पुंसः शाम्यति भगवदेकनिष्ठं भवतीत्यर्थः ॥ * ॥ असंप्रयुञ्जतः स्त्रीविषये न सम्यक्प्रकारेण युञ्जानस्य ॥ २३ ॥ उक्तं निगमयति—तस्मादिति । यस्मात्सङ्ग एव दोषहेतुस्तस्मादित्यर्थः । स्त्रैणेषु स्त्र्यनुरागिषु । षण्णां मनःषष्ठानां पञ्चेन्द्रियाणां वर्गः समूहः किमु कथं विश्वसनीयः स्यादित्यर्थः ॥ * ॥ षड्वर्गः षडिन्द्रियवर्गः ॥ २४ ॥ स पुरूरवाः । अथो अतः । आत्मनि चेतसि । ज्ञानेन मदवगत्या विधूतो नष्टो मोहः स्त्र्याद्यनुरागो यस्य स तथा ॥*॥ आत्मनि मनस्यात्मानं प्रेमास्पदं मामवगम्य भक्त्याऽनुभूय उपारमद्भक्त्येष्टदेवस्य मम स्मरणपरो बभूवेत्यर्थः । ननु मोहलक्षणप्रतिबन्धके सति कथमुपरामः संगच्छेत तत्राह—ज्ञानेति । ज्ञानमत्र भगवज्ज्ञानमेव ग्राह्यं न तु निर्विशेषब्रह्मानुसन्धानम् । "आत्मारामेश्वरमृते भगवन्तमधोक्षजम्" इति तद्वाक्यात् । अतो दुःसङ्गमुत्सृज्येत्युत्तरग्रन्थस्वारस्याच्च ॥ २५ ॥ जन्मप्रभृत्यभ्यस्तो दुःसङ्गस्त्यक्तुमशक्य इति न मन्तव्यं सत्सङ्गेन शिथिलीभूतस्य त्यागः सुलभ एवेत्याशयेनाह—तत इति । यतस्तृणगूढावलम्बरहितकूपपातवद्दुःसंगोऽनर्थहेतुस्ततस्तस्माद्धेतोः । तेऽस्य किं कुर्वन्तीति चेदाह—सन्त एतस्य मनोवाक्कायकर्मभिः सम्यक् शरणं गतस्य पुंसो मनसो व्यासंगं दुष्टेषु सङ्गं पदार्थासक्तिं वा उक्तिभिरित्युक्त्या देवादिषूक्तेरभावात्संशयच्छेदासमर्थत्वात्सतां तद्वत्त्वेन तच्छेदसमर्थत्वात्तत्सङ्ग एव वरीयानिति भावः । आदिना मूढतपस्व्यादिग्रहः ॥ * ॥ व्यासंगं विरुद्धामासक्तिं सन्त एवेत्येवकारेण सुकृततीर्थदेवशास्त्रज्ञादीनां न तादृशं सामर्थ्यमिति ज्ञापितमिति **विश्वनाथः** ॥ * ॥ असत्सङ्गत्यागेऽपि न किञ्चित्किन्तु सत्संगेनैवेत्याह—तत इति । यतः संगत्यागेन पुरूरवाः कृतार्थोऽभूत्ततो हेतोः ॥ ॥ २६ ॥ के ते सन्त इति चेत्सतां लक्षणं स्वरूपमाह—अनपेक्षा निर्लोभाः । विविधनामरूपबाधेन समानुगतमद्रूपसाक्षिद्दर्शिनोऽतः प्रशान्ता देहगेहादिनामरूपबाधेन निर्ममा निरहङ्काराश्च अहंममाद्यभावान्निर्द्वन्द्वा

**तेषु नित्यं महाभाग महाभागेषु मत्कथाः ॥ संभवंति हिता नृणां जुषतां प्रपुनंत्यघम् ॥ २८ ॥ ता ये शृण्वंति गायंति ह्यनुमोदंति चादृताः ॥ मत्पराः श्रद्दधानाश्च भक्तिं विंदंति ते मयि ॥ २९ ॥ भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ॥ मय्यनंतगुणे ब्रह्मण्यानंदानुभवात्मनि ॥ ३० ॥ यथोपश्रयमाणस्य भगवंतं विभावसुम् ॥ शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥ ३१ ॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् ॥ संतो ब्रह्मविदः शांता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥**

न च तेषूपदेशापेक्षाऽपितु केवलं तत्सन्निधिरेव तारयतीत्याह तेष्विति सप्तभिः ॥२८॥ ताः कथाः श्रवणादिभिरेव मत्पराः श्रद्दधानाश्च संतो भक्तिं विंदंति ॥ २९॥३०॥ विभावसुमर्थिं सेवमानस्य । अप्येति नश्यति । तथा कर्मजाड्यमागामिसंसारभयं तन्मूलमज्ञानं च नश्यतीत्यर्थः॥ ३१ ॥ निमज्ज्योन्मज्जतामुच्चावचयोनीर्गच्छताम् ।परमायनं निष्परिग्रहाश्च । यद्वा—यथेष्टमेव स्वाम्युक्तपन्था एव श्रेयान् ॥ * ॥ सन्त एव के ते ये स्वसंगिशुभप्रदास्तेषामुक्तयश्च का इत्यपेक्षायामाह—सन्त इति द्वाभ्याम् । मच्चित्ता इति विशेष्यम् । तस्य चानपेक्षत्वादिकं स्वरूपगुणानुवादमात्रम् । 'विषयान्ध्यायतश्चित्तम्' इत्यादेरिति **संदर्भः** ॥ * ॥ अनपेक्षाः कर्मज्ञानादीन्स्वार्थं देवमनुष्यादींश्च नापेक्षन्त इति ते तथा । तर्हि त्वामपि नापेक्षन्ते तत्राह—मच्चित्ताः । त्वच्चित्ताः कंसादयोऽप्य भूवंस्तत्राह—प्रशान्ता अक्रोधनाः । यदि तान्केचिद्द्विषन्ति तर्हि तेषु ते कथमक्रोधनास्तत्राह—समदर्शिनः स्वबन्धुशत्रुतटस्थादिषु तुल्यदृष्टयः । तत्र हेतुः अहङ्कारजय एवेत्याह—निर्ममा निरहङ्कारा इति । अत एव माना पमानयोस्तुल्यत्वान्निर्द्वन्द्वाः । न पुत्रकलत्रादिमत्त्वेनैतादृशत्वं संभवेत्तत्राह—निष्परिग्रहाः त्यक्तपरिग्रहास्त्यक्ततदासक्तयो वा ये मद्भक्तास्ते सन्तः ॥ २७ ॥ सत्संगे सत्यप्युपदेशं विना कथं मनोव्यासंगनिवृत्तिरिति चेदाह—न चेति । तेषु सत्सु पूर्वपुण्यवतामेव सत्संगो भवतीति सूचयन्नाह—महाभागेति । हि यतस्ता मत्कथाः जुषतां शृण्वतां पुनन्ति नाशयन्ति ॥ * ॥ तेषामुक्तयो हि मत्कथा एवेत्याह—तेष्विति । प्रपुनन्ति प्रशब्देन तेषां संगमात्रस्यैव पावनत्वं तदुत्थकथायास्तु किमुतेति व्यञ्जितम् ॥ २८ !! ताः कथाः । अनुमोदन्ति तच्छ्रवणं श्लाघन्ते । ननु 'भक्तिः पुनाति मन्निष्ठान्' इत्याद्युक्तेः किं कथाभिरिति भक्तिहेतुत्वमपि कथानामेव 'विबुद्धय भक्त्यैव कथोपनीतया' इति ब्रह्मस्तुत्युक्तेः । "कैवल्यसंमतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात्" इति द्वितीयस्कन्धोक्तेश्च । अत उक्तम्—'भक्तिं विन्दन्ति ते मयि' इति ॥ * ॥ **दीपिका**—कथाविषयकमादरणमादृतिः सा विद्यते येषां ते आदृताः । अर्शआदित्वान्मत्वर्थीयोऽच् । भक्तिं प्रेमलक्षणाम् ॥ २९ ॥ भक्तिरेव परमपुरुषार्थ इत्याह—भक्तिमिति । किमवशिष्यते न किमपि 'सर्वे पदा हस्तिपदे निमग्नाः' इति न्यायेन सर्वपुरुषार्थस्य भक्त्यन्तर्भूतत्वादिति भावः । यद्वा—मय्यनन्तगुणे ब्रह्मणि यो निरतिशयप्रेमास्पदत्वेनानन्दः सर्वावस्थासु भास्यद्वैतानुभवरूपः क्षेत्रज्ञस्तदात्मनि प्रत्यगभिन्ने भक्तिं स्वरूपानुसन्धानं लब्धवतः किमन्यदवशिष्यते "अतोऽन्यदार्त्तम्" "नेह नानास्ति" इत्यात्मातिरिक्तसर्वबाधेन न किञ्चित्प्राप्यं कृत्यं वाऽवशिष्यत इत्यर्थः ॥ * ॥ भक्तेस्तु भक्तिरेव फलमित्याह—भक्तिमिति । तत्र हेतुः—मयीति । ब्रह्मणि सर्वतो बृहत्तमे तदेवाह—आनन्देति । "आनन्दाद्धीमानि भूतानि जायन्ते" इत्यादेः "को ह्येवान्यात्कः प्राण्यात्" इत्यादेश्च श्रुतेरानन्दस्यैव परमबृहत्तमत्वम्, तत्राप्यनन्तगुणे मधुरानन्तगुणवैचित्रीमति । ततश्च परमाति परमबृहत्तमत्वमित्यर्थः । सर्वांशेन पूर्णत्वात् । एवंभूते च या भक्तिः सैव परमपुरुषार्थतयोपयुज्यते तादृशानन्दात्मकत्वादिति भावः ॥ * ॥ **विश्वनाथस्तु**—किमप्यन्यत्फलमवशिष्यते न किमपि भक्तेरेव सर्वफलरूपत्वादिति भावः । तत्राप्यनन्तगुणे अनन्तसच्चिदानन्दात्मकाहङ्कारममकारादिगुणे इति प्रेमा ब्रह्मणीति मुक्तिः । आनन्दानुभवेति ब्रह्मसुखानुभवोऽपि तस्यानुषंगिकः स्यादिति भावः ॥ ३० ॥ इत्यर्थ इति—' सत्संगतिः कथय किं न करोति पुंसाम्' इत्याद्युक्तेः सर्वथा कल्याणावाप्तये सत्संगो विधेय इति भावः ॥ * ॥ तस्याश्च सत्संगैकजीवातुत्वात् पूर्वोद्दिष्टानां सतां स्वरूपगुणमाह—यथेति चतुर्भिः । उपश्रयमाणस्य फलविशेषकामनया यज्ञार्थं सेवमानस्य । यद्वा—स्वीयौदनसिद्ध्यर्थं सेवमानस्य अप्येति नश्यति । तथैव भजनसिद्ध्यर्थं साधून्संसेवमानस्य तन्मूलं भयकारणं तमःशब्देन भजनविघ्नो वा ॥ ३१ ॥ ० ॥ * ॥ शान्ता मन्निष्ठबुद्धयः । अत एव ब्रह्मविदः

अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ॥ धर्मो वित्तं नृणां प्रेत्य संतोऽर्वाग्बिभ्यतोऽरणम् ॥ ३३ ॥ संतो दिशंति चक्षूंषि बहिरर्कः समुत्थितः ॥ देवता बांधवाः संत संत आत्माऽहमेव च ॥ ३४ ॥ वैतसेनस्ततोऽप्येवमुर्वश्यालोकनिःस्पृहः ॥ मुक्तसंगो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे भगवदुद्धवसंवाद ऐलगीतं नाम षड्विंशोऽध्यायः ॥ २६ ॥ उद्धव उवाच ॥ क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ॥ यस्मात्त्वां ये यथार्चंति सात्वताः सात्वतर्षभ ॥ १ ॥

परमाश्रयः ॥ ३२ ॥ किंच यथा प्राणिनामन्नमेव प्राणो जीवनम् । अहमेव यथा शरणम् । धर्म एव यथा प्रेत्य परलोके वित्तम् । तथा संत एवार्वाक् संसारपाताद्बिभ्यतः पुंसः अरणं शरणम् ॥३३॥ किंच संतश्चक्षूंषि सगुणनिर्गुणज्ञानानि । अर्कः पुनः सम्यगुत्थितोऽपि बहिस्तदप्येकमेव चक्षुरित्यर्थः॥३४॥ अध्यायार्थमुपसंहरति । वैतसेन इति । सुद्युम्नभावेनोमावनं प्रविष्टस्य वीता सेना स्त्रीभावं प्राप्ता यस्य तस्य स्त्रीभावं प्राप्तस्य पुत्रो वैतसेनः पुरूरवाः। एवमुक्तप्रकारेणोर्वश्या लोकात्स्थानादवलोकनाद्वा निःस्पृहस्ततोऽपि सत्संगादपि हेतोर्मुक्तसंगः सन्नात्मारामो भूत्वा यथेष्टं चचारेति॥३५॥इति श्रीमद्भागवत एकादशस्कन्धे श्री०टीकायां पुरूरवोगीतं नाम षड्विंशोऽध्यायः ॥२६॥ सप्तविंशे क्रियायोगः सद्यश्चित्तप्रसादकः ॥ सर्वकामाप्तिहेतुश्च सांगः प्रोक्तः समासतः ॥ १ ॥ रागाद्याकुलचित्तानां कुतोऽसंगादिसंभवः ॥ इति कृष्णार्चनं भद्रमनुस्मृत्यानुपृच्छति ॥ २ ॥ क्रियायोगमिति । भवदाराधनं भवतस्तवाराधनरूपम् । यस्मादिति कारणाधिष्ठानादिप्रश्नः । सर्वकारकाणां निमित्तत्वस्याविशिष्टत्वात् ।

मद्विभूतिरूपाः सम्यगाविर्भावं ब्रह्मापि जानन्तः "मदीयं महिमानं च परं ब्रह्मेति शब्दितम्" इति ॥ ३२ ॥ दृष्टान्तपूर्वकं सन्माहात्म्यमाह—किञ्चेति । 'अरणं शरणे गतौ' इति निरुक्तिः ॥ * ॥ यथा प्राणिनामन्नार्थिनामन्नमेव प्राणाः अन्नं विना प्राणा न सिद्ध्यन्ति तथैव भक्तीच्छूनां सन्त एव भक्तिः तान्विना भक्तिर्न सिद्ध्यति, यथैवार्तानामनाथानामहमेव शरणं रक्षकस्तथैव भक्तीच्छूनां सन्त एव रक्षकाः, यथैव नृणां प्रेत्य मृत्वा कालपाशाद्बिभ्यतां धर्म एव वित्तं शरणं तथैव नरस्य भजनमार्गं प्राप्य वर्तमानस्य अर्वाक् इतस्ततः कामक्रोधादिवर्त्मपाशाद्बिभ्यतः सन्त एव भक्तिमार्गरक्षकाः शरणम् । यथा तथा शब्दौ गम्यावेवात्र ॥ ३३ ॥ अन्यदाधिक्यमाह—किञ्चेति । "चक्षुर्ज्ञाने दृशौ वाचि स्फुटायामिन्द्रियेऽपि च" इति निरुक्तिः । तदपि बहिरपि । इत्यर्थ इति—सतामनेकचक्षुःप्रदत्वादर्कादाधिक्यमस्तीति भावः ॥ * ॥ ननु भवानेवार्तानां शरणं चेत्किं सद्भिरित्याशङ्क्याह—किं बहुना, सतां मार्गे प्रतिष्ठासूनां नृणां सन्त एव सर्वनिर्वाहका इत्याह—सन्त एव मां साक्षाद्दर्शयितुं चक्षूंषि नवविधभजनानि दिशन्ति ददति । किञ्च—सूर्यं विना चक्षुर्भिरपि न कार्यसिद्धिरिति चेत् सन्त एव बहिःस्थितः सम्यगुत्थितोऽर्कः भजनचक्षुःप्रकाशक इति भावः । तस्माद्भक्तिवर्त्मचारिणां सन्त एव देवतास्तद्वत्पूज्या न त्विन्द्राद्याः, सन्त एव बान्धवा हितकारिणः न तु पितृपितृव्यमातुलादयः । "एक एव परो बन्धुर्विषमे समुपस्थिते । गुरुः सकलधर्मात्मा यत्राकिञ्चनगो हरिः॥" इत्युक्तेः सन्त एवात्मा प्रेमास्पदं न तु देहो जीवात्मा वा । एवं व्यस्ततया तत्तद्गुणवत्तामुक्त्वा सामस्त्येन सर्वगुणवत्तामाह—अहमेव चेति । अहमिष्टदेवो न तु तांस्त्यक्त्वा प्रतिमारूपोऽहमस्मीति भावः ॥ ३४ ॥ ० ॥ * ॥ एवमभीष्टमुक्त्वा प्रकरणमुपसंहरति—न केवलं प्राचीनसंस्कार एव विरागे हेतुः किन्तु अर्वाचीनसत्संगोऽपीत्यपेरर्थः । एवमस्मिन्प्रकरणे सत्संगलक्षणा भक्तिरेवाभिधेयेति ज्ञेयम ॥ ३५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥ क्रियायोगोऽर्चनप्रकारः । सांगः सोपकरणः ( १ ) । असंगः त्यागः । भद्रं भद्रकरम् ( २ ) । क्रियानिर्व

एतद्वदंति मुनयो मुहुर्निःश्रेयसं नृणाम् ॥ नारदो भगवान्व्यास आचार्योंगिरसः सुतः॥ २ ॥ निःसृतं ते मुखांभोजाद्यदाह भगवानजः ॥ पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान्भवः ॥ ३ ॥ एतद्वै सर्ववर्णानामाश्रमाणां च संमतम् ॥ श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥ ४ ॥ एतत्क मलपत्राक्ष कर्मबंधविमोचनम् ॥ भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥ श्रीभगवानुवाच ॥ न ह्यंतोऽनंतपारस्य कर्मकांडस्य चोद्धव ॥ संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥ वैदिकस्तांत्रिको मिश्र इति मे त्रिविधो मखः ॥ त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ७ ॥

यथेति कस्मिन्नधिष्ठानादौ केन प्रकारेणेति प्रश्नः । ये अधिकारिणः सात्वता भक्ताः ॥ १ ॥ अस्य पुनर्विशेषतः प्रश्ने कारणमाह चतुर्भिः । एतत्त्वदर्चनं निःश्रेयसकरं वदंति । अंगिरसः सुतो बृहस्पतिः ॥ २ ॥ निःसृतं त्वयोपदिष्टमित्यर्थः । देव्यै पार्वत्यै ॥ ३ ॥ सर्ववर्णानां त्रैवर्णिकानाम् ॥ ४ ॥ विश्वेश्वरा ये तेषामीश्वर ॥ ५ ॥ कर्मकांडस्य पूजाविधानस्य । नास्त्यंतो ग्रंथतः पारं वाऽनुष्ठानतो यस्य तस्य ॥ ६ ॥ वैदिक एव मंत्रो वैदिकान्येवांगानि च यस्मिन् पुरुषसूक्तादौ स वैदिकः । एवं तांत्रि

र्तकत्वं हि कारकत्वं सर्वेषां कारकाणां कर्त्रादीनां निमित्तत्वं क्रियां प्रति साक्षात्साधकत्वस्याविशिष्टत्वात्तुल्यत्वात् । तथाहि—"कर्ता कर्म च करणं सम्प्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट् ॥" तत्र च कर्ता साक्षात्क्रियाजनकत्वेन, कर्म तु फलाश्रयत्वेन, करणं तु साधनत्वेन, सम्प्रदानं हि दानस्वीकर्तृत्वेन, अपादानं च विभागाश्रयत्वेन, अधिकरणमाधारत्वेन तत्तत्क्रियाहेतुरिति सर्वेषां यथायथं क्रिया न्वयित्वमित्थं बोध्यम् । सात्वता भक्ताः । भक्तप्रियस्य तवैतत्कथनमुचितमित्यभिप्रेत्याह—सात्वतर्षभेति ॥ * ॥ उक्तलक्षणसत्संगसहिता भक्तिः पुत्रकलत्राद्यासक्तैर्दुर्लभाऽतस्तेषामपि निस्तारिकामागमोक्तार्चनभक्तिमनुसृत्य पृच्छति—क्रियायोगमिति । हे प्रभो इति केवलया सत्संगादिहीनयाऽप्यर्चनरूपया भक्त्या मोचयितुं समर्थोऽसीति भावः । हे सात्वतर्षभेति—सात्वतपदोदिताऽर्चकभक्ता एव ते ऋषभाः प्रिया अतस्तमर्चनप्रकारमेव मे ब्रूहीति भावः ॥ १ ॥ अस्य क्रियायोगस्य । मुनयः 'श्रेयो निःश्रेयसामृतम्' इत्यमरोक्तेर्मोक्षहेतुं वदन्ति; तान्कांश्चिन्नामतो निर्दिशति—नारद इति ॥ * ॥ प्रमाणयति—एतदिति द्वाभ्याम् । अंगिरसः सुत इति—तस्य भगवद्ध र्मोपदेशे स्वगुरुत्वं व्यञ्जयति । युक्तञ्च तत्, श्रीभागवते तस्य संकर्षणसम्प्रदायित्वात् ॥ २ ॥ न केवलमृषिभिरेवोपदिष्टमपि तु भवतापीत्याह—निःसृतमिति । इत्यर्थ इति—'सूर्योऽग्निर्ब्राह्मणो गावः' इत्यारभ्य 'धिष्ण्येष्वेतेषु मद्रूपम्' इत्यादिनोक्तमिति भावः ॥ * ॥ न च वीतसंगानां स्मरणादिकं नरमात्राणामेव स्यात्तत्पुनरेतादिति वाच्यम्, यत एतदिति तेषामेव संमतत्वादिति भावः । मुखस्याम्भोजरू पकेणार्चनस्य मधुत्वमारोप्यते । तेन मादकत्वात्स्वयमेव रागादिविस्मरणमिति भावः । यत् अर्चनम् ॥ ३ ॥ ० ॥ * ॥ अत्र सर्वाधिकारमाह—एतदिति । मानदेति—एतत्कथनेन सर्वेषां मानप्रदानं स्यात्सर्वहित कारित्वादस्येति भावः ॥ ४ ॥ एतत्कर्मत्वेऽपि कर्मबन्धमोचकमिति चित्रम् । कमलपत्राक्षेति कारुण्योत्पादनाय । विश्वेश्वरा ब्रह्मादयः ॥ * ॥ हे कमलपत्राक्षेति—त्वयैवार्चनमार्गस्याधिक्यं स्वनेत्रस्य कमलस्थाने सम र्पणात्प्रकटितमिति भावः । हे विश्वेश्वराणां महापुरुषादीनामपीश्वरस्त्वमसि स्वयंभगवत्त्वात्तथापि पूजनमार्गस्योत्कर्ष एवासूचि स्वस्वरूपभूतस्यैव हरस्यार्चनादिति भावः । ननु त्वं मद्भक्तः परमानुरागी भवसि किं तवा नेन तत्राह—भक्तायाऽप्यनुरक्तायाऽपि ब्रूहि ॥ ५ ॥ यथावदित्यव्ययं यथोचिते । अनुपूर्वशः ब्राह्मणादिक्रमेण अङ्गोपांगादिक्रमेण वा ॥ * ॥ परमप्रीतो भगवांस्तन्नाम्नैवामन्त्रयति—हे उद्धवेति । त्वमुत्कृष्टानामपि धवः स्वामी भविष्यसि मदर्चनप्रभावादिति भावः ॥ ६ ॥ एवं तान्त्रिक एव मन्त्रस्तान्त्रिकान्येवांगानि यस्मिन्नंगन्यासादिविधानबहुलपद्धतिग्रन्थे स तान्त्रिकः पौराणिकतान्त्रिकवैदिकमन्त्रैर्मिश्रः । आदिना षडक्षरद्वादशाक्षरा

यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ॥ यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ८ ॥ अर्चायां स्थंडिलेऽग्नौ वा सूर्ये वाऽप्सु हृदि द्विजे ॥ द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं माममायया ॥ ९ ॥ पूर्वं स्नानं प्रकुर्वीत धौतदंतोंगशुद्धये ॥ उभयैरपि च स्नानं मंत्रैर्मृद्ग्रहणादिना ॥ १० ॥

कोऽपि । मिश्रोऽष्टाक्षरादिः । मखः पूजा ॥ ७ ॥ यदा त्रैवर्णिको यजेत तदा विशेषमाह । यदा गर्भाष्टमैकादशद्वादशाब्दादिकाले स्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तं द्विजत्वमुपनयनम् ॥ ८ ॥ अर्चायां प्रतिमादौ ॥ ९ ॥ स्नाने विशेषमाह । उभयैर्वैदिकैस्तांत्रिकैश्च मंत्रैः ॥ १० ॥

दिग्रहः । ईप्सितेन यथोचितेन । द्विजैर्वैदिकेन, स्त्रीशूद्राभ्यां पौराणिकेन, भ्रष्टविप्राणां कुण्डगोलकादिरूपाणां तान्त्रिकेण विधिना यथोचिता शालग्राममूर्त्याद्यन्यतमानां पूजा कार्या । " शालग्रामशिलास्पर्शाच्छूद्र श्चाण्डालतां व्रजेत् " इत्याद्युक्तेः । " स्त्रीशूद्रकरसंस्पर्शो वज्रपातसमो मम " इति पुराणान्तरे श्रीमुखोक्तेश्च । " शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽथ वा । केशवं वा शिवं स्पृष्ट्वा नरकं प्राप्नुयाद्ध्रुवम् ॥ मूर्ति पूजा तु विहिता सदा स्त्रीशूद्रयोर्विभो । सति प्रेम्णि वर्जयित्वा शालग्रामं च नार्मदम् ॥ " इत्यादि बहु निर्णयसुधाकरे प्रपञ्चितमस्माभिरिति । पाद्मे तु–" दीक्षायुक्तैः सदा शूद्रैर्मद्यपानविवर्जितैः । कर्तव्यं ब्राह्मण द्वारा शालग्रामशिलार्चनम् ॥ " इति ॥ * ॥ ईप्सितेनैवेति–स्वस्वाधिकारप्राप्ततया तत्रापि स्वश्रद्धानुसारेणेत्यर्थः । ततः स्त्रीशूद्राणां केवलस्तान्त्रिकः अन्येषां त्वन्यतरो मिश्रो वेति विवेक इति सन्दर्भः ॥ ७ ॥ वेदेन श्रुत्या स्मृत्या वोक्तम् । तथाह्याश्वलायनः–" गर्भाष्टमेऽष्टमे वाब्दे पञ्चमे सप्तमेऽपि वा । द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ॥ द्वादशेऽब्दे वैश्यजातश्चतुर्थो न कदाचन ॥ " इति । " वसन्ते ब्राह्मणं ग्रीष्मे राजन्यं शरदि वैश्यम् " इति आपस्तम्बः । वृद्धवसिष्ठोऽपि–" विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे । दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे ॥ " इति । मनुस्तु–" ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ॥ " । गौणकालं मनुराह–" आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥" इति ॥ * ॥ मुख्यतया द्विजमेवाधिकृत्योपदिशन्नन्यानपि यथास्वमुपदिशति–यदेति ॥ ८ ॥ स्थण्डिलं संस्कृता भूमिः । वाशब्दश्चार्थे । स्वगुरुमित्युक्तेरादौ गुरुं संपूज्य मत्पूजनमिति प्रतीयते ॥ * ॥ तत्रापि शक्त्यनुसारेण पूजाधिष्ठानं विकल्पयति–प्रथमं त्वर्चायामेव विधिर शक्त्यैवोत्तरत्रेति भावः ॥ ९ ॥ धौतदन्तः कृतदन्तधावनः । " दन्तान्प्रक्षाल्य स्नायात् " इति छन्दोगपरिशिष्टात् । " दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत " इतिवत्स्नानाधिकारसिद्ध्यर्थं दन्तधावनम् । व्यासस्तु– " प्रतिपद्दर्शषष्ठीषु नवम्यां श्राद्धसूरयोः । उपवासे जन्मदिने पर्वैः स्याद्दन्तधावनम् ॥ जिह्वाशुद्धिः सदा कार्या निषिद्धेऽपि दिने सदा । अलाभे दन्तकाष्ठानां निषिद्धे च तथा दिने ॥ अपां द्वादशगण्डूषैर्विदध्याद्दन्त धावनम् ॥ " । विष्णुः–" द्वादशांगुलिकं विप्रे काष्ठमाहुर्मनीषिणः । शूद्रविट्क्षत्रजातीनां नवषट्चतुरंगुलम् ॥ " । नारसिंहे–"तिन्तिणी वेणुपृष्ठं च आम्रनिम्बौ तथैव च । अपामार्गश्च बिल्वश्च ह्यर्कश्चोदुम्बरस्तथा ॥ बदरीतिन्दुकास्त्वेते प्रशस्ता दन्तधावने । सर्वे कण्टकिनः पुण्या विना सरलकंटकम् ॥ " इत्यलम् । शातातपः–" दन्तधावनमंगुल्या प्रत्यक्षं लवणं तथा । मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥ " मृत्तिका स्वयंमृतपशुमांसम् । विष्णुः–"प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च । दक्षिणेन तथा कष्टं पश्चिमेन पराजयः ॥ उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च । पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात् ॥ " दन्त धावनमन्त्रः–" अन्नाद्याय व्यूहध्वं सोमो एषामामिह भगवत् स मे मुखं प्रमार्ज्यते यशश्च च भगेन च " इति । शाखाभिमन्त्रणं तु–" आयुर्बलं यशो वर्चः प्रजापशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ " इत्यनेन कुर्यात् । तदकरणे वाराहे–" अकृत्वा दन्तशौचं हि यो हि मामुपसर्पति । सर्वकालकृतं कर्म तेन चैकेन नश्यति ॥ " इति भगवदुक्तिः । स्नानमाह वैदिकमन्त्रैः–" इमं मे गंगे यमुने सरस्वति शतद्रु स्तोमं९ स च ता परुष्ण्या आशित्क्या मरुद्वृधे वितस्तया जिकीये शृणु ह्याशिषो मया " इत्याद्यैः । अस्यार्थः–हे गंगे हे यमुने हे सरस्वति हे शतद्रु हे मरुद्वृधे हे जिकीये मया ममाशिष आशंसाः शृणु हि शृणु

**संध्योपास्त्यादिकर्माणि वेदेनाऽऽचोदितानि मे ॥ पूजां तैः कल्पयेत्सम्यक्संकल्पः कर्मपावनीम् ॥ ११ ॥**
**शैली दारुमयी लौही लेप्या लेख्या च सैकती ॥ मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ १२ ॥**

किंच संध्योपासनादीनि कर्माणि आचोदितानि साकल्येन विहितानि यस्य यानि तैः सह मे पूजां कुर्यात् । नतु तानि परित्यजेदित्यर्थः । सम्यक् परमेश्वरविषय एव संकल्पो यस्य स सम्यक्संकल्पः तथाभूतः सन् कर्मपावनीं कर्मबन्धनिर्हारिणीम् ॥ ११ ॥ अर्चाभेदानाह सार्धेन । शैली शिलामयी । लौही सुवर्णादिमयी । लेप्या मृच्चंदनादिमयी । हृदि पूजायां मनोमयी ॥ १२ ॥

तेत्यर्थः । आशंसामाह—मे मदर्थे मदीयस्नानार्थे परुष्ण्या आशिक्न्या वितस्तया सह इमं स्तोमं स च ता अस्मिन्पुरोवर्तिस्नानजलस्तोमे समवेता भवतेत्यर्थः । अनेन जलमभिमन्त्र्य ततः "आपोहिष्ठा—" इत्यादिभिर्मार्जयेत् । ततः "समुद्रे ते हृदयमप्स्वन्तः सन्त्वाविशंत्वोषधीरुताप: यज्ञेस्यत्वा यज्ञपते सूक्तोक्तौ नमो वाके विधेम स्वाहा" इत्याचामेत् । ततो जले निमज्ज्याघमर्षणं जपेत् । तान्त्रिकमन्त्रास्तु—"अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत् । तीर्थं प्रकल्पयेद्विद्वान्मूलमन्त्रेण मन्त्रवित् ॥ ॐ नमो नारायणायेति मूलमन्त्रउदाहृतः ॥" । किञ्च—"विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता।पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात्॥ विष्णुपादार्घसम्भूते गंगे त्रिपथगामिनि । धर्मद्रवीति विख्याते पापं मे हर जाह्नवि ॥ तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि ॥ नन्दिनीत्येव ते नाम देवेषु नलिनीति च ॥ वृन्दा पृथिवी च विहगा विश्वकाया शिवा शिता।विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी॥क्षेम्या च जाह्नवी चैव शान्ता शांतिप्रदायिनी । एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ॥ भवेत्सन्निहिता तत्र गंगा त्रिपथगामिनी ॥" ततो मृत्तिकालम्भनम्—"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपांसुरे" इति मन्त्रेण । मृद्ग्रहणादित्यादिना गोमयग्रहः । तत्र मंत्रः—"ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥" इति । यद्वा—"अघमर्षणमन्त्रेण त्रिरावृत्तेन नित्यशः । स्नानाचरणमित्येतत्समुद्दिष्टं महात्मभिः ॥" इति । "कालदोषादसामर्थ्यान्न शक्नोति यदा ह्यसौ । तदा ज्ञात्वा ऋषिभ्यस्तु मन्त्रैर्दृष्टैन्तु मार्जनम् ॥' कालदोषाच्छैत्यादेः । असामर्थ्याद्रोगादिना परिश्रमेण वा । मार्जनं मन्त्रस्नानम् । तच्च—"शन्न आपस्तद्द्रुपदा आपो हिष्ठाघमर्षणम् । एतैश्चतुर्भिर्मन्त्रैश्च मार्जनं समुदाहृतम् ॥" यद्वा—"सर्वेषु स्नानकल्पेषु गायत्रं स्नानमाचरेत् । गायत्र्या जलमादाय दशकृत्वोभिमन्त्र्य च ॥ शिरश्चांगानि सर्वाणि प्रोक्षयेत्तेन वारिणा । स्नानं गायत्रकं नाम सर्वपापप्रणाशनम् ॥" इत्यलं प्रसक्तानुप्रसक्तेन ॥ * ॥ मन्त्रैः 'अश्वक्रान्ते' इत्यादिमन्त्रैस्तथा गोमयमन्त्रैः "गन्धद्वाराम्" इत्याद्यैस्तीर्थावाहनगंगास्मरणादिभिश्च ॥१०॥ "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यत्किञ्चित्कुरुते कर्म न तस्य फलभाग्भवेत् ॥" इति दक्षोक्तेः सन्ध्यानन्तरमेव कर्माधिकारो न ततः प्रागिति । इत्यर्थ इति—तत्त्यागे पूजावैयर्थ्यापत्तेरिति भावः । तैः सन्ध्यादिकर्मभिः सम्यक् पूजादौ संकल्पो देशकालादिकीर्तनलक्षणो यस्य स तथा । "संकल्पं च सदा कुर्यात्स्नानदानव्रतादिषु । अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति वा ॥" इति मार्कण्डेयोक्तेः । "तोयं पात्रेऽथवा हस्ते युक्तं दर्भतिलादिभिः । आदाय प्रयतो भूत्वा उपविश्यासने वरे ॥ ॐ तत्सदद्येत्युक्त्वादौ देशकालादिकीर्तनम् । कृत्वा स्वनामगोत्रोक्तिं प्रवरोक्तिं विधाय च ॥ देयनामाधिपावुक्त्वा स्वेहितोच्चारणं तथा । यत्र वाक्ये स विज्ञेयः संकल्पः पुण्यवृद्धिकृत् ॥" इति निर्णयसुधाकरे संकल्पस्वरूपमुक्तम् । कर्मबन्धनिर्हारिणीं मोक्षकरीम् । आदिनोर्द्ध्वपुण्ड्रादिग्रहः । तच्च "पुण्ड्रं हरिपदाकृति" इत्याथर्वणिकश्रुतेः नासिकार्द्धभागतः केशान्तं कार्यं सान्तरालं मध्यलेपरहितमधोनासिकाभागे पार्ष्ण्यधोभागसदृशमूर्द्ध्वपुण्ड्रमित्युच्यते । एतन्मुख्यमूर्द्ध्वपुण्ड्रमत्र विशेषस्त्वाधुनिकैः कल्पित एव । तच्च गोपीचन्दनसितचन्दनादिभिः सर्वाभावे जलेन वा । "ऊर्द्ध्वपुण्ड्रं विना सर्वं जपपूजादिकं वृथा" इत्युक्तेः ॥ * ॥ "सन्ध्याहीनेन विप्रेण कृतं कर्म निरर्थकम्" इति सन्ध्याया आवश्यकत्वम् । विप्रेणेत्युपलक्षणं द्विजातेः । कर्मापि सुकृतमेव न तु व्यभिचारादि । "सन्ध्योपासनमाद्यंगं पित्र्यदैवतकर्मणाम्" इति बारतान्तव्युक्तेः ॥ ११ ॥ आदिना रजतादिग्रहः । "सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु

**चलाचलेति द्विविधा प्रतिष्ठा जीवमंदिरम् ॥ उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥**
**अस्थिरायां विकल्पः स्यात्स्थंडिले तु भवेद्द्वयम् ॥ स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥**

प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठा प्रतिमैव द्विविधा जीवस्य भगवतो मंदिरम् । यद्वा प्रतिष्ठया कलान्यासेन भगवन्मंदिरं भवतीति । प्रतिमाभेदेन विशेषमाह सार्धेन । उद्वासो विसर्जनम् ॥१३॥ अस्थिरायामर्चने विकल्पः । शालग्रामे न कुर्यात्सैकत्यां कुर्यादन्यत्र कुर्याद्वा न वेति । अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायाम् । अन्यत्र विलेप्यायां

सीसं कालायसं चैवमष्टौ लोहाः प्रकीर्तिताः ॥" इति क्षीरस्वामी । 'स्यात्सर्वं तैजसं लोहम्' इत्यमरव्याख्यायां जगाद । भविष्ये—"सौवर्णी राजती ताम्री मृन्मयी च तथा भवेत् । पाषाणी धातुसंयुक्ता रीतिकांस्यमयी तथा ॥ शुद्धदारुमयी चापि देवतार्चा प्रशस्यते । अंगुष्ठपर्वादारभ्य वितस्तिं यावदेव तु । गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥" इति । "तत्र काष्ठेषु माधूकमानीय च वसुन्धरे । कृत्वा तत्प्रतिमां चैव प्रतिष्ठाविधिनार्चयेत् ॥" इति वाराहे । लेप्या लेपननिवृत्ता औषधरससंलिप्ता शिलादिषु तत्कालरचितेत्यर्थः । लेख्या पट्टादिलिखितचित्रलक्षणा । सैकती तत्तत्कालोचितासिकताकृता मृन्मयीत्यर्थः । चित्तप्रतिबिम्बिताकृतिर्मनोमयी मानसपूजोपयोगिनी । मणिमयी स्फटिकसूर्यकान्तादिरचिता ॥ * ॥ प्राधान्यादर्चाया एव भेदानाह—शैलीति । सैकती तु सकामानामेव न तु प्रीतीच्छूनां तद्रक्षणारक्षणयोः प्रीतिविरोधात् ॥ १२ ॥ 'अप्रसिद्धकल्पनातः प्रसिद्धकल्पना न्याय्या' इत्याह—यद्वेति । कलास्तु—शशिनी, अभयदा, ब्रह्मेष्टदा, मरीची, ज्वालिनी, शांतिः, विद्या, प्रतिष्ठा, धृतिः, तमा, मोहा, रक्षा, निद्रा, सर्वव्याधिः, मृत्युः, क्षुधा, तृषा, रजा, स्वाहा, रतिः, कल्याणी, कामा, संविनी, क्रिया, वृद्धिः, छाया, धात्री, भ्रामणी, शोषिणी, ज्वरा, सिद्धिः, ऋद्धिः, दितिः, लक्ष्मीः, मेधा, कांतिः, स्वधा, प्रभा इत्यष्टात्रिंशत्सन्ति । एषां न्यासानां प्रयोगस्तु प्रतिष्ठापद्धतितोऽवसेयः । "कलान्यासमृते देवो नैव सान्निध्यमृच्छति" इति पूर्तकमलाकरोक्तेः । स्थिरायां मन्दिरादिषु मन्त्रैरचलविधिना स्थापितायाम् । उद्वासो विसर्जनम् । "यावच्चन्द्रावनीसूर्यास्तिष्ठन्त्यप्रतिघातिनः । तावत्त्वयात्र देवेश स्थेयं भक्तानुकम्पया ॥" इत्यादिमन्त्रैराकल्पवासस्य प्रतिज्ञातत्वात् ॥ * ॥ चलेत्यर्द्धकम् । द्विविधा प्रतिष्ठा प्रतिमा । जीवमन्दिरं यः सर्वेषां जीवानामाश्रयोऽहं तद्रूपमेव भावयेदित्यर्थः । वक्ष्यते च—'व्यस्तांगं मां प्रपूजयेत्' इति । "अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम्" इति । 'शिरो मत्पादयोः कृत्वा' इति च संदर्भः ॥ * ॥ अचला श्रीजगन्नाथादिः । चला बालमुकुन्दादिः । उद्वासो विसर्जनमावाहनं च ते स्थिरायामचलायां चलायाञ्च न स्त इति प्रतिष्ठासमय एव नित्यस्थायित्वेनावाहनात् ॥ १३ ॥ अस्थिरायां शालग्रामादिरूपायाम् । " शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते । शालग्रामार्चने नैवमावाहनविसर्जने ॥ " इति स्कान्दोक्तेः । स्थण्डिले भूम्यादिलिखितयन्त्रादिरूपपीठपूजायां सैकतायां च द्वयमावाहनविसर्जने स्तः । अन्यत्र दारुमयीमणिमय्यादिषु कुर्याद्वा न कुर्यात्स्वेच्छैव तत्र प्रमाणम् । अविलेप्यायामंगेषु रंगविलेपरहितायां स्नानं विलेपवत्यां तु परिमार्जनमागन्तुकरजआदेरुत्तारणम् "शिलायां स्नपनं कुर्यादन्यत्र परिमार्जनम्" इति वचनात्तु शालग्राम एव स्नानावश्यकता नान्यत्र । वस्तुतस्तु " प्रतिमायां त्वलंकारः प्रियो मे रघुनन्दन" इति वचनाद्यथालंकाराविरोधो न स्यात्तथा कर्तव्यम् । यत्र दर्पणे संमुखं भावनया स्नानं कारयेत् । किञ्च—"प्रतिमापट्टयन्त्राणां स्नानं नैव प्रकारयेत् । कारयेत्पर्वदिवसे यदा वा मलधारणम् ॥" इति । "शालग्रामे मणौ यन्त्रे स्थण्डिले प्रतिमायां वा देवमावाहयेत्" इति गौतमगृह्यचतुर्दशाध्यायसूत्राच्छालग्रामाद्यन्यतमाधिकरणे देवं विष्णुमावाहयेत्पूजयेदित्यर्थः । यथाश्रुतार्थस्वीकारे "शालग्रामशिलायां तु नावाहनविसर्जने । प्रतिष्ठिते तथा यन्त्रे प्रतिमायां च तादृशि ॥" इति शास्त्रव्याकोपापत्तेः । एतेन ये वदन्ति 'शालग्रामार्चने न वेदः प्रमाणम्' इति ते निरस्ताः । सूत्राणामष्टधा :ब्राह्मणे गणितत्वात्

१ "प्रतिमापूजनाद्ब्रह्मत्वं च गत्वाऽमृतत्वं च गच्छति" इति सामवेदीयप्रतिमोपनिषच्छ्रुतेः ।

**द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ॥ भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि ॥ १९ ॥**

**लेख्यायां च परिमार्जनमेव ॥ १४ ॥ इदानीं सकामनिष्कामभेदेन विशेषमाह । द्रव्यैरिति । प्रकर्षेण सिद्धैः सुशोभनैः । अमायिनो निष्कामस्य भक्तस्य तु यथालब्धैः ।**

'मंत्रब्राह्मणयोर्वेदः' इति वेदलक्षणस्य सूत्रेषु सत्त्वात् इति तत्त्वम् ॥*॥ अस्थिरायामस्थैर्यस्वभावायाम् । सैकत्यां लेप्यायां च विकल्पः, सा यदि कतिचिद्दिनानि स्थिरीकृता स्यात्तदा भक्तविश्वासभेदवशात्कश्चिन्न कुरुतेऽन्यथा तु कुरुते च । शालग्रामे तु नैव कुर्यात् । स्थण्डिले उपलिप्तस्थले त्वित्युपलक्षणं सैकत्यामपि कुर्यादेवेत्यर्थ इति **विश्वनाथः** ॥ * ॥ अविलेप्यायामिति लेख्याया दारुमय्याश्चोपलक्षणम् उपलक्षणत्वान्न सर्वदारुमयी ॥ १४ ॥ द्रव्यैः पुष्पचन्दनधूपदीपनैवेद्यादिभिः । तत्र जलं शङ्खेर्पितं सर्वमेव गंगोदकादप्यधिकं भवेत् । तदुक्तं स्कान्दे–" शङ्खस्थितेन तोयेन यः स्नापयति माधवम् । कपिलाशतसहस्रस्य फलं प्राप्नोति मानवः ॥ नार्यं तडागजं वापि वापीकूपसमुद्भवम् । गांगेयादधिकं शङ्खे एवमाह जनार्दनः ॥ कृत्वा गंगोदकं शङ्खे यः स्नापयति केशवम् । नमो नारायणेत्युक्त्वा मुच्यते योनिसङ्कटात् ॥ शङ्खे तीर्थोदकं कृत्वा यः स्नापयति केशवम् । बिन्दुमात्रेण द्वादश्यां कुलानां तारयेच्छतम् ॥ " इति । विष्णुधर्मोत्तरे–" कलौ यच्छन्ति ये विष्णोस्तुलसीकाष्ठचन्दनम् । विष्णुप्रीतिकरं मर्त्या उत्तमां यान्ति ते गतिम् ॥ तुलसीदारुजातेन चन्दनेन कलौ नरः । विलिप्य भक्तितो विष्णुं रमते सन्निधौ हरेः ॥ " नारदीयेऽपि–" यथा विष्णोः सदाऽभीष्टं नैवेद्यं शालिसंभवम् । शुकेनोक्तं पुराणं च तथा तुलसिचन्दनम् ॥ " अथ पत्राणि–" अपामार्गस्य प्रथमं भृंगराजमतः परम् । तस्माच्च खादिरं श्रेष्ठं शमीपत्रं ततः परम् ॥ दूर्वापत्रं ततः श्रेष्ठं ततोऽपि कुशपत्रकम् । तस्माद्दमनकं श्रेष्ठं ततो बिल्वस्य पत्रकम् ॥ बिल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमम् । एतेषां तु यथालाभं पत्रैर्यश्चार्चयेद्धरिम् ॥ सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।"। धात्र्यश्वत्थादिपत्रफलमप्युक्तं ध्रुवचरिते नारसिंहे–" कृष्णमूर्द्धनि विन्यस्ता तुलसीपत्रमञ्जरी । सुवर्णकोटिपुण्यानां पुण्यं यच्छत्यतोऽधिकम् ॥"। पुष्पाणि–" मल्लिकामालतीजातीकेतकाऽशोकचम्पकैः । पुन्नागनागबकुलैः पद्मैरुत्पलजातिभिः ॥ एतैरन्यैश्च कुसुमैः प्रशस्तैरर्चयेद्धरिम् । न शुष्कैरर्चयेद्विष्णुं न पुष्पैर्धरणीं गतैः ॥ न विशीर्णदलैस्त्विष्टैर्नाशुभैर्नाविकासिभिः । पूतिगन्धीन्यगन्धीनि ह्यम्बुगन्धीनि वर्जयेत् ॥ न गृहे करवीरोत्थैः कुसुमैरर्चयेद्धरिम् । पतितैर्मुकुलैर्म्लानैः श्वासजन्तुविदूषितैः ॥ आघ्रातैरंगसंस्पृष्टैर्याचितैरपि नार्चयेत् । " । उपवनस्थकरवीरेण तु पूजयेत् । " करवीरैर्महादेवि यः पूजयति केशवम् । दशसौवर्णिकैः पुष्पैर्यत्फलं तदवाप्नुयात् ॥ दमनेन तु देवेशं सम्प्राप्ते मधुमाधवे । गोशतस्य मुनिश्रेष्ठ पूजनाल्लभते फलम् ॥ मञ्जरीं सहकारस्य केशवोपारि नारद । यच्छन्ति ते महात्मानो गोकोटिफलभागिनः ॥ पुष्पमूर्द्ध्वमुखं योज्यं पत्रं योज्यं त्वधोमुखम् । फलं तु सम्मुखं योज्यं यथोत्पन्नं तथार्पयेत् ॥ वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् । अवर्ज्यं जाह्नवीतोयं तुलसीबिल्वपद्मकम् ॥" । स्कान्दे–" बकपुष्पं बिल्वपत्रं कुशपत्रं कुशेशयम् । वर्णपुष्पं कुसुम्भञ्च तथा कुंकुमकेशरम् ॥ लवंगं दमनं चैव नलकोशोद्भवं तथा । सौवर्णं राजतं पुष्पं नैव पर्युषितं भवेत् ॥ तथैवामर्दकीपत्रं तुलसीपत्रमेव च । नैव पर्युषितं भूयादपि वर्षान्तरे गते ॥ वर्ज्यं पर्युषितं तोयं पत्राणि कुसुमानि च । तुलस्यगास्तिबिल्वानि गंगावारि न दुष्यति ॥ तुलस्यां बिल्वपत्रे च जलजेषु च सर्वशः । न पर्युषितदोषोऽस्ति मालाकारगृहे तथा ॥" इति । " देहोपरि धृतं यच्च वामहस्ते धृतं च यत् । अधोवस्त्रधृतं यच्च जलेन क्षालितं च यत् ॥ देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम् ।" इति । "मणिमुक्तासुवर्णानि देवि दत्तानि यानि च । न निर्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च ॥ पटी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः । पट्टसूत्रं त्रिमासञ्च यज्ञसूत्रं त्र्यहः स्मृतम् ॥" इति योगिनीतन्त्रे । तत्त्वसागरे तु–"वस्त्रोपवीते शुद्ध्येतां प्रोक्षणात्प्रत्यहं शिवे । यावत्सूर्यश्च चन्द्रश्च यावत्तिष्ठंति देवताः ॥ न निर्माल्यं भवेत्तावत्स्वर्णरूप्यविभूषणम् । " । वामने–"हिरुका कंकणं दारु सिह्लिकागुरुवासिता । शंखं जातीफलं श्रीमात्प्रिया धूपा हरेरिमे ॥ " इति । हिरुका मांसी । कंकणं गुग्गुलु । दारु देवदारु । सिह्लिका शंखम् । किञ्च–" हैरण्यं राजतं कांस्यं ताम्रं मृन्मयमेव च । पालाशं पद्मपत्रं च पात्रं विष्णोरतिप्रियम् ॥ हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् । नैवेद्यं देवदेवाय

स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव ॥ स्थंडिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ १६ ॥
सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ॥ श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥ १७ ॥

यत्र चंदनादि सर्वथा न लभ्यते तत्र हृदि भावेन भावनया। यद्वा हृदि चेन्मद्यागस्तदा भावेन मनोमयैर्द्रव्यैरित्यर्थः ॥ १५ ॥ अधिष्ठानभेदेन प्रधानोपचारमाह सार्धेन। स्नानेति। तत्त्वविन्यासो यथास्थानमंगप्रधानदेवतानां तत्तन्मंत्रैः स्थानम् ॥ १६ ॥ अभ्यर्हणमुपस्थानार्घादि। सलिलादिभिस्तर्पणादिना यजनम्। सर्वसाधारणमाह।

यावकं पायसं तथा ॥ नैवेद्यवस्त्वलाभे तु फलानि विनिवेदयेत् । फलानामप्यलाभे तु तृणगुल्मलतौषधीः ॥ ओषधीनामलाभे तु तोयान्यपि निवेदयेत् । याचितैः पत्रपुष्पाद्यैर्यः करोति सुरार्चनम् ॥ वृथा भवति सा पूजा ह्यपराधी भवेन्नरः। '' इत्यलं प्रसक्तानुप्रसक्तेन। सर्वथा सर्वानुपलब्धिः कदापि न संभवतीत्याह—यद्वेति । इत्यर्थ इति—मानसयागे मानसद्रव्याणामेव योग्यतेति भावः । यद्वा—शास्त्रप्रसिद्धैः षोडशोपचारोपयोगिभिः प्रतिमादिषु अमायिनो वित्तशाठ्यकापटयरहितस्य मद्यागः स्यात् । अशक्तस्य तु यथालब्धैरुपचारैः हृदि तु सर्वस्य भावनयैवेत्यर्थः ॥ * ॥ प्रकर्षेण धनादिव्ययेन सिद्धैः खण्डघृतचन्दनकुंकुमादिभिः यथालब्धैर्यदृच्छया प्राप्तैः भावनया च मनसैवोपस्थापितैर्दुर्लभैरपि सुरभिपयःपरमान्नसितानवनीतादिभिरर्चयेत् । मूले आदिना स्थण्डिलादिग्रहः । टीकायां पूर्वार्थे यत्र चन्दनादीत्यादिप्रतिपत्तिगौरवं मत्वाह—यद्वेति ॥ १५ ॥ प्रधानोपचारमाह—सार्द्धेन। तुशब्देन शालग्रामेऽपि यथाकथञ्चित्तत्कार्यमेव प्रकर्षेणेष्टमभिमतम् । तत्त्वानां पुरुषतत्त्वादीनां न्यासस्तत्तदंगकल्पनया न्यासः । ॐ पुरुषतत्त्वाय नमः, ॐ प्राणतत्त्वाय नमः, शिरसि। ॐ प्रकृतितत्त्वाय नमः, ॐ बुद्धितत्त्वाय नमः, ॐ अहंकारतत्त्वाय नमः ॐ मनस्तत्त्वाय नमः हृदि। ॐ शब्दतत्त्वाय नमः शिरसि । ॐ स्पर्शतत्त्वाय नमः त्वचि । ॐ रूपतत्त्वाय नमः चक्षुषि । ॐ गन्धतत्त्वाय नमः घ्राणे। ॐ रसतत्त्वाय नमः जिह्वायाम् । यद्वा—ॐ आत्मतत्त्वाय नमः, ॐ आत्मतत्त्वाधिपतये ब्रह्मणे नमः, ॐ विद्यातत्त्वात्मने नमः ॐ विद्यातत्त्वाधिपतये विष्णवे नमः हृदि । ॐ शिवतत्त्वाय नमः, ॐ शिवतत्त्वाधिपतये रुद्राय नमः मूर्ध्नि । यद्वा—तत्त्वानां चतुर्विंशतिसंख्याकानां प्राणप्रतिष्ठोक्तप्रकरेण देवस्य तत्त्वानीत्यागत्य तिष्ठन्त्वित्येवं न्यासस्तत्त्वन्यासः । यद्वा—तत्त्वस्य हरेर्न्यासः प्राणप्रतिष्ठोक्तरीत्या सन्निधापनम्। आज्यप्लुतं च्योतद्घृतप्लुतम् ॥ * ॥ प्रेष्ठं मम सेवकस्य चेत्यर्थः। संबुद्धिस्त्वादरादेवेति भावः । तत्त्वानामंगप्रधानदेवतानां विशेषतो यथास्थानं न्यासस्तत्तन्मंत्रैः स्थापनमात्रं न त्वलंकारादिघृतसिक्तं हविस्तिलादि यज्ञियं वस्तु। केचित्तु अंगं मुखादि तदधिष्ठातृदेवतानां शब्दतत्त्वादीनां तत्तदंगेषु पराय शब्दतत्त्वात्मने नम इत्यादिमन्त्रैः स्थापनं प्रधानदेवतानां जीवतत्त्वादीनां सर्वशरीरादौ पराय जीवतत्त्वात्मने नम इत्यादिमन्त्रैः स्थापनमित्याहुः ॥ १६ ॥ उपस्थानम् "ह ९ सः शुचिषद्वसुषत्" इत्यादिमन्त्रैः स्तवनम् । अर्घ्यं तिलतण्डुलसंयुक्तसकेसरपद्मकरवीररक्तचन्दनादि ताम्रपात्रे कृतं सजलं सकुशमित्यर्थः। तदुक्तम्—" सकेसराणि पद्मानि करवीराणि चार्जुन । तिलतण्डुलसंयुक्तकुशगन्धोदकेन च ॥ रक्तचन्दनमिश्राणि कृत्वा वै ताम्रभाजने ॥ धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं गतः । मन्त्रपूतं गुडाकेश अर्घ्यं दद्याद्गभस्तये ॥ इति। मन्त्रास्तु—"उद्यन्नद्य" इत्यादिका वैदिकाः "एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या गृहाणार्घ्यं नमोऽस्तु ते ॥ " इत्यादिकाः पौराणिकाश्च यथाधिकारं ज्ञेयाः। आदिना नमस्कारादिग्रहः। सलिले जलाधिकरणे मदर्चनं सलिलादिना जलेनैव सर्वोपचारकल्पनम् । आदिना गन्धपुष्पादिना वा। सर्वत्र सर्वेष्वधिष्ठानेषु । प्रेष्ठमतिशयितप्रीतिजनकम्। अपिना किमन्यदित्युक्तम् ॥ ( १७ ) ॥ अभक्तेन श्रद्धाहीनेनोपहृतं दत्तम् । गन्धः काश्मीरादियुतः पटीररसः। दीपो गोघृतसम्पादितो दीपकः । 'दीपे देयं च गोघृतम्' इत्युक्तेः । अन्नाद्यं भक्ष्यभोज्यचोष्यलेह्यरूपम् । किं पुनः किमधिककथनेन। श्रद्धैव मे तोषहेतुर्नान्यदित्यर्थः ॥ * ॥ अर्घादीत्यादिना पाद्यादिग्रहः। तर्पणादिनेहादिना पुष्पादिग्रहः ॥ * ॥ **दीपिका**—सर्वत्र सर्वस्मिन्नर्चाद्यधिष्ठाने साधारणं समानमुपचारमाह—श्रद्धयेति सार्द्धेन । गन्ध

भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ गंधो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १८ ॥ शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः ॥ आसीनः प्रागुदग्वार्चेदर्चायामथ संमुखः ॥ १९ ॥ कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत् ॥ कलशं प्रोक्षणीयं च यथावदुपसादयेत् ॥ २० ॥

श्रद्धयेति ॥ १७ ॥ १८ ॥ एवमधिकारादिव्यवस्थामुक्त्वा इदानीं पूजाप्रकारमाह । शुचिरिति । संभृताः संभाराः पूजासाधनानि येन सः । प्रागग्रैर्दर्भैः यद्वा प्रागेव संभृतसंभारः सन्नासीनः न त्वासीनः सन् पश्चात्तत्संभारार्थं वारंवारमुत्तिष्ठेदित्यर्थः । प्राङ्मुख उदङ्मुखो वा आसीनः । अर्चायां तु स्थिरायां संमुखोऽर्चाभिमुख उपविष्टः सन् ॥ १९ ॥ अनंतरं गुर्वादिनमस्कारपूर्वकं यथोपदेशं स्वस्मिन्कृतन्यासः कृतो मूलमंत्रन्यसो यस्यां तां ममार्चामामृजेन्निर्माल्यापकर्षणादिना शोधयेत् । कलशं पूर्णकुंभम् ।

इत्यर्द्धस्य श्रद्धयेत्यर्द्धेनान्वयः । तस्य भक्तस्य निष्किञ्चनत्वेऽपि मम सेवायामाग्रहश्चेत्तदा गन्धादिकं प्रेष्ठमिति पुनः किं वक्तव्यमित्यर्थः ॥ १७ ॥ १८ ॥ एवं यदा स्वनिगमेनोक्तमित्याद्युक्तरीत्या । आदिनाऽधिष्ठानादिग्रहः । शुचिः स्नानादिना कृतदेहसंस्कारः । संभृताः सम्पादिताः ‘ सम्भारः संघसामग्र्योः ’ इति निरुक्तिः । प्राक्पदस्याग्रे लक्षणाश्रयणे गौरवं मत्वाह—यद्वेति । इत्यर्थ इति—‘ पूजयेन्नियतो भूत्वा ’ इति स्मृतेर्धूपदीपाद्यर्थमग्न्यादिकं प्रागेव सम्पादयेदिति भावः । “प्राङ्मुखो वैदिकं[1] कर्म कुर्याच्चोदङ्मुखस्तथा” इत्युक्तेः । अर्चापूजने तु “ पूज्यपूजकयोर्मध्ये यद्वा प्राची दिगीरिता ॥ ” इति तत्सांमुख्यमेव प्राक्त्वमिति ज्ञेयम् । आसनोपवेशसमये ‘ पृथ्वि त्वया ’ इति मन्त्रेणासनशुद्धिं विधाय ‘ अपसर्पन्तु ते भूताः ’ इत्यनेन भूताद्युत्सादनं च कृत्वा “ एवापित्र० ” इति मनुष्यगन्धं वारयित्वा घण्टानादं कृत्वा भूतशुद्धिं कृत्वा कर्मारभेत ॥ * ॥ अधिकारादिव्यवस्थामिति सकामस्य विहितसर्वद्रव्यैरेवाधिकारो न तु हीनद्रव्यैरपि निष्कामस्य तु यथालब्धैरेवेति व्यवस्था । आदिनाधिष्ठानभेदेनोपचारव्यवस्था सर्वसाधारणोपचारव्यवस्था च गृह्यते । पूर्वार्थे मध्यपदलोपाभ्युपगमेऽपि । सम्भाराः पूजाकाले तत्पूर्वं वा सम्पादनीया इति संशये—यद्वेति **दीपिका** ॥ १९ ॥ अनन्तरम् उपवेशोत्तरम् । गुरवे नमः, परमगुरवे नमः, परमेष्टगुरवे नम इति गुर्वादीन्नत्वा “ ब्रह्मस्थानसरोजमध्यविलसच्छीतांशुपीठस्थितं स्फूर्जत्सूर्यरुचिं वराभयकरं कर्पूरकुन्दोज्ज्वलम् । श्वेतस्रग्वसनानुलेपनयुतं विद्युत्प्रभाकान्तया संश्लिष्टार्द्धतनुं प्रसन्नवदनं वन्दे गुरुं सादरम् ॥ ” इति ध्यात्वार्चयेत् । यथोपदेशं यथा पराशराद्यैरुक्तं तथा । स्वस्मिन्कृतन्यासः तथार्चामपि कृतन्यासां मूलमन्त्रेणाष्टाक्षरमन्त्रेण कृतन्यासां वा । आग्नेये— “ अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः । यत्कृत्वा मुनयः सर्वे परं निर्वाणमाययुः ॥ अनुष्टुभस्य सूक्तस्य त्रिष्टुबन्त्यस्य देवता । पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥ प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे । तृतीयां वामपादे च चतुर्थीं दक्षिणे न्यसेत् ॥ पञ्चमीं वामजानौ च षष्ठीं वै दक्षिणे न्यसेत् । सप्तमीं वामकट्यां तु ह्यष्टमीं दक्षिणे तथा ॥ नवमीं नाभिमध्ये तु दशमीं हृदये तथा । एकादशीं कंठमध्ये द्वादशीं वामबाहुके ॥ त्रयोदशीं दक्षिणे तु तथैवास्ये चतुर्दशीम् । अक्ष्णोः पंचदशीं चैव विन्यसेन्मूर्ध्नि षोडशीम् ॥ यथा देहे तथा देवे न्यासं कृत्वा यथाविधि । न्यासेन तु भवेत्सोपि स्वयमेव जनार्दनः ॥ एवं न्यासविधिं कृत्वा पंचांगानि समाचरेत् । ब्राह्मणोस्येत्यादिपंचऋग्भिः पंचांगकल्पना ॥ हृदयं च शिरः शिखा कवचं चास्त्रमेव च । आद्ययावाहयेद्देवमृचानु पुरुषोत्तमम् ॥ द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया । अर्घ्यं चतुर्थ्या दातव्यं पंचम्याचमनीयकम् ॥ षष्ठ्या स्नानं प्रदेयं तु सप्तम्या वस्त्रमेव च । यज्ञोपवीतमष्टम्या नवम्या चंदनं स्मृतम् ॥ पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् । द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम् ॥ चतुर्दश्या नमस्कारं पंचदश्या प्रदक्षि

---

१ दैविकमिति वा पा० ।

तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ॥ प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥ २१ ॥ पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि दैशिकः ॥
हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाभिमंत्रयेत्॥२२॥पिंडे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम॥अण्वीं जीवकलां ध्यायेन्नादांते सिद्धभाविताम्॥२३॥

प्रोक्षणीयं प्रोक्षणार्थोदकपात्रमुपसाधयेच्चंदनपुष्पादिभिः संस्कुर्यात् ॥ २० ॥ तदद्भिः प्रोक्षणीयाद्भिर्देवयजनं देवपूजास्थानम् । पाद्याद्यर्थं त्रीणि पात्राणि कलशोदकैः पूरितानि तैस्तैर्द्रव्यैः साधयेत् । तत्र पाद्यादिद्रव्याणि । "पाद्ये श्यामाकदूर्वाब्जविष्णुक्रांतादिरिष्यते ॥ गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥ दूर्वा चेति क्रमादर्घद्रव्याष्टकमुदीरितम् ॥ जातीलवंगकंकोलैर्मतमाचमनीयकम् ॥" इति ॥ २१ ॥ तानि च त्रीणि पात्राणि यथाक्रमं हृदयादिमंत्रैर्गायत्र्या च सर्वाण्यभिमंत्रयेत् ॥ २२ ॥ तदनंतरं पिंडे देहे । वाय्वग्निसंशुद्धे इति । कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचंद्रमंडलामृतप्लावनेनामृतमये जाते तस्मिन्हृत्पद्मस्थां परां श्रेष्ठां जीवकलां श्रीनारायणमूर्तिं ध्यायेत् । कथंभूताम् । नादांते सिद्धैर्भाविताम् । प्रणवस्याकारोकारमकारबिंदुनादाः पंचांशास्तत्र नादांते सिद्धैर्ध्याताम् । तथाच श्रुतिः । " यो वेदादौ

णम् । उद्वासनं तु षोडश्या उपचारास्तु षोडश ॥ स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् । हुत्वा षोडशभिर्मंत्रैर्दद्यात्पुष्पाणि षोडश ॥ तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमेव च । षण्मासेन समाप्नोति ह्येवमेव समर्चनात् ॥"। अत्र यद्यप्यावाहनं विसर्जनं चोक्तं तत्प्रत्यहं प्राणप्रतिष्ठापूर्वकप्रतिमादिपूजनविषयम् । अन्यत्र तु–" आदावंते च मंत्राभ्यां पुष्पांजलिसमर्पणम् " इति नारदीयात् । कौर्मे–" न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् । तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥ तद्विष्णोरिति मंत्रेण सूक्तेन पौरुषेण वा । नैवाभ्यां सदृशो मंत्रो वेदेषूक्तश्च पावनः ॥ " इति । मूलमंत्रन्यासस्तु–ॐ पादयोः । न जानुनोः । मो ऊर्वोः । ना उदरे । रा हृदि । य उरसि । णा मुखे । य शिरसीति । निर्माल्यापनोदफलं तु–" यः प्रातरुत्थाय विधाय नित्यं निर्माल्यमीशस्य निराकरोति । न तस्य दुःखं न दरिद्रता च नाकालमृत्युर्न च रोगमात्रम् ॥ अरुणोदयवेलायां निर्माल्यं शल्यतां व्रजेत् । प्रातस्तु स्यान्महाशल्यं घटिकामात्रयोगतः ॥ अतिशल्यं विजानीयात्ततो वज्रप्रहारवत् । अरुणोदयवेलायां शल्यं तत्क्षमते हरिः ॥ घटिकाया अतिक्रांतौ क्षुद्रं पातकमावहेत् । मुहूर्ते समतिक्रांते पूर्णे पातकमुच्यते ॥ अतिपातकमेत्र स्याद् घटीनाञ्च चतुष्टये । मुहूर्तत्रितये पूर्णे महापातकमुच्यते ॥ ततः परं ब्रह्मवधो महापातकपञ्चकम् । प्रहरे पूर्णतां याते प्रायश्चित्तं ततो न हि ॥ " इति । प्रायश्चित्तं तु मुहूर्तार्द्धे गायत्र्याः सहस्रजपः । पूर्णे मुहूर्ते सार्धसहस्रम् । मुहूर्तद्वये सहस्रद्वयम् । मुहूर्तत्रयेऽयुतम् । प्रहरे पुरश्चरणम् । तदनंतरं प्रायश्चित्तं नास्तीति संस्कुर्यात् । तत्पात्रं चंदनाक्षतपुष्पैरर्चयेदित्यर्थः ॥ * ॥ कृतन्यास इति–केशवादिन्यासादीनां यत्त्वधमांगविषयत्वं तत्तन्मूर्तीर्ध्यात्वा तत्तन्मंत्रांश्च जपित्वै तत्तदंगस्पर्शमात्रं कुर्यात् । न तु तत्तन्मंत्रदेवतास्तत्रतत्र न्यस्ता ध्यायेत्, भक्तानां तदनौचित्यात् । भूतशुद्ध्यादिकं त्वेवं ज्ञेयम् । तत्र भूतशुद्धिर्निजाभिलषितभगवत्सेवौपयिकतत्पार्षददेहभावनापर्यंतैव तत्सेवकपुरुषार्थिभिः कार्या निजानुकूल्यात् । एवं यत्रात्मनो निजाभीष्टरूपत्वेन चिंतनं विधीयते तत्रतत्रैव पार्षदविग्रहत्वं भाव्यम् । अहंग्रहोपासनायाः शुद्धभक्तैर्द्विष्टत्वात् । ऐक्यं च तत्र साधारण्यप्रायमेव मदीयचिच्छक्तिवृत्तिशुद्धसत्त्वांशविग्रहत्वात्पार्षदानामिति । अन्यत्तैः ॥ २० ॥ द्रव्याणि पुष्पादीनि । आत्मानं अर्चकदेहं प्रोक्ष्य पात्राणि च प्रोक्ष्य सिक्त्वा । तत्र द्रव्येषु । आदिनार्घाचमनीयकग्रहः । श्यामाकं नीवारम् । अब्जम् कमलफलं तन्मज्जा वा । आदिना तुलसीपत्रगंधादिग्रहः । सर्षपः पतिः । जात्यादित्रयस्य फलं पुष्पं वा ॥ * ॥ ० ॥ ॥ २१ ॥ दैशिकोऽर्चकः । ॐ हृदयाय नम इति पाद्यस्य, ॐ शिरसे स्वाहेत्यर्घ्यस्य, ॐ शिखायै वषडित्याचमनीयस्य, गायत्र्या च सर्वेषां हस्तस्पर्शेनाभिमंत्रणं कुर्यात् ॥ * ॥ दैशिकोऽर्चकः ॥ २२ ॥ जीवः कला अंशो यस्याः सा तथा " ममैवांशो जीवलोके जीवभूतः सनातनः " इति श्रीगीतोक्तेः । तत्र पञ्चांशेषु । अस्या मूर्तेः परत्वे प्रमाणमाह–तथा चेति । यः स्वरो नादलक्षणः वेदस्यादौ तदुत्पादकत्वेनोक्तः, तद्ब

तयात्मभूतया पिंडे व्याप्ते संपूज्य तन्मयः ॥ आवाह्यार्चादिषु स्थाप्य न्यस्तांगं मां प्रपूजयेत् ॥ २४ ॥
पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् ॥ धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥ २५ ॥

स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः ॥ तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥" इति ॥ २३ ॥ तयाऽऽत्मभूतया स्वेनैव भावेन चिंतितया अमृतमये पिंडे दीपेन प्रभया गृहमिव व्याप्ते सति तस्मिन्नेवादौ मानसैरुपचारैः संपूज्य तन्मयः सन्नर्चादिष्वावाह्य स्थापनमुद्रया स्थापयित्वा ॥ २४ ॥ कथं पूजयेत्तत्राह । पाद्येति—द्वाभ्याम् । धर्मादिभिर्नवभिर्ममासनं कल्पयित्वा तत्र पद्मं च कल्पयित्वोभाभ्यां वेदतंत्राभ्यामुभयसिद्धये मह्यं पाद्यादीनुपचारान्प्रकल्पयेदित्यन्वयः । उपस्पर्शं आचमनमर्हणमर्घ्यम् । उभयसिद्धये वेदतंत्रोक्तभुक्तिमुक्तिप्राप्तये । अयमर्थः । धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यंकस्याग्नेयादिचतुष्कोणेषु पादाः । अधर्मादीनि पूर्वादिदिक्षु क्रमेण चत्वारि गात्राणि । त्रयो

क्ष्यति द्वादशस्कन्धे—" समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः । हृदाकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ यदुपासनया ब्रह्मन्योगिनो मलमात्मनः । द्रव्यक्रियाकारकाख्यं धूत्वा यांत्यपुनर्भवम् ॥ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् । ततोऽक्षरसमाम्नायमसृजद्भगवानजः ॥ अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् । तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ।" इत्युक्तिक्रमेण नादाद्वेदाविर्भावः श्रूयते, यश्च नादो वेदस्यान्ते प्रतिष्ठितः स्थितः । तथाहि—सप्तमे इन्द्रियादिलयप्रकरणे—" वाचि वैकारिकं मनः । वाचं वर्णसमाम्नाये, तमोंकारे स्वरे न्यसेत् ॥ ओंकारं बिंदौ नादे तं तं तु प्राणे महत्यमुम् " इत्युक्तं वेदानां प्रणवस्वरूपत्वेन बिंदौ लयाभिधानपूर्वकं नादे लयः प्रोक्तस्तस्य नादस्य प्रकृतौ स्वकारणे प्राणे लीनस्य यः परो लयाधिकरणत्वेनोक्तः स महान्महेश्वरः परमात्मेत्यर्थः श्रुतेः पदानाम् ॥ * ॥ भूतशुद्धिं स्फोटयति—कोष्ठगतेनेति । अत्रायमर्थः—पापपुरुषरूपे पिण्डे वायुना शोषिते इति धूम्रवर्णेन परमशोषकेण पूर्वं वामनासापुटे चिंतितेन षोडशवारं जपितेन पश्चान्मनसा नाभिमण्डलं नीतेन पुनः चतुःषष्टिवारं जपितेन वं बीजेन कुंभकं कृत्वोत्थापितो यो वायुस्तेन शोषिते पश्चाद्रमिति वह्निबीजेन मूलाधारगतवत् ह्युत्थापकेन वायुसंबद्धतया दक्षिणनासापुटे चिंतितेन षोडशवारं जपितेन पुनर्मूलाधारं नीत्वा चतुष्षष्टिवारं जपितेन कुंभकं कृत्वोत्थापितो यो वह्निस्तेन दग्धे इति पश्चाच्चमिति चन्द्रबीजेन वामनासापुटे चिंतितेन षोडशवारं जपितेन पुनर्ललाटे चंद्रमंडलं प्रति नीत्वा चतुःषष्टिवारं जपितेन कुंभकं कृत्वोत्थापितं यच्चन्द्रमण्डलस्थममृतं तत्प्लावेनामृतमये जाते तत्पूजोपयोगिदेहे नारायणमूर्तिं ध्यायेत् । तथा च प्रमाणं श्रुतिः—स्वरः प्रणवान्तनादरूपः वेदस्यादावन्ते च स इति तदुच्चारणानंतरमेव वेदस्योच्चारणात्समापनाच्च प्रकृतिलीनस्य स्वरूपलीनस्य सतः यः परोऽधिष्ठाता स महेश्वरः श्रीनारायणः ॥ २३ ॥ तया जीवकलयाऽऽत्मना स्वेनैव भावेन भूतया चिंतितया 'भू—मिश्रीकरणचिंतनयोः' अतः क्तः । तस्मिन्नेवामृतमये पिंड एव तन्मय एवं ध्यानेन तत्स्वरूपस्तत्प्रधानो वा । आवाहनमुद्रया बाह्यमुद्रया " हस्ताभ्यामंजलिं कृत्वानामिकामूलपर्वणि । संग्रथ्य निक्षिपेत्सेयं मुद्रा चावाहनी स्मृता ॥" इति । तंत्रसारे—स्थापनमुद्रया च स्थापयित्वा । सापि तत्रैव—"अधोमुखी स्यादियं चेत्स्थापिनी मुद्रिका स्मृता" इति । इयमावाहनी मुद्रैव । न्यस्तांगं पुरुषसूक्तविधानोक्तं तंत्रोक्तं वांगन्यासं कृत्वा ॥ * ॥ **दीपिका**—स्वेनैव भावेनेति—स्वस्य तदंशत्वात्तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वात् 'कामुकाः कामिनीमयम्' इतिवत्तदाविष्टत्वाच्च स्वस्वरूपेण सहाभेदेन चिंतितयेत्यर्थः । भेदस्यौपाधिकत्वे ध्यातृध्येयभावस्य पूज्यपूजकभावस्य च कंठोक्तस्य व्याकोपाद्व्याख्यान्तरमुपेक्षितम् । तस्मिन्नेव पिण्डे एव । तन्मयः स्त्रीमयोयं जाल्म इतिवत्तदाविष्टः । मामिति अर्चायां सर्वत्रास्मच्छब्दसामानाधिकरण्येनाभेदोक्त्या शिलाबुद्ध्यादिकं सर्वथा परिहृतम् "शिलाबुद्धिः कृता किं वा प्रतिमायां हरेर्मया" इत्यादिना तन्निषेधात् । न्यस्तांगं मां मदंगे न्यासान्कृत्वेत्यर्थः ॥ २४ ॥ पूजेति कर्तव्यतां पृच्छति—कथमिति । उपस्पर्शं आचमनीयम् । अर्हणमर्घ्यम् ।

पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यां वेदतंत्राभ्यां मह्यं तूभयसिद्धये ॥ २६ ॥ सुदर्शनं पांचजन्यं गदासीषुधनुर्हलान् ॥ मुसलं कौस्तुभं मालां श्रीवत्सं चानु पूजयेत् ॥ २७ ॥ नंदं सुनंदं गरुडं प्रचंडं चंडमेव च ॥ महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥ २८॥ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् ॥ स्वेस्वे स्थाने त्वभिमुखान्पूजयेत्प्रोक्षणादिभिः ॥ २९ ॥

गुणाः पट्टिकाः । तत्र पूर्वादिक्रमेण मध्ये च विमला उत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्येशानाऽनुग्रहेति नव शक्तयः । एवं यथोपदेशं धर्मादिभिर्नवभिः शक्तिभिश्वासनं कल्पयित्वेति । कर्णिकया केसरैस्तत्रस्थसूर्यादिमंडलैश्चोज्ज्वलमित्यर्थः ॥२५॥२६॥ आयुधादिपूजामाह सुदर्शनमिति त्रिभिः । तत्र न्यस्तांगमित्यंगावरणपूजा सूचिता । आसनेनैव शक्त्यावरणमित्युक्तम् । ततः सुदर्शनादिमुसलांतान्यायुधान्यष्टदिक्षु । कौस्तुभमालाश्रीवत्सानुरसि॥ २७॥ नंदादीन्पार्षदानष्टदिक्षु। गरुडं पुरतः ॥२८॥ दुर्गादीनि

आदिना गंधादिग्रहः । अत्र स्फुटार्थमाह–अयमर्थ इति । आग्नेयनैर्ऋतवायव्यैशानेषु । अधर्मादीनि अधर्माज्ञानावैराग्यानैश्वर्याणि । गात्राणि पाददत्तलंबायमानकाष्ठचतुष्काणि । पट्टिका उपवेशस्थानानि । तत्र पर्यंके पूर्वादिस्वष्टनवमींमध्ये । तत्रस्थैः कर्णिकास्थैः । इत्यर्थ इति–"कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम्" इत्युक्तेरिति भावः ॥ * ॥ कथं भावाकांक्षायामिति कर्तव्यतामाहेत्यर्थः । तत्रासने । आग्नेयादीत्यादिना नैर्ऋतवायव्यैशानपरिग्रहः । अधर्मादीनीति अधर्माज्ञानावैराग्यानैश्वर्याण्यधार्मिकादिषु तत्तदंतर्यामिशक्तिरूपाणि पूर्वादिदिक्षु गात्राणि । तदुक्तं नारदपञ्चरात्रे–" अधर्मादिचतुष्कं तु अश्रेयसि नियोजनम् " इति । अन्यथाऽप्राकृतासने तेषां सन्निवेशानुपपत्तेः । "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इत्युक्तेरप्राकृता अपि न सन्त्येवेति गम्यते । विशेषणानां व्यावर्तकत्वनियमादिति त्रयो गुणा अप्राकृता एव व्याख्येयाः । पूर्वहेतोरेव अत्रासनस्थे पद्मे । पूर्वादिक्रमेणेति–पूर्वाद्यष्टदिक्षु यथासंख्यं विमलामारभ्येशानांता अष्टौ शक्तयः, मध्ये उपवेशस्थानेऽनुग्रहेत्यर्थः । तत्र विमला कीर्त्याख्या, उत्कर्षिणी उत्कर्षहेतुर्जयापरपर्याया, ज्ञाना ज्ञानशक्तिः संविदपरपर्याया, विशुद्धसत्त्वाख्या क्रिया ह्लादिनी, योगा योगमाया, प्रह्वी विचित्रानंतसामर्थ्यहेतुः, सत्या संधिन्यपरपर्याया, यया सद्रूपोपि भगवान्सत्तां दधाति धारयति च सर्वदेशकाले द्रव्यादिव्याप्तिक[illegible]ति यावत् । ईशान्त सर्वाधिकारिताशक्तिहेतुः, अनुग्रहा भक्तविषयकापारकृपाशक्तिहेतुरिति भगवत्सन्दर्भात्तल्लक्षणानि ज्ञेयानि । 'कर्णिकायां न्यसेत्सूर्यम्' इत्याद्युक्तेः केशरशब्दस्य तत्रस्थसूर्यादिमण्डले लक्षणात इत्यर्थ इत्युक्तम् ॥ २९ ॥ ० ॥ ॥ * ॥ ० ॥ २६ ॥ आदिना भूषणादिग्रहः । गदा कौमोदकी, असिः नंदकः, धनुः शार्ङ्गम् । मुसलं सुनन्दम् । मालाम् वैजयंतीं वनमालां वा । श्रीवत्सम् उक्तार्थम् । तत्र पूजायाम् । ततः शक्त्यावरणार्चनोत्तरम् । भगवतोऽष्टदिक्षु ॥ * ॥ ० ॥ २७ ॥ पुरतः अग्रे ॥ * ॥ ० ॥ २८ ॥ कोणेषु आग्नेयादिचतुर्षु । "इंद्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा । कुबेरमीशं क्रमतो लोकपालान्बुधा जगुः ॥" देवस्य भगवतोऽभिमुखान् भगवति कृतमुखान् । आदिना गंधपुष्पादिग्रहः ॥ * ॥ दुर्गां वह्निकोणे, गणेशं नैर्ऋते, व्यासं वायव्ये, विष्वक्सेनमैशाने, किन्तु तेऽप्राकृता व्याख्येया विष्वक्सेनसाहचर्यात्, 'न यत्र माया' इत्यादिना प्रकृतिकार्यमात्रस्य तत्र निषेधाच्च । स्थानविभागस्य मूलेऽनुक्तेरित्यर्थ इत्युक्तम् ॥ * ॥ **सन्दर्भस्तु**–नंदमिति युग्मकम । तत्र दुर्गाद्या विष्वक्सेनादिवद्भगवतो नित्यवैकुण्ठसेवकाः । ततश्च ते गणेशदुर्गाद्या ये परे माया शक्त्यात्मका गणेशदुर्गाद्यास्ते तु न भवन्ति "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः" इति द्वितीयोक्तेः । ततो भगवत्स्वरूपभूतशक्त्यात्मिका एव ते यत एव श्रीकृष्णस्वरूपभूते श्रीमदष्टादशाक्षरादिमंत्रगणेऽपि दुर्गानाम्नो भगवद्भक्त्यात्मकस्य स्वरूपभूतवृत्तिविशेषस्याधिष्ठातृत्वं श्रुतितंत्रादिषूपदिश्यते । यथा नारदपञ्चरात्रे श्रुतिविद्यासंवादे–"भक्तिर्भजनसंपत्तिर्भजते प्रकृतिः प्रियम् । जायतेऽत्यंतदुःखेन सेयं प्रकृतिरात्मनः ॥ दुर्गेति गीयते सद्भिरखंडरसवल्लभा । अस्या आवरिका शक्तिर्महामायेति कथ्यते । यया मुग्धं जगत्सर्वं सर्वदेहाभिमानिनः ॥" इति । अत एव श्रीभगवदभेदेनैवोक्तं गौतमीयकल्पे–"यः कृष्णः सैव दुर्गा

चंदनोशीरकर्पूरकुंकुमागुरुवासितैः ॥ सलिलैः स्नापयेन्मंत्रैर्नित्यदा विभवे सति ॥ ३० ॥ स्वर्णघर्मानुवाकेन महापुरुषविद्यया ॥ पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥ ३१ ॥ वस्त्रोपवीताभरणपत्रस्रग्गंधलेपनैः ॥ अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥ ३२ ॥

कोणेषु गुरून्वामतः । सुरानिंद्रादिलोकपालान्पूर्वादिदिक्षु । एवमेतान्देवस्याभिमुखान्प्रोक्षणादिभिरर्घ्यादिभिः पूजयेदित्यर्थः ॥ २९ ॥ पाद्यादीनुपचारान्प्रकल्पये दित्युक्तं तानेव गुणविधिभिः प्रपंचयति चंदनेति षड्भिः ॥ ३० ॥ मंत्रानाह । स्वर्णघर्मानुवाकः "सुवर्णं घर्मं परिवेदवेनम्" इत्यादिः । महापुरुषविद्या "जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज" इति । पौरुषं सूक्तं "सहस्रशीर्षा" इत्यादि । राजनादीनि सामानि । "इंद्रं नरो नेमधिताहवंते" इत्यस्या मृचि गीतानि । आदिशब्देन रौहिणादीनि ॥ ३१ ॥ वस्त्राद्युपचारेष्वलंकारलक्षणं गुणं विधत्ते । वस्त्रेति । पत्राणि कपोलवक्षःस्थलादिषु लिखिताः पत्रभंगयः । मद्भक्तश्चे

स्याद्या दुर्गा कृष्ण एव सः" इति । "त्वमेव परमेशानि अस्याधिष्ठातृदेवता" इत्यादिकं विराट्पुरुषमहापुरुषयोरिव केषांचिदभेदोपासनाविवक्षयैवोक्तं, सा हि मायांशरूपा तदधीने प्राकृतेऽस्मिँल्लोके मंत्ररक्षालक्षणसेवार्थं नियुक्ता चिच्छक्त्यात्मकदुर्गा या दासीयते न तदधिष्ठात्री । मायातीतवैकुण्ठावरणकथने यथोक्तं पाद्मोत्तरखण्डे—"सत्याच्युतानंतदुर्गाविष्वक्सेनगजाननाः" इत्याद्युक्त्वा "नित्यास्सर्वे परे धाम्नि ये चान्ये च दिवौकसः । ते वै प्राकृतलोकेऽस्मिन्ननित्यास्त्रिदिवेश्वराः ॥" "ते ह नाकं महिमानः सचंते" इति श्रुतिरिति । भगवदंशरूपत्वं च तेषामुक्तं त्रैलोक्यसंमोहनतंत्रे—"सर्वत्र देवदेवोसौ गोपवेषधरो हरिः । केवलं रूपभेदेन नाम भेदः प्रकीर्तितः ॥" इति । अतो नाममात्रसाधारण्येनानन्यभक्तैर्नातिभेतव्यम्, किन्तु भागवतनित्यवैकुण्ठसेवकत्वाद्विष्वक्सेनादिवत्सत्कार्या एव ते "अर्चयित्वा तु गोविंदं तदीयान्नार्चयेत्तु यः" इत्यादिवचने तदसत्कारे दोषश्रवणात् । अत्र विशेषो भक्तिसंदर्भे दृश्यः । अथ श्रीभगवद्धामे श्रीगुरुपादुकापूजनमेव संगच्छते । यथा य एव भगवानत्र व्यष्टिरूपतया भक्तावतारत्वेन श्रीकृष्णरूपो वर्तते स एव समष्टिरूपतया स्ववामप्रदेशे साक्षादवतारत्वेनापि तद्रूपो वर्तत इति ॥ २९ ॥ गुणविधिभिः गुणविधानेन 'गुणस्त्वाधिक्यकथनम्' इति कोशः । गुणानाह—चन्दनेत्यादि । उशीरं सुगंधितृणम् 'खस' इति प्रसिद्धम् । कुंकुमं केशरम्, वासितैः सुगंधितैः । विभवे धनिकत्वे सति नित्यदाऽन्यथा पर्वोत्सवादिदिने 'अर्थरैविभवा अपि' इत्यमरः ॥ * ॥ **दीपिका**—तानेवोपचारानेव । गुणविधिरिति—तल्लक्षणं यथा—अग्निहोत्रं जुहोतीत्युत्पत्तिविधिना विहितं होममुद्दिश्य, यथा दध्ना जुहोतीत्यादिगुणविधिभिर्दध्यादिलक्षणगुणमात्रविधानम् । तथात्र पूर्वप्रोक्तस्नानजलादीनुद्दिश्य चंदनादिगुणमात्रविधानमन्यथोभयविधाने वाक्यभेदः स्यात् । तदुक्तं भट्टैः—"सर्वत्राख्यातसंबंधे श्रूयमाणे पदान्तरे । विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता॥" इति ॥३०॥ स्वर्णघर्मानुवाकस्सूक्तविशेषः । महापुरुषविद्या नारदपञ्चरात्रोक्तजितंतस्तोत्रमध्यायपञ्चात्मकम् । तच्च 'जितं ते पुण्डरीकाक्ष' इत्यादि । रौहिणादीन्यपि सामान्येव तानि च वेदैकलभ्यानि ॥ * ॥ मंत्रान्पाद्याद्युपचारेष्वंगरूपान् । स्वर्णघर्मानुवाको वैदिकं सूक्तम् । सुवर्णं कुंकुमादिवासितत्वेन सुवर्णतुल्यजलादि भवतो घर्मपरिवेदनं प्रस्वेदविनाशकमिति मंत्रखंडार्थः । मेमधिता इति वक्तव्ये मे माधितेत्यार्षम् । अतिशयज्ञानवान्नरः इन्द्रं परमेश्वरमुद्दिश्य हवंते होमोपलक्षितयागं कुर्यादित्यर्थः । अत्र मेधातिर्ज्ञानार्थः ॥ ३१ ॥ पत्रभंग्यस्तिलकविशेषाः ॥ * ॥ वस्त्राद्युपचारेष्विति पूर्वोक्तवस्त्राद्युपचारानुवादेनालंकारलक्षणगुणमात्रं विधत्त इत्यर्थः । यथोचितं सौन्दर्यानुरूपम् । श्रीगोपालपूजायामपि यज्ञोपवीतार्पणमपि विहितमस्ति । यथोक्तं गौतमीये—"यज्ञसूत्रं ततो दद्यादथ वा स्वर्णनिमितम्" इति ।

**पाद्यमाचमनीयं च गंधं सुमनसोऽक्षतान् ॥ धूपदीपोपहार्याणि दद्यान्मे श्रद्धयार्चकः ॥ ३३ ॥ गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ॥ संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३४ ॥ अभ्यंगोन्मर्दनादर्शदंतधावाभिषेचनम् ॥ अन्नाद्यं गीतनृत्यानि पर्वणि स्युरुतान्वहम् ॥ ३५ ॥**

त्सप्रेम यथा भवति तथा ॥ ३२ ॥ यथोचितमलंकुर्वीतेत्युक्तार्थम् । सर्वसाधारणं श्रद्धालक्षणं गुणं विधत्ते । पाद्यमिति ॥ ३३ ॥ नैवेद्यवैभवलक्षणं गुणं विधत्ते । गुड पायसेति । शष्कुल्यस्तैलपक्वविशेषाः । अपूपाः अपूपानां मंडकादीनां समूहाः । सूपा व्यंजनानि । सति विभव इति शेषः ॥ ३४ ॥ कालभेदेन गुणं विधत्ते । अभ्यं

नारसिंहे–“ त्रिवृत्सूत्रं च पीतं च पट्टसूत्रादिनिर्मितम् । यज्ञोपवीतं गोविंदे दत्त्वा वेदांतगो भवेत् ॥ ” इति । पत्रस्रक् तुलसीमाला ॥ ३२ ॥ उक्तार्थम् “ स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव ” इत्यत्र वर्णितम् । सर्वसाधारणं सर्वपूजाधिष्ठानसाधारणम् । अक्षतान् शालग्रामेतरे । उपहार्यं नैवेद्यम् ॥ * ॥ उक्ता येये पाद्याद्यास्तेषु साधारणं तुल्यं श्रद्धालक्षणमादरविश्वासात्मकं गुणमंगं विधत्त इति **दीपिका** ॥ ३३ ॥ गुडादीनि पृथक्पृथग्भिवेद्यानि त्रीणि । गुडघृतश्रितपायसस्य कैश्चिन्निषिद्धत्वाल्लोकविरुद्धत्वाच्च । सर्पिरत्र नवनीतं तच्च सितोपलयुतम् “ ससितं नवनीतं तु सदा श्रीकृष्णवल्लभम् ” इत्युक्तेः । बहुच्छिद्रसगुडगोधूमचूर्णनिर्मितो मंडकाकारो घृतपक्वविशेषोऽपूपः तेषामाधिक्यं येषु पाकेषु त आपूपाः । मोदकश्च वितुषचणकचूर्णनिर्मितमुक्तोपमघृतपक्वसितापाकं मिश्रितकरद्वयपिंडितपाकविशेषो ज्ञेयः । संयावः मुद्गराकारकाष्ठपरिवर्तितसमभागघृतसितागोधूमसाररचितद्राक्षादंडीरैलाबीजाढ्यकटाहपाकः । ‘ सूपो व्यंजनसूदयोः ’ इति मेदिनी । व्यंजनं स्वादीकरणं शाकक्वथितौदनपाकादीत्यर्थः । चात्पर्पटमाषादिवटकादीनां ग्रहः । तथा च विभवे सति भक्ष्यभोज्यलेह्यचोष्यपेयं प्रत्यहमर्पणीयमित्यर्थः ॥ * ॥ गुडविकारान् मत्स्यंडीफाणितादीन् । सर्पिःशब्देन नवनीतं तदुत्थं घृतं वा । शष्कुल्यः कर्णाकारा घृतपक्वाः–पराकडीति भाषायाम् । तैलेति दरिद्रपरम् । मंडका गौडदेशे आमिक्षाविकारविशेषत्वेन प्रसिद्धाः । आपूपिकमिति वक्तव्ये आपूपमित्यार्षम् । नैवेद्ये विशेषश्च गौतमीये–“ निवेदयेदुत्तमान्नं न कदन्नं कदाचन । उत्तमं विधिना प्राप्तमथवा यदयाचितम् ॥ ” विधिना प्राप्तं शिलोञ्छम् । “ स्ववित्तोपचितं वाथ कृष्णाय परिकल्पयेत् । शूद्राल्लब्धं छलाल्लब्धमथ वार्द्धुषिकाचितम् ॥ इत्याद्यन्नं कदन्नं तु दानान्नरकमावहेत् । ” । कदन्ने विशेषमाह–“ मसूरान्नमकुष्ठान्नं वर्जुरं चरहीभवम् । चीणकं कोद्रवं चाथ माण्डूकान्नं च वर्जयेत् ॥ एतत्कदन्नं हरये दत्त्वा नरकभाग्भवेत् । इभ्यस्यैव दोषकरं दरिद्रस्य न वै क्वचित् ॥ ” इत्यपि संहितादौ । “ नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वप्याज्यमाहिषं क्षीरं पञ्चनखमत्स्यांश्च ” इति हारीतः । विष्णुधर्मोत्तरे–“ अभक्ष्यं चाप्यहृद्यं च नैवेद्यं न निवेदयेत् । केशकीटोपपन्नं च तथा चाविहितञ्च यत् ॥ ” अभक्ष्यनियमश्च श्रीहरिविलासे द्रष्टव्यः ॥ ३४ ॥ अभ्यंगो गंधद्रव्येणार्चासंस्कारः, उन्मर्दनं चणकचूर्णादिनार्चासंस्कारः । पूर्वोक्तं स्मारयति–अन्नाद्येति । गीतादि स्वयं कुर्यात्कारयेद्वा । ननु “ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्विजन्मनः ॥ ” इति बृहन्नारदीयोक्तेः । कथमुक्तं गीतनृत्यानीति तत्राह–“ गीतनृत्यादि कुर्वीत द्विजदेवाग्नितुष्टये । न जीवनार्थं युंजीत विप्रः पापभिया क्वचित् ॥ ब्राह्मणो वासुदेवार्थं गायमानोऽनिशं परम् । नववर्षसहस्राणि कुबेरभवने वसेत् ॥ ” इति वाराहोक्तेर्जीवनार्थमेव तद्दोष इति भावः ॥ * ॥ अभ्यंगेति–प्रथमं दंतधावनम्, ततः सुगन्धितैलाभ्यंगः, ततः कुंकुमकर्पूरचूर्णादिभिरुद्वर्तनं, ततः पञ्चामृताद्यैः सुगन्धिजलेन च स्नपनं, ततोऽत्रानुक्तमपि अनर्घ्यकौशेयवस्त्ररत्नालंकारचंदनालेपस्रगादिकं, तत आदर्शो दर्पणं, ततो गन्धपुष्पधूपदीपाचमनीयानि–अन्नाद्येति–चतुर्विधस्वाद्वन्नसुगं

विधिना विहिते कुंडे मेखलागर्तवेदिभिः ॥ अग्निमाधाय परितः समूहेत्पाणिनोदितम् ॥ ३६ ॥
परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ॥ प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम् ॥ ३७ ॥

गेति । अभिषेचनं पंचामृतादिस्नपनम् । अन्नाद्येति । अन्नं भोज्यमाद्यं भक्ष्यम् । पर्वण्येकादश्यादौ । अन्वहं प्रत्यहं वा विभवे सति ॥ ३५ ॥ फलभूयस्त्वार्थिनोग्रावपि पूजाप्रकारमाह । विधिना स्वगृह्योक्तप्रकारेण । मेखलादिभिरुपलक्षिते । विहिते निर्मिते । तदुक्तम् । "विस्तारोच्छ्रायतस्तिस्रो मेखलाश्चतुरंगुलाः ॥ हस्तमात्रो भवेद्गर्तः सयोनिर्वेदिका तथा" इत्यादि । उदितं प्रज्वलितमग्निं परितः समूहेदेकत्र मेलयेत् ॥ ३६ ॥ दर्भैः परिस्तीर्य परितः प्रोक्षयेत् । अन्वाधायान्वाधानसंज्ञकं व्याहृतिभिः समि

धजलतांबूलमालारात्रिकपुष्पशय्याव्यजनादिकम्, ततो वाद्यगीतनृत्यादि च विभवे सति सदैव तदभावे पर्वण्युत्सवेऽवश्यमेवेति ॥ ३५ ॥ फलभूयस्त्वं फलाधिक्यम् । स्वगृह्यं स्वशाखा । सामान्यकुण्डस्वरूपमाह—तदुक्तमिति । विस्तारोच्छ्रायत उत्सेधायामप्रमाणेन तमनुलक्ष्येत्यर्थः । तथा च विस्तारमायाममुच्छ्रायमुत्सेधं चैकीकृत्य यावत्प्रामाणं स्यात्तावत्प्रमाणदेशे तिस्रो मेखलाः चतुरंगुलाश्चतुरंगुलप्रमाणाः कार्या इति भावः । " कुण्डानां मेखलास्तिस्रो मुष्टिमात्रे ततः क्रमात् । उत्सेधायामतो ज्ञेया द्व्येकार्द्धांगुलसन्निभाः ॥ अरत्निमात्रकुंडेषु त्रिषडेकात्मकांगुलाः । एकहस्तमिते कुंडे वेदाग्निनयनांगुलाः ॥ कुंडे द्विहस्ते ता ज्ञेया रसवेदगुणांगुलाः । चतुर्हस्ते तु ता ज्ञेया वसुतर्कयुगांगुलाः ॥ कुंडे रसकरे तास्तु पंक्त्यष्टत्र्यंगुलाः क्रमात् । वसुहस्तमिते कुंडे भानुपंक्त्यष्टकांगुलाः ॥ दशहस्तमिते कुंडे मनुभानुदशांगुलाः । होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् ॥ मुष्ट्यरत्न्येकहस्तानां कुंडानां योनिरीरिता । षट्चतुर्द्व्यंगुलायामा विस्तारोन्नतिशालिनी ॥ एकांगुलं तु योन्यग्रं कुर्यादीषदधोमुखम् । एकैकांगुलितो योनिं कुंडेष्वन्येषु वर्द्धयेत् ॥ यवद्वयप्रमाणेन योन्यग्रमपि वर्द्धयेत् । मुष्टिमानामितं कुंडं शतार्द्धे च प्रचक्षते ॥ शते होमेऽरत्निमात्रं हस्तमात्रं सहस्रके । द्विहस्तमयुते लक्षे चतुर्हस्तमुदाहृतम् ॥ दशलक्षे च षड्ढस्तं कोटयामष्टकरं स्मृतम् । दशहस्तमितं कोटयां विंशलक्षेऽष्टहस्तकम् ॥" इति केचित् । " दशहस्तात्परं कुंडं नास्ति होमे महीतले । एवमेव स्थंडिलेऽपि कुर्यान्मानञ्च मेखलाम् ॥ खाताधिक्ये भवेद्रोगो हीने धेनुधनक्षयः । वक्रकुण्डे तु संतापो मरणं छिन्नमेखले॥मेखलारहिते शोको ह्यधिके वित्तसंक्षयः । भार्याविनाशनं प्रोक्तं कुंडं न्यायविवार्जितम् ॥ अनेकदोषदं कुंडं दिङ्मूढे कुलनाशनम् । कुंडमेवं विधं कष्टं तस्मात्स्थंडिलमाचरेत् ॥" अत्र बहुवक्तव्यमस्ति तच्च राघवभट्टीयादौ स्पष्टमित्युपरम्यते । स्वाम्युक्तकारिकापादार्थमाह—यथा कुंडं समेखलं भवति तथा वेदिकास्थंडिलमपि समेखलं कुंडोक्तन्यायेन तत्रापि मेखला एव कार्या न तु योन्यादिरित्यर्थः । प्रकृतमनुसरामः । आधाय भूमिसमूहनगोमयोदकोपलेपनप्रादेशमितस्रुवादिरेखामृदुद्धरणसेचनपूर्वकं संस्थाप्य कांस्यपात्रेण तमितस्ततः प्रसृतं समूहेत् ॥ * ॥ स्वगृह्येति स्ववेदस्वशाखासूत्रोक्तविधिना ॥ ३६ ॥ दर्भैः षोडशकुशैः । परिस्तीर्याग्नेरीशानांतमित्याद्युक्तरीत्या परिस्तरणं कृत्वा । ब्रह्मणा कुशादिनान्वारभ्य क्रियमाणत्वादन्वाधानसंज्ञकं तच्च व्याहृतिहोमादि । एतदग्रे किंचिद्वक्ष्यति ' ध्यायन्नभ्यर्चेद्दारुणी ' इत्यादिना पर्युक्षणं च प्रोक्षणीपात्रजलेन पवित्राभ्यां कुर्यादित्यर्थः । होमोपयोगीनि पवित्रच्छेदनकुशकुशपत्रद्वयप्रोक्षणीपात्राज्यस्थालीसंमार्जनकुशत्रेणीरूपोपयमनकुशसामित्त्रयस्रुवाज्यपूर्णपात्ररूपाणि ॥ * ॥ ० ॥ ३७ ॥

तप्तजांबूनदप्रख्यं शंखचक्रगदांबुजैः ॥ लसच्चतुर्भुजं शांतं पद्मकिंजल्कवाससम् ॥ ३८ ॥ स्फुरत्किरीटकटककटिसूत्रवरांगदम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥३९॥ ध्यायन्नभ्यर्च्य दारूणि हविषाऽभिघृतानि च ॥ प्रास्याऽऽज्यभागावाऽऽघारौ दत्त्वा चाज्यप्लुतं हविः ॥ ४० ॥ जुहुयान्मूलमंत्रेण षोडशर्चाऽवदानतः ॥ धर्मादिभ्यो यथान्यायं मंत्रैः स्विष्टकृतं बुधः ॥ ४१ ॥ अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ॥ मूलमंत्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥ ४२ ॥

त्यक्षेपादिरूपं कर्म कृत्वा अग्नेरुत्तरतो द्रव्याणि होमोपयोगीन्यासाद्य निधाय प्रोक्षण्या प्रोक्षणीपात्रोदकेन प्रोक्ष्याग्नौ मां ध्यायेत् ॥ ३७ ॥ शंखादिभिरुल्लसंतः शोभमानाश्चत्वारो भुजा यस्य तम् ॥ ३८ ॥ स्फुरंति किरीटादीनि यस्य तम् ॥ ३९ ॥ हविषा घृतेनाभिघृतानि संसिक्तानि दारूणि शुष्कसमिधः प्रास्य प्रक्षिप्य । आघारौ तत्संज्ञकौ भागौ । एवमाज्यभागौ च दत्त्वा तदर्थाहुतीर्हुत्वेत्यर्थः । तत्राघारौ प्रजापतये स्वाहेंद्राय स्वाहेति चोत्तरदक्षिणपरिधिसंधिमारभ्याग्निमध्यादापरिध्यंतं घृतक्षारणरूपौ आज्यभागौ अग्नये स्वाहा सोमाय स्वाहेत्येवं होमरूपौ ॥ ४० ॥ मूलमंत्रेणाष्टाक्षरेण । तथा षोडश ऋचो यस्मिंस्तेन पुरुषसूक्तेन चावदानतः प्रत्यृचमाहुतिग्रहणेनेत्यर्थः । पुरुषसूक्तेनाराधनपक्षे स एव मूलमंत्रस्तेनैव प्रत्यृचमवदानतो होम इति । मंत्रैः स्वाहांतैर्नामिमंत्रैः । यथान्यायं पूजाक्रमेणैव । अग्नये स्विष्टकृते स्वाहेत्येवं स्विष्टकृतं च जुहुयात् ॥ ४१ ॥ ततो वह्निस्थं भगवंतमंतर्यामिणमभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो नंदादिभ्योऽष्टदिक्षु बलिं हरेत् । ततः पूजास्थानमागत्य देवस्याग्रे समुपविश्य यथाशक्ति मूलमंत्रं जपेत् ॥ ४२ ॥

ध्येयस्वरूपमाह—तप्तं जांबूनदं स्वर्णं तद्वत्प्रख्या दीप्तिर्यस्य तम् । 'कृष्णवर्णं त्विषाऽकृष्णम्' इति कान्तेरकृष्णत्वोक्तेः स्वर्णालंकारबहलं वा । "प्रख्यं नाम्सदृक्षयोः । स्त्रियां दीप्तौ प्रकीर्तौ च कथने तु नपुंसकम् ।" इति निरुक्तिः ॥ * ॥ ० ॥ ३८ ॥ कटकं वलयम् । कटीसूत्रं मेखला । अंगदं बाहुभूषणम् ॥ * ॥ ० ॥ ३९ ॥ शुष्कसमिधस्तूष्णीं ब्रह्मध्याननिक्षेप्यास्त्रयः पालाश्यस्तदभावेऽन्या अपि । तदुक्तं ब्राह्मे—"पलाशाश्वत्थन्यग्रोधप्लक्षवैकंकतोद्भवाः । वेतसोदुंबरौ बिल्वश्चन्दनं सरलस्तथा ॥ शालश्च देवदारुश्च खदिरश्चेति पाक्षिकाः ।" । मरीचिस्तु—विशीर्णा विरजा ह्रस्वा वक्राः ससुषिराः कृशाः । दीर्घा स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः ॥" । गृह्यसंग्रहेऽपि—"प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः । शांत्यर्थेषु सवल्काऽर्द्रा विपरीता जिघांसया ॥ नांगुष्ठादधिका कार्या समित्स्थूलतया क्वचित् । प्रादेशान्नाधिकन्यूना न तथा स्याद्विशाखिका ॥ न सपर्णा न निर्वीर्या होमेषु च विजानता ॥" इत्यलमधिकेन । तदर्थाहुतीः आघाराज्यभागार्थाहुतीः । इत्यर्थ इति—एतदाहुतिवियुक्तहोमस्य विगुणत्वादिति भावः । तत्राहुतिचतुष्कमध्ये होमकुंडे स्थंडिले च परिधिरस्ति रेखात्रयात्मको वैकरेखात्मकः, प्रथमाहुतिमुत्तरत आरभ्य संततदीर्घां दक्षिणपरिधिपर्यंतां द्वितीयां दक्षिणत आरभ्योत्तरपरिधिपर्यंतां संततदीर्घां च जुहुयात् । संततघृतक्षरणवत्त्वादाघारत्वमेतयोरित्यर्थः । द्रव्यांतरहोमेप्याज्येनैव हूयमानत्वादाज्यभागत्वमिति ॥ * ॥ ० ॥ ४० ॥ मूलस्यादिकारणस्य नारायणस्य जलशायिनो मंत्रो मूलमंत्र इत्यर्थः । इत्यर्थ इति—अवदीयतेऽवखंड्यत इत्यवदानं भेदस्तेन । तसिरत्र तृतीयार्थे । 'अवदानं खंडने स्यात्' इति मेदिन्युक्तेरयमर्थः । नाममंत्रैर्धर्माय स्वाहेत्यादिरूपैः ॥ * ॥ ० ॥ ४१ ॥ ततस्स्विष्टकृद्धोमोत्तरम् । पार्षदेषु गरुडस्य बलिं पुरतः । ततो बलिदानोत्तरम् । नारायणात्मकं मूलमंत्रं ब्रह्म स्मरन्परमात्मानं मां ध्यायन् जपसमये मन्मूर्तिध्यानं कुर्यादित्यर्थः । यद्वा—मंत्रविशेषणं ब्रह्मेति । ब्रह्मस्वरूपम् 'मंत्रमूर्तिकम्' इत्युक्तेः ।

दत्त्वाचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ॥ मुखवासं सुरभिमत्तांबूलाद्यमथार्हयेत् ॥ ४३ ॥
उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम ॥ मत्कथाः श्रावयञ्छृण्वन्मुहूर्तं क्षणिको भवेत् ॥ ४४ ॥

तत्र उभयत्र भगवतो भोजनसमाप्तिं ध्यात्वा आचमनं दत्त्वा उच्छेषं विष्वक्सेनाय कल्पयित्वा तदनुज्ञया पश्चात्स्वयं भुंजीत । ततः सुरभिमत्सुगंधवत्तांबूलाद्यं मुखवासं दत्त्वाऽथ पुनरप्यर्हयेत्पुष्पांजलिना पूजयेत् ॥ ४३ ॥ अभिनयन्स्वस्मिन्नाविष्कुर्वन् । क्षणिको वैयग्र्यं परित्यज्य लब्धावसरो भवेत् ॥ ४४ ॥

यद्वा–ब्रह्म वेदम् उत्तरनारायणादिसूक्तं जपेत् । किं कुर्वन्–नारायणात्मकं स्मरन् " वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम" इत्युक्तेः । किं भूतं ब्रह्म–मंत्राणां सर्वेषां मूलमादिकारणं मूलमंत्रम् । राजदंतादिवत्समासः॥*॥ नारायणात्मकं ब्रह्मेत्युक्त्या निर्विशेषस्मरणं व्यावर्त्यते ॥ ४२ ॥ ततो जपानंतरम् । उभयत्र वह्निस्थे शालग्रामादिस्थे च कल्पयित्वा मनसा समर्प्य । उपलक्षणमेतत्पदामृतस्यापीति । तदपि दत्त्वैव स्वयं गृह्णीयात् । तदुक्तम्–"बलिर्विभीषणो भीष्मः प्रह्लादो नारदोऽर्जुनः । षडेते वैष्णवा नित्यं गृह्णन्तु चरणोदकम् ॥" इति स्मृतिसंग्रहोक्तेः । तच्च स्वयमपि हस्तेन न पिबेत् । तदुक्तं भविष्ये–"समभ्यर्च्य पिबेद्देवान्यः पादसलिलं हरेः । स याति परमं स्थानं तद्विष्णोः परमं पदम् ॥ विष्णुपादाभिषिक्तं यः पात्रेणैव पिबेज्जलम् । सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥ यः पादसलिलं विष्णोः करेण पिबते यदि । स मूढो नरकं याति यावदिन्द्राश्चतुर्दश ॥ " इति । पुलस्त्यः–" शालग्रामशिलावारि सोमपानं दिनेदिने । पात्रांतरेण तद्ग्राह्यं करेण सुरया समम् ॥" इति । तत्स्वरूपं रामाश्वमेधीये–" उदकं चंदनं चक्रं शंखश्च तुलसीदलम् । घंटा ताम्रं शिला विप्रा विष्णोः सूक्तं पदामृतम्॥" इति । "एकांगस्यापि न्यूनत्वे न स्यात्ताद्धि पदामृतम् " इति ध्येयं सुधीभिः । तदनुज्ञया मनसा विष्वक्सेनाज्ञां गृहीत्वा सुगंधवदेलालवंगादियुक्तं मुखं वासयति सुगंधयतीति सुखवासम् ॥ * ॥ तांबूलाद्यमिहाद्यपदेन कर्पूरखदिरैलादंडीरपूगानां ग्रहः । पंचरात्रे विशेषोप्युक्तः–" पुनराचमनं दद्यात्करोद्वर्तनमेव च । सकर्पूरं च तांबूलं चंदनैः करमार्जनम् ॥ पुष्पावलिं ततः कृत्वा भक्त्याऽऽदर्शं प्रदर्शयेत् । नीराजनं पुनः कार्यं कार्पूरं विभवे सति ॥" अगस्त्यसंहितायां तु–"स्नेहसंयुक्तविपुलवर्तिकाभिरनेकधा।आरात्रिभिरनेकाभिः स्थापिताभिः प्रयत्नतः ॥ पयस्स्वस्तिकरूपेण हंसाकारेण चानघ ॥ पुरस्ताद्रघुनाथस्य भ्रामयेत्प्रयतोन्वहम्॥" । अत्र विशेषः श्रीहरिभक्तिविलासे द्रष्टव्यः॥४३॥आविष्कुर्वन् तत्तल्लीला अनुकुर्वन्नित्यर्थः । ननु'न देवचरितं चरेत्' इति निषेधात्कथमुक्तं कर्माण्यभिनयन्ममेति चेदत्र 'समान्यशास्त्रतो विशेषशास्त्रं बलवत्' इति न्यायेन समाधेयम् । तथाहि–यथा " न हिंस्यात्सर्वा भूतानि " इति समान्यशास्त्रं "वायव्यं श्वेतमालभेत" इति विशेषशास्त्रेण बाध्यते इत्यर्थः । तथा 'न देवचरितं चरेत्' इति सामान्यशास्त्रं ' कर्माण्यभिनयेन्मम ' इति वाक्यकल्पेन विष्णुलीला अभिनयेत् । इत्येवंरूपेण विशेषशास्त्रेण बाध्यत इत्यर्थः । मुहूर्तं घटिकाद्वयम् । विशेषकाले कथाश्रवणे श्रावणे तु चित्तमालस्यादिना खिन्नतामृच्छतीति भावः । वैयग्र्यं कार्यान्तरासक्तिम् । क्षणिक इत्यस्यार्थो वैयग्र्यमित्यादि । सा च कथा श्रीमद्भागवतस्यैव ज्ञेया, तया च पूजापि सांगा भवतीत्यभिप्रेत्यैव पूजांते श्रीकृष्णेनोक्तम्–' मत्कथाः श्रावयञ्शृण्वन् ' इति । तथा चोक्तं संहितायाम्–" पूजानिश्छिद्रतावाप्त्यै विष्णोर्भागवतं मुने । पुराणं श्रीशुकेनोक्तं गंगायां यत्परीक्षिते ॥ तन्नित्यं वाचयेत्किंचित्तेन प्रीतो जनार्दनः । द्वात्रिंशदपराधांश्च क्षमते नात्र संशयः ॥ श्रीकृष्णपूजासंपूर्तिर्विना भागवतं न हि । विनापि श्रीहरेः पूजां श्रीभागवतपाठतः ॥ सांगपूजाफलं नित्यं जायते नात्र संशयः ॥ कृष्णस्य वाङ्मयी मूर्तिः श्रीमद्भागवतं मुने । पाठोऽस्य पूजनं सांगं देवदेवस्य शार्ङ्गिणः ॥ " इति ॥ * ॥ क्षणिको गानादिमयोत्सवाविष्टो भवेत् । परं तु श्रीहरिकथानंतरमेव " पूजासमाप्तिर्नैव स्याच्छ्रीमद्भागवतीं कथाम् । विना भार्गव विप्रेन्द्र श्रीगोपालपतेर्विभोः ॥ न्यूनापि पूर्तिमाप्नोति श्रीमद्भागवतध्वनेः । पूर्णापि

---

१ टीकायां तत उभयत्रेति पाठाभिप्रायेणेदम् ।

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ॥ स्तुत्वा प्रसीद भगवन्निति वंदेत दंडवत् ॥ ४५ ॥ शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ॥ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥ ४६ ॥ इति शेषां मया दत्तां शिरस्याधाय सादरम् ॥ उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ॥ ४७ ॥ अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ॥ सर्वभूतेष्वात्मानि च सर्वात्माहमवस्थितः ॥ ४८ ॥

स्तवस्तोत्राणां भेदं दर्शयति । पौराणैः प्राकृतैरपीति॥४५॥ कथं प्रणमेदित्यपेक्षायामाह । शिर इति । बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं मम दक्षिणोत्तरौ पादौ गृहीत्वा । यद्वा पृष्ठतः परस्परं निबद्धाभ्यां बाहुभ्यां कृतापराध इव प्रपन्नमित्यादिविज्ञप्त्या च प्रणमेत्॥४६॥ततः शेषाग्रहणपूर्वकं वैकल्पिकोद्वासनप्रकारमाह।इतीति। अनयैव प्रार्थनया शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरस्याधाय धृत्वा यद्युद्वासयेत्तर्हि प्रतिमायां यन्न्यस्तं ज्योतिस्तत्पुनरपि हृत्पद्मस्थज्योतिष्येवोद्वास्यमुद्वासनीयम् ॥ ४७ ॥ एतेष्वधिष्ठानेषु

पूजा हीना स्याद्विना पारीक्षितीं कथाम् ॥ " इति संहितोक्तेः ॥ ४४ ॥ उच्चावचैः उच्चैः पौराणिकैः स्तवैः, अवचैः प्राकृतैर्मनुष्यादिवाग्रचितैर्निकृष्टैस्तोत्रैः " प्राकृतं तज्जतत्तुल्यदेश्यादिकमनेकधा " इति वाग्भटोक्तेः । अस्यार्थः—प्राकृतमनेकधा—एकं तज्जं तस्मात्संस्कृतात्जायत इति तज्जं शुद्धं प्राकृतं, यथा—मातर्गृहोपकरणामित्यत्र—मारा घरोव अरणामिति । अपरं तत्तुल्यं तेन संस्कृतेन तुल्यं समं, यथा—' धरणिधरचारुदेहं देववरं नमामि बलवंतम् " इति । तृतीयं देश्यं, यथा—डलमहौ शब्दौ देश्यप्राकृतौ । आदिशब्दात् शूरसेनीमागध्यावपि प्राकृते इति । स्तवानां व्यासप्रोक्तत्वेन ' व्यासो नारायणः स्वयम् ' इत्युक्तेर्वेदरूपत्वादुच्चत्वं स्तोत्राणां मनुष्यप्रणीतत्वादवचत्वमिति । द्विजातीनां वक्तुमर्हा वचास्तद्भिन्ना अवचाः । एतेन द्विजातिभिः प्राकृतं न पठनीयमिति । तदुक्तं संग्रहे—" द्विजो न प्राकृतं शास्त्रमापद्यपि कदाचन । शृणुयाच्छृणुयादार्षं विप्रादेव न चान्यतः ॥ यावद्विप्रमुखे शास्त्रं शास्त्रत्वं तावदेव हि । विप्रेतरगतं शास्त्रमशास्त्रत्वं प्रपद्यते । यथा पतिरता साध्वी परगा व्यभिचारिणी ॥ " । किञ्च—" प्राकृतश्रवणं व्यर्थं न पुण्यं तेन जायते । प्रत्यवायावहं किन्तु केवलं स्याद्द्विजन्मनाम् ॥ " इति । यद्वा—प्रकर्षेणाकृतैर्वैदिकैः पुरुषसूक्ताद्यैः ॥ * ॥ स्तवैः स्वनिर्मितैः क्रियात्वेन निर्देशात् कर्तृजन्यत्वापत्तेः । उच्चावचैः नानाप्रकारैः । स्तूयते एभिरिति स्तोत्रैरिति करणतया निर्देशेन पूर्वसिद्धत्वापत्तेः । पौराणैरित्युपलक्षणं तांत्रिकश्रौतयोः । प्राकृतैरधुनान्येन निर्मितैः । तदुक्तं कालिकापुराणे—" या स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः । क्रियते भक्तियुक्तेन वाचिकस्तूत्तमस्तु सः ॥ " इति । स्तवस्तोत्रयोरार्षपौरुषेयत्वेन भेदः कल्प्य इति **चक्रवर्तिकारः** ॥ ४९ ॥ प्रणतिरीतिं पृच्छति—कथमिति । प्रपन्नं शरणं प्राप्तम् । निबद्धाभ्यामौपर्यधस्तनीकृताभ्याम् ॥ * ॥ दूरतो नमस्कारमुक्त्वा किंचिद्दूरत आह—शिर इति । अतिनिकटे गर्भमंदिरे च निषेधात् । टीकायां द्वितीयपक्षमाह—यद्वेति । " अग्रे पृष्ठे वामभागे समीपे गर्भमंदिरे । जपहोमनमस्कारान्न कुर्यात्केशवालये ॥ " इति । गौतमीये तु विशेषः—' पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा ' इत्यादिनाष्टांग उक्तः । आगमे " जानुभ्यां चैव पाणिभ्यां शिरसा वचसा धिया । पंचांगकः प्रणामः स्यात्पूजासु प्रवराविमौ ॥ " इति । इमावित्यष्टांगापेक्षं द्वित्वम् ॥ * ॥ **विश्वनाथस्तु**—अग्रपृष्ठादौ प्रणतिनिषेधान्मत्पादयोर्दक्षिणपार्श्वे किञ्चिद्दूरे शिरः कृत्वा वंदेत । बाहुभ्यां परस्परं संमुखीभूततर्कमुद्राभ्यां सहितमिति शेषः । किं ब्रुवाण इत्यपेक्षायामाह—प्रपन्नमित्यर्द्धम् ॥ ४६ ॥ ततः प्रणत्युत्तरम् । " प्रसादान्निजनिर्माल्यदाने शेषा प्रकीर्तिता " इति विश्वोक्तेर्माल्यादिदानम् । " शेषोऽनंते पुमान्स्त्री चाक्षतमाल्यादिदेशने " इति यादवः । अनयैव ' प्रपन्नं पाहि माम् ' इत्यादिकया उद्वास्यं प्रासादप्रतिष्ठितार्चाशालग्रामेतरस्थण्डिलाद्यानीतमेव ॥ * ॥ इति वंदनानंतरं शेषां निर्माल्यं मया कृपया दत्तां ध्यात्वा शिरस्याधाय ज्योतिर्मदीयं सैकतप्रतिमादिस्थमुद्वास्यं चेत्पुनरपि स्वहृदयस्थज्योतिषि एवोत्कर्षेण वासयेत् ॥ ४७ ॥ सर्वाधिष्ठानसाम्यमाहाक्षेपपूर्वकम् । एतेषु सूर्यादिषु । अधिष्ठानसाम्ये हेतुमाशंक्य समाधत्ते—कुत इति । यतोऽहं सर्वात्माऽतोऽधिष्ठानतारतम्यं नास्तीत्यर्थः ॥ * ॥ यद्यप्यर्चायामेव प्राधान्यमुक्तं

एवं क्रियायोगपथैः पुमान्वैदिकतांत्रिकैः ॥ अर्चन्नुभयतः सिद्धिं मत्तो विंदत्यभीप्सिताम् ॥ ४९ ॥

**किं मुख्यमित्यपेक्षायामाह । अर्चादिष्विति । यदा यत्र श्रद्धा तदा तत्र न त्वधिष्ठाने मुख्यामुख्यत्वम् । कुतः । यतः सर्वभूतेष्विति॥४८॥उभयतः इहामुत्र च॥४९॥**

तथापि श्रद्धैव ममाविर्भावकारणं,यां विना साक्षाद्भूतस्याप्यस्य ममोपलब्धिः ‘ विराडविदुषाम् ’ इत्यादिवन्न स्यादित्याभिप्रेत्य श्रद्धायां आवश्यकत्वं दर्शयितुमाह—अर्चादिष्विति । अधिष्ठानेषु प्राधान्यमेव दर्शयितुमर्चाद्या उक्ताः । किंच—श्रद्धाधिक्ये सति सर्वेष्वस्त्वेव ममाधिष्ठानं प्रह्लादादिश्रद्धया हिरण्यकशिपुस्तम्भादावपि मत्सुलभत्वदर्शनादित्याह—सर्वभूतेष्विति ॥ ४८ ॥ एवमुक्तरीत्या क्रियायोगस्य पथैर्मार्गैः यथाधिकारविहितैः ‘वाटः पथश्च मार्गश्च ’ इति सुभूतिः । अथ वेदतन्त्राधिकारानधिकारनिरूपणं प्रसंगादाह—“ प्रत्यक्षवेदसिद्धोऽर्थः संग्राह्यः सर्वचेतनैः । अप्रत्यक्षश्रुतेरर्थे स्मरंति मुनिसत्तमाः ॥ स्मृतयश्च पुराणानि भारतप्रमुखान्यपि । काचित्कदाचित्तंत्रार्थे कटाक्षेण मुनीश्वराः ॥ अधिकारिविशेषाणां प्रवदंत्यर्थमास्तिकम् । ब्राह्मणः क्षत्रियोऽन्यो वा निःशंकं तत्परित्यजेत् ॥ वर्णाश्रमपरिभ्रष्टः प्रायश्चित्तेष्वनुन्मुखः । वेदेतरागमं पीत्वा पापी तद्धर्ममाचरेत् ॥ वेदवादेतरासक्ता बहवो नरकं गताः ॥ ” इति पराशरपुराणे । सूतसंहितायामपि—“ तथापि योंशो मार्गाणां वेदेन न विरुद्ध्यते । सोंशः प्रमाणमित्युक्तं केषांचिदधिकारिणाम् ॥ अत्यंतमलिनानां तु प्राणिनां वेदमार्गतः । ” सार्वविभक्तिकस्तसिः । वेदमार्गेणेत्यर्थः । हीनानामिति शेषः । “ पांचरात्रादयो मार्गा कालेनैवोपकारकाः ” इति । कौर्मेऽपि ब्राह्मणानां गौतमशापेन वेदबाह्यत्वे जाते तैः स्तुतौ शिवकेशवौ—“ चकार मोहशास्त्राणि केशवः सशिवस्तदा । कापालं नाकुलं वामं भैरवं पूर्वपश्चिमम् ॥ पांचरात्रं पाशुपतं तथाऽन्यानि सहस्रशः । कचित्कचित्पुराणादौ वेदमूलेऽपि सर्वथा ॥ संति निर्मूलतंत्रांशास्ते तु ग्राह्या न वैदिकैः । ” इति । मोहशास्त्रत्वं चैहिकफलदर्शनेन तत्तंत्रोक्तपारलौकिकफलेष्वपि विश्वस्य वसिष्ठाद्युपासितत्वादितत्तदर्थवादेषु च विश्वस्य वैदिकमार्गत्यागजनकमोहजनकत्वात् । तंत्रांशानां निर्मूलत्वं च वेदामूलकत्वात् । पाद्मे पार्वतीश्वरसंवादे—“ शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । तेषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥ प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥ कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥ द्विजन्मना जैमिनिना पूर्ववेदप्रकाशकम् । निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥ विशेषेण तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥ वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि जगतां नाशकारणात् ॥ ” इति । अस्य पूर्वं द्विजानाश्रित्येति शेषः । न्यायवैशेषिकयोः सुखदुःखादिमत्त्वमात्मनः श्रुतिविरुद्धं, निरीश्वरता सांख्यमीमांसयोः श्रुतिविरुद्धेति तदंशे तेषामप्रामाण्यं मायावादो नास्तिकानां वासिष्ठलैंगे वेदमार्गं परित्यज्य तंत्रमार्गेण विष्णुपूजकं शांडिल्यं प्रति विष्णुवचः—“ धिग्धिक् शांडिल्य दुर्बुद्धे साहसी त्वमतो भृशम् । को वा वर्णाश्रमाचारं श्रौतं त्यक्तुं त्वया विना ॥ शक्तः पापबलात्त्यक्तुर्नास्ति ते निष्कृतिः श्रुतौ । कुमार्गेणापि शांडिल्य कृता पूजा मम त्वया ॥ अतः कालेन महता वेदमार्गं गमिष्यसि । ” इति । अत्र पापबलात्त्यक्तुरित्युक्त्या पूर्वजन्मपापमेव तत्त्यागे तंत्रमार्गप्रवेशे च कारणमिति सूचितम् । अनेन स्पष्टमेव भ्रष्टाधिकारिकत्वं तेषां सूचितं तत्रैव स्थलान्तरे—“पाञ्चरात्रं भागवतं बौद्धं दैगंबरं तथा । लोकायतं च कापालं सोमं पाशुपतं तथा ॥ नाकुलं भैरवं वामं शाक्तं शांभवयामले । एवंविधानि शास्त्राणि मनसापि च न स्मरेत् ॥ ” इति । पाञ्चरात्रं चात्र नारदसूर्यचित्रशिखंडिप्रणीतं प्राक्तनं न निन्दितम् । “ कृतं शतसहस्रं हि श्लोकानामिदमुत्तमम् । यजुर्ऋक्सामभिर्जुष्टमथर्वांगिरसैस्तथा ॥” इत्युक्तेस्तस्य वेदरूपत्वात् । किन्तु सात्वतप्रणीतं, नारदप्रणीतस्य कलौ लुप्तत्वात्तदुक्तं मोक्षधर्मे महाभारते उपरिचरवसुसंज्ञकं राजानमुपक्रम्य—“स च राजा श्रिया युक्तो भविष्याति महान्वसुः । संस्थिते तु नृपे तस्मिञ्छास्त्रमेतत्सनातनम् ॥ अंतर्द्धास्यति तत्सर्वमेतद्वः कथितं मया ।” इति । यच्चेदानीमुपलभ्यते तस्यैव निंदापि । यथा कौर्मे—“सात्वतो नाम परमो विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतो धनुर्वेदविदां वरः ॥ स नारदस्य वचनाद्वासुदेवार्चने रतः । शास्त्रं प्रवर्तयामास कुंडगोलादिभिः श्रितम् ॥” अत एव वाक्यादभिनवोऽपि कश्चित्पञ्चरात्रागमः सात्वतप्रणीतत्वात्सात्वततंत्रनाम्नैव प्रसिद्धोऽस्तीति । किञ्च—

"सर्वं वेदाविरोधेन प्रमाणं नान्यथा भवेत् । तस्मात्सर्वप्रयत्नेन ब्रह्मन्वेदविदां वर ॥ त्यक्त्वा वेदविरुद्धानि वेदमेकं समाश्रये । " इति च सर्वं स्मृतिपुराणदेशकुलजातिधर्मादिकम् । ब्राह्मे–"स्वागमैः कल्पितैस्तैस्तु जनान्म द्विमुखान्कुरु । मां च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरा ॥" इति । वाराहे–"अभावे वेदमंत्राणां पञ्चरात्रोदितो विधिः" इति । सांबपुराणे–"श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्तोभयं गतः । क्रमेण श्रुतिसिद्ध्यर्थं ब्राह्मणस्तन्त्र माश्रयेत् ॥ पाञ्चरात्रं भागवतं तंत्रं वैखानसाभिधम् । वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान् ॥" इति चेन्न, "श्रौतार्चनं तु विप्राणां विशेषेण सदा भवेत् । श्रौतागमार्चनं क्षत्रे वैश्ये केवलमागमम् ॥ " इति । मंत्रराजा नुष्टुब्विधाने उक्तेस्तयोस्तत्राधिकारात् । श्रौतागमं वैदिकैरेव मंत्रैरागमशास्त्रोक्तन्यासाधारपीठपूजाद्यंगकलापेन पूजनं, केवलमागममागमोक्तैनैव मंत्रेणागमस्थबीजप्रक्षेपयुतवैदिकेन वागमोक्तांगकलापेन पूजनं, यत्र नागमोक्त बीजक्षेपो नास्ति तत्रत्यन्यासादिरूपमंगं तच्छुद्धश्रौतं, न्यासस्य तांत्रिकत्वं त्वाश्वलायनगृह्यपरिशिष्टे संध्याप्रकरणे । तदुक्तम्–सावित्र्या ऋषिदैवतच्छंदांस्यनुस्मृत्य दैवतमेव वानुस्मृत्य तामेतां चतुरक्षरशो विभक्तामंतर्योजितैः षड्भिश्चांगमंत्रैर्यथांगमात्मानि विन्यस्यात्मानं तद्रूपं भावयेत् । यथा–तत्सवितुर्हृदयाय नम इति हृदये । वरेण्यं शिरसे स्वाहेति शिरसि । भर्गो देवस्य शिखायै वषडिति शिखायाम् । धीमहि कवचायहुमिति कवचमुरसि । धियो यो नो नेत्रत्रयाय वौषडिति नेत्रललाटेषु विन्यस्याथ प्रचोदयादस्त्राय फडिति करतलेनास्त्रं प्राच्यादिदशसु दिक्षु न्यसेदेषोंगन्यासः । एवमप्येके नेच्छन्ति स हि विधिरवैदिक इति । अथ मंत्रदेवतां ध्यायेदिति अत्रैनमपी त्यपि न न्यासांतराणां तांत्रिकमन्त्रेष्वप्यनावश्यकता । एके मुख्या ब्राह्मणा इत्यर्थः । अनेन तेषां तन्त्रे नाधिकार उक्तः । हि यतः स विधिर्न्यासविधिरवैदिक इति तं नेच्छन्ति विप्राः । अनेन तंत्राणां वेदमूलकत्वं निराकृतं तेन क्षत्रियादिविषयता च स्पष्टमुक्ता विप्राणां च वैदिकमात्र एवाधिकार इति सूचितम् । तथा च–वैदिकानां वेद एव प्रमाणं भ्रष्टानां तंत्राणि भ्रष्टतराणां शाक्ताद्यागमाश्च प्रमाणमिति व्यवस्था बोध्या । भ्रष्टविप्रोऽपि मिश्रपूजाधिकारी तंत्रोपात्तवैदिकेषु तस्याधिकारात् । किञ्च–ब्रह्मघ्नादीनां प्रायश्चित्तकरणकालेषु संन्ध्यावन्दनगायत्रीजपाधिकारवत् । "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति श्रुतिबलाद्ब्रह्मघ्नस्याने कमंत्रसाध्याश्वमेधाधिकारवच्च तस्य वैदिकेऽप्यधिकारात् । यत्तु तत्तत्तंत्रेषु तंत्रमार्गाणां वैदिकमार्गादाधिक्यकथनं तत्तु भ्रष्टादिरूपतत्तदधिकारिणः प्ररोचनार्थं मोहनार्थं च, तादृशमोहे पूर्वजन्मकृतपापमेव कार णम् "पाञ्चरात्रे च कापाले पाखण्डेष्वपरेषु च । दीक्षिताश्च भविष्यन्ति मनुष्याः पापकर्मिणः ॥ " इत्युक्तेः । किञ्च–यत्पुराणेषु दुर्गापूजने रात्रिपूजाप्राधान्यं तदनुसारेण तत्तिथिनिर्णयश्चोक्तस्त त्तंत्रानुसार्येव "पूर्वाह्णो देवानाम्" इति प्रत्यक्षश्रुतिविरोधात् । "वामाचारो महादेवि नक्तेनोद्धरते नरान्" इत्युक्ते रात्रिपूजा वामाचारांतर्गतैव, वामाचारे ब्राह्मणस्य तु तंत्रभ्रष्टस्यापि नाधि कारः "यो दाक्षिण्यं विना विप्रो महामायां प्रपूजयेत् । स पापः स्वर्गलोकात्तु च्युतो भवति रोगधृक् ॥" इति कालिकापुराणोक्तेः । दाक्षिण्यं दक्षिणमार्गः । कथंचित्पापातिशयात्तत्र प्रवेशेऽपि मद्यमांसादौ तस्य नाधिकारः । "वामागमोऽपि विप्रस्तु मद्यं मांसं न भक्षयेत् । स्वकीयां परकीयां वा नाकृष्य ब्राह्मणो यजेत् ॥" इति तंत्रसारात् । आकृष्य धनादिना वशीकृत्य "आवां तु पिशितै रक्तैः सुरयापि सुरेश्वरि।वर्णाश्रमो चितं धर्ममविचार्य यजन्ति ये ॥ भूतप्रेतपिशाचास्ते भवन्ति ब्रह्मराक्षसाः ।" इति । गौरीं प्रति शिवेनोक्तमगस्त्यसंहितायाम् । "पीत्वापीत्वा पुनः पीत्वा पतित्वा धरणीतले।उत्थाय च पुनः पीत्वा पुनर्जन्म न विंदति॥" इत्यादि तु शूद्रपरं, व्यवहारे मद्यादितो निवृत्तस्यापि शूद्रस्य सौत्रामण्यादिन्यायेन पूजायां तत्स्वीकारो बोध्यः । मद्ये ब्रह्मशापकृष्णशापशुक्रशापविमोचनप्रकारोऽपि शूद्रस्यैव तद्विना शूद्रस्य सिद्धिप्रतिबंधात् । तदुक्तं देवीपुराणे–" वेश्यासु गोपबालासु डौडहूणखसेषु च । शूद्रस्त्रीषु विशेषेण पुलिंदशबरेषु च ॥ लोकोत्तरेण मार्गेण वामाचारेण सिद्धिदः " इति शूद्रादीनामेव तत्राधिकार उक्तः । लोकोत्तरेण तदनंगीकृतेन । स्त्रीपदमतिभ्रष्टस्त्रीपरम् । ब्राह्मणेन तु सात्त्विको बलिर्देयः । "ब्राह्मणस्य बलिर्यत्र तत्रायं विहितः क्रमः । कृत्वा घृतमयं सिंहं नरं व्याघ्रं च भैरवम् ॥ अथवा पूपविकृतं यवक्षोदमयं च वा ॥ घातयेच्चंद्रहासेन " इति कालिकापुराणात् । एतच्च कूष्मांडश्रीफलेक्षुदंडादेरप्युपलक्षणम् । किं बहुना, तंत्रमार्गे विप्रस्य नाधिकारो वामाचारप्रवृत्तो ब्राह्मणस्तु वेदाध्ययनप्रवृत्तशूद्रवन्नारक्येव । तंत्रमार्गे यत्र कुत्रचिद्ब्राह्मणपदं कुंडगोलविप्रपरम् । " प्रवृत्ते योगिनीतंत्रे सर्वे वर्णा द्विजातयः । निवृत्ते योगिनीतंत्रे सर्वे वर्णाः पृथक्पृथक् ॥ " इत्यादिवचांसि कुंडादिपराणि तेषामप्युपनयनविधानेन द्विजातित्वात् । तत्तद्वर्णजातस्य गौणतत्तद्वर्ण त्वाच्च । एतदभिप्रायकमेव " सौत्रामण्यां कुलाचारे विप्रे मद्यं न दुष्यति " इति पठन्त्याधुनिकाः । तथा तप्तमुद्राधारणाद्यपि शूद्रकुंडगोलकादीनामेव । लिंगचक्रादिधारिणमुपक्रम्य " विप्रस्यैतद्विगर्ह्यत्वात्प्रायश्चित्तमुदी

मदर्चां संप्रतिष्ठाप्य मंदिरं कारयेद्दृढम् ॥ पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाऽऽश्रितान् ॥ ५० ॥ पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ॥
क्षेत्रापणपुरग्रामान्दत्त्वा मत्सार्ष्टितामियात् ॥ ५१ ॥ प्रतिष्ठया सार्वभौमं दानेन भुवनत्रयम् ॥ पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५२ ॥
मामेव नैरपेक्ष्येण भक्तियोगेन विंदति ॥ भक्तियोगं स लभत एवं यः पूजयेत माम् ॥ ५३ ॥

समर्थं प्रत्याह यदर्चामिति त्रिभिः । पुष्पोद्यानानि च कारयेत् । पूजायात्रोत्सवाश्रितान् । पूजा प्रत्यहम् । यात्रा विशिष्टे पर्वणि बहुजनसमागमः । उत्सवो वसंतादिमहोत्सवः । तदाश्रितान् क्षेत्रादीन् दत्त्वा ॥ ५० ॥ पूजायात्रोत्सवाश्रितानित्यस्य विवरणं पूजादीनामिति । प्रवाहार्थं संततानुवृत्त्यर्थं क्षेत्रादीन्दत्त्वा । मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥ प्रतिष्ठादीनां व्यस्तसमस्तानां फलमाह । प्रतिष्ठयेति । मत्साम्यतां मया साम्यमित्यर्थः ॥ ५२ ॥ सकामं प्रत्युक्तमहैतुकभक्तं प्रत्याह । मामेवेति ।

रितम् । शूद्रधर्मरतानां हि लिंगं चक्रादिधारणम् ॥ ” इति यामलोक्तेः । एतदर्थकश्रुतयस्तु परैः कल्पिता एव, वेदेऽनुपलंभात् । याश्चोपलभ्यन्ते ताश्च वेदभाष्यकारादिभिरन्यथा व्याख्याता न तत्तात्पर्यिकाः । त्रिपुंड्रादिधारणमपि शैवागमदीक्षितस्यैव, स्पष्टमेतत्सूतसंहितायाम् । भस्मधारणं तु होमांते वैदिकैः कार्यमेवेत्यलं प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः—इहामुत्र ऐहिकीमामुष्मिकीं च । सिद्धिर्भोगो मोक्षश्च ॥ * ॥ क्रियायोगपथैर्मदर्चनोपायप्रकारैः ॥ ४९ ॥ मदर्चां मन्मूर्तिं मंदिरञ्च । दृढं चिरकालस्थितिक्षमं लिंगव्यत्ययेन मूर्तिमपि दृढां कारयेत्तां च तत्र संप्रतिष्ठाप्य वैदिकप्रकारेण सम्यक्स्थापयित्वा पुष्पोद्यानानि च कारयेत् । मदर्चापदं क्रियापदं चावृत्त्या योज्यम् । रम्याणीति—दुर्गन्धादिरहितरम्यपुष्पपत्रमयानि । पूजादिराश्रितो येषु ते तदाश्रितास्तान् । यावता क्षेत्रादिसमर्पणेन पूजादिसिद्धिर्भवेत्तत्कारयेदित्यर्थः ॥ * ॥ समर्थं प्रत्याह—ते पूजादय आश्रिता अधीना येषां तान् क्षेत्रादीन्दत्त्वेति परेणान्वयः । मंदिरं कारयित्वा मदर्चां संप्रतिष्ठापयेदिति वाच्ये विपरीतोक्तिर्मंदिरेऽवश्यार्चाप्रतिष्ठापनायैव “ भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः ” इतिवत् । यद्वा—‘ पाठक्रमादर्थक्रमो बलीयान् ’ इति न्यायेन “ अग्निहोत्रं जुहोति यावगूं पचाति ” इतिवत् ॥ ५० ॥ विवरणं व्याख्या । महापर्वाणि च—“ जयंत्यः श्रीपंचमी च होलिका कार्तिकी तथा । शयनोत्थानरासाश्च द्वादश्यो रथयात्रिका ॥ चातुर्मास्योत्सवाश्चान्ये महापर्वाणि सन्ति वै । ” इत्युक्तेः ॥ * ॥ ० ॥ ५१ ॥ व्यस्तसमस्तानां पृथग्मिलितानाम् । इत्यर्थ इति—मत्सायुज्यं वा चतुर्भुजरूपादिमान्भवतीति भावः । सार्वभौमं चक्रवर्तित्वम् । प्रतिष्ठापदं तत्करणपरम् । सद्मना मंदिरनिर्माणेन । आदिनोत्सवादिग्रहः । ननु मंदिरादिकर्तारो भुव्यनन्ताः सन्ति ते यदि सार्वभौमादयः स्युस्तर्हि कथमेकस्यां भूमौ सार्वभौमबहुत्वमेकस्मिन्भुवनत्रये बहूनामाधिपत्यं च, तव सायुज्यं तु बहूनामपि संगच्छत एवेति चेन्मात्राशंकनीयम्, ममैकस्मिन्रोमगर्तेऽनेके ब्रह्माण्डाः सन्ति तेषुतेषु च सार्वभौमादिसंभवादिति गृहाण ‘ ईदृग्विधा विगणितांडपराणुचर्या वाताध्वरोमविवरस्य ’ इत्याद्युक्तेरनंतब्रह्माण्डाश्रयत्वं ममेति ॥ * ॥ साम्यतामिति स्वार्थे तलार्षः ॥ ५२ ॥ तत्राहैतुकभक्तियोगप्रश्ने आह—उत्तरमिति । तच्च एवमिति । किञ्च—पूजायां बहुविधवाद्याभावे घण्टाया आवश्यकत्वमुक्तं स्कान्दे—“यस्तु वादयते घण्टां वैनतेयेन चिह्निताम् । स्नाने धूपे च नैवेद्ये दीपनीराजनादिषु ॥ स गोदानफलं याति सर्ववाद्यफलं तथा । अभावे सर्ववाद्यानां घण्टां वै वादयेत्सदा ॥ सर्ववाद्यमयी घण्टा ह्यतस्तां वादयेत्सुधीः । ” इति । नीराजनप्रकारस्तु—“आदौ चतुः पादतले प्रदेयं द्विर्नाभिदेशे मुखमण्डलैकम् ।

यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ॥ वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम् ॥ ५४ ॥ कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ॥ कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥ ५५ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे भगवदुद्धवसंवादे पूजाविधिनिरूपणं नाम सप्तविंशोऽध्यायः ॥ ॥ २७ ॥ श्रीभगवानुवाच ॥ परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ॥ विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥ १ ॥

अहैतुको भक्तियोग एव कथं भवति तत्राह । भक्तियोगमिति ॥ ५३ ॥ दातुः फलमुक्तमपहर्तारं निंदति । य इति । विड्भुक् विष्ठाभोजी कृमिः ॥ ५४ ॥ कर्तुर्यत्फलं तदेवान्येषामपीत्याह । कर्तुरिति । सारथेः सहकारिणो हेतोः प्रयोजकस्यानुमोदितुश्च प्रेत्यैतत्फलमित्यन्वयः । कुतः । यतः कर्मणामेते भागिनो भागार्हाः । तत्रापि विशेषमाह । भूयसि कर्मणि सारथ्यादौ च भूयोऽधिकं फलमिति ॥ ५५ ॥ पयःपत्रादिमात्रेण पूजितो यः परं पदम् ॥ प्रागेव दिशति प्रीतः स कृष्णः शरणं मम ॥ १ ॥ इति श्रीमद्भागवते म० एकादशस्कंधे श्री० टीकायां सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ॥ ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते ॥ १ ॥ इदानीमतिविस्तरेणोक्तं

सर्वांगदेशेषु च सप्तवारं नीराजनेऽयं विधिरीश्वरस्य ॥" इति विष्णुधर्मे । पाकोऽपि भगवते वैष्गवकृत एव समर्प्यः । स चात्र ब्राह्मण एव । तदुक्तम्—"पाकं मे वैष्गवकृतं नित्यं दद्यात्पवित्रकम् । अवैष्णवकृत पाकं नाहं गृह्णामि शोभनम् ॥ विप्रोऽत्र वैष्णवो ज्ञेयो यतो विष्णुमुखोद्भवः । अंगेषु देवताः सर्वा मुखे वेदाश्च यस्य हि ॥ स मे पाकं सदा कुर्यादर्चनञ्च द्विजोत्तमः। विप्रः शुद्रोऽपि पतति परपाकाशनाद् ध्रुवम् ॥ पतितः शुद्धिमाप्नोति विप्रपाकाशनात्परः।" इत्यपि तत्रैव । पाकविधिस्तु—आद्यपद्यव्याख्याशतके दृश्यः । एतच्च पूजोपयोगित्वादत्रोक्तम् । किंच—"देवद्रव्यं देवपूजां कुर्याद्यः शूद्रसान्नरः[2] । स पितृपंक्तिसहितो नरकानेकविंशतिम्[3] ॥ यावद्ब्रह्मदिनं तावद्भुंक्ते नैवात्र संशयः । यस्याशनं पादचरं प्राहुर्वेदाश्च पादजम्[4] ॥ पाकार्चनाधिपत्येषु तस्माच्छूद्रं परित्यजेत् । त्रिषु विप्रं नियुंजीत विष्णुर्विप्रप्रियो यतः ॥ न हि जातिपरावृत्तिस्तत्तल्लिंगस्य धारणात् । न नापितो ब्राह्मणतां यांति सूत्रादिसंग्रहात् ॥" इति कौशिकसंहितोक्तेश्च ॥ * ॥ ० ॥ ५३ ॥ दातुः पूजोपयोगिवृत्तिदातुः । "क्षेत्रापणपुरग्रामान्दत्त्वामत्सार्ष्टितामियात्" इत्येवंलक्षणं फलमुक्तं पूर्वमधुना तदपहर्तुस्तदाह—स्वदत्तां स्वीयैः स्वेन वा दत्ताम् । 'स्वः स्व आत्मनि स्वकीये च' इति कोशः । अयुतायुतं दशकोटीर्यावदित्यर्थः ॥ * ॥ ० ॥ ५४ ॥ अनुमोदितुः श्लाघयितुः । एतत्पूर्वोक्तम् 'प्रतिष्ठया' इत्यादिश्लोकस्थितम् । एतेषामेतत्फलं कुत इति हेतुमाशंक्य समाधत्ते—यत इति । तत्रापि कर्मभागित्वेपि । भूयसि महति । तत् कर्मादिफलम् ( ५५ ) आदिना पुष्पादिग्रहः । प्रागेव शरीरपातात्पूर्वमपि मैथिलादिषु तथा दर्शनात् । परं सर्वोत्कृष्टं भक्तिरूपम् ॥ * ॥ ० ॥ ५५ ॥ इति श्रीमद्भागवते महापुराण एकादशस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥ विस्तरेणाध्यायविंशत्या । समाहृत्य संक्षिप्य ( १ ) । परेषां स्वेतरेषाम् । आदिना मूढग्रहः । कर्माणि हरिस्मरणगृहादि करणयाचनादीनि । तत्र स्तुतिनिन्दाऽकरणे ॥ * ॥ अद्वैतदर्शिनो ज्ञानिनो हि द्विविधा भवन्ति विश्वस्यास्य परब्रह्मोपादानकत्वेऽवश्यच्याख्येये परिणामवादे ब्रह्मणो विकारप्रसक्तेस्तमनंगीकृत्य विवर्तवादमेवांगीकुर्वाणा ब्रह्मणो निर्विकारत्वं विश्वस्यास्य तु मिथ्यात्वमाचक्षते खल्वेके । अन्ये तु प्रकृतेः स्वशक्तित्वात्तद्वारैव परब्रह्मणो जगदुपादानत्वमतस्तस्याः किल विकारित्वेऽपि स्वरूपतस्तदतीतस्य परब्रह्मणो निर्विकारत्वमेवेति परिणाम वादे किल न कापि क्षतिः । तथा चोक्तं भगवता—" प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यंजकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥" इत्यतः सत्यपि द्वैते प्रकृतिकार्याणां तदन्यत्वात्प्रकृतेश्च परमेश्वरादन

१ विष्णुसद्मनिर्मायकः । २ शूद्राधीनं शूद्रसात् "तदधीनवचने" इति सातिः । ३ पञ्चमस्कन्धोक्तान् । ४ शूद्रम् ।

परस्वभावकर्माणि यः प्रशंसति निंदति ॥ स आशु भ्रश्यते स्वार्थादसत्यऽभिनिवेशतः ॥ २ ॥ तैजसे नि.. त्रे पिंडस्थो नष्टचेतनः ॥ मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक्पुमान् ॥ ३ ॥ किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ॥ वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥

ज्ञानयोगं संक्षेपेण वक्तुमाह । परेषां स्वभावान् शांतघोरादीन् कर्माणि च । तत्र हेतुः । विश्वमिति ॥ १ ॥ विपक्षे दोषमाह । परेति । स्वार्थात् ज्ञाननिष्ठालक्षणात् असति मिथ्याभूते द्वैतेऽभिनिवेशात् ॥ २ ॥ भ्रंशमेव दृष्टांततो दर्शयति। तैजसे राजसाहंकारकार्ये इंद्रियगणे निद्रया आपन्नेऽभिभूते सति पिंडस्थो जीवः केवलं मनोमात्रेण मायां स्वप्नरूपां प्राप्नोति ततो मनसि लीने सति नष्टचेतनः सन्मृत्युं वा मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति यथा तद्वदेव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयं च प्राप्नोति । यथा प्राज्ञसंपर्काद्विश्वस्य भोगक्षयलक्षणो भ्रंश एवमनात्मसंपर्कादात्मनोऽपि स्वरूपभ्रंश इति भावः ॥ ३ ॥ द्वैतासत्यतया स्तुतिनिंदयोर्निर्विषयत्वं प्रपंचयति सार्धैः षड्भिः । किं भद्रमिति । अवस्तुनो द्वैतस्य मध्ये किं भद्रं किं वाऽभद्रं कियद्भद्रं कियद्वाऽभद्रमित्यर्थः । अवस्तुत्वमेवाह । वाचेति बाह्येन्द्रियोपलक्षणम् । वाचा उदितमुक्तं चक्षुरादिभिश्च यद्दृश्यं तदनृतमिति ॥ ४ ॥

न्यत्वात्, परमेश्वरस्य तु बहुमूर्तित्वेऽप्यैक्याद्द्वैतमेव ब्रह्मेत्याहुः । उभयेषामेव ज्ञानित्वेऽप्युत्तरे एव श्रीभागवतमतसंमताः । पूर्वेषामपि मध्ये ये भगवद्विग्रहभक्तधामनामाद्यतिरिक्तपदार्थानामेव मिथ्यात्वमाचक्षते तेषां मतमादि भरतचरितादौ क्वचित्क्वचिदुट्टंकितमिति तन्मतमपि सर्वमतजिज्ञासुमुद्धवमाह—परस्वभावेति पंचभिः । ततः परमध्यायसमाप्तिपर्यन्तं विवर्तवादिनां परिणामवादिनां च मते व्याख्यानं तुल्यमेव । किन्तु असदादिशब्दै र्विवर्तवादिनां मतेऽवस्त्वेवोच्यते, परिणामवादिनां मते तु असर्वकालसत्ताकं वस्तूच्यत इत्येतावानेव भेदो द्रष्टव्यः । कार्याणां सत्त्वेऽप्यचिरस्थायित्वमसत्त्वमेवेति परिणामवादिनः । कार्याणां मिथ्यात्वमेवासत्त्वमिति विवर्तवादिन आहुरिति तत्र विवेचनीयम् ॥ १ ॥ विपक्षे स्तुतिनिन्दाकरणे । पुरुषेषु स्वात्मानतिरिक्तेषु परस्वभावेष्वित्यर्थः । स स्तुतिनिन्दाकर्ता । ज्ञाननिष्ठालक्षणात् स्वरूपानंदात् । अभिनिवेशात्सत्यत्वभ्रमदार्ढ्यात् ॥ ॥ * ॥ स्वार्थात्परमात्माभिनिवेशात् । असति ततोन्यस्मिन्कल्पितेनानावयविनीति संदर्भः ॥ * ॥ विपक्षे प्रशंसागर्हणरूपे विरुद्धपक्षे मिथ्याभूते परमात्मसत्तां विनेति शेषः ॥ २ ॥ पिण्डस्थो देहस्थः " पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोळसिह्लकयोरपि ॥ ओंड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनायसोः । " इति मेदिनी । ततः स्वप्नोत्तरम् । नष्टा चेतना बुद्धिर्यस्य स तथा । प्रारब्धसमाप्तौ तदभावे मृत्युतुल्यां मृतवद्देहेन्द्रियाभिमानाभावात् । तद्वदेव यथा प्राज्ञसंपर्काद्विश्वस्य भोगक्षयलक्षणे भ्रंश एवमनात्मसंपर्कादात्मनोऽपि स्वरूपभ्रंश इति भावः । स्वप्ने यथा विक्षेपं सुषुप्तौ लयं च तथेति ॥ * ॥ किंच तैजस इति परमात्मैकदृश्यभावेन नानार्थदृक् पुमान् कदाचिद्बहिर्नष्टचेतनः सन् मायां लौकिकमायामयतुल्यां मायाख्यां भगवदचिन्त्यशक्तिमयं स्वप्नं यद्वत् प्राप्नोति कदाचिद्बहिरन्तरपि नष्टचेतनः सन् मृत्युं तत्तुल्यां सुषुप्तिं यद्वत्प्राप्नोति तद्वदेव मायां तादृशं जन्मादिरूपदेहाद्यभिनिवेशं मृत्युं देहपरित्यागं च प्राप्नुवन्भ्रमति ॥ ३ ॥ किञ्च—अवस्तुतोऽसतः । इत्यर्थ इति—आर्षत्वान्मतुब्लोप इति भावः । दृश्यं ज्ञेयम् ॥ * ॥ दीपिका—आगमापायिधर्मेषु यदनपायि तद्धर्मीति रीत्या परमात्मानमंतरा स्वतंत्रावयवितया मतस्य द्वैतस्यावस्तुतो मध्ये इत्यादि योज्यम् । 'अबाधितोऽपि ह्याभास' इति सप्तमोक्तरीत्यैव पृथगवयविलक्षणद्वैतस्यावस्तुतया स्तुतिनिंदयोर्निर्विषयत्वं प्रपञ्चयति सार्द्धैः षड्भिः—किं भद्रमिति । अवस्तुन इति मद्विग्रहधामनामभक्तादिकं किञ्चिद्रूपत्वाद्ब्रह्मवस्त्वेव तद्भिन्नस्य द्वैतस्य संबंधि यद्वाचा उदितं मनसा यद्ध्यातं तत्सर्वमनृतं किं भद्रं

**छायाप्रत्याह्वयाभासा ह्यसंतोऽप्यर्थकारिणः ॥ एवं देहादयो भावा यच्छंत्यामृत्युतो भयम् ॥५॥ आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ॥ त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ ६ ॥ तस्मान्न ह्यात्मनोन्यस्मादन्यो भावो निरूपितः ॥ निरूपितेयं त्रिविधा निर्मूला भातिरात्मनि ॥ इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ७ ॥**

नन्वेवं सति देहादिभावानामप्यसत्त्वात्कथं भयहेतुत्वं तत्र सदृष्टांतमाह । छाया प्रतिबिंबः । प्रत्याह्वयः प्रतिध्वनिः । आभासः शुक्तिरजतादिः । एते यथाऽसंतोऽप्यर्थकारिणो भवंति । आमृत्युतो मृत्युमभिव्याप्य । यद्वा मृत्युर्लयः । यावन्नैव लीयंते तावत्पर्यंतमित्यर्थः ॥ ५ ॥ ननु सृष्ट्यादिश्रुतिभिरेव द्वैतं निरूपितं कथमसत्यं स्यात्तत्राह आत्मैवेति सार्धद्वाभ्याम् । त्रायते पाल्यते । त्राति पालयति ॥ ६ ॥ अन्यस्मात्सृज्यादिव्यतिरिक्तात् । त्रिविधा आध्यात्मिकादिरूपा । भातिः प्रतीतिः ।

किं वाभद्रं क्रियद्वेति संबंधः । यतः स्तुतिनिन्दे स्यातामिति भावः । एवमप्रेष्यसच्छब्देन चिद्विन्नमेव ज्ञेयं, व्याख्यान्तरे "सत्यज्ञानानंतानंदमात्रैकरसमूर्तयः" इति । "तासां मध्ये साक्षाद्ब्रह्मगोपालपुरीहि" इति । "अस्य जानंतो नाम चिद्विविक्तन" इति । "प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्" इति । 'मन्निकेतं तु निर्गुणम्' इति । 'निर्गुणो मदपाश्रयः' इत्यादिवचनेभ्यो गुणातीतत्वेनावगमितेष्वपि वस्तुष्वनृतत्वप्रसिद्धिः स्यादतस्तन्नोपादेयम् ॥ ४ ॥ अत्राक्षिपति–नन्विति । न ह्यजातसर्पादेः कस्यचिद्भयमस्तीत्याह–कथमिति । तत्राक्षेपे । ननु विमतं छायादि सत् अर्थक्रियाकारित्वाद्यतिरेके शुक्तिरूप्यवदिति चेदाह–छायादयोऽसंतोपि साध्यसत्यत्वाभाववन्तोऽपि बाधात्पूर्वमर्थकारिण इति दृष्टांते हेतुवृत्त्या व्यतिरेकव्याप्त्यसिद्धिः साध्याभाववति वर्तनेन व्यभिचारः । एवमित्यम । देहादय आदिनेन्द्रियादिग्रहः । असन्तोपि, ननु मृतानामपि नरकादिभयश्रुतेः कथमामृत्युत इति तत्राह–यद्वेति । इत्यर्थ इति–लयः सुषुप्तिरात्यन्तिको वा, सुषुप्तौ क्षणिकभयनिवृत्तेरात्यन्तिके सर्वथा भयनिवृत्तेरिति भावः ॥ * ॥ तत्र शङ्कायां सदृष्टान्तमाह–अर्थकारिणो भ्रमेण व्यवहारप्रयोजका भवन्ति, पूर्वार्थे मृत्योरनन्तरमपि संसारप्रतिभासादरुचेः–यद्वेति **दीपिका** ॥ * ॥ **सन्दर्भस्तु**–ननु यदि परमात्मैव सर्वत्रावयवी ततोन्यन्नास्त्येव तर्हि कथं शशविषाणतुल्ये तस्मिन्नभिनिवेशस्तेन वा कथं भ्रंशस्स्यात्तत्राह–छायेत ॥ * ॥ **विश्वनाथस्तु**–ननु यदि द्वैतमसदेव कथं तर्हि घटपटादिमयस्य तस्यार्थक्रियाकारित्वं तत्राह–छायेति । एते यथाऽसन्तोपि खल्वर्थकारिणस्तथाऽसदपि द्वैतमर्थक्रियाकारीत्यर्थः । एवमेव देहादयो भावा मिथ्याभूता अपि आमृत्युतो लयपर्यंतमेव भयं संसारदुःखं जीवेभ्यो ददतीत्यर्थः ॥ ५ ॥ न ह्याप्तो वेदोऽसद्वदतीति पुनराक्षिपति–नन्विति । सृष्ट्यादीत्यादिना स्थित्यादिग्रहः । श्रुतयस्तु–"यतो वा इमानि भूतानि जायन्ते" इत्याद्याः । तत्राक्षेपे । अत्र स्फुटमर्थमाह–"यत्सृजति ब्रह्मा यत्त्राति विष्णुर्यश्च हरति रुद्रः यच्च सृज्यते त्रायते ह्रियते च विश्वं तत्सर्वमात्मैवाहमेव" स्वप्ने विश्वस्रष्टृहंतृत्रातॄणां स्वप्नसाक्ष्यात्माव्यतिरेकवत् । अतो मत्सत्तयैव सत्त्वप्रतीतिर्न मदतिरिक्तं किंचिदस्तीति भावः ॥ * ॥ विश्वस्यैकात्मकत्वं मनसि कृत्वा शंकते–नन्विति । निरूपितं स्वतंत्रसत्ताकत्वेनैव वर्णितम् । सिद्धान्ते तु प्रकृतेस्तद्बहिरंगशक्तित्वेन पुरुषस्य तटस्थशक्तित्वेन तदभेदात्मकस्य विश्वस्यापि तद्रूपत्वात्तद्वारात्मन एव सृज्यत्वादिकं द्वारत्वेपि साक्षान्निर्देशः । श्रुतौ श्रूयत एव यथा पूर्वमीमांसायाम्–"पशुना यजेत" "व्रीहिभिर्यजेत" इत्यादौ पश्वादीनां हृदयादिरूपहविर्द्वारैव करणत्वं सिद्धान्तितम् । तथोत्तरमीमांसायामपि तत्तद्वारैव सृष्ट्यादिक्रियायां कर्तृत्वं कर्मत्वं चेत्यर्थः । अत एव **विश्वनाथेनापि** कर्तापि कर्माप्यात्मैव न ततोऽन्यद्वैतमिति भाव इति सिद्धान्तितम् ॥ ६ ॥ यत आत्मैव सर्वस्वरूपस्तस्माद्धेतोः । प्रमातृप्रमाणप्रमेयरूपा वा त्रिविधा । अत्राक्षिपति–नन्विति ।

एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ॥ न निंदति न च स्तौति लोके चरति सूर्यवत् ॥ ८ ॥ प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ॥ आद्यं तवदसज्ज्ञात्वा निःसंगो विचरेदिह ॥९॥ उद्धव उवाच ॥ नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ॥ अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते॥१०॥

ननु कथं निर्मूलं प्रतीयते तत्राह इदमिति ॥ ७ ॥ ज्ञानविज्ञानयोर्नैपुणं निष्ठाम् । सूर्यवत्समो भूत्वा ॥ ८ ॥ एतन्निष्ठाप्राप्त्युपायमाह । प्रत्यक्षेणेति । यदाद्यतवत् द्वैतं तदसदिति ज्ञात्वा निःसंगो विचरेत् । आद्यंतवत्त्वे प्रमाणानि प्रत्यक्षादीनि । तत्र प्रत्यक्षेण घटादि । अनुमानेन सावयवत्वेन दृश्यं पृथिव्यादि । निगमेनाप्रत्यक्षमाकाशादि । आत्मसंविदा स्वानुभवेन सर्वं दृश्यमाद्यंतवदसच्चेति ज्ञात्वा । निःसङ्गस्तदासक्तिशन्यः ॥ ९ ॥ ननु यद्यात्मसंविदा सर्वं दृश्यमसदित्युच्यते तर्ह्यात्मा स्वप्रकाशो देहादिद्वैतं च जडमित्युक्तं स्यात्तथा च संसारप्रतिभासो न घटेतेति चोदयति । नैवेति । अनात्मस्वदृशोर्जडाजडयोः । अत्र हेतुः । द्रष्टृदृश्ययोरिति । नात्मनः संसारः

मायामयत्वमनुमानेन साधयति–विमतं मायामयं गुणमयत्वात्, व्यतिरेक आत्मवदिति ॥ * ॥ आत्मनः परमात्मनः सकाशादन्यो भावः पदार्थो न, कीदृशादात्मनः–अन्यस्मात् सृज्यादिवस्तुव्यतिरिक्तात् । त्रिविधाध्यात्मिकादिरूपा भातिः प्रतीतिर्निर्मूलेति । यदि परमात्मैव विश्वमभूत्तदा परमात्मनस्त्रैविध्याभावात्कुत आयातमेतत्त्रैविध्यमिति निर्मूलत्वम् ॥ * ॥ संदर्भस्तु–तस्माद्विश्वस्मिन्यः कश्चिदपि भावः स परमात्मनो नान्यो निरूपितः कारणं विना कार्यस्यासिद्धत्वादिति भावः । तर्हि तस्यैव विकारित्वं स्यादत आह–अन्यस्मादिति । तथा चाचिन्त्यशक्त्या निर्विकारत्वेन स्वत एव तत्तद्भावात् तस्यान्यत्वमिति भावः । या त्वाध्यात्मिकादिरूपा प्रतीतिस्ततोऽन्यत्वेनाविवेकिभिर्निरूपिता साप्यात्मनि शुद्धे निर्मूलैव । वस्तुतस्तत्संबन्धाभावादिति भावः । अयं भावः–इदमाध्यात्मिकादिरूपं भगवतो बहिरंगशक्त्या माययैव, वस्तुतस्तत्सम्बन्धाभावेऽपि तत्संबद्धत्वेन प्रत्यायिता " सेयं भगवतो माया यन्न येन विरुध्यते " इति तृतीये श्रीमैत्रेयोक्तेः । मायया दुस्तर्क्यशक्त्येति परिणामवादिनः । माययाऽज्ञानेनेति विवर्तवादिनः ॥ ७ ॥ ज्ञानं शास्त्रोत्थं विज्ञानमनुभवस्तयोः पदार्थविवेचनवाक्यार्थतदभेदकौशलं विद्वान् निंद्योपाधीनां मिथ्यात्वादात्मनश्चैक्यान्न निन्दति न च स्तौति किन्तु सूर्यवदसंगः, यथा सूर्यः शुच्यशुचिस्थानं प्रकाशयञ्छुचिरशुचिश्च न भवति तद्वदित्यर्थः ॥ * ॥ फलितमाह–अत एतन्मदुदितं मत्प्रोक्तं ज्ञानविज्ञानयोर्नैपुण्यं जानन्सूर्यवत्समश्चरति ॥ ८ ॥ एतन्निष्ठा ज्ञानविज्ञाननिष्ठा । पृथिव्यादि असत् सावयवत्वात्, घटादिवत् । निगमेन वेदेन । " नेह नानास्ति किञ्चन " इति, " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादिश्रुतेराकाशादीनां जन्यत्वेनानित्यत्वाद्यज्जन्यं तद्विनाशीति व्याप्तेः । स्वानुभवेनापि सर्वमसद्दृश्यत एवेति ॥ * ॥ आद्यंतवज्जन्मनाशवत् । असदिति–स्वतंत्रसत्त्वानभ्युपगमे तु मिथ्याभूतमेवेति ज्ञात्वा, सावयवत्वेनेति–पृथिव्यादि आद्यंतवत्सावयवत्वात्, घटादिवत्, यन्नैवं तन्नैवं यथात्मेति । निगमेन " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादिवेदेन ॥ ९ ॥ अत्र संसारासंभवमाक्षिपति–नन्विति । भवत्विति चेदाह–तथा चेति । संसारस्य प्रतिभासः प्रतीतिः । अत्र जडाजडत्वे । द्वयोर्देहात्मनोरपि इष्टापत्तिमाह–मा भूदिति । इष्टापत्तिं परिहरति–उपलभ्यत इति ॥ * ॥ नन्वाद्यन्तयोरसत्त्वेऽपि मध्ये यावत्सत्त्वं प्रतीयते तावत्कस्य संसारस्स्यात् द्रष्टुर्दृश्यस्य वेत्याह–नैवेति । द्रष्टृदृश्ययोर्द्रष्टा जीवो दृश्यो देहस्तयोर्द्वयोरपि संसृतिर्न संभवेत्, त्कुतः–अनात्मस्वदृशोः, देहो ह्यनात्मा जडस्तस्य संसारदुःखानुभवस्यासंभवात् , जीवो हि स्वदृक् स्वतःसिद्धज्ञानः तस्य ज्ञानलोपासं

आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ॥ अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ॥ ११ ॥ श्रीभगवानुवाच ॥ यावद्देहेंद्रियप्राणै रात्मनः सन्निकर्षणम् ॥ संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १२ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ १३ ॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ १४ ॥

स्वप्रकाशत्वात् । नापि दृश्यस्य जडत्वादित्यर्थः । तर्हि मा भूद्द्वयोरपि तत्राह । उपलभ्यत इति ॥ १० ॥ एतत्प्रपंचयति । अव्ययत्वादिपंचविशेषणैर्नाशादिरागादिपुण्यापुण्याज्ञानपरिच्छेदानामसंभवं दर्शयति । हेतुहेतुमत्त्वं तु यथेष्टम् । अचिज्जडः । अयं भावः । यथैवाग्निदारुणोर्भेदेनानुपलंभेऽपि दारु प्रकाश्यमेवाग्निश्च प्रकाशकः तथा देहात्मनोरपीति न संसृतिस्तयोरन्यतरस्यापि घटत इति ॥ ११ ॥ सत्यं तथाप्युभयोरेवमविवेक एव संसारालंबनमित्याह पंचभिः । यावदिति । संनिकर्षणं संबंधः । नन्वसंगस्य कुतः संबंधस्तत्राह । अविवेकिनः अज्ञानकृत इत्यर्थः । ननु स्वप्रकाशस्य कथमज्ञानकृतः संसारस्तत्राह । अपार्थोऽपि मिथ्याभूतोपि । केवलं फलवान् फलं स्फूर्तिर्न तु सत्त्वतोऽस्तीत्यर्थः ॥ १२ ॥ नन्वसतो देहादेः कुतः संसारस्फूर्तिहेतुत्वमपि तत्राह । अर्थे हीति । अस्यात्मनः ॥ १३ ॥ ननु कथंचिज्जानतो विषयस्फू

भवात् । भीऽस्तु द्वयोरपि तत्राह—उपलभ्यतेऽनुभवसिद्धस्यापलापायोग्यत्वादित्यर्थः ॥ १० ॥ एतत् संसृत्यसंभवम् । यथेष्टम् अव्ययत्वेऽगुणत्वमगुणत्वेऽव्ययत्वमित्येवं स्वेच्छया । अत्राशयमाह—अयं भाव इति । तयोर्देहात्मनोः । अन्यतरस्य द्वयोरेकस्यापि ॥ * ॥ एतत्संसारघटनम् । पञ्चविशेषणैरिति अव्ययत्वान्नाशाद्यसंभवः । अगुणत्वाद्रागाद्यसंभवः । शुद्धत्वात्पुण्यपापासंभवः । स्वयंज्योतिष्ट्वादज्ञानासंभवः । अनावृतो न केनाप्यावृतः वस्तुतो न बद्ध इति बंधाभावः । अपरिच्छिन्न इत्यर्थः । देहः प्रकाश्य एव जीवात्मा प्रकाशकः । किन्तु—स्वपरमात्मप्रकाशित एव प्रकाशक इति ॥ ११ ॥ अंगीकृत्य परिहरति—सत्यमिति । यद्यपि संसृतेराश्रयो नोपलभ्यते तथापीति । उभयोर्देहात्मनोः । एवं चिज्जडत्वेन अविवेकोऽज्ञानमेव । संबंधमाक्षिपति—नन्विति । इत्यर्थ इति—अज्ञानिन एव संसारः "ऋते ज्ञानान्न मुक्तिः" इति श्रुतेरिति भावः । क्वचित्तु 'अविवेकितः' इति पाठोस्ति । तत्राविवेकेनेतः प्राप्त इति शकन्ध्वादित्वात्पररूपेण रूपसिद्धिः । पुनराशंकते—नन्विति । इत्यर्थ इति—स्वप्नवदतात्त्विक एव प्रतीयतेऽविद्ययेति भावः । सुषुप्तौ देहेन्द्रियादिसंबन्धासत्त्वेपि पुनः कथं संसार इत्याशंका तु संसारबीजाज्ञानस्य तत्र संभवात्परिहार्या ॥ * ॥ सत्यमित्यर्द्धांगीकारे । तथापि द्वयोरन्यतरस्य संसाराघटनेपि द्वयोर्देहात्मनोरज्ञानकृत इति अज्ञानम् "भयं द्वितीयाभिनिवेशतः स्यात्" इति न्यायेन भगवद्बहिर्मुखत्वलब्धमायाकृत आत्मज्ञानलोपो देहात्मबुद्धिश्च तत्कृत इत्यर्थः । अविवेकोजातोत्रेत्यविवेकितः ॥ १२ ॥ सतः कारणत्वं दृष्टचरं न त्वसतःइत्याशंकते—नन्विति । श्लोकोऽयं व्याख्यातचरः ॥ * ॥ ननु देहादीनामसत्त्वात्कुतस्तैः सम्बन्धो यैः संसारः स्यात्तत्राह—अर्थे वस्तुनि अविद्यमानेऽसत्यपि संसृतिः स्यादेव, यथा स्वप्ने मिथ्याभूतेपि विषयध्यायिनो जनस्यानर्थागमः व्याघ्रसर्पादिभयानुभवः ॥ १३ ॥ पुनराक्षिपति—

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्य दृश्यंते जन्म मृत्युश्च नात्मनः ॥ १९ ॥ देहेंद्रियप्राणमनोभिमानो जीवोंतरात्मा गुणकर्म मूर्तिः ॥ सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतंत्रः ॥ ॥ १६ ॥

र्तिर्जीवन्मुक्तस्यापि दुर्वारेत्यनिर्मोक्षप्रसंगः स्यात्तत्राह । यथा हीति । प्रस्वापः स्वप्नः बहूननर्थान् बिभर्ति पुष्णातीति तथा ॥ १४ ॥ अहंकारलक्षणो देहादिसंनिकर्ष एव संसारालंबनमित्यन्वयव्यतिरेकाभ्यां दर्शयति । शोकेति । सुषुप्त्यादौ तेषामदर्शनादहं सुखीतिवच्चैतन्यं सुखीतिप्रतीत्यभावाच्च दृश्यत्वाच्च सुखादीनां कृशत्वादिवद्दृष्ट्रधर्मत्वानुपपत्तेरिति भावः । उक्तं च "सुप्तेऽहमि न दृश्यंते सुखदोषप्रवृत्तयः ॥ अतस्तस्यैव संसारो न मे संसृतिसाक्षिणः" इति ॥ १५ ॥ ननु यद्यहंकारस्य संसारस्तर्हि मुक्तिरपि तस्यैवेति । मुक्तावहंकारावशेषः प्रसज्जेत तत्राह । देहेति । देहादिष्वभिमानो यस्य सः । आत्मैव तेषामंतर्हितो जीवः अत एव गुणकर्ममयी मूर्तिर्यस्य सः ।

नन्विति । कथंचिज्जानतः रागाभावेन जानतः । अनर्थान् स्वप्नव्याघ्रभयकंपादीन् । स एव प्रस्वापः योऽप्रतिबुद्धस्येति सम्बन्धः । मोहाय क्लेशाय ॥ * ॥ प्रतिबुद्धस्य प्राप्तजागरस्य ॥ १४ ॥ संसारालंबनं स्फुटयति—अहंकारेत्यादि । अहंकारसत्त्वे शोकादिसत्त्वमन्वयः, सुषुप्त्यादावहंकाराभावे शोकादीनामभावो व्यतिरेकः । अहं सुखीति प्रतीतेरहंकारेणैव सुखादिसंबन्धः । चैतन्यं सुखीति प्रतीतेरभावान्नात्मनेति । सुखादीनां मानसप्रत्यक्षत्वेन दृश्यत्वात्कृशत्वादिवन्नात्मधर्मत्वम् । इति भाव इति—यथा देहधर्माः कृशत्वादयो नात्मधर्मास्तथा सुखादयोप्यहंकारधर्मा नात्मधर्मा इत्याशयः ॥ * ॥ वस्तुविवेके सत्यहंकारस्यैवैते धर्मा न त्वात्मन इत्याह—अहंकारोऽत्र देहद्वयाभिमानः यावत्खल्वसौ स्फुरति तावदेव शोकादेर्दर्शनात्तस्यैव धर्मा न तु शुद्धस्यैवं जन्म मृत्युश्चेत्यर्थः ॥ * ॥ **विश्वनाथस्तु**—यद्यप्यहंकारस्यैव शोकादयस्तदपि तस्य जडत्वादेव तत्तदनुभव इति नास्ति तस्य संसार इति भावः । अहंकारसत्त्वे संसारसत्त्वमन्वयस्तदभावे तदभावो व्यतिरेकस्ताभ्यां नात्मन इत्यस्याभिप्रायं व्यंजयति—सुषुप्त्यादाविति । तेषां शोकादीनां दृश्यत्वाच्च प्रत्यक्षादिभिर्ज्ञातत्वाच्च यथा कृशत्वादि दृश्यते तस्माद्दृश्यात्मधर्मत्वं न तेषामुपपद्यत इत्यर्थः ॥ १९ ॥ प्रतिबध्याशंकते—नन्विति । अहंकारावशेषाभावे स्वरूपहानिर्मोक्षपदार्थः स्यादित्यर्थः । तेषां देहादीनामन्तर्हितस्तैराच्छादितः । अत एव देहाद्यंतर्हितत्वादेव । गुणाः कर्माणि च प्रधानं यस्यां सा गुणकर्ममयी सा मूर्तिर्यस्येति गुणकर्मारब्धमूर्तित्वाज्जीवस्य तत्त्यागेऽमूर्तब्रह्मतां प्राप्नोतीत्यर्थः । एवं च गुणकर्ममूर्तित्वे च । गुणकर्मकार्यभूतैः सूक्ष्मोपाधिभिः क्रियाशक्त्याद्युपाधिभिः । इवेन बहुप्रकारो द्योतितः । कालयति चालयति सर्वमिति कालः परमेश्वरः । यतः साहंकारो जीव एव संसारे धावति अतो हेतोरयमहंकारावशेषप्रसक्तिरूपो दोषो न भवति । इति भाव इति—अविद्याजन्याहंकारनिवृत्तेरेव मोक्षत्वं तदवशेषे मोक्ष एव न संभवतीत्याशयः । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि" इत्याद्युक्तेरीश्वराधीनत्वमेव जीवस्येत्युक्तं कालतंत्र इति ॥ * ॥ ननु यदि शोकहर्षादयोऽहंकारस्यैव धर्मा न त्वात्मनस्तर्हि कथमात्मा तान्धर्मान्स्वीकृत्य संसारदुःखमनुभवति, न हि कश्चित्स्वदुःखार्थं परधर्ममुपादत्त इत्यत आह—देहेति । अभिमानोऽहंकार एव जीवो जीवोपाधिः गुणकर्मभ्यां मूर्तिर्यस्य तथाभूतः सन्संसारे निमित्ते आधावति जीवात्मानं स्वधर्मान्ग्राहयितुं प्राप्तो भवति । कालयतीति काल ईश्वरस्तदधीनः कीदृशः देहादिशब्दैरुरुधैव ज्ञानशास्त्रेण गीतः अंतरात्मा बुद्धिः तेन बलादेवाहंकारलक्षणयाऽविद्यया निबध्य जीवः संसारदुःखे पात्यत इति भावः ॥ * ॥ **दीपिका**—तस्यैवाहंकारस्यैव । स देहाभिमानवानात्मैव । तेषां देहादीनामंतः स्थित्वा, जीव इत्युक्त्या स्वरूपभूतास्मदर्थत्वं जीवस्य व्यंजितम् । अत एवाभिमन्तुर्जीवत्वादेव । अतः अहंकारादीनां कल्पितत्वादेव । अयं प्राकृताहंकारावशेषलक्षणः । तथा

अमूलमेतद्बहुरूपरूपितं मनो वचः प्राणशरीरकर्म ॥ ज्ञानासिनोपासनया शितेनच्छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १७ ॥ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यंतयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ १८ ॥ यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ॥ तदेव मध्ये व्यवहार्यमाणं नानाऽपदेशैरहमस्य तद्वत् ॥ १९ ॥

एवं च सूक्ष्मोपाधिभिर्बहुधेव सूत्रादिशब्दैर्गीतः संसारे परमेश्वराधीनः सर्वतो धावत्यतो नायं दोष इति भावः ॥ १६ ॥ तदेवमहंकारकृतं बंधमुपपाद्येदानीं ज्ञानेन तन्निवृत्तौ मुक्तिरित्याह । अमूलमिति । वस्तुतो मूलशून्यमज्ञानतस्तु बहुभी रूपैर्देवादिशरीरै रूपितं प्रकाशितमैंद्रजालिकतुल्यमिति वा । किं तत्तदाह । मन इति । मन आदीनां द्वंद्वः । यद्वा मनआदिषु क्रियत इति कर्म अहंकरणं गुरोरुपासनया निशितेन तीक्ष्णेन ज्ञानखड्गेन छित्त्वा ॥ १७ ॥ तदेव ज्ञानं स्वरूपसाधनफलैर्निरूपयति । ज्ञानमिति । विवेको ज्ञानम् । साधनान्याह । निगमो वेदः । तपः स्वधर्मः । प्रत्यक्षं स्वानुभवः । ऐतिह्यमुपदेशः । अनुमानं तर्कः । फलमाह । आद्यंतयोर्यदस्य जगतो मध्येऽपि तदेवं केवलं न तु जगदिति । किं तत्कालः कलयति प्रकाशयति यस्तथा हेतुः कारणं च यत् तदेव । एतदुक्तं भवति । यदस्य विश्वस्य उपादानं कारणं निमित्तं प्रकाशकं च ब्रह्म तदात्मकमेवैतन्न ततः पृथगित्येवं निश्चयफलो निगमादिसाधनैर्जायते यो विवेकस्तज्ज्ञानमिति ॥ १८ ॥ तत्र नानाभेदव्यवहारालंबनस्यापि विश्वस्य कारणमात्रात्मकत्वं सदृष्टांतमाह । यथेति । स्वकृतं सुष्ठु कुंडलादिरूपेणाविरचितं यद्धिरण्यम् । कीदृशम् । हिरण्मयस्य कुंडलादेरुत्पत्तेः पुरस्तान्नाशाच्च पश्चा

च–जीवस्यैव ब्रह्मत्वेन मुक्तौ स्थितिर्नाहंकारादीनामित्यर्थः ॥ १६ ॥ तदेवाह–तदेवमिति । तन्निवृत्तावहंकारनिवृत्तौ । एतदहंकरणम् । अमूलस्य त्वेकरूपताप्यसंभवा कुतो बहुरूपतेति चेदाह–ऐन्द्रजालिकतुल्यमिति वेति । वस्तुत ऐन्द्रजालिकं वस्तूनामसत्त्वेपि यथा प्रातीतिकमुखतोनेकाल्पशस्त्रनिष्क्रातिस्तद्वदाहंकारिकवस्तुजातमपीति तत्पृच्छति–किं तदिति । तद्बहुरूपत्वमाह–मन इति । आहंकारिकत्वं मनआदीनां व्यक्तमेव । इहैतच्छब्देनाहंकारग्रहो न संभवति पूर्वं जीवस्य प्रक्रांतत्वादत आह–यद्वेति । मनआदिषु तत्करणं त्वहं संकल्पयामि वच्मीत्यादिप्रतीतेः । गां भूमिम् । सप्तम्यर्थे द्वितीया । विचरति विचरेत् । अतृष्णोऽसक्तः ॥ * ॥ उपपाद्य अन्वयव्यतिरेकाभ्यां संसाद्य तन्निवृत्तौ अहकारनाशे पूर्वार्थेऽहंकारविषयाणां मनआदीनां नाशेन तन्नाशोप्याक्षिप्त एव न त्वभिधालभ्य इत्यरुचेः–यद्वेति ॥ १७ ॥ येन ज्ञानेनाहंकारच्छेदस्तदेवेत्यर्थः । तर्कस्य स्वप्नप्रपंचस्य तत्साक्षिवन्मृदादेर्घटवदित्यनुमानं मननरूपमेत्र । विचारपूर्वकोपासनमेव निदिध्यासनमिति न पृथगुपन्यासः । निर्गलितार्थमाह–एतदुक्तमिति । एतज्जगत् । ततो ब्रह्मणः ॥ * ॥ तत्र पञ्चभिर्ज्ञानमेवोपदिशन् परमात्मज्ञानं तावत्साक्षादाह–ज्ञानमिति द्वाभ्याम् । यदेव परमात्मलक्षणं वस्तु ज्ञानादिरूपं कालः हेतुरुपादानञ्च तदेवाद्यन्तयोः । किन्तु केवलं निजांशिनि श्रीभगवति प्रविशाति तिरोहितसर्वशक्तिकं भवतीत्यर्थः । तत्र ज्ञानं विवेकस्य कारणम् । विवेको विचारः । कालो निमित्तहेतुरुपादानं च पुरुष इति ज्ञेयम् ॥ * ॥ **दीपिकायाम्**–तर्कः जीवो ब्रह्माभिन्नस्तदंशत्वात्, यो यदंशः स तदाभिन्नः, यथा वह्न्यंशो विस्फुलिंगो वह्न्यभिन्न इति विशेषणद्वयाभिप्रायं स्फोटयति–एतदुक्तमिति । एतत्कार्यप्रकाशात्मकं जगत्तदात्मकमेव कारणप्रकाशात्मकमेव । तत्र जगद्ब्रह्मणोः प्रकाश्यप्रकाशकत्वेनाभेदे "यस्य भासा सर्वमिदं विभाति" "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥" इत्यादिश्रुतिस्मृतयः प्रमाणत्वेन बोध्याः । तथा च–तार्किकाद्यभिमतत्वं तच्छक्त्यात्मकमेव जगन्मिथ्या न तु तदात्मकमपीति सिद्धम् श्रुतौ भासेति तृतीया प्रकृत्यादिभ्य इतिवत् ॥१८॥ तत्र कार्यस्य कारणरूपत्वे । न तु मत्तः पृथगिति–" नारायण एवेद ँ सर्वम्" "ब्रह्मैवेद ँ सर्वम्" "सर्वं खल्विदं ब्रह्म" "तज्जलान्" इत्या

विज्ञानमेतत्त्रियवस्थमंग गुणत्रयं कारणकार्यकर्तृ ॥ समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥ २० ॥ न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ॥ भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥ २१ ॥

न्मध्ये च कटकं कुंडलमित्यादिनानाव्यपदेशैर्व्यवहारं प्राप्यमाणमपि तदेव यथा तद्वदस्य विश्वस्य कारणभूतोहमेव नानाव्यवहारालंबनं न तु मत्तः पृथग्विश्वमिति ॥ ॥ १९ ॥ तदेवं कार्यस्य कारणमात्रात्मकतामुक्त्वा प्रकाशस्य प्रकाशकात्मकतामाह । विज्ञानमिति । त्रियवस्थम् । यकारस्य पृथक् पाठश्छंदोनुरोधेन । जाग्रदादि त्र्यवस्थं यद्विज्ञानं मनस्तदवस्थाकारणरूपं च यद्गुणत्रयम् । यच्च कारणकार्यकर्तृ । कारणमध्यात्मं कार्यमधिभूतं कर्तृ अधिदैवम् । एवं गुणत्रयकार्यभूतं त्रिविधं जगत् । एतद्येन तुर्येण सामान्यज्ञानमात्रेण समन्वयेन भवति । येनानुगतं प्रकाशत इत्यर्थः । “तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति” इति । तथा “चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः” इत्यादिश्रुतेश्च । ननु विशेषविज्ञानव्यतिरेकेण न तुर्यं नामोपलभामहे तत्राह । व्यतिरेकतश्च समाध्यादौ यदस्ति तदेव सत्यमिति ॥ २० ॥ एवं कालत्रयेऽप्यव्यभिचारिणः सत्यत्वमुक्तं व्यभिचारिणस्त्वसत्यतामाह । न यदिति । मध्ये च तत्पृथङ् नास्ति । किंतु व्यपदेशमात्रम् । कुतः । यतो यद्यत्परेणान्येन भूतं जातं प्रसिद्धं प्रकाशितं च तत्तदेव कारणप्रकाशकतावन्मात्रं स्यान्न पृथगिति मे मनीषा बुद्धिः । “वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ सर्वं खल्विदं ब्रह्म” इत्यादिश्रुतेः । कारणप्रकाशकव्यतिरेकेण कार्यस्य प्रकाश्यस्य चानुपलंभादिति भावः ॥ २१ ॥

दिश्रुतेः ॥ * ॥ अत्र **सन्दर्भः**—यथेति—अत एव स एव परमार्थतः सर्वावयवीति भावः । किञ्च—जीवचैतन्यस्य तत्रतत्रान्वयात्सुषुप्तौ तद्व्यतिरेकोऽपि स्वतोऽवस्थानात्तस्मिन्व्यष्ट्युपाधीनां रज्जौ सर्पावयवानामिवारोपितत्वमेव तस्य तु रज्जुवत्सत्यत्वं सिध्यति ॥ १९ ॥ इत्यर्थ इति—समन्वयो व्याप्तिः चिद्व्याप्तिं विना जडप्रतीतेरभावादिति भावः । अत्र प्रमाणमाह—तमेवेति । श्रुतयो व्याख्यातचराः । अत्राक्षिपति—नन्विति । विशेषज्ञानमध्यात्मादिज्ञानं तद्विना सामान्यज्ञानरूपं तुरीयं नोपलभ्यत इत्यत आह—समाध्यादौ विशेषज्ञानाभावेऽपि सामान्यज्ञानमस्ति एतावन्तं कालमहं समाभूवमित्युत्थितस्य स्मृतेरन्यथानुपपत्तेः । आदिना सौषुप्तग्रहः ॥ ॥ * ॥ परमचैतन्यसमष्ट्युपाधावप्येवं ज्ञेयमित्याह द्वाभ्याम् । “यो विज्ञाने तिष्ठन्” इत्यादिश्रुतेः विज्ञानजीवचैतन्यमेव गुणत्रयोपाधिकं सत् त्र्यवस्थं भवति, तदेवाह—कारणकार्यकर्त्रीति, तत्तद्रूपायमाणमित्यर्थः । किन्तु समन्वयेनेत्याह, तत्र त्र्यवस्थमिति वक्तव्ये त्रियवस्थमिति व्याडिगालवयोर्मते ‘नैके यणा व्यवधीयन्ते’ इति शब्दस्मृतेः । गुणानां त्रयं यस्मिन्निति बहुव्रीहिः ॥ * ॥ **दीपिका** तु—सामान्यज्ञानमात्रेण निरुपाधिप्रकाशमात्रेण कर्त्रा यः समन्वयः सम्यग्व्याप्तिस्तेन विशिष्टं भवति । तथा च—येन परमात्मनानुगतं व्याप्तं सद्विश्वं प्रकाशत इति फलितम् । तमेव परमात्मानमेव भांतं स्वतः प्रकाशमानमनुलक्ष्यीकृत्य सर्वं विश्वं भाति प्रकाशत इति स्वतंत्रसत्त्वैव निषिद्धा, चक्षुषश्चक्षुः रूपादिप्रकाशनशक्तः परमात्मन एव न चक्षुरादीनामिहापि सैव निषिद्धा । समाध्यादावित्यादिना वैकुंठादिग्रहस्तथा च तदुपलंभे विद्वदनुभव एव दृढतरं मानमिति सूचितम् ॥२०॥ एवं कालत्रये जाग्रदादिकालत्रये । कारणप्रकाशकं च तावन्मात्रं, चेति कारणप्रकाशकतावन्मात्रं कारणरूपं प्रकाशकरूपमित्यर्थः । मे परमसर्वज्ञस्य मनीषा।इति इत्थम्।अतस्तद्विरुद्धापादकं शास्त्रमप्रमाणमिति भावः । अत्र प्रमाणमाह—वाचारंभणमिति । इति भाव इति—तंतुतो भेदेन पटादर्शनात्तंतुरूपत्वं पटस्येव तमसि पदार्थानुपलब्धेः प्रकाशकरूपत्वं पदार्थस्येत्याशयः ॥ * ॥ **दीपिका**—अव्यभिचारिणः परमात्मनः । व्यभिचारिणः पृथक्सत्तया वैशेषिकादिभिरभ्युपेतया । विश्वस्य तु मिथ्यात्वं विकारो घटशरावाद्यवस्था वाचा व्यवहारेणारभ्यते रलयोरविशेषात् स्पृश्यते संबध्यत, इति यावत् । तन्नामधेयं नाममात्रं सर्वं मृत्तिकालक्षणमे

अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः ॥ ब्रह्म स्वयं ज्योतिरतो विभाति ब्रह्मेंद्रियार्थात्मविकारचित्रम् ॥ २२ ॥ एवं स्फुटं ब्रह्मविवेकहेतुभिः परापवादेन विशारदेन ॥ छित्त्वाऽऽत्मसंदेहमुपारमेत स्वानंदतुष्टोऽखिलकामुकेभ्यः ॥ २३ ॥ नात्मा वपुः पार्थिवमिंद्रियाणि देवा ह्यसुर्वायुर्जलं हुताशः ॥ मनोऽन्नमात्रं धिषणा च सत्त्वमहंकृतिः खं क्षितिरर्थसाम्यम् ॥ २४ ॥

एवं सामान्यतः कार्यप्रकाश्ययोः कारणप्रकाशकाभ्यामभेदमुपपाद्य प्रस्तुते तदुभयविवेकपूर्वकं प्रपंचस्य ब्रह्माभेदमाह । अविद्यमान इति । योऽयं वैकारिको विकारसमूहः स एव प्रागविद्यमानो राजससर्गः । रजोद्वारेण ब्रह्मकार्यभूत इत्यर्थः । अवभासतेऽपि ब्रह्म प्रकाश्यश्चेत्यर्थः । ब्रह्म तु स्वयं स्वतःसिद्धं न तु कार्यमित्यर्थः । ज्योतिश्च प्रकाशकमित्यर्थः। अतः कारणादिंद्रियाणि च अर्थास्तन्मात्राणि चात्मा मनश्च । देवानामप्युपलक्षणम् । विकाराः पंचभूतानि एवं चित्रं विचित्रः प्रपंचो ब्रह्मैव भातीति ॥ २२॥ उपसंहरति । एवं निगमतपःप्रत्यक्षैतिह्यानुमानैः स्फुटं यथा भवति तथा ब्रह्मविवेकहेतुभिस्तथा परस्य देहादेरपवादेनात्मत्वनिरासेन च । कीदृशेन । विशारदेन निपुणेन । गुरुणा निमित्तभूतेनेति वा । आत्मविषयं संदेहं छित्त्वा स्वानंदतुष्टः सन्नखिलेभ्यः कामुकेभ्य इंद्रियादिभ्य उपारमेत निःसंगो भवेत् ॥ २३ ॥ परापवादं प्रपंचयति ।

कमेव द्रव्यं न तु पृथक्सत्ताकं किञ्चिदप्यस्तीत्येवं सत्यम् ' आलंभः स्पर्शहिंसयोः ' इति निघंटुकारः । वाचेति—कर्मणि ल्युट् " सर्वं खल्विदं ब्रह्म " इति बाधितसामानाधिकरण्यम् । वैष्णवमते सर्वस्य तच्छक्तित्वात्तच्छरीरत्वात्तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वाच्च तच्छब्दानां तावत्पर्यन्तधावनशीलत्वेन मुख्यमेव सामानाधिकरण्यमन्यथाध्यस्तज्ञानं नाधिष्ठानज्ञानेनेति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा परिणामदृष्टान्तश्च न संगच्छेतेति ज्ञेयम् । भावार्थस्तु सर्वसिद्धान्तानुयायी पृथक्सत्तयोरुभयैरनभ्युपेतत्वात् ॥ २१ ॥ प्रकृते प्रस्तुते । तदुभयविवेकपूर्वकं कारणप्रकाशकविवेचनपुरःसरम् । ब्रह्मणाऽभेदो ब्रह्माभेदस्तम् । इत्यर्थ इति—अविकृतस्य ब्रह्मणो विवर्ताधिष्ठानत्वे नायस्कान्तवत्सान्निधिमात्रेण च कारणत्वमिति भावः । इत्यर्थ इति—जडे स्वतः प्रकाशासंभवाद्ब्रह्मणैव प्रकाश्यत इति भावः । इत्यर्थ इति—स्वतः सिद्धस्य कार्यत्वायोगादिति भावः । इत्यर्थ इति—ज्योतिषः प्रकाशकत्वस्वभावान्न तु प्रकाश्यत्वं संभवतीति भावः । यतो ब्रह्मैव कारणं प्रकाशकश्चातो हेतोः । इन्द्रियादिरूपेण ।चित्रं बहुविधम् ॥ * ॥ **दीपिका**—सामान्यतः प्रकृतेऽप्रकृते चेत्यर्थः । तत्र लोके कार्यस्य घटादेः कारणेन मृदा, तथा प्रकाश्यस्य प्रभादेः प्रकाशकेन दीपादिनाऽभेदः प्रसिद्ध एव । प्रस्तुते प्रकृते विश्वब्रह्मणोः कार्यकारणादिभावे । तदुभयेति—कार्यकारणप्रकाश्यप्रकाशकोभयपृथक्त्वज्ञानपूर्वकम् । एतच्छब्दबलादयमित्यध्याहृतं यच्छब्दबलात्स इत्यपि, किन्त्वध्याहृततच्छब्दसान्निध्यादेतच्छब्दस्य प्रसिद्धार्थत्वमित्यालंकारिकाः । विकारसमूहो महदादिकार्यप्रपञ्चः । प्रागविद्यमान इत्यादिपदद्वयस्य मेलयित्वा व्याख्यानादित्यर्थ इत्युक्तम् । एवं परत्रापिशब्दस्य दूरान्वयाद्ब्रह्मपदाध्याहाराच्च तथोक्तम् । एवं प्रपञ्चस्य कार्यत्वप्रकाश्यत्वेऽभिधाय ब्रह्मणः कारणत्वप्रकाशकत्वे योजयितुं तुशब्दाध्याहारः भिन्नोपक्रमत्वात् न तु कार्यमिति, किंतु कारणमित्यर्थः । अतः विश्वब्रह्मणोः कार्यत्वप्रकाश्यत्वकारणत्वप्रकाशकत्वाद्धेतोः । इन्द्रियादिविकारपर्यन्ताः पदार्था एव चित्रं नानाविधं विश्वं स्वाभाविकाचिन्त्यशक्त्या ब्रह्मैव भाति उपाधिकल्पने मानाभावात् । अद्वयवादिनां मते तु बाधितसामानाधिकरण्यमेव । टीकाकृतां व्याख्यानं तु यथामूलं सर्वोन्मुखं यथारुचि ग्राह्यमिति ताटस्थ्येन सुधीभिर्विभाव्यम ॥ * ॥ **संदर्भस्तु**—अतः शुद्धे ब्रह्मणि अविद्यमान एव प्रपञ्चः । तत्कारणस्य शक्तिशबलतयाभिप्रेते तु विद्यत एव तद्वैचित्रीत्याह—अविद्यमान इति । अस्यैवार्थमाह—ब्रह्मप्रकाश्यश्चेत्यर्थ इति टीकायाम ॥ २२ ॥ एवमुक्तरीत्या । ब्रह्मणो विवेको देहादिभ्यो भिन्नत्वेन ज्ञानम् । तद्धेतुभिर्निगमादिभिस्तथैव परापवादादिभिः । निपुणेन स्थिरेण । ' निपुणः स्थिरविज्ञयोः ' इति । गुरुं विना ज्ञानस्थिरत्वासंभवमालोच्याह—यद्वेति । विशिष्टा शारदा बुद्धिर्यस्य तेन । यद्वा—विवेकहेतुभिर्ब्रह्म स्फुटं भवतीति योज्यम् ॥ * ॥ निगमादयः पूर्वपद्यस्था अत्र विशेष्यत्वेनाहृताः मूले तदभावात् । ' अयमुदयति मुद्राभंजनः पद्मिनीनाम' इतिवत् ॥ २३ ॥ इन्द्रियादीनामन्नोपष्टम्भ्यत्वं स्फुटमेव, तदनशने तदाकुलत्वदर्शनादिति । योगिनामनशनेप्यनाकुलतादर्शनादाह—यद्वेति

समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ॥ विक्षिप्यमाणैरुत किन्नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥२५॥ यथा नभो वाय्वनलां बुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते ॥ तथाऽक्षरं सत्त्वरजस्तमोमलैरहंमतेः संसृतिहेतुभिः परम् ॥ २६ ॥ तथापि संगः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ॥ मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनःकषायः ॥ २७ ॥ यथाऽऽमयोऽसाधु चिकित्सितो नृणां पुनःपुनः संतुदति प्ररोहन् ॥ एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसंगम् ॥ २८ ॥

नेति । वपुरात्मा न भवति पार्थिवत्वाद्घटवत् । तथा इंद्रियाणि तदधिष्ठातारो वा देवा असुः प्राणो धिषणा बुद्धिः सत्त्वं चित्तमहंकृतिरित्येते आत्मा न भवंति । कुतः । अन्नमात्रम् । अन्नोपष्टभ्यत्वाच्छरीरवत् । वायुर्जलं च हुताशस्तेजः खं क्षितिरिति पंचभूतानि । अर्थाः शब्दादयः साम्यं प्रकृतिर्नात्मा जडत्वात् घटवदिति । यद्वा हिशब्दे नानुमानांतराणि सूचितानि । तद्यथा इंद्रियाण्यात्मा न भवंति । करणत्वाद्वास्यादिवत् । देवाश्च वैकारिकत्वान्मनोवत् । प्राणश्च वायुत्वाद्बाह्यवायुवदित्यादि ॥ २४ ॥ एवं विवेकज्ञानवतो मुक्तस्य नेंद्रियादिकृतगुणदोषसंबंध इत्याह । समाहितैरिति । मत्सुविविक्तधाम्नः मम सुष्ठु विविक्तं धाम स्वरूपं येन तस्य प्रकाशकस्य प्रकाश्यगुणदोषा न भवंतीति रविदृष्टांतेनोक्तम्॥ २५॥ असंगब्रह्मत्वेनावस्थितस्य न केऽपि गुणदोषा इत्याकाशदृष्टांतेनाप्याह । यथेति । वाय्वादीनां शोषणदहनक्लेदनरजोधूसरत्वादिभिर्गतागतैरागमापायिभिर्ऋतुगुणैः शीतोष्णादिभिर्वा; अहंमतेरहंकारात्परमक्षरं संसृतिहेतुभिर्न युज्यते। यद्वा अहंकारस्य संसृतिहेतुभिरिति॥ २६॥ मुक्तवदसम्यग्ज्ञानी न यथेष्टमाचरेदित्याह द्वाभ्याम् । तथाऽपीति । गुणेषु विषयेषु रजो रागः मनसः कषाय इति उपायांतरेण दुर्निरासतामाह ॥ २७ ॥ तदेव दृष्टांतेनोपपादयति । यथेति । नृणामामयो रोगः असाध्वसम्यक्

॥ * ॥ रश्मिस्थानीयं जीवात्मानं विवेकं परस्य देहादेरपवादमात्मत्वनिरासं विस्तारयति । अन्नोपष्टभ्यत्वात् अन्नोपजीव्यत्वात् । पूर्वार्धे इन्द्रियादीनां बहुवचनांतानामन्नमात्रमित्येकवचनेन सामानाधिकरण्यायोगात्—यद्वेति । आदिना देवा आत्मा न भवन्ति जडसात्त्विकाहंकारकार्यत्वात् । वायुर्नात्मा स्पर्शवत्त्वात् घटवत् । जलं नात्मा शीतस्पर्शवत्त्वात् शीतलशिलावत् । हुताशो नात्मा उष्णस्पर्शवत्त्वात आतपवत् । धिषणा बुद्धिर्नात्मा करणत्वात् इन्द्रियवत् । चित्तं नात्मा करणत्वात् बुद्धिवत् । अहंकृतिर्नात्मा जडत्वाकरणत्वाद्वा इन्द्रियवत् । इत्यनुमानानि बोध्यानि ॥ २४ ॥ ज्ञानिनामसंगतामाह—समाहितैः सुस्थितैः । करणैरिन्द्रियैः । गुणेषु विहिताचरणेष्वात्मा स्थितिर्येषां तानि गुणात्मानि तैः । "गुणः स्याद्विहिताचारे स्थितिरात्मापि कथ्यते" इति कामधेनुः । विक्षिप्यमाणैर्विषयासक्तैः । उपेतैः समीपगैः । विगतैर्दूरगैः ॥ * ॥ संदर्भः—यस्तु मत्स्वरूपनिष्ठस्तस्य त्वंपदार्थशोधनापेक्षापि नास्तीत्याह—समाहितैरिति । समाहितैर्निश्चलैर्विक्षिप्यमाणैश्चंचलैर्वा कौ गुणदोषौ, न कावपीत्यर्थः । अन्यकृतविक्षेपादिस्तं न स्पृशतीति भावः ॥ २५ ॥ आदिना चालनतापनपिंडीकरणकाठिन्यादिग्रहः । आदिनाऽनुष्णाशीतत्वादिग्रहः । तथा नभोवत् । 'बुद्धेरात्मा महान्परः' इत्याद्युक्तेर्बुद्धिपदेनाहंकारग्रहणं त्वायाससाध्यमिति मत्वाह—यद्वेति ॥ * ॥ मण्डलस्थानीये तत्पदार्थे तु सर्वथैव तत्संबंधो नास्तीति दर्शयति—यथेति । अहंमतेर्देहाद्युपाध्यहंकारमयस्य जीवस्य परं केवलं संसृतिहेतुभिः न त्वक्षरस्य अविचलितज्ञानादिशक्तेस्तस्येत्यर्थः ॥ * ॥ **दीपिका**—प्रकाशकस्य शुद्धत्वंपदार्थस्य प्रकाश्यानामिन्द्रियादीनामुपरतिविक्षेपोदयो गुणदोषो न भवति । पूर्वार्धे अहंमतेरिति पदस्यास्थानपतितत्वं कस्य संसृतिहेतुभिरित्यपेक्षा चातो—यद्वेति ॥ २६ ॥ असम्यग्ज्ञानी मूर्खः । यद्यपि ज्ञानिनो विषयसंबंधे गुणदोषौ न तथापीति । "कषायोऽवार्यरागे च रसभेदे विलेपने । निर्यासे सुरभौ रक्ते ह्यंगरागे च कीर्तितः ॥" इति धरणिः । अवार्यरागोऽत्र कषायार्थः ॥ * ॥ असम्यग्ज्ञानिनं संकोचयन् भक्तियोगोपदेशेन कृतार्थयति—तथापीति द्वाभ्याम् ॥ * ॥ **दीपिका**—तथापि सम्यग्ज्ञानिनो गुणदोषाभावेपि । रागोऽत्र विषयप्रीतिः । यथा कषायो गैरिकादिरागो दुर्निवर्त्यस्तथा रागोपीत्यर्थः ॥ २७ ॥ एतदेवावार्यसंगत्वमेव । प्ररोहन्नपथ्याश

कुयोगिनो ये विहतांतरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥ ते प्राक्तनाभ्यासबलेन भूयो युंजंति योगं न तु कर्मतंत्रम् ॥ २९ ॥ करोति कर्म क्रियते च जंतुः केनाप्यसौ चोदित आनिपातात् ॥ न तत्र विद्वान्प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३० ॥ तिष्ठन्तमासीनमुत व्रजंतं शयानमुक्षंतमदंतमन्नम् ॥ स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥ ३१ ॥ यदि स्म पश्यत्यसदिंद्रियार्थं नानानुमानेन विरुद्धमन्यत् ॥ न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३२ ॥

यथा भवति तथा अपक्वकषायकर्म अदग्धाः कषाया रागादयस्तन्मूलानि कर्माणि यस्मिंस्तत । अत एव सर्वसंगं सर्वेषु पुत्रादिषु सज्जमानं मनः कुयोगिनमसम्यग्ज्ञानिनं विध्यति भ्रंशयति ॥ २८ ॥ ननु कथंचिद्विषयसंगे यदि योगभ्रंशः स्यादलं तर्हि सापायेन योगमार्गेण तत्राह । कुयोगिन इति । मनुष्यभूतैर्बंधुशिष्यादिरूपैस्त्रिदशैरुपसृष्टैः प्रेरितैः । तथा च श्रुतिः " यस्मात्तदेषां न प्रियं यदेतन्मनुष्या विद्युः " इति । भूयो जन्मांतरे । न तु कर्मतंत्रं कर्मविस्तारम् ॥ २९ ॥ ननु विदुषामपि सर्वथा कर्म दुष्परिहरमिति पुनः संसारः स्यादत आह । करोतीति । विदुषोऽन्योऽसौ जंतुर्देह एव भोजनादिकर्म करोति क्रियते विक्रियते च तेन कर्मणा पुष्ट्याद्यपि प्राप्नोतीत्यर्थः । केनापि संस्कारादिना चोदित आनिपातान्मरणपर्यंतं करोति । विद्वांस्तु प्रकृतौ देहे स्थितोऽपि कर्मणि न विक्रियते निरहंकारित्वात् । हर्षविषादादिभिः संसारं न प्राप्नोति ॥ ३० ॥ किंच आस्तां तावद्दैहिककर्मभिर्विकारशंका यतो देहमप्यसौ न पश्यतीत्याह । तिष्ठंतमिति । उक्षंतं मूत्रयंतम् । स्वभावप्राप्तमन्यदपि दर्शनस्पर्शनादि ईहमानं कुर्वंतमात्मानं देहम् ॥ ३१ ॥ नन्विंद्रियवतः सर्वथा कथमदर्शनं संभवति तत्राह । यदि स्मेति । यद्यप्यसतां बहिर्मुखानामिंद्रियाणामर्थं पश्यति

नादिनाऽऽविर्भवन् । अत एवाऽपक्वकषायत्वादेव ॥ * ॥ तदेव मनःकषायस्य दुर्निवार्यत्वमेव । अत एवापक्वकषायत्वादेव ॥ २८ ॥ योगाभ्यासमाक्षिपति—नन्विति । त्रिदशा योगे विघ्नं कुर्वन्तीत्यत्र हेतुभूतां श्रुतिं प्रमाणयति—तथा चेति । एषां देवानां यन्मनुष्या विद्युः ब्रह्म जानीयुः तत् ब्रह्मज्ञानं न प्रियं यस्माद्धेतोस्तस्मात्ते देवा विघ्नान्कुर्वन्तीत्यर्थः । " विघ्नान्कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात्परम् " इत्युक्तेः ॥ * ॥ ततश्चान्तरायेपि न नश्यतीत्याह—कुयोगिन इति । वक्ष्यते च—" योगचर्यामिमां योगी विचरन्मदपाश्रयः । नान्तरायैर्विहन्येत " इति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—देवप्रेरितमनुष्यादिरूपैर्न तु स्वीयभोगाभिनिवेशैः । अत एव ' यदि न समुद्धरन्ति यतयो हृदि कामजटाः ' इत्यत्रोक्ता यतय एतेभ्यो भिद्यंत इति ज्ञेयम् । श्रुतिर्व्याख्यातचरी ॥ २९ ॥ सर्वथा कर्मत्यागस्तु न कस्यापि संभवतीत्याक्षिपति—नन्विति । जायत इति जन्तुः । इत्यर्थ इति—धातूनामनेकार्थत्वाद्विकारेपि क्रुञस्ति । अर्थवशात्कर्मपदं विपरिणमय्यावृत्त्या योज्यमिति भावः । आदिनाऽदृष्टादिग्रहः । इत्यर्थ इति—तथात्वे विद्वत्त्वैव न स्यादिति भावः ॥ * ॥ सिद्धानां न कदापि हानिरिति विवृणोति—कर्मीव ज्ञानी पुनर्न बंधनं प्राप्नोतीत्याह—करोतीति । असौ जीवः केनाप्यन्तर्यामिणा चोदितः प्रेरितः कर्म करोति तथा क्रियमाणेन कर्मणा तेनासौ जन्तुः सूकरश्वादियोनिगतोपि क्रियते । निपातो लयस्तत्पर्यन्तम् । तत्र तन्मध्ये विद्वान् ज्ञानी तु प्रकृतौ देहे स्थितोपि कर्म न करोति नापि कर्मणा तथाभूतः क्रियते ॥ ३० ॥ आरूढावस्थामाह—किंचेति । आत्मस्थमतिर्निवृत्तद्वैतदर्शनः ॥ * ॥ ज्ञानी देहस्थोऽपि देहं नानुसंधत्त इत्याह—तिष्ठंतमिति । आत्मस्थमतिः परमात्मस्थितधीः ॥ ३१ ॥ द्वैतादर्शनमाक्षिपति—नन्विति । अर्थं

पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमंग ॥ निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥ ३३ ॥
यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद्विधत्ते ॥ एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥ ३४ ॥

तथापि नानात्वान्मिथ्यास्वमवदित्यनुमानेन विरुद्धं बाधितं तदन्यदात्मव्यतिरिक्तं मनीषी वस्तुतया न मन्यते । स्वमादुत्थाय प्रबुध्य संस्कारमात्रेण स्वाप्नं विषयं स्फुरंत मत एव स्वयमेव तिरोभवंतं यथा तद्वत् ॥ ३२ ॥ तदेवमात्मा न विक्रियेत इत्युक्तम् । नन्वेतदनुपपन्नं बद्धावस्थायां त्यज्यमानत्वान्मुक्तावस्थायां च गृह्यमाणत्वात् । न हि व्रीहयोऽवघातेन व्रीहिभावत्यागतस्तंडुलीभावेन गृह्यमाणा न विक्रियंते तत्राह । पूर्वमिति । बद्धावस्थायां गुणैः कर्मभिश्च चित्रमज्ञानकार्यं देहेंद्रियादिलक्षणमात्म न्यध्यासेनाविविक्तं गृहीतमासीत्तदेव पुनर्ज्ञानेन निवर्तते । आत्मा तु न केनापि रूपेण गृह्यते नापि त्यज्यते । अयं भावः । मुक्तेः क्रियाफलत्वे भवेदेतावदात्मनो विकारः तस्यास्त्वारोपिताज्ञानमात्रनिवृत्तिरूपत्वान्नात्मसंस्पर्शित्वं बंधमोक्षयोः अतो न विकार इति ॥ ३३ ॥ एतदेव दृष्टांतेन स्पष्टयति । यथेति । न तु सत् पूर्वमेव विद्यमानं

विषयम् । अत एव संस्कारमात्रत्वादेव । तद्वत् स्वप्नोत्थितवत् ॥ * ॥ किञ्च—यदि कदाचित्समाधिभंगे सति नानाभूतमसदिन्द्रियार्थं पश्यति तदपि कार्यं कारणाभिन्नं तन्त्वभिन्नपटवदित्यनुमानेन विरुद्धं बाधितं सत्, अन्यत् आत्मव्यातिरिक्तमित्यादि तैः । नानानुमानेन नानात्वेन हेतुना यन्मिथ्या न तन्नाना न यथा ब्रह्मेति व्यतिरेकव्याप्तिः । अत एव संस्कारमात्रेण स्फुरद्रूपत्वादेवेति **दीपिका** ॥ ३२ ॥ आत्माविक्रियाम धुनाऽऽक्षिपति—नन्विति । एतदात्माविक्रियत्वम् । पूर्वावस्थापरित्यागपूर्वकमवस्थांतरप्राप्तिरूपविकारलक्षणस्य सद्भावात् । तथाहि—नहीति । गुणैरुपादानैः कर्मभिश्च निमित्तैः । अविविक्तमाभिन्नम् । तदेव देहेन्द्रिया द्यात्माध्यसनमेव । न गृह्यते नित्यस्वप्रकाशत्वात्, नापि त्यज्यते आत्मत्वात् । अत्राशयमाह—अयं भाव इति । क्रियाफलत्वे कर्मजन्यत्वे स्वीकृते । तावत्तदा । तस्या मुक्तेः । यतो नात्मस्पार्शित्वं बंधमोक्षयोरतो हेतोः ॥ ॥ * ॥ **दीपिका**—तत्राविक्रियत्वे । गुणैः सत्त्वादिभिः । कर्मभिस्तज्जन्यपुण्यपापैः । आत्मनि जीवस्वरूपे । अध्यासेन परत्र परावभासरूपेण । अविविक्तं काणोऽहं बधिरोहमित्यभिन्नं गृहीतं जातं तदेवाध्यासेनाभि न्नत्वेन जातमेव देहादिज्ञानेन स्वरूपज्ञानेन केनापि रूपेण मुक्त्यवस्थात्मकेन च रूपेण न गृह्यते बद्धावस्थात्मकेन च रूपेण न त्यज्यते नित्यमुक्ते तस्मिन् द्वयोरपि प्रातीतिकत्वात् । " गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् " इत्यत्र पूर्वं तथा निर्णीतत्वादित्यर्थः । शंकाभाससमाधिं स्फुट इत्यतोऽयं भाव इति । यथा तण्डुलीभावस्यावघातक्रियाफलत्वाद्व्रीहीणां विकारः, तथा मुक्तेः कस्या अपि क्रियाफलत्वे सत्येवा त्मनो विकारः शंक्येत । तस्यास्तु मुक्तेस्तु आरोपितं यदधिष्ठानस्याज्ञानं देहात्मभावनापादकं तस्याज्ञानस्य याधिष्ठानज्ञानेन निवृत्तिर्निरासस्तद्रूपत्वान्न क्रियाफलत्वमिति । न बंधमोक्षयोरात्मस्पार्शित्वमतो बन्धमोक्षयोर्वास्तव त्वाभावान्नात्मनो विकार इत्यर्थः ॥ ३३ ॥ तमश्चक्षुरावरणम् । एवं सूर्यवत् । निपुणा कुशलगुरुप्राप्ता सती श्रुतिसत्प्रमाणजन्या समीक्षा परोक्षात्मविद्यापि पुरुषस्य बुद्धेर्मे मद्विषयकमावरणमेव हन्यान्मत्स्वरूपं तु स्वप्र काशतयैव स्फुरति । यद्वा—मे समीक्षा मद्विषयज्ञानं मे मदंशस्य पुरुषस्य वा ॥ * ॥ **सन्दर्भः**—तस्य च मदंशस्य प्रकाशो मदनुग्रहेणाज्ञानलोपात्स्वत एव भवतीति दृष्टान्तेनाह—यथा हीति । न तु पूर्ववत् । यत्तेजोंशलक्षणं सद्वस्तु तत्पुनार्विधत्त इत्यर्थः । मे समीक्षा कृपादृष्टिः ॥ * ॥ अत्र **विश्वनाथः**—सदा वर्तमान एवात्मा ज्ञाने सति स्वत एवोपलभ्यते तस्मिन्सति नोपलभ्यते सूर्यप्रकाशे सति असति च घटपटा दिरिवेत्याह—यथा हीति । चक्षुषस्तम आवरणमेव हन्यान्न तु चक्षुस्तद्विधत्ते यतः मच्चक्षुस्तु सदैव वर्तमानमेकरसमेवेति भावः । एवं निपुणा मे समीक्षा दृढं ज्ञानं मदीया विद्याशक्तिरित्यर्थः । पुरुषस्य त्वंपदार्थस्य बुद्धे

एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ॥ एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरंति ॥ ३५ ॥

घटादि पुनर्विधत्ते करोति । मे या समीक्षा आत्मविद्या ॥ ३४ ॥ आत्मनो निर्विकारतां प्रपंचयति । एष इत्यनेनापरोक्षतया नित्यप्राप्तस्यात्मनः प्राप्तिं वारयति । स्वयंज्योति रित्यनेनाज्ञानमलापाकरणलक्षणां विकृतिं वारयति । अज इत्युत्पत्तिं वारयति । अप्रमेय इति ज्ञानलक्षणातिशयाधानेन संस्कारम् । महानुभूतिरिति देशकालपरिच्छेदाभावेनास्ति त्ववृद्धिविपरिणामापक्षयनाशान् स्वयंज्योतिष्ट्वादौ हेतुः । सकलानुभूतिरिति । एकोऽद्वितीय इति विकारहेतोरन्यस्याभावान्न कोपि विकार इति दर्शयति । ननु श्रुतिविषय स्य कथं स्वयंज्योतिष्ट्वादि तत्राह । वचसां विरामेऽगोचरत्वेन निवृत्तौ सत्याम् । तथाच श्रुतिः । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति । तत्र हेतुः । येनेषिताः प्रेषिताः । तथा च श्रुतिः । "केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ॥ केनेषितां वाचामिमां वदंति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ श्रोत्रस्य श्रोत्रं

बुद्ध्युपहितस्य तमिस्रं ज्ञानावरणमेव हन्यात् ॥ ३४ ॥ स्वयंज्योतिष्ट्वादिकमात्मन आक्षिपति—नन्विति । मनआद्यगोचरत्वे प्रमाणमाह—तथा चेति । श्रुतिरुक्तार्था । तत्र स्वयंज्योतिष्ट्वादौ । प्राणादीनामात्मनः प्रेरकत्वे प्रमाणमाह—तथा चेति । इषितमभिमतं विषयं प्रति केन प्रेषितं प्रेरितं मनः पतति याति केन प्रयुक्तः प्रेरितः प्रथमः प्राण एति आदावेव विशेषतः प्रेरकापेक्षाऽस्ति पुनस्तु कुलालचक्रवत्संस्कारेणापि चलनं भवत्येव । वदन्ति जीवाः । उ वितर्के । अस्योत्तरम्—श्रोत्रस्येत्यादि स्पष्टार्थम् ॥ * ॥ **विश्वनाथः**—शुद्धेन त्वंपदार्थेनात्मना परमात्मानं सूर्यस्थानीयं भक्त्या किं स्वयं पश्येत् स तु जीवात्मविलक्षण एवेत्याह—एष इति । स्वयंज्योतिः स्वप्रकाशः, जीवस्तु तत्प्रकाश्यः । अजः जीवस्तूपाधिद्वारा जन्यः । अप्रमेयस्सर्वव्यापकत्वात् प्रमातुमशक्यः, जीवस्तु न तथाभूतः । महानुभूतिश्चित्पुंजः, जीवस्तु चित्कणः । सकलानुभूतिः सर्वज्ञः, जीवस्त्वल्पज्ञः । एकः परमेश्वरान्तराभावात्सजातीभेदरहितः, जीवस्त्वनेकः । अद्वितीयः जीवमाययोस्तच्छक्तित्वेनैक्याद्वितीयभेदरहितः, जीवस्तु नैवंभूतः । न च जीववद्वाङ्मनसगोचर इत्याह—वचसां विरामेऽगोचरत्वेन निवृत्तौ सत्याम् । तथा च श्रुतिः—" यतो वाचः " इत्याद्याः । तर्हि कथं स प्रत्येतव्यस्तत्राह—येनेषिता यत्प्रेरिता वागसवश्चरन्ति । तदुक्तम्—' गुणप्रकाशैरनुमीयते भावान् ' इति । **दीपिका** तु—प्रपञ्चयति चतुर्विधक्रियाफलाभावेन विवृणोति । एतच्छब्दस्यापरोक्षार्थत्वे ' समीपतरवर्ति चैतदो रूपम् ' इति मानम् । अतिशयः शक्तिविशेषः । महाभूतिरिति—महती देशकालपरिच्छेदरहितानुभूतिः स्वरूपज्ञानं यस्य स तथा । कालपरिच्छेद एव जन्मान्तरास्तित्वविपरिणामापक्षयनाशाः संभवन्ति न तु तदभावे, तथा देशपरिच्छेद एव वृद्धिः न तु तदभावे इति तथा व्याख्यातम् । एकः सजातीयभेदरहितः, अद्वितीयो विजातीयभेदशून्य इति पदद्वयं कर्तृपदद्वयेन वा भगवान् विकारनिमित्तसामान्यस्य सजातीयविजातीयस्याभावान्न कोपि विकार उत्पत्त्यादिरस्तीति दर्शयति । श्रुतिविषयस्य श्रुतिप्रकाश्यस्य । अगोचरत्वेना नंतत्वादविषयत्वेन । तथा चानन्तत्वेनाविषयत्वे प्रमाणं श्रुतिः—अप्राप्यावधिमनुपलभ्य श्रांता वाच उपनिषदो मनसा सह यतो ब्रह्मणः सकाशान्निवर्तन्त इति वागाद्यविषयं तदित्यर्थः । तत्राविषयत्वे वागादीनां तत्प्रेरि तत्वे प्रमाणं श्रुतिः तवल्कारोपनिषत्—कश्चित्प्रतिपन्नो ब्रह्मजिज्ञासुः जडानां मनआदीनां प्रवृत्त्यन्यथानुपपत्त्या तत्प्रवर्तकपरमात्मबुभुत्सया पृच्छति—केनेति । मनःकर्तृकेन देवेन प्रेषितं सत् इषितमिष्टं साध्वसाधुविषयं प्रति पतति गच्छति, मनसः कारणत्वादवश्यं तत्प्रेरकेण केनचिज्जीवभिन्नेन कर्त्रा भाव्यम्, निगृह्णाति जीवेन निग्रहीतुमशक्यत्वात् ' मनोवशेन्ये ह्यभवन्स्म देवाः ' इत्युक्तेः । इषितमितीडागमश्छान्दसः । प्रथमं पंचानां मध्ये मुख्यः प्राणः केन कर्त्रा युक्तः प्रयुक्तः प्रेरितः सन्प्रैति याति स्वव्यापारं करोतीत्यर्थः । इमां लौकिकीं वैदिकीं च वाचं केनेषितां प्रेरितां वदंति जीवा इति शेषः । चक्षुःश्रोत्रमिति प्राण्यंगत्वादेकवद्भावः । संबुद्धौ भो देशिक को देवो युनक्ति प्रयुंक्ते प्रेरयतीत्यर्थः । इदमुपलक्षणं शेषकरणानाम् । एवं शिष्येणानुयुक्त आचार्य उवाचेति गम्यम् । श्रोत्रस्येति

**एतावानात्मसंमोहो यद्विकल्पस्तु केवले ॥ आत्मन्नृते स्वमात्मानमवलंबो न यस्य हि ॥ ३६ ॥**

यन्मनसो मनो यद्वाचो ह वाचं प्राणस्य प्राणमुत चक्षुषश्चक्षुः" इति ॥ ३५ ॥ अद्वितीयत्वमुपपादयितुं भेदस्यावास्तवत्वमाह । एतावानिति । केवलेऽभिन्ने आत्मन्नात्मनि विकल्प इति यदेतावान्सर्वोऽप्यात्मनो मनसः संमोहो भ्रमः । यतः स्वमात्मानमृते विना यस्य विकल्पस्यावलंब आश्रयो नास्ति । रजतभ्रमस्येव शुक्तिं विना । "नेह नाना

" अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति " इति आचार्यश्रुतिशेषोज्ञेयः । यत् यः श्रोत्रस्य श्रोत्रं शब्दावभासकत्वशक्तिप्रदः, मनसो मनः मनने शक्तिप्रदः, वाचो वागिन्द्रियस्य वाक् शब्दोच्चारणशक्तिप्रदः, 'वाचम्' इति पाठेपि स एवार्थः, प्राणस्य प्राणः प्राणनशक्तिप्रदः, चक्षुषः चक्षुः दर्शनशक्तिप्रदः, स एव श्रोत्रादेर्नियन्ता देवस्त्वया पृष्ट इत्यन्वयः । धीरा धीमन्तः श्रोत्रादिप्रेरकत्वेन परमात्मानं जानंत एतस्माल्लोकाद्भौतिक दहात् प्रेत्योत्क्रमणं विधाय अतिमुच्य लिंगदेहञ्च हित्वा अमृता मुक्ता भवंतीत्यर्थः ॥ ३९ ॥ इंद्र आत्मा । मायाभिरिति बहुत्वं शक्त्यभिप्रायेण । पुरुरूपो बहुरूप ईयते वस्तुत एक एवेत्यर्थः । " युक्ता ह्यस्य हरयः शता दश " इत्येवेति । अस्यार्थः—अस्य परमात्मनः ह्रियन्त इति हरयो विभूतयः शता दश अनंता मायया ताश्च युक्ताः । 'अयं वै हरयोऽयं वै दश च सहस्राणि प्रयुतान्यर्बुदानि' इति वाक्यशेषादित्यर्थः ॥ * ॥ ननु भ्रम एव ब्रह्माख्यं शुद्धं तत्पदार्थमाश्रित्य द्वैतं कल्पयति, यथोक्तम्—" आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला " इति, तर्हि कथं भ्रममयोपाधिकस्येश्वराख्यस्य ब्रह्मण एव तवानुग्रहेणान्यस्य भ्रमोपया त्विति कश्चिद्विप्रतिपद्यते तत्र किमुच्यते तत्राह—एतावानिति । विविधं कल्प्यते येन स विकल्पो भ्रमः, यतः स्वमात्मानं जीवमृते यस्य भ्रमस्य केवले इतरसंबन्धसंभावनारहिते ह्यालम्बो न विद्यते । तदुक्तं वैष्णवे— " ह्लादिनी संधिनी संवित्त्वय्येका सर्वसंस्थितौ । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिता ॥ " इति । सर्वज्ञसूक्ते च—" ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः । स्वाविद्यासंवृतो जीवः संक्लेशस्तु निरीश्वरः " इति ॥ * ॥ **विश्वनाथस्तु**—ननु विश्वस्य पृथक् प्रत्यक्षत्वात्कथमद्वितीयत्वं तत्राह—एतावानिति । केवले एकस्मिन्नप्यात्मन् आत्मनि सति विकल्प इति यत् एतावानेव आत्मसंमोहः स्वीयसम्यगविवेकः । यस्यात्मसंमोहस्य स्वमात्मानमृते स्वीयं जीवात्मानं विनाऽवलम्बो नास्ति जीवात्मन एवाज्ञानेन द्वैतं पृथक् प्रतीतं तस्य द्वैतस्य परमात्मकार्यत्वेन परमात्मैक्यात् " नेह नानास्ति किञ्चन " इत्यादिश्रुतेः । पार्थक्यं नास्तीत्यर्थः ॥ * ॥ **दीपिका** तु—अद्वितीयत्वं ज्ञानिनां भेदस्फूर्तिराहित्यम् उपपादयितुमुपपत्त्य युक्त्या साधयितुं विकल्पो भेदः आश्रयो नास्तीति आत्मन एवाश्रयत्वविषयत्वे अभ्युपेते । यथोक्तम्—"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला " इति । इह ब्रह्मणि किञ्चन नानाभेदो नास्ति अपवादार्थं कल्पिताकारपरां श्रुतिमाह—इन्द्रः परमेश्वरः मायाभिः कल्पितोपाधिभिः पुरुरूपो देवनरादिबहुरूप ईयते, वस्तुत एकमेवाद्वैतमित्यर्थः । अस्येन्द्रस्य दशसंख्या इन्द्रियलक्षणा विषया हरणाद्धरयः प्राणिभेदात् शता शतसंख्याश्च युक्ताः संयुक्ता प्रेरिता जडत्वेन स्वतः प्रवृत्त्यसंभवात् अधीनाः संतीत्यर्थः । यथोक्तं शंकरशारीरके—" ये हि परविद्याधिकारे केचित्प्रपञ्चा उच्यन्ते यथा युक्ता ह्यस्य हरयः शता दश " इत्ययं वै हरयोयं वै दश च शतानि सहस्राणि बहूनि चानंतानि च इत्येवमादयस्ते भवंतु प्रविलयार्थास्तदेतद्ब्रह्मा पूर्वमनपरमनंतरमबाह्यमित्युपसंहारादिति । तट्टीका च रत्नप्रभा—अस्य जीवभावं प्राप्तस्येश्वरस्य दश हरयो विषया हरणाद्दशेन्द्रियाणि प्राणिभेदापेक्षया शतानि सहस्राणि च तेषामीश्वराद्भेदमाशंक्याह—अयमिति । ईश्वर

यन्नामाकृतिभिर्ग्राह्यं पंचवर्णमबाधितम् ॥ व्यर्थेनाऽप्यर्थवादोऽयं द्वयं पंडितमानिनाम् ॥ ३७ ॥

स्ति किंचन" "इंद्रो मायाभिः पुरुरूप ईयते" "युक्ता ह्यस्य हरयः शता दश" इत्यादिश्रुतेरित्यर्थः ॥ ३६ ॥ केचित्पुनः प्रत्यक्षादिप्रतीतस्य प्रपंचस्य बाधायोगाद्वेदांतार्थानां च क्रत्वर्थकर्तृप्रतिपादनपरत्वेनार्थवादत्वाद्द्वैतं सत्यमिति मन्यंते । तन्मतमनूद्य दूषयति । यदिति । नामाकृतिभिर्ग्राह्यं नामरूपोपलक्षितं पंचवर्णं पंचभूतात्मकं द्वयम् द्वैतं यत्तदबाधितमिति पंडितमानिनामत्र वयमेव पंडिता इत्यभिमानवतां वेदांतेष्वयमर्थवाद इति प्रतीतिर्न तत्त्वविदाम् । यतो व्यर्थेनापि विनाऽप्यर्थेन सा प्रतीतिः । तथाहि

एव हरयः । इत्यर्थ इति—इत्थमेवाभिप्रेत्येयं श्रुतिः भेदस्यावास्तवत्वे उदाहृतेति ज्ञेयम् ॥ ३६ ॥ अथ मीमांसकमतं निराकरोति—केचिदिति । केचिन्मीमांसकाः । तन्मतमनूद्य प्रथमं वर्णयित्वा । अत्र जगति । वेदान्तेषूपनिषत्सु । आत्मा भेदप्रतिपादनं यत् । अयमिति पुंस्त्वं विधेयापेक्षम् । तत्त्वविदां ज्ञानिनां त्वात्माभेद एवाभिमतो न तु पण्डितमानिनां मूर्खाणां यतो हेतोः सा प्रतीतिर्व्यर्थेति । व्यर्थतामाह—तथाहीति । येषां वाक्यानां विधिवाक्येनैकवाक्यता संभवति यथा—" अक्षय्यं ह वै चातुर्मास्ययाजिनां सुकृतम् " इत्यस्य चातुर्मास्ययागः प्रशस्तस्तेन यजेदिति विधिवाक्येनैक्यम् । एवं तेषां तत्त्वमस्यादिवाक्यानां न केनापि विधिवाक्येनैक्यमस्ति ततो नास्ति तेषामर्थवादत्वमिति । अन्यदाह—न चेति । न ह्यकर्तुरभोक्तुश्च परमानंदरूपस्य स्वर्गाद्यर्थे यागादौ प्रवृत्तिरुपपद्यते । स्वर्गाद्यानन्दस्य तदानन्दकोट्यंशेनापि तुल्यत्वाभावात् । प्रपञ्चासत्त्वमनुमानेन साधयति—न चेति । आदिना " नेह नानास्ति किञ्चन " इत्यादिग्रहः ॥ * ॥ **दीपिका**—केचिन्मीमांसकाः । बाधायोगान्मिथ्यात्वासंभवात् । वेदान्तार्थानाम् "तत्त्वमसि" "ब्रह्माहमस्मि" इत्यादिवेदान्तार्थानां क्रतुर्यज्ञस्तदंगभूतः कर्ता यजमानस्तत्प्रतिपादनपरत्वेन तच्छ्लाघापरत्वेनार्थवादत्वात् गुणवादरूपार्थवादत्वात् , यथादित्यो यूप इत्यत्र यूपस्यादित्यत्वं प्रत्यक्षबाधितं तदुज्ज्वलत्वयज्ञनिर्वाहकत्वादिगुणमादाय प्रशंसामात्रं यूपस्य क्रियते, तथा जीवस्यापीश्वरत्वं प्रत्यक्षबाधितं कर्मवशत्वात् , किन्तु—यज्ञादिज्ञातृत्वगुणमादाय तस्येश्वरत्वेन प्रशंसामात्रं क्रियत इत्यर्थः । तन्मतं मीमांसकमतम् । नाम ब्राह्मणादि, रूपं द्विपदत्वादि । अत्र द्वैतस्य सत्यत्वप्रतिपादने । अयं ब्रह्मात्मवादः । अर्थवादः यजमानस्तुतिमात्रं तादृशप्रतीतिः । पंडितमानिप्रतियोगित्वे हेतुमाह—यत इति । विनाप्यर्थेन विध्येकवाक्यत्वप्रयोजनासंभवादित्यर्थः । तथाहि—वेदान्तार्थानामर्थवादत्वप्रतीतेर्व्यर्थत्वं दर्शयति—न तावदिति । यथा—"वायुर्वै क्षेपिष्ठा देवता वायुरेवैनं भूतिं गमयति" इत्याद्यर्थवादानां यतो वायुः प्रशस्तोऽतः " वायव्यं श्वेतमालभेत " इत्यनेन प्रकारेण विध्येकवाक्यत्वं न तथा वेदान्तवाक्यानां विध्येकवाक्यत्वं संभवति तादृशविध्यभावात् । यतो विध्येकवाक्यत्वादर्थवादत्वं स्यात्संगच्छेतेति तथा प्रतीतेर्व्यर्थत्वं दर्शितम् । न चाग्नेयोऽष्टाकपालो भवतीत्यत्रेव विधिः कल्प्यः परमानंदप्रतिपादनस्य तुच्छकर्मविध्यंगत्वानौचित्यादित्याह—न चेति । बाधितत्वान्मिथ्यात्वात् ॥ * ॥ अत्र **संदर्भः**—ननु यदि स्वरूपे आरोपितं स्यात्तदैवेश्वरानुग्रहेण तज्ज्ञाने सति तत्र मिथ्या ज्ञायते न त्वेवं किन्तु तण्डुलपाकवत्संयुक्तमेव । ततः कथं ज्ञानमात्रेणापगच्छेदित्येक आक्षिपन्ति, तथा जीवेनाज्ञानारोपितत्वेऽपि वणिग्वीथिस्थरजतवद्द्वैतं नाम वस्तु पृथङ्नास्ति किन्त्वनादित एव । पूर्वपूर्वभ्रम उत्तरत्रारोप्यते तदा को वा तस्यानुग्रह इत्यन्ये चाक्षिपन्तीत्याशंक्याह—यन्नामेति । यन्नामाकृतिभिर्ग्राह्यं पञ्चभूतात्मकरूपमबाधितं नास्तीति भावनया बाधितमशक्यं ग्राहकादित्वेन संयोगस्यैव सिद्धिरिति मन्यन्ते । यच्च व्यर्थेन पदार्थं विनाप्यर्थस्य वादमात्रं मन्यन्ते द्वयमप्येतत्पंडितमानिनामेव न तु पण्डितानाम् । पूर्वत्र ग्राहकग्राह्ययोरपि रूपयोश्च चिज्जडयोस्तेजस्तिमिरयोरिव संयोगासंभवादज्ञानेनैव तत्प्रतीतिरिति । अथोत्तरत्र न ह्यत्यन्तासन् षष्ठभूतादिः कुत्राप्यारोपितो दृश्यते, समुच्छ्रितकर्णे शशे शृंगमिवेति भावः ॥ * ॥ **विश्वनाथस्तु**—तस्मात्कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवदिति न्यायेन कार्यस्य पृथक्त्वं बाधितमेव तदप्यबाधितमिति ये मन्यन्ते ते पंडितमानिन एव न तु पण्डिता इत्याह—यत् नामभिराकृतिभी रूपैश्च सहितमिन्द्रियैर्ग्राह्यं च पञ्चवर्णं पञ्चभूतात्मकं तत् द्वयं द्वैतमबाधितमेवेति पण्डितमानिनामेव मतं न तु पण्डिता

योगिनोऽपक्वयोगस्य युंजतः काय उत्थितैः ॥ उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३८ ॥ योगधारणया कांश्चिदासनैर्धारणान्वितैः ॥ तपोमंत्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ॥ ३९ ॥ कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः ॥ योगेश्वरानुवृत्त्या वा हन्यादशुभदाञ्छनैः ॥ ४० ॥ केचिदिह मिमं धीराः सुकल्पं वयसि स्थिरम् ॥ विधाय विविधोपायैरथ युंजंति सिद्धये ॥४१ ॥ न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ॥ अंतवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४२ ॥ योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्न मतिमान्योगमुत्सृज्य मत्परः ॥ ४३ ॥

न तावद्विध्येकवाक्यत्वं तेषामस्ति यतोऽर्थवादत्वं स्यात् । न चाकर्तृभोक्तृपरमानंदरूपात्मप्रतिपादनं कर्मविशेषतां भजते । न चाबाधितत्वं द्वैतस्य नामरूपात्मकत्वात् ग्राह्यत्वात् पंचवर्णात्मकत्वात् स्वप्नवदित्याद्यनुमानैर्वाचारम्भणादिश्रुतिभिश्च बाधितत्वादिति ॥ ३७ ॥ तदेवं ज्ञानयोगं सपरिकरं निरूप्येदानीं तन्निष्ठस्य विघ्नप्रतीकारमाह योगिन इति त्रिभिः । योगं युंजतः कायो यद्यंतरेवोत्पन्नैरुपसर्गै रोगाद्युपद्रवैरभिभूयेत । तत्रायं विधिः प्रतीकारः ॥ ३८ ॥ योगधारणया सोमसूर्यादिधारणया कांश्चित् संतापशैत्यादीन् । आसनैर्वायुधारणान्वितैर्वातादिरोगान् तपोमंत्रौषधैः पापग्रहसर्पादिकृतान्॥ ३९ ॥ममानुध्यानादिभिः कामादीन् योगेश्वरानुवृत्त्या दंभमानादीन् हन्यात्॥ ४० ॥ अन्ये तु देहसिद्ध्यर्थमेवैतत्सर्वं कुर्वंति तद्दूषयति केचित्पुनरेतैरन्यैश्चोपायैर्देहमेव सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थिरं च कृत्वा अद्वंद्वपरकायप्रवेशादिसिद्धये तत्तद्धारणारूपं योगं युंजंति न तु ज्ञाननिष्ठारूपम् ॥ ४१ ॥ कुशलैः प्राज्ञैरादरणीयं न भवति । वनस्पतिवदात्मैव स्थायी शरीरं न फलवन्नश्वरमित्यर्थः ॥ ४२ ॥ ननु क्वचित्समाध्यंगत्वेनापि प्राणायामादियोगे क्रियमाणे जरारोगाद्यभावो दृश्यते सत्यम्, तथापि समाधिमुत्सृज्य न तत्र सज्जेतेत्याह । योगमिति । तत् तां देहसिद्धिं न श्रद्दध्यान्नाम् ।

यतो व्यर्थेन विनाप्यर्थेन अर्थ इति त्रादोयं न ह्याद्यंतवानर्थः सत्यो भवेत् " प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा । आद्यन्तवदसज्ज्ञात्वा निःसंगो विचरेदिह ॥ " इति मदुक्तेः ॥ ३७ ॥ तन्निष्ठस्य ज्ञाननिष्ठस्य । अंतरा मध्ये । तत्रोपसर्गेषु । " उपसर्गः पुमान्रोगभेदोपप्लवयोरपि " इति मेदिनी । प्रतीकारो निवृत्त्युपायः ॥ * ॥ **दीपिका**—परिकरोऽत्र बाधकस्य निरासः साधकस्य कथनम् । तन्निष्ठस्य ज्ञानयोगस्थितस्य । अंतरा ज्ञाननिर्वाहमध्य एव । तत्र तेषूपसर्गेषु । प्रतीकारो दूरीकरणोपायः ॥ ३८ ॥ आदिना तयोर्वैषम्यग्रहः । आसनैस्स्वस्तिकाद्यासनैः । आदिना पित्तश्लेष्मग्रहः । आदिना वृश्चिकादिग्रहः ॥ * ॥ **दीपिका**—सोमसूर्यादीत्यादिनाऽग्न्यादिधारणादिग्रहः । संतापशैत्यादीनीत्यादिना वनाग्न्यादीनां स्तंभनग्रहः । तदुक्तम् "अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः" इति ॥ ३९ ॥ आदिना श्रवणग्रहः। कामादीत्यादिना क्रोधादिग्रहः। आदिना नैष्ठुर्यादिग्रहः ॥*॥ योगेश्वरा हरिभक्तास्तेषामनुवृत्त्या सेवया तदनुगमनेन वा ॥ ४० ॥ मतान्तरमाह—अन्ये त्विति । केचित्प्राकृताः । अथ कायकल्पोत्तरम् ॥*॥ अन्ये सकामा एतत्सोमसूर्यादिधारणं तद्देहसिद्धिप्रयोजनं दूषयति, द्वाभ्यामिति शेषः ॥ ४१ ॥ तन्मतं निराकरोति । तदायासः शरीररक्षणायासः । अपार्थकोऽसत्यः । हेतुमाह—अन्तेत्यादि । दृष्टान्तमाह—फलस्येति । इत्यर्थ इति—महता यत्नेनापि रक्षितं फलवत् कालान्तरे गलनादिना नश्यत्येवेति भावः ॥*॥ मूले तदिति देहसिद्धिकरणम्॥ ४२॥ उक्तमर्थमाक्षिप्य समाधत्ते—नन्विति । यद्यपि दृश्यते तथापीति । तत्र कायकल्पे न विश्वसेत्

योगचर्यामिमां योगी विचरन्मद्व्यपाश्रयः ॥ नांतरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥४४॥ इति श्रीमद्भा० म० एकादशस्कंधे भगवदुद्धवसंवादे ज्ञानयोगनिरूपणं नामाष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ उद्धव उवाच ॥ सुदुष्करामिमां मन्ये योगचर्यामनात्मनः ॥ यथांजसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यं जसाऽच्युत ॥ १ ॥ प्रायशः पुंडरीकाक्ष युंजंतो योगिनो मनः ॥ विषीदंत्यसमाधानान्मनोनिग्रहकर्शिताः ॥ २ ॥ अथात आनंददुघं पदांबुजं हंसाः श्रयेरन्नरविंदलोचन ॥ सुखं नु विश्वेश्वर योगकर्मभिस्त्वन्मायायाऽमी विहता न मानिनः ॥ ३ ॥

विश्वसेत् ॥ ४३॥ तदेवं विघ्नप्रतीकारैर्योगं कुर्यादित्युक्तं मच्छरणस्य तु न विघ्नशंकाऽपीत्याह । योगचर्यामिति । विचरन्नाचरन्स्वसुखे अनुभूरनुभूतिर्यस्य सः । स्पृहामूला हि विघ्नाः सा च मदपाश्रयस्य निवर्ततेऽतोंतरायैरविहतः स्वानंदपूर्णो भवतीति ॥ ४४ ॥ समाहृत्य स्वयोगं तु समस्तोपनिषद्रसम् ॥ सख्ये मुख्यतमां भक्तिं मुक्तौ पुनरुपादिशत् ॥ १ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ॥ भक्तियोगस्तमेवाह स्वभक्ताय समासतः ॥ १ ॥ अतिक्लेशमिवालक्ष्य योगे संगैकसंपदि ॥ सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥ २ ॥ अनात्मनोऽवशीकृतमनसः अंजसा अप्रयासतो यथा सिध्येत्तत्तथा अंजसा सुबोधं यथा तथा मे ब्रूहि ॥ १ ॥ सुदुष्करतां प्रपंचयति । प्रायश इति । मनो युंजंतो निगृह्णन्तो विषीदंति क्लिश्यंति । कुतः । असमाधानादनिग्रहात् । कथंचिन्मनसो निग्रहे च कर्शिताः श्रांताः संतः ॥ २ ॥ यस्मादेवं केवलं विषीदंति अथातः अत एव ये हंसाः सारासारविवेकचतुरास्ते त्वानंददुघं समस्तानन्दपरि

सर्वथा देहस्य विनाशित्वात् ॥ * ॥ तत्र देहसिद्धौ । कल्पतां जरारोगादिराहित्यम् ॥ ४३ ॥ मद्भक्तानां तु योगे विघ्नाशंकैव नेत्याह—तदेवमित्यादिना । इमामुक्तलक्षणाम् ( ४४ ) सर्वोपनिषत्सारैः स्वयोगं ज्ञानयोगं समाहृत्य संक्षेपेणोक्त्वा । सख्ये उद्धवाय । मुख्यतमां ज्ञानस्य तदवांतरव्यापारत्वेन सर्वथा प्रधानाम् । मुक्तौ तन्निमित्तम् ॥*॥ मच्छरणस्य मद्भक्त्येकबलस्य । सा च स्पृहा । अतः स्पृहाराहित्यात् । समाहृत्य संक्षिप्तं वर्णयित्वा ॥४४॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धेऽष्टाविंशोऽध्यायः ॥ २८ ॥ तमेव पूर्वोक्तमेव ( १ ) । असंगो वैराग्यमेवैका मुख्या संपत्संपादिका यस्य तस्मिन् ज्ञानयोगे । इवेति वस्तुतः क्लेशभावमाह ( २ ) । सुदुष्करामतिशयेन कर्तुमशक्याम् । सिध्येत् मोक्षं प्राप्नुयात् । भक्तमनोरथसेचनेन साधकस्त्वमसीति सम्बुद्ध्यभिप्रायः॥*॥ **संदर्भः**—ज्ञानयोगचर्यामंशतोऽप्यनंगीकुर्वता परमैकान्तिना श्रीमदुद्धवेन सुदुष्करामिमामित्यादिपद्यद्वये स्ववाक्ये तस्या दुष्करत्वेन फलपर्यवसायित्वाभावेन चोक्तत्वाच्छुश्रूष्यमाणाया भक्तेस्तु सुकरत्वेन फलपर्यवसायित्वेन चाभिप्रेतत्वाद्भक्तिरेव कर्तव्येति स्वाभिप्रायो दर्शितः॥*॥**विश्वनाथस्तु**—"कृष्णो यत्सुदृढं ज्ञानं यत्नादुपदिदेश तत् । नाग्रहीदुद्धवस्त्वेतज्ज्ञापकं श्लोकपंचकम् ॥ " । अनात्मनो देहाध्यासरहितस्य योगिनो योगचर्या उक्ता इमामन्यैः सुदुष्करां मन्ये अंजसा शीघ्रं यथा सिध्येत्तथा त्वं कथय । शीघ्रमंजसेत्यस्य क्रियाभेदादपौनरुक्त्यम् । हे अच्युत अच्युतस्य तव भक्तिरेवाच्युता सति वैगुण्ये ध्वंसरहितत्वात् । तदुक्तम्—" स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् " इति त्वयैवेति ॥ १ ॥ ० ॥ * ॥ युंजंतो ब्रह्मणि मनो निवेशयन्तः । हे पुंडरीकाक्षेति संबुद्धिर्व्याख्यातचर्यपि पुनर्हे प्रफुल्लाक्ष मामपि संशयनिराकरणेन प्रफुल्लाक्षं कुर्विति भावः । प्रायश इति—भक्तिप्रधानतया न क्लिश्यन्तीति भावः ॥ २ ॥ अथात इति हेत्ववधारणे । के ये इत्यादिपदाध्याहारे गौरवं मत्वाह—यद्वेति । अमी त्वत्पदाम्बुजाश्रयाः । अत एव माययाऽविहतत्वादेव । इत्यर्थ इति—' अभिमानं सुरापानम् ' इत्युक्तेरभिमानस्य सुरापानतुल्यत्वेन नरकप्रदत्वादभिमानवतां मोक्षो न भवतीति भावः । अरविंद

किं चित्रमच्युत तवैतदशेषबंधो दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ॥ योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥ ४ ॥

पूरकं तव पदांबुजमेव सुखं यथा भवति तथा नु निश्चितं श्रयेरन् सेवंते । अमी तु त्वन्मायया विहिताः । के । ये योगकर्मभिर्मानिनः संतो न श्रयंते । यद्वा अमी त्वद्भक्ता स्त्वन्मायया न विहिता अत एव योगकर्मभिः कृत्वा मानिनो न भवंति । अन्ये तु त्वन्मायया मोहिताः संतो वयं योगज्ञा वयं कर्मकुशला इति केवलं गर्विता भवंति न तु मुच्यंत इत्यर्थः ॥ ३ ॥ त्वद्भक्तास्तु त्वत्प्रसादेन कृतार्था भवंतीति नातिचित्रमित्याह । किमिति । अनन्यशरणेषु दासेषु तवात्मसात्त्वं त्वदधीनत्वं यद्यथा नंदगोपीबलि प्रभृतिष्वेतत्किं चित्रं नाश्चर्यमित्यर्थः । यतो यो भवान् श्रीरामरूपेण मृगैर्वानरैः सह साहित्यं सख्यमिति यावत् । अरोचयत् प्रीत्या कृतवान् । कथंभूतः । ईश्वराणां ब्रह्मा

लोचनत्वेन सुखसेव्यत्वं, विश्वेश्वरत्वेनाभीष्टपूरकत्वं चोक्तम् ॥ * ॥ तदेवं तां ज्ञानयोगचर्यामनादृत्य भक्तिमेवांगीकुर्वाणास्तत्र श्रीकृष्णस्यैव भक्तिं तादृशस्तु ज्ञानयोगादिफलानादरेणैव कुर्वंतीत्याह चतुर्भिः । अथेति तैः । पादाम्बुजस्य संबंधिपदानुक्तिः साक्षाद्दृश्यमानतदीयपादाम्बुजाभिव्यंजनार्था । अमी च शुद्धभक्ता योगकर्मभिस्त्वन्मायया च विहताः कृतभक्त्यनुष्ठानांतराया न भवन्ति यतो न च मानिनस्ते मानिनोऽपि न भवन्ति पुरुषार्थसाधने भगवतो निरुपाधिदीनजनकृपाया एव साधकतमत्वं मन्यन्ते न तु योगिप्रभृतिवत्स्वप्रयत्नस्येत्यर्थः ॥ * ॥ **विश्वनाथस्तु**—सुखमिति क्रियाविशेषणम् । यत्तु वयं योगिनो वयं ज्ञानिनो वयं कर्मिण इत्यभिमानवन्तो ये ते त्वन्मायया विहता नाश्रयेरन् अत एव विषीदन्ति ॥ * ॥ **दीपिका** तु—पूर्वार्थे नकारस्यास्थानपतितत्वं श्रयेरन्नित्यावृत्तिगौरवं, तुकाराध्याहारः, भक्तानामनुत्कर्षकथनञ्चेत्यरुचेः—यद्वेति । अत एव मायया विहतत्वादेव । अन्ये त्वद्भक्ता इत्यार्थिकार्थतया व्याख्यानादित्यर्थ इत्युक्तम् । हे अरविंदलोचनेति—कस्त्वां भक्तजनकृपाकारिनेत्रमतिसुंदरमूर्तिं विहायामूर्तमगोचरं बुद्धिमान्सेवितुमिच्छेदिति भावः ॥ ३ ॥ इत्यर्थ इति—अशेषबन्धुत्वा न्नाश्चर्यं भक्ताभिमतपूरणमिति भावः । वानराणां शाखामृगत्वात्तत्रापि मृगपदप्रयोगो नायुक्त इत्यभिप्रायेणाह—मृगैर्वानरैरिति । सहपदेन लक्षितलक्षणया सख्यं बोध्यते द्विरेफमधुपवत् । अव्ययत्वाद्विभक्तिलोपः । तथा भूतोऽपीश्वरेश्वरोऽपि । भक्तवत्सलत्वात्तव न किञ्चिदकार्यमिति भावः ॥ * ॥ **दीपिका**—अनन्यशरणेषु योगज्ञानकर्माद्याश्रयांतररहितेषु । रामरूपेणेत्यत्र साक्षाद्रूपेणापि वृन्दावनचारिभिर्वानरैः सख्यं व्याख्येयम्, "एवं विहारैः कौमारैः—मर्कटोत्प्लवनादिभिः" इत्युक्तेः । तस्माद्भक्तेरेव मुख्यत्वं प्रतिभातीति तामेव ब्रूहीति भावः ॥ * ॥ **संदर्भस्तु**—एवंभूतस्य च भक्तस्य भक्तेर्यत्फलं तन्मात्रं च महदेवेत्याह—किमिति । हे अशेषबंधो अशेषाणाम् असुरपर्यन्तानां यो बन्धुः मोक्षादिदानैर्निरुपाधिहितकारी हे तथाभूत तवैतत्किं चित्रं यदनन्यशरणेषु ज्ञानयोगकर्माण्यनुष्ठानविमुखेषु शुद्धभक्तेषु बलिप्रभृतिषु आत्मसात्त्वं तेषां य आत्मा तदधीनत्व मित्यर्थः । 'न साधयति मां योगः' इत्यादौ 'यथा भक्तिर्ममोर्जिता' इत्यादेः । यस्य तत्र तथाभूतेषु न जातिगुणाद्यपेक्षा चेत्यन्तरंगलीलायामपि दृश्यत इत्याह—य इति । सहेति सहभावः सख्यमित्यर्थः । मृगै र्वृन्दावनचारिभिः । स्वयं तु कथंभूतोऽपि ईश्वराणामित्यादिलक्षणोऽपि । ज्ञानयोगादिपरमफलरूपापि या भक्तिस्तां दैत्येभ्यो ददासि पांडवादिषु सौत्यदौत्यवीरासनादिस्थितिवद्वासानां तु स्वयमधीनो भवसि । अत एवं भूतस्य श्रीकृष्णरूपस्यैव तव भक्तिर्मुख्येति भावः ॥ * ॥ **विश्वनाथस्तु**—त्वां केवलं भजन्तस्तु त्वद्वात्सल्यपात्रीभवंतीति न चित्रमित्याह—किमिति । अनन्यशरणेष्विति पूर्ववत् । राज्ञा स्वपुरं विप्रसात्कृतं विप्राधीनं कृतमितिवद्दासैस्त्वमात्मसात्कृत इति तवात्मसात्त्वमात्मसात्कृतत्वमित्यर्थः । तदेवाह—यो भवान् श्रीरामरूपेण मृगैः सख्यमरोचयत्स्वस्मै रोचितमकरोत् । यद्वा—मृगैर्वृन्दावनीयमृगैर्गाश्चारयन्नरोचयत् । तथा मृगैर्वानरैश्च साहित्यं नवनीतं चोरयन्नरोचयत् । तेन त्वदुक्तलक्षणमिमं ज्ञानयोगं किं तैरभ्यस्तं जानीमः, यस्तेषां त्वमधीन एव वर्तसे कथं वाऽद्वैतवादिनां ज्ञानिनां त्वं न कस्याप्यधीनः क्वापि श्रुतोऽतो दासा वयं न ज्ञानयोगमिमं

तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु ॥ को वा भजेत्किमपि विस्मृतयेनुभूत्यै किं वा भवेन्न तव पादरजोजुषां नः ॥९॥

दीनां यानि श्रीमंति किरीटानि तेषां तटान्यग्राणि तैः पीडितं विलुठितं पादपीठं यस्य स्वयं तथाभूतोऽपि सन् ॥ ४ ॥ अतस्त्वां परित्यज्य को नामान्यत्संश्रयेदित्याह । तं त्वेति । तमेवंभूतं त्वां को नु विसृजेन्न भजेत् । कथंभूतः । स्वकृतवित् बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जानन् । यद्वा स्वस्मिन्नेवांतर्यामितया कृतमुपकारं विद्वान् । तदेवाह । अखिलात्मदयितेश्वरम् अखिलस्य जगतः आत्मानं चेतयितारमात्मत्वादेव दयितं प्रेष्ठं सुसेव्यमीश्वरत्वादवश्यं भजनीयम् । किंच आश्रितानां सर्वार्थदम् । तर्हि किं फलोद्देशेनाहं सेव्यः नहिनहि । किमप्यनिरुक्तं त्वद्व्यतिरिक्तं स्वर्गादि त्वया दत्तमपि को वा भजेत्सेवेत । कथंभूतं तत् । यत्केवलं भूत्यै इंद्रियभोगाय । अनु अनंतरमेव त्वद्विस्मृतये भवति । यद्वा त्वद्व्यतिरिक्तं किमपि देवतांतरं धर्मज्ञानादिसाधनं वा भूत्यै ऐश्वर्याय संसारस्य विस्मृतये मोक्षाय वा को भजेन्न कोऽपि । ननु तत्तत्साधनं विना

स्वींकुर्म इति व्यञ्जितम् । पीडितं संघट्टविलुलितम् ॥ ४ ॥ यतस्त्वं दीनदयालुरतो हेतोः । अन्यत् देवादि । एवंभूतं भक्तवत्सलम् । यद्यपि स्वशब्देन लक्षितलक्षणया भगवद्ग्रहणं भवति तथापि प्रसिद्धार्थमाह—यद्वेति । उपकारं सर्वविषयावबोधसामर्थ्यरूपम् । तदेव स्वकृतमेव । चेतयितारं ज्ञानदम् । न केवलमीश्वरत्वेनैव सेव्यमित्याह—किंचेति । सकामसेव्यत्वमाशंक्य समाधत्ते—तर्हीत्यादि । न कोऽपीति देवभजनप्रस्तुते स्वर्गादीनां भजनीयत्वकथनमयुक्तमिव मत्वाह—यद्वेति । देवतान्तराभजने साधनाभावे च कथं धर्मादिप्राप्तिः स्यादित्याशंकते—नन्विति । तत्तत्साधनं धर्मादिपृथक्साधनं किं वा न भवेदपि तु सर्वमेव भवेदित्यर्थः । साधनसम्पत्तिं विना साध्यप्राप्तौ प्रमाणमाह—तदुक्तमिति । " तया साधनसम्पत्त्या तत्पुरुषार्थचतुष्टयम् " इति वैष्णवे ॥ * ॥ **दीपिका**—अतो भक्तानामात्मसात्करणात् । अन्यत् स्वर्गादिकं धर्मज्ञानादिसाधनं च । पूर्वार्थे स्वेषु स्वीयेषु त्वदीयेषु बल्यादिषु इति व्याख्याने स्वशब्देन वाक्ये यः कर्ता तस्यैव परामर्शकत्वमिति नियमव्याघाताद्—यद्वेति । तदेवोपकारित्वमेव । यदि सर्वार्थदोऽसि तर्हि अनिरुक्तं सदसद्भ्यामनिर्वचनीयम् ' अविस्मितं तं परिपूर्णकामम् ' इत्यादौ देवतान्तरभजनादेरेकान्तिनां निषिद्धत्वादर्थान्तरमाह—यद्वेति । तया साधनसंपत्त्या ॥ * ॥ **सन्दर्भस्तु**—फलितमाह—तमिति । तमेवंभूतं त्वां स्वकृतवित् " प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् " इत्यादिश्रीकपिलदेवोपदेशतः स्वसौन्दर्यादिस्फूर्तिलक्षणं स्वस्मिन्कृतं त्वदीयोपकारं यो वेत्ति स कोऽनु विसृजेत् " तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते " इति तदुपदिष्टाधिकारिविशेषवत् परित्यजेत्, न कोऽपीत्यर्थः । तस्माद्यस्त्यजति स कृतघ्न एवेति भावः । कथंभूतं त्वां—स्वरूपत एवाखिलानामात्मनां दयितं प्राणकोटिप्रेष्ठमीश्वरं चेत्यादि । तथा नु वितर्के । तद्व्यतिरिक्तं किमपि देवतान्तरं धर्मज्ञानादिसाधनं वा भूत्यै ऐश्वर्याय संसारस्य विस्मृतये इत्यादिटीका च समा । अस्माकं तु तत्तत्फलमपि तद्भक्तेरेवान्तर्भूतमित्याह—किं वेति । वाशब्देन तत्राप्यनादरः सूचितः । तदुक्तम्—' यत्कर्मभिर्यत्तपसा ' इत्यादि ॥ * ॥ **विश्वनाथस्तु**—त्वा त्वामखिलात्मनां सर्वजीवानां नारदादिरूपेण भक्त्युपदेष्टृत्वाद्दयितं प्रति स्वकर्मफलप्रदत्वादीश्वरं स्वाश्रितानां तु सर्वपुरुषार्थप्रदम् । स्वकृतेति तैः । केवलमरसज्ञो निकृष्टयोगिजन एव कृतघ्नो विसृजेत् । किञ्च—भजन्नपि को वा मुक्तिकामो भजेदित्याह—को वेति । विस्मृतये त्वद्विस्मृतिरूपाय राज्याद्यर्थं तथानुभूत्यै केवलानुभवाय मोक्षार्थं वा को भजेन्न कोऽपि । किमपीति क्रियाविशेषणम् । किञ्चनापि भजनं कः कुर्यादित्यर्थः । ननु तर्हि निष्कामाणामपि प्रह्लादादीनां भुक्तिमुक्ती कथं दृश्येते तत्राह—किञ्चेति । तथा चोक्तं मोक्षधर्मे नारायणीये—' या वै साधनसंपत्तिः ' इत्यादि । भोगमोक्षादिकमानुषंगिकं फलं भक्तानभीप्सितमपि त्वया दीयत एवेति भावः ॥ ९ ॥

नैवोपयंत्यपचितिं कवयस्तवेश ब्रह्मायुषापि कृतमृद्धमुदः स्मरंतः ॥ योंतर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥ ६ ॥
श्रीशुक उवाच ॥ इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ॥ गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेममनोहरस्मितः ॥ ७ ॥

भोगमोक्षादिफलं कथं स्यात्तत्राह । किंवेति । तदुक्तम् ।"या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये॥तया विना तदाप्नोति नरो नारायणाश्रयः" इति ॥५॥ आस्तामन्यभजनवार्ता त्वत्कृतोपकारस्य त्वय्यात्मनि वेदनेनैव निष्कृतिर्नान्यथेत्याह । नैवेति । अपचितिं प्रत्युपकारमानृण्यमिति यावत् । कवयो ब्रह्मविदोऽपि नैव प्राप्नुवंति । यतः तत्कृतमुपकारं स्मरंत ऋद्धमुदः उपचितपरमानन्दाः । उपकारमेवाह । यो भवान् बहिराचार्यवपुषा गुरुरूपेणांतश्च चैत्यवपुषांतर्यामिरूपेणाशुभं विषयवासनां विधुन्वन्निरस्यन्स्वगतिं निजं रूपं प्रकटयति तस्य तव ॥ ६ ॥ ईश्वरेश्वरत्वे हेतुः । जगत्क्रीडनकं क्रीडोपकरणं यस्य सः । ननु जगत्सृष्ट्यादिना ब्रह्मेशादयः क्रीडंति तत्राह । स्वशक्तिभिः सत्त्वादिभिर्गृहीतं

अनिमित्तबन्धुत्वं भगवत आह—आस्तामिति । चित्ते स्थितश्चैत्यः । स्वगतिं स्वरूपतयैव नित्यसिद्धाम् ॥ * ॥ दीपिका—निष्कृतिमानृण्यम् । यावदिति—नातः परं पदार्थविवरणमित्यर्थः, एवं सर्वत्र । विषयवासनां त्वद्भक्तिप्रतियोगिनीम् निजं रूपं स्वस्वरूपाऽनुभवम् ॥ * ॥ अत्र संदर्भः—ननु कथं तत्तत्फलमपि विसृजति न तु मां किं वा मम कृतं तत्राह—नैवेति । हे ईश कवयः सर्वज्ञा ब्रह्मतुल्यायुषोऽपि तत्कालपर्यन्तं भजन्तोऽपीत्यर्थः । तव कृतमुपकारमृद्धमुद उपचितभक्तिपरमानंदाः सन्तः स्मरन्तः अपचितिं न पश्यन्ति तस्मान्न विसृजेदित्युक्तम् । कृतमाह—यो भवान् तनुभृतां त्वत्कृपाभाजनत्वेन केषांचित्सफलतनुधारिणां बहिराचार्यवपुषा अंतश्चैतन्यवपुषा चित्तस्फूर्तिध्येयाकारेण अशुभं त्वद्भक्तिप्रतियोगि सर्वं विधुन्वन् स्वगतिं स्वानुभवं व्यनक्तीति ॥ * ॥ विश्वनाथस्तु—ननु मां भजद्भ्य एव जनेभ्यो वाञ्छितसमस्तपुरुषार्थप्रदत्वान्मम तत्तद्दानं न निरुपाधिकम् । किन्तु सोपाधिकमेवेति चेन्मैवम्, तच्च तैः क्रियमाणं त्वद्भजनमपि त्वद्दत्तमेवेत्यतो निरुपाधिपरमहितकारिणस्तव सहस्रमहाकल्पमभिव्याप्यापि परिचर्यया जना नैव निर्ऋणीभवितुं शक्नुवन्तीत्याह—नैवेति । अपचितिरिति तैः । आचार्यो मन्त्रोपदेष्टा भक्तिमार्गोपदेष्टा च स्वमन्त्रस्वभक्त्युपदेशेनानुगृह्णन् । अन्तश्चान्तर्यामिरूपेण " ददामि बुद्धियोगं तं येन मामुपयांति ते " इति त्वदुक्तेः । स्वप्रापकबुद्धिवृत्तीः प्रेर्य स्वभजनं कारयन् स्वगतिं प्रेमवत्पार्षदत्वलक्षणां गतिं व्यनक्ति ददातीत्यर्थः ॥ ६ ॥ ईश्वरास्तु ब्रह्मादयो जगत्क्रीडनकाः संतीत्याशंक्‍्य—नन्विति । ईश्वराणां ब्रह्मादीनामपीश्वरः सर्वेश्वरः " एष सर्वेश्वरः " इति श्रुतेः । मनोहरत्वेनैव गतार्थत्वात्सप्रेमेत्याधिकं स्मितस्येत्याह—सप्रेम यथेति ॥ * ॥ ईश्वरस्य प्रकृतिप्रवर्तकस्य महापुरुषस्यापीश्वर इति स्वयं भगवत्त्वं व्यंजितमिति दीपिका ॥ * ॥ संदर्भः—ईश्वरेश्वरत्वेन निरपेक्षोऽपि तं प्रति सप्रेमेति । सप्रेमेत्यादिरूपो जगाद । तत्रेश्वरेश्वरत्वं त्रिधा यथाक्रमं श्रैष्ठ्येनाह—जगादिति । ततस्तत्तच्छक्तिभिर्निजांशावेशविभूतिमिताभिरिति कनिष्ठेन प्रकटितमूर्तित्रय इति मध्यमेन ईश्वरस्य प्रकृतिप्रवर्तकस्य महापुरुषस्यापीश्वर इत्युत्तमेनेति ज्ञेयम् ॥ * ॥ विश्वनाथस्तु—स्वशक्तिभिरंतरंगातटस्थाबहिरंगाभिः । अंतर्यामिरूपेण जीवरूपेण देहरूपेण जगदेव क्रीडनं क्रीडासाधनं यस्य सः । तेनांतर्यामिरूपेणोद्धवं तथा प्रेरयामास यथा भाविकलियुगवर्तिभक्तजनानन्दहेतुमेव स प्रपच्छेति भावः । क्रीडनमपि तस्य स्वभक्तिरसवितरणमयमेवेत्याह—गृहीतेति । उद्धवरूपेण प्रश्नकर्ता श्रीकृष्णरूपेणोत्तरकर्ता देशकालांतरवर्तिशुकपरीक्षिदादिभक्तरूपेण प्रश्नोत्तरामृतसंप्रदानं चेति मूर्तित्रयं गृहीतं येन सः । ईदृशं कृपाचातुर्यं नान्यस्य

श्रीभगवानुवाच ॥ हंत ते कथयिष्यामि मम धर्मान्सुमंगलान् ॥ यान्छ्रद्धयाचरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥ कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ॥ मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥ देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् ॥ देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ॥ पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ॥ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥ ११ ॥ मामेव सर्वभूतेषु बहिरंतरपावृतम् ॥ ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥ १२ ॥

मूर्तित्रयं येन सः । सप्रेम प्रेमसहितं मनोहरं स्मितं यस्य सः । सप्रेम यथा तथा जगादेति वा ॥ ७ ॥ हंतेति सहर्षं सम्बोधनम् । सुमंगलान्सुखरूपान् । मृत्युं संसारम् । दुर्जयमन्यैरुपायैः ॥ ८॥ धर्मानेवाह कुर्यादिति त्रयोदशभिः । मां स्मरन् शनकैरसंरंभतः कुर्यात् । तदाह । मयीति । मय्यर्पिते मनश्चित्ते संकल्पविकल्पानुसंधानात्मके येन अत एव मद्धर्मेष्वेवात्ममनसो रतिर्यस्य सः ॥९॥ पुण्यदेशलक्षणं मद्भक्तैरिति । देवादिषु ये मद्भक्ता नारदप्रह्लादादयस्तेषामाचरितानि कर्माणि चाश्रयेत ॥ १०॥ सत्रेण संभूय वा ॥ ११॥ अन्तरंगां भक्तिमाह मामिति त्रिभिः। सर्वभूतेष्वात्मनि चात्मानमीश्वरं स्थितं मामेवेक्षेत । ननु कथमेकस्य सर्वेषु वृत्तिस्तत्राह । बहिरंतः पूर्णमित्यर्थः । तत्कुतः ।

संभवेदित्याह—ईश्वराणामपीश्वरः । सप्रेम प्रेमसहितं मनोहरं स्मितं यस्य सः ॥ ७ ॥ यद्यप्यत्र सम्बोधनपदं नास्ति तथापि हन्तेत्युक्त्या तदत्र हे प्रियोद्धवेति ज्ञेयम् ॥ * ॥ हंतेति हर्षेऽनुकम्पायां वा । मम धर्मान् भक्तिज्ञानलक्षणान् सुकरत्वेन प्रदर्श्यमानत्वात्सुमंगलान् ॥ ८ ॥ सर्वाणि नित्यनैमित्तिकानि । असंरंभतः वेगाभावेन । तत् स्मरणम् । अत एव मदर्पितमनश्चित्तत्वादेव । मद्धर्मेषु भागवतधर्मेषु । रतिः प्रीतिः ॥ * ॥ तत्र केवलां प्रधानीभूताञ्च भक्तिं तंत्रेणैवोपदिशति—कुर्यादिति । तत्र प्रथमे पक्षे—सर्वाणि व्यावहारिकाणि कर्माणि दंतधावनादीनि पारमार्थिकानि श्रवणकीर्तनादीनि च । द्वितीयपक्षे—कर्माणि वर्णाश्रमविहितान्यपीति शेषः । मय्येवार्पितं मनो यैस्तेष्वेव चित्तं यस्य सः, कृतमद्भक्तासक्तिक इत्यर्थः । मद्धर्मे भक्तावेव स्वमनसो रतिर्यस्य सः ॥ * ॥ **दीपिका**—असंरंभतश्चित्तानुद्वेगतया । तदाह—असंरंभत्वमेवाह । अत एव अर्पितचित्तमनस्त्वादेव । आत्ममनसः स्वमनसः, उपलक्षणमिदं स्वचित्तादेः ॥ ९ ॥ ० ॥ * ॥ केवलामपि वैधीं रागानुगाञ्च तंत्रेणाह—देशान् द्वारकादीन् । आश्रयेदावसेत् । देवादिषु ये मद्भक्ता नारदप्रह्लादांबरीषादयस्तेषामिवाचरितान्याचारानाश्रयेदनुसरेदिति वैधी . भक्तिः । देशान् गोकुलवृंदावनगोवर्द्धनादीन् । चन्द्रकांतिवृंदागोपिकादीनामाचाराननुसरेदिति रागानुगा च दर्शिता । साधुभिः सदाचारैर्मद्भक्तैराश्रितानेव देशानाश्रयेत न तु दुराचारैराश्रितान्मद्रादिदेशानित्यर्थः । साधुलक्षणं तु वारतांतविनोक्तम्—"सदाचारो हरिगुरुभक्त आस्तिक्यबुद्धियुक् । जातिशुद्धः परश्लावी शास्त्रसेव्यनहंकृतिः ॥ परोपकरणे नित्यमुद्युक्तश्च दयालुकः । अनसूयश्च जितवाङ्निजश्लाघाविवर्जितः ॥ परोत्कर्षे सुखी विद्वान्साधुरित्यभिधीयते ।" इति । यद्वा—साधुस्ते उत्तमश्लोक इति प्रश्नोत्तरत्वेन स्वयं भगवता वर्णितः स च श्रीकपिलदेवोक्तो ग्राह्यः ॥ १० ॥ "सत्रं यज्ञे सदादाने संभूयत्वे वने छले" इति कोशः । सामर्थ्ये सति पृथक् अन्यथा मिलित्वेत्यर्थः । महाराजविभूतयः छत्रचामरसिंहासनाद्याः ॥ * ॥ पर्व एकादश्यादि, यात्रा विशिष्टजनसमागमः, महोत्सवो होलिकादिः । शक्तिसत्त्वे पृथक् तदभावे सत्रेण मिलित्वा बहुजनैः॥ ११ ॥इत्यर्थ इति—व्यापकत्वेन सर्वत्र पूर्णमिति भावः।तद् व्यापकत्वम् । परिस्छिन्नं वस्त्वाव्रियते न त्वपरिच्छिन्नमतः पूर्णमिति।अनावृतत्वे हेतुं पृच्छति—तदपि अनावृतत्वमपि कुत इति।इत्यर्थ इति—आवरणं ससंगिनो भवति न त्वसंगिन इति भावः॥*॥कथंभूतमीश्वरं—बहिरिति।अत्र मामेवेति श्रीकृष्णरूपमेवेक्षेत न तु केवलांतर्यामिरूपमित्यभिप्रायेणैवांतरंगां भक्तिमाहेति व्याख्यातम् । अनावृतं पूर्णम्। ज्ञानमाश्रित.इत्युत्तरपद्यस्य

इति सर्वाणि भूतानि मद्भावेन महाद्युते ॥ सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥१३॥ ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिंगके ॥ अक्रूरे क्रूरके चैव समदृक्पंडितो मतः ॥१४॥ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ॥ स्पर्धासूयातिरस्काराः साहंकारा वियंति हि ॥ १५ ॥ विसृज्य स्मयमानान्स्वान्दृशं व्रीडां च दैहिकीम् ॥ प्रणमेद्दंडवद्भूमावाश्वचांडालगोखरम्॥ १६ ॥

अपावृतमनावरणम् । तदपि कुतः । यथा खमसंगत्वादित्यर्थः॥ १२॥हे महाद्युते अतिप्राज्ञ इत्यनेन प्रकारेण केवलं ज्ञानरूपां दृष्टिमाश्रितः सन्सर्वाणि भूतानि मद्भावेन मन्यमानः सभाजयन्पंडितो मत इत्युत्तरेणान्वयः॥ १३॥ ननु उत्तमाधममध्यमेष्वेकरूपेण सभाजनमपाण्डित्यमेव स्यात्।पूज्यपूजादिव्यतिक्रमादिदोषापत्तेरित्याशंक्य तामेव ज्ञानदृष्टिं प्रपंचयति। ब्राह्मण इति।विषमेष्वपि समदृक् समं मामेव पश्यन्।वैषम्यमेव चतुर्धा दर्शयति।ब्राह्मणे पुल्कसे इति।जातितो वैषम्यम्।पुल्कसोंत्यजजातिविशेषः।स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये ब्राह्मणेभ्यो दातरि इति कर्मतः। अर्के विस्फुलिंग इति गुणतः। अक्रूरे शांते क्रूरे चेति स्वभावतः॥ १४॥नरेष्वीश्वरदृष्टिं कुर्वतः सद्यः फलविशेषमाह । नरेष्विति । समोत्तमहीनेषु स्पर्धादयः । स्वस्मिन्नहंकारश्च । हि निश्चितम् । वियंति नश्यंति ॥ १५ ॥ अतोंतर्यामीश्वरदृष्ट्या सर्वान्प्रणमेदित्याह । विसृज्येति । स्मयमानान्हसतः स्वान्सखीन् ।

कर्तृपदस्यानुषंगः। अंतर्यामिसत्त्वेऽपि कृष्णस्य स्वयं भगवत्त्वेन प्राबल्यात् । तदुपासकानामंतर्यामिस्थानेऽपि स एव सर्वत्र स्फुरतीति भावः ॥ १२ ॥ ' द्युतिः कान्तिधियोरपि ' इति निरुक्तिः । महती द्वैतवर्जिता द्युतिर्धीरस्येति तथा । केवलमुपाधिविविक्तप्रत्यक्चैतन्यविषयम् ॥ * ॥ मद्भावेन ब्रह्मैवेति भावनया । सभाजयन् संमानयन् । मन्यमानः मननं कुर्वन् । ज्ञानमाश्रितः ज्ञानीत्यर्थः । पंडितो मत इत्युत्तरेणान्वयः । अत्र केवलमित्याश्रयणक्रियाविशेषणं न तु ज्ञानस्येति केवलस्य भक्तिरहितस्य ज्ञानस्य ' नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानम् ' इत्युक्त्या विगीतत्वात् । यद्वा—केवलं ज्ञानमद्वितीयं ब्रह्माश्रितः । हे महाद्युते इति—त्वं तु भक्त्यैव केवलया सर्वतोऽप्याधिक्येन द्योतयसे आत्मानमिति महाद्युतिस्तत्संबुद्धौ तथा ॥ * ॥ **सन्दर्भस्तु**—केवलं ज्ञानमंतर्यामिदृष्टिमाश्रितोऽपि । इति पूर्वोक्तप्रकारेण सर्वाणि भूतानि मद्भावेन तेषु मम श्रीकृष्णरूपस्य यो भावोऽस्तित्वं तद्विशिष्टतया मन्यमानः पंडितो मतः ॥ १३ ॥ अत्र ' समासमाभ्यां विषमसमे पूज्येते ' इति स्मृतिबलेनाक्षिपति—नन्विति । गुणतः प्रकाशरूपगुणतः । स्मृत्यर्थस्तु—समाय पूज्याय विषमे प्रकारे कृते सति विषमाय च समे प्रकारे कृते सति स पूजक इतो लोकात्परलोकाच्च हीयत इत्यर्थः ॥ * ॥ **दीपिका**—पूज्यपूजादीति । सर्वपूजायामपूज्यस्य श्वपचादेरपि पूजनं तदभावे विप्रस्याप्यपूजनमिति व्यतिक्रमादपराधादित्यर्थः । एवं च " सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः " इत्यादिन्यायेन तस्य बहिर्दृष्ट्यभावान्न व्यतिक्रमत्वं प्रत्युतोत्तमभागवतत्वमित्यर्थः । कर्मतश्चौर्यदानलक्षणतः उत्तमाधमस्वभावतः ॥ * ॥ **संदर्भस्तु**—सर्वत्र समं ब्रह्म मामेव पश्यन् ज्ञानी पंडितः, जात्यादितो वैषम्यं पश्यंस्त्वज्ञान्यपंडित इत्यर्थः ॥ १४ ॥ समे स्पर्द्धा, उत्तमेऽसूया, हीने तिरस्कारः । स्पर्द्धा पराऽभिभवेच्छा, असूया गुणेषु दोषारोपणम्, तिरस्कारो धिक्कृतिः, अहंकारः स्वस्मिन्पूज्यत्वधीरिति भेदः ॥ * ॥ स्पर्द्धादिदोषपरिहारायापि सर्वत्र मद्दृष्टिः कार्येत्याह—नरेष्विति । स्वतुल्ये स्पर्द्धा, स्वतोऽधिकेऽसूया, स्वतो न्यूने तिरस्कारः खलु स्यात् । यदि सर्वत्रैव मां पश्येत्तदा मया सह कथं स्पर्द्धादयः संभवेयुरिति भावः । साहंकारा इति—स्वस्मिन्नपि ब्रह्मदर्शनात्कुत्राहंकारः प्रसज्जत्विति भावः । वियन्ति नष्टा भवंति ॥ १५ ॥ यतः सर्वत्रेश्वरस्तिष्ठति अतो हेतोः । ब्राह्मणं दंडवत्कुर्यात्, अन्येषां चाण्डालादीनां समानमेवेश्वराधिष्ठानधिया दण्डवत्प्रणामः, खरादीनां यवसादिदानमेव, " संमानं पुष्कसादीनां गोविप्रे दण्डवन्नतिः । खरादेर्यवसादानं प्रणतिर्दण्डवद्भवेत् ॥ " इति तीर्थोक्तेः

यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ॥ तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥१७॥ सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ॥ परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः ॥ १८ ॥ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ॥ मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ १९ ॥ न ह्यंगोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि ॥ मया व्यवसितः सम्यङ् निर्गुणत्वादनाशिषः ॥ २० ॥

तथा दैहिकीं दृशमहमुत्तमः स तु नीच इति दृष्टिम् । तया दृशा या व्रीडा लज्जा तां च विसृज्य श्वचांडालादीनभिव्याप्य प्रणमेत् ॥ १६ ॥ एवं पंचभिः श्लोकैरुक्तायाः समदृष्टेरवधिमाह द्वाभ्याम् । यावदिति ॥ १७ ॥ तस्य एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति । कुतः । आत्ममनीषया सर्वत्रेश्वरदृष्ट्या या विद्या तया । अतः परितो ब्रह्मैव पश्यन्सर्वतः क्रियामात्रादुपरमेत् ॥ १८ ॥ किमयमेवोपायोऽस्ति वाऽन्योपीत्यपेक्षायां संति बहवः समीचीनस्त्वयमेवेत्याह । अयं हीति ॥ १९ ॥ भगवद्धर्मलक्षणो

॥ * ॥ सर्वत्रैव मद्भावः । स्वाभाविक एव यो भवेदेंतस्य साधनमाह—स्मयमानान् । अहो महानप्ययमतिर्नीचे प्रणमतीति हसतः स्वान्सखींस्तथा दैहिकीं दृशम् अहमुत्तमोऽयं तु नीचः कथं मे नमस्य इति दृष्टिं तया दृशा या व्रीडा तां त्यक्त्वा श्वचाण्डालादीनभिव्याप्यांतर्यामीश्वरदृष्ट्या प्रणमेत् ॥ १६ ॥ मद्भावः मदेकस्वरूपत्वरूपाद्वितीयबोधः । एवं प्रणामादिना पूर्वोक्तं स्फुटयति मनआदिव्यापारैः । यद्वा—वाचाऽऽदरेण, मनसा शुभचिन्तनेन, कायेन दण्डवत्प्रणिपातादिना, वृत्त्या जीविकाप्रदानेन, यथोचितं पूजयेदिति भावः ॥ * ॥ एषा दण्डवत्प्रणामयंत्रणा कियत्कालपर्यंतमित्यपेक्षायामाह—यावदिति । न उपाधिक्येन जायते स्वाभाविको न भवेत्तावदेव परमात्मने नम इति वाचा तथैव मनसा कायकर्मभिर्देहव्यापारैश्चैवमुपासीत दंडवत्प्रणतिं कुर्यात् ॥ १७ ॥ एवं प्रणामादि कुर्वतः ब्रह्मात्मकत्वे हेतुमाह—आत्मेति । अतः सर्वत्रात्मदृष्टित्वे ज्ञानित्वात्कर्मानधिकारात् । मुक्तसंशयो निवृत्तासंभावनादिरूपसंदेहः ॥ * ॥ विद्या उपासना ॥ १८ ॥ मुख्यमुपायं पृच्छति—किमिति । सर्वेषां कल्पानां विधीनाम् । "कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने" इति मेदिनी । अयं कः—मनआदीनां व्यापारैस्सर्वभूतेषु यो मद्भावो मद्विषयं ज्ञानमिति यः ॥ * ॥ ततश्च 'नरेष्वभीक्ष्णम्' इत्यादिना तादृशस्योपासनाविशेषस्य झटिति स्पर्द्धादिक्षयलक्षणफलमुक्त्वा, 'विसृजेत्' इत्यादिना तथा दृष्टिसाधनं सर्वनमस्कारमुद्दिश्य 'यावत्' इत्यादिना तादृशस्योपासनाया अवधिं च सर्वत्र स्वतः स्वस्फूर्तिमुक्त्वा 'सर्वम्' इत्यादिना "नव्यवद्धृदये यज्ञो ब्रह्मैतद्ब्रह्मवादिभिः । न मुह्यन्ति न शोचंति न हृष्यंति यतो गताः ॥" इति प्रचेतसः प्रति श्रीभगवद्वाक्ये । तट्टीका च—तस्य भगवतः प्रतिपदनव्यस्फूर्तिरेव ब्रह्मेति यदुक्तं तदेव तत्फलमित्युक्त्वा । यद्वा—कथमस्यावतारस्य ब्रह्मता भवतीति गोपालतापनीश्रुतिप्रसिद्धब्रह्मताभिधाननराकृतिपरब्रह्मरूपस्फूर्तिस्तत्फलमित्युक्त्वा तेनैव तादृशोपासनं सर्वोर्द्ध्वमभिप्रशंसति—अयं हीति । सर्वकल्पानां सर्वोपासनानां सध्रीचीनः समीचीनः । मद्भावो मम श्रीकृष्णरूपस्य भावना । एतच्च श्रीकृष्णभजनस्यांतर्यामिभजनादप्याधिक्यं श्रीगीतोपसंहारानुसारेणैवोक्तम् । तथाहि—'ईश्वरः सर्वभूतानाम्' इत्यादि, 'इति ते' इत्यादि, 'सर्वगुह्यतमम्' इत्यादि, 'मन्मनाः' इत्यादि, 'सर्वधर्मान्' इत्यादि । अत्र च गुह्यं पूर्वाध्यायोक्तं ज्ञानं गुह्यतरमंतर्यामिज्ञानं सर्वगुह्यतमं मन्मनस्त्वादिलक्षणं, तदेकशरणत्वलक्षणञ्च तदुपासनमिति समानम् । अथवा पूर्वोक्तभगवद्धर्माणामेव कैमुत्येन माहात्म्यं दर्शयितुं ज्ञानं ततो निहनिष्यन्नुवदति मामित्यादिना, सर्वं ब्रह्मेत्याद्यंतेन । तदेव स्तौति—अयं हीति । सर्वकल्पानां ज्ञानकर्मयोगानां सहायः "सहस्य सध्रिः" इत्यंचतौ सध्र्यादेशात्सहांचतीति निरुक्तेः ॥ * ॥ ज्ञानिनां ब्रह्म प्राप्तावतः परः सुगमोपायो नास्तीत्याह **विश्वनाथः** । "न युज्यमानया भक्त्या भगवत्यखिलात्मनि । सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥" इति श्रीकपिलदेवोक्तेः । "कल्पो योग्ये समर्थे च प्रलये ग्रंथभिद्यपि । उपायोपासनासंभावनासु च रसायने ॥" इति वारतांतविः ॥ १९ ॥ उपक्रमे प्रारंभे सति समाप्त्यभावेपीत्यर्थः "नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥" अत एव निष्कामत्वादेव । यद्वा—

१ टीकायां नास्त्येवेत्यत्र नास्त्यत एवेति पाठाभिप्रायेणैवैतत् ।

योयो मयि परे धर्मः कल्प्यते निष्फलाय चेत् ॥ तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥ २१ ॥

पायस्य समीचीनत्वमेवोपपादयति द्वाभ्याम् । नहीति । अंग हे उद्धव । अनाशिषो निष्कामस्य मद्धर्मस्योपक्रमे सत्यण्वपीषदपि वैगुण्यादिभिर्नाशो नास्त्येव यतो मयैव निर्गुणत्वादयं धर्मः सम्यग्व्यवसितो निश्चितः, न तु मन्वादिमुखेन कथंचित ॥ २० ॥ किंच यो य इति । अयमर्थः । किं वक्तव्यं मद्धर्मस्य न ध्वंस इति यतो लौकिकोऽपि योयो निरर्थो व्यर्थ आयासः सोऽपि मयि परे निष्फलाय चेत्कल्पते निष्कामतयार्पितश्चेत्तर्हि धर्म एव स्यात् । निरर्थायासे दृष्टांतः । यथा भयशोकादेर्हेतोः पलायनाक्रं

अत एवेत्यस्य यत इत्यनेन संबंधस्तथैव स्वामिचरणैर्व्युत्पादितम् । निर्गुणत्वान्निष्कामत्वेन मोक्षहेतुत्वात् । अयं भागवतो धर्मः । नन्वेवं न केनापि कुत्रचिदुक्तः सर्वैराचार्यैः सांगोपांगधर्मस्यैव फलदानसमर्थत्वोक्तेरत आह—मयैव न तु मन्वादिमुखेन, भागवतधर्मस्य सुज्ञेयत्वेऽप्यंतःप्रेमाणं विना विज्ञैरपि दुर्ज्ञेयत्वात्, “ प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययालम् । त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः ॥” इत्युक्तेः, “ धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ” इत्याद्युक्तेश्च ॥ * ॥ मद्धर्मस्य तु विघ्न एव नास्ति कुतः सहायचिन्तनमित्याशयेनाह—नहीति ॥ * ॥ **संदर्भः**—“ भक्तिसारं त्रिभिः श्लोकैर्ज्ञानसारमथाष्टभिः । प्रोच्यांते पुनरप्याह भक्तिसारोत्तमं त्रिभिः ॥ ” । धर्मांतरस्य खल्वारब्धस्य परिसमाप्तिपर्यन्तं नैर्विघ्न्येन सांगोपांगत्वे वृत्ते एव फलजनकत्वमन्यथा तु वैयर्थ्यमेव न तथा भक्तिलक्षणस्य मद्धर्मस्य नियमः अस्य पुनरारंभमात्र एव परिसमाप्त्यभावेप्यंगहीनत्वेऽपि न वैयर्थ्यमित्याह—नहीति । अंग हे उद्धव । मद्धर्मस्य भक्तिलक्षणस्योपक्रमे आरंभे सति । यद्वा—अंगस्याप्युपक्रमे सति समाप्त्यभावेऽपि अण्वपि ईषदपि ध्वंसो वैगुण्यादिभिर्नाशो नास्ति यतो भक्तिलक्षणोऽयं मद्धर्मो निर्गुणः, न हि गुणातीतस्य वस्तुनो ध्वंसः संभवेत्, यस्मादयमनाशिषो निष्कामभक्तस्य धर्मो मया सम्यग्व्यवसितो निर्णीतः । अणुमात्रोऽप्ययं धर्मस्सम्यक् पूर्ण एव निश्चितः नात्र कारणं द्रष्टव्यमियं मम परमेश्वरतैवेति भावः । “ नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥” इति श्रीगीतोपनिषदुक्तेः । अत्र धर्मपदेन ज्ञानलक्षणो धर्मो न व्याख्येयस्तस्य निर्गुणत्वाभावात् । ‘ कैवल्यं सात्त्विकं ज्ञानम् ’ इति भगवदुक्तेः ॥ २० ॥ अन्यदाधिक्यमाह—किञ्चेति । अत्राशयमाह कैमुत्येन—अयमर्थ इति । आदिना निर्निमित्ताक्षक्रीडादिग्रहः । भयशोकादिनाक्रंदादौ भयशोकाद्यनिवृत्तेस्तद्व्यर्थतैवेति । उभयत्रादिपदाभ्यां चिन्तावैमनस्ये गृह्येते । तथा च भयादिजन्यक्लेशादिरपीश्वरेऽर्पितो धर्मश्चेत्तर्हि किमु वक्तव्यं शुभकर्मणोऽर्पणे इति । “ नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः । कल्पते पुरुषस्यैष—” इत्युक्तेः ॥ * ॥ **दीपिका**—निष्फलाय लौकिकवैदिकफलाभावाय । धर्म एवारोपितभगवद्धर्म एव स्यात्तदेति भयशोकादेरिति यथा मृत्युभयात् पलायनं व्यर्थं तस्याऽवश्यंभावित्वात् । यथा च बन्धुमृतिशोकादाक्रन्दनं व्यर्थं मृतस्य पुनर्जीवनासंभवात् । आदिना द्रव्यनाशात्तत्स्मृतिक्लेशग्रहः ॥ * ॥ आस्तां तावत्सम्यग्धर्माणां वार्ता आरोपितरूपाणां माहात्म्यं श्रूयतामित्याह—योय इति । मयि मदर्पितत्वेन कृतो योयो धर्मो वेदविहितः स यदि निष्फलाय फलाभावाय कल्प्यते फलकामनया नार्प्यत इत्यर्थः । तदा तत्रतत्रायासः श्रांतिः अनिरर्थः स्यात् । व्यर्थो न भवति । निष्फलायेति विशेषणं फलभोगादिरूपतद्भक्त्यंतरायाभावेनानिरर्थतातिशयतात्पर्यम् । तत्रानिरर्थत्वे कैमुत्येन श्रीकृष्णलक्षणस्य स्वस्यासाधारणभजनीयताव्यंजको दृष्टांतः—भयादेरिवेति । यथा कंसादौ मत्संबंधमात्रेण भयादेरप्यायासो निरर्थो न भवति मोक्षसंपादकत्वादित्यर्थ इति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—भक्तिर्यदि सर्वथैव निष्कपटा तदा सा विनापि प्रयत्नेन प्रतिक्षणं स्वयमेव संपद्यते इत्याह—योय इति । योयो धर्मः श्रवणकीर्तनादिर्मयि विषये निष्फलाय ऐहिकप्रतिष्ठादिसुखपारत्रिकस्वर्गमोक्षादिसुखकामनाराहित्याय स्यात् तस्यायासस्तत्सिद्ध्यर्थं प्रयत्नो निरर्थो व्यर्थः समर्थः स्वयमेवानायासेनैव भवति किं तदर्थं प्रयत्नेनेत्यर्थः । “ भोजनाच्छादने चिन्तां वृथा कुर्वंति वैष्णवाः । योऽसौ विश्वंभरो देवः कथं भक्तानुपेक्षते ॥ ” इतिवत् । यथा भयशोकादेर्हेतोरायासो व्यर्थ एव स्वस्वविषयं प्राप्य स्वयमेव भवेत्, यथा तथैव मां स्वविषयं प्राप्य भजनमपि स्वयमेव भवेदित्यर्थः । तदपि निष्कपटोऽपि भक्तो यद्भक्त्यर्थं सततं प्रयतते स च प्रयत्नस्तस्य भक्तौ रागातिशयमेव व्यनक्तीति यत्नो महान् गुण एव ज्ञेयः । हे सत्तमेति—‘ सन्सुधीः पण्डितः कृती ’ इति कोशात्

एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ॥ यत्सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥ २२ ॥
एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः ॥ समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥

दनादिक्लेशस्तद्वत् ॥ २१ ॥ अतो मद्भजनमेव बुद्धेर्विवेकस्य मनीषायाश्चातुर्यस्य च फलमित्याह । एषेति । तामेव दर्शयति । सत्यममृतं च मा मामनृतेनासत्येन मर्त्येन विनाशिना मनुष्यदेहेन इहास्मिन्नेव जन्मनि प्राप्नोतीति यत्सैव बुद्धिर्मनीषा चेति । बुद्धिर्विवेकः । मनीषा चातुर्यम् ॥ २२ ॥ महाप्रकरणार्थमुपसंहरति द्वाभ्याम् एष इति ॥

त्वमतिशयेन पंडितोसि सर्वत्र मद्दर्शितत्वात् । यद्वा–' स पण्डितो यः करणैरखण्डितः ' इत्युक्तेस्त्वमेवैतादृशः " नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः " इति मदुक्तेः ॥ २१ ॥ यतो निरर्थकमपि कर्म मदर्पितं सद्धर्मो भवत्यतो हेतोः । " बुद्धिर्धैर्ये विवेके च मनीषा बुद्धिदाक्ष्ययोः " इति निरुक्तिः । लोके तु क्रयविक्रयादौ किमप्यधिकसंपादको बुद्धिमानुच्यते नात्र तथेति भावः ॥ * ॥ मत्प्राप्तिकाया भक्तेश्च युक्तमेव खल्वेतादृशं माहात्म्यमित्याह–एषेति । सत्यं सर्वसत्ताहेतुममृतं सर्वानंदहेतुश्च मां श्रीकृष्णाख्यं स्वयं भगवंतमिति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु–**ननु कथं तदपि त्वद्भक्तौ जनाः प्रतिष्ठादिसापेक्षा एव भवन्ति तत्र तादृशबुद्धिविवेकाद्यभाव एव हेतुरित्याह–एषेति । बुद्धिमतामेषैव बुद्धिर्नत्वतिकठिनशास्त्रेऽपि संचारिष्णुर्बुद्धिरिति भावः । मनीषिणां चातुर्यवतामेषैव मनीषा नत्वेकेनापि कपर्दकेन स्वर्णमुद्रोपार्जनचातुर्यमिति भावः । सैव का खल्वित्यत आह–यदिति । इह भारतभूमौ मा माममृतं मृतिरहितं नित्यस्वरूपं मर्त्येन मरणधर्मणा शरीरेणानित्येनाप्नोति भक्तिमात्रादेव वशीकरोति तथा मर्त्येन मृतकतुल्यत्वादतिबीभत्सेन प्राकृतेन मा माममृतप्राकृतं सुधास्वरूपं तथाऽनृतेन जीवस्य वस्तुतत्संबन्धाभावादसत्येन सत्यं सर्वकालसत्ताकं मां प्राप्नोति । अयं भावः–लोके हि कपर्दकं दत्त्वा सहस्रकपर्दकमूल्यं वस्तु यो ग्रहीतुं शक्नोति एष एव परमबुद्धिमानतिचतुर इत्युच्यते, यस्तु तेन स्वर्णमुद्रोपार्जनं करोति स ततोपि, यस्तु हीरकादि रत्नं स ततोपि, तत्राप्यभ्रांतादतिचतुरादेव पुरुषात्स ततोपि, यस्तु चिंतामणिकामधेन्वादिकं तच्चातुर्यं तु वक्तुमशक्यम् । भारतभूवासी मर्त्यः पुनरपि दुर्जातिरपि स्फुटितैककपर्दकमूल्यत्वेनाप्यसंभावितं कौरूप्यजरारोगादिपूर्णमपि स्वशरीरं मह्यं दत्त्वाऽप्राकृतमाधुर्यसिंधुं मामेव गृह्णाति मया पुनरपि चतुरशिरोमणिनापि तद्दत्तं तदेव प्राप्य कौस्तुभकिरीटादिकटकाद्यनर्घरत्नलंकारभूषितमपि स्वं तस्मै हर्षादेव दीयते इत्यहो बुद्धिमत्त्वमहो चातुर्यवत्त्वं भारतभूवासिनः कस्यचिदिति तत्र श्रवणकीर्तनस्मरणपरिचर्याद्यर्थं श्रोत्रादीनां विनियोग एव भगवते शरीरदानं ज्ञेयम् । किंच–एका रसनैव तत्कीर्तननिरता, कर्णौ वा श्रवणनिरतौ, करौ वा परिचर्यानिरतौ चेत्तदापि स आत्मानं ददातीति शरीरैकदेशदानेनापि स लभ्यत इति कः खलु बुद्धिचातुर्यवानेवं न कुर्यादिति " सर्वोपदेशसारोऽयं श्लोकचिन्तामणिः प्रभोः । हृदये यस्य राजेत स राजेद्भक्तसंसदि ॥ " इति ॥ २२ ॥ संसारमोचकब्रह्मज्ञानं ब्रह्मवादस्तस्य संग्रहः संक्षेपः " संग्रहो बृहदुद्वेगे ग्रहसंक्षेपयोरपि " इति मेदिनी ॥ * ॥ एष पूर्वोक्तलक्षणो भक्तियोगस्तत्प्राप्यरूप एव समासविधिना ' एषा बुद्धिमतां बुद्धिः ' इत्यादिरूपेण व्यासविधिना ' त्वं तु सर्वं परित्यज्य ' इत्यादिमहाप्रकरणे देवानां सत्त्वप्रकृतीनामपीत्यर्थः । यदुक्तं षष्ठे–" देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम् । भक्तिर्मुकुंदचरणे न प्रायेणोपजायते ॥ " इति ज्ञानमिति यदुक्तं तस्य तु–' नाहं साक्षात्फलं किंतु मुक्तिमात्रम् ' इत्यादि अभीक्ष्णश इति **संदर्भः** ॥ * ॥ महाप्रकरणमुपसंहरति–एष इति

अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ॥ एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥ सुविविक्तं तव प्रश्नं मयैतदपि धारयेत् ॥ सनातनं ब्रह्मगुह्यं परं ब्रह्माधिगच्छति ॥ २५ ॥ य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलम् ॥ तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥ २६ ॥ य एतत्समधीयीत पवित्रं परमं शुचि ॥ स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥ य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः ॥ मयि भक्तिं परां कुर्वन्कर्मभिर्न स बध्यते ॥ २८ ॥ अप्युद्धव त्वया ब्रह्म सखे समवधारितम् ॥ अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥ नैतत्त्वया दांभिकाय नास्तिकाय शठाय च ॥ अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥ ३० ॥

॥२३॥२४॥ आस्तां तावज्ज्ञानमेतदनुसंधानकथनपठनश्रवणपराणामप्येतदेव फलं भवतीत्याह चतुर्भिः।सुविविक्तमिति। मया सुविविक्तं दत्तोत्तरम् एतदाख्यानमपि यो धारयेदनुसंदध्यात्सब्रह्मगुह्यं वेदेऽपि रहस्यम् ॥२५॥ सुपुष्कलं यथा भवति तथा ब्रह्मदायस्य ब्रह्म ददातीति तथा तस्य ज्ञानोपदेष्टुः ॥२६॥ समधीयीत उच्चैः पठेत् । परमं शुचि अन्येषामपि शोधकम्।पूयेत शुध्येत्॥२७॥२८॥सम्यग्ज्ञानानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेन पृच्छति। अपीति। अपि किम्॥२९॥उपधारितमाकलय्याह। नैतदिति।शठाय

द्वाभ्याम् ॥ २३ ॥ अभीक्ष्णशः पौनःपुन्येन । एतत् ज्ञानम् । नष्टसंशयो विच्छिन्नसंसारापादकद्वैतभ्रमः सन्मुच्यते जीवन्मुक्तो भवतीति भावः ॥ * ॥ ० ॥ २४ ॥ अस्य ज्ञानस्य महत्त्वमाह—किंचेति । अनुसंधानं विचारः । एतदेव जीवन्मोक्षलक्षणमेव । अधिगच्छति आत्मतया जानाति “ ब्रह्मविद्ब्रह्मैव भवति ” इति श्रुतेः ॥ * ॥ दीपिका—तव प्रश्नो यत्र मया दत्तान्युत्तराणि यत्रेत्येतद्वयमाख्यानस्य विशेषणं धारणादनुसंधानं कुर्यात् ॥ * ॥ संदर्भस्तु—समुदायस्य पौर्वापर्यानुसंधाने फलं तु मल्लक्षणं साधनसिद्धभक्तेन सार्द्धमविशेषं स्यान्मम तु त्वत्पक्षपातादित्याह—सुविविक्तमिति । ब्रह्म गुह्यं परं ब्रह्मेति मामित्यर्थः । ‘ गूढं परं ब्रह्म मनुष्यलिंगम् ’ इति नारदोक्तेः ॥ २५ ॥ सुपुष्कलं यथापेक्षितं तावत् । ब्रह्मैव दायः पितृधनमिव भागो यस्य स तथा । यद्वा—ब्रह्मदो ज्ञानद आयो लाभो यस्येति स्वस्वरूपतयात्मानं ददामि व्यञ्जयामि ॥ * ॥ मद्भक्तसात्करणे तावदेवेति किं वक्तव्यं यतः य एतदिति । ददामि वशीकरोमि आत्मानमात्मना तस्य ॥ २६ ॥ दर्शयन्पश्यन् । चुरादिणिजन्तः ॥ * ॥ अर्थमबुद्ध्वापि केवलं पठतः फलमाह—य एतदिति । परमं शुचि दोषमात्ररहितं परमं पवित्रं वक्तृश्रोतॄणां सर्वदोषनिराकरणञ्च । अतः स स्वयं पूयेतैव नात्राश्चर्यमिति भावः । न केवलमेतावत् व्युत्पन्नान्प्रति मां ज्ञानदीपेन दर्शयंश्च भवति ॥ २७ ॥ अव्यग्रः अनाकुलः, एकचित्त इति यावत् । कर्मकृतबंधाभावो मोक्ष एव ॥ * ॥ श्रद्धापूर्वकं नित्यश्रोतॄणां फलविशेषमाह—य इति ॥ २८ ॥ अपीति संभावनायाम् । समवधारितं सम्यग्ज्ञातम् । मोहोऽज्ञानम्, शोको मद्वियोगलक्षणः । “ नाहं तवांघ्रिकमलं क्षणार्धमपि केशव । त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥ ” इत्युक्तेरसौ प्रत्यक्षं श्रावितः । पूर्वमज्ञानित्वेन मनोभवस्तव मनसि जातोऽधुना ज्ञातात्मतत्त्वत्वाद्विगतः “ तरति शोकमात्मवित् ” इति श्रुतेः ॥ * ॥ अथ करुणाव्यग्रः सान्त्वयति—अपीति । मोहो मदीयानामेषामन्यथाभावजातः मायिकलीलादर्शनजो भ्रमः शोकः पुनर्ममाप्राप्तिभावेन जातः । अयं भावः—भगवता सह मम योऽयं संवादस्तच्छ्रवणादितोऽपि यदि तद्रूपं फलं तव कः सन्देहः को वान्येषां मत्परिकराणामिति संदर्भः ॥ * ॥ विश्वनाथस्तु—नित्यासिद्धस्य निस्त्रैगुणस्याप्युद्धवस्य ज्ञानादिग्रहणार्थं स्वशक्त्यैव मोहमुत्पाद्य ज्ञानाद्युपदेशेन पुनस्तं निराकृत्य लीलया पृच्छति—अपीति ॥ २९ ॥ ज्ञाततत्त्वं विचार्य वदति एतदुपदेष्टुर्महाफलभागित्वेऽपि योग्यायैव देयमिति चाह—नैतदिति । दांभिको

१ टीकायामादौ किञ्चेति पाठः ।

एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ॥ साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम् ॥ ३१ ॥ नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ॥ पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥ ज्ञाने कर्मणि योगे च वार्तायां दंडधारणे ॥ यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥ ३३ ॥ मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ॥ तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ॥ ३४ ॥

वंचकाय॥ ३०॥ शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि ब्रूयात्॥ ३१॥एतज्ज्ञानेन पुमान्कृतार्थो भवतीत्याह । नैतदिति । अत्र दृष्टांतमाह । पीत्वेति । पीयूषं स्वादु॥ ३२॥ ननु संति बहूनि ज्ञेयानि तत्तत्फलसाधनानि, सत्यम्, सत्यभक्तानां भक्तस्य तु सर्वमहमेवातो मदेकशरणो भवेत्याह । ज्ञान इति । ज्ञानादौ यावान्धर्मादिलक्षणश्चतुर्विधो ऽर्थस्तावान्सर्वोपि तेऽहमेव । तत्र ज्ञाने मोक्षः। कर्मणि विहिते धर्मः । कर्मण्येव स्वाभाविके तु कामः । योगे त्वणिमादिसिद्धयः । वार्तायां कृष्यादावर्थः । दंडनीतावैश्वर्यमिति सिद्ध्यैश्वर्ययोरपि कामांतर्गतत्वाच्चातुर्विध्यम् ॥ ३३ ॥ कुत इत्यत आह । मर्त्य इति । यदा त्यक्तसमस्तकर्मा सन्मे निवेदितात्मा भवति तदाऽसौ मे विचिकीर्षितो विशिष्टः

मिथ्यानुष्ठानरतः । नास्तिको वेदानंगीकर्ता । शठो वंचकः । अशुश्रूषोरिति चतुर्थ्यर्थे षष्ठी, अशुश्रूषवे । विशिष्टा नीतिर्विनीतिः दुर्गता विनीतिर्विचारसामर्थ्यं यस्य स तथा तस्मै । नकारः सर्वत्रान्वेति ॥ * ॥ उपधारितं सम्यक् ज्ञातम् । अशुश्रूषोरिति चतुर्थ्यर्थे षष्ठी । तत्र सुप्रतीकमालोक्य व्यतिरेकान्वयाभ्यामुपदेश्यानुपदिशाति–नैतदिति द्वाभ्याम् ॥ ३० ॥ एतैर्दांभिकत्वादिभिः । प्रियाय गुरुभक्ताय ' प्रीणातीति प्रियः ' इति निरुक्तेः । साधवे सदाचाराय । शुचये निष्कपटाय । यद्यपि ' न शूद्राय मतिं दद्यात् ' इत्याद्युक्तेस्ते नोपदेशार्हास्तथापि मद्भक्तियुक्तानां कथंचित्पुराणश्रवणादिना ज्ञानेप्यधिकारोस्त्येवान्यथेयमेव भगवदुक्तिर्व्यर्था कुप्येतेति भावः । एवं स्त्रीणामपि संस्कारहीनत्वेन शूद्रतुल्यत्वेनानुसंधेयम् ॥ * ॥ एतैर्दांभिकत्वादिभिः । शूद्रयोषिद्वयोपपत्त्यर्थः । इति चातुर्वर्ण्याधिकारो दर्शितः ॥ ३१ ॥ एतज्ज्ञाने सभक्तिज्ञाने सति । पीयूषम् " पीयूषं सप्तदिवसावधि क्षीरेऽमृतेऽपि च । स्वादुनि तीर्थपयसि सनिंबुलवणार्द्रके ॥ " इति कोशात् ॥ * ॥ एतज्ज्ञाने भक्तितात्पर्यकाख्यानज्ञाने । अत्र ज्ञातव्यावशेषाभावे **दीपिका** ॥ * ॥ इति **विश्वनाथस्तु**–यद्यपि भक्त्यैव कृतार्थस्य मद्भक्तस्य ज्ञाने नास्ति प्रयोजनं तदपि ज्ञानं नाम कीदृशमिति कदाचिद्भक्तस्य यदि जिज्ञासा स्यात्तदा तेनेदमेव द्रष्टव्यमत्र ज्ञानस्यापि सत्त्वादित्याह–नैतदिति । पीयूषं सुधां पीत्वा पातव्यं पेयममृतान्तरं नावशिष्यते ॥ ३२ ॥ अत्राक्षिपति–नन्विति । तत्र चतुर्विधेषु सर्वसुखानां ब्रह्मानंदांशत्वात् तव तु भक्तस्याहमेव मोक्षादिरूप इति ॥ * ॥ ननु यदि कस्यचिद्भक्तस्य ज्ञानकर्मादिफलेपि लिप्सा स्यात्तदा तेन ज्ञानादिकमभ्यसनीयमेवेति तत्रोद्धवं लक्ष्यीकृत्य नैवेत्याह–ज्ञाने इति । ज्ञानादौ यावानर्थः फलं मोक्षादिचतुर्विधस्तावान्सर्वोऽपि तव मद्भक्तस्याहमेव भवामि तंतमर्थं सर्वमहमेव ददामीत्यर्थः । " या वै साधनसंपत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ॥ ३३ ॥ यद्वा–यदा कृपया मे विचिकीर्षितस्तथा त्यक्तसमस्तकर्मा विविच्य बाधितसर्वकार्योपाधिरूपावरणबाधेन तत्कृतभेदभ्रमाऽपनयनेन मय्येव निवेदितात्मस्वरूपोऽनन्योऽमृतत्वं प्रतिपद्यमानो मया सहात्मभूयाय कल्पत इति । " यावद्यावन्निरस्यायं देहादीन्प्रत्यगंचति । तावत्तावत्तदर्थोऽपि त्वमर्थं प्रविविक्षति ॥ " इति स्मृत्युक्तन्यायेन यदाऽयं जीवो ब्रह्माभिमुखो भवति तदा ब्रह्मापि जीवोन्मुखो भवतीत्यर्थः । " यमेवैष वृणुते तेन लभ्यः " इति श्रुतेः ॥ * ॥ ननु मया सर्वमतान्यवगतानि किं तु त्वद्भक्तानां किं मतं तत्त्वं ब्रूहीत्यपेक्षायामाह–भोः उद्धव प्रणयिन् चतुर्विंशाध्याये सत्कार्यवादिनाम् अष्टाविंशाऽध्याये तथैवाऽसत्कार्यवादिनाञ्च मतमुक्तं मद्भक्तास्त्ववित्रादिनः सत्यवादिनः सन्तो वस्तुतस्तु तदुभयमतमध्यतो नैव भवन्तीत्याह–मर्त्य इति । मनुष्यो यदा यादृच्छिकमद्भक्तकृपाप्रसादात्त्यक्तानि समस्तानि नित्यनैमित्तिककाम्यानि कर्माणि येन सः । निवेदितात्मा मत्स्वरूपभूताय मन्मंत्रोपदेशकाय गुरवे " योऽहं ममास्ति यत्किंचिदिह लोके परत्र च । तत्सर्वं भवतो नाथ चरणेषु समर्पितम् ॥ " इति वचसा मनसा च समर्पिताहं

श्रीशुक उवाच ॥ स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ॥ बद्धांजलिः प्रीत्युपरुद्धकंठो न किंचिदूचेऽश्रुपरिप्लुताक्षः ॥३५॥ विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन्ब हुमन्यमानः ॥ कृतांजलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविंदम् ॥ ३६ ॥ उद्धव उवाच ॥ विद्रावितो मोहमहांधकारो य आश्रितो मे तव सन्निधानात् ॥ विभावसोः किं नु समीपगस्य शीतं तमो भीः प्रभवंत्यजाद्य ॥३७॥ प्रत्यर्पितो मे भवताऽनुकंपिना भृत्याय विज्ञानमयः प्रदीपः ॥ हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत्समीयाच्छरणं त्वदीयम् ॥ ३८ ॥

कर्तुमिष्टो भवति ततश्चामृतत्वं मोक्षं प्रतिपद्यमानो मयाऽऽत्मभूयाय मदैक्याय मत्समानैश्वर्यायेति यावत् । कल्पते योग्यो भवति । वै ध्रुवम् ॥ ३४ ॥ आदर्शितो योगमार्गो यस्मै सः ॥ ३५ ॥ प्रणयेनावघूर्णं क्षुभितं चित्तं धैर्येण विष्टभ्य बहु मन्यमान आत्मानं कृतार्थं मन्यमानः ॥ ३६ ॥ मे मया य आश्रित आसीत्स तव सन्निधानेनैव विद्रावितः । प्रभवंति किं नु बाधाय समर्था भवंति । हे अजाद्य ब्रह्मणोऽपि जनक ॥ ३७ ॥ किंच यद्यपि तव सन्निधानादवगतस्तथाऽप्यनुकंपिना भवता विज्ञानमयः प्रदीपश्च प्रत्यर्पितः स्वमाययाऽपहृतः पुनः समर्पितोऽतस्तव कृतज्ञो यस्त्वया कृतमनुग्रहं जानाति स को नाम त्वदीयं पादमूलं हित्वाऽन्यच्छरणं समीयादाश्रयेत् ॥ ३८ ॥

तास्पदममतास्पदो भवति तदा तत्क्षणमारभ्यैव स मर्त्यो मे मया चिकीर्षितः विशिष्टः कर्तुमिष्टः । मत्प्रतिपाद्यमानेन मद्भक्त्याभासेन योगिज्ञानिप्रभृतितोऽपि विलक्षण एव कर्तुमीप्सितः स्यादिति । तेन मया कार्यः सत्यभूत एव नाप्यविद्याकार्यो मिथ्याभूत एव मत्कार्यो गुणातीत एव सन् अमृतत्वं मृतं नाशस्तदभाववत्त्वं प्रतिपद्यमानः मया सहैवात्मभूयाय स्वभूत्यै कल्पते योग्यो भवति चकारेणैतत्फलमननुसंहितं फलं तु प्रेमवत्पा र्षदत्वमिति ॥ ३४ ॥ स उद्धवस्तदा भगवद्वचनोत्तरकाले । आनंदमग्नत्वात्किञ्चिदपि वक्तुं न समर्थोऽभूदिति भावः ॥ * ॥ **संदर्भस्तु**—एवमा सम्यग्दर्शितो योगस्य स्वेन संयोगस्य मार्गो यस्मै सः ॥ ३५ ॥ विष्टभ्य निरुध्य ॥ * ॥ प्रणयेनावघूर्णमवगतघूर्णाकं महाव्यग्रं चित्तं धैर्येण तद्दत्तशक्त्यैव बहु मन्यमान इति मुहुरुच्छलद्वियोगदुःखावरणाय तादृशतदुपदेशप्रसादलाभमयस्वभाग्यसम्भावनया आत्मानमुल्लासयितुमिच्छन्नित्यर्थः ॥ ॥ ३६ ॥ विभा ज्योतिरेव वसु धनं यस्य तस्याग्नेः सूर्यस्य वा सत इति शेषः । "विभावसुः पुमान्सूर्ये हारभेदे च पावके" इति मेदिनी । किंन्विति वितर्के, नेत्यर्थः । 'किं नु प्रश्नवितर्कयोः' इति मेदिनी । भीर्भयम् ॥ * ॥ मोहः पुनस्तत्प्राप्यसम्भावनादिरूपः मया कर्त्राऽऽश्रितः स्वीकृतः स तव सान्निध्येनैव कृपावलोकनाद्यमृतवर्षिसांनिध्याभावेनैव विद्रावितोऽभूत्किमुत तादृशोपदेशादित्यर्थः ॥ * ॥ **विश्वनाथस्तु**—यो मे मया मोहमहांधकार आश्रितः सर्वयादवविराजितमत्प्रभुसहिता द्वारकेयं परिच्छिन्नैव संप्रति नश्वरेति विचारमयः स त्वया विद्रावित इति तृतीयस्कंधदर्शितोद्धवप्रश्नानन्तरमनन्यज्ञेयस्वीयसिद्धान्तरहस्यप्रदीपम् "आदिदेशा रविंदाक्ष आत्मनः परमां स्थितिम्" इति च न व्यंजितमुद्धवायादात्तत्कथा एतदुत्तराप्यत्रैवोक्ता ज्ञेया । अतः काल‌द्वयोद्भूतं श्रीवाराहचेष्टितमेकत्रैवाह मैत्रेय इतिवत् ॥ ३७ ॥ यतो भवानतीव दयालुरतो हेतोः । अन्यद्दे वतांतरम् । न कोऽपि किमपीत्यर्थः ॥ * ॥ प्रत्यर्पित इति—मया तुभ्यमात्मबुद्धीन्द्रियादिसहितं शरीरमर्पितं त्वया तु विज्ञानमयः स्वानुभवमयः प्रदीपः प्रत्यर्पितः, अतोऽहं प्रतिक्षणमेव सर्वदेशकालवर्तिनः स्वपरिकर विशिष्टस्य तव माधुर्यानुभवेन त्वया पुष्टीकृत एव संप्रति वर्ते मच्छरीरेणानेन यत्त्वं चिकीर्षसि तत्कुरु यत्र क्वापि प्रस्थापयितुमिच्छसि तत्र प्रस्थापय अत्रैव वा स्थापयेति भावः । यतः कृतज्ञस्तव भृत्यस्तव पादमूलं हित्वाऽ

वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यंधकसात्वतेषु ॥ प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥ नमोऽस्तु ते महायोगिन्प्रपन्नमनुशाधि माम् ॥ यथा त्वच्चरणांभोजे रतिः स्यादनपायिनी ॥ ४० ॥ श्रीभगवानुवाच ॥ गच्छोद्धव मयाऽऽदिष्टो बदर्याख्यं ममाश्रमम् ॥ तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥

किंच दाशार्हादिषु त्वया यः स्वमायया स्नेहपाशः प्रसारितः स त्वयैवात्मतत्त्वज्ञानशस्त्रेण वृक्णश्छिन्नः॥ ३९॥ एवं यद्यपि त्वया बहूपकृतं तथाऽप्येतावत्प्रार्थये इत्याह । नमोऽस्त्विति । अनुशाध्यनुशिक्षय । अनुशासनीयमाह । यथेति । मुक्तावप्यनपायिनी ॥ ४० ॥ तदुक्तमोमित्यंगीकृत्य तथापि मयाऽऽदिष्टो लोकसंग्रहार्थमेतावत्कुर्वित्याह ।

न्यत्तदीयमपि स्थलं शरणं स्वगृहमपि को नाम समीयात् गच्छेत् । यदि च तत्रापि वर्तमानस्य साक्षादनुभवः स्यात्तदा गच्छेदपि न काप्यत्र हानिः प्रत्युत तन्निदेशपालनञ्चेति भावः ॥ ३८ ॥ अन्यदाह—किञ्चेति ॥ * ॥ किञ्च—सृष्टिवृद्धये स्वमायया यः स्नेहपाशस्त्वया प्रसारितः स मया त्वदुक्तेनात्मसुबोधहेतिना वृक्णः किन्तु भवत्संबंधेनैव स मया तेषु स्वीकृत इत्यर्थः । यद्वा—मे मया दासार्हादिषु त्वंन्मिलनात्पूर्वं स्नेहपाशो वृक्णश्च छिन्नोऽपि कंसवधानन्तरं स्वयमेव स्वमायया भक्तविषयकृपया सृष्टिविवृद्धये जगतः स्वस्मिंस्तादृशस्नेहप्रवृद्धये प्रसारितः। कीदृश्या मायया—आत्मसुबोधस्य ब्रह्मानुभवस्यापि हेतिना छेदकरूपयेत्यर्थः । ततः स कथं मया त्यज्यतामिति भावः ॥*॥ अत्र **विश्वनाथः**—ननु तर्हि यादवादिषु स्नेहं छित्त्वा कथं गन्तुं प्रभविष्यसि तत्राह—वृक्णश्छिन्नः । अयमर्थः—दासार्हादिषु मे द्विविधः स्नेहपाशः, तत्र यः स्वमायया त्वया सृष्टिविवृद्धये प्रसारितः दासार्हादयः स्वपुत्रपौत्रादिरूपेण पुनरभीक्ष्णं वर्धंतां ततश्चास्मत्समृद्धिः सदैवाकल्पं सर्वदिग्देशव्यापिनी सर्वविजयिनी भूयादित्याभिमानिकः स्नेहपाशः स्वमायया आत्मसुबोधास्त्रेण वृक्ण एव । यस्तु त्वद्रूपगुणकथापरिचर्या माधुर्यास्वादनिबन्धनस्तेषु स्नेहपाशः स तु मे भूषणभूतो वर्तत एव, त्वया ज्ञानदीपार्पणात् यत्रैव यास्यामि तत्रैव वृष्ण्यादिसहितस्त्वद्विशिष्टामेव द्वारकां साक्षाद्द्रक्ष्यामि तत्र कृतकार्यस्त्वयाऽऽनेष्यमाण एष्यामीति ॥ ३९ ॥ प्रार्थनांतरं द्योतयति—एवमिति । मुक्तौ जीवन्मुक्तावस्थायामपि शुकसनकादिवदनिवर्त्या ॥ * ॥ **संदर्भः**—तथापि परमाभीष्टं तव कृपयैव संपत्स्यत इति पुनः सकाकु प्रणमन्प्रार्थयते—नम इति । मां प्रपन्नमनुशाधि संपादयेत्यर्थः । तस्याश्च प्रपत्तेर्वैशिष्ट्याय स्पृहयन्नाह—हे महायोगिन् महायोगबलेन सर्वत्रैव मां स्वानुभावनयाऽऽनंदयितुं प्रवृत्त इति **विश्वनाथः** ॥ * ॥ **दीपिका**—मुक्तावप्यनपायिनीत्युक्त्या तादृश्यै क्यमुक्तिर्न स्याद्यस्यां विषयाश्रयादिविवेकाभावाद्रतिर्न स्यात् किंतु प्रेमसेवोपयोगिनी स्यात् । “ विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः ” इति पाद्मोक्तेरित्यभिप्रेतम् ॥ ४० ॥ यद्यपि मयि परप्रेमवतां किंचित्कृत्यं नास्ति तथापीति । तत्र बदर्याख्ये । मत्पादाच्च्युतं यत्तीर्थं गंगारूपं तस्य उदके । उपस्पर्शनमाचमनम् ॥ * ॥ यद्यपि तव प्रार्थिता मच्चरणरतिः सिद्धैव सा च मद्विरहेण स्वत एव वृद्धिमुपैति ततो न तदर्थं साधनान्तरमपेक्ष्यते तथापि मद्विरहेण यस्त्वमवश्यं कष्टं करिष्यसि तल्लोकशिक्षार्थं साधनानुसारेणैव कुरु न तु हठादुपतापादिना । ततश्च लोकशिक्षालक्षणमदभीष्टसंपादने कृते त्वदभीष्टमपि सेत्स्यतीत्याशयेनाह—गच्छेति सार्धचतुष्केण । तत्र गच्छेत्येवाज्ञापनमन्यत्तु तत्र गतत्वेन स्वभावेन च स्वतः सेत्स्यतीत्यनुवादमात्रम् । तत्र मत्पादेत्यादिचतुष्टयं गतत्वेन सुखनिस्स्पृहत्वादिकं स्वभावेनैवेति ज्ञेयम् । बदर्याख्यमिति—हरेः प्रस्थापन मत्र । मम मुहुर्लीलामयभूमावस्य वियोगातुरस्य स्थितौ कृच्छ्रातिशय एव स्यादित्यभिप्रायात् । ईक्षया हेतुनाऽलकनंदया विधूतमशेषकल्मषं दुष्टस्पर्शनादिजं दुःखं येनेति वास्तवोर्थः । विविक्तं सुवि चारितम् ‘ यथा त्वच्चरणम्भोजे ’ एत्य तत्पर्यवसानं यत्तदेवेत्यर्थः । तिस्रः कनिष्ठमध्यमोत्तमत्वेन प्रसिद्धास्तास्ता गतीरतिक्रम्य ततस्ताभ्यः प्रसिद्धाभ्योऽपि परामुत्कृष्टामेष्यसि । तां कामिति शंकिष्यतेऽ

१ अत्रान्वयानुरोधादग्रिमसार्द्धत्रयपद्यपदानामप्याशयाऽऽविष्कारो बोध्यः ।

ईक्षयाऽलकनंदाया विधूताशेषकल्मषः॥वसानो वल्कलान्यंग वन्यभुक्सुखनिःस्पृहः॥४२॥तितिक्षुर्द्वंद्वमात्राणां सुशीलः संयतेंद्रियः॥शांतः समाहितधिया ज्ञानविज्ञानसंयुतः ॥४३॥ मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन्॥मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव॥अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम्॥४४॥श्रीशुक उवाच॥स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः॥शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिंचदद्वंद्वपरोऽप्यपक्रमे॥४५॥

गच्छेति । आदिष्टो नियुक्तः ॥ ४१ ॥ स्नानादेः पूर्वमेव मत्पादतीर्थोदकभूताया अलकनंदाया गंगाया ईक्षया । वसानः परिदधानः ॥४२॥ द्वंद्वमात्राणां शीतोष्णादिविषयाणाम् । सुशील आर्जवादिस्वभावः ॥ ४३ ॥ ते त्वया विविक्तं सुविचारितम् । तिस्रस्त्रिगुणात्मिका गतीरतिक्रम्य ॥ ४४ ॥ हरिमेधसा संसारं हरति तादृशी मेधा यस्य तेन

साविति कृपया स्वयमेवाह—मामिति । यथैवोक्तं श्रीमदर्जुनं प्रति—'सर्वगुह्यतमम्' इत्यादौ 'मामेवैष्यसि सत्यं ते' इति ॥ * ॥ **विश्वनाथस्तु**— भो उद्धव सर्वयादवेषु मत्परिकरेषु मध्ये मत्तुल्यत्वात्त्वमेव मत्प्रतिमूर्तिरसि "नोद्धवोण्वपि मन्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥" इति मदुक्तेर्यत्कृत्यमहं स्वेन साधयामि तत्त्वया साधयितुं शक्नोम्यत एव पुरा व्रजभूमिं प्रति त्वमेव स्थापितो यथा तथैव संप्रति त्वां बदरिकाश्रमं प्रस्थापयितुमिच्छामि । तत्र हि मदंशश्रीनरनारायणादिमहामुनीन्द्रा मां दिदृक्षंते मिथिलादिभूतलप्रदेशतलवैकुंठादीन्पूर्वं गतवता मया तत्रतत्रत्याः श्रुतदेवबहुलाश्वबलिवैकुण्ठनाथाद्या मां दिदृक्षवः स्वदर्शनदानेन स्वीयज्ञानाद्युपदेशेन च ते कृतार्थीकृतास्तथाऽधुना बदरिकाश्रमो गन्तुं न शक्यते । सपादशतवर्षरूपस्वावतारमर्यादामयस्य समाप्तीभूतत्वादतोऽधुना 'प्रपन्नमनुशाधि माम्' इति यदि मां प्रार्थयसे तर्हि संप्रतीयमेव ममाज्ञेति मनसैव संलप्य प्रकटमाह—गच्छेति । हे उद्धवेति—त्वमन्वर्थसंज्ञत्वात्सदैव सर्वजनोत्सवप्रदो भवस्येवाधुना तु स्वनिष्ठज्ञानवैराग्यादिस्वशक्तिप्रदानेनापि त्वं तत्र जनोत्सवविशेषप्रदोपि मया कृत इति भावः ॥ ४१ ॥ स्नानादेरिहादिनोपस्पर्शग्रहः । विधूताशेषकल्मषो निरस्ताखिलपापः । ईक्षया दर्शनेन । 'दृष्टा जन्मशतं पापम्' इत्युक्तेः ॥ * ॥ ईक्षया स्वकर्तृकावलोकनेनैवालकनन्दाया विधूतं खण्डितमशेषकल्मषं येन सः 'तेष्वास्ते ह्यवभिद्धरिः' इति नत्रमोक्तेरुद्धवस्य सर्वे वैष्णवाग्रगण्यत्वादत्राशेषमिति पदमुपन्यस्तम् ॥ ४२ ॥ ० ॥ * ॥ द्वन्द्वाः सुखदुःखादयः ॥ ॥ ४३ ॥ यच्छास्त्रसारलक्षणं ज्ञानं तत् । अनुभावयन् मुहुश्चिन्तयन् । मद्धर्मोऽसंगत्वलक्षणस्तत्र निरतः । ततस्ताभ्यो गतिभ्यः । यद्वा—मत्तोऽनुशिक्षितं श्रवणसंपादितं विविक्तं युक्तिभिर्मननेन संभावितं तन्मय्यावेशितवाक्चित्तोऽनुभावयन्निदिध्यासनं कुर्वन् भव ततोऽपरोक्षाप्रतिबद्धबोधेन तिस्रो गतीस्त्रिगुणोपाधीनतिव्रज्याऽपबाध्य तेभ्यः परं मामेष्यसीति ॥ * ॥ मत्तः सकाशाद्यद्भक्तिज्ञानवैराग्यादिकमनुशिक्षितं तत एव विविक्तं विवेकविशेषमनुभावयन् तत्रत्यश्रीनरनारायणादींस्त्वां पृच्छत इति शेषः । अनुवर्णनेनानुभवविषयं कारयन् मय्यावेशितवाक्चित्तत्वादेव मद्धर्मा मन्निष्ठा ये बुद्धिप्रतिभासर्वज्ञत्वसर्वशक्तित्वादयस्तन्निरतस्तत्तद्युक्तो भवेति । तत्तत्समाधानयोग्यं तीर्थमाशीर्वादः कृतः । ततश्च तिस्रस्त्रिगुणात्मिका भूतिप्रकटलीलायाः प्रपंचाप्रपंचमिश्रत्वात गतीस्तत्र प्रसिद्धस्थानानि तुच्छतया परित्यज्येति लोकोक्तिः । तत्रत्यान्मुनीन् गुणत्रयगतीरतिक्रान्तान्कृत्वेत्यर्थः । निष्पादितमदादेशो मामेष्यसि योगबलेन मयैवान्विष्यमाणस्त्वमत्रैव मत्समीपमागमिष्यसीत्यर्थः । यद्वा—ततः श्रीबदरिकाश्रमवासतपसोऽनंतरं मां नित्यविहारिणं श्रीगोवर्धनोपकण्ठे श्रीकुसुमसरोवरे एष्यसि मन्नित्यलीलायां प्रवेक्ष्यसीति तत्त्वम् । तच्च स्कान्दीयश्रीमद्भागवतीयमाहात्म्ये वर्णितमस्ति—" साधनभूमिर्बदरी व्रजता कृष्णेन मंत्रिणे प्रोक्ता । तत्रास्ते स तु साक्षात्तद्वयुनं ग्राहयँल्लोकान् ॥ फलभूमिर्व्रजभूमिर्दत्ता तस्मै पुरैव सरहस्या । फलमिह तिरोहितं सदा तदिहैवास उद्धवो लक्ष्यः ॥ गोवर्धनगिरिनिकटे सखीस्थले यद्रजःकामः । तत्रयाऽङ्कुरवल्लीरूपेणास्ते स उद्धवो नूनं [illegible] आत्मोत्सवरूपत्वं हरिणा तस्मै समर्पितं नियतम् । तस्मात्तत्र स्थित्वा कुसुमसरःपरिसरे सवज्राभिः ॥" इति कालिया श्रीकृष्णपट्टराज्ञीभ्यस्सवज्रनामभ्य उक्तम् ॥ ४४ ॥ प्रातात्मतत्त्वेनाद्वन्द्वपरः ॥ * ॥ [illegible]सा प्रेम्णा मनो हरंती मेधा यस्य तेन अपक्रमे ततोऽपसृतिसमयेऽद्वन्द्वपरोऽपि प्रेममूलकशोकमोहादिद्वन्द्वविशिष्टोऽभूदित्यर्थः ॥ ४५ ॥

सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ॥ कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनःपुनः ॥ ४६ ॥ ततस्तमंतर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ॥ यथोपदिष्टां जगदेकबंधुना ततः समास्थाय हरेरगाद्गतिम् ॥ ४७ ॥ य एतदानंदसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ॥ कृष्णेन योगेश्वरसेवितांघ्रिणा सच्छ्रद्धयाऽऽसेव्य जगद्विमुच्यते ॥ ४८ ॥

श्रीकृष्णेन । अद्वंद्वपरोऽपि सुखदुःखविनिर्मुक्तोऽपि । अपक्रमे निर्गमनसमये ॥ ४५ ॥ किंच सुदुस्त्यजः स्नेहो यस्मिंस्तेन वियोगात्कातरो भीतोऽत एव तं परिहातुमशक्नुवन्नातुरोऽतिविह्वलः सन्कृच्छ्रं कष्टं ययौ प्राप । ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रदतिनिर्बंधरूपया तदाज्ञया तं पुनःपुनर्नमस्कृत्य ययौ । अत्र च । "पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः" इत्यादितृतीयस्कंधोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन्भगवतः प्रभासयात्रामुपश्रुत्य शनैः पृष्ठतो गतः सन्नुपसंहृतनिजकुलं भगवंतमेकांते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं तत्त्वमाकलय्य तदाज्ञातो ययाविति द्रष्टव्यम् ॥ ४६ ॥ विशालां बदरिकाश्रमं गतः सन्हरेर्गतिमगात् । कथंभूताम् । तेनैव जगदेकबंधुना यथोपदिष्टाम् "तदाऽमृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पते वै ॥ अतिव्रज्य गतीस्तिस्रो मामेष्यति ततः परम्" इत्येवमुक्तप्रकाराम् ॥ ॥ ४७ ॥ आनन्दसमुद्रो भगवद्भक्तिमार्गस्तस्मिन्संभृतमेकीकृतमेतयः सच्छ्रद्धया आसेव्य ईषदपि सेवित्वा वर्तते स विमुच्यत इति किं वक्तव्यम् । तत्संगाज्जगदपि विमुच्यत

प्रेमाधिक्यमाह—किञ्चेति । अत एव वियोगकातरत्वादेव । तं श्रीकृष्णम् । तेनैव श्रीकृष्णेनैव । अतिनिर्बन्धोऽतिहठः । तदाज्ञया श्रीकृष्णाज्ञया । तं श्रीकृष्णम् । इह पूर्वोक्तविरोधपरिहारमाह—अत्र चेति । इहापि तृतीयस्कन्धानुसरणेनैव व्याख्येयमन्यथा विरोधो दुष्परिहरः स्यादिति ॥ * ॥ ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रत् अतिनिर्बंधरूपया तदाज्ञया तं पुनःपुनर्नमस्कृत्य ययौ । तत्र गच्छन्नपि तृतीयस्कन्धोपक्रमोक्तकथानुसारेण पुनरपि परावृत्य भगवंतमेकान्ते दृष्ट्वा संदिग्धार्थान्पृष्ट्वा तदुत्तराधिगतसमस्तभगवल्लीलातत्त्वासिद्धान्तः 'विद्रावितो मोहमहांधकारः' इत्याद्युक्त्वा पुनरपि तदाज्ञया ययाविति द्रष्टव्यम् ॥ ॥ ४६ ॥ ततो गमनोत्तरम् । तं श्रीकृष्णम् । स्वयं भगवतोऽवाप्तभगवत्तत्त्वत्वान्महाभागवत उद्धवः । तपो निदिध्यासनम् 'तप—आलोचने' धातुः । गतिं स्वरूपस्थितिम् । अगात्प्राप ॥ * ॥ हरेर्गतिं तदीयनित्यप्रकटप्रकाशद्वारकाख्यं श्रीव्रजं वा धामागात् ॥ ४७ ॥ न केवलमेतज्ज्ञानमुद्धवस्यैव फलप्रदं किन्त्वन्येषामपि तत्सेविनामित्याह—य इति । सच्छ्रद्धया भक्तियुक्तश्रद्धया । इत्यर्थ इति—तत्संगेनैतज्ज्ञानानवरतास्थित्या सर्वो जनः संसारं तरतीति भावः ॥ * ॥ आनंदसमुद्रो भगवद्भक्तियोगस्तेन संभूतं सम्यग्धृतम् एतद्यः सच्छ्रद्धया आसेव्य ईषदपि सेवित्वा वर्तते स विमुच्यत इति किं वक्तव्यम्, तत्संगेन जगदपि विमुच्यत इति भावः।

भवभयमपहंतुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृंगवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद्भृत्यवर्गान्पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥४९॥ इति श्रीमद्भागवते महापुराण एकादशस्कंध उद्धवबदरीप्रवेशो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ राजोवाच ॥ ततो महाभागवत उद्धवे निर्गते वनम् ॥ द्वारवत्यां किमकरोद्भगवान्भूतभावनः ॥ १ ॥ ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ॥ प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥

इत्यर्थः ॥ ४८ ॥ एवं कृतोपदेशं जगद्गुरुं प्रणमति । भवभयमिति । भवः संसारो भयं च जरारोगादिनिमित्तं तदुभयं निवृत्तानां प्रवृत्तानां च भृत्यवर्गाणां यथायोग्यमपहंतुं योऽमृतद्वयमुपजह्रे उद्धृतवान् । तदेवाह । वेदसारमेकम् । किं तत् । ज्ञानविज्ञानरूपं च तत्सारं श्रेष्ठं च । भृंगवत् भृंगो यथा पुष्पमकोपयन्नेवामृतमुपहरति तथा स्वयं स्वकृतवेदानुसारेणैवोदधितश्चैकं तच्चोभयं यथायथं भृत्यवर्गानपाययत्तं नतोऽस्मीति ॥ ४९ ॥ येनानुकंपितं विश्वमुद्धवप्रश्ननिर्णयैः ॥ तं वंदे परमानन्दं नंदनंदनरूपिणम् ॥ १ ॥ इति श्रीमद्भागवत एकादशस्कंधे श्री० टीकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥छ॥ त्रिंशे तु प्रागुपक्षिप्तमौसलच्छलतो हरिः ॥ स्वधाम गंतुमन्विच्छन्संजहार निजं कुलम् ॥ ॥ १ ॥ विरागाय पुरा घोरमुपक्षिप्तं हि मौसलम् । कथावसाने तत्रैव विशेषं परिपृच्छति ॥ २ ॥ तत इति त्रिभिः ॥ १ ॥ ब्रह्मशापोपसंसृष्टे कुले सति । अयं भावः ।

भक्तिमार्गे ज्ञानामृतस्यैकीकृतत्वं सर्वत्र कृष्णैकस्फूर्त्या तद्भावभावितत्वम् ॥ ४८ ॥ कृत उपदेशो येन तम् । जगतां गुरुं श्रीकृष्णं मुनिः श्रीशुकः प्रणमति । रोगादीहादिना मरणग्रहः । निवृत्तानां संसारं, प्रवृत्तानां रोगादि । तदेवामृतद्वयमेव । निगमकृद्वेदविभागकर्ता । यथाश्रुतार्थस्वीकारे तु " अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा " इति श्रुतिव्याकोपः स्यादिति ॥ * ॥ **दीपिका**–भवभयमित्यर्द्धेन कृष्णावतारचरितमुद्दिश्यते, अमृतमित्यर्द्धेन त्वजितावतारचरितम् । एवं यद्यप्युभयमपि नमनीयं तथापि कृष्णसंज्ञं नतोऽस्मीत्युक्त्या तस्यैव स्वयं भगवत्त्वेन स्वोपास्यत्वं व्यंजितम् । तदेवामृतद्वयमेव । आद्यं सर्वावतारावतारिमूलरूपम् । श्रीस्वामिपादा अपि तस्यैव स्वोपास्यत्वं दर्शयितुं तथैव मंगलमासज्जयंति–येनेति । नंदनंदनरूपिणमित्येव सार्वत्रिकः पाठः । 'श्रीकृष्णं नररूपिणम्' इति तु मत्सरकल्पितः । " येनानुकम्पितं विश्वं कीर्तनामृतसंप्लवैः । तं वन्दे कृष्णचैतन्यं पामरोद्धारकारिणम्॥"॥*॥**सन्दर्भस्तु**–एकोवतारस्तावद्भवभयमित्यादिलक्षणः अन्यस्त्वमृतादिलक्षणः, यद्यप्येवमेव गुणत्वेन द्वयमपि नमनीयं तथाप्याद्यं प्रथमं कृष्णसंज्ञं नतोस्मीति तदा तस्यादरो दर्शितः। युक्तमेव च तस्यतस्य तदिति तं विशिनष्टि–पुरुषं सर्वादिमित्यर्थः " पूर्वमेवाहमिहासम् " इति, " तत्पुरुषस्य पुरुषत्वम् " इति श्रुतेः । ऋषभं श्रेष्ठं चेति ॥ * ॥ **विश्वनाथस्तु**–सर्वोते जगद्गुरुं प्रणमति–भवभयमिति । वेदेभ्यः सारमुपजह्रे उद्धृतवान् । नन्वन्ये मुनयो दर्शनकर्तारः वेदसारमुपजह्रुरेव, सत्यं, ते दुर्गमस्य वेदस्य तात्पर्यं न सम्यगभिजानंतीति न तद्वाक्यं विश्वस्यते, अयं भगवांस्तु न तथेत्याह–निगमकृदिति । यो हि यच्छास्त्रस्य कर्ता स एव खल्वतिदुर्गमस्यापि तस्यार्थं जानात्येवेति भावः । भृंगवदिति–वेदपुष्पोद्यानस्य मकरंदमित्यर्थः । भृत्यवर्गान् अपाययत् अभक्तानसुरांश्च वंचयामासेत्यर्थः । दृष्टान्ताभिप्रायेणाह–अमृतमुदधितश्चोदधिसारमित्यर्थः । मोहिनीरूपेण देवानेवापाययत् असुरान् वंचयामासैव तं नतोस्मि ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्ध एकोनत्रिंशोऽध्यायः ॥ २९ ॥ प्रागुपक्षिप्तं प्रथमाध्यायकथितं यत् मुसलसंभववृत्तं तस्य छलेन व्याजेन ( १ ) । विरागाय मुसलजनाशभयेन वैराग्यं कर्तुं तत्रैव मुसलजनाशशाप एव । विशेषं कथं भगवान्स्वकुलं संहृत्य स्वधाम गत इत्येवंरूपं संशयम् ( २ ) । ततो भगवदुपदेशानन्तरम् । भूतभावनः सर्वपालकः ॥ * ॥ ० ॥ १ ॥ प्रश्नाशयमाह–अयं भाव इति । यद्यपि नहीति तथापि यादवत्वेत्यादि । सोऽपि शापोऽपि । यतो मान्योऽतो हेतोः । तत्ततश्शापस्य

प्रत्याकृष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम् ॥ यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥३॥ ऋषिरुवाच ॥ दिवि भुव्यंतरिक्षे च महोत्पातान्समुत्थितान् ॥ दृष्ट्वासीनान्सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥

भगवति न हि शापः प्रभवति । यादवत्वानुकरणाच्च सोऽपि कथंचिन्मान्यः अतः किमकरोदिति । तदेतदुक्तं कथमत्यजदिति । सर्वनेत्राणामिति सर्वेंद्रियोपलक्षणम् ॥ २ ॥ तत्प्रपंचयति । प्रत्याकृष्टुमिति । यस्मिन् रूपे लग्नं नयनं प्रत्याकृष्टुं परावर्तयितुमबला न शेकुः । यच्च कर्णाविष्टं कर्णरंध्रेण प्रविष्टं सत्सतामात्मनि लग्नं लिखितमिव तिष्ठति ततो न सरति न निर्गच्छति । यस्य श्रीः शोभा संकीर्त्यमाना कवीनां वाचां रतिमुल्लासविशेषं जनयति । तेषां मानं जगत्पूज्यतां जनयतीति किं नु वक्तव्यम् । यच्च विष्णो रूपं जिष्णोरर्जुनस्य रथे स्थितं दृष्ट्वा युधि मृतास्तत्साम्यं सारूप्यमीयुः प्राप्तास्तत्केन रूपेणात्यजदित्यन्वयः ॥ ३ ॥ दिवि सूर्यपरिवेषादीन् भुवि भूकंपादीनंतरिक्षे दिग्दा

मान्यत्वादेव कथमत्यजदित्येतदुक्तम् । उपलक्षणत्वादेव सर्वेंद्रियप्रियमित्यर्थः । अत्यजदंतरधात् ॥ * ॥ कथमत्यजत् नात्यजदेवेत्यर्थः । इति स्वहार्दमपि स्पष्टीकृतम् । तत्र हेतुः—सर्वप्रेमास्पदत्वेन परमानन्दरूपत्वात् । सर्वपदेनात्मारामादयोपि गृह्यंत इति **संदर्भः** ॥ * ॥ **विश्वनाथस्तु**—ब्रह्मशापेनोपसंसृष्टे उपसंहृते साति सर्वेषां नेत्राणां प्रेयसीमतिप्रियां तनूं कथमत्यजत् ॥ * ॥ केषांचिन्मुनीनां मते यत्तस्य तनुत्यागः श्रूयते स कथं संभवेन्नैव संभवेदित्यर्थः । तत्तनोः सच्चिदानन्दरूपत्वेन तत्त्यागासंभवात्, विप्रः खलु विप्रत्वं स्वीयं कथं त्यजेदित्युक्ते विप्रत्वं नैव त्यजेदिति लभ्यते । यद्वा—सविशेषणे हि विधिनिषेधौ ' सति विशेष्ये बाधे विशेषणमुपक्रमते ' इति न्यायेन तनूमिति विशेष्यपदे बाधात् प्रेयसीमिति विशेषणपद एवान्वितस्त्यागोऽयं ज्ञेयः । सजलकलशं पांथस्त्यजतीत्युक्ते भारवहनश्रमान्निर्जलीकृतस्य कलशस्य ग्रहणं यथा प्रतीयत इति **दीपिका** ॥ * ॥ कथमत्यजत् लौकिकदृष्ट्या मायिकचारित्रं किमप्यकरोदेव तद् ब्रूहीत्यर्थः ॥ २ ॥ तत् सर्वेन्द्रियप्रियत्वम् । परावर्तयितुं व्यावर्तयितुम् । यत्तद् वपुः । आत्मनि मनसि । ततो मनसः । युधि महाभारते । मृता भीष्मादयः । तद् वपुः ॥ * ॥ **दीपिका**—तत् तनोः सर्वेन्द्रियप्रेष्ठत्वं प्रपञ्चयति—त्यागाऽसंभवे हेत्वभिधानेन विस्तारयति । अबला अत्र गोप्यः " गोपीनां परमानंद आसीद्गोविन्ददर्शने । क्षणं युगशतमिव यासां येन विनाऽभवत् ॥ " इत्यादिभिस्तासामेव तथा प्रसिद्धेः । ' प्रणयरशनया धृतांघ्रिपद्मः ' इति विरोधात्तद्रूपं कथमन्यथा कर्तुं शक्यत इत्येको हेतुः । सतामात्मारामगुरूणामात्मनि ब्रह्मानन्दनिमग्नेपि मनसि तत्त्यागे संभवति " चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् " इति न्यायेन तत उत्थाय चित्तं न लग्नं स्यादिति द्वितीयो हेतुः । संकीर्त्यमाना इत्यर्थादध्याहृतम् । ' किन्तु मानम् ' इत्येव पाठः अग्रे तथा व्याख्यानात् । कवीनां व्यासादीनामित्यन्यथा तेषां नश्वरकीर्तनेऽकवित्वं प्रसज्जेतेति तृतीयो हेतुः । सर्वतोपि गारिष्ठं तुरीयं हेतुमाह—यच्च जिष्णोरथमित्यादिना तत्साम्यम् । " मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् । नेच्छंति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥ " इत्यादिनाऽकालविप्लुतत्वाभिधानात्तद्रूपस्य तथात्वं कथं संभाव्येतेति कथमत्यजदिति तत्त्वविचारे तदसंभवात्केनापि रहस्येन भाव्यमिति भावः ॥ * ॥ **विश्वनाथोपि**—तनोः त्यागेऽनुपपत्तीर्दर्शयति—अवला नित्यप्रेयस्यो रुक्मिण्याद्याः । सतां भवद्विधानामात्मारामाणामात्मनि लग्नं लिखितमिव तिष्ठति ततो न सरति । साम्यं सायुज्यं प्राप्ता अतस्तद्वपुर्गुणातीतं साक्षाद्ब्रह्मैव भवेत् । न हि गुणमयवस्तुदर्शनेन सायुज्यं भवेत् । अत एव श्रुतिभिरुक्तम्—" निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् " इति । नापि गुणमयं सतामात्मलग्नं तिष्ठेत्, नापि नित्यप्रेयस्यो लक्ष्म्याद्याह्लादिनीशक्तयः प्राकृते खल्वासज्जन्ति तस्मात्तद्वपुस्त्यागं वर्णयन्तो मुनयस्त्वन्मायामोहिता एवेति ॥ ३ ॥ आदिना धूमकेत्वादीनाम्, द्वितीयेन कूपादिशब्दानाम्, तृतीयेन संध्याविकृत्यादीनां च

श्रीभगवानुवाच ॥ एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ॥ मुहूर्तमपि न स्थेयमत्र नो यदुपुंगवाः ॥ ९ ॥

हादीन्महोत्पातान् स्वयमेवोत्पादितत्वादन्यैर्दुष्प्रतीकारान् ॥ ४ ॥ यमस्य केतवो ध्वजा इव मृत्युसूचका इत्यर्थः । नोऽस्माभिः ॥ ५ ॥

ग्रहः । अन्यैः स्वेतरैः । दुष्प्रतीकारान्व्यावर्तयितुमशक्यान् । इदं वक्ष्यमाणम् ॥ * ॥ ० ॥ ४ ॥ घोरा दुःखप्रदाः । इत्यर्थ इति—यथा ध्वजदर्शनेन नृपत्याद्यागमनं ज्ञायते तद्वदेतैरुत्पातैर्मृत्योरागमनं ज्ञायत इति भावः । अत्र द्वारकायाम् । अपिना किमधिकमित्युच्यते ॥ * ॥ अत्रांतरे भगवान् किञ्चित्परामर्शं—कुरुक्षेत्रयात्रायां नानादिग्देशतो मां मेलितुमागतानां लोकानां मध्य एवालक्षित आगत्य कलिर्मां प्रावोचत्—प्रभो भुवि मदधिकारो हि कदा भविष्यतीति, मयोक्तम्—मल्लीलासमाप्त्यनंतरमेवातो मदंतर्द्धानलक्षणानंतरमेव मया दत्ताधिकारः कलिः पृथिव्यामधिकरिष्यति । किञ्च—मदवतारे संप्रति धर्मोऽयं कृतयुगतोप्याधिक्येन चतुष्पादेव वर्तते धर्मस्यास्यैतादृशप्राबल्ये सति कलिः कथमधिकर्तुं शक्नुयात्, तस्य हि पादैकशेषधर्मे सत्येवाधिकारयोग्यतेति नियमः । न च ‘ निमित्तापाये नैमित्तिकस्याप्यपायः ’ इति न्यायेन मत्प्राकट्याभावे सति तादृशधर्मस्याप्यपाय इति वाच्यम्, सर्वजगत्पाविन्या महाकीर्तिदेव्यास्सर्वत्रैव जागरूकत्वेनैव स्थितत्वात् । किञ्च—मदनुकूलप्रतिकूलतटस्थलोकानां मध्ये प्रतिकूला मया संहृता एव सांप्रतं गमावतारेणेव सर्वलोकसमक्षमेव स्वधामवासिभिः सार्द्धं वैकुण्ठारोहणे सति अनुकूला द्विगुणितभक्तयो भविष्यन्ति । अत्यनुकूलास्तु परमौत्कण्ठयवन्तः शतगुणितप्रेमाणस्तटस्था अपि परमाश्चर्यदर्शनेन भक्ता भविष्यन्तीति धर्मः प्रत्युत वार्द्धिष्यत एव । कथं कलेः प्रभुतालेशोऽपि संभाव्यस्तस्माद्धर्मसंकोचनार्थमधर्ममतं केनापि :प्रकारेणोत्थापयिष्यामि । तत्रायं प्रकारः—स्वीयलीलापरिकरैर्यदुभिः सह द्वारवत्यामेव यथास्थितमेव विराजिष्ये, किन्तु प्रापञ्चिकसर्वलोकचक्षुर्भ्यस्तिरोभूयैव तथा प्रद्युम्नसाम्बादिषु मन्नित्यपरिकरेषु तत्तद्विभूतयो ये देवाः कंदर्पकार्तिकेयादयः प्रवेशिता वर्तंते तानेव योगबलेन तत्तद्देहतोऽलक्षितमेव निष्कास्य प्रद्युम्नादित्वेनैवाभिमन्यमानान्सर्वलोकलोचनेष्वपि तथैव भातान्कृत्वा तैरन्यैश्च द्वारकावासिभिः सार्द्धं प्रभासं गत्वा दानध्यानमधुपानादिकं कारयित्वा तानधिकारिकभक्तान्स्वस्वाधिकारेषु स्वर्ग एव प्रस्थाप्य तदन्यैर्द्वारकावासिजनैः सह दाशरथिस्वरूप इव वैकुंठं प्रस्थास्ये । किन्तु—लोकलोचनेषु मायादोषं प्रवेश्यैव येन लोका एवं मंस्यन्ते—द्वारावत्याः सकाशान्निष्क्रम्य सर्वे यदुवंश्याः प्रभासं गत्वा ब्रह्मशापग्रस्ता मधु पीत्वा मत्ताः परस्परप्रहता देहांस्तत्यजुः, परमेश्वरोपि सरामस्त्यक्तमानुषदेह एव स्वधामारुरोह, तस्मान्मानुषशरीरमिदमनित्यं मायिकमित्येके वदिष्यन्ति । मन्मानुषशरीरावज्ञा हि महापराध एव । तदुक्तं मयैव—“ अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ” इति । तत्फलञ्चोक्तम्—“ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः ॥ ” इति । यदि ते भक्तास्तदा मोघाशाः स्युर्मत्प्राप्त्याशास्तेषां मोघा यदि ते कर्मिणस्तदा मोघकर्माणस्तेषां स्वर्गो न भवेत्, यदि ते ज्ञानिनस्तदा मोघज्ञानास्तेषां मोक्षो न भवेदिति यतस्ते राक्षसीमिति । अन्ये तु परमेश्वरेणापि गृहीतस्य सर्वस्यापि शरीरस्य दृश्यत्वादनित्यमेव दिव्यमानुषदेहयोश्चिरंतनत्वाचिरंतनत्वाभ्यामेव भेद इति । अपरे तु यथैव कुरुवंशो निपातितस्तथैव सस्ववंश एव कृष्णः प्रभासे निपपातेत्येवमधमविज्ञमानिदुर्जनकुमतश्रवणजल्पनानुमोदनप्रचारणैर्धर्मः सद्य एव पादैकशेषो भविष्यति, यथा धवलोज्ज्वलमपि शंखं पित्तादिदोषोपहतचक्षुषो मलिनपीतमेव पश्यंति तथैव सच्चिदानंदमयीमपि मन्निर्याणलीलां मायादोषोपहतचित्तचक्षुषः प्रद्युम्नादिसर्वपरिकरसहितमद्देहत्यागरुक्मिण्यादिमहिषीवह्निप्रवेशादिदुरवस्थामयीं प्राकृतीमेव द्रक्ष्यन्ति निश्चेष्यन्ति च, न केवलं प्राकृताः किन्तु मदंशा अर्जुनादयोपि तथैव । वैशंपायनपराशरादयो मुनयोऽपि स्वस्वसंहितासु वर्णयेयुरपि कलिप्राबल्यपरंपरासिद्ध्यर्थं कलौ जनिष्यमाणेन शंकरेण मद्भक्तेनापि वेदान्तभाष्यं तथा प्रपंचयिष्यते यथा तच्छास्त्रमधीत्याधीत्य सूक्ष्मो यः कारणोपाधिर्मायाख्यानेकशक्तिमान्स एव भगवद्देह इति भाष्यकृतां मतमिति हतबुद्धयो व्याख्यास्यन्त इति विभाव्य महोत्पातानुत्पाद्य सशंकससंभ्रममाह—एते घोरा इति । न चात्र भगवतो नैर्घृण्यमाशंकनीयं तद्भक्तेतराणां लोकानां प्राचीनदुरदृष्टविपाकसमय एव तत्तत्कुमतपथप्रादुर्भावको भवेत् । भगवदिच्छा तु सदसत्कर्मबोधेपि निमित्तमस्त्येवान्यथा बुद्धाद्यवतारस्यापि नैर्घृण्यं प्रसज्जेत । भगवता तु स्वभक्तजनसंशयदूरीकरणार्थं स्वलीलातत्त्वसिद्धान्त उद्धवं प्रत्युक्त एव । तदुक्तमुद्धवेनैव—“ इत्यावेदितहार्दाय मह्यं स भगवा

न्परः । आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥ " इति । आत्मनः स्वस्य स्थितिं व्यवसितिं लीलापरिपाटीञ्च द्वारकादिधामनित्यानिवासञ्चेति तत्रार्थः । अत एवांतर्द्धानलीलातत्त्वञ्चोक्तम्–" प्रदर्श्यातप्ततपसाम
वितृप्तदृशां नृणाम् । आदावांतरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥ " इति । लोकानां लोचनानि निमग्नानि यत्र तादृशं बिम्बं स्वदेहमादायैवांतरधादिति तत्रार्थः । न च बिम्बपदस्यार्थान्तरं कल्प्यं यतस्तदुत्तर
पद्येषु ' यन्मर्त्यलीलौपयिकम् ' इति ' यद्धर्मसूनोर्बत राजसूये ' इत्यादिषु वपुरित्येवार्थो दृष्टः । अत एव ' कृष्णद्युमणिनिम्लोचे ' इति कृष्णांतर्द्धानस्य सूर्यास्तमयेनोपमा । मायादोषोपहतचक्षुषः कुमतमालंबिर इत्यादि
तेनैवोक्तम्–" देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः । भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥ " इति । ये मायादोषोपहतचक्षुषो ये च बहिर्मुखा अम्यदसत्कर्मवादकुमतमाश्रितास्तेषां वाक्यैः कृष्णो
देहं तत्याजेति कृष्णः स्वकृतमधर्मफलं प्रापेति भाषणैर्धीर्न भ्राम्यति, कस्य आत्मनि हरौ भगवति उप्तं निक्षिप्तं चित्तं येन तस्य भक्तजनस्येति तत्रार्थः । अथ भगवतो विग्रहनामधामलीलापरिकराणां नित्यत्वे
प्रमाणानि–" गोविन्दं सच्चिदानंदविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामि " इति गोपालतापनी श्रुतिः । " वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्धोहं मत्स्यः कूर्मो वराहो नरसिंहो
वामनो रामो रामो रामः कृष्णो बुद्धः कल्किरहं सहस्रधाहममितोहमनंतोऽहं नैव ते जायंते म्रियन्ते नैषामज्ञानबंधो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परमानंदाः " इति माध्वभाष्यधृतश्रुतिः । "निर्दो
षपूर्णगुणविग्रह आत्मतंत्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनंदमात्रमुखपादसरोरुहादिः " इति ध्यानविदुपनिषत् " सद्रूपमद्वयं ब्रह्म मध्याद्यन्तविवार्जितम् । स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम् ॥ "
इति वासुदेवोपनिषत् । " नंदव्रजजनानन्दी सच्चिदानंदविग्रहः " इति ब्रह्मांडपुराणम् । " सर्वे नित्याश्शाश्वताश्च देहास्तस्य परात्मनः । हानोपादानरहिता नैव प्रकृतिजाः क्वचित् ॥ " इति महावाराहम् । " युगेयुगे
विष्णुरनादिमूर्तिमानास्थाय शिष्टं परिपाति दुष्टहा" इति नारसिंहम् । "यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः । स सर्वस्माद्बहिष्कार्यः श्रौतस्मार्तविधानतः ॥ मुखं तस्यावलोक्यापि सचैलं स्नानमाचरेत् । " इति बृहद्वैष्ण
वम् । "न भूतसंघसंस्थानो देहोऽस्य परमात्मनः " इति, ' अमृतांशोऽमृतवपुः ' इति महाभारतम् । अमृतं मरणवर्जितं वपुर्यस्येति श्रीशंकराचार्यव्याख्या च प्रसिद्धा । ' शाब्दं ब्रह्म दधद्वपुः ' इति, " यत्ताद्वपु
र्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्वपुः " इति, ' बबंध प्राकृतं यथा ' इति, " सत्यज्ञानानंतानंदमात्रैकरसमूर्तयः " इति, ' स्वेच्छामयस्य न तु भूतमयस्य ' इति, ' त्वय्येव नित्यसुखबोधतनौ ' इति, " श्रीभा
गवतं च नाम्नां नित्यत्वे ओमस्य जानन्तो नाम चिद्विविक्तना " इति श्रौतमंत्रः । " बहूनि सन्ति नामानि रूपाणि च सुतस्य ते " इति वर्तमाननिर्देशश्च । यत्तु–" अनामरूप एवायं भगवान्हारिरीश्वरः । अक
र्तेति च यो वेदैः स्मृतिभिश्चाभिधीयते ॥ " इति पाद्मादिवचनं तत्र वासुदेवाध्यात्मवाक्यमेव समाधायकम् । " अप्रसिद्धेस्तद्गुणानामनामाऽसौ प्रकीर्तितः । अप्राकृतत्वाद्रूपस्याप्यरूपोऽसाधुदीर्यते ॥ " इति संबंधेन
प्रधानस्य हरेर्नास्त्येव कर्तृता, " अकर्तारमतः प्राहुः पुराणं तं पुराविदः " इति । एवम्–" उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना " इत्यत्र रूपं मूर्तिः शैली दारुमयी लोहमयी वा, तस्य कल्पना रामकृष्णाद्याकार
त्वेन निर्माणमिति तत्रार्थो ज्ञेयः । धाम्नां नित्यत्वे–" तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी हि " इति गोपालतापनी श्रुतिः । " नित्यां मे मथुरां विद्धि पुरीं द्वारवतीं तथा " इति पाद्मम् । ' वनं वृंदावनं तथा '
क्वचिदित्यपि पाठः । गुणानां नित्यत्वे–" इमे चान्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥ " इति । लीलानां नित्यत्वे–" एको देवो नित्यलीलानुरक्तो भक्त
व्यापी भक्तहृद्यान्तरात्मा " इति पिप्पलादशाखायां पुरुषबोधनी श्रुतिः । ' जयति जननिवासः ' इत्यस्य ' दोर्भिरस्यन्न धर्मम् ' इति । ' व्रजपुरवनितानां वर्धयन्कामदेवम् ' इति वर्तमानप्रयोगश्च, " कामं क्रोधं भयं
स्नेहमैक्यं सौहृदमेवच । नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ " इति च । लीलापरिकराणां नित्यत्वे–" यथा सौमित्रिभरतौ यथा संकर्षणादयः । तथा तेनैव जायन्ते निजलोकाद्यदृच्छया ॥ एते हि यादवाः
सर्वे मद्गणा एव भामिनि । सर्वथा मत्प्रिया देवि मत्तुल्यगुणशीलिनः ॥ " इति पाद्मम् । अत एव " नित्यावतारो भगवान्नित्यमूर्तिर्जगत्पतिः । नित्यरूपो नित्यगन्धो नित्यैश्वर्यसुखानुभूः ॥ " इति सर्वमनवद्यम् ॥९॥

स्त्रियो बालाश्च वृद्धाश्च शंखोद्धारं व्रजंत्वितः ॥ वयं प्रभासं यास्यामो यत्र प्रत्यक्सरस्वती ॥ ६ ॥ तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ॥ देवताः पूजयिष्यामः स्नापनालेपनार्हणैः ॥ ७ ॥ ब्राह्मणांस्तु महाभागान्कृतस्वस्त्ययना वयम् ॥ गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥ विधिरेष ह्यरिष्टघ्नो मंगलायनमुत्तमम् ॥ देवद्विजगवां पूजा भूतेषु परमो भवः ॥ ९ ॥ इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ॥ तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १० ॥ तस्मिन्भगवता दिष्टं यदुदेवेन यादवाः ॥ चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥ ततस्तस्मिन्महापानं पपुर्मैरेयकं मधु ॥ दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥ १२ ॥

प्रत्यक् पश्चिमवाहिनी ॥ ६ ॥ अभिषिच्य स्नात्वा ॥ ७ ॥ ब्राह्मणांश्च तैः कृतशांतिकाः संतो वयं गवादिभिः पूजयिष्यामः ॥८॥ विधिः प्रकारः मंगलायनं च । किंच देवद्विजगवां पूजा।भव उद्भवहेतुः । देवलोके परम उद्भवो भविष्यतीति भावः ॥ ९ ॥ मधुद्विषो वाक्यमाकर्ण्य तथेत्यभिनंद्य । उत्तीर्य समुद्रम् ॥ १० ॥ सर्वश्रेयोपबृंहितमित्यत्र संधिरार्षः। भगवतानुक्तैरपि सर्वैः श्रेयोभिः सहितं चक्रुः॥ ११ ॥पीयत इति पानम् । महच्च तत्पानं च।मैरेयकं मादिराविशेषम्।मधु सुरसम्। दिष्टेन दैवेन विभ्रंशितधियः। न ह्य

शंखोद्धारं तीर्थविशेषम् । द्वारकाक्षेत्रसमीपे त्रितमुनिशापाच्छङ्खरूपतां प्राप्तं कक्षीवन्तं मुनिं यत्र कृष्ण उद्धार तमिति कथा संहितातोऽवसेया । इतो द्वारकातः । यत्र प्रभासे ॥ * ॥ अत्रामंगलानुकरणमपि नोचितमिति तद्योग्यस्थानमाह—स्त्रिय इति ॥ ६ ॥ तत्र प्रत्यक्सरस्वत्याम् । अर्ह्यते पूज्यते देवा एभिरित्यर्हणानि उपचाराः । तथा चात्रस्नानानुलेपनयोरुक्तत्वात्तदितरोपचारा अर्हणपदेन ज्ञेयाः ॥ * ॥ ॥ ० ॥ ७ ॥ मह्यते पूज्यते सर्वैरिति महो विष्णुर्वेदो वा तस्याऽऽसमन्ताद्भजनमाभागो येषां ते महाभागाः वैदिकाचारेण विष्ण्वाराधनपरास्तान् । वेश्म गृहम् ॥ * ॥ ० ॥ ८ ॥ एष ब्राह्मणार्चनरूपः । अरिष्टघ्नोऽशुभनाशकः “ अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च दैत्यभेदे च फेनिले ॥ ” इति धरणिः । फलांतरमाह—किंचेति । भूतेषु लोकेषु “ भूतोऽतीते देवयोनौ लोके खादौ च जीवके ” इति च । ‘ भवः क्षेमेशसंसारे ’ इति कोशादुद्भवहेतुः क्षेमहेतुः । इति भाव इति—देवादिपूजनमैहिकामुष्मिकशुभदं, तथा च यादवानां देवलोकादिहागतानां तेषां पुनर्ब्राह्मणादिपूजनेन प्रतिबंधनिवृत्त्या तत्र गमने च परमः क्षेमो भविष्यतीति तात्पर्यम् ॥ * ॥ उद्भवहेतुः कल्याणकारणम् । देवस्य मम लोकेऽप्रकटप्रकाश इति वास्तवोऽर्थः परोक्षवादत्वात् ॥ ९ ॥ इत्युक्तम् । मधुद्विषो मधुसूदनस्य ॥ * ॥ ॥ ० ॥ १० ॥ तस्मिन्प्रभासे । भगवता श्रीकृष्णेन तु स्नानदानदेवब्राह्मणार्चनान्येवोक्तानि पूर्वश्लोकेषु, न तावन्त्येव श्रेयांसि तेषां बहुविधत्वात् “ श्रेयो वदंत्यनेकान्तं यथाकर्म यथारुचि ” इत्याद्युक्तेः । “ दानं यज्ञो तपो होमः स्वाध्यायो देवतार्चनम् । तीर्थयात्रा विप्रसेवा व्रतानि नियमा यमाः ॥ सेवा पितृगुरूणां च शास्त्राणां श्रवणं तथा । दंभत्यागस्त्वार्यता च सारल्यं सत्यभाषणम् ॥ दीनोपकारः पूर्तादेः करणं संगमः सताम् । इत्येवं बहुधोक्तानि नृणां श्रेयांसि नैगमैः ॥ ” इति संहितायाम् । अत उक्तं भगवताऽनुक्तैरपीति ॥ * ॥ ० ॥ ११ ॥ ततः श्रेयःसंपादनोत्तरम् । तस्मिन्प्रभासे । “ कदंबरससंभूता मदिरा सुरसा भवेत् । सैव मैरेयकं प्रोक्तं यत्पानाद्भ्रश्यते मतिः ॥ ” इति तीर्थः । ‘दैवं दिष्टं भागधेयम्’ इत्यमरः । इति भाव इति—दैवप्रातिकूल्यं विना न कस्यापि तीर्थे मद्यपानादिरुचिरुत्पद्यत इति तात्पर्यम् । यस्य मै

**महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ॥ कृष्णमायाविमूढानां संघर्षः सुमहानभूत् ॥१३॥**
**युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥ १४ ॥**

न्यथा तस्मिन्स्थाने तदुचितमिति भावः । यद्वैर्यस्य द्रवे रसैः ॥ १२ ॥ कृष्णमायाविमूढानामिति मुख्यो हेतुः । संघर्षः कलहः ॥ १३ ॥ ततो युयुधुश्च ॥ १४ ॥

यकस्य । भ्रश्यते अधः पतति निर्विचारा भवतीत्यर्थः ॥ * ॥ अतः परम् ‘ दिष्टविभ्रंशिताधियः ’ ( १२ ) इत्यादि ‘ संयोज्यात्मानमात्मनि ’ ( २६ ) इत्यन्तम् । परमतमवस्तुभूतम् । वस्तुतस्तु–ततस्ते देवाः “ वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ” इति भगवदुक्तिप्रभावाद्दानादिभिर्ब्रह्मशापं तीर्त्वा मधु पीत्वांतर्द्धाय दिवमारुरुहुः । ‘ संकर्षणश्च स्वस्थानं ययौ ’ इत्येतावन्मात्रमेव स्वमतं भगवदुक्त्या पूर्वमेवाह स्म सा च–“ मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानाम् । नैषां वधोपायं इयानतोऽन्योमय्युद्यतेन्तर्दधते स्वयं स्म ॥ ” इति । अस्यार्थः–यदा विवादो भविता तदा नैषां वधोपायः स विवाद एषां वधहेतुर्न भवेत् इयान् एतावानपि एरकामुष्टिग्रहणताडनपर्यंतोपि अतस्तदा तावान् विवादो वधश्च लोकैर्द्रष्टव्योऽवस्तुभूत एव । ननु तर्ह्येषामुपसंहारे को हेतुस्तत्राह–अतो वधादन्य एवोपायोऽस्ति । स एव कः–मयि उद्यते सति मदिच्छायां सत्यामित्यर्थः । स्वयमेवान्तर्दधते इमेऽन्तर्धास्यन्ते । स्मेति निश्चये ॥ * ॥ **संदर्भस्तु**–तत इति । दिष्टं भगवदिच्छा । वक्ष्यते हि–कृष्णमायेति । अनेन सर्वं मायाकृतमेवेदमिति पुरोऽपि स्थापयिष्यते । तदेतदनुसारेण विरुद्धानि पुराणांतरवाक्यानि च मायाकृतानुवादत्वेनैव योजनीयानि ॥ १२ ॥ “ महापानं मद्यपानं महामांसं गवां पलम् । यममार्गो महामार्गो महावैद्यस्तु धर्मराट् ॥ महासंज्ञां च मरणं महाशंखोऽस्थि वै गवाम् । महास्नेहो भवेन्मज्जा यमराजो महागुरुः ॥ प्रेतान्नभुग्महाविप्रो महादानं गवादिकम् । अंतस्नानं महास्नानं महादेवो मृडः स्मृतः ॥ एते शब्दा महापूर्वा अन्येऽपि बहवो मताः ॥ ” इति शब्दचिंतामणौ । सुमहान् अवार्यः ॥ * ॥ कृष्णस्य मायया विमूढानां के वयं किमिदं कुर्म इत्यजानताम् ॥ * ॥ **दीपिका**–दृप्तचेतसां नित्यसंयोगानुभवेन गर्वितचेतसाम् । संघर्षः नित्यलीलया वियोगात्मकप्रकटलीलायाः परा भवोऽभवत् कृष्णस्यापि माया वियोगदर्शिकेच्छा विमूढा तिरोहिता येभ्यस्तेषाम् ॥ १३ ॥ वेलायां समुद्रतीरे ॥ * ॥ इदानीं तेषां साधकानां नित्यप्रवेशदर्शनाय साधनानुक्रममाह–युयुधुरिति । वियोगदुःखं ध्वंसयितुं क्रोधाविष्टाः सन्तः वेलायामप्रकटप्रकाशधामगमनसमये आततायिशब्देन शस्त्रपाणित्वमभिधीयते, तेन च वियोगदुःखहंतृत्वं लक्ष्यते । युयुधुः तत्प्रतिबंधकसंसृतिहेतुभूताविद्यादिभिः सह संग्राममिव चक्रुरित्यर्थः । तादृशयुद्धे साधनान्याह–धनुर्भिरित्यादिना । धनुर्भिर्धनूरूपितप्रणवार्थविचारैरित्यर्थः । ‘ धनुर्हि तस्य प्रणवं पठन्ति ’ इति सप्तमोक्तेः । असिभिस्तत्तुल्यैर्निर्वेदैः । “ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ” इत्येकादशोक्तेः । भल्लैः शरतया रूपितैः । स्वस्वशुद्धत्वं पदार्थविचारैः ‘ शरं तु जीवम् ’ इत्युक्तेः । गदाभिः गे गीतोपलक्षिते नृत्ये दीयंत इति गदाः करतालिकास्ताभिः पातकैः सह युयुधुः । भगवदग्रे नृत्यां गतालिकाभिः पातकनाशं दर्शयन्ति स्मेत्यर्थः । तदुक्तं पाद्मे–“ नृत्यतः श्रीपतेरग्रे तालिकावादनैर्भृशम् । उड्डीयन्ते शरीरस्थाः सर्वे पातकपक्षिणः ॥ ” इति । ‘ गीतं स्याद्गश्च गातारे ’ इत्यनेकार्थध्वनिमंजरी । तौति स्वरूपज्ञानावरणाय गच्छतीति तौः, गत्वा च स्वरूपज्ञानं म्रियते मारयतीति मरः, तौश्चासौ मरश्चेति तोमरोऽबोधस्तं रिशंति नाशयंतीति तोमरर्ष्टयः षड्विधप्रपत्तयस्ताभिरज्ञानेन युयुधुरज्ञाननाशनार्थं ता दर्शयान्ति स्मेत्यर्थः । “ अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ” इति । “ मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ” इति च गीतोक्तेः । ‘ तु–( सौत्रो ) गतौ ’ विच् प्रत्ययः । ‘ रिश–हिंसायाम् ’ कर्तरि क्तिच् । ‘ मृङ्–प्राणत्यागे ’ अंतर्भावितण्यर्थः, अच् प्रत्ययः कर्तरि, साधुत्वमेवं ध्येयम् ॥ १४ ॥

पतत्पताकै रथकुंजरादिभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि ॥ मिथः समेत्याश्वतरैः सुदुर्मदा न्यहन्छरैर्दद्भिरिव द्विपा वने ॥ १५ ॥ प्रद्युम्नसांबौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ॥ सुभद्रसंग्रामजितौ सुदारुणौ गदौ सुमित्रासुरथौ समीयतुः ॥ १६ ॥ अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः ॥ अन्योऽन्यमासाद्य मदांधकारिता जग्मुर्मुकुंदेन विमोहिता भृशम् ॥ १७ ॥ दाशार्हवृष्ण्यंधकभोजसात्वता मध्वर्बुदा माथुरशूरसेनाः ॥ विसर्जनाः कुकुराः कुंतयश्च मिथस्ततस्तेऽथ विसृज्य सौहृदम् ॥ १८ ॥ पुत्रा अयुध्यन्पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ॥ मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहन्ज्ञातय एव मूढाः ॥ १९ ॥

पतंत्य इतस्ततश्चलंत्यः पताका येषु तै रथादिभिर्मिथः समेत्य न्यहन्नघ्नन्नित्यर्थः।दद्भिर्दंतैरिव॥ १५॥मिथः समेत्येत्यस्य प्रपंचः प्रद्युम्नेत्यादिचतुर्भिः । गदौ श्रीकृष्णस्य भ्राता एकः पुत्रश्चापरस्तौ सुमित्रश्च सुरथश्च सुमित्रासुरथाविति दैर्घ्यमार्षम् । असुरथनामा वा कश्चित् ॥ १६ ॥ मदांधेन मदतमसा बलात्कारिताः ॥ १७ ॥ दाशार्हादयो नव तत्तद्वंश्याः । अर्बुदा माथुराः शूरसेनाश्च तत्तद्देशीयाः ॥ १८ ॥ भ्रातृभिश्चेति भ्रात्रादिशब्दानां सप्रतियोगिवाचित्वाद्भ्रातरो मातुला इत्यादि ज्ञेयम् । मित्रैश्च मित्राणि च ।

अश्वतरैर्गर्दभात्तुरंग्यां जातैः । आदिनाऽश्वादिग्रहः । इत्यर्थ इति—एकत्वमत्र बहुत्वेऽस्त्यार्षत्वादिति भावः ॥ * ॥ रथेति—रथानां भक्त्यवयवानां श्रवणकीर्तनादीनां कुंजरः कोशस्तत्तुल्यं यच्छ्रीमद्भागवतं तदादिभिर्वैष्णवशास्त्रैरास्वाद्यत्वेन मिथः समेत्य तानि मिथ आस्वाद्येत्यर्थः । कलिकालात्मकर्माविद्यादिकं न्यहन् तदास्वादनैः कलिकालादिजयं दर्शयन्ति स्मेत्यर्थः । कथंभूतै रथकुंजरादिभिः पतन्त्यो निस्सरन्त्यः पताकाः श्रीकृष्णप्रसादलक्षणानि सौभाग्यानि येभ्यस्तैः । “ रथः पुमानवयवे स्यंदने वेतसेऽपि च ” इति मेदिनी । ‘ कुंजरोऽनेकपे कोशे ’ इति हेमचन्द्रः । “ पताका वैजयंत्यां च सौभाग्यनाटकांगयोः ” इति मेदिनी । “ वैष्णवानि च शास्त्राणि ये शृण्वन्ति पठंति च । धन्यास्ते मानवा लोके तेषां कृष्णः प्रसीदति ॥ ” इति पाद्मादिपुराणम् । तदास्वादविशिष्टा एव सन्तः खरादितुल्यैरपि नरैः समेत्य तेषामपि तदादिकं खरोष्ट्रादिसमस्वभावं विषयपारतंत्र्यादिकं न्यहन् तानपि तारयामासुरित्यर्थः । कीदृशैस्तैः शरैर्भागवतादिश्रावणैर्जलवद्द्रवीकृतैरिति तेषां प्रेमदातृत्वमभिव्यंजितम् । “ शरस्तु तेजने बाणे दध्यग्रे ना शरं जले ” इति विश्वमेदिन्यौ । परस्परस्पर्द्धयास्वादने दृष्टान्तः—वने द्विपा यथा दद्भिः कंदहननपूर्वकं खेलंति तद्वत् ॥ १५ ॥ रूढः प्राप्तो मत्सरो याभ्यां तौ गदाविव्येकशेषः । आर्षत्वकल्पनस्यागतिकत्वादाह—असुरथनामा वेति ॥ * ॥ इदानीं द्वयोर्द्वयोः परस्परं विचारमाह—प्रद्युम्नसांबाविति । संसारेण वियोगेन च सह युधि परमार्थविचारार्थं परस्परं मिलितवन्ताविति सर्वत्र योज्यम् ॥ १६ ॥ ० ॥ * ॥ मु कोर्थः मुक्तिसुखं, कु कोर्थः कुत्सितं यस्मात्स मुकुः प्रेमानंदस्तं ददातीति तथा तेन भृशं विमोहिता नित्यसंगप्रकाशेन प्रकटलीलावियोगाच्च्याविताः । अत एव तत्सुखानुभवजन्यमदेनान्धीकृताः सन्तः अन्योन्यं मिलित्वा जग्मुर्नित्यलीलारहस्यं ज्ञातवन्तः, हन्तेर्गत्यर्थत्वाज्ज्ञानार्थतापि । उत्तानपक्षेंधकारमिताः अंधकारः संजातो वा येषां ते तारकादित्वादितच् ॥ १७ ॥ तत्तद्वंश्या दाशार्हादिवंश्याः । तत्तद्देशीया अर्बुदादिदेशादागताः सुहृदः । ततो मुकुंदमायामोहितत्वात् । ते सर्वे ॥ * ॥ दाशार्हादयः प्रपंचं सुविसृज्य संत्यज्य मिथो नित्यलीलायां सौहृदं जघ्नुर्ज्ञातवन्तः ॥ १८ ॥ समानः प्रतियोगी सप्रतियोगी तं वक्तुं शीलं येषां ते सप्रतियोगिवाचिनस्तेषां भावस्तत्त्वं तस्मात्तथा मूढा माययेति शेषः ॥ * ॥ पुत्राः स्वप्रतियोगिभिः पित्रादिभिः सहायुध्यन् । वियोगाविनाशनार्थं युद्धमिवाप्रकटलीलानुसंधानमकुर्वन् । एवं च विमूढाः प्रकटवियोगानुसन्धानशून्याः

शरेषु क्षीयमाणेषु भज्यमानेषु धन्वसु॥शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः॥२०॥ता वज्रकल्पा ह्यभवन्परिघा मुष्टिना भृताः ॥ जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते॥२१॥प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ॥ हंतुं कृतधियो राजन्नापन्ना आततायिनः ॥२२॥ अथ तावपि संक्रुद्धावुद्यम्य कुरुनंदन ॥ एरकामुष्टिपरिघौ चरंतौ जघ्नतुर्युधि॥२३॥ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ॥ स्पर्द्धा क्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वने॥२४॥

अहन्हतवंतः ॥ १९ ॥ धन्वसु धनुःषु जह्रुर्जगृहुः ॥ २० ॥ परिघा लोहदंडाः भृताः धृताः । तं च श्रीकृष्णमपि ॥ २१ ॥ प्रत्यनीकं प्रतिपक्षम् ॥ २२ ॥ एरका मुष्टिरूपौ परिघावुद्यम्य ॥ २३ ॥ स्पर्धानिमित्तः क्रोधः कुलं क्षयं निन्ये वेणुसंघर्षजो वह्निर्वेणुवनमेव यथा ॥ २४ ॥

सन्तः ज्ञातीन् ज्ञातयः श्रीकृष्णनित्यपरिकरत्वेनैवाहन् ज्ञातवन्तः । तथा स्फूर्तिमापुरित्यर्थः । तथैव सत्यभामां प्रति श्रीकृष्णवाक्यम्–" एते हि यादवाः सर्वे मद्गुणा एव भामिनि । सर्वदा मत्प्रिया देवि मत्तुल्या चारशीलिनः ॥" इति । ननु हंतेर्गत्यर्थत्वं न युक्तमप्रयुक्तत्वादिति चेदुच्यते–काव्यकूपवर्तिनामेवेदं मतं न तु वेदादिमहोदधिवर्तिनाम् । यथोक्तं महाभाष्ये–" सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः सांगाः सरहस्या बहुधाभिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदा वाको वाक्यमितिहासः पुराणं वैद्यकमित्येतावंतं शब्दप्रयोगमननुनिशम्य सन्ति अप्रयुक्ताः शब्दा इति वचनं केवलं साहसमात्रमेव"इत्यादि ॥ १९ ॥ शस्त्रेषु खड्गादिषु । एरका सूचीमुखोऽतिदीर्घस्तृणविशेषः ॥ * ॥ साध्यलोके साधनोपरमः सिद्ध एवेति 'निपानखनित्रमिन्द्रः' इति न्यायेनाह–शरेष्विति । शरेषु ' शरं तु जीवम् ' इत्युक्तेः शरत्वरूपितत्वंपदार्थविवेकेषु त्यज्यमानेषु सत्सु एवं धन्वसु धनुष्ट्वेन रूपितप्रणवार्थविचारेष्वपि भज्यमानेषु शास्त्रेषु चतुर्विधवैराग्येषु साधनेष्वपि क्षीयमाणेषु उपेक्ष्यमाणेषु " छिन्द्यादसंगशस्त्रेण स्पृहां देहार्थयो बुधः " इत्यत्र तथा रूपणात् । मुष्टिभिर्मोषणैर्वंचनैः प्रपंचात्तिरोधानैरित्यर्थः । आ सर्वत ईर्ते गच्छति जानातीत्येरः सर्वज्ञो भगवांस्तस्यापि कं सुखं याभ्यस्ता एरका नित्या लीलावसतीर्जगृहुरप्रकटप्रकाशानन्वभवन्नित्यर्थः ॥ २० ॥ ता एरकाः । वज्रतुल्या लोहदण्डतुल्याश्चाभवन् । ते दाशार्हाद्याः ॥ * ॥ ता इति युग्मकम् । ता वसत्यश्च । वज्रैश्चिन्मयहीरकादिभिः कल्पन्ते प्रकाशंत इति तथा । पुनः कीदृश्यः–मुष्टिना वंचनेन प्रपंचातिरोधानेन धृताः सदाऽवस्थिताः ' धृङ्–अवस्थाने ' इत्यस्मात् क्तः कर्तरि । " अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः " इतिवत् । ' भृताः ' इति पाठेऽपि भृञो धारणार्थत्वात्स एवार्थः । अभवन् प्रापुः, यदूनिति शेषः । भवतेर्गत्यर्थे परस्मैपदाभावेऽप्यार्षं तत् । पुनः कीदृश्यः–परिघाः परितो घाः घंटा घंटादिध्वनयो यासु तास्तथा । ' घो घंटायां घर्घरे च ' इति मेदिनी । वियोगमय्याः प्रकटलीलाया द्विषन्तो द्वेषं कुर्वतः कृष्णेन वार्यमाणाः प्रकटलीलावेशेन नित्यलीलास्वादने निवार्यमाणा इव । अतः प्रणयरोषेण वियोगापादकत्वाच्छत्रुमिव मन्यमाना मोहिता नित्यलीलानुभवसुखेन वियोगानुसंधानशून्याः संतस्ते कृष्णं च बलभद्रं च जघ्नुर्नित्यसंयुक्तत्वेन ज्ञातवंतः । हंतेर्गत्यर्थत्वाज्ज्ञानार्थता । यतस्ते पूर्वमत्र वैराग्यादिशस्त्रपाणयः सन्तः वियोगदुःखप्रचुरप्रकटप्रकाशं हन्तुं तस्मात्तिरोभवितुमापन्ना उद्युक्ताः ॥ २१ ॥ आपन्नाः प्राप्ताः ॥ * ॥ ० ॥ २२ ॥ अथ स्वहननार्थागतेरनन्तरम् । तौ कृष्णरामौ ॥ * ॥ अथ तेषां नित्यलीलाप्राप्त्यनंतरं तावपि कृष्णबलभद्रौ तद्वियोगदुःखं स्वस्यापनेतुं संक्रुद्धौ सन्तौ उद्यम्य प्रपञ्चलोकप्रतारणार्थं ध्यानाद्युद्यमं कृत्वा वियोगेन युधि युद्धार्थमिव चरन्तौ मुष्टेर्वंचनायाः परिघौ घातकौ सन्तौ एरका नित्यवसतीर्जघ्नतुर्ज्ञातवन्तौ प्रकाशद्वयस्यैकं प्रकाशं स्फूर्तिविषयं चक्रतुरित्यर्थः ॥ २३ ॥०॥*॥ ब्रह्मशापोपसृष्टानामिति ब्रह्मशापोपि उपसृष्टो रुग्णो येभ्यस्तेषाम्।यद्वा–उपसृष्ट उपप्लवं प्रापितो नाशितो यैस्तेषाम् । " उपसर्गः पुमान्रोगे भेदोपप्लवयोरपि " इति मेदिनी।कृष्णस्य मायावियोगदर्शिकेच्छाप्यावृता येन तादृश आत्मा तन्नित्यसंयुक्तं स्वरूपं येषां तेषां स्पर्द्धया सहितः क्रोधः क्षयं नित्यप्रकाशात्मकं स्थानं प्रति तान्निन्ये प्रापयामास । तत्रानुरूपो दृष्टांतः–यथा वेणुसंघर्षणजो वह्निः अवनं तद्वनोत्पन्नातिरिक्तमागन्तुकं मनुष्यादिकं विद्राव्य तन्निवास

एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ॥ अवता रितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥ रामः समुद्रवेलायां योगमास्थाय पौरुषम् ॥ तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥ २६ ॥ रामनिर्याणमालोक्य भगवान्देवकीसुतः ॥ निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥ बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ॥ दिशो वितिमिराः कुर्वन्विधूम इव पावकः ॥ २८ ॥ श्रीवत्सांकं घनश्यामं तप्तहाटकवर्चसम् ॥ कौशेयां बरयुग्मेन परिवीतं सुमंगलम् ॥ २९ ॥ सुंदर स्मितवक्त्राब्जं नीलकुंतलमंडितम् ॥ पुंडरीकाभिरामाक्षं स्फुरन्मकरकुंडलम् ॥३०॥कटिसूत्रब्रह्मसूत्र किरीटकटकांगदैः ॥ हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥३१॥ वनमालापरीतांगं मूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौ दक्षिणे पादमासीनं पंकजारुणम् ॥ ३२ ॥ मुशलावशेषायःखण्डकृतेषुर्लुब्धको जरा ॥ मृगास्यकारं तच्चरणं विव्याध मृगशंकया ॥ ३३ ॥

॥ २५ ॥ पौरुषं योगं परमपुरुषध्यानलक्षणम् । तमे वाह । संयोज्येति । मानुष्यं लोकं भूर्लोकं मनुष्यरूपतां वा ॥ २६ ॥ धरोपस्थे भूतले ॥ २७ ॥ भ्राजिष्णुरूपं बिभ्रदिति ॥ २८ ॥ तदेवानुवर्णयति श्रीवत्सांकमिति चतुर्भिः ॥ २९ ॥ सुंदरस्मितं वक्त्राब्जं यस्मिंस्तत् । पुण्डरीकवदभिरामे सुंदरे अक्षिणी यस्मिंस्तत् ॥३०॥३१॥ वनमालापरीतान्यंगानि यस्मिंस्तत् । निजायुधैश्च परीतांगम् । पंकजारुणं वामं पादं दक्षिण ऊरौ कृत्वा आसीनं रूपं बिभ्रदिति पूर्वेणान्वयः ॥ ३२ ॥ जरा नाम कश्चिल्लुब्धको मृगयुः । मृगास्यमिवाकारो यस्य तं चरणम् ॥ ३३ ॥

मेव प्रापयति तथा प्रपञ्चोत्पन्नातिरिक्तांस्तान् विद्राव्य नित्यं धाम निन्य इत्यर्थः ॥ २४ ॥ ० ॥ * ॥ नष्टेषु प्रपञ्चस्थजनैरदृष्टेषु सत्सु । मेने इत्यनेनैदुक्तं भवति—भारो हि व्यक्तिबाहुल्ये न भवति, अधर्मेण वा । आद्ये गुरुत्वातिशयवद्भिरनन्तैः पर्वतादिभिरपि स किन्न स्यात् । द्वितीये, “ ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ” ‘ वृष्णयः कृष्णचेतसः ’ इत्यादिभिस्तत्र तन्निषेधात् । तस्मादन्यथाऽनुपपत्त्या विरहोन्मत्तै र्विलुठद्भिस्तैरसंख्यैः पृथिवी चूर्णिता भविष्यतीति तदेव भारत्वेनोत्प्रेक्षत इति ॥ २५ ॥ मानुष्यं जीवानां मानुष्यविभ्रमं तत्याजाबाधत ॥ * ॥ पौरुषं पुरुषस्य नराकारस्य श्रीकृष्णस्य योगं नित्यसंयोगमास्थाय निर्द्धार्य आत्मानं प्रकटलीलास्थं प्रकाशमात्मन्यप्रकटलीलास्थे प्रकाशे संयोज्याभिन्नत्वेन संचिन्त्य मानुषं लोकं भूर्लोकं तत्याज ततोन्तर्हितवानित्यर्थः ॥ २६ ॥ धरोपस्थे निरासनदेशे । पिप्पलमश्वत्थवृक्षम् “ पिप्पलं विषया स्वादे जले बोधिद्रुमे शुके ” इति कोशात् ॥ * ॥ रामनिर्याणमिति षट्कम् । स्वमतमेव रामस्य निर्याणं स्वरूपेण महावैकुंठं प्रतिगमनं स्वांशरूपेण पातालतलगमनं च ॥ २७ ॥ ० ॥ * ॥ ० ॥ २८ ॥ तदेव रूपम् ॥ * ॥ तप्तहाटकानां तन्मयानां भूषणानां वर्चो यस्मिंस्तत् ॥ २९ ॥ सुंदरस्मितं वक्त्राब्जं मुखांबुजम् ॥ * ॥ ० ॥ ३० ॥ कटिसूत्रं मेखला । ब्रह्मसूत्रमुपवीतम् । हारोऽत्र मौक्तिकानां गुच्छादिः “ हारो मुक्तावली देवच्छंदोऽसौ शतयष्टिकः । हारभेदा यष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः ॥ अर्धहारो माणवक एकावल्येकयष्टिका । सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ द्वात्रिंशल्लतिको गुच्छो गुच्छार्द्धस्तत्त्वयष्टिकः । चतुस्त्रिंशल्लतो हारो गोस्तनो वा चतुर्लतः ॥ ” इति कोशांतरोक्तेः ॥ * ॥ कटिसूत्रमत्र हैममेव ग्राह्यं कार्पासादिमयस्य निषेधात् । “ कर्णे पुष्पं कटौ सूत्रं वेणीं शिरसि धारयेत् । यो ना तद्दर्शनात्पुंसः शुद्धिर्गंगाम्बुसेवनात् ॥ ” इति स्मृतिसमुच्चयोक्तेः । मुद्रा अंगुलीयभूषा ॥ ३१ ॥ निजायुधैश्चक्रादिभिः । अवतारकार्यानवशेषादानंदरूपम् ॥ * ॥ ० ॥ ३२ ॥ मुसलावशेषायसः खण्डेन कृत इषुर्येन स तथा ।

चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ॥ भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥ अजानता कृतमिदं पापेन मधुसूदन ॥ क्षंतुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥ यस्यानुस्मरणं नृणामज्ञानध्वांतनाशनम् ॥ वदंति तस्य ते विष्णो मयाऽसाधुकृतं प्रभो ॥ ३६ ॥ तन्माशु जहि वैकुंठ पाप्मानं मृगलुब्धकम् ॥ यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥३७॥ यस्याऽऽत्मयोगरचितं न विदुर्विरिंचो रुद्रादयोऽस्य तनयाः पतयो गिरां ये ॥ त्वन्मायया पिहितदृष्टय एतदंजः किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ब्रह्मशापकृतमेतत्तव नापराध इति चेदत आह । यस्य तवात्मयोगरचितं स्वाधीनमायया रचितं विरिंचः अस्य तनया रुद्रा

जरेति टाबंतस्य स्त्रीत्वेऽपि नाम्नि पुंस्त्वादिनियमो नेति बोधितमनेन, वसिष्ठात्मजशक्तिवत् । तस्य कृष्णस्य चरणम् ॥ * ॥ जरेति टाबंत एतन्नामा विव्याधेति ;मृगो मया विद्ध इति लुब्धकस्याभिमानदृष्ट्यैव प्रयुक्तं, वस्तुतस्तदीयः शरश्चरणं पस्पर्शमात्रं, न तु विव्याध तदंगस्य सच्चिदानंदरूपत्वात् । अन्यथा ' भीतः पपात शिरसा पादयोः ' इत्यत्र पादाच्छरं निष्क्रामयामासेत्युक्तं स्यात् ॥ ३३ ॥ स लुब्धकः ॥ * ॥ कृतकिल्बिष इति तं प्रति शरनिक्षेपात् ॥ ३४ ॥ पापेन मया । मधुसूदनेति दुष्टदलनत्वं बोधयन्स्वस्य मारणे सामर्थ्यमाह । उत्तमश्लोकेति निजापराधक्षमार्थमाह । अनघेति निरपराधतां चाह । एतादृशस्य तवापराधकार्यहमवश्यं दंड्योऽस्मीत्यतः क्षमापयति नरकार्तिभीतः ॥ * ॥ हे अनघेति–यद्यपि तव चरणेऽघं कष्टं तु नाभूत्तथापि मम क्षमापणयोग्यतैवेति भावः । हे उत्तमश्लोकेति–दीनेषु मादृगज्ञानिषु कृपयैव तव यशस उत्कर्षोऽपि भवेदिति भावः ॥ ३५ ॥ अन्यदाह–यस्य तस्य ते असाधुप्रहारेण पादभेदनरूपमनुचितं कर्म । विष्णो इति व्यापकस्य तव ममाप्यंतर्यामित्वेन त्वदिच्छैवात्र हेतुः प्रतीयते, एतदेव संबुद्ध्यन्तरेण दृढीकुर्वन्नाह–प्रभो इति । मत्कृतबाणपातनिवर्तनेऽपि क्षमेण यन्नाहं निवर्तित इति ॥ * ॥ ० ॥ ३६ ॥ यतो मया लोकदृष्ट्याऽसाधुकृतं तत्तस्मात्तत्प्रायश्चित्तार्थहेतोर्मा माम् । वैकुण्ठेति तव दर्शनादहमपि मुक्त्यधिकारी जातोऽत एतद्देहपातनेन मामपुनरावृत्तिपदं प्रेषयेत्यभिप्रायेणाह–यथा पुनरिति । सत्येव जन्मनि सदतिक्रमोऽस्ति तन्निवृत्तौ तन्निवृत्तिर्भविष्यत्येवेति भावः ॥ * ॥ दैवादेव चरणे व्यथा मा भूत्त्वया तु हिंसनबुद्ध्यैव शरो निक्षिप्त एवेति चेत्तत्राह–तत्तस्मान्मा माम् आशु जहि । अत्र " निम्लोचति रवावासीद्वेणूनामिव मर्दनम् । भगवानात्ममायाया गतिं तामवलोक्य सः ॥ सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् । " इति तृतीयोक्तेः सूर्यास्तसमये यदूनां यदैव पारस्परिकसांग्रामिकवधोऽभूत्तदैव भगवांस्तत्रैव सरस्वतीतीर उपविवेश, तदैव लुब्धको मृगयार्थमागत इति लभ्यते । एतच्च नोपपद्यते षट्पञ्चाशत्कोट्यधिकानां यदूनां सद्य एव महासांग्रामिकवधे सति तत्प्रदेशे रुधिरनदीप्लाविते महाकोलाहलव्याप्ते च सति तदैव लुब्धकस्य मृगमारणार्थमागमनं कथं संभवेत्, कथं वा भीतजातीनां मृगाणां तत्र स्थितिसंभावनेत्यतो यदूनां तात्कालिको वधो मिथ्याभूतोऽपि भगवतार्जुनादीन्प्रति प्रत्यायितो युधिष्ठिरादीनां स्वभक्तानां करुणारसमयप्रेमविवर्द्धनार्थं वैराग्यार्थं च तदन्यान्प्रति तु धर्मसंकोचककुमतोत्थापनार्थम् । वस्तुतस्तु–मधूनि पीत्वा देवेष्वन्तर्हितेषु तत्र निःशब्दे निर्जने प्रदेशे लुब्धक आगत इति तत्त्वम् । अत्र वैकुण्ठेति तव हस्ततो मृतस्य मम वैकुंठगतिः स्यादिति भावः । " येये हताश्चक्रधरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन । तेते गता विष्णुपुरीम् " इत्युक्तेः ॥ ३७ ॥ भगवत्सान्त्वनेपि पुनराक्षिपति–ब्रह्मशापेत्यादि । एतन्मम पादभेदनम् । अस्य विरिंचस्य । आदिना मरीच्यादिग्रहः । वेदद्रष्टारो बृहस्पत्यादयः । यतस्तव लीला दुर्ज्ञेयाऽतो हेतोः । तत् शापादि । आदिना मुसलचूर्णनादिग्रहः । इति भाव इति–मम तु त्वत्संगत्या मुक्तिरे

॥ श्रीभगवानुवाच ॥ मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे ॥ याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥ श्रीशुक उवाच ॥ इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ॥ त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥ दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् ॥ वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥ तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ॥ स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य सबाष्पलोचनः ॥ ४२ ॥ अपश्यतस्त्वच्चरणांबुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ॥ दिशो न जाने न लभे च शांतिं यथा निशायामुडुपे प्रनष्टे ॥ ॥४३॥ इति ब्रुवति सूते वै रथो गरुडलांछनः ॥ खमुत्पपात राजेंद्र साश्वध्वज उदीक्षतः ॥ ४४ ॥ तमन्वगच्छन्दिव्यानि विष्णुप्रहरणानि च ॥ तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥

दयश्च ये चान्ये गिरां पतयो वेदद्रष्टारस्तेऽपि न विदुस्तस्य तेऽचिंत्यमायस्य एतद्ब्रह्मशापादि अंजसा असद्वृत्तयः पापयोनयो वयं किं गृणीमः कथं वर्णयामः। अतस्तदास्तामाशु मा जहीति भावः ॥ ३८ ॥ ३९ ॥ इच्छाशरीरिणेत्यस्यायं भावः। शुद्धसत्त्वमयीं निजां मूर्तिमंतर्धाय तत्प्रतिकृत्यैवं विडंबनमात्रमिति। एतदेव स्फुटीकरिष्यति 'देवादयो ब्रह्ममुख्या' इत्यादिना ॥ ४० ॥ ४१ ॥ तं पतिं तत्र दृष्ट्वा तस्य पादयोर्निपपात ॥ ४२ ॥ ४३ ॥ उदीक्षतः उदीक्षमाणस्य सूतस्य सतः ॥ ४४ ॥ ४५ ॥

वाभीप्सितेति तात्पर्यम् ॥*॥ एतम् आत्मयोगचरितमिति **विश्वनाथः** ॥३८॥ तं सान्त्वयति—मा भैरिति। एष बाणपातरूपः। मद्दर्शनादतीव पापकर्मापि त्वं बहुयत्नसाध्ययज्ञादिफलं स्वर्गमेव गच्छ लुब्धकदेहस्य मोक्षानाधिक्रतत्वाज्जन्मांतरे सोऽपि भविष्यतीत्याशयः ॥*॥ एष मे काम एव ब्रह्मशापो मयांगीकर्तव्य इति मदिच्छेत्यर्थः। स्वर्गमप्राकृतं सुकृतिनां प्रशस्तसुकृतवतां मद्भक्तानाम्। अत्र प्रशंसायां मत्वर्थीयः। पदं वैकुण्ठं याहि ॥ ३९ ॥ अत्राशयमाह—अयं भाव इति। तत्प्रतिकृत्या तस्याः शुद्धसत्त्वमयमूर्तेः प्रतिकृत्या तत्तुल्यकृत्रिममूर्त्या। एवं पादभेदादि। एतदेव विडंबनमात्रत्वमेव। त्रिर्नत्वा तं कृष्णम् ॥ * ॥ इच्छाशरीरेणेति—इच्छाधीनं शरीरं यस्य तेन तदिच्छयैव तदाविर्भावो जायत इति तत्र नान्यत्कारणं भाव्यमिति भाव इति **संदर्भः** ॥ * ॥ इच्छयैव प्रशस्तशरीरधारी भवेद्यतस्तेनेति **विश्वनाथः** ॥ * ॥ **दीपिका** तु—एवं परिकरेषु परोक्षवादं व्याख्याय स्वस्मिन्कस्यापि संदेहाभावादिच्छाशरीराभिप्रायेण मायिकचरितं प्रत्यायितं तच्चाग्रे स्वामिभिरेव व्याख्यास्यमानत्वान्न व्याख्यातमिति ज्ञेयम्। असुरस्वभावानां साक्षात्तद्दर्शनासंभवात् 'विराडविदुषाम' इत्युक्तेश्चायं भाव इत्यादि व्याख्यातम्। एतदेवान्तर्द्धानमेव ॥ ४० ॥ प्रस्तुतमंगीकरोति—दारुक इति। अन्विच्छन् मृगयन्। तां कृष्णपदवीम्। तदेवाह—वायुमिति। तुलसिकाया वनमालांतर्गताया आमोदं शोभनगन्धम् ॥ * ॥ ० ॥ ४१ ॥ तं श्रीकृष्णम्। तत्र प्रभासक्षेत्रे ॥ * ॥ तत्राश्वमूले, दृष्ट्वेत्यध्याहृतम् ॥ ४२ ॥ कथं नष्टेति प्रश्ने—तमसीत्याह। किं तेनेत्यत आह—दिश इति। तेनापि किमिति चेदाह शांतिं मंगलं स्वस्थ्यं वा। उडुपे चन्द्रे अत्रोडुभिः सह चंद्राऽदर्शनं विवक्षितमन्यथा नक्षत्रप्रेक्षणेनापि दिगादिज्ञानोपपत्तेरिति ॥ * ॥ ० ॥ ४३ ॥ ० ॥*॥ इति ब्रुवतीति—यद्यपि दशमे "रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ" इत्यनेन दारुकस्यापि रथादिवदेवागमनमुक्तं तथाप्यत्र तस्य स्तंभनं तदेकनिर्वाह्योत्तरकर्मसंपादनाभिप्रायेणैवेति गम्यते ॥ ४४ ॥ तमनु रथगमनोत्तरम्। तेन रथाद्युत्पतनेन। एतेन भगवद्रथशस्त्रा

श्रीभगवानुवाच ॥ गच्छ द्रारवतीं सूत ज्ञातीनां निधनं मिथः ॥ संकर्षणस्य निर्याणं बंधुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥ द्वारकायां च न स्थेयं भवद्भिः स्वस्वबंधुभिः ॥ मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥ स्वंस्वं परिग्रहं सर्वं आदाय पितरौ च नः ॥ अर्जुनेनाविताः सर्व इंद्रप्रस्थं गमिष्यथ ॥ ४८ ॥ त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ॥ मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥ इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनःपुनः ॥ तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥ ५० ॥ इति श्रीमद्भागवते महापुराण एकादशस्कंधे मौशलो० यदुकुलसंक्षयो नाम त्रिंशोऽध्यायः ॥ ३० ॥

निर्याणं योगमार्गेण । मद्दशामितीच्छाशरीराभिप्रायेण ॥४६॥४७॥ अविता रक्ष्यमाणा इंद्रप्रस्थं गमिष्यथेति ब्रूहीति पूर्वेणान्वयः ॥ ४८ ॥ मन्मायारचनामेतां विज्ञायेति निजश्रीमूर्तेरंतर्हितत्वाद्वृथा शोकं मा कुर्वित्यर्थः॥४९॥कुलस्य विनष्टत्वाद्दुर्मनाः॥५०॥इति श्रीमद्भागवत एकादशकंधे श्री०टीकायां मौशलो० त्रिंशोऽध्यायः ॥३०॥

दीनां चेतनत्वमेव भगवच्छक्त्येत्यन्येभ्योऽपि दर्शितम् ॥ * ॥ ० ॥ ४९ ॥ मद्दशां ममापि देहान्तर्धानम् ॥ * ॥ निधनमिति—वास्तवार्थे नितरां धनम् अप्रकटलीलासंपत्प्राप्तिः । दशां तदनुगतलक्षणाम् ॥ * ॥ **विश्वनाथस्तु**—गच्छेति रथस्य वैकुण्ठप्रस्थापनेपि सारथेस्तस्य वैकुंठाप्रस्थापनं सर्वत्र तात्कालिकस्ववृत्तज्ञापनार्थम्, तथा वैकुंठादागतस्य तस्येह नित्यस्वपार्षदानामुद्धवादीनां संगतः प्रेम्णोतिवृद्धिं दृष्ट्वा द्वारकाया अप्रकटप्रकाशगतलीलायामेव प्रवेशनार्थं चेति गम्यते । मद्दशामिति ब्रुवन्भाविनीमवस्तुभूतां लीलां सूचयति ॥ ४६ ॥ ० ॥ * ॥ समुद्रः प्लावयिष्यतीति—परितः प्लावनमपि तेषां त्याजनार्थमेव प्लावनमात्रमुक्तम् ॥ ॥ ४७ ॥ ० ॥*॥ ० ॥ ४८ ॥ यद्वा—एतां देहादिस्वीकारत्यागरूपां संसाररचनाम् । इत्यर्थ इति—मया जगद्धिताय शुद्धसत्त्वमूर्तिरंगीकृता तत्कृत्वा च स्वेच्छाकृततत्सदृशमूर्तित्यागेन सांतर्हिता मायिकमूर्तेरनित्यतां बोधयितुं तत्त्यागे प्रवृत्तं मां दृष्ट्वा शोको न कार्यः शुद्धसत्ताया विद्यमानत्वादिति भावः । उपेक्षकः पुत्रादिषूदासीनः ॥ * ॥ अथ दारुकसान्त्वनाय मौसलाद्यर्जुनपराभवपर्यन्ताया लीलाया माययेन्द्रजालवद्रचितत्वमुपदिशति—त्वं त्विति । त्वं तु दारुको ज्ञाननिष्ठो मदीयलीलातत्त्वज्ञः मद्धर्मं मम स्वभक्तपालयितृत्वरूपं स्वतुल्यं परिकरसंगित्वरूपं च स्वभावमास्थाय विस्रभ्य एतामधुना प्रकाशितां सर्वामेव मौसलादिलीलां मम माययैवेंद्रजालवद्रचितां विज्ञाय उपेक्षको बहिर्दृष्ट्या जातं शोकमुपेक्षमाण उपशमं चित्तक्षोभान्निवृत्तिं व्रज प्राप्नुहि । तुशब्देनान्ये तावन्मुह्यन्तु नाम भवतस्तथा मोहो न युक्त एवेति ध्वनितम् । अत्र श्रीदारुकस्य स्वयं वैकुंठादवतीर्णत्वेन सिद्धत्वादेतामित्यत्रातिसन्निहितार्थलाभाच्चान्यथा व्याख्यानमेव प्रथमप्रतीत्यविषय इति विवेक्तव्यम् । दृश्यते चेयं परिपाटी स्वर्गपर्वणि प्रतीतिः श्रीभीमादिनरके श्रीयुधिष्ठिरं प्रति धर्मराजवचनम्—" न च ते भ्रातरः पार्थ नरकस्था विशांपते । मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ " इति ॥*॥ अत्र **विश्वनाथः**—ननु सच्चिदानंदात्मकस्य स्वविग्रहस्य रामादिविग्रहस्य चैतादृशः प्रकारोयं क इति कृपया मामाचक्ष्वेत्यत आह—मन्मायेति । एतां प्रत्याय्यमानां लीलाम् ॥४९॥ तं कृष्णम् । पुनःपुनरिति वियोगमसहमानः । तत्पादौ पादुके ध्यानेन चरणौ वा । यद्वा—हस्ताभ्यां श्रीकृष्णचरणौ गृहीत्वा शिरसि संस्थाप्य दुःखितांतःकरणः । पुरीं द्वारकाम् ॥*॥ यद्यप्यन्तरानंदयुतस्तथापि बहिर्दृष्ट्या दुर्मना इति ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

श्रीशुक उवाच ॥ अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ॥ महेंद्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥ पितरः सिद्धगंधर्वा विद्याधरमहोरगाः ॥ चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥ द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ॥ गायंतश्च गृणंतश्च शौरेः कर्माणि जन्म च ॥ ३ ॥ ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ॥ कुर्वंतः संकुलं राजन्भक्त्या परमया युताः ॥ ४ ॥ भगवान्पितामहं वीक्ष्य विभूतीरात्मनो विभुः ॥ संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥ लोकाभिरामां स्वतनुं धारणाध्यानमंगलम् ॥ योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥ ६ ॥

एकत्रिंशे स्वकं धाम जगाम भगवानितः ॥ तमेवानुययुः प्रीत्या वसुदेवादयस्ततः ॥ १ ॥ देवान्यदून्विधायादौ भूयो देवान्विधाय च ॥ श्रीकृष्णः स्वेच्छया धाम स्वतन्वैव समाविशत् ॥ २ ॥ मुनयः सनकादयः । प्रजेश्वरा मरीच्यादयः ॥ १ ॥ द्विजा गरुडलोकनिवासिनः पक्षिणः मैत्रेयादयो वा ॥ २ ॥ भगवतो निर्याणं द्रष्टुकामाः सन्तः परमोत्सुकास्तत्रागमन् । तेषामौत्सुक्यकृतं महोत्सवमाह सार्धेन । गायंतश्चेति ॥ ३ ॥ ४ ॥ विभूतीरिंद्रादींश्च । पद्मनेत्रे न्यमीलयदित्यत्रायं भावः । पूर्वं ब्रह्मादिभिः 'सलोकाल्ँलोकपालान्नः पाहि वैकुंठ किंकरान्' इति प्रार्थितत्वादिदानीं च स्वंस्वं लोकं प्रति नेतुमागतत्वाद्बहुषु च तेषु दाक्षिण्यात्तान्वंचयितुं समाधिमिव कुर्वन्नेत्रे न्यमीलयदिति ॥ ५ ॥ योगिनामिव स्वच्छंदमृत्युभ्रमं वारयति । लोकाभिरामामिति । अयमर्थः । योगिनो हि स्वच्छन्दमृत्यवः स्वां तनुमाग्नेय्या योगधारणया दग्ध्वा लोकां

इतो मनुष्यलोकात् । तं भगवन्तम् । ततस्तस्मान्नरलोकात् (१) । आदौ निजावतारतः पूर्वमेव । देवान् 'भवद्भिरंशैर्यदुषूपजन्यताम्' इत्युक्तेर्यदून् यदुकुलेऽवतार्य पुनस्तांस्तत्रैव प्रस्थाप्य । स्वतन्वा शुद्धसत्त्वमयतन्वा (२) । अथ दारुकप्रेषणानंतरम् । तत्र प्रभासक्षेत्र एव । समं सह ॥*॥ इतः प्रकटप्रकाशात् । तमेवानु कृष्णस्य पश्चादेव वसुदेवादयोपि ततः प्रपञ्चप्रकाशात्तदेव धाम ययुर्निरंतरवसुदेवादीनां मद्धामगमनोक्तेः (१) । देवान् यदून्विधाय पूर्वं तांस्तदंशांस्तेषु प्रवेश्येत्यर्थः । पुनस्तेभ्यो निस्सार्य देवान्कृत्वा स्वतन्वैव सह (२) । अथेति सार्धत्रिकम् । तत्र प्रभासे ॥ १ ॥ गरुडागमनस्य सामंजस्येऽप्यन्यपक्ष्यागमनस्याद्भुतवद्भानादाह—मैत्रेयादयो वेति ॥*॥ ० ॥ २ ॥ परमोत्सुका अत्युत्कंठिताः । तत्र क्षेत्रे । तेषां ब्रह्मादीनाम् ॥ * ॥ ० ॥ ३ ॥ संकुलमाच्छन्नम् ॥*॥ ० ॥ ४ ॥ इत्यत्र नेत्रनिमीलने तात्पर्यमाह—अयं भाव इति । दाक्षिण्याचातुर्यबलात् । तान्ब्रह्मादीन् । वंचयितुं मोहयितुम् । इवेन समाधिव्यांज एवोक्तः । आत्मनि स्वरूपे एवात्मानं संयोज्य भावयित्वा ॥*॥ **संदर्भस्तु**—भगवान् पितामहं वीक्ष्य तदाद्याश्चात्मनो विभूतीर्देवादिरूपा वीक्ष्य ततश्च तत आकृष्य पद्मनेत्रे न्यमीलयत् । किं कृत्व—आत्मनि स्वस्वरूप एवात्मानं मनः संयोज्येति । एवं तत्र योगिनो योगविभूतौ वैराग्यपूर्वकं देहत्यागं शिक्षयितुं तेषु स्वविग्रहतत्त्वमावरीतुं च तत्तद्दर्शितमिति ज्ञेयम् ॥ ५ ॥ श्लोकाभिप्रायं स्फुटयति—अयमर्थ इति । तत्र तनुसहगमने । इत्यर्थ इति—अनेकब्रह्मांडाश्रयस्य वपुषो दाहोऽन्याय्य इति विमृश्य सहैव नीतवानिति भावः । कारणांतरमाह—किञ्चेति । इतरथा तद्दाहे । तयोर्धारणाध्यानयोः । निर्विषयत्वमनाश्रयत्वम् । तन्न संभवतीत्याह—दृश्यते चेति । तथैव यथोक्तमेव । फलप्राप्तिर्दर्शनफलम् । इति भाव इति—अन्यथा स्वरूपदर्शनतत्फलीभूतमुक्त्यादिर्न स्यादिति भावः । चित्तस्य देशसंबन्धो धारणा, प्रत्ययैकतानता ध्यानमिति तयोर्भेदः । शुद्धसत्त्वमयस्य विद्यमानत्वेऽपि तत्प्रतिकृत्यभिप्रायेण यथाश्रुतार्थस्वीकारेऽपि न दोष इत्याह—इच्छाशरीरेत्यादि । तत्रापि यथाश्रुतार्थांगीकारेऽपि । तदपि तत्प्रतिकृतिरूपमपि । सांप्रतमुचितम् । भारते यदुक्तं मौसले—" ततः शरीरे रामस्य वासुदेवस्य चोभयोः । अन्विष्य दाहयामास पुरुषैराप्तकारिभिः ॥ " इति, तदासुरजनमोहार्थमेव । तदुक्तं ब्रह्माण्डे—" स्त्रीपुंमलानुषंगात्मा देहो नास्य विजायते । किन्तु निर्दोषचैतन्यं सुखनित्यं स्वकां तनुम् ॥ प्रकाश

तरं प्रविशंति भगवांस्तु न तथा किंत्वदग्ध्वैव स्वतनुसहित एव स्वकं धाम वैकुण्ठाख्यमविशत् । तत्र हेतुः । लोकाभिरामां लोकानामभिरामोऽभितो रमणं स्थितिर्यस्यां ताम् । जगदाश्रयत्वेन जगतोऽपि दाहप्रसंगादित्यर्थः । किंच धारणाया ध्यानस्य च मंगलं शोभनं । विषयमितरथा तयोर्निर्विषयत्वं स्यात् । दृश्यते चाद्यापि तदुपासकानां तथैव तद्रूपसाक्षात्कारः फलप्राप्तिश्चेति भावः । इच्छाशरीराभिप्रायेण वा यथाश्रुतमेवास्तु तत्रापि तु लोकाभिरामामित्यादीनां विशेषणानामानर्थक्यप्रसंगात् । वस्तुतस्तु तदप्य

यति सैवेयं जनिर्विष्णोर्न चापरा । तथाप्यसुरमोहार्थं परेषाञ्च कचित्कचित् ॥ दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क व्रणादि क चाज्ञानं स्वतंत्राचिन्त्यसद्गुणे ॥ मोक्षाभावाय तेषां तु दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् ॥ लोकानां दर्शयामास स्वरूपसदृशाकृतिम् । " इति । एतेन " यथाऽहरद्भुवो भारं तां तनुं विजहावजः " इति प्रथमस्कन्धोक्तिरपि समंजसा स्यादिति: सर्वमनवद्यम् ॥ * ॥ तथै वाह—लोकाभिरामामिति । तत्र टीकायामेतदुक्तं भवति—वाक्ये खलु कस्यचित्पदस्यान्यार्थप्रतीतौ सत्यामुपदेशपदैरेवार्थो निर्णीयते " आकाशस्तल्लिंगात् " इत्यादिन्यायात् । ततो लोकेत्यादिपदानि दग्ध्वेत्यादिप्रतीतिमुप मर्द्यादग्ध्वेत्येव निश्चिन्वन्ति । तथाहि—लोकाभिरामामित्यनेनोक्तं जगदाश्रयत्वमेव तावत् । तथा तत्प्रतिपादयति—यदि त्वसंकुचितया वृत्त्या लोका ये महावैकुण्ठनित्यपार्षदादयो भक्ता ये चात्मारामादयो ज्ञानिनस्तदाद्याः स्था वरांताः सर्व एवोच्यन्ते, तदा तेषां रमणहेतुना तत्प्रतिपादयतीति किं वक्तव्यमित्यर्थः । तथास्तु तावत् महापार्षदाद्यभिरामत्वविचारः साधकजीवाश्रयत्वविचारोपि तत्तथैव साधयति । यतो धारणाध्यानमंगलमित्युक्तं, तत्र तयोः शोभनविषयत्वरूपार्थोपि तत्संपादयति । यदि च धारणाध्यानमात्राभ्यां तत्तत्कर्तॄणामपि या मंगलरूपा भवति तस्या वा कथमन्यथात्वमित्यर्थः । किंच—धाम्नस्तनोश्च तदपेक्षितत्वव्यंजनाय स्वस्वरूपत्वदर्शनाय वा विशेष णत्वेन पृथक्पृथगेव स्वशब्दौ दत्तौ, तन्वपेक्षया न्यूनत्वसूचकेन कप्रत्येन तु स्वतनोरेव मुख्यत्वं गमितं, स्वतनूमित्यत्र समासोक्त्या च नीलोत्पलादौ नीलत्ववत् तनौ स्वत्वाव्यभिचारो नितरां निश्चितः, तत्र यदि धाम्नस्तेन विशेषेण श्रीभगवदपेक्षितत्वादिकं व्यंजितं तर्हि तनोर्वा कथं न व्यज्येतेति । अथ यद्येवं तर्हि तया धारणया तामदग्ध्वेत्येव किमर्थमकंडूकंडूतिः क्रियते, उच्यते—योगिप्रभृतीनां भ्रमहेतुद्वारा भ्रममनूद्य प्रत्याख्यातमिति तदेतदाह—योगिनो हीति । तदानीं तेनाग्नेयी धारणा कृतेति सत्यमेव किन्तु तया स्वतनूमदग्ध्वैव स्वकं धामाविशत्, ततो योगिनां देहत्यागशिक्षणार्थमेव धारणामनु तदंतर्द्धापनमित्येव ज्ञेयं—नान्यथेति बोधितं तादृशानां चमत्कारिणी लीलैव चैका खल्वसाविति । किंवा—यदि च " इत्यंगोपदिशंत्येके विस्मृत्य प्रागुदाहृतम् । मुनिवासनिवासे किं घटेतारिष्टदर्शनम् ॥ " इत्यनेन " एवं वदंति राजर्षे ऋषयः केचनान्विताः । यत्स्ववाचो विरुध्येत न नूनं ते स्मरन्त्युत ॥ " इत्यनेन च श्रीभगवतस्तादृशत्वमपि मुन्यन्तरमतं श्रीमुनीन्द्रेण न सोढं तदा किमुतेदृशम् । तत्रापि हि मुनिवासनिवास इत्यादिवत्तत्खण्डनाय लोकाभिरामामित्यादिविशे षणानि दत्तानि, तदेव श्रीभगवता स्वतत्त्वगोपनार्थमेव यानि मायया दर्शितानि तदनुवादीन्येव तत्तन्मुनिवचनानि ज्ञेयानि । तदेतदेव दर्शयिष्यते—देवादय इत्यादिभिः । तेष्वपि केषुचित्पूर्वमपि स्वविग्रहो न प्रकटितः किन्तु " नाहं प्रकाशस्सर्वस्य योगमायासमावृतः " इति ' विराडविदुषाम् ' इति च न्यायेनान्य एव कल्पयित्वा दर्शितः । तस्यैव कैश्चित्तन्मायायान्यथाकृतदृग्भिर्विसदृशत्वं प्रतीतं, तस्यैव च मानुषदेहतामनूद्य मुनि भिरपि कैश्चिद्वर्णितं, स्वतनूमदग्ध्वेत्येवं हि स्वेच्छामयमायाकल्पितां तनूमेव दग्ध्वेत्यायाति । तदेतदाह—स्वेच्छाशरीराभिप्रायेण वेति । तदप्यसहमान आह—तत्रापि त्विति । स्वेच्छया कल्पितत्वे सति स्वेच्छयैव तिरो धापनं लभ्यते—तथा चाग्नेयधारणापि तथैव कल्पनामयीति भावः । श्रीकृष्णसंदर्भेपि इच्छाशरीरिणेति स्वेच्छाप्रकाशेनेति व्याख्यातम् । यद्वा—इच्छापि शरीरं तद्व्क्रियासाधकं यस्य तेनेति व्याख्येयम् । तत्रापि तदि च्छाया मायायाः प्रेरकत्वमेवात्र गम्यमिति साध्वेव तद्व्याख्यातं, तमिममर्थं श्रीभगवानिव यन्मुनिजनः परोक्षतया दर्शयति तत्तु युक्तमेव भगवदनुसारित्वात् । तथोक्तम्—" परोक्षवादा ऋषयः परोक्षं मम च प्रियम् " इति सन्दर्भः ॥ * ॥ विश्वनाथस्तु—धारणाध्यानमंगलं यथा स्यात्तथा शुद्धं जांबूनदमिव स्वतनुं दग्ध्वेतिवत्तदाहोत्तीर्णं जांबूनदमिव स्वतनूमादायैव धामाविशत्, संदिहानान्वादिनस्तु वह्निना स्वतनोर्दाहासामर्थ्यं दर्शया

दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ॥ सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चान तं ययुः ॥ ७ ॥ देवादयो ब्रह्ममुख्या न विशंतं स्वधामनि ॥ अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥ सौदामन्या यथाकाशे यांत्या हित्वाऽभ्रमंडलम् ॥ गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ॥ ९ ॥ ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ॥ विस्मितास्तां प्रशंसंतः स्वंस्वं लोकं ययुस्तदा ॥ १० ॥ राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडंबनमवेहि यथा नटस्य ॥ सृष्ट्वात्मनेदमनुविश्य विहृत्य चांते संहृत्य चात्ममहिनोपरतः स आस्ते ॥ ११ ॥

दग्ध्वा तिरोधाय निर्गत इत्येव सांप्रतम् ॥ ६ ॥ तदा स्वंस्वमेव लोकमागमिष्यतीति संभ्रमेण देवादिकृतः सर्वतो दुंदुभिनादपुष्पवृष्ट्यादिमहोत्सवोऽभवदित्याह । दिवीति । भूमेः सकाशात् । श्रीकृष्णमनुययुः ॥ ७ ॥ तदा श्रीकृष्णेंतर्हिते सति कुतो गत इति वितर्कयंतोऽपि ब्रह्ममुख्या देवादयः स्वधामनि विशंतं श्रीकृष्णं न ददृशुः । तत्र हेतुः । अविज्ञातगतिमिति । क्वचित्क्वचिद्ददृशुश्च ततोऽतिविस्मिता बभूवुरित्यर्थः ॥ ८ ॥ अविज्ञातगतित्वं दृष्टांतेन स्पष्टयति । सौदामन्या गतिर्यथा मर्त्यैर्न लक्ष्यते दैवैस्तु लक्ष्यते तथा भूमंडलं हित्वा गच्छतः श्रीकृष्णस्य गतिर्दैवैरपि न लक्ष्यते । किंतु तत्पार्षदैरेवेत्यर्थः ॥ ९ ॥ १० ॥ अभिप्रायापरिज्ञानात्प्रथमं परिक्लिष्टं ततश्च दृष्टांतेन स्पष्टमुक्ते हृष्टं

मासेति तात्पर्यम् । “ वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमंगलम् ” इति तदुक्तेर्व्याचक्षते केचिदित्याह ॥ ६ ॥ तदा भगवन्निर्याणावसरे । संभ्रमेण वेगेन । सुमनसः पुष्पाणि । ‘ भूम्नि स्त्रियां सुमनसः ’ इति रत्नकोशात् । “ स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ” इत्यमरः । श्रीः समृद्धिः । एतत्कालिकसत्यादीनामाभासत्वमेव, परमार्थानां श्रीकृष्णानुगतत्वादिति तत्त्वम् ॥ * ॥ सत्यधर्मादयो ययुरिति तत्पराभावकनानाकुपथानां तदैवोत्थापनादिति भावः । श्रीकृष्णभयादेव पृथुयज्ञेंद्रदर्शितनानापाखण्डमतानि तिरोभूया स्थितानि श्रीकृष्णेंतर्हिते तदैवाविरासन्निति यावत् ॥ ७ ॥ कुतो गतो भगवानिति । तत्राऽदर्शने । इत्यर्थ इति—क्वचित्तेजोमंडलं पश्यंतोऽपि वस्तुतस्तन्न ददृशुरिति भावः ॥ * ॥ सर्वज्ञा अपि ब्रह्मादयो न ददृशुरित्यर्थः ॥ ८ ॥ इत्यर्थ इति—पार्षदानां सर्वदा पादसरोजगंधप्रेमातिभरसेवानिरतत्वात्तत्सहचारित्वेन तेषामेव तद्दर्शनमन्येषां तन्मायावृतदृष्टित्वात्तद्दर्शनं दुर्घटमेवेति भावः । “ स एव धातुः पदवीं परस्य दुरन्तवीर्यस्य रथांगपाणेः । यो मायया संततयाऽनुवृत्त्या भजेत तत्पादसरोजगंधम् ॥ ” इत्युक्तेः ॥ * ॥ अविज्ञातगतित्वं दृष्टान्तेन स्पष्टयति—सौदामिन्या इत्यादि । स्वपार्षदैरेवेत्यन्तं तैः । तैश्च पार्षदैर्महावैकुण्ठकारणार्णवक्षीरोदादिभ्य आगत्य भगवद्योगमाययैव हेतुना परस्परालक्षितैः स्वप्रभुं वयं स्वधाम नयाम इत्युल्लसद्भिः सहैव ययौ । तथाविर्भावकाले तत्तद्धामनाथैस्सह पार्षदास्तत आगत्य यदुष्वजनिषत येये ते पुनर्निर्याणकालेपि स्वस्वनाथैः सह तत्रतत्रैव ययुरिति ज्ञेयम् ॥ ९ ॥ योगगतिं योगमायावैभवम् । तां योगगतिम् । तदा भगवन्निर्याणोत्तरावसरे ॥ * ॥ विस्मिता इति—वयं योगेश्वरा इत्यभिमन्यामहे किं त्विमां योगगतिं न विद्म एवेति भावः । प्रशंसन्त इति—कः खल्वेवं कर्तुं प्रभवेद्यः सर्वज्ञैरप्यस्माभिरज्ञाततत्त्वो योगेश्वरैरदृष्टयोगगतिकः, किंतु स्वान्तरभक्तैर्ज्ञात एव दृष्टयोगगतिक एव सन्स्वधाम प्राविशदिति भावः ॥ १० ॥ अभिप्रायो देवमोहनलक्षणः । क्लिष्टमाकुलं परीक्षितं तमेव पूर्वोक्तं दुर्विज्ञेयगतित्वरूपम् । आदिना मत्स्यादिग्रहः ।

दृष्ट्वा पुनस्तमेवार्थं प्रपंचयति राजन्निति त्रिभिः । परस्य सर्वकारणस्य तनुभृत्सु यादवादिषु जननाप्ययेहाः आविर्भावतिरोभावरूपाश्चेष्टा मायया अनुकरणमात्रमवेहि । नटो यथाऽविकृत एव नानारूपैर्जन्मादीन्विडंबयति तद्वत् । आस्तां तावद्यादवादिषु जन्मादिशंका यावद्विश्वसर्गनिरोधादिष्वप्यसावविकृत एवास्त इत्याह । सृष्ट्वेति । आत्मना

नटो यथेति—“ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ” इत्युक्तेर्न केवलं लीलाविग्रहेष्वेवेयं लीला किन्तु गुणविग्रहेष्वपीत्याह—आस्तामित्यादि । “ तत्सृष्ट्वा तदेवानुप्राविशत् ” इति श्रुतेः ॥ * ॥ भगवत स्तत्परिकराणां च तादृशत्वं सर्वलोकदृष्टम् । खिद्यमानं राजानं लीलातत्त्वसिद्धान्तेनाश्वासयति—राजन्निति । मुनिभिरपि दुर्ज्ञेयतत्त्वो राज्ञा त्वदन्येन कथं ज्ञेयस्स इति, त्वं तु “न्यस्तक्रीडनको बालः कृष्णक्रीडां य आददे” इति वचनाद्बाल्यमारभ्य तद्भक्तोस्यतस्तत्तत्त्वं जानास्येव विना सेव्यज्ञानं सेवानुपपत्तोरिति भावः । परस्य परमेश्वरस्य । तनुभृतां जीवानामिव जननेहा जन्मचेष्टा, अप्ययेहा मरणचेष्टा च मायया विडंबनमनुकरणमेव जानीहि न तु तत्त्वतः । जीवानां शुक्रशोणितविकृततनुभृतां जन्माप्ययौ दुःखमयौ, परमेश्वरस्य तु चिन्मयविग्रहस्याविर्भावतिरोभावौ सुखमयावेव । तदुक्तम्—“ देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥ ” इति, ‘ अजोऽपि जातो भगवान् यथाग्निः ’ इति, ‘ कृष्णद्युमणिनिम्लोचे ’ इति, “ आदायांतरधाद्यस्तु स्वबिम्बं लोकलोचनम् ” इति, “ अनादेयमहेयञ्च रूपं भगवतो हरेः । आविर्भावतिरोभावावस्योक्ते ग्रहमोचने ॥ ” इति ब्रह्माण्डोक्तेः । तदपि यत् क्वचिज्जीवस्य जन्माप्ययौ दृश्येते तन्मायया विडंबनमित्येवेत्यर्थः । यथा नटस्येति—ऐन्द्रजालिको नटो यथा मिथ्याभूते अपि जन्ममरणे स्वपरेषां दर्शयति तथा तत्र मरणं कश्चिद्दर्शयामास।तत्कथोच्यते—कस्यचिदैन्द्रजालिकस्य महाराजाग्रत एव तद्दत्तेषु वस्त्रालंकारमुद्रादिषु मध्ये रत्नमालामहं गृह्णामि न त्वं स्वर्णमुद्रा अहमेव गृह्णामि न त्वं सातसाहस्त्रिकोयमश्वो मयैव ग्राह्यो न त्वयेत्येवं तत्पुत्रपौत्रादीनां कलहे पारस्परिकास्त्रघातेन प्रायः सर्वेषामेव मरणमभूत्, तद्दृष्ट्वा महासभोपविष्टं नृपतिं प्रत्यैन्द्रजालिक ऊचे—भो राजन्नलमतः परं मे जीवितेन इन्द्रजालविद्या यथा शिक्षिता तथैव गुरुचरणप्रसादाद्योगधारणापि साधु शिक्षिता वर्तते तयैव देहत्यागस्तीर्थे कर्तव्योपि सांप्रतं पुण्यकीर्तितीर्थस्य तवैवाग्रे क्रियत इत्युक्त्वा स्वस्तिकासन उपविश्य प्राणायामप्रत्याहारधारणाध्यानसमाधिनिरतस्तूष्णीमभूत् । मुहूर्तानन्तरं तद्देहतः समाधिजोग्निरतिप्रचंड उद्भूय तद्देहं भस्मीचकार । ततस्तत्पत्न्यः शोकार्तास्तमग्निमेव विविशुरथ त्रिचतुर्दिवसानंतरं तेनैवेन्द्रजालिकेन स्वदेशं गत्वा राजानं प्रति पत्रिका प्रहिता भो राजंस्त्वत्समीपात्स्वस्तिमानेव सकलपुत्रपौत्रभ्रातृकस्त्वद्दत्तानि बहुरत्नान्यादाय त्वद्देशस्थजनैरलक्षित एव स्वभवनमागतोऽहमत्र वर्ते तस्मात्त्वदग्रे प्रकाशिताया इन्द्रजालविद्यायाः पारितोषिकं यदुचितं तन्मह्यं दातव्यमिति दृष्टान्तविवृतिः । दार्ष्टान्तिकं विवृणोति—आत्मना स्वेनैवेदं मुनिशापनिबंधनमहोत्पातपारस्परिककलहशास्त्रास्त्रप्रहारघातादिकं वैकल्यं सृष्ट्वाऽनुप्रविश्य तन्मध्ये स्वयमपि प्रविश्य विकृत्य तैर्मर्त्यैः सह स्वयमप्येरकास्त्रग्रहणेन क्षणं खेलित्वांते संहृत्य चात्ममहिम्ना मायात उपरतः सन्नास्त इति **विश्वनाथः** ॥ * ॥ **संदर्भस्तु**—तत्र यादवानां नान्यथात्वं संभवति किमुत श्रीरामस्य श्रीकृष्णस्य चेति सिद्धान्तयन्नाह—राजन्निति । परस्य श्रीकृष्णस्य ये तनुभृतः “ प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनूम् ” इति नारदोक्त्यनुसारेण तदीयां तनुमेव धारयंतस्तत्पार्षदा यादवादयस्तेषां जननाप्ययरूपा ईहा चेष्टा केवलं परस्यैव मायाविडंबनमवेहि । यथेंद्रजालवेत्ता नटः कश्चिज्जीवत एव मारयित्वेव दग्ध्वेव पुनश्च तद्देहं जनयित्वेव दर्शयति तस्येव विश्वसर्गादिहेत्वचिंत्यशक्तेस्तस्य तादृशशक्तित्वं न चित्रमित्याह—सृष्ट्वेति । एवं सति श्रीसंकर्षणादौ मुग्धानामन्यथाभानहेतूदाहरणाभासः सुतरामेव मायिकलीलावर्णने प्रवेशितो भवति । अत एव जरासंधवाक्ये ‘ तव राम यदि श्रद्धा ’ इत्यत्र श्रीस्वामिपादैरपीत्थं वास्तवोर्थो व्यंजितः । अच्छेद्यदेहोसावितिस्वयमेव मत्वाऽपरितोषात्पक्षान्तरमाह—यद्वा मां जहीति । तदेवं चानेन व्याख्यानेन ‘ लोकाभिरामाम् ’ इत्यादिपद्येषु योगिजनशक्तिविलक्षणभगवच्छक्तिव्यंजकं श्रीस्वामिचरणानामदग्ध्वेत्यादिपदच्छेदादिमयव्याख्यासौष्ठवं कैमु

मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् ॥ जिग्येंतकांतकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम् ॥
॥ १२ ॥ तथाऽप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ॥ नैच्छत्प्रणेतुं वपुरत्रशेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् ॥ १३ ॥

स्वयमेवेदं जगत्सृष्ट्वांतर्यामित्वेनानुविश्य आत्ममाहिना स्वमहिम्ना उपरत आस्ते ॥ ११ ॥ न पुनरन्यथा मंतव्यं यतोऽस्मिन्नेवावतारे तत्प्रभावो निरतिशयो दृष्ट इत्याह । मर्त्येनेति । यमेन स्वलोकं प्रति नीतं गुरुसुतं मर्त्येन तेनैव शरीरेण य आनयदानीतवान् । शरणदः शरणागतरक्षकस्त्वां च ब्रह्मास्त्रदग्धं यो रक्षितवान् । यश्चांतकानामंतकमपि ईशं श्रीरुद्रं बाणसंग्रामे जितवान् । मृगयुं लुब्धकं सदेहं यः स्वः स्वर्गमनयन्निन्ये । असौ स्वावने स्वरक्षणे अनीशोऽसमर्थः किम् ॥ १२ ॥ ननु यदि समर्थस्तर्हि किंचित्कालमत्रैव तेनैव वपुषा किं नातिष्ठत्तत्राह । तथापीति । यद्यप्युक्तप्रकारेणाशेषस्य जगतश्चराचरस्य स्थित्यादिष्वनन्यहेतुर्निरपेक्ष एव कारणं स्वयं यद्यस्मादशेषशक्तिधृक् तथापि यादवान् संहृत्य निजं वपुरत्र शेषितमवशेषितं प्रणेतुं कर्तुं नैच्छत् किंतु स्वमेव लोकमनयत् । तत्र हेतुः । मर्त्येन देहेन किं न किंचित्कार्यमिति स्वस्थानामात्मनिष्ठानां दिव्यां गतिमेव प्रकृष्टां दर्शयन् । अन्यथा तेऽपि दिव्यां गतिमनादृत्य योगबलेन देहसिद्धिं विधायात्रैव रंतुं यतेरंस्तन्मा भूदित्येतदर्थमिति भावः ॥ १३ ॥

त्यातिशयेन सुष्ठ्वेव स्थापितम् । यत एव च दृश्यतेऽप्याप्युपासकानामित्यादिपंचकं तदुक्तं सुसंगतं भवति तत्तत्परिकरेणैव सार्द्धं तेषु तत्साक्षात्कार इति ॥ ११ ॥ एतन्नाघटितमित्याह—न पुनरित्यादि । निरतिशयः सर्वाधिकः । तेनैव यच्छरीरं यमो नीतवांस्तेनैवेत्यर्थः । रक्षितवान् पुनरजीवयत् । तेनैव येन बाणप्रहारः कृत इत्यर्थः । किमत्र वितर्के । किन्तु समर्थ एव प्रयोजनाभावान्न रक्षितवानित्यर्थः ॥ * ॥ अप्राकृतदेहानां तेषां तन्न संभवतीत्यास्तां श्रीकृष्णपाल्यत्वेनैव न संभवतीत्याह—मर्त्येनेति । यः श्रीकृष्णः यमलोकगतमपि गुरुसुतं गुरोर्जातेन पञ्चजनभक्षितेन मर्त्येन देहेनैवानयत् । न च ब्रह्मतेजसो बलवत्त्वं मन्तव्यम्, त्वां च ब्रह्मास्त्रदग्धं यदस्माद्ब्रह्मास्त्रादानयत् रक्षितवानित्यर्थः । किमन्यद्वक्तव्यं, यश्चान्तकानामंतकारिणां त्रिपुरादीनां महारोगादीनामप्यंतकारिणं श्रीरुद्रमीशं सर्वनियन्तारं बाणासुरयुद्धे जितवानिति, यश्च जराहृं मृगयुं स्वर्वैकुण्ठविशेषं सदेहं प्रापितवान् स कथं स्वानां यदूनामवने ईशो न भवति, तस्मात्तेष्वन्यथात्वदर्शनं न तात्त्विकलीलानुगतं, सशरीरं तु तेषां स्वलोकगमनमतीव युक्तमित्यर्थः ॥*॥ **विश्वनाथस्तु**—तदवने शक्तोपि स स्वपार्षदैः सह सदापि प्रपञ्चगोचरीभूतोपि विराजितुं शक्नोत्येवेति भावः ॥ १२ ॥ पुनरत्राक्षिपति—नन्विति । येन भूभारो हृतस्तेनेत्यर्थः । निरपेक्ष एवेति दुरवबोध इवायं तत्र विहारयोगो यदशरणोऽशरीर इदमनपेक्षितास्मत्समवाय आत्मनैवा विक्रियमाणेन ' सगुणमगुणः सृजसि पासि हरसि ' इति वृत्रोपाख्याने देवगणोक्तेः । तत्र स्वलोकनयने । "भूभारः क्षपितो येन जहौ तच्च कलेवरम् । कंटकं कंटकेनैव द्वयं चापीशितुस्समम् ॥" इत्युक्तेः प्रयोजनाभावादत उक्तम्—मर्त्येन किमिति । किंचित्प्रयोजनमपि तन्नयने सूचयति—स्वस्थानामिति । अन्यथा मया मर्त्यापरित्यागे । तेऽपि आत्मनिष्ठा अपि । इति भाव इति—"योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् । तच्छ्रद्दध्यान्न मतिमान् " इत्युक्तेः । " न हि तत्कुशलादृत्यं तदायासो निरर्थकः । अंतवत्त्वाच्छरीरस्य" इत्युक्तेश्चेत्याशयः ॥ * ॥ तथापि यद्यप्येवं निरंकुशैश्वर्यस्तदापीत्यर्थः । तत्र निरंकुशैश्वर्यमाह—अशेषाणामेव लोकानां स्थित्यादिष्वनन्यहेतुनिरपेक्षः स एवैकः कारणं यतोऽशेषाश्शक्तयश्चित्त इति सः । तथापि देवान्स्वर्गे प्रस्थाप्य वपुः सपार्षदस्य स्वस्य शरीरं शेषितुमवशेषितं

य एतां प्रातरुत्थाय कृष्णस्य पदवीं परम् ॥ प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥ दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ॥ पतित्वा चरणावस्रैर्न्यषिञ्चत्कृष्णविच्युतः ॥ १५ ॥ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ॥ तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ १६ ॥ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ॥ व्यसवः शेरते यत्र ज्ञातयो घ्नंत आननम् ॥ १७ ॥

य एतामुक्तप्रकाराम् । पदवीं गतिम् ॥ १४ ॥ तदैव भगवता स्वलोकं गच्छता वसुदेवादीनामपि तत्प्राप्तये य उपायश्चिंतित आसीत्तमाह दारुक इत्यादिना ॥ १५ ॥ ॥ १६ ॥ १७ ॥

प्रणेतुं मर्त्यलोके प्रकटीभूतं कर्तुं नैच्छत् किंत्वंतर्द्धापयितुमैच्छत् । कुतः—मर्त्येन मर्त्यलोकेन किं भगवता मर्त्यलोकापेक्षा न कृता किन्तु स्वर्गलोकापेक्षा कृतैव स्वर्गस्थानां ब्रह्मादीनां प्रार्थनयैव मर्त्यलोके प्रादुर्भावात् । तेषामेव प्रार्थनया वैकुंठं च जगामेति व्यंजयन् विशिनष्टि—स्वस्थान्स्वर्गस्थान्ब्रह्मादीन्प्रति गतिं वैकुण्ठगमनं प्रदर्शयन् ज्ञापयन्सन् । व्याख्यान्तरं तु—" आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् " इत्याद्युद्धववाक्यविरोधादसुरसंमतत्वाच्च भक्तैरग्राह्यम् । तस्यासुरसंमतत्वं भक्ताग्राह्यत्वञ्चोद्धवेनैवोक्तम् । यथा—" देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः । भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥ " इति ॥ * ॥ **सन्दर्भस्तु**—ननु गच्छन्तु ते सशरीरा एव तत्रापि स्वयं भगवान्विराजत एवेति न तेषां तद्विरहदुःखमपि श्रीभगवांस्तु तथा समर्थश्चेत्तर्हि कथमन्यांस्तादृशानाविर्भाव्य तैः सह मर्त्यलोकानुग्रहार्थमपरमपि कियन्तं कालं मर्त्यलोकेऽपि प्रकटो नासीदित्यत्र सिद्धान्तयंस्तेषां श्रीभगवतश्च सौहार्दभरेणापि परस्परमव्यभिचारित्वमाह—तथापीति । यद्यप्युक्तप्रकारेणाशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदस्मात्तद्दूर्द्धमप्यनंततादृशशक्तिधृक् तथापि यादवानंतर्धाप्य निजं वपुरत्र शेषितं प्रणेतुं किञ्चित्कालं स्थापयितुं नैच्छत्किन्तु स्वयमेव लोकमनयत् । तत्र हेतुः—तान्विना मर्त्येन लोकेन किं मम प्रयोजनमिति स्वस्थानां तद्धामगतानां तेषां गतिमेव स्वस्याभिरुचितत्वेन प्रकृष्टं दर्शयन्निति ॥ * ॥ **दीपिका** तु—अत्रैव भूर्लोक एव । यादवांश्च विहारोपयुक्तत्वेन त्यक्तुमशक्यान् संहृत्य प्रकटधाम्नि संगमय्य । अत्र भूलोकेऽवस्थातुमिच्छाविरहे । अन्यथा मर्यादामतिक्रम्य बहुकालावस्थाने । तेऽपि योगिनोऽपि । अत्रैव मर्त्यलोक एव । तन्मर्त्यलोके विषयावेशेन रमणमिति वैराग्यदर्शनं बाह्यं प्रयोजनमांतरिकं तु नित्यपरिकरवियोगासहनमेव ज्ञेयम् ॥ १३ ॥ एतामतर्क्याम् । तामेव श्रीकृष्णगतिमेव । तं प्राप्नोति आत्मत्वेन श्रीकृष्णं साक्षात्करोतीति भावः ॥ * ॥ पदवीं निर्याणमार्गम् । अत्र परामिति अनुत्तमामिति पदाभ्यां भगवतो निर्याणलीलेयं सच्चिदानन्दात्मिकैव सर्वथा ज्ञेया, लोकदृष्ट्या मायिकत्वप्रतीतिस्त्वकिञ्चित्करा सुधियामिति द्योतितम् ॥ १४ ॥ तत्प्राप्तये स्वलोकावाप्तये । उपायो निजवृत्तकीर्तनपूर्वकदारुकप्रेषणलक्षणः ॥ * ॥ अत्र **दीपिका**—दारुक इति सार्द्धकम् । तत्प्राप्तये स्वलोकप्राप्तये ॥ १५ ॥ तद् वृष्णिनिधनम् ॥ * ॥ निधनं वस्तुतस्तु नितरां धनं निजलोकगमनम् । तच्छ्रुत्वेति सार्धकम् । अत्र वियोगवर्णनान्नार्थांतरापेक्षेति ज्ञेयम् ॥ १६ ॥ तत्र प्रभासक्षेत्रे । घ्नंतः कराभ्यां ताडयन्तः ॥ * ॥ ० ॥ १७ ॥

देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ॥ कृष्णरामावपश्यंतः शोकार्ता विजहुः स्मृतिम् ॥ १८ ॥ प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ॥ उपगु ह्य पतींस्तात चितामारुरुहुः स्त्रियः ॥ १९ ॥ रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ॥ वसुदेवपत्न्यस्तद्गात्रं पद्युम्नादीन्हरेः स्नुषाः ॥ कृष्णपत्न्योऽ विशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ २० ॥ अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ॥ आत्मानं सांत्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥ बंधूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ॥ हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥

कृष्णरामौ सुतावपश्यंतः ॥ १८ ॥ १९ ॥ २० ॥ सदुक्तिभिः सत्योऽवितथा उक्तयो येषु तैः । " नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥ मूढोयं नाभिजानाति लोको मामजमव्ययम्" इत्यादिभिर्भगवद्गीतादिप्रसिद्धैश्च ॥ २१ ॥ नष्टगोत्राणां नष्टसंततीनाम् । सांपरायिकं पिंडोदकादिकार्यम् ॥ २२ ॥

स्मृतिं देहानुसंधानलक्षणां विस्मृतिं प्रापुरित्यर्थः॥*॥देवकीति सार्द्धकम् । पूर्वं यथा भगवन्नित्यपरिकरप्रद्युम्नानिरुद्धाद्यंशा एव द्वारकातः प्रभासमाजग्मुस्तथैव देवकीरोहिण्याद्यंशा एव प्रभासमागमन् , मूलभूतास्तु देवक्याद्या द्वारकायां प्रापंचिकलोकदृष्ट्या व्यराजंतैवेति ज्ञेयम् ॥ १८ ॥ तत्र तदा । तास्तौ[१] यादवस्त्रियः ॥ * ॥ प्राणांश्च जहुरिति तत्त्यागे उद्यमं चक्रुरित्यर्थः । दशमीदशाया उपस्थितत्वात् । " अशिवत्वान्न घटते भक्ते कुत्रा प्यसौ मृतिः " इति भक्तिरसामृतोक्तेः । उपगुह्येति सार्द्धकम् । स्त्रियो यदुस्त्रियः पतीन् श्रीकृष्णनित्यगणानंतर्हितान्मनसाऽऽलिंग्य चितां संहतिं नित्यसिद्धानां समुदायस्थानं तन्नित्यधामारुरुहुः प्रापुः ॥ १९ ॥ राम पत्न्य इति बहुत्वाद्रेवतीप्रधाना अन्या अपि बलदेवभार्यास्सन्ति स्मेति । तद्देहं रामदेहम् । तद्गात्रं वसुदेवगात्रम् । हरेः स्नुषा रत्याद्याः अग्निमविशन् । तदात्मिकाः कृष्णार्पितचित्ताः । श्रीकृष्णप्रतिकृतेरंतर्हितत्वात्तद्ध्याने नैवाग्निप्रवेशं चक्रुरित्यर्थः ॥ * ॥ रामपत्न्यश्च तद्देहं स राम एव देहो यस्य तं रामं देहदेहिभेदशून्यामित्यर्थः । " देहदेहिभिदा चात्र नेश्वरे विद्यते क्वचित् " इति ब्रह्मतर्कोक्तेः । उपगुह्य ध्यानेन मनसालिंग्याग्निं प्रकाशांतरेण भुक्तं तद्धामाविशन् । " त्रिषु चिता चितायां संहतौ स्त्रियाम् " इति "अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधे पुमान् । अन्नभक्ते च भुक्ते स्यात् " इति च मेदिनी । एवं वसुदेवपत्न्योपि तद्गात्रं स एव गात्रं कलेवरं यस्य स तं वसुदेवमित्यर्थः । तस्य ' सत्त्वं विशुद्धं वसुदेवशब्दितम् ' इत्यत्र संदर्भे ह्लादिनीसंवित्स्वरूपशक्तिसारत्वेन निर्णीतत्वेन जीवत्वासंभवेन देहदेहिभेदशून्यत्वात् । शेषं पूर्ववत् । कृष्णपत्न्य इत्यर्धकम् । तदात्मिकाः स एव कृष्ण आत्मा स्वरूपं यासां ताः स्वरूपशक्तयः । अग्निभुक्तं नित्यानुभूतं नित्यधामाविशन् ॥ २० ॥ सदुक्तिभिर्भीष्मपर्वस्थगीतोक्तिभिः । आदिना " यदायदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ " इत्यादिग्रहः ॥ * ॥ **संदर्भः**—सदुक्तिभिः " मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे " इत्यादिपर्यवसानाभिः । यथाह स्वर्गपर्वणि—" ददर्श तत्र गोविन्दं ब्राह्मेण वपुषान्वितम् । तेनैव दृष्टपूर्वेण सादृश्येनोपसूचितम् ॥ दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितम् । चक्रप्रभृतिभिर्घोरैर्दिव्यैः पुरुषविग्रहैः ॥ उपास्यमानं वीरेण फाल्गुनेन सुवर्चसा । यथास्वरूपं कौन्तेय तथैव मधुसूदनम् ॥ तावुभौ पुरुषव्याघ्रौ समुद्वीक्ष्य युधिष्ठिरम् । यथार्हं प्रतिपद्येते पूजया देवपूजितौ ॥" इति ॥ २१ ॥ संपराये परलोके हितं सांपरायिकम् । " संपरायः सतीके स्यादापदुत्तरकालयोः । परलोके श्रेष्ठधने शुभप्रा

१ तातेत्यत्र तास्ता इति पाठाऽभिप्रायेण ।

द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ॥ वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ २३ ॥ नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः ॥ स्मृत्याऽशेषाशुभहरं सर्वमंगलमंगलम् ॥ २४ ॥ स्त्रीबालवृद्धानादाय हतशेषान्धनंजयः ॥ इंद्रप्रस्थं समावेश्य वज्रं तत्राऽभ्यषेचयत् ॥ २५ ॥ श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः ॥ त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

तावपद्यते ॥" इति निरुक्तिः । अनुपूर्वशः पितामहस्य कृत्वा पितुस्तदनंतरं तत्पुत्रस्य तदनु तत्पौत्रस्येति क्रमेण ॥ * ॥ वस्तुतस्तु–अदृष्टवशानां हतानां श्रीकृष्णनित्यपरिकरत्वेनावगतानाम् । योऽनु पूर्वशः क्रमशः यथावत्सत्यतया संपरायो नित्यधामप्राप्त्युत्तरकालस्तत्रोचितं नामकीर्तनादिकं वैष्णवैः कारयामास " संपरायस्समीपे स्यादापदुत्तरकालयोः " इति मेदिनी ॥ २२ ॥ हरिणा त्यक्तामंतर्द्धापिताम् । तत्रापि भगवदालयं द्वारकास्थं भगवन्मन्दिरमधुनापि समुद्रे यथारचनं स्थितं भगवदनुग्रहं विना चर्मदृष्टिभिर्न दृश्यत इति ध्येयम् ॥*॥ परोक्षार्थस्य पुरंजनादिकथावन्मूले शुकेनाव्याख्यातत्वाद्द्वारकालीलाया अनित्यत्वमाशंक्य दुःखितं राजानं तन्नित्यत्वेन सांत्वयति–द्वारकामिति युग्मकेन । हरिणा त्यक्तामिति लोकदृष्ट्यैव । वस्तुतस्तु–अत्यक्तामिति पदच्छेदः । आप्लावयत्परितो जलेन परिखावदावृणोत्, जलप्लावनं तु समुद्रेण स्वदत्तस्य भूमिलक्षणस्य हस्तिनापुरप्रस्थापितेतरजनगृहाद्यधिष्ठानबहिरावरणस्यैव तस्यैव विश्वकर्मणा निर्मितत्वात् । द्वारकाया दिव्यातिदिव्यसंस्थानवत्तया नित्यसिद्धत्वात् । अत एव ' वर्जयित्वा ' इत्युक्तम् । श्रीमान् यादवादिगृहवृन्दशोभोपशोभावान् यो भगवदालयस्तं वर्जयित्वा । तदुक्तं श्रीहरिवंशे यादवान्प्रति श्रीनारदेन–"कृष्णो भोगवतीं रम्यामृषिकांतां महायशाः । द्वारकामात्मसात्कृत्य समुद्रं गमयिष्यति॥"इति तत्र भगवदालये भगवान्नित्यं सन्निहित इति।अर्थात्तत्रत्याना मिति शेषः॥*॥संदर्भस्तु–भगवदालयं वर्जयित्वा तस्याद्यापि कदाचिद्दूरतो दर्शनादिति तत्रत्यानां महती प्रसिद्धिः।तत्र महाराजेति संबोधनं दृष्टांतगर्भम्।यद्वा–महांतो राजानो यादवलक्षणा यत्र तथाभूतं तदालयं श्रीकृष्णनित्यधाम रूपं द्वारकापुरम् ॥२३॥ तदेवाह–नित्यमव्यवहितं तत्राब्धिगमन्दिरे सन्निहितः स्थितः । तन्मंदिरज्ञापकं चिह्नं संहितायामुक्तम्–"अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः । अद्यापि श्रूयते नित्यं द्वारकायामहर्निशम् ॥" इति । तत्र समुद्रजलांतर्गतभगवन्निक्षिप्तद्वारकास्थमंदिराज्जलद्वारा नित्यमयं श्लोको विज्ञैः श्रूयतेऽतस्तत्र सदैव मधुसूदनावास इति ज्ञायते ॥ * ॥ स्मृत्येति द्वयं वर्जनहेतुरूपमालयविशेषणं न केवलं पुरमात्रास्तित्वं तत्र च श्रीमति भगवदालये मधुसूदनः श्रीकृष्णो नित्यमेव सन्निहितोऽर्थात्तत्रत्यानां भगवान् यादवादिलक्षणाखिलनिजैश्वर्यवानेव । किंभूतं तदालयम्–स्मृत्येति । साक्षादधुना व्यक्ततद्दर्शनाभावात्स्मृत्येति या स्वयमेवं भूतस्तस्य त्वन्यथासंभावितत्वमपि नास्तीति भावः । एवमेव विष्णुपुराणे–" प्लावयामास तां शून्यां द्वारकां च महोदधिः । यदुदेवगृहं त्वेकं नाप्लावयत सागरः ॥ नात्यक्रामत्ततो ब्रह्मंस्तदद्यापि महोदधिः । नित्यं सन्निहित स्तत्र भगवान्केशवो यतः ॥ तदतीव महत्पुण्यं सर्वपापप्रणाशनम् । विष्णुक्रीडान्वितं स्थानं दृष्ट्वा पापात्प्रमुच्यते ॥ " इति । तत्र हरिवंशवाक्ये द्वारकामात्मसात्कृत्वेत्यत्र न तु त्यक्त्वेत्यर्थो गम्यः ॥ २४ ॥ वज्रं तन्नामानं श्रीकृष्णप्रपौत्रमनिरुद्धात्मजं तत्रेंद्रप्रस्थसमीपे सामीपिकाधारसप्तम्यर्थे त्रल् । मथुरायामित्यर्थः । ब्राह्मणद्वारा राजानमभ्यषिञ्चत् । " मथुरायां तथा वज्रं शूरसेनपतिं ततः " इत्युक्तेः ॥ * ॥ वस्तुतस्तु हत शेषान् ज्ञातावशिष्टान् । तत्र स्त्रीबालवृद्धेषु ॥ २६ ॥ पितामहा युधिष्ठिरादयः । वंशधरं वंशकृत्यधारकम् । तच्च राज्यमेव । महापथं हिमालयम् ॥ * ॥ सुहृदां वं सान्त्वनं दधातीति सुहृद्वधो नित्यलीलास्थानं

य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च ॥ कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥ इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शंतमानि ॥ अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यामेकादशस्कन्धे मौशलकथनभगवदंतर्धाननिरूपणं नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

समाप्तोऽयमेकादशः स्कंधः ॥ ११ ॥ श्रीकृष्णार्पणमस्तु ॥

आदित आरभ्य श्रीकृष्णचरितकीर्तनस्य फलमाह य एतदिति द्वाभ्याम् ॥ २७ ॥ शंतमानि परममंगलानि । परमहंसगतौ श्रीकृष्णे ॥ २८ ॥ एवमेकादशस्कंधभावार्थस्य प्रदीपिका ॥ स्वाज्ञानध्वांतभीतेन श्रीधरेण प्रकाशिता ॥ १ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यामेकादशस्कंधे श्रीधरस्वामिविरचितायां श्रीभावार्थदीपिकायां टीकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥

समाप्तोऽयमेकादशः स्कन्धः ॥ ११ ॥ श्रीकृष्णार्पणमस्तु ॥

श्रुत्वा तत्रैव गमनाय सत्वराः सन्तो महापथं तद्ध्यानोपयुक्तं स्थानं जग्मुरिति वास्तवोऽर्थः । ‘ वः सान्त्वने च वाते च ’ इति मेदिनी ॥ २६ ॥ एतत्पूर्वोक्तं । श्रीदशमस्कंधोक्तजन्मलीलामारभ्य निर्याणांतम् । तदेवाह—कर्माणि जन्म चेति । सर्वपापैः कायवाङ्मनःसंचितैः । तानि च भारते—“ अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः । असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिंतनम् । वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ ” इति ॥ * ॥ ० ॥ २७ ॥ इहान्यत्र च शंतमानि । रुचिरा मनोहरलीलावत्त्वेनानंदजनका अवतारा मत्स्यादयो यस्य श्रीकृष्णस्य स रुचिरावतारस्तस्य वीर्याणि गोवर्धनोद्धरणादीनि । एतेन लीलोपसंहारेपि श्रीकृष्णोऽवतार्येवेति परब्रह्मस्वरूप इति तद्ध्यानादेर्मोक्षप्रदत्वमित्याह । परमहंसानां दत्तात्रेयादीनां गतौ आत्मत्वेन प्राप्ये । यद्वा—परमं श्रीहरिं घ्नन्ति जानन्ति परमहंसा भक्तास्तेषां गतावाश्रये ॥ * ॥ बालचरितानि ‘ आषोडशाच्च बालः स्यात् ’ इति प्रसिद्धेर्वृंदावनीयचरितानि त्वतीवसुखदतमानीत्यर्थः । अन्यत्र पुराणादौ । इह श्रीभागवते च श्रुतानि । परां प्रेमलक्षणाम् । यद्वा—अन्यत्र परलोके इह च लोके परममंगलानीति योज्यम् । सर्वस्य श्रीकृष्णचरितस्य फलं परमभक्तिपूर्विका तत्प्राप्तिरेवेत्याह—परमहंसगतौ । तेषामपि तद्गुणाकृष्टानां स एव गतिः किमुत मूलत एव तद्भक्तानामिति भावः । अत एव श्रीकुंतीदेव्याप्युक्तम्—“ तथा परमहंसानां मुनीनां चाखिलात्मनाम् । भक्तियोगविधानार्थम् ” इति । ज्ञानिनामपि भक्तियोगविधानं ज्ञानेन केवलेनं स्वप्राप्तौ क्लेशं संभाव्यैवेति भावः। “क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसाम्” इत्युक्तेः॥ ( २८ ) ॥०॥*॥ **दीपिका**—स्वाज्ञानेति—स्वेषां यदज्ञानलक्षणं ध्वान्तं तस्माद्भीतेनेति । वस्तुतः श्रीवाग्देव्या तस्य परोपकारकत्वमुक्तम् ॥ श्रीमद्भागवतैकादशस्कधस्य प्रकाशकः ॥ भावार्थदीपिकाया वै श्रीवंशीधरशर्मणा ॥ १ ॥ संदृब्धोऽनेकटीकानां सारमादाय तुष्टये ॥ श्रीनंदसूनोर्युक्तस्य वृषभास्करजातया ॥ २ ॥ २८ ॥ यं वक्तुं न शशाक सर्वधरणीधर्ता सहस्राननो नित्यं संयतमानसोऽपि प्रवदन्प्रज्ञातसर्वागमः ॥ कालिंदीतटवल्लवीगणयुतं श्रीराधिकावल्लभं वन्दे भक्तजनेप्सितप्रदमहं तं नंदसूनुं सदा ॥ १ ॥ बालिश्याद्यन्मया ह्यत्र व्याख्यातमयथा बुधैः ॥ तच्छोध्यं कृपया शिष्यं मां ज्ञात्वा दीनवत्सलैः ॥ २ ॥ इति श्रीखरडपत्तनवास्तव्यपण्डितवंशीधरशर्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाश एकादशस्कन्ध एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

॥ समाप्तश्चायमेकादशः स्कन्धः ॥ ११ ॥

अयं श्रीभावार्थदीपिकाप्रकाशसमलंकृतभावार्थदीपिकासमेतश्रीमद्भागवतैकादशस्कन्धो मुम्बय्यां श्रीकृष्णदासात्मज-क्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर"-( स्टीम् ) मुद्रणालये मुद्रयित्वा प्राकाश्यमानीयत ।

इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया
चोपेते श्रीमद्भागवत एकादशस्कन्धः समाप्तः ॥ ११ ॥

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया चोपेते श्रीमद्भागवते द्वादशस्कन्धप्रारंभः ॥ १२ ॥

॥ ॐ नमो भगवते वासुदेवाय ॥ ॥ राजोवाच ॥ ॥ स्वधामानुगते कृष्णे यदुवंशविभूषणे ॥ कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे मुने ॥ १ ॥

॥ ॐ नमो भगवते वासुदेवाय ॥ ॥ जयंति श्रीपरानन्दकृपापांगलसद्दृशः ॥ या नित्यमनुवर्तंते संपदो विगता दृशः ॥ १ ॥ उक्तस्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः ॥ अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥ २ ॥ उक्तो लयावधित्वेन प्राकृतात्यंतिके लये ॥ अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥ ३ ॥ तत्रादौ षड्भिरध्यायैः शुकः प्राह परीक्षिते ॥ शेषैस्तत्राखिलान्याह सूतः पृष्टोऽथ सप्तभिः ॥ ४ ॥ स्वाश्रयश्रवणे कार्यो न विलंबो मनीषिणा ॥ इत्येतत्कालवैषम्यं चतुर्भिस्तावदुच्यते ॥ ५ ॥ तत्र तु प्रथमे भाविमागधान्वयभूमिपान् ॥ कलिप्रभावतः प्राह संकरादिमलीमसान् ॥ ६ ॥ एवंभूते सोमवंशे मुकुंदस्वैरक्रीडा वर्णिताऽथो स एव ॥ वंशो भावी वर्ण्यते कृष्णभक्तिं मुक्त्वा मुक्त्यै वर्त्म नास्तीति वक्तुम् ॥ ७ ॥ तदेवं वैवस्वतमनुवंशे सोमवंशप्रस्तावेन श्रीकृष्णावतारचरितानि सप्रपंचमनुवर्णितानि । अथेदानीं भावी सोमवंशः कलौ विजातीयसंकरादिमलीमसो वैराग्यद्वारा श्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते । तत्र तु सोमवंशशाखासु चिरकालानुवर्तितया मागधवंशोऽनुक्रम्यते । तत्र पूरोर्वंशे उपरिचरो वसुस्तस्य बृहद्रथस्तस्य जरासंधस्तस्य सहदेवः पुत्रोऽभूदित्युक्तं नवमस्कंधे । तत्रैव सहदेवान्मार्जारिस्ततः श्रुतश्रवा इत्यादयो रिपुंजयांता विंशतिर्भाविनो राजानो निरूपिताः

ॐ स्वस्ति श्रीगणेशाय नमः ॥ वंदेऽहं गोपिकानाथं यशोदानंदनन्दनम् ॥ वृन्दारकगणाधीशं वृन्दावननिकुञ्जगम् ॥ १ ॥ नमस्कृत्य गुरून्सर्वानखिलाभीप्सितप्रदान् ॥ द्वादशस्कंधविवृतिं प्रारभे विदुषां मुदे ॥ २ ॥ श्रीगुरुं परमानंदं वन्दे आनंदविग्रहम् ॥ यस्य संनातिमात्रेण चिदानंदायते वपुः ॥ १ ॥ श्लोकोऽयमधिकः केषुचित्पुस्तकेषु दृश्यते मंगलरूपत्वान्मयाप्यत्रालेखीति । जयंति श्रीपरानंदेत्यादिपद्यमेकादशे व्याख्यातमपि पुनरपि किञ्चिद्व्याख्यास्यामः—श्रीः राधा तया सहितः परानंदः श्रीकृष्णः । यद्वा—श्रियां परस्तत्परः श्रीपरः 'श्रीः कैटभारिहृदयैककृताधिवासा' इति मार्कंडेयोक्तेः । स चासावानंदश्चेति श्रीपरानंदः । यद्वा—श्रीः परोत्कृष्टा यासु ताः श्रीपरा गोप्यस्ता आनंदयतीति श्रीपरानन्दः । कृपया युक्ता अपांगाः कटाक्षाः कृपापांगास्तैर्लसंत्यो देदीप्यमाना या दृशः दृक्पातास्ताः कृपापांगलसद्दृशः, श्रीपरानंदस्य कृपापांगलसद्दृशः श्रीपरानंदकृपापांगलसद्दृशो जयंति सर्वोत्कर्षेण वर्तंते । या अनु नित्यं संपदो वर्तंते । किंभूता दृशः—विगताश्चक्षुरगोचरा इत्यर्थः । यद्वा—विगताऽदृगज्ञानं याभिस्ता इत्यर्थः । भक्त्यादिरूपा इत्यर्थः । यद्वा—यादृशोऽनुसंपदोऽविगताः सदा वर्तंत इत्यर्थः ( १ ) । सतः सद्रूपतया प्रतीयमानस्य प्रपंचस्याश्रयस्त्रयोदशाध्यायैरुक्तं इत्यन्वयः । तमेवाह—सत ईश्वर आश्रयः । काम्यामित्यत आह—अधिष्ठानेति । ( २ ) । प्राकृतः सर्वप्रकृतिलयात्मकः आत्यंतिको मोक्षः, एतल्लयद्वयेऽवधित्वेन सर्वावसानभूमित्वेनेश्वरः उक्तः । महापुरुषो विराट् तद्वर्णने चाधिष्ठानतया सर्वाधारतयोक्तश्च सर्वलोकानां तदवयवकल्पनया तदाधारोऽवयवी विराड्रूपीश उक्त इत्यर्थः ( ३ ) । तत्र त्रयोदशाध्यायेषु । शेषैः सप्तभिः । खिलान्याकांक्षितार्थपूरकाण्याख्यानानि । सप्तभिः शौनकादिभिः ( ४ ) । इत्येतदिति कालविलंबपरित्यागार्थम् । कालवैषम्यं कालकृतबुद्धिवैषम्यम् । तावदादौ ( ५ ) । तत्र चतुर्ष्वपि । संकरो वर्णसंकरत्वम्, तदादिभिरसत्यसंभाषणादिदोषैर्मलीमसान्मलिनान् ( ६ ) । एवंभूते पूर्वोक्तपावनत्वादिविशेषणविशिष्टे । 'वंशः सोमस्य पावनः' इत्यादिनवमोक्तेः । बुद्धौ सन्निहितत्वादेवंभूत इत्युक्तम् । मुकुन्दस्य हरेः । स्वैरक्रीडा स्वेन वेदरूपेणात्मना वर्णिता पूतनादिवधरासादिरूपा क्रीडा । पूतनावधादिरूपा क्रीडापि वेदेनोक्ता, तत्र प्रमाणीभूताः काश्चिच्छ्रुतयोऽपि तत्रतत्र सभाष्या उक्ता एव । स्वैरक्रीडा वेदाविहिता क्रीडेति व्याख्यानमत्र न शोभनम् 'यदायदा हि धर्मस्य' इत्यादिश्रीगीताविरोधात् । स एव चंद्रवंश एव । मुक्त्वा त्यक्त्वा । मुक्त्यै मोक्षाय । अन्यद्वर्त्मान्यो मार्गो नास्तीति कथयितुम् । कलौ

श्रीशुक उवाच ॥ योंत्यः पुरंजयो नाम भाव्यो बार्हद्रथो नृपः ॥ तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम् ॥ २ ॥ प्रद्योतसंज्ञं राजानं कर्ता यत्पालकः सुतः ॥ विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥ ३ ॥ नंदिवर्धनस्तत्पुत्रः पंच प्रद्योतना इमे ॥ अष्टत्रिंशोत्तरशतं भोक्ष्यंति पृथिवीं नृपाः॥४॥शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः ॥ क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥५॥ विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ॥ दर्भकस्तत्सुतो भावी दर्भकस्याजयः स्मृतः ॥ ६ ॥ नंदिवर्धन आजेयो महानंदिः सुतस्ततः ॥ शिशुनागा दशैवैते षष्ट्युत्तरशतत्रयम् ॥ ॥ ७ ॥ समा भोक्ष्यंति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः ॥ महानंदिसुतो राजञ्छूद्रीगर्भोद्भवो बली ॥८॥ महापद्मपतिः कश्चिन्नंदः क्षत्रविनाशकृत् ॥ ततो नृपा भविष्यंति शूद्रप्रायास्त्वधार्मिकाः ॥ ९ ॥ स एकच्छत्रां पृथिवीमनुल्लंघितशासनः ॥ शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ १० ॥

( तत्र राजा पृच्छति । स्वधामेति ॥ १ ॥ ) इदानीं तदुपरितनं वंशं संकरादिदोषैः प्रपंचयति । योंत्य इति । रिपुंजय एव पुरंजयः । स्वामिनं पुरंजयं हत्वा स्वपुत्रं प्रद्योतसंज्ञं राजानं करिष्यति यस्य पालको नाम सुतो भविष्यति ॥ २ ॥ ३ ॥ प्रद्योतनाः प्रद्योतसंज्ञाः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ नंदो नाम कश्चिन्महापद्मसंख्यायाः सेनाया धनस्य वा पतिर्भविष्यति अत एव महापद्म इत्यपि तस्य नाम ॥ ९ ॥ एकमेव छत्रं यस्यां तां पृथिवीं शासिष्यति पालयिष्यति । क्षत्रोत्सादने दृष्टांतः । भार्गवः

नित्यनैमित्तिकादिकर्माऽकरणादंतःकरणशुद्धेरनुदयाज्ज्ञानयोगाद्यसंभवाद्भक्तिरेव मुख्यो मुक्तिमार्गः " कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः " इत्यादिपाद्मोक्तेः ( ७ ) । स्वधामेत्यादिप्रश्नश्लोकश्च न स्वामिसंमत इति भाति । तैश्च तदेवमित्यारभ्य रिपुंजयांता विंशतिर्भाविनो राजानो निरूपिता इत्यंतेन पूर्वसंबंधमनूद्य तदुपरितनं वंशं संकरादिदोषैः प्रपंचयति—योन्त्य इति श्लोकावतरणं दत्तवद्भिः प्रश्नस्य काप्यनुल्लेखात्, वंशकथनप्रस्तावस्य नवमस्कंधतः प्रवृत्तत्वाद्भगवन्निर्याणानंतरं स्ववंशस्य मागधवंशस्य च विद्यमानत्वेन तादृशप्रश्नासंभावाच्च । अत एवायं प्रश्नश्लोको विजयध्वजाविश्वनाथाभ्यां परित्यक्तः ॥ १ ॥ अंत्यो वंशावसानभवः । 'भाव्यो वार्हद्रथो नृपः ' इति प्रचुरः पाठः । वारहद्रथ इह रेफेऽकारागमस्त्वार्ष एव ध्येयः । तस्य पुरंजयस्य । अमात्यो मन्त्री ' अमात्यः सचिवो मंत्री ' इत्यभिधानात् ॥ २ ॥ तत्पुत्रः पालकपुत्रः । ततो विशाखयूपात् ॥ ३ ॥ तत्पुत्रो राजकपुत्रः । इमे प्रद्योतनेन सह पंचसंख्याका अष्टात्रिंशदुत्तरवर्षशतकं १३८ पृथ्वीं भोक्ष्यंति पालयिष्यंति " भुजोऽनवने " इत्यतः परस्मैपदम् ॥ ४ ॥ ततः प्रद्योतनेभ्यः पश्चात् । भाव्यो भविष्यति । तत्सुतः शिशुनागसुतः । तस्य काकवर्णस्य ॥ ५ ॥ तस्य क्षेत्रज्ञस्य, तस्य अजातशत्रुः, तस्येत्युभयान्वयि । तत्सुतोऽजातशत्रुसुतः ॥ ६ ॥ आजेयोऽजयपुत्रः । अत्रैकारमध्यत्वमार्षम् । ततो नंदिवर्द्धनस्य । षष्ट्युत्तरशतत्रयं ३६० राज्यभोगवर्षसंख्येयम् ॥ ७ ॥ समा वर्षाणि ' हायनोऽस्त्री शरत्समाः ' इत्यमरः । हे कुरुश्रेष्ठेति—त्वं त्वतीव पवित्रेऽपि कुरुवंशे श्रेष्ठोऽसि येन श्रीकृष्णलीलामृतमंते पीतमिति भावः । हे राजन्निति—त्वं तु धर्मेणैव राजसे न तु गणितनृपसदृशोऽसीति भावः ॥ ८ ॥ अत एव महापद्मसेनादिपतित्वादेव । मत्वर्थीयाजंताश्रयणे तस्यापि तन्नाम संभवति, महापद्माः संत्यस्येति निरुक्तेः । स्वेन सह भोजनसंबंधादिकमकुर्वतां क्षत्रियाणां विनाशकः, तत्रासभयाच्छुद्राः क्षत्रियास्ततः पलायित्वा यवनादिदेशं गता वैश्यवृत्त्यादिजीविनो भविष्यंति, ततःप्रभृति नृपाः शूद्रप्राया भविष्यंति । प्रायःशब्देन शूद्रराज्यबाहुल्ये क्वचित्क्षत्रियावशेषो बोध्यते, क्षत्रवंशविरोधे च द्वितीयभार्गव इव । तथा च भार्गवेणैकाविंशतिवारं पृथिव्यां क्षत्रहनने यत्कार्त्तवीर्यद्वेषेण हननं तस्यैव पञ्चपुत्रावशेष

तस्य चाष्टौ भविष्यंति सुमाल्यप्रमुखाः सुताः ॥ य इमां भोक्ष्यंति महीं राजानः स्म शतं समाः ॥ ११ ॥ नव नंदान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति ॥ तेषामभावे जगतीं मौर्या भोक्ष्यंति वै कलौ ॥ १२ ॥ स एव चंद्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥ तत्पुत्रो वारिसारस्तु ततश्चाशोकवर्धनः ॥ ॥ १३ ॥ सुयशा भविता तस्य संगतः सुयशःसुतः ॥ शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १४ ॥ शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ॥ मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ १५ ॥ समा भोक्ष्यंति पृथिवीं कलौ कुरुकुलोद्वह ॥ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठोऽथ भविष्यति ॥१६॥

परशुराम इव ॥ १० ॥ समाः संवत्सरान् ॥ ११ ॥ नव नन्दान्नन्दं तत्पुत्रांश्चेत्येवं नव । प्रपन्नान्विश्वस्तान्विख्यातान्वा । द्विजः कौटिल्यवात्स्यायनादिपर्यायश्चाणक्य उद्धरिष्यत्युन्मूलयिष्यति । मौर्याः मौर्यसंज्ञाः ॥ १२ ॥ कथं भोक्ष्यंति तदाह । स एवेति । चंद्रगुप्तं मौर्यप्रथमम् ॥ १३ ॥ १४ ॥ तेषां पंचमो दशरथः पराशरादिभिरुक्तोऽश्रवणात्, किमु वाच्यं क्षत्रियांतरवंश्यानाम्, तथापि बहवो हता बहवो देशांतरं गता इति ज्ञेयम् ॥ ९ ॥ १० ॥ तस्य महापद्माख्यनंदस्य ॥ ११ ॥ विश्वस्तहननस्य महापापत्वादाह—विख्यातान्वेति । विश्वस्तघातस्य महापापत्वे भोजीयकपिसिंहकथानुसंधेया दृष्टांतत्वेन । तथाहि—कदाचिद्भोजनृपतये तदाज्ञया तद्भार्याया भानुमत्या मूर्तिं लिखित्वा कालिदासो दर्शयामास । स च तां जघनदेशे तिलकालकांकितां दृष्ट्वाऽनेन मद्भार्या रमितेति शंकितो भूत्वा तं देशान्निष्कासयामास । तदनु कदाचिन्मृगयां गतो नृपो विषमवने भयार्त्तः क्वचिदारूढवानरवृक्षमारुरोह, वानरोऽपि तेन मैत्रीं कृतवान्, स च तत्रैव विश्वस्य शिश्ये । तदा च कश्चित्कपिविरोधी सिंहस्तत्रागत्येमं मे देहीति वैरनिर्यातनार्थमुवाच । स च शरणापन्नत्यागे दोषं दृष्ट्वा न ददौ । ततश्च कपिरपि सिंहायाहं न प्रक्षेप्यस्त्वयेत्युक्त्वा शिश्ये । स एव सिंहः पुनरागत्य राजानमुवाच देहि म इमं कपिन्नो चेत्त्वां भक्षयिष्यामीतोऽवतीर्णमिति, तच्छ्रुत्वा कपिं राजा प्रक्षिप्तवान्, स च पतन्कांचित्तद्वृक्षशाखामालंब्य तत्रैवागत्य राजानं कुष्ठी भवेति शशाप । पुना राज्ञा प्रसादितः 'वि—से—मि—रा' इति वर्णचतुष्कार्थश्रवणेनोल्लाघो[1] भविष्यसीत्युवाच । ततो नृपो गृहमागत्य वन्यवृत्तं मंत्रिभ्य उक्त्वा विद्वत्समाजमक्षरचतुष्कार्थश्रवणार्थं चकार । तत्र च राजनिष्कासितः कालिदासः स्त्रीवेषेण कस्याचिद्विदुषो गृहे धारानगर्यामेवासीत् । स ततस्तद्राजवृत्तमाकर्ण्य पित्रीकृतं पंडितमित्थमुवाच—मदीया पुत्री त्वदभिलषितवर्णचतुष्कार्थं जानाति तामिहाहूय पृच्छेति नृपाय कथयेति।स च तथा कृत्वा स्त्रीवेषिणं तं नृपसदसि निनाय।स च स्त्रीवेषी कालिदासः:पृथगर्थं प्रत्येकवर्णस्योक्तवान्। तथाहि—" विश्वासप्रतिपन्नेषु ये च विश्वासघातकाः ॥ ते यांति नरकं घोरं ताडिता यमकिंकरैः ॥ ( १ ) ॥ सेतुबंधे समुद्रे च गंगासागरसंगमे ॥ स्नात्वा पापविमुक्तः स्यान्मित्रद्रोहकरं विना ॥ ( २ ) ॥ मेरुतुल्यान्महापापान्कृत्वा संगं सतां नरः ॥ मुच्यते न हि संदेहो मित्रद्रोही न मुच्यते ॥ ( ३ ) ॥ राजन्भोः शृणु मद्वाक्यं यदि कल्याणमिच्छसि ॥ देहि दानं सुविप्रेभ्यस्ततः श्रेयो भविष्यति ॥ ( ४ )" ॥ इत्याकर्ण्य भोजः स्वस्थो भूत्वा तामुवाच—" गृहे वससि भो देवि वनं क्वापि न गच्छसि ॥ पञ्चास्यकपिमद्वृत्तं कथं जानासि सुंदरि ॥ ( ५ ) ॥"। स चोवाच—"देवाद्द्विजप्रसादेन कंठे वसति शारदा ॥ सर्वं जानामि भो राजन्भानुमत्यास्तिलं यथा ॥ ( ६ ) ॥"। ततो नृपस्तं कालिदासं ज्ञात्वा प्रसाद्यानयामासेति बृहद्भोजप्रबंधे ॥ १२ ॥ स एव कुटिलो द्विज एव । तत्पुत्रश्चन्द्रगुप्तपुत्रः । ततो वारिसारात् ॥ १३ ॥ तस्याऽशोकवर्द्धनस्य । ततः सुयशसः । तस्य शालिशूकस्य ॥ १४ ॥ ततस्तदनंतरम् । तस्य सोमशर्मणः । तत्तस्मात् शतधन्वनः । मौर्या मुरवंशजाः हीनजातयः कैवर्त्ताः " मुरो दैत्यविशेषे च कैवर्त्ते चौषधे स्त्रियाम् " इति कोशात् । सप्तत्रिंशच्छतोत्तरम् १३७ राज्याब्दाः ॥ १५ ॥ हे कुरुकुलमुद्वूढ्वमाधिक्यं प्रापयतीति तथा, भवता तु कुरुकुलकीर्त्तिराधिक्यं नीताऽतस्त्वादृशामेव राज्ञां भवनमुचितमिति भावः । अत्र टीका[2]ऽनुसारेण "हत्वा बृहद्रथं सौर्यं तस्य सेनापतिः कलौ।

१ ' उल्लाघो निर्गतो गदात् ' इत्यमरोक्त्या नीरोग इत्यर्थः । २ अष्टादशश्लोकटीकानुसारेणेत्याशयः ।

वसुमित्रो भद्रकश्च पुलिंदो भविता सुतः ॥ ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति ॥ १७ ॥ ततो भागवतस्तस्माद्देवभूतिरिति श्रुतः ॥ शुंगा दशैते भोक्ष्यंति भूमिं वर्षशताधिकम् ॥१८॥ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान्नृप ॥ शुंगं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥१९॥ स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥ तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः ॥ नारायणस्य भविता सुशर्मा नाम विश्रुतः ॥ २० ॥ काण्वायना इमे भूमिं चत्वारिंशच्च पंच च ॥ शतानि त्रीणि भोक्ष्यंति वर्षाणां च कलौ युगे ॥ २१ ॥ हत्वा कण्वं सुशर्माणं तद्भृत्यो वृषलो बली ॥ गां भोक्ष्यत्यंध्रजातीयः कंचित्कालमसत्तमः ॥ २२ ॥ कृष्णनामाऽथ तद्भ्राता भविता पृथिवीपतिः ॥ श्रीशांतकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥ ॥ २३ ॥ लंबोदरस्तु तत्पुत्रस्तस्माद्धि विकलो नृपः ॥ मेघस्वातिश्च विकलादटमानस्तु तस्य च ॥ २४ ॥ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनंदनः ॥२५॥ चकोरो बहवो यत्र शिवस्वातिररिंदम ॥ तस्यापि गोमती पुत्रः पुरीमान् भविता ततः॥२६॥

त्राप्यनुसंधेयः तेन सह मौर्या दश । सप्तत्रिंशच्छतोत्तरं सप्तत्रिंशदुत्तरं शतं समाः ॥ १५ ॥ १६ ॥ १७ ॥ बृहद्रथस्य सेनापतिः । पुष्पमित्रो नाम स्वामिनं बृहद्रथं हत्वा राज्यं कारिष्यति स च शुंगानां प्रथमः । ततोऽग्निमित्रादयो नवेत्येवं शुंगा दशवर्षशताधिकं द्वादशाधिकं वर्षशतम् ॥ १८ ॥ कथं कण्वान्यास्यति तदाह । शुंगमिति । परस्त्री कामिनं देवभूतिनामानं शुंगं हत्वा तदमात्यो वसुदेवनामा कण्वो राज्यं करिष्यति ॥ १९ ॥ कण्वानां चतुर्थः सुशर्मा ज्ञेयः ॥ २० ॥ इमे वसुदेवादयः काण्वायना वर्षाणां त्रीणि शतानि पंचचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यंति ॥ २१ ॥ कण्वानामंतिमं सुशर्माणं हत्वा बली नामा तद्भृत्यो गां भोक्ष्यति ॥ २२ ॥ २३ ॥ २४ ॥२५॥ यत्र

पुष्पमित्रस्तु शुंगाह्वः स्वयं राज्यं कारिष्याति " इति श्लोकोऽपि क्वचित्पुस्तकेषु दृश्यते । तस्मादग्निमित्रात् । अथ सुज्येष्ठात्[१] ॥ १६ ॥ वसुमित्रस्ततो, भद्रकस्ततः पुलिंदः । ततः पुलिंदात् । तस्माद्घोषात् ॥ १७ ॥ ततः पुष्पमित्रात् । ततो वज्रमित्रात् । तस्माद्भागवतात् । एते शुंगा दशवर्षशतानि द्वादशाधिकानि १०१२ मोक्ष्यंतीत्यमपि केचिद्व्याख्यांति ॥ १८ ॥ १९ ॥ तस्य वसुदेवस्य । तस्य भूमित्रस्य । अर्थ[२] ततो नारायणादनन्तरम् ॥ २० ॥ पञ्चचत्वारिंशदुत्तरशतत्रयं ३४९ राज्याब्दाः ॥ २१ ॥ २२ ॥ तद्भ्राता बलिभ्राता । तत्पुत्रः कृष्णपुत्रः । तत्सुतः श्रीशांतकर्णसुतः ॥ २३ ॥ तत्पुत्रः पौर्णमासपुत्रः । तस्माल्लंबोदरात् । तस्य मेघस्वातेः ॥ २४ ॥ तस्य चेति चकारात्तस्याटमानस्यानिष्टकर्मा, तस्य च हालेयः, तस्य हालेयस्य । तत्पुत्रस्तलकपुत्रः । ततः पुरीषभीरोः ॥ २५ ॥ बहवो बहुसंज्ञाः । अष्टसु चरमोऽष्टम एव । तस्य शिवस्वातेः ।

१ इदमुत्तरान्वयि मूले । "२ सुशर्माख्योऽथ नृपतिः कण्वानां भविता ततः " इतिपाठाभिप्रायेणैतत् ।

मेदशिराः शिवस्कंदो यज्ञश्रीस्तत्सुतस्ततः ॥ विजयस्तत्सुतो भाव्यश्चंद्रविज्ञः स लोमधिः ॥ २७ ॥ एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च ॥ षट्पंचाशच्च पृथिवीं भोक्ष्यंति कुरुनंदन ॥ २८ ॥ सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः ॥ कंकाः षोडश भूपाला भविष्यंति च लोलुपाः ॥ ॥ २९ ॥ ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः ॥ भूयो दश गुरुंडाश्च मौना एकादशैव तु ॥ ३० ॥ एते भोक्ष्यंति पृथिवीं दशवर्षशतानि च ॥ नवाधिकां च नवतिं मौना एकादश क्षितिम्॥३१॥भोक्ष्यंत्यब्दशतान्यंग त्रीणि तैः संस्थिते ततः॥किलिकिलायां नृपतयो भूतनंदोऽथ वंगिरिः ॥३२॥ शिशुनंदिश्च तद्भ्राता यशोनंदिः प्रवीरकः ॥ इत्येते वै वर्षशतं भविष्यंत्यधिकानि षट् ॥ ३३ ॥ तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः ॥ पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३४ ॥ एककाला इमे भूपाः सप्तांध्राः सप्त कोशलाः ॥ वैदूरपतयो भाव्या नैषधास्तत एव हि ॥ ३५ ॥

येषु बहुसंज्ञेष्वष्टसु चरमः शिवस्वातिनामा भविता ॥ २६ ॥ २७ ॥ २८ ॥ आवभृत्या अवभृतिर्नगरी तद्राजानः ॥ २९ ॥ ३० ॥ एते आभीरादयो मौनव्यतिरिक्ताः पंचषष्टिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यंति । ततः पूर्वोक्ता एवैकादश मौनास्त्रीण्यब्दशतानि क्षितिं भोक्ष्यंति ॥ ३१ ॥ तैः संस्थिते तेषु मृतेषु किलकिलायां पुर्यां नृपतयो भविष्यंतीत्युत्तरेणान्वयः ॥ ३२ ॥ अधिकानि च षड्वर्षाणि ॥ ३३ ॥ तेषां भूतनंदादीनां यथायथं बाह्लिकनामानस्त्रयोदश सुता भविष्यंति । अथ पुष्पमित्रो नामान्यो राजन्यः अस्य च दुर्मित्रो नाम पुत्रः ॥ ३४ ॥ तथा अंध्राः कोशला विदूरपतयो निषधाश्च एते च तत्तद्देशनामभिः प्रख्यातास्तुल्यकालाः ।

ततो गोमतिनः ॥ २६ ॥ ततः पुरीमतो मेदाशिराः, ततः शिवस्कंधः । तत्सुतः शिवस्कंधसुतः । ततो यज्ञश्रियः । तत्सुतो विजयसुतः । भाव्यो भविष्यति । ततश्चंद्रविज्ञात्स प्रसिद्धो लोमधिः, सकारसहितो वा नाम ॥ २७ ॥ हे कुरुनंदनेति—त्वं तु भगवद्भक्तत्वात्कुरुकुलमेव नन्दयसि गणितनृपास्तु स्वात्मनंदका अपि नेति भावः । षट्पचाशदुत्तरचतुश्शतं ४५६ राज्याब्दाः ॥ २८ ॥ गर्दभिनो गर्दभिसंज्ञकाः । कंकाः कंकसंज्ञाः । लोलुपा लंपटाः ॥ २९ ॥ ततः कंकेभ्यः पश्चात् । यवना म्लेच्छाः । पुष्कसा[1] निषादाच्छूद्रयुद्भूताः । गुरुण्डा गुरुंडसंज्ञाः, गुरुगुरुरित्येवं डुवंति भाषंत इति गुरुंडाः ‘ डू—भाषणे ’ तुदादिर्व्याकरणांतरज्ञेयः, तत औणादिको डख् प्रत्ययः ‘औणादिका अपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्याः’ इत्युक्तेः “ धातूनामप्यनंतत्वान्नानार्थत्वाच्च सर्वथा ” इत्यनुभूत्युक्तेर्डूरप्यूदंतो धातुः कल्पनीयः ॥ ३० ॥ किञ्च—दुर्योधनजन्मन्येव कलेरारंभः, तद्वर्षोत्तरं कृष्णाविर्भावः, ततो नवतिवर्षोत्तरं परीक्षिज्जन्म, ततो नंदाभिषेकावधि पंचदशशतं दश च, तन्मिलित्वैकाधिकषोडशशतम् । ततो नवनंदानां शतम्, मौर्याणां सप्तत्रिंशदुत्तरशतं च, शुंगानां द्वादशाधिकं दशवर्षशतम्, काण्वायनानां त्रीणि शतानि पञ्चचत्वारिंशच्च, बल्यादित्रिंशद्राज्ञां चत्वारि शतानि, सप्ताभीरादीनां षट्पञ्चाशत्त्रीणि शतानि च, ततो यवनादिगुरुंडांतानां सहस्रं नवनवत्यधिकं च, एवं पञ्चाशदधिकपञ्चसहस्र ५०५० वर्षाणि जातानि । तत्रैतट्टीकाप्रणयनकालिकविक्रमार्कशरानिगमनंदेन्दु १९४५ :मिताब्दपर्यंतं कलेश्चतुःसहस्रनवशतैकोननवतिसंख्यानि[2] वर्षाण्यतीतानीति टीकांतरानुरोधादनुसंधेयम् ॥ ३१ ॥ तत एतदुक्तराज्योत्तरम् । तैरिति सप्तम्यर्थे तृतीया, तेष्वित्यर्थः । संस्थिते इत्येकत्वमपि बहुत्वे, संस्थितेष्वित्यर्थः ॥ ३२ ॥ तद्भ्राता यशोनंदिभ्राता[3] ॥ ३३ ॥ अथ वाह्लिकराज्यानं

१ ‘ चतुर्दश तु पुष्कसाः ’ इति पा० । २ एतट्टीकामुद्रणसमये तु वैक्रमेब्दे १९६५, गतकलिः ५००९ । ३ शिशुनन्दिश्भ्रातेति शोभनः ।

मागधानां तु भविता विश्वस्फूर्जिः पुरंजयः ॥ करिष्यत्यपरो वर्णान्पुलिंदयदुमद्रकान् ॥ ३६ ॥ प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ॥ वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ अनुगंगामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥ ३७ ॥ सौराष्ट्रावंत्यभीराश्च शूद्रा अर्बुदमालवाः ॥ व्रात्या द्विजा भविष्यंति शूद्रप्रायजनाधिपाः ॥३८॥ सिंधोस्तटं चंद्रभागां कौन्तीं काश्मीरमंडलम् ॥ भोक्ष्यंति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ॥३९॥ तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः ॥ एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥ ४० ॥ स्त्रीबालगोद्विजघ्नाश्च परदारधनाहृताः ॥ उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥४१॥ असंस्कृताः क्रियाहीना रजसा तमसाऽऽवृताः ॥ प्रजास्ते भक्षयिष्यंति म्लेच्छा राजन्यरूपिणः ॥ ४२ ॥

खंडमंडलेषु भूपास्तत एव तेभ्यो बाह्लिकेभ्य एव भाव्या भविष्यंति ॥ ३५ ॥ ततश्च मागधानां तु राजा विस्फूर्जिर्नाम भविता । स च पूर्वोक्तात्पुरंजयादपरः पुरंजय इति प्रसिद्धः सन्वर्णान्ब्राह्मणादीन्पुलिंदयदुमद्रकसंज्ञान्म्लेच्छप्रायान्करिष्यति । अपरानिति पाठे अन्यान्पुलिंदादिसंज्ञान्वर्णान्करिष्यतीत्यर्थः ॥ ३६ ॥ किंचैवं कृत्वाऽब्रह्मभूयिष्ठा अत्रैवर्ण्यप्रचुराः सतीः प्रजाः स्थापयिष्यति पालयिष्यति । स च पद्मवत्यां पुरि वसन् अनुगंगं गंगाद्वारमारभ्य प्रयागपर्यंतं गुप्तां पालितां मेदिनीं भोक्ष्यति ॥ ॥ ३७ ॥ तदनंतरं च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्या उपनयनरहिता भविष्यंति ॥ ३८ ॥ अब्रह्मवर्चसा वेदाचारशून्याः ॥ ३९ ॥ इमे च म्लेच्छप्राया भूभृतस्तुल्यकाला भविष्यंति । किंच एते सर्वेऽधर्मानृतपरा अधर्मेऽनृते च परिनिष्ठिताः फल्गुदा अल्पदातारः ॥४०॥ उदितास्तमितप्राया हर्षशोकादिबहुलाः ॥ ४१ ॥ असंस्कृता

तरम् ॥ ३४ ॥ ३५ ॥ इत्यर्थ इति–पुलिंदादीन्हीनजातीनेव ब्राह्मणादिस्थाने स्थापयिष्यति, ब्राह्मणादिकर्म तैः कारयिष्यतीति भावः ॥ ३६ ॥ स पुरंजयः । क्षत्रं क्षत्रियजातिमुत्साद्य नाशयित्वा यत्र कुत्र स्थितं गुप्तमपि क्षत्रं यथाकथंचिन्नाशयिष्यतीत्यर्थः ॥ ३७ ॥ 'व्रात्यः संस्कारहीनः स्यात्' इत्यमरः । प्रायपदेन कचित्क्षत्रपरा अपि भविष्यंतीत्यसूचि ॥ ३८ ॥ सिंधुनाम्नी नदी, समुद्रश्च । कौंतीं पुरम् । अब्रह्मवर्चसः ब्राह्मणभक्तिहीनाः 'वर्चस्तेजसि सेवने' इति निरुक्तिः ॥ ३९ ॥ इमे आंध्राद्याः । म्लेच्छप्रायाः शास्त्राऽस्वीकारात् ॥ ४० ॥ उदितास्तमितप्राया अल्पकालस्थितिमंतः ॥ ४१ ॥ शास्त्राऽविहितकर्तृत्वे सति

तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ॥ अन्योन्यतो राजभिश्च क्षयं यास्यंति पीडिताः ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे प्रथमोऽध्यायः ॥ १ ॥

गर्भाधानादिसंस्काररहिताः । प्रजा भक्षयिष्यंति धनाद्यपहारादिना पीडयिष्यंति ॥ ४२ ॥ किंच तन्नाथाः ते नाथा येषां ते जनपदा देशवर्तिनो मनुष्यास्तच्छीलाचारवादिनस्तेषामिव शीलमाचारो वादश्च तद्वंतः ॥ ४३ ॥ इति श्रीमद्भागवते म० द्वादशस्कंधे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥

गोहिंसादिपरत्वं म्लेच्छत्वम् , तद्वंतो म्लेच्छाः ॥ ४२ ॥ अन्यत्तत्संगकृतानर्थमाह—तन्नाथा इति ॥ ( ४३ ) ॥ किंचिद्वैलक्षण्येनैतदध्यायार्थो भविष्येऽपि ब्रह्मणा कार्त्तिकेयं प्रति वर्णितः । तथाहि—" कलौ के वै भविष्यंति नृपचिह्नयुता नराः ॥ ज्ञातुमिच्छामि तेषां तु नामानीह जगद्गुरो ॥ १ ॥ ते वै राज्यं करिष्यंति कति वर्षाणि तत्र हि ॥ ब्रह्मन्नेतत्समाचक्ष्व परं कौतूहलं हि मे ॥ २ ॥ ब्रह्मोवाच ॥ सत्यादिकेषु बहुशः श्रुता भूपास्त्वया गुह ॥ शृणु वक्ष्ये कलियुगे संक्षेपेण सुरोत्तम ॥ ३ ॥ पांडवानां कुलोत्पन्ना विष्णुरातादिका नृपाः ॥ इक्ष्वाकुवंशजा भूपास्तथा मागधवंशजाः ॥ ४ ॥ कलौ राज्यं करिष्यंति वर्षाणां वै सहस्रकम् ॥ कलिसंध्यां समारभ्य राज्यमेतत्त्रयं स्मृतम् ॥ ५ ॥ ततो नृपा भविष्यंति पञ्च प्रद्योतसंज्ञकाः । अष्टत्रिंशोत्तरशतं कलौ ते राज्यकारकाः ॥ ६ ॥ शिशुनागा दश नृपाः षष्ट्युत्तरशतत्रयम् ॥ कलौ भोक्ष्यंति पृथिवीं राजानो धर्मतत्पराः ॥ ७ ॥ अतः परं नृपा लोके शूद्रप्रायास्त्वधार्मिकाः ॥ शिशुनागात्परे राज्ये शूद्रीगर्भोद्भवो बली ॥ ८ ॥ महापद्मधरः कश्चिन्नंदो राज्यं करिष्यति ॥ नंदस्य चाष्ट पुत्राश्च भविष्यंति च भूमिपाः ॥ तेषां तु वशगा भूमिर्भविष्यति शतं समाः ॥ ९ ॥ अब्रह्मण्यान्द्विजः कश्चिद्दुष्टान्नंदसुतानथ ॥ अयोग्या इति मत्वा तु राज्यात्तानुद्धरिष्यति ॥ १० ॥ अराजके तु जगतीं विप्रदत्तां कलौ युगे ॥ भोक्ष्यंति दश मौर्याश्च सप्तत्रिंशोत्तरं शतम् ॥ ११ ॥ ततः शुंगा दश नृपा दशवर्षशताधिकम् ॥ कलौ राज्यं करिष्यंति विख्याताः सर्वतो दिशि ॥ १२ ॥ कण्वो हत्वा नृपं शुंगं राज्यलोभेन स्वामिनम् ॥ स्वयं करिष्यते राज्यं वसुदेवेति विश्रुतः ॥ १३ ॥ तत्पुत्रपौत्राः पृथिवीं चत्वारिंशच्च पंच च ॥ शतानि त्रीणि वर्षाणां भोक्ष्यंति च कलौ युगे ॥ १४ ॥ तद्भृत्यस्त्वंध्रजातीयः कंचित्कालमुशत्तम ॥ चकार राज्यं हत्वा वै काण्वं तु वृषलो बली ॥ १५ ॥ तस्य वंशोद्भवास्त्रिंशद्भविष्यंति कलौ नृपाः ॥ भोक्ष्यंत्यांध्रास्तु पृथिवीं चत्वार्यब्दशतानि च ॥ १६ ॥ षट्पंचाशोत्तरं कालं परं तस्मान्निबोध मे ॥ सप्ताभीराश्च पृथिवीं भोक्ष्यंत्यब्दशतं कलौ ॥ १७ ॥ ततो नृपा भविष्यंति दश गर्दभिसंज्ञकाः ॥ अष्टाधिकाश्च नवतिं तेषां राज्यं भविष्यति ॥ १८ ॥ कंका षोडश भूपाला भविष्यंति कलौ गुह ॥ पालयिष्यंति गां ते वै वर्षाणाश्च शतद्वयम् ॥ १९ ॥ ततो वै विक्रमो नाम भवितोज्जयिनीपतिः ॥ यो वै म्लेच्छान्सुसंपन्नान्कोटिशो निहनिष्यति ॥ २० ॥ तस्य राज्यं कलौ स्कंद पञ्चत्रिंशोत्तरं शतम् ॥ भविष्यति परे काले शालिवाहस्ततो नृपः ॥ २१ ॥ शतं वर्षाणि पृथिवीं भोक्ष्यत्यवितथोद्यमः ॥ ततोऽष्टौ यवना भाव्यास्तुरुष्का वै चतुर्दश ॥ वर्षाणि चैव पृथिवीं भोक्ष्यंति शिवनंदन ॥ २२ ॥ भूयः कलौ भविष्यंति मौना एकादशैव तु ॥ ते वै भोक्ष्यंति पृथिवीं वर्षाणां च शतत्रयम् ॥ २३ ॥ किलकिलायां ततो जाता भूतनंदादयो नृपाः ॥ कलौ राज्यं करिष्यंति पंचाधिकशतं समाः ॥ २४ ॥ एते कलौ सार्वभौमाः खंडराज्यमतः परम् । तेषां त्रयोदश सुता भविष्यंति च वाह्लिकाः ॥ २५ ॥ ततः परं सप्तसप्त कौशलांध्राश्च कीर्त्तिताः ॥ वैदूरपतयो भाव्या नैषधास्तदनंतरम् ॥ २६ ॥ विश्वस्फूर्तिश्च भविता करिष्यत्यन्यथा जनान् ॥ तीव्रमन्युः सर्ववर्णान्म्लेच्छप्रायान्करिष्यति ॥ २७ ॥ तस्मिन्काले सिंधुतीरं कौंतीं काश्मीरमंडलम् ॥ भोक्ष्यंति ब्राह्मणाः शूद्रा म्लेच्छाश्चाब्रह्मवर्चसः ॥ २८ ॥ म्लेच्छप्राया इमे भूपाः फल्गुदास्तीव्रमन्यवः ॥ अल्पायुषोऽल्पसत्त्वाश्च भविष्यंति कलौ युगे ॥ २९ ॥ प्रजास्ते भक्षयिष्यंति म्लेच्छा राजन्यरूपिणः ॥ अन्योन्यतो राजभिश्च क्षयं यास्यंति वै प्रजाः ॥ ३० ॥ एते भोक्ष्यंति पृथिवीं द्वादशोर्द्धचतुष्टयम् ॥ एवं वै धर्मप्राधर्ष्ये भविष्यति कलौ यदा ॥ ३१ ॥ भविष्यति तदा

श्रीशुक उवाच॥ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया॥कालेन बलिना राजन्नंक्ष्यंत्यायुर्बलं स्मृतिः॥१॥वित्तमेव कलौ नृणां जन्माचारगुणादयः॥ धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥ दांपत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ॥ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥ ३ ॥

द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः ॥ अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥ १ ॥ कलिधर्मान्प्रपंचयति ततश्चेत्यादिना ॥ १ ॥ धर्मन्याययोर्व्यवस्थायां बलमेव ॥ २ ॥ दांपत्ये भार्यापतिभावेऽभिरुचिरेव हेतुर्न कुलगोत्रादिः । व्यावहारिके क्रयविक्रयादौ । स्त्रीत्वे पुंस्त्वे च तयोः श्रैष्ठ्ये रतिकौशलमेव हेतुर्न कुलमाचारो वा ॥ ३ ॥

स्कंद ब्रह्मज्ञानैकमानसः ॥ तस्योपदिष्टं मार्गं वै ग्रहीष्यंति च ये जनाः ॥ ३२ ॥ ते वै राज्यं करिष्यंति तस्य शिक्षानुसारतः ॥ धर्मेण राज्यवृद्धिश्च कलौ तेषां भविष्यति ॥ ३३ ॥ यदा वेदे च विप्रे च वैष्णवे च पराङ्मुखाः ॥ तदा तेषां क्षयः स्कंद भविष्यत्यचिरेण हि ॥ ३४ ॥ तेषां राज्यात्परे काले म्लेच्छा गौरमुखा नृपाः ॥ प्रबलाः संभविष्यंति प्रजापालनतत्पराः ॥ ३५ ॥ अल्पकालेन तेषां वै राज्यवृद्धिर्भविष्यति ॥ नृपा बलिं हरिष्यंति गौरवर्णानुगाखिलाः ॥ ३६ ॥ अशीतिशतवर्षे ते राज्यं नीत्यनुसारतः ॥ कृत्वा पश्चिमदेशीयैर्नृपैर्यास्यंत्यदर्शनम् ॥ ३७ ॥ यदा वेदेषु विप्रेषु वैष्णवेषु च शुद्धधीः ॥ तदा नृपा विजेष्यंति म्लेच्छान्धर्मपराङ्मुखान् ॥ ३८ ॥ तस्मिन्काले खंडनार्थं शतशश्च सहस्रशः ॥ भविष्यंति कलौ स्कंद राज्यपालनतत्पराः ॥ ३९ ॥ धर्मश्चैव कलौ स्कंद ततः संस्थां गमिष्यति ॥ किञ्चित्कालांतरे भूयो भविता विजयो नृपः ॥ ४० ॥ तेषां कुले समुत्पन्नो धर्मज्ञानैकतत्परः ॥ तस्य वंशोद्भवा भूपाः कलौ पंचशतानि ते ॥ वर्षाणि वै करिष्यंति राज्यं पंचाशदुत्तरम् ॥ ४१ ॥ अतः परं रोहितके पत्तने संभविष्यति ॥ कलौ नागार्जुनो नाम नृपचिह्नयुतस्तदा ॥ ४२ ॥ तद्वंशे राज्यभोगस्तु वर्षाणां वै सहस्रकम् ॥ तस्मात्परं बलिर्नाम नृपो वै संभविष्यति ॥ ४३ ॥ तस्य वंशोद्भवा भूपाः सहस्राणि शताधिकम् ॥ वर्षाणि ते कलौ स्कंद नृपा राज्यकराः स्मृताः ॥ ४४ ॥ अतः परं कलियुगे नृपाः शूद्रादयः स्मृताः ॥ म्लेच्छप्राया जनपदा भविष्यंति कलौ गुह ॥ ४५ ॥ एकीभूतं जगत्सर्वं म्लेच्छज्ञानैकसंस्थितम् ॥ दृष्ट्वा चाधर्मबाहुल्यं विष्णुः कल्किर्भविष्यति ॥ ४६ ॥ आशुगं हयमारुह्य म्लेच्छान्वै स वधिष्यति ॥ ततः कृतयुगं भूयो भविष्यति शिवात्मज ॥४७॥ एवं कलौ मया प्रोक्ता नृपचिह्नयुता नराः ॥ समासेनैव ते स्कंद किं भूयः श्रोतुमिच्छसि ॥४८॥ इति भविष्ये चतुर्थकल्पे ॥४३॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ ॥ सत्ययुगागमः ॥ कृतयुगागमः ( १ ) । ततः कलिकृतप्रजाक्षयप्राप्तेः । अनुदिनं प्रत्यहम् । हे राजन्निति–' यथा राजा तथा प्रजा ' इति न्यायेन यथा त्वदीयराज्ये धर्मादीनां वृद्धिस्तथा कलिराज्ये धर्मादिह्रासश्चेति भावः ॥१॥ जन्माद्युत्कर्षहेतुर्न तु ब्राह्मणत्वादिरिति भावः। ''यस्यास्ति वित्तं स नरः कुलीनः स पंडितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च दर्शनीयः सर्वे गुणाः कांचनमाश्रयंति॥ '' इति भर्तृहर्युक्तेः । धर्मन्याययोर्व्यवस्थायामयं धर्मोऽयं न्याय इति निर्णये कर्तव्ये यो धनादिना बली तस्यैव वाक्यं धर्मो न्यायश्चेति लोका मंस्यंतीत्यर्थः ॥ २ ॥ दंपतिभावे विवाहे, ''कुशविप्रांबुपित्रग्निवेदभूकालदिक्सुराः । साक्ष्ये यत्र विवाहे तु तद्दांपत्यमुदीरितम् ॥'' इति नारदीयोक्तम् । कुशविप्रादीन्विनैव विवाहा भविष्यंतीत्यर्थः । मायैव कपटमेव । सूत्रं तंतुमात्रमेव न तु नित्यनैमित्तिकानुष्ठानस्वाध्यायादि, ब्राह्मणोऽहं दृश्यतां मत्कंठे सूत्रमित्येवं स्वीयविप्रत्वं सूचयिष्यंति न तु वेदोच्चारणादिनेति भावः । यज्ञसूत्रमिति वक्तव्ये सूत्रमित्युक्त्या तस्य मंत्रनिर्मितत्वाद्यभावेन केवलं कर्त्तनयंत्रादिगतसूत्रतुल्यतैव ध्वनिता । तदुक्तम्–'' अनध्यायकृतं यच्च तथा

लिंगमेवाश्रमख्यातावन्योऽन्यापत्तिकारणम्॥अवृत्त्या न्यायदौर्बल्यं पांडित्ये चापलं वचः॥४॥अनाढ्यतैवासाधुत्वे साधुत्वे दंभ एव तु॥स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥ दूरे वार्ययनं तीर्थं लावण्ये केशधारणम् ॥ उदरंभरिता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥ दाक्ष्यं कुटुंबभरणं यशोर्थे धर्मसेवनम् ॥ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमंडले ॥ ७ ॥ ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥८॥आच्छिन्नदारद्रविणा यास्यंति गिरिकाननम् ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥९॥ अनावृष्ट्या विनंक्ष्यंति दुर्भिक्षकरपीडिताः ॥ शीतवातातपप्रावृड्हिमैरन्योऽन्यतः प्रजाः ॥ १० ॥ क्षुत्तृड्भ्यां व्याधिभिश्चैव संतापेन च चिंतया ॥ त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥ क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ॥ वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥ पाखंडप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥ १३ ॥ शूद्रप्रायेषु वर्णेषुच्छागप्रायासु धेनुषु ॥ गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बंधुषु ॥ १४ ॥

आश्रमाणां ख्यातौ ज्ञाने लिंगमेव दंडाजिनादिकं हेतुर्नत्वाचारविशेषः । अन्योन्यापत्तिकारणं चाश्रमादाश्रमांतरप्राप्तौ च कारणम् । यद्वा बहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादिव्यवहारे कारणम् । अवृत्त्या मुद्रार्पणादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयः । चापलं वचो बहुभाषणम् ॥ ४ ॥ असाधुत्वे चौर्याद्यभियोगे । प्रसाधनमलंकारः ॥ ५ ॥ दूरे वर्तमानं वार्ययनं जलाशयस्तीर्थं न तु गुर्वादि । स्वार्थः पुरुषार्थः ॥ ६ ॥ ७ ॥ ८ ॥ आच्छिन्ना अपहृता दारा द्रविणानि च यासां ताः । अष्टिर्बीजम् ॥ ९ ॥ १० ॥ ११ ॥ क्षीयमाणेष्वित्यादीनामित्थं कलौ गतप्राय इति पंचमेनान्वयः । क्षीयमाणेष्वल्पप्रायेषु ॥ १२ ॥ दस्युप्रायेषु चौरतुल्येषु चौर्यानृतवृथाहिंसाद्या नानावृत्तयो येषां तेषु ॥ १३ ॥ छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु ॥ १४ ॥

मंत्रविवर्जितम् । अत्रिप्रपत्नीसूत्रोत्थमवरीसूत्रनिर्मितम् ॥ ग्राममध्ये कृतं यच्च भुक्त्वा चैव कृतं तु यत् । अब्राह्मणकृतं यच्चाशुचिना निर्मितं तु यत् ॥ तत्सूत्रं विबुधैर्ज्ञेयं पशुबंधनरज्जुवत् ॥ " इति निर्णयसुधाकरे ॥ ३ ॥ 'अन्योन्यं विप्रा नमंते' इत्याद्युक्त्या सजातीयेष्वेवान्योन्यादिप्रयोगदर्शनाद्द्विजातीयब्रह्मचर्यसंन्यासादौ तत्कथं प्रयुक्तं तत्राह–यद्वेति ॥ ४ ॥ अभियोगः प्रापणम्, दुष्टत्व इत्यर्थः । त्वं मे भार्येति स्वीकारहेतुः । प्रसाधनं शरीरशुद्धिरलंकारो वेति तीर्थः । उद्वाहे विवाहस्थाने स्वीकारस्त्वं मे भार्येत्यंगीकरणमेव न तु पित्रादिकर्तृकार्पणम् । अलंकारस्थाने केवलं स्नानमेव न तु स्वर्णादि, घोरे कलौ स्वर्णाद्यप्राप्तेरेर्थांतरोक्तेः ॥ ५ ॥ " तीर्थं मुख्यं पिता माता गुरुः शास्त्रं तथा हरिः । गौणं तीर्थं त्वम्मयं स्यादित्युक्तं तीर्थवेदिभिः ॥ " इति । लावण्ये शरीरसौंदर्यद्योतनाय केशानामितस्ततः प्रसाधनमात्रमेव भविष्यति वस्त्रभूषाद्यनाप्तेः । उदरभरणमेव पुरुषार्थं मंस्यंते न तु हरिस्मरणादिकमित्यर्थः । धार्ष्ट्यं वृथा हठः यो वृथा हठं करिष्यति तं सत्यवादिनं मंस्यंत इत्यर्थः ॥ ६ ॥ दाक्ष्यं नैपुण्यम् । यशोर्थे इति–कल्याणबुद्ध्या न कोपि धर्मं करिष्यतीत्यर्थः ॥ ७ ॥ निर्घृणैर्निर्दयैः ॥ ८ ॥ आमिषं मांसम्, क्षौद्र मधु ॥ ९ ॥ १० ॥ क्षुधादिभिश्च नंक्ष्यंति । यद्वा–त्रिंशता सहिता विंशतिस्त्रिंशद्विंशतिः, पंचाशदित्यर्थः । परमायुः अहोपुण्यवानयमनेन बहु जीवनं प्राप्तमित्यर्थः ॥ ११ ॥ कलेर्दोषा असत्यसंभाषणादयस्तेभ्य इत्यर्थः ॥ १२ ॥ प्रायशब्दार्थस्त्वत्र तुल्यतैव । वृथा हिंसा पित्राद्यनुद्दिश्य पशुहननम् ॥ १३ ॥ आश्रमेषु संन्यासादिषु परिग्रहादिना गृहस्थतुल्येषु । योनि

अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु ॥ विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १५ ॥ इत्थं कलौ गतप्राये जने तु खरधर्मिणि ॥ धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १६ ॥ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणाय साधूनां जन्मकर्मापनुत्तये ॥ १७ ॥ शंभलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ॥ भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १८ ॥ अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ॥ असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥ विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ॥ नृपलिंगच्छदो दस्यून्कोटिशो निहनिष्यति ॥ २० ॥ अथ तेषां भविष्यंति मनांसि विशदानि वै ॥ वासुदेवांगरागातिपुण्यगन्धानिलस्पृशाम् ॥ पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २१ ॥

अणुप्रायासु श्यामाकतुल्यासु।स्थास्नुषु वृक्षेषु।विद्युत्प्रायेषु तडिद्बहुलेषु।शून्यप्रायेषु धर्मादिरहितेषु सद्मसु गृहेषु॥ १५॥ जने तु खरधर्मिणि दुःसहचेष्टिते कलौ गतप्राये समाप्तप्राये ॥ १६॥ एतत्प्रपंचयति चतुर्भिः । चराचरगुरोरीश्वरस्येति च धर्मत्राणे हेतुः गुरुत्वेश्वरत्वयोरुपपादनमखिलस्य विश्वस्यात्मनः कारणस्येति । एवंभूतस्य विष्णोर्जन्म साधूनां धर्मत्राणाय।धर्मत्राणप्रयोजनमाह कर्मापनुत्तये मोक्षाय॥ १७॥ शंभलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसो ब्राह्मणस्य भवने गृहे॥ १८ ॥धर्मत्राणप्रकारमाह अश्वमिति । असाधवो दम्यन्ते येन तमश्वमारुह्यासिना दस्यून्कोटिशो निहनिष्यतीत्युत्तरेणान्वयः । असाधुदमन इति पाठे कल्किविशेषणम् । अणिमाद्यष्टैश्वर्याणि गुणाश्च सत्यसंकल्पत्वादयः॥ १९ ॥ तत्प्रपंचः आशुना शीघ्रगामिना तेन हयेनाश्वेन क्षोण्यां पृथिव्यां विचरन्।नृपलिंगच्छदो राजवेषच्छन्नान्।।२०।।ततश्च पुनः कृतयुग प्रवृत्तिं वक्तुमाह।अथेति सार्द्धाभ्याम् । तेषां पौरजानपदानां मनांसि विशदानि भविष्यंति । तत्र हेतुः । वासुदेवस्यांगरागेण चंदनादिनाऽतिपुण्यगंधो योऽनिलस्तं स्पृशंतीति तथा तेषाम् ॥ २१ ॥

संबंधेन संबंधिनो यौनाः श्वशुरश्यालादयस्तत्प्रायेषु, प्रायशब्दोऽत्र प्रधाने श्वसुरादिप्रधानेषु कर्तव्यार्थानुसंधानार्थं श्यालश्यालीपत्यादीनाश्रयिष्यंतीति भावः ॥ १४ ॥ ओषध्यो यवगोधूमव्रीह्याद्याः । अण्णुप्रायासु श्यामाकतुल्यासु । यद्वा—ओषधीषु हरीतक्यादिषु, अणुप्रायासु निष्फलासु तृणप्रायासु “ ओषध्यो यवव्रीह्याद्याः शिवाद्या अपि कीर्तिताः । अणुर्व्रीहिविशेषे ना तृणसूक्ष्माफलेषु च ॥ तुच्छे मानाविशेषे च ” इति कोशात् । शमी सक्तुफला, सा चाल्पवृक्षजातिः, यत्काष्ठे यज्ञेऽग्निमंथनं क्रियते याज्ञिकैः । वृक्षेषु वटाश्वत्थादिषु छायाद्यभावेन शमीतुल्येष्वित्यर्थः ॥ १५ ॥ क्वचित् ‘ जने तु ’ इति पाठस्तत्र खरधर्मिणीति तद्विशेषणम् । खरो रासभस्तद्धर्मो निर्लज्जमैथुनकश्मलाशनादिलक्षणस्तद्वति सतीत्यर्थः । क्वचित् तेषु खरधर्मिषु इति पाठः ॥ १६ ॥ साधूनां वेदानुगामिनाम् । धर्मो यज्ञादिरूपस्तस्य रक्षणाय । धर्म एवानुष्ठितोंतःकरणशुद्धिद्वारा मोक्षहेतुरित्यत उक्तं मोक्षायेति ॥ १७ ॥ कलिं कृषति विलिखति भिनत्तीति कल्किः । पृषोदरादिरयम् । कृषतेर्डिप्रत्यये टिलोपे कलेरिकारलोपे च रूपसिद्धेः । यद्वा—कं सुखं लाति ददातीति कलो धर्मः, तं कायत्युपदिशतीति कल्किः ‘ वासुदेवानुशिक्षया ’ इत्युक्तेः ॥ १८ ॥ देवैरिंद्रादिभिर्दत्तमानीतम् ॥ १९ ॥ अप्रतिमद्युतिः सर्वोत्कृष्टदीप्तियुतः ॥ २० ॥ ततो दस्युहननोत्तरम् । अयमेव मूलोक्ताथशब्दार्थः । तेषां कलियुगसमाप्त्युत्तरका

तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति ॥ वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥ २२ ॥ यदाऽवतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः ॥ कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥ २३ ॥ यदा चंद्रश्च सूर्यश्च तथा तिष्यबृहस्पती ॥ एकराशौ समेष्यंति तदा भवति तत्कृतम् ॥ २४ ॥ येऽतीता वर्तमाना ये भविष्यंति च पार्थिवाः ॥ तेत उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः ॥ २५ ॥ आरभ्य भवतो जन्म यावन्नंदाऽभिषेचनम् ॥ एतद्वर्षसहस्रं तु शतं पंचदशोत्तरम् ॥ २६ ॥ सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ॥ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ २७ ॥

स्थविष्ठः स्थूलः ॥ २२ ॥ कृतयुगप्रवृत्तिमाह । यदावतीर्ण इति । प्रजानां सूतिः प्रसूतिः ॥ २३ ॥ तदवतारकालोपलक्षणमाह । यदा चंद्रश्चेति । तिष्यः पुष्यः । अयमर्थः । चंद्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रे योगस्तदा तत्कृतयुगं भविष्यति । यद्यपि च प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ययोगः संभवति तथाऽपि तेषां सहप्रवेशोऽत्र विवक्षितः । समेष्यंतीति वचनात् । अतो नातिप्रसंगः ॥ २४ ॥ एवं नवमस्कंधमारभ्यानुक्रांतं वैवस्वतमनोर्वंशद्वयं निगमयति । येऽतीता इति । उद्देशतः संक्षेपतः ॥ २५ ॥ कलियुगावांतरविशेषं वक्तुमाह आरभ्येत्यादिना । वर्षसहस्रं पंचदशोत्तरं शतं चेति कयापि विवक्षयाऽवांतरसंख्येयम् । वस्तुतस्तु परीक्षिन्नंदयोरंतरं द्वाभ्यां न्यूनं वर्षाणां सार्धसहस्रं भवति । यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुंजयांता विंशतिराजानः सहस्रसंवत्सरं भोक्ष्यंतीत्युक्तं नवमस्कंधे " ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम् " इति । ततः परं पंचप्रद्योतना अष्टत्रिंशोत्तरं शतम् । शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यंति पृथिवीमित्यत्रैवोक्तत्वात् ॥ २६ ॥ कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह । सप्तर्षीणां त्विति । अयमर्थः । प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमंडलम् । तत्र किंचिदुन्नतेषाऽग्रस्थानीयो मरीचिः । ततः पश्चादानम्रयुगकंधराकारो वसिष्ठः सभार्यः । ततः पश्चादीषदुन्नतेषामूलस्थानीयोंगिराः । ततः पश्चाच्चतुरस्रताराचतुष्के ईशान्यामत्रिः । ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहस्तत उत्तरतः क्रतुः । एवंस्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ दृश्येते पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोस्तु पूर्वयोस्तु मध्ये यत्समं दक्षिणोत्तररेखायां समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते तेन तथैव युक्ता नृणामब्दशतं

लिकानां पौरजानपदानां तत्तत्पुरदेशवासिनां जनानाम् । तत्र मनोविशदत्वे ॥ २१ ॥ तेषामेव स्थूलोऽधिकः ॥ २२ ॥ २३ ॥ अत्राशयमाह—अयमर्थ इति । अतस्समकालिकतत्त्रयपुष्यप्रवेशविवक्षणात् ॥ २४ ॥ " समासोद्देशसंक्षेपास्त्रय एकार्थवाचकाः " इति शब्दरत्नसंग्रहोक्तेः ॥ २५ ॥ अत्र स्वामिचरणैरेव सुव्याख्यातत्वादस्माभिरुपरम्यते ॥ २६ ॥ अत्राशयमाह—अयमर्थ इति । तत्र शकटाकारे । ईषा रेखा सीरदंडः शकटांगविशेषश्च तदग्रस्थानीयस्तत्स्थानापन्नः । युगः शकटाग्रबद्धः वृषयोजनार्थकः शकटांगभेद एव, तद्ग्रीवा च तन्मध्यभाग उच्चाकार एव बोध्यः ॥ २७ ॥

तेनैव ऋषयो युक्तास्तिष्ठंत्यब्दशतं नृणाम् ॥ ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥ २८ ॥ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः ॥ तदाऽविशत्कलिर्लोकं पापे यद्रमते जनः ॥ २९ ॥ यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ॥ तावत्कलिर्वै पृथिवीं पराक्रांतुं न चाशकत् ॥ ३० ॥ यदा देवर्षयः सप्त मघासु विचरंतिहि ॥ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥ यदा मघाभ्यो यास्यंति पूर्वाषाढां महर्षयः ॥ तदा नंदात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥ यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि ॥ प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥ दिव्याब्दानां सहस्रांते चतुर्थे तु पुनः कृतम् ॥ भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥ इत्येष मानवो वंशो यथा संख्यायते भुवि ॥ तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगेयुगे ॥ ३५ ॥

तिष्ठंति ते च द्विजास्त्वदीये कालेऽधुना मघा आश्रिता वर्तन्ते ॥ २७ ॥ २८ ॥ तेषु मघासु वर्तमानेषु सत्सु यदा विष्णोर्भानुः भातीति भानुः शुद्धसत्त्वात्मको देहो दिवं वैकुंठं गतस्तदा कलियुगमविशत् । यद्यस्मिन्युगे जनः पापे रमत इति कलियुगस्य लक्षणम् ॥ २९ ॥ ननु श्रीकृष्णे पृथिव्यां वर्तमानेऽपि संध्यारूपेण कलिः प्रविष्ट एवासीत् । सत्यम् । तथापि तावत्तस्य पराक्रमो नाभवादित्याह । यावदिति । पराक्रांतुमभिभवितुम् ॥ ३० ॥ अतो यथोक्त एव कलिप्रवेशकाल इत्याह । यदा देवर्षय इति द्वादशाब्दशतात्मक इति । दिव्येन मानेन संध्यासंध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिस्तदा संध्यामतिक्रम्य प्रविष्ट इत्यर्थः ॥ ३१ ॥ कलेः प्रवेशकालमुक्त्वा तस्य वृद्धिकालमाह । यदेति । तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नंदात्प्रभृत्यतिवृद्धिं गमिष्यतीत्यर्थः॥ ३२॥ ननु यदा कलेर्लिंगमुपलब्धं तदैव प्रविष्ट इति युक्तं ततः पूर्वमेव प्रवेशस्ततः परं वृद्धिरित्यत्र किं प्रमाणं तत्राह । यस्मिन्निति । प्रतिपन्नं प्रविष्टमिति ज्ञातम् । पुराविदः पूर्वज्ञातारः ॥ ३३ ॥ कलेरनंतरं कृतयुग प्रवेशमाह । दिव्याब्दानामिति । चतुर्थे कलौ प्रवेशनाब्दपरिमितेनांशेनाऽपि सहातीते सतीत्यर्थः । कृतयुगप्रवेशचिह्नमाह । यदा नृणां मन आत्मप्रकाशकं भविष्यति तदेति ॥ ३४ ॥ राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतीतिदिशति । इत्येष इति । यथा याभिरुच्चनीचावस्थाभिः । तास्ता अवस्थाः । वंशा इति वा पाठः ॥ ३५ ॥

तेन पुलहक्रतुमध्यगतनक्षत्रेण ॥ २८ ॥ २९ ॥ अत्राक्षिपति–नन्विति । अभिभवितुं स्वसामर्थ्यं दर्शयितुम् ॥ ३० ॥ अतः पराक्रमाभावात् । इत्यर्थ इति–श्रीकृष्णकाले स्वसंध्यां विहाय स्वेन रूपेणैव प्रविष्ट इति भावः ॥ ३१ ॥ इत्यर्थ इति–परीक्षित्कालिकसप्तर्षिमंडलगतमघानक्षत्रतः पूर्वाषाढर्क्षं दशममस्ति, तत्रैकैकर्क्षस्य शतवर्षं तत्र स्थायित्वान्नंदकाले कलेर्वर्षसहस्रभुक्तिरायाति । अत एवोक्तम्–“ आरम्य भवतो जन्म यावन्नंदाभिषेचनम् । एतद्वर्षसहस्रम्” इति तच्च पूर्वं पराक्रांतमेवेति भावः ॥ ३२ ॥ पुनराक्षिपति–नन्विति । तस्मिन्नेवाहनि । तदा तस्मिन्नेव क्षणे ॥ ३३ ॥ इत्यर्थ इति–दिव्याब्दानां सहस्रस्यांतःस्थितिर्यस्मिन्संध्यांशे स सहस्रांतस्तस्मिंस्तथा तद्गुणसंविज्ञानबहुव्रीहित्वाद्द्वादशशताब्दात्मके संध्यांशसहिते कृतयुगापेक्षया चतुर्थे कलावितीत इतिशेषेणायं भावः । दिव्याब्दानां सहस्रांत इत्यलुक्समासः ‘ अंतो नाशे स्थितावपि ’ इत्यभिधानात् । यद्वा–दिव्याब्दानां सहस्रेणांतो नाशो यस्य तस्मिंश्चतुर्थेऽतीते सति सहस्रपदं संध्यांशरूपशतद्वयस्याप्युपलक्षणम् ॥ ३४ ॥ तास्ता इत्यस्य

एतेषां नामलिंगानां पुरुषाणां महात्मनाम् ॥ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ३६ ॥ देवापिः शंतनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ॥ कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥ ताविहेत्य कलेरंते वासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥ ३८ ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९ ॥ राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे ॥ भूमौ ममत्वं कृत्वान्ते हित्वेमां निधनं गताः ॥ ४० ॥ कृमिविड्भस्मसंज्ञाऽन्ते राजनाम्नोऽपि यस्य च॥भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ ४१ ॥ कथं सेयमखंडा भूः पूर्वैर्मे पुरुषैर्धृता ॥ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥ ४२ ॥ तेजोऽबन्नमयं कायं गृहीत्वात्मतयाऽबुधाः ॥ महीं ममतया चोभौ हित्वां तेऽदर्शनं गताः ॥ ४३ ॥ येये भूपतयो राजन्भुंजते भुवमोजसा ॥ कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥४४॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे द्वितीयोऽध्यायः ॥ २ ॥

एतत्कीर्तनस्य वैराग्योपयोगितामाह । एतेषामिति । नामैव लिंगं ज्ञापकं यषां तेषां कथामात्रेणैवावशिष्टानां कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वा ॥ ३६ ॥ कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह । देवापिः सोमवंशजः । मरुस्तु सूर्यवंशजः । कलापग्रामो नाम योगिनामावासः प्रसिद्धः ॥ ३७ ॥ ३८ ॥ इममेव प्रकारं प्रतिचतुर्युगं दर्शयति । कृतमिति ॥ ३९ ॥ "एतेषां नामलिंगानाम्" इत्यादि यदुक्तं तत्प्रपंचयति राजन्निति पंचभिः ॥ ४० ॥ ममत्वं कृत्वेत्यनेन सूचितां भूतद्रोहप्रवृत्तिं निंदति । कृमीति । राजनाम्नो राजेति नाम यस्य तस्यापि देहस्यांते कृमयो विष्ठा भस्मेति वा संज्ञा भविष्यति । तत्कृते तदर्थं यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद किंतु न वेदैव । कुत इत्यपेक्षायां हेतुत्वेन भूतद्रोहं विशिनष्टि । यतो भूतद्रोहान्निरयो भवति ॥ ४१ ॥ ममत्वप्रकारं प्रपंचयति । कथमिति । सेयमखंडा भूर्मे पूर्वजैर्धृता सती इदानीं मत्पूर्वा च सती मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥ उभौ महीं कायं च अदर्शनं मृत्युम् ॥ ४३ ॥ उपसंहरति । येये इति । ते सर्वे च कथासु क्रियमाणासु । कथामात्राः कालेन कृताः ॥ ४४॥ इति श्रीमद्भागवते द्वादशस्कंधे श्री॰टीकायां द्वितीयोऽध्यायः ॥ २ ॥

स्थाने वंशा इति वा पाठः ॥ ३९ ॥ ३६ ॥ बदरिकाश्रमे कलापग्रामोऽस्ति । महायोगबलान्वितावणिमाद्यैश्वर्ययुक्तौ ॥ ३७ ॥ तौ मरुदेवापिसंज्ञौ । इहार्यावर्ते । एत्य प्राप्य । वासुदेवेन कल्किरूपेण हरिणा अनुशिक्षितौ बोधितौ । पूर्ववद्गतकृतयुगवत् ॥ ३८ ॥ ३९ ॥ हेराजन्निति—राजमात्राणामियमेव दशेति भावः । अंते देहांते । इमां भुवम् ॥ ४० ॥ स्वार्थं स्वकर्तव्यं किं वेद किन्तु न वेदेत्यर्थः ॥ ॥ ४१ ॥ ४२ ॥ तेजोबन्नमयमिति त्रिवृत्करणश्रुत्यभिप्रायेणोक्तम् ॥ ४३ ॥ कथामात्रा इति—कथैव तेषामवशिष्टा न स्वरूपमिति भावः ॥ ( ४४ ) ॥ यदि कल्क्यवतारान्तराजकथाविशेषजिज्ञासा चेत्तर्हि भविष्य

श्रीशुक उवाच ॥ दृष्ट्वात्मनि जये व्यग्रान्नृपान्हसति भूरियम् ॥ अहो मां विजिगीषंति मृत्योः क्रीडनका नृपाः ॥१॥ काम एष नरेंद्राणां मोघः स्याद्विदुषामपि ॥ येन फेनोपमे पिंडे येऽतिविश्रंभिता नृपाः ॥२॥ पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमंत्रिणः ॥ ततः सचिवपौराप्तकरींद्रानस्य कंटकान्॥ ॥ ३ ॥ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ॥ इत्याशाबद्धहृदया न पश्यंत्यंतिकेंऽतकम् ॥ ४ ॥ समुद्रावरणां जित्वा मां विशंत्यब्धिमोजसा॥ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥ यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ॥ गता यथागतं युद्धे तां मां जेष्यंत्यबुद्धयः ॥६॥ मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः ॥ जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥ ७ ॥ ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः ॥ स्पर्धमाना मिथो घ्नंति म्रियंते मत्कृते नृपाः ॥ ८ ॥

तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते॥कलौ च दोषभूयिष्ठे दोषहंत्री हरेर्नतिः॥ १ ॥देहेऽहंतां भूमौ च ममतां कुर्वंत्यतोऽबुधा इत्युक्तं तदेव भूमिगीतैःप्रपंचयति दृष्ट्वेत्यादिना। आत्मनि पृथिव्या जये व्यग्रानुद्युक्तान् । हासप्रकारमेवाह । अहो इति। मा माम्॥ १ ॥येन कामेन फेनोपमे पिंडे देहेऽतिविश्रंभिता विश्वासं नीता ये तेषां नरेंद्राणामेष कामो मोघ एव स्यात् ॥ २ ॥ काममेव दर्शयति द्वाभ्याम् । पूर्वमिति । इंद्रियार्थलंपटस्य न राज्यप्राप्तिः स्यादिति प्रथममिंद्रियषड्वर्गं निर्जित्य राजमंत्रिणो जेष्यामो वशीकरिष्यामः । सचिवा अमात्याः करींद्रा हस्तिपास्तांश्च जेष्यामः । कंटकान्प्रतिपक्षान् । अस्य अपास्य । अथ कंटकानिति वा पाठः ॥ ३ ॥ ४ ॥ एवं केचिदाशाबद्धा एव केचिन्मां पुनर्जित्वाऽप्यतितृष्णयाऽब्धिं विशंति तदेवमिंद्रियजयेन ये राज्यं साधयितुमिच्छंति तेऽतिमंदा इत्याह । कियदिति ॥ ५ ॥ अंतकं न पश्यंतीत्युक्तं तदेवाह । यामिति । कुरूद्वहेति भूमिगीतं कथयन् शुकः संबोधयति । कुलोद्वहा इति तु पाठः सुगमः ॥ ६ ॥ अबुद्धय इत्युक्तं तत्प्रपंचयति । मत्कृत इति ॥ ७ ॥ ८ ॥

संहितादिग्रन्था मत्संगृहीतचतुर्युगीयराजचरितग्रन्थश्चावलोकनीयः ॥ ४४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ नतिर्नमस्कारः । ' कृष्णप्रणामी न पुनर्भवाय ' इत्युक्तेः ( १ ) आत्मनि स्वस्यां पृथिव्यामित्यर्थः ॥ १ ॥ विदुषां नीतिविदाम् । फेनोपमे डिंडीरपिण्डतुल्ये नश्वरे ॥ २ ॥ करींद्रानित्युपलक्षणं सेनामात्रस्य । अमात्याः कर्मसचिवाः । ' मंत्री बुद्धिसहायः स्यात् ' इत्यमरः । आप्ता विश्वस्ताः । कंटकाः क्षुद्रशत्रवः ॥ ३ ॥ एवंक्रमेण पूर्वोक्तक्रमेण ॥ ४ ॥ अब्धिं विशंतीत्युक्त्या द्वीपजयो ध्वनितः । भूजयादिना किमपि न प्रयोजनमपित्वनर्थ एवावशिष्यते मनोजयापेक्षयेत्यभिप्रायेणाह–कियदिति । मनोजये किं स्यात्तत्राह–मुक्तिरिति " बंध इंद्रियविक्षेपो मोक्ष एषाञ्च संयमः " इत्येकादशोनविंशाध्याये भगवदुक्तेर्न्यायनये मनसोप्यन्तरिन्द्रियत्वे सिद्धेपीह तु षड्वर्गपदोक्तेरेव तद्ग्रहणं इति ध्येयं सुधीभिः ॥ ५ ॥ हे कुरूद्वहेति–त्वमपि यत्कुरुवंशं वहसि स वंशोऽप्यधुना भवच्छेष एवेति भावः । यथागतमिति–आगतमनतिक्रम्य यथा तेत्रागता निरुपस्करास्तथैव गता इत्यर्थः ॥ ६ ॥ न केवलमितरेषामेव मदर्थे विरोधो भवत्यपि तु पित्रादिदेहसंबंधिनामपीत्याह–मत्कृत इति । मत्कृते मदर्थे विग्रहः संयुगः " विग्रहस्तु समासार्थवाक्ये भागे रणेंगके " इत्यभिधानात् । अयमपि प्रायिक इत्याह–असतामप्रशस्तकर्मणाम् ॥ ७ ॥ किंप्रकारो विग्र

पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः ॥ मांधाता सगरो रामः खड्वांगो धुंधुहा रघुः ॥ ९ ॥ तृणबिंदुर्ययातिश्च शर्यातिः शंतनुर्गयः ॥ भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥ १० ॥ हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ॥ नमुचिः शंबरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥ अन्ये च बहवो दैत्या राजानो ये महेश्वराः ॥ सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥ ममतां मय्यवर्तंत कृत्वोच्चैर्मर्त्यधर्मिणः ॥ कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥ १३ ॥ कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ॥ विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥१४॥ यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममंगलघ्नः ॥ तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥१५॥

रामो नाम कश्चिद्राजा । यद्वा लोकदृष्ट्या दाशरथिरेव निर्दिष्टः ॥ ९ ॥ १० ॥ लोकं रावयति रोदयतीति लोकरावणः ॥ ११ ॥ १२ ॥ मयि उच्चैर्ममतां कृत्वा येऽवर्तंत ते कालेन कथावशेषाः कृताः । विभो इति संबोधनं कुरूद्वहेतिवत् ॥ १३ ॥ राजवंशानुकथनस्य तात्पर्यमाह । कथा इमा इति । विज्ञानं विषयासारताज्ञानं ततो वैराग्यं तयोर्विवक्षया परेयुषां मृतानां वचोविभूतीर्वाग्विलासमात्ररूपा न तु पारमार्थ्यं परमार्थे युक्तं कथनं न भवतीत्यर्थः ॥ १४ ॥ कस्तर्हि पुरुषाणामुपादेयः पर

हस्तत्राह—ममैवेति ॥ ८ ॥ कांश्चिन्नामतोऽप्याह—पृथुरिति । श्रीरामचन्द्रस्यापि मायया तथात्वांगीकारे न दोष इत्याह—यद्वेति ॥ ९ ॥ अक्षराधिक्यं तृतीयपाद आर्षम् । नैषधो नलः ॥ १० ॥ मनुष्योक्तन्यायं दैत्यादिष्वप्यतिदिशति—हिरण्यकशिपुरिति ॥ ११ ॥ अजिता अन्यैः स्वयमजिता इत्यर्थः ॥ १२ ॥ विभो इति श्रीशुकस्यैव राजानं प्रति संबुद्धिरित्याह—कुरूद्वहेति । वदिति—विशेषेण बुद्धिवैभवेन भातीति तथा, त्वं तु बुद्धिबलेन सर्वं जानास्येवेति भावः । अत्र चक्रवर्तिकारः—किंतु तेन अकृतार्था अपि तु कृतार्था एव प्राप्तस्वाभीष्टा एव कृताः पर्याप्ताः पूर्णा एव गुणरूपादिभिस्तदपि कथावशेषा एवाभूवन्, अर्वाचीनास्तु—अकृतार्थधनादिभिरप्यपूर्णा इति भावः ॥ १३ ॥ इत्यर्थ इति—तेषां नष्टत्वादधुना कथामात्रत्वमेवावशिष्टं न तु तेऽपीति भावः । महतां प्रियव्रतादीनाम् । परं श्रीहरिमीयुषां प्राप्तानाम् । किमर्थम्—विज्ञानं भगवदनुभवः । श्रोतृजनान्प्रत्यपि तादृशाः स्युरिति भावः । तदुक्तम्—" पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमंग । निवर्त्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥ यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद्विधत्ते । एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥ " इत्युद्धवं प्रति श्रीकृष्णेन । वितायेत्यार्षः । यद्वा—किमर्थं कथिता इति तत्राह—विज्ञानेति । वचोविभूतीर्वचसां विभूतयो विविधभवनविषयाः विज्ञानवैराग्यविवक्षया योग्यस्य पुंसो विज्ञानवैराग्ये स्यातामित्यभिप्रेत्य विवृता न तु पारमार्थ्ये परमार्थ उत्तमार्थो वेदमुख्यार्थो भगवांस्तमुद्दिश्य तस्य स्वस्वरूपभूतत्वेन विधिनिषेधाविषयत्वात् । यद्वा—किंभूताः कथाः वचसां भक्तिज्ञानक्रियात्मकानां विभूतिर्विशेषेण प्रतिपादनं यासु ताः । पारमार्थ्यमुद्दिश्योपदेशे तु केवलं भक्तिमात्रमेवोपदेष्टव्या स्यात्तस्या एवांतकाल उचितत्वात् " जन्मलाभः परं पुंसामंते नारायणस्मृतिः " इत्युक्तेः । यद्वा—ते कथिता इमाः कथाः पारमार्थ्यमेव परमार्थफलका एव न तु वचोविभूतयः पुरुषार्थायोगिन्य इति मंतव्यम् । द्वितीया प्रथमार्थे । ' श्रुतयः प्रमाणम् ' इतिवत्संबंधः । यद्वा—इमाः बुद्धिसन्निहितत्वाद्देवासुरसंग्रामादिरूपाः कथा वचोविभूतयः । पारमार्थ्यं परमात्मलीलावर्णनं तु न वचोविभूतयस्तस्य तत्प्रापकत्वात् । " पिबंति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् । पुनंति ते विषयविदूषिताशयं व्रजंति तच्चरणसरोरुहांतिकम् ॥" इत्युक्तेः । यद्वा—इमाः कथा वचोविभूतयो न तु किंतु पारमार्थ्यमेव सर्वासां परमार्थे भगवति तात्पर्यकत्वादित्यर्थः ॥ १४ ॥ परमार्थमेव पृच्छति—कस्तर्हीति । तत्रापि प्रत्यहमपि । तमेवोत्तमश्लोकगुणानुवादमेव

॥ राजोवाच ॥ ॥ केनोपायेन भगवन् कलेर्दोषान्कलौ जनाः ॥ विधमिष्यंत्युपचितांस्तन्मे ब्रूहि यथा मुने ॥ १६ ॥ युगानि युगधर्मांश्च मानं प्रलयकल्पयोः ॥ कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥ श्रीशुक उवाच ॥ कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः ॥ सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥ संतुष्टाः करुणा मैत्राः शांता दांतास्तितिक्षवः ॥ आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥ त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ॥ अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः ॥ २० ॥ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लंपटाः ॥ त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥ तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥ यशस्विनो महाशालाः स्वाध्यायाध्ययने रताः॥आढ्याः कुटुंबिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः॥२३॥कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः॥एधमानैः क्षीयमाणो ह्यंते सोपि विनंक्ष्यति ॥२४॥ तास्मिँल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ॥ दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५॥ सत्त्वं रजस्तम इति दृश्यंते पुरुषे गुणाः ॥ कालसंचोदितास्ते वै परिवर्तंत आत्मनि ॥२६॥ प्रभवंति यदा सत्त्वे मनोबुद्धींद्रियाणि च ॥ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः॥२७॥

मार्थस्तमाह । यस्त्विति । नित्यं प्रत्यहम् । तत्राप्यभीक्ष्णम् ॥ १५ ॥ कलिदोषोपचये सति भक्तेरसंभवं मन्यमानः पृच्छति । केनोपायेनेति । विधमिष्यंति नाशयिष्यंति । यथा यथावत् ॥ १६ ॥ कलियुगे कः परो धर्म इति बुभुत्सया पृच्छति । युगानीति । ब्रूहीत्यनुषंगः आत्यंतिकप्रलयजिज्ञासया पुनः पृच्छति । प्रलयकल्पयोः संहारस्थितिकालयोः । न चायं बहिर्मुखः प्रश्न इत्याह । कालस्येति ॥ १७ ॥ तत्र युगधर्मांस्तावदाह । कृत इति । तज्जनैस्तत्कालीनैर्जनैः । दानमरागद्वेषतयाऽभयदानम् । तदेव प्रथमस्कन्धे शौचशब्देनोक्तम् । विभोः संपूर्णस्य धर्मस्य ॥ १८ ॥ तदानींतनजनानाह । संतुष्टा इति । मैत्रा भूतमैत्रीयुक्ताः । श्रमणा आत्माभ्यासवंतः ॥ १९ ॥ अनृतेन सत्यं हिंसया दया असंतोषेण तपः विग्रहेण दानमिति यथासंख्यं योज्यम् ॥२०॥ ब्रह्मोत्तरा ब्राह्मणादिकाः ॥ २१ ॥ हिंसाऽतुष्ट्यनृतद्वेषैरित्ययं क्रमो न विवक्षितः । धर्मस्यार्धं ह्रसति क्षीयते । अधर्मस्य लक्षणैश्चिह्नैः पादैरित्यर्थः ॥ २२ ॥ यशस्विनः कीर्तिप्रियाः । क्षत्रद्विजोत्तराः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलौ धर्मपादानां तुर्यांशश्चतुर्थांशोऽवशिष्यते ॥२४॥ शूद्रदासोत्तराः शूद्रकैवर्तादिप्रधानाः ॥ २५ ॥ युगानामेवंभूतवैषम्ये कारणमाह सत्त्वमिति पंचभिः ॥ २६ ॥ मनश्च बुद्धिश्चेंद्रियाणि च सत्त्वे

हरिभक्त्युत्पादकत्वात् " अन्या वाचो विमुंचथ " इति श्रुतेः ॥ १९ ॥ ज्ञातकलिदोषपरिहारोऽपि लोकहिताय पृच्छति—केनेति वांऽवतरणिका । भगवन्मुने इति संबुद्धिद्वयेन सर्वकथनसामर्थ्यं द्योतयतीति भावः । ॥ १६ ॥ गतिं गमनप्रकारम् ॥ १७ ॥ तत्र पृष्टार्थेषु मध्ये । तावदादौ । नृपेति—धर्मज्ञानं विना नृपालनं दुर्घटमिति भावः ॥ १८ ॥ १९ ॥ तुर्यांशो दानलक्षणः पादो हीयते ह्रसति । पादहानौ प्रतिपक्षमाह—अधर्मेति ॥ २० ॥ तदा त्रेतायाम् । क्रियाः यज्ञादिरूपा । लंपटा विषयरागिणः । त्रैवर्गिकास्त्रिवर्गप्रधानाः । ' त्रिवर्गो धर्मकामार्थैः ' इत्यमरः । त्रयीवृद्धा वेदविद्याविशारदाः ॥ २१ ॥ २२ ॥ महाशाला यज्ञादिकर्तारः । आढ्या धनिनः ॥ २३ ॥ तुर्यांशः सत्यलक्षणः ॥ २४ ॥ तस्मिन्कलौ । शुष्कवैरिणो निर्निमित्तवैरिणः । दुराचारा मांसाशनाद्याचारपरायणाः ॥ २५ ॥ एवंभूतवैषम्ये पूर्वोक्तसंतुष्टा इत्यादिनोक्तवैषम्ये ।

यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम् ॥ तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ॥ २८ ॥ यदा लोभस्त्वसंतोषो मानो दंभोऽथ मत्सरः ॥ कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २९ ॥ यदा मायानृतं तंद्रा निद्रा हिंसा विषादनम् ॥ शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥ ३० ॥ यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ॥ कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥ दस्यूत्कृष्टा जनपदा वेदाः पाखंडदूषिताः ॥ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥ अव्रता बटवोऽशौचा भिक्षवश्च कुटुंबिनः ॥ तपस्विनो ग्रामवासा न्यासिनोत्यर्थलोलुपाः ॥ ३३ ॥ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥ पणयिष्यंति वै क्षुद्राः किराटाः कूटकारिणः ॥ अनापद्यपि मंस्यंते वार्तां साधुजुगुप्सिताम् ॥ ३५ ॥ पतिं त्यक्ष्यंति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ॥ भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥ पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः ॥ ननांद्रश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥ ३७ ॥ शूद्राः प्रतिग्रहीष्यंति तपोवेषोपजीविनः ॥ धर्मं वक्ष्यंत्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥

यदा प्रभवंत्यतिशयेन वर्तंते ॥ २७ ॥ यदा कर्मादिषु भक्तिः प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि ॥ २८ ॥ काम्यानां कर्मणां विषये यदा प्रीतिस्तत्तदा रजस्तमःप्रधानं द्वापरं जानीहीति पूर्वेणानुषंगः ॥ २९ ॥ विषादनं दुःखम् ॥ ३० ॥ कलिदोषान्प्रपंचयति यस्मादित्यादिना । यस्मात्कलेर्हेतोः क्षुद्रदृशो मंदमतयः । क्षुद्रभाग्या अल्पभाग्याः । महाशना बह्वाहाराः । वित्तहीना अपि कामिनश्च । स्वैरिण्यः पुंश्चल्यः असतीरसत्यः ॥ ३१ ॥ दस्यव उत्कृष्टाः प्रचुरा येषु ते ॥ ३२ ॥ अव्रता विहिताचारशून्याः आशौचाः शौचशून्याश्च बटवो ब्रह्मचारिणो भविष्यंति । कुटुंबिनश्च गृहस्थाः स्वयं भिक्षाटनपरा भविष्यंति न तु भिक्षां दास्यंति । तपस्विनो वनस्था वनं हित्वा ग्रामवासा भविष्यंति । न्यासिनो यतयोऽतीवार्थलोलुपा भविष्यंति ॥ ३३ ॥ पुनरपि स्त्रीणां स्वभावमाह । ह्रस्वकाया इति । कटुकभाषिण्योऽप्रियवादिन्यः । चौर्यं च माया कपटमुरु च साहसं यासां ताः ॥ ३४ ॥ किंच । किराटा वणिजः । पणयिष्यंति क्रयविक्रयादिव्यवहारं प्रवर्तयिष्यंति । किंच सर्वे जना अनापद्यपि जुगुप्सितां निंदितां वार्तां वृत्तिं साधु मंस्यंते ॥ ३५ ॥ सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यंति । पतयश्च विपन्नं रोगादिभिर्व्यापाराक्षमं कौलं कुलपरंपरायातं त्यक्ष्यंति । अपयस्विनीर्दुग्धदोहाः ॥ ३६ ॥ सौरतं सुरतनिमित्तं सौहृदं येषां ते । त एव ननान्दरोऽत्र भार्याभगिन्यः श्यालाः भार्याभ्रातरस्तैः संवादो मन्त्रालोचनं येषां ते ।

परिवर्तंते पर्यायेण वर्तंते यथैकस्यापि ग्रहमहादशायामंतर्दशा वर्तंते तथा कलावपि चत्वारो युगा इति भावः । आत्मनि मनसि ॥ २६ ॥ २७ ॥ हे बुद्धिमन्निति—बुद्ध्वैवैतान्निश्चेयमिति भावः ॥ २८ ॥ २९ ॥ तामसः केवलतमोगुणप्रधानः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अन्यदाह—किञ्चेति । 'किराटो हिंसके वैश्ये' इति निरुक्तिः । कूटं मानकूटं तुलाकूटं लिपिकूटं च कर्तुं शीलं येषां ते तथा "कूटं पूर्द्वारय न्त्रयोः । मायादम्भाद्रिशृंगेषु सीराङ्गेऽनृततुच्छयोः ॥" इति हेमचन्द्रकोशात् ॥ ३५ ॥ ३६ ॥ अत एव सौरतसौहृदत्वादेव । स्त्रैणाः स्त्रीवशाः ॥ ३७ ॥ शूद्रलक्षणं तु "द्विजेतरोऽमंत्रयागी म्लेच्छभिन्नो विवाहवान् ।

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ॥ निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥ वासोन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाः पिशाचसंदर्शा भविष्यंति कलौ प्रजाः ॥ ४० ॥ कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ॥ त्यक्ष्यंति च प्रियान् प्राणान् हनिष्यंति स्वकानपि ॥ ४१ ॥ न रक्षिष्यंति मनुजाः स्थविरौ पितरावपि ॥ पुत्रान्सर्वार्थकुशलान् क्षुद्राः शिश्नोदरंभराः ॥ ४२ ॥ कलौ न राजञ्जगतां परं गुरुं त्रिलोकनाथानतपादपंकजम् ॥ प्रायेण मर्त्या भगवंतमच्युतं यक्ष्यंति पाखंडविभिन्नचेतसः ॥ ४३ ॥

ननन्द इति वा पाठः ॥ ३७ ॥ ३८ ॥ ३९ ॥ पिशाचसंदर्शाः पिशाचसदृशाः ॥ ४० ॥ काकिणिके विंशतिवराटकामात्रेऽप्यर्थे विषयभूते । विगृह्य वैरं कृत्वा ॥ ४१ ॥ ४२ ॥ महांतमनर्थमाह द्वाभ्याम् । कलाविति । त्रिलोकनाथैरानतं नमस्कृतं पादपंकजं यस्य तम् । न यक्ष्यंति न पूजयिष्यंति । पाखंडैर्विभिन्नमन्यथाकृ

द्विजभक्तो भवेच्छूद्रस्तदन्यस्त्वंत्यजादिकः ॥" इति संहितायाम् । तेन त्रिवर्णेतरे सर्वे शूद्रा एव । यत्तु कैश्चित् "न शूद्रा भगवद्भक्ता विप्रा भागवता मताः । चतुर्वर्णेषु ते शूद्रा ये न भक्ता जनार्दने ॥ " इति सर्वपुराणादृष्टं पुराणीयत्वेनोक्तं तस्य चायमर्थः—हरिभक्तेषु शूद्रेष्वपि जातिबुद्ध्या तदवमानो न कार्यः किन्तु ब्राह्मणवत्सत्कारः कार्य इति, तेषां वस्तुतो विप्रत्वे विदुरधर्मव्याधादीनां भारतादौ शूद्रत्वेन व्यपदेशोऽनर्थकः स्यादिति।वस्तुतस्तु श्लोकोऽयं वैष्णवाभासकल्पित एव । तपोवेषेण ब्रह्मचारिवनस्थयतिवेषेणोपजीवनं वृत्तिर्येषां ते तथा । तपःशब्दोऽत्र तपस्विपरतया नेयः, क्वचिद्वृत्तिविषये तद्धितप्रत्ययानां लोपस्वीकारात्।कलौ शूद्रा एव ब्रह्मचारिणः संन्यासिनश्च भविष्यंति ते चान्याधिकारप्रवृत्तत्वान्नरके पतिष्यंति " हीनो भूत्वोत्तमाद्वर्णात्कृत्वा वेषं तपस्विनाम् । आत्मानं पूजयेद्यस्तु स पतेन्नरके ध्रुवम् ॥ " इति संहितोक्तेः । उत्तमासनं व्यासासनम् । वक्ष्यंत्युपदेक्ष्यंति । अधर्मज्ञास्संतः तेऽपि शास्त्रानुगामिनां राज्ञां दंड्या एव " ये शूद्रमुखतः शास्त्रं शृण्वंतीह नराधमाः । तेषां कर्णे त्रपु सिक्त्वा वक्तुर्जिह्वां प्रकर्त्तयेत् ॥ अन्यथा क्ष्मापतिर्याति नरकान्भृशदारुणान् ॥ " इत्याद्युक्तेः । प्रतिग्रहीष्यंति दानं स्वीकारिष्यंति तेपि नारका भविष्यंति " दानं गृह्णाति यः शूद्रो महत्यामपि चापदि । यश्च तस्मै संप्रदद्यात्तावुभौ नारकौ ध्रुवम् ॥ " इति संहितोक्तेः ॥ ३८ ॥ उद्विग्नमनसस्त्रस्तमनसः । दुर्भिक्षमन्नाल्पत्वम्, करो राजभागस्ताभ्यां कर्शिता दुर्बलाः ॥ ३९ ॥ पिशाचो विकृतो भूतविशेषः ॥ ४० ॥ स्वकान् स्वीयान्भ्रातृपुत्रादीन् । अपिना किं परकीयानित्यसूचि ॥ ४१ ॥ क्वचित् ' पुत्रान्भार्यां च कुलजाम् ' इति वा पाठः । क्षुद्राः क्रूराः " क्षुद्रः स्यादधमे क्रूरकृपणाल्पेषु वाच्यवत् " इति मेदिनी ॥ ४२ ॥ हे राजन्निति—त्वं तु धर्मेणैव राजसि त्वद्राज्यतः परमेवेदं भविष्यतीति भावः । प्रायेणेति पाठात् "क्वचित्क्वचिन्महाराज

यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन्वा विवशो गृणन्पुमान् ॥ विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यंति न तं कलौ जनाः ॥ ४४ ॥ पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसंभवान् ॥ सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ ४५ ॥ श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोपि वा ॥ नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥ यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ॥ एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ॥ नात्यंतशुद्धिं लभतेंतरात्मा यथा हृदिस्थे भगवत्यनंते ॥ ४८ ॥ तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ॥ म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥ ४९ ॥ म्रियमाणैरभिध्येयो भगवान्परमेश्वरः ॥ आत्मभावं नयत्यंग सर्वात्मा सर्वसंश्रयः ॥ ५० ॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ॥ कीर्तनादेव कृष्णस्य मुक्तबंधः परं व्रजेत् ॥५१॥ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ॥ द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे तृतीयोऽध्यायः ॥ ३ ॥

तं चेतो येषां ते ॥ ४३ ॥ विवशो गृणन्सन् । विमुक्ताः कर्मरूपा अर्गलाः प्रतिबंधा यस्य सः ॥ ४४ ॥ तदेवं कलिदोषान्प्रपंच्य प्रस्तुतं तन्निस्तारोपायमाह पुंसामिति षड्भिः । द्रव्यदेशात्मभिः संभवो येषां तान् । चित्तस्थश्चित्ते स्फुरितः ॥ ४५ ॥ ४६ ॥ अयमेवोपायो नान्य इति सदृष्टांतमाह । यथेति । धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हंति हरति न तु तोयादि एवं योगिनामपि विष्णुरेव न तु योगादिकमित्यर्थः ॥ ४७ ॥ एतदेव विवृणोति । विद्येति विद्या देवतोपासना ॥ ४८ ॥ ४९ ॥ आत्मभावं स्वस्वरूपम् ॥ ५० ॥ इदानीं कलिं स्तौति द्वाभ्याम् । कलेर्दोषनिधे राजन्निति ॥ ५१ ॥ तत्सर्वं हरिकीर्तनादेव कलौ

द्राविडेषु च भूरिशः । कलौ खलु भविष्यंति नारायणपरायणाः॥" इत्यादि ज्ञेयम् ॥ ४३॥ "कपाटमररं तुल्ये तद्विष्कंभेऽर्गलं न ना" इत्यमरः । ' यन्नामधेयं म्रियमाणः ' इति, "गुणकर्मविडंबनानि, नामानि येऽसुविगमे विवशा गृणंति । तेऽनेकजन्मशमलं सहसैव हित्वा संयांत्यपावृतमृतं तमजं प्रपद्ये ॥" इति तृतीये ब्रह्मस्तुत्युक्तेः ॥ ४४ ॥ द्रव्यमन्नादि, देशः कीकटादिः, आत्मान इंद्रियाणि तैः ॥ ४५ ॥ ४६ ॥ मंदाधिकारिणां क्षिप्रप्रवृत्त्यर्थं सदृष्टांतमाह । दुर्वर्णमित्यनेन रत्नशास्त्रोक्ता अष्टादश दोषा उक्तास्ते च धात्वंतरसंगकृताः संति तान्हंतीत्यर्थः । यद्वा—धातुजं गैरिकसमुद्भूतमित्यर्थः । 'विशेषाद्गैरिकेऽस्थ्नि च' इति मेदिन्यां धातुर्गैरिकमुक्तम् । आत्मा मनः ॥ ४७ ॥ ४८ ॥ यतो विद्यादिभ्यो हरेर्हृदि करणं श्रेष्ठं तस्मादित्यर्थः । अवहितः सावधानः । ततो हृदि केशवकरणात् । परां तद्रूपावाप्तिरूपाम् ॥ ४९ ॥ तामेवाह—आत्मभावमिति । तत्र हेतुः—सर्वमादत्त इति सर्वात्मा । तत्रापि हेतुः—सर्वसंश्रयः सर्वाधारः ॥ ५० ॥ कलिः केवलं दोषाकर एव न किन्तु गुणापादकोप्यौषधोपचितद्रव्यवदित्याह—कलेरिति । दोषनिधेर्दोषसमुद्रस्य गुणमाह—कीर्तनादेवेति, यथैको नृपोऽसंख्यान् दंड्यान्हंति तथैको गुणः सर्वान् दोषानिति भावः ॥ ५१ ॥ तत्सर्वं कृतादियुगप्राप्यम् । कलावेव नान्यस्मिन्युगे । तदुक्तम्—' ध्यायन्कृते ' इति पुराणांतरे ॥ ५२ ॥ इति श्रीमद्भागवतभा

श्रीशुक उवाच ॥ कालस्ते परमाण्वादिर्द्विपरार्द्धावधिर्नृप ॥ कथितो युगमानं च शृणु कल्पलयावपि ॥ १ ॥ चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते ॥ स कल्पो यत्र मनवश्चतुर्दश विशांपते ॥ २ ॥ तदंते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता ॥ त्रयो लोका इमे तत्र कल्पंते प्रलयाय हि ॥ ३ ॥ एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ॥ शेतेऽनंतासनो विश्वमात्मसात्कृत्य चात्मभूः ॥४॥ द्विपरार्द्धे त्वतिक्रांते ब्रह्मणः परमेष्ठिनः ॥ तदा प्रकृतयः सप्त कल्पंते प्रलयाय वै ॥ ५ ॥ एष प्राकृतिको राजन् प्रलयो यत्र लीयते ॥ आंडकोशस्तु संघातो विघात उपसादिते ॥ ६ ॥ पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति ॥ तदा निरन्ने ह्यन्योन्यं भक्षमाणाः क्षुधार्दिताः ॥ ७ ॥

भवति नान्यस्मिन्युगे । उक्तं च । "ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्" इति ॥५२॥ इति श्रीमद्भागवते म० द्वादशस्कन्धे श्री० टीकायां तृतीयोऽध्यायः॥ ३॥ चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः॥ तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ १॥ कलिदोषनिवर्तकं हरिनामसंकीर्तनादिकं स एव च कलौ परमो धर्म इति प्रश्नद्वयस्योत्तरमुक्तम्। यच्चान्यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तदिदानीं तृतीयस्कंधोक्तकालमानानुवादपूर्वकं निरूपयति । काल इति। "स कालः परमाणुर्वै यो भुंक्ते परमाणुताम्" इत्यादिना कालः कथितः। "चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। संख्यातानि सहस्राणि द्विगुणानि शतानि च।" इति युगमानं कथितम् १ ॥ तत्र कल्पमानमाह । चतुर्युगेति । यत्र चतुर्दशमनवः क्रमेण भवंति ॥ २ ॥ प्रलयस्तु चतुर्विधः नैमित्तिकः प्राकृतिक आत्यंतिको नित्यश्चेति । तत्र नैमित्तिकं प्रलयं मानसहितमाह तदंत इति द्वाभ्याम् । तावान् चतुर्युगसहस्रप्रमाणः । सैव ब्राह्मी रात्रिः ॥ ३ ॥ नैमित्तिकत्वं दर्शयति । यत्र यदा विश्वसृक् श्रीनारायणो विश्वमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते । आत्मभूर्ब्रह्मा च तस्मिन् शेते । तयोरभेदविवक्षया वा ब्रह्मण एवानंतासनत्वमुक्तम् । ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्यर्थः ॥ ४ ॥ प्राकृतिकं प्रलयमाह द्वाभ्याम् । द्विपरार्धे तु ब्रह्मण आयुषि । सप्त प्रकृतयो महदहंकारपंचतन्मात्राणि ॥ ५ ॥ संघातो महदादिकार्यभूतः । प्रकृतीनां तत्कार्यब्रह्मांडस्य च प्रलयात्प्राकृतिक इत्यर्थः । विघाते विघातकारणे उपसादिते सति ॥ ६ ॥ तदेवाह । पर्जन्य इत्यादिना बुद्धींद्रियार्थरूपेणेत्यतः प्राक्तनेन ग्रंथेन ॥७॥

वार्थदीपिकाप्रकाशे द्वादशस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ एवकारेण " कलौ नामैव नामैव कलौ नामैव केवलम्" इति स्मृतिराकृष्यते । तत्र नैमित्तिकादिमध्ये ( १ ) नृपेति—कालज्ञानं विना नृपालनं न संभवतीति भावः ॥ १ ॥ यत्र दिने । विशांपते इति—प्रजापालनासक्तत्वात्त्वं कालं नाकलयसीति भावः ॥ २ ॥ तदंते दिनांते । यत्र रात्रौ ॥ ३ ॥ इत्यर्थ इति—अत्र प्रवर्तमानेर्थे ठक् प्रत्ययः ॥ ४ ॥ ५ ॥ हे राजन्निति—धैर्येण मृत्युकालेऽपि तव दीप्तिर्न नष्टेति भावः । विघातकारणेऽकाले उपसादिते प्राप्ते सति ॥ ६ ॥ तदेव विघातकारणमेवाह । तदा वर्षणाभावेन निरन्नेऽन्नाभावे सति ॥ ७ ॥

क्षयं यास्यंति शनकैः कालेनोपद्रुताः प्रजाः ॥ सामुद्रं दैहिकं भौमं रसं सांवतको रविः ॥ ८ ॥ रश्मिभिः पिबते घोरैः सर्वं नैव विमुंचति ॥ ततः संवर्तको वह्निः संकर्षणमुखोत्थितः ॥ ९ ॥ दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥ उपर्यधः समंताच्च शिखाभिर्वह्निसूर्ययोः ॥ १० ॥ दह्यमानं विभात्यंडं दग्धं गोमयपिंडवत्॥ततः प्रचंडपवनो वर्षाणामधिकं शतम्॥११॥परः सांवर्तको वाति धूम्रं खं रजसा वृतम् ॥ ततो मेघकुलान्यंग चित्रवर्णान्यनेकशः ॥ १२ ॥ शतं वर्षाणि वर्षंति नदंति रभसस्वनैः ॥ तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ॥ १३ ॥ तदा भूमेर्गंधगुणं ग्रसंत्याप उदप्लवे ॥ ग्रस्तगंधा तु पृथिवी प्रलयत्वाय कल्पते ॥ १४ ॥ अपां रसमथो तेजस्ता लीयंतेऽथ नीरसाः ॥ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ ॥१५॥लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ स वै विशति खं राजंस्ततश्च नभसो गुणम्॥१६॥शब्दं ग्रसति भूतादिर्नभस्तमनु लीयते॥तैज सश्चेंद्रियाण्यंग देवान्वैकारिको गुणैः ॥ १७ ॥ महान्ग्रसत्यहंकारं गुणाः सत्त्वादयश्च तम् ॥ ग्रसतेऽव्याकृतं राजन् गुणान् कालेन चोदितम् ॥ १८॥

सामुद्रादिकं सर्वं रसं रविः पिबते आकर्षति ॥ ८ ॥ ९ ॥ अनिलवेगोत्थो वायुवेगोद्भूतः । अनिलवेगो वा इति पाठे अनिलेन वेगो यस्य सः । वाः रविणा रश्मिभिः पीतमुदकं च दहतीत्यर्थः । अनिलवेगो वै इति तु पाठः सुगमः । भूविवरान्पातालादीन् शून्यात्रविणा दैहिकरसाकर्षणात्प्राणिरहितान् । शिखाभिर्ज्वालाभिः ॥ १० ॥ किंचिदधिकं वर्षाणां शतम् । सांवर्तकः प्रलयहेतुः परो वायुर्वाति तदा रजसाऽऽवृतं खं धूम्रं भवति ॥ ११ ॥ १२ ॥ रभसस्वनैस्तीव्रगर्जितैः । ब्रह्मांडविवरमध्यगतं विश्वमेकोदकमेकार्णवोदकव्याप्तं भवति॥१३॥उदप्लवे उदकेनाप्लवे सति । प्रलयत्वायाभावाय॥१४॥१५॥१६॥भूतादिस्तामसोऽहंकारः । गुणैर्वृत्तिभिः सह॥१७॥ अव्याकृतं

सांवर्तकः प्रलयकालिकः । रसं रसनीयमार्द्रत्वमिति यावत्,रसं जलमित्यर्थः।यद्यपि 'मेघपुष्पं घनरसः'इत्यमरोक्तेर्न केवलरसशब्दो जलवाची तथाप्येकदेशन्यायेन तथात्स्येवेति ज्ञेयम्।८॥ततो रसशोषानंतरम्॥९॥इत्यर्थ इति–मेवांतर्गतमपि जलं शोषयतीति भावः । सूर्यपक्षे शिखाभी रश्मिभिः ॥१०॥ ततो ब्रह्मांडदाहोत्तरम् । प्रचंडपवनः सशब्दो वायुः । अधिकं किंचिदधिकम् ॥११॥ परो बलवत्तरः । ततो रजःकृताकाशधूम्रत्वानंतरम् ॥ ॥ १२ ॥ अंतरे तिष्ठतीत्यान्तरं ब्रह्मांडविवरस्यांतरं ब्रह्मांडविवरांतरम् । एकमुदकमेव यत्र प्रतीयते नान्यत्तदेकोदकम् ॥ १३ ॥ भूमेर्गंधगुणमापो ग्रसंति भूलयाय तस्यामभिभावयंति । एवमग्रेऽप्यूह्यम् । अन्यगुणस्यान्यत्र लयासंभवात् तन्मात्राणां कारणत्वकल्पने पूर्वं लयासंभवात्तन्मात्रकार्यत्वे भूतानां भूतांतरे लयासंभवाच्च ग्रस्तभेदकगुणाप्रलयत्वाय कल्पते योग्यो भवति ॥ १४ ॥ ता आपः । अनीरसा रसहीनाः संतः । तद्धितं रूपरहितम् ॥ १५ ॥ वायोर्गुणं स्पर्शम् । खमाकाशः । स वायुः ॥ १६ ॥ हे अंग राजन् ॥ १७ ॥ महान् ईक्षणम् । अहंकारं बहुभवनसंकल्पम् । महदहंकारयोर्भगवदीक्षणसंकल्परूपयोस्तज्जन्यत्वे सति तज्जन्यजनको व्यापार इति लक्षणसद्भावेन मायोपहितेश्वरव्यापारत्वेन निमित्तत्वेप्युपादानत्वासंभवात्कालेन स्वोपहितेनेश्वरेण नोदितमव्यक्तं तदुपाधिमायात्मकाज्ञानम् । गुणान्स्वकार्यभूतान् ॥ १८ ॥

न तस्य कालावयवैः परिणामादयो गुणाः ॥ अनाद्यनंतमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥ न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी ॥ न प्राणबुद्धींद्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ २० ॥ न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ॥ संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनंति ॥ २१ ॥ लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ॥ शक्तयः संप्रलीयंते विवशाः कालविद्रुताः ॥ २२ ॥ बुद्धींद्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यंतवदवस्तु यत् ॥ २३ ॥ दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ २४ ॥

प्रधानम् ॥ १८ ॥ तस्य तु लयो नास्तीत्याह । न तस्येति । कालावयवैरहोरात्रादिभिः । गुणा भावविकाराः । परिणामो विपरिणामः । अव्यक्तमस्तित्वविकारशून्यम् । नित्यं सर्वदैकरूपं ह्रासवृद्धिरहितमित्यर्थः । अव्ययमपक्षयशून्यम् । सर्वत्र हेतुः कारणमिति ॥ १९ ॥ किंच । वागादिगोचरस्य सविशेषस्य विकारा भवंतीदं तु न तथेत्याह न यत्रेति द्वाभ्याम् । लोककल्पो लोकरूपः सन्निवेशो रचनाविशेषो नास्ति॥ २०॥ स्वप्नजाग्रत्स्वप्नजागरावस्थायुक्तम् । संसुप्तवदिंद्रियाभावात् । शून्यसादृश्ये हेतुः । अप्रतर्क्यम् । न पुनः शून्यमेवेत्याह तदिति ॥२१॥ उपसंहरति लयं इति । शक्तयः सत्त्वादयः ॥ २२ ॥ आत्यंतिकं लयमाह बुद्धींद्रियेति द्वादशभिः । आत्यंतिकलयो मोक्षः स च ब्रह्मज्ञानेन सर्वप्रपंचलयात्मकः । न च प्रपंचस्यात्मवत्सत्यत्वे लयः संभवतीति ज्ञानरूपाद्ब्रह्मणः पृथग्भूतस्य तस्यासत्त्वमुपपादयति । बुद्धिश्चेंद्रियाणि चार्थाश्चेत्येवं ग्राहककरणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानमेव भाति न पृथक् । तत्र हेतुमाह । दृश्यत्वाव्यतिरेकाभ्यामिति । अतो यदाद्यंतवत्तदवस्तु । अत्रैवं प्रयोगः विमतं सन्न भवति । दृश्यत्वात्कारणाव्यतिरेकादाद्यंतवत्त्वाच्च रज्जुसर्पादिवदिति ॥ २३ ॥ तत्राव्यतिरेकं दृष्टांतेन प्रपंचयति । दीप इति । दीपचक्षूरूपाणां तेजोविशेषाणां

तस्याव्याकृतस्य तदवयवविभागस्य पश्चाद्भावितया तद्धेतुत्वानुपपत्तेः । गुणा धर्माः बोधात्पूर्वमबाधीन्नित्यत्वाव्ययत्वे तस्येति केचित् ॥१९॥अन्यदाह—किञ्चेति । इदमव्यक्तं तु न तथा वागादिगोचरो नेत्यर्थः । गुणानां तद्रूपेण सत्त्वेऽपि साम्ये विभागाभावेनाभावोक्तिः ॥ २० ॥ सुषुप्तं व्यष्टिसुषुप्तिर्नेति ज्ञेयम् । सुषुप्तवत् कार्यादर्शनात् ॥ २१ ॥ संप्रलीयंते साम्येनाक्षुब्धास्तिष्ठंति । शक्तयः पृथिव्यादय इति तीर्थः । लयः । कथित इति शेषः । कालेन विद्रुता अभिभूता अत एव विवशाः ॥ २२ ॥ बुद्धिरूपेणेंद्रियरूपेण विषयरूपेण च तेषां बुद्ध्यादीनामाश्रयमात्मस्वरूपं ज्ञानमेव । तत्रात्मस्वरूपज्ञानत्वे । अतो दृश्यत्वाव्यतिरेकाभ्याम्, अत्र बुद्ध्यादीनामात्मस्वरूपज्ञानत्वे निश्चेतव्ये । एवं वक्ष्यमाणरीत्या । प्रयोगोऽनुमानम् । विमतं विवादास्पदीभूतं बुद्ध्यादि । कारणाव्यतिरेकात् कारणाभिन्नत्वात् । आदिना स्वप्नदृश्यवद्घटादिवदिति गृह्यते ॥ २३ ॥ तत्र द्वयोर्हेत्वोः । अत्राक्षिपति—नन्विति । इत्यर्थ इति—कारणसत्तातः कार्यसत्ता न पृथक्, कार्यसत्तातः कारणसत्ता तु पृथगस्ति, तच्च मृद्घटादौ स्फुटतरमिति भावः । यद्वा—अन्यतमात्सुषुप्तिसमाध्यादौ बुद्ध्यादिबाधेऽपि

१ संसुप्तवदित्यत्र सुषुप्तवदिति पाठाभिप्रायेण ।

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ॥ २५ ॥ यथा जलधरा व्योम्नि भवन्ति न भवंति च ॥ ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥ २६ ॥ सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह ॥ विनार्थेन प्रतीयेरन्पटस्येवांग तंतवः ॥ २७ ॥ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ॥ अन्योन्यापाश्रयात्सर्वमाद्यंतवदवस्तु यत् ॥ २८ ॥

तेजसो यथा न व्यतिरेकस्तथा धीः कर्त्री खानि करणानि मात्रा विषयाः ऋताद्ब्रह्मणः पृथङ् न स्युर्ब्रह्मकार्यत्वात् । नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्याप्यसत्त्वं प्रसज्जेत तत्राह । अन्यतमादिति । कार्यादत्यंतव्यतिरिक्ताद्ब्रह्मणः प्रपंचाद्ब्रह्मणोऽस्ति व्यतिरेकः प्रपंचस्य तु ततो नास्ति व्यतिरेक इत्यर्थः ॥ २४ ॥ यदा तु बुद्धेरसत्त्वं तदा तदवस्थानां सुतरामसत्त्वमित्याशयेनाह । बुद्धेरिति । ननु विश्वतैजसप्राज्ञानामेता अवस्था न बुद्धेरित्याशंक्याह । मायामात्रमिति । इदं विश्वतैजसप्राज्ञरूपम् ॥ ॥२५॥आद्यंतवत्त्वादित्यस्य हेतोरसिद्धिमाशंक्य सावयवत्वेन साधयति । यथेति । अवयवीति । यत्सावयवं तदाद्यंतवद्घटादिवदित्यर्थः । अत उदयाप्ययादाद्यंतवत्त्वाद्विश्वं सन्न भवतीत्यर्थः । यद्वा पृथगेवागमापायित्वाद्विश्वं मिथ्या । ब्रह्म तु तदवधित्वात्सत्यमित्यनेन साध्यते । दृष्टांतस्तु पूर्वोक्त एव । यथा जलधरा व्योम्नीति दृष्टांतस्त्वागमापायि तदवधित्वमात्रे न तु मिथ्यात्वे॥२६॥अन्यतमादृतादिति प्रतिज्ञातं कारणस्य सत्यत्वमुपपादयति । सत्यमिति । अवयवः कारणं प्रोक्तम् "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिभिः । अत्र युक्तिमपि दर्शयति । विनेति । अंग हे राजन् हि यस्मादर्थेनावयविना पृथगेवावयवाः प्रतीयेरन् । यथा पटस्यावयवास्तंतवः पटात्पृथक्प्रतीयंते तद्वदिति ॥ २७ ॥ ननु कार्याभावे कारणत्वं ब्रह्मणः कुतो घटेत । सत्यम् । तदपि नातीव सत्यमित्याह । यदिति । सामान्यं कारणं विशेषः कार्यं तद्रूपेणान्योन्यापाश्रयात्परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः । अतः कारणत्वमवधित्वं व्यापकत्वमित्यादिकमपि यत्परापेक्षत्वादाद्यंतवत्तत्सर्वमवस्त्वित्यर्थः । यद्वा तत्रैव हेत्वंतरमेतत् ।

परिशिष्यमाणत्वाद्यतिरिक्तत्वम् ॥ २४ ॥ अत्राक्षिपति–नन्विति । यद्वा–जागरणं स्वप्नः सुषुप्तिश्च प्रत्यगात्मन्यधिष्ठाने बुद्धेरेव परिणामस्तस्याश्च मायाकार्यत्वादिदं नानात्वं मायामात्रं नानात्वात्स्वप्ननानात्ववत् ॥ २५ ॥ न कदाचिदनीदृशं जगदिति मीमांसकमतेन विश्वस्याद्यंतवत्त्वं नास्तीत्यभिप्रेत्याह–आद्यंतवत्त्वादिति । असिद्धिं स्वरूपासिद्धिम् । इत्यर्थ इति–यथा घटादयः सावयवत्वादाद्यंतवंतस्तथेदमपीति भावः । अतः सावयवत्वात् । इत्यर्थ इति–आद्यंतवद्रज्जुसर्पादेर्यथा सत्त्वं नास्ति तथास्यापीति भावः । ननु विश्वस्य ब्रह्मानन्यत्वे ब्रह्मणो नित्यत्वेन तस्यापि नित्यत्वं स्यादिति चेत्तत्राह–यद्वेति । ब्रह्मणः पृथगिदं विश्वं मिथ्यैव, आगमापायित्वात् । तदवधित्वात् तदाश्रयत्वात् । पूर्वोक्त एव रज्जुसर्पवदित्येव । ननु यथा जलधरा इति दृष्टांतसत्त्वे पूर्वोक्तदृष्टांताश्रयणं किमर्थं कृतं तत्राह–यथा जलधरो व्योम्नीत्यादि ॥ २६ ॥ अत्रावयवसत्यत्वे । उक्तार्थग्रहण उत्साहवृद्धये संबोधयति–हे अंगेति । गुरुप्रीतिवाक्यश्रुतेः स्वयमेवार्थः स्फुरतीति भावः । पटं विना पृथक्प्रतीतेः सत्त्वमेव तंतूनां, तंतून्विना पटस्य पृथगप्रतीतेरसत्त्वमिति भावः ॥ २७ ॥ अत्राक्षिपति–न

विकारः ख्यायमानोपि प्रत्यगात्मानमंतरा ॥ न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥ २९ ॥ न हि सत्यस्य नानात्वमविद्वान्यदि मन्यते ॥ नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥ ३० ॥ यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ॥ एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ ३१ ॥

यदुपलभ्येत स भ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत् । अन्योऽन्यापाश्रयादितीदमपि हेत्वंतरं गुणगुणिविशेषणविशेष्यव्यापकत्वादिरूपेण परस्पराधीनसिद्धित्वात् । तथा तस्वप्नवदिति निगमनम् । अतो यदाद्यंतवत्तत्सर्वमवस्त्विति ॥ २८ ॥ तदेवमनेकैर्हेतुभिः प्रपंचस्यासत्त्वं साधितम् । तत्र शंका । ननु प्रपंचस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किं न स्यादिति तत्राह । विकार इति । ख्यायमानः प्रकाशमानोऽपि विकारः प्रपंचः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति । तं विना निरूप्यः स्याच्चेत्तर्हि सोऽपि चित्समः स्याच्चिद्रूपेणात्मना समः स्वप्रकाशो भवेत् । तथा च सति सोप्यात्मवत्स्यात् । एकरूपः स्यादित्यर्थः ॥ २९ ॥ कुत इत्यत आह । न हीति । ननु सत्यस्याप्यात्मनो जीवब्रह्मरूपं नानात्वमस्त्येव तत्राह । यद्येवं नानात्वं मन्यते तर्ह्यविद्वान् । कथं तर्हि तयोर्भेदव्यवहारः उपाधिकृत इत्याह । नानात्वमिति । तत्र छिद्रयोर्घटाकाशमहाकाशयोरिवेति परिच्छेदापरिच्छेदे दृष्टांतः । ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेत्युपाधिकृतविकारसदसद्भावे । वातयोर्बाह्यशरीरस्थवाय्वोरिवेति क्रियाभेदे ॥ ३० ॥ ब्रह्मण एव प्रपंचव्यवहारालंबनत्वं दृष्टांतेन स्पष्टयति । यथेति । क्रियाभिस्तत्तद्रचनाभेदैर्बहुधा कटककुंडलादिरूपेण । लौकिकवैदिकैर्वचोभिः । जनैरहंकारोपहितैः ॥ ३१ ॥

न्विति । इत्यर्थ इति—अन्योन्यसिद्धावन्योन्यापेक्षणमन्योन्याश्रयः, स च दोष एव । तथाहि—कारणत्वं हि कार्यत्वनिरूप्यं, कस्य कारणमित्यनुयोगविषयत्वात्, एवं कार्यत्वमपि कारणत्वनिरूप्यं, कस्य कार्यमित्यनुयोगगोचरत्वादतोऽनयोः पौर्वापर्यनिर्णयाभावाद्दोषत्वमेवेति भावः । उक्तमर्थमन्यत्राप्यतिदिशति—अतः कारणत्वमित्यादि । इत्यर्थ इति—परस्य कार्यावधेयव्याप्यस्यापेक्षावत्त्वात्कारणत्वादीनामपि पूर्वोक्तदोषवत्त्वमिति भावः । आदिना प्रकाशकत्वादिग्रहः । अस्तु कार्यत्वादिभावोपि मिथ्याकारणत्वादिभावस्य मिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वं प्रसज्येत तत्राह—यद्वेति । तत्रैव विश्वमिथ्यात्व एव । तथाभूतस्वप्नवत् निद्रानिरूपितस्वप्नवत् । यथा स्वप्ननिरूप्या निद्रा, निद्रानिरूप्यः स्वप्नः, उभावेतावसत्यौ तथेदमपीति निगमनं दृष्टांतः । उपसंहरति—अत इति,—उक्तहेतुसमूहात् ॥ २८ ॥ तत्र प्रपंचासत्यत्वे । शंकाऽऽक्षेपः । तामाह—नन्विति । ख्यायत इति ख्यायमानः, ख्यातेः कर्मणि शानच् । इत्यर्थ इति—न ह्यचितः प्रकाशश्चितं विहाय कदापि भवत्यतश्चिदेव तत्तदाकारेण प्रकाशतेऽचितः पृथक्सत्तानंगीकारात् "सर्वं खल्विदं ब्रह्म" "नेह नानास्ति किंचन" इत्यादिश्रुतेरिति भावः ॥ २९ ॥ अत्र हेतुमाशंक्याह—कुत इति । अत्राक्षिपति—नन्विति । तयोर्जीवब्रह्मणोः । तत्र छिद्रादिदृष्टांतेषु । परिच्छेदापरिच्छेदेऽल्पानल्पत्वे ॥ ३० ॥ क्रियाभिस्तत्तद्रचनाभेदैः । भगवान् बहुधाका

यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ॥ एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबंधनः ॥ ३२ ॥ घनो यदाऽर्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा ॥ यदा ह्यहंकार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥३३॥ यदैवमेतेन विवेकहेतिना मायामयाहंकरणात्मबंधनम् ॥ छित्त्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यंतिकमंग संप्लवम् ॥ ३४ ॥ नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप ॥ उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥ ३५ ॥ कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ॥ परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥ ३६ ॥ अनाद्यंतवताऽनेन कालेनेश्वरमूर्तिना ॥ अवस्था नैव दृश्यंते वियति ज्योतिषामिव ॥ ३७ ॥

नन्वहंकारस्य कथं ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वम् । तस्य स्वकारणभूतब्रह्मावरकत्वासंभवादावरणे वा स्वस्यापि प्रकाशासंभवादित्याशंक्य सदृष्टांतमाह । यथेति । अर्करश्मय एव मेघरूपेण परिणता वर्षंति । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इत्यादिवचनात्तस्मादर्कप्रभवः । अर्केणैव दर्शितः प्रकाशितश्च । तमः स्वरूपभूतार्कदर्शनप्रतिबंधको भवति अहमहंकारो ब्रह्मगुणो ब्रह्मकार्यभूतस्तदीक्षितस्तेनैव प्रकाशितश्चात्मनो जीवस्यात्मबंधनो ब्रह्मस्वरूपदर्शनप्रतिबंधको भवति ॥ ३२ ॥ अत एवाहंकारनाशे स्वरूपदर्शनं भवतीति तेनैव दृष्टांतेनाह । घन इति । आत्मन उपाधिः । जिज्ञासया विचारेण । तर्हि तदाऽनुस्मरेत् । ब्रह्माहमिति पश्यतीत्यर्थः ॥ ३३ ॥ सोऽयमात्यंतिकः प्रलय इत्युपसंहरति । यदैवमिति । विवेकहेतिना ज्ञानशस्त्रेण । अहंकरणमेवात्मबंधनम् । अच्युतं परिपूर्णमात्मानमनुभवतीति तथा ॥ ३४ ॥ नित्यप्रलयमाह । नित्यदेति ॥ ३५ ॥ कुत इत्यत आह । कालेति । परिणामिनां नदीप्रवाहप्रदीपज्वालादीनां या उच्चनीचावस्थास्ताः कालरूपस्रोतसो वेगेनाशु ह्रियमाणस्य देहादेर्दृश्यमानास्ता एव नित्यदा जन्मप्रलयहेतवो भवंति । देहः प्रतिक्षणं प्रध्वंसी प्रतिक्षणमवस्थाभेदास्पदत्वात्प्रदीपादिवदित्यनुमानम् ॥ ३६ ॥ ननु यदि प्रतिक्षणमवस्था भवंति तर्हि किं न दृश्यंतेऽतो हेतुरसिद्ध इत्याशंक्याह । अनाद्यंतवता कालेन जायमाना अवस्था नैव लक्ष्यंते । आकाशे गच्छतां

शादिरूपेण ब्रह्मादिरूपेण च व्याख्यायते प्रकाश्यते—एष ब्रह्मा एष शिव इत्यादिना वैदिकैश्च शास्त्राधिया लौकिकैश्च शास्त्रज्ञानाभावात् घटोऽयं पटोयमित्यादिना स एव प्रकाश्यत इति भावः ॥ ३१ ॥ अत्राक्षिपति—नन्विति । ब्रह्मस्वरूपदर्शनप्रतिबंधकः स्वाध्यासेन बंधभ्रमापादको भवति ॥ ३२ ॥ यतोऽहंकार एव प्रतिबंधकोस्ति अतो हेतोरेव । इत्यर्थ इति—प्रतिबंधकनाशे स्वत एव स्वरूपज्ञानं भवतीति भावः ॥ ३३ ॥ जिज्ञासयाहंकारबाधप्रकारमाह—यदैवं गुरोर्महावाक्यश्रवणोत्तरं श्रूयमाणेशजीवाभेदस्य विरोधादनुपपत्तेरेतेन मायाऽविद्याद्युपाधिविवेकरूपहेतिना भागत्यागलक्षणतद्बाधकरूपखड्गेन तयोर्मायाहंकरणोपाधिरूपमात्मबंधनं छित्त्वाऽच्युतो हरिरेवात्मा मत्स्वरूपमित्यनुभवोऽपरोक्षबोधो यस्य तथाभूतः शुद्धनिरुपहितस्वरूपेणावतिष्ठते, तमात्यंतिकमंगसंप्लवं स्थूलसूक्ष्मकारणांगत्रयप्रलयमाहुः । अंगेति संबोधनम् अहकरणमात्मावरकमहंकारम् । अंगेति संबुद्धिः पूर्ववदिति विश्व० ॥ ३४ ॥ हे परन्तपेति—शत्रुतापकस्य तवाज्ञानतापकताप्यस्त्येवेति भावः ॥ ३५ ॥ ३६ ॥ अत्राक्षिपति—नन्विति । अतो दर्शनाभावात् । हेतुः प्रतिक्षणमवस्थाभेदास्पदत्वा

नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ॥ आत्यंतिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥ एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः ॥ लीलाकथास्ते कथिताः समासतः कात्स्न्र्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥ संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमंतरेण पुंसां भवेद्विविधदुःखदवार्दितस्य ॥ ४० ॥ पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ॥ नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥ स वै मह्यं महाराज भगवान्बादरायणः ॥ इमां भागवतीं प्रीतः संहितां वेदसंमिताम् ॥४२॥ एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये ॥ दीर्घसत्रे कुरुश्रेष्ठ संपृष्टः शौनकादिभिः ॥४३ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

ज्योतिषां चंद्रीदानां गमनावस्थाविशेषा यथा नैव लक्ष्यंते तद्वत् । अतो यथा तेषां प्रदेशांतरप्राप्त्या प्रतिक्षणं गत्यवस्थाः कल्प्यंते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन मध्यवर्तिन्योऽवस्थाः कल्प्यंत इति न हेतुरसिद्ध इत्यर्थः ॥ ३७ ॥उपसंहरति । नित्य इति ॥ ३८ ॥ पुराणार्थमुपसंहरति । एता इति । लीलाविषयाः कथा अजो ब्रह्माऽपि कात्स्न्र्येनाभिधातुं नेशः ॥ ३९ ॥ ननु यदि साकल्येनाभिधातुं न शक्यंते तर्हि किं तदभिधानेन तत्राह । संसारेति । विविधं दुःखमेव दवो दावानलस्तेनार्दितस्य पीडितस्यात उत्तितीर्षोः पुंसो भगवतो या लीलास्तासां कथास्तासां रसस्तन्निषेवणमंतरेणान्यः प्लवस्तरणसाधनं न भवेत् । उपायांतरासंभवात्तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥ ४० ॥ श्रोतुरादरदार्ढ्याय संप्रदायप्रवृत्तिमाह पुराणसंहितामिति त्रिभिः ॥४१॥ स वै बादरायणः प्रीतः सन्मह्यमिमां संहितां प्राहेति पूर्वेणान्वयः ॥४२॥ असौ सूत इति पुरतः स्थितमंगुल्या निर्दिश्याह । नैमिषालये नैमिषारण्यस्थाने ॥ ४३ ॥ ॥ इति श्रीमद्भागवते म० द्वादशस्कंधे श्री० टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

दिति हेतुः । अतो दर्शनाभावात् । तेषां ज्योतिषाम् । इत्यर्थ इति—हेतुः पक्षेऽस्त्येवेति भावः ॥ ३७ ॥ कालस्य च गतिं ब्रूहीति प्रश्नस्योत्तरमुपसंहरन्नाह—कालस्येति ॥ ३८ ॥ हे कुरुश्रेष्ठेति—अंतावस्थायां श्रीभागवतश्रवणात्त्वं सर्वेभ्यः स्वकुलमुख्येभ्यः श्रेष्ठोसीति भावः । किञ्च—भगवल्लीला अस्मदादिलीलावद्रागपूर्विका न किन्तु योगमायैव । तथा च श्रुतिः—“ यदचरस्तन्वा वावृधानो बलानींद्र प्रब्रुवाणो जनेषु मायेत्सा ते या नियुद्धान्याहुर्नाद्यशत्रुं ननु पुरा विवित्से ” इति । अस्या अर्थः—हे इंद्र परमेश्वर यत् तन्वा मत्स्यकूर्मादिशरीरेणाचरः चरणं कृतवानसि वावृधानः ववृधे दैत्यादीन्हत्वा महत्त्वं च प्राप्तवानसि लोके बलानि भूमेरुद्धरणादीनि जनेषु प्रब्रुवाणः ख्यापितवानभूः सा सर्वा ते तव मायेत् मायैव सा का या नियुद्धान्याहुः देवासुरसंग्रामाः सर्वे मायैव । कुत एतत्—यतस्त्वं ननु निश्चितम् अद्य वर्तमानकाले पुरा वा शत्रुं नाशनीयं न विवित्से लभसे, सर्वस्यांतरात्मकत्वात्कालत्रयेपि तव शत्रुर्नास्तीति तस्मात्स्वामानुवादवदेतत्पुराणं भगवल्लीलामनुवदतीति मंत्रार्थः ॥ ३९ ॥ पुनराक्षिपति—नन्विति । इत्यर्थ इति—यथा महदनेकान्नराशितो यत्किञ्चित्तदन्नैकदेशाशनेन क्षुन्निवृत्तिर्भवति तथा लीलाकथैकदेशोऽपि संसारदुःखनिवर्तकोऽतस्सोऽवश्यं सेव्य इति भावः।विश्वनाथस्तु—यत्प्रथमस्कन्धपृष्टं‘म्रियमाणस्य किं कृत्यं’ तदुत्तरमाह—संसारेति । दुःसहक्षुधायां भोजनमंतरेण नोपशम इतिवन्नान्ये, ज्ञानादिकः प्लव उत्तरणसाधनं दुःसहक्षुधायाः स्रक्चंदनादिरिव, तेनैतदुत्तराध्याये मयाप्युपदेष्टव्यः। महारहस्यभक्तिरत्नच्छादनार्थं यज्ज्ञानं तत्त्वयाऽप्यदेयत्वेन न प्रत्येतव्यमिति भावः । रसशब्देन लीलाकथानाममृतत्वमारोपितम् । अत एव विविधदुःखमहारोगाणां दवमहाज्वालास्तत्पीडितस्य सद्य एवैकममृतं विना नान्यदौषधं प्रयोक्तव्यमिति भावः॥४०॥अन्वयः सर्वदैकरसः नारायण ऋषिः सर्वज्ञः ब्रह्मद्वारा पुरा नारदाय प्राह।स नारदः॥४१॥स कृष्णद्वैपायनः। हेमहाराजेति—महेन भगवत्प्राप्त्युत्सवेनाधुना समंतात्त्वं राजसीति भावः । तत्त्वज्ञापकत्वेन सर्ववेदतुल्याम्॥४२॥हे कुरुश्रेष्ठेति संबुद्धिर्व्याख्यातचरी॥४३॥इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशकंधे चतुर्थोऽध्यायः॥४॥

श्रीशुक उवाच ॥ अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान्हरिः ॥ यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ १ ॥

पंचमे तु समासेन परब्रह्मोपदेशतः ॥ राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ १ ॥ एतत्पुराणं शृण्वन्नभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति । अत्रेति । अयं भावः । जगतः कर्ता ब्रह्माऽपि यस्य प्रसादजः । प्रसादोऽत्र रजोवृत्तिर्हर्षः । ततो जातत्वात्परतंत्रः । सर्वसंहर्ता रुद्रश्च यस्य क्रोधसंभवो न तु स्वतंत्रः । स विश्वस्य

समासेन संक्षेपेण ( १ ) । अत्र ग्रन्थे । अत्र तात्पर्यं स्वामिचरणा आहुः—अयं भाव इत्यादिना ॥ [1]* ॥ शास्त्रार्थमुपसंहृत्य श्रीशुकः किंचिदात्मनैव परामर्श—अहो असाध्वनुष्ठितं यन्महारहस्यमसमाधिकं स्वहृदय संपुटात्समुद्धाट्य सर्वलोकदृग्गोचरीकृतम् । यः खलु मत्प्रभुणा ‘ राजविद्या राजगुह्यम्’ इत्यनेन विद्यानां राजेति, गुह्यानां राजेत्युक्तः, पुनश्च ‘ सर्वगुह्यतमं भूयः शृणु मे ’ इत्यनेन गुह्यतमशब्देनोक्तः, स खलु भक्ति योगो मया परीक्षिति कृपावशतया प्रायः प्रकटीकृत्यैवोक्तः । तथाहि—“ अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ ” इत्यादिना “ मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ” इत्यत्र “ य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् । न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥ ” इत्यादिना चान्वयव्यतिरेकाभ्यां भक्तिरेव सर्वफलसाधनत्वेनोपपादिता । स्वर्गादिसाधनानि कर्माणि दूरे ताव दासताम्, मोक्षसाधनस्यातिप्रसिद्धस्यापि ज्ञानस्य मोक्षकारणत्वं परास्तीकृतमेव । “ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ” इति, चतुर्थाश्रमिणो ज्ञानिनोऽपि ‘ स्थानाद्भ्रष्टाः पतन्त्यधः ’ इति, “ आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुष्मदंघ्रयः” इत्याद्युक्तेर्ज्ञानासत्त्वेऽपि भक्त्या विना मोक्षासिद्धेः । “ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । सर्वं मद्भक्तियोगेन पुरुषो लभतेंजसा ॥” इति ज्ञानव्य तिरेकेपि भक्त्यैव मोक्षसिद्धेरुक्तत्वात् । मोक्षं प्रति ज्ञानं नैवान्वयव्यतिरेकीति तदपि ज्ञानान्मोक्ष इति या प्रसिद्धिस्तत्र ज्ञानगता गुणीभूता भक्तिरेव मोक्षं जनयति, ज्ञानस्य तु नाममात्रेण कारणता ‘ भक्त्याहमेकया ग्राह्यः ’ इति, ‘ न तपो नात्ममीमांसा ’ इति, “ किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि । श्रेयोभिरितरैश्चैव न यत्रात्मप्रदो हरिः ॥ ” इत्यादिवाक्यैर्ब्रह्मानुभवं प्रति ज्ञानस्य सहकारितापि वस्तुतो न प्रतिपादिता, भक्तेरेवो पक्रमोपसंहाराभ्यासेषु प्रपंचितम्, तदपि यदंतरांतरा योगज्ञानादिकमुपन्यस्तं तत्खलु भक्तेरुत्कर्षं तत्तन्मतानि च भक्तान्प्रति ज्ञापयितुमेवेति । किञ्च—“ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ” इति, “ अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम्” इति, “ यन्नाम सकृच्छ्रवणात्पुष्कसोपि विमुच्यते ” इत्यादिभ्यः । किञ्च—‘ न मात्रयापि भक्त्या मोक्षः ’ इति, तथा—“ तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीह । पश्यामि नान्यच्छरणं तवांघ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ॥ ” इत्युद्धववाक्येन, ‘ संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवः ’ इत्युपसंहारे मद्वाक्ये न च तां विना तु नान्येनोपायेन संसारान्मोक्ष इत्यपि निर्धारितम् । किञ्च—भक्त्या तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भवदीयत्वेनैव परिसमाप्तसर्वार्था इति, “ मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ” इति, ‘न परिलषन्ति केचिदपवर्गमपि’ इति, ‘सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्’ इति, “स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः” इत्यादिवाक्येभ्यश्चतुर्थं पुरुषार्थमपि तिरस्कृत्य भक्तेरेव पुरुषार्थशिरोमणित्वं मया स्थापितम् । किञ्च—मुन्यन्तरवाक्यस्य प्रामाण्यमापेक्षिकमेव, मद्वाक्यस्य तु प्रामाण्यमात्यन्तिकमेवेति सर्वत्र वैकुण्ठेऽपि प्रसिद्धिर्भूयसी । “ परोक्षवादा ऋषयः परोक्षं च मम प्रियम् ” इति भगवदुक्तेर्महारहस्योद्धाटनपटिष्ठो भूत्वा भगवदप्रियं करोऽप्यभूवम् । तदधुना किं करिष्ये पुराणार्थश्च समाप्तीकृत एव, भवत्वधुनापि भक्तेर्महामहिमानं संवरीतुं यतिष्ये, यथा कश्चिन्महारत्नमतिगोप्यमपि रभसवशेन सर्वलोकान्प्रदर्श्यापि पुनः किञ्चित्परामृश्य तदलक्षितं संपुटितं कृत्वा महाकोशाभ्यन्तरे संस्थाप्य रत्नान्तरं बहिः प्रकाश्यानेनैवास्माकं सर्वार्थसिद्धिरिति ब्रूते, तथैव राजानमहं ज्ञानमुपदिशामि यथा गमनसमये तु शुकः परीक्षिते ज्ञानमेवोपदिष्टवानिति भगवन्मायाप्रभावाज्ज्ञानमेवोत्कृष्टं, भक्तिस्तु तत्साधनमिति मंस्यन्ते । किञ्च—भक्तिसिद्धाञ्जनान्प्रति प्रादुर्भूय भगवांस्तान्परीक्षमाणो मोक्षं गृहाण यथा ब्रूते, तथैवानेन ज्ञानोपदेशेनास्य मच्छिष्यस्य परीक्षितो भक्तिमद्व्युत्पत्तिञ्च परीक्षिष्ये । परीक्षा चेयं सर्वज्ञेनापि

१ एतदध्यायसमाप्तिपर्यंतमेत * चिह्नतोऽग्रे विश्वनाथाद्यनुसृतं व्याख्यानं बोध्यम् ।

त्वं तु राजन्मरिष्येति पशुबुद्धिमिमां जहि ॥ न जातः प्रागभूतोऽद्य देहवत्त्वं न नंक्ष्यसि ॥ २ ॥

त्मा नियंता भगवानत्रानुवर्ण्यते । अत एवंभूतं भगवंतं शृण्वतः कुतोऽन्यस्माद्भयशंकेति ॥ १ ॥ त्वं पुनः कृतार्थ एवेत्यनुस्मारयति । त्वं त्विति । पशुबुद्धिमविवेकम् । यस्मान्न नंक्ष्यसि । कुत इत्यत आह । नं जात इति । यथा देहः प्रागभूत एवाद्य जातो नंक्ष्यति । न चैवं त्वं पूर्वं नाभूर्न चाद्य जातोऽस्यतो न नंक्ष्यसि ॥ २ ॥

जगत्यस्मिन्परीक्षितो भक्तिनिष्ठाज्ञापनार्था ज्ञेया । किञ्च–भक्तिज्ञानयोः फलमंततो मुक्तिरेव केवलमित्यनभिज्ञव्याख्यानं नैव मदभिप्रायसंबद्धं ज्ञेयम्, यतः " राजन् पतिर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किंकरो वः । अस्त्येवमंग भगवान्भजतां मुकुंदो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ॥ " इत्युक्तवता मया मुक्तेः सकाशादपि भक्तेरुत्कृष्टफलत्वं प्रतिपादितत्वात् । न चोपदेष्टव्येनानेन ज्ञानेन परीक्षितो निर्वाणमुक्तिप्राप्तिरेवेति ज्ञेयम्, " स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः । ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् ॥ " इति मदभिप्रायाभिज्ञेनानेन मच्छिष्येण सूतेनाग्रे वक्ष्यमाणत्वात् । ' राजन्पतिर्गुरुरलम् ' इत्यत्र भजद्भ्यस्तु भक्तियोगं ददाति इति परीक्षितः प्रेमभक्तिप्राप्तिरेव व्यंजिता, न चोपदिश्यमानेनानेनैव देहादिव्यतिरिक्तात्मज्ञानेन ब्रह्मानुभवः सिध्येत्, किन्त्वस्यापि ज्ञानस्य भक्त्या निर्जयेनैव यदुक्तं भगवता– " द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः । श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्ये सर्व एव हि ॥ सर्वे गुणमया भावाः पुरुषा व्यक्त्यधिष्ठिताः । दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥ एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः । येनेमा निर्जिताः सौम्य गुणा जीवेन चित्तजाः ॥ भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ।" इति । किञ्च–भगवद्भक्तस्य मोक्षकामत्वेऽपि नास्ति ज्ञानेन प्रयोजनम् । यदुक्तं स्वयं भगवता–" ज्ञाने कर्मणि योगे च वार्तायां दंडधारणे । यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥ " इति । तस्मादनेन सर्वान्ते ज्ञानोपदेशेनास्य शास्त्रस्य स्पष्टतयैव मोहिनीसाधर्म्यं प्रतिपादयिष्ये । यथा ह्यसुराः प्रेमसुधया वंचिता एव भवेयुरिति । अपि च–ज्ञानोपदेशात्प्रागेकं वाक्यं व्यंजनया वृत्त्या भक्तान् प्रीणयितुं भक्तिरसम्रक्षितमेव करिष्ये, तदनंतरं ज्ञानोपदेशवाक्यान्यपि यानि भक्तिप्रतिकूलानि वक्ष्ये तान्यप्यन्तर्भूतभक्त्यनुकूलार्थान्येव करिष्य इत्यादिकं विचार्याह–अत्रेति । अत्र समाप्तीकृतेऽस्मिन्पुराणशास्त्र इत्यर्थः । यस्य हरेः प्रसादजो ब्रह्मेति–प्रसादस्य सत्त्वगुणत्वाद्ब्रह्मणस्तु रजःसंभवत्वादेतन्न संगच्छते, तथा रुद्रः क्रोधसमुद्भव इति भगवतो निर्गुणत्वात्स्वरूपेण तामसः क्रोधोऽपि न संभवेद्यदुद्भवो रुद्रः स्यात्तस्माद्वाक्यमिदमतिशयोक्त्याऽर्थान्तरतात्पर्यकं ज्ञेयम् । तच्चैवम्–निर्गुणस्य भगवतः स्वभक्तसेविनि जने प्रसादः स्वभक्तद्रोहिणि क्रोधश्च दृष्टस्तौ च भक्तवत्सलस्य शुद्धसत्त्वस्वरूपावेवेत्यत एवं व्याख्येयम्–यस्य प्रसादजो यस्य प्रसादाख्यो भाग्यविशेषो ब्रह्मैवोक्तसमस्तसाध्यसाधनोत्पत्तिहेतुरतस्तदर्थमेव भक्तैर्यतनीयं, तथैवोक्तसाध्यसाधनविनाशहेतुर्भगवत्कोप एवेत्यतस्तदनुद्भव एव यतनीयमित्येतावत्पुराणतात्पर्यमवधयेमिति भावः । ननु यदि श्रीशुकदेवेन भागवतपुराणमिदमत्रैव समाप्तीकृतं कथं तर्हि प्रथमस्कंधस्यावशिष्टद्वादशस्य च श्रीभागवतत्वमुच्यते, यज्ञस्य प्रागुत्तरक्रिययोरपि यागत्वमेव, नाटकशास्त्रस्य यथा प्राक्पश्चाद्भूतयोः प्रस्तावनाशीर्वादयोरपि नाटकत्वमेव तथैव प्रथमद्वादशार्द्धयोरपि भागवतत्वम्, यथा च–" गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥ " इत्यष्टादशाध्यायाः श्रीगीतायाः सर्वस्या भगवत्प्रोक्तत्वाभावेऽपि भगवत्प्रोक्तत्वमुच्यते, तथैव सप्रथमद्वादशस्य श्रीभागवतत्वं श्रीशुकदेवप्रोक्तत्वाभावेपि श्रीशुकप्रोक्तत्वञ्चेति समाधिः ॥ १ ॥ मरिष्य इति छेदः, संधिरार्षः । हे राजन्निति–मद्दत्तज्ञानेन राजस्वेति भावः ॥ * ॥ अथ ज्ञानोपदेशः–त्वं त्विति । तुर्भिन्नोपक्रमे । मरिष्येतीति सन्धिरार्षः । पशूनामिव बुद्धिं जहि विवेकेन नाशयेति । "तमोपयातं प्रतियन्तु विप्रा गंगा च देवी धृतचित्तमीशे ॥ द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः॥"इति भागवतश्रवणात्प्रागेव प्रतिज्ञातवतस्तस्य पशुबुद्धेः प्रसक्तिरेव नास्तीत्यतस्तन्निवर्तको ज्ञानोपदेशो न राजानं प्रति संभवेत्किंतु ये पशुबुद्धयस्तानेव प्रति, तदपि राजन्निति संबोधनं तु तमेव लक्ष्यीकृत्यान्यविषयकस्याप्युपदेशस्य वक्तुमौचित्यात्तस्यैव तच्छिष्यत्वात् यथा सर्वविषयकोप्युपदेशः श्रीगीतायामर्जुनं लक्ष्यीकृत्यैवोक्तः।विवेकमेवाह–न जात इति । यथा देहः प्रागभूत एवेदानीं जातो

न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ॥ बीजांकुरवद्देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ३ ॥ स्वप्ने यथा शिरश्छेदं पंचत्वाद्यात्मनः स्वयम् ॥ यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥४॥ घटे भिन्ने यथाऽऽकाश आकाशः स्याद्यथा पुरा ॥ एवं देहे मृते जीवो ब्रह्म संपद्यते पुनः ॥५॥

ननु बीजादंकुरवत्स्वस्मात्पुत्ररूपेणापि स्वयमेव भवति । यथाऽऽह श्रुतिः । "अंगादंगात्संभवसि हृदयादभिजायसे ॥ आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्" इति ततः पुनरंकुराद्बीजमिव पौत्रादिरूपेणापि स्वयमेव भवति । " पिता पुत्रेण पितृमान्योनियोनौ " इति श्रुतेः । अतस्तेषु नश्यत्सु कथं न नंक्ष्यामीति चेत्तत्राह । न भविष्यसीति । भूत्वा पुत्रपौत्रादिरूपवान्बीजांकुरवन्न भविष्यसि यस्माद्देहादेर्व्यतिरिक्तस्त्वं यथाऽनलः काष्ठात् । देहाद्देहो जायते नात्मेति भावः ॥ ३ ॥ जन्मादीनां देहधर्मत्वं दृष्टांतेन प्रपंचयति । स्वप्ने यथाऽऽत्मनः शिरश्छेदं स्वयं पश्यति एवं जागरणेऽपि । यस्माद्देहस्य पंचत्वादिकं पश्यति ततस्तद्रूदेवात्मन इदं भ्रममात्रम् । वस्तुतश्चात्माऽजोऽमरश्चेत्यर्थः । तदुक्तम् । " आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षणः " इत्यादि ॥ ४ ॥ यस्माद्देहोपाधिकोऽयमात्मनो जन्मादिसंसारभ्रमस्तस्मादुपाधिनिवृत्तौ मुच्यत इति सदृष्टांतमाह । घट इति । यथा पुरा घटोपाधेः पूर्वमिव पुनर्घटे भिन्ने तदंतवर्त्येवकाश आकाश एव स्याद्यथा । एवं देहे मृते तत्त्वज्ञानेन

नंक्ष्यति, न तथा त्वं जातः नापि प्रागभूतो नाप्यद्य नंक्ष्यसि, त्वं जीवात्मा जडाद्युपाधेः पृथगेवासीति नायं भक्तिप्रतिकूलोर्थः ॥ २ ॥ अत्राक्षिपति—नन्विति । अंगादंगात्प्रत्येकं भिन्नाद्भिन्नादंगाद्भिन्नंभिन्नमंगं भवतीत्यभिप्रायः । स त्वं शरदः वर्षाणां शतं जीवेत्यर्थः । ततः पुत्रात् । योनियोनौ पौत्रप्रपौत्रादिजन्मनि पिता तत्तत्पुत्रेण पितृमान् पितृपंक्तिभाग्भवतीत्यर्थः । यतः पुत्रादयोऽपि तद्रूपा एवातो हेतोः । तेषु पुत्रादिषु । इति भाव इति—" अजो नित्यः शाश्वतोऽयं पुराणः " इत्यादिश्रुतेरित्याशयः ॥ * ॥ ० ॥ ३ ॥ तद्वदेव स्वप्नवदेव । आत्मन इदं पंचत्वादि । इत्यर्थ इति—यज्जन्यं तद्विनाशीति व्याप्तेर्देहस्यैव जन्यत्वान्मृत्युजन्मादि, आत्मनस्त्वजन्यत्वात्तन्नेति भावः । तद्देहस्य मरणादि । उक्तम् एकादशस्कन्धे । आत्मन इति श्लोकस्तु व्याख्यातचर एव ॥ * ॥ जन्माद्यवस्थावतो देहात्मनः पार्थक्यं दृष्टान्तेनाह—स्वप्न इति । न हि स्वशिरश्छेदं स्वयं पश्यति, अत आत्मा ततः पृथगेव तद्द्रष्टा, तथैव जागरेपि तस्मात्पृथग्भूत एवात्मनो देहस्य पंचत्वादि पश्यति, अतो हेतोरात्माऽजोऽमरो जन्ममृत्युहीन इति ॥ ४ ॥ यथा पुरा तन्नाशात्पूर्वमप्याकाश एव, एवं जीवो देहे मृते निरुपाधिर्यथा पुनर्ब्रह्म संपद्यते, तथा पुरापि " ब्रह्मैव सन्ब्रह्माप्येति " इति श्रुतेः ॥ * ॥ तदप्यात्मनो लिंगशरीराध्यासो दुर्जरो यः सोऽयं ज्ञाने सति निवर्तते, इहैक्यात्मवादिनां दृष्टान्तमाह—घट इति । भिन्ने विदीर्णे । यथा पुरेति—घटोत्पत्तेः पूर्वं यथा महानाकाशस्तथा घटे भग्नेपीत्यर्थः । एवं देहे मृते तत्त्वज्ञानेन लीने सति । अप्रकटार्थमाह—यथेति । ननु देहात्पृथग्भूतो यथा जीवात्मा तथा परमात्मापि, तावुभावपि देहावृतौ दृश्येते, लिङ्गे भग्ने सत्युभावपि मुक्तौ स्यातामिति कथं नोच्यते । अत्र परमात्मन आवरणं कालत्रयेऽपि नास्तीति सदृष्टान्तमाह—घट इति, यथा पुरेति । घटे वर्तमानेऽपि आकाशः आकाश एवानावृतस्तथा घटे भग्नेपीत्यर्थः । आकाशस्य घटान्तर्बहिर्मध्येपि वर्तमानत्वादाकाशं घटः कथमावृणोत्विति भावः । एवं देहेऽमृते वर्तमानेपि अजीवो जीवभिन्नः परमात्मा ब्रह्म सर्वव्यापकः सन्नेव संपद्यते

मनः सृजति वै देहान्गुणान्कर्माणि चात्मनः ॥ तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥ ६ ॥ स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ॥
ततो दीपस्य दीपत्वमेवं देहकृतो भवः ॥ रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥ ७ ॥ न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ॥
आकाश इव चाधारो ध्रुवोऽनंतोपमस्ततः ॥ ८ ॥ एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ॥ बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिंतया ॥ ९ ॥

लीने सति ॥ ५ ॥ ज्ञानेन लयं भावयितुं मायाकृतमात्मनो देहाद्युपाधिसंबंधप्रकारमाह । मन इति । मन आत्मनो देहादीन्सृजति । तच्च मनो माया सृजति । ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्न स्वतः ॥ ६ ॥ यस्मादुपाधिनिबंधनो जीवस्य संसारोऽतस्तन्नाशे जीवत्वं गच्छतीत्येतदेव सदृष्टांतमाह सार्धेन । स्नेहेति । दीपस्य ज्योतिषो दीपत्वं ज्वालारूपः परिणामः । तत्र तैलस्थानीयं कर्म । तदधिष्ठानस्थानीयं मनः । वर्तिस्थानीयो देहः । अग्निसंयोगस्थानीयश्चैतन्याध्यासः । दीपस्थानीयः संसार इति योज्यम् । देहकृतो देहनिबंधनः । यद्वा देहकृतो मनसो न त्वात्मनः ॥७॥ अतो दीपवत्संसार एव नश्यति न त्वात्मा ज्योतिर्वदित्याह । नेति । ननु तत्र प्रतीयमान आत्मा कुत इत्यत आह । य इति । व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परोऽन्यः । यतः स्वयंज्योतिः । परत्वं प्रपंचयति । आकाश इवेति । आधारो देहादेः प्रपंचस्य । ध्रुवो निर्विकारः । नास्त्यंत उपमा च यस्य सोऽनंतोपमः । ततो विभुः ॥८॥ अतस्त्वमेवं चिंतयेत्याह । एवमिति । आत्मस्थं देहाद्युपाधिस्थितम् । आमृश विचारय । अनुमानगर्भिण्या

विराजते ॥ ९ ॥ स्वाप्नदेहवज्जागरेऽप्यात्मनो नानादेहान् गुणान्कर्माणि च मन एव संकल्पात्मकं सृजति कल्पयति । तन्मनः स्वाप्नसंकल्पादिवन्माया सृजति, ततो जीवस्य संसृतिर्मायैवेत्यर्थः । यद्वा—मनः पूर्वकर्मप्रेरितं सद्गुणान्सत्त्वादीन्सृजति पर्यायेण विभावयति, ततो गुणमयानि विविधानि कर्माणि सृजति, ततः कर्मानुरूपान् देहान्सृजतीति भावः ॥ * ॥ ज्ञानेन लयं संभावयितुं मायाकृतमात्मनो देहाद्युपाधिसम्बन्धप्रकारमाह—मन आत्मनो देहादीन्सृजति । तदुक्तम्—"यतोयतो धावति दैवचोदितं मनो विकारात्मकम्" इत्यादि । ततो मनो माया सृजति । ततो मायाद्युपाधिसमुदायात् ॥ ६ ॥ यस्मादुपाधिनिबंधनो जीवस्य संसारोऽतस्तन्नाशे नश्यतीति सदृष्टान्तमाह—ततस्तावदित्यर्थः । तत्र दार्ष्टान्तिके । तदधिष्ठानस्थानीयं तैलाधिष्ठानशरावस्थानीयम् । देहनिबन्धनो देहाध्यासहेतुकः । देहाध्यासोऽपि मनस्तादात्म्येनैवेत्याह—यद्वेति ॥*॥ देहकृतो देहसंबन्धकृतः । भवः संसारः ॥७॥ यतो दीपस्थानीयः संसारोऽतो हेतोः। तत्र देहे । अतो देहद्वयभिन्नत्वात् । आत्माऽनाशे हेतुः—य इति । य आत्मा । यद्वा—अनंतेनाकाशेनोपमीयत इत्यनन्तोपमः, आकाशो यथाऽसंगस्तथेत्यर्थः । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । ततो व्यापकः, तनोतेः क्तः ॥ * ॥ ० ॥ ८ ॥ यत आत्मा देहादेः पृथगतो हेतोः । द्रष्टृदृश्ययोरात्मदेहयोरन्वयव्यतिरेकाभ्यां युक्तया । तथाहि—जीवश्चेतनो द्रष्टृत्वात्, परमात्मवत्, यश्चेतनो न भवति स द्रष्टापि न भवति, यथा घटः । एवं देहो जडो दृश्यत्वात्, घटवत्, यो दृश्यो न भवति स जडोऽपि न भवति, यथात्मेति । किञ्च—आत्मा स्थायी, अवस्थात्रयसाक्षित्वात्, परमात्मवत् । देहो विनाशी आद्यन्तयोरविद्यमानत्वात्, शुक्तिरजतवत्, इत्याद्यन्वयव्यतिरेकानुमानसहकृतया बुद्ध्या । एवं वक्ष्यमाणरीत्या । वासुदेवस्यानुचिन्ता तात्पर्येणावगतिर्यस्यां बुद्ध्यां तया । यद्वा—बुद्ध्या श्रवणजबोधेनानुमानगर्भिण्या मननसहकृतेन वसन्त्यस्मिन्निति वासु अधिष्ठानं परं ब्रह्म, देवयतीति देवः सर्वावभासकः साक्षिचिदात्मा एव तदनुचिन्तया निदिध्यासनेनावगतस्वरूपं त्वां विप्रवाक्येन चोदितस्तक्षको न धक्ष्यति न भस्मीकरिष्यति । न केवलं तक्षक एव त्वां न धक्ष्यत्यपि तु मृत्युहेतवोऽन्येऽपि सिंहव्याघ्ररोगादयो नोपधक्ष्यन्ति । तत्र

चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ मृत्यवो नोपधक्ष्यंति मृत्यूनां मृत्युमीश्वरम् ॥१०॥ अहं ब्रह्म परं ब्रह्म ब्रह्माहं परमं पदम् ॥ एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥ ११ ॥ दशंतं तक्षकं पादे लेलिहानं विषाननैः ॥ न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ १२ ॥ एतत्ते कथितं तात यथात्मा पृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ १३ ॥ इति श्रीम० महा० द्वादशस्कंधे ब्रह्मोपदेशो नाम पंचमोऽध्यायः ॥ ५ ॥

द्रष्टृदृश्यान्वयव्यतिरेकयुक्त्या ॥९॥ एवं च सति त्वां तक्षको न दहेदित्याह । चोदित इति । तत्र हेतवः । मृत्यव इति मृत्युहेतवः ॥ १० ॥ विमर्शप्रकारं दर्शयंस्तक्षकादर्शनं दर्शयति द्वाभ्याम् ।योऽहं स ब्रह्मैव यद् ब्रह्म तदहमेवेति समीक्षन्।तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः ब्रह्माहमिति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः । निष्कले निरुपाधौ । आत्मनि ब्रह्मणि ॥ ११ ॥ विषयुक्तैराननैर्दशंतं ग्रसंतं तक्षकम् । लेलिहानं सर्पम् । यद्वा लेलिहानं जिह्वाभिरोष्ठप्रांतान्सनिष्पेषमास्वादयंतम् । आत्मनः पृथक् ॥ १२ ॥ हरेश्चेष्टामात्मा त्वं यत्पृष्टवांस्तदेतत्ते कथितम् । शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति । किंमिति ॥ १३ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीधरीयटीकायां पंचमोऽध्यायः ॥ ५ ॥

हेतुः—मृत्यूनामपि तेषामपि मृत्युम् ‘ मारयन्मृत्युनांतकम् ’ इत्युक्तेः । तत्रापि हेतुः—ईश्वरं ज्ञानबलेनावाप्तेश्वरभावम् । अत्र हेतुगार्भितविशेषणद्वयं प्रतीयते । स्वामिचरणैरत्र हेतव इति [illegible]वं तु मृत्यवस्त्वां यतो नोपधक्ष्यन्ति इत्यपि हेतुत्वेनैवाभिप्रेतं देहभिन्नत्वात् ॥ * ॥ बुद्ध्यादिप्रवर्तकत्वेन यदात्मनोऽनुमानं तदेव गर्भे यस्य तद्युक्त्या तद्व्यवसायवत्या, यथा बुद्ध्यादीनि करणानि कर्तृप्रयोज्यानि करणत्वाद्दास्यादिवदिति कर्ता चात्मैव स च वासुदेव एव, स एव सर्वत्र लक्ष्यः । सकलमिदमहञ्च वासुदेव इत्येवानुचिन्ता यस्यां तादृशया ॥ ९ ॥ ० ॥ * ॥ त्वामात्मानं देहात्पृथग्भूतम् । तक्षकस्य का वार्ता स्वयं मृत्यवोऽपि मूर्तिमन्तः नहि वासुदेवरूपं त्वां देहं तक्षकं च धक्ष्यन्ति स्वस्य स्वयं हननायोगात्, ब्रह्मशापादीनां व्यर्थप्रायत्वादिति भावः ॥ १० ॥ परं धाम सर्वावभासकत्वेन देहेन्द्रियादिधर्मैरस्पृष्टं ज्योतिःस्वरूपम् । परमं सर्वबाधावधित्वेन परमार्थं पदं पदनीयम् । तत्र विमर्शे । आदिना भयादिग्रहः । पारोक्ष्यनिवृत्तिः साक्षात्कारः । परस्परीकरणं व्यतिहारः ॥ * ॥ ० ॥ ११ ॥ “ ओष्ठप्रान्तास्वादने च लेलिहानो भुजंगमे ” इत्यभिधानादर्थान्तरमाह—यद्वेति । “ निष्पेषः पेषणाभावाभीक्ष्ण्यापेषणकेषु च ” इत्यभिधानात्सनिष्पेषं पौनःपुन्येन सहितम् ॥ * ॥ ० ॥ १२ ॥ हे नृपेति—नृभ्यो भयजनकत्वेन विक्षेपकेभ्यः कालजन्मजरादिभ्यः पायते रक्ष्यत इति नृपः, तथा च मया तत्त्वोपदेशेनान्वर्थनामा कृतोऽसीति भावः । अतः परं श्रोतव्यं नास्तीत्याह—किं भूय इति ॥ * ॥ अत्र **संदर्भः**—लीलाकथारसिकस्य तस्य पूर्वोक्तेनातिरुचिमालक्ष्योपसंहरति—एतत्त इति । ते तुभ्यम् । ‘ त्वं तु राजन्मरिष्येति ’ इत्यादिना कथितम् । ननु ममानभीष्टमनुपक्रान्तञ्च तत्कथं कथितं तत्राह—आत्मा कस्यचिदात्मनिष्ठस्य मनो यत्पृष्टवान् परीक्षितोऽस्यात्मज्ञानं जातं न वेति संदिह्य स्वगतमेव मपि यज्ज्ञातुमिष्टवानित्यर्थः । अहम् ‘तत्रानुवर्ण्यते’ इत्यादिनोपक्रान्तं भगवन्महिमानमेव पुनरपि वर्णयिष्यामीत्याह—हरेरिति । विश्वात्मन इति—किं व्यष्ट्यात्मनः स्वरूपवर्णनेनेति भावः । नन्वस्मिन्प्रकरणे श्रीशुकदेव

सूत उवाच ॥ एतन्निशम्य मुनिनाभिहितं परीक्षिद्व्यासात्मजेन निखिलात्मदृशा समेन ॥ तत्पादपद्ममुपसृत्य नतेन मूर्ध्ना बद्धांजलिस्तमिदमाह स विष्णुरातः ॥ १ ॥

षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात् ॥ वेदशाखविभागोक्तौ त्रिवेदीव्यासवर्णनम् ॥ १ ॥ एतत्पुराणं निशम्य निखिलात्मा हरिस्तं पश्यति निखिलं स्योपदेशे भक्तावेव तात्पर्यं ज्ञाने वेति संदिहानं प्रति पुनर्विचार्यते । तत्र 'अत्रानुवर्ण्यतेऽभीक्ष्णम्' इत्याद्युपक्रमे 'एतत्ते कथितं तात' इत्याद्युपसंहारेपि तादृशमहिमत्वेन पुनर्लीलाकथाश्रवणस्यैव प्राधान्यात्, तत उपक्रमोपसंहारानिर्दिष्टत्वाच्छ्रवणोपलक्षितभक्तेरेवात्रापि प्राधान्यम् । यस्तु तन्मध्ये 'त्वं तु राजन्मरिष्येति' इत्यादिना ज्ञानोपदेशः, स च तस्य प्रागेव गता या भक्तिनिष्ठा तस्याः संप्रत्यपि स्थैर्यप्रकटनार्थ एव, एकान्तभक्तेषु भगवता मोक्षवरच्छंदनवत् पूर्वमपि भक्तिनिष्ठा मरणभयत्यागात् । अनन्तरं च श्रुत्वापि तज्ज्ञानोपदेशं स्वस्य भक्तिनिष्ठाया एव दर्शयिष्यमाणत्वात् । तत्र प्राचीना तन्निष्ठा यथा प्रथमे–'कृष्णांघ्रिसेवामधिमन्यमानः' इति, 'दध्यौ मुकुन्दांघ्रिमनन्यभावः' इति च । तन्निष्ठयैव तद्भयपरित्यागो यथा तद्वाक्ये–"द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं, गायत विष्णुगाथाः" इति तज्ज्ञानश्रवणानन्तरमपि तादृशनिष्ठायाः स्थैर्यदर्शनं यथा तत्र तावत्पद्यत्रयेण तज्ज्ञानोपदेशं बहु मत्वा श्रवणलक्षणया भक्त्यैव स्वकृतार्थत्वमुक्तं षष्ठाध्यायारंभे–'सिद्धोऽस्म्यनुगृहीतोऽस्मि' इत्यादिना । 'अत्यद्भुतमिदं मन्ये' इत्यादि, 'पुराणसंहिताम्' इत्यादिना च । पुनश्चैकेन पद्येन तद्वाक्यगौरवमात्रेणांगीकृतस्य ब्रह्मज्ञानस्य तक्षकादिभयनिवृत्तिहेतुत्वमुक्त्वाप्यन्येन तदूर्ध्वमेव वाक्चेतसोस्तन्नामकीर्तनध्यानावेशानुज्ञा प्रार्थिता 'भगवंस्तक्षकादिभ्यः' इत्यादिना, 'अनुजानीहि मां ब्रह्मन्' इत्यादिना च । अथ पुनरन्येन पद्येनाज्ञाननिरासो ज्ञानवृद्धिश्च भगवत्पदारविन्ददर्शनसुखान्तर्भूतैव मम स्फुरतीति ज्ञापितम् । "अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया । भवता दर्शितं क्षेमं परं भगवतः पदम् ॥" इति । अत्र पदशब्दस्य चरणारविन्दाभिधायकत्वे "ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्" इत्येवास्ति प्रथमे साधकम् । एतत्प्रकरणार्थस्तु श्रीसूतेनैव स्पष्टीकृतः–"ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात् । न संमुमोहोरुभयाद्भगवत्यर्पिताशयः ॥ नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् । स्यात्संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदांबुजम् ॥" इति । तथा पूर्वं द्वादशस्य तृतीये प्रथमस्कन्धांतस्थस्य "अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् । पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा ॥" इत्यस्य राजप्रश्नस्योत्तरत्वेन भगवद्ध्यानकीर्तने एव स्वयं श्रीशुकदेवेनाप्युपदिष्टे "तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम् । म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥ म्रियमाणैरभिध्येयो भगवान्परमेश्वरः । आत्मभावं नयत्यंग सर्वथा सर्वसंभवः ॥ कलेर्दोषनिधे राजन्" इत्यादिना । ततस्तत्र केशवे ह्यवहितः कृतावधानः । आत्मभावमात्मनो भक्तिम् । अस्तु तावदायाससाध्यं ध्यानं हि यस्मादनायाससाध्यात्कीर्तनादेवेत्यर्थः । द्वितीयस्कन्धेपि–'न ह्यतोऽन्यः शिवः पंथाः' इत्यादिना 'एवमेतन्निगदितम्' इत्यन्तेन ग्रंथेन नानाङ्गवाञ्छुद्धभक्तियोग एवात्रोत्तरत्वेन पर्यवसितः । तत्र 'पिबन्ति ये भगवतः' इत्यादिना लीलाकथाश्रवण एव पर्यवसानं दृश्यते तस्मात्साधूक्तम्–'त्वन्तु राजन्मरिष्येति' इत्यादिकं भगवद्भक्तिनिष्ठाप्रकटनार्थमेवेति । अतो भक्तावेव तदुपदेशस्य तात्पर्यमत एव द्वितीयाष्टमे राजप्रार्थनान्वर्था स्यात्–"कृष्णे निवेश्य निस्संगं मनस्त्यक्ष्ये कलेवरम्" इंति ॥ १३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ तत्सुतात्परीक्षित्पुत्राज्जनमेजयात् । आदिना तक्षकरक्षणादिग्रहः । त्रयाणां वेदानां समाहारस्त्रिवेदी तस्या व्यासो विस्तरस्तस्य वर्णनम् (१) । अतो निखिलात्मदर्शित्वात् । इत्यर्थ इति–शिरसि पादस्थापनं विना पाद

१ 'सर्वात्मा' इति पा० ।

राजोवाच ॥ सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ॥ श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥ २ ॥ नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम् ॥ अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥ पुराणसंहितामेतामश्रौष्म भवतो वयम् ॥ यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥ भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ॥ प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितं त्वया ॥ ५ ॥ अनुजानीहि मां ब्रह्मन्वाचं यच्छाम्यधोक्षजे ॥ मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥६॥ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ॥ भवता दर्शितं क्षेमं परं भगवतः पदम्॥७॥

वाऽत्मनि पश्यतीति तथा तेन अतः समेन । नतेनावनतेन मूर्ध्ना तत्पादतलमुपसृत्य तत्पादौ शिरसि निधायेत्यर्थः ॥ १ ॥ सिद्धः कृतार्थोऽस्मि । यतोऽनुगृहीतोऽस्मि अनुग्रहमेवाह । यद्यस्माच्छ्रावितः चशब्दात्प्रातिसाधनं च श्रावितम् ॥ २ ॥ करुणात्मतामभिनंदति द्वाभ्याम् । नात्यद्भुतमिति ॥ ३ ॥ अश्रौष्म श्रुतवंतः । भवतः सकाशात् ॥ ४ ॥ सिद्धोऽस्मीत्युक्तं तदेवाविष्करोति । भगवन्निति । यतस्त्वया दर्शितं ब्रह्म प्रविष्टाः । कथंभूतम् । अभयम् । यतो निर्वाणं कैवल्यरूपम् ॥ ५ ॥ किं भूयः श्रोतुमिच्छसीति यदुक्तं तत्र सिद्धोऽहं न किंचिच्छ्रोतुमिच्छामि केवलमनुज्ञां देहीत्याह। अनुजानीहीति । वाचमित्युपलक्षणं सर्वेन्द्रियाणाम् । वाच नियम्य किं करिष्यसि तदाह । मुक्ताः कामाशयास्तद्वासना येन तच्चेतोऽधोक्षजे प्रवेश्यासून्विसृजामि ॥ ६ ॥ ननु किं प्राणत्यागेन किंचित्कालं ज्ञाननिष्ठो भवेति चेत्तत्राह । अज्ञा

तलस्पर्शो न भवतीति भावः । यद्वा—निखिलानामात्मानं मनः पश्यतीति तेन, तात्कालिकज्ञानोपदेशे तत्रत्यानां केषांचिज्ज्ञानिनामपि मन आनंदितमिति भावः ॥ १ ॥ साक्षाद्गर्भे बाल्ये च । यः साक्षाद्दृष्टः स एव श्रावित इति साक्षात्पदार्थः ॥ २ ॥ महतां भवादृशानाम् । अज्ञेषु मादृशेषु ॥ ३ ॥ संहितामित्युक्त्या वेदतुल्यत्वमस्य पुराणस्य सूचयति । अनुवर्ण्यते अभीक्ष्णशस्तत्तत्कथाप्रसंगेन प्रतिपाद्यते ॥ ४ ॥ हे भगवन्निति—श्रीशुकं साक्षाद्भगवाञ्श्रीकृष्णस्तद्रूपेणामंत्रयतीति भावः । यथा श्रीकृष्णेन जगतोऽभयं दुष्टदैत्यहननादि दर्शितं तथा मम त्वयापि तद्दर्शितमिति तत्साम्यमुक्तम् । यद्वा—‘ नान्यत्त्वदभयं पश्ये ’ इति श्रीकुंत्युक्तेः अभयः श्रीकृष्ण एव । क्लीबत्वमार्षम् । श्रीभागवतश्रावणेनापि साक्षाच्छ्रीकृष्ण एव दर्शितो भवतीति भावः । यद्वा—ब्रह्मनिर्वाणरूपमभयं दर्शितम् । “ अधोक्षजालंबमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ” इति सर्वभक्तशिरोमणिना श्रीकायाधवेन मनसा श्रीकृष्णचिंतनस्यैव संसारनिरासकत्वमुक्तमिति ॥ ५ ॥ हे ब्रह्मन्निति—साक्षात्परब्रह्ममूर्तिस्त्वमतो मामाज्ञापयेति भावः । अधोक्षजे परब्रह्मणि श्रीकृष्ण एव “ कृष्णे मनः संमावेश्य संत्यक्ष्येऽहं कलेवरम् ” इति द्वितीयोक्तेः । असून्प्राणान् ॥ ६ ॥ अत्राक्षिपति—नन्विति । ज्ञानं श्रीकृष्णानुभवो, विज्ञानं तदैश्वर्यानुभवस्तत्र निष्ठा स्थितिस्तया ॥ ७ ॥

सूत उवाच ॥ इत्युक्तस्तमनुज्ञाप्य भगवान्बादरायणिः ॥ जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥ परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ॥ समाधाय परं दध्यावस्पंदासुर्यथा तरुः ॥ ९ ॥ प्राक्कूले बर्हिष्यासीनो गंगाकूल उदङ्मुखः ॥ ब्रह्मभूतो महायोगी निःसंगश्छिन्नसंशयः ॥ १० ॥ तक्षकः प्रहितो विप्राः क्रुद्धेन निजसूनुना ॥ हंतुकामो नृपं गच्छन्ददर्श पथि कश्यपम् ॥ ११ ॥ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ॥ द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥ ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ॥ बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥ हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः ॥ विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥ १४ ॥ देवदुंदुभयो नेदुर्गंधर्वाप्सरसो जगुः ॥ ववर्षुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥ जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ॥ यथाजुहाव संक्रुद्धो नागान्सत्रे सह द्विजैः ॥ १६ ॥ सर्पसत्रे समिद्धाग्नौ दह्यमानान्महोरगान् ॥ दृष्ट्वेंद्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥ अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान् ॥ उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥ तं गोपायति राजेंद्र शक्रः शरणमागतम् ॥ तेन संस्तंभितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥

नं चेति । चकारात्तत्संस्कारश्च । तच्च त्वत्कृपयैवेत्याह । भवेति ॥ ७ ॥ ८ ॥ आत्मना बुद्ध्या आत्मानं मन आत्मनि प्रत्यक्प्रकाशे समाधाय परमात्मानं दध्यौ । अस्पंदासुर्लीनप्राणः । यथा तरुः स्थाणुः ॥ ९ ॥ तमेव विशिनष्टि । प्राक्कूले प्रागग्रे । बर्हिषि दर्भे ॥ १० ॥ तदेवं ब्रह्मभूते तस्मिंस्तक्षकागमनादिकं पिष्टपेषणमिवाभवदिति दर्शयति तक्षक इति त्रिभिः । हे विप्राः ॥ ११ ॥ तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनायागच्छंतम् । तत्र स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरंकुरादिक्रमेणोत्थापनाद्विषहारिणं तदपेक्षितद्रविणैः संतर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन्नदशत् ॥ १२ ॥ तच्च पुत्रकृत्यमिव जातमित्याह । ब्रह्मभूतस्येति ॥ १३ ॥ तत्र क्षणं सर्वेषां दुःखं च ततः परमुत्सवं चाह द्वाभ्याम् । हाहाकार इति ॥ १४ ॥ १५ ॥ प्रासंगिकमाह जनमेजय इत्यादि । सर्पाभिचारसत्रे द्विजैः सह वर्तमानो यथावदाजुहाव जुहावेति वा । सर्वसर्पाह्वाने कारणमाह । संक्रुद्ध इति ॥ १६ ॥ १७ ॥ १८ ॥ कस्मात्तक्षको न दह्येतेत्युक्ताः संतो द्विजा ऊचुः । तमिति । तेनेंद्रेण । असौ सर्पः ॥ १९ ॥

भिक्षुभिस्तत्रत्यैः कथाश्रवणार्थमागतैर्दुर्वासःप्रभृतिभिः संन्यासिभिः । नरदेवेन परीक्षिता । पूजितोऽभ्युत्थानपुष्पाद्यैरर्चितः ॥ ८ ॥ ९ ॥ १० ॥ अहो ब्राह्मणानां तपोबलं महदित्यभिप्रेत्याह–हे विप्रा इति ॥ ११ ॥ तत्र मार्गे । स्वालीढः स्वदष्टो यो वटवृक्षस्तस्य । कामरूपो देवत्वात् ॥ १२ ॥ तच्च दंशनम् । पुत्रेण यथा पितुर्देहो दह्यते तद्वज्जातम् । अहिगरलमेवाग्निस्तेन । ब्रह्मभूतस्य विचारेण तद्रूप्यं प्राप्तस्य ॥ १३ ॥ तत्र तदा । क्षणं क्षणमात्रम् । ततः क्षणोत्तरम् । अहो ब्राह्मणरूपेण फलानि दातुमागतेन किं कृतमित्येवं विस्मिता अभवन् ॥ १४ ॥ देवलोकेऽपि तद्गमन उत्सवोऽभूदित्याह–देवदुंदुभय इति ॥ १५ ॥ प्रासंगिकं प्रकृतम् । तक्षकेण भक्षितं दष्टम्, भक्षणवद्दंष्ट्राव्यापारसाम्याद्दंशोऽपि भक्षणशब्देनोच्यते । आह्वाने प्रयोजनाभावादाकारप्रश्लेषं त्यक्त्वाह–जुहावेति वेति ॥ १६ ॥ भयेन संविग्नस्त्रस्तः ॥ १७ ॥ तत्र यज्ञकुंडाग्नौ ॥ १८ ॥ १९ ॥

पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ॥ सहेंद्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २० ॥ तच्छ्रुत्वा जुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे ॥ तक्षकाशु पतस्वेह सहेंद्रेण मरुत्वता ॥ २१ ॥ इति ब्रह्मोदिताक्षेपैः स्थानादिंद्रः प्रचालितः ॥ बभूव संभ्रांतमतिः सविमानः सतक्षकः॥२२॥ तं पतंतं विमानेन सह तक्षकमंबरात् ॥ विलोक्यांगिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥ नैष त्वया मनुष्येंद्र वधमर्हति सर्पराट् ॥ अनेन पीतममृतमथं वा अजरामरः ॥ २४ ॥ जीवितं मरणं जंतोर्गतिः स्वेनैव कर्मणा ॥ राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥ २५ ॥ सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप ॥ पंचत्वमृच्छते जंतुर्भुंक्त आरब्धकर्म तत् ॥ २६ ॥ तस्मात्सत्रमिदं राजन् संस्थीयेताभिचारिकम् ॥ सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥

ऋत्विजः प्रत्याह सहेंद्र इंद्रसहितः किमिति न पात्यते ॥ २० ॥ तद्राज्ञो वचः श्रुत्वा आजुहुवुः । साक्षेपमाह्वानं दर्शयति । तक्षकेति । इहाग्नावाशु पतस्व । मरुत्वता मरुद्गणवतेन्द्रेण सह ॥२१॥ ब्राह्मणैरुक्तैराक्षेपैः परुषवाक्यैः ॥ २२ ॥ तं तक्षकम् । अंगिरसः पुत्रो बृहस्पतिः प्राह ॥२३॥२४॥ भवतु नामाजरामरस्तथाऽपि पितृमारकं धक्ष्यामीति चेत्तत्राह । जीवितमिति । गतिः परलोकः । अतो दुर्मरणनिमित्ता पितुर्दुर्गतिरनेन कृतेत्यपि न शंकनीयमित्यर्थः ॥ २५ ॥ कथमन्यः सुखदुःखप्रदाता नास्ति सर्पादीनामुपलभ्यमानत्वादिति चेत्तत्राह । सर्पादिना जंतुः पंचत्वं मृत्युमृच्छति प्राप्नोतीति यत्तदारब्धं कर्मैव भुंक्ते । स्वकर्मप्रयुक्ता एव सर्पादयो न स्वतंत्रा इति भावः ॥ २६ ॥ संस्थीयेत समाप्यताम् । आभिचारिकं हिंसाफलम् । दिष्टं प्राचीनं कर्म । अतः सर्पादृष्टप्रयुक्तस्य तवाप्ययं नापराध इति भावः ॥ २७ ॥

हे विप्रा इति–यूयमर्थिमनोरथमवश्यं पूरयंति विशेषेण प्रांति पूरयंत्यर्थिजनाभिलषितमिति विप्रा इत्यन्वर्थसंज्ञावन्निरुक्तेरिति भावः । किमिति न कुतो न ॥ २० ॥ २१ ॥ इतीत्थम् ॥ २२ ॥ २३ ॥ हे मनुष्येन्द्रेति–मनुष्येष्वेव तव प्रभावो न तु देवेष्वपीति भावः । अनेन तक्षकेण । अथातः । वै निश्चितम् । अपमजरामरो जात इत्यर्थः । यद्वा–सर्पेण तक्षकेण सह राजत इति सर्पराडिंद्रविशेषणम् । अथवा–अत एव अजरामर इति विश्वनाथः ॥ २४ ॥ इत्यर्थ इति–" निमित्तमात्रं सर्वेषां कृतकर्मानुसारतः " इत्युक्तेर्नास्यापराध इति भावः । हे राजन् पितृशोकादेवं यद्यवस्यसि तत्र तत्त्वं शृण्वित्याह–जीवितमिति । गतिः स्वर्गादिः । जंतोरिति–निकृष्टजीवस्यैवेयं व्यवस्था तव पितुस्तु जीवितमरणभगवद्धामप्राप्तयो भगवत्कृता एव। तथाहि–स्वहस्तेनैव द्रौण्यस्त्रतो रक्षणं, मुनिशापद्वारा निधनप्रापणं, स्वप्रष्ठेशुकोपदेशद्वारा निजपदप्रापणमिति तस्यैव कर्माणि तक्षकस्तु निमित्तमात्रमिति विश्वनाथः ॥ २५ ॥ इति भाव इति–" सुखस्य दुःखस्य न कोऽपि दाता परो ददादीति कुबुद्धिरेषा " इत्यादिपुराणांतरात् " आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः " इति श्रीमुखवाक्याच्च स्वकर्मानुसारेण स्वस्यैव स्वदुःखादिहेतुत्वमित्याशयः प्राकृत एव लोकस्स्वकर्मवशात्सर्पादिभिर्मृतिं याति न तु त्वत्पितामहो भक्तराज इत्याह–सर्पेति । जंतुरतिनिकृष्टजीव इति विश्वनाथः ॥ २६ ॥ यतः प्रारब्धकर्मत एव सर्वं भवति तस्माद्धेतोः । इदं सर्पसत्रम् । ननु तज्जातित्वात्तक्षकापराध एवैषामपराधः " एकः पापानि कुरुते फलं भुंक्ते महाजनः " इत्युक्तेस्तत्राह–तक्षकस्याप्यपराधो नास्ति दैवेन तद्दंशनेन स्वकृतपूर्वकर्मणा परीक्षितो मरणस्य कृतत्वादित्याशयेनाह–जनैर्दिष्टमिति । यतो दिष्टमेव फलदमतो हेतोः । इति भाव इति–तव चेतस्यपि मातृकृतसर्पदाहरूपशापादृष्टवशेनैव सर्पसत्रकृतिस्फूर्तिर्जातेति तात्पर्यम् । अत्र महाभा

सूत उवाच ॥ इत्युक्तः स तथेत्याह महर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥ सैषा विष्णोर्महामायाऽबाध्ययाऽलक्षणा यया ॥ मुह्यंत्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः ॥ २९ ॥ न यत्र दंभीत्यभया विराजिता मायात्मवादेऽसकृदात्मवादिभिः ॥ न यद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्ति यत् ॥ ३० ॥

वाक्पतिं बृहस्पतिम् ॥ २८ ॥ ननु कथं विदुषामप्येवं संमोहो यतो ब्रह्मकोपात्परीक्षितो मृत्युर्जनमेजयकोपात्सर्पाणामित्यादि तत्राह । सैषेति । तस्या महत्त्वं दर्शयति । अलक्षणा न लक्ष्यत इत्यलक्षणा अप्रतर्क्यैत्यर्थः । काऽसावित्यत आह । ययाऽस्य विष्णोरेवात्मभूता आत्मांशभूताः प्राणिनो गुणवृत्तिभिः क्रोधादिभिः सह भूतेषु देहेषु मुह्यंति बाध्यबाधकतां व्रजंतीत्यर्थः । ननु श्रवणादिना बाधितया तया कुतो मोहः स्यात्तत्राह । अबाध्यया बाधितुमशक्यया ॥ २९ ॥ कथं तर्हि मायातत्कार्यनिवृत्तिरित्याशंक्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं तद्भजनात्सर्वानर्थनिवृत्तिरिति शास्त्रार्थमुपसंहरति न यत्रेति पंचभिः । दंभीति । माया कपटवानयं पुमानित्येवंभूतायां बुद्धावसकृदुल्लिख्यमाना

रतीया कथाऽनुसंधेया—कदाचिदुच्चैःश्रवसोऽश्वस्य वर्णनिर्णयार्थं कद्रूविनतयोर्विवादः प्रवृत्तः । विनतयोक्तं श्वेतवर्णोऽयं, कद्र्वा चोक्तं कृष्णवर्ण इति । ततः श्वो निर्णयार्थं गमिष्यावो यदुक्तिर्मृषा सा दासी भवतु, तदा च नागमात्रा स्वपुत्रान्प्रत्युक्तं यूयं कृष्णरोमाकारा भूत्वाऽश्वपुच्छे लग्ना भवत, ये न करिष्यंति मद्वाक्यं ते सर्वे जनमेजययज्ञे दग्धा भविष्यंतीति । आभिचारिकं निंद्यम् । अभिचारस्य "शत्रुमरणकामः श्येनेनाभिचरेत्" इति विहितत्वेऽपि प्रायश्चित्तश्रवणान्निंद्यत्वमिति तत्रापि तव नापराध इत्याह—जनैरिति विश्वनाथः ॥ २७ ॥ महर्षेर्बृहस्पतेः । "वाग्वै बृहती" इति श्रुतिमेव बृहच्छब्दस्य वागर्थे मानं मत्वाह—बृहस्पतिम् ॥ २८ ॥ अत्राक्षिपति—नन्विति । इत्यर्थ इति—लक्षित एव वस्तुनि तर्को भवतीति भावः । इत्यर्थ इति—अन्यथाभावस्यैव मोहत्वादिति भावः । पुनराक्षिपति—नन्विति । अबाध्यया ब्रह्मात्मबोधं विना बाधितुमशक्यया ॥ २९ ॥ विष्णुस्तर्हि दंभी येन तस्य मायेत्युच्यते तत्राह—न यत्रेति । यत्र विष्णौ यस्य विष्णोस्संनिधाने निमित्ते आ ईषत् विराजिता यत्किंचिल्लब्धसामर्थ्यापि दंभी दंभवानयमित्यभया न भवति किन्तु तस्मिन्दंभादर्शनात्सभयैव भवतीत्यर्थः । माया हि सदंभ एव निर्भया भवतीति । तदुक्तम्—" विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ॥ " इति विष्णौ महाभागवते च मायाधिकारो नास्तीत्यर्थः । कीदृशी—दंभिनि दंभवति पुरुषे इतौ गमने आक्रमे इत्यर्थः । अभया निर्भयैव विराजिता । 'इण्—गतौ' क्त्यंतः । विष्णुतद्भक्तयोस्तु शून्येव भवतीति भावः । तथात्मवादिभिरपि बहुधात्मवादे प्रवर्तिते विष्णुस्वरूपे स्फुरिते सति विविधो वादो नास्ति यतस्तदाश्रयो मायाश्रय एव सः " यच्छक्त्यो वदतां वादिनां वै विवादसंवादभुवो भवंति " इत्युक्तेः । तथा संकल्पादिरूपा मायावृत्तयो यत्र तन्मनोपि नास्तीत्यर्थ इति विश्वनाथः । इत्यर्थ इति—अत्र मायाशब्दः कपटपर एव न तु भगवच्छक्तिरूपयोगमायापर इति भावः । इत्यर्थ इति—इत्थं प्रतिपादिता या माया सा यत्रात्मस्वरूपे नास्तीति भावः । अत्र प्रमाणमाह—तदुक्तमिति । श्लोकौ तु व्याख्यातचरावेव । अन्यदाह—किञ्चेति । यद्यस्मिन्नात्मस्वरूपे । इति भाव इति—" नेह नानास्ति किञ्चन " इत्यादिश्रुतेस्तस्यात्मस्व

न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम् ॥ तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन्विरमेत्स्वयं मुनिः ॥ ३१ ॥
परं पदं वैष्णवमामनंति तद् यन्नेतिनेतीत्यतदुत्सिसृक्षवः ॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥ ३२ ॥

या मायेत्यर्थः । साऽऽत्मवादे क्रियमाणे आत्मवादिभिर्यत्राभया न विराजिता न प्रकाशिता किंतु भीतेव स्वकार्यं मोहादिकमकुर्वती कथंचिद्वर्तत इति प्रतिपादितेत्यर्थः । तदुक्तम् । "तस्मै नमो भगवते वासुदेवाय धीमहि । यन्मायया दुर्जयया मां ब्रुवंति जगद्गुरुम् । विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थंते ममाहमिति दुर्धियः॥" इति । किंच यद्यस्मिंस्तदाश्रयो मायाश्रयो विविधो विवादोऽपि नास्ति । विशेषविषयत्वाद्विवादानां तस्य च विशेषातीतत्वादिति भावः । संकल्पविकल्पा वृत्तयो यस्य तन्मनोऽपि यत्र नास्ति । संकल्पविकल्पानामपि विशेषविषयत्वात् ॥ ३० ॥ किंच । सृज्यं कर्म सृजता कारकवर्गेण सहोभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयः फलमपि । अतस्त्रिभिः सृज्यस्रष्टृफलैरन्वितो जीवश्चाहंकारात्मको यत्र नास्ति । अत एवोत्सादितौ निरस्तौ बाध्यबाधकौ यस्मिंस्तदेतत्स्वयमात्मस्वरूपमित्यर्थः । तत्तस्मिन्नूर्मीनहंकारादीन्निषिध्य मुनिः विरमेत् । विशेषेण क्रीडेदित्यर्थः ॥ ३१ ॥ यतस्तद्वैष्णवं पदमामनंतीत्याह । परमिति । यदेतत्तदेव परं वैष्णवं पदं स्वरूपमामनंति । के । अतत् आत्मव्यतिरिक्तमुत्सिसृक्षवस्त्यक्तुमिच्छवः । यतोऽनन्यसौहृदाः नास्त्यन्यस्मिन्सौहृदं येषां ते । कुतः दौरात्म्यं देहाद्यहंभावं विसृज्य । देहेऽहंकाराभावादन्यत्र सौहृदं नास्त्यतस्त्यक्तुमिच्छव इत्यर्थः । कथम् । नेति नेतीत्येवम् । अत्र विद्वदनुभवमपि प्रमाणयति । हृदोपगुह्य ध्यानादिना ततः समाहितैरवसितं निश्चितम् । यद्वा अवसितमवबद्धमात्मतया

रूपस्य सर्वविशेषरहितत्वस्य निश्चयादिति तात्पर्यम् । विशेषविषयत्वाद्भेदविषयत्वात् ॥ ३० ॥ अन्यदप्याधिक्यमाह–किञ्चेति । कारकवर्गेणेंद्रियसमूहेन । अतः सृज्यादित्रयाभावात् । अत एवाहंकाराभावादेव । बाध्यं द्वैतं, बाधकं वृत्तिरूपं ज्ञानञ्च । इत्यर्थ इति–सर्वबाधाविधित्वेन ज्ञेयमिति भावः । केचित्त्वात्मस्वरूपमिहावगत्येति शेषं कृत्वा योजयंस्तदशोभनमिव भातीति । ऊर्मिशब्देनात्राहंकारादयो लक्ष्यंते जले तरंगवत्तेषामपि चित्ते उत्थानदर्शनात् । इत्यर्थ इति–'कश्चित्तमनुवर्तते' इति वेरुपसर्गस्य धात्वर्थानुगतत्वादयं भावः । यत्र स्फुरिते सति सृज्यादिर्न यत् उभयोः स्रष्टृसृज्ययोः परं पृथग्भूतं तत्स्वयं तथा श्रेयः स्वर्गादिफलमपि यत्र न स्फुरति तथा त्रिभिर्गुणैर्जागरादिभिर्वा युक्तोऽहंकारात्मको जीवोऽपि न स्फुरति तस्मादेतद्विष्णुस्वरूपम् । उत्सादिता निरस्ता बाध्या जीवा बाधका गुणाश्च यस्मात्तथाभूतम् । ननु तर्ह्येतत्कः प्रकाशयेत्तत्राह–निषिध्येति । स्वभक्तहृद्गतानमून्कामक्रोधादीन्स्वयमेव । तत्र विशेषतो रमते तत्प्रसिद्धमिति विश्वनाथः ॥ ३१ ॥ किमर्थं तत्र क्रीडेदिति तत्राह–यतस्तद्वैष्णवमिति । "तदिति ब्रह्मणो नाम" इति श्रुतेस्तद्व्यतिरिक्तं प्रपंचम् । तत्र हेतुः–यत इति । अनन्यसौहृदत्वे हेतुमाशंकते–कुत इति । इत्यर्थ इति पूर्वोक्तं यत इति पदमत्र योज्यमिति भावः । केन प्रकारेण त्यक्तुमिच्छवस्तत्राह–नेतीति । देहोऽप्यात्मा न, जडत्वात्, घटवत् । इंद्रियाण्यप्यात्मा न, तैजसत्वात्, दीपादिवदित्येवं प्रकारेणेत्यर्थः । अत्रात्मस्वरूपस्य वैष्णवपदत्वे । आदिना धारणाग्रहः । ततो ध्यानानंतरम् । समाहितैः कृतसमाधिभिः । धात्वर्थप्रसिद्धिमादायाह–यद्वेति । इत्यर्थ इति–आत्मरूपतया ग्रहणस्यैवार्थकरत्वादिति भावः । यद्वा–नान्यस्मिन्सौहृदं ममत्वं येषां ते, अन्यत्र त्यक्तममत्वाद्विरक्ता विवेकिनोऽन्वयव्यतिरेकादियुक्त्या च दौरात्म्यं देहादिकोशपंचके आत्मत्वाध्यासं विसृज्य ब्रह्मणि यत् अतत् आत्मस्वरूपातिरिक्तं मायोपाधिं तत्प्रयुक्तसृष्टिकर्तृत्वादि च तदुत्सिसृक्षवः, एवं भागत्यागलक्षणया तत्त्वंपदार्थयोर्विरुद्धभागत्यागेन लक्षितं हृदौपनिषदबोधेन समाहितैः

त एतदधिगच्छंति विष्णोर्यत्परमं पदम्॥अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥३३॥ आतिवादांस्तितिक्षेत नावमन्येत कंचन॥न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥ नमो भगवते तस्मै कृष्णायाकुंठमेधसे ॥ यत्पादांबुरुहध्यानात्संहितामध्यगामिमाम् ॥ ३५॥ शौनक उवाच ॥ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ॥ वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ॥३६॥ सूत उवाच ॥ समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ॥ हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥३७॥ यदुपासनया ब्रह्मन् योगिनो मलमात्मनः ॥ द्रव्यक्रियाकारकाख्यं धूत्वा यांत्यपुनर्भवम् ॥ ३८ ॥ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् ॥ यत्तल्लिंगं भगवतो ब्रह्मणः परमात्मनः ॥ ३९ ॥

गृहीतमित्यर्थः ॥ ३२ ॥ एतत्प्राप्तावधिकारिणो दर्शयति । त एतदिति । देहजमहमिति । गेहजं ममेति ॥ ३३ ॥ तत्र प्राप्त्युपायमाह । अतिवादानिति ॥ ३४ ॥ शास्त्रसमाप्तौ गुरुं प्रणमति । नम इति । कृष्णाय व्यासाय । अध्यगामधिगतवानस्मि ॥ ३५ ॥ इमां संहितामध्यगामित्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सु र्वेदविभागमपि प्रसंगात्पृथक् पृच्छति । पैलादिभिरिति । हे सौम्य ॥ ३६ ॥ तत्र प्रथमं वेदाविर्भावप्रकारमाह समाहितात्मन इत्यष्टभिः । ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् । यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते ॥ ३७ ॥ प्रसंगान्नादोपासकानां मोक्षफलमाह । यस्य नादस्योपासनयाऽऽत्मनो मलं धूत्वाऽपोह्य । कथंभूतं मलं तमाह । द्रव्यमधिभूतं क्रियाऽध्यात्मं कारकमधिदैवं एवं त्रिधाभूता आख्या यस्येति तथा तम् ॥ ३८ ॥ त्रिवृत् त्रिमात्रः कंठोष्ठादिभिरुच्चार्यमाणस्योंकारस्याक्षरसमाम्नायांतर्भावात्सूक्ष्मतया तं विशिनष्टि । अव्यक्तः प्रभवो यस्य सः । तदेवाह । स्वराट् स्वत एव हृदि प्रकाशमानः । तमेव कार्येण लक्षयति । यत्त

प्रत्ययैरुपगुह्य निदिध्यास्य यदवसितं साक्षात्कृतं प्रत्यगभिन्नं ब्रह्म तदेव विष्णोः परं पदं स्वरूपमामनंति वेदप्रतिपाद्यमध्यवस्यंतीत्यर्थः । तद्वैष्णवं पदं विष्णोः स्वरूपमामनंति पुनःपुनः स्मरणेनाभ्यस्यंति । कीदृशाः—दौरात्म्यमहंममेति दौर्जन्यं विसृज्य नेतिनेति नैतदनुकूलं नैतदनुकूलमिति कृत्वा तत् तद्व्यतिरिक्तदेहगेहपुत्रादिकमहंममतास्पदं यद्वस्तु तत्क्रमेण त्यक्तुमिच्छवः, यतोऽनन्येष्वैकांतिकभक्तेष्वेव सौहृदं प्रीतिर्येषां तेऽतः समाहितैरेकाग्रचित्तैस्तैरेव भक्तैर्हृदा मनसा उपगुह्य ज्ञात्वाऽवसितं तद्वैष्णवं पदं निश्चितं नान्यैरिति विश्वनाथः ॥ ३२ ॥ एतत् प्रत्युक्तया नित्यापरोक्षं परमं पदमुपाधिविमुक्तं शुद्धस्वरूपम् । दौर्जन्यं दुर्जनतालक्षकम् ॥ ३३ ॥ एतद्वैष्णवपदमपराधे सति तिरोहितं भवेदतोऽपराधानुद्भवविधिमाह—अतिवादान् कटूक्तीः सहेतैव न तु तादृशमुत्तरं दद्यात् ॥ ३४ ॥ गुरुं श्रीव्यासम् । यद्यपि श्रीशुक एव तदुपदेष्टा तथापि श्रीकृष्णद्वैपायननतिसदुपदेशस्यापि तत्प्रसादमननादेवेति ध्येयम् । यद्वा—शास्त्रं समाप्य स्वेष्टदेवं भगवंतं नमति—नम इति । अध्यगां श्रीशुकादधिगतवानस्मीति ॥ ३५ ॥ हे सौम्येति—सोमवच्चित्तसंतापहरत्वेन प्रकाशस इति भावः । तत्र वेदविभागपुराणसंहिताविभागयोर्मध्ये ॥ ३६ ॥ तत्रेत्युक्तार्थमेव । हे ब्रह्मन्निति—त्वं तु जानास्येव लोकहितार्थमेवायं प्रश्न इति भावः । वेदकल्पतरोः फलं निरूप्य शाखा अपि संक्षेपत आह—समेति परमेष्ठिनो ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् यत्रनादे वृत्तिरोधादेकाग्रया बुद्ध्या ब्रह्म विभाव्यते चिंत्यते योगिभिरित्यप्यर्थः ॥ ३७ ॥ यद्ब्रह्मोपासनया स्वात्मतत्त्वानुसंधानेनात्मनो मलं माया विद्यादीशजीवोपाधितत्कार्यं च द्रव्यं समष्टिव्यष्टिदेहं क्रिया इंद्रियाणि कारकं कर्तृ अंतःकरणाख्यं धूत्वा तद्विविक्तं प्रत्यगभिन्नं ब्रह्मावगत्यापुनर्भवं मोक्षं यांतीति वार्थः ॥ ३८ ॥ अव्यक्तोऽस्फुटः, प्रभव उद्भवः ।

शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ॥ येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ४० ॥ स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः॥ स सर्वमंत्रोपनिषद्वेदबीजं सनातनम् ॥ ४१ ॥ तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ॥ धार्यंते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥४२॥ ततोऽक्षरसमाम्नायमसृजद्भगवानजः ॥ अंतस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ४३ ॥

दिति । नपुंसकत्वं लिंगशब्दविशेषणत्वात् । लिंगं गमकम् ॥ ३९ ॥ कोऽसौ परमात्मा तमाह । शृणोतीति । इमं स्फोटमव्यक्तमोंकारम् । ननु जीव एव तं शृणोतु नेत्याह । सुप्तश्रोत्रे कर्णपिधानादिनाऽवृत्तिकेऽपि श्रोत्रे सति । जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता । तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः । ईश्वरस्तु नैवम् । यतः शून्यदृक् । शून्येऽपींद्रियवर्गे दृग् ज्ञानं यस्य । तथाहि सुप्तो यदा शब्दं श्रुत्वा प्रबुध्यते न तदा जीवः श्रोता लीनेंद्रियत्वात् । अतो यस्तदा शब्दं श्रुत्वा जीवं प्रबोधयति स यथा परमात्मैव तद्वत् । कोऽसावोंकारस्तं विशिनष्टि सार्धेन । येन वाग्बृहती व्यज्यते । यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिरभिव्यक्तिः ॥ ४० ॥ किंच स्वधाम्नः स्वस्याश्रयः कारणं यद्ब्रह्म तस्य ।किंच परमात्मांशभूतसमस्तदेवतावाचकोऽपीत्याशयेनाह । स इति । सर्वमंत्राणामुपनिषद्रहस्यं सूक्ष्मरूपमित्यर्थः । तत्र हेतुः । वेदानां बीजं कारणम् । बीजत्वेऽप्यविकारितामाह । सनातनं सदैकरूपम् । तस्य ब्रह्मरूपत्वात् ॥ ४१ ॥ इदानीं ततः सर्वप्रपंचोत्पत्तिप्रकारमाह । तस्य हीति । त्रयस्त्रिसंख्यायुक्ता भावा यैरकारोकारमकारैर्धार्यंते तत्कारणत्वात् । तानेवाह । गुणाः सत्त्वादयः नामानि ऋग्यजुःसामानि । अर्था भूर्भुवःस्वर्लोकाः । वृत्तयो जाग्रदाद्याः॥४२॥ ततस्तेभ्यो वर्णेभ्यः

तदेवाऽव्यक्तोत्पत्तिकत्वमेव । तमेव प्रणवमेव । गमकं ज्ञापकम् । ततो नादात् घंटानादतुल्यनादात् । त्रिभिरकाराद्यैर्वर्तते त्रीनकारादीन् वृणोत्यादत्ते वेति त्रिवृत् । त्रिवृदकारोकारमकारात्मक ओंकारो योऽव्यक्तस्य प्रमाणांतरागम्यस्य ब्रह्मणः प्रभवोऽपरोक्षो यस्मात्स स्वराट् स्वतः प्रमाणभूतः भगवतो ब्रह्मणः प्रत्यगात्मनश्च परलिंगम् । अकारोकारमकारवाच्यविश्वतैजसप्राज्ञविलापनेनानुच्चार्यार्द्धमात्रावबोध्यवागगोचरब्रह्मज्ञापकम् ॥ ३९ ॥ अत्राक्षिपति—नन्विति । इति भाव इति—न हि जीव इंद्रियं विनैन्द्रियिकमधिगच्छत्यन्यथांधादे रूपादिज्ञानं स्यादिति तात्पर्यम् । नैवं जीवसदृशो नेत्यर्थः । यद्वा—यः पुरुष इमं स्फुट्यतेऽनेनेति स्फोटं सुप्तश्रोत्रे मुद्रितकर्णे शृणोति स शून्यदृक् सूक्ष्मदर्शी स्यात् । तमेव विशेषयति—यतः स्फोटात्सर्वा वाग्व्यज्यते प्रकटीभवति यन्निमित्तिका हृदयाकाशे आत्मनो व्यक्तिः । प्रणवरूपस्फोटोपासनयैव हृद्यात्माविर्भावो भवतीत्यर्थः ॥ ४० ॥ अन्यदाधिक्यमाह—किञ्चेति । न केवलं ब्रह्मवाचक एवापि त्वन्येषामपीत्याह—किञ्चेति । इत्यर्थ इति—तत्तद्देवबोधकाखिलमंत्रसूक्ष्मरूपमिदमेवाक्षरमिति भावः । तत्र सूक्ष्मरूपत्वे । यद्वा—स्वधाम्नः स्वप्रकाशस्यापि ब्रह्मणः परमात्मनोऽपि साक्षादावरणबाधेन वाचको बोधकः । स एव सर्वधर्मागममंत्राणां ब्रह्मव्यंजकोपनिषदां च सनातनं बीजम्, स्वस्य धामाश्रयो यद्ब्रह्म तस्य परमात्मनोऽपि भगवतश्च वाचकः "ॐमित्येतद्ब्रह्मणो दिष्टं नाम" इति श्रुतेः ॥ ४१ ॥ ततः प्रणवात् । तस्य प्रणवस्य । तत्कारणत्वात् तेषां भावानां कारणत्वात् । धार्यंते स्वेभ्य उत्पाद्यंते । तानेव भावान्पदार्थान् । एतच्चोपपादितमधस्तात् । यैस्त्रिभिर्वर्णैस्त्रयो भावा वेदा धार्यंते, यैश्च त्रिभिर्वेदैर्गुणाः ओजःप्रसादादयो नामानि शब्दा अर्था वाच्यलिंगा वृत्तयोऽभिधालक्षणा व्यंजनाः यथा वटबीजेनैव वटवृक्षो धार्यते तेन च स्कंधशाखापत्रपुष्पफलादयश्च ॥ ४२ ॥ तेभ्योऽकारादिभ्यः । अक्षराणां समाम्नायम् "अ इ उ ण्" इत्यादिसूत्रचतुर्दशरूपम् । "येनाक्षरसमाम्नायमधिगम्य महेश्वरात्" इत्यत्र चतुर्दशसूत्र्यामेवाक्षरसमाम्नायपदस्य प्रयुक्तत्वात् । यद्वा—मातृकारूपम् । तत्प्रकारश्चास्मत्प्रणीतमातृकाविलासे

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ॥ ४४ ॥ पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान् ॥ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ ४५ ॥ ते परंपरया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ४६ ॥ क्षीणायुषः क्षीणसत्त्वान्दुर्मेधान्वीक्ष्य कालतः ॥ वेदान्ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतनोदिताः ॥ ४७ ॥ अस्मिन्नप्यंतरे ब्रह्मन् भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ ४८ ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः ॥ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ ४९ ॥ ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ॥ चतस्रः संहिताश्चक्रे मंत्रैर्मणिगणा इव ॥ ५० ॥ तासां स चतुरः शिष्यानुपाहूय महामतिः ॥ एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ ५१ ॥ पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ॥ वैशंपायनसंज्ञाय निगमाख्यं यजुर्गणम् ॥ ५२ ॥

अक्षराणां समाम्नायं समाहारम् । तमेवाह । अंतस्था यरलवाः । ऊष्माणः शषसहाः । स्वरा अकाराद्याः । स्पर्शाः कादयः । ह्रस्वदीर्घाश्च आदिशब्दाज्जिह्वामूलीयादयः त एव लक्षणं स्वरूपं यस्य तम् ॥ ४३ ॥ विभुश्चतुर्मुखस्वरूपो भगवान् । असृजदिति पूर्वस्य वानुषंगः । चातुर्होत्रविवक्षया चत्वारो होत्रोपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं होत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षया ॥ ४४ ॥ पुत्रान्मरीच्यादीन् तान् वेदान् ब्रह्मकोविदान्वेदोच्चारणादिनिपुणान् ॥ ४५ ॥ एवं चतुर्योगेषु प्राप्ताः । द्वापरादौ द्वापरमादिर्यस्य तदंत्यांशलक्षणस्य कालस्य तस्मिन् । द्वापरांतवेदविभागप्रसिद्धेः शंतनुसमकालं व्यासावतारप्रसिद्धेश्च । व्यस्ता विभक्ताः ॥ ४६ ॥ तत्र हेतुः । क्षीणायुषो जनान् तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशंक्याह । हृदिस्थेति ॥ ४७ ॥ एवं सामान्यतो वेदविभागक्रममुक्त्वा वैवस्वतमन्वंतरे विशेषतो निरूपयितुमाह । अस्मिन्नपीति ॥ ४८ ॥ अंशो माया तस्या अंशः सत्त्वं तस्य कलयांशेनावतीर्णः सन् ॥ ४९ ॥ चातुर्विध्यमेवाह । ऋगिति । ऋगादिमंत्राणां राशीन्वर्गशस्तत्तत्प्रकरणभेदैरुद्धृत्य यथानेकविधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियंते तद्वदुद्धृत्य तैर्मंत्रैश्चतस्र ऋगादिसंहिताश्चक्रे ॥ ५० ॥ तासां संहितानां मध्ये एकैकाम् ॥ ५१ ॥ ऋक्समुदायरूपत्वा

द्रष्टव्यः ॥ ४३ ॥ तेनाक्षरसमाम्नायेन । असौ ब्रह्मा । व्याहृतयो भूर्भुवःस्वरिति व्यस्तास्समस्ताश्च । तत्सहितान् व्यक्तोंकारसहितान् । सोंकारानित्युक्तेरोंकारसहितानामेव सर्वेषां यज्ञादौ प्रयोगं सूचयति ॥ ४४ ॥ ते तु मरीच्यादयस्तु । स्वपुत्रेभ्यः कश्यपादिभ्यः ॥ ४५ ॥ ते वेदाः ॥ ४६ ॥ तत्र वेदविभागे । अत्राक्षिपति–तर्हीति । न तेषां स्वातंत्र्यमिति ध्वनितं–हृदिस्थेत्यादिना ॥ ४७ ॥ अस्मिन्नपि श्राद्धदेवमन्वंतरेपि ॥ ४८ ॥ अंशेषु स्वांशेषु जीवेषु स्वांशेन बोधेन यत्कं सुखं तत्स्वरूपाविर्भावेन लाति तया कृपयावतीर्ण इति वार्थः ॥ ४९ ॥ ननु ब्रह्मणैव चतुर्भिर्मुखैश्चत्वारो वेदा आदावेव कृतास्तत्कथमुच्यते ' वेदं चक्रे चतुर्विधम् ' इति तत्राह–ऋगिति । राशीन् कृत्वा तत्तत्प्रकरणभेदैर्मणिगणा इव, यथा मणिक्षेत्रेपि पद्मरागहीरकादयः पृथक्पृथगुद्धृत्य कूटं क्रियंते तद्वदिति भावः ॥ ५० ॥ विशेषेण भातीति विभुः सर्वज्ञः ॥ ५१ ॥ ५२ ॥

१ ब्रह्मा ।

साम्नां जैमिनये प्राह तथा छंदोगसंहिताम् ॥ अथर्वांगिरसीं नाम स्वशिष्याय सुमंतवे ॥५३॥ पैलः स्वां संहितामूच इंद्रप्रमितये मुनिः ॥ बाष्कलाय च सोप्याह शिष्येभ्यः संहितां स्वकाम् ॥ ५४ ॥ चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ॥ पराशरायाग्निमित्रे इंद्रप्रमितिरात्मवान् ॥ ५५ ॥ अध्यापयत्संहितां स्वां मांडूकेयमृषिं कविम् ॥ तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥ ५६ ॥ शाकल्यस्तत्सुतः स्वां तु पंचधा व्यस्य संहिताम् ॥ वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥ ५७ ॥ जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ॥ बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥ ५८ ॥ बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ॥ चक्रे बालायनिर्भज्य काशारश्चैव तां दधुः ॥ ५९ ॥ बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छंदसां व्यासं सर्वपापैः प्रमुच्यते ॥ ६० ॥ वैशंपायनशिष्या वै चरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांहः क्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥ याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत् ॥ चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥ ६२ ॥

ह्वृचाख्याम् । नितरां प्रश्लेषेण गद्यमानत्वान्निगदाख्यम् ॥ ५२ ॥ छंदस्सु गीयमानत्वाच्छंदोगाख्यां संहिताम् ॥ ५३ ॥ तत्र ऋग्वेदशाखाविभागमाह । पैल इति । स्वसंहिता द्विधा विभज्य इंद्रप्रमितये बाष्कलाय च ऊचे । स बाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य बोध्यादिभ्यः शिष्येभ्य आह । हे भार्गव इंद्रप्रमितिरपि स्वां संहितां स्वसुतं मांडूकेयमध्यापयामास । तस्य मांडूकेयस्य शिष्यो देवमित्रः ॥ ५४ ॥ ५५ ॥ ५६ ॥ तत्सुतो मांडूकेयसुतः । शाकल्यो वात्स्यादिषु पंचस्वधात् । तानध्यापयामासेत्यर्थः ॥ ५७ ॥ तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः । प्रतिशाखाभ्य उक्तसर्वशाखाभ्यः । बालायन्यादस्तामादधुरधीतवंतः ॥ ५९ ॥ ऋक्शाखोपसंहारपूर्वकं तच्छ्रवणफलमाह बह्वृचां इति । एतच्छंदसामेतेषां छंदसाम् ॥ ६० ॥ यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह वैशंपायनशिष्या इत्यादिना । चरकनामनिरुक्तिमाह । यच्चेरुरिति । यद्यस्माद्ब्रह्महत्यारूपमंहः क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं तच्चरणाच्चरका इत्यर्थः ॥ ६१ ॥ तच्छिष्यो वैशंपायनशिष्यः । अल्पसाराणामेतेषां चरितेन कियत् । सुदुश्चरमहं चरिष्यामीति ॥ ६२ ॥

साम्नां साम्रविनीम् ॥ ५३ ॥ तत्र चतुर्षु ॥ ५४ ॥ हे भार्गवेति—भृगुवंशजत्वात्त्वमप्येतं विभागं जानास्येवेति भावः । अग्निमित्र इति चतुर्थ्यर्थे सप्तमी । यद्वा—अग्निं मिमीते प्रामाण्येन स्थापयतीत्यग्निमिता तस्मै ॥ ५५ ॥ ५६ ॥ इत्यर्थ इति—अध्यापनमेवात्र धारणपदार्थ इति भावः ॥ ५७ ॥ ५८ ॥ ५९ ॥ व्यासं विभागम् ॥ ६० ॥ ब्रह्महत्याकारणमुक्तं विष्णुपुराणे—"ऋषिर्योऽद्य महामेरौ समाजे नागमिष्यति । तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ॥ पूर्वमेवं मुनिगणैः समयोऽभूत्कृतो द्विज ! वैशंपायन एकस्तु तं व्यतिक्रांतवांस्तदा ॥ स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत् । शिष्यानाह च भो शिष्या ब्रह्महत्यापहं व्रतम् ॥ चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ।" इति ॥ ६१ ॥ ६२ ॥

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ॥ विप्रावमंत्रा शिष्येण मदधीतं त्यजाश्विति ॥ ६३ ॥ देवरातसुतः सोपि छर्दित्वा यजुषां गणम् ॥ ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥ ६४ ॥ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ॥ तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥ ६५ ॥ याज्ञवल्क्यस्ततो ब्रह्मन्छंदांस्यधिगवेषयन् ॥ गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥ याज्ञवल्क्य उवाच ॥ ॐ नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भगवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७ ॥

विप्राणामवमंत्राऽवज्ञाकर्त्रा । मत्तोऽधीतमाशु त्यजेति ॥ ६३ ॥ देवरातसुतो याज्ञवल्क्यः ॥ ६४ ॥ छर्दितस्यादानं विप्ररूपेणानुचितमिति तित्तिराः पक्षिविशेषा भूत्वाऽऽददुः ततश्च तैत्तिरीया इति प्रसिद्धाः । सुपेशला अतिरम्याः । बहुवचनमवांतरभेदविवक्षया ॥ ६५ ॥ काण्वमाध्यंदिनादिशाखाप्रसंगमाह याज्ञवल्क्य इत्यादिना । गुरोर्वैशंपायनस्य व्यासेन विभज्यानुक्तत्वादविद्यमानान्यधिकानि गवेषयन्मृगयन्सूपतस्थे सम्यक् तुष्टाव । ईश्वरमृगादिवेदानाम् । तथाच श्रुतिः "ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः ॥ सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः" इति ॥ ६६ ॥ नमो भगवते तुभ्यमादित्याय । यो भगवानेक एवेमां लोकयात्रामनुवहतीत्यन्वयः । तदेव दर्शयति । अखिलजगतामात्मस्वरूपेणांतर्हृदयेषु कालस्वरूपेण च बहिरपि वर्तमान इति । अखिलजगतामित्यस्य प्रपंचः । चतुर्विधेति । हृदयांतर्वर्तित्वेऽपि जीववत्तेनोपाधिनाऽव्यवधीयमानोऽनाच्छाद्यमानः । कालस्वरूपेण चेत्यस्य प्रपंचः क्षणेति । क्षणलवादयो येऽवयवास्तैरुपचिताः संवत्सरास्तेषां गणेन प्रत्य

॥ ६३ ॥ ततो गुरुकुलात् ॥ ६४ ॥ तेषु यजुष्षु लोलुपतया लालसया मुनयोऽन्ये वैशंपायनशिष्या आददुर्जगृहुः । "न हि चेतः सुकृतिनामकार्ये गच्छति क्वचित्" इति न्यायेन छर्दिता अपि मंत्रा अशुचितां न गता इति तद्ग्रहणे मुनिगणेच्छोत्पत्तेर्ज्ञायते । अत एवोक्तम्—सुपेशला इति शाखाविशेषणम् । "सुरम्ये पेशलः प्रोक्तः शुद्धे मृदुतरे तथा" इत्यभिधानचिंतामणोक्तेः सुष्ठु पेशला अतीवशोधकज्ञानोपयोगिपञ्चकोशादिनिर्णायकत्वेनातिशुद्धाः । न हि कदाचिद्भक्षितहेमगुलिका पुरीषमार्गनिर्गतोद्गीर्णा वाऽशुचितामेति किन्तु यावन्मलयोगं ततः क्षालनाद्यथा शुद्धा तथैव तित्तिरिरूपेण तदुपादानसमये एवान्नरूपेण छर्दितत्वात्तेष्वशुचित्वभ्रांत्यैव मुनिभिर्न ब्राह्मणरूपेण ते स्वीकृतास्तद्रूपत्यागोत्तरं सर्वे मुनयस्तान् जगृहुस्ते च मंत्राः कृष्णयजुष्ट्वेन प्रसिद्धा यज्ञादिषूपयुज्यंते, न ह्यशुचिमंत्रैर्यज्ञः प्रतायत इति वेदस्य साक्षान्नारायणरूपत्वादुच्चावचता न भवति "नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः" इत्यष्टमे मत्स्यचरितोक्तेः 'वांते यातयामः' इति निघंटूक्तेस्तद्भिन्नोऽयातयामस्तत्कामनया श्रीयाज्ञवल्क्योक्तं सर्वे देवपूज्यम् "ब्रह्मेन्द्रनारायणरुद्रवंदितः स नः सदा यच्छतु मंगलं रविः" इत्युक्तेस्तुष्टावेति वैष्णवादौ ॥ ६५ ॥ सूर्यो देवः ईयते प्रतीयते महीयते पूज्यते । ततो वैशंपायनात् ॥ ६६ ॥ चतुर्विधेति—जरायुजांडजस्वेदजोद्भिद्भेदाज्जीवाश्चतुर्विधाः । यथा घटाद्युपाधि

यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपनमंडलम् ॥ ६८ ॥ य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइंद्रियासुगणाननात्मनः स्वयमात्मांतर्यामी प्रचोदयति ॥ ६९ ॥ य एवेमं लोकमतिकरालवदनांधकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकंपया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥ ७० ॥ परित आशापालैस्तत्र तत्र कमलकोशांजलिभिरुपहृतार्हणः ॥७१॥ अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ७२ ॥

ऽदमपामादानं शोषणं विसर्गो वृष्टिस्ताभ्याम् । अनेन गायत्रीप्रथमपादोक्तवरेण्यताऽनुवर्णिता ॥ ६७ ॥ द्वितीयपादार्थानुवर्णनेन स्तौति यदुहेति । हे विबुधर्षभ हे सवितः यद ष्यदो भगवतस्तव मंडलं तपति तत्समभिधीमहीति सम्यगाभिमुख्येन ध्यायेम । पुनस्तस्यैव संबोधनम् । प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि दुःखानि तेषां बीजमज्ञानं च तेषामवभर्जन विनाशक हे तपनेति ॥ ६८ ॥ तृतीयपादेन स्तौति । य इहेति । भवान्स्थावरजंगमसमू हानां स्वाश्रयाणां जीवानां मनइन्द्रियप्राणगणाननात्मनो जडान्स्वयमात्मैवांतर्यामी सन्प्रचोदयति प्रवर्तयति ॥ ६९ ॥ तृतीयपादमेव मंडलस्थपरतया व्याचक्षाणः स्तौति । य एवेति । य एक एव भगवानतिकरालवदनो योंधकारसंज्ञोऽजगरग्रहस्तेन गिलितमत एव मृतकमिव विचेतनं स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्रवणत्वं तदेव श्रेयस्तस्मि न्प्रवर्तयति । किंच यो भवानवनिपतिरिवाटति गच्छति ॥ ७० ॥ आशापालैरिंद्रादिभिः । कमलकोशयुक्तैस्तत्तुल्यैर्वांजलिभिरुपहृतार्हणो दत्तार्घः ॥ ७१ ॥ यत एवं

नाकाश इव परिच्छिन्न इव प्रतीयते इति वा ॥ ६७ ॥ आदरेण प्रीत्युत्पादनार्थमामंत्रयति–हे विबुधर्षभेति । सर्वदेवश्रेष्ठत्वात्त्वामहं स्तौमीति भावः । सवितारिति–सर्वविश्वोत्पादकस्य तव मम सर्ववेदज्ञानो त्पादनं न दुर्घटमिति भावः । ज्ञानोत्पादनं ह्यज्ञाननाशं विना न संभवतीति चेत्तत्राह–अनुसवनमित्यादि । अत आरभ्यावभर्जनांतां संबुद्धिमाह–सेवकाज्ञाननाशद्योतिकाम् । अज्ञानस्य तमोरूपत्वा त्तद्धननं प्रकाशेन भवतीति चेत्तद्द्योतिकां संबुद्धिं पुनराह–तपनेति । 'तप–ऐश्वर्ये' धातुः । ऐश्वर्यं चात्र प्रकाशलक्षणमेव सर्वविलक्षणं तवैवातः सर्वदेवाधिकस्त्वमेवासीति भावः ॥ ६८ ॥ ६९ ॥ अत एवांधकाराज गरगिलितत्वादेव । प्रत्यक्प्रवणत्वं तदेकपरत्वम् । अन्यदाधिक्यमाह–किंचेति ॥ ७० ॥ ७१ ॥ हे भगवन्निति–त्वमेव साक्षाद्भगवानिति भावः । तत्र हेतुः–त्रिभुवनगुरुभिरिति । " ब्रह्मेंद्रनारायणरुद्रवंदितः स नस्सदा

सूत उवाच ॥ एवं स्तुतःस भगवान् वाजिरूपधरो हरिः ॥ यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥७३॥ यजुर्भिरकरोच्छाखा दशपंच शतैर्विभुः॥ जगृहुर्वाजसंन्यस्ताःकाण्वमाध्यंदिनादयः॥७४॥जैमिनेः सामगस्यासीत्सुमंतुस्तनयो मुनिः ॥ सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥७५॥ सुकर्माचापि तच्छिष्यः सामवेदतरोर्महान् ॥ सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः ॥७६॥ हिरण्यनाभः कौशल्यः पौष्यंजिश्च सुकर्मणः ॥ शिष्यौ जगृहतुश्चान्य आवंत्यो ब्रह्मवित्तमः ॥ ७७ ॥ उदीच्याः सामगाः शिष्या आसन्पंचशतानि वै ॥ पौष्यंज्यावंत्ययोश्चापि तांश्च प्राच्यान् प्रचक्षते ॥ ७८ ॥ लौगाक्षिर्मांगलिः कुल्यः कुशीदः कुक्षिरेव च ॥ पौष्यंजिशिष्या जगृहुः संहितास्ते शतंशतम् ॥ ७९ ॥

भूतस्त्वमथातः ह स्फुटमयातयामान्यन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोऽहमुपसरामि भजामि ॥ ७२ ॥ एवं स्तुतः प्रसादितश्च ॥ ७३ ॥ पंचदशशाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत् । स तैरिति पाठे स एष याज्ञवल्क्यस्तैर्यजुर्भिरकरोदिति । जगृहुरधीतवंतः । रविणाऽश्वरूपेण वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा संन्यस्तास्त्यक्ताः शाखा वाजसनीसंज्ञास्ता शाखा इति वा ॥७४॥ सामशाखाविभागमाह । जैमिनेरिति तत्सुतः सुमंतसुतः । ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह ॥७५॥ तच्छिष्यो जैमिनेः शिष्यः । महानतिमेधावी । सहस्रसंहितारूपं भेदं चक्रे । साम्नां तं संहिताभेदम् । ततस्तदनंतरम् । सुकर्मणः शिष्य एकः कौशल्यो हिरण्यनाभः पौष्यंजिर्नामैकस्तौ जगृहतुः । आवंत्यश्चान्यस्तस्यैव शिष्यः सोऽपि जग्राह ॥ ७६ ॥ ७७ ॥ पौष्यंज्यावंत्ययोरपि चकाराद्धिरण्यनाभस्यापि पंचशतानि शिष्या आसन् । ते तावतीः शाखा यथायथं जगृहुः।तानुदीच्यान्सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः । यथैवोक्तं वैष्णवे।"उदीच्यसामगाः शिष्यास्तस्य पंचशतं स्मृताः॥ हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तमैः॥गृहीतास्तेऽपि चोच्यंते पंडितैः प्राच्यसामगाः" इति॥ ७८॥ पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यांतरैः शाखाबाहुल्यं दर्शयति । लौगाक्षिरिति

यच्छतु मंगलं रविः " इति भविष्योक्तेः ॥ ७२ ॥ वाजी तुरंगस्तद्रूपधरो हरिः सूर्यः " हरिरिंद्रो हरिर्भानुर्हरिर्विष्णुर्हरिर्मरुत् " इत्यभिधानात् ॥ ७३ ॥ अननुस्वारसकारे तु प्रथमा द्वितीयार्थे ॥ ७४ ॥ ७५ ॥ ॥ ७६ ॥ कौशल्यः कोशलवासी । आवंत्योऽवंतीभवः ॥७७॥ इत्यर्थ इति–वक्ष्यमाणवैष्णववाक्यप्रामाण्यादिति भावः । तदेवाह–यथैवोक्तमिति । तस्य हिरण्यनाभस्य । तावंत्यः पंचशतसंख्याकाः ॥ ७८ ॥'शतमृतम्'

कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ॥ शिष्य ऊचे स्वशिष्येभ्यः शेषा आवंत्य आत्मवान् ॥ ८० ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः ॥६॥ सूत उवाच॥अथर्ववित्सुमंतुश्च शिष्यमध्यापयत्स्वकाम्॥संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान्॥१॥ शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ॥ वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥ कुमुदः शुनको ब्रह्मञ्जाजलिश्चाप्यथर्ववित् ॥ २ ॥ बभ्रुः शिष्योऽथांगिरसः सैंधवायन एव च ॥ अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे ॥३ ॥ नक्षत्रकल्पः शांतिश्च कश्यपांगिरसादयः ॥ एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ॥ ४ ॥ त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ॥ वैशंपायनहारीतौ षड् वै पौराणिका इमे ॥ ५ ॥ अधीयंत व्यासशिष्यात्संहितां मत्पितुर्मुखात् ॥ एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥ ६ ॥

द्वाभ्याम्॥७९॥कृतो नाम हिरण्यनाभस्य शिष्यः स्वशिष्येभ्य ऊचे । शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्य ऊच इति॥८०॥इति श्रीमद्भागवते म० द्वादशस्कंधे टीकायां षष्ठोऽध्यायः ॥६॥ सप्तमेऽथर्वविस्तारः पुराणव्यसनं ततः ॥ पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥ १ ॥ क्रमप्राप्तमथर्ववेदविभागमाह । अथर्ववि दिति । शिष्यं कबंधनामानम् । स्वकां स्वकीयां संहिताम् । सोऽपि शिष्योऽपि तां द्विधा विभज्य । तदुक्तं वैष्णवे ।"अथर्ववेदं स मुनिः सुमंतुरमितद्युतिः ॥ शिष्यमध्यापयामास कबंधं सोऽपि च द्विधा ॥ कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान् " इति ॥ १ ॥ तत्र वेददर्शः स्वसंहितां चतुर्धा विभज्य चतुरः शिष्यानध्यापयामास । पथ्यश्च त्रिधा विभज्य त्रीनित्याह सार्धेन । शौक्लायनिरिति ॥ २ ॥ अंगिरसः शुनकस्य शिष्यो बभ्रुः सैंधवायनश्च । तदुक्तम् "शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे।द्वितीयां संहितां प्रादात्सैंधवायनसंज्ञिने " इति सावर्ण्याद्याः सैंधवायनादीनां शिष्याः ॥ ३ ॥ नक्षत्रकल्पः शांतिकल्पश्चेति द्वौ । तदुक्तम् " नक्षत्रकल्पो वेदानां संहितानां तथैव च ॥ चतुर्थः स्यादांगिरसः शांतिकल्पश्च पंचमः " इति । नक्षत्रकल्पादीनां कर्तारस्तन्नामभिरुच्यंते ॥ ४ ॥ ५ ॥ मत्पितुर्मुखादिति । प्रथमं व्यासः षट् संहिताः कृत्वा

इति पाठे ऋतं सत्यम्, स्वतः प्रमाणमित्यर्थः ॥ ७९ ॥ आत्मवान् ज्ञानी ॥ ८० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥ पुराणानां व्यसनं विभागः । भागवतश्रुतेरिति भगवान्व्यासस्तस्येमे शिष्या भागवताः पैलाद्यास्तेषां श्रुतिः श्रवणं तस्याः फलम् । यद्वा–' वेदो नारायणः साक्षात् ' इत्युक्तेर्भगवतो वेदस्यायं विभागो भागवतस्तस्य श्रुतेः फलं, तच्चाध्यायांतिमश्लोकेन ' ब्रह्मतेजोविवर्द्धनम् ' इति वक्ष्यत्येव ( १ ) । वैष्णवे विष्णुपुराणे । तदेतच्छ्लोकोक्तं वृत्तमुक्तम् ॥ १ ॥ तत्र द्वयोर्मध्ये । हे ब्रह्मन्निति संबुद्धिरुक्ताभिप्राया ॥ २ ॥ ३ ॥ तदुक्तमित्यादि वाक्यं विष्णुपुराणीयमेव । कल्पशब्दस्य प्रत्येकं सम्बंधः । वेदकल्पः, संहिताकल्पः, आंगिरसकल्प इति । नक्षत्रकल्पो नक्षत्रादिपूजाविधिः, वेदकल्पो वैतानिकब्रह्मत्वादिविधिः, संहिताकल्पः संहिताविधिः, आंगिरसकल्पोऽभिचारादिविधिः, शांतिकल्पोऽश्वगजाद्यष्टादशमहाशान्त्यादिविधिरिति तट्टीका च ॥ ४ ॥ इमे इति बुद्धिसन्निहितत्वात् ॥ ५ ॥ एकैकामिति–त्रिभिस्त्रिभिर्मिलित्वैकत्वम् । ' त्रिषट् ' इति वक्ष्यमाणात् । तच्च–' ब्राह्मं पाद्मं वैष्णवम् ' इति मिलित्वैकादिरूपाम् ।

कश्यपोहं च सावर्णी रामशिष्योऽकृतव्रणः ॥ अधीमहि व्यासशिष्याच्चतस्रो मूलसंहिताः ॥ ७ ॥ पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ॥ शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ८ ॥ सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षांतराणि च ॥ वंशो वंश्यानुचरितं संस्थाहेतुरपाश्रयः ॥ ९ ॥ दश भिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ॥ केचित्पंचविधं ब्रह्मन्महदल्पव्यवस्थया ॥ १० ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ॥ भूतसूक्ष्मेंद्रियार्थानां संभवः सर्ग उच्यते ॥ ११ ॥

मत्पित्रे रोमहर्षणाय प्रादात् । तस्य च मुखादेते त्रय्यारुण्यादय एकैकां संहितामधीयंत । एतेषां षण्णां शिष्योऽहं ताः सर्वाः समधीतवान् ॥ ६ ॥ रामशिष्यो योऽकृतव्रणः एवं चत्वारो वयम् । मूलसंहिता इत्यनेन ततः संहिताबाहुल्यं सूचितम् ॥ ७ ॥ शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति । पुराणेति ॥ ८ ॥ अस्य विश्वस्य । "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥ मन्वंतरेशानुकथा निरोधो मुक्तिराश्रयः" इत्यत्रोक्ते स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते । अंतराणि मन्वंतराणि वंशो वंश्यानुचरितमितीशानुकथाः।संस्था निरोधः । अनेनैवात्यंतिकलयरूपा मुक्तिरप्युक्ता । हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः ॥९॥ दशभिरेतैर्लक्षणैरशेषैर्युक्तं महापुराणं विदुः । केचित्पंचविधम् । "सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च । वंश्यानुचरितं चेति पुराणं पंचलक्षणम्॥" इति महत्पुराणमल्पं चेति व्यवस्थया । यत्र दशापि लक्षणानि पृथक्पृथङ् निरूप्यन्ते तन्महापुराणम् । यत्र त्वन्येषां पंचस्वेवांतर्भावस्य विवक्षा तदल्पमिति व्यवस्थयेत्यर्थः ॥ १० ॥ सर्गादिलक्षणानि व्याचष्टे अव्याकृतेत्यादिना । अव्याकृतस्य प्रधानस्य गुणानां क्षोभाद्यो महांस्तस्माद्यस्त्रिवृदहंकारस्तस्माद्भूतमात्राणां सूक्ष्माणामिंद्रियाणां च तदर्थानां च

अवांतरसंहिता तु क्वचिदेका, यथा श्रीभागवतस्य परमहंससंहितात्वम्, क्वचिदेकैकस्यैव विभागशः । यथा—स्कांदस्य सनत्कुमारप्रोक्तसंहितानामादिका, श्रीभागवतस्य श्रीशुकात्तु पश्चाद्व्यक्तिः सूर्यादेव यजुर्भागस्य वाजसनेयस्यादौ व्यक्तत्वात् ॥ ६ ॥ कश्यपोऽहमुग्रश्रवाः सावर्णिरकृतव्रणश्चतुर्थ एते चत्वारो वयमित्यर्थः । मूलत्वमेषामितिहासापेक्षया ज्ञेयम् " अष्टादश पुराणानि कृत्वा सत्यवतीसुतः । भारतं कृतवान्पश्चात् " इति मात्स्यात् । " ब्राह्मी भागवती शैवी वैष्णवी च प्रकीर्तिताः । चतस्रः संहिताः पुण्या धर्मकामार्थमोक्षदाः ॥" इति । क्वचित्पञ्चोक्ताः ।" ब्रह्मणः स्युः शिवस्यापि प्रह्लादस्यापि संहिताः । गौतमस्य कुमारस्य संहिताः पञ्च वर्णिताः ॥ " । क्वचित् षडुक्ताः—" आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता । तृतीया शांकरी विप्राश्चतुर्थी वैष्णवी तथा ॥ तत्परा संहिता ब्राह्मी सौरांत्या परिकीर्तिता । " "अन्या अपि संहितास्तु विज्ञेया मुनिनिर्मिताः । कौशिकी संहिता मुख्या वासिष्ठी मानवी तथा ॥ गर्गादिमा च सा पाराशरी वैयासकी तथा । हनुमत्संहिता ज्ञेया तथा सौदर्शनी मता ॥" इति सर्वार्थचिंतामण्युक्तेः । व्यासशिष्यान्मत्पितू रोमहर्षणात् ॥ ७ ॥ वेद एव शास्त्रं तदनुसारतो यथा वेदे पुराणलक्षणमुक्तं तदनतिलंघ्यैवेह वर्णयामीत्यर्थः ॥ ८ ॥ 'पोषणं तदनुग्रहः' इति पूर्वलक्षितं पोषणमेवात्र रक्षाशब्देनोच्यते, तां व्याचष्टे ॥ ९ ॥ इत्यर्थः इति—अंतर्भावस्तु स्वबुद्ध्यैव सर्गे रक्षायाः, प्रतिसर्गे संस्थाया इत्येवं रीत्या यथायथमनुसंधेयमिति वंशवंशानुचरितयोरीशकथायामन्तर्भावमिति भावः ॥ १० ॥ इत्यर्थ इति—विसर्गस्य पृथगुपादानात्सर्गपदेन कारणसृष्टिरेवात्र ज्ञेयेति

पुरुषानुगृहीतानामेतेषां वासनामयः ॥ विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥ १२ ॥ वृत्तिर्भूतानि भूतानां चराणामचराणि च ॥ कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥ १३ ॥ रक्षाऽच्युतावतारेहा विश्वस्यानु युगेयुगे ॥ तिर्यङ्मर्त्यर्षिदेवेषु हन्यंते यैस्त्रयीद्विषः ॥ १४ ॥ मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंशावतारश्च हरेः षड्विधमुच्यते ॥१५॥ राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः॥ वंश्यानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ १६॥ नैमित्तिकः प्राकृतिको नित्य आत्यंतिको लयः ॥ संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः ॥१७॥ हेतुर्जीवोस्य सर्गादेरविद्याकर्मकारकः ॥ यं वानुशायिनं प्राहुरव्याकृतमुतापरे ॥ १८ ॥

स्थूलानां देवतानां च संभवः सर्गः कारणसृष्टिसर्ग इत्यर्थः । उच्यत इति यथाऽपेक्षमुत्तरत्राप्यनुषंगः ॥ ११ ॥ विसर्गं व्याचष्टे । पुरुषेणेश्वरेणानुगृहीतानामेतेषां महदादीनां पूर्वकर्मवासनाप्रधानोऽयं समाहारः । कार्यभूतश्चराचरप्राणिरूपो बीजाद्बीजमिव प्रवाहापन्नो विसर्ग उच्यत इत्यर्थः ॥ १२ ॥ चराणां भतानां सामान्यतोऽचराणि । चकाराच्चराणि च वृत्तिः । तत्र नृणां स्वेन स्वभावेन कामाच्चोदनयाऽपि वा या नियता वृत्तिर्जीविका कृता सा वृत्तिरुच्यत इत्यर्थः ॥ १३ ॥ तिर्यङ्मर्त्यर्षिदेवेषु येऽच्युतावतारास्तेषामीहा लीला सा विश्वस्य रक्षोच्यत इत्यर्थः । यैरवतारैरिति समासान्निष्कृष्य कथंचित्संबंधः । त्रयीद्विषो दैत्याः ॥ १४ ॥ षड्विधं मन्वंतरमुच्यते । षड्विधत्वमेवाह । मनुरिति । मन्वादयः षडेते वर्गाः स्वस्वाधिकारेण यदा प्रवर्तंते तन्मन्वंतरमित्यर्थः ॥ १५ ॥ वंशमाह । राज्ञामिति । ब्रह्मणः सकाशात्प्रसूतिर्येषां शुद्धानामित्यर्थः । तेषामन्वयो वंशः तेषां वृत्तम् । ये च तद्वंशधरास्तेषां च वृत्तं वंशानुचरितमुच्यते ॥ १६॥ अस्य विश्वस्य । स्वभावतो मायातो निष्पन्नस्य । यद्वा मायातो यश्चतुर्विधो लय इति॥१७॥ अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः । सोऽत्र हेतुरुच्यत इत्यर्थः । तस्य निमित्ततामाह । अविद्यया कर्मकारकः कर्मकर्ता । जीवादृष्टप्रयुक्तत्वाद्विश्वसर्गादेः स तु तत्र हेतुरित्यर्थः । नन्वनुशयी निमित्तमिति केचित् । अव्याकृतमित्यपरे । तत्राह । यमिति । चैतन्यप्राधान्येनानुशयिनमुपाधिप्राधान्यविवक्षयाऽव्याकृतम् ॥ १८ ॥

भावः ॥ ११ ॥ इत्यर्थ इति–विशिष्टः सर्गो विसर्ग इति भावः ॥ १२ ॥ तत्र सर्वजीवेषु । स्वभावेन व्रीह्यादीनि कामनया, फलादीनि चोदनया, विधिना पुरोडाशादीनि । इत्यर्थ इति–न तु सामान्यतोऽभक्ष्यभक्षणमपीति भावः । तत्र काम्या वृत्तिर्गर्ह्या, मांसाशनलशुनपलांड्वादिष्वपि तद्गुणश्रवणेन कामनोत्पत्तेः ॥ १३ ॥ इत्यर्थ इति–न तु गवाश्वादिरक्षणमात्रमेव रक्षापदार्थ इति भावः । अवतारेहाऽवतारकारणं सैव रक्षा । कुत इत्यत आह–यैरिति । समासान्निष्कृष्य कथंचिदगत्या । यथा–" भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् " इत्यत्र प्रमुखत इत्यस्य विवक्षावशान्महीक्षितामित्यनेन संबंधस्तद्वदत्रापि । यद्वा–" यस्यैते राजमातंगास्तस्यैवैते तुरंगमाः " इति बुद्धिस्थग्राहकत्वमपि त्यदादीनामिति ज्ञेयम् । हन्यन्त इति–दुष्टनिग्रहात्स्वभक्तरक्षणमेव रक्षेत्यागतम् । उपलक्षणमेतदन्यदापि महाभयात्स्वभक्तरक्षणं रक्षोच्यतेऽत एव षष्ठेऽजामिलादिभक्तानां रक्षोक्ता ॥ १४ ॥ इत्यर्थ इति–एषां प्रवृत्तिकाल एव मन्वंतरमिति भावः ॥ १५ ॥ इत्यर्थ इति–इदं चकारेण ज्ञेयमिति भावः । वृत्तं शीलम् । तद्वंशधराः प्रियव्रतध्रुवपृथ्वादयः ॥ १६ ॥ स्वस्यैव शक्तिरूपेण भवनं स्वभावो माया न केवलं मायातो लय एव किन्तु प्रलयोऽपीत्याह–यद्वेति । " अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव " इति श्रीमुखोक्तेः ॥ १७ ॥ इत्यर्थ इति–जीव एव स्वकर्मद्वारा सृष्टि

व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ॥ मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥ १९ ॥ पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु ॥ बीजादिपंचतांतासु ह्यवस्थासु युतायुतम् ॥ २० ॥ विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् ॥ योगेन वा तदात्मानं वेदेहाया निवर्तते ॥ २१ ॥ एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ॥ मुनयोऽष्टादश प्राहुः क्षुल्लकानि महांति च ॥ २२ ॥ ब्राह्मं पाद्मं वैष्णवं च शैवं लैंगं सगारुडम् ॥ नारदीयं भागवतमाग्नेयं स्कांदसंज्ञितम् ॥ २३ ॥ भविष्यं ब्रह्मवैवर्तं मार्कंडेयं सवामनम् ॥ वाराहं मात्स्यं कौर्मं च ब्रह्मांडाख्यमिति त्रिषट् ॥ २४ ॥

अपाश्रयमाह । व्यतिरेकेति । जाग्रदादिष्ववस्थासु जीवतया वर्तत इति जीववृत्तयो विश्वतैजसप्राज्ञास्तेषु मायामयेषु साक्षितयाऽन्वयः समाध्यादौ च व्यतिरेको यस्य तद्ब्रह्म संसारप्रतीतिबाधयोरधिष्ठानावधिभूतमपाश्रय उच्यत इत्यर्थः ॥ १९ ॥ एतदेव सदृष्टांतं प्रपंचयति । पदार्थेषु घटादिषु द्रव्यं मृदादि यथा युतमन्वितमयुतं च बहिरप्यवस्थानात् । रूपनामसु च सन्मात्रं सत्तामात्रं यथा । एवं बीजं गर्भाधानमादिर्यासां पंचतांतो यासां तासु देहावस्थासु नवस्वप्यधिष्ठानत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रय इति ॥ २० ॥ एवं दशापि लक्षणानि व्याख्याय "दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयंति महात्मानः" इति यदुक्तं तदाह । विरमेतेति । यदा सर्गादीनां मायामयत्वानुसंधानेन वामदेवादेरिव स्वयमेव चित्तं विरमेत । इहैवानुष्ठितेन योगेन वा देवहूत्यादिवत् । तदा विक्षेपाभावादात्मानं वेद । तदा चाविद्यानिवृत्तेरीहायाः संसाररूपाया निवर्तत इत्यर्थः ॥ २१ ॥ पुराणविभागप्रस्तावेन तल्लक्षणादिप्रासंगिकमुक्त्वा प्रस्तुतमाह । एवंविधैर्लक्षणैर्लक्ष्याणि ॥ २२ ॥ २३ ॥ त्रिषड

कारणमिति भावः । तस्य जीवस्य । इत्यर्थ इति—जीवसमुदायसुखदुःखप्राप्तये तं हेतुं कृत्वा जगतः सृष्ट्यादिकमस्तीति भावः । अत्राशंकते—नन्विति । यं जीवम् । उपाधिः प्रकृतिः।चक्रवर्तिकारस्तु—अस्य सर्गादेर्जीवः कारणं स चाविद्यया कर्म कर्ता जीवार्थमेव भगवता विश्वस्य कृतत्वाज्जीवो निमित्तमिति भावः । अत एव यमनुशयिनं मायिकोपाधिमनुशयानं मायिकशरीरवरमेवैके प्राहुः । अपरभक्तास्तु—आविद्यककर्मकर्तारं जीवं साधुसंगवशाद्भक्तिमार्गस्थत्वे सति अव्याकृतमप्राकृतं चिन्मयपार्षदशरीरवन्तमप्याहुः । अप्यर्थे उत् शब्दः । तदुक्तं नारदेन—"शुद्धां भागवतीं तनुम् । आरब्धकर्मनिर्वाणो न्यपतत्पांचभौतिकः" इति।वेदस्तवारंभेपि—"बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थञ्च आत्मने कल्पनाय च ॥" इति । आत्मनेऽकल्पनाय बुद्धीन्द्रियमनःप्राणान्संप्रापयितुमिति तत्रार्थः । एतन्मत एव नवमं लक्षणं पूर्वत्रोक्तम् । "मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः" इति विशेषेण चिद्घनशरीरत्वेनावस्थितिरिति तत्र व्याख्येति विश्वनाथः ॥ १८ ॥ समाध्यादाविहादिना मूर्च्छाग्रहः । समाधौ स्वरूपावस्थानेन मूर्च्छायां प्रतीत्यभावेन च व्यतिरेकः ॥ १९ ॥ एतदेवाऽन्वयव्यतिरेकत्वमेव । रूपनामस्विति—समीपस्थेन मेरुरयमित्युक्ते मेरुरूपे सत्तान्वयः, दूरस्थेन मेरुरित्युक्ते तु मेरुदर्शनाभावान्मेरुनाम्न्येव सत्तान्वयः । यद्वा—रूपनामयुक्तेषु पदार्थेष्विति योज्यम् । नवावस्थास्तु—" निषेकगर्भजन्मानि बाल्यकैशोरयौवनम् । वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥" इत्येकादशस्कंधे स्वयं भगवतैवोक्ताः । अधिष्ठानत्वेन युतं साक्षित्वेनायुतम् ॥ २० ॥ वृत्तित्रयं जाग्रदादित्रयम् । वामदेव ऋषिविशेषः । आदिना दत्तात्रेयादिग्रहः । द्वितीयादिनाऽऽसुर्यादिग्रहः । इत्यर्थ इति—ईहानिवृत्तेरेव मोक्षत्वात् "यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतोऽभवत्यत्र ब्रह्म समश्नुते ॥" इति श्रुतेरयं भावः ॥ २१ ॥ पुराविदः अतीतानागतविदो व्यासादयो मुनयः । क्षुल्लकानि श्लोकसंख्यया परिमितानि न त्वर्थतः, कानिचिदर्थतः शब्दतः फलतश्च महांति ॥ २२ ॥ २३ ॥ त्रिरावृत्ताः षट् त्रिषट् । शैवे तु—

ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः ॥ शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् ॥ २५ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे सप्तमो ऽध्यायः ॥ ७ ॥ शौनक उवाच ॥ सूत जीव चिरं साधो वद नो वदतां वर ॥ तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥ १ ॥ आहुश्चिरायुषमृषिं मृकंडतनयं जनाः ॥ यः कल्पांते उर्वरितो येन ग्रस्तमिदं जगत् ॥ २ ॥ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः ॥ न वाऽधुनापि भूतानां संप्लवः कोऽपि जायते ॥ ३ ॥ एक एवार्णवे भ्राम्य ददर्श पुरुषं किल ॥ वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥ ४ ॥

ष्टादश ॥ २४ ॥ उपसंहरति । ब्रह्मन्निति । मुनेर्व्यासस्य शिष्यादीनां च । ब्रह्मतेजो ब्रह्मवर्चसं तद्विवर्धनम् । श्रोतॄणामिति शेषः ॥ २५ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे तु तपश्चर्या मार्कंडेयस्य मोहकैः ॥ कामादिभिरसंमोहो नरनारायणस्तुतिः ॥ १ ॥ पुराणविभागप्रसंगेन पुराणकर्तुर्मार्कंडेयस्य चरितप्रश्नमाह । सूतेति । त्वमेव वक्तुं योग्य इत्याह । तमसि संसारे भ्रमतां पारदर्शनस्तन्निवर्तकः ॥ १ ॥ वक्तव्यमाह । आहुरिति । उर्वरितोऽवशिष्टः । येन कल्पांतेन । एतत्कथं घटत इत्येकः प्रश्नः ॥ २ ॥ प्रलयाभावादप्येतन्न घटत इत्याह । स वा इति । यतो भार्गवर्षभः । कोऽपि प्राकृतिको नैमित्तिको वा ॥ ३ ॥ अन्यदप्यघटित

“ ब्राह्मं पुराणं तत्राद्यं संहितायां विभूषितम् । श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥ पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम् । चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ॥ ततो भागवतं प्रोक्तं भागद्वयविभूषितम् । चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनंतरम् ॥ मार्कंडेयमथाग्नेयं नारदीयं ततः परम् । दशमं ब्रह्मवैवर्तं लिंगमेकादशं स्मृतम् ॥ भागद्वयेन लिंगं च ततो वाराहमुत्तमम् । संयुक्तमष्टभिः खंडैः स्कांदं चैवातिविस्तरम् ॥ ततस्तु वामनं कौर्मं भागद्वयविराजितम् । मात्स्यं च गारुडं प्रोक्तं ब्रह्मांडं च ततः परम् ॥ भागद्वयेन कथितं ब्रह्मांडमपि शब्दितम् । इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् ॥ संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् । आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता॥” इति । कौर्मे तु—“अन्यान्युपपुराणानि मुनिभिः कथितान्यपि” । मात्स्ये तु—“अष्टादशभ्यस्तु पृथक्पुराणं यत्प्रदृश्यते । विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥ पंचांगवत्पुराणं स्यादाख्यानमितरत्स्मृतम् । पाद्मे पुराणे या प्रोक्ता नारसिंहोपवर्णना ॥ तदष्टादशसाहस्रं नारसिंहमिहोच्यते । यत्र सांबं पुरस्कृत्य भविष्येपि कथानकम् ॥ प्रोच्यते तत्पुनर्लोके सांबमेव मुनीश्वरैः । एवमादित्यसंज्ञं च तत्रैव परिभाषितम् ॥” इति संदर्भः ॥२४॥ ब्रह्मन्निति—व्याख्यातचरी संबुद्धिः । ब्रह्मवर्चसं यद्यपि ब्राह्मण एवास्ति तथापीतरेषामपि वेदोक्तकर्मकारित्वेन यथाकथंचित्तदस्त्येव,तत्तत्कर्मफलाधिक्यं भवतीति भावः ॥२५॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥ जगतो मोहकैरपि ( १ ) । ‘ मार्कंडेयं सवामनम् ’ इति श्रुतत्वेनाद्भुतनामत्वेन स्मृतिपथमारूढस्य मार्कंडेयस्य चरितं पृच्छति । वक्तुः कथनोत्साहवर्द्धनार्थं संबुद्धित्रयम् । सूतेति सामान्यत उक्ते प्रातिलोम्यभ्रांतिवारणाय—साधो इति, तत्समर्थनाय—वदतां वरेति ॥ १ ॥ आहुः पौराणिकाः । कल्पांतत्वं दुर्घटमेव ॥ २ ॥ ननु ‘ काश्यः कुशो गृत्समदः ’ इति सुहोत्रनृपस्यात्मजाद्गृत्समदाच्छुनकस्तस्माच्छौनकोत्पत्तिश्रुतेः कथमुक्तं श्रीशौनकेन—स वा अस्मत्कुलोत्पन्न इति, तत्रेदं बोध्यम्—गृत्समदोऽरिनृपभीतो भार्गवाश्रममित्वा तं नत्वा च भगवन्मां पाहि रिपोरिति प्रोवाच, स च तं मा भैरित्याश्वास्याश्रमाद्बहिरागत्य तद्वैरिणमिह सर्वे ब्राह्मणाः संति न कोपि क्षत्रिय इत्युवाच । तदाकर्ण्य जितं मयेत्युक्त्वा स गतस्तदा भार्गववचनाद्गृत्समदो भार्गवोऽभूदिति महाभारते । सति प्रलयेऽस्मत्कुलं कथ

एष नः संशयो भूयान् सूत कौतूहलं यतः ॥ तं नश्छिंधि महायोगिन् पुराणेष्वपि संमतः ॥ ५ ॥ सूत उवाच ॥ प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः ॥ नारायणकथा यत्र गीता कलिमलापहा ॥ ६ ॥ प्राप्तद्विजातिसंस्कारो मार्कंडेयः पितुः क्रमात् ॥ छंदांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥ ७ ॥ बृहद्व्रतधरः शांतो जटिलो वल्कलांबरः ॥ बिभ्रत्कमंडलुं दंडमुपवीतं समेखलम् ॥ ८ ॥ कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये ॥ अभ्यर्कगुरुविप्रात्मस्वर्चयन् संध्ययोर्हरिम् ॥ ९ ॥

मेवेत्याह । एक एवेति । तोकं बालकम् ॥ ४ ॥ कौतूहलमौत्सुक्यम् । तं संशयम् । न केवलं त्वं महायोगी किंतु पुराणेष्वपि ज्ञातृत्वेन संमतः ॥ ५ ॥ प्रश्नमभिनंदति । हे महर्षे अयं प्रश्नः । तत्र हेतुः । नारायणेति । यत्र प्रश्नविषये ॥ ६ ॥ तत्र मार्कंडेयस्तपसा भगवंतमाराध्य मायाप्रदर्शनं वव्रे ततश्च तेनैव भगवन्मायया सप्तकल्पा दृष्टा नान्यैरित्युत्तरं वक्तुमादित आरभ्य तस्य चरितमाह । प्राप्त इत्यादिना । मार्कंडेयो मृत्युं जिग्ये इति पंचमश्लोकेनान्वयः । मध्यमग्रंथेन तस्य धर्मः कथ्यते । प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः । पितुः सकाशाद्गर्भाधानादिक्रमात् छंदांसि वेदान् ॥ ७ ॥ बृहद्व्रतधरो नैष्ठिको ब्रह्मचारी सन् ॥ ८ ॥ नियमर्द्धये धर्मवृद्धये ।

मवशिष्टमिति प्रश्नांतरम् ॥ ३ ॥ ४ ॥ पुराणेषु प्राचीनवृत्तप्रतिपादकेषु श्रीव्यासर्षिप्रणीतशास्त्रेषु । “ अनागतमतीतं च वर्तमानमतीन्द्रियम् । सन्निकृष्टं व्यवहितं सम्यक्पश्यंति योगिनः ॥ ” इत्युक्तेर्योगिनामेतत्कथनसामर्थ्यमस्ति किं पुनर्महायोगिनस्तवेति संबुद्ध्यभिप्रायः ॥ ५ ॥ हे महर्षे इति संबुद्ध्या तत्तादृशज्ञानवत्त्वं सूचयति । ऋषय एव त्रिकालज्ञा भवंति किं पुनर्महर्षिर्भवानिति भावः । “ ऋषिस्त्रैकालिकज्ञानी विप्रो वेदस्तथा ऋषिः ” इति संहितोक्तेः । तत्र लोकभ्रमापहत्वे । लोकभ्रमः संसारे भ्रमणं तमपहंतीति तथा ॥ ६ ॥ तत्रोपस्थितप्रकृते । अथ प्रसंगागतमाह—विदुषां मुदे । पितुरित्युक्तेर्नात्र पितैवोपनयेत्पुत्रमिति नियमः, किन्तु पितेत्युपलक्षणं पितामहादेः । तदुक्तं गर्गेण—“ पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः । उपनायेऽधिकारी स्यात्पूर्वाभावे परः परः ॥ ” इति । उक्ताधिकार्यभावे व्यासः—“वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् । स्वशाखीयमनालस्यं विप्रमाचार्यमाश्रयेत् ॥ ” इति । “ आचार्ये हि क्षत्रवैश्यौ वृणुयातां पुरोहितम् । तदभावेऽन्यविप्रं हि गृहस्थं वेदपारगम् ॥ त्यक्तगोत्राभिमानं तु यो विप्रमपि धारयेत् । वेदकर्मप्यथाचार्ये पतितः सोऽभिधीयते ॥ तत्कारितं तत्कृतञ्च शुभं कर्माखिलं वृथा । प्रायश्चित्तं ततः कृत्वा तत्कर्म पुनराचरेत् ॥ ” । प्रायश्चित्तं तूक्तं वारतंतविना—“ विप्रेभ्यो दश गा दद्याद्वा कृच्छ्राणि दशाऽऽचरेत् । कारयेत्संहितापाठं गायत्र्या वा दशायुतम् ॥ ततस्तूपनयेद्विप्रो विप्रक्षत्रविशः सुधीः । ” इति । क्रमादिति—गर्भाधानाद्याः षोडशसंस्काराः पूर्वमुक्ताः ॥ ७ ॥ मेखला मौञ्जी तत्सहितम् ॥ ८ ॥ अक्षसूत्रमक्षमाला “ आदिक्षान्तगतैर्वर्णैर्जपमालाऽक्षमालिका ” इति तंत्रोक्तेः । गौतमीये च—“पञ्चाशन्मणिभिर्माला विहिता सर्वकर्मसु । अकारादिक्षकारांता ह्यक्षमाला प्रकीर्तिता ॥” इति । “ रुद्राक्षशंखपद्माक्षपुत्रजीवकमौक्तिकैः । स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा ॥ राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका ॥ अंगुल्यगणनादेकं पर्वण्यष्टगुणं भवेत् ॥ पुत्रजीवैर्दशगुणं शतं शंखैः सहस्रकम् । प्रवालैर्मणिरत्नैश्च दशसाहस्रिकं फलम् ॥ तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते । पद्माक्षैर्दशलक्षं स्यात्सौवर्णैः कोटिरुच्यते ॥ कुशग्रंथ्या कोटिशतं रुद्राक्षैः स्यादनन्तकम् ॥ ” इति । कुशांश्चेत्युक्तेः कुशत्रयपवित्रादि ज्ञेयम् । विप्रोऽत्र गुरुभिन्नो ज्ञेयः । अत्र विप्रपदस्य पृथगुक्तेर्विप्रेतरस्य गुरुत्वं न शंकनीयम्, ‘जन्मना ब्राह्मणो गुरुः ’ इति श्रीगर्गं प्रति नंदोक्तेः “ वर्णानामाश्रमाणाञ्च मुख्योऽभूद्ब्राह्मणो

सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः ॥ बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥१०॥ एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ॥ आराधय न्हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥ ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च ये परे ॥ नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥ इत्थं बृहद्व्र तधरस्तपःस्वाध्यायसंयमैः ॥ दध्यावधोक्षजं योगी ध्वस्तक्लेशांतरात्मना ॥१३॥ तस्यैवं युंजतश्चित्तं महायोगेन योगिनः ॥ व्यतीयाय महान् कालो मन्वंतरषडात्मकः ॥ १४ ॥ एतत्पुरंदरो ज्ञात्वा सप्तमेऽस्मिन्किलांतरे ॥ तपोविशंकितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥ गंधर्वाप्सरसः कामं वसंतमलयानिलौ ॥ मुनये प्रेषयामास रजस्तोकमदौ तदा ॥ १६ ॥ ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ॥ पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो ॥ १७ ॥ तदाश्रमपदं पुण्यं पुण्यद्रुमलतांचितम् ॥ पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥१८॥ मत्तभ्रमरसंगीतं मत्तको किलकूजितम् ॥ मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥१९॥ वायुः प्रविष्ट आदाय हिमनिर्झरसीकरान् ॥ सुमनोभिःपरिष्वक्तो ववावुत्तंभयन्स्मरम्॥ ॥ २० ॥ उद्यच्चंद्रनिशावक्त्रः प्रवालस्तबकालिभिः ॥ गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः ॥ २१ ॥

अग्न्यादिषु पंचसु हरिमर्चयन् ॥ ९ ॥ भैक्ष्यं गुर्वर्थमाहृत्य तेनानुज्ञातश्चेत्तर्हि बुभुजे नोचेत्सकृत्कदाचिदुपोषितो भवति ॥ १० ॥ ११ ॥ तेन मृत्युजयेन ॥ १२ ॥ ध्वस्ताः क्लेशा रागादयो यस्य तेनांतरात्मना प्रत्याहृतमनसा ॥ १३ ॥ १४ ॥ तस्य तपोनिष्ठामितिहासेन वर्णयति एतदित्यादिना । अस्मिन्सप्तमे मन्वंतरे । तपसा मत्पदं ग्रहीष्यतीति विशंकितः ॥ १५ ॥ मुनये मुनिं भ्रंशयितुम् । रजसस्तोकमतिप्रियमपत्यं लोभो मदश्च ता ॥ १६ ॥ १७ ॥. तदाश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः । पुण्यैर्द्रुमैर्लताभिश्चांचितं पूजितम् । पुण्यद्विजानामृषीणां कुलैराकीर्णम् । पुण्या अमला जलाशया यस्मिन् ॥ १८ ॥ मत्तभ्रमराणां संगीतं यस्मिन् । मत्तकोकिलानां कूजितं यस्मिन् । मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । मत्तानां द्विजानां पक्षिणां कुलैराकुलं व्याप्तम् ॥ १९ ॥ एवंभूतं तदाश्रमपदं प्रविष्टः सन्वायुर्मलयानिलो ववौ प्रससार । उत्तंभयन्नुद्दीपयन् । तत्र वृक्षेषु प्रवेशान्मांद्यं हिमनिर्झरकणानामादानाच्छैत्य पुष्पपरिष्वंगात्सौगंध्यं चोक्तम् ॥ २० ॥ किंच ।

गुरुः " इति मैत्रेयोक्तेश्च ॥ ९ ॥ नो चेत् कदाचिद्गुर्वनुज्ञाभावे उपोषितः कृतोपवास एव भवतीत्यर्थः ॥ १० ॥ स्वाध्यायो वेदाभ्यासः । अयुतायुतं कोटिः, असंख्यातान्येव वर्षाणि जग्मुरित्यर्थः ॥ ११ ॥ तेन मृत्युञ्जयरूपकर्मणा ॥ १२ ॥ आदिना द्वेषादिग्रहः । " अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः " इति पतञ्जलिसूत्रात् ॥ १३ ॥ षडित्यस्य पूर्वनिपाताभावो विशेषणविशेष्यभावव्यत्यासात् ॥ १४ ॥ अस्मिन्वैवस्वताख्ये । एतन्मार्कंडेयतपस आधिक्यम् । तद्विघातनं तपोनाशनम् । हे ब्रह्मन्निति वर्णिताभिप्रायम् ॥ १५ ॥ १६ ॥ ते गंधर्वाद्याः । तदाश्रमं मार्कंडेयाश्रमम् ॥ १७ ॥ पुण्यद्रुमा अश्वत्थादयः, पुण्यलता विष्णुक्रांताद्याः, पुण्यद्विजाः शुकसारसादयः । जलाशयाः सरोवराः ॥ १८ ॥ आटोपो नृत्यसंभ्रमः ॥ १९ ॥ तत्र वायौ ॥ २० ॥ अन्यदाह—किंचेति । कुसुमाकरो वसंतः । गां पृथ्वीं फलपुष्पाद्यैः पांति तर्पयंतीति

अन्वीयमानो गंधर्वैर्गीतवादित्रयूथकैः ॥ अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥ २२ ॥ हुत्वाग्निं समुपासीनं ददृशुः शक्रकिंकराः ॥ मीलिताक्षं दुराधर्षं मूर्तिमंतमिवानलम् ॥ २३ ॥ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ॥ मृदंगवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥ संदधेऽस्त्रं स्वधनुषि कामः पंचमुखं तदा ॥ मधुर्मनो रजस्तोकं इंद्रभृत्या व्यकंपयन् ॥ २५ ॥ क्रीडंत्याः पुंजिकस्थल्याः कंदुकैः स्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥ २६ ॥ इतस्ततो भ्रमद्दृष्टेश्चलंत्या अनु कंदुकम् ॥ वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७ ॥ विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः ॥ सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥ त इत्थमपकुर्वंतो मुनेस्तत्तेजसा मुने ॥ दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥ २९ ॥ इतींद्रानुचरैर्ब्रह्मन्धर्षितोऽपि महामुनिः ॥ यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥ ३० ॥

उदयंश्चंद्रो यस्मिंस्तन्निशावक्त्रं रजनीमुखं यस्मिन्सः । प्रवालस्तबकानामालयः श्रेणयो येषु तैः । गुप्यंति विटपैः संश्लिष्यंतीति गोपा द्रुमा लताश्च तेषां जालैः समूहैरुपलक्षित आविर्बभूव ॥ २१ ॥ किंच । तदा गीतवादित्रयूथकैर्गायकादिसमुदायिभिर्गंधर्वैरन्वीयमानः । तथा स्वःस्त्रियोऽप्सरसस्तासां यूथस्य पतिः । आत्तं चापमिषुश्च येन स स्मरश्च तत्रादृश्यत ॥ २२ ॥ दुराधर्षमभिभवितुमशक्यम् ॥ २३ ॥ २४ ॥ शोषणदीपनसंमोहनतापनोन्मादनाख्यानि पंचमुखानि यस्य तदस्त्रं संदधे । तदैव मधुर्वसंतः । रजस्तोकश्च । पुंस्त्वमार्षम् । अन्ये चेंद्रभृत्यास्तस्य मनो व्यकंपयन् ॥ २५ ॥ २६ ॥ किंच । वायुर्मलयानिलः पुंजिकस्थल्यास्तत्सूक्ष्मं वासो जहार ॥ २७ ॥ सर्वं तेषां कर्म । तत्र तस्मिन् । मोघं व्यर्थम् । अनीशस्य निर्दैवस्य ॥ २८ ॥ मुनेरपकुर्वंतः प्रतिकूलमाचरंतः । हे मुने ॥ २९ ॥ अहमोऽहंकारस्य । भावं विकारम् ॥ ३० ॥

गोपा आम्रादयः । यद्वा—गाः किरणानि पान्ति रक्षंति पत्रादिषु प्रकटयंतीति गोपा अश्वत्थादयस्ते च ते द्रुमाश्चेति गोपद्रुमाः ॥ २१ ॥ अन्यदाह—किंचेति । स्मरः कामः । तत्राऽऽश्रमे ॥ २२ ॥ अनलमग्निम् ॥ २३ ॥ तस्य मुनेः ॥ २४ ॥ २५ ॥ केशेभ्यो विस्रंसिता अधः पतिता स्रक् पुष्पमाला यस्यास्तस्याः ॥ २६ ॥ २७ ॥ तत्र मुनौ । अनीशो भाग्यरहितः ॥ २८ ॥ हे मुने इति—मननशीला हि कोमलस्वभावत्वात्प्रतीकारं न कुर्वंतीति भावः । प्रबोध्याहिमिति—न जानीमहेऽद्य किं भावीति भीताः । अत्राहिदृष्टांतेन प्रथमं कामं प्रति किंचित्क्रोधोऽपि जातः पश्चाद्विवेकेन कामक्रोधयोर्द्वयोरेवोपरामः कृत इत्यवसीयते ॥ २९ ॥ धर्षितो

दृष्ट्वा निस्तेजसं कामं सगणं भगवान्स्वराट् ॥ श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥ ३१ ॥ तस्यैवं युंजतश्चित्तं तपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरनारायणो हरिः॥३२॥ तौ शुक्लकृष्णौ नवकंजलोचनौ चतुर्भुजौ रौरववल्कलांबरौ ॥ पवित्रपाणी उपवीतकं त्रिवृत्कमंडलुं दंडमृजुं च वैणवम्॥३३॥पद्माक्षमालामुत जंतुमार्जनं वेदं च साक्षात्तप एव रूपिणौ॥ तपत्तडिद्वर्णपिशंगरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ॥३४॥ ते वै भगवतो रूपे नरनारायणावृषी ॥ दृष्ट्वोत्थायादरेणोच्चैर्ननामांगेन दंडवत् ॥ ३५ ॥ स तत्संदर्शनानंदनिवृत्तात्मेंद्रियाशयः ॥ हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥ उत्थाय प्रांजलिः प्रह्व औत्सुक्यादाश्लिषन्निव ॥ नमो नम इतीशानौ बभाषे गद्गदाक्षरः ॥ ३७॥ तयोरासनमादाय पादयोरवनिज्य च ॥ अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८॥ सुखमासनमासीनौ प्रसादाभिमुखौ मुनिः ॥ पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ॥ ३९॥ मार्कंडेय उवाच ॥ किं वर्णये तव विभो यदुदीरितोऽसुः संस्पंदते तमनु वाङ्मनइंद्रियाणि ॥ स्पंदंति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबंधुः ॥ ४० ॥

निस्तेजसं म्लानवदनम् । स्वराडिंद्रः ॥ ३१ ॥ नरनारायणरूपो हरिः ॥ ३२ ॥ तावनुवर्णयति द्वाभ्याम् । ताविति । रौरवं कृष्णाजिनं वल्कलं चांबरं ययोस्तौ । पवित्रे पाण्योर्ययोस्तौ । त्रिवृत्त्रिगुणं नवतंतुकमिति वा त्रिवृद्बहिःपवमानमित्यादौ नवके प्रयोगात् । उपवीतकादीन्दधानौ ॥ ३३ ॥ वेदं दर्भमुष्टिम् । किंच साक्षात्तप एव तौ । तत्र हेतुः । तपत्तडिद्वर्णं देदीप्यमानविद्युत्संकाशं यत्पिशंगं रोचिस्तेन रूपिणौ मूर्तिमंतौ । तादृक् तेजोयुक्तमूर्तिभ्यां तपोमयत्वेन प्रकाशमानावित्यर्थः । प्रांशू उन्नतौ ॥ ३४ ॥ उच्चैर्महताऽऽदरेण ॥ ३५ ॥ तयोः संदर्शनेन य आनंदस्तेन निर्वृता उपशांता आत्मेंद्रियाशया देहेंद्रियमनांसि यस्य सः । न सेहे नाशक्नोत् ॥ ३६ ॥ आश्लिषन्नालिंगन्निव ॥ ३७ ॥ पादयोरवनिज्य पादौ प्रक्षाल्य । अर्हणेनार्घ्येण ॥ ३८ ॥ पादाभ्यां पादावानम्य गरिष्ठौ पूज्यतमौ तौ प्रति ॥ ३९ ॥ अंतर्यामिणस्तस्यैव प्राणादिप्रवर्तकत्वादात्मनस्तत्स्तुतावस्वातंत्र्यं पश्यन्नाह।किमिति।तव त्वां किमहं वर्णये कथं स्तौमि । यद्येन त्वयैवोदीरितः प्रेरितोऽसुः प्राणः संस्पंदते प्रवर्तते

विप्रकृतः ॥ ३० ॥ ३१ ॥ ३२ ॥ त्रिगुणमिति—" यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ॥ " इति हेमाद्रयुक्तेस्त्र्युपवीतामित्यर्थः । यद्वा—त्रिवृदिति यज्ञोपवीतस्वरूपकथनमेवेत्याह—नवतंतुकमिति । अत्र प्रमाणमाह—त्रिवृद्बहिरिति । पवित्रे द्वित्रिकुशनिर्मिते पाण्योर्दक्षवामकरानामिकयोर्ययोस्तौ । यद्वा—सौवर्णे पवित्रे ग्राह्ये । तदुक्तमथर्वषष्ठानुवाके—" नैनं रक्षांसि न पिशाचाः सहंते देवानामोजः प्रथमं ह्येतत् । यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः " इति । कृणुते प्राप्नोति । ' कृवि—गतौ ' तङार्षः ॥३३॥ पद्मानामक्षमालेति वैष्णवमालात्वबोधनायैव । जंतुमार्जनं सूक्ष्मकीटपिपीलिकादिमार्जनम्, तच्च नानातन्तुखण्डनिर्मितश्चामरविशेष इति केचित् । अपरे तु वस्त्रखंडमिति । अन्ये तु जंतूनां मार्जनं येन तथाविधं वेदं चेति वेदविशेषणतया व्याचख्युः । पिशंगं पीतम् । इत्यर्थ इति—तेजोविशेषेण मूर्तिधारि तप एवेमाविति प्रतीयमानाविति भावः ॥ ३४ ॥ दंडवत् साष्टांगम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ हे विभो इति—वर्णनं हि परिच्छिन्नवस्तुनो भवति विभोस्तु तद्वास्यायैवेति भावः ।

मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ॥ नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥ ॥ ४१ ॥ तस्यावितुः स्थिरचरेशितुरंघ्रिमूलं यत्स्थं न कर्मगुणकालरजः स्पृशंति ॥ यद्वै स्तुवंति निनमंति यजंत्यभीक्ष्णं ध्यायंति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२ ॥

तमनु च वागादयः स्पंदंति । अत्र हेतुः । वै अन्वयव्यतिरेकाभ्यां श्रोत्रस्य श्रोत्रमित्यादि श्रुतिभिश्चैतत्प्रसिद्धमित्यर्थः । न केवलं प्राकृतानां तनुभृतां किंत्वजशर्वयोश्चातः स्वस्य ममापि तथैव । एवं यद्यपि न कस्यापि स्वातंत्र्यमथापि दारुयंत्रवत्त्वत्प्रवर्तितैरपि वागादिभिर्भजतां पुंसां भावबंधुरात्मबंधुरसि न तु पित्रादिवद्देहमात्रबंधुः । अहो कृपालुता तवेत्यर्थः ॥ ४० ॥ ननु कथमावां प्राणादिप्रवर्तकौ धर्मपुत्रत्वादावयोरिति चेत्तत्राह । मूर्ती इति । हे भगवन् भगवतस्तव इमे मूर्ती त्रिलोक्याः क्षेमाय पालनाय तापविरमाय च दुःखनिवृत्त्यै मृत्युजित्यै मोक्षाय । न तु त्वं कस्यापि पुत्र इत्यर्थः । अत्र दृष्टांतः । यथेदं विश्वमवितुमन्यास्तनूर्मत्स्यकूर्मादिलक्षणा नाना अनेकप्रकारा बिभर्षि तद्वत् । न केवलं पालनमात्रं तव कर्म किंतु सृष्टिलयावपीत्याह । सृष्ट्वेति । तत्राप्यन्यनिरपेक्षत्वे दृष्टांतः । ऊर्णनाभिरिवेति ॥ ४१ ॥ यस्मादेवंभूतस्त्वं तस्मात्तवांघ्रिमूलं भजामीत्याह । तस्येति । तस्यावितुः पालकस्य स्थावरजंगमानामीश्वरस्यांघ्रिमूलं भजामीति तृतीयश्लोकस्थस्यानुषंगः । कथंभूतमंघ्रिमूलम् । यत्स्थं यत्र स्थितम् । कर्मगुणकालानां रजो मलम् । अन्ये च पूर्वोक्तास्तापादयो न स्पृशंति । रुज इति वा पाठः । यतो वेदो हृदये येषां ते वेदतात्पर्यविदो मुनयो यदेव स्तुवंति नितरां नमंति तदा

अत्र वागादिस्पंदकत्वे । अन्वयव्यतिरेकौ च यत्र श्रोत्रादिमत्त्वं तत्र तत्प्रवर्तकत्वं यथाऽस्मदादिषु, यत्र तन्न तत्र न तत्प्रवर्तकत्वं यथा घटादाविति ज्ञेयौ । इत्यर्थ इति—श्रुतिभिरयमर्थः स्फुटतया प्रतिपादित इति भावः । इत्यर्थ इति—अहो निर्निमित्तकृपालुता तवैवास्ति न देहबंधूनामिति भावः । विश्वनाथस्तु—यद्यप्येवं त्वं सर्वेषां बंधुरसि तथापि भजतां जनानां भावेन प्रेम्णा बंधुर्बंधुरिव वश्योसि प्राणेंद्रियादिभिस्त्वमेव स्वभजनं कारयसि पुनस्तादृशभजनस्य प्रत्युपकारासमर्थ ऋणीव भूत्वा प्रेमवश्यो भवसीत्यद्भुतं तव कृपावैभवमिति भावः ॥ ४० ॥ न केवलं स्वभजनं कारयितुं भक्तिपरिपाके च तद्वश्यो भवितुं तवावतारः किन्तु जगत्पालनार्थमपीत्याह—मूर्ती इति । अत्राक्षिपति—नन्विति । हे भगवन्निति—त्वं तु साक्षाद्भगवानेव लोकहिताय प्रादुष्कृतमूर्तीरिति भावः । इत्यर्थ इति—भक्ताभीष्टसंपादनायैव पुत्रादिभावेन प्रतीयसे न त्वं साक्षात्पुत्रादिरिति भावः । 'न माता न पिता तस्य' इत्यादिश्रीदशमोक्तेः । अत्र जगद्धिताय धृतमूर्तित्वे । तत्रापि सृष्ट्यादावपि । ऊर्णनाभिर्लूतातंतुर्यथाऽन्यमनपेक्ष्यैव स्वेनैव तंतुवितानं कृत्वा तत्र विहृत्य च पुनः संहरति तथा त्वमपीत्यर्थः ॥ ४१ ॥ अन्ये चेति बहुवचनोपपत्तये पूरितमिति । 'रुजः' इति पाठस्तु सुगम । एव कर्मादयो रुजः क्लेशाः यत्स्थं यदंघ्रितलस्थं भक्तजनं रजः दुराचारादिभवं मालिन्यञ्च न स्पृशन्तीत्यद्भुतं तव भक्तिवैभवमिति । कर्मेति—दुष्कृतं सुकृतं

नान्यं तवांघ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितो भिय ईश विद्मः ॥ ब्रह्मा बिभेत्यलमतो द्विपरार्ध्यधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥ तद्वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य ॥ देहाद्यपार्थमसदंत्यमभिज्ञमात्रं विंदेत ते तर्हि सर्वमनीषितार्थम् ॥ ४४ ॥ सत्त्वं रजस्तम इतीश तवात्मबंधो मायामयाः स्थितिलयोदयहेतवोऽस्य ॥ लीला धृता यदपि सत्त्वमयी प्रशांत्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥

प्त्यै तत्प्राप्तये एव स्तवनादि कुर्वंति ॥ ४२ ॥ यतोऽन्यः पुरुषार्थो नास्तीत्याह नान्यमिति । अंघ्र्युपनयाच्छ्रीमच्चरणप्राप्तेरन्यं क्षेमं न विद्मः । परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य । तदेवाह । द्विपरार्धं धिष्ण्यं स्थानं यस्य स ब्रह्माऽपि ते कालस्य त्वद्भ्रूविजृंभरूपात्कालादलं बिभेति । अतः किमुत वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमिति ॥ ४३ ॥ यस्मादेवं तत्तस्मात्तव पादमूलं भजामि । कथंभूतस्य । ऋतधियः सत्यज्ञानस्वरूपस्य । यद्वा सत्या धीर्यस्य यस्मिन्वा तस्यात्मगुरोर्जीवनियंतुरतः कारणात्परस्य । किं कृत्वा । आत्मच्छदि स्वात्मावरकमपार्थं च निष्फलमसच्च तुच्छमंत्यं च नश्वरमिदं देहादि हित्वा देहादिभजनं त्यक्त्वा । असच्चेत्कथं प्रतीयेत तत्राह । अभिज्ञमात्रम् । न ह्यत्यंतमसत्किंत्वात्ममात्रम् । न ततः पृथगस्तीत्यर्थः । नन्वपवर्गाय भवतु मद्भजनं फलांतरार्थं त्वन्यभजनं कार्यमेव तत्राह । तर्हीति । यदि त्वां भजति पुरुषस्तर्हि ते त्वत्त एव सर्वं मनीषितमर्थं विंदेतेति ॥ ४४ ॥ ननु ब्रह्मरुद्रावपि ममैव मूर्ती अतो मामेव किमत्यंतमाद्रियसे तत्राह । सत्त्वमिति । यदपि यद्यपि तवैव मायया कृता एता लीलास्त्वयैव धृतास्तथापि या सत्त्वमयी सैव प्रशांत्यै मोक्षाय न केवलमस्य प्रशांत्यभावमात्रमन्यभजने किंत्वनिष्टं च भवेदित्याह ।

प्राचीनमप्राचीनं वा कृतं न स्पृशति पुष्करपलाशं जलमिवेति भावः । बहुत्वमार्षमिति विश्वनाथः ॥ ४२ ॥ यतोंघ्रिभजनात् । तदेव सर्वलोकभयत्वमेव । यतो ब्रह्मापि बिभेत्यतो हंतोः ॥ ४३ ॥ ज्ञानरूपस्य पादकल्पनमयुक्तं मत्वाह—यद्वेति । इत्यर्थ इति—न हि चेतनाधिष्ठानं विनाऽचितः प्रतीतिरुपपद्यत इति भावः । अत्राक्षिपति—नन्विति । “ अकामः सर्वकामो वा मोक्षकाम उदारधीः ” इत्युक्तेस्त्वत्त एव सर्वाभीष्टाप्तिर्भवतीति भावः ॥ ॥ ४४ ॥ पुनराक्षिपति—नन्विति । हे ईशेति—हे आत्मबंधो इति सम्बुद्धिद्वयेन हरेरेव भजनीयत्वमाह । यद्यप्युभयविधत्वं ब्रह्मरुद्रयोरप्यस्ति तथापि शुद्धसत्त्वप्रधानस्य तवैव कल्याणहेतुत्वं संगच्छते “ श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ” इत्याद्युक्तेरिति संबुद्ध्यभिप्रायः । एता ब्रह्मरुद्रादिलक्षणाः । अन्ये रजस्तमोमय्यौ लीले प्रशांत्यै नेत्यर्थः । अस्य रजस्तमोमय्यौ लीले भजतः पुंसः किन्त्वन्यस्य शुद्धसत्त्वेतरस्य भजनेऽनिष्टं च स्यात्, किं तदनिष्टं भवेत्तत्राह—व्यसनेति । व्यसनं विपत्, मोहोऽज्ञानम्, भीः संसारभयञ्च याभ्यां रजस्तमोमयीलीलाभ्यां स्युरित्यर्थः । यद्वा—अन्ये सत्त्वादन्ये रजस्तमसी प्रशांत्यै न स्यातां, याभ्यां रजस्तमोभ्यां व्यसनादयः स्युः । च एवार्थे । विश्वनाथस्तु—सकामत्वे सति देवांतरमपि भजन्तु तद्भजनमपि मद्भजनमेव यतो देवा मन्मूर्तय एवेत्यत आह—सत्त्वमिति । हे आत्मबंधो प्राणनाथ अस्येंद्रचंद्रदेवमनुष्यादिमयस्य जगतः :स्थित्यादिहेतवः सत्त्वादयो ये गुणास्तेऽपि मायामया एव किं पुनस्तत्कार्या इंद्राद्या नश्वराः । तेषां भजने मायातीतं त्वां कथं विंदेतेति भावः । यद्यप्यासु लीलासु मध्ये सत्त्वमयी लीला प्रशांत्यै धृता न त्वन्ये रजस्तमोमय्यौ

तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजंति ॥ यत्सात्वताः पुरुषरूपमुशंति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चाऽन्यत् ॥ ४६ ॥ तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदैवताय ॥ नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥ यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः संतं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ॥ तन्माययाऽऽवृतमतिः स उ एव साक्षादाद्यस्तेऽखिलगुरोरुपसाद्य वेदम् ॥ ४८ ॥

व्यसनेति ॥ ४५ ॥ तदेव सदाचारेण द्रढयति । तस्मादिति । हे भगवन् तव शुक्लां तनुं श्रीनारायणाख्याम् । अथ तावकानां च शुक्लां तनुं नराख्याम् । यद्यस्मात्सात्वताः सत्त्वमेव पुरुषस्येश्वरस्य रूपमुशंति मन्यंते न त्वन्यद्रजस्तमश्चेति । अत्र हेतुः । यतः सत्त्वाल्लोको वैकुंठाख्यः लोकत्वे सत्यप्यभयं च भोगे सत्यप्यात्मसुखं च ॥ ४६ ॥ अतस्तं प्रणमति । तस्मै नम इति । हंसाय शुद्धाय । संयतगिरे नियतवाचे । अथ च निगमेश्वराय वेदमार्गप्रवर्तकाय ॥ ४७ ॥ वेदार्थसंप्रदायप्रवर्तने हेतुत्वं वदन्स्तौति । यमिति । वितथाक्षपथैः कपटेंद्रियमार्गैर्भ्रमद्धीर्विक्षिप्तबुद्धिः पुमान्स्वेंद्रियादिषु नियंतृत्वेन संतमपि यं त्वां न वेद । दृक्पथेषु विषयेषु । बुद्धिविक्षेपे हेतुः । तन्मायया तस्य तवैव मायया

याम्यां व्यसनादयः संति तदप्येतास्तिस्रोऽपि लीला मायामय्य एवेति ॥ ४५ ॥ तदेव सत्त्वमयभजनमेव । यतः सत्त्वमेव प्रशांतिहेतुस्तस्माद्धेतोः । हे भगवन्निति भजनार्हतामाह । अत्र सत्त्वस्य पुरुषरूपत्वे । अतस्तव मायामयीमिंद्रादिमूर्तिमशुद्धां विहाय शुद्धसत्त्वरूपा एव तव त्वद्भक्तानां च मूर्तीरभिज्ञा उपासत इत्याह—तस्मादिति । यद्यतः सात्वता नारदाद्याः पुरुषरूपं विष्णुरूपं सत्त्वमुशंति । ननु कीदृशं सत्त्वं तत्राह—यतो लोकः स्वर्गादिकः न, यत्राभयं पातहेतुकभयाभावः, आत्मसुखमात्मभूतं सुखं च न तु कर्मफलं स लोको वैकुंठः । यतस्तत् शुद्धसत्त्वं न चान्यत्प्राकृतं सत्त्वम् ॥ ४६ ॥ अतः सात्वतोपास्यत्वात् । विश्वाय विश्वनाम्ने 'विश्वं विष्णुर्वषट्कारः ' इति सहस्रनामसूक्तेः । सर्वनामसंज्ञा त्वत्राभिधात्वादेव । न नियता वेदलक्षणा वाग्यस्य तस्मै, तदेवाह—अथ चेति । अत एव विश्वगुरवे सर्वहितोपदेष्ट्रे । परा सर्वोत्कृष्टा चासौ देवता च परमात्मैव तद्रूपाय । नारायणाय सर्वप्रेरकाय । ऋषये सर्वज्ञाय । नराज्जीवाज्जीवादर्थात्क्षराक्षरादुत्तमाय पुरुषोत्तमायेत्यर्थः । " यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ " इति गीतासूक्तेः । " नरो जीवे शरीरे च घोटके च कपिध्वजे । धर्मात्मजे " इत्यभिधानात् पुरुषाय पुरुषाकारत्वेपि भूम्ने सर्वव्यापकाय, तदपि विश्वाय देवमनुष्यतिर्यगादिसर्वरूपाय । आविर्भावप्रयोजनमाह—विश्वगुरवे भक्तिज्ञानवैराग्याणामुपदेष्ट्रे । न केवलमुपदेष्टैवापि तु भजनीयश्चेत्याह—परदेवतायै इष्टदेवाय । द्वाभ्यामेकाकारत्वमाह—ऋषये ऋषिरूपनारायणाय ऋषिरूपनरोत्तमाय च। त्यक्तपरिग्रहत्वमाह—हंसाय।मौनशालित्वमाह—संयतगिरे, तदपि निगमाय वेदप्रवर्तकाय ॥ ४७ ॥ जगदपेक्षयाऽऽदिभवत्वादाद्यो ब्रह्मा त्वत्तः सर्वगुरोर्वेदं प्राप्यापि न वेद, अन्येषां का वार्त्तेति भावः । स उ सोऽपि, उरप्यर्थे । पूर्वं वेदप्राप्तेः पूर्वावस्थायामविद्वान् तव सकाशाद्वेदमपसाद्यैव

यद्दर्शनं निगम आत्मरहःप्रकाशं मुह्यंति यत्र कवयोऽजपरा यतंतः ॥ तं सर्ववादविषयप्रतिरूपशीलं वंदे महापुरुषमात्मनिगूढबोधम् ॥ ४९ ॥
इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे मार्कंडेयोपाख्याने नारायणस्तवो नामाष्टमोऽध्यायः ॥ ८ ॥ सूत उवाच ॥ संस्तुतो भगवानित्थं मार्कंडेयेन धीमता ॥ नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥ श्रीभगवानुवाच ॥ भो भो ब्रह्मर्षिवर्योऽसि सिद्ध आत्मसमाधिना ॥ मयि भक्त्यानपायिन्या तपःस्वाध्यायसंयमैः ॥ २ ॥ वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ॥ वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥ ऋषिरुवाच ॥ जितं ते देवदेवेश प्रपन्नार्तिहराच्युत ॥ वरेणैतावताऽलं नो यद्भवान्समदृश्यत ॥ ४ ॥

आवृता आत्मनिष्ठा मतिर्यस्य स उ सोऽपि आद्य एव पूर्वमविद्वानेवाखिलगुरोस्तव त्वत्प्रवर्तितं वेदमुपसाद्य प्राप्य तं त्वां साक्षाद्वेद ॥४८॥ वेदेनैव त्वज्ज्ञानमित्युपपादयन्प्रणमति । यस्य तव दर्शनं निगमे भवति । कथंभूतम् । आत्मनस्तव रहो रहस्यं तस्य प्रकाशकम् । अन्यथा दुर्ज्ञेयतामाह । अजपरा ब्रह्ममुख्याः कवयोऽपि सांख्ययोगादिभिर्यतमाना यत्र त्वयि मुह्यन्ति । कुत इत्यत आह । सर्वेषां सांख्यादिवादिनां ये वादास्तेषां विषया भेदादयस्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम् । कुतः। आत्मना देहादिसंघातेन निगूढो बोधो यस्य तम् । एवंभूतं महापुरुषं त्वां वंदे ॥ ४९ ॥ इति श्रीमद्भागवते म० द्वादशस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥
नवमे भगवन्मायादिदृक्षोर्दर्शने मुहुः ॥ मायाशिशोर्लयाब्धौ च मुनेर्निर्वेशनिर्गमैः ॥ १ ॥ भगवतः परितोषपूर्वकं तदपेक्षितवरदानं कथयितुमाह संस्तुत इत्यादिना ॥ १ ॥ आत्मसमाधिना चित्तैकाग्र्येण ॥ २ ॥ वयं ते परितुष्टाः स्मेति बहुवचनं सर्वदेवाभिप्रायेण । वरदेशादित्येकवचनं द्वयोरैक्याभिप्रायेण । प्रतीच्छ गृहाण ॥ ३ ॥ वरेण

यमिंद्रियविक्षिप्तधीर्न वेद तं वेदेत्यन्वयः । स्वामिचरणैराद्य एव, अविद्वानेवेति योर्थो गृहीतस्तत्र ब्रह्माक्षेपलब्ध इति ध्येयम् ॥ ४८ ॥ निगमो वेदः । "निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे" इति मेदिनी । अजो ब्रह्मा पर उत्कृष्टो येषु ते तथा । कुतो मुह्यंति—वादाः सिद्धांताः "सिद्धांते च विवादे च वादस्तोमे च वादिनाम्" इति निरुक्तिः । सर्ववादानुसारिशीलत्वे हेतुं पृच्छति—कुत इति । देहाद्यात्मवादनिरासेन यज्ज्ञानं जायते तं वंदे । बोधोऽत्र प्रत्यक्स्वरूपमेव देहाद्यात्मवादनिरासश्चाद्यपद्यव्याख्याशतके निरूपित एव । वेदशास्त्रज्ञेयत्वेऽपि दुर्ज्ञेयत्वमाह—यस्य तव दर्शनं ज्ञानं निगमं वेदशास्त्र एव।कीदृशम्—आत्मनस्तवरहस्यस्य प्रकाशकम् । तर्हि वेदज्ञा एव मां जानन्तु तत्र नेत्याह—मुह्यंतीति । यत्र वेदे ब्रह्ममुख्या अपि मुनयो यतंतोऽपि भवत्तत्त्वाज्ञानान्मुह्यंति वेदस्य परोक्षवादित्वाद्भवन्मात्रज्ञेयत्वमिति भावः । अत एव हेतुगर्भं विशिनष्टि—सर्वे वादा विवर्तादयो निगमोक्तास्तेषां विषयाश्च ये तेषां प्रतिरूपमेव न त्वनुरूपं शीलं चरित्रं यस्य तमत एव गूढो गुप्तीकृतो बोधस्स्वतत्त्वं येन तम् ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥ मुनेर्लयाब्धौ प्रलयकालिकसमुद्रे, मायया कृपया, शिशोः शिशुरूपस्य । निर्वेशः प्रवेशः, निर्गमो बहिरागमनम् ( १ ) । भृगूद्वहं मार्कंडेयम् ॥ १ ॥ भोभो इति वीप्साऽऽदरे । हे ब्रह्मर्षिवर्येति—ब्रह्मर्षयो मद्दर्शनार्थं यतंत्येव न तु प्राप्नुवंति त्वया तत्प्राप्तमतस्तेषु त्वमेव श्रेष्ठोऽसीति भावः ॥ २ ॥ ३ ॥ ते जितं :तवोत्कर्षोऽस्त्येव स्वोत्कर्षेणैव ममाज्ञानमपहृतम् । देवा इंद्राद्यास्तेषां देवो ब्रह्मा तस्यापि त्वमेवेशोसीति भावः । प्रपन्नानां मादृशानामार्तिं संसृतिदुःखं हरतीति तादृशोऽपि त्वमेव । च्युतिर्नाशस्तद्रहितोऽपि त्वमेव, अहो एतादृशस्य तव दर्शने किमहं तुच्छं वरं याच इति भावः । एतावता एतत्प्रमाणकेन । एतावता कियतेति

गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम् ॥ मनसा योगपक्केन स भवान्मेऽक्षगोचरः॥५॥ अथाप्यंबुजपत्राक्ष पुण्यश्लोकशिखामणे ॥ द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम् ॥६॥ सूत उवाच ॥ इतीडितोऽर्चितः काममृषिणा भगवान् मुने ॥ तथेति स स्मयन्प्रागाद्बदर्याश्रममीश्वरः ॥७॥ तमेव चिंतयन्नर्थमृषिः स्वाश्रम एव सः ॥ वसन्नग्न्यर्कसोमांबुभूवायुवियदात्मसु ॥ ८ ॥ ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् ॥ क्वचित्पूजां विसस्मार प्रेमप्रसरसंप्लुतः॥९॥ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुनेः ॥ उपासीनस्य संध्यायां ब्रह्मन् वायुरभून्महान् ॥१०॥ तं चंडशब्दं समुदीरयंतं बलाहका अन्वभवन्करालाः ॥ अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनंत उच्चैरभिवर्षधाराः ॥ ११ ॥ ततो व्यदृश्यंत चतुःसमुद्राः समंततः क्ष्मातलमाग्रसंतः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥ १२ ॥ अंतर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् ॥ चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥१३॥ तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभंजनाघूर्णितवार्महार्णवः॥आपूर्यमाणो वरषद्भिरंबुदैः क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिः समम् ॥१४॥ सक्ष्मांतरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ॥ स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडांधवत् ॥१५॥

च्छंदयता त्वया जितमुत्कर्षो दर्शितः । मम तु वराकांक्षा नास्तीत्याह । वरणेति ॥ ४ ॥ यस्य तव श्रीमत्पादाब्जदर्शनं मनसाऽपि गृहीत्वा प्राप्य कृतार्था अजादयो भवंति स भवान्मेऽक्षगोचरो जातोऽस्ति किमतः परं वरेणेत्यर्थः ॥ ५ ॥ द्रक्ष्ये द्रष्टुमिच्छामि । लोकपालैर्ब्रह्मादिभिः सहितोऽयं लोको जनो यया सद्भिदां सति वस्तुनि भेदम् ॥ ६ ॥ तथेति द्रक्ष्यसीति । स ईश्वरः स्मयन्प्रागात् । पाठांतरे क्रियाविशेषणम् ॥ ७ ॥ तमेवार्थं मायादर्शनरूपम् । अग्न्यादिमूर्तिषु ॥ ८ ॥ भावद्रव्यैर्मनोमयैर्द्रव्यैः । क्वचित्कदाचित्प्रेमप्रसरसंप्लुतः प्रेमोद्रेकं प्राप्तः ॥ ९ ॥ मायादर्शनमाह तस्येत्यादिना ॥ १० ॥ तं वायुमनु बलाहका मेघा अभवन्नाविर्बभूवुः । ते च तडिद्भिः सहिता उच्चैः स्वनंतो गर्जंतः । अक्षो रथांगं तद्वत्स्थविष्ठा अभितो वर्षधारा मुमुचुः ॥ ११ ॥ चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगेनोर्मयस्तैर्भूतलं ग्रसंतः । उग्रा नक्रा येषु महाभया आवर्ता येषु गभीरो घोषो येषु ते च ते च ते च ॥ १२ ॥ आत्मना सह जरायुजादिचतुर्विधं जगदंतर्बहिश्चोपतापितं वीक्ष्य क्ष्मां जलाप्लुतां वीक्ष्य मुनिः समत्रसद्भयं प्राप । केनोपतापितम् । अद्भिः । कथंभूताभिः । अतिद्युभिरतिक्रांता द्यौर्याभिः खरैश्च सूर्यरश्मिभिर्वायुभिर्वेति शेषः । शतह्रदाभिश्च विद्युद्भिः । दीर्घत्वमार्षं छंदोऽनुसारेण ॥ १३ ॥ प्रभंजनेनाघूर्णितं प्रकंपितं वाः उदकं यस्मिन् सः । अप्यधाच्छादयामास । समं सह ॥ १४ ॥ सक्ष्मांतरिक्षं भूम्यंतरिक्षस्थप्राणिसहितम् । सदिवं

चेत्तत्राह–यदिति ॥ ४ ॥ इत्यर्थ इति–तव दर्शनात्परो न कोपि वरोऽधिकोऽस्तीति भावः ॥ ५ ॥ हे अंबुजपत्राक्षेति–तव स्वाभाविकतापहरदृष्टेर्न किञ्चिद्वक्तव्यमस्तीति भावः । पुण्यश्लोका अपि स्वयशोरक्षणाय विनैवान्यप्रेरणां परकार्यं कुर्वंति त्वं तु तेषां शिखामणिः परममुख्य इति भावः ॥ ६ ॥ पाठांतरे 'सस्मयम्' इति पाठे ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अक्षो रथांगं चक्रम् । स्थविष्ठाः स्थूलाः ॥ ११ ॥ ततो महावृष्ट्यनंतरम् ॥ १२ ॥ "शंपाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा । तडित्सौदामनी विद्युत्" इत्यमरः ॥ १३ ॥ प्रभंजनो वायुः । वरषद्भिरिति वर्णविभागश्छांदसः ॥ १४ ॥ उर्वरितः अवशिष्टः ॥ १५ ॥

क्षुत्तृट्परीतो मकरैस्तिमिंगिलैरुपद्रुतो वीचिनभस्वता हतः ॥ तमस्यपारे पतितो भ्रमन्दिशो न वेद खं गां च परिश्रमेषितः ॥ १६॥ क्वचिद्गतो महावर्ते तरलैस्ताडितः क्वचित् ॥ यादोभिर्भक्ष्यते क्वापि स्वयमन्योऽन्यघातिभिः ॥१७॥ क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम् ॥ क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥ १८ ॥ अयुतायुतवर्षाणां सहस्राणि शतानि च ॥ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः ॥ १९ ॥ स कदाचिद्भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः ॥ न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥ प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् ॥ शयानं पर्णपुटके ग्रसंतं प्रभया तमः ॥ २१ ॥ महामरकतश्यामं श्रीमद्वदनपंकजम् ॥ कंबुग्रीवं महोरस्कं सुनासं सुंदरभ्रुवम् ॥ २२ ॥ श्वासैजदलकाभातं कंबुश्रीकर्णदाडिमम् ॥ विद्रुमाधरभासैषच्छोणायितसुधास्मितम् ॥ २३ ॥

स्वर्गस्थदेवसहितम् । भागणा ज्योतिर्गणास्तैः सहितम् । जटां विक्षिप्य विकीर्य ॥ १५ ॥ परिश्रमेण इषितो गतः प्राप्त इत्यर्थः । 'इषु—सर्पणे' इत्यस्मात् ॥ १६ ॥ अन्योन्यघातिभिस्तद्भक्षणाय परस्परं युध्यद्भिः ॥ १७ ॥ १८ ॥ विष्णुमायावृतात्मन इति । स तथा दृष्टवानित्यर्थः ॥१९॥ ककुद्युन्नतप्रदेशे न्यग्रोधपोतं कोमलवटम् ॥ २० ॥ तस्येशानदिक्शाखायां शिशुमपि ॥ २१ ॥ श्रीमद्रम्यं वदनपंकजं यस्य तम् । कंबुवत्त्रिरेखावृता ग्रीवा यस्य तम् । महोरस्कं विशालवक्षसम् । सुनासं शोभना नासा यस्य तम् । सुंदरे भ्रुवौ यस्य तम् ॥ २२ ॥ श्वासैरेजंतः कंपमाना अलकास्तैराभातं शोभितम् । कंबुवदंतर्वलयेन श्रीर्ययोस्तौ कंबुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य

क्षुत्तृड्भ्यां परीतो व्याप्तः । मकरतिमिंगिलौ यादोभेदौ 'तिमिश्शतयोजनो मत्स्यः' इति कोशात् । इत्यर्थ इति—धातोः सर्पणार्थत्वात्सर्पणं प्रसरणमिति व्याख्येयम् ॥१६॥ 'यादांसि जलजंतवः' इत्यमरः॥१७॥आदिनाऽऽधिग्रहः । अर्दित उपद्रुतः ॥ १८ ॥ इत्यर्थ इति—क्षणिकेऽपि कालेऽघटनघटनापटीयस्या विष्णुमायया तस्यानंताब्दप्रतीतिरभूदिति भावः । एतच्च ज्योतिःशास्त्रे प्रतिदिनं चंद्रादिगतौ मेषादिलग्नभोगे चावगम्यते । तथाहि—'खखाभ्राष्टवेदा ४८००० भभोगेन भक्ताः' इहोक्तघव्यात्मिका षष्टिगुणिता २८८०००० चंद्रगतिर्हि प्रत्येकं विभिन्नभभोगभक्ता ७९६।३९पञ्चत्रिंशत्पलाधिकषण्णवत्युत्तरसप्तशतघव्यात्मिकायाति । सा च षष्टिघव्यात्मकेऽहोरात्रे कथं मायां विना संगच्छेत । एवं प्रत्येकं मेषादिलग्नं किञ्चित्पलाधिकत्र्यादिघव्यात्मकं भवति तत्र प्रत्येकं षष्टिघव्यात्मकेंत्रिंशांशाः कथं संगच्छेरन्, त्रिंशांशानां ह्यष्टादशशत १८०० घव्यः संति विनाऽघटनघटनापटीयसीं मायामेतत्कदाचिदपि न संगतं स्यादित्यलमप्रकृतचिंतया ॥ १९ ॥ "ककुदस्त्री ककुदोऽपि वृषांगे राजलक्ष्माणि । उच्चे वरे प्रधाने च" इति कोशात् । "पोतः शिशौ वहित्रे च गृहे वाससि कोमले" इत्यभिधानात् ॥ २० ॥ प्रागुत्तरयोर्मध्ये या दिक् सा प्रागुत्तरा तस्याम् । तस्य न्यग्रोधपोतस्य । "पुटः संपुटिते पत्रपात्रे च करनिर्मिते" इति निरुक्तिः ॥ २१ ॥ भ्रुवौ नेत्रोर्ध्वभागौ ॥ २२ ॥ कर्णयो

पद्मगर्भारुणापांगं हृद्यहासावलोकनम् ॥ श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥ २४ ॥ चार्वंगुलिभ्यां पाणिभ्यामुन्नीय चरणांबुजम् ॥ मुखे निधाय विप्रेंद्रो धयंतं वीक्ष्य विस्मितः ॥ २५ ॥ तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनांबुजः ॥ प्रहृष्टरोमाद्भुतभावशंकितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥ तावच्छिशोर्वै श्वसितेन भार्गवः सोंतःशरीरं मशको यथाऽविशत् ॥ तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥ खं रोदसी भगणानद्रिसागरान् द्वीपान्सवर्षान्ककुभः सुरासुरान् ॥ वनानि देशान्त्सरितः पुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः॥२८॥महांति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ॥ यत्किंचिदन्यद्व्यवहारकारणं ददर्श विश्वं स दिवावभासितम्॥२९॥हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीनपश्यत् ॥ विश्वं विपश्यञ्छ्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥ तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ॥ तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपांगनिरीक्षणेन ॥ ३१ ॥

तम् । विद्रुमतुल्याधरभासा ईषच्छोणायितं सुधातुल्यं स्मितं यस्य तम् ॥ २३ ॥ पद्मगर्भवत् आ ईषदरुणावपांगौ नेत्रप्रान्तौ यस्य तम् । हृद्यो हासो यस्मिंस्तदवलोकनं यस्य तम् । श्वासैरेजंत्यश्चलन्त्यो वलयस्तिर्यङ्निम्नरेखास्ताभिः संविग्ना चंचला निम्ना गंभीरा नाभिर्यस्मिंस्तद्दलवदश्वत्थपत्रसंकाशमुदरं यस्य तम् ॥ २४ ॥ चारवोंगुलयो ययोस्ताभ्यामुन्नीयाकृष्य धयंतं पिबंतम् ॥ २५ ॥ हृत्पद्मं च विलोचनांबुजे च प्रोत्फुल्लानि तानि यस्य सः । अद्भुतभावोऽत्याश्चर्यरूपं तेन शंकितः सन्नपि तं प्रष्टुं पुरा प्रससार समीपं गतः ॥ २६ ॥ अदः इदं जगद्यथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तं दृष्ट्वा चातीव विस्मितः सन्नमुह्यत् ॥ २७ ॥ कृत्स्नशो दर्शनं प्रपंचयति खमित्यादिना । ककुभो दिशः । पुराण्याकरांश्च । खेटान्कर्षकग्रामान् । व्रजान्गोकुलानि । आश्रमांश्च वर्णांश्च तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥ नानायुगानि कल्पांश्च कल्पयति तैर्वा कल्प्यत इति तथा तं कालं च । सदिव परमार्थ इवावभासितं तेनैव ॥ २९ ॥ ३० ॥ वटं च तोकं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापांगनिरीक्षणेन निरीक्षितः

दाडिमपुष्पे तदाकारे भूषणे इति व्याख्येयम्, अन्यथा “ कर्णे पुष्पं कटौ सूत्रं वेणीं शिरसि धारयन् । तावद्भवति चांडालो यावद्गंगां न मज्जति ॥ ” इति स्मृतिविरोधः स्यात् ॥ २३ ॥ २४ ॥ चार्विति—“ करारविंदेन पदारविंदं मुखारविंदे विनिवेशयंतम् । वटस्य पत्रस्य पुटे शयानं बालं मुकुंदं प्रणतोऽस्मि नित्यम् ॥ ” इति ग्रन्थांतरोक्तध्यानमत्राऽसूचि । मच्चरणारविन्दं कीदृशं—मधु यतो बहवो मद्भक्ता एतदास्वादाय यतंतेऽतोऽहमप्येतदास्वादयिष्यामीतीव पिबंतम् ॥ २५ ॥ भाव्यते चिंत्यतेऽनेनेति भावो रूपम् ॥ २६ ॥ यावत्तत्समीपं गतस्तावदेव । श्वसितेनोच्छ्वासेन । भार्गवो मार्कंडेयः । मशकोऽतिसूक्ष्मो रक्तपजीवविशेषः । तत्राप्यंतश्शरीरेऽपि ॥ २७ ॥ सवर्षान् स खंडान् । इत्यर्थ इति—वर्णाश्रमवृत्तीर्भिक्षाकृष्यादिरूपा इति भावः ॥ २८ ॥ तेनैव भगवतैवावभासितं विश्वं स मार्कंडेयो दिवा दिवस इवावभासितं प्रकाशयुक्तं ददर्शेति वार्थः । दिवा तेजसा वा “ यद्भासा सर्वमिदं विभाति ” इति श्रुतेः ॥ २९ ॥ तत्र निजाश्रमे । शिशोर्मायाशिशोः । श्वसिताच्छ्वसितेन बहिर्निरस्तो नुन्नः लयाब्धौ दर्शितप्रलयाब्धौ न्यपतत् ॥ ३० ॥ तस्मिन् पूर्वदर्शित एव ॥ ३१ ॥

१ पश्यतीति पाठान्तरम् ।

अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ॥ अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥ तावत्स भगवान् साक्षाद्योगाधीशो गुहाशयः ॥ अंतर्दध ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥ तमन्वथ वटो ब्रह्मन् सलिलं लोकसंप्लवः ॥ तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे भगवन्मायादर्शनं नाम नवमोऽध्यायः ॥९॥ सूत उवाच ॥ स एवमनुभूयेदं नारायणविनिर्मितम् ॥ वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥ मार्कंडेय उवाच ॥ प्रपन्नोऽस्म्यंघ्रिमूलं ते प्रपन्नाभयदं हरे ॥ यन्मायया।ऽपि विबुधा मुह्यंति ज्ञानकाशया॥२॥ सूत उवाच ॥ तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ॥ रुद्राण्या भगवान्रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥ अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ॥ पश्येमं भगवन् विप्रं निभृतात्मेंद्रियाशयम् ॥ ४ ॥ निभृतोदझषव्रातं वातापाये यथार्णवम् ॥ कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥

सन् ॥ ३१ ॥ अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति । द्वयोरन्वयः । कथंभूतम् । नेत्राभ्यां हृदि धिष्ठितमधिष्ठितम् ॥ ३२ ॥ तावत्परिष्वंगलाभात्पूर्वमेव ऋषेस्तस्यांतर्हितो बभूव । तदुद्यमवैफल्ये दृष्टांतः । अनीशो निर्दैवस्तेन निर्मिता ईहा क्रीडा यथेति॥ ३३ ॥अंतर्हितं भगवंतमनु वटः सलिलं लोकसंप्लवश्च तिरोधाय्यंतर्हितः । स च स्वाश्रम एव यथापूर्वं स्थित इति ॥ ३४ ॥ इति श्रीमद्भागवते द्वादशस्कंधे श्री० टीकायां नवमोऽध्यायः ॥९॥ दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् ॥ तेन साकमतिप्रीत्या समाभाष्य सभाजयन् ॥ १ ॥ १ ॥ ज्ञानकाशया ज्ञानवत्प्रकाशमानया त्वद्भजनं विना विद्वांसोऽपि यस्य तव मायया ज्ञानिनो वयमित्यहंकारेण विमुह्यंतीत्यर्थः ॥ २ ॥ श्रीनारायण एव स्वमायादर्शनश्रांतं शिवरूपेण सांत्वयामास । तदाह तमेवमित्यादिना । निभृतात्मानं समाहितचित्तम् । रुद्राण्या भवान्या ॥ ३ ॥ निभृता निश्चला आत्मेंद्रियाशया देहेंद्रियमनांसि यस्य तम् ॥ ४ ॥ निभृतं निश्चलमुदकं झषव्रातश्च यस्मिंस्तम् । संसिद्धिं फलं साक्षात्कुरु प्रकटीकुरु । यतो भवान्सि

अथातोऽनंतरम्।धिष्ठितं स्थापितम्।अभ्यकारलोपस्त्वार्षः।नेत्राभ्यां नेत्रद्वारा॥३२॥ "अनीशो भाग्यरहिते सर्वेशे दुर्बलेऽपि च" इति निरुक्तिः॥३३॥३४॥इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे नवमोऽध्यायः ॥९॥ तेन मुनिना । सभाजयन्सत्कुर्वन् (१)। स मार्कंडेयः । वैभवमुत्कर्षं प्रभावं वा । तमेव नारायणमेव । "यस्यैते राजमातंगास्तस्यैवामी तुरंगमाः" इतिवत्समासांतर्गतस्यापि त्यदादिभिरामर्श इति ध्वननान्नारायणविनिर्मितमित्यत्र समासांतर्गतोपि नारायणशब्दस्तमेवेति तच्छब्देन परामृश्यत इति ॥ १ ॥ हे हरे इति—मायातत्कार्यहर्ता त्वमेव "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इति गीतोक्तेरिति सम्बुद्ध्यभिप्रायः । इत्यर्थ इति—पुंसाहंकारनिवृत्त्यै सर्वत्र भगवद्दृष्टिरेव कार्या "सर्वभूतेषु मद्भावं पुंसो भावयतोऽचिरात् । स्पर्द्धाऽसूयातिरस्काराः साहंकारावियंति हि ॥" इति श्रीमुखोक्तेरयं भावः । ज्ञानकाशया ज्ञाने वर्तमानेपि काशया प्रकाशितुं समर्थया, तत्राहमेव प्रमाणमभूवमिति भावः ॥ २ ॥ तं मुनिम् ॥ ३ ॥ अथ रुद्रकर्तृकदर्शनानंतरम् । हे भगवन्निति—सर्वमनोरथसंपादनसमर्थोसीति भावः ॥ ४ ॥ यद्यपि प्रथमांतपाठः प्राचुर्येण दृश्यते बहु

श्रीभगवानुवाच ॥ नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥ अथाऽपि संवदिष्यामो भवान्येतेन साधुना ॥ अयं हि परमो लाभो नृणां साधुसमागमः ॥७॥ सूत उवाच ॥ इत्युक्त्वा तमुपेयाय भगवान् सात्वतां गतिः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥ तयोरागमनं साक्षादीशयोर्जगदात्मनोः ॥ न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च॥९॥ भगवांस्तदभिज्ञाय गिरिशो योगमायया ॥ आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥ आत्मन्यपि शिवं प्राप्तं तडित्पिंगजटाधरम् ॥ त्र्यक्षं दशभुजं प्रांशुमुद्यंतमिव भास्करम् ॥ ११ ॥ व्याघ्रचर्मांबरं शूलधनुरिष्वसिचर्मभिः ॥ अक्षमालाडमरुककपालपरशुं सह ॥ १२ ॥ बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः ॥ किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ १३ ॥ नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम् ॥ रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥ १४ ॥ तस्मै सपर्यां व्यदधात् सगणाय सहोमया ॥ स्वागतासनपाद्यार्घ्यगंधस्रग्धूपदीपकैः ॥ १५ ॥ आह चात्मानुभावेन पूर्णकामस्य ते विभो ॥ करवाम किमीशान येनेदं निर्वृतं जगत् ॥ १६ ॥

च्छिदः ॥ ५ ॥ आशिषोऽभ्युदयलक्षणाः । उत निश्चितम् । अत्र हेतुः । भक्तिमिति ॥ ६ ॥ संवदिष्यामः संवादं करिष्यामः ॥ ७ ॥ सात्वतां सताम् । गतित्वे हेतुः । ईशानं इति ॥ ८ ॥ रुद्धा धियोंतःकरणस्य वृत्तयो येन सः ॥ ९ ॥ १० ॥ न केवलं बहिरेवात्मन्यपि प्राप्तं शिवं विचक्ष्य विस्मितः । कथं प्राप्तम् । सहसाऽकस्मादेव हृदि भातम् । कथंभूतम् । तडिद्वत्पिशंगा जटा धारयतीति तथा तम् । त्रीण्यक्षीणि यस्य तम् । शूलादिभिः सहाक्षमालादीन्बिभ्राणमित्यन्वयः । अक्षमालादीनां द्वंद्वैक्यम् ॥ ११ ॥ १२ ॥ विस्मयपूर्वकं बहिर्दर्शनमाह । किमिदमिति ॥ १३ ॥ सोमया उमया सहागतं रुद्रं ददृशे । ततो ननाम ॥ १४ ॥ १५ ॥ पूर्णकामत्वं

पुस्तकेषु तथापि स उपमानोपमेययोर्विरुद्धविभक्तिकत्वाद्विरुद्ध इव भाति ' पश्येमम् ' इत्युपमेये द्वितीयादर्शनात् । क्वचित्तु निभृतोदझषव्रातमिति द्वितीयांत एव पाठो दृश्यते । संसिद्धिः फलम् ' संसिद्धिः प्रकृतौ फले ' इति कोशात् ॥ ५ ॥ अत्राऽनिच्छायाम् । आशिषोऽणिमाद्याः सिद्धीः । तर्हि मोक्षं देहीति तत्राह—मोक्षमपीति । तर्हि भक्तिं देहीति तत्राह—भक्तिमिति विश्वनाथः ॥ ६ ॥ यद्यप्ययं न किञ्चिदिच्छति अथापि तथापि ॥ ७ ॥ सात्वतां वैष्णवानां गतिर्गम्यः सर्ववैष्णवमुख्यत्वात् ' वैष्णवानां यथा शंभुः ' इत्यग्रे वक्ष्यमाणत्वात् ' स सतां गतिः ' इति पाठे तु सतामभीप्सितगतिप्रदायित्वाद्भक्तिर्न केवलं सतामेव गतिरपि तु सकामानामपीत्याह—ईशान इति।नात्र चित्रमित्याह—ईश्वर इति॥८॥९॥तत् तद्धीवृत्तिरोधनम् । तस्य गुहाकाशं हृदयाकाशम् । भगवांस्तदिति—स्वनिष्ठाभिव्यक्त्यर्थं स्वयं श्रीविष्णावंतर्हिते सतीति गिरिशस्य तद्व्युदासायोगात् । यद्वा—श्रीभगवाञ्शिवाभिप्रायं विज्ञाय योगमायया गिरिशः सन् मार्कंडेयहृदाऽऽकाशमाविशत्तत्र हेतुः—ईश्वर इति । इदमेवोक्तं स्वामिचरणैः—श्रीनारायण एव स्वमायादर्शनश्रांतं शिवरूपेण सांत्वयामासेति ॥ १० ॥ ११ ॥ अत्र द्वंद्वैक्ये पुंस्त्वमार्षम् ॥ १२ ॥ १३ ॥ स उमयेति छेदः । " सोऽचि लोपे चेत्''इति सलोपः ॥ १४ ॥ १५ ॥ विभो इति—विभुत्वादेव पूर्णकामोऽसीति भावः । ईशानेति—सर्वेश्वरस्य तव वयं किमपि

नमः शिवाय शांताय सत्त्वाय प्रमृडाय च ॥ रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥ सूत उवाच ॥ एवं स्तुतः स भगवानादिदेवः सतां गतिः ॥ परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥ १८ ॥ श्रीभगवानुवाच ॥ वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ॥ अमोघं दर्शनं येषां मर्त्यो यद्विंदतेऽमृतम् ॥१९॥ ब्राह्मणाः साधवः शांता निःसंगा भूतवत्सलाः ॥ एकांतभक्ता अस्मासु निर्वैराः समदर्शिनः ॥२०॥ सलोका लोकपालास्तान् वंदंत्यर्चंत्युपासते ॥ अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः ॥ २१ ॥ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ॥ नात्मनश्च जनस्यापि तद्युष्मान् वयमीमहि ॥ २२ ॥ न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः ॥ ते पुनंत्युरुकालेन यूयं दर्शनमात्रतः ॥ २३ ॥ ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥ २४ ॥

व्यनक्ति । येन त्वया जगन्निर्वृतं भवतीति ॥ १६ ॥ निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति । नमः शिवाय निर्गुणाय । सत्त्वाय सत्त्वाधिष्ठात्रे । अत एव प्रमृडयति सुखयतीति तथा तस्मै ॥ १७ ॥ १८ ॥ नोऽस्मत्तः । त्रयो ब्रह्मविष्णुमहेश्वराः । यद्येभ्यः । ते वयम् ॥ १९ ॥ वरदानादिना भवत्स्वेवैवास्माभिः क्रियते न त्वनुग्रहो जगद्वंद्यत्वाद्भवतामिति ब्राह्मणान्स्तौति ब्राह्मणा इत्यादि । ये साधवः सदाचाराः । शांता मत्सरादिरहिताः । निःसंगा निष्कामाः ॥ २० ॥ न केवलं त एव किंत्वहं चेत्यादि ॥ २१ ॥ पूज्यतमत्वे हेत्वंतरमाह । नेति । अण्वप्यणुमात्रमपि न चक्षते न पश्यंति तत्तस्मादेवंभूतान्युष्मान् ईमहि भजेम ॥ २२ ॥ २३ ॥ ब्राह्मणेभ्यो ब्राह्म

कर्तुं न शक्ता इति भावः । निर्वृतं प्राप्तानंदम् ॥ १६ ॥ अत एव सत्त्वाधिष्ठातृत्वादेव । मृडयति सुखयति ‘ मृड–सुखने ’ इति धातुः । अपिशब्दात्तमोजुषेऽप्यमूढायेत्यर्थः ॥ १७ ॥ १८ ॥ वरदानामिंद्रादिदेवानामीशाः स्वामिनः । अमोघं फलवत् ॥ १९ ॥ भूतवत्सला दयालवः, अत एव निर्वैराः । अस्मासु त्रिषु । समदर्शिनः अभेदबुद्धयः । क्रमसंदर्भस्तु–यतस्ते समदर्शिनस्तस्मान्मदादिषु या भिदा वर्तते तामण्वपि यथा स्यात्तथा नाचक्षत इति सत्यम्, तत्तेभ्योपि हर्य्येकांतभक्तान्युष्मान्वयमीमहि प्रियत्वेन जानीम इत्यर्थः । तदुक्तं तेनैव चतुर्थे–“ अथ भागवता यूयं प्रियाः स्थ भगवान्यथा । न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥” इति । अभेदश्चेत्तर्हि मार्कंडेयस्य समाधिविरतिर्न स्यात्तत्राभेददृष्टेरुट्टंकनेपि ‘स्वयञ्च हरीरिश्वरः’ इत्यनेन हरेरेव प्राधान्यमुक्तं, तस्यैव स्वयमीश्वरत्वोक्तेः । प्रथमेऽपि–‘ पार्थिवाद्दारुणो धूमः ’ इत्यादिना । ब्राह्मेऽपि शिवेन तथैवोक्तम्–“ यो हि मां द्रष्टुमिच्छेत ब्रह्मणं वा पितामहम् । द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान् ॥ ” परब्रह्मस्वरूपस्य तस्य ज्ञानेन सर्वज्ञानसंभवादिति ॥ २० ॥ त एव लोकलोकपाला एव । वंदंतीत्यार्षं परस्मैपदम् ॥ २१ ॥ एवम्भूतान् अभेददर्शिनः ॥ २२ ॥ अम्मयानि जलस्वरूपाणि तीर्थानि पुष्करादीनि किं न पुनंति किन्तु पुनन्त्येव, चेतनोज्झिता मृत्पाषाणमया देवा न पुनंति किन्तु पुनंत्येव, तदाह–ते तीर्थदेवा उरुकालेन बहुसेवनेन । यूयं ब्राह्मणाः । क्वचित् ‘ दर्शनादेव साधवः ’ इति पाठोऽपि स्थानांतरे पठ्यते, तत्र साधुशब्देन भगवन्निष्ठावन्तो वेदानुयायिन एव ज्ञेया न तु त्रिवर्णेतरा अपीति ॥ २३ ॥ ब्राह्मणशब्देन पारिभाषिकब्राह्मणशब्दो–ब्रह्माधीते वेद वा ब्राह्मण इत्येवंरूपो न ग्राह्य इत्याह–येऽस्मद्रूपं मुख्यमस्माकं रूपं वेदत्रयीरूपमात्मसमाधानादिभिर्बिभ्रति । संयम इंद्रियजयः । स्वाध्यायपदेनाध्यापनमपि गृह्यते ।

१ चित्तैकाग्र्यादिभिः ।

श्रवणाद्दर्शनाद्वापि महापातकिनोपि वः ॥ शुध्येरन्नंत्यजाश्चापि किमु संभाषणादिभिः ॥ २५ ॥ सूत उवाच ॥ इति चंद्रललामस्य धर्मगुह्योपबृंहितम् ॥ वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥ २६ ॥ स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् ॥ शिववागमृतध्वस्तक्लेशपुंजस्तमब्रवीत् ॥ २७ ॥ ऋषिरुवाच ॥ अहो ईश्वरचर्येयं दुर्विभाव्या शरीरिणाम् ॥ यन्नमंतीशितव्यानि स्तुवंति जगदीश्वराः ॥ २८ ॥ धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ॥ आचरंत्यनुमोदंते क्रियमाणं स्तुवंति च ॥ २९ ॥ नैतावता भगवतः स्वमायामयवृत्तिभिः ॥ न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥ ३० ॥

णान् । आत्मसमाधानं चित्तैकाग्र्यम् । तप आलोचनम् । स्वाध्यायोऽध्ययनम् । संयमो वागादिनियमस्तैः ॥ २४ ॥ किंच श्रवणादित्यादि ॥ २५ ॥ चंद्रो ललामो भूषणं यस्य तस्य धर्मरहस्ययुक्तममृतास्पदं वचः कर्णाभ्यां पिबन्नातृप्यदलमिति नामन्यत । कर्णयोरमृतायनमिति वाऽन्वयः ॥ २६ ॥ शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुंजो यस्य सः ॥ २७ ॥ इयं लीला दुर्विभाव्याऽवितर्क्या । यया ईशितव्यानि स्वनियम्यानि यानि भूतानि तानि जगदीश्वराः स्वयं नमंति स्तुवंति चेति ॥ ॥ २८ ॥ अथवा लोकसंग्रहमात्रमेतदित्याह । धर्ममिति । प्रवक्तारोऽपि यत्स्वयं देहिनां धर्मं ग्राहयितुमाचरंति ॥ २९ ॥ नन्वेतत्स्वप्रभावतिरस्कारकं कथं मया क्रियते तत्राह । नैतावतेति । एतावता लोकसंग्रहमात्रेण । तैर्नमनादिभिः । कथंभूतैः । स्वमायामयी वृत्तिर्येषु तैर्भगवतो मायिनस्तवानुभावो न दुष्येत । यतः प्रसिद्धस्य मायिनः कुहकं कपटं यथा तथा एतानि नमनादीनि । अतस्तस्य तथा कुहकैरात्मानुभावो न दुष्यति तद्वत् । प्रदुष्येतानुभाव इति पाठे नकारस्य दृष्टांतेऽप्यनुषंगः ॥ ३० ॥

तथा च क्षत्रियवैश्यौ न ग्राह्यौ किन्तु केवलं विप्र एव ब्राह्मण इति । ब्राह्मणताविवरणन्तु ‘ जन्माद्यस्य ’ इति व्याख्याशत्यां विशेषतः कृतमस्तीत्युपरम्यते ॥ २४ ॥ अन्यदाधिक्यमाह—किञ्चेति । महापातकिनो ब्रह्मघ्नादयः पञ्च, किं पुनरन्य इत्यपिशब्दार्थः । अंत्यजाः कैवर्तादयः, किं पुनः क्षत्रियादयः । संभाषणादेः का वार्तेत्याह—किम्विति । आदिना स्पर्शनस्तवनादिग्रहः । वा युष्माकं ब्राह्मणानामित्यर्थः । यत्र कुत्रचिन्महत्त्वं तत्र सर्वत्र ब्राह्मणप्रसादावाप्तमेवेति ‘ विप्रप्रसादाद्धरणीधरोऽहं विप्रप्रसादात्कमलाकरोहम् ’ इत्यादिभगवदुक्तेः ॥ २५ ॥ इतीत्थम् । पिबन्नादरेण श्रृण्वन् ॥ तं शिवम् ॥ धर्मस्य प्रवक्तारोऽपि अनुमोदन्तेऽन्यांस्तत्र प्रवर्तयन्ति—क्रियमाणं स्तुवन्ति—धन्योऽयं धर्मो यश्चैतादृशैर्महद्भिरपि क्रियत इति धर्मस्तुतिर्धर्मैकर्तृष्वेव पर्यवस्यति । धर्मः—‘ एकान्तभक्तः ’ इत्यारभ्य ‘ नात्मनश्च जनस्य ’ इत्यादि, गुह्यम्—‘ तद्युष्मान्वयमीमहि ’ इत्यादि, ताभ्यामुपबृंहितम् । नातृप्यदिति—नायं स्वस्तुत्योत्थ आनन्दः किन्तु स्तुतिमिषेणाऽस्मान्धर्ममेवाशिक्षयत्तस्मादेतादृशधर्मवता मया भवितव्यमित्युपदेशप्राप्त्युत्थ एव ज्ञेयः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ अत्राक्षिपति—नन्विति । यत इति अत इत्यनेनान्वेति । मायिन ऐन्द्रजालिकादेः । अनुभावो निश्चयः । अन्येभ्यो धनादिग्रहणलक्षणः । अत्र सन्दर्भः—तेषु मुख्यं भगवन्तमवलम्ब्य तत्र दोषान्तरं निरस्यति—नैतेति त्रिभिः । दोषाऽभावे हेतुः—स्वेषु भक्तेषु या माया कृपा तन्मयवृत्तिरिति मम भक्तपरम्परास्वेषा रीतिः प्रवर्तितेति कृपया प्रीतिवशतयेत्यर्थः । अत्र व्यतिरेकेण दृष्टान्तः—मायिनः कुहकिनः कपटं यथा प्रदुष्यते तथा न दुष्यत इति । विश्वनाथस्तु—केनचिदैन्द्रजालिकेन स्वमुखात्कश्चिद्वानर उद्भाव्य स स्तूयते नमस्क्रियते च तेन तस्यानुभावो यथा न दुष्यते तथेति‘न दुष्यते’इति पाठे दृष्टान्ते नकारस्यानुषङ्गः।यद्यपि श्रीरुद्रेण तदीयस्तुत्यादयो न मायया कृतास्तद

सृष्ट्वेदं मनसा विश्वमात्मनानुप्रविश्य यः ॥ गुणैः कुर्वद्भिराभाति कर्तृवत्स्वप्नदृग्यथा ॥ ३१ ॥ तस्मै नमो भगवते त्रिगुणाय गुणात्मने ॥ केवलाया द्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३२ ॥ कं वृणे नु परं भूमन् वरं त्वद्वरदर्शनात् ॥ यद्दर्शनात् पूर्णकामः सत्यकामः पुमान् भवेत् ॥ ३३ ॥ वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात् ॥ भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥ ३४ ॥ सूत उवाच ॥ इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा ॥ तमाह भगवाञ्शर्वः शर्वया चाभिनंदितः ॥ ३५ ॥

मायाचेष्टितं प्रपंचयति । सृष्ट्वेति । स्वप्नदृग्यथेत्यविद्याचेष्टिते दृष्टांतः ॥ ३१ ॥ त्रिगुणत्वेऽपि न जीववत्तदभिभूताय किंतु गुणानामात्मने नियंत्रे ॥ ३२ ॥ वरं वृणीष्वेति यदुक्तं तत्राह । कमिति । वरं दर्शनं यस्य तस्मात् । त्वत्तः परं कं नु वरं वृणे । यस्य तव दर्शनादवलोकनात्पूर्णकामः सर्वानंदसंदोहरूपः सत्यकामो यथेच्छं प्राप्तसर्वानंदः ॥ ३३ ॥ ३४ ॥ वरदानाय स्वयमेव प्रवृत्तः शर्वयोमया चाभिनंदितोऽनुमोदितः सन्नाह ॥ ३५ ॥

पि स्वस्तुत्या लज्जितेन मुनिना प्रयुक्तोऽयं दृष्टान्तो नानुपपन्नः॥३०॥अविद्यया स्वप्नं सृजतो जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुतेश्वरस्येति तात्पर्यवानाह—स्वप्नदृग्यथेति।दोषास्पर्शमेवाह युग्मेन।इदं विश्वं मनसा सङ्कल्पेनैव निमित्तेन गुणैरुपादानैः सृष्ट्वापि ततश्चात्मना स्वयं तदनुप्रविश्य प्रवेशेन स्थापयित्वापि तत्तदुपलक्षगत्वेन संहृत्यापि कर्तृवदेवाभाति न तु कर्तैवेति।तत्र हेतुत्वेन गुणान् विशिनष्टि—कुर्वद्भिरिति।तत्सान्निध्यप्रभावेण चेतना इव गुणा एव सर्वं कुर्वन्ति न तु स्वयमिति सङ्कल्पस्याभासमात्रेण तदसम्भवात्।तत्राविद्यया स्वप्नं सृजतस्तदीयतटस्थांशस्य जीवस्यापि वस्तुतस्तत्सम्बन्धोनास्ति किमुत तस्येति दर्शयन्दृष्टान्तयति—स्वप्नदृग्यथेति ॥३१॥ गुरवे,किम्भूताय—ब्रह्ममूर्तये ब्राह्मणरूपाय । " त्वं देवेषु ब्रह्मणोऽहं मनुष्येषु " इति जाबालश्रुतेः । एतेन ब्राह्मणस्यैव गुरुत्वं सूचितम् । केवलाय मुख्याय । अद्वितीयाय एकरूपाय । त्रयोऽमृताभयक्षेमरूपा गुणा यस्य तस्मै । गुणा ऐश्वर्यादयोऽप्यात्मानः स्वरूपभूता यस्य तस्मै । केवलाय प्रकृतिसङ्गशून्याय । अद्वितीयायातुल्यायातो गुरवे सर्वोपदेष्ट्रेऽतो वेदरूपायेति सन्दर्भः ॥ ३२ ॥ हे भूमन्निति—अनन्तफलदातुः सर्वेश्वरात्क—कं वरं वृणोमि न कमपीति भावः । यद्वा—वरः सर्वोत्कृष्टवरो दर्शनं यस्य तस्मात्त्वत्तः किं परमपरं वरं वृणे । तत्र हेतुः—यद्दर्शनादिति ॥ ३३ ॥ यदि वरदानेऽतीव हठस्तर्ह्येकं वरमपि वृणोमीति योज्यम् । भगवति श्रीहरौ त्वयि, तद्रूपे हरे च । यद्वा—मद्भक्तशिरोमणौ त्वयि परमतत्परे उपदेशगुरौ भक्तिं च वृणे, तत्परत्वं च स्वेनैव तेन षष्ठे चित्रकेतूपाख्यान उक्तम्—" अयं तस्य महाभागश्चित्रकेतुः प्रियोऽनुगः । सर्वत्र समदृक् शान्तो ह्यहश्चैवाच्युतप्रियः ॥ " इति । स्वयं मार्कण्डेयेनाप्युक्तम्—" किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मनइन्द्रियाणि । स्पन्दन्ति वै तनुभृतामजशर्वयोश्च—" इत्यनेन नारायणार्षिं प्रति । किञ्च—' मुख्योऽ

कामस्तेऽयं महर्षेऽस्तु भक्तिमांस्त्वमधोक्षजे॥आकल्पांताद्यशःपुण्यमजरामरता तथा॥३६॥ज्ञानं त्रैकालिकं ब्रह्मन् विज्ञानं च विरक्तिमत्॥ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यताऽस्तु ते ॥३७॥ सूत उवाच ॥ एवं वरान्स मुनये दत्त्वाऽगात्त्र्यक्ष ईश्वरः ॥ देव्यै तत्कर्म कथयन्ननुभूतं पुरा मुनेः ॥३८॥ सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ॥ विचरत्यधुनाप्यद्धा हरावेकांततां गतः ॥ ३९ ॥ अनुवर्णितमेतत्ते मार्कंडेयस्य धीमतः ॥ अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ४० ॥ एतत्केचिदविद्वांसो मायासंसृतिमात्मनः ॥ अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥ ४१ ॥ य एवमेतद्भृगुवर्य वर्णितं रथांगपाणेरनुभावभावितम् ॥ संश्रावयेत्संशृणुयादुतावुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४२ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे दशमोऽध्यायः ॥ १० ॥

कामोऽयं सर्वोऽप्यन्यच्च यत्पुण्यं यश इत्यादि ब्रह्मवर्चस्विनस्ते भूयादित्युत्तरेणान्वयः । यतस्त्वमधोक्षजे भक्तिमान् ॥ ३६ ॥ ३७ ॥ तस्य कर्म तपआदि । मुनेः पुराऽनुभूतं यद्भगवन्मायावैभवं तच्च कथयन् ॥ ३८ ॥ अवाप्तो महायोगमहिमा येन सः ॥ ३९ ॥ एतन्मार्कंडेयस्य चरितं तेनानुभूतं च भगवन्मायावैभवं तेऽनुवर्णितम् ॥ ४० ॥ नन्वेवमप्यस्मत्कुलोत्पन्नस्यास्य सप्तकल्पायुष्ट्वं वृद्धैरुच्यमानं विरुद्धमेव तत्राह। एतन्मार्कंडेयेनानुभूतं भगवन्मायावैभवं नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाकस्मिकं न तु सर्वसाधारणम् । एतत्केचिदनादिबहुकालमावर्तितं दैवयुगसहस्रद्वयमानेन पुनःपुनः परिवर्तितं प्रचक्षते । के ते । नृणां संसृतिं सर्गप्रलयादिलक्षणामात्मनो भगवतो मायेत्येवमविद्वांसः विद्वांसस्तु मायाशिशोः श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमतः सप्तकल्पत्वं तत्क्षणमात्रेणेति वदंत्यतो न विरोध इत्यर्थः ॥ ४१ ॥ संश्रृणुयात् । उ इति हर्षे। संश्रावयेद्वा । यौ तावुभौ तयोः कर्मवासनाकृता संसृतिर्न भवेदिति ॥ ४२ ॥ इति श्रीमद्भागवते द्वादशस्कंधे श्रीध०टीकायां दशमोऽध्यायः ॥ १० ॥

भूद्ब्राह्मणो गुरुः ' इति तृतीयस्कन्धे मैत्रेयेण विदुरं प्रत्युक्तम् । ' जन्मना ब्राह्मणो गुरुः ' इति श्रीदशमे नन्दराजेनापि श्रीगर्गं प्रत्युक्तमिति ॥ ३४ ॥ ३५ ॥ अयं हरिहराभेदभक्तितद्भक्तभक्तिरूपो मनोरथः । हे महर्षे इति—महर्षित्वात्तुभ्यं वरदानं सिद्धसाधनमेवेति भावः । यद्वा—अहमधोक्षजे भक्तिमान्स्यामित्ययं ते कामोऽस्त्विति योज्यम् ॥ ३६ ॥ ब्रह्मन्निति—वेदविद्ब्राह्मणत्वाद्बहुवरदानयोग्य एव त्वमिति भावः ॥ ३७ ॥ त्र्यक्षस्त्र्यंबकः ॥ ३८ ॥ महायोगस्य भक्तियोगस्य महिमाऽणिमादिसिद्धिपूर्वकं भगवत्साक्षात्कारलक्षणः । एकांततां नित्यभक्तिताम् ॥ ३९ ॥ ४० ॥ अत्राक्षिपति—नन्विति ॥ ४१ ॥ तावुभौ श्रोतृवक्तारौ तुल्यफलभागिनाविति शेषः । तदेवाह—तयोरिति । हे भृगुवर्येति—अहो स एवैकोऽस्माकं कुलश्रेष्ठ आसीदहं तु न तादृगंशभागपीति विमृशंतं शौनकं सूतस्तमपि प्रोत्साहयति—त्वं तु बहुजन्मसुकृतलभ्यसर्वपुराणेति

शौनक उवाच ॥ अथेममर्थं पृच्छामो भवंतं बहुवित्तमम् ॥ समस्ततंत्रराद्धांते भवान्भागवततत्त्ववित् ॥ १ ॥ तांत्रिकाः परिचर्यायां केवलस्य श्रियः पतेः ॥ अंगोपांगायुधाकल्पं कल्पयंति यथैव यैः ॥२॥ तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ॥ येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥३॥ सूत उवाच ॥ नमस्कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि ॥ याः प्रोक्ता वेदतंत्राभ्यामाचार्यैः पद्मजादिभिः ॥ ४ ॥ मायाद्यैर्नवभिस्तत्त्वैः स विकारमयो विराट् ॥ निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥ ५ ॥ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः ॥ नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥ ६ ॥

एकादशे तु पूजार्थं महापुरुषवर्णनम् ॥ रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक् पृथक् ॥ १ ॥ येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः॥तं पृच्छति क्रियायोगं सांगोपांगादिकल्पितम्॥ २॥ अथेति हे भागवत यतो भवान्समस्ततंत्रराद्धांते तत्त्वविद्रहस्यज्ञः ॥ १ ॥ प्रष्टव्यमाह तांत्रिका इति । परिचर्यायामुपासनायां विषये । केवलस्य चैतन्यघनस्य । अंगानि पादादीन्युपांगानि गरुडादीन्यायुधानि सुदर्शनादीन्याकल्पाः कौस्तुभादयस्तेषां द्वंद्वैक्यम् । तद्यथा कल्पयंति यैश्च तत्त्वैः कल्पयंति तन्नो वर्णयेति ॥ २ ॥ ॥ ३ ॥ गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह । नमस्कृत्येति । विभूतीर्विराड्विग्रहाद्याः ॥ ४ ॥ अंगादिकल्पनां भूरादिभिर्दर्शयितुं प्रथमं तावद्यथा कल्पयंतीति प्रश्नस्य वैराजरूपेणेत्युत्तरं वक्तुं विराड्विग्रहमाह । मायाद्यैः प्रकृतिसूत्रमहदहंकारपंचतन्मात्रैर्नवभिस्तत्त्वैः । विकारा एकादशेंद्रियाणि पंचमहाभूतानीति षोडश । तन्मयो विराट् स प्रसिद्धो निर्मितः । यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते । अनेनांगादिकल्पनासौलभ्यं दर्शितम् ॥ ५ ॥ एतद्वै पौरुषम् । पुरुषस्य वैराजस्य रूपमेवेश्वरेणाधिष्ठितत्वात्तदभेदविवक्षया तस्य रूपमुच्यते । अंगकल्पनामाह भूः पादावित्यादित्रिभिः । भूराद्यनुवादेन भगवत्पादादिभावना विधीयते ॥ ६ ॥

हासश्रोतृत्वाद्भृगुवंशे वर्य एवेति भावः ॥ ४२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे दशमोऽध्यायः ॥ १० ॥ महापुरुषो विराट् । व्यूहो रचनाविशेषः ( १ ) । येन क्रियायोगेन । असौ बुद्धिसंनिहितो मार्कंडेयः । अमृतत्वं चिरजीवित्वम् । “ आभूतसंप्लवत्वं च ह्यमृतत्वं प्रभाषते ” इति स्मृतेः ( २ ) । अथ सर्वशास्त्रश्रवणोत्तरम् । इमं बुद्धिस्थं क्रियायोगम् । हे भागवतेति–भागवता एवैतत्तत्त्वं जानंतीति भावः ॥ १ ॥ तांत्रिकाः पञ्चरात्राद्यागमनिपुणाः । केवलस्य पञ्चायतनपूजायां मुख्यस्य ॥ २ ॥ तदंगोपांगादिकल्पनम् । बुभुत्सतां बोद्धुमिच्छताम् ॥ ३ ॥ आदिना शंकरनारदादिग्रहः ॥ ४ ॥ अनेन विराड्विग्रहत्वकथनेन ॥ ५ ॥ एतत्प्रत्यक्षसिद्धम् । पुरुषस्य भगवतो मायिकं रूपं न तु स्वरूपमित्यर्थः । किमंगं कया विभूत्या कल्पितमिति चेत्तत्राह–भूरिति । सच्चिदानंदरूपस्य भगवतः पादयोर्या विभूतिर्भूस्तयास्य पादौ कल्पिताविति तदभेदनिर्देशाद्भूरेव पादावेवं सर्वत्र ज्ञेयम् । एवं च विराट्पुरुषस्य पादादिभावनया सच्चिदानंदपुरुषस्य पादादीनि स्मर्तव्यानि । यथा मत्प्रभुः

प्रजापतिः प्रजननमपानो मृत्युरीशितुः ॥ तद्बाहवो लोकपाला मनश्चंद्रो भ्रुवौ यमः ॥ ७ ॥ लज्जोत्तरोऽधरो लोभो दंता ज्योत्स्ना स्मयो भ्रमः ॥
रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्द्धजाः ॥ ८ ॥ यावानयं वै पुरुषो यावत्या संस्थया मितः ॥ तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥
कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभाव्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥ १० ॥ स्वमायां वनमालाख्यां नानागुणमयीं
दधत् ॥ वासश्छंदोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥ ११ ॥ बिभर्ति सांख्यं योगं च देवो मकरकुंडले ॥ मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम् ॥
॥ १२ ॥ अव्याकृतमनंताख्यमासनं यदधिष्ठितः ॥ धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥ १३ ॥ ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत्॥
अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥ १४ ॥ नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् ॥ कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ १५ ॥
इंद्रियाणि शरानाहुराकूतीरस्य स्यंदनम् ॥ तन्मात्राण्यस्याभिव्यक्तिं मुद्रयार्थक्रियात्मताम् ॥ १६ ॥

प्रजननं मेढ्रम् । अपानः पायुः ॥ ७ ॥ ८ ॥ अनुक्तमन्यदप्येवमूह्यमित्याह । यावानयं व्यष्टिः पुरुषः स्वमानतः सप्तवितस्तिः संस्थयाऽवयवसन्निवेशेन मितः परिमितः ॥ ९ ॥ भूषणादीन्याह कौस्तुभेत्यादिना । स्वात्मज्योतिः शुद्धं जीवचैतन्यम् । या तस्य कौस्तुभस्य प्रभा तामेव श्रीवत्सं बिभर्ति ॥ १० ॥ त्रिवृत्स्वरं त्रिमात्रं प्रणवम् ॥ ॥ ११ ॥ पारमेष्ठ्यं पदं ब्रह्मलोकम् ॥ १२ ॥ अव्याकृतं प्रधानम् । यदधिष्ठितोऽधिष्ठाय स्थितः । तदासनभूतं पद्मं सत्त्वं सत्त्वगुणः ॥ १३ ॥ मुख्यतत्त्वं प्राणतत्त्वम् । “ प्राणो वै मुख्यः ” इति श्रुतेः । दरवरं शंखम् ॥ १४ ॥ १५ ॥ आकूतीः क्रियाशक्तियुक्तं मनः । अस्य रथस्याभिव्यक्तिं बहिरभिव्यक्तं रूपम् ।

स्वपादाभ्यां पृथिवीं बिभर्ति शिरसा दिवं तथान्यानि भगवदंगानि सर्ववस्तूनि, एवं सर्वभावनापि भगवद्भावनैवेति ज्ञेयम् ॥ ६ ॥ प्रजन्यतेऽनेनेति प्रजननम् ॥ ७ ॥ उत्तर उपरितनः । स्मयो हासः । भ्रमो भ्रमहेतुर्माया ॥ ८ ॥ ९ ॥ व्यपदेशो मिषः “ व्यपदेशो मिषेऽस्थाने स्वरूपे पक्षिवर्जिते ” इति निरुक्तिः । अंगान्युक्त्वा भूषणान्याह—कौस्तुभस्वरूपेण शुद्धजीवचैतन्यं कौस्तुभस्यैव विभूतिं धत्ते । तथाहि—“ अकारेणोच्यते विष्णुः श्रीरुकारेण कथ्यते । मकारस्तु तयोर्दासः पञ्चविंशः प्रकीर्तितः ॥ ” इति भक्तिविवेकोक्तेः । स्वदासं भगवान् हृदि धत्ते इत्यभिप्रेत्यैव “ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ” ‘ भगवान्भक्तभक्तिमान्’ इत्याद्युक्तम् । कौस्तुभस्यैव प्रभा व्यापिनी दक्षिणस्तनोर्द्ध्वपर्यंतगामिनी या तामेव श्रीवत्सं दक्षिणावर्त्तमृणालतंतुसूक्ष्मरोमावल्याकारं बिभर्ति, यस्य विभूतिर्धर्मः, तथैव वामस्तनोर्द्ध्वलक्ष्मीरेखानिकषाश्मनि कानकी रखेवानुक्तापि ज्ञेया, यस्या विभूतिश्च राजादिसंपत् ॥ १० ॥ त्रिगुणात्मिका माया वनमालाया विभूतिः, छंदांसि पीतांबरस्योपवीतस्य प्रणवस्त्रिमात्रश्च विभूतिरेवमेव सर्वत्र स्वविभूत्या सामानाधिकरण्यम् ॥ ११ ॥ सांख्यं ज्ञानम् । योगं कर्म ॥ १२ ॥ अव्याकृतं प्रधानमनंतस्यैव विभूतिस्तस्यैव विश्वहेतुत्वम् “ यमाहुरस्य स्थितिसर्गसंयमं त्रिभिर्विहीनं यमनंतमद्वयम् ” इति “ उत्पत्तिस्थितिलयहेतवोस्य कल्पाः सत्त्वाद्याः प्रकृतिगुणा यदीक्षयाऽऽसन् ” इति पंचमोक्तेः । वनमालाविभूतिर्माया तु ततोपि मूलभूता ज्ञेया ॥ १३ ॥ १४ ॥ नभोनिभं नभोवन्निर्मलम् । असिं नंदकम् । तमोमयं तमोगुणवदाच्छादकम् । पुण्यकर्मस्वरूपे इषुधी ॥ १५ ॥ इत्यर्थ इति—वरदमुद्रया वरदत्वमभयदमुद्रयाऽभयदत्वं च भावयेदिति भावः । बाहुप्रसारणपूर्वकं दक्षहस्तस्य विस्तृतस्योत्तानीकरणेनाश्वासनं वरदमुद्रा भवति, तस्य तथैव न्युब्जीकरणेनाश्वासनमभयदमुद्रा भवतीति विवेकः। एवमन्या अपि ज्ञेयाः॥ १६॥

मंडलं देवयजनं दीक्षा संस्कार आत्मनः ॥ परिचर्या भगवत आत्मनो दुरितक्षयः ॥ १७ ॥ भगवान्भगशब्दार्थं लीलाकमलमुद्वहन् ॥ धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥ १८ ॥ आतपत्रं तु वैकुंठं द्विजा धामाकुतोऽभयम् ॥ त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥ १९ ॥

मुद्रया धृतयाऽर्थक्रियात्मतां वरदाभयदादिरूपत्वं बिभर्ति । तत्तन्मुद्रया तथातथा भावयेदित्यर्थः॥१६॥ मंडलं देवयजनं देवपूजाभूमिं सूर्यमंडलत्वेन भावयेदित्यर्थः । अंतर्वह्निमंडलं वा । दीक्षासंस्कार आत्मनो गुरुकृतां मंत्रदीक्षामेवात्मनस्तत्पूजायोग्यतां भावयेदित्यर्थः । परिचर्येति भगवतस्तां परिचर्यां स्वस्य सकलपापक्षयायेत्येवं भावयेदित्यर्थः ॥ १७ ॥ पूर्वमासनपद्ममुक्तमिदानीं करस्थं पद्ममाह । भगवानिति । भगशब्दार्थमैश्वर्यादिषाड्गुण्यम् ॥ १८ ॥ हे द्विजाः एकवचनांतो वा पाठः । अकुतोभयं

इत्यर्थ इति–सूर्यमंडलं यथा–" ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः " इत्याद्युक्तेर्भगवद्ध्यानाधिष्ठानं, तथेदं क्षेत्रमपि मत्पूजाधिष्ठानमिति चिंतयेदिति भावः । यद्वा–एकादशस्कन्धोक्तरीत्या हृत्कंजकर्णिकामध्ये सोमसूर्याग्नीनामुत्तरोत्तरचिंतया ' वह्निमध्ये स्मरेद्रूपम् ' इत्युक्तेस्तदेव वह्निमंडलं देवपूजाभूमिं चिंतयेदित्यर्थः । इत्यर्थ इति–अदीक्षितस्य पूजानर्हत्वादिति भावः । तदुक्तम्–" दिव्यं ज्ञानं यतो दद्यात्कुर्यात्पापस्य संक्षयम् । तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तंत्रवेदिभिः ॥ " इति । किञ्च–सर्वाश्रमेषु दीक्षाया आवश्यकत्वमपि–" दीक्षामूलो जपः सर्वो दीक्षामूलं परं तपः । दीक्षामाश्रित्य निवसेद्यत्र कुत्राश्रमे वसन् ॥ अदीक्षिता ये कुर्वंति जपपूजादिकाः क्रियाः । न भवंति श्रियस्तेषां शिलायामुप्तबीजवत् ॥ देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः । तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥ गुरोरभावे मंत्राणां पुस्तकं गुरुमाचरेत् । न चायोग्याद्गुरोर्दीक्षा ग्रहीतव्या कदाचन ॥ दक्षिणामूर्तितो यद्वा दीक्षा ग्राह्या तथा घटात् ॥ " इति । " अदीक्षितो हि मरणे रौरवं नरकं व्रजेत् " इति च । यत्तूक्तम् " कल्पे दृष्ट्वा तु यो मंत्रं गृह्णाति हि नराधमः । मन्वंतरसहस्रेषु निष्कृतिर्नैव विद्यते ॥ " इति तत्सद्गुरुसत्त्वे पुस्तकाद्दीक्षा न ग्राह्येतिपरमिति तंत्रसारे । सद्गुरुनिर्णयस्तु ब्रह्मवैवर्तीयकृष्णखंडत्र्यशीतितमाध्याये–" तेजीयांसं गुरुं कुर्यात्सर्वतो रक्षितुं क्षमम् । वयोयुक्तं च विद्वांसं विप्रं भार्यासमन्वितम् ॥ वैष्णवं च कुलीनं च स्वाचारं बोधने क्षमम् ॥ " इति । विपक्षे दोषोऽपि तत्रैवोक्तः–"विद्याहीनाद्भवेन्मूढो मंत्रग्राही ह्यपंडितात् । जातिहीनात्क्षयः प्रोक्तो व्याधिनो व्याधियुक् तथा ॥ वंशहीनाद्वंशहीनो भार्याहीनः स्त्रिया रहात् । तस्मात्सर्वप्रयत्नेन विचार्य गुरुमाचरेत् ॥ " इति । किञ्च–" प्रमादाद्यदि जायेत पुंसोऽयोग्यो गुरुर्मुने । तं त्यक्त्वाऽपचितिं कृत्वा कुर्याद्योग्यं गुरुं पुनः ॥ " । प्रायश्चित्तं तु–" विप्रस्य क्षत्रियगुरौ गायत्र्या लक्षमीरितम् । वैश्ये तु द्विगुणं शूद्रे दशलक्षं प्रकीर्तितम् ॥ क्षत्रस्य तु गुरौ वैश्ये लक्षमेव प्रकीर्तितम् । शूद्रे तु दशलक्षं तद्वैश्यस्य शृणु भो मुने ॥ शूद्रे गुरौ रुद्रलक्षं गायत्र्याः परिकीर्तितम् ॥ " इति वारतांतविः । इत्यर्थ इति–हरिपूजयैव सकलपापक्षयो भवत्यतः सैव कार्येति भावः । " पापौघानां प्रशमनं पूजनं सर्वदा हरेः " इत्याद्युक्तेः परिचर्यया दुरितक्षय एव विभूतिरिति भावः ॥ १७ ॥ " ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतींगना " इति स्मृत्युक्तमैश्वर्यादिषाड्गुण्यमित्यर्थः । उद्वहन्, भवतीति शेषः । एवं सति भिन्नवाक्यत्वेन भगवच्छब्दपौनरुक्त्यं न भवतीति भगशब्दस्यार्थचतुष्कम् । लीलाकमलं दधदिति–ऐश्वर्यश्रीज्ञानवैराग्याणि प्राकृतानि लीलाकमलस्य विभूतयः, धर्मं यशश्च प्राकृतं चामरव्यजनयोर्विभूती, परंतु प्राकृताप्राकृतयोरभेदमेव भावयेदिति तात्पर्यम् ॥१८॥ हे द्विजा इति–गणापेक्षं बहुत्वं पूजायां वा । एकवचनांतपाठे तु गणमुख्यशौनकविषयैव संबुद्धिरिति मदुक्तपूजायां मुख्याधिकारो द्विजस्यैवेत्यभिप्रायः । ' ब्रह्मलोकः सनाऽतनः ' इत्युक्तिमाश्रित्याह–पद्येति । यद्यपि मंत्रे ' त्रिवृत्ते शिरः ' इत्युक्तेस्त्रिवृतो वेदस्य गरुत्मच्छिरस्त्वमुक्तं तथापि " मुखमर्द्धं शरीरस्य सर्वं वा मुखमुच्यते " इति न्यायेन शिरसोऽपि सर्वशरीरत्वमायातीति । एतेन वेदोक्तयागादिर्गरुडस्यैव विभूतिरित्यर्थः

अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ॥ विष्वक्सेनस्तंत्रमूर्तिर्विदितः पार्षदाधिपः ॥ २० ॥ नंदादयोऽष्टौ द्वास्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम् ॥ अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोभिधीयते ॥ २१ ॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ॥ अर्थेंद्रियाशयज्ञानैर्भगवान्परिभाव्यते ॥२२॥ अंगोपांगायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्ति स्म चतुर्मूर्तिर्भगवान्हरिरीश्वरः॥२३॥ द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक्स्वमहिमपरिपूर्णो मायया च स्वयैतत् ॥ सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलक्ष्यः ॥ २४ ॥

कैवल्यं धाम गृहमभजत्। यद्वा वैकुंठस्य विशेषणमकुतोभयं यद्धामेति। त्रिवृत् ऋग्यजुःसामरूपो वेदः। "सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः" इत्यादिमंत्रलिंगात्। यज्ञं यज्ञरूपं पुरुषम्। "यज्ञो वै विष्णुः" इति श्रुतेः ॥ १९ ॥ अनपायिनी हरेः शक्तिः। तत्र हेतुः साक्षादात्मनः स्वरूपस्य चिद्रूपत्वात्तस्यास्तदभेदादित्यर्थः। तंत्रमूर्तिः पंचरात्राद्यागमरूपः। येऽणिमादयोऽष्टौ गुणास्ते हरेर्द्वारपाला नंदादयः ॥ २० ॥ तस्यैव चतुर्व्यूहोपासनामाह। वासुदेवादिशब्दो पुरुषः श्रीनारायण एव स्वयं मूर्तिभेदैरुपास्य इत्यभिधीयते ॥ २१ ॥ तस्यैवाध्यात्मनि चतुर्धोपासनामाह। स एव भगवान्विश्वादिशब्दैर्वृत्तिभिर्जाग्रदाद्यवस्थाभिः परिभाव्यते। तद्वृत्त्युपाधीनाह अर्था बाह्या इंद्रियं मनः आशयस्तदुभयसंस्कारयुक्तमज्ञानं ज्ञानं त्रितयसाक्षि तैः ॥ २२ ॥ उक्तचतुर्व्यूहद्वयोपासनेऽपि पूर्वोक्तमंगाद्युपासनमाह। अंगेति। अंगादिभिरुपलक्षितो भगवान्हरिर्वासुदेवादिचतुर्मूर्तिः सन्विश्वादिचतुष्टयं बिभर्ति स्म। विश्वादिभावेऽपि तन्नियंतुस्तस्य न जीवत्वमित्याह। विश्वादिचतुष्टयं बिभ्रदपि भगवानीश्वर एवेति ॥ २३ ॥ तस्यैव ब्रह्मादित्रिमूर्तितामाह। द्विजऋषभेति। स एष एक एव भगवान् ब्रह्मयोनिर्वेदस्य कारणमित्यादि हेतुत्रयम्। वस्तुतो भेदाभावेऽप्येतज्जगत्स्वगतमायया सृजति हरति पातीति कृत्वाऽऽख्यया ब्रह्मादिरूपयानावृताक्षोऽनाच्छन्नज्ञानोऽपि विवृत इव भिन्न इव निरुक्तः शास्त्रेषु न तु भिन्नः। अत्र विद्वदनुभवं प्रमाणयति। यतस्तत्परैरात्मत्वेनैव लभ्यत

अकुतोभयं वैकुंठं छत्रं, लोके यन्निर्भयत्वं प्रतीयते तत्खलु छत्रस्यैव विभूतिरिति। छत्रवत्संसारतापवारकत्वाद्वैकुंठस्येत्यर्थः ॥ १९ ॥ विष्वक्सेन इति पंचरात्राद्यागमो विष्वक्सेनस्य विभूतिः। अनपायिनी नित्ययोगिनी साक्षात्स्वरूपभूता शक्तिः आह्लादिनीशक्तेर्विभूतिर्लौकिकः स्वर्गाद्यानंद ऊह्यः। तत्राऽनपायिनीत्वे। इत्यर्थ इति—शक्तिशक्तिमतोरभेदोपचारादिति भावः ॥ २० ॥ यस्यांगोपांगान्युक्तानि तस्यैवेत्यर्थः। वासुदेव इत्यादिदिक्चतुष्टयगतश्चतुर्व्यूहः। स्वयं पुरुषो भगवानेवेत्यर्थः ॥ २१ ॥ अध्यात्मनि चक्षुरादिकरणाभिमानिनि जीवे। परिभाव्यते परिचिंत्यते। तद्वृत्त्युपाधीन् जाग्रदादिवृत्त्युपाधीन्। तथा चेन्द्रियैरर्थावभासकजाग्रदवस्थायां विश्व इति, मनोमात्रावभास्यस्वप्नावस्थायां तैजस इति, अज्ञानोपलक्षितसुषुप्त्यवस्थायां प्राज्ञ इति त्रितयस्य जाग्रदादित्रयस्य साक्षि यज्ज्ञानं तच्च चैतन्यं, स एव तुरीय इति एतैरित्यर्थः। चतुर्णां व्यूहानां विभूतीराह—उभयसंस्कारयुक्तम्। 'सुखमहमस्वाप्सम्' इति 'सुखम् न किंचिदवेदिषम्'इत्याकारकं ज्ञानञ्चेत्युभयं तैर्विश्व इत्याद्या वृत्तयस्ताभिर्भगवानेव परिचिन्त्यन्ते चतुर्णां व्यूहानामेव विश्वाद्याश्चतस्रो वृत्तयो नियम्या विभूतय इति भावः। तत्र वासुदेवस्य विश्वः, संकर्षणस्य तैजसः, प्रद्युम्नस्य प्राज्ञः, अनिरुद्धस्य तुरीयो ज्ञानमिति भेदः ॥२२॥ तन्नियंतुर्विश्वादिनियंतुः। अंगोपांगादिसहितस्य वासुदेवस्य विश्व इत्येव विभूतिः। संकर्षणादीनां तैजसाद्या विभूतयः। हरिर्भक्ताघहंता। ईश्वरो विश्वादिनियंता ॥ २३ ॥ हे द्विजऋषभेति—"ऋत्यकः" इति ह्रस्वे प्रकृतिभावः। भगवदुपासकत्वेन त्वं ब्राह्मणश्रेष्ठोऽसि "ब्राह्मणो जन्मना श्रेयान्किमु मत्कलया पुनः" इति श्रीमुखोक्तेरिति

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंद गोपवनितात्रजभृत्यगीततीर्थश्रवः श्रवणमंगल पाहि भृत्यान् ॥ २५ ॥
य इदं कल्य उत्थाय महापुरुषलक्षणम् ॥ तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥

इति ॥ २४ ॥ यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते । कृष्णसख अर्जुनस्य सखे वृष्णिश्रेष्ठ । अवनिद्रुहो ये राजन्यास्तेषां वंशस्य दहनः अनपवर्गमक्षीणं वीर्यं यस्य । गोपवनितानां व्रजाः समूहा भृत्या नारदादयस्तैर्गीतं तीर्थभूतं श्रवः कीर्तिर्यस्य । श्रवणमेव मंगलं यस्य ॥ २५ ॥ एतज्जपमात्रस्यापि ब्रह्मज्ञानं फलमित्याह । य इति ।

संबुद्धेर्भावः । स्वशक्तिरूपेण स्वस्मिन्प्राप्तया मायया । त्वत्प्रसादलब्धज्ञानेन त्वत्परायणैः ' भक्त्याहमेकया लभ्यः ' इत्याद्युक्तेरात्मरूपेणैव त्वं प्राप्यस इत्याशयः । चैतुर्व्यूहमुक्त्वा त्रिमूर्तितामाह—योनिः प्रकाशकः । न चास्य कोऽपि प्रकाशक इत्याह—स्वयंदृक् स्वयंप्रकाशकः । न चास्य राज्ञश्चैश्वर्यार्थे प्रकृत्यपेक्षेत्याह—स्वमहिमपरिपूर्णः, किन्तु क्रीडार्थमेव स्वया शक्त्या मायया ब्रह्मादिनाम्ना सृजतीत्यादि, इत्येवमनावृताक्षोऽपि अपरिच्छिन्न ज्ञानोपि विवृत इव कृतविवरण इव निरुक्त इव । वस्तुतस्तु—निर्वक्तुं विवारितुं ब्रह्मादिभिरशक्य एव इति भावः । तर्हि किमर्थमेतावानायासः कृतस्तत्राह—तत्परैस्तद्भक्तैरेवात्मना मनसा लभ्य एतादृशध्यानेनेति भावः । तत्र तत्पादानां विभूतिभिः पृथिव्याद्यैर्दृष्टस्मृतादिभिरेव तत्पादादिस्मरणं सुखेन भवेत् । तथाहि—सदाध्येयस्य मत्प्रभोश्चरणस्यैव विभूतिरियं पृथ्वी सदा श्रयतेऽतः पृथ्व्याश्रिताः स्थिरजंगमा मत्प्रभोश्चरणाश्रिता एव, ते मया संमान्या एव न तु द्वेष्यास्तथा तद्वक्षस्थकौस्तुभस्य सर्वेऽपि जीवा विभूतयोऽतस्तेषामेकोऽपि मया द्वेष्टुं न युज्यत इत्येवंभावनैवात्र फलं दृश्यमिति विश्वनाथः ॥२४॥ गोपवनितागीतं तु—'जयति तेऽधिकं जन्मना व्रजः' इत्यादिना, 'वामबाहुकृतवामकपोलः' इत्यादिना, 'बर्हापीडं नटवरवपुः' इत्यादिना।नारदगीतं सप्तमस्कन्धादिषु प्रसिद्धम्।आदिना सनकादिग्रहः।संबुद्ध्यभिप्रायाः कुंतीस्तुतौ प्रथमस्कन्धे वर्णिता अपि पुनरपि किञ्चिद्वर्ण्यन्ते:—कृष्यते निजसमीपं प्राप्यते भक्तजनोऽनेनेति कृष्णः,श्रीः राधा तया सहितः श्रीकृष्णः।अहो स्वामिन् श्रीराधया सह त्वया विहारः केवलं मु(भु)क्तगोपीजनानां निजसमीपाकर्षणार्थमेव यथा कृतस्तथाऽधुना ममाऽप्याकर्षणं कुर्विति भावः। अत्र हेतुत्वेन संबुद्ध्यंतरमाह—यतस्त्वं कृष्णसखोसीति—कृष्यते विषयैरिति कृष्णो जीवस्तस्य सखा हितैषी अतो मां जीवमप्युद्धरेति भावः । तत्रैव हेत्वंतरम्—वृष्ण्यृषभेति । वर्षति निजाभिलषितमिति वृष्णयो वदान्या देवास्तेषु श्रेष्ठोसीति विश्वाभिलषितपूरकस्य तव ममाभिलषितपूरणं न दुर्घटमिति भावः । अत्र हेतुत्वेन संबुद्ध्यंतरमाह—अवनिध्रुग्राजन्यवंशः । कंसनरकासुरादिसमूहस्तस्य दहनेऽक्षीणप्रभावोऽसीति सर्वलोकहितार्थं यथा त्वया दुष्टा नाशितास्तथा मदज्ञानमपि नाशयेति भावः । शास्त्रप्रतिपाद्यं कमप्यन्यमाश्रयाहं तु वसुदेवनंदनोऽस्मीति चेत्तत्राह—गोविंदेति । गोभिर्गीर्भिर्वेदलक्षणाभिर्विद्यते विचार्यत इति गोविन्दः । " सर्वे वेदा यत्पदमामनंति " इति श्रुतेस्त्वमेव सर्वशास्त्रप्रतिपाद्योऽसीति भावः । यद्यप्यन्ये देवा अपि " होतारमिंद्रमवितारमिंद्रम् " इति, " अग्निमीळे पुरोहितम् " इत्यादिना वेदेन प्रतिपाद्यंते तथापि ते श्रवणमंगला न किन्तु स्मरणादिमंगलाः संति त्वन्तु श्रवणेनैव मंमलं करोषीति भावः । भृत्यान् भरितुं योग्यान् । विश्वंभरस्य ते सर्वे एव भृत्यास्तदंतर्गतोऽहमप्यतो मामपि पाहीति भावः । यदंशस्य " विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् " इति गीतोक्ते रुपासनमुक्तम् । तं श्रीकृष्णं स्वेष्टदेवं परिचाययन्प्रार्थयते—श्रीकृष्णेति । कृष्णस्यार्जुनस्य सखेति पांडवेषु स्नेहः स्ववशीकारकः, वृष्ण्यृषभेति यादवेषु च, तत्र किं द्योतकं तत्राह—अवनिद्रुहो ये राजन्यास्तेषां वंशस्य दहनम् । यद्वा—त एव वंशास्तत्परस्परसंमर्दोत्थवह्नेः, तेन पांडवानां यादवानां च वैरिणः संहृत्य तेषां पालक इति । अनपवर्गमक्षीणं वीर्यं पराक्रमो यस्मादिति पांडवान्यादवांश्च यो भवान्सर्वजयिनश्चकारेति भावः । गोविंदेति व्रजस्थलोकेषु ततोऽप्यतिस्नेहस्तत्र किं द्योतकं तत्राह—गोपवनितानां व्रजस्य समूहस्य यो भत्यः ' आसामहो चरणरेणुजुषामहं स्याम् ' इत्युक्त्यैवाभीप्सितभृत्यभाव उद्धवस्तेन गीतम् । ' ता नमस्यन्निदं जगौ ' इति श्रीशुकोक्तेर्यद्गीतं तीर्थं जगत्पावनं श्रवो यशस्तदेव श्रवणमङ्गलं कर्णसुखदं यस्य हे तथाभूत ॥ २६ ॥ ' प्रत्यूषोऽहर्मुखं कल्यम् ' इत्यमरः । अंतस्थवदिदं पदं न पवर्गवदिति । महापुरुषो विराट् तत्र लक्ष्यतेंतर्या

शौनक उवाच ॥ शुको यदाह भगवान्विष्णुराताय शृण्वते ॥ सौरो गणो मासिमासि नाना वसति सप्तकः ॥ २७ ॥ तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ॥ ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥ २८ ॥ सूत उवाच ॥ अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ॥ निर्मितो लोकतंत्रोयं लोकेषु परिवर्तते ॥ २९ ॥ एक एव हि लोकानां सूर्य आत्मादिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ३० ॥ कालो देशः क्रिया कर्ता करणं कार्यमागमः ॥ द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजया हरिः ॥ ३१ ॥

कल्ये उषःकाले यस्तच्चित्तः प्रयतः शुचिश्च स जपित्वा गुहाशयं हृदिस्थं ब्रह्म पश्यति ॥ २६ ॥ मंडलं देवयजनमित्युक्त्या बुद्धिमागतो मूर्तिव्यूहप्रसंगे रविव्यूहोऽत्र पृच्छ्यते । शुक इति । पंचमे यदाह तथाऽन्ये च ऋषयो गंधर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्तेत्यादिना । सौरः सूर्यसंबंधी । सप्तकः सप्तानां गणः ॥ २७ ॥ तेषां सप्तानामधीश्वरैस्तत्तत्पतिभिस्तत्तन्मासाधिकृतसूर्येर्वा । व्यूहं विभागम् ॥ २८ ॥ तत्र तावद्व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह । अनाद्यविद्यया मायया । अयं सूर्यः । लोकतंत्रो लोकयात्राप्रवर्तकः ॥ २९ ॥ अतस्तस्य क्रियाभेदोपाधिकमेव नानात्वं न स्वत इत्याह । एक एवेति । " सूर्य आत्मा जगतस्तस्थुषश्च " इति श्रुतेः । जगदात्मा आदिकृत्सृष्टिकर्ता हरिरेव सूर्यः स च सर्वासां वेदोक्तक्रियाणां मूलं संस्तेनोपाधिना बहुधोक्तः ॥ ३० ॥ कालरूपधारिणो हरेर्द्वादशादित्यरूपं भेदं क्रियोपाधिकं दर्शयितुं प्रथमं सर्वकर्मप्रवृत्तये मायाकृतं नवधा भेदमाह । काल इति । कालः प्रातरादिः १ । देशः समादिः २ । क्रिया अनुष्ठानम् ३ । कर्ता ब्राह्म

मितयेति तथा । गुहायां हृदये शेते तिष्ठतीति गुहाशयम् " यो वेद निहितं गुहायाम् " इति श्रुतेः । प्रयतः पवित्रः सन् ' पवित्रः प्रयतः पूतः ' इत्यमरः ॥ २६ ॥ सप्तानां संबंधी सप्तकः । अत्र संबंधे कः । हंतानेन शुकपरीक्षित्संवादमयं श्रीभागवतशास्त्रमस्मत्पूर्वपुरुषमार्कंडेयं तदनुष्ठितभगवत्पूजनतत्त्वं च मत्प्रश्नानुरोधादुक्तमिदानीमस्य श्रीभागवतस्य तद्विषयस्य भगवतश्च दृष्टांतः सूर्यः कृतः " कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्टदृशामेषः पुराणार्कोऽधुनोदितः॥" इति तदुक्त्या 'कृष्णद्युमणिनिम्लोचे' इत्युद्धवोक्त्या चावगतस्तं द्वादशात्मकं ग्रहराजमधुना द्वादशस्कन्धात्मकं पुराणराजसमाप्त्यवसरे प्रस्तावयितुमर्हामीति परामृश्याह शुक इति सर्वमन्यत्समम् ॥ २७ ॥ अधीश्वरैः संयुक्तानामित्यनेन तेषां प्रत्येकं स्वस्वपतिसाहित्येन द्वंद्वं ज्ञेयम्, । अत एव ' द्वंद्वशः सप्त पृथक् चतुर्दश ' इति पञ्चमस्कंधोक्तिः संगच्छते । सूर्यस्यापि स्वनियंत्रंतर्यामिसाहित्येन द्वंद्वं ज्ञेयमिति बालबोधिन्याम् । "यश्चासौ पुरुषे यश्चादित्ये" इत्यादिश्रुतेः । अधीश्वराप्रसिद्धिमालक्ष्याह–तत्तन्मासाधिकृतसूर्येर्वेति । "व्यूहस्स्याद्बलविन्यासे निर्माणे तर्कवृंदयोः। विभागे निर्वितर्के च "इति कोशात्॥ ॥ २८ ॥ अनाद्यविद्यया मायाकार्यत्वादविद्याया अपि मायात्वम् । ' विद्याऽविद्ये मम तनू ' इत्यारभ्य ' मायया मे विनिर्मिते ' इत्युक्तेः । लोकं तंत्रयति धारयतीति तथा । निर्मितः पृथक्त्वेन प्रकाशितः ॥ २९ ॥ यतः सूर्यो वस्तुत एको हरिरूपत्वादतो हेतोस्तस्य सूर्यस्य क्रियाभेदो नानावैदिकक्रियाभेदस्तदुपाधिकमेव नानात्वम् । जगतो जंगमस्य तस्थुषः स्थावरस्यात्मेति श्रुतिपदार्थः । अजहल्लिंगत्वान्मूलशब्दस्य तत्पुरुषस्य परवल्लिंगत्वात्क्लीबत्वम् ॥ ३० ॥ आदिपदग्राह्यान् क्रमत आह–मध्याह्नादि १, शुच्यादि २, क्षत्रियादि ४, स्रुवप्रणीतादि ५, इष्टिसत्रादि ६, ब्राह्मणादि–क्रमादि ७, गोधूमादि ८, चित्तशुद्ध्यादीति ९, ॥ ३१ ॥

मध्वादिषु द्वादशसु भगवान्कालरूपधृक् ॥ लोकतंत्राय चरति पृथग्द्वादशभिर्गणैः ॥ ३२ ॥ धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने ॥
पुलस्त्यस्तुंबुरुरिति मधुमासं नयंत्यमी ॥ ३३ ॥ अर्यमा पुलहोऽथौजाः प्रहेतिः पुंजिकस्थली ॥ नारदः कच्छनीरश्च नयंत्येते स्म
माधवम् ॥ ३४ ॥ मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ॥ रथस्वन इति ह्येते शुक्रमासं नयंत्यमी ॥ ३५ ॥ वसिष्ठो वरुणो रंभा सहजन्य
स्तथा हुहूः ॥ शुक्रश्चित्रस्वनश्चैव शुचिमासं नयंत्यमी ॥ ३६ ॥ इंद्रो विश्वावसुः श्रोता एलापत्रस्तथांगिराः ॥ प्रम्लोचा राक्षसो वर्यो नभोमासं
नयंत्यमी ॥ ३७ ॥ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ॥ अनुम्लोचा शंखपालो नभस्याख्यं नयंत्यमी ॥ ३८ ॥ पूषा धनंजयो वातः
सुषेणः सुरुचिस्तथा ॥ घृताची गौतमश्चेति तपोमासं नयंत्यमी ॥ ३९ ॥ क्रतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ॥ विश्व ऐरावतश्चैव तपस्याख्यं
नयंत्यमी ॥ ४० ॥ अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखः सहोमासं नयंत्यमी ॥ ४१ ॥

णादिः ४ । करणं स्रुगादि ५ । कार्यं यागादि ६ । आगमो मंत्रादिः ७ । द्रव्यं ब्रीह्यादि ८ । फलं स्वर्गादि ९ ॥ ३१ ॥ तत्र च कालस्वरूपधारी भगवान्पृथक्चरति ।
मध्वादिषु चैत्रादिषु । लोकतंत्राय लोकयात्रानिर्वाहाय ॥ ३२ ॥ तानेव गणानाह धातेति द्वादशभिः । धाता सूर्यः । कृतस्थली अप्सराः । हेती राक्षसः । वासुकि
र्नागः । रथकृद्यक्षः । पुलस्त्य ऋषिः । तुंबुरुर्गंधर्वः । मधुमासं चैत्रम् । नयंत्यनुवर्तयंति ॥ ३३ ॥ अथौजा यक्षः । प्रहेती राक्षसः । नारदो गंधर्वः । कच्छनीरो नागः ।
माधवं वैशाखम् ॥ ३४ ॥ मित्रः सूर्यः । पौरुषेयो राक्षसः । रथस्वनो यक्षः । शुक्रमासं ज्येष्ठम् ॥ ३५ ॥ वरुणः सूर्यः । सहजन्यो यक्षः । शुक्रो नागः । चित्रस्वनो
राक्षसः । शुचिमासमाषाढम् ॥ ३६ ॥ इंद्रः सूर्यः । विश्वावसुर्गंधर्वः । श्रोता यक्षः । एलापत्रो नागः । वर्यो राक्षस इति स्वयमेव व्याख्यातम् । नभोमासं श्रावणम्
॥ ३७ ॥ विवस्वान्सूर्यः । उग्रसेनो गंधर्वः । व्याघ्रो राक्षसः । आसारणो यक्षः । शंखपालो नागः । नभस्याख्यं भाद्रपदम् ॥ ३८ ॥ धनंजयो नागः । वातो राक्षसः ।
सुषेणो गंधर्वः । सुरुचिर्यक्षः । तपोमासं माघम् । मासक्रमातिलंघनं कौर्मोक्तादित्यनुक्रमानुसारेण । वैष्णवे तु मासक्रमेणोक्तिः । क्वचिन्नामव्यत्ययस्तु कल्पभेदेनेति
ज्ञेयम् ॥ ३९ ॥ क्रतुर्यक्षः । वर्चा राक्षसः । पर्जन्यः सूर्यः । सेनजिदप्सराः । विश्वो गंधर्वः । ऐरावतो नागः । तपस्याख्यं फाल्गुनम् ॥ ४० ॥ अंशुः सूर्यः । अंश

तत्र नवसु । भगवान्सूर्यः ॥ ३२ ॥ 'स्याच्चैत्रे चैत्रिको मधुः' इत्यमरः ॥ ३३ ॥ 'वैशाखे माधवो राधः' इत्यमरः ॥ ३४ ॥ 'ज्येष्ठे शुक्रः' इत्यमरः ॥ ३९ ॥ 'शुचिस्त्वयम् । आषाढे'
इत्यमरः ॥ ३६ ॥ 'श्रावणे तु स्यान्नभाः' इत्यमरः ॥ ३७ ॥ 'स्युर्नभस्ये प्रौष्ठपदभाद्रभाद्रपदाः' ॥ ३८ ॥ 'तपा माघे' इत्यमरः ॥ ३९ ॥ 'स्यात्तपस्यः फाल्गुनिकः' इत्यमरः ॥ ४० ॥ 'मार्गे

भगः स्फूर्जोरिष्टनेमिरूर्ण आयुश्च पंचमः ॥ कर्कोटकः पूर्वचित्तिः पुष्यमासं नयंत्यमी ॥ ४२ ॥ त्वष्टा ऋचीकतनयः कंबलश्च तिलोत्तमा ॥ ब्रह्मापेतोथ शतजिद्धृतराष्ट्र इषंभराः ॥ ४३ ॥ विष्णुरश्वतरो रंभा सूर्यवर्चाश्च सत्यजित् ॥ विश्वामित्रो मखापेत ऊर्जमासं नयंत्यमी ॥ ४४ ॥ एता भगवतो विष्णोरादित्यस्य विभूतयः ॥ स्मरतां संध्ययोर्नृणां हरंत्यंहो दिनेदिने ॥ ४५ ॥ द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ॥ चरन्समंतात्तनुते परत्रेह च सन्मतिम् ॥४६॥

इति वा पाठः । ताक्ष्यों यक्षः । ऋतसेनो गंधर्वः । विद्युच्छत्रू राक्षसः । महाशंखो नागः । सहोमासं मार्गशीर्षम् ॥ ४१ ॥ भगः सूर्यः । स्फूर्जो राक्षसः । अरिष्टनेमिर्गंधर्वः । ऊर्णो यक्षः । आयुर्ऋषिः । कर्कोटको नागः ॥ ४२ ॥ त्वष्टा सूर्यः । ऋचीकतनयो जमदग्निः । कंबलो नागः । ब्रह्मापेतो राक्षसः । शतजिद्यक्षः । धृतराष्ट्रो गंधर्वः । इषंभरा आश्विनपालकाः ॥ ४३ ॥ विष्णुरादित्यः । अश्वतरो नागः । सूर्यवर्चा गंधर्वः । सत्यजिद्यक्षः । मखापेतो राक्षसः । ऊर्जमासं कार्तिकमासम् । एते चादित्यादयः कौर्मे विभज्योक्ताः " धाताऽर्यमा च मित्रश्च वरुणश्चेंद्र एव च । विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च । भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः ॥ पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथांगिरा भृगुः । गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेव च ॥ जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः । रथकृचोंऽरिष्टनेमिर्ग्रामणीश्च रथस्वनः ॥ रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा । ताक्ष्यश्चारिष्टनेमिश्च रुतजित्सत्यजित्तथा । एते यक्षाः ॥ अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा । वर्यो व्याघ्रस्तथायश्च वायुर्विद्युद्दिवाकरः । ब्रह्मापेतश्च विप्रेंद्रा यज्ञापेतश्च राक्षसाः ॥ वासुकिः कच्छनीरश्च तक्षकः सर्पपुंगवः । एलापत्रः शंखपालस्तथैरावतसंज्ञितः ॥ धनंजयो महापद्मस्तथा कर्कोटको द्विजाः । कंबलोऽश्वतरश्चैव वहंत्येनं यथाक्रमम् ॥ तुंबुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा । उग्रसेनो वसुरुचिर्विश्वावसुरथापरः ॥ चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः । सूर्यवर्चा द्वादशेति गंधर्वा गायतां वराः ॥ कृतस्थल्यप्सरोवर्या तथाऽन्या पुंजिकस्थली । मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः ॥ अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा । अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा । रंभा चेति द्विजश्रेष्ठास्तथैवाप्सरसः स्मृताः ॥ " इति ॥ ४४ ॥ ४५ ॥ एतेषां पृथक्कर्माणि निरूपयति द्वादशस्वपीति त्रिभिः । असौ देवः सूर्यः षड्भिर्गंधर्वादिभिरस्य जनस्य समंताच्चरन् शुभां मतिं तनुते । गायत्र्यर्थोऽनेन

शीर्षे सहा मार्गः ' इत्यमरः ॥ ४१ ॥ पुष्यमासं पुष्यनक्षत्रोपलक्षितपूर्णिमायुतमासं, पौषमित्यर्थः ॥ ४२ ॥ ' स्यादाश्विन इषोऽप्याश्वयुजोऽपि ' इत्यमरः ॥ ४३ ॥ ' बाहुलोर्जौ कार्त्तिकिकः ' इत्यमरः । इह मासव्युत्क्रमो हि कौर्मोक्तसूर्यर्षियज्ञादिक्रमापेक्षयैव ज्ञेयः ॥ ४४ ॥ आदित्यस्यादित्यरूपस्य विष्णोः । अंहः पापम् ॥ ४५ ॥ समंतात्सप्तसु द्वीपेषु । इह सन्मतितननं तु सूर्योदये चौरजारादयोऽपि स्वकर्म त्यजंति साधव इव तिष्ठंतीति प्रसिद्धमेव । परत्र परलोकनिमित्तं सन्मतितननमपि सूर्यादेव, सूर्योदय एव श्रौतस्मार्तपारलौकिककर्मप्रवृत्तेः प्रायो दर्शनात् । इह परत्रेति सप्तम्यौ निमित्तेर्थे एवात्र ज्ञेये । तदुक्तम्—" यस्योदयेनेह

सामग्र्यैर्ऋग्भिस्तल्लिंगैर्ऋषयः संस्तुवंत्यमुम् ॥ गंधर्वास्तं प्रगायंति नृत्यंत्यप्सरसोऽग्रतः ॥ ४७ ॥ उन्नह्यंति रथं नागा ग्रामण्यो रथयोजकाः ॥ नोदयंति रथं पृष्ठे नैर्ऋता बलशालिनः ॥ ४८ ॥ वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ॥ पुरतोभिमुखं यांति स्तुवंति स्तुतिभिर्विभुम् ॥ ४९ ॥ एवं ह्यनादिनिधनो भगवान्हरिरीश्वरः ॥ कल्पेकल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंध आदित्यव्यूहविवरणं नामैकादशोऽध्यायः ॥ ११ ॥ सूत उवाच ॥ नमो धर्माय महते नमः कृष्णाय वेधसे ॥ ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्ये सनातनान् ॥ १ ॥

सूचितः ॥ ४६ ॥ तल्लिंगैः सूर्यप्रकाशकैः ॥ ४७ ॥ उन्नह्यंति दृढं बध्नंति । ग्रामण्यो यक्षाः । नैर्ऋता राक्षसाः ॥ ४८ ॥ किंच वालखिल्या इति । एवं प्रतिमासं त एव स्तुवंति । विभुं सूर्यम् ॥ ४९ ॥ व्यूह्य विभज्य ॥ ५० ॥ इति श्रीमद्भागवते द्वादशस्कन्धे टीकायामेकादशोध्यायः ॥ ११ ॥ द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः ॥ प्रथमस्कंधमारभ्य प्राधान्येन समासतः ॥ १ ॥ तदेवमस्मिन्पुराणे विस्तरेणोक्तानर्थान्संक्षेपतो वर्णयिष्यन्धर्मादीन्प्रणमति । नम इति । महते हरिभक्तिलक्षणाय ।

जगत्प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्धये " इति भविष्योत्तरे परत्रेह च सन्मतितननोत्तया धियः प्रेरकतारूपो गायत्र्यर्थोऽत्र ध्वनितस्तथा च गायत्र्या समाप्तिरसूचीति ज्ञेयम् ॥ ४६ ॥ ४७ ॥ "ग्रामणीः प्रधानेऽधिपतौ यक्षनापितयोरपि" इति कोशात् । 'नैर्ऋतो यातुरक्षसी' इत्यमरः ॥ ४८ ॥ स्तावकर्षिषु पुनराधिक्यमाह–किंचेति । स्तुतिभिः स्तुतिप्रकाशकैः "उदुत्यं जातवेदसम्" इत्यादिमंत्रैः । विशेषेण भाति भापयति वेति विभुस्तम् ॥ ४९ ॥ कल्पेकल्पे प्रतिकल्पं हरिरेव स्वमात्मानमादित्यरूपेण द्वादशधा विभज्य लोकानवति दुःखजालाद्रक्षतीत्यर्थः ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्ध एकादशोऽध्यायः ॥ ११ ॥ अनुक्रमो गणना । समासतः संक्षेपतः, संक्षेपकथनेऽपि प्राधान्येन मुख्यार्थस्यैव कथनं नतु सर्वत इत्यर्थः ( १ ) । धर्मस्यैव हरिप्रियत्वेन संसारतारकत्वादादौ नमति–नम इति । हरिप्रियत्वं धर्मस्य 'यदायदा हि धर्मस्य' इति श्रीगीतावाक्यादवसीयते । धर्मांतरव्यावृत्तये–महत इति । महत्त्वमपि हरिभक्तिलक्षणधर्मस्य तदुक्त्यैवावसीयते । तथाहि–"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति । ब्राह्मणेभ्य इति द्वितीयार्थे चतुर्थी । सनातनाञ्छ्रीमद्व्यासकथनादपि प्राक्तनान्नतु व्यासप्रणीतांस्तथा च वेदवत्सनातनत्वमस्य पुराणस्य श्रीसूतेन ध्वनितम् । वेधसेऽवतारादिसर्वविधात्रे । स्वदैन्यं ज्ञापयन्नमति–ब्राह्मणेभ्यो व्यासादिभ्यस्तत्प्रकाशकेभ्यः । सनातनम् 'कालेन प्रलये नष्टा वाणीयम्' इत्यादिप्रमाणेन प्रसिद्धान् धर्मान् भागवतान्वक्ष्ये तत्तत्प्रसंगानुक्रमेण तानेव सूचयिष्यामि 'पतितः स्खलितः' इत्यादिना च साक्षाद्वक्ष्यामीत्यर्थः । श्रवणकीर्तनादिविषयत्वे सति तच्चरितान्येव परमसनातनधर्मा भवन्तीति भावः । यद्वा–भगवतो भक्तियोगस्य तच्चरितानाञ्च निर्गुणत्वात्सनातनत्वमेव, सगुणस्यैव वस्तुनः सनातनत्वाभावादित्यर्थः ॥ १ ॥

एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ॥ भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २ ॥ अत्र संकीर्तितः साक्षात्सर्वपापहरो हरिः ॥ नारायणो हृषीकेशो भगवान्सात्वतां पतिः ॥ ३ ॥ अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम् ॥ ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥४॥ भक्तियोगः समाख्यातो वैराग्यं च तदाश्रयम् ॥ पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥

ब्राह्मणेभ्यो ब्राह्मणान् । सनातनान् अनादीन् । धर्मानित्युपलक्षणं पुराणोक्तार्थानाम् ॥ १ ॥ पुरुषत्वे उचितं श्रवणादियोग्यम् ॥ २ ॥ एतत्प्रपंचयति । अत्रेति । भगवानैश्वर्यादिषड्गुणः साक्षात्संकीर्तित इति देवताकांडार्थः ॥ ३ ॥ ब्रह्मकांडार्थमाह । अत्र ब्रह्मेति । गुह्यं निर्गुणम् । प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवम् , अप्येत्यस्मिन्नित्यप्ययं तच्च तच्च । अनेनाश्रयशब्दार्थो दर्शितः । विज्ञानसंयुतमपरोक्षज्ञानपर्यंतं ज्ञानम् । तदुपाख्यानं तज्ज्ञानमुपाख्यायते प्रकाश्यते येन तज्ज्ञानसाधनमित्यर्थः ॥ ४ ॥ कर्मकांडार्थमाह । भक्तियोगश्च साध्यसाधनरूपः । तदाश्रयं भक्तियोगेन निष्पादितम् । एवं सामान्यतो निरूप्येदानीं द्वादशस्कन्धप्रकरणार्थाननुक्रामति । पारीक्षितमुपाख्यानं परीक्षि

यद्भवद्भिर्नराणां संबंधि "पुंसामेकांततः श्रेयस्तन्नश्शंसितुमर्हसि" इत्यहं पृष्टस्तदेतद्वो विष्णोरद्भुतचारितं मया कथितमिति संबंधः।हे विप्रा इति—विगतः प्रापूरयिता स्वीयबोधेन येषां ते विप्राः सर्वज्ञा इति । सर्वज्ञानामग्रे मया यथाश्रुतमेवोक्तमिति भावः । तत्र भगवच्चरितश्रवणमेव मुख्यमित्यभिप्रेत्योपसंहरन्ननुक्रमितुमुपक्रमते—नराणां मध्ये ये पुरुषास्तेषामेवोचितं न तु तद्विमुखानां पशूनामिति तेषां गालिप्रदानम् । तदुक्तम्—"श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः । न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥ " इति । यद्वा—नराणां पुरुषे भगवति यदुचितम् ॥ २ ॥ एतत्पुरुषस्य श्रवणादियोग्यमेतदित्यर्थः । अत्र श्रीभागवते । साक्षाद्धरिः श्रीकृष्णः " एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् " इत्युक्तेः । सर्वपापहर इत्यादिविशेषणानां तत्रैव सामंजस्यात् । अत्र द्वादशस्कंधेषु हरिर्भगवदाद्याख्ययानंताविर्भावः परमेश्वरस्तावन्मुख्यत्वेन कीर्त्यते । तत्रापि गुणरूपलीलात्वेन मुख्यत्वेन कीर्त्यते । तस्य च प्राधान्येन भेदद्वयं दर्शितमित्याह—नारायणः सर्वजीवाश्रयः । हृषीकेशस्तदीयसर्वेन्द्रियप्रवर्तकश्च परमात्मेत्यर्थ इत्येको भेदः । द्वितीयमाह—भगवानिति । स एव कः—सात्वतामुद्धवादीनां पतिः स्वयं भगवानित्यर्थः ॥ ३ ॥ सगुणमुक्त्वा निर्गुणमाह—ब्रह्मेति । इत्यर्थ इति—श्रवणादिसाधनमंतरेण ज्ञानानुत्पत्तेस्तदप्युक्तमिति भावः । तदीयनिर्विशेषप्रकाशरूपं यद्ब्रह्म तदपि प्रोक्तं वागाद्यग्राह्यत्वाद्गुह्यम् । तर्हि कथं प्रोक्तं तत्राह—जगत उत्पत्तिलयौ यतस्तदित्येवंरीत्योक्तं न तु साक्षादित्यर्थः ॥ ४ ॥ तत्प्रस्तावाय परीक्षिज्जन्मादिप्रसंगाय प्रथमस्कंधत उपक्रमते—पारीक्षितमिति । इहानुक्रमणिकाध्याये । यत्प्रासिद्धमपि किंचित्किंचिदुल्लंघ्यते तन्नानिष्टमिति । अनुक्रमणिका हि नोक्तसमस्तार्थव्यापिनी भवेत् यत्प्रथमत एव जन्मगुह्याध्यायकथातिप्रासिद्धाप्युल्लंघिता । तथा द्रौणिदंडभीष्मानिर्याणादिकथाचित्रकेतुत्रिपुरवधांबरीषादिकथा घासुरब्रह्ममोहा

प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः ॥ शुकस्य ब्रह्मर्षभस्य संवादश्च परीक्षितः ॥६॥ योगधारणयोत्क्रांतिः संवादो नारदाजयोः ॥ अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ॥ ७ ॥ विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥ ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये ॥ ततो ब्रह्मांडसंभूतिर्वैराजः पुरुषो यतः ॥ ९ ॥ कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः ॥ भुव उद्धरणेंऽभोधेर्हिरण्याक्षवधो यथा ॥ १० ॥ ऊर्ध्वतिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च ॥ अर्धनारीनरस्याथ यतः स्वायंभुवो मनुः ॥ ११ ॥ शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ॥ संतानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥ १२ ॥ अवतारो भगवतः कपिलस्य महात्मनः ॥ देवहूत्याश्च संवादः कपिलेन च धीमता ॥ ॥ १३ ॥ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः ॥ १४ ॥ नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः ॥ नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥ १५ ॥

ज्जन्मादि तत्प्रस्तावाय नारदाख्यानं च ॥ ५ ॥ ब्रह्मर्षभस्य ब्राह्मणोत्तमस्य इति प्रथमस्कंधार्थः ॥ ६ ॥ उत्क्रांतिरर्चिरादिगतिः । प्राधानिकः प्राधानकार्यविराड्रूपः सर्गः । अग्रत आदितो महदादिक्रमेणेत्यर्थः । इति द्वितीयार्थः ॥ ७ ॥ महापुरुषस्य संस्थितिः प्रलये तूष्णीमवस्थानम् ॥ ८ ॥ प्राकृतिकः प्रकृतिभवो गुणक्षोभरूपः । वैकृतिका महदादयश्चकाराद्विकाराश्च ये तेषां सर्गः ॥ ९ ॥ गतिः स्वरूपम् । उद्धरणे उद्धारणे ॥ १० ॥ अर्धाभ्यां नारी च नरश्च तस्य सर्गः ॥ ११ ॥ संतानो धर्मपत्नीनामिति नवब्रह्मसमुत्पत्तिरित्यस्यानंतरं द्रष्टव्यम् ॥ १२ ॥ १३ ॥ इति तृतीयार्थः ॥ चतुर्थस्कन्धार्थमाह । नवब्रह्मणां मरीच्यादीनां समुत्पत्तिः संतानः ॥ १४ ॥ पंचमस्कंधार्थमाह

दिकथा च बहुश उल्लंघ्य क्वचित्क्रमेणाप्युक्तेति ॥ ९ ॥ विप्रशापाच्छृंगिशापात् । ब्रह्मसु ब्राह्मणेषु ऋषिषु उत्तमो ब्रह्मर्षिस्तस्य “ वेदास्ये बृहति विप्रे ब्रह्म वेदे परात्मनि । तपोयज्ञप्रधानेषु ” इति कोशात् । “ ऋषिः श्रेष्ठ च सर्वज्ञे ब्राह्मणे च मनौ तथा” इति ॥६॥ अर्चिरादिगतिः “तेऽर्चिरभिसंभवंति” इति श्रुत्युक्तगतिः ॥७॥८॥ यतो यत्र ब्रह्मांडे वैराजो विराडंतर्यामी पुरुषोऽस्तीति ॥९॥ उद्धारणे निमित्ते यथा हिरण्याक्षवधः कृतस्तथोक्त इत्यर्थः॥ १०॥ ऊर्द्ध्वसर्गो देवसर्गः, तिर्यक्सर्गः पश्वादिसर्गः, अवाक्सर्गोऽधःसर्गोऽसुरादिलक्षणः । यद्वा—ऊर्ध्वसर्ग ऊर्ध्वसंचारसर्गः वृक्षादिसर्गः । तिर्यक्सर्गोऽष्टाविंशतिधा । अवाक्सर्गः नृसर्गः“अवाक्स्रोतास्तु नवमः क्षत्तरेकविधो नृणाम्”इत्युक्तेः । नारीनरयोः समाहारद्वंद्वे तस्य तृतीयाद्विवचनांतार्द्धशब्देन पुनस्समासः । तथाहि—अर्द्धाभ्यां नारीनरं यस्य तस्य ब्रह्मणः सकाशादथ सर्गोऽभूत् । यतो यत्र सर्गे स्वायंभुवो मनुः शतरूपा चाभूत् ॥ ११ ॥ या स्त्रीणामाद्या प्रकृतिर्मूलकारणं, तत एव स्त्रीसर्गप्रवृत्तेः । धर्मपत्नीनां कीर्त्यादीनाम्, कर्दमस्य च यथा संतानस्तथा वर्णितः ॥ १२ ॥ १३ ॥ १४ ॥ हे द्विज इति—द्विजत्वात्कथितमपि पुनः स्मारयामीति भावः ॥ १९ ॥

ततो द्वीपसमुद्राद्रिवर्षनद्युपवर्णनम् ॥ ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥ १६ ॥ दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च संततिः ॥ यतो देवासुरनरास्तिर्यङ्नगखगादयः ॥ १७ ॥ त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः ॥ दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ॥ ॥ १८ ॥ मन्वंतरानुचरितं गजेंद्रस्य विमोक्षणम् ॥ मन्वंतरावताराश्च विष्णोर्हयशिरादयः ॥ १९ ॥ कौर्मं मात्स्यं नारसिंहं वामनं च जगत्पतेः ॥ क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम्॥२०॥देवासुरमहायुद्धं राजवंशानुकीर्तनम् ॥ इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः॥२१॥इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ॥ सूर्यवंशानुकथनं शशादाद्या नृगादयः ॥ २२॥ सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः ॥ खट्वांगस्य च मांधातुः सौभरेः सगरस्य च ॥ २३ ॥ रामस्य कोशलेंद्रस्य चरितं किल्बिषापहम् ॥ निमेरंगपरित्यागो जनकानां च संभवः ॥ २४॥ रामस्य भार्गवेंद्रस्य निःक्षत्रकरणं भुवः ॥ ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥ २५ ॥ दौष्यंतेर्भरतस्यापि शंतनोस्तत्सुतस्य च ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोनुकीर्तितः ॥ २६ ॥ यत्रावतीर्णो भगवान् कृष्णाख्यो जगदीश्वरः ॥ वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥ २७ ॥ तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः ॥ पूतनाऽसुपयःपानं शकटोच्चाटनं शिशोः ॥ २८ ॥

ततः प्रैयव्रतं प्रियव्रतस्य चारितम् ॥ १५ ॥ द्वीपाद्युपवर्णनं प्रथमं संक्षेपतस्ततो द्वीपादीनां ये गिरयो नद्यश्च तेषामुपवर्णनम् । पातालानां नरकाणां च संस्थितिः । अने नैव नरकनिवर्तकमजामिलोपाख्यानं गृहीतं ततः पराचीनम् ॥ १६ ॥ षष्ठार्थमाह । दक्षजन्मेति ॥ १७ ॥ सप्तमार्थमाह पुत्रयोश्चेति ॥ १८ ॥ अष्टमार्थमाह । मन्वं तरानुकथनमिति । क्वचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्च भक्तिरसाकुलत्वेनेति द्रष्टव्यम् ॥ १९ ॥ २० ॥ नवमार्थमाह राजवंशेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सोमवंशादिभूतस्यैलस्य चारितम् ॥ २५ ॥ तत्सुतस्य भीष्मस्य ॥ २६ ॥ २७ ॥ दशमार्थमाह । तस्य कर्माणीति । पूतनाया असुसहितस्य स्तन्यपयसः पानम् ॥२८॥

अनेन नरकस्थितिवर्णनप्रसंगेन ॥ १६ ॥ तत्पुत्रीणां दक्षपुत्रीणाम् । यतो यत्र संतत्यां देवादयो जाताः ॥ १७ ॥ त्वाष्ट्रस्य वृत्रस्य । दितेः पुत्रयोः । संबुद्धिस्तु पूर्ववत् ॥ १८ ॥ आदिनाऽजितादिग्रहः । अत्राऽवतार क्रमो न विवक्षितो वर्णितचरितकथने तात्पर्यात् । अत एव स्वामिचरणैरप्युक्तम्—क्वचित्कस्यचिदनुक्तिरित्यादि । भक्तिरसमग्नत्वाच्छ्रीसूतस्य यथाक्रमकथनाविस्मृतिरभूदिति भावः ॥ १९ ॥ दिवौकसाममृतार्थेऽमृतनिमित्तं तद्व त्कथितमित्यर्थः ॥ २० ॥ सुद्युम्नस्य वंशश्च कीर्तितः । अत्र तदिति पदं भिन्नं ज्ञेयं षष्ठ्यर्थे, वंश इत्युभयत्रान्वेति । मह उत्सवस्तं करोतीति महकरस्तादृश आत्मा देहो यस्य स महात्मा, तस्मिन्पूर्वं पुत्रीरूपेण जाते मनोर्महो न जातः, पुनर्गुरुकृपया तस्याः पुरुषत्वे सत्यतीवोत्सवोऽभूदित्यत उक्तं—महात्मन इति । अत्र मध्यमपदलोपी समासो ज्ञेयः ॥ २१ ॥ अत्रैव सुद्युम्नप्रकृते । 'सर्वं वाक्यं सावधारणम्' इति न्यायेनैवकारोऽत्र बोध्यः । आदिना यैः कव्यादिभी राज्यं न गृहीतं तेऽपि कथिता इति 'कविः कनीयान्विषयेषु निःस्पृहो विसृज्य राज्यम्' इत्युक्तेः ॥ २२ ॥ सुकन्याया इदं सौकन्यं, चरितमिति शेषः ॥ २३ ॥ कोशलाऽयोध्या देशो वा कोशलः ॥ २४ ॥ भार्गवं भृगुवंशामिंदयाति समर्द्धयतीति भार्गवेन्द्रस्तस्य सकाशाद्भुवो निःक्षत्रकरणं यथाऽऽसीत्तथा वर्णितम् ॥ २५ ॥ २६ ॥ यत्र यदुवंशे । ततो जन्मानंतरम् ॥ २७ ॥ तस्य कृष्णाख्यस्य । शिशोः

तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ॥ धेनुकस्य सहभ्रातुः प्रलंबस्य च संक्षयः ॥ २९ ॥ गोपानां च परित्राणं दावाग्नेः परिसर्पतः ॥ दमनं कालियस्याहेर्महाऽहेर्नंदमोक्षणम् ॥ ३० ॥ व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः ॥ प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥ ३१ ॥ गोवर्द्धनोद्धारणं च शक्रस्य सुरभेरथ ॥ यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥३२॥ शंखचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ॥ अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥ ३३ ॥ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः ॥ गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥ मृतस्यानयनं सूनोः पुनः सांदीपनेर्गुरोः ॥ मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥ ३५ ॥ कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ जरासंधसमानीतसैन्यस्य बहुशो वधः ॥ घातनं यवनेंद्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥ आदानं पारिजातस्य सुधर्मायाः सुरालयात् ॥ रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥ ३७ ॥ हरस्य जृंभणं युद्धे बाणस्य भुजकृंतनम् ॥ प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत् ॥ ३८ ॥ चैद्यपौंड्रकशाल्वानां दंतवक्रस्य दुर्मतेः ॥ शंबरो द्विविदः पीठो मुरः पंचजनादयः ॥ ३९ ॥ माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम् ॥ भारावतरणं भूमेर्निमित्ती कृत्य पांडवान् ॥ ४० ॥ विप्रशापापदेशेन संहारः स्वकुलस्य च ॥ उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ॥४१॥ यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः ॥ ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥ ४२ ॥

सहभ्रातुः ससखस्य ॥ २९ ॥ ३० ॥ ३१ ॥ यज्ञाभिषेकं यज्ञः पूजा अभिषेकश्च तयोर्द्वंद्वैक्यम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ द्विषत शत्रून्प्रमथ्य ॥ ३७ ॥ ३८ ॥ ये च शंबरादयस्तेषां माहात्म्यं प्रभावो वधश्च ॥ ३९ ॥ ४० ॥ एकादशार्थमाह । विप्रशापेति ॥ ४१ ॥ धर्मविनिर्णयो वर्णाश्रमधर्म

शिशुरूपात् । शकटस्योच्चाटनं भेदनम् ‘ चट—भेदने ’ ॥ २८ ॥ निष्पेषश्चूर्णनम् , हननमिति यावत् । तथैव निष्पेषः ॥ २९ ॥ परिसर्पतः सर्वतः प्रवृत्तस्य ॥ ३० ॥ यत्र व्रतचर्यायाम् । यज्ञगानां पत्न्यो यज्ञपत्न्यः ॥ ३१ ॥ शक्रेण कृता पूजा, सुरभ्या कृतोऽभिषेक इति विवेकः ॥ ३२ ॥ स्त्रीहरणप्रवृत्तेर्दुर्बुद्धित्वम् । अरिष्टो वृषासुरः ॥ ३३ ॥ आदिना कंसभ्रात्रादिग्रहः ॥ ३४ ॥ आनयनं, संयमिन्या इति शेषः ॥ ३५ ॥ हे द्विजा इति संबुद्धिबहुत्वमादरार्थम् । कुशस्थल्या द्वारकाया निवेशनं रचना ॥ ३६ ॥ सुरालयादिंद्रलोकात् । सुधर्मा देवसभा ‘ स्यात्सुधर्मा देवसभा ’ इत्यमरः ॥ ३७ ॥ प्राग्ज्योतिषपतिर्नरकासुरः ॥ ३८ ॥ पीठो हि नरकासुरचमूपतिः । ‘ पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता निरगम् ’ इत्युक्तेः । आदिना तत्पुत्रादयः ॥ ३९ ॥ ४० ॥ अपदेशो व्याजः ॥ ४१ ॥ यत्र भगवदुद्धवसंवादे ॥ ४२ ॥

युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ॥ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥४३॥ देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः॥ शाखाप्रणयनमृषेर्मार्कंडेयस्य सत्कथा॥महापुरुषविन्यासः सूर्यस्य जगदात्मनः॥४४॥इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोहमिहास्मि वः॥लीलावतारकर्माणि कीर्तितानीह सर्वशः ॥४५॥पतितः स्खलितश्चार्तः क्षुत्वा वा विवशो ब्रुवन् ॥ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥४६॥ संकीर्त्यमानो भगवाननंतः श्रुतानुभावो व्यसनं हि पुंसाम् ॥ प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥ ४७ ॥ मृषागिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ॥ तदेव सत्यं तदु हैव मंगलं तदेव पुण्यं भगवद्गुणोदयम् ॥ ४८ ॥

विनिश्चयः । मर्त्यपरित्यागो मनुष्यत्वस्यांतर्धानम् ॥ ४२ ॥ द्वादशार्थमाह । युगेति । युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३ ॥ ऋषेर्व्यासस्य । सूर्यस्य च विन्यास इत्यर्थः ॥ ४४ ॥ इति चोक्तमिति चकारादन्यदपि वो युष्माभिरिह यत्पृष्टोऽस्मि तदुक्तमिति । किमेवं नानार्थकथनेन तत्राह । लीलेति । सर्वशः तत्तदर्थकीर्तनद्वारेणेत्यर्थः॥ ४५॥तत्कीर्तनेनापि किमित्यपेक्षायां तत्फलमाह द्वाभ्याम् । पतितः कूपादिषु । स्खलितः सोपानादिषु । आर्तो दुःखितः । क्षुत्वा क्षुतं कृत्वा विवशोऽपि ॥ ४६ ॥ संकीर्त्यमानो यद्वा श्रुतोऽनुभावो यस्य स पुंसां चित्तं प्रविश्य निःशेषं दुःखं विधुनोति । हीति सतामनुभवं प्रमाणयति । अर्को गिरिगुहादिध्वांतं न धुनोतीत्यपरितोषाद्दृष्टांतांतरमाह । अतिवातोऽभ्रमिवेति ॥ ४७ ॥ हरिसंकीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपंचयति मृषागिर इति चतुर्भिः । मृषागिरो मिथ्यावाचः । असतीरसत्यः । असतां कथा यासु ताः यद्यासु उत्तमश्लोकस्य यशोऽनुगीयत इति यत्तदेव सत्यं तदेव हि

इत्यर्थ इति–यस्मिन्यस्मिन्युगे याया वृत्तिः साऽप्युक्तेति भावः । उपप्लवो नाशः,धर्मादेरिति शेषः। प्राकृतिकी प्रकृतिमधिकृत्य प्रवृत्ता महदादिप्रादुर्भावेण सृष्टिलक्षणा । नैमित्तिकी निमित्तं शुभाशुभं कर्म, तदधिकृत्य प्रवृत्ता देवमानुषादिलक्षणा । नित्या हि प्रतिक्षणं शरीरनाशोत्पत्तिस्वीकारेणातीवसूक्ष्मा बाल्यनाशयौवनोत्पत्त्यनुमेयेति ध्येयं सुधीभिः ॥ ४३ ॥ धीमतः श्रीशुकप्रसादावाप्तज्ञानस्य । इत्यर्थ इति–समासांतर्गतमपि विन्यासपदमत्र "विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च" इतिवत्संबध्यत इति भावः ॥ ४४ ॥ अत्राक्षिपति–किमेवमिति । इत्यर्थ इति–तेषांतेषां लीलादीनामर्थप्रयोजनं तत्कीर्तनद्वारेणेति भावः । द्विजश्रेष्ठत्वादेतत्सर्वं भवद्भ्यो मयोदीरितमिति संबुद्ध्यभिप्रायः ॥ ४५ ॥ सर्वाणि पातकानि यस्मिंस्तत्सर्वपातकं कर्मजालं तस्मात् ॥ ४६ ॥ व्यसनं दुःखम् ॥ ४७ ॥ अस्य शास्त्रस्य कृष्णकीर्तन एव तात्पर्यात्तदन्यकीर्तनमविगीतमपि न कुर्यात्, तत्कीर्तनं यत्पशुभिर्विगीतत्वेनोक्तं तदपि कुर्यादित्याह–मृषेति । ताः सत्या अपि गिरो मिथ्या एव,प्रिया अपि गिरोऽसतीरसत्याः कटूक्तय एव, तथा सतां विदुषामपि कथा असत्कथा एव। कुतः–यद्यतो भगवान्न कथ्यत इति। अतः स सत्यवादी अपि मिथ्यावादी, प्रियंवदोऽपि कटुवादी, सत्कथकोऽप्यसत्कथक उच्यत इति भावः।.स्वकल्पितत्वादसत्यमपि भगवद्यशश्चेत्तदेव सत्यं संसृतिध्वंसकत्वात्, अमंगलमपि तदेव मंगलं नान्यत्, भगवतः परदा

तदेव रम्यं रुचिरं नवंनवं तदेव शश्वन्मनसो महोत्सवम् ॥ तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद् ध्वांक्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥ ५० ॥ स वाग्विसर्गो जनताऽघसंप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्य यशोंकितानि यच्छृण्वंति गायंति गृणंति साधवः ॥ ५१ ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥ ५२ ॥ यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥ ५३ ॥

मंगलम् । उह इति हर्षे । भगवद्गुणानामभ्युदयो यस्मात्तत् ॥ ४८ ॥ नवंनवं यथा भवति तथा रुचिरं रुचिप्रदम् । महानुत्सवो यस्मात् ॥ ४९ ॥ चित्राणि पदानि यस्मिन् । तदपि जगत्पवित्रयतीति तथा तद्धरेर्यशो न प्रगृणीत न वर्णयेत्तद्वचो ध्वांक्षतीर्थं काकतुल्यनराणां रतिस्थानं न तु हंसैर्ज्ञानिभिः सेवितम् । तत्र हेतुः यत्रेति ॥ ५० ॥ स वाग्विसर्गः स एव वाचः प्रयोगो जनताघसंप्लवो जनसमूहाघनाशकः । यद्यस्मात्तान्यैवान्यैः कीर्त्यमानानि शृण्वंति श्रोतारि सति गायंति नोचेत्स्वयमेव गृणंति ॥ ५१ ॥ इदानीं ज्ञानकर्मादरादपि भगवत्कीर्तनादिष्वेवादरः कर्तव्य इत्याह त्रिभिः । नैष्कर्म्यं ब्रह्म तत्प्रकाशकं यज्ज्ञानं यतो निरंजनमुपाधिनिवर्तकं तदप्यच्युतभक्तिवर्जितं चेन्न शोभते नापरोक्षपर्यंतं भवतीत्यर्थः । ईश्वरे न चेदर्पितं तर्हि यदनुत्तमं सर्वोत्तममपि कर्म तदपि पुनः कुतः शोभते यतः शश्वत्साधनकाले फलकाले चाभद्रं दुःखात्मकम् ॥ ५२ ॥ किंच । वर्णाश्रमाचारादिषु यः परो महान् परिश्रमः स यशोयुक्तायां श्रियामेव । कीर्तिः संपत्तिश्च केवलं परः पुरुषार्थ इत्यर्थः । गुणानु

रमणादिकमधर्मैरपुण्यत्वेनोक्तमपि तदेव पुण्यं, यतो भगवतो गुणस्यैव न तु दोषस्योदयो यस्मात्तत् ॥ ४८ ॥ अरम्यमपि प्रसेनमार्गानुगमनभल्लुकबिलप्रवेशादि, रम्यमेव । रुचिरमिति—भक्तानामरोचकमपि श्रीजानकीत्यागादि रुचिरमेवेति । पुरातनमपि भगवच्चरितं नवंनवमेव।मारीचानुगमनोत्तरं श्रीजानकीहरणं रावणकृतं मनसो महोत्सवनाशकमपि महोत्सवकरमेव । पतिपुत्रादिवैराग्योत्पादकत्वेन शोकार्णवमपि तच्छोकार्णवतारकमेव॥४९॥ तत्र हंसाऽसेवने। पद्यानीमानि व्याख्यातचराण्येव। न यद्वच इत्यादि पद्यत्रयं भक्तेरुत्कर्षाऽऽख्यापनार्थमेव महापुराणस्यास्य प्रथमेऽपि शेषेऽपि स्थापितम्।यथा महामंत्रः कश्चिदाद्यंतवर्तिना बीजद्वयेन त्रयेण च पुटितः स्यात्॥५०॥५१॥ इत्यर्थ इति—‘ श्रेयःस्रुतिं भक्तिमुदस्य ’ इत्याद्युक्तेरयं भावः॥५२॥ननु वर्णाश्रमाचारादिना निःश्रेयसं स्यादेव “वर्णाश्रमाचारयुतो गृहस्थोपि विमुच्यते ” इति स्मृतेरतोऽच्युतभावेन किमित्यत आह—किञ्चेति । इत्यर्थ इति—कीर्तिसंपत्त्योः सत्योरपि हरिस्मृतिं विनाऽऽत्यंतिकश्रेयो न सिद्ध्यतीति भावः । सापि कथं स्यात्तत्राह—हरेर्गुणानुवादेति । आदिना स्मरणादिग्रहः । वर्णाऽऽश्रमधर्मादिषु यः परमो महान्परिश्रमः स यशोयुक्तायां श्रियामेव

अविस्मृतिः कृष्णपदारविंदयोः क्षिणोत्यभद्राणि शमं तनोति ॥ सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥५४॥ यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम् ॥ नारायणं देवमदेवमीशमजस्रभावा भजताविवेश्य ॥५५॥ अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ॥ प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५६ ॥ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः ॥ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥ ५७ ॥ य एवं श्रावयेन्नित्यं यामक्षणमनन्यधीः ॥ श्रद्धावान्योऽनुशृणुयात्पुनात्यात्मानमेव सः ॥ ५८ ॥ द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतस्ततो भवत्यपातकी ॥ ५९ ॥

वादादिभिस्तु श्रीधरपादपद्मयोरविस्मृतिर्भवति ॥ ५३ ॥ ततः किमत आह अविस्मृतिरिति । क्षिणोति नाशयति ॥ ५४ ॥ अथेदानीं श्रोतॄनात्मानं चाभिनंदन्नाह यूयमिति द्वाभ्याम् हे द्विजाग्र्याः। यद्यस्मादात्मन्यंतःकरणे श्रीनारायणमाविवेश्य शश्वद्भजत । संभावनायां लोट् । अतो भूरिभागाः बहुपुण्याः। कथंभूतम् । अखिलात्मभूतं सर्वांतर्यामिणम्। अत एव देवं सर्वोपास्यम् । अदेवं न देवोऽन्यो यस्य तम् । कुतः। ईशम् । यद्वा । यस्माद्यूयं भूरिभागाः तपआदिसंपन्नाः ततो नारायणं भजतेति विधिः ॥५५॥ मे मया श्रुतम् ॥ ५६ ॥ एतत्पुराणकीर्तनादिफलं प्रपंचयितुमाह एतदित्यष्टभिः ॥ ५७ ॥ यामक्षणं यामं क्षणं चेत्यर्थः । आत्मानमेव साक्षात्पुनाति न तु स्नानादिव

पर्याप्तः प्रायो भवेन्न भगवद्भक्तिसाधकः, हरेर्गुणानुवादश्रवणादिभिस्तु यः परिश्रमः स तु न विस्मृतिः श्रीधरपादपद्मयोर्यस्मात्तादृश इत्यर्थः ॥ ५३ ॥ ततः कृष्णपदारविंदास्मृतेः । सत्त्वस्यांतःकरणस्य "सत्त्वं द्रव्ये गुणे जीवे वैर्यांतःकरणे तथा" इति निरुक्तिः । विज्ञानमनुभवः । ज्ञानं परोक्षम् ॥ ५४ ॥ हरिभजनमेव द्विजाग्र्यापादकमित्यभिप्रेत्याह—द्विजाग्र्या इति । अत एव सर्वांतर्यामित्वादेव । अदेवत्वे हेतुः—ईशमिति । विध्यर्थेऽपि लोटो विधानादाह—यद्वेति । ‘अवश्यभावाः’ इति पाठे तु न वश्यस्ततो निवर्तयितुमशक्यो भाव आत्मा बुद्धिरिति यावत्, येषां त इत्यर्थः ॥ ५५ ॥ आत्मनस्तत्त्वं स्वरूपम् ॥ ५६ ॥ हे विप्रा इति—यूयं तु विप्रा मत्तोऽप्यधिकतरं जानीथेति भावः । सर्वेषामशुभानां दुष्कर्मफलानां विनाशनं येन तत्तथा "न वासुदेवभक्तानामशुभं विद्यते क्वचित्" इत्युक्तेः ॥ ५७ ॥ एतच्छ्रीमद्भागवतरूपं वासुदेवमाहात्म्यम् । यामश्च क्षणश्चानयोः समाहारो यामक्षणम्। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । बह्ववकाशे याममात्रं शृणुयादल्पावकाशे तु क्षणमात्रं च शृणुयात् । एतेनास्यावश्यश्रोतव्यता ध्वनिताऽन्यथा कालद्वयविधानानुपपत्तेः । अत एवांबरीषं प्रति श्रीगौतमेनोक्तम्—"अंबरीष शुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् ॥" इति । अनन्यधीः स्थिरचित्तः । आत्मपावनं जीवभावपरित्यागपूर्वकं ब्रह्मभावेन स्थितिः, अज्ञानमलनिवृत्त्यै तत्संगच्छत एवेति ॥ ५८ ॥ सर्वदा श्रवणाऽनवकाशे तु द्वादश्यामवश्यं शृणुयात्, व्रतवैगुण्यापनुत्तये त्वेकादश्यामप्यवश्यं शृणुयादेवेति वा शब्द एवार्थे । आयुर्वर्द्धतेऽनेनेत्यायुष्यो धर्मः ‘धर्मेण वर्द्धते चायुः’ इत्युक्तेस्तद्वान्भवति सर्वधर्मफलभाग्भवतीति भावः । अकालमृत्युहीनो वा भवेदित्यर्थः । ग्रहाद्यरिष्टजन्यायुर्नाशो न भवतीति भावः । प्रयतः पूतः उपवासं कुर्वन्यः पठति स ततः सोपवासपाठात् अपातकी महापातकोपपातकादिभ्यो हीनो भवतीत्यर्थः । महापातकान्याह मनुः—"ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः । महांति पातकान्याहुः संयोगं चैव तैः सह ॥" इति । उपपातकानि तु याज्ञवल्क्यः—"गोवधो व्रात्यता

१ ‘य एतच्छ्रावयेत्’ इति पाठाभिप्रायेणेदम् ।

**पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् ॥ उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥६०॥ देवता मुनयः सिद्धाः पितरो मनवो नृपाः ॥ यच्छंति कामान्गृणतः शृण्वतो यत्र कीर्तनात् ॥ ६१ ॥ ऋचो यजूंषि सामानि द्विजोधीत्यानुविंदते ॥ मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम्॥६२॥**

**देहमात्रम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविंदते तत्फलमेतां पठित्वा अनुविंदत इति ॥६२॥**

स्तेयमृणानां चानपक्रिया॥अनाहिताग्निताऽपण्यविक्रयः परिवेदनम् ॥ (१) ॥ भृताद्ध्ययनादानं भृतकाध्यापनं तथा॥पारदार्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ॥ (२) ॥ स्त्रीशूद्रविट्क्षत्रवधो निंदितार्थोपजीवनम् ॥ नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥ ( ३ ) ॥ धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम् ॥ पितृमातृसुतत्यागस्तडागारामविक्रयः ॥ ( ४ ) ॥ कन्यासंदूषणं चैव परिविंदकयाजनम् ॥ कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ ( ५ ) ॥ आत्मनोऽर्थे क्रियारंभो मद्यपस्त्रीनिषेवणम् ॥ स्वाध्यायाग्निसुतत्यागो बांधवत्याग एव च ॥ ( ६ ) ॥ इंधनार्थं द्रुमच्छेदः स्त्रीहिंसौषधिजीवनम् ॥ हिंस्रयंत्रविधानं च व्यसनान्यात्मविक्रयः ॥ ( ७ ) ॥ शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् ॥ तथैवाऽनाश्रमे वासः परान्नपरिपुष्टता ॥ ( ८ ) ॥ असच्छास्त्राधिगमनमाकरेष्वधिकारिता ॥ भार्याया विक्रयश्चैषामेकैकमुपपातकम ॥ ( ९ ) ॥ " इति । अथैषामर्थः—गोवधो गोपिंडव्यापादनम्, कालेऽनुपनीतत्वं व्रात्यता, ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं स्तेयम्, गृहीतस्य सुवर्णादेरप्रदानमृणानामपाकरणं, तथा देवर्षिपितृसंबंध्यृणस्यापाकरणञ्च, सत्यधिकारेऽनाहिताग्नित्वम्, तथाऽपण्यस्य लवणादेर्विक्रयः, सहोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसो भ्रातुर्दाराग्निसंयोगः परिवेदनम् ॥ ( १ ) ॥ पणपूर्वमध्यापकादध्ययनग्रहणम्, पणपूर्वाध्यापनम्, परदारसेवनम्, पारिवित्त्यं कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यम्, वार्धुष्यं प्रतिषिद्धवृद्ध्युपजीवनम्, लवणस्योत्पादनमूषरादितः ॥ ( २ ) ॥ स्त्रीत्यादि स्पष्टम्, निंदितार्थोपजीवनमराजस्थापितार्थोपजीवनम्, नास्ति परलोक इत्याद्यभिनिवेशो नास्तिक्यम, व्रतलोपो ब्रह्मचारिणः स्त्रीप्रसंगः, सुतानामपत्यानां विक्रयः ॥ ( ३ ) ॥ धान्यं व्रीह्यादि, कुप्यमसारं त्रपुसीसादि, पशवो गवादयस्तेषामपहरणम्, ' गोवधो व्रात्यता स्तेयम् ' इत्यनेनैव सिद्धे पुनर्धान्यादिग्रहणं प्रायश्चित्तविशेषार्थमेवमेव बांधवत्यागग्रहणेनैव सिद्धे पुनः पित्रादित्यागो विज्ञेयः, अयाज्यानां जातिकर्मदुष्टानां शूद्रव्रात्यादीनां याजनम्, पितृमातृसुतानामपतितानां परित्यागो गृहान्निष्कासनम्, तडागादिविक्रयः ॥ ( ४ ) ॥ कन्यादूषणमंगुल्यादिना योनिविदारणं न तु भोगः, तस्य 'सखिभार्याकुमारीषु' इति गुरुतल्पसमत्वोक्तेः । परिविंदकस्य परिवेत्तुर्याजनम्, तस्यैव कन्याप्रदानं च, कौटिल्यं गुरोरन्यत्र, गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वोक्तेः । पुनर्व्रतलोपग्रहणं शिष्टप्रसिद्धेष्वपि श्रीहरिचरणेक्षणं विना तांबूलं न भक्षयामीत्येवंरूपेषु व्रतेषु प्राप्त्यर्थम् ॥ ( ५ ) ॥ क्रियारंभः पाकारंभः " अघं स केवलं भुंक्ते यः पचत्यात्मकारणात् " इति तस्यैव प्रतिषिद्धत्वात्क्रियामात्रविषये त्वतिप्रसंगः स्यात् । मद्यपाया जायाया भोगः, स्वाध्यायत्यागो वेदाभ्यासादिराहित्यम्, अग्नीनां श्रौतस्मार्तानां त्यागः, सुतत्यागस्तत्संस्काराकरणम्, बांधवानां पितृव्यमातुलादीनां त्यागः सति विभवेऽपरिरक्षणम् ॥ ( ६ ) ॥ पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदो न त्वाहवनीयादिरक्षणार्थमपि, स्त्रिया, हिंसया, औषधेन च जीवनम्।तत्र स्त्रीजीवनम्—भार्यां पण्यभावेन पुरुषांतरभोगार्थं प्रयोज्य तल्लब्धोपजीवनं, स्त्रीधनेनोपजीवनं वा, हिंसया प्राणिवधेन जीवनम्, औषधजीवनं वशीकरणादिना, हिंस्रयंत्रस्य तिलेक्ष्वादिपीडनादिरूपस्य प्रवर्तनम्, व्यसनानि मृगयादीनि, आत्मविक्रयो द्रव्यग्रहणेन परदास्यकरणम् ॥ (७) ॥ शूद्रस्य प्रेष्यं सेवनम्, हीनजातिषु मैत्रीकरणम, अनूढसवर्णदारस्य केवलं हीनवर्णदारोपसेवनम्, साधारणस्त्रीसंभोगश्च, अगृहीताश्रमत्वं सत्यधिकारे, परपाकरतित्वम् ॥ ( ८ ) ॥ चार्वाकादिग्रंथावगमः, आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाऽधिकारित्वम्, भार्याया विक्रयः, चान्मन्वाद्युक्ताभिचारमतिपूर्वलशुनादिभक्षणादेर्ग्रहणम् ॥ ( ९ ) ॥ मातृगमनदुहितृगमनस्नुषागमनान्यतिपातकानि, स्वसृसखीसगोत्रोत्तमवर्णारजस्वलाशरणागताप्रव्रजितानिक्षिप्तानां गमनमनुपातकानि, अनुपातकानामेव विष्णुना पातकसंज्ञोक्ता " महापापं चातिपापं तथा पातकमेव च । प्रासंगिकं चोपपापमित्येषां पञ्चको गणः ॥ " इति कृतं प्रसक्तानुप्रसक्त्या ॥ ५९ ॥ यतः संयतश्चासावात्मा बुद्धिर्यतात्मा सोऽस्यास्तीति यतात्मवान् । उपोष्य स्थित्वा उपवासार्थकत्वे तु निरन्नस्य यतात्मत्वाऽसंभवात्पाठस्यापि दुष्करतैवेति प्रतीयते । भयात्संसारात् ॥ ६० ॥ अत्र ये देवादयः कीर्तितास्तेऽपि कीर्तनात् यत्र यद्भागवतं गृणतः शृण्वतश्च नृन्कामान्यच्छन्ति ददति यत्रेति द्वितीयार्थे त्रल् ॥ ६१ ॥ गृह्यसूत्रोक्तं फलमाह—ऋच इति । तथाहि—" यदृचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा उपक्षरंति यद्यजूंषि घृतस्य कुल्या यत्सामानि मध्वः कुल्या योऽथर्वा

पुराणसंहितामेतामधीत्य प्रयतो द्विजः ॥ प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत् ॥ ६३ ॥ विप्रोऽधीत्याऽऽप्नुयात्प्रज्ञां राजन्योदधिमेखलाम् ॥ वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात् ॥ ६४ ॥ कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् ॥ इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसंगैः ॥ ६५ ॥ तमहमजमनंतमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥६६॥ उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजंगमालयाय ॥ भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय॥६७॥

किंच प्रोक्तमिति॥६३॥राजन्य उदधिमेखलां पृथ्वीम्।संधिरार्षः॥६४॥अस्य पुराणस्यैवं प्रभावातिरेके कारणमाह।कलिमलानां संहतिं समूहं कालयति विनाशयतीति तथा इतरत्र वाक्यांतरे॥६५॥शास्त्रप्रतिपादितं भगवंतं नमस्करोति तमिति द्वाभ्याम्। जगदुदयस्थितिसंयमात्मनो रजआदयः शक्तयो यस्य तम्।द्युपतिभिर्देवैरपि दुरवसितः अज्ञातः स्तवः स्तोत्रं यस्य तम् ॥ ६६ ॥ उपचिताभिः उद्रिक्ताभिर्नवशक्तिभिः प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः स्व आत्मन्येवोपरचितं स्थिरं जंगमं च आलयो यस्य तस्मै

गिरसः सोमस्य कुल्या यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः " इति ॥ ६२ ॥ जीवन्मुक्तिफलकत्वमस्याह–किंचेति । " मनसा वचसा दृष्ट्या गृह्यतेन्यैरपींद्रियैः । अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमंजसा ॥ " इतिरीत्या यत्सर्वात्मकत्वरूपं भगवतः पदं स्वरूपं भगवतैवर्षिभ्यः प्रोक्तमर्थादद्वैतनिष्ठारूपं तद्व्रजेल्लभेदित्यर्थः ॥ ६३ ॥ प्रज्ञां प्रकृष्टज्ञानं सर्वपुराणेतिहासाध्ययनाध्यापनसामर्थ्यलक्षणं प्राप्नुयात् । उदधिर्मेखलेव परितो व्याप्तो यस्याः सोदधिमेखला भूमेर्नामेदम् । " समुद्रमेखले देवि पर्वतस्तनमंडले " इति मंत्रात्, तथा च भूमिं प्राप्नुयान्न तु समुद्रांतर्गतां सर्वामिति नरेन्द्रादिपदवद्यात्किंचिन्नराणां पत्यावपि यथा नरेंद्रपदं प्रयुज्यते, तथा यत्किंचिद्भूपतिरप्युदधिमेखलापतिरुच्यत इति । अत्र संधिरार्षः। यद्वा–अदधिः, आप आधि कोर्थोऽधिका यस्मिन्नित्यदधिः । अत्रार्षत्वाद्वर्णविकारो मयूरादिवत् । अवस्थांतरप्राप्तिर्विकारस्तस्मात्पस्य दः । एवं निधिपतिरपि ज्ञेयः । "निधिः पद्मादिनवके वस्वब्धिस्थापनेषु च" इति धरणिः । धनपतिः स्यादित्यर्थः । शूद्रः शृण्वन्नेव तस्य पाठानधिकारात् । तदुक्तं पुराणाधिकारप्रस्तावे भविष्ये–" अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च । श्रोतव्यमेव शूद्राणां नाध्येतव्यं कदाचन ॥ श्रौतं स्मार्तं च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम । तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन ॥" इति ॥ ६४ ॥ एवं प्रभावातिरेके पूर्वोक्तरीत्या प्रभावाधिक्ये । इह श्रीभागवते । अशेषमूर्तिरनंतमूर्तिः । अनुपदं प्रतिश्लोकम् । पदानि संत्यत्रेति पदः । अजत्र मत्वर्थीयः । पद्यम्। पदं पदमनुपदं वीप्सार्थकानुपदयोगे द्वितीया । तत्तत्कथाप्रसंगैर्भगवानेवात्र कीर्तित इति । अत्र कर्म ब्रह्मादिप्रतिपादकशास्त्रेऽखिलेशो विराडंतर्यामी तत्पालको विष्णुर्वापि न गीयते, कचिद्गीयते वा तत्र त्वभीक्ष्णं नैव गीयते । तुरवधारणे । इह भागवते भगवानेवाभीक्ष्णं गीयते नारायणादयो येऽत्र वर्णितास्तेप्यशेषा एव मूर्तयोऽवतारा यस्य स तथाभूत एव गीयते न त्विरत्रेव तद्विवेकेनेत्यर्थः। अत एव तत्तत्कथाप्रसंगैरपि भगवानेव पारि सर्वतोभावेन पठितो व्यक्तमेवोक्त इत्यर्थः ॥ ६५ ॥ आदिनाऽनंतादिग्रहः । सर्वज्ञैरपि देवैरज्ञातगुणगणत्वाद् दुर्ज्ञेयं तं नतोऽस्मीति । तमजं नतोऽस्मि, किं ब्रह्माणं नमसि? न, अनंतम्। किं प्रधानं? न, आत्मतत्त्वं चेतनस्वरूपम्। किं शुद्धजीवं? न,जगदुदयादय आत्मशक्तितो यस्य तम्। किं दुर्गापतिं शंभुम्?"विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् " इति मार्कंडेयोक्तेः 'शिवार्द्धांगहरा दुर्गा' इति पुराणांतराच्च, न, द्युपतिभिरजाद्यैरप्यज्ञातस्तुतिकमच्युतं श्रीकृष्णम्, "को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम्" इति ब्रह्मोक्तेः। 'नाहं वेदापरेऽपि च' इत्युक्तेः, " यतो वाचो निवर्तंते अप्राप्य मनसा सह" इति श्रुतेश्च ॥ ६६ ॥ स्वे स्वीये । आत्मनि स्वरूपे । उपरचितमाविर्भावितं यत्स्थिरं स्थावरं जंगमं च तदेवालयो निवासस्थानं यस्य तस्मै स्वप्रकाशितजग

स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ॥ व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि॥६८॥इति श्रीभाग० महा० द्वाद० द्वादशस्कन्धार्थनिरूपणं नाम द्वादशोऽध्यायः॥१२॥सूत उवाच॥यं ब्रह्मा वरुणेंद्ररुद्रमरुतः स्तुन्वंति दिव्यैः स्तवैर्वेदैः सांगपदक्रमोपनिषदैर्गायंति यं सामगाः॥ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो यस्यांतं न विदुःसुरासुरगणा देवाय तस्मै नमः॥१॥

भगवते ॥ ६७ ॥ श्रीगुरुं नमस्करोति । स्वसुखेनैव निभृतं पूर्णं चेतो यस्य । तेनैव व्युदस्तोऽन्यस्मिन् भावो यस्य तथाभूतोऽपि अजितस्य रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतं स्थैर्यं यस्य सः । तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं यो व्यतनुत तं नतोऽस्मीति ॥६८॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां द्वादशोऽध्यायः॥१२॥ त्रयोदशे पुराणानां संख्यामाह यथाक्रमम् ॥ दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १ ॥ सर्वपुराणसंख्यादीनुपवर्णयिष्यंस्तत्प्रतिपाद्यं देवं प्रणमति । यमिति । स्तवैर्वेदैश्च स्तुन्वंति स्तुवंति । उपनिषच्छब्दस्याकारांतत्वं छंदोऽनुरोधेन । ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन यस्यांतं न विदुः सुरासुरगणाः ॥ १ ॥

ति जीवरूपेणांतर्यामिरूपेण च स्थिताय । उपलब्धिमात्रधाम्ने सर्वज्ञानस्वरूपाय ज्ञानमात्राधिष्ठानाय वा । सुरऋषभाय सर्वदेवोत्तमाय श्रीकृष्णाय । सनातनाय सर्वावस्थासु विद्यमानाय । एतच्च श्रीकृष्ण एव संपद्यते । " अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते " इति, " मया ततमिदं सर्वं जगत्स्थावरजंगमम् " इति च तदुक्तेः । यद्वा–उपलब्धिमात्रं परं ब्रह्म तस्य धाम्ने स्थानाय ' ज्ञानमात्रं परं ब्रह्म ' इत्युक्तेः, ' ब्रह्मणो हि प्रतिष्ठाहम् ' इति श्रीमुखोक्तेः, ' सनातनस्त्वं पुरुषो मतो मे ' इत्यर्जुनोक्तेश्च सनातनत्वमपि तत्रैव संगच्छते ' देवानामच्युतो यथा ' इत्यग्रे वक्ष्यमाणत्वात्सर्वदेवश्रेष्ठोऽपि स एवेति ॥ ६७ ॥ स्वसुखेन परमानन्दावाप्त्या । तेनैव स्वसुखपूर्णचेतस्त्वेनैव । अन्यस्मिन्परमानंदस्वरूपादितरत्र, भावः स्नेहो यस्य । तथाभूतोपि परमानंदतृप्तोपि । अजितस्य श्रीकृष्णस्य । रुचिराभिर्मनोहराभिर्बाल्यादिचारितैराकृष्ट आकर्षणविषयीकृतः । " तदिति ब्रह्मणो नाम" इति श्रुतेस्तद्ब्रह्म तस्य भावस्तत्त्वं श्रीकृष्णः " अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम् ॥ " इति ब्रह्मोक्तेस्तस्य प्रकाशकम् । अखिलानि वृजिनानि पापानि हंति दर्शनस्मरणादिनेत्यखिलवृजिनघ्नः 'कलुषं वृजिनैनोघम् ' इत्यमरः । ब्रह्मरूपत्वात्तस्य सर्वाघनिवर्तकत्वम् । 'शुकाय ब्रह्मरूपिणे ' इत्यग्रिमाध्यायोक्तेः स्वेष्टदेवं शास्त्रप्रतिपाद्यं नत्वा स्वगुरुं प्रणमति–स्वसुखेन ब्रह्मानंदेन निभृतं परिपूर्णं चेतो यस्य तम् । तेन तथात्वेन व्युदस्तो दूरीभूतोऽन्यस्मिन्भावो मनोव्यापारो यस्य तम् । तथाभूतोऽप्यजितस्य श्रीकृष्णस्य रुचिरलीलया कर्त्र्याऽतिबलवत्याकृष्टस्तस्माद्ब्रह्मानंदात्सकाशात्स्वस्मिन्नानतिः सारो रसानुभवसामर्थ्यं यस्य सः, ब्रह्मरसास्वादादपि लीलारसास्वादे माधुर्याधिक्यमनुभूय तत्रैव यः प्राप्तनिष्ठोऽभूदिति भावः । तेन लीलारसोऽयं तस्य न समाधिभंजकः प्रत्यूहस्तथात्वे तेन तत्रैव पुनः समाध्यर्थमेवायातिष्यत न तु तथाकृतं प्रत्युत कृपयान्येभ्योऽपि लीलारसास्वाददित्सया तत्त्वदीपं लीलारसतत्त्वप्रकाशकं व्यतनुत । अत एवोक्तम्–" हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः " इति, ' परिनिष्ठितोऽपि नैर्गुण्ये ' इत्यादि पुराणं श्रीभागवतं व्यतनुत विस्तरपूर्वं व्याख्यातवान् ॥ ६८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ यथाक्रमं सप्तमाध्यायोक्तपुराणगणनाक्रममनतिक्रम्य । तत्र हि–' ब्राह्मं पाद्मं वैष्णवं हि ' इत्यादिना पुराणाष्टादशकमुक्तमिति (१) । तत्प्रतिपाद्यमष्टादशपुराणप्रतिपाद्यम् । दिव्यैरलौकिकैः । अंगादिपाठचतुष्केण अंगपाठपदपाठक्रमपाठोपनिषत्पाठैर्गायंति । अंगादिपाठज्ञानञ्च वेदाध्ययनसाध्यमिति । यद्वा–अंतिमेऽ–

पृष्ठे भ्राम्यदमंदमंदरगिरिग्रीवाग्रकंडूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पांतु वः ॥ यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनांभसां यातायातमतंद्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २ ॥ पुराणसंख्यासंभूतिमस्य वाच्यप्रयोजने ॥ दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥ ३ ॥ ब्राह्मं दशसहस्राणि पाद्मं पंचोनषष्टि च ॥ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ ४ ॥ दशाष्टौ श्रीभागवतं नारदं पंचविंशतिः ॥ मार्कंडं नव वाह्नं तु दशपंच चतुःशतम् ॥ ५ ॥

क्षीरोदमथनादौ दुर्ज्ञेयत्वमेव प्रदर्शयितुं कूर्मावतारमनुस्मारयन्नाशिषः प्रार्थयते । पृष्ठे भ्राम्यत् अमंदो मंदरगिरिः गरिष्ठो मंदराचलस्तस्य ग्रावाणस्तेषामग्राणि तैः कंडूयनाच्चेन सुखेन निद्रालोः निद्राशीलस्य येषां श्वासानिलानां संस्कारास्तेषां कलाश्च लेशाः तदनुवर्तनवशाज्जलनिधेरंभसां यातायातं न विश्राम्यति । ननु समुद्रक्षोभादेव तत् न संस्कारवशात्तत्राह । वेलाक्षोभस्तस्य निभेन मिषेण ॥ २ ॥ पुराणसंख्यास्तासां संभूतिं समाहारं चास्य तु श्रीभागवतस्य वाचम् विषयाः प्रयोजनं च दानं च तस्य पाठादेश्च माहात्म्यं निबोधत ॥ ३ ॥ त्रयोविंशत्रयोविंशतिसहस्राणि । चतुर्विंशति चतुर्विंशतिः । शैवकं शिवपुराणम् ॥ ४ ॥ वाह्नं तु अग्निपुराणं तु दशपंचसहस्राणि

ध्याये पुनरपि मंगलं नत्यात्मकमाचरति । उपनिषच्छब्दोऽदंत आर्षः, तेनैतत्पुराणपाठेन भगवतस्तस्य स्तुतिसंकीर्तनमेव मम यथाकथंचिदभून्न तु सम्यगवगम इति भावः ॥ १ ॥ सुरासुरगणदुर्ज्ञेयाऽनंतता भगवता कूर्मावतार एव दर्शिताऽतस्तत्स्मरणपूर्वकं श्रीभागवतं समापयञ्श्रीभागवतस्यापि दुर्ज्ञेयार्थतां ध्वनयति । श्वासानिलाः प्राणवायवः वो युस्मानध्येत्रध्यापकवक्तृश्रोतॄन् पांतु बलौजआदिदानेन रक्षन्तु । श्रीभगवत एव श्वसनतः सर्वेषां बलाद्युत्पत्तिश्रवणात् । तदुक्तमेकादशे–" यस्येंद्रियैस्तनुभृतामुभयेन्द्रियाणि ज्ञानं स्वतः श्वसनतो बलमोज ईहा " इत्यादीति । अत्राक्षिपति–नन्विति । किञ्च–समुद्रमथनं भगवतैव कूर्मरूपेण कृतं देवानां तु तत्र नाममात्रेणैव निमित्तता तथेदमप्यपारवेदमहासमुद्रमथनं मन्नाम्ना श्रीभगवतैव कृतमित्यर्थव्यञ्जकं व्यासोक्तमनुवदति–पृष्ठ इति । येनैव समुद्रो मथितस्तेनैव भगवता मोहिनीरूपेणासुरान्वंचयित्वा तदुत्थममृतं स्वभक्तेभ्यो देवेभ्यो दत्तं, तथैव वेदसमुद्रमथनोत्थमिदं भक्त्यमृतं श्रीभागवतरूपेणाभक्तानसुरान्वञ्चयित्वा युष्मभ्यं ददाविति भक्तान्प्रत्याशीर्वादः ॥ २ ॥ यथाखंडमण्डलपतेस्तव मंडलेशा एतावंत इति गण्यते तथैव महापुराणचक्रवर्तिनः श्रीभागवतस्य संन्निधौ पुराणान्यवश्यं गणयामीत्यतः पुराणानां संख्यायास्संभूतिं सम्भवम् ॥ ३ ॥ ब्राह्मं ब्रह्मपुराणम् । दशसहस्राणि अयुतश्लोकपारिमितमित्यर्थः । पाद्मं पद्मपुराणम् । पञ्चभिरूना षष्टिः श्लोकसहस्राणां यत्र तत्तथा । उत्तरपदलोपी समासः । एवमग्रेऽपि ज्ञेयम् । त्रिभिरधिका विंशतिस्त्रयोविंशतिः; छांदसत्वाद्विंशतेर्विंशादादेशः ॥ ४ ॥ दशसहस्राण्यष्टौ सहस्राणि च यत्र श्लोकास्तच्छ्रीभागवतमित्यर्थः । मार्कण्डं मार्कण्डेयम्, पृषोदरादिः । वह्नेरिदं वाह्नम्, चतुःशतमित्युक्तेर्दशपंचसहस्राणीति लभ्यते, चतुर्णां शतानां समाहारश्चतु

चतुर्दश भविष्यं स्यात्तथा पंचशतानि च ॥ दशाष्टौ ब्रह्मवैवर्तं लिंगमेकादशैव तु ॥ ६ ॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ स्कांदं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ एकोनविंशत्सौपर्णं ब्रह्मांडं द्वादशैव तु ॥ ८ ॥ एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ॥ तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥९॥ इदं भगवता पूर्वं ब्रह्मणे नाभिपंकजे ॥ स्थिताय भवभीताय कारुण्यात्सं प्रकाशितम् ॥ १० ॥ आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ॥ हरिलीलाकथाव्राताामृतानंदितसत्सुरम् ॥ ११ ॥

चत्वारि शतानि ॥ ५ ॥ ६ ॥ स्कांदं शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ सौपर्णं गरुडपुराणमेकोनविंशदेकोनविंशतिः ॥ ८ ॥ महाभारतं त्वितिहासः । रामायणं च ऋषिप्रोक्तं काव्यम् । अतः पुराणानां संदोहः समूहश्चतुर्लक्षसंख्याक एव । इदानीमस्य वाच्यप्रयोजनादीन् दर्शयितुमाह तत्रेत्यादिना ॥ ९ ॥ १० ॥ हरिलीलाकथानां

शतम् । यद्वा—दशभिः सहिताः पञ्च यत्र तत्तथा । पुनश्चत्वारि शतानि यत्र तत्तथा । एवमग्रेपि ॥ ५ ॥ ६ ॥ ७ ॥ तत्तु पुराणं तु ॥ ८ ॥ महाभारतादीनां पुराणत्वशंकां निरस्यति स्वामी—महाभारतं त्विति । ऋषिप्रोक्तं वाल्मीकिप्रोक्तम् । अतो महाभारतरामायणयोः पुराणत्वाभावात् । तत्राऽष्टादशसु पुराणेषु । तत्रेति—यथैवाऽवतारत्वादवतारमध्ये कृष्णं गणयित्वा पुनः “ एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ” इति कृष्णस्य पृथग्गणना, तथैव पुराणत्वात्पुराणमध्ये श्रीभागवतं गणयित्वा “ तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ” इति पुनर्गणना पुराणचक्रवर्तित्वव्यञ्जिका । यथा च तत्र स्वयं पदं सर्वोत्कर्षव्यञ्जकं, तथा त्रापि श्रीमदिति पदमिति प्रक्रान्तं सम्पूर्णमेव ॥ ९ ॥ तदेव व्यनक्ति—कारुण्यात्कृपापारवश्यात् । भगवता श्रीकृष्णेन । गर्भोदशायिने नाभिपंकजे स्थिताय ब्रह्मणे ॥ १० ॥ यत् सर्वेषां वेदान्तानामुपनिषदां सारं ब्रह्मात्मनोर्ब्रह्मजीवयोरेकत्वलक्षणमभेदरूपमद्वितीयं वस्तु तदेव निष्ठाविषयो वाच्यं यस्य तत्तन्निष्ठं ब्रह्मैकज्ञानमस्य विषय इत्यर्थः । कैवल्यं स्वरूपावाप्तिरेवैकं मुख्यं प्रयोजनं यस्य तत्तथा प्रसंगादस्य सम्बन्धस्तु वाच्य वाचकभावरूपो ज्ञेयः । अधिकारी त्वेतज्जिज्ञासुरेवेत्येतदनुबन्धचतुष्टयम्—‘ धर्मः प्रोज्झितकैतवः ’ इत्यत्रोक्तमप्यत्र स्मृतिलाभाय ध्वनितमिति । वाच्यं प्रयोजनञ्चाह—हरेर्लीलाकथानां व्रातः समूह एवाऽमृतं तेनानंदिताः सन्तो भक्ता एव सुरा येन तदिति लीलाकथाव्रातशब्देन भक्तिरूपं वाच्यं व्यञ्जितं तदेवामृतमिति प्रेमरूपं प्रयोजनं च प्रेम्णैव भक्तेरमृतवदास्वाद्यत्वप्रसिद्धेः, तेन सतामानन्द इति प्रेम्णोऽनुभावः । तत्र कथायाममृतत्वा रोपेण तत्सम्प्रदानानां सतां सुरत्वारोपेण च तत्सम्प्रदातुः शास्त्रस्यास्य मोहिनीत्वारोपो लभ्यते, मोहिन्यैव सुरेभ्योऽमृतदानत्वप्रसिद्धेः । ततश्च सुरान्स्वभक्तान्स्वं विदुषः प्रति भ्रूविभंगेनैवान्यजनाज्ञातं यथा ब्रूते स्म मदनुभा वस्यास्य युष्मदानुकूल्यमेव कर्तव्यं प्रयोजनं चासुरान्वंचयित्वा युष्मभ्यममृतदानम् । यथा चासुरान्स्वतत्त्वमविदुषः प्रति अपि भ्रूचालनेनैतत्स्पष्टमेव ब्रूते स्म तदाविर्भावस्य युष्माकं विजयप्रापणमेव कर्तव्यं,प्रयोजनं च युष्मभ्यम मृतदानमितीदं गौणमेव । मुख्यप्रयोजनं तु यद्युष्मान्नित्यमानन्दचमत्कारं प्रापयामि युष्मद्गृहस्थित्यैवातोऽतिदीनानेतान्देवान्प्रथमं किञ्चित्परिवेषयामीति तथैवेदं भागवतशास्त्रमपि स्वतत्त्वज्ञान्स्वभक्तान् ‘ हरिलीला ’ इत्यर्ध पद्येन स्ववाच्यम् “परोक्षवादा ऋषयः परोक्षं मम च प्रियम्” इति भगवदुक्तेर्व्यञ्जनावृत्त्यैव सर्वलोकालक्षितमुक्त्वा स्वतत्त्वमविदुषः शास्त्रज्ञमानिनः प्रकटमेव स्ववाच्यप्रयोजने अन्ये एवाह—सर्ववेदान्तानां सारं यद्ब्र ह्मणा सहात्मैक्यमद्वितीयं वस्तु तस्मिन्वाचकत्वेन निष्ठा यस्य तत् । कैवल्यमेकं मुख्यं प्रयोजनं यस्य तत् । केचित्पुनरेवं व्याचक्षते—शास्त्रेऽस्मिन्द्वयोरेव भक्तिज्ञानयोरुक्तत्वाद्भक्तिप्रेमणी वाच्यप्रयोजने उक्त्वा ज्ञानकैवल्ये

सर्ववेदांतसारं यद्ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥ १२ ॥ प्रोष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ॥ ददाति यो भागवतं स याति परमां गतिम् ॥ १३ ॥ राजंते तावदन्यानि पुराणानि सतां गणे ॥ यावद्भागवतं नैव श्रूयतेऽमृतसागरम् ॥ १४ ॥ सर्ववेदांतसारं हि श्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥ १५ ॥ निम्नगानां यथा गंगा देवानामच्युतो यथा ॥ वैष्णवानां यथा शंभुः पुराणानामिदं तथा ॥ १६ ॥

व्रातः समूहः स एवामृतं तेनानंदिताः संतः सुराश्च येन तत् ॥ ११ ॥ तन्निष्ठं तद्विषयम् ॥ १२ ॥ प्रौष्ठपद्यां भाद्रपद्याम् । हेमसिंहसमन्वितं सुवर्णसिंहासनारूढम् ॥ १३ ॥ ॥ १४ ॥ तद्रस एवामृतं तेन तृप्तस्य निर्वृतस्य ॥ १५ ॥ १६ ॥

अपि वाच्यप्रयोजने आह—सर्वेति । अपरे त्वेवमाहुः—शास्त्रेऽस्मिन्प्रक्रमे एव ‘ धर्मः प्रोज्झितकैतवोऽत्र परमः ’ इत्यनेन परमधर्मस्य भक्तेरेव वाच्यत्वावगमात् ‘ ईश्वरः । सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः’ इत्यनेन प्रेम्ण एव प्रयोजनत्वावगमाच्च । तथा सर्वस्कन्धेषु ज्ञानात्तत्साध्यमुक्तेश्च सकाशाद्भक्तेरेव प्राधान्यदर्शनात् ‘ प्राधान्येन व्यपदेशा भवन्ति ’ इति न्यायाद्भक्तिप्रेम्णोरेव वाच्यत्वप्रयोजनत्वे व्यज्येते, तस्मान्मोहिनीसाधर्म्यप्रापक प्रकटार्थमेतत्पद्यमाभ्यन्तरेणाप्यर्थान्तरेण योजनीयम् । तद्यथा—ब्रह्मात्मैक्यलक्षणं यद्वस्तु तन्निष्ठं ततोऽपि निःसृत्य तिष्ठतीति तन्निष्ठं ज्ञानकर्माद्यभिलाषरहिता केवला अनन्यभक्तास्तेषां भावः कैवल्यं तदेव प्रयोजनं यस्य तदिति ॥ ११ ॥ १२ ॥ नामैकदेशोच्चारणन्यायेन सिंहपदं सिंहासनं वक्तीत्याह—सुवर्णसिंहासनेति । दानपात्रं तु ‘ जन्माद्यस्य ’ इति व्याख्याशतके प्रोक्तमपि प्रसंगात्पुनरत्रोच्यते—“ सुवृत्ताय गृहस्थाय कृष्णभक्ताय सन्ततम् । सर्वशास्त्रविदेऽध्यायाऽध्यापने निरताय च ॥ विप्राय देयमेतत्तु श्रीमद्भागवतं मुने । अस्य पाठादिनिरतो विरक्तोऽपि यदा द्विजः ॥ तस्मा अपि देयमेतन्न बद्ध्वा स्थापिने क्वचित् ।” इति संहितोक्तेः । प्रौष्ठपद्या भाद्रसम्बन्धिन्याम् । तस्मिन्नेव दिने श्रीमुनीन्द्रेणैतत्पुराणं समाप्तीकृतमिति पाद्मोत्तरखण्डमाहात्म्ये दृष्टम् । हेमसिंहेति—सर्वशास्त्रमहाराजस्यास्य पुराणसूर्यस्य साम्राज्यार्थं सिंहासनौचित्यात् । सर्वग्रहराजस्य सूर्यस्याऽपि सिंहराशिगस्य सिंहासनारूढता दृष्टैव । परमां परमस्य भगवतः सन्निधिरूपाम् । “ ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् ” इत्युक्तेः ॥ १३ ॥ श्रूयत इत्यत्र ‘ दृश्यते ’ इति पाठश्चक्रवर्त्यादिसम्मतोऽस्ति । अस्य सर्वशास्त्रराजत्वमेवाह—राजन्त इति । अन्यानि पुराणानि तावच्छास्त्रराजत्ववन्ति, यावन्नेति भागवतं तु सम्राडेवातः शास्त्रमहाराजत्वमत्रैवेति भावः । यद्वा—अस्य पुराणसूर्यत्वमाह—राजन्ते दीप्यन्ते रात्रौ नक्षत्राणीवेति भावः यावद्रात्र्यन्ते, यावन्नेति सति सूर्ये न दृश्यंते इति भावः ॥ १४ ॥ तद्रसः श्रीभागवतरसः ‘ पिबत भागवतं रसमालयम् ’ इत्युक्तेः । स च श्रीकृष्णलीलामाधुर्यादिलक्षण :एव । अमृतं पीयूषम् ॥ १५ ॥ निम्नं गच्छन्तीति निम्नगाः नद्यस्तासां गंगा भागीरथी, अग्रिमश्लोके ‘ यथा—काशी ह्यनुत्तमा ’ इत्युक्तेरच्युतादिपदैरपि तल्लिंगव्यत्यासेनोत्तमपदं योज्यम् । न उत्तम उत्कृष्टो यस्माद्यस्या वेति यथोचितं समसनीयम् । किञ्च—सर्ववैष्णवशिरोमणेः श्रीशिवस्य त्रिपुण्ड्रभस्मरुद्राक्षधृतिदर्शनादेतत्कालिकैस्तत्कथं [1]न धार्यत इति न शङ्कनीयम्

[1] सर्वपापनाशकत्वेन ।

क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ॥ तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥ १७ ॥ श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते ॥ यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ ॥ १८ ॥ कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ॥ योगींद्राय तदात्मनाऽथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १९ ॥

॥ १७ ॥ पारमहंस्यं परमहंसैः प्राप्यम् । नैष्कर्म्यं सर्वकर्मोपरमः।भक्त्या तच्छ्रवणादिपरो विमुच्येत ॥ १८ ॥ श्रीभागवतसंप्रदायप्रवर्तकरूपेण भगवद्ध्यानलक्षणं मंगलमाचरति । कस्मै ब्रह्मणे । अतुलोऽसमः । अयं श्रीभागवतरूपः । पुरा कल्पादौ । तद्रूपेण ब्रह्मरूपेण नारदाय । (तद्रूपिणा नारदरूपिणा । कृष्णाय व्यासाय । तद्रूपिणा) योगींद्राय शुकाय । तदात्मना शुकरूपेण । तत्परं सत्यं श्रीनारायणाख्यं तत्त्वं धीमहि । इति गायत्र्यैव यथोपक्रम

'न देवचरितं चरेत्' इति स्मृतेः । यच्चैतद्धारणे वैष्णवैः, तुलस्यादिधारणे शैवैश्च निन्दोच्यते, तत्परमार्थाऽज्ञानविजृम्भितैव । यानि तु तत्तन्निन्दावाक्यान्युदाह्रियन्ते, तानि निर्मूलान्येवेति । न हि रुद्राक्षादिधृत्या वैष्णवत्वं नश्यति किन्तु वर्द्धत एव, तथैव तुलस्यादिधृत्या शैवत्वं न नश्यति किन्तु वर्द्धत एव, तथापि 'महाजनो येन गतः स पन्थाः' इति न्यायमाश्रित्य वर्तितव्यमिति तत्त्वम् । इदं श्रीभागवतम् ॥ १६ ॥ काश्या महत्त्वं हि शतपथब्राह्मणे वर्णितम् । तथाहि—"अविमुक्तं ह वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषु क्रममाणेषु रुद्रस्तारकं चष्टे येनासावमृती भूत्वा मोक्षी भवति" इति श्रुतेः । यद्वा—कं सर्वपुरीविलक्षणं मोक्षसुखं यत्र सा काशी मथुरा । तदुक्तं वाराहे— "काश्यादयो यद्यपि सन्ति पुर्यस्तासां तु मध्ये मथुरैव धन्या । या जन्ममौञ्जीव्रतमृत्युदाहैर्नृणां चतुर्द्धा विदधाति मुक्तिम्॥" इति । यद्वा— कं ब्रह्माश्नुते सर्वदा तिष्ठत्यत्रेति काशी "पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः" इति नारदोक्तेः, "मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः" इति श्रीदशमोक्तेश्च । "मथुरेति त्रिवर्णीयं त्रयीतोऽपि गरीयसी । त्रयी तु धावति ब्रह्म तदेनामनुधावति ॥" इत्यभियुक्तोक्तेश्च । 'कं ब्रह्मणि सुखेऽम्बुनि' इति विश्वः । क्षेत्राणां पुण्यक्षेत्राणाम् । "क्षीयन्ते यत्र पापानि त्रायते यन्महाभयात् । तत्क्षेत्रमुच्यते प्राज्ञैः" इति स्कान्दोक्तेः ॥ १७ ॥ अमलं सर्वशुद्धिकरम् । अमलं शुद्धाद्वैतविषयम् । विपठन् विशेषेण पठन् । विचारणपरः सातत्येनैतच्चिन्तनपरः । सर्वोत्कर्षमेवाह—भागवतं पुराणमेव श्रीमत् शोभायुक्तम् । न भवन्ति मलास्त्रिगुणोत्था यस्मात्तत् । यद्यतो वैष्णवानां प्रियं भक्त्युत्कर्षप्रतिपादकत्वादिति भक्त्युत्थज्ञानप्राप्तिलोमिभिर्ज्ञानिसिद्धैरप्येतदाश्रयणीयमेवेत्याह—यस्मिन्निति । परमहंसेभ्यो हितं पारमहंस्यम् । परं भक्त्युत्थत्वाच्छ्रेष्ठम् । ज्ञानसाधकैरप्येतत्सेव्यमित्याह—यत्रेति । नैष्कर्म्यं सर्वकर्मोपरमम् ॥ १८ ॥ ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारात् "मंगलादीनि मंगलमध्यानि मंगलान्तानि च शास्त्राणि प्रथन्ते" इत्यादि

नमस्तस्मै भगवते वासुदेवाय साक्षिणे ॥ य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ २० ॥ योगींद्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे ॥ संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥ २१ ॥

मुपसंहरन्गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥ तमेव देवतारूपेण गुरुरूपेण च प्रणमति । न इति द्वाभ्याम् । व्याचचक्षे व्याख्यातवान् ॥ २० ॥ २१ ॥

भाष्याच्च शास्त्रसमाप्तौ तदाचरतीत्याह–श्रीभागवतसम्प्रदायेत्यादि । कस्मै–असर्वनाम्नोपि सर्वनामकार्यमार्षत्वात् । येन परब्रह्मणा । ज्ञानं परोक्षापरोक्षरूपं प्रकर्षेण दीपयतीति तथा । अयं श्रीमद्भागवतलक्षणा । कृष्णाय व्यासाय । अथेति–तदात्मनेत्यस्य द्विर्योजनायोक्तम् । शुद्धं सर्वोपाधिविनिर्मुक्तम् । विमलमज्ञानतत्कार्यनिवर्तकम् । "तरति शोकमात्मवित्" इति श्रुतेः । शोकोपलक्षितस्संसारः, विगतः शोको येन तद्विशोकं संसारतरणसाधनम् । अमृतं मृतिनिवर्तकम् । विमलविशोकामृतपदानां तात्पर्येत एकार्थत्वेपि पुनरुक्तिः सर्वथा संसारभयनाशकमित्यर्थेति ज्ञेयम् । सत्यं त्रैकालिकाबाध्यम् । ज्ञानान्तरेण विषयासत्यप्रतीतिर्बाधस्तदयोग्य मत एव परं सर्वतः परं सर्वावधीभूतम् । "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रुतेः । धीमहीति साक्षाद्गायत्रीपदयोगेन गायत्र्येवेति पूर्वम् 'वस्त्वद्वितीयं तन्निष्ठम्' इति सामान्यतस्तात्पर्यं दर्शयित्वा 'जन्माद्यस्य' इत्याद्युपक्रमपोषकं श्रीभगवत्येव तस्य पर्यवसानं दर्शयन्नुपसंहरति–कस्मायिति । महावैकुण्ठं दर्शयता येन भगवता ब्रह्मणे विभासितं प्रकाशितम्, न तु विरचितमिदं भागवतम् । पुरा पूर्वपरार्द्धादौ । तदात्मने त्यस्योत्तरोत्तरेणाप्यन्वयः । तत्र तदात्मना श्रीशुकरूपेणेति न केवलं चतुःश्लोक्येव तेन प्रकाशिता, अपि तु तत्रतत्राविष्टेनाखण्डमेवेदं पुराणमिति द्योतितम् । श्रीसङ्कर्षणसम्प्रदायप्रवृत्तिस्तु श्रीद्वैपायनकर्तृकप्रकाशानन्तर्गतत्वात्पृथङ्नोक्ता । तत्परं सत्यं भगवदाख्यं तत्त्वं धीमहि 'यत्तत्पदमनुत्तमम्' इति सहस्रनामसु तच्छब्दस्य तन्नामत्वेन गणितत्वात् । परशब्देन श्रीभगवानेवोच्यते 'आद्योऽवतारः पुरुषः परस्य' इति द्वितीयोक्तेः । ब्रह्मादीनां बुद्धिवृत्तिप्रवर्तकत्वेनाभिधानात् । गायत्र्यर्थोपलक्षितेन धीमहीति गायत्रीपदेनोपसंहाराद्गायत्र्याख्यब्रह्मविद्यैवेयं श्रीभागवतपुराणम् ॥ १९ ॥ कस्मै ब्रह्मणे । इदं भागवतम् । मुमुक्षवे सृष्टिप्रतिबन्धकाज्ञानं त्यक्तुकामाय । शास्त्रसमाप्तौ स्वाभीष्टदेवं प्रणमति–वासुदेवाय वसुदेवनन्दनाय । साक्षिण इति–अहं तस्य भक्तोऽभक्तो वा, शिष्टो दुष्टो वा, तदभिप्रेतं व्याख्यातुं वेद्मि न वेद्मि वेति स एव साक्षात्पश्यति तत्कृपैव मे शरणमिति भावः । अहं तावत्को वराको ब्रह्मापि तत्कृपां विना श्रीभागवतार्थं न वेत्तीत्याह–य इदमिति । मुमुक्षवे कृपया व्याचचक्षे उपदिदेशेत्येतदुपदेशात्पूर्वमेव तस्य मुमुक्षाऽऽसीत्तदुपदेशानन्तरं तु प्रेम्ण्यैवाऽऽकांक्षा, मोक्षे तूपेक्षैवाजनिष्टेति भावः ॥ २० ॥ ब्रह्म श्रीभागवतम् 'पुराणं ब्रह्मसंमितम्' इत्युक्तेः, रूपयति परीक्षिते वर्णयतीति ब्रह्मरूपी तस्मै । अमूमुचत् मोचयामास ( २१ ) इतोऽग्रे 'भवे भवे' इत्यादिपद्यद्वयं प्रक्षिप्तम् ॥

( भवेभवे यथा भक्तिः पादयोस्तव जायते ॥ तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो ॥ २२ ॥ नामसंकीर्तनं यस्य सर्वपापप्रणाशनम् ॥ प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥२३॥ ) इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वादशस्कंधे त्रयोदशोऽध्यायः ॥१३॥

॥ संपूर्णोऽयं ग्रंथः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

( ॥ २२ ॥ २३ ॥ ) भावार्थदीपिकामेतां भगवद्भक्तवत्सलाम् ॥ परमानंदपादाब्जभृंगश्रीः श्रीधरोऽकरोत् ॥ १ ॥ स्वबालचपलालापैः स्वलीलापरिनर्तितैः ॥ प्रीयतां परमानंदनृहरिः सद्गुरुः स्वयम् ॥ २ ॥ श्रीपरानंदसंप्रीत्यै गुह्यं भागवतं मया ॥ तन्मतेनेदमाख्यातं न तु मन्मतिवैभवात् ॥ ३ ॥ क्वेदं नानानिगूढार्थं श्रीमद्भागवतं क्व नु ॥ मंदबुद्धिरहं कृष्णप्रेम किंकिं न कारयेत् ॥ ४ ॥ ॥ इति श्रीमद्भागवतभावार्थदीपिकायां श्रीधरस्वामिविरचितायां द्वादशस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥

॥ संपूर्णोऽयं ग्रन्थः ॥ ॥ श्रीमद्वेंकटेशार्पणमस्तु ॥

भगवद्भक्तानां वत्सला प्रिया ताम् ( १ ) । स्वबालस्य मम चपलालापैर्बाल्यमातिप्रयुक्तैः शब्दैः स्वेनैव लीलया परिनर्तितैर्मन्मुखात्पाठितैः ( २ ) तदेवाह—तन्मतेन श्रीपरानन्दनृसिंहमतेन । तत्प्रसादावाप्तज्ञानेनेत्यर्थः । श्रीशुकदेवं प्रणमति—योगीन्द्राय भक्तिज्ञानकर्माष्टांगात्मकयोगचतुष्कविदां महामुख्याय । ब्रह्मरूपिणे परब्रह्मस्वरूपाय । संसारसर्पदष्टं विष्णुरातमिति—यथार्जुनोद्धवमोहं गीतैकादशोपदेशेन भगवान्निवर्तयामास, तथैव परीक्षित्संसारं शुक इति प्राकृतलोकप्रतीत्यैवोक्तिः । वस्तुतस्तु त्रयाणामेव भगवन्नित्यपार्षदत्वान्न संसारशङ्कागन्धोऽपि किन्तु जीवहितग्राहणचातुर्यधुरंधराणां महतां कमप्येकं महाप्रसिद्धं जनमवलम्ब्यैव हितोपदेशसन्ततिरिति नीतिर्दृष्टाऽत एवेह—विष्णुरातमिति प्रयुक्तम् । युधिष्ठिराय कृपया रातं दत्तं स्वयं गृहीतो वा यस्तस्य संसारः कः खलु मन्दबुद्धिराशङ्केतेति भावः । किञ्च—सर्पविषहरा मंत्रा यथा लोकेऽर्थज्ञानमपि नापेक्षन्ते, तथैवार्थं जानातु न जानातु वा श्रीभागवतीयाः शब्दा एव संसारविषं निर्मूलयन्तीत्याचार्याभिप्रायो द्रष्टव्योऽत्रेति ॥ २१ ॥ ( २२ ) ( २३ ) ॥ इति श्रीखरडपत्तनवास्तव्यपण्डितवंशीधरशर्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

**अथाऽस्य श्रवणमाहात्म्यम् ॥** विष्णुरुवाच ॥ द्वादशस्कन्धश्रवणपुण्यसंख्या न विद्यते ॥ यतोऽयमात्मा मे ब्रह्मञ्जगद्भर्तुर्जगद्गुरोः ॥ १ ॥ इहेतिहासं वक्ष्यामि भृगुक्षेत्रे नृपोऽभवत् ॥ सूर्यरश्मिरिति ख्यातः सूर्य तुल्यपराक्रमः ॥२॥ यज्ञानां च शतं तेन कृतं दत्तं गवां शतम् ॥ विप्रकन्यासहस्राणां विवाहास्तेन कारिताः ॥३॥ नित्यं शृणोति स कथां व्यासं कृत्वा द्विजोत्तमम् ॥ देवदत्त इति ख्यातं शान्तं दक्षः प्रतापवान् ॥ ४ ॥ ॥ ब्रह्मोवाच ॥ व्यासस्य लक्षणं ब्रूहि कथं श्राव्या कथा प्रभो ॥ ५ ॥ हरिरुवाच ॥ रागद्वेषविनिर्मुक्तः शास्त्रज्ञो विष्णुपूजकः ॥ अंगैरविकलो धीरो ब्राह्मणः सत्यभाषणः ॥ ६ ॥ गृहस्थोऽध्यापनरत ऊर्ध्वपुंड्रधर स्तथा ॥ व्यासः प्रोक्तः श्रोतृजनाह्लादकृत्प्रियदर्शनः ॥ ७ ॥ तन्मुखेन श्रुता गाथा सर्वसिद्धिप्रदा भवेत् ॥ अवैष्णवमुखाद्गाथा न श्रोतव्या कदाचन ॥ ८ ॥ शुकशास्त्रं विशेषेण न श्रोतव्यमवैष्णवात् ॥ ब्राह्मणा वैष्णवा मुख्या यतो विष्णुमुखोद्भवाः ॥ विप्रैः कृता वैष्णवास्तु त्रयो वर्णा भवंति हि ॥ ९ ॥ विप्रोऽत्र वैष्णवो ग्राह्यो यश्च विष्णोरुपासकः ॥ वैदिकेन विधानेन दयालुः समदर्शनः ॥ १० ॥ भेदं न कुरुते यस्तु दुर्गाविष्णुशिवादिषु ॥ ब्रह्मत्वेनैव जानाति वैष्णवः स परो मतः ॥ ११ ॥ विप्रेतरमुखाच्छास्त्रं श्रुतं हि नरकप्रदम् ॥ राष्ट्रे यस्य तु शृण्वंति गाथां विप्रेतरेरिताम् ॥ तस्य राज्ञो भवेद्धानिरतः संशृणुयाद्द्विजात् ॥ ॥ १२ ॥ ये शूद्रमुखतः शास्त्रं शृण्वंति हि नराधमाः ॥ तेषां कर्णे त्रपु सिक्त्वा वक्तुर्जिह्वां प्रकर्तयेत् ॥ १३ ॥ पराशराद्या मुनय इत्थमेय वदंति हि ॥ यावद्विप्रमुखे शास्त्रं शास्त्रत्वं तावदेव हि ॥ विप्रेतरगतं शास्त्रम शास्त्रत्वं प्रपद्यते ॥ १४ ॥ यथा पतिरता साध्वी स्वैरिणी स्यात्ततोऽन्यथा ॥ तथा विप्रकृता गाथा तदन्या स्यात्प्रहेलिका ॥ १५ ॥ वक्तारं तोषयेन्नित्यं वस्त्रान्नाभरणादिभिः ॥ दुर्वाक्यं न वदेत्कापि व्यासं विष्णुस्वरूपिणम् ॥ १६ ॥ ये तु व्यासासनं मोहादाक्रामंति द्विजेतराः ॥ पच्यंते ते महामूढा निरये बहुवत्सरम् ॥ १७ ॥ व्यासासनोपवेशाच्च शालग्रामशिलार्चनात् ॥ कपिलाक्षीरपानाच्च ब्राह्मणीगमनात्तथा ॥ ॥ १८ ॥ वेदाक्षरोच्चारणाच्च शूद्रश्चांडालतां व्रजेत् ॥ विप्रस्यैवाधिकारोस्ति व्यासासनसमाक्रमे ॥ १९ ॥ वक्त्रा समं न चैवोच्चं श्रोतॄणामिष्टमासनम् ॥ समासनात्पुण्यहानिरुच्चाच्च निरयं व्रजेत् ॥ २० ॥ श्रोतव्यं मौनमाश्रित्य नरैर्नियतमानसैः ॥ वाग्वादकरणाद्गाथा नीरसा जायते स्फुटम् ॥ २१ ॥ गाथारसविघातेन पशुत्वं लभते पुमान् ॥ पौराणिक्यां कथायां च न कार्याः कथता सह ॥ २२ ॥ पूर्वपक्षाश्च सिद्धांताः पर स्परजिगीषया ॥ नाम्ना शुकोदरो विप्रस्तेन जातो विहंगमः ॥ २३ ॥ वामदेवस्य शिष्योऽपि पूर्वकल्पे वसुंधरे ॥ इत्येवं कथितं ब्रह्मन्वाराहे हरिणा मया ॥ २४ ॥ कथायां सम्प्रवृत्तायामितिहासपुराणयोः ॥ योऽन्यः किञ्चिदपि ब्रूते विना वक्तारमत्र हि ॥ २५ ॥ स वाग्वाद इति प्रोक्तः कथारसविघातकः ॥ वाग्वादात्स्यात्कथभंगो ब्रह्महत्यासमो हि सः ॥ २६ ॥ पृच्छेत्कथान्ते सन्देहं न कथायां कदाचन ॥ श्रोता जनः कथाभङ्गभयान्मौनं समाश्रयेत् ॥ २७ ॥ पाद्मे पुराणे संप्रोक्तं शङ्करेण स्वयं द्विजाः ॥ श्रीमते रामचन्द्राय परब्रह्मस्वरूपिणे ॥ २८ ॥ वाग्देवता भवेत्क्रुद्धा कथाया भंगमात्रतः ॥ तेन जन्मान्तरे मूकः पुनर्मूढस्त्रिज न्मसु ॥ वायसो वा भवेदन्यो वक्तुर्वक्ता ततो वदेत् ॥ २९ ॥ पुराणानां पूजकस्तु हेमान्नवसनादिभिः ॥ वैष्णवं पदमाप्नोति कर्तव्यो नात्र संशयः ॥ ३० ॥ श्रोतुर्दानमनंत्याय वक्तुर्नैव प्रतिग्रहः ॥ श्लोकैकश्रवणे यस्य रत्नकोटिर्न निष्क्रिया ॥ ३१ ॥ सर्वस्य तस्य यो वक्ता प्रतिग्राही कथं हि सः ॥ गृहीतेऽनुपकर्ता यो ज्ञेयः स च प्रतिग्रही ॥ ३२ ॥ विधातरित्थं प्रोवाच यथा प्रोक्तं मया तव ॥ देवद ाः सूर्यरश्मिं ब्राह्मणानां विशेष ताम् ॥ ३३ ॥ स सूर्यरश्मिनृपतिः श्रुत्वा प्रोवाच तं द्विजम् ॥ असदुक्तं त्वया गर्वाद्यच्छ्रैष्ठ्यं हि द्विजन्मनाम् ॥ ३४ ॥ त्वत्तोपि शोभनां गाथां करिष्यामि न संशयः ॥ त्वमुत्तिष्ठासनादस्मादित्थं व्यासं तिरोऽ

१ वृद्ध्यभाव आर्षः ।

करोत् ॥३५॥ आशीर्दत्त्वा च राजानं गतो गेहं द्विजोत्तमः ॥ न च राज्ञा समाहूतो न च विप्रः स्वयं गतः ॥ ३६ ॥ मासद्वयांते राज्ञा हि कृतो वक्ताऽपरो विधे ॥ व्यासावज्ञानदोषेण स राजा नरकं गतः ॥ ३७ ॥ तद्भुक्त्वा वर्षनियुतं तदंते स मृगोऽभवत् ॥ जातिस्मरः पूर्वपुण्यैः स्वजातौ न मिलत्यसौ ॥ ३८ ॥ नित्यं स्नात्वा तीर्थजले भानुं नत्वा पुनःपुनः ॥ तपोधनाश्रमं प्राप्य निःश्वसंश्च स्थितोऽभवत् ॥ ३९ ॥ प्रातः स्नातुं मुनिवरो विश्वेश्वर इति श्रुतः ॥ एकदा गतवांस्तीरे नद्यास्तत्र समागतः ॥ ४० ॥ तदैव मृग आगत्य स्नात्वा सूर्यं ननाम सः ॥ तदद्भुतमृषिर्दृष्ट्वा प्रोवाच हरिणं तदा ॥ ४१ ॥ को भवान्मृगरूपेण श्रुत्वा जातिस्मरो मृगः ॥ प्रोवाच नरवाचा तु त्यजन्नश्रुगणं मुहुः ॥ ४२ ॥ मृग उवाच ॥ भृगुक्षेत्राधिपोऽभूवं नाम्नाहं सूर्यरश्मिकः ॥ धर्मात्मा मुनिशार्दूल कुर्वे व्यासद्विजं तिरः ॥ ४३ ॥ तदंहसः प्रभावेण नरकान्गतवानहम् ॥ तदन्ते मृगयोनौ च प्राप्तोऽहं शृणु मे वचः ॥ ४४ ॥ इति श्रुत्वा मुनिवरः प्रोक्तवान्मृगसत्तमम् ॥ अन्येषां पापसंघानां निष्कृतिर्विहिता बुधैः ॥ ४५ ॥ न च व्यासतिरस्कर्तुर्निष्कृतिर्विद्यते भुवि ॥ परन्त्वेक उपायोऽस्ति शृणु मृगकुलसत्तम ॥ ४६ ॥ द्वादशस्कन्धश्रवणं कुरु भागवतस्य हि ॥ तेन स्यात्तव मानुष्यमिति सत्यं ब्रवीम्यहम् ॥ ४७ ॥ इति श्रुत्वा मृगस्तस्य पादयोः पतितस्तदा ॥ विश्वेश्वरो मुनिस्तस्य शिरसि प्रददौ करम् ॥ ४८ ॥ द्वादशश्रवणाच्चैव मुनिहस्तस्य संगमात् ॥ क्रोशंतो दग्धपक्षाश्च तद्देहान्निःसृतास्तदा ॥ ४९ ॥ काका मह्यां तत्र पेतुः स निष्पापोऽभवत्तदा ॥ आगामिजन्मनि भवान्वैश्यतामाप्स्यति ध्रुवम् ॥ ५० ॥ धनी भागवतं दत्त्वा विप्राय प्राप्स्यसे परम् ॥ इति प्रोवाच स मुनिर्देहांते सोऽभवत्तथा ॥ ५१ ॥ अथ दानप्रकारं ते वक्ष्ये ब्रह्मन्यथाविधि ॥ लिखित्वा लेखयित्वा वा दद्याद्विप्राय पुस्तकम् ॥ ५२ ॥ द्वादशस्कंधसंयुक्तं श्रीमद्भागवतस्य च ॥ रौप्यपट्टकसंयुक्तं कौशेयाच्छादितं शुभम् ॥ ५३ ॥ हेमसिंहासने स्थाप्य चतुर्विंशतिकर्षके ॥ विष्णुभक्ताय दातव्यं पुत्रपौत्रयुताय वै ॥ वस्त्रालंकारसहितं शास्त्रज्ञाय द्विजाय च ॥ ५४ ॥ अश्वमेधायुतोत्पन्नं पुण्यं तेन समं नहि ॥ यदेकश्लोकदानेन श्रीमद्भागवतस्य हि ॥ ५५ ॥ नित्यं गोदानलक्षैश्च यत्फलं प्राप्यते नरैः ॥ तदेकश्लोकदानेन दुर्लभं नहि पद्मज ॥ ५६ ॥ सर्वं भागवतं येन दत्तं लोके महात्मना ॥ तस्य पुण्यस्य या संख्या तां वक्तुं कोऽपि न क्षमः ॥ ५७ ॥ इति ज्ञात्वा नरैर्देयं श्रीमद्भागवतं कलौ ॥ सर्वयागविहीनेऽस्मिन्यागोऽयं सुलभः खलु ॥ ५८ ॥ शेषवृत्तं शृणु विधे स्थिरो भूत्वाऽद्भुतं पुनः ॥ वैश्यदेहं मृगो लब्ध्वा जातिस्मरणमागतः ॥ ५९ ॥ विप्रं श्रीरंगशर्माणं व्यासं कृत्वा महादरात् ॥ श्रुत्वा भागवतं तस्माद्दत्तवान्पुस्तकं विधे ॥ तस्मा एव तदा वैश्यस्ततो मत्साम्यमाप सः ॥ ६० ॥ ब्रह्मोवाच ॥ इत्थं श्रुतं मया विष्णोः श्रीमद्भागवते फलम् ॥ त्वत्प्रीत्या कथितं तुभ्यं वत्सैतद्दुर्लभं भुवि ॥ ६१ ॥ श्रीमद्भागवते शास्त्रे श्रीकृष्णे परमात्मनि ॥ अंतरं ये प्रपश्यंति ते नरा ब्रह्मघातिनः ॥ ६२ ॥ इति श्रीमत्पाद्ममहापुराणीयं श्रीमद्भागवतद्वादशस्कन्धमाहात्म्यं सम्पूर्णम् ॥ ॥

**अथ टीकाकृद्वंशवर्णनम्** ॥ भुवनपालनतत्परमानसाद्द्विरिवराज्जलपस्य दिशि स्थितम् ॥ हरविलोचनयोजनभूमिके रघुसुतस्य नृपस्य सरोवरम् ॥१॥ निखिलपापहरं प्लवनादिना तदुपकंठगतं शुभपत्तनम् ॥ खरडनामकमस्ति जनैर्युतं श्रुतिविधानपरायणमानसैः ॥ २ ॥ तस्मिन्पुरे विप्रगणाग्रगण्य उवास विप्रो **बलराम**शर्मा ॥ तदात्मजो **भूधर**नामधेयः स्वाचारनिष्ठोऽखिलशास्त्रवेत्ता ॥ ३ ॥ गौरीशपादांबुजदत्तचेता **गौरीप्रसाद**स्तु ततो बभूव ॥ तत्सूनुरौदार्यगुणेन युक्तो जातः सुकर्मा **सुखदेव**शर्मा ॥ ४ ॥ तद्देहजो निगमविद्व्रजराजशर्मा यो ह्यन्ववायशुभदीपक आविरासीद् ॥ धर्मात्मकं मधुरिपोरनुगं स **निक्काराम**ं ह्यवाप तनयं विनयोपपन्नम् ॥ ॥ ५ ॥ तस्माद्**वंशीधरो** जातो गोत्रे कौशिकसंज्ञके ॥ गौडवंशे नंदसूनुपादध्यानपरायणः ॥ ६ ॥ तेनायं ग्रथितः कृष्णकृपया ग्रंथसागरः ॥ श्रीधरस्वामिभावार्थदीपिकायाः प्रकाशकः ॥ ७ ॥ व्याख्यापुष्पमयी

माला श्रीवंशीधरशर्मणा ॥ समर्पिता कृष्णकंठे प्रीत्योपादेहि ते मया ॥ ८ ॥ श्रीकृष्णनाथ परिपूरय चिंतितं श्रीराधापते न कठिनं तव किंचिदस्तिं ॥ त्वद्ध्याननिष्ठमनसो मम यातु कालो वृन्दावनेश व्रजमंडलगस्य नित्यम् ॥ ९ ॥ श्रीवृन्दावनचंद्रस्य वृषार्कतनयापतेः ॥ प्रीत्यर्थं च कृतं ग्रंथं शृणोतु श्रीहरिः स्वयम् ॥ १० ॥ वृषभानुसुतानाथ मामाहूय कृतिं मम ॥ वृंदावने शृणु विभो हृदयेश निजप्रिय ॥ ११ ॥ यदत्र सौष्ठवं ग्रन्थे तद्गुरोरेव मे नहि ॥ यदत्रासौष्ठवं किंचित्तन्ममैव गुरोर्नहि ॥ १२ ॥ सर्वाणि प्राक्तनान्येव पदवाक्याक्षराणि वै ॥ कर्तृत्वं मेऽस्ति ग्रंथेऽस्मिंस्तेषां योजनमात्रतः ॥ १३ ॥ प्रमाणीभूतवाक्यानि पूर्वाचार्यकृतान्यपि ॥ निजग्रंथप्रकाशेन पूर्वाचार्या मतिप्रदाः ॥ १४ ॥ संति मे गुरवः सर्वे गुरवः पितरो मताः ॥ पित्रर्जितस्वे पुत्रस्य यथा स्वत्वं तथैव मे ॥ १५ ॥ तेषां कृतौ स्वकर्तृत्वाभिमानो विदुषां वराः ॥ अन्यथा पितुरर्थेषु पुत्रस्यापि न तद्भवेत् ॥ १६ ॥ श्रीकृष्णकृपया चेयं प्रसृतास्त्वखिलेषु च ॥ विज्ञेषु ते हि चात्रत्यन्यूनतां पूरयंतु वै ॥ १७ ॥ मय्यल्पज्ञे कृपां कृत्वा निजसौष्ठवभावतः ॥ भवन्त्येवर्जुतत्त्वज्ञे पण्डिताः सुदयोदयाः ॥ १८ ॥ इति श्रीमन्महाराजनाभानरेशहीरासिंहमालवेन्द्रबहादुराश्रितश्रीखरडनगरवास्तव्यकौशिकगोत्रोद्भूतगौडवंशीधरशर्मसंदृब्ध–श्रीमद्भागवतश्रीधरस्वामिविरचितभावार्थदीपिकाप्रकाशः समाप्तः ॥ शराम्नायाङ्कशीतांशुमिते संवत्सरोर्ज्जके ॥ सिते विष्णुतिथौ पूर्णो वृन्दारकगुरोर्दिने ॥ १ ॥ मंगलं भगवान्विष्णुर्मंगलं गरुडध्वजः ॥ मंगलं पुंडरीकाक्षो मंगलायतनो हरिः ॥ २ ॥ प्रीयतामनेन श्रीकृष्णः ॥ समाप्तश्चायं ग्रन्थः ॥

---

# अयं श्रीभावार्थदीपिकाप्रकाशसमलंकृतभावार्थदीपिकासमेतश्रीमद्भागवतद्वादशस्कन्धो मुम्बय्यां श्रीकृष्णदासात्मज–क्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर"–(स्टीम्) मुद्रणालये मुद्रयित्वा प्राकाश्यमानीयत ।

संवत् १९६५, शाके १८३०, भाद्रे ३० ।

---

॥ इति श्रीमद्भागवतं श्रीधरीयटीकया पं॰ वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया चोपेतम् ॥

महाराजनाभाधीशश्री १०८ श्रीहीरासिंहजीत्यस्य साहाय्येनेदं मुद्रितम्।

